# समर्पणम् ।

यद्वंशे जयसिंहराजतिलको धर्मं स्वयं पालय-
न्कर्तुं पण्डिततल्लजान्बहुधनत्यागेन सम्मान्य तान् ।
ग्रन्थांश्च स्वपुरं समानयत संगृह्णन्महायत्नतः
स श्रीमाधवसिंहराड्विजयतां कीर्त्या चिरं भूतले ॥ १ ॥
स्वस्तिश्रीरविवंशभूषणमणिः सद्धर्मविश्रम्भवा-
न्नानादेशविदेशवासिविबुधप्रत्यक्षकल्पद्रुमः ।
प्रख्यातःक्षितिमण्डले नृपवरैरभ्यर्हिताभ्युत्सवः
श्रीमान्माधवसिंहराड्विजयतां कीर्त्या चिरं भूतले ॥ २ ॥
श्रीजयसिंहमहेन्द्रप्रौढौदार्यं समीक्ष्य गुणिगुरुणा ।
रत्नाकरेण विदुषा सद्व्रतकल्पद्रुमोऽयमुदपादि ॥ ३ ॥
श्रीरविकुलाब्धिजातश्रीमज्जयसिंहकीर्तिपुष्पाढ्यम् ।
लोके सुपुण्यफलदं जानीषे त्वं सुगन्धिकल्पतरुम् ॥ ४ ॥
सर्वेषां हितलब्ध्यै संमुद्र्यैनं सुशोभनं ग्रन्थम् ।
श्रीमाधवेन्द्र भवते संतोषादर्पये वदान्याय ॥ ५ ॥
सेवामल्पां मदीयां त्वं स्वीकृत्येमां कृतार्थय ॥
इति विज्ञापयत्येष खेमराजस्तवाग्रतः ॥ ६ ॥

श्रीमतां निरन्तरप्रेमाभिलाषी—

**खेमराज श्रीकृष्णदास,**

"श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणालयाध्यक्षः—मुम्बई.



हिज हाइनेस राजराजेन्द्र श्रीमहाराजाधिराज सवाई सर माधवसिंहजी
बहादुर जी सी एस. आई , जी सी आई ई. जयपुर

# अत्रायमानन्दपरीवाहः ।



अस्ति चायं रसायामप्यश्रुतदृष्टपूर्वः सरसस्ततोऽप्यतिशायितोक्षरः कल्पद्रुमः जयसिंहपदालङ्कृतः सर्वभूदेवस्त्वदेवोभयाभीष्टातीतामितसिद्धिसम्पत्तिबद्धादरोऽनितरदुर्लभसम्पत्तिपरिपूर्णतया स्वर्द्रुमपञ्चकवशीकरणक्षमः लोकसम्पत्तिविलक्षणानियमोऽपि सर्वलोकसम्पत्तिवशीकृतिसन्नियमः प्रतिग्रहपराङ्मुखानपि प्रतिग्रहोन्मुखान्कुर्वाणः जयसिंहभूदेवराजप्रजाशोकपाटच्चरो भूदेवानपि नियमनेन नक्तञ्चरयन् वसुधाशनानपि सुधाशनयन् परभृतानपरभृतयन् समाक्रान्तविष्णुपदमिवातिक्रान्तनवग्रहः चन्द्र इव रविरिव चण्डालद्वेषी च कुज इव सन्मङ्गलः बुध इव सोमप्रियः गुरुरिव कुदेवविमुखः शनिरिवातिकृष्णातिरौद्रश्च युधिष्ठिर इव द्रुपदजसज्जनाहितपरिजिहीर्षुः ब्रह्मेव सर्वानन्दमयः नाडिन्धम इव दोषनिर्हरणपटुः वैद्यराज इव सुलभसैन्धवहास्तिसाद्यगणनीयवर्ण्याशबहुलोयं कृतिविशेष इति सुविदितमेव सर्वेषाम् ।

सोयं ग्रन्थः इतरग्रन्थवन्न केवलं तत्तदाचरणानुभवमन्तरा पारम्पारिकग्रन्थाश्रयणपरम्परयैव स्वकार्यसाधनमात्रोद्देशेनैव वा प्रवृत्तः किन्तु श्रौतस्मार्तकर्मपरम्परामध्ये--आधानप्रभृतिपौण्डरीकान्तानि श्रौतानि महान्ति कर्माणि स्मार्तानि च तानि तानि कर्माणि श्रीमन्महाराजाधिराजेत्यादिविरुदावलीसमलङ्कृतभूवमण्डलमुकुटरत्नराजितपदाम्बुजप्रतिबिम्बप्रसाददानलाभसंस्तूयमानापदानसहस्रान्तरवर्णनसमयसमभ्यस्ततत्तल्लवाशसन्तुष्टत्रैकालिकसम्प्राप्तकविकुलमनोरथसहस्राशसंप्राप्त्याकरस्य तत्तदभीष्टसम्प्राप्तिसमयसन्मुषितानन्दवाष्पाम्बुधिसारायितयशश्चन्द्रतत्कलासंव्याप्तिसंभूतामिततारकापरिवृतनव्यनव्यनिटिलचन्द्रैक्यभ्रमनिराकरणपटिष्ठसीमन्तविभजनसंभ्रमव्यग्रसीमन्तिनीवलयावलीसमनुकूलश्लाघावलीमुखरितकराम्बुजस्य श्रीमज्जयसिंहमहाराजस्य प्रार्थनाप्रार्थितेन श्रीदेवभट्टतनयेन सम्राट्पदालङ्कृतेन विवेकिना सुधिया निरातङ्केन श्रौतस्मार्तसर्वकर्मकलापज्ञेन विद्वत्कुलजनुषा सर्वविद्वन्मकुटमान्यसुगुणाकरेण अव्याजपरोपकारनिरतेन विधीना तत्तत्कर्मणा तत्तद्व्रतानां मलमासयोः संक्रान्तीनां तत्तत्तिथिव्रतानां तत्तद्वारव्रतानां मासव्रतानां पर्वनिर्णयस्येष्टिकालादेः प्रायस्तत्तद्व्रतप्रयोगाणां तत्र तत्र मतभेदानां क्वचिदन्यग्रन्थकृतप्रमादोक्तीना निरूपणद्वारा तत्तत्कर्मणां यथावदनुष्ठानाय २५००० ग्रन्थात्मकतया तत्तत्प्रमाणभूतश्रौतस्मार्तकल्पसूत्रेतिहासपुराणादिप्रमाणवचनानामुपन्यासपुरस्सरं चतुर्वर्गचिन्तामण्यादिवत्सर्वविद्वन्मान्यपदवीमधिरूढः प्राचीनेतरग्रन्थेभ्योऽप्यतिशयितविशेषांशैःसुपरिपूर्णो महानिबन्धोयं निरमायि ।

तस्यास्य चिरादसकृद्विद्वद्भिरन्यैरपि सहस्रातिगैर्दशद्वादशवर्षेभ्यःमुद्राक्षरैः संमुद्रणाय बोधितः पूर्णस्य शुद्धस्य ग्रन्थरत्नतल्लजस्य बहूनि धनानि व्ययीकृत्य चिरात्संपादितस्योत्तमसीसकाक्षरैरुत्तमोत्तमपत्रेषु सम्मुद्रणेन मुद्रणमात्रव्ययपरिमितधनग्रहणेन तेषां ब्रह्मक्षत्रियवैश्यानां क्वचिदन्येषामपि चिराभिलाषितोत्तममनोरथपूरणेन च कृतार्थीभावितुमुत्सहते श्रीविद्वन्मकुटचरणाम्बुजसेवासमयलाभान्वेषणसंलग्नचित्तोयं श्रीवेङ्कटेश्वरचरणारविन्दमिलिन्दायमानमानसः।

श्रीकृष्णदासात्मजः क्षेमराजः,

"श्रीवेङ्कटेश्वर" (स्टीम्) मुद्राक्षरालयाध्यक्षः-मुम्बई.

श्रीः ।

# अथ जयसिंहकल्पद्रुमस्थविषयानुक्रमः ।



## अथ द्वितीयस्तबकः ।

## अथ तृतीयः स्तवकः।

इति सप्तदशः स्तबकः समाप्तः ।

## अथाऽमातिथिः ।

## जयसिंहकल्पद्रुमस्थविषयानुक्रमः।



इति जयसिंहकल्पद्रुमस्थविषयानुक्रमः।

श्रीमन्महागणाधिपतये नमः ।



# अथ जयसिंहकल्पद्रुमः

करीन्द्राननं चारुचन्द्रावतंसं स्रवद्गण्डपालीमिलद्भृङ्गमालम् ।
अपर्णासुतं विघ्नपूगं हरन्तं गणेशं सुरेशं तमाद्यं प्रपद्ये ॥ १ ॥
श्रीजानकीशं शरणागतैकदुःखापहं श्रीगिरिजाधवं च ।
स्मृत्वाऽथ पूज्यौ पितरौ गुरूंश्च श्रीभ्रातरौ सूर्यसमौ नमामि ॥ २ ॥
आसीद्ब्रह्माद्वितीयंत्रि गुणविरहितं निष्कलं निर्विकारं
 यच्चिन्मात्रं तदेव प्रलयजलनिधौ विष्णुरूपं बभूव ।
जातस्तन्नाभिपद्माद्विधिरमितमतिस्तत्प्रपौत्रो विवस्वां-
 स्तस्माद्वैवस्वतोऽभून्मनुरखिलगुणस्तज्ज इक्ष्वाकुभूपः ॥ ३ ॥
इक्ष्वाकोस्तु कुले गिरीशसदृशो राजा ककुत्स्थो ह्यभू-
 त्तद्गोत्रात्ततनुर्दृढः समजनि श्रीधुन्धुमारो नृपः ।
मान्धाता तु तदन्वये समभवत्तस्यान्वयेऽभून्महा-
 न्राजा धर्मविवृद्धये किल हरिश्चन्द्रः सुरेन्द्रोपमः ॥ ४ ॥
पूते हारिश्चन्द्रकुले विशिष्टे गरेण युक्तः सगरो हि जातः ।
भगीरथस्तत्कुलजः प्रसिद्धः श्रीजाह्नवी येन महीमनायि ॥ ५ ॥
खट्वाङ्गः समजनि तत्कुलेऽतिधन्ये तद्वंश्यो रघुरिति नामतः प्रसिद्धः ।
तद्वंशं पुनरवितुं महीं च धर्मं श्रीरामः क्षपितनिशाचरो बभूव ॥ ६ ॥
तत्पुत्रः कुश इति विश्रुतः पृथिव्यां तद्वंशे विपुलयशा बृहद्बलोऽभूत् ।
युद्धे यः कुरुकुलनाशके प्रसिद्धे भित्त्वाऽर्कं परमपदं समाजगाम ॥ ७ ॥
तद्वंशे वितते महाभटनुते धर्मैकसेतुर्महा-
 न्पृथ्वीराज इति प्रसिद्धमहिमा सत्सात्वतामग्रणीः ।
राजा क्षत्रधुरंधरः समभवद्यस्याभवद्गोचरो
 वाचां यो मनसोऽप्यगोचरतरो विष्णुः कृपावारिधिः ॥ ८ ॥

१ 'तद्वंश्यो विभुरवितुम्' इति ख-पुस्तके पाठः । २ 'जगाम सद्य' इति ख पुस्तके पाठः ।

तद्वंशे मानसिंहः समभवदतुलः प्रत्यहं दानमत्ता—
नीषादन्तान्गजेन्द्रानभिनवतुरगान्याचकेभ्योऽददाद्यः ।
यश्चोर्वीशाननेकानुदधिजलगतान्खण्डशः स्वैर्बलौघैः
कृत्वा साम्राज्यलक्ष्मीं समवहदभितो भारतं मत्स्यदेशे ॥ ९ ॥
मानसिंहादभूत्तस्माज्जगत्सिंहो महाबलः ।
जगत्सिंहान्महासिंहो जयसिंहस्तु तत्सुतः ॥ १० ॥
येन श्रीजयसिंहेन दिल्लीन्द्रपदलिप्सवः ।
शिवप्रभृतिभूपाला वशं नीताः स्वतेजसा ॥ ११ ॥
तस्याग्र्यपुत्रः प्रवरः पृथुश्रीः श्रीरामसिंहोऽवनिपालपालः ।
कौर्मे कुलेऽभूद्विजितारिवर्गः श्रीरामपादाब्जविलग्नचित्तः ॥ १२ ॥
यः कृत्वा ब्रह्मपुत्राभिधनदपुलिने स्वर्णभूमिं विशालां
मुक्तामाणिक्यरम्यां गिरिजलधियुतां चाददाद्वाडवेभ्यः ।
दारिद्र्यं याचकानां कथमपि न गतं यत्पुरा कर्णदाना—
त्तत्क्षिप्तं भूरिभूमिद्रविणवितरणैरर्थ्यतो नास्ति लोके ॥ १३ ॥
तत्पुत्रः कृष्णसिंहः प्रथितगुणगणः कृष्णवत्सोत्सवाढ्यो
जातः पृथ्व्यां पृथुश्रीरारिगणतिमिरध्वंसने भानुरूपः ।
तस्माच्छ्रीविष्णुसिंहः क्षपितरिपुगणः पालकः सज्जनानां
राजा राजीवनेत्रः समजनि मथुरा पालिता येन पूर्वम् ॥ १४ ॥
तस्माच्छ्रीविष्णुसिंहाख्याद्राजा राजीवलोचनः ।
जातः श्रीजयसिंहोऽसौ क्षीराब्धेरिव चन्द्रमाः ॥ १५ ॥
वागीशः सुरपादपः सुरपतिश्चिन्तामणिश्चन्द्रमाः
कन्दर्पः कनकाचलो दिनमणिः पार्थः शिबिर्विक्रमः ।
बुद्ध्वा श्रीजयसिंहभूपतिगुणैर्व्यर्थीकृतान्स्वान्गुणा-
न्हित्वा गर्वममुं च लोकमथ ते स्वर्गं गता लज्जिताः ॥ १६ ॥
मेर्वादिशैलसहितां कनकस्य भूमिं
रम्यां विधाय महतीं वरसोमवत्याम् ।
गोग्रामरत्नगजवाजिसमन्वितां य-
स्तीर्थे कुरुक्षयकरे व्यतरद्द्विजेभ्यः ॥ १७ ॥

तीर्थे श्रीपुष्कराख्ये सुरमुनिमहितेऽनेकदन्तावलानां
ग्रामाणामर्वतां च प्रतिदिनमधिकं भूरिभूषायुतानाम् ।
संशुद्धं हाटकं यः स्वतनुपरिमितं तोलयित्वा च तस्यो-
त्सर्गं चक्रे यदन्यत्तदपि गणयितुं मानवः शक्नुयात्कः ॥ १८ ॥

श्रीमद्गङ्गातरङ्गैर्द्रुहिणमुखसुरैः सेविते पुण्यदेशे
मायापुर्यां च गत्वा गजरथतुरगं येन भूरि प्रदत्तम् ।
ग्रामैर्वर्षाशनाढ्यैरनुदिनमधिकं पूरयन्नर्थिवाञ्छाः
स्वर्णैस्तद्वेदविद्भ्यो व्यतरदभिमतं तोलयित्वा स्ववर्ष्म ॥ १९ ॥

विशालान्तर्गते पुण्ये तीर्थे पैशाचमोचने ।
पुरदस्य तुलां कृत्वा वेदविद्भ्यो ददौ नृपः ॥ २० ॥

हिरण्यगर्भं कनकस्य सुन्दरं ब्रह्मादिभिर्देववरैरधिष्ठितम् ।
ब्रह्माण्डसंज्ञं च सुमेरुतुल्यं ददौ विधानाद्धरवाडवेभ्यः ॥ २१ ॥

कल्पपादपमथेष्टदं वरं गोसहस्रमतिकामदं तथा ।
शातकौम्भरचितां सवत्सिकां कामधेनुमतुलां समर्पयत् ॥ २२ ॥

हिरण्याश्वं हिरण्याश्वरथमप्रतिमं तथा ।
हेमहस्तिरथं दिव्यं गजद्वययुतं ददौ ॥ २३ ॥

पञ्चलाङ्गलकं हैमं ग्रामरत्नादिभिर्युतम् ।
धरा स्वर्णस्य महती द्वीपमेर्वादिसंयुता ॥ २४ ॥

विश्वचक्रं कल्पलताः सप्तसागरकं तथा ।
रत्नधेनुं स्वर्णयुतां महाभूतघटं तथा ॥ २५ ॥

स्वर्णरत्नौघरचितं क्षिप्रापिङ्गलसंगमे ।
योगे चार्धोदये पुण्ये व्यतरद्द्विजवृन्दके ॥ २६ ॥

अर्धोदये सकलयोगवरे सुतीर्थे
क्षिप्रातटे वसुगजादिकमप्रमेयम् ।
दत्तं सुभूरि गदितुं न हि शक्यमन्यै-
र्ग्रामाः शतं च शिबिकाः सुरथा द्विजेभ्यः ॥ २७ ॥

वेदज्ञैर्विधिवद्द्विजैः स्वनगरे सर्वान्क्रतून्कारय-
न्स्वर्णैर्यो बहुलाश्चकार सुतुलास्ताभिर्द्विजांस्तोषयन् ।

दुर्भिक्षे परिपीडितान्बहुजनान्पुष्णन्नमाधीशव—
　　त्कौर्मः श्रीजयसिंहराजतिलको जीयात्सहस्रं समाः ॥ २८ ॥
यस्मिन्राजनि दातरि प्रतिदिनं व्योमस्पृशः सध्वजाः
　　प्रासादा ह्यभवन्गृहेषु गृहिणामुच्चैरिति श्रूयते ।
देयं याचनकाय भूरि स पुनः कुत्रापि नो दृश्यते
　　दारिद्र्यस्य लिपिर्विहापितजलैर्मृष्टेति मन्यामहे ॥ २९ ॥
कश्चिद्द्विजः कांश्चन वाडवाग्र्यान्पप्रच्छ संपन्नतरान्सुविद्यान् ।
दानं किमर्थं परिपूर्णकामा गृह्णीत यूयं बहुलं नृपेभ्यः ॥ ३० ॥
अस्माकं निःस्पृहाणां श्रुतिशतगदितो ह्येष धर्मः पुराणः
　　सर्वेषां यद्धितं स्याद्भुवि दिवि च यथा तत्तथा कार्यमेव ।
एवं संचिन्त्य सर्वैर्द्विजवरनिकरैर्गृह्यते दानमेभ्यो
　　येन स्याद्भूमिलोके त्रिदशनिवसतावप्यनन्तः सुखौघः ॥ ३१ ॥
प्रोद्यच्छ्रीमदसीमराज्यविलसद्दिल्लीन्द्रसेनाचल—
　　द्दृप्यद्योधगणान्बहुसेनसहितान्म्लेच्छान्क्षयं योऽनयत् ।
स्वं राज्यं परिगृह्य खड्गसचिवो राजा गृहे संवस—
　　न्कामं तेष्वपतत्सहस्रकिरणो ग्रैष्मो यथा दुःसहः ॥ ३२ ॥
तेन श्रीजयसिंहेन सर्वशास्त्रार्थसंविदा ।
संप्रार्थितास्तिथेः कृत्यं कुरुतेति सुसंग्रहम् ॥ ३३ ॥
रामाङ्घ्रिप्रणवः सुकर्मनिरतः शाण्डिल्यगोत्रोद्भवः
　　काशीस्थद्विजदेवभट्टतनयः सम्राट्सुविद्यान्वितः ।
संलब्धैर्धनसंचयैर्बहुविधैः सर्वान्क्रतूनाचरं—
　　स्तत्प्रीत्यै व्रतकल्पशाखिनममुं निर्मोति रत्नाकरः ॥ ३४ ॥
हेमाद्र्यादीन्समालोक्य ग्रन्थान्प्राज्यार्थसंयुतान् ।
तेभ्य एव समादाय पुराणेभ्यस्तथैव च ॥ ३५ ॥
किंचित्किंचिद्व्रतव्राते तत्सिद्ध्यै समयेऽपि च ।
संदर्भो रचितो रामतुष्ट्यै च भवतादयम् ॥ ३६ ॥

---

१ 'त ऊचु.' इति ख—पुस्तके पाठ. । २ 'श्रीबहुलेन्द्रराज्य'—इति ख पुस्तके पाठः । ३ 'द इति पाठ॰ ।

क्षम्यतां साहसं धीरैर्गुणवद्भिरमत्सरैः ।
यदर्थ्यं सुष्ठु तद्ग्राह्यं यदसच्छोध्यतामिह ॥ ३७ ॥
बहवो हि बुधाः सन्ति तन्निबन्धाः सहस्रशः ।
तथाऽप्यस्य तु वैदग्ध्यं सुहृद्भिः संविचार्यताम् ॥ ३८ ॥

वक्ष्यमाणव्रतेषु कालस्य निमित्तत्वादादौ कालस्वरूपं तन्निर्णयश्चोच्यते । तत्र कालस्वरूपं तावत् हेमाद्रौ कूर्मपुराणे—'अनादिरेष भगवान्कालोऽनन्तोऽजरोऽमरः' इत्यादि । 'कालेनैव च सृज्यन्ते स एव ग्रसते पुनः । तस्मात्कालात्मकं विश्वं स एव परमेश्वरः' इति विष्णुधर्मोत्तरे—'अनादिनिधनः कालो रुद्रः संकर्षणः स्मृतः । कलनात्सर्वभूतानां स कालः परिकीर्तितः । कर्षणात्सर्वभूतानां स तु संकर्षणः स्मृतः । सर्वभूतशमित्वाच्च स रुद्रः परिकीर्तितः । अनादिनिधनत्वेन स महान्परमेश्वरः । तस्य सूक्ष्मातिसूक्ष्मस्य' इत्यादि । यद्यप्यपरिच्छिन्नस्य दुर्विज्ञानस्य क्रियानङ्गत्वेन न निर्णेयत्वम् । तथापि सूर्यादिगत्युपाधिपरिच्छिन्नस्य सुज्ञानत्वेन क्रियाङ्गत्वान्निर्णेयत्वमुपपद्यते । तस्य सूर्यादिगतिपरिच्छेद्यत्वं विष्णुधर्मोत्तरेऽभिहितम् 'तस्य सूक्ष्मातिसूक्ष्मस्य तथातिमहतो द्विजाः । मानसंख्या बुधैर्ज्ञेया ग्रहगत्यनुसारतः' इति प्रत्यक्षोपलभ्यमाननिमेषक्रियापरिच्छेदश्च तत्रैव दर्शितः । 'लघ्वक्षरसमा मात्रा निमेषः परिकीर्तितः । अतः सूक्ष्मतरः कालो नोपलभ्यो भृगूत्तम । नोपलभ्यं यदा द्रव्यं सुसूक्ष्मं परमाणुतः । द्वौ निमेषौ त्रुटिर्ज्ञेया प्राणो दशत्रुटिः स्मृतः । विनाडिका तु षट् प्राणास्तत्षष्ट्या नाडिका स्मृता । अहोरात्रं तु तत्षष्ट्या नित्यमेवं प्रकीर्तितम् । त्रिंशन्मुहूर्ताश्च तथा अहोरात्रेण कीर्तिताः । तत्र पञ्चदश प्रोक्ता राम नित्यं दिवाचराः । उत्तरां तु यदा काष्ठां क्रमादाक्रमते रविः । तथा तथा भवेद्वृद्धिर्दिवसस्य महाभुज । दिवसश्च यथा राम वृद्धिं समधिगच्छति । तदाश्रितमुहूर्तानां तथा वृद्धिः प्रकीर्तिता।दिनवृद्धिर्यथा राम दोषा हानिस्तथा तथा।तदाश्रितमुहूर्तानां हानिर्ज्ञेया यथा तथा । दक्षिणाशां यदा राम क्रमादाक्रमते रविः । दिवसस्य तथा हानिर्विज्ञेया तावदेव तु । क्षीयन्ते तस्य हानौ तु तन्मुहूर्तास्तथैव च । रात्र्याश्रिताश्च वर्धन्ते रात्रिवृद्धिस्तथातथा । यदा मेषं सहस्रांशुस्तुलां चैव प्रपद्यते। समरात्रिंदिवः कालो विषुवच्छब्दवाचकः' ॥ इति ॥ ननु कालो न विधातुं शक्यः, विधानोपादानयोरैक्यात्, कालस्य चानुपादेयत्वात्॥उच्यते॥उपादानस्यानुष्ठानरूपत्वेन पुंव्यापारत्वात् विधानस्य चाप्रवृत्तप्रवर्त (मानात्म) कत्वेन शब्दधर्मत्वान्न विधानोपादानयोरैक्यम्, अतो विधेयप्राप्त-

विषयत्वात्प्राप्तकर्मानुवादेनाप्राप्तकालसंबन्धं विदधदयं विधिः स्वरूपतोऽनुपादेयकालं तद्विशेषणतया स्पृशतीति भवति कालस्य विधेयत्वम् ॥ नन्वस्तु कालस्य विधेयत्वं, कर्माङ्गत्वनिर्णयस्तु कथम् ॥ उच्यते ॥ प्रतिपदाधिकरणन्यायेन लाघवादेकस्मादपूर्वमिति निश्चिते तत्र कर्मणस्तावदेकपदश्रुत्या फलभावनाकरणत्वे निर्णीते 'यदेकस्मादपूर्वं तदेतरत्तदर्थम्' इति न्यायेन कालस्य कर्माङ्गत्वनिर्णयः। अतएव गार्ग्येणोक्तम्-'तिथिनक्षत्रवारादि साधनं पुण्यपापयोः । प्रधानगुणभावेन स्वातन्त्र्येण न ते क्षमाः' । प्रधानगुणभावेन-प्रधानकर्माङ्गत्वेन । तस्मात्कालः कर्माङ्गत्वेन निर्णेय इति सिद्धम् ॥ च स कालः संवत्सरायनर्तुमासपक्षदिवसादिभेदादनेकविधः ।

तत्र संवत्सरस्यायनाद्यवयवित्वादादौ तन्निर्णयः क्रियते । स च संवत्सरः सम्यक्वसन्त्यस्मिन् मासादयः इति व्युत्पन्नेन संवत्सरशब्देन योगरूढ्याऽभिधीयमानो मासद्वादशकात्मक कालविशेषः । 'द्वादश मासाः संवत्सरः' इति श्रुतेः । स च मासः चान्द्रः, सावनः, सौरः, इति त्रिविधः । तदुक्तं ब्रह्मसिद्धान्ते-'चान्द्रसावनसौराणां मासानां तु प्रभेदतः। चान्द्रसावनसौरास्तु त्रयः संवत्सरा अपि' इति ॥ ननु चान्द्रः संवत्सरः कदाचिदधिमासे सति त्रयोदशमासात्मको भवति। तत्कथं वत्सरस्य द्वादशात्मकत्वमिति चेत् ॥ न ॥ अधिमासस्य षष्टिदिनात्मकमासैकदेशत्वेन माससंख्याधिक्यानापादकत्वात् । षष्टिदिनात्मकत्वं च तस्योक्तं स्मृत्यन्तरे—'षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः' । इति । अतो द्वादशमासत्वमविरुद्धम् । 'अस्ति त्रयोदशमासः' इति श्रुतिस्तु त्रिंशद्दिनात्मकमासाभिप्रायेण । क्वचित्तु ज्योतिःशास्त्रे संवत्सरस्य पञ्चविधत्वं तत्परिमाणं चोक्तम् । 'सौरबृहस्पतिसावनशशधरनाक्षत्रिकाः क्रमेण स्युः ' इति । माधवमतेऽप्यब्दः पञ्चधा । 'अब्दः पञ्चविधश्चान्द्रो व्रतादौ तिलकादिषु[1] । सुजन्मादौ व्रते सौरो गोसत्रादिषु सावनः । त्रयोऽप्याचार्यसेवादौ विकल्प्यन्ते निजेच्छया । आयुर्दाये तु नाक्षत्रो बार्हस्पत्योऽधिवत्सरः' । इति तेनोक्तत्वात् । गुरोर्मध्यमराशिभोगेन बार्हस्पत्यः । हेमाद्रिस्त्वनयोर्धर्मशास्त्रेऽनुपयोगात्तिस्र एव विधा आह । तत्र चान्द्रसंवत्सरस्य तिलकव्रतादावुपयोगो द्रष्टव्यः । सौरस्य तु सुजन्मावाप्तिव्रतादावुपयोगः । तद्विधिस्तु हेमाद्रौ द्रष्टव्यः । सावनस्य तु सत्रादावुपयोगो द्रष्टव्यः । नाक्षत्रसंवत्सरस्य तु पुष्यस्नानादौ निमित्तत्वेनोपयोगः । बार्हस्पत्यसंवत्सरस्योपयोगः स्कान्दे द्वारका-

---

१ 'व्रतादौ तिलकादिके' इति पाठः । २ 'हेमादिस्त्वन्त्ययोः' इति पाठः ।

माहात्म्ये—'सिंहस्थे गुरौ गोदावरीयात्रा कर्तव्या, कन्यास्थे द्वारकायात्रा' इति ॥ तत्र चान्द्रोऽब्दः षष्टिभेदः । 'प्रभवो विभवः शुक्लः प्रमोदोऽथ प्रजापतिः । अंगिराः श्रीमुखो भावो युवा धातेश्वरस्तथा । बहुधान्यः प्रमाथी च विक्रमोऽथ वृषस्तथा । चित्रभानुः सुभानुश्च तारणः पार्थिवो व्ययः। सर्वजित्सर्वधारी च विरोधी विकृतिः खरः। नन्दनो विजयश्चैव जयो मन्मथदुर्मुखौ।हेमलंबी विलम्बी च विकारी शार्वरी प्लवः । शुभकृच्छोभनः क्रोधी विश्वावसुपराभवौ । प्लवंगः कीलकः सौम्यः साधारणविरोधकृत् । परिधावी प्रमाथी च आनन्दो राक्षसोऽनलः।पिङ्गलः कालयुक्तश्च सिद्धार्थो रौद्रदुर्मती। दुन्दुभी रुधिरोद्गारी रक्ताक्षी क्रोधनः क्षयः ।' इत्यन्तेनोक्तः । यद्यपि ज्यौतिषे गुरोर्मध्यमराशिभोगेन प्रभवादीनां माघादौ प्रवृत्तिरुक्ता॥तथापि प्रभवादीनां चान्द्रत्वमप्यस्ति । 'चान्द्राणां प्रभवादीनां पञ्चके पञ्चके युगः' इति माधवेनोक्तेः । तेन चान्द्राब्दादिश्चैत्रसिते प्रवर्तते । बार्हस्पत्यस्तु माघादौ । तयोर्विनियोगो ज्योतिर्निबन्धे ब्रह्मसिद्धान्ते—'व्यावहारिकसंज्ञोऽयं कालः स्मृत्यादिकर्मसु । योज्यः सर्वत्र तत्रापि जैवो वा नर्मदोत्तरे' । आर्ष्टिषेणः—'स्मरेत्सर्वत्र कर्मादौ चान्द्रं संवत्सरं सदा । नान्यं यस्माद्वत्सरादौ प्रवृत्तिस्तस्य कीर्तिता' इति ॥ इति संवत्सरनिर्णयः ॥

अथायनम् । तच्च सौरमृतुत्रयम् 'सौरर्तुत्रितयं प्रदिष्टमयनम्' इति दीपिकोक्तेः । सौरमानमधिकृत्य विष्णुधर्मोत्तरेऽपि-'ऋतुत्रयंचायनं स्यात्'इति।अयनपदव्युत्पत्तिस्तु माधवीये—'अयते यात्यनेन ऋतुत्रयेण सूर्यो दक्षिणाशामुत्तराशां चेति ऋतुत्रयमयनम्' । तथाच वाजसनेयिनः पञ्चाग्निविद्यायां दक्षिणोत्तरमार्गयोः समामनन्ति । 'यान्षण्मासान्दक्षिणादित्य एति, यान्षण्मासानुत्तरादित्य एति' इति ॥ केचित्तु चान्द्रमासेनायनद्वयमभ्युपगच्छन्ति मार्गशीर्षमासादिकैस्त्रिभिर्ऋतुभिः कल्पितः कालः षण्मासात्मकमुत्तरायणं, ज्येष्ठमासादिकैर्दक्षिणायनमिति आहुः । तत्र प्रमाणं ज्योतिःशास्त्रादौ मृग्यम् । तच्च द्विविधम् दक्षिणम्, उत्तरं चेति । कर्कसंक्रान्तिमारभ्य दक्षिणं, मकरसंक्रान्तिमारभ्योत्तरम्।अनयोर्विनियोगो मदनरत्ने सत्यव्रतेनोक्तः—'देवतारामवाप्यादिप्रतिष्ठोदङ्मुखे रवौ।दक्षिणाशामुखे कुर्वन्न तत्फलमवाप्नुयात्'इति।वैखानसः—'मातृभैरववाराहनरसिंहत्रिविक्रमाः । महिषासुरहन्त्र्यश्च स्थाप्या वै दक्षिणायने' । वैशब्दोऽप्यर्थे । निषेधप्रसवोऽयं देवविशेषे । रत्नमालायां च 'गृहप्रवेशत्रिदशप्रतिष्ठाविवाहचौलव्रतबन्धपूर्वम् । सौम्यायने कर्म शुभं विधेयं यद्गर्हितं तत्खलु दक्षिणे च' इति ॥ इत्ययनम् ॥

अथर्तुः । हेमाद्रौ ऋतवश्च षट् । हेमन्तशिशिरयोः समासेन पञ्च ।

'षड्वा ऋतवः पञ्चर्तवः हेमन्तशिशिरयोः समासेन' इति श्रुतेः। प्रयाजानुमन्त्रणोपयोगितया च हेमन्तशिशिरयोरेकीकरणम्। 'वसन्तमृतूनाम्' इति चतुर्णामनुमन्त्रणमभिधाय 'हेमन्तशिशिरावृतूनाम्' इति पञ्चमस्यानुमन्त्रणे द्वयोर्द्वन्द्वोपादानात्। ऋतुशब्दार्थो माधवीये—ऋतुशब्दः 'ऋ गतौ' इत्यस्माद्धातोर्निष्पन्नः 'इयर्ति गच्छति अशोकपुष्पविकासादि असाधारणलिङ्गमिति वसन्तादिकालविशेष ऋतुः। ते च वसन्तोपक्रमाः। 'मुखं वा एतदृतूनां यद्वसन्तः' इति श्रुतेः। निरूपिताश्च ते क्रमेण श्रुतौ। 'मधुश्च माधवश्च वासन्तिकावृतू। शुक्रश्च शुचिश्च ग्रैष्मावृतू। नभश्च नभस्यश्च वार्षिकावृतू। इषश्चोर्जश्च शारदावृतू। सहश्च सहस्यश्च हैमन्तिकावृतू। तपश्च तपस्यश्च शैशिरावृतू'। अत्र ऋतू इति द्विवचनमृत्ववयवमासद्वित्वाभिप्रायेण। मध्वादिशब्दाश्च चैत्रादिमासवचनाः। तथा चाहुः—'चैत्रो मासो मधुः प्रोक्तो वैशाखो माधवो भवेत्। ज्येष्ठमासस्तु शुक्रः स्यादाषाढः शुचिरुच्यते। नभोमासः श्रावणः स्यान्नभस्यो भाद्र उच्यते। इषश्चाश्वयुजो मासः कार्तिकश्चोर्जसंज्ञकः। सहोमासो मार्गशिरः सहस्यः पुष्यनामकः। माघमासस्तपाः प्रोक्तस्तपस्यः फाल्गुनः स्मृतः' इति। सौरा वसन्तादयस्तु मीनादिसौरमासद्वयात्मका मेषादिसौरमासद्वयात्मका वा। बोधायनेन 'मीनमेषयोर्मेषवृषयोर्वा वसन्तः' इत्यभिधानात्। तदनुसारेणोत्तरेषामपि द्वैविध्यकल्पना। एतेषां चतुर्णां विनियोगः 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिवाक्येभ्योऽवगन्तव्यः। 'श्रौतस्मार्तक्रियाः सर्वाः कुर्याच्चान्द्रमसर्तुषु। तदभावे तु सौरर्तुष्विति ज्योतिर्विदां मतम्'। इति त्रिकाण्डमण्डनो हेमाद्रौ। यदा त्वधिकमासो भवति तदा चान्द्रमानेन मासत्रयात्मकोऽपि कश्चिदृतुः संपद्यते। तथा च त्रिकाण्डमण्डनेनोक्तम्। 'चान्द्रमाने यदा चैत्रमासादिर्मलिनस्तदा। शुद्धेऽपि मलिने चैत्रे वैशाखेऽपि वसन्तता॥ ननु सैवेयमायाता मासत्रयवसन्तता॥ सत्यं गत्यन्तराभावात्सैवात्राभ्युपगम्यते॥ नन्वत्रापि विकल्पः किं तद्वत्राभ्युपगम्यते। 'मासास्त्रयो वसन्तः स्यात्त्यक्त्वाद्यमथ वाऽन्तिमम्। अत्रोच्यते विकल्पो हि सौरमासेषु युज्यते। न तु चान्द्रेषु युक्तोऽसौमलमासानुवर्तिषु' इत्याद्युक्त्वा 'षड्वा ऋतव इत्येषा श्रुतिः सप्तमवारिका। तस्मादधिकमासःस्यात्तेष्वेवर्तुषु कुत्रचित्। यत्रैषोऽथ भवेन्मासः स ऋतुः सत्रिमासिकः। यद्वा षष्टिदिनैर्मास एक एवोभयात्मकः। अतोऽत्रापि वसन्तत्वं स्याद्द्वयोरेव मासयोः' इति॥ इत्यृतुकथनम्॥

अथ मासनिर्णयः। मदनरत्ने—स च मासः 'मस्यते परिमीयते चन्द्रवृद्धिक्षयादिना' इति व्युत्पन्नेन मासशब्देन योगरूढ्याऽभिधेयः। माधवीये

तु तत्र सकारान्तं मास् इति प्रातिपदिकं चन्द्रवाचि तस्यायं काल इति मासः । स च मासश्चतुर्धा सावनः, सौरः, चान्द्रः, नाक्षत्रश्चेति । त्रिंशद्दिनः सावनः, अर्कसंक्रान्त्यवधिः सौरः, पक्षयुक् चान्द्रः, चन्द्रस्य सर्वनक्षत्रभोगेन नाक्षत्रः । तदुक्तं विष्णुधर्मोत्तरे—'सर्वर्क्षपरिवर्तैस्तु नाक्षत्रो मास उच्यते' इति । एतदुपयोगो नाक्षत्रसत्रे द्रष्टव्यः । चान्द्रस्तु चित्राद्यन्वितपौर्णमासीयोगाच्चैत्रादिसंज्ञां लभते । पङ्कजादिशब्दवच्चैत्रादिशब्दा योगरूढाः 'नक्षत्रेण युक्तः कालः' 'साऽस्मिन्पौर्णमासी' इति सूत्राभ्यां पाणिनिना कात्यायनेन च अस्मिन्नेवार्थे चैत्रादिशब्दानां व्युत्पादनात्॥ ननु चैत्रादीनां चित्रादियोगव्यभिचारित्वात्कथं चित्रादियुक्तपौर्णमासीयुक्तचान्द्रमासवचनत्वं चैत्रादिशब्दानामिति चेत् ॥ न ॥ चित्रादिपदेन यथायथं चित्रास्वात्यादिनक्षत्रद्विकत्रिकोपलक्षणात् । तद्योगस्य च सकलचैत्राद्यनुगतत्वेन चैत्रादीनां तदव्यभिचारात् । चान्द्रो मासो द्वेधा शुक्लादिः अमान्तः, कृष्णादिः पूर्णिमान्तश्च । तयोश्च—'चान्द्रोऽपि शुक्लपक्षादिः कृष्णादिर्वेति तद्द्विधा' । इत्युक्त्वा देशभेदेन व्यवस्थामाह त्रिकाण्डमण्डनः । 'कृष्णपक्षादिकं मासं नाङ्गीकुर्वन्ति केचन । येऽपीच्छन्ति न तेषामपीष्टो विन्ध्यस्य दक्षिणे' । इति विन्ध्यस्य दक्षिणे कृष्णादिनिषेधादुत्तरतो द्वयोरभ्यनुज्ञा गम्यते।तत्रापि शुक्लादिर्मुख्यः कृष्णादिर्गौणः।ज्योतिर्निबन्धे गर्गः-' पौर्णमास्यवसानः स्यान्मासो देवक्रतुस्तथा । दर्शान्तो मानुषो ह्येतौ विन्ध्यादुत्तरयाम्यगौ।'आर्ष्टिषेणः-'दर्शान्तो वैदिको मासो राकान्तः स्मार्त उच्यते' शास्त्रे चैत्रशुक्लप्रतिपद्येव चान्द्रसंवत्सरारम्भोक्तेः । तथा च दीपिकायाम् 'चान्द्रोऽब्दो मधुशुक्लगप्रतिपदारम्भः' इति । नहि ये कृष्णादिं मन्यन्ते तेषां वत्सरारम्भो भिद्यते॥ अतः शुक्लादिर्मुख्यः।कृष्णादिना मलमासासंभवाच्च।चान्द्रादीनां व्य स्थोक्ता हेमाद्रौ ब्रह्मसिद्धान्ते 'अमावास्यापरिच्छिन्नो मासः स्याद्ब्राह्मणस्य तु। संक्रा तपौर्णमासीभ्यां तथैव नृपवैश्ययोः' । अत्र ब्राह्मणादीनां यत्र कर्मविशेषे वचनान्तरेण 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिवन्मास उक्तस्तत्र दर्शान्तत्वमात्रं नियम्यते न तु सर्वकर्मसु दर्शान्त एवेति । वृष्ट्याद्यर्थसौभरेहीषादिनिधननियमवद्विधिलाघवात् । त्रैवर्णिकानां सर्वकर्मसु मासविशेषविधेः सावनादीनां शूद्रानुलोमादिपरत्वापत्तेश्च । ज्योतिर्गर्गः—'सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः । आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते' ।

---

१—'पाणिनिना रूढिबोधकसंज्ञायामित्यभिधानपूर्वकम्' इत्याधिकः पाठः ख पुस्तके ।

ऋष्यशृङ्गः—'विवाहव्रतयज्ञेषु सौरं मानं प्रशस्यते । पार्वणे त्वष्टकाश्राद्धे चान्द्रमिष्टं तथाब्दिके' । स्मृत्यन्तरे—'एकोद्दिष्टविवाहादावृणादौ सौरसावनौ' । ज्योतिर्गर्गः—आयुर्दायविभागश्च प्रायश्चित्तक्रिया तथा । सावनेनैव कर्तव्या शूद्राणां चाप्युपासना ' विष्णुधर्मे—' नक्षत्रसत्राण्ययनानि चेन्दोर्मासेन कुर्य्याद्भगणात्मकेन' इति । ब्राह्मे—'तिथिकृत्ये च कृष्णादिं व्रते शुक्लादिमेव च । विवाहादौ तु सौरादिं मासं कृत्ये विनिर्दिशेत् ' इति ॥ इति मासनिर्णयः ॥

अथ मलमासनिर्णयः । तत्रैकसंक्रान्तिरहितः सितादिश्चान्द्रो मासो मलमासः । संक्रान्तिद्वयवतः क्षयमासस्य संग्रहायैकेति । स च द्विविधः । अधिमासः क्षयमासश्च । तदुक्तं मदनरत्ने काठकगृह्ये—' यस्मिन्मासे न संक्रांतिः संक्रान्तिद्वयमेव वा । मलमासः स विज्ञेयो मासः स्यात्तु त्रयोदशः ' इति । न संक्रांतिरित्यनेन अधिमासस्य ग्रहणम् । संक्रान्तिद्वयमेव वेति क्षयमासस्य । सत्यव्रतोऽपि—'राशिद्वयं यत्र मासे संक्रमेत दिवाकरः । नाधिमासो भवेदेष मलमासस्तु केवलम्' इति । अयं च मासश्चान्द्र एव । अतश्च यत्रामावास्याद्वयमध्ये संक्रान्तिर्न स्यात्संक्रान्तिद्वयं वा भवेत्स मलमास इत्यर्थः । तदाह गार्ग्यः—'अमावास्याद्वयं यत्र रविसंक्रान्तिवर्जितम् । मलमासः स विज्ञेयो मासः शुद्धाख्य उत्तरः ।' इति । अस्यैव 'मलिम्लुचः' इत्यपि संज्ञा । तदुक्तं ज्योतिःशास्त्रे—'रविणा लंघितो मासश्चान्द्रः ख्यातो मलिम्लुचः ' इति । चान्द्रोऽपि शुक्लप्रतिपदादिरेव विवक्षितः । तदुक्तं लघुहारीतेन—'इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्तितः । अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ।तमतिक्रम्य तु यदा रविर्गच्छेत्कदाचन।आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्राकृतः स्मृतः' इति । अधिमासस्य मलत्वं चाधिकमासत्वात् । तदुक्तं गृह्यपरिशिष्टे—'मलं वदन्ति कालस्य मासं कालविदोधिकम्'इति । कालाधिक्यं च विष्णुधर्मोत्तरे दर्शितम् 'सौरेणाब्दस्तु मासेन यदा भवति भार्गव । सावने तु तदा माने दिनषट्कं न पूर्यते । दिनरात्र्याश्च ते राम प्रोक्ताः संवत्सरेण षट् । सौरसंवत्सरस्यान्ते मानेन शशिजेन तु । एकादशातिरिच्यंते दिनानि भृगुनन्दन । समाद्वये साष्टमासे तस्मान्मासोऽतिरिच्यते । स चाधिमासकः प्रोक्तः काम्यकर्मसु गर्हितः।' इति । अयं नपुंसक इत्यप्युक्तं ज्योतिःशास्त्रे—'असंक्रान्तो हि यो मासः कदाचित्तिथिवृद्धितः । कालान्तरात्समायाति स नपुंसक उच्यते । ' इति । नपुंसकत्वं च मासपुंस्त्वप्रयोजकसूर्यस्याभावात् । तदपि तत्रैवोक्तम्—'वरुणः सूर्यो भानुस्तपनश्चण्डो रविर्गभस्तिश्च । अर्यमहिरण्यरेतोदिवाकरा मित्रविष्णू च । एते द्वादश सूर्या मासाद्येषूदयन्ति मासेषु ।

निःसूर्योऽधिकमासो मलिम्लुचाख्यस्ततः पापः। मासेषु द्वादशादित्यास्तपन्ते ह यथा क्रमम् । नपुंसकेऽधिके मासि मण्डलं तपते रवेः ' इति। मलिम्लुचत्वं तस्य' कर्मफलचौरै राक्षसादिभिराक्रान्तत्वात् । तदुक्तं शातातपेन 'वत्सरान्तर्गतः पापो यज्ञानां फलनाशकृत्।नैर्ऋत्यैर्यातुधानाद्यैः समाक्रान्तो विनाशकैः।मलिम्लुचैः समाक्रान्तं सूर्यसंक्रांतिवर्जितम्। मलिम्लुचं विजानीयाद्गर्हितं सर्वकर्मसु' इति । अत्र स्फुटमानागता-संक्रान्त एवाधिमासत्वेन ग्राह्यो न तु मध्यममानागतः। तस्य श्रौतस्मार्तव्यवहारानुपयोगात् । तथा हि 'इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्तितः'। इत्यादिवचनेन शुक्लप्रतिपदादिदर्शान्तासंक्रान्तमासस्य विधिनिषेधोपयोग्यधिमासत्वमवगम्यते ॥ न च मध्यममानागता संक्रान्तिर्नियमेन शुक्लप्रतिपदादिदर्शान्तः । अस्य हि नियतो भवनकालो वसिष्ठसिद्धान्ते दर्शितः—' द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा । घटिकानां चतुष्केण पतति ह्यधिमासकः' इति । एतत्तु संभावनार्थं न तु नियमार्थम् । अन्यथा षोडशदिनाधिकद्वात्रिंशन्मासानन्तरं कृष्णपक्षनियमेन शुक्लादित्वभङ्गापत्तेः। तेन न्यूनाधिककाले मलमासपातेऽपि न दोषः । यान्यपि ' मासे त्रिंशत्तमे भवेत्' इत्यादीनि वचनानि, तान्यपि संभावनाभिप्रायेणैव न तु नियमाभिप्रायेण, व्यभिचारस्य स्फुटत्वात् । निर्णयामृते। द्विसंक्रान्तिमासस्तु मलमास एव नाधिमासः। तदाह सत्यव्रतः—' राशिद्वयं यत्र मासे संक्रमेत दिवाकरः । नाधिमासो भवेदेष मलमासस्तु वै मलम् ' इति । अयं द्विसंक्रान्तिमासः क्षयाख्योऽपि। तदुक्तं ज्योतिःशास्त्रे— 'असंक्रान्तिमासोऽधिमासः स्फुटः स्याद्द्विसंक्रान्तिमासः क्षयाख्यः कदाचित् । क्षयः कार्तिकादित्रये नान्यतः स्यात्तदा वर्षमध्येऽधिमासद्वयं च'। इति। स्फुटः—स्फुटमानलब्धः द्विसंक्रान्तिमासो यदा भवति तत्र वर्षमध्ये मासद्वयमधिकं भवति । तत्र परो दुष्टः आद्यः शुद्धः । तदुक्तं तत्रैव— 'एकत्र मासद्वितयं यदि स्याद्वर्षेऽधिकं तत्र परोऽधिमासः । त्रयोदशं तु श्रुतिराह वेदे चतुर्दशः क्वापि न चास्ति दृष्टः' इति । जाबालिरपि— 'मासद्वयेऽब्दमध्ये तु संक्रान्तिर्न यदा भवेत् । प्राकृतस्तत्र पूर्वः स्यादधिमासस्तथोत्तरः' इति । प्राकृतः शुद्धः कर्मार्ह इत्यर्थः।उत्तर इति।उत्तर एवाधिमासः कर्मानर्ह इत्यर्थः । तथाच स एव-'एकस्मिन्नपि वर्षे चेद्द्वौ मासावधिमासकौ । पूर्वो मासः प्रशस्तः-स्यादपरस्तु मलिम्लुचः'इति। अयं त्रयोदशो मासश्चान्द्र एव न सौरः।तदुक्तम्- 'अस्ति त्रयोदशो मास एवं श्रुत्या निगद्यते।असौ चान्द्रो न सौरः स्यान्नास्त्यसौ हि चतुर्दशः' इति। यत्तु ब्रह्मसिद्धान्ते— 'चैत्रादर्वाङ्नाधिमासः परतस्त्वधिको भवेत् ' यच्च

ज्योतिःसिद्धान्ते—'घटकन्यागते सूर्ये वृश्चिके वाऽथ धन्विनि। मकरे वाऽथ कुम्भे वा नाधिमासो विधीयते' इति। तत्क्षयपूर्वभाव्यधिकमासस्य कालाधिक्यनिषेधार्थेन त्वधिकमात्रस्य। 'दशानां फाल्गुनादीनां प्रायो माघस्य च क्वचित्। नपुंसकत्वं भवतीत्येष शास्त्रविनिश्चयः' इति। हेमाद्रौ विष्णुधर्मविरोधात्। मलमासेऽष्टकादिनिषेधानुपपत्तेश्च। 'मकरे वाऽथ कुम्भे वा' इति दृष्टान्तार्थं, प्राप्त्यभावात्॥ क्षयस्यागमनकाल उक्तः सिद्धान्तशिरोमणौ—'गतोऽब्ध्यद्रिनन्दैर्मिते शाककाले तिथीशैर्भविष्यत्यथाङ्गाक्षसूर्यैः। गजाद्र्यग्निभूभिस्तथा प्रायशोऽयं कुवेदेन्दुवर्षैः क्वचिद्गोकुभिश्च'। अस्यार्थः। चतुःसप्तत्यधिकैर्नवशतसंख्याकैर्वर्षैः परिमिते शकस्य काले कश्चिदुक्तलक्षणः क्षयमासो गतः। यथोक्तसंख्या च अब्ध्यद्रिनन्दैरित्यनेन पदेन विवक्षिता। अब्धिशब्देन च चतुष्ट्वसंख्याऽवगम्यते अद्रिशब्देन सप्तत्वसंख्या, नन्देति नवत्वसंख्या'। एतत्संख्यात्रयगमका अङ्का गणकप्रसिद्ध्या प्रातिलोम्येन लिखिता यथोक्तसंख्यायां पर्यवस्यन्ति। तिथीशैरित्यत्रापि तिथीति पञ्चदशसंख्या ईशेत्येकादशसंख्या। तत्र गणकैरङ्केषु प्रक्षिप्तेषु पञ्चदशाधिकशतयुक्तसहस्रसंख्या संपद्यते। तावद्भिःशकवर्षैर्मिते काले कश्चिदुक्तलक्षणःक्षयमासः। 'अङ्गाक्षसूर्यैः' इत्यत्र अङ्गेति षट्संख्या, इन्द्रियवाचिनाऽक्षेतिशब्देन पञ्चसंख्या, सूर्यशब्देन द्वादशसंख्या, तत्राङ्कप्रक्षेपे सति षट्पञ्चाशदधिकशतद्वयोपेतसहस्रसंख्या संपद्यते। तावद्भिर्वत्सरैर्मिते शककाले यथोक्तलक्षणः क्षयमासः।'गजाद्र्यग्निभूभिः'इत्यत्रापि गजशब्देनाष्टत्वसंख्या गम्यते। अद्रीति सप्तत्वसंख्या। अग्नीति त्रित्वसंख्या। भूरित्येकत्वसंख्या, तत्राङ्कप्रक्षेपे सत्यष्टसप्तत्यधिकशतत्रयोपेतसहस्रसंख्या संपद्यते।तावद्भिर्वत्सरैर्मिते शककाले कश्चिदुक्तविधः क्षयमासः संपद्यते।'कुवेदेन्दुवर्षैः'इत्यत्र कुशब्देनैकत्वसंख्या, वेदशब्देन चतुष्ट्वसंख्या, इन्दुशब्देनैकत्वसंख्याऽवगम्यते। तत्राङ्कप्रक्षेपे सत्येकचत्वारिंशदधिकशतसंख्या संपद्यते। एतावद्भिः क्वचित्पूर्वोत्तरक्षयमासयोर्व्यवधानं भवति। 'गोकुभिश्च'इत्यत्र गोशब्देन नवत्वसंख्या,कुशब्देनैकत्वसंख्या। तत्राङ्कप्रक्षेपे सत्येकोनविंशतिसंख्या संपद्यते। एतावद्भिर्वर्षैः क्वचित्पूर्वोत्तरक्षयमासयोर्व्यवधानमिति। सोयं क्षयमासो माससंज्ञाप्रयोजकसंक्रान्तिद्वययुक्तत्वान्मासद्वयात्मकः। स एवांहस्पतिसंज्ञकः। अस्मात्पूर्वभाव्यसंक्रान्तमासः संसर्पः। उत्तरभाव्यसंक्रान्तमासोऽधिमासः। एतदेवाभिप्रेत्योक्तं बार्हस्पत्यज्योतिर्ग्रन्थे—'यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वयमेववा। संसर्पांहस्पती मासावधिमासश्च निंदिताः' इति। अत्र पूर्वासंक्रान्तद्विसं-

क्रान्तयोः संसर्पांहस्पतिसंज्ञकत्वमुत्तरासंक्रान्तमासस्य चाधिमासत्वं क्रमेणाभिधानादवगम्यते । संसर्पोऽसंक्रान्तोऽपि न मलमासः किं तु शुद्धतुल्यः, उत्तर एवासंक्रान्तो मलमास इत्युक्तं प्राक् ॥ इति मलमासस्वरूपनिर्णयः ॥

अथ मलमासे वर्ज्यावर्ज्यनिर्णयः । तत्र सत्यव्रतः—'मलिम्लुचस्तु यो मासः स मासः पापसंज्ञितः । वर्जितः पितृदेवाभ्यां सर्वकर्मसु तं त्यजेत्' । भृगुः—'एकराशिस्थिते सूर्ये यदा दर्शद्वयं भवेत् । हव्यकव्यक्रियाहन्ता तदा ज्ञेयोऽधिमासकः । शातातपः—'वत्सरान्तर्गतः पापो यज्ञानां फलनाशकृत् । नैर्ऋत्यैर्यातुधानाद्यैः समाक्रान्तोऽधिमासकः । मलिम्लुचैः समाक्रान्तं सूर्यसंक्रान्तिवर्जितम् । मलिम्लुचं विजानीयाद्गर्हितं सर्वकर्मसु' । गृह्यपरिशिष्टे—'मलिम्लुचस्तु मासो वै मलिनः पापसंभवः । गर्हितः पितृदेवेभ्यः सर्वकर्मसु तं त्यजेत्' । ब्रह्मसिद्धान्ते—'यदा शशी याति गभस्तिमण्डलं दिवाकरः संक्रमणं करोत्यनु । तदाऽधिमासः कथितो विरञ्चिना विवाहयात्रोत्सवयज्ञदोषकृत् । सिनीवालीमतिक्रम्य यदा संक्रमते रविः । भानुना लङ्घितो मासो ह्यनर्हः सर्वकर्मसु' । ज्योतिःशास्त्रान्तरे—'सवितृमण्डलमेति यदा शशी तदनु संक्रमणं कुरुते रविः । मखमहोत्सवनाशकरस्तदा मुनिवरैः कथितोऽधिकमासकः' । पैठिनसिः—'श्रौतस्मार्तक्रियाः सर्वा द्वादशे मासि कीर्तिताः । त्रयोदशे तु सर्वास्ता निष्फला इति कीर्तिताः । तस्मात्त्रयोदशे मासि कुर्यात्ता न कथंचन । कुर्वन्ननर्थमेवाशु कुर्यादात्मविनाशनम्' इति । त्रयोदशत्वं च संक्रान्तियुक्तप्राकृतद्वादशमासापेक्षया । द्वादशत्वं च तादृशोत्तरमासापेक्षया । अत्र निष्फला इत्यभिधानात्फलकामनया प्रवृत्तं कर्म निषिध्यत इति गम्यते।तथा च स्मृत्यन्तरम्—'इष्ट्यादिसर्वकाम्यं तु मलमासे विवर्जयेत्' इति । यद्यपि पूर्ववचनेषु सर्वकर्तव्यतानिषेधो मलमासे प्रतीयते' तथापि 'न कुर्यादधिके मासि काम्यं कर्म कदाचन । मलं वदन्ति कालस्य मासं कालविदोऽधिकम् । न कुर्यादधिके मासि कर्माकर्म कथंचन । मुक्त्वा नैमित्तिकं कर्म तद्धि तत्रैव कीर्तितम् ।' इत्यादिशङ्खसुमन्तुविशेषवचनेभ्यः—'नित्यनैमित्तिके कुर्यात्प्रयतः सन्मलिम्लुचे' । इत्यादिप्रतिप्रसववचनेभ्यश्च काम्यानामेव सः । तत्र शङ्खवचने कर्माकर्मशब्देन काम्यं कर्मोच्यते।तद्धि फलकामैः क्रियमाणत्वात्कर्म । तदकामैरक्रियमाणत्वादकर्म । कर्म च तदकर्म चेति कर्मधारयः । नित्यनैमित्तिकानां तु करणमेव । 'नित्यनैमित्तिके कुर्यात्कुर्याच्छ्राद्धं मलिम्लुचे । तिथिनक्षत्रवारोक्तं काम्यं नैव कदाचन' । इति जाबालिवचनात् । तदप्य-

गतिकानामेव । 'अनन्यगतिकं नित्यं कुर्यान्नैमित्तिकं तथा' इति स्मरणात् । 'मलेऽनन्यगतिं नित्यां कुर्यान्नैमित्तिकीं क्रियाम्' इति काठकवचनाच्च । अनन्यगतिकं च यस्य नित्यस्य मुख्यकालातिक्रमे जघन्यस्य कालान्तरस्याननुज्ञातत्वादत्यन्तलोपे प्रायश्चित्तं प्रसज्यते तत् । मलमासे काम्यनिषेधोऽप्यारम्भसमाप्तिविषय एव । 'असूर्या नाम ये मासा न तेषु मम संमतः । व्रतानां चैव यज्ञानामारम्भश्च समापनम्' इति ब्रह्मसिद्धान्तवचनात् । प्रारब्धासमाप्तं तु काम्यं कर्म मलमासेऽपि भवत्येव । 'प्रारब्धं कर्म यत्किंचित्तत्तु कार्यं मलिम्लुचे' इति तत्रैवोक्तत्वात् । चातुर्मास्यव्रतारम्भानन्तरं तत्समाप्तिकालादर्वाक् मध्यपतितेऽधिमासे 'अधिमासनिपातेऽपि ह्येष एव विधिक्रमः ।' इति वचनेन तद्व्रतस्याभ्यनुज्ञादर्शनेन काम्यकर्मान्तरेष्वपि तथा कल्पयितुमुचितत्वात् । आवश्यकं तु काम्यं कर्म मलमासेऽप्यारभ्य कर्तव्यम् । यथा तीव्रज्वराद्यभिभवे तद्व्यावृत्त्यर्थं श्रीरुद्रजपाद्यनुष्ठानम् । मलमाससमाप्तिवीक्षायामनर्थप्रसङ्गात् । तदाह मरीचिः—'रोगे चालभ्ययोगे च सीमन्ते पुंसवेऽपि च । यद्दानादि समुद्दिष्टं पूर्वत्रापि न दुष्यति ।' इति । पूर्वत्रापि मलमासेऽपीत्यर्थः । तथा—अभिचरतः प्रतिचरतश्चेष्ट्यादिकमपि । 'आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्निति प्रति वै परस्तादभिचरन्तमभिचरन्ति' इत्यादिवाक्यविहितं तदप्यावश्यकत्वात्तत्र कार्यमेव । तथा राजद्रोहादिनाऽपमृत्युः प्रसक्तस्तत्र 'यो मृत्योर्बिभीयात्तस्मा एतां प्राजापत्यां शतकृष्णलां निर्वपेत्' इत्यादिना विहितेष्टिरपि कर्तव्यैव । कृष्णलाः—सुवर्णशकलानि यवत्रयपरिमितानि शतसंख्यानि यस्यां निर्वपणीयानि सेष्टिः शतकृष्णला । तथा यदा वृष्ट्यभावात्सस्यानि शुष्यन्ति मलमासश्चागतस्तदा 'कारीर्या वृष्टिकामो यजेत' इति विहितेष्टिरपि न कालविलम्बं सहते । एवं स्मार्तान्यप्यावश्यकान्युदाहरणीयानि । अनन्यगतिकानि नित्यानि तु गृह्यपरिशिष्टे उदाहृतानि । 'अवषट्कारहोमाश्च पर्व चाग्रयणं तथा । मलमासे तु कर्तव्यं काम्या इष्टीर्विवर्जयेत्' इति । अवषट्कारहोमाः—अग्निहोत्रौपासनवैश्वदेवादयः । पर्व दर्शपूर्णमासौ पार्वणस्थालीपाकश्च । आग्रयणकर्तव्यता च पुराणालाभे । तल्लाभे त्वकर्तव्यतैव । अनेनैवाभिप्रायेण पैठीनसिना 'संक्रान्तिरहिते मासि कुर्यादाग्रयणं न वा ।' इति विकल्प उक्तः । नैमित्तिकान्यपि कानिचिदावश्यकानि यमेन दर्शितानि— 'चन्द्रसूर्यग्रहे स्नानं श्राद्धदानजपादिकम् । कार्याणि मलमासेऽपि नित्यनैमित्तिकं तथा ।' इति । स्मृत्यन्तरे—'चन्द्रसूर्यग्रहे चैव मरणे पुत्रजन्मनि । मल-

मासेऽपि देयं स्याद्दत्तमक्षय्यतां व्रजेत् ।' इति । चन्द्रसूर्यग्रहग्रहणं कपिलषष्ठ्या-द्यलभ्ययोगानामप्युपलक्षणम् । गत्यन्तरयुक्तानि तु नित्यनैमित्तिकान्यपि तत्र न कार्याणि । तान्यपि कानिचित्काठकगृह्यपरिशिष्टे दर्शितानि— 'सोमयागादिकर्माणि नित्यान्यपि मलिम्लुचे । षष्ठीज्याग्रयणाधानचातुर्मास्यादिकान्यपि । महालयाष्टकाश्राद्धोपाकर्माद्यपि कर्म यत् । स्पष्टमासविशेषाख्याविहितं वर्जयेन्मले ।' इति । सोमयागो वसन्ते विहितः । तस्य मलमासे वर्जनेऽपि शुद्धमासेऽनुष्ठाने वसन्तेऽनुष्ठितत्वसंभवात्सगतिकत्वम्।षष्ठीष्टिः काठकशाखादौ प्रसिद्धा।पुत्रेष्टिरित्यन्यत्र पाठः । तत्र पुत्रगतपूतत्वादिफलार्था इष्टिरेव' तस्या नैमित्तिकत्वात्।निमित्तानन्तरं करणे प्रसक्तेऽपि शेषिविरोधान्निमित्तानन्तर्यबाधेन शौचकालरूपाङ्गोपसंग्रहव्यवस्थापनेनाशौचापगमेनानुष्ठानमिव मलमासेऽप्यतीते सत्यनुष्ठानं तुल्यन्यायत्वादुपपद्यत इति सगतिका जातेष्टिर्मलमासे न क्रियते।हेमाद्रौ पुष्टीति पाठः।तत्रापि पुत्रपुष्ट्यर्थत्वात्पुत्रेष्टिरेव।अन्यस्या ईदृश्या इष्टेरदर्शनात्।महालयो भाद्रपदस्यापरपक्षः।अत एवानावश्यकनिषेधो गृह्यपरिशिष्टे—'मलं वदन्ति कालस्य मासं कालविदोऽधिकम्।नेहेतात्र विशेषेज्यामन्यत्रावश्यकाद्विधेः' इति। यच्च 'प्रवृत्तं मलमासात्प्राग्यत्काम्यमसमापितम् । आगते मलमासेऽपि तत्समाप्यमसंशयम्' इति मलमासेऽपि काम्यकर्मणः समाप्तिप्रतिपादकं काठकगृह्यं—तत्सावनमानोपजीविकृच्छ्रचान्द्रायणहीनसत्रादिविषयम् ॥ अत्र केचित् ॥ हेमाद्रिस्तु-'प्रवृत्तं मलमासात्प्राग' इति समाप्त्यभ्यनुज्ञानं मलमासात्प्रागारब्धस्यानियतकालस्यापि।असूर्येति समाप्तिनिषेधस्तु मोहात्तत्रैव प्रक्रान्तस्य काम्यस्य मलमासे समापने दोषातिशयद्योतनार्थ इत्याह॥तदयुक्तम्॥प्राक्प्रवृत्तस्याप्यनियतकालस्य समाप्तेः सगतिकत्वेन मलमासेऽनुचितत्वात् । प्रतिप्रसवस्याप्यगतिकविषयत्वात् । मलमासेऽप्यनुवृत्त्यनेन च प्रयोगप्राशुभावभङ्गाभावात् । प्रवृत्तेति वचनस्य च नियतकालकर्मरूपविषयान्तरसत्त्वादिति॥तदेतदापातरमणीयम्॥प्रवृत्तमिति वचने नियतकालानियतकालसाधारणशब्देनाभिधानात् । असूर्येति वचनव्यवस्थाग्रन्थे मलेभ।तत्प्रारब्धस्यैव, समाप्तिस्त्वत्र निषिध्यत इत्यत्राप्येवकारस्याप्यर्थकत्वेन तुशब्दस्य चानुवृत्तिद्योतकत्वेन सर्वसंमतार्थकत्वेनैव व्याख्यातुं शक्यत्वाच्चेति । तस्मादावश्यकमेव काम्यम् । अनन्यगतिकानि नित्यनैमित्तिकानि च कर्माणि मलमासे आरम्भणीयानि समापनीयानि च । सावनमाससाध्यानि च काम्यान्यपि प्रारब्धानि समापनीयानि तदितरेषां त्वारम्भः समाप्तिश्च न कर्तव्या अनुवर्तनमात्रं तु कर्तव्यमिति । एवं

सामान्यतो वर्ज्यावर्ज्यविवेके सिद्धे विशेषतो वर्ज्यावर्ज्याणि संगृह्य प्रदर्श्यन्ते । तत्र पुंसवनसीमन्तोन्नयनजातकर्मान्नप्राशनान्तानि कर्माण्येतत्सर्वं नैमित्तकाभ्युदयिकश्राद्धं चन्द्रसूर्यग्रहप्रयुक्तस्नानश्राद्धदानजपादिकं, रोगशान्त्यर्थकर्मार्धोदयाद्यलभ्ययोगनिमित्तश्राद्धदानव्रतादिकमन्त्येष्टिदहनोदकदानपिण्डदानास्थिसंचयननवश्राद्धैकादशाहिकवृषोत्सर्गषोडशश्राद्धसापिण्डीकरणानि मघात्रयोदशीश्राद्धसंध्यावन्दनाग्निहोत्राद्यतिपातगोवधादिनिमित्तप्रायश्चित्तमाग्निनाशादिनिमित्तकं पुनराधानं प्रतिमादिसंस्कारनाशहेतुका पुनःप्रतिष्ठा, पूर्वदृष्टतीर्थश्राद्धगजच्छायाश्राद्धादिनिमित्तवशान्मलमासे कर्तव्यानि । तथा च स्मृतिसंग्रहे—'जातकर्म च पुंसूतिः सीमन्तोन्नयनं व्रतम् । मलिम्लुचेऽपि कुर्वीत निमित्तं यदि जायते' इति-पुंसूतिः । पुंसवनम् । व्रतशब्देन अलभ्ययोगादिनिमित्तकव्रतानामावश्यकप्रायश्चित्तरूपकृच्छ्रचान्द्रायणादीनां च ग्रहणम्।यमः 'गर्भे वार्धुषिके भृत्ये श्राद्धकर्मणि मासिके । सपिण्डीकरणे नित्ये नाधिमासं विवर्जयेत् । तीर्थस्नानं जपो होमो यवव्रीहितिलादिभिः । जातकर्मान्त्यकर्माणि नवश्राद्धं तथैव च। मघा त्रयोदशीश्राद्धं श्राद्धान्यपि च षोडश। चन्द्रसूर्यग्रहे स्नानं श्राद्धदानजपादिकम्। कार्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा' इति।गर्भे गर्भसंस्कारे पुंसवनादौ।वार्धुषिके तत्कृत्ये वृद्धिग्रहणे। भृत्ये तत्कृत्ये भृतिग्रहणे।मासिकं श्राद्धकर्मामावास्याश्राद्धम्। षोडशश्राद्धानां पृथगुपादानात् । नित्यं नित्यदानम् । होमोऽत्रौपासनहोमः । यवव्रीहितिलादिभिः इत्यग्निहोत्रहोमाविहितकरणद्रव्योपादानात् । अन्त्यकर्माणि दहनोदकपिण्डदानास्थिसंचयनादीनि । कालादर्शेकालोऽपि 'द्वादशाहोसपिण्डान्तं कर्म ग्रहणजन्मनोः । सीमन्ते पुंसवे श्राद्धं द्वावेतौ जातकर्म च।योगे शान्तिरलभ्ये च योगे श्राद्धं व्रतानि च। प्रायश्चित्तं निमित्तस्य वशात्पूर्वं परत्र वा।अब्दोदकुम्भमन्वादिमहालययुगादिषु। श्राद्धं दर्शेऽप्यहरहः श्राद्धमूनादिमासिकम् । मलिम्लचान्यमासेषु मृतानां श्राद्धमाब्दिकम् । श्राद्धं तु पूर्वदृष्टेषु तीर्थेष्वेवं युगादिषु । मन्वादिषु तु यद्दानं दानं दैनंदिनं च यत् । तिलगोभूहिरण्यानां संध्योपासनयोः क्रियाः । पर्वहोमाश्वाग्रयणं साग्नेरिष्टिश्च पर्वणोः । नित्याग्निहोत्रहोमश्च देवतातिथिपूजनम् । स्नानं च स्नानविधिनाप्यभक्ष्यापेयवर्जनम् । तर्पणं च निमित्तस्य नित्यत्वादुभयत्र च । अनित्यमनिमित्तं च दानं च महदादिकम् । अग्न्याधानाध्वरापूर्वतीर्थयात्रामरेक्षणम् । देवारामतडागादिप्रतिष्ठामौञ्जिबन्धनम् । आश्रमस्वीकृतिः काम्यवृषोत्सर्गश्च निष्क्रमः । राजाभिषेकःप्रथमचूडाकर्मव्रतानि च । अन्नप्राशनमारम्भो ग्रहाणा च निवेशनम् । स्नानं विवाहो नामातिपन्नं देवमहोत्सवम् । व्रतारम्भसमाप्ती च कर्म काम्यं च पाप्मनः ।

प्रायश्चित्तं तु सर्वस्य मलमासे विवर्जयेत् । उपाकर्मोत्सर्जनं च पवित्रदमनार्पणम् । अवरोहश्च हैमन्तः सर्पाणां बलिरष्टकाः । ईशानस्य बलिर्विष्णोः शयनं परिवर्तनम् । दुर्गेन्द्रस्थापनोत्थाने ध्वजोत्थानं च वज्रिणः । पूर्वत्र प्रतिषिद्धानि परत्रान्यच्च दैविकम् ' इति । अत्र द्वादशाहेत्यारभ्य नित्यत्वादुभयत्र चेत्यन्तेन ग्रन्थेन कर्तव्यसंग्रहः । अनित्यमनिमित्तं चेत्यारभ्य वर्जयेदित्यन्तेन वर्ज्यसंग्रहः । उपाकर्मेत्यारभ्य परत्रान्यच्च दैविकमित्यन्तेन मलमासे वर्जितानां शुद्धमासेऽवश्यकर्तव्यत्वेन संग्रहः । अत्र गर्भेत्यादीनि साक्षिवचनान्युदाहृतानि 'द्वावेतौ जातकर्म च' इत्यत्र एतौ पुंसवनसीमन्तौ । एतच्च गर्भाधानाद्यन्नप्राशनान्तसंस्कारोपलक्षणम् । तदुक्तं दीपिकायाम्—"गर्भाधानमुखं च चौलविधितः प्राग्जातयागं विना कृच्छ्रेष्वाग्रयणं गजेन्द्रपुरतश्छाया मघानङ्ग्योः । तीर्थेन्दुक्षययोश्च पित्र्यमधिके मास्येवमाद्याचरेत् " इति । स्मृतिसंग्रहेऽपि—' यागादिकं मासिकं च श्राद्धं चापरपाक्षिकम् । मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेऽपि च । ' आपरपक्षिकं प्रतिकृष्णपक्षविहितं श्राद्धं न तु महालयापरपक्षश्राद्धम् ॥ तन्निषेधस्याग्रे वक्ष्यमाणत्वात् । मत्स्यपुराणे—'दर्शे चाहरहः श्राद्धं दानं च प्रतिवासरम् । गोभूतिलहिरण्यानां मासेऽपि स्यान्मलिम्लुचे ' इति । व्यासः—'जातकर्मणि यच्छ्राद्धं दर्शश्राद्धं तथैव च । मलमासेऽपि तत्कार्यं व्यासस्य वचनं यथा' इति । यत्तु—'संवत्सरातिरेकेण मासो यः स्यान्मलिम्लुचः । तस्मिंस्त्रयोदशे श्राद्ध न कुर्यादिन्दुसंक्षये ।' इति ऋष्यशृङ्गवचनं गौडग्रन्थेषु लिखितं,—तत्कार्तिकादिमासविशेषसंबद्धामावास्याविहितफलविशेषार्थश्राद्धपरम् । 'स्पष्टमासविशेषाख्याविहितं वर्जयन्मले' । इत्येतदेकवाक्यत्वात्सर्वकामार्थविहितकाम्यश्राद्धविषयं च ॥ 'न कुर्यादधिके मासि काम्यं कर्म कदाचन' इति सामान्यवचनेन तस्यापि निषेधात् । केचित्तु— 'न कुर्यादिन्दुसंक्षये' इति प्रमादपाठः । 'न कुर्यान्नोपतिष्ठते' इति बहुग्रन्थदृष्टः पाठो ज्यायानित्याहुः । स्मृत्यन्तरे—' श्राद्धजातकनामानि ये च संस्कारसंव्रताः । मलिम्लुचेऽपि कर्तव्या इष्टीः काम्याश्च वर्जयेत्' इति । संस्कारा अन्नप्राशननिष्क्रमणादयः । जनार्दनशयनादारभ्योत्थानं यावद्धुत्वाऽग्निं धारणपारणादिकं करिष्यामीति संकल्पसहिताः सव्रताः काम्या अपि । इष्टिग्रहणं काम्यपशुबन्धादि कर्मोपलक्षणम् । सर्वेषामपि काम्यानामनावश्यकत्वेन वर्जनीयत्वात् । हारीतोऽपि—'अधिमासे न कर्तव्यं श्राद्धमभ्युदयं तथा । तथैव काम्यं यत्कर्म' इति । यत्काम्यं कर्मेत्यादिकं तन्मलमासे न कर्तव्यमित्यर्थः । गभस्तिः— 'एको-

द्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते । तत्कार्यं पूर्वमासे च कालाधिक्येऽपि धर्मतः' इति । गौतमः—'जातकर्मणि यच्छ्राद्धं नवश्राद्धं तथैव च । ग्रहणे पुंसवादौ च तत्पूर्वत्र परत्र वा ' इति । निमित्तवशादिति वाक्यशेषः । आदिशब्दात्सीमन्तादिसंस्काराणामलभ्ययोगादीनां चोपसंग्रहः । मरीचिः—'रोगे चालभ्ययोगे च सीमन्ते पुंसवेपि च । यद्दानादि समुद्दिष्टं पूर्वत्रापि न दुष्यति' इति । ज्योतिःशास्त्रे—'तत्र दत्तमदत्तं च हुतं चाहुतमेव च । सुजप्तमप्यजप्तं स्यान्नोपवासः कृतो भवेत् । न यात्रां न विवाहं तु न च वास्तुनिवेशनम् । न प्रतिष्ठां च देवानां प्रासादग्रामभूरुहाम्' इति प्रजापतिरपि—'उपाकर्म च हव्यं च कव्यं पर्वोत्सवं तथा । उत्तरे नियतं कुर्यात्पूर्वे तन्निष्फलं भवेत् ।' अन्यत्रापि— 'अवरोहश्च हैमन्तः सर्पाणां बलिरष्टकाः । ईशानस्य बलिर्विष्णोः शयनं परिवर्तनम् । प्रायश्चित्तं तु सर्वस्य मलमासे विवर्जयेत् ।' गार्ग्यः—' अपूर्वदेवतां दृष्ट्वा शुचः स्युर्नष्टभार्गवे । मलमासेऽप्यनावृत्ततीर्थयात्रां विवर्जयेत् ।' इति । शातातपोऽपि—' अस्तं गते गुरौ शुक्रे वृद्धे बाले मलिम्लुचे । व्रतारम्भापवर्गे च न कुर्यान्मौञ्जिबन्धनम्' इति । गार्ग्योऽपि—'नामान्नप्राशनं चौलं विवाहं मौञ्जिबन्धनम् । निष्क्रमं जातकर्मादि काम्यं वृषविसर्जनम् । अस्तं गते गुरौ शुक्रे बाले वृद्धे मलिम्लुचे । उद्यापनमुपारम्भं व्रतानां नैव कारयेत् ।' इति । नामेति स्वकालेऽकृतनामकर्मविषयम् । तदाह गार्ग्यः—'नामकर्म च जातेष्टिं यथाकालं समाचरेत् । अतिपाते तु कर्तव्यं प्रशस्ते मासि पुण्यभे' इति । वसिष्ठोऽपि—'वापीकूपतडागादिप्रतिष्ठां यज्ञकर्म च । न कुर्यान्मलमासेऽपि महादानं व्रतानि च' इति । मरीचिरपि—'गृहप्रवेशगोदानस्थानाश्रममहोत्सवान् । न कुर्यान्मलमासे तु गुरौ शुक्रे तथास्तगे' इति । मात्स्येऽपि— 'आधानयज्ञकर्मादि प्रायश्चित्तव्रतानि च । न कुर्यान्मलमासेऽपि शुक्रगुर्वोरुपप्लवे' इति । पराशरः— 'अग्न्याधेयं प्रतिष्ठां च यज्ञदानव्रतानि च । वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः । माङ्गल्यमभिषेकं च मलमासे विवर्जयेत्' । अस्यापवादः—'चन्द्रसूर्यग्रहे चैव मरणे पुत्रजन्मनि । मलमासेऽपि देयं स्याद्दत्तमक्षय्यकारकम्' । इति । 'अग्न्याधेयं प्रतिष्ठां च' इत्यत्रानावश्यकत्वे सतीति शेषो द्रष्टव्यः । तेन मलमासेऽपि प्रायश्चित्तभूतमग्न्याधेयमग्न्यनुगत्यन्तरं कर्तव्यं न प्रतिषिध्यते । एवं प्रतिमासंस्कारनाशे पुनः प्रतिष्ठा न प्रतिषिध्यते । कौथुमिः—' अब्दमम्बुघटं दद्यादन्नं चापि सुसंचितम् । संवत्सरे विवृद्धेऽपि प्रतिमासं च मासिकम्' इति । तथा च त्रिंशत्सोमकुम्भान्नदानानि

एकमासिकं तदाधिकं भवतीत्यर्थः। अतएव वसिष्ठः-'संवत्सरमध्ये यद्यधिमासो भवेन्मासिकार्थं दिनमेकं वृद्धिं नयेत्' इति। यत्तु ज्योतिःपराशरेणोक्तम्-'उपाकर्म तथोत्सर्गः प्रसवाहोत्सवाष्टकाः। मासवृद्धौ पराः कार्या वर्जयित्वा तु पैतृकम्'। पराः कार्या उत्तरे मासि कार्या इत्यर्थः। तत्र प्रसवाहोत्सवशब्देन जातेष्टिरेव गृह्यते न पुनराभ्युदयिकं श्राद्धं जातकर्म च, तयोरपि ग्रहणे 'श्राद्धजातकनामानि' इत्यादिस्मृतिविरोधापत्तेः। पैतृकग्रहणमावश्यकविषयम्, न तु केवलसांवत्सरिकविषयम्। अमावास्यादिश्राद्धस्यापि मलमासे विधानात्। काठकगृह्येऽपि—'प्रेतमाल्यादिमारभ्य श्राद्धपिण्डोदकक्रियाः। सपिण्डीकरणान्ताश्च यथाकालमुपस्थिताः। यवव्रीहितिलैर्होमो जातकर्मादिकाः क्रियाः। मघात्रयोदशीश्राद्धं प्रत्युपस्थितहेतुकम्। अनन्यगतिकत्वेन कर्तव्यं स्यान्मलिम्लुचे' इति। प्रत्युपस्थितहेतुकमित्यनेन संध्यावन्दनाद्यतिपातनिमित्तप्रायश्चित्ताग्निनाशादिनिमित्तपुनराधानादेरुपसंग्रहः। बृहस्पतिः-'नित्यनैमित्तिके कुर्यात्प्रयतः सन्मलिम्लुचे। तीर्थश्राद्धं गजच्छाया प्रेतश्राद्धं तथैव च' इति। अत्र गजस्य या पूर्वस्यां दिशि छाया सा गजच्छाया। 'परमान्नं तु यो दद्यात्पितॄणां मधुना सह। छायायां तु गजेन्द्रस्य पूर्वस्यां दक्षिणामुखे' इति विश्वामित्रोक्ता मुख्या ग्राह्या, न तु 'यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः। याम्या तिथिर्भवेत्सापि गजच्छाया प्रकीर्तिता' इति। तैनेवोक्ता पारिभाषिकी। मलमासे तदसंभवात्। हंसस्य सूर्यस्य मघायुक्तत्रयोदश्यां करे हस्तेऽवस्थाने सति भाद्रमासे कन्यासंक्रान्तेरवश्यंभावेन तस्य मलमासत्वासंभवात्। नागरखण्डे—'नभो वाऽथ नभस्यो वा मलमासो यदा भवेत्। सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः' इति। तत्राषाढीमवधिं कृत्वा सप्तमपञ्चमौ द्रष्टव्यौ। 'आषाढ्याः पञ्चमे पक्षे' इति वचनात्। आषाढमासस्यान्तभागे कर्कटसंक्रान्तौ नभसोऽधिकमासत्वम्। श्रावणमासस्यान्त्यभागे सिंहसंक्रान्तौ नभस्यस्याधिकमासत्वम्। तयोरुभयोरपि पक्षयोः कन्यायां वर्तमाने सवितरि यः कृष्णपक्षः स सप्तमो भवति। असति तु द्विविधेऽधिमासे पञ्चमः। देवलः—'अर्के नभस्यकन्यास्थे श्राद्धपक्षः प्रकीर्तितः। सिनीवालीमतिक्रम्य यदा कन्यां व्रजेद्रविः। तदा कालस्य वृद्धत्वादतीतैव पितृक्रिया' इति। अतीता पञ्चमपक्षमतिक्रान्ता। एवं च यत्कैश्चिदुक्तम्। 'कन्यासंक्रान्तिनिमित्तानां श्राद्धानां षोडशसु दिवसेषु नैमित्तिकत्वान्नैमित्तिकस्य च श्राद्धस्य मलमासे प्रतिषेधाभावात्तानि कार्याणि। तदुक्तं प्रजापतिना-'मुक्त्वा नैमित्तिकं श्राद्धम्' इति। ब्रह्मसिद्धान्ते—

'सूर्येण लङ्घितो मासो न कर्मण्यः स्मृतो बुधैः । तस्मात्तत्र न कुर्वीत श्राद्धं नैमित्तिकादृते' निमित्तत्वं च श्राद्धं प्रति कन्यासंक्रान्तेः पुराणोक्तम् । 'कन्यागते सवितरि यान्यहानि तु षोडश । क्रतुभिस्तानि तुल्यानि पितॄणां दत्तमक्षयम्' इति, तन्निरस्तम् । शाट्यायनिः—'नभस्यस्यापरे पक्षे तिथिषोडशकस्तु यः । कन्यागतान्वितश्चेत्स्यात्सकलः श्राद्धकर्मणि ।' प्रशस्त इति शेषः । यत्तु जातूकर्ण्यवचनम्-'आषाढीमवधिं कृत्वा यः स्यात्पक्षस्तु पञ्चमः । श्राद्धं तत्र प्रकुर्वीत कन्यां गच्छतु वा न वा' तत् पूर्वप्रदर्शितवाक्यनिचयपर्यालोचनया पक्षोपक्रमाभिप्रायम् । तथा च कार्ष्णाजिनिः—' अन्ते वा यदि मध्ये वा यत्र कन्यां रविर्व्रजेत् । पक्षस्तु पञ्चमः पूज्यः श्राद्धषोडशकं प्रति' तेन 'कन्यागते सवितरि' इत्यादिपुराणवचनं पक्षमध्ये यस्मिन्कस्मिंश्चिदहनि कन्यासंक्रमणे सति प्रतिपदादिषोडशाप्यहान्युपादेयानीत्येवं व्याख्येयं न तु संक्रमणात्पूर्वाणि हेयानीत्येवम् । शुद्धमासमृतस्य प्रथमाब्दिकं मलमासमृतानां प्रत्याब्दिकश्राद्धं च तत्संबन्धिमासस्य मलमासत्वे मलमास एव कार्यम् । तदाह वृद्धवसिष्ठः-'असंक्रान्तेऽपि कर्तव्यमाब्दिकं प्रथमं द्विजैः । तथैव मासिकं श्राद्धं सपिण्डीकरणं तथा' इति । यमः-'आब्दिकं प्रथमं यत्स्यात्तत्कुर्वीत मलिम्लुचे । त्रयोदशे तु संप्राप्ते कुर्वीत पुनराब्दिकम्' पुनराब्दिकं द्वितीयादिवार्षिके त्रयोदशे मासि संप्राप्ते संपूर्णे सति चतुर्दशप्रवेशदिने कुर्वीतेत्यर्थः । लघुहारीतोऽपि—'प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया सुतैः । क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरम्' इति । द्वादशे मास्यतीतेऽनन्तरदिने । क्वचिन्मृतिमासे मलिने त्रयोदशेऽतीतेऽनन्तरदिनेऽपि स्यात् । किं त्वाद्यं वत्सरं मुक्त्वाद्यवत्सरानन्तरमृतिमास एव मलिने तु द्वादशेऽतीतेऽनन्तरदिन एवेत्यर्थः । अयं यः प्रथमाब्दिकस्य मृतमासात्त्रयोदशमासाद्यदिनकर्तव्यतानियमः सोऽन्तराधिमासपाताभावे ज्ञातव्यः । तत्सद्भावे तु त्रयोदशेऽतीत एव । 'संवत्सरस्य मध्ये तु यदि स्यादधिमासकः । तदा त्रयोदशे मासि क्रिया प्रेतस्य वार्षिकी' इति विष्णुधर्मोत्तरात् । त्रयोदशेऽतीते वार्षिकी ऊनाब्दिकसपिण्डीकरणरूपा । 'मासपक्षतिथिस्पृष्टे यो यस्मिन्म्रियतेऽहनि । प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तं विदुः' इति व्यासवचनाच्च । अन्यथा कार्तिकमृतस्याश्विने प्रथमाब्दिकप्रसङ्गः । प्रथमवर्षेऽधिमासपातेऽधिकमासिकविधानाच्च । यद्वा 'षष्ठ्या तु दिवसैर्मासः' इति वचनाच्छुद्धाशुद्धभागयोरेकमासत्वमभिप्रेत्य तत्रापि द्वादशातीत एवाब्दिकम् । एतादृशव्यवहारोपपादनार्थमेवैकमासत्वाभिधानात् । तेन मलमासमृतानां कालक्रमेण यदा कदाचिन्मृति-

मास एव मलमासस्तदा तदानींतनमाब्दिकम्। यदा च मृतिमासात्त्रयोदश एव मलमासस्तदा प्रथमाब्दिकं च। 'मलमासे मृतानां तु यच्छ्राद्धं प्रतिवत्सरम्। मलमासे तु कर्तव्यं नान्येषां तु कदाचन' इति। भृगुवचनेन 'आब्दिकं प्रथमं यत्स्यात्तत्कुर्वीत मलिम्लुचे' इति स्मरणेन च मलमास एव कर्तव्यम्। शुद्धमासमृतानां द्वितीयाद्याब्दिकं तु तन्मासेऽधिके सति शुद्धमास एव कर्तव्यमिति। पैठीनसिरपि—'मलमासेऽपि कर्तव्यं श्राद्धं यत्प्रतिवत्सरम्। सांवत्सरं न वर्धेत श्राद्धं तत्र मृतेऽहनि' इति। अत्र पूर्वार्धं मलमासमृतविषयम्॥ मलमासे शुद्धमासमृतस्यप्रत्याब्दिकश्राद्धनिषेधात्॥ मलमासेपीत्यप्यवधारणे। उत्तरार्द्ध शुद्धमासमृतस्यप्रथमाब्दिकाविषयम्। सांवत्सरं प्रथमाब्दिकवन्न वर्धेत नोभयत्र करणीयं किं तु तत्र मलमासे कर्तव्यमित्यनुषज्यते।

यत्तु सत्यव्रतः—'वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि। मलमासे न तत्कार्यं व्याघ्रस्य वचनं यथा'। इति द्वितीयादिवार्षिकविषयम्। 'आब्दिकं प्रथमं यत्स्यात्तत्कुर्वीत मलिम्लुचे।' इति पूर्वोक्तवचनात्। तेन द्वितीयादि शुद्धमास एव। पृथ्वीचन्द्रोदये, दिवोदासीये, मदनपरिजाते चैवम्। अत्र केचित्—मलमासे सांवत्सरिकं श्राद्धं कृत्वा तदुत्तरमासे पुनस्तदेवावर्तनीयम्। 'प्रथमं यत्स्यात्—' इति पूर्वोक्तयमवचनात्। अत्र च त्रयोदशे तु संपूर्णे सति चतुर्दशमासप्रवेशदिने पुनरप्याब्दिकं कुर्वीतेत्यर्थः। 'सांवत्सरं न वर्धेत' इत्यस्यायमर्थः। न वर्धेत न विच्छिद्येतेति तेनैतदेव मासद्वयेऽपि श्राद्धमनुष्ठेयमिति प्रतिपादयन्ति॥ तदसत्॥ उभयत्र श्राद्धानुष्ठाने प्रमाणाभावात्। यमवचनस्य तु प्रथमाब्दिकद्वितीयाद्याब्दिकविषयत्वेन व्यवस्थापितत्वात्। न वर्धेतेत्यस्य नविच्छिद्येतेत्यर्थकत्वे क्लिष्टत्वापत्तेश्च। यत्तु वृद्धवसिष्ठः-'श्राद्धीयाहनि संप्राप्ते ह्यधिमासो भवेद्यदि। मासद्वयेऽपिकुर्वीतश्राद्धमेवं न मुह्यति'॥ यच्च व्यासः— 'उत्तरे देवकार्याणि पितृकार्याणि चोभयोः' इति—तन्मासिकादिविषयकम् 'यौगादिकं मासिकंच श्राद्धं चापरपक्षिकम्। मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेऽपि च' इति स्मृतिचन्द्रोक्तेः। तैर्थिकं तीर्थश्राद्धम्॥ तच्च मासद्वयेऽपि कार्यमिति त्रिस्थलीसेतौ भट्टाः॥ केचित्तु—'प्रतिमासं मृताहे च श्राद्धं यत्प्रतिवत्सरम्। मन्वादौ च युगादौ च तन्मासोरुभयोरपि' इति मरीचिवचनात् 'वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि। मासद्वयेऽपि तत्कुर्याद्व्याघ्रस्य वचनं यथा' इति। गालवोक्तेश्च प्रत्याब्दिकं मासद्वये कार्यमित्याहुः॥ तत्तुच्छम्॥ प्रतिमासं मृताहे क्रियमाणं मासिकं, प्रतिसंवत्सरं क्रियमाणं कल्पादिश्राद्धमिति मरीचिवचसो मदनरत्नेन व्याख्यानात्।

गालवीयस्य च मासद्वयात्मके क्षयमासे इति माधवेन व्याख्यानात्। अत एव कौथुमिः— 'अधिमासे न कर्तव्यं श्राद्धं सांवत्सरादिकम्। वर्षवृद्ध्यभिषेकादि कर्तव्यमधिके न तु।' इति। यदपि निर्णयामृते पूर्वोक्तकालादर्शवचनान्मलमासे श्राद्धदिनस्य वन्ध्यत्वनिरासार्थं पित्रुद्देशेन ब्राह्मणान्भोजयित्वा शुद्धमासे सपिण्डकं श्राद्धं कुर्यात्। 'पिण्डवर्जमसंक्रान्ते संक्रान्ते पिण्डसंयुतम्। प्रतिसंवत्सरं श्राद्धमेवं मासद्वयेऽपि च' इति वृद्धपराशरोक्तेरिति। तदपि चिन्त्यम्। पूर्वोक्तवचनस्य क्षयपूर्वभाव्यधिकमासविषयत्वात्। तत्र हि मासद्वये श्राद्धमुक्तम्। तथा च सत्यतपाः—'एक एव यदा मासः संक्रान्तिद्वयसंयुतः। मासद्वयगतं श्राद्धं मलमासेऽपि शस्यते' इति। मासद्वयगतं पूर्वसंक्रान्तिगतं क्षयगतं च मलमासे क्षयमासे, अपिशब्दात्पूर्वाधिमासे च इति हेमाद्रिः॥ दीपिकायामपि— 'तत्प्राक्सङ्ग्यधिमासको यदि भवेत्तत्रत्यसांवत्सरं तस्मिञ्छुद्धतया क्षये च वचनात्कुर्याद्द्वयोः कोविदः' इति। कालादर्शोऽपि कथंचिदेतद्विषयतयैव व्याख्येय इति। एवं मलमासे वर्ज्यावर्ज्यनिर्णये कृते क्षयमासेऽपि मलमासत्वान्मलमासप्रयुक्तनिषेधप्राप्तौ 'रविसंक्रमहीनो यो वर्ज्यावर्ज्यविधिः स्मृतः। स एव तु द्विसंक्रान्तौ मलमासेऽप्युदीरितः' इति। काठकगृह्यवचनादधिमासप्रयुक्तनिषेधप्राप्तौ च विशेषोऽभिधीयते। अत्र काम्यव्रतादिकर्मणां प्रथमारम्भमेव न कुर्यात्, द्वितीयाद्यारम्भं समाप्तिं च कुर्यादेव। अन्यथा पौषमार्गशीर्षयोः क्षयमासान्तःपाते पूर्वपौषे प्रारब्धस्य माघस्नानव्रतस्य पुनरारम्भः प्रसज्येत तथा कार्तिकस्य क्षयमासान्तःपाते चातुर्मास्यव्रतानामसमाप्तिः प्रसज्येत। प्रारब्धकर्मणश्चासमाप्तौ पुनरारम्भे च संकल्पविरोधः' 'आरम्भानियमे दोषश्चासमाप्तौ स्यात्' इति कात्यायनवचनविरोधश्च॥ अधिमासे तु शुद्धमासान्तरसद्भावादारम्भसमाप्त्योस्तत्रोपपत्तेराधिमासे तयोः प्रतिषेधे न कश्चिद्विरोधः। प्रथमारम्भोऽपि क्षयमासे शुद्धमासान्तराभावात्कस्मान्न स्यादिति चेत् न॥ 'न कुर्यान्मलमासे तु महादानव्रतानि च' इति वचनविरोधात्। अस्य च प्रथमारम्भव्यतिरिक्तारम्भसमाप्त्यादिनिषेधपरत्वे संकल्पविरोधस्योक्तत्वात्। काम्यव्रतादीनां क्षयमासे प्रथमारम्भनिषेधपरत्वेऽविरोधाच्चेति॥ नन्वेवं सति यदा कार्तिकोऽधिमासो भवति तदा कार्तिकव्रतानां शुद्धाश्विन एवारम्भः। शुद्धकार्तिके च समाप्तिः। मासोपवासव्रतस्यापि मासद्वयमेवानुष्ठानं प्राप्नोति तच्चाशक्यम्॥ उच्यते॥ यदीह मासोपवासव्रतस्याश्विने प्रारम्भविधानं शुद्धकार्तिके च समाप्तिविधानं स्यात्, स्यादेवम्। न त्वेवमस्ति, किंत्वस्याश्विनशुक्लद्वादश्यामारम्भमभिधायोपरितनशुक्लद्वादश्यां समाप्तिर्विष्णुरहस्येऽभि-

हिता—'अश्विनस्यामले पक्षे एकादश्यामुपोषितः । व्रतमेतत्तु गृह्णीयाद्यावत्त्रिंशद्दिनानि तु ॥ अन्यूनाधिकमेवं तु व्रतं त्रिंशद्दिनैः कृतम् । कृत्वा मासोपवासं तु संयतात्मा जितेन्द्रियः । ततोऽर्चयेद्वै पुण्यं च द्वादश्यां गरुडध्वजम् । पूजयेत्पुष्पमालाभिर्गन्धपुष्पविलेपनैः । वस्त्रदानादिभिश्चैव भोजयेच्च द्विजोत्तमान् । दद्याच्च दक्षिणां तेभ्यः प्रणिपत्य क्षमापयेत्' । अतः शुद्धाश्विनशुक्लद्वादश्यामेव तद्व्रतमारभ्योपरितनशुक्लद्वादश्यां समापनीयं न मासद्वयमनुष्ठेयम् । मासोपवासव्रतस्य च काम्यत्वात् काम्यस्य च मलमासात्प्रागारब्धस्य मलमासेऽपि समाप्तिविधानान्न कश्चिद्दोषः । मासद्वयसंबन्धीनि क्षयाहादिश्राद्धान्यपि क्षयमास एव कर्तव्यानि । तदाह सत्यव्रतः—'एक एव यदा मासः संक्रान्तिद्वयसंयुतः । मासद्वयगतं श्राद्धं मलमासेऽपि शस्यते' इति । एवं मासद्वयसंबन्धीन्यावश्यकान्यपि कर्माणि तत्रैवानुष्ठेयानि, अनन्यगतिकत्वात् । 'मासद्वयोदितं कर्म तत्र कुर्याद्धि निर्णयः । एकस्मिन्मासि मासौ द्वौ यदि स्यातां तयोर्द्वयोः ॥ तावेव पक्षौ ता एव तिथयस्त्रिंशदेव हि' इति स्मृत्यन्तरवचनाच्च क्षयमासस्य मासद्वयात्मकत्वेन क्षयमासे यावती या तिथिस्तस्याः पूर्वार्ध मृतस्य जातस्य च क्रमेण वर्षान्तरे क्षयाहश्राद्धं वर्धापनोत्सवं च क्षयमासान्तर्गतपूर्वमाससंज्ञके मासे कुर्यात् । तिथ्युत्तरार्धे मृतस्य जातस्य च क्रमेण क्षयाहश्राद्धवर्धापनोत्सवौ क्षयमासान्तर्गतोत्तरमाससंज्ञके मासे कुर्यात् । तदुक्तम्—'तिथ्यर्धे प्रथमे पूर्वो द्वितीयेऽर्धे तदुत्तरः । मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ' इति । इदं च क्षयमासतिथिपूर्वोत्तरार्धयोः क्रमेण पूर्वोत्तरमाससंबन्धित्वस्य व्यवस्थापकं वचनं न क्षयमासकर्तव्यमासद्वयसंबन्धिश्राद्धव्रतादिविषयम् । अपराह्णादिकालविधायकानेकवचनबाधप्रसङ्गात् । तस्मात्कार्तिकमार्गशीर्षयोः क्षयमासान्तःपाते कार्तिकसंबन्धीनि मार्गशीर्षसंबन्धीनि च यानि श्राद्धव्रतादीनि यस्मिन्पक्षे यस्यां तिथौ यस्मिन्नपराह्णादिकाले विहितानि तानि क्षयमासे तत्र तत्रैव कर्तव्यानि । एवं क्षयमासान्तरेऽपि द्रष्टव्यम् । ततश्च कार्तिकशुक्लप्रतिपत्प्रयुक्तं पितृक्षयाहैकोद्दिष्टं मार्गशीर्षशुक्लप्रतिपत्प्रयुक्तं मातृक्षयाहैकोद्दिष्टं च क्षयमासशुक्लप्रतिपदि मध्याह्न एव कर्तव्यम् । एवमन्यान्यपीति दिक् ।

यानि मलमासे वर्ज्यानि तानि सर्वाण्यपि शुक्राद्यस्तादावपि वर्ज्यानि । तथा चोक्तम्—'बाले वा यदि वा वृद्धे शुक्रे चास्तमुपागते । मलमास इवैतानि वर्जयेद्देवदर्शनम्' इति । अत्र केचित्-मलमास इवेति सिद्धवद्दृष्टान्तीकरणान्यथानुपपत्त्या मलमासे प्रथमदेवतादर्शननिषेधः सिद्धः । अपरे तु—मलमास इवेत्युत्तरवचनोपात्ताग्न्याधेयादि-

ष्वेव योजयन्ति । यथा मलमासे चन्द्रसूर्यग्रहणादिकालव्यतिरेकेणैतेषां निषेधस्तथैव बाल्यादिष्वपि यथा स्यादिति तस्मिन्पक्षे मलमासे देवतादर्शनस्य न प्रतिषेधः । वस्तुतस्तु—'अपूर्वं देवतां दृष्ट्वा शुचः स्युर्नष्टभार्गवे' इत्यत्रोत्तरार्धगतमलमासेऽपीत्यस्यान्वयेन मलमासेऽपूर्वदेवतादर्शननिषेधो युक्त एवेति । लल्लोऽपि—'नीचस्थे वक्रसंस्थेऽप्यतिचरणगते बालवृद्धास्तगे वा संन्यासो देवयात्रा व्रतनियमविधिः कर्णवेधस्तु दीक्षा । मौञ्जीबन्धोऽथ चूडा परिणयनविधिर्वास्तुदेवप्रतिष्ठा वर्ज्याः सद्भिः प्रयत्नात्त्रिदशपतिगुरौ सिंहराशिस्थिते च' । नीचस्थो मकरस्थः । दीक्षा यागदीक्षा, आगमदीक्षा च । तथा 'उद्यानचूडाव्रतबन्धदीक्षा विवाहयात्रा च वधूप्रवेशः । तडागकूपत्रिदशप्रतिष्ठा बृहस्पतौ सिंहगते न कुर्यात् ।' दिवोदासीये-'गुर्वादित्ये गुरौ सिंहे नष्टशुक्रे मलिम्लुचे । गृहकर्म व्रतं यात्रां मनसापि न चिन्तयेत्' । अस्यापवादस्तत्रैव ब्राह्मे—'मुण्डनं चोपवासं च गौतम्यां सिंहगे गुरौ । कन्यागते तु कृष्णायां न तु तत्तीरवासिनाम्' तथा—'आद्या सा गौतमी गङ्गा द्वितीया जाह्नवी स्मृता । सर्वतीर्थफलं स्नानाद्गौतम्यां सिंहगे गुरौ' । अस्त उक्तो ब्रह्मसिद्धान्ते—'रविणासत्तिरन्येषां ग्रहाणामस्त उच्यते । ततोऽर्वाग्वार्धकं मौढ्यादूर्ध्वं बाल्यं प्रकीर्तितम्' इति । वार्धकबाल्ययोर्मानमपि तत्रैव— 'पक्षं प्राग्दिशि वृद्धत्वं पश्चात्पञ्चदिनं कवेः । शैशवं प्राक्तु पञ्चाहं पश्चाद्दशदिनं स्मृतम् । शैशवं वार्धकं पक्षं प्राक्पश्चाच्च बृहस्पतेः' इति । कविः । शुक्रः संहिताप्रदीपे— 'स्यात्सप्तरात्रं गुरुशुक्रयोश्च बालत्वमह्नां दशकं च वार्धम् । वृद्धौ सितेज्यावशुभौ शिशुत्वे शस्तौ यतस्तावुपचीयमानौ' वृत्तशते—'बालः शुक्रो दिवसदशकं पञ्चकं चैव वृद्धः पश्चादह्नां त्रितयमुदितः पक्षमैन्द्र्यां क्रमेण । जीवो वृद्धः शिशुरपि तथा पक्षमन्यैः शिशू तौ वृद्धौ प्रोक्तौ दिवसदशकं चापरैः सप्तरात्रम्' । पश्चिमत उदये दशदिनानि बालः अस्ते पञ्च दिनानि वृद्धः पूर्वतो दिनत्रयं बालः पक्षं च वृद्ध इत्यर्थः । जीवो गुरुः । अन्यत्र त्वन्यथोक्तम् । 'प्राक्पश्चादुदितः शुक्रः पञ्चसप्तदिनं शिशुः । विपरीतं तु वृद्धत्वं तद्वदेव गुरोरपि' इति । रत्नमालायामपि—'प्रागुद्यतः शिशुरहस्त्रितयं सितः स्यात्पश्चाद्दशाहमथ पञ्च दिनानि वृद्धः । प्राच्यां तु पक्षममरेन्द्रगुरोस्तु पक्षं प्रागप्यवागपि वदन्ति वसिष्ठमुख्याः' । अत्र विशेषः—'पक्षं वृद्धो महास्ते तु बालश्चात्र दशाहिकः । पादास्ते तु दशाहानि वृद्धो बालो दिनत्रयम्' । महास्तपादास्तलक्षणं तु—'द्वात्रिंशद्दिवसाश्चास्ते जीवस्य भार्गवस्य च । द्वासप्ततिर्महत्यस्ते पादास्ते द्वादश क्रमात्' । एषां च पक्षाणा

व्यवस्थामाह मिहिरः—'बहवो दर्शिताः काला ये बाल्ये वार्धकेऽपि च । ग्राह्यास्तत्राधिकाः शेषा देशभेदाद्रुतापदि ।' इति । देशभेदश्च गार्ग्येण दर्शितः—'शुक्रो गुरुः प्राक् च पराक् च बालो विन्ध्ये दशावन्तिषु सप्तरात्रम् । वङ्गेषु हूणेषु च षट् च पञ्च शेषे तु देशे त्रिदिनं वदन्ति ।' इति । वृद्धत्वमप्येतत्प्रमाणं ज्ञेयम् । सिंहस्थे गुरौ विशेषमाह माण्डव्यः—'श्रुतिवेधजातकान्नप्राशनचूडादिकं सर्वम् । रविभवनस्थे जीवे कार्यं वर्ज्यो विवाहस्तु' इति । तथा—'रविक्षेत्रगते जीवे जीवक्षेत्रगते गुरौ । वर्जयेत्सर्वकार्याणि व्रतस्वस्त्ययनानि च ।' तथा—' गुर्वादित्ये गुरौ सिंहे शुक्रे चास्तमुपागते।त्यजेद्यानं महादानं व्रतं देवविलोकनम्' । लल्लः—'गुरुक्षेत्रगतो भानुर्भानुक्षेत्रगतो गुरुः । गुर्वादित्यः स विज्ञेयः सर्वकर्मसु गर्हितः ।' शौनकः—' एकराशिगतौ स्यातां भानुजीवौ यदा पुनः । व्रतबन्धविवाहादि शुभं कर्माखिलं त्यजेत् ।' राजमार्तण्डे—'यात्रां चूडां विवाहं श्रुतिविवरविधिं शंखसद्मप्रवेशं प्रासादोद्यानहर्म्यं सुरनरभवनारम्भविद्याविधानम् । मौञ्जीबन्धं प्रतिष्ठां मणिकनकरदाधारणं कुर्वते ये मृत्युः सिंहस्थितेज्ये गुरुदिनकरयोरेकराशिस्थितौ च' । तथा—'गुर्वादित्ये गुरौ सिंहे नष्टे शुक्रे मलिम्लुचे । याम्यायने हरौ सुप्ते सर्वकर्माणि वर्जयेत्' ॥ सिंहस्थे गुरौ विशेषमाह शातातपः—'माघ्यां यदि मघा नास्ति सिंहे गुरुरकारणम्' । अन्यत्रापि—'मघाऋक्षं परित्यज्य यदा सिंहे गुरुर्भवेत् । तदा चेत्कन्यका ऊढा सुभगा सुप्रिया भवेत्' तथा 'माघी च मघसंयुक्ता मघायां च गुरुर्भवेत् । महामाघस्तदा प्रोक्तो व्रतोद्वाहौ च वर्जयेत्' । वृद्धगार्ग्यः—' मीने धनुषि सिंहे च स्थिते सप्ततुरङ्गमे । क्षौरकर्म न कुर्वीत विवाहं गृहकर्म च' । तथा—' वापीकूपतडागयागगमनं क्षौरप्रतिष्ठा व्रतं विद्यामन्दिरकर्णवेधनमहादानं वनासेवनम् । तीर्थस्नानविवाहदेवभवनं मन्त्रादिदेवेक्षणं दूरेणैव जिजीविषुः परिहरेदस्तं गते भार्गवे' । लल्लोऽत्र पुनर्विशेषमाह—'उपप्लुवे शीतलभानुभान्वोरर्धोदये वा कपिलाख्यषष्ठ्याम्।सुरासुरेज्यास्तमये च तीर्थे यात्राविधिः संक्रमणे च शस्तः' । गुरुशुक्रास्तमयादिनिषिद्धकाले ग्रहणादौ न दोष इत्यर्थः । वसिष्ठः— 'अतिचारगते जीवे वर्जयेत्तदनन्तरम् । व्रतोद्वाहादिकार्येषु अष्टाविंशतिवासरान् । अतिचारगतो जीवस्तं राशिं नैति चेत्पुनः । लुप्तः संवत्सरो ज्ञेयः सर्वधर्मबहिष्कृतः' । अस्यापवादः— 'वृषे मेषे झषे कुम्भे यद्यतीचारगो गुरुः । न तत्र काललोपः स्यादित्याह गालवो मुनिः' इति । राजमार्तण्डे त्वन्येषां वार्धकान्तर्भूतत्वेनाभिमतः संध्याकालोऽपि पृथगुक्तः—'भवेत्संध्यागतः पश्चादन्तमेष्यन्दिनत्रयम् ।

दिनानि पञ्च पूर्वेण तत्कृतें कर्म वर्जयेत् । बाले वृद्धे च संध्यांशे चतुःपञ्चत्रिवासरान् । जीवे च भार्गवे चैव विवाहादिषु वर्जयेत् । बालेवृद्धे च संध्यायां नष्टे च भृगुनन्दने । दुर्गता वा सती वन्ध्या मृत्युयुक्ता फलं क्रमात् । बाले च दुर्भगा नारी वृद्धे नष्टप्रजा भवेत् । नष्टे च मृत्युमाप्नोति सर्वमेतद्गुरावपि' इति । अत्र चतुष्पञ्चाद्यल्पकालकथनमापद्विषयम् । यस्तु दक्षिणायने चातुर्मास्ये च कर्मनिषेधः स येषूदगयननियमस्तद्विषयः,काम्ययज्ञादिविषयश्च । यथा विष्णुधर्मोत्तरे-'शेतेऽत्र चतुरो मासान्यावद्भवति कार्तिकः । विशिष्टा न प्रवर्तन्ते तदा यज्ञादिकाः क्रियाः । नाभिषेच्यो नृपश्चात्र यावद्भवति कार्तिकः' इति । भविष्योत्तरेऽपि—'सुप्ते चापि जगन्नाथे केशवे गरुडध्वजे । निवर्तन्ते क्रियाः सर्वाश्चातुर्वर्ण्यस्य भारत' । ताश्च—' विवाहव्रतबन्धादिचूडासंस्कारदीक्षणम् । गृहयज्ञप्रवेशादिदानार्चनप्रतिष्ठितिः । पुण्यानि यानि कर्माणि वर्जयेद्दक्षिणायने । ' इति सर्वास्तत्र तत्र परिगणिताः । भोजराजीये—'सुप्ते हरौ प्रकटशेषफणोपधाने लक्ष्मीकराब्जपरिभाजितपादपद्मे । मीने रवौ धनुषि चास्तमिते च शुक्रे वास्तुक्रियाविधिरसौ मुनिभिर्निषिद्धः' इति । एवं गुर्वतिचारसिंहमकरस्थगुरुकेत्वाद्यद्भुतोत्तरसप्ताहादिषु सर्वेषां शुभानामावश्यककर्मणामाकालिकवृष्ट्युत्तरैकाहादिषु च परिगणितानामेव यात्रादीनां निषेधस्तत्तज्ज्योतिःशास्त्रवचनेभ्यो ज्ञेयः इत्यलमनया प्रसक्तानुप्रसक्तचिन्तया ॥ प्रकृतमनुसरामः ॥ यदुक्तम् 'अनावृत्तं तीर्थस्नानमनादिदेवतादर्शनं च मलमासादौ न कर्तव्यम्' इति-तस्य गयायां प्रतिप्रसवो वायुपुराणे—'गयायां सर्वकालेषु पिण्डं दद्याद्विचक्षणः । अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः । न त्यक्तव्यं गयाश्राद्धं सिंहस्थेऽपि बृहस्पतौ' इति । अत्र श्राद्धस्य यात्रापूर्वकत्वाद्गयां प्रति यात्रापि न निषिद्धेत्यर्थः । तथा-'गोदावर्यां गयायां च श्रीशैले ग्रहणद्वये । सुरासुरगुरूणां च मौढ्यदोषो न विद्यते' ॥ ग्रहणद्वये तन्निमित्तकुरुक्षेत्रयात्रादावित्यर्थः ॥ अस्तादेरपवादः काशीखण्डे— 'न ग्रहास्तोदयकृतो दोषो विश्वेश्वरालये । सदा सौम्यायनं तत्र सदा तत्र महोदयः' इति । एतानि काशीस्तुतिपराणीति मयूखे ।। तन्न । एतेषां काशीस्तुतिपरत्वेऽपि उपरि हि देवेभ्यो धारयतीतिवत्, बलवत्तरबाधकासत्त्वे विधिकल्पकत्वस्य युक्तत्वात् इत्यलं पल्लवितेन ।

अथ मलमासव्रतं हेमाद्रौ पाद्मे—'देवेशं शंकरं शंभुं सर्वदेवनमस्कृतम् । षडाननो महातेजाः प्रणम्य पर्यपृच्छत' । स्कन्द उवाच—'देव देव महादेव सर्वधर्मप्रवर्तक । व्रतानि बहुपुण्यानि श्रुतानि त्वत्प्रसादतः । न तृप्तिमधिगच्छामि धर्मतत्त्वे सुरेश्वर । व्रतान्तरं महापुण्यं कथयस्व महाप्रभो' । ईश्वर उवाच-

'शृणु वत्स प्रवक्ष्यामि व्रतं पापहरं शुभम् । यस्यानुष्ठानमात्रेण तुष्टो भवति भास्करः । दुःखं हरति यत्क्षिप्रं प्रदद्यात्सौख्यमुत्तमम्' । स्कन्द उवाच—'किं व्रतं कस्य वै दानं कस्य देवस्य पूजनम् । केन चादौ पुरा चीर्णं तत्सर्वं कथयस्व नः । ईश्वर उवाच— 'मलमासव्रतं स्कन्द सर्वपापहरं नृणाम् । सकांस्यमन्नदानं च पूजनं भास्करस्य च । यस्यानुष्ठानमात्रेण पुत्रदौहित्रवान्नरः।धनधान्यसमायुक्तः सर्वपापैः प्रमुच्यते।आसीत्पुरा महाराजो नहुषः पृथिवीतले।धर्मप्रियस्तपोनिष्ठो देवपूजनतत्परः । प्रजानां पालको नित्यमतिथीनां च पूजकः।गन्तुं शक्रपदे सोऽथ ब्राह्मणान्नरवाहने।योक्तुमाकारयद्दैवादगस्त्यं मुनिपुङ्गवम् । युक्त्वा समारुहत्सोऽथ तदानीमिन्द्रमायया । मोहितेन तु तेनैव युक्तो ब्रह्मविदां वरः।सर्पसर्पेति मूढेन ताडितश्च मुनिस्तदा।क्रुद्धेन मुनिना तेन शापितः कुम्भयोनिना।सर्पो भवेति हे पाप महाशब्दस्तदाभवत् । राजाप्राप्तस्तदा स्कन्द सर्पत्वमतिदारुणम्।महारण्ये महाप्राज्ञ सोऽवसत्तोयवर्जितः[1]।देहभावेन तेनापि कृतास्तु पापराशयः।एकदा तु महारण्ये कृष्णद्वैपायनो मुनिः । आजगाम महाभाग तस्य भाग्येन चोदितः । तयोस्तु संगतमभूदरण्ये तरुसंकुले । तद्दर्शनात्स सस्मार पूर्वजन्मविचेष्टितम् । ततश्च विह्वलीभूतः प्रणम्य शिरसा मुनिम् । पतितो दण्डवत्सर्प उवाच वचनं रुदन् । पपात च महीपृष्ठे पापिदण्डक्षम प्रभो । मादृशानां तु पापानां त्वमेव शरणं सदा । अस्माद्दुःखाद्विमुञ्च त्वं कृपां कुरु मयि प्रभो । इति श्रुत्वा वचस्तस्य स मुनिः करुणायुतः । उवाच वचनं सर्पं शृणुष्व मनसेप्सितम् । पूर्वकर्मविपाकेन त्वया दुःखमुपार्जितम्' । सर्प उवाच-'तात केन विमुच्येऽहमनन्ताद्दुःखसागरात् । मुक्तिर्मे वेद्विभोऽस्माकं कस्येदं कर्मणःफलम्' । व्यासउवाच—'पूर्वजन्मनि राजेन्द्र मलमासे समागते । नार्चितो भास्करो विष्णुर्विधिना न कृतं व्रतम्।तत्कर्मपरिपाकेन बुद्धिस्ते विप्रयोजने।शिबिकायां समभवच्छक्रमायासहायतः।तस्मात्सर्वप्रयत्नेन नृप त्वं व्रतमाचर।यस्यानुष्ठानमात्रेण स्वपदं प्राप्स्यसे ध्रुवम्' सर्प उवाच-'केन तावद्विधानेन कर्तव्यं व्रतमीदृशम्।किं देयं हि व्रते चेह तत्सर्वं कथयस्व मे'।व्यासउवाच-'विष्णुरूपं सहस्रांशुं मलिने मासि पूजयेत्।पूजिते च सहस्रांशौ विष्णुर्भवति पूजितः।मलमासस्तु मासानां मलिनः पापसंभवः।तस्य पापविशुद्ध्यर्थं मलमासव्रतं चरेत्।दिने दिने प्रदेयानि विविधान्नानि भक्तितः। दक्षिणाघृतयुक्तानि कांस्यपात्रयुतानि च । विष्णुरूपी सहस्रांशुः सर्वपापप्रणाशनः।अपूपान्नप्रदानेन मम पापं व्यपोहतु।अधिमासे तु संप्राप्ते गुडसर्पिःसमायुतान् । दद्यादनेन मन्त्रेण त्रयस्त्रिंशदपूपकान् । त्रय-

---

१ 'सर्वंसतोयवर्जित ' इत्यपि पाठः ।

स्त्रिंशदपूपानि दातव्यानि दिने दिने। साज्यानि गुडमिश्राणि अधिमासे नृपोत्तम। यावन्ति तत्र च्छिद्राणि अपूपस्य च पार्थिव। तावद्वर्षसहस्राणि स्वर्गलोके महीयते। चन्द्रांशुनिर्मलापूपाः शालितण्डुलमिश्रिताः। आहारः सर्वदेवानां ते प्रकुर्वन्ति मङ्गलम्। सहिरण्यान्घृताभ्यक्तांस्त्रयस्त्रिंशदपूपकान्। अधिमासे तु संप्राप्ते त्रयस्त्रिंशत्तु देवताः। उद्दिश्यापूपदानेन पृथ्वीदानफलं भवेत्। मासाधिके तु संप्राप्ते यावत्सर्वानपूपकान्। तावद्वर्षमवाप्नोति विष्णुलोकं सनातनम्। त्रयस्त्रिंशदपूपान्नं कांस्यपात्रे निधाय च। सघृतं सहिरण्यं च ब्राह्मणाय निवेदयेत्। नारायण जगद्बीज भास्करप्रतिरूपक। व्रतेनानेन पुत्रांश्च संपदं चाभिवर्धय'। प्रार्थनामन्त्रः-'अर्धमासे यदा राजन्द्वादशी वाऽथ पूर्णिमा। व्यतीपातदिनं वापि दद्यादन्नं च शक्तितः। साज्यपात्रान्हि सगुडांस्त्रयस्त्रिंशदपूपकान्। कांस्यपात्रे विनिक्षिप्य हिरण्येन समन्वितान्। उपानच्छत्रसंयुक्तान्विप्राय विनिवेदयेत्।' इदमशक्तपरम्। तत्र मन्त्रः—'यस्य हस्ते गदाचक्रे गरुडो यस्य वाहनम्। शंखः करतले यस्य स मे विष्णुः प्रसीदतु। कलाकाष्ठादिरूपेण निमेषघटिकादिना। यो वञ्चयति भूतात्मा तस्मै कालात्मने नमः। कुरुक्षेत्रमयं देशः कालः पर्व द्विजो हरिः। पृथ्वीसममिदं दानं गृहाण पुरुषोत्तम। मलमासविशुद्ध्यर्थं पापप्रशमनाय च। पुत्रपौत्राभिवृद्ध्यर्थं तव दास्यामि भास्कर। मन्त्रेणानेन वै दद्यात्त्रयस्त्रिंशदपूपकान्। अन्नदानात्परं दानं मलमासे न विद्यते। गृहे तस्य स्थिरा लक्ष्मीर्यो दद्यात्सूर्यसंनिधौ। दारिद्र्यं न भवेत्तस्य रोगशोकविवर्जितः। व्याधिभ्यो मुच्यते रोगी मूको वाचस्पतिर्भवेत्। एवं तु विधिना राजन्मलमासव्रतं चरेत्। पुत्रपौत्रसमायुक्तो मोदते पालयन्महीम्। इत्युक्त्वा स मुनिः स्कन्द तत्रैवान्तरधीयत। नहुषो मानुषं सर्वं व्रतमेतच्चकार ह। व्रतस्यास्य प्रभावेण सर्पो मानुषतां ययौ। पुनर्व्रतं चकारेदं मुनिवर्योपदेशितम्। विमानं वरमारुह्य जगामेन्द्रस्य मन्दिरम्। तस्मात्स्कन्द नरैः कार्यं व्रतमेतदनुत्तमम्। व्रतेन तोषितो देवो भास्करो भक्तवत्सलः। ददाति विपुलां लक्ष्मीं पुत्रपौत्रादिसंपदः' ॥ इति मलमासव्रतम् ॥

अथ व्रतान्तरम्।'देवदेव जगन्नाथ भुक्तिमुक्तिप्रदायक। कथयस्व प्रसादेन लोकानां हितकाम्यया। मुनीश्वराः प्रवदन्ति कृष्णद्वैपायनादयः। अदत्तं नैव लभ्येत दत्तं चैवोपतिष्ठते। यथा वन्ध्या गृहस्थस्य पतिवंशस्य नाशिनी। तथा व्रतविहीनं तु जन्म सर्वं निरर्थकम्। तथापि कथयन्तीह दैवज्ञाः शास्त्रकोविदाः। मलिम्लुचे सदाप्राप्ते क्रियाः कार्याः कथं प्रभो। क्षौरं मौञ्जी विवाहश्च व्रतं काम्योपवासकम्। मलिम्लुचे सदा त्याज्यं गृहस्थेन

विशेषतः'।श्रीरुवाच-'अधिमासे च संप्राप्ते किं कार्यं ब्रूहि मे प्रभो । कस्योद्देशेन दातव्यं वद किं च प्रदेयकम्' ।श्रीकृष्ण उवाच-'शृणु देवि महाभागे सर्वलोकस्य हेतवे । स्वयं दाता स्वयं भोक्ता यो ददाति द्विजातये । नान्यो दाता न भोक्ता च इह लोके परत्र च।असंक्रान्तेऽपि संप्राप्ते मासमुद्दिश्य व्रतं चरेत्।अधिमासस्याधिपत्ये अहं वै पुरुषोत्तमः। स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम् । देवार्चनमथान्यच्च ये कुर्वन्ति मनुष्यजाः । अक्षयं तद्भवेत्सर्वं ममोद्देशेन यत्कृतम् । मलमासो गतः शून्यो यदि देवि प्रमादतः । दारिद्र्यं पुत्रशोकं च पापं कत्रिविगर्हितम् । मर्त्यलोके भवेज्जन्म तेषां देवि भवेत्सदा । यदा मलिम्लुचो मासः प्राप्यते मानवैः प्रिये । महोत्सवस्तदा कार्य आत्मनो हितकाङ्क्षिभिः । कृष्णपक्षे चतुर्दश्यां नवम्यां वा सुरेश्वरि । अष्टम्यां वाऽथ कर्तव्यं व्रतं शोकविनाशनम् । यथालब्धोपहारेण मासे चास्मिन्मलिम्लुचे । पुण्येऽन्हि प्रातरुत्थाय कृत्वा पूर्वाह्णिकीं क्रियाम् । गृह्णीयान्नियमं पश्चाद्वासुदेवं हृदि स्मरन्।उपवासस्य नक्तस्य एकभुक्तस्य भामिनि । एकस्य निश्चय कृत्वा ततो विप्रान्निमन्त्रयेत्। सपत्नीकान्सदाचारान्सुरूपान्सुरवेषकान्।श्रुताध्ययनसंपन्नान्कुलीनाञ्ज्ञातिसंभवान्।ततो मध्याह्नसमये लक्ष्मीयुक्तं जनार्दनम् । स्थापयेदव्रणे कुम्भे वेदमन्त्रैर्द्विजोत्तमैः।पूजयेत्परया भक्त्या गोत्रिभिःसपितामहम्।गन्धतोयेन संस्नाप्य पञ्चामृतशुभेन च।चन्दनेन सुगन्धेन पुष्पैर्नानाविधैःप्रिये।मिष्टान्नैश्चैव नैवेद्यैर्धूपादिभिरतन्द्रितः।आच्छादनं सुवस्त्रैश्च पीतवस्त्रैर्विशेषतः।घण्टामृदङ्गनिर्घोषैःशङ्खभेरीसमन्वितम्।आरार्तिकं व्रती कुर्यात्कर्पूरागरुचन्दनैः।अलाभे येन केनापि फलस्यानन्त्यहेतवे। ताम्रपात्रस्थिते तोये चन्दनाक्षतपुष्पकैः । अर्घ्यं दद्यात्सपत्नीकः प्रहृष्टेनान्तरात्मना । मन्त्रेणानेन देवेशि ब्राह्मणैः सह मां स्मरन् । नारिङ्गैर्नारिकेलैश्च फलैर्नानाविधैः शुभैः । पञ्चरत्नसमायुक्ते जानुनी कृतभूतले । आरोप्य भाले हस्ताभ्यां श्रद्धाभक्तिसमन्वितः ।' अर्घ्यदानमन्त्रः—'देवदेव महाभाग प्रलयोत्पत्तिकारक । कृष्ण सर्वेश भूतेश जगदानन्दकारक । गृहाणार्घ्यमिमं देव दयां कृत्वा ममोपरि' । अथ प्रार्थनामन्त्रः—'स्वयंभुवे नमस्तुभ्यं ब्रह्मणेऽमिततेजसे । नमोऽस्तु ते श्रितानन्द दयां कृत्वा ममोपरि । एवं संप्रार्थ्य गोविन्दं पूजयेद्ब्राह्मणैः सह। सपत्नीकाञ्छचीन्स्नाताँल्लक्ष्मीनारायणौ स्मरन्। पूजयित्वा विधानेन सपत्नीकः स्मरन्विभुम् । स्मर्तव्यो द्विजरूपेण पत्नीं चैवमनुस्मरन्। परिधाप्य यथाशक्त्या वस्त्रालङ्कारकुङ्कुमैः । द्राक्षाम्रैश्च कपित्थैश्च पनसैः कदलीफलैः । नारिकेलैश्च नारिङ्गैः कूष्माण्डैर्दाडिमैः प्रिये । घृतपक्वान्नगोधूमैः शुभैः सोहा-

लिकैर्वटैः । सक्षीरैर्घृतपूरैश्च फाणितैः खण्डमण्डितैः । वृन्ताककर्कटीशाकैः शृङ्गवेरैः समूलकैः । अन्यैश्च विविधैः शाकै रम्यपाकैः पृथक्पृथक् । भक्ष्यभोज्यैश्च लेह्यादिखण्डकानि विशेषतः। गोरसानि विचित्राणि वासितानि घृतादिभिः। अन्यान्यपि च देयानि दानानि विविधानि च। वित्तशाठ्यं न कर्तव्यमात्मनः श्रेय इच्छता । यथावसरसंप्राप्तमुपविश्य मृदु ब्रुवन् । इदं स्वादु इदं भोज्यं भवदर्थं प्रकल्पितम् । याच्यतां रोच्यते यच्च यन्मया पाचितं प्रभो। धन्योऽस्म्यनुगृहीतोऽस्मि कृतं सार्थं च मन्दिरम्। विसर्जयेत्ततो विप्रान्दत्त्वा ताम्बूलदक्षिणाम्। पत्राणि पूगखण्डानि चूर्णं च खदिरं शुभम्। एलालवङ्गकर्पूरजातीफलतजत्वचः। मृगनाभिमरीचानि मुरामांसीनखस्तथा। चतुर्भिर्मिलितं देवि ताम्बूलं मम वल्लभम्। यो ददाति द्विजाग्र्येभ्यः स भवेत्सुभगो नरः । सुभगा च सदाचारा सुशुभे भवने शुभे । पुत्रसौभाग्यसंयुक्ता ताम्बूलाज्जायतेऽबला । पत्रैस्तु केशवः प्रीतः पूगैरीशः सहाम्बया । चूर्णेन शक्त्या ह्यनलः खदिरेण तु मन्मथः। चतुर्भिर्विश्वरूपोऽसौ यः पुष्णाति जगत्रयम् । परितोष्य सपत्नीकान्हस्ते दद्याच्च दक्षिणाम् । आसीमान्तमनुव्रज्य भुञ्जीत बन्धुभिः सह । असंक्रांतं व्रतं नारी या करोति हरिप्रिये । दारिद्र्यं पुत्रशोकं च वैधव्यं न भवेत्क्वचित् । नरोऽप्येवंविधो देवि यदि कुर्यान्मलिम्लुचे। मलिम्लुचं प्राप्य न पूजितो यैः श्रीनाथदेवः परयेह भक्त्या। कथं भवेत्तेषु सुखं च संपत्पुत्राः सुहृत्स्वे वचने च भार्या' इति॥ इति भविष्योत्तरपुराणेमलमासव्रतम्।

देवीपुराणे—ईश्वर उवाच—'शृणु देवि च माहात्म्यं मलमासस्य पार्वति । ये च मासाः ससंक्रान्तास्तेषां स्वामी रविः स्मृतः । असंक्रांतास्तु ये मासास्तेषां स्वामी जनार्दनः । तमुद्दिश्य च यत्किंचित्स्वल्पं वा यदि वा बहु । अक्षय्यं तद्भवेत्कर्तुर्जन्मनामयुतं स्वयम् । मलिम्लुचे तु संप्राप्ते यो न कुर्यात्स्वशक्तितः । दानं वाथ व्रतं वापि विप्रभोजनमेव च । मलिम्लुचेन देहेन स याति निरयं नरः । एकभक्तेन नक्तेन तथैवायाचितेन च। उपवासेन कुर्वीत मनसा संप्रयत्नतः । दानं वाऽथ व्रतं वापि यस्य शक्तिन विद्यते। शरीरशोषणं तेन कर्तव्यं तीर्थसेवनम् । वचनाद्द्विजमुख्यानां सर्वव्रतफलं लभेत् । सर्वव्यापी यथा विष्णुः सर्वभूतकृपाकरः । मलिम्लुचे तथा दानं लोकद्वयसुखावहम् । श्रीदेव्युवाच—भाग्यहीनास्तु ये मर्त्याः पापवद्विचरन्ति हि । विवेको नास्ति वै येषां किं कार्यं वै मलिम्लुचे । निर्धनाश्च दुराचाराः परभाग्योपजीविनः । 'ईश्वर उवाच'—दाने व्रते तथा नक्ते आयासे कायशोषणे । सर्वस्य नास्ति सामर्थ्यं कर्तव्यं विप्रसेवनम् । साधूनां सेवनं देवि सर्वतीर्थफलप्रदम् । कृच्छ्रेण लभ्यते

तीर्थं सद्यो वै साधुसेवनात् । साधूनां दर्शनं चैव कीर्तनं श्रवणं तथा । मलमासे तथा देवि कर्तव्यं श्रेय इच्छता । पुण्यव्ययेन संप्राप्ताः संपदो विविधा गृहे । ताभिः पुनः प्रकर्तव्यः संचयः पुण्यकर्मणाम् । अन्यायेन महादेवि यः प्राप्तो धनसंचयः । यस्मात्कर्मक्षयान्नेह प्राप्यते पुण्यसंचयः । तस्मात्पर्वणि संप्राप्ते द्रव्यं पात्रे प्रकल्पयेत् । यथा बीजाङ्कुरन्यायो विद्वद्भिर्धर्मतत्परैः । विचार्य निश्चयं प्राप्तो धर्मादर्थो न संशयः । धर्मबीजमर्थफलं फलाद्बीजं सुरक्षितम् । कर्तव्यं तत्प्रयत्नेन प्ररोहार्थं भवे भवे । बीजाङ्कुरं ततो भक्षेद्यो न दद्याद्धनं द्विजे । लक्ष्मीनारायणं पूज्य भोजयेच्च द्विजोत्तमान्' इति ॥ इति देवीपुराणे मलमासव्रतम् । अथ विशेषपूजा । श्रीसूक्तमन्त्रैः पुष्पान्तं संपूज्य । 'कूर्माय[1] नमः । सहस्रशीर्ष्णे नमः । देवाय नमः । सहस्राक्षपादाय नमः । हरये नमः।लक्ष्मीकान्ताय नमः । सुरेश्वराय नमः । स्वयंभुवे नमः । अमिततेजसे नमः । ब्रह्मप्रियाय नमः । देवाय नमः । ब्रह्मगोप्त्रे नमः' इति नामभिर्विष्णुं संपूज्य । 'लक्ष्म्यै नमः । कमलायै नमः । श्रियै नमः । पद्मवासायै नमः।हरिवल्लभायै नमः । क्षीराब्धितनयायै नमः । इन्दिरायै नमः'एभिर्लक्ष्मीं च संपूज्य धूपाद्युपचारान्दद्यात् । ततो विशेषार्घ्यः । तत्र मन्त्रः—'पुराणपुरुषेशान सर्वशोकनिकृन्तन । अधिमासव्रते प्रीत्या गृहाणार्घ्यं श्रिया सह । पुराणपुरुषेशान जगद्धातः सनातन । सपत्नीको ददाम्यर्घ्यं सृष्टिस्थित्यन्तकारिणे । देव देव महाभाग प्रलयोत्पत्तिकारक । कृपया सर्वभूतस्य जगदानन्दकारक । गृहाणार्घ्यमिमं देव दयां कृत्वा ममोपरि' इति विशेषपूजा ॥ इति पौण्डरीकयाजिरत्नाकरकृतजयसिंहकल्पद्रुमे मलमासकृत्यनिरूपणम् ॥

## अथ संक्रान्तिनिर्णयः ।

अथासंक्रान्तिद्विसंक्रान्तिमासनिर्णयप्रसङ्गात्संक्रान्तिनिर्णयः प्रस्तूयते । तत्र मेषादिषु द्वादशराशिषु क्रमेण संचरतः सूर्यस्य पूर्वस्माद्राशेरुत्तरराशौ संक्रमणप्रवेशःसंक्रान्तिः । तास्तु द्वादश।तासु मकरकर्कटसंक्रांती क्रमेणोत्तरायणदक्षिणायनसंज्ञिके, तुलामेषसंक्रांती विषुवत्संज्ञिके, वृषसिंहवृश्चिककुम्भसंक्रान्तयो विष्णुपदीसंज्ञिकाः, मिथुनकन्याधनुर्मीनसंक्रान्तयःषडशीतिमुखसंज्ञिकाः । तदाह वसिष्ठः—'अयने द्वे विषुवती चतस्रः षडशीतयः । चतस्रो विष्णुपद्यश्च संक्रान्त्यो द्वादश स्मृताः । झषकर्कटसंक्रान्ती द्वे तूदग्दक्षिणायने । विषुवती तुलामेषौ तयोर्मध्ये ततोऽपराः । वृषवृश्चिककुम्भेषु

---

[1] 'मत्स्याय नम' इति ख पुस्तके पाठः ।

सिंहे चैव यदा रविः। एतद्विष्णुपदंनाम विषुवादधिकं फलम्' इति । 'कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः। षडशीतिमुखाः प्रोक्ताः षडशीतिगुणाः फलैः'। दीपिकायामपि—' हर्यङ्घ्रिर्वृषसिंहवृश्चिकघटेष्वर्कस्य यः संक्रमः कन्यामीनधनुर्नृयुक्षु षडशीत्याख्यां तुलामेषयोः । प्रोक्तं तद्विषुवं झषेऽयनमुदक्कर्कादिके दक्षिणम्' इति। हर्यङ्घ्रिर्विष्णुपदम्। नृयुक् मिथुनम् । आसामेव संक्रान्तीनां वारभेदेन संज्ञाभेदो रत्नमालायामुक्तः— 'घोरा रवौ ध्वाङ्क्ष्यमृतद्युतौ च संक्रान्तिरारे च महोदरी स्यात् । मन्दाकिनी ज्ञे च गुरौ च मन्दा मिश्रा भृगौ राक्षसिकार्कपुत्रे' इति। तत्फलान्यपि तत एव ज्ञेयानि। आसु च पुण्यतमः काल उक्तः— 'त्रिचतुःपञ्चसप्ताष्टनवद्वादश चैव हि। क्रमेण घटिका ह्येतास्तत्पुण्यं पारमार्थिकम्।' इति। आसु च स्नानादिकमुक्तं नागरखण्डे—'रवेः संक्रमणं राशौ संक्रान्तिरिति कथ्यते । स्नानदानतपःश्राद्धहोमादिषु महाफला । ' हेमाद्रौ विष्णुधर्मोत्तरे— 'श्राद्धं संक्रमणे भानोः प्रशस्तं पृथिवीपते' संवर्तः—'अमावास्या द्वादशी च संक्रांतिश्च विशेषतः। एताः प्रशस्तास्तिथयो भानुवारस्तथैव च । अत्र स्नानं जपो होमो देवतानां च पूजनम् । उपवासस्तथा दानमेकैकं पावनं स्मृतम्' इति। देवीपुराणे—'विषुवेषु च यज्जप्तं दत्तं भवति चाक्षयम्। एवं विष्णुपदे चैव षडशीतिमुखेषु च'। भरद्वाजः-'षडशीत्यां तु यद्दत्तं यद्दानं विषुवद्द्वये। दृश्यते सागरस्यान्तस्तस्यान्तो नैव दृश्यते'। वसिष्ठः-' अयने कोटिपुण्यं च लक्षं विष्णुपदीफलम् । षडशीतिसहस्रं च षडशीत्यां स्मृतं बुधैः। शतमिन्दुक्षये दानं सहस्रं तु दिनक्षये । विषुवे शतसाहस्रं व्यतीपाते त्वनन्तकम्' इति । स्कान्दे नागरखण्डे—'य एते ते मया प्रोक्ताः कालाः संक्रान्तिपूर्वकाः । नैतेषु विद्यते विघ्नो यतश्चाक्षयसंज्ञिताः। अश्रद्धयाऽपि यद्दत्तं कुपात्रेभ्योऽपि मानवैः। अकालेऽपि च तत्सर्वं सत्यमक्षयतां व्रजेत्' अत्र स्नानाकरणे दोषमप्याह हेमाद्रौ शातातपः—'रविसंक्रमणे प्राप्ते न स्नायाद्यस्तु मानवः। सप्तजन्मनि रोगी स्यान्निर्धनश्चैव जायते।संक्रान्तौ यानि दत्तानि हव्यकव्यानि दातृभिः। तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि' इति। पापक्षयादिकामस्य संक्रान्तिनिमित्ताहोरात्रोपवासोऽयनविषुवयोस्त्रिरात्रोपवासश्च विहितो वसिष्ठेन—' उपोष्यैवं तु संक्रान्तौ स्नातो योऽभ्यर्चयेद्धरिम्। प्रातः पञ्चोपचारेण स काम्यं फलमश्नुते। ' इति। हरिं सूर्यम्। वृद्धवसिष्ठः—'अयने विषुवे चैव त्रिरात्रोपोषितो नरः । स्नात्वा यस्त्वर्चयेद्भानुं सर्वकामफलं लभेत्' अशक्तावाहापस्तम्बः—'अयने विषुवे

चैव ग्रहणे चन्द्रसूर्ययोः । अहोरात्रोषितः स्नातः सर्वपापैः प्रमुच्यते' । इति । एतच्च पुत्रवद्गृहस्थव्यतिरिक्तविषयम् । पुत्रवता गृहस्थेन तु सकामेनापि संक्रान्तिनिमित्तोपवासो न कार्यः। 'आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः। उपवासो न कर्तव्यो गृहिणा पुत्रिणा तथा' । इति वचनात्, 'संक्रान्त्यामुपवासं च कृष्णैकादशवासरे । चन्द्रसूर्यग्रहे चैव न कुर्यात्पुत्रवान्गृही' । इति नारदवचनाच्च । अत्र विहितश्राद्धस्य नित्यत्वमाहापरार्के विष्णुः—'आदित्यसंक्रमणं विशेषेण विषुवद्वयमयनद्वयं व्यतीपातो जन्मर्क्षमभ्युदयश्च एतांस्तु श्राद्धकालान्वै नित्यानाह प्रजापतिः' इति । तच्च पिण्डरहितम् । 'अयनद्वितये श्राद्धं विषुवद्वितये तथा । संक्रान्तिषु च सर्वासु पिण्डनिर्वापणादृते' । इत्यपरार्के मात्स्योक्तेः। अत्र च द्वादशदिनैरर्वागयनांशप्रवृत्तावपि पुण्यं वक्तुमयनग्रहणम् । अन्यथा संक्रमेण तत्सिद्धेरयनग्रहणं व्यर्थं स्यादित्यपरार्कः वस्तुतस्तु—अयनांशाः षष्टिघ्नाः स्फुटरविगत्या भाजिताः लब्धेन दिनादिना तद्राशिसंक्रान्तेः पूर्वं चलसंक्रान्तिः। सैवायनसंक्रान्तिः । एवं धनायनांशकाले। ऋणायनांशकाले तु लब्धदिनादिनोर्ध्वं चलसंक्रान्तिर्भवति । ऋणायनांशास्तु पूर्वं स्थिताः। दुक्तं वेदाङ्गज्योतिषे—'प्रपद्येत श्रविष्ठादौ सूर्याचन्द्रमसावुदक् । सार्पार्धे दक्षिणार्कस्तु माघश्रावणयोः सदा' । एतादृशसत्र्यंशत्रयोविंशतिऋणायनांशकाले महायुगादावयनांशाभावः । तत्र रेवतीयोगतारा मेषादेर्ज्ञापिका । अन्यदा सर्वासां ताराणां स्वस्वस्थानात्सौरवर्षेण चतुष्पञ्चाशद्विकलाभिः पश्चिमतः पूर्वतश्च चलनं भवति, तत्र विषुवत्क्रान्तिवृत्तसंपातात्पश्चिमतः क्रान्तिवृत्तेऽष्टादशशतसौरवर्षैश्चलनमृणसंज्ञं भवति। तस्य सप्तविंशत्यंशपर्यन्तमुपचयः पुनस्तथैव धनसंज्ञानामुपचयापचयौ । एवं द्विशताधिकसप्तसहस्रवर्षैरेको भगणो भवति स एव पुनरयनांशाभावकालः । पुनस्तथैवायनांशप्रवृत्तिः। एवं ते भगणा युगे खखाब्धिमिताः (६००) भवन्ति।तदुक्तं सूर्यसिद्धान्ते-'त्रिंशत्कृत्वो युगेभानां चक्रं प्राक्परिलम्बते । तद्गुणाद्भूदिनैर्भक्ताद्द्युगणाद्यदवाप्यते । तद्दोस्त्रिघ्ना दशाप्तांशा विज्ञेया अयनाभिधाः । प्राक्चक्रं चलितं हीने छायार्कात्करणागते।अन्तरांशैरथावृत्य पश्चाच्छेषैस्तथाधिके'।यत्तु पूर्वैरुक्तम्।संक्रान्तेरर्वाग्द्वादशदिनैरयनसंक्रान्तिः तद्धनद्वादशायनांशकाले । इदानीं तु धनाष्टादशांशा उपचिताः सन्ति, तद्दिनानि स्थूलतयाऽष्टादश भवन्ति । गालवः—'अयनांशकतुल्येन कालेनैव स्फुटं भवेत् । मृगकर्कादिगे सूर्ये याम्योदगयनं भवेत् । तत्तत्संक्रान्तिकाले स्युरुक्तविष्णुपदादयः' । आयनांशच्युतिरूपसंक्रान्तिकाले विष्णुपदादयः प्रवर्तन्ते । तेन तत्प्र-

युक्तं पुण्यकालादि तत्रापि ज्ञेयमित्यपरार्कः । अस्याश्च संक्रान्तेः सूर्यमण्डलनेमिरेकदेशस्य तन्मध्यकेन्द्रस्य वा पूर्वराशिसंबन्धत्यागेनोत्तरराशिप्रवेशरूपत्यागकालस्यातिसूक्ष्मतया दुर्ज्ञानतया च तत्रैकस्यापि स्नानादिकर्मणोऽनुष्ठातुमशक्यत्वाद्बहूनां तु सुतरां तथात्वात्तत्संनिहितकाले तान्यनुष्ठातव्यानि संधिसंनिहितकाल इव दर्शपूर्णमासौ । स च कालः किमुभयत्र किं वाऽन्यतरतः कियांश्चेत्यपेक्षायां हेतुपूर्वकं ग्राह्यः कालो देवलेन दर्शितः–'संक्रान्तिसमयः सूक्ष्मो दुर्ज्ञेयःपिशितेक्षणैः । तद्योगाच्चाप्यधश्चोर्ध्वं त्रिंशन्नाड्यः पवित्रिताः' इति । अधश्च त्रिंशन्नाड्यः ऊर्ध्वं च त्रिंशन्नाड्यः पुण्यकालः संक्रान्तिनिमित्तस्नानदानादियोग्य इत्यर्थः–इति माधवः । हेमाद्रिस्तु अधः पञ्चदश ऊर्ध्वंच पञ्चदशेत्येवं मिलित्वा त्रिंशदित्यपि व्याचख्यौ ॥ यत्तु कैश्चिदुक्तम्–माधवेन प्रत्येकं त्रिंशदित्युक्तम् । तत् 'अतीतानागतो भोगो नाड्यःपञ्चदश स्मृताः' इति । देवीपुराणविरुद्धम् । भुज्येते प्राप्येते विधिनिषेधावस्मिन्निति भोगः । 'भुज पालनाभ्यवहारयोः' इति स्मरणात् इति । तत्प्रागल्भ्यविजृम्भितम् । सामान्यकालस्योक्तत्वात् । विशेषकालस्य तु 'त्रिंशत्कर्कटके' 'या याः संनिहिता' इत्यादिवक्ष्यमाणत्वात् । तथा च सामान्ये अनध्यायप्रकरणे हेमाद्रौ–'अन्हि चेद्रात्रियुग्मं स्याद्रात्रौ चेद्वासरद्वयम् । संक्रान्तिः पक्षिणी ज्ञेया दानाध्ययनकर्मसु' । इत्यादिवाक्य इव सामान्येन कालविधानात् माधवोक्तावपि न दूषणोद्भावनं युक्तम् । इदं सामान्यतःसंक्रान्तिविषयम् । विशेषस्तूच्यते–कर्कटे पूर्वास्त्रिंशन्नाड्यः पुण्या मकरे तु माधवमते परा विंशतिनाड्यःपुण्याः । तदाह वृद्धवसिष्ठः–'अतीतानागते पुण्ये द्वे उदग्दक्षिणायने । त्रिंशत्कर्कटके नाड्यो मकरे विंशतिःस्मृताः' इति । हेमाद्रिमते तु मकरसंक्रान्तौ चत्वारिंशद्घटिकाः पुण्यकालः । तदुक्तं ब्रह्मवैवर्ते–'त्रिंशत्कर्कटके नाड्यो मकरे तु दशाधिकाः । भविष्यत्ययने पुण्या अतीते चोत्तरायणे' । दशाधिकाश्चत्वारिंशदित्यर्थः । बृहस्पतिः–'अयने विंशतिः पूर्वा मकरे विंशतिः पराः' । वसिष्ठः–'मध्ये तु विषुवे पुण्यं प्राग्विष्णौ दक्षिणायने । षडशीतिमुखेतीते अतीते चोत्तरायणे' इति । मध्ये उभयत इत्यर्थः । विष्णौ विष्णुपदे । पुण्यमित्यस्य चतुर्ष्वप्यनुषङ्गः । प्रागित्यस्य दक्षिणायन इत्यनन्तरमपि । यत्तु नव्यैरुक्तम् । अत्र चशब्दादुत्तरायणेऽनागतेऽपि पुण्यमिति हेमाद्रिः । तत्र मानं विमृग्यमिति ॥ तन्न ॥ हेमाद्रौ संक्रान्तिसामान्यपुण्यकालाभिप्रायेण तथाभिधानात् । 'अतीतानागते पुण्ये द्वे तूदग्दक्षिणायने । उपरागे तु तत्कालमतीते चोत्तरायणे' । इतिवासिष्ठवचनपूर्वार्द्धेनोदग्दक्षिणायनयोरतीतानागतकालस्य पुण्यत्वमाभिधायोपात्त

स्योत्तरार्धशेषस्य अतीते चोत्तरायणे' इत्यस्यानागतपुण्यत्वबोधकत्वेनैव सार्थक्यात्' हेमाद्रौ तथैव व्याख्यानाच्च । विषुवयोस्तु प्राक्पश्चाद्दश दश नाड्यः पुण्याः । यथा स एवाह 'वर्तमाने तुलामेषे नाड्यस्तूभयतो दश' इति । विष्णुपदीषु प्राक्षोडश पश्चाच्च षोडशनाड्यः पुण्याः । तदाह वृद्धवसिष्ठः—'पुण्यायां विष्णुपद्यां तु प्राक्पश्चादपि षोडश' इति । षडशीतिषु पश्चात्षष्टिनाड्यः पुण्याः । तदाह वृद्धवसिष्ठः—'षडशीत्यां व्यतीतायां षष्टिरुक्तास्तु नाडिकाः । पुण्याख्या विष्णुपद्याश्च प्राक्पश्चादपि षोडश' । स्मृत्यर्थसारे तु षडशीतिमुखे पश्चात्षोडश घटिका इत्युक्तम् । अत्र हेमाद्रिः—षडशीतिमुखानां चतसृणामेकैकस्याः पञ्चदशपञ्चदश चेति मिलित्वा षष्टिर्नाड्यः पुण्या इति । तथा च स्कान्दे—'षडशीतिमुखेऽतीते नाड्यः पञ्चदश स्मृताः' । इति । कालतत्त्वविवेचने तु 'परमार्थनुस्त्वष्टिः' इति पाठः । अष्टिः षोडश । तच्छन्दसः षोडशाक्षरत्वात् । अत्र विष्णुपद्याः पराः षोडश घटिकाः पुण्याः पूर्वाः षोडश घटिकाः पुण्यतमा इति व्यवस्था द्रष्टव्या 'याम्यायने विष्णुपदे तथादौ दानाद्यनन्तं विषुवे तु मध्ये । वदन्त्यतीते षडशीतिवक्त्रे महर्षयः खल्वयने च सौम्ये' । 'षडशीतिमुखेऽतीते वृत्ते च विषुवद्वये' । इति लौगाक्ष्याद्यनेकवचनेषु पूर्वकालस्य पुण्यतमत्वप्रतिपादनात् । क्वचित् 'अतीते विषुवद्वये' इति पाठः । 'कन्यायां मिथुने चैव मीने धनुषि च द्विजाः । घटिकाः षोडश ज्ञेयाः परतः पुण्यदीपिकाः । वृषभे वृश्चिके चैव सिंहे कुम्भे तथैव च । पूर्वमष्टमुहूर्तं तु ग्राह्यं स्नानजपादिषु' । इति बृहन्नारदीयवचनाच्च । 'आद्ये भोगो वृषे सिंहे वृश्चिके कर्कटे घटे । मध्ये मेषे तुलायां तु शेषास्त्वन्त्ये प्रकीर्तिताः' । मिथुनकन्याधनमकरमीना अन्त्यभोगिन्यः । यमः—'विष्णुपद्यां धनुर्मीननृयुक्कन्यासु वै यदा । पूर्वोत्तरं गतं रात्रौ भानोः संक्रमणं भवेत् । पूर्वाह्णे पञ्च नाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः । अपराह्णे च पञ्चैव श्रौते स्मार्ते च कर्मणि' इति । नृयुक् मिथुनम् । स्कान्दे-'धनुर्मीनावतिक्रम्य कन्यां च मिथुनं तथा । पूर्वापरविभागेन रात्रौ संक्रमते रविः । दिनान्ते पञ्च नाड्यस्तु सदा पुण्यतमाः स्मृताः । उदये च तथा पञ्च दैवे पित्र्ये च कर्मणि' इति ॥ ननु संक्रान्तिसामान्यविषयत्वेन पश्चादधश्च त्रिंशन्नाड्यः पवित्रा इत्युक्तम् । 'अर्वाक्षोडश विज्ञेया नाड्यः पश्चाच्च षोडश । कालः पुण्योऽर्कसंक्रान्तेः' इति शातातपादिवाक्यान्तरैस्तु षोडशादीनां पुण्यत्वमुक्तमिति परस्परविरोध इति चेत् ॥ न ॥ त्रिंशन्नाडीनां पुण्यत्वं षोडशनाडीनां तदपेक्षया संनिहितत्वात्पुण्यतरत्वं ततोऽपि संनिहितानां पुण्यतमत्वमिति विरोधपरिहारात् । तदाह वसिष्ठः-

'या याः संनिहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः' । इति संक्रान्तीनां पूर्वोत्तरकालौ पुण्यतया निर्णीतौ ताश्च संक्रान्तयः कदाचिदह्नि भवन्ति कदाचिद्रात्रौ भवन्ति । तद्भेदाद-नुष्ठानभेदमाह वसिष्ठः—'अह्नि संक्रमणे पुण्यमहः सर्वं प्रकीर्तितम् । रात्रौ संक्रमणे पुण्यं दिनार्धं स्नानदानयोः । अर्धरात्रादधस्तस्मिन्मध्यान्हस्योपरि क्रिया । ऊर्ध्वं संक्रमणे चोर्ध्वमुदयात्प्रहरद्वयम्' इति । अर्धरात्रात्पूर्वं रात्रौ संक्रमे पूर्वदिनोत्तरार्धं पुण्यम् । अर्धरात्रादूर्ध्वं संक्रमे उत्तरदिनपूर्वार्धं पुण्यं स्नानदानादियोग्यमित्यर्थः । तथा च— 'आसन्नसंक्रमं पुण्यं दिनार्धं स्नानदानयोः'। इति।यदा संपूर्णेऽर्धरात्रे संक्रान्तिः स्यात्तदा दिनद्वयं पुण्यम् । तदाह वृद्धवसिष्ठः—'संक्रमस्तु निशीथे स्यात्षड्यामाः पूर्वपश्चिमाः । संक्रान्तिकालो विज्ञेयस्ततः स्नानादिकं चरेत्' । इति । ज्योतिर्वसिष्ठोऽपि— 'पूर्णे चैवार्धरात्रे तु यदा संक्रमते रविः । तदा दिनत्रयं पुण्यं मुक्त्वा मकरकर्कटौ' । इति । मकरकर्कटयोस्तु विशेषो वक्ष्यते गार्ग्यः—'काले न्यूनार्धरात्रे तु यदा संक्र-मणं भवेत् । तदहः पुण्यमिच्छन्ति गार्ग्यगालवगौतमाः' । देवीपुराणे—'संपूर्णे अर्धरात्रे तु उदयेऽस्तमयेऽपि च । मानार्धं भास्करे पुण्यमपूर्णे शर्वरीदले' । संपूर्णे अर्धरात्रे निशीथे इत्यर्थः । उदयः प्रातःसंध्या । अस्तमयः सायंसंध्या । मानार्धं प्रहरद्वयम् । अस्तमये पूर्वदिनप्रहरद्वयं ग्राह्यम् । उदये तूत्तरदिनप्रहरद्वयम्, प्रत्यासत्तेः । संपूर्णे अर्धरात्रे दलद्वयसंधौ संक्रमेण उभयोः पूर्वोत्तरदिनयोरुत्तरपर्वार्धे पुण्ये । अपूर्णे शर्वरीदले । सायंप्रातःसंध्ययोरुत्तरपूर्वभागयोरित्यर्थः । योगेन लक्ष-णया वा भास्करो दिवसः । देवीपुराणे—'अर्धरात्रे त्वसंपूर्णे दिवा पुण्यमनागतम् । संपूर्णे उभयोर्ज्ञेयमतिरेके परेऽहनि' । अत्रासंपूर्णार्धरात्रशब्देन सायंसंध्या निशीथ-पूर्वभागश्च गृह्यते । तत्र संक्रमणेन विद्यते आगतमागमनं यस्य तत् । अनागतमना-गामि । अतीतमित्यर्थः । 'नपुंसके भावे क्तः' । एवमर्धरात्रसंक्रमणदिनद्वयार्धस्य विकल्पेन ग्राह्यत्वे प्राप्ते व्यवस्था कृता देवीपुराणे—'आदौ पुण्यं विजानीयाद्यद्यभिन्ना तिथिर्भवेत् । अर्धरात्रे व्यतीते तु विज्ञेयमपरेऽहनि' इति । अर्धरात्रसंक्रमणे यदि संक्रमणकालीना तिथिः पूर्वदिवसोत्तरार्धवर्तितिथ्याभिन्ना भवति तदा पूर्व-दिनोत्तरार्धं ग्राह्यम् । यदि भिन्ना भवति तदा पूर्वदिनार्धं न ग्राह्यम् । किं तु परदिनपूर्वार्धमित्यर्थसिद्धम् । अर्धरात्रे व्यतीते तु संक्रमणे तत्कालीनतिथेर्भिन्नत्वे अभिन्नत्वेऽपि परदिनपूर्वार्धमेव पुण्यमित्यर्थः । यदात्वर्धरात्रसंक्रमणे तत्कालीना तिथिर्दिनद्वयेऽपि भवति तदा विष्णुपद्यां पूर्वदिनोत्तरार्धं ग्राह्यं षडशीतिमुखे

तूत्तरदिनपूर्वार्धं ग्राह्यम्। विषुवे तु पूर्वदिनार्धमुत्तरदिनार्धं वा ग्राह्यम्। कौस्तुभे तु—दिनद्वयवृत्तितिथ्यभेदेऽपि अयनव्यतिरिक्तसर्वसंक्रान्तिषु पूर्वदिनार्धमेव पुण्यमिति युक्तमित्युक्तम्। मकरस्य तु रात्रौ संक्रमे परदिनं पुण्यम्, कर्कटस्य तु रात्रौ संक्रमे पूर्वदिनं पुण्यम्। अत एव वृद्धगार्ग्यः 'यदाऽस्तमयवेलायां मकरं याति भास्करः। प्रदोषे वाऽर्धरात्रे वा स्नानं दानं परेऽहनि'। अस्तमयवेलायामस्तमयसन्निहिते तदुत्तरकाले। प्रदोषे पूर्वरात्रे। भविष्योत्तरेऽपि—'कार्मुकं तु परित्यज्य झषं संक्रमते रविः। प्रदोषे वाऽर्धरात्रे वा स्नानं दानं परेऽहनि' इति। झषो मकरः। 'अर्धरात्रे तदूर्ध्वं वा संक्रांतौ दक्षिणायने। पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः' इति। भविष्योत्तरेऽपि—'मिथुनात्कर्कसंक्रान्तिर्यदि स्यादंशुमालिनः। प्रभाते वा निशीथे वा कुर्यादहनि पूर्वतः'। मकरकर्कटयोरेवं रात्रौ संक्रमे पूर्वोक्तवचननिचयेन दिवैव स्नानदानादिकर्तव्यता प्रतिपादिता। इदानीं रात्रावपि तत्र स्नानादिकर्तव्यताप्रतिपादकानि वचनानि लिख्यन्ते। भविष्यपुराणे—'रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः। नैमित्तिकं च कुर्वीत स्नानं दानं च रात्रिषु' वृद्धवसिष्ठः—'पुत्रजन्मनि यज्ञे च तथा संक्रमणे रवेः। राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि'। सुमन्तुः—'ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च। श्रवणे चेतिहासस्य रात्रौ दानं प्रशस्यते'। गोभिलयाज्ञवल्क्यौ—'राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु। स्नानदानादिकं शस्तं निशि काम्यव्रतेषु च'। विष्णुः-'विवाहव्रतसंक्रान्तिप्रतिष्ठाऋतुजन्मसु। तथोपरागपातादौ स्नाने दाने निशा शुभा। इति। अत्र माधवमदनरत्नादयः—एतेषां वचनानां मिथो विरोधाद्गत्यन्तरासंभवेन विकल्पोऽङ्गीकर्तव्यः। स च तत्तद्देशप्रसिद्धशिष्टाचारवशाद्व्यवस्थितो द्रष्टव्यः। तथा च माधवग्रन्थे—'मकरे कर्कटे रात्रावप्याचारादनुष्ठितिः'। इति। अत एव मदनरत्ने—तथा च दाक्षिणात्याः शिष्टा रात्रौ मकरादिसंक्रान्तौ तन्निमित्तस्नानदानादिकं रात्रावाचरन्ति। उदीच्यास्तु तन्निमित्तस्नानदानादिकं दिवैव कुर्वन्ति इति। निर्णयसिन्धौ—तु—यानि विवाहव्रतसंक्रान्तीइत्यादिगोभिलादिवचनानि रात्रौ स्नानदानश्राद्धादिकर्तव्यत्वप्रतिपादकानि, तानि मकरकर्कटसंक्रान्तिविषयाणि 'मुक्त्वा मकरकर्कटौ' इति तयोर्दिवानुष्ठानस्य पर्युदस्तत्वेन तत्रैव रात्रावनुष्ठानस्य विधातुमुचितत्वादिति हेमाद्रिप्रभृतयः। वस्तुतस्तु—प्रागुक्तवचनैस्तयोर्दिनद्वयपुण्यत्वादेरेव पर्युदासान्मकरकर्कटयोरपि—'विवाहव्रतसंक्रान्तिप्रतिष्ठाऋतुजन्मसु। तथोपरागपातादौ स्नाने दाने निशा

शुभा' इति । 'स्नानं दानं परेऽहनि' इत्यादिभिरहःपुण्यत्वोक्तेरहःपुण्यत्वानुपपत्त्या कल्प्यरात्रिनिषेधस्य प्रत्यक्षरात्रिविधिना बाधात्सर्वसंक्रान्तिषु रात्रावनुष्ठानविकल्पः, स च देशाचाराद्व्यवतिष्ठत इति युक्तःपन्था इति स्थितम् । अयनविषुवे तु अनध्याये विशेषः । स्मृत्यन्तरे-'अह्नि चेद्रात्रियुग्मं स्याद्रात्रौ चेद्वासरद्वयम् । संक्रान्तिः पक्षिणी ज्ञेया दानाध्ययनकर्मसु' । दानं वेददानम् । अध्यापनमिति यावत् । अन्यत्रापि— 'निशाद्वयं दिवा रात्रौ संक्रमे वासरद्वयम् । अनध्यायं प्रकुर्वीत अयने विषुवे तथा' इति । संक्रान्तिवत्तदयने पुण्यकालमाह जाबालिः—'संक्रान्तिषु यदा कालस्तदीयेऽप्ययने तथा । अयने विंशतिः पूर्वा मकरे विंशतिःपराः' इति । अयने मकरायने पूर्वाः पुण्यतमाः । मकरे मकरसंक्रान्तौ पराः पुण्यतमा इत्यर्थः । माधवोऽपि--मकरव्यतिरिक्तैकादशसंक्रान्तिसंबन्धिनि त्वयने संक्रान्तिवत्पुण्यमिति । आदित्यस्य राशिसंक्रमवन्नक्षत्रसंक्रमे ग्रहान्तराणां राशिनक्षत्रसंक्रमेऽपि स्नानदानादिकं कार्यम् । तदाह जैमिनिः—'नक्षत्रराश्यो रविसंक्रमे स्युरर्वाक्परत्रापि रसेन्दुनाड्यः । पुण्यास्त्वथेन्दोस्त्रिधरापलैर्युगेकैव नाडी मुनिभिः शुभोदिता । नाड्यश्चतस्रः सपलाः कुजस्य बुधस्य तिस्रो मनवः पलानि । सार्धाश्चतस्रः पलसप्तयुक्ता गुरोश्च शुक्रे सपलाश्चतस्रः । द्विनागनाड्यः पलसप्तयुक्ताः शनैश्चरस्याभिहिताः सपुण्याः । आद्यन्तमध्ये जपदानहोमं कुर्वन्नवाप्नोति सुरेद्रधाम' । ग्रहान्तरस्य यदैव संक्रमस्तदैव पुण्यकालः न तु दिवैव तत्रापवादाभावात् । गार्ग्यः—'यस्य जन्मर्क्षमासाद्ये रविसंक्रमणं भवेत् । तन्मासाभ्यन्तरे तस्य वैरक्लेशधनक्षयाः । तगरसुरोरुहपत्रै रजनीसिद्धार्थलोध्रसंयुक्तैः । स्नानं जन्मर्क्षगते रविसंक्रमणे नृणां शुभदम्' । अथ संक्रान्तिकृत्यं हेमाद्रौ—'अयनादौ सदा देयं द्रव्यमिष्टं गृहेषु यत् । षडशीतिमुखे चैवं विमोक्षे चन्द्रसूर्ययोः' । ब्रह्मपुराणे—'शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः । महाजया तदा सा वै सप्तमी भास्करप्रिया । स्नानं दानं तपो होमः पितृदेवादिपूजनम् । सर्वं कोटिगुणं प्रोक्तं तपनेन महौजसा' । अस्यां घृतपयोभ्य। रविं स्नापयित्वा अश्वमेधफलं प्राप्य सूर्यसलोकतां यातीत्यादि तत्रैवोक्तम् ॥ अथ संक्रांतिविशेषे दानानि तिथितत्त्वे--'ददाति यो हि मेषादौ सक्तूनम्बुघटान्वितान् । पितॄनुद्दिश्य विप्रेभ्यः सर्वपापैः प्रमुच्यते' । इति । मेषादौ मेषसंक्रमदिने । हेमाद्रौ विश्वामित्रः—'मेषसंक्रमणे भानोर्मेषदानं महाफलम् । वृषसंक्रमणे दानं गवां प्रोक्तं तथैव च । वस्त्रान्नपानदानानि मिथुने विहितानि तु । घृत-

धेनुप्रदानं तु कर्कटे परिशस्यते । ससुवर्णं छत्रदानं सिंहे च विहितं सदा । कन्याप्रवेशे वस्त्राणां सुरभीणा तथैव च । तुलाप्रवेशे धान्यानां बीजानामेव चोत्तमम् । कीट[1]प्रवेशे वस्त्राणां वेश्मनां दानमेव च । धनुःप्रवेशे वस्त्राणां यानानां च महाफलम्।झषप्रवेशे दारूणां दानमग्नेस्तथैव च । कुम्भप्रवेशे दानं तु गवामम्बुतृणस्य च । मीनप्रवेशे स्थानानां माल्यानामपि चोत्तमम् । दानान्यथैतानि मया द्विजेन्द्राः प्रोक्तानि काले तु नरः प्रदत्वा। प्राप्नोति कामं मनसेप्सितं च तस्मात्प्रशंसन्ति हि कालदानम्'। स्कान्दे—'धेनुं तिलमयीं राजन्दद्याद्यश्चोत्तरायणे । सर्वान्कामानाप्नोति विन्दते परमं सुखम्' । विष्णुधर्मोत्तरे— 'उत्तरे त्वयने विप्रा वस्त्रदानं महाफलम् । तिलपूर्णमनड्वाहं दत्त्वा रोगैः प्रमुच्यते' । मकरेऽन्यदपि कर्तव्यं कालिकापुराणे—'कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् । एतानि पञ्च रत्नानि न्यसेद्देवस्य मूर्द्धनि'। कुलिशं हीरकम् । रत्नानां चाप्यभावे तु कर्षं कर्षार्धमेव वा । सुवर्णं योजयित्वा तु तस्मिन्नेवोत्तरायणे । विधिवच्च तथाऽभ्यर्च्य गव्येनाढ्येन भूरिणा । प्रक्षाल्य मर्दयित्वा तु प्रदद्याद्घृतकम्बलम् । दत्त्वा चोपस्करं भूयो ब्राह्मणान्यतिभिः सह । संभोज्य क्षामयित्वा तु कल्पयेदनिवारितम्'।भोजनमन्येभ्य इति शेषः।'उपोष्य सर्वमेवैतत्कुर्याद्भक्तिपुरःसरः।पञ्चगव्यं तिलैर्युक्तं पीत्वा वै पारयेत्स्वयम्।तिलैः स्नानं प्रकुर्वीत तैरेवोद्वर्तनं बुधः।देवतानां पितॄणां च उभाभ्यां तर्पणं तथा। होमं तैश्च प्रकुर्वीत सर्वदैवोत्तरायणे । तान्वै देवाय विप्रेभ्यो हाटकेन समं ददेत् । यत्नादेवं करोत्येवं चित्तं शंभौ प्रवेश्य यः।उत्तरायणमासाद्य नरः कस्मात्स शोचति' । उभाभ्यामिति. तृतीयान्तं शुक्लकृष्णतिलाभिप्रायम् । शुक्लैर्देवानामितरः पितॄणामित्यर्थः । 'तिलतैलेन दीपाश्च देयाः शिवगृहे शुभाः । सतिलैस्तण्डुलैश्चैव पूजयेद्विधिवद्द्विजः'।इति शिवरहस्ये।मङ्गलकृत्येषु ज्योतिर्निबन्धे नारदः— 'त्याज्याः सूर्यस्य संक्रान्तेः पूर्वतः परतस्तथा । विवाहादिषु कार्येषु नाड्यः षोडश षोडश' इति । एतत्पुण्यकालोपलक्षणम्।'भानोः संक्रान्तिभोगश्च कुलिकश्चार्धयामिकः' इति । ज्योतिःप्रकाशे—वर्ज्येषु संक्रान्तिभोगस्य परिगणनात् ।। इति संक्रान्तिनिर्णयस्तत्कृत्यं च समाप्तम्" ॥

अथ पक्षः । तत्र पक्षशब्दः 'पक्ष परिग्रहे' इत्यस्माद्धातोर्निष्पन्नः । देवकार्यार्थं पितृकार्यार्थं वा पक्ष्यते परिगृह्यते यः कालविशेषस्तं वदति । अथ वा चन्द्रस्य पञ्चदशानां कलानामापूरणं क्षयो वा परिगृह्यते यत्र स पक्षः । स द्विविधः-शुक्लः, कृष्णश्च । चन्द्रकलावृद्ध्युपलक्षितः शुक्लः । चन्द्रकलाक्षयोपलक्षितः कृष्णः । एतौ शुक्लकृष्णपक्षौ पूर्वापरपक्षावित्यप्युच्येते । 'पक्षौ पूर्वापरौ शुक्लकृष्णौ

१ कीटो वृश्चिकः ।

मासस्तु तावुभौ' इत्यमरसिंहेनाभिधानात् । शुक्लपक्षश्चापूर्यमाणपक्ष इत्यप्युच्यते । अनयोश्च विनियोगो ज्योतिःशास्त्रादौ दर्शितः—'उभौ नियुक्तौ खलु शुक्लकृष्णौ शुभाशुभे कर्मणि तौ प्रशस्तौ' । इत्यादिभिः । इति पक्षनिर्णयः ।

अथ दिवसनिर्णयः । मदनरत्ने-स चतुर्विधः । चान्द्रसौरसावननाक्षत्रभेदात् । एतेषा स्वरूपमुक्तं विष्णुधर्मोत्तरे—'तिथिनैकेन दिवसश्चान्द्रे माने प्रकीर्तितः । अहोरात्रेण चैकेन सावनो दिवसः स्मृतः । आदित्यभागभोगेन सौरो दिवस उच्यते । चन्द्रनक्षत्रभोगेन नाक्षत्रो दिवसः स्मृतः' इति । तिथिभागयोर्लक्षणं तत्रैव दर्शितम्—'त्रिंशांशश्च तथा राशेर्भाग इत्यभिधीयते । आदित्याद्विप्रकृष्टस्तु भागद्वादशकं यदि । चन्द्रमाः स्यात्तदा राम तिथिरित्यभिधीयते' । इति दिवसनिर्णयः ।

अथ तिथिनिर्णयः ॥ तत्र तिथिशब्दस्तनोतेर्धातोर्निष्पन्नः । तनोति विस्तारयति वर्धमानां क्षीयमाणां चन्द्रकलामेकां यः कालविशेषः सा तिथिः । यद्वा यथोक्तकलया तन्यते इति तिथिः । तदुक्तं सिद्धान्तशिरोमणौ—'तन्यते कलया यस्मात्तस्मात्तास्तिथयःस्मृताः' इति । एतदेवाभिप्रेत्यस्कान्दे पठ्यते-'अमाषोडशभागेन दिवि प्रोक्ता महाकला । संस्थिता परमा माया देहिनो देहधारिणी । अमादिपौर्णमास्यन्ता या एव शशिनःकलाः।तिथयस्ताः समाख्याताः षोडशैव वरानने' इति । अयमर्थः । या महामायाधारशक्तिरूपा देहिनां देहधारिणी संस्थिता सा चन्द्रमण्डलस्य षोडशभागेन परिमिता चन्द्रदेहधारिणी अमानाम्नी महाकलेति प्रोक्ता क्षयोदयरहिता नित्या तिथिसंज्ञैव । इतरा अपि पञ्चदश कला दिवसस्य व्यवहारोपयोगिन्यःक्षयोदयवत्पञ्चदश तिथयो भवन्ति।तेन 'तिथयःषोडशैव' इत्यविरुद्धंवचनम् । श्रुतिरपि 'तस्य रात्रय एव पञ्चदश कला ध्रुवैवास्य षोडशी कला'। इति । एवं सत्यत्र सामान्यविशेषरूपेण तिथिद्वैविध्यमुक्तं भवति । तत्र येयममेत्युक्ता क्षयोदयवर्जिता ध्रुवा षोडशी कला तद्युक्तकालस्तिथिसामान्यम् । यास्त्ववशिष्टा वृद्धिक्षयोपेताः पञ्चदश कलास्ता निर्विशिष्टाः कालविभागास्तिथिविशेषास्तासां च पञ्चदशानामेकैकां कलां वन्ह्यादयः प्रजापत्यन्ताः पञ्चदश देवताःक्रमेण पिबंति तत्र वन्हिरेका कलां प्रथमं पिबति इति प्रथमेत्युच्यते। तया मुक्तः कालविशेषःप्राथम्यवाचिना प्रतिपच्छब्देनाभिधीयते । एवं द्वितीयादिपञ्चदश्यन्तानां तिथीनां नामान्यवगन्तव्यानि । ता एताः कृष्णपक्षतिथयो भवन्ति, पुनश्च ताः पीताः कला अनेनैव क्रमेण तत्तत्पथा वन्ह्यादिदेवताभ्यो निर्गत्य चन्द्रमण्डलं पूरयन्ति । ताभिर्युक्ताः कालविशेषाः शुक्लप क्ष गताः प्रतिपदाद्यास्तिथयो भवन्ति । वह्न्यादिदेवतानां कलापानं सोमोत्पत्तौ पठ्यते-

'प्रथमां पिबते वन्हिर्द्वितीयां पिबते रविः । विश्वे देवास्तृतीयां तु चतुर्थीं सलिलाधिपः । पञ्चमीं तु वषट्कारः षष्ठीं पिबति वासवः । सप्तमीमृषयो दिव्यामष्टमीमज एकपात् । नवमीं कृष्णपक्षस्य क्षयः प्राश्नाति वै कलाम् । दशमीं पिबते वायुः पिबत्येकादशीं पुमान्' । हेमाद्रौ तु 'रुद्रा एकादशीं कलाम्' इति पाठः । 'द्वादशीं पितरः सर्वे समं प्राश्नन्ति भागशः । त्रयोदशीं धनाध्यक्षः कुबेरः पिबते कलाम् । चतुर्दशीं पशुपतिः पञ्चदशीं प्रजापतिः । निष्पीतः कलावशेषश्चन्द्रमा न प्रकाशते । कला षोडशिका या तु अपः प्रविशते सदा । अमायां तु सदा सोम ओषधीः प्रतिपद्यते । तमोपधिगतं गावः पिबंत्यम्बुगतं च यत् । तत्क्षीरममृतं भूत्वा मन्त्रपूतं द्विजातिभिः । हुतमग्निषु यज्ञेषु पुनराप्यायते शशी । दिने दिने कलावृद्धिः पौर्णमास्यां तु पूर्णता' । इति । इति तिथिशब्दार्थनिर्णयः ॥ श्रीमद्दिल्लीशसेनोद्भटविकटभटश्रेणिमत्तेभसिंहश्चण्डोन्माद्यत्तुरुष्कक्षुभितवसुमतीपालने धर्मराजः । पौत्रः श्रीकृष्णसिंहक्षितिपकुलमणेर्विष्णुसिंहस्य पुत्रः श्रीमान्राजाधिराजो जयहरिरमराधीशवत्कौ सुखी स्तात् ॥ १ ॥ श्रीमत्पण्डितदेवभट्टतनयः श्रीराघवांघ्रिद्वयध्यानावाप्तसमस्तकामनिवहः सम्राट् स रत्नाकरः । तुष्ट्यै श्रीजयसिंहवीरैर्नृपतेः कल्पद्रुमे कामदं ग्रन्थाद्यस्तबकें शिवं समकरोत्सत्कालपत्रावृतम् ॥ २ ॥

इति श्रीजयसिंहकल्पद्रुमोद्द्योते संवत्सरादिनिर्णयः समाप्तः ॥ १ ॥

---

## अथ सामान्यतः सर्वतिथिनिर्णयः ।

तत्र तिथिर्द्वेधा—संपूर्णा, खण्डा च । तत्र सम्पूर्णा स्कन्दपुराणे दर्शिता—'प्रतिपत्प्रभृतयःसर्वा उदयादोदयाद्रवेः । संपूर्णा इति विख्याताः' इति । ज्योतिःसिद्धान्ते—'सर्वा ह्येताश्च संपूर्णाश्चोदयादोदयं स्थिताः' । षष्टिघटिकात्मिका पूर्णा तिथिरिति नारदीये ॥ अथ घटिकासाधनं निर्णयामृते महाभारते निरूपितम्—'कर्षेणाभ्यधिकैः षड्भिः पलैस्ताम्रस्य भाजनम् । त्रिंशदङ्गुलविस्तारमुच्छ्रितं चतुरङ्गुलम् । स्वर्णमाषेण कृत्वा च चतुरङ्गुलकाष्ठिकाम् । मध्यभागे तया विद्धं नाडिका घटिका स्मृता । तद्रन्ध्रेणाम्भसा पात्रं यावत्कालेन पूर्यते । स कालो नाडिका तस्याः षष्टिभागो विघट्टिका । नाडीद्वयं मुहूर्तस्तु ते पञ्चदश वासरः । एवं रात्रिस्तथा पक्षमासर्त्वयनवत्सराः' इति । स्वर्ण-

---

१ चण्ड यथा भवति तथोन्माद्यन्तो ये तुरुष्काम्लेच्छजातिविशेषास्तै• क्षुभिता पीडिता या वसुमती तस्याः पालने धर्मराज इत्यर्थ• । २ जयसिंह इत्यर्थ । ३ वर्मनृपते इति पाठान्तरम् । ४—प्रत्यग्रं स्तबकम् इति पाठान्तरम् ।

माषादिमानं चागस्त्येनोक्तम्-'यवःस्यात्सर्षपैः षड्भिर्गुञ्जा च स्यात्त्रिभिर्यवैः। गुञ्जाभिः पञ्चभिश्चैको माषकः परिकीर्तितः।भवेत्षोडशभिर्माषैः सुवर्णस्तैः पुनः स्मृतः। पलं सुवर्णाश्चत्वारःपञ्च वापि प्रकीर्तितम्'इति। कर्षस्तु पलस्य चतुर्थो भागः। तदुक्तं त्रिकाण्डयाम्-'मानं तुलाङ्गुलप्रस्थैर्गुञ्जाः पञ्चाथ माषकः। ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम्' इति। असंपूर्णा दिनद्वयसंबन्धिनी खण्डा। तस्यां दिनद्वयसंबन्धिन्यां सत्यां व्रताद्यनुष्ठाने पूर्वा परा वोपादेयेत्यादिसंदेहे निर्णयः क्रियते। तत्र प्रतिपदाद्याः सर्वाः खण्डास्तिथयो मध्याह्नादिकालविशेषे विहितेष्वेकभक्तादिव्रतेषु यस्मिन्यस्मिन्दिने तत्तत्कालव्यापिन्यो लभ्यन्ते तत्तद्दिनगता एव ग्राह्याः। 'कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः।तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम्'। इति वृद्धयाज्ञवल्क्यवचनात्। गार्ग्यः– 'निमित्तं कालमादाय वृत्तिर्विधिनिषेधयोः। विधिः पूज्यतिथौ तत्र निषेधः कालमात्रके। तिथीनां पूज्यता नाम कर्मानुष्ठानयोग्यता। निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते'। इति। न च केवलं वाचनिक एवायमर्थः किं तु न्याय्योऽपीति निषेधस्त्वित्यनेन सूचयति। तथाहि। विधिषु विधेयानुष्ठानस्याभ्युदयहेतुत्वं प्रमेयम्। सकृदनुष्ठानादेव त्वभ्युदयसिद्धेस्तिथिद्वैधे कुत्रानुष्ठेयमिति विधेये जायते संदेहः। निषेधे तु कालविशेषे कर्मविशेषानुष्ठानस्यानर्थहेतुत्वं प्रमेयम्। यदा कदापिच तत्काले तत्कर्मानुष्ठानेऽनर्थप्रसङ्गात्सर्वदैव तत्काले तद्वर्ज्यं भवतीति नास्ति संदेहः॥ नन्वेवं वचनान्न्यायतश्च कालविशेषप्रयुक्तसर्वनिषेधानां तावत्कालिकत्वसिद्धौ अभ्यङ्गमैथुनदन्तधावननिषेधेषु पुनस्तावत्कालिकत्ववचनं किमर्थम्। 'अभ्यङ्गे चोदधिस्नाने दन्तधावनमैथुने। जाते च मरणे चैव तत्कालव्यापिनी तिथिः'। इति सत्यम्॥ विधेयकर्मविशेषविषय एव साकल्यापवादार्थे तस्मिन्वचने निषेध्यानां केषांचिदुपादानं दृष्टान्तत्वेन जननमरणयोरिव नहि जननमरणयोरनुष्ठेययोः साकल्यवचनं प्रवर्तते येन तदपवादः कर्तव्यः। साकल्यवचने 'स्नानदानजपादिषु'इत्यादिशब्देन तदर्थकेन 'दानाध्ययनकर्मसु' इति बहुवचनेन चानुष्ठेयानामेव कर्मणा ग्रहणात्। अत एव निषेध्यानामप्यल्पसादृश्यात्तत्रानुपादानम्॥ नच जननमरणाभ्यां तन्निमित्तकस्यानुष्ठेयकर्मण एवोपादानम्॥तन्निमित्तकश्राद्धादौ साकल्यस्येष्टत्वादेव तदपवादासंभवात्। तस्मात् जननमरणयोस्तद्वन्निषेध्यानामपि दृष्टान्ततयैव तत्रोपादानम्। अत एव तत्तत्तिथिविशेषाधिकरणकोशादिनिमित्तानां सकलनिषेध्यानां चोपलक्षणमेव तद्ग्रहणमपि॥

---

१ कालविशेषमायुक्तसर्वनिषेधानामिति पाठान्तरम्।

ननु युग्मादिवाक्यविरोधात्कथमयं निर्णयः । तथाहि-'युग्माग्नियुगभूतानां षण्मुन्योर्वसु रन्ध्रयोः । रुद्रेण द्वादशी युक्ता चतुर्दश्या च पौर्णिमा । प्रतिपद्यप्यमावास्या तिथ्योर्युग्मं महाफलम् । एतद्व्यस्तं महादोषं हन्ति पुण्यं पुरा कृतम्' इति निगमवचनम् । युग्मं द्वितीया । अग्निस्तृतीया युगं चतुर्थी । भूतं पञ्चमी । षट् षष्ठी । मुनिः सप्तमी । वसुरष्टमी । रन्ध्रं नवमी । रुद्र एकादशी । अत्र द्वितीयातृतीयेत्येकं युग्मम् । अत्र द्वितीयादिप्रतिपदन्तासु क्रमेण द्वयोर्द्वयोस्तिथ्योः परस्परमेव युग्ममक्षय्यफलम् । न पुनर्व्यस्तं तिथ्यन्तरयुग्ममित्यर्थः । अस्मिन्युग्मसप्तके पूर्वा तिथिरुत्तरविद्धा ग्राह्या उत्तरा तु पूर्वविद्धेत्यर्थः । ततश्चानेन वचनेन अमावास्याविद्धा प्रतिपत्सर्वदा ग्राह्येति विधीयते । 'कर्मणो यस्य यः कालः—' इत्यनेन तु द्वितीयायुतायाः प्रतिपदः कर्मकालव्यापित्वे सा ग्राह्येच्युते इत्यनयोर्विरोधः ॥ तथा 'खर्वो दर्पस्तथा हिंस्रा त्रिविधं तिथिलक्षणम् । खर्वदर्पौ परौ पूज्यौ हिंस्रा स्यात्पूर्वकालिकी'। इति व्याघ्रोशनसोर्वाक्यम् । खर्वस्तिथेः साम्यम् । दर्पो वृद्धिः । हिंस्रा क्षयः । एते च वृद्धिसाम्यक्षयाः पूर्वतिथ्यपेक्षया । यथा एका पूर्वेऽह्नि मध्याह्नादधिका वर्धते अन्याऽप्यन्यस्मिंस्तथैव पूर्वतिथेरेका । खर्वः समतिथिः पूर्वदिने मध्याह्नव्यापिनी अन्याऽप्यन्यस्मिन्दिवसे तावत्येवेति । हिंस्रा तिथेर्ह्रासः । तद्योगात्तिथिरपि हिंस्रेत्युच्यते । यथा एका पूर्वदिने मध्याह्नान्न्यूना अन्याप्यन्यस्मिंस्तथैव पूर्वतिथेर्न्यूनेति ततश्च वृद्धिसाम्ययोरुत्तरा ग्राह्या क्षये तु पूर्वेत्यर्थप्रतिपादकेनानेन कर्मकालव्यापिन्येव तद्विपरीतापि तिथिर्ग्राह्येति प्रतिपादकस्य 'कर्मणो यस्य'—इत्येवमादेर्विरोध इति । तथा 'शुक्लपक्षे तिथिर्ज्ञेया यस्यामभ्युदितो रविः । कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः'।इति मार्कण्डेयवचनेनापि विरोधः । तस्मात्परस्परवचनविरोधात् कथं पूर्वोक्तनिर्णय इति चेत् ॥

उच्यते॥तत्र खण्डतिथिः पञ्चधा संभवति।अन्यतरस्मिन्नेव दिने सकलकर्मकालव्यापिनी । दिनद्वयेऽपि कर्मकालैकदेशव्यापिनी । दिनद्वयेऽपि सकलकर्मकालव्यापिनी दिनद्वयेऽपि कर्मकालैकदेशव्यापिनी । तत्र व्याप्तौ प्रकारद्वयम् साम्यं वैषम्यं चेति दिनद्वयेऽपि कर्मकालसंबन्धरहिता चेति । तत्राद्यपक्षद्वये व्रतदानादावेकोद्दिष्टादिश्राद्धे च'कर्मणो यस्य यः कालः'इत्यनेनैव निर्णयः न तु युग्मवाक्यादिभिः । तत्र हि युग्मवाक्येन निर्णये कदाचिदमावास्यादिविद्धाः कर्मकालव्यापिन्यः प्रतिपदादितिथयो ग्राह्याः स्युः । तथा खर्वदर्पवाक्येनात्र निर्णये कदाचित्तिथिवृद्धौ कर्मकालव्यापिन्यप्युत्तरविद्धा ग्राह्या स्यात् । तथा च तत्तत्कर्मविशेषे तु प्रतिपदादितिथिविधायकानेक-

वाक्यबाधः स्यात् । संभवति चाबाधे बाधाकल्पनमयुक्तम् । तृतीयपञ्चमपक्षयोस्तु युग्मवाक्येन खर्वदर्पवाक्येन च निर्णयः पूर्वोक्तदोषाभावात् ॥ तत्राप्येवं व्यवस्था । युग्मादिवाक्यं व्रतदानादिविषयमेव । खर्वदर्पवाक्यमेकोद्दिष्टादिश्राद्धविषयमेव । 'द्वितीयादिकयुग्मानां पूज्यता नियमादिषु । एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिचोदना' इति व्यासोक्तेः । नियमादिषु व्रतदानादिदैवकर्मसु । एकोद्दिष्टादीत्यादिशब्देनाभ्युदयिकव्यतिरिक्तश्राद्धग्रहणम् । वृद्ध्यादिशब्देनाभ्युदयिकश्राद्धग्रहणं । चतुर्थपक्षे यदा दिनद्वयेऽपि कर्मपर्याप्तकालव्यापिनी तदा युग्मादिवाक्येन निर्णयः । एकस्मिन्नेव दिने कर्मपर्याप्तकालव्यापिनी तदा सैव ग्राह्या विहिततिथिलाभात् । यदोभयत्रापि न कर्मपर्याप्तकालसंबद्धा किं तूभयत्रापि न कर्मकालैकदेशसंबधिनी तत्रन्यूनाधिक्येऽधिककालव्यापिनी ग्राह्या । साम्ये तु या कर्मोपक्रमकालस्पर्शिनी सैव ग्राह्या नान्या । 'योयस्य विहितःकालः कर्मणस्तदुपक्रमे । तिथिर्याऽभिमता सा तु कार्यानोपक्रमोज्झिता' । इति बौधायनवचनात् । स्कान्देऽपि—'यो यस्य विहितः कालः कर्मणस्तदुपक्रमे । विद्यमानो भवेदङ्गं नोज्झितोपक्रमेण तु' । सर्वथा कर्मकालव्याप्त्यभावे तु कर्मोपक्रमकालगैव ग्राह्या । 'कर्मोपक्रमकालगा तु कृतिभिर्ग्राह्या न युग्मादयः' इति दीपिकोक्तेरिति निर्णयसिन्धौ । अत एव—'यां तिथिं समनुप्राप्य उदयं याति भास्करः । सा तिथिः सकला ज्ञेया स्नानदानजपादिषु । यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः । सा तिथिः सकला ज्ञेया स्नानदानादिकर्मसु' इत्यादीनि देवलादिवचनानि दिनद्वयेऽपि कर्मकालव्यापितिथ्यभावे युग्मादिवाक्यविहिततिथेः संपूर्णत्वं प्रतिपादयन्ति । इदं च उदयास्तमयकालिकतिथेः संपूर्णत्वाभिधानं यदोदयादूर्ध्वं मुहूर्तत्रयं मुहूर्तद्वयं वा विहिता तिथिर्भवति अस्तमयात्प्राक् मुहूर्तत्रयं तदाऽवगन्तव्यम् । तदुक्तं विष्णुधर्मोत्तरे—'उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ । द्विमुहूर्ता त्रिरन्हश्च सा तिथिर्हव्यकव्ययोः' । इति । भानावुदिते सत्यह्नो मुहूर्तद्वयं दैवतम् । अस्तमिते तत्पूर्वकालीनमह्नो मुहूर्तत्रयं पित्र्यम् । अतस्तत्कालव्यापिनी तिथिर्हव्यकव्ययोर्ग्राह्या । 'सा तिथिस्तदहोरात्रं यस्यामभ्युदितो रविः । वर्धमानस्य पक्षस्य ह्रासे त्वस्तमये स्थिता । त्रिमुहूर्ता न कर्तव्या या तिथिः क्षयगामिनी । द्विमुहूर्ताऽपि कर्तव्या या तिथिर्वृद्धिगामिनी' । इति दक्षवचने द्विमुहूर्ताग्रहणमुदयसंबन्धिन्यामेव।अस्तगायास्त्रिमुहूर्ताया एव ग्राह्यत्वात् । तदुक्तं स्कन्दपुराणे-

'या तिथिं समनुप्राप्य यात्यस्तं पद्मिनीपतिः । सा तिथिस्तद्दिने प्रोक्ता त्रिमुहूर्तापि या भवेत्' इति। अत्र त्रिमुहूर्ता नेति दक्षवचनात्। ह्रासवृद्धिवशेन तिथिनिर्णयः आमश्राद्धादिविषयः। 'तस्यास्तु त्रिमुहूर्तायाः क्षयवृद्धी त्वकारणम्'। इति स्कान्दवचनं व्रतादिविषयम्। 'द्वितीयादिका'—इति व्यासनिगमवचनात्। यानि तु 'व्रतोपवासस्नानादौ घटिकैका यदा भवेत्। उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके। आदित्योदयवेलायां या स्तोकापि तिथिर्भवेत् । पूर्णा इत्यवगन्तव्या प्रभूता नोदयं विना'। इत्यादीनि स्कन्दपुराणे बौधायनवचनानि मुहूर्त्तत्रयादल्पकालव्यापिन्यामपि तिथौ संपूर्णत्वप्रतिपादकानि तानि वैश्वानराधिकरणन्यायेनावयुत्यानुवादरूपतया त्रिमुहूर्त्तव्याप्ततिथिप्रशंसापराणि । युग्मवाक्यादिनिर्णयस्तु नक्षत्रवारादियोगप्रशस्ततिथिव्यतिरिक्तविषयः। अत एव गोभिलः—'या तिथिर्ऋक्षसंयुक्ता या च योगेन नारद। मुहूर्त्तत्रयमात्रापि सापि सर्वा प्रशस्यते' इति। द्वितीयोऽपिशब्दो भिन्नक्रमः। सर्वापीत्यन्वयः। उदये त्रिमुहूर्त्तद्विमुहूर्तगाया अस्तमये च त्रिमुहूर्तगायाः संपूर्णत्वाभिधानं वक्ष्यमाणाभ्यङ्गादिव्यतिरिक्तविषयम् । तदुक्तं स्कन्दपुराणे—'अभ्यङ्गे चोदधिस्नाने' इत्यादि। 'मन्वादौ च युगादौ च ग्रहणे चन्द्रसूर्ययोः । व्यतीपाते वैधृतौ च तत्कालव्यापिनी क्रिया'। इति। मन्वादिषु स्नानदानश्राद्धादिक्रिया मन्वाद्यादिकाल एव कर्तव्या न कालान्तर इति मन्वादावित्यस्यार्थः। नारदीये—'पारणे मरणे नृणां तिथिस्तात्कालिकी स्मता'। यदा त्वेकैव तिथिः पूर्वा ग्राह्येत्येकेन वचनेनोच्यते उत्तरा ग्राह्येत्यनेन तदा 'शुक्लपक्षे तिथिर्ग्राह्या' इति मार्कण्डेयवचनं व्यवस्थापकमिति सर्वं समञ्जसम् ॥ इति सामान्यतः सर्वतिथिनिर्णयः॥

अथैकभक्तव्रतकालनिर्णयः। ब्रह्मपुराणे—वैश्वानरव्रते पठ्यते—'प्रतिपद्येकभक्ताशीसमाप्ते कपिलाप्रदः'। तत्रादावेकभक्तं त्रिविधम्। स्वतन्त्रम्, अन्याङ्गम्, उपवासप्रतिनिधिरूपं च। तत्र स्वतन्त्रैकभक्तस्वरूपं तन्निर्णयश्च स्कान्दे—'दिनार्धसमयेऽतीते भुज्यते नियमेन यत् । एकभक्तमिति प्रोक्तमतस्तत्स्याद्दिवैव हि'। इति। देवलोऽपि—'दिनार्धसमयेऽतीते भुज्यते नियमेन यत्। एकभक्तं तु तत्प्रोक्तं न्यूनग्रासत्रयेण तु' इति। तच्चैकभक्तं मध्याह्नव्यापिन्यां कार्यम्। तदुक्तं पद्मपुराणे'मध्याह्नव्यापिनी ग्राह्या एकभक्ते व्रते तिथिः' इति। बौधायनोऽपि—'उदये तूपवासस्य नक्तस्यास्तमये तिथिः। मध्याह्नव्यापिनी ग्राह्या एकभक्तव्रते तिथिः'। अत्र

मध्याह्नो नाम पञ्चधा विभक्तस्याह्नस्तृतीयो भागः । तत्राहोरात्रयोस्त्रिंशन्मुहूर्ताः । अह्निपञ्चदश, रात्रौ पञ्चदश । तेषां मुहूर्तानां नामानि ज्योतिःशास्त्रे काश्यपेनोक्तानि- 'गौरीवल्लभसर्पमित्रपितरो वस्वम्बुविश्वाह्वया ब्रह्माम्भोरुहसंभवेन्द्रहुतभुग्देवेशनक्तंचराः । तोयेशार्यमयोनयो दश तथा पञ्च क्षणा वासरे' इत्यादि । 'रुद्राजाहिर्बुध्न्यपूषाश्विनाः स्युः कीनाशोऽग्निर्धातृचन्द्रादितीज्याः । विष्णुर्भानुस्त्वाष्ट्रवाता मुहूर्ता रात्रौ क्रूरास्त्वन्तकालाग्निरुद्राः' इति । स्मार्तानि नामानि पुराणे दर्शितानि—'रौद्रः श्वेतश्च मैत्रश्च तथा सारभटः स्मृतः । सावित्रो वैश्वदेवश्च गान्धर्वः कुतपस्तथा । रोहिणस्तिलकश्चैव विभवो निर्ऋतिस्तथा । शाम्बरो विजयश्चैव भेदाः पञ्चदश स्मृताः' । इति। एते पञ्चदश सूर्योदयादारभ्य क्रमाद्दिवामुहूर्ताः । अथ रात्रिमुहूर्ताः—'शंकरश्चाजपाच्चैव तथाऽहिर्बुध्न्यपूषकौ । आश्विनो याम्यवाह्नेयौ वैधात्रश्चान्द्र एव च । आदितेयोऽथ जैवश्च वैष्णवः सौर एव च । ब्राह्मो नाभस्वतश्चैव मुहूर्ताः क्रमशो निशि' इति। अत्र घटिकाद्वयात्मको मुहूर्तः । तदुक्तं निर्णयामृते महाभारते। 'नाडीद्वयं मुहूर्तस्तु' इति । यदुक्तं रत्नमालायाम्—'दिनस्य यः पञ्चदशो विभागो रात्रेस्तथा तद्धि मुहूर्तमानम्' । इति, तल्लाक्षणिकाभिप्रायेण ज्ञेयम् । यद्यप्यह्नो विभागो द्वेधा त्रेधा चतुर्धा पञ्चधा च दृश्यते ॥ तथापि बहुसंमतत्वात्प्राचुर्येण पञ्चधा विभाग एव गृह्यते। पूर्वाह्णोऽपराह्णः इति विभागः । स चोक्तः स्कान्दे—'आवर्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परः' । इति । तस्य च पर्वनिर्णयादावुपयोगः । त्रेधा विभागमाह शातातपः—'यस्मादह्नस्तु पूर्वाह्णे देवा अशनमभ्यवहरन्ति । मध्यंदिने मनुष्या अपराह्णे पितरः' । श्रुतावपि 'पूर्वाह्णो वै देवानां मध्याह्नो मनुष्याणामपराह्णः पितॄणाम्' इति । एतस्य च श्राद्धादावुपयोगः । चतुर्धा विभागमाह गोभिलः— 'पूर्वाह्णः प्रथमं सार्धं मध्याह्नः प्रहरं तथा । आतृतीयादपराह्णः सायाह्नश्च ततः परः' इति । एतस्य च यत्र कर्मविशेषे गमकसद्भावस्तत्रोपयोगः । पञ्चधा विभागस्तु व्यासेनोक्तः । यथा—'मुहूर्तत्रितयं प्रातस्तावानेव तु संगवः ॥ मध्याह्नस्त्रिमुहूर्तश्च सर्वकर्मसु गर्हितः' इति । अस्यार्थः । उदयान्मुहूर्तत्रयं प्रातः कालः । तदनन्तरं मुहूर्तत्रयं संगवः ततः परं मुहूर्तत्रयं मध्याह्नः । ततः परं मुहूर्तत्रयमपराह्णः । ततः परं मुहूर्तत्रयं सायाह्नः । इति ॥ ननु त्रिंशद्घटिकात्मके दिवसे पञ्चधा विभागे सति एकैकस्य कालस्य मुहूर्तत्रयात्मकत्वं

संभवति षडशीत्यादिषु दिनमानह्रासे कथं त्रिमुहूर्तात्मकत्वेनायं विभाग इति चेत् ॥ उच्यते ॥ त्रिमुहूर्तमित्यह्नः पञ्चमभागोपलक्षणम् । अतश्च अह्नां ह्रासवृद्धौ न दोषः । एवं च षड्घटिकात्मकमध्याह्नस्योत्तरास्मिन्घटिकात्रये एकभक्तं कर्तव्यम् । अन्यथा 'दिनार्धसमयेऽतीते' इति वचनस्यानर्थक्यं प्रसज्येत । इत्थमेव निर्णीतं निर्णयामृते च हेमाद्रौ मदनरत्ने—अत्र मध्याह्नशब्दो 'दिनार्धसमयेऽतीते' इति वचनान्मध्याह्नोत्तरदलपरः पटो दग्ध इतिवत् । तत्र स्वतन्त्रमेकभक्तं यस्यां तिथौ विहितं तस्यां मध्याह्नोत्तरदलव्यापिन्यामेव कर्तव्यम् । दिनद्वयेऽपि तद्व्यापिन्यां युग्मवाक्यान्निर्णयः दिनद्वयेऽपि मुख्यकालास्पर्शेन पूर्वैव ग्राह्या गौणकालव्यापित्वात् । तस्यामप्येकभक्तं मुख्यकाल एव कर्तव्यम् । 'तिथ्यादिषु भवेद्यावान्ह्रासो वृद्धिः परेऽहनि । तावान्ग्राह्यस्तु पूर्वेद्युरदृष्टोपि स्वकर्मणि' । इति वचनेन पूर्वतिथेरपि तावतो ह्रासस्य कल्पनेन मुख्यकालेऽपि एकभक्तादितिथिसंभवात् ॥ केचित्तु-'तिथेः परस्या घटिकाश्च याः[1] स्युर्न्यूनास्तथैवाभ्यधिकाश्च तासाम् । अर्धं वियोज्यं च तथा प्रयोज्यं ह्रासे च वृद्धौ प्रथमे दिने स्यात्'। इति लौगाक्षिवचनेनोत्तरतिथिह्रासार्धस्य पूर्वतिथौ योजनात् । मुख्यकाले तत्संभवमाहुः ॥ दिनद्वये मुख्यकालैकदेशस्य तुल्यव्याप्तौ पूर्वैव ग्राह्या, गौणकालस्यापि व्यापनात् । यदा चैका मुख्यकालैकदेशमाधिकं व्याप्नोति तदाऽधिकमुख्यकालव्यापित्वेन सैव ग्राह्या । अयं निर्णयः स्वतन्त्रैकभक्तविषयः अन्यव्रताङ्गं त्वेकभक्तं प्रधानव्रतेन 'मध्याह्ने पूजयेन्नृप' इत्यादिवचनान्मुख्यकालावरोधेऽङ्गविरोधे च तादर्थ्यादिति न्यायेन मुख्यकालात्प्रच्युतमपि गौणकाले कर्तव्यम् । यथा दीक्षणीयेष्टिः[2] प्रधानसोमयागानुरोधेनेष्टिकालात्पर्वणः प्रच्युता कालान्तरे क्रियते । उपवासप्रतिनिधिरूपं त्वेकभक्तमुपवासदिने मध्याह्ने उपवासतिथेः सद्भावेऽसद्भावे वा तत्रैव कर्तव्यम् । 'तिथिर्यथोपवासे स्यादेकभक्तेऽपि सा तथा' । इति सुमन्तुवचनात् ।

इति जयसिंहकल्पद्रुमे एकभक्तव्रतकालनिर्णयः ।

अथ नक्तव्रतेकालनिर्णयः । नक्तं नामाहरशनं वर्जयित्वा रात्रौ भोक्तव्यमिति नियमाद्दिवारात्रिव्रतम् । तस्मादेतद्दिवारात्रिव्यापिन्यामेव तिथौ कर्तव्यम् । तदुक्तं स्कन्दपुराणे—'दिवारात्रिव्रतं यच्च एकमेव तिथौ स्मृतम् । तस्यामुभयव्यापिन्यां कुर्यादेव व्रतं व्रती'। अत्रोभयव्यापिन्यामेवेत्यन्वयः । दिवारात्रिव्यापिन्या अलाभे प्रदोषव्यापिन्यां कार्य-

---

१ 'तिथ्या॰ परस्या घटिकाश्च या स्यु' इति ख पुस्तके पाठ. । २ 'दाक्षिणायेष्टि' इति ख पुस्तके पाठ ।

म् । तदाह वत्सः—'प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा । एकादशीं विना सर्वाः शुक्ले कृष्णे समाः स्मृताः' । एकादश्युपवासप्रतिनिधिरूपं तु नक्तमेकादश्युपवासदिन एव कार्यम् । न तत्रैकादश्याः प्रदोषव्यापित्वापेक्षेत्यर्थः । प्रदोषपरिमाणमुक्तं स्कन्दपुराणे—'उदयात्प्राक्तनी संध्या घटिकात्रयमिष्यते । सायं संध्या त्रिघटिका अस्तादुपरि भास्वतः । प्रदोषस्त्रिमुहूर्त्तः स्याद्रवावस्तं गते सति' इति । व्यासोऽपि—'त्रिमुहूर्त्तः प्रदोषः स्याद्भानावस्तं गते सति । नक्तं तत्र तु कर्तव्यमिति शास्त्रविनिश्चयः' । इति । हेमाद्रौ विश्वादर्शे—'प्रदोषोऽस्तमयादूर्ध्वं घटिकात्रयमुच्यते' इति । अस्य च नक्तस्य कालद्वयं भविष्यपुराणे दर्शितम्—'मुहूर्तोनं दिनं नक्तं प्रवदन्ति मनीषिणः । नक्षत्रदर्शनान्नक्तमहं मन्ये गणाधिप' । इति । अस्य च नक्तव्रतकालद्वयस्याधिकारिभेदेन व्यवस्थामाह देवलः—'नक्षत्रदर्शनान्नक्तं गृहस्थस्य बुधैः स्मृतम् । यतेर्दिनाष्टमे भागे तस्य रात्रौ निषिध्यते' इति । स्मृत्यन्तरेऽपि—'नक्तं निशायां कुर्वीत गृहस्थो विधिसंयुतः । यतिश्च विधवा चैव कुर्यात्तत्सदिवाकरम् । सदिवाकरं तु तत्प्रोक्तमन्तिमे घटिकाद्वये । निशानक्तं तु विज्ञेयं यामार्धे प्रथमे सदा' इति । इत्थं व्यवस्था नक्तकालद्वयस्य माधवेनोक्ता । मदनरत्ने तु प्रकारान्तेण व्यवस्थोक्ता । अयं च प्रदोषो नक्तव्रतस्य मुख्यकालः । अस्तमयात्प्राचीनो मुहूर्तोऽनुकल्पः । 'मुहूर्तोनदिनं नक्तम्' इति । भविष्यपुराणे—शिवेन नक्षत्रदर्शनोक्तप्रदोषकालस्य अहं मन्ये' इति । स्वाभिमतत्वेनाभिधानात् । इतरस्य तु पराभिमतत्वेनाभिधानाद्गौणत्वस्याभिप्रेतत्वात् । अत्र वचने नक्षत्रदर्शनादिति ल्यब्लोपे पञ्चमी । अतश्च नक्षत्रदर्शनं प्राप्य नक्तविहितभोजनं विधेयमित्यर्थः । 'अतथात्वे परत्र स्यादत्रार्वागस्ततो हि सा' इति जाबालिवाक्ये दिनद्वयेऽपि प्रदोषव्याप्त्यभावे सायाह्नव्याप्तेराश्रयणाच्च यदा नक्ततिथिः पूर्वदिने प्रदोषं व्याप्नोति अस्तमयादर्वाचीनं त्रिमुहूर्त्तं परदिने व्याप्नोति किंचिद्वा स्पृशति तदा पूर्वत्रैव नक्तं कार्यम् । तदुक्तं जाबालिना—'अहःसु तिथयः पुण्याः कर्मानुष्ठानतो दिवा । नक्तव्रतेषु सर्वत्र रात्रियोगः प्रशस्यते' । इति । यदा नक्ततिथिः पूर्वापरयोरह्नोः प्रदोषं व्याप्नोति तदा परैव ग्राह्या, दिवारात्रिव्यापित्वात् । तदाह जाबालिः—'यदि स्यादुभयोरह्नोः प्रदोषव्यापिनी तिथिः । तत्रोत्तरत्र नक्तं स्यादुभयत्रापि सा यतः' । इति दिवा रात्रावपीत्यर्थः ॥ यत्तु कूर्मपुराणे प्रदोषकालस्यास्तमयात्प्राचीनमुहूर्तत्रयस्य च नक्तकालत्वाभिमानम् । 'प्रदोषव्यापिनी यत्र त्रिमुहूर्ता दिवा यदि । तदा नक्तव्रतं कुर्यात्स्वाध्यायस्य निषेधवत्' । तन्मुख्यगौणसाधारण्येनावगन्तव्यम् ।

यत्तु भविष्यपुराणाद्यवितोऽल्पकालग्रहणम् , तदमुख्यकालत्वेऽपि तत्प्राशस्त्यायेति । तेनास्य न विरोधः। ननु-'उदयात्प्राक्तनी संध्या घटिकात्रयमुच्यते। सायंसन्ध्या त्रिघटिका अस्तादुपरि भास्वतः।' इति स्कन्दपुराणे संध्याया घटिकात्रयात्मकत्वाभिधानात्तस्यां च 'चत्वारीमानि कर्माणि संध्यायां परिवर्जयेत्। आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम्।' इति वचनेन भोजनप्रतिषेधात्कथं नक्षत्रदर्शनानन्तरं नक्तभोजनविधानमिति चेत्। न। भोजननिषेधस्य मुख्यसंध्याकालसंबन्धेनैव वक्तुं शक्यत्वात् । गौणात्रिघटिकात्मकसंध्याश्रये कारणाभावात्। संध्यानाम दिनरात्र्योः संधौ विहिता संध्योपासनादिक्रिया। संधिश्च खण्डमार्तण्डमण्डलोपलब्धिसमयः। तस्याल्पत्वात्क्रियायाश्च विततत्वेन तावति काले कर्तुमशक्यत्वात्। मुख्यार्थबाधे सति संध्याशब्देन संधिसंबन्धः पूर्वापरक्रियापर्याप्तः कालो लक्ष्यते। अतश्च सर्वलोकप्रसिद्धः खण्डमार्तण्डमण्डलोपलब्ध्यादितारकोदयान्तो मुख्यः सायंसंध्याकालः। तथा च याज्ञवल्क्यः 'प्रातःसंध्या सनक्षत्रा सायंसंध्या सभास्कराजपन्नासीन सावित्रीं प्रत्यगातारकोदयात्। संध्या प्राक्प्रातरेवं हि तिष्ठेदासूर्यदर्शनात्।' स्मृत्यन्तरे च-'नक्षत्रदर्शनात्संध्या सायं तत्परतः स्थितम्। तत्परा रजनी ज्ञेया तत्र धर्मान्विवर्जयेत्'। इति। त्रिघटिकात्मकः संध्याकालस्तु मुख्यकाले दैवादकृतानां सन्ध्योपासनादीनां घटिकात्रयपर्यन्तं कर्तव्यताऽभ्यनुज्ञापनार्थः। संध्यागर्जितादिना विहितानध्यायादिपरश्च। हेमाद्रौ मदनरत्ने च 'अस्तु वा घटिकात्रयं संध्याशब्दार्थः, तथापि न तत्र निषेधः तस्य रागप्राप्तभोजनविषयत्वात्'। यत्तु निर्णयसिन्धौ। गौडास्तु—'प्रदोषोऽस्तमयादूर्ध्वं घटिकाद्वयमिष्यते ।' इति वत्सोक्तः प्रदोषः संध्या च दिनरात्र्योः संधौ मुहूर्तः। 'अर्धास्तमयात्संध्या व्यक्तीभूता न तारका यावत् । तेजःपरिहानिवशाद्भानोरर्धोदयं यावत् ।' इति वराहोक्तेरित्याहुः । तन्न । अस्य संध्यावन्दनानध्यायादिपरत्वादिति । तदप्रागल्भ्यविजृम्भितम्। शिवपूजने नक्तभोजने च तस्यैव प्रदोषकालस्य सर्वत्र विहितत्वात् । यदप्युक्तम्। यच्च मदनरत्ने नक्तस्य वैधत्वाद्रागप्राप्तभोजनगोचरो निषेध इति । तन्न । विधेर्निषेधाविरोधात् । अन्यथा कपिञ्जलानित्यत्र त्रिभ्योऽधिकानां हिंसनं स्यादिति तत्सर्वं विधिस्पृष्टे निषेधानवकाशादिति मीमांसकोद्घोषविरोधात् घटिकाद्वयत्रयप्रदोषप्रतिपादकमाधवग्रन्थविरोधाच्चोपेक्ष्यम् । कालतत्त्वविवेचनेऽपि घटिकात्रयसंध्याग्रहणेऽपि वैधनक्तभोजने नक्षत्रदर्शनानन्तरं घटिकात्रयमध्येऽपि क्रियमाणे न दोषः । तद्विषयत्वे तु विधिप्राप्ते निषेधप्रवृत्तौ विहितनिषेधत्वे-

नाष्टदोषदुष्टविकल्पापत्तेरिति । अनेनैव न्यायेनादित्यवारसंक्रान्त्यादिषु रात्रिभोजन-निषेधस्य रागप्राप्तविषयत्वादष्टम्यादिनक्तव्रतं रविवारादियोगेऽपि रात्रावेव कर्तव्यम् । यदा दिनद्वयेऽपि न प्रदोषसंबन्धः तदोत्तरदिने सायाह्ने कर्तव्यम् । तदुक्तं स्कान्दे-'प्रदोषव्यापिनी न स्याद्दिवा नक्तं विधीयते । आत्मनो द्विगुणां छायामतिक्रामति भास्करे । तद्धुक्तं नक्तमित्याहुर्न नक्तं निशि भोजनम् । एवं ज्ञात्वा ततो विद्वान्सायाह्ने तु भुजिक्रियाम् । कुर्य्यान्नक्तव्रती भक्तं फलं भवति निश्चितम्' । इति । 'अतथात्वे परत्र स्यात्' इत्याद्युक्तमेव । अवशिष्टेषु पक्षेष्वेकभक्तवन्निर्णयो द्रष्टव्यः । सौरनक्तव्रतमपि यत्सप्तमीरविवारादौ विहितं तत्सायाह्न एव कर्तव्यम् । तदुक्तं सुमन्तुना-'त्रिमुहूर्तस्पृगेवाऽह्नि निशि चैतावती तिथिः । तस्यां सौरं चरेन्नक्तमहन्येव तु भोजनम् ।' इति । कूर्मपुराणेऽपि-'नरस्य द्विगुणां छायामतिक्रामेद्यदा रविः । तदा सौरं चरेन्नक्तं न नक्तं निशि भोजनम्'।इति।भविष्यपुराणेऽपि-'ये त्वादित्यदिने ब्रह्मन्नक्तं कुर्वन्ति मानवाः।दिनान्ते ते तु भुञ्जीरन्निषेधो रात्रिभोजने' इति।हरिनक्ते विशेषः स्कांदे-'उदयस्था सदा पूज्या हरिनक्तव्रते तिथिः'।इति। अन्यन्नक्तं तु संक्रान्त्यादावपि रात्रावेव । निषेधस्य रागप्राप्तभोजनगोचरत्वेन वैधाबाधकत्वात् । यानि तु-'यदा तु द्विगुणां छायां कुर्वंस्तपति भास्करः । तत्र नक्तं विजानीयान्न नक्तं निशि भोजनम्' । इत्यादीनि सौरधर्मादिवचनानि दिवानक्तविषयाणि तानि यथायथं दिनद्वयेऽपि प्रदोषव्याप्त्यभावविषयाणि यतिनक्तविषयाणि वा द्रष्टव्यानि।अत्र माधवः-'ये त्वादित्यदिने ब्रह्मन्' इति भविष्योत्तरपुराणमधिकृत्य 'अस्मिंश्च दिवाभोजने उत्तमोऽन्तिममुहूर्तो मध्यम उपान्त्यः ततः प्राचीनो जघन्यः'।एवं च सत्यन्तिमभागमुहूर्तवचनान्युपपद्यन्ते। रात्रिभोजनेऽपि घटिकात्रयमुत्तमः कालः घटिकाषट्कं मध्यमः कालः एतदेवाभिप्रेत्य वचनं स्मर्यते 'प्रदोषोऽस्तमयादूर्ध्वं घटिकात्रयमिष्यते' । इति । 'त्रिमुहूर्तः प्रदोषः स्याद्रवावस्तं गते सति' । इति च । निशीथपर्यन्तो जघन्यः कालः । 'नक्तं प्रकुर्वीत रात्रौ' इति सामान्येनाभिधानात् इति । कालतत्त्वविवेचनकारास्तु-मुख्यकालेऽपि त्रिमुहूर्तात्मके आद्यं मुहूर्तद्वयं मुख्यतरम्, 'निशानक्तं तु विज्ञेयं यामार्धे प्रथमे सदा।' इति स्मृत्यन्तरात् । इत्युक्तवन्तः । अनेनैव न्यायेन सौरनक्तेषु साम्येन वैषम्येण वा दिनद्वये प्रदोषैकदेशव्याप्तौ परेद्युरेव नक्तं कार्यं कालस्य मुख्यस्य तत्तिथिव्याप्तत्वात्। सायंकालैकदेशव्याप्तौ पूर्वतिथिर्ग्राह्या, प्रदोषकालस्य गौणस्य तत्तिथिव्याप्तत्वात् । एकभक्तनक्तयोरेकस्मिन्दिने प्रसक्तौ एकभक्तस्य प्राथम्यादेकभक्तं मुख्यकाल एवानु-

ष्ठेयम्। नक्तं तु द्वितीयदिने तत्तिथेः सायंकाले गौणे सत्त्वे द्वितीयदिनेऽनुष्ठेयम्। द्वितीयदिने गौणकालेऽपि तत्तिथेरसत्त्वे तु भार्यापुत्रादिना वा तद्दिने कार्यमिति। नक्तकर्तुर्नियमो व्यासेन दर्शितो मदनरत्ने-'हविष्यभोजनं स्नानं सत्यमाहारलाघवम्। अग्निकार्यमधःशय्यां नक्तभोजी षडाचरेत्'। इति। इति नक्तकालनिर्णयः।

## अथायाचितकालनिर्णयः।

मदनरत्ने निर्णयामृते च। न विद्यते याचितं यस्मिन्नभ्यवहरणे तदयाचितं नाम 'अहोरात्रे याचितमन्नं न भोक्ष्ये' इत्येवंरूपो याचितान्नभोजनाभावविषयः संकल्प इति यावत्। अत एव प्राजापत्यकृच्छ्रप्रकरणे गौतमेनोक्तम्। 'अथापरं त्र्यहं न कंचन याचेत'। इति। अभ्यवहरणं च भक्ष्यभोज्यलेह्यपेयचोष्यभेदेन पञ्चविधम्। तत्र दन्तैरेवावखण्ड्यावखण्ड्य यन्निगीर्यते तद्भक्ष्यम्। दन्तावखण्डनमन्तरेण मुखव्यापारेणैव यन्निगीर्यते तद्भोज्यम्। जिह्वया गृहीत्वा यदन्तर्गिल्यते तल्लेह्यम्। पेयं प्रसिद्धं क्षीरादि। चोष्यं नाम यद्द्रव्यान्तर्गतसारं रसं मुखव्यापारेण वा गृहीत्वाऽन्तर्गिल्यते असारमन्यत्त्यज्यते तत्। यथा आम्रफलेक्षुदण्डादि। अस्य चोपवासवदहोरात्रसाध्यत्वादयाचिततिथेर्दिवारात्रियोगित्वे तस्यामेवानुष्ठानम्। 'दिवारात्रिव्रतं यच्च' इति स्कन्दपुराणवचनात्। यदा तु तिथिरेकस्मिन्दिने दिवैव अन्यस्मिन्रात्रावेव तदाऽहर्व्यापिन्येव ग्राह्या 'अहःसु तिथयः पुण्याः' इति जाबालिवचनात्। अयाचितान्नलाभे तु दिवा रात्रौ वा अनिषिद्धकाले सकृद्भोजनं कर्तव्यम्। तथैव शिष्टाचारात्। अलाभे तूपवास एव। तत्रापि याचितान्नभोजनपरित्यागस्य निर्वाहान्न लोपः। अत्र माधवः—अयाचितशब्दस्यार्थद्वयम्। प्रतिषेधः पर्युदासश्च। प्रतिषेधपर्युदासयोरुभयोः प्रतिषेधपक्षं प्राजापत्यकृच्छ्रव्याख्याने गौतमो व्यवजहार। 'अथापरं त्र्यहं न कंचन याचेत' इति पर्युदासं बृहस्पतिर्व्यवजहार। 'त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्। त्र्यहं परं तु नाश्नीयात्प्राजापत्यं चरन्द्विजः।' इति। स्मृत्यन्तरेऽपि—'अयाचिताशी मितभुक्परां सिद्धिमवाप्नुयात्।' इति। मितभोजित्वं दशग्रासभुक्त्वम्। तदुक्तं चतुर्विंशतिमते-'प्रातस्तु द्वादश ग्रासान्नक्ते पञ्चदशैव तु। अयाचिते तु द्वौ चाष्टौ प्राजापत्ये विधिः स्मृतः।' इति। तच्च भोजनद्रव्यं परकीयमयत्नोपनीतम्। 'अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः। अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विषः।' इति याज्ञवल्क्यवच-

नात् । तथा यतिधर्मेषूशनाः—'भिक्षाशनमनुयोगात्प्राक्केनापि नियन्त्रितम् । अयाचितं तु तद्भैक्ष्यं भोक्तव्यं मनुरब्रवीत् । ' यदि प्रतिषेधः, यदि वा पर्युदासः । उभयथाऽप्येकभक्तादिवन्न कालो विशेषणीयः । प्रतिषेधे कालविशेषानपेक्षणात्, पर्युदासे पराधीनत्वात् । असति तु कालविशेषविधौ न कर्मकालव्याप्तिवचनमत्र प्रवर्तते किं तु युग्मवाक्येनैव निर्णय इति । यत्तु मयूखे--'अयाचिते विशेषवचनाभावादुपवासवन्निर्णय इति केचित्' तन्न । 'एकभक्तायाचितयोर्या विंशद्घटिकावधिः । सा तिथिः सर्वदा ज्ञेया नक्के सायाह्नसंगता।' इति शार्ङ्गधरीये नारदोक्तेरिति। तच्चिन्त्यम् । एतद्वचनस्य हेमाद्र्यादिनिबन्धादावदर्शनान्निर्मूलत्वात् । इत्ययाचितकालनिर्णयः ।

## अथ खण्डतिथिस्वरूपनिर्णयः ।

एकभक्तादिव्रतानां खण्डतिथौ प्रारम्भसमाप्त्योः प्रतिषिद्धत्वात्खण्डास्वरूपमभिधीयते निर्णयामृते— या तिथिरुदयादारभ्य दिनार्धव्यापिनी न स्यात्सा खंडा तस्यां व्रतानां प्रारम्भं समाप्तिं च न कुर्यात् । तदाह सत्यव्रतः—'उदयस्था तिथिर्या हि न भवेद्दिनमध्यगा । सा खण्डा न व्रतानां स्यात्तत्रारम्भः समापनम् । 'इति । अखण्डायां तु प्रारम्भसमाप्ती आह वृद्धवसिष्ठः—'अखण्डवर्तिमार्तण्डा या ह्यखण्डा भवेत्तिथिः । व्रतप्रारम्भणं तस्यामनष्टगुरुशुक्रयुक् । 'इति । नन्वत्र वचने समाप्तिपदाश्रवणात्तत्र समाप्तिः कर्तव्येति कुतोऽवगम्यते इति चेत् । सत्यम् । खण्डतिथौ निषेधबलादेवाखण्डतिथौ विधानं प्राप्तम् । भावाभावौ विहाय तृतीयावस्थाया न क्वचिद्दर्शनादिति । इति खण्डतिथिस्वरूपनिर्णयः ।

## अथ नक्षत्रव्रतनिर्णयः ।

अत्रैव प्रसङ्गान्नक्षत्रकालनिर्णयो निर्णयामृते—सूर्यास्तमयकालव्यापिनि नक्षत्रे नक्षत्रव्रतं कार्यम् । यदा अत्यन्तक्षयगामि नक्षत्रं दिनद्वयेऽप्यस्तमयकालव्यापि न भवति तदाऽर्धरात्रादर्वाक्चन्द्रेण युक्ते नक्षत्रे कार्यम् । तदुक्तं विष्णुधर्मोत्तरे—'उपोषितव्यं नक्षत्रं यस्मिन्नस्तमियाद्रविः । पूज्यते यत्र वै तारा निशीथे शशिना सह । ' इति । अत्र निशीथशब्देनार्धरात्रादर्वाचीनः कालो लक्ष्यते । अन्यथा सुमन्तुवचनेन विरोधः स्यात् । यदुक्तम्—'यदाऽर्धरात्रादर्वाङ्‌ नक्षत्रं प्राप्यते तिथौ । तन्नक्षत्रे व्रतं कुर्यादतीते पारणा तथा । 'इति । नक्षत्रोपवासे या तिथिः सैव नक्षत्रविहितनक्तैकभक्तयोरपि ग्राह्या।तदुक्तं स्कन्दपुराणे—'तत्रै-

चोपवसेदृक्षे यन्निशीथादधो भवेत् । यदृक्षमुपवासे स्यात्तथा नक्तैकभक्तयोः । ' इति । इति नक्षत्रव्रतनिर्णयः समाप्तः ।

## अथ दानहोमादिदैवकालनिर्णयः ।

एतेषां च पूर्वाह्णः कालः 'पूर्वाह्णो वै देवानाम्' इति श्रुतेः । 'पूर्वाह्णो दैविकः कालो मध्याह्नश्चापि मानुषः । अपराह्णः पितॄणां तु सायाह्नो राक्षसः स्मृतः ।' इति व्यासवचनाच्च । तेनैतानि पूर्वाह्णव्यापिन्यां तत्तत्तिथौ कर्तव्यानि । अत एव याज्ञवल्क्यः—'पौर्वाह्णिकास्तु तिथयो देवकार्ये फलप्रदाः' । इति । नन्वेवमेकस्मिन्दिने तिथिद्वयविहितस्यैकभक्तादेः कथमनुष्ठानम् । उच्यते । यस्य दानहोमैकभक्तादेर्मिथो न विरोधस्तत्क्रमेणानुष्ठेयम् । यस्य त्वेकभक्तनक्तादेर्विरोधस्तत्रैकं स्वयं कृत्वाऽन्यद्भार्यादिना कारयेदिति माधवमदनरत्नादयः । यत्र तु चतुर्दश्यादावेकभक्तादिना भोजनं प्राप्तम्,—'भूताष्टम्योर्दिवा भुक्त्वा रात्रौ भुक्त्वा च पर्वणि । एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत् ।' इति तन्निषेधश्च । तत्रैकभक्तादेर्वैधत्वाद्दिवैव भोजनम् । निषेधस्तु रागप्राप्तभोजनविषयः । तच्च भोजनम् 'उपवासनिषेधे तु'—इति वचनादनुकल्पेन कार्यम् । एवं चतुर्दश्यां शिवरात्रिव्रतपारणाया अपि वैधत्वाद्दिवैव भोजनम् । एवमष्टम्यादौ नक्तव्रते संक्रान्त्यादौ रवौ संकष्टचतुर्थ्यां च रात्रौ भोजनम् । यत्र त्वष्टम्यादौ दिवा भुजिनिषेधः संक्रमे च रात्रौ, इति निषेधद्वयं तत्रोपवास एव कार्यः । यद्यपि पुत्रिण उपवासो निषिद्धः तथापि—'उपवासनिषेधे तु किंचिद्भक्ष्यं प्रकल्पयेत् ।' इति वचनात्किंचित् भक्षयित्वोपवासः कार्यः । यत्तु निर्णयसिन्धौ—चान्द्रायणमध्ये एकादश्यादौ तु भोजनं कार्यमेव, चान्द्रायणस्य काम्यत्वेन नित्यत्वबाधकत्वात् इत्युक्तम् । तन्मृग्यम् । फलाद्यशनेनापि चान्द्रायणव्रतसंपत्तौ एकादश्यां भोजननिषेधवाक्यानामानन्त्येन बाधानौचित्यात् । इति दानहोमादिदैवकालनिर्णयः ।

## अथ व्रतस्वरूपादिनिर्णयः ।

एतावता प्रबन्धेन व्रतानुष्ठानोपयोगिनं कालं सामान्यतो निरूप्येदानीं प्राधान्येन प्रतिज्ञाविषयभूतं व्रतस्वरूपं तदुपयोगि च निरूप्यते । तत्र व्रतं नामाभियुक्तप्रसिद्धिविषयः संकल्पविशेषः । 'अभियुक्तप्रसिद्धिविषयमन्त्रवत् स्वकर्तव्यविषयो नियतः संकल्पो व्रतम्' इति श्रीदत्तः । तत्त्वाग्निहोत्रसंध्यावन्दनादिविषये संकल्पेऽतिप्रसक्तम् । न च संकल्पस्य व्रतत्वे व्रतं संकल्पयेदित्यनन्वय इति वाच्यम् । पाकं पचति, दानं दद्यात्, इतिवत्प्रत्ययानुग्रहार्थं प्रयो-

गोपपत्तेः । निरुक्ते तु—'व्रतमिति कर्मनाम, निवृत्तिकर्म वारयति' इति । व्रतप्रशंसा विष्णुधर्मोत्तरे—'व्रतोपवासैर्यैर्विष्णुर्नान्यजन्मनि तोषितः । ते नरा मुनिशार्दूल ग्रहरोगादिबाधिताः ।' स्कन्दपुराणे—'न पूजितो भूतपतिः पुरा यैर्व्रतं न चीर्णं न च सत्यमुक्तम् । दारिद्र्यशोकामयदुःखदग्धाः प्रायोऽत्र शोचन्ति त एव मर्त्याः ।' राज्यं श्रियं जगति साधुजनोपभोगं प्राप्नोति चापि शिवलोकमथामृतत्वम् । नानाप्यमास्ति भुवने सुदृढं व्रतानां तस्मात्सदा व्रतपरेण नरेण भाव्यम् ।' पाद्मपुराणे—'नाग्निचिन्नरकं याति न सत्पुत्री न सद्व्रती । नाश्वमेधादियाजी च गोसहस्रप्रदो न च ।' स्कान्दे—'नियमानां च दृश्यन्ते समृद्धाः फलसिद्धयः । यथा विनियमानां च घोरा व्यापत्तयोऽनघ ।' नियमो व्रतम् । तथा गौरीं प्रति शिववाक्यम् 'देवत्वं देवताः प्राप्ता नियमान्नियमान्विते । तारारूपा ज्वलन्त्येते नियमाद्वै तपोधने ।' वाराहपुराणे—'किंचिद्व्रतं वा क्रियते पूज्यते वा त्रिलोचनः । विप्रेभ्यो दीयते सर्वमेतज्जन्मतरोः फलम् ।'

## अथ व्रताधिकारिणः ।

स्कन्दपुराणे—'निजवर्णाश्रमाचारनिरतः शुद्धमानसः । अलुब्धः सत्यवादी च सर्वभूतहिते रतः । व्रतेष्वधिकृतो राजन्नन्यथा विफलःश्रमः । श्रद्धावान्पापभीरुश्च मदद‍म्भविवर्जितः।पूर्वं निश्चयमाश्रित्य यथावत्कर्मकारकः । अवेदनिन्दको धीमानधिकारी व्रतादिषु ।' निश्चयोऽनुष्ठेयस्य । निजवर्णाश्रमाचारेत्यनेन चतुर्णामपि वर्णानां व्रतादिष्वधिकारः। संकोचे मानाभावात् ।—'व्रतोपवासनियमैः शरीरोत्तापनं तपः'।इति देवलेन व्रतादेस्तपोहेतुत्वेनाभिधानात्।तपसश्च—'श्राद्धकर्म तपश्चैव सत्यमक्रोध एव च। स्वेषु दारेषु संतोषः शौचं नित्यानसूयता । आत्मज्ञानं तितिक्षा च धर्मः साधारणो नृप ।' इति महाभारते साधारणधर्मत्वश्रवणात् । 'शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति।वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना।' इति व्यासोक्तेः। 'शूद्रस्तूष्णीं जपन्मौनमास्ते भोगविवर्जितः'।इति विशेषविधानाच्च।'ब्राह्मणाः क्षत्रिया वैश्याःशूद्राश्चैव द्विजोत्तम।अर्चयन्ति महादेवं यज्ञदानशमादिभिः।व्रतोपवासनियमैर्होमस्वाध्यायतर्पणैः।तेषां वै रुद्रसायुज्यं सामीप्यं चातिदुर्लभम् । सालोक्यता च सारूप्यं जायते तत्प्रसादतः।' इति कूर्मपुराणाच्च । 'वैश्याः शूद्राश्च ये मोहादुपवासं प्रकुर्वते । त्रिरात्रं पञ्चरात्रं वा तयोर्व्युष्टिर्न विद्यते ।' इति भारते विशेषनिषेधाच्च । क्वचिन्म्लेच्छादी-

नामप्यधिकारः । 'वैश्यैः शूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्च मानवैः ।' इति नवरात्रप्रकरणे देवीपुराणेऽभिधानात् । स्वर्गकामादाविवाधिकारिविशेषणस्यलिङ्गस्याविवक्षितत्वात्स्त्रीणामप्यधिकारः । अत एव 'नरो वा यदि वा नारी' इत्यादि तत्र तत्राभिधानम् । यत्तु—'अनग्नयस्तु ये विप्रास्तेषां श्रेयो विधीयते । व्रतोपवासनियमैर्नानादानैस्तथा नृप ।' इति भविष्यत्पुराणवचनं तदनग्नीनामिष्टयाद्यनधिकाराद्व्रतादिभिरेव तेषां श्रेय इति प्रतिपादनार्थं न तु साग्न्यधिकारबाधार्थं दानेऽप्यनधिकारापत्तेः । निर्णयसिन्धौ तु—'अत्रानग्निग्रहणमुपवासविषयम् । अत एव देवलः—'आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः । अश्नन्त एव सिध्यन्ति तेषां सिद्धिरनश्नताम् । 'इति । एकादश्यादौ तु विशेषवचनेन तेषामप्युपवासेऽधिकारो वक्ष्यते । सभर्तृकस्त्रीणां तु भर्तुः पृथग्व्रते भर्त्रननुज्ञाताया नाधिकारः । 'नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् । ' इति मनुवचनात् । 'भर्तुः समानव्रतचारित्वम्' इति । विष्णुवचनाच्च । पत्यनुज्ञातायास्तु पृथगप्यधिकारः । यदाह व्यासः—'पत्नी पत्युरनुज्ञाता व्रतादिष्वधिकारिणी । ' इति । शंखलिखितावपि 'कामं भर्त्रनुज्ञाताया व्रतोपवासनियमेज्यादीनामभ्यासः स्त्रीधर्मः इति । अभ्यासः पुनः पुनरनुष्ठानम् । तथा आदित्यपुराणे—'पत्युरभ्यधिकं नारी नोपवासव्रतं चरेत् । अनायुष्यं द्विजश्रेष्ठ पत्युस्तस्यास्तदुच्यते । देवताराधनं कुर्य्यात्कामं वा ब्राह्मणोत्तम । नारी पतिव्रता नाम प्राप्तानुज्ञा तु भर्तृतः । नारी खल्वननुज्ञाता भर्त्रा वापि सुतेन वा । विफलं तद्भवेत्तस्या यत्करोत्यौर्ध्वदेहिकम् । 'इति । और्ध्वदेहिकं लोकान्तरोपयोगि व्रतादिकम् । कात्यायनोऽपि—'भार्या भर्तृमतेनैव व्रतादीनाचरेत्' इति । यत्तु स्कान्दे—'नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् । भर्तृशुश्रूषयैवैता लोकानिष्टान्व्रजन्ति हि । धर्मार्थकामसंसिद्धौ नारी भर्तुः सहायिनी । यद्देवेभ्यो यच्च पित्रादिकेभ्यः कुर्याद्भर्ताभ्यर्चनं सत्क्रियां च ॥ तस्यार्धं वै सा फलं नान्यचित्ता नारी भुङ्क्ते भर्तृशुश्रूषयैव । ' इति । तद्भर्त्रननुज्ञाविषयम् । एवं च 'पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत् । आयुः सा हरते भर्तुर्नरकं चैव गच्छति ।' इति विष्णूक्तः सामान्यत उपवासनिषेधोऽप्यननुज्ञातायाः पृथगुपवासविषयः । व्रतभेदा ब्रह्मपुराणे[1]—'अहिंसा सत्यमस्तेयं ब्रह्मचर्यमकल्मषम् । एतानि मानसान्याहुर्व्रतानि व्रतधारिणि । एकभक्तं तथा नक्तमुपवासादिकं च यत् । तत्सर्वं कायिकं पुंसां व्रतं भवति नान्यथा । 'क्वचित्त्रैविध्यमप्युक्तम् । 'कायिकं वाचिकं चैव मानसं त्रिविधं

१—'वराहपुराणे' इति खपुस्तके पाठः ।

स्मृतम्।यज्ञो दानं तपश्चैव वदतस्तच्छृणुष्व मे।अहिंसाव्रतचर्यं च तपः कायिकमुच्यते। वाचिकं सत्यवचनं भूतद्रोहविसर्जनम् । मानसं मनसः शान्तिः सर्वं वैराग्यलक्षणम् ।' अथाधिकारिधर्माः ।

भविष्यपुराणे—'क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः देवपूजाऽग्निहवनं संतोषः स्तेयवर्जनम् । सर्वव्रतेष्वयं धर्मः सामान्यो दशधा स्थितः ।' शौचं पाखण्डादिसंसर्गवर्जनं स्नानाचमनादि च । इन्द्रियनिग्रहः अवलोकनादिवर्जनम् । देवलः—'ब्रह्मचर्यमहिंसा च सत्यमामिषवर्जनम् । व्रतेष्वेतानि चत्वारि चरितव्यानि नित्यशः ।' ब्रह्मचर्यम्—'स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । संकल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च । एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।' इति दक्षोक्ताष्टविधमैथुनत्यागः । देवलः—'स्त्रीणां तु प्रेक्षणात्स्पर्शात्ताभिः संकथनादपि । विपद्यते ब्रह्मचर्यं न दारेष्वृतुसंगमात् ।' इति । स्वदारेष्विति पाठो निर्णयामृते । ऋतुशब्देनात्र षोडशनिशाया अर्वाचीनः सावकाशः कालो विवक्षित इति च तत्र व्याख्यातम् । परस्त्रीणामपि मात्रादितुल्यदर्शने न दोषः । निषेधस्तु सरागप्रेक्षणादिविषयः । षोडशदिनात्मक ऋतुकालः तत्र सर्वथाऽसंभवे व्रतदिने ऋतुदैयस्तत्र सरागप्रेक्षणेऽपि न दोषः।निर्णयामृते कात्यायनः—'रेतःसेकात्मकं भोगमृतेऽन्यत्र क्षयः स्मृतः ।' इति । अतः स्वदाराणां स्पर्शनादिभिरपि ब्रह्मचर्यभङ्गो नास्तीति तत्सिद्धान्तः । आमिषं मांसम् । तथा 'आमिषं दृतिपानीयं गोवर्जं क्षीरमामिषम् । मसूरमामिषं सस्ये फलं जम्बीरमामिषम् । आमिषं शुक्तिकाचूर्णमारनालं तथामिषम् ।' इति । पृथ्वीचन्द्रोदये अग्निपुराणे—'नित्यस्नायी जिताहारो गुरुदेवद्विजार्चकः । क्षारं क्षौद्रं च लवणं मधु मांसानि वर्जयेत् ।' क्षारास्तु तत्रैवोक्ताः—'तिलमुद्गादृते शिम्ब्यं सस्ये गोधूमकोद्रवौ । धान्यकं देवधान्यं च शमीधान्यं तथैक्षवम् । स्विन्नधान्यं तथा पण्यं मूलं क्षारगणः स्मृतः' । गोधूमानां तु तत्रैव प्रतिप्रसवः मदनरत्नेऽग्निपुराणे—'व्रीहिषष्टिकमुद्गाश्च कलायाः सतिलं पयः । श्यामाकाश्चैव नीवारा गोधूमाद्या व्रते हिताः । कूष्माण्डालाबुवार्ताकपालङ्कीज्योत्स्निकास्त्यजेत् । चरुभैक्ष्यं सक्तुगणाः शाकं दधि घृतं पयः । श्यामाकाः शालिनीवारा यावकं मूलतण्डुलम् । हविष्यव्रतनक्तादावग्निकार्यादिके हितम् । मधु मांसं विहायान्यद्व्रते वा हितमीरितम् ।' इति । शमीधान्यं माषादि । पालङ्की मध्यदेशे 'पोई' इति प्रसिद्धा । ज्योत्स्निका कोशातकी । मिताक्षरायां गौतमः—'चरुभैक्ष्यसक्तुकणयावकशाकपयोदधिघृतमूलफलादीनि हवींष्युत्तरोत्तरं प्रशस्तानि । पयो दधि घृतं

गव्यम्' इति । मदनरत्ने छन्दोगपरिशिष्टे-'हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः। माषकोद्रवगौरादीन्सर्वाभावेऽपि वर्जयेत् ।' भविष्योत्तरे-'हैमन्तिकसितास्विन्नं धान्यं मुद्गा यवास्तिलाः । कलायकङ्गुनीवारा वास्तुकं हिलमोचिका: । षष्टिका कालशाकं च मूलकं केमुकेतरत् । कन्दं सैन्धवसामुद्रे गव्ये च दधिसर्पिषी । पयोऽनुद्धृतसारं च पनसाम्रहरीतकी । पिप्पली जीरकं चैव नागरिंगं च तिन्तिणी । कदलीलवलीधात्रीफलान्यगुडमैक्षवम् । अतैलपक्कं मुनयो हविष्याणि प्रचक्षते ।' इति । अगस्त्यसंहितायाम्-हेमन्ताद्युक्त्वा 'नारिकेलफलं चैव कदली लवली तथा। आम्रमामलकं चैव पनसं च हरीतकी । व्रतान्तरप्रशस्तं च हविष्यं मन्वते बुधाः ।' सितं च अस्विन्नं चेति विग्रहः । कलायो द्विविधः । त्र्यस्रो वर्तुलश्च । 'लांक वाटाणे' इति महाराष्ट्रभाषायां प्रसिद्धः । कुलत्थ इति स्मृतिकौस्तुभे। हिलमोचिका गौडेषु 'हिलास' इति प्रसिद्धः । पत्रशाकः कालशाकः पर्वतदेशे प्रसिद्धः । केमुकं गौडेषु 'केंवुक' इति प्रसिद्धं मूलकम् । लवली राजामलकीति केचित्। लवलीस्थाने दाडिमीति क्वचित्पाठः । अतैलपक्वमित्युक्तहविष्याणां विशेषणम् । 'सर्वभूतभयं व्याधिः प्रमादो गुरुशासनम् । अव्रतघ्नानि पठ्यन्ते सकृदेतानि शास्त्रतः ।' सर्वभूतभयं व्याघ्रादिसत्त्वेभ्यो भूतेभ्यो भयम् । व्याधिः प्रतिबन्धक्षमः । प्रमादो विस्मरणम् । गुरुशासनं गुरोराज्ञा । सकृदित्यभिधानादेष्वपि निमित्तेषु पुनः पुनस्त्यागे दोष एव । ब्रह्मपुराणे-'व्रतस्थः प्राणरक्षार्थं कदाचिदुदकं पिबेत्। फलमूले यवाः क्षीरं यज्ञशिष्टं तथा हविः । व्रतमध्ये च रोगार्तो वैद्यप्रोक्तमथौषधम् । करोति च गुरोर्वाक्यं व्रतस्थस्तत्क्षणादपि । ब्राह्मणस्याभिलषितं साधयेदविचारयन् । एतान्यष्टौ व्रतस्थानां न व्रतघ्नानि कुत्रचित्॥"पद्मपुराणे-'अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः।हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ।' पयःपानादीनामव्रतघ्नत्वं स्त्रीबालाद्यत्यन्तपीडितविषयम् । अन्येऽपि धर्मा हरिवंशे प्रदर्शिताः-'अशल्यविद्धं शयनमासनं च तथाविधम् । स्वयं प्रक्षालनं चापि पादयोरनुशब्दितम्।'अनुशब्दितं व्रतोपयोगितया कथितम्।'अश्रुप्रपातो रोषश्च कलहस्य कृतिस्तथा । उपवासाद्व्रताद्वापि सद्यो भ्रंशयति स्त्रियम्' । स्त्रियमित्युपलक्षणम् 'शुक्लमेव सदा वासः प्रशस्तं चन्द्रसंभवे । अन्तर्वासोऽपरं चैव उपवासे व्रते तथा ।' वसिष्ठः-'जपहोमोपवासेषु धौतवस्त्रधरो भवेत् । अलंकृतः शुचिर्मौनी श्रद्धावान्विजितेन्द्रियः ।' बौधायनः-'काषायवासाः कुरुते जपहोमपरिग्रहम् । सर्वं तद्राक्षसं विद्याद्दैवे पित्र्ये च वर्जयेत्' । याज्ञवल्क्यः-'परिधानाद्बहिः

कक्षा निबद्धा ह्यासुरी भवेत् । धर्मकर्मणि विद्वद्भिर्वर्जनीया प्रयत्नतः ।' बहिः कक्षा बहिर्निर्गतेत्यर्थः । 'गोयानमुष्ट्रयानं च कथंचिदपि नाचरेत् । खरयानं च सततं व्रते चाप्युपसंकरम् ।' इति । उपसंकरोऽस्पृश्यस्पर्शः । विष्णुधर्मे—'सर्वेषु तूपवासेषु पुमान्वाऽथ सुवासिनी । धारयेद्रक्तवस्त्राणि कुसुमानि सितानि च ।' एतच्च मङ्गलादिव्रतविषयम् । 'पादुकार्थस्तृणैः कार्यः सर्वदा व्रतके सति । उपवासे व्रते चापि विधिरेष प्रकीर्तितः । अञ्जनं रोचनं चापि गन्धान्सुमनसस्तथा । व्रतके चोपवासे च नित्यमेव विवर्जयेत् ।' रोचनं कुङ्कुमादिना मुखोज्ज्वलीकरणम् । दन्तकाष्ठं शिरःस्नानमुद्वर्तनमथापि वा । विवर्जितं मृदा सर्वं शौचार्थं तु विधीयते । तिलामलफलैर्नित्यं श्रीफलैश्च विधीयते। प्रक्षालनं तु शिरसः सदा मृन्मिश्रितैर्जलैः । शिरसोऽभ्यञ्जनं सौम्ये नैवमत्र प्रशस्यते । न पादयोर्न गात्रस्य स्नेहेनेति स्थितिः स्मृता ।' इति । अत्र गन्धादिवर्जनाभिधानं पुण्यकव्रतविषयम् । व्रतान्तरे तु सभर्तृकाया न दोषः । 'दन्तधावनपुष्पादि व्रतेऽप्यस्या न दुष्यति ।' इति व्यासवचनात् । 'अञ्जनं च सताम्बूलं सिन्दूरं रक्तवाससी । बिभ्रियात्सोपवासापि अवैधव्यकरं परम् ।' इति भविष्यपुराणाच्च । 'गन्धालंकारवस्त्राणि पुष्पमालाऽनुलेपनम् । उपवासे न दुष्यन्ति दन्तधावनमञ्जनम् ।' इति वृद्धशातातपवचनाच्च । गन्धः सौरभम् । अनुलेपनस्य पृथगुपादानात् । 'उपवासे तथा श्राद्धे न खादेद्दन्तधावनम् । दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम् ।' अनेन काष्ठेन दन्तधावनं निषिद्धं न तु मृल्लोष्ठपत्रादिना । पैठीनसिः—'अलाभे वा निषिद्धे वा काष्ठानां दन्तधावने । पर्णादिना विशुद्धेन जिह्वोल्लेखः सदैव च ।' इति । व्यासः—'अलाभे दन्तकाष्ठानां निषिद्धायां तिथौ तथा । अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् ।' स्मृत्यर्थसारे तु—'पर्णोदकेनाङ्गुल्या वा दन्तान्धावयेत्प्रदेशिनीवर्जम् । मध्यमानामिकाङ्गुष्ठैर्दन्तदार्ढ्यं भवत्यपि ।' दन्तधावने प्रायश्चित्तमुक्तं विष्णुधर्मोत्तरे—'श्राद्धोपवासदिवसे खादित्वा दन्तधावनम् । गायत्र्याः शतशः पूतमम्बु प्राश्य विशुध्यति ।' इति । कौर्मे—'बहिर्ग्रामान्त्यजान्सूतिं पतितं च रजस्वलाम् । न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे ।' उपवासस्वरूपं विष्णुधर्मोत्तरे—'उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह । उपवासः स विज्ञेयः सर्वभोगविवर्जितः ।' निषिद्धानि सुमन्तुराह—'विहितस्याननुष्ठानमिन्द्रियाणामनुग्रहः । निषिद्धसेवनं जैह्मं वर्जनीयं प्रयत्नतः ।' हारीतः—'पतितपाखण्डिनास्तिकादिसंभाषणमनृतलीलादिकमुपवासदिने वर्जयेत्' इति।विष्णुपुराणेऽपि-'तस्मात्पाखण्डिभिःपापैरालापःस्पर्शनंत्य-

जेत्। विशेषतः क्रियाकाले यज्ञादौ चापि दीक्षितः।' इति। पाखण्डादिस्पर्शनविषये प्रायश्चित्तमपि विष्णुपुराण एवोक्तम्। यथा–'स्पर्शने च नरः स्नात्वा शुचिरादित्यदर्शनात्। संभाष्य ताञ्छुचिपदं चिन्तयेदच्युतं बुधः। तेषामालोकनात्सूर्यं पश्येत मतिमान्नृपः।' शुचिपदं शुचिप्रदम्। विष्णुधर्मोत्तरे–'असंभाष्यं समाभाष्य तुलस्यतसिकादलम्। आमलक्याः फलं वापि पारणे प्राश्य शुध्यति।' इति। गुणैः सह वास इत्युक्तम्। तत्र गुणा विष्णुधर्मोत्तरे उक्ताः। यथा–'तज्जप्यजपनं ध्यानं तत्कथाश्रवणादिकम्। तदर्चनं च तन्नामकीर्तनश्रवणादयः। उपवासकृतामेते गुणाः प्रोक्ता महर्षिभिः।' इति। तच्छब्देनात्र प्रोक्तत्वाद्विष्णुरेवोच्यते। उपवासकृतां नियमा उच्यंते–उपवासव्रती दन्तधावनं हिंसनमनृतं द्यूतं चौर्यमसकृज्जलपानं सकृत्ताम्बूलभक्षणं स्त्रीसंयोगं दिवास्वापं मांसं च वर्जयेत्। विष्णुधर्मोत्तरे–'असकृज्जलपानं च दिवा स्वापं च मैथुनम्। ताम्बूलचर्वणं मांसं वर्जयेद्व्रतवासरे।' इति। यत्तु कैश्चिदुक्तम्। मांसनिषेधः पारणादिने। 'पारणान्तं व्रतं ज्ञेयम्' इत्युक्तेः। न तु प्रधानदिने प्रसक्त्यभावात् इति। तन्न। ताम्बूलमांसभक्षणनिषेधस्यैकवाक्योपात्तत्वाद्व्रतदिन एव न्याय्यत्वात् रागप्रसक्तेः सत्त्वात् 'वर्जयेत्पारणे मांसम्' इति पारणादिने पृथङ्निषेधस्य वैयर्थ्यापत्तेश्च। 'ताम्बूलभक्षणे स्त्रीसंभोगे मांसनिषेवणे। व्रतलोपो भवेत्कुर्यात्कृष्णावद्धुजिवर्जनम्।' इति निर्णयामृतधृतव्रतलोपप्रायश्चित्तप्रकरणपठितपैठीनसिवाक्ये ताम्बूलभक्षणादावेकप्रायश्चित्ताम्नानाच्च। अशक्तौ तु स एव–'अत्यये चाम्बुपाने च नोपवासः प्रणश्यति।' अत्यये प्राणात्यये। हेमाद्रौ–'प्रवृत्तमन्यथा कुर्याद्यदि मोहात्कथंचन। यतस्तदन्यथाभूतं तत एव समापयेत्।' प्रवृत्तमारब्धम्। अन्यथाभूतं क्रमाद्यन्यत्वेन यद्वैपरीत्यमापन्नं 'समाप्ते यदि जानीयान्मयैतदन्यथा कृतम्। तावदेव पुनः कुर्यान्नावृत्तिं सर्वकर्मणः।' एतत्तु कर्मसमाप्तावन्यथाकरणज्ञानविषयम्। 'प्रधानस्याक्रिया यत्र साङ्गं तत्क्रियते पुनः। तदङ्गस्याक्रियायां तु नावृत्तिर्न च तत्क्रिया।' यत्र प्रधानस्य कर्मणोऽकरणं तत्र साङ्गमेव पुनः कर्तव्यम्। तदङ्गाकरणे तु साङ्गप्रधानावृत्तिर्नापि तावन्मात्रस्याङ्गस्य करणं किं तु प्रायश्चित्तमेव कार्यम्। वायुपुराणे–'क्रियां यः कुरुते मोहादनाचम्येह नास्तिकः। भवन्ति तु क्रियास्तस्य वृथा सर्वा न संशयः।' आचमननिमित्तान्याह यमः–'उत्तीर्योदकमाचामेदवतीर्य तथैव च।' इति। बृहस्पतिः–'अधोवायुसमुत्सर्गे आक्रन्दे क्रोधसंभवे। मार्जारमूषकस्पर्शे प्रहासेऽनृतभाषणे। निमित्तेष्वेषु सर्वेषु कर्म कुर्वन्नपः स्पृशेत्।' इति। अथ द्विराचमननिमित्तानि याज्ञ-

वल्क्यः—'स्नात्वा पीत्वा क्षुते सुप्त भुक्त्वा रथ्योपसर्पणे । आचान्तः पुनराचामेद्वासो विपरिधाय च ।' इति।आचमनासंभवे तु 'कुर्वीतालम्भनं वापि दक्षिणश्रवणस्य तु ।' इति मार्कण्डेयोक्तं दक्षिणकर्णालम्भनं बोध्यम् । अथ हस्ततीर्थानि।हेमाद्रौ हारीतः—'अङ्गुष्ठस्योत्तरतो ब्राह्मं तीर्थम्, कनिष्ठिकायाः पश्चात्प्राजापत्यम्, अग्रेऽङ्गुलीनां दैवम् अङ्गुष्ठप्रदेशिन्योरन्तरा पित्र्यम्, मध्ये आग्नेयम् । प्रतिग्रहमाग्नेयेन प्रतिगृह्णीयात् ।' छागलेयः—'हस्तमध्ये वह्नितीर्थं दक्षिणाग्रहणे तु तत्।'ब्रह्मपुराणे—'मूलरेखा मुखाङ्गुष्ठमणिबन्धेषु मध्यमम् । प्राजापत्यं महातीर्थं विप्रस्तेनाचमेत्सदा। धनायुर्दाररेखा तु सोमतीर्थं तु मध्यमम् । लाजादिहवनं तेन कर्तव्यं वपनं तथा ।' वपनं व्रीह्यादिनिर्वापः । दधिप्राशनं सोमतीर्थेन कर्तव्यम् । वासिष्ठः—'स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि । पवित्राणां तथा जप्ये दाने च विधिनोदिते ।' शात्यायनः—'स्नानमाचमनं होमं भोजनं देवतार्चनम् । प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम् । आसनारूढपादस्तु जान्वोर्वा जङ्घयोस्तथा । कृतावसिक्थको यश्च प्रौढपादः स उच्यते ।'आपस्तम्बः—'तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः । प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् । त्रिमात्रस्तु प्रयोक्तव्यः कर्मारम्भेषु सर्वशः । तिस्रः सार्धास्तु कर्तव्या मात्रास्तत्त्वार्थचिन्तकैः ।' यमः—'पुण्याहवाचनं दैवे ब्राह्मणस्य विधीयते । एतदेव निरोङ्कारं कुर्यात्क्षत्रियवैश्ययोः ।' मार्कण्डेयपुराणे—'सूर्योदयं विना नैव स्नानदानादिकाः क्रियाः । अग्नेर्विहरणं चैव कृत्वभावश्च लक्ष्यते । 'सूर्योदयशब्देनोषःकालो लक्ष्यते । तेन न रात्रौ कुर्यादिति तात्पर्यम् । दक्षः—'देवकार्याणि पूर्वाह्णे मनुष्याणां तु मध्यमे । पितॄणामपराह्णे च कार्याणीति विनिश्चयः' । अङ्गिराः—'संध्ययोरुभयोर्जप्ये भोजने दन्तधावने । पितृकार्ये च दैवे च तथा मूत्रपुरीषयोः । गुरूणां सन्निधौ दाने योगे चैव विशेषतः । एष मौनं समातिष्ठन्स्वर्गं प्राप्नोति मानवः।' व्रताङ्गलोपप्रायश्चित्तानि तु एकादशीप्रकरणे वक्ष्यन्ते । गृहीतव्रतत्यागे दोष उक्तो मदनरत्ने छागलेयेन—'पूर्वं व्रतं गृहीत्वा यो नाचरेत्काममोहितः । जीवन्भवति चाण्डालो मृतः श्वा चाऽभिजायते । 'तत्त्यागे प्रायश्चित्तमप्युक्तं पृथ्वीचन्द्रोदये गारुडे—'क्रोधात्प्रमादाल्लोभाद्वा व्रतभङ्गो भवेद्यदि । दिनत्रयं न भुञ्जीत मुण्डनं शिरसोऽथ वा ।' प्रायश्चित्तानन्तरमुपक्रान्तानुष्ठानं कार्यम् । 'प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेत् ।' इति वायुपुराणोक्तेः । अन्योऽपि विशेषस्तत्रैव—'दानं प्रतिग्रहो होमो भोजनं बलिरेव च । साङ्गुष्ठेन सदा कार्यमसुरेभ्योऽन्यथा भवेत् । एतान्येव च कार्या-

णि दानादीनि विशेषतः । अन्तर्जानु विधेयानि तद्वदाचमनं नृप ।' याज्ञवल्क्यः—'शैवपैत्र्यासुरान्मन्त्रांस्तथा चैवाभिचारकान् । व्याहृत्यालभ्य चात्मानमुपस्पृश्यान्यदाचरेत् ।' स्त्रीव्रते विशेषो हरिवंशे—'स्नात्वा स्त्री प्रातरुत्थाय पतिं विज्ञापयेत्सती । गृहीत्वौदुम्बरं पात्रं सकुशं साक्षतं तथा । गोशृङ्गे दक्षिणं सिच्य प्रगृह्णीयाच्च तज्जलम् ।' औदुम्बरं ताम्रमयम् । 'ततो भर्तुः सती दद्यात्स्नातस्य प्रयतस्य च । आत्मनश्चाभिषेक्तव्यं भर्तुः शिरसि तज्जलम् ।। त्रैलोक्ये सर्वतीर्थेषु स्नानमेतदुदाहृतम् । उपवासेषु कर्तव्यमेतद्धि व्रतकेषु च ।' इति । सर्वव्रतेषु संकल्पविधिर्भारते—'गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः । उपवासं तु गृह्णीयाद्यथा संकल्पयेद्बुधः ।' देवलः—'अभुक्त्वा प्रातराहारं स्नात्वाचम्य समाहितः । सूर्याय देवताभ्यश्च निवेद्य व्रतमाचरेत् ।' अत्र प्रातर्व्रतमाचरेदिति संबन्धः । प्रधानक्रियान्वयस्याभ्यर्हितत्वादिति वीरमित्रः । 'व्रतं निशामुखे ग्राह्यं बहिस्तारकदर्शनात् ।' इति प्रकरणात्प्रायश्चित्तविषयम् । अन्यव्रतेष्वपि यत्र पूर्वदिने व्रतग्रहणं श्रूयते तत्र पूर्वदिन एव व्रतग्रहणम् ।

## अथ व्रतारम्भकालनिर्णयः ।

मदनरत्ने गार्ग्यः—'अस्तगे च गुरौ शुक्रे बाले वृद्धे मलिम्लुचे । उद्यापनमुपारम्भं व्रतानां नैव कारयेत् ।' रत्नमालायाम्—' सोमसौम्यगुरुशुक्रवासराः सर्वकर्मसु भवन्ति सिद्धिदाः । भानुभौमशनिवासरेषु च प्रोक्तमेव खलु कर्म सिध्यति ।' तथा 'विरुद्धसंज्ञा इह ये च योगास्तेषामनिष्टः खलु पाद आद्यः । सवैधृतिस्तु व्यतिपातनामा सर्वोऽप्यनिष्टः परिघस्य चार्धम् । तिस्रस्तु योगे प्रथमे सवज्रे व्याघातसंज्ञे नवपञ्च शूले । गण्डेऽतिगण्डे च षडेव नाड्यः शुभेषु कार्येषु च वर्जनीयाः ।' संग्रहे—'कृष्णेऽग्निदिशयोरूर्द्ध्वं सप्तमीभूतयोरधः । शुक्ले वैश्वेशयोरूर्द्ध्वं भद्रा प्राग्वसुपूर्णयोः ।' श्रीपतिः—'न सिद्धिमायाति कृतं च विष्ट्यां विषारिघातादिकमत्र सिद्धम् ।' व्यवहारसमुच्चये—'दशम्यामष्टम्यां प्रथमघटिकापञ्चकपरं हरिघ्नः सप्तम्यां द्विदशघटिकान्ते त्रिघटिकम् । तृतीयाराकायां खयमघटिकाभ्यः परभवं शुभं विष्टेः पुच्छं शिवतिथिचतुर्थ्योस्तु विरमे ।' तत्रैव—'सर्पिणीतु सिते पक्षे कृष्णे चैव तु वृश्चिकी । सार्पिण्यास्तु मुखं त्याज्यं वृश्चिक्याः पुच्छमेव च ।' माधवीये—'वृष्टिर्यदाऽहनि तिथेरपरार्धजाता पूर्वार्धजा निशि तथा शुभदा च पुच्छे ।' ब्रह्मयामले—'दिने भद्रा यदा रात्रौ रात्रिभद्रा यदा दिवा । न त्याज्या शुभकार्येषु प्राहुरेवं पुरातनाः ।' टोडरानन्दे देवीपुराणे—'व्रते च तीर्थेऽध्ययने श्राद्धेपि च विशेषतः । परान्नभोजनाद्देवि यस्यान्नं तस्य तत्फलम् ।' प्रतिमास्वरूपं मदनरत्ने भविष्ये—'अनुक्तद्रव्यतत्संख्या देवताप्रतिमा नृप । सौवर्णी

राजती ताम्री वृक्षजा मार्तिकी तथा। चित्रजा पिष्टलेखोत्था निजवित्तानुरूपतः। आमाषात्पलपर्यन्तं कर्तव्या शाठ्यवर्जितैः।' तत्रैव ब्राह्मे—'आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते। मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः।' व्रतोद्यापनानुक्तौ तु पृथ्वीचन्द्रोदये नन्दिपुराणे—'कुर्यादुद्यापनं तस्य समाप्तौ यदुदीरितम्। उद्यापनं विना यत्तु तद्व्रतं निष्फलं भवेत्। यदि चोद्यापनं नोक्तं व्रतानुगुणतश्चरेत्। वित्तानुसारतो दद्यादनुक्तोद्यापने व्रते। गाश्चैव काञ्चनं दद्याद्व्रतस्य परिपूर्तये।' अशक्तौ तु नारदीये—'सर्वेषामप्यलाभे तु यथोक्तकरणं विना। विप्रवाक्यं स्मृतं शुद्धं व्रतस्य परिपूर्तये। वृथा विप्रवचो यस्तु गृह्णाति मनुजः शुभम्। अदत्वा दक्षिणां पापः स याति नरकं ध्रुवम्।'

## अथ व्रतोद्रव्यनिर्णयः।

अथ दानविभागः॥ हेमाद्रौ अङ्गिराः—'बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः। विभक्तिदक्षिणा ह्येता दातारं पातयन्ति हि। एका एकस्य दातव्या न बहुभ्यः कथंचन।' सा तु विक्रयमापन्ना दहत्यासप्तमं कुलम्।' विक्रेतुरेव तद्दोषप्रदर्शनं न दातुरिति। कात्यायनोऽपि—'कन्या शय्या गृहं चैव देयं यच्चास्त्रियादिकम्। तदेकस्मै प्रदातव्यं न बहुभ्यः कथंचन।' इति। बैजवापः—'शिवनेत्रोद्भवं यस्माद्रजतं पितृवल्लभम्। अमङ्गलं तद्यत्नेन देवकार्येषु वर्जयेत्।' कलशलक्षणं तद्देवताश्च दर्शिता देवीपुराणे—'पञ्चाशांगुलवैपुल्यमुत्सेधः षोडशाङ्गुलः। कलशानां प्रमाणं तु मुख्यमष्टाङ्गुलं भवेत्।' इति। तथा—'पूर्णाः पूतेन तोयेन सितास्त्वेकान्ततोज्ज्वलाः। सरित्सरःखातजेन ताडागेन जलेन वा। वापीकूपोढदिव्येन सामुद्रेण सुखावहाः। सर्वमङ्गलमाङ्गल्याः सर्वकिल्बिषनाशनाः। अभिषेके सदा ग्राह्याः कलशाः सुदृढाः शुभा। यात्राविवाहादिकाले प्रतिष्ठा यज्ञकर्मणि। योजनीया विशेषेण सर्वकामप्रसाधकाः।' तथा—'कलशस्य मुखे ब्रह्मा ग्रीवायां च महेश्वरः। मूले च संस्थितो विष्णुर्मध्ये मातृगणाः स्मृताः। शेषास्तु देवताःसर्वा वेष्टयन्ति चतुर्दिशम्। पृथिव्यां यानि तीर्थानि कलशे निवसन्ति हि। ग्रहाः शान्तिश्च पुष्टिश्च तुष्टिश्च मतिरेव च। ऋग्वेदश्च यजुर्वेदः सामवेदस्तथैव च। अथर्ववेदसहिताः सर्वे कलशसंस्थिताः।' इति। अथ पञ्च पल्लवाः। ब्रह्माण्डपुराणे—'अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोधपल्लवाः।' अथ पञ्च रत्नानि। कालिकापुराणे—'कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम्। एतानि पञ्च रत्नानि शास्त्रे दृष्टानि सूरिभिः।' कुलिशं हीरः। आदित्यपुराणे—

'सुवर्णं रजतं मुक्ता राजावर्तः प्रवालकम् । रत्नपञ्चकमाख्यातम्' इति । 'अभावे सर्वरत्नानां हेम सर्वत्र योजयेत् ।' तथा—'कनकं मौक्तिकं चैव माणिक्यं वज्रमेव च । तथा मरकतं चैव महारत्नानि पञ्चधा ।' अथ नवरत्नानि । विष्णुधर्मोत्तरे—'मुक्ताफलं हिरण्यं च वैडूर्यं पद्मरागकम् । पुष्परागं च गोमेदं नीलं गारुत्मतं तथा । प्रवालमुक्तान्युक्तानि महारत्नानि वै नव ।' मदनरत्ने तु हिरण्यस्थाने हीरकमिति पाठान्तरम् । अथ सौभाग्याष्टकं मत्स्यपुराणे—'इक्षवस्तरुराजं च निष्पावा राजिधान्यकम् । विकारवच्च गोक्षीरं कुसुम्भकुसुमं तथा । लवणं चाष्टमं तत्र सौभाग्याष्टकमुच्यते ।' मिताक्षरायां पराशरः—'गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । पञ्चगव्यमिति प्रोक्तं पवित्रं कायशोधनम्। गोमूत्रं ताम्रवर्णायाः श्वेतायास्त्वथ गोमयम्। पयः काञ्चनवर्णाया नीलायास्त्वथ वै दधि । घृतं वै कृष्णवर्णायाः सर्वं कापिलमेव वा । अलाभे सर्ववर्णानां पञ्चगव्येष्वयं विधिः । गोमूत्रं माषकास्त्वष्टौ गोमयस्य तु षोडश । क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश कीर्तिताः।गोमूत्रवद्घृतस्याष्टौ तदर्धं तु कुशोदकम् ।' इति । नृसिंहपुराणे—'गोशकृद्द्विगुणं मूत्रं सर्पिर्दद्याच्चतुर्गुणम् । क्षीरमष्टगुणं प्रोक्तं पञ्चगव्ये तथा दधि ।' वीरमित्रोदये स्कान्दे—'ताम्रारुणश्वेतकृष्णनीलानामाहरेद्गवाम् । गोमूत्रगोमयक्षीरदधिसर्पींषि च क्रमात् । विष्णुवह्नीन्दुवाय्वर्कदेवतानि यथाक्रमम् । विद्ध्येतानि कुशोदं च पितृराजाधिदैवतम् । प्रोक्ताभावे त्वथैतानि कपिलायाः प्रकल्पयेत्।गोमूत्रभागस्तस्यार्धं शकृत्क्षीरस्य च त्रयम्। द्वयं दध्नो घृतस्यैकमेकश्च कुशवारिणः।गायत्र्या चैव गोमूत्रं गन्धद्वारेति गोमयम् । आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि।तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम्।एभिस्तु पञ्चभिर्युक्तैः पञ्चगव्यं प्रचक्षते । एतदेव महापुण्यं ब्रह्मकूर्चमिति स्मृतम् ।' अथ सप्तधान्यानि—'यवगोधूमधान्यानि तिलाः कङ्गुस्तथैव च । श्यामाकं देवधान्यं च सप्तधान्यमुदाहृतम् ।' इति । भविष्यपुराणे—'सुवर्णं रजतं ताम्रमारकूटं तथैव च । लोहं त्रपु तथा सीसं धातवः सप्त कीर्तिताः ।' तथा । 'आपः क्षीरं कुशाग्राणि दध्यक्षततिलास्तथा । यवाः सिद्धार्थकाश्चैवमष्टाङ्गोऽर्घः प्रकीर्तितः ।' सर्वधातुगणो मत्स्यपुराणे—'तालकं च शिला वज्रमञ्जनं श्याममेव च । काक्षी कांसीसमाक्षीकं गैरिकं चादितः क्रमात् । तालकं हरितालं शिला मनःशिला । वज्रं वज्राभ्रकम् 'अप्रस्तरं कठोराङ्गं गुरुकज्जलसंनिभम्।यन्न शब्दायते वन्हौ नैवोद्धूनं भवेदपि । सदाकरसमुद्भूतं वज्रेति प्रथितं घनम् ।' इति वैद्यकात्। श्याममञ्जनम्। काक्षी सौराष्ट्रमृत्तिका कांसीसमाक्षीकं सुवर्ण

माक्षीकम् । मत्स्यपुराणे-‘गजाश्वरथ्यावल्मीकसंगमाद्ध्रदगोकुलात् । राजद्वारप्रवेशाच्च मृदमानीय निःक्षिपेत् । ’ चत्वरेति पाठः । छन्दोगपरिशिष्टे—‘कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचन्दनम् । वचा चम्पकमुस्ता च सर्वौषध्यो दश स्मृताः । ’सर्वबीजानि देवीपुराणे—‘यवगोधूममुद्गाश्च शालिः षाष्टिकमाढकम् । तिला माषा प्रसाती च श्यामाका शवबालकाः । ’ आढकमाढकीफलम् । दाक्षिणात्यभाषायां “तुरीय” इति प्रसिद्धम् । प्रसाती नीवारः आसवमाशुधान्यफलम् बालकः कङ्गुः । कात्यायनः—‘आज्यं क्षीरं मधु तथा मधुरत्रयमुच्यते । ’ गरुडपुराणे—‘कर्पूरमगुरुश्चैव कस्तूरी चन्दनं तथा । कङ्कोलं च भेवेदोभः पञ्चभिर्यक्षकर्दमः । ’ गृह्यपरिशिष्टे—‘कर्पूरं चन्दनं दर्पः कुङ्कुमं च चतुः समम् । सर्वगन्धमिति प्रोक्तं समस्तसुरवल्लभम् । ’ भविष्यपुराणे—‘अगुरुः सिल्हकं मुस्ता चन्दनं वृषणं तथा । समभागं च कर्तव्यं धूपोऽयममृताह्वयः । ’ तथा—‘कर्पूरं चन्दनं मांसी त्वक्पत्रैलालवङ्गकम् । अगुरुं सिल्हकं धूपं प्राजापत्यं प्रचक्षते । ’सिह्लकं शिलारस इति निघण्टुः । ‘षड्भागकुष्ठं द्विगुणो गुडश्च लाक्षात्रयं पञ्च नखस्य भागाः । हरीतकी सर्जरसः समांसी भागैकमेकं त्रिलवं शिलाजम् । घनस्य चत्वारि पुरस्य चैको धूपो दशाङ्गः कथितो मुनीन्द्रैः । ’

## अथ व्रते सूतकादिनिर्णयः ।

तत्र शावसूत्याशौचयोः सर्वस्मार्तकर्मनिवृत्तिः । ‘सूतके च समुत्पन्ने ज्वरकर्मणि मैथुने । धूम्रोद्गारे तथा वान्तौ नित्यकर्माणि संत्यजेत् । द्रवे भुक्ते त्वजीर्णे च नैव भुक्त्वाऽपि किंचन । कर्म कुर्यान्नरो नित्यं सूतके मृतके तथा । ’ इति कालिकापुराणात् । गौडास्तु—क्षताशौचादावपि तामाहुः । ‘जानूर्ध्वे तु क्षते जाते नित्यकर्म न चाचरेत् । नैमित्तिकं च तदधः स्रवद्रक्तो न चाचरेत्।’ इति । हेमाद्रौ पाद्मे—‘गर्भिणी सूतिकादिश्च कुमारी वाप्यरोगिणी । यदा शुद्धा तदान्येन कारयेत्प्रयता स्वयम् । ’ इति । पुंसोऽप्येष विधिः । लिङ्गस्याविवक्षितत्वात् । तेन यस्मिन्व्रते यत्पूजाद्युक्तं तदन्येन कारयेत् । शरीरनियमान्स्वयं कुर्यादिति । शुद्धितत्त्वे विष्णुः—‘बहुकालिकसंकल्पो गृहीतश्च पुरा यदि । सूतके मृतके चैव व्रतं तन्नैव दुष्यति ।’ एतत्काम्यपरं नित्यं त्वनारब्धमपि कार्यमिति गौडाः । मदनरत्ने—‘पूर्वसंकल्पितं यच्च व्रतं सुनियतेन्द्रियैः । तत्कर्तव्यं नरैः श्राद्धदानार्चनविवर्जितम् ।’ माधवीये कौर्मे—‘काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके । तत्र काम्यव्रतं कुर्याद्दानार्चनविवर्जितम् । ’ इति । सत्यव्रतः—‘प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् । न

तत्रापि व्रतस्य स्यादुपरोधः कदाचन ।' इति तत्प्रतिनिधिना कारयेदित्येतत्परम् । तदुक्तं मदनरत्ने मात्स्ये-'अन्तरा तु रजोयोगे पूजामन्येन कारयेत् ।' इत्येतत्परम् । प्रतिनिधयश्च निर्णयामृते पैठीनसिनोक्ताः-'भार्या पत्युर्व्रतं कुर्याद्भार्यायाश्च पतिर्व्रतम् । असामर्थ्ये परस्ताभ्यां व्रतभङ्गो न जायते ।' कालतत्त्वविवेचने ब्रह्मवैवर्ते-'उपवासासमर्थश्चेदेकं विप्रं तु भोजयेत् । तावद्धनादि वा दद्याद्यद्भक्ताद्द्विगुणं भवेत् । सहस्रसंमितां देवीं जपेद्वा प्राणसंयमान् । कुर्याद्द्वादशसंख्याकान्यथाशक्ति व्रते नरः ।' इति । 'राज्यस्थक्षत्रियार्थे च एकादश्यामुपोषितः । पुरोधाः क्षत्रियस्यार्धं फलं प्राप्नोति निश्चितम् । पितामहादीनुद्दिश्य एकादश्यामुपोषिते । सुते तु तत्फलं विप्राः समग्रं समवाप्नुयुः । कर्ता दशगुणं पुण्यं प्राप्नोत्यत्र न संशयः । यमुद्दिश्य कृतं सोऽपि संपूर्णं फलमाप्नुयात् ।' स्कान्देऽपि-'पुत्रं वा विनयोपेतं भगिनीं भ्रातरं तथा । एषामभाव एवान्यं ब्राह्मणं वा नियोजयेत् ।' तथा-'भ्रातरं भगिनीं शिष्यं कारयेद्ब्राह्मणादिभिः ।' इति । हेमाद्रौ वाराहपुराणे-'असामर्थ्ये शरीरस्य व्रते तु समुपस्थिते । कारयेद्धर्मपत्नीं वा पुत्रं वा नियमान्वितम् । भगिनीं भ्रातरं वापि व्रतमस्य न लुप्यते ।' माधवीये स्मृत्यन्तरेऽपि-'पितृमातृपितृभ्रातृश्वश्रूगुर्वादिभूभुजाम् । अदृष्टार्थमुपोषित्वा स्वयं च फलभाग्भवेत् । नारी च पतिमुद्दिश्य एकादश्यामुपोषिता । पुण्यं क्रतुशतं प्राहुर्मुनयः पारदर्शिनः ।' हेमाद्रौ कात्यायनः-'पितृमातृभ्रातृपतिगुर्वर्थे च विशेषतः । उपवासं प्रकुर्वाणः पुण्यं शतगुणं भवेत् । दक्षिणा नात्र दातव्या शुश्रूषा विहिता हि सा ।' मदनरत्ने प्रभासखण्डे-'भर्ता पुत्रः पुरोधाश्च भ्राता पत्नी सखाऽपि च । यात्रायां धर्मकार्येषु कर्तव्याः प्रतिहस्तकाः । एभिः कृतं महादेवि स्वयमेव कृतं भवेत् । स्वयं कर्तुमशक्तश्चेत्कारयेत पुरोधसा ।' शूद्रस्य ब्राह्मणः प्रतिनिधिर्युक्तः । 'जपस्तपस्तीर्थसेवा प्रव्रज्या मन्त्रसाधनम् । विप्रैः संपादितं तस्य संपन्नं तस्य तत्फलम् ।' इति मरीचिवचनात् । यत्तु निर्णयसिन्धावुक्तं प्रव्रज्यादीनां संभवेन तद्विषये संकोचायोगात् । एतद्वचनस्य प्रतिनिधिप्रकरणे पाठेन संपूर्णतावाचनपरत्वायोगाच्च । हेमाद्रौ कात्यायनः-'पुरोधास्तु क्षत्रियो वा द्वयोस्तत्समभीरितम् । उपवासफलं ताभ्यां समग्रं समवाप्यते ।' वायुपुराणे-'उपवासे त्वशक्तस्तु आहिताग्निरथापि वा । पुत्राद्वा कारयेदाद्याद्ब्राह्मणाद्वापि कारयेत् । अथ वा विप्रमुख्येभ्यो दानं दद्यात्स्वशक्तितः । उपवासफलं तेन समग्रं समवाप्यते । तत्र भोजन-

दोषोऽपि तत्क्षणादेव नश्यति । द्रव्यदातोपवासस्य फलं प्राप्नोत्यसंशयम् । कर्ता न तदवाप्नोति नात्र कार्या विचारणा । घृणया वान्यमुद्दिश्य एकादश्यामुपोषितः । यमुद्दिश्य कृतं विप्रास्तस्य पूर्णं कृतं भवेत् ।' अत्र विशेषमाह त्रिकाण्डमण्डनः—'काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके च सः । काम्येऽप्युपक्रमादूर्ध्वं केचित्प्रतिनिधिं विदुः । न स्यात्प्रतिनिधिर्मन्त्रः स्वामिदेवाग्निकर्मसु । स देशकालयोर्नास्ति नारणेरग्निरेव सा । नापि प्रतिनिधातव्यं निषिद्धं वस्तु कुत्रचित् ।' हिरण्यकेशसूत्रेऽपि—'न स्वामित्वस्य भार्यायाः पुत्रस्य देशस्य कालस्याग्नेर्देवतायाः कर्मणः शब्दस्य च प्रतिनिधिर्विद्यते ।' इति ।

इति पौण्डरीकयाजिरत्नाकरविरचिते जयसिंहकल्पद्रुमोद्द्योते परिभाषाप्रकरणम् ।

श्रीमद्दिल्लीशसेनोद्भटविकटभटप्राज्यमत्तेभसिंहश्चण्डोन्माथ तुरुष्कक्षुभितवसुमतीपालने धर्मराजः । पौत्रः श्रीकृष्णसिंहक्षितिपकुलमणेर्विष्णुसिंहस्य पुत्रः श्रीमान्राजाधिराजो जयहरिरमराधीशवत्कौ सुखी स्तात् ॥ १ ॥ श्रीमत्पण्डितदेवशर्मतनयः श्रीराघवाङ्घ्रिद्वयध्यानावाप्तसमस्तकामनिवहः सम्राट् स रत्नाकरः । तुष्टयै श्रीजयसिंहवर्मनृपतेः कल्पद्रुमे कामदं प्रत्यग्रं स्तवकं द्वितीयमकरोत्सद्व्रातनिर्णायकम् ॥ २ ॥

---

## अथ प्रतिपदादिसामान्यनिर्णयः प्रस्तूयते ।

अत्र निर्णयो नाम विप्रतिपन्नानां वाक्यानां परस्परं विरोधपरिहारः । तदेव तत्त्वदर्शनमित्युच्यते । तदुक्तम् । 'तत्त्वे विप्रतिपन्नानां वाक्यानामितरेतरम् । विरोधपरिहारोऽत्र निर्णयस्तत्त्वदर्शनम् ।' इति । तत्रादौ शुक्लकृष्णप्रतिपद्ध्यानं हेमाद्रौ—'तिथयो ह्यधुनोच्यन्ते प्रतिपद्द्विभुजाऽरुणा । मेषगा शक्तिपात्रा सा सितपक्षादिमा मता ।' इति । 'धूसरा कृष्णपक्षाद्या भाससंस्था चतुर्मुखा । अक्षसूत्रं स्रुवं पुस्तं पात्रं धत्ते चतुर्भुजा ।' इति ।

### प्रथमं प्रतिपत्तावत्सामान्यतो निर्णीयते ।

अस्याश्च नामनिरुक्तिर्भविष्योत्तरे—'तिथीनां प्रवरा यस्माद्ब्रह्मणा समुदाहृता । प्रतिपद्यापदे पूर्वं प्रतिपत्तेन सोच्यते ।' इति । तत्र शुक्लप्रतिपदमावास्यायुतैव कार्या । युग्माग्नीति वचनात् । पैठीनसिनाऽप्युक्तम्—'पञ्चमी सप्तमी चैव दशमी च त्रयोदशी । प्रतिपन्नवमी चैव कर्तव्या संमुखी तिथिः ।' इति । संमुखी सायाह्नव्यापिनीति निर्णयामृतोक्तोऽर्थः प्रामादिकः उत्तरवचनविरोधात् हेमाद्रिविरोधाच्च । संमुखी पूर्वविद्धेति तु युक्तम् । साऽपि यदा पञ्चधा विभक्तस्याह्नश्चतुर्थभागव्यापिनी तदैव

पूर्वविद्धा ग्राह्या तदभावे सायाह्नव्यापिनी ग्राह्येति माधवमतम्। 'तदभावे तु सायाह्नव्यापिनी परिगृह्यताम्।' इति तदुक्तेः । अपराह्णोत्तरकाले प्रवृत्तावुत्तरविद्धैव ग्राह्येति मदनरत्ने । 'प्रतिपत्संमुखी कार्या या भवेदापराह्णिकी।' इति स्कन्दपुराणवचनात् । नन्वेतद्वचनं प्रतिपन्मात्रविषयमस्तु विशेषाश्रवणात् । न च 'प्रतिपत्सद्वितीया स्यात्' इति वचनविरोधः । तेषामपराह्णिकान्यप्रतिपद्विषयत्वेनोपपत्तेरिति चेत् । न । अस्य कृष्णप्रतिपद्विषयत्वे वचनान्तराप्राप्तस्य पूर्वविद्धत्वस्यापराह्णिकत्वस्य च विधेयत्वे गौरवापत्तेः । शुक्लप्रतिपन्मात्रविषयत्वे तस्या वचनान्तरेण पूर्वविद्धत्वस्य लाभादपराह्णिकत्वमात्रस्य विधेयत्वे न गौरवम् । यत्तु—'प्रतिपत्सद्वितीया स्याद्द्वितीया प्रतिपद्युता ।' इति आपस्तम्बवचनं तत्कृष्णप्रतिपद्विषयम् अपराह्णोत्तरकालप्रवृत्तशुक्लप्रतिपद्विषयं च । पूर्वोदाहृतवचनविरोधात् । तस्मादापराह्णिकी शुक्लप्रतिपत्पूर्वैव ग्राह्या, अन्या शुक्लप्रतिपदुत्तरैवेति सिद्धान्तः । कृष्णा तु परा । 'कृष्णा तूत्तरतोऽखिला' इति दीपिकोक्तेः । 'कृष्णाऽपि पूर्वा' इत्यनन्तभट्टः इति निर्णयसिन्धौ । उपवासे तु शुक्लकृष्णप्रतिपत्पूर्वैव ग्राह्या 'प्रतिपत्पञ्चमी चैव उपोष्या पूर्वसंयुता ।' इति जाबालिवचनात् । 'प्रतिपत्पञ्चमीभूतसावित्रीवटपूर्णिमा । नवमी दशमी चैव नोपोष्याः परसंयुताः।' इति ब्रह्मवैवर्तवचनेन, 'द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी । चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी । उपवासे सप्तमी तु वेधाद्धन्त्युत्तरं दिनम् ।' इति वृद्धवसिष्ठवचनेन च द्वितीयाविद्धाया अनुपोष्यत्वाभिधानाच्च । वेधश्च पैठीनसिना सर्वासु तिथिषु सामान्यतो दर्शितः । 'पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम् । त्रिभिर्मुहूर्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः ।' इति । उदयानन्तरं स्थिता त्रिमुहूर्ता पूर्वा तिथिरुत्तरतिथिं विध्यति, अस्तमयात्प्राक् स्थिता त्रिमुहूर्तोत्तरातिथिः पूर्वां तिथिं विध्यतीत्यादि पूर्वमेव । निषिद्धपूर्वतिथिवेधस्तु उपवासविषये स्वल्पोऽपि त्याज्यः । तथा च स्मृत्यन्तरे—'घटिकामात्रवेधोऽपि दूषयत्युत्तरां तिथिम् ।' षड्विंशन्मतेऽपि—'घटिकार्धं त्रिभागं वा स्वल्पं वा दूषयेत्तिथिः । पञ्चगव्यघटं पूर्णं सुराया बिन्दुको यथा ।' इति । इदं च वाक्यमुपवासमात्रविषयम् । 'सर्वप्रकारवेधोऽयमुपवासस्य दूषकः ।' इति निगमेऽभिधानात् । अत एव बौधायनेनाप्युपवासतिथेरुदयकालीनत्वनियम उक्तः—'उदये तूपवासस्य नक्तस्यास्तमये तिथिः।' इति । भविष्योत्तरपुराणे—'व्रतोपवासनियमे घटिकैका यदा भवेत् । सा तिथिः सकला ज्ञेया पित्रर्थे चापराह्णिकी।' इति । पाद्मस्कान्दयोरप्येवम् । यदा तूत्तरदिने उपवासतिथिः स्वल्पाऽ-

पि न लभ्यते तदा निषिद्धपूर्वतिथिविद्धाऽप्युपोष्या । तथा च ऋष्यशृङ्गः—'अविद्धानि निषिद्धैश्चेन्न लभ्यंते दिनानि तु । मुहूर्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः । तदर्धविद्धान्यन्यानि दिनान्युपवसेन्नरः ।' इति । अरुणोदयमारभ्य मुहूर्तपञ्चको वेधः । सूर्योदयमारभ्य सार्धमुहूर्तद्वयवेधो ज्ञातव्यः । 'अविद्धानामलाभे तु पयोदधिफलानि वा । सकृदेवाल्पमश्नीयादुपवासस्ततो भवेत् ।' इति । इति प्रतिपत्सामान्यनिर्णयः।

अथ प्रतिपद्विशेषनिर्णयः तत्कृत्यं तद्व्रतानि च निरूप्यन्ते । तत्रादौ संवत्सरारम्भे प्रथमोपस्थितत्वात्प्रतिपन्निर्णीयते । तत्र चैत्रशुक्लप्रतिपदि वत्सरारम्भः । तत्र उदयव्यापिनी ग्राह्या । 'चैत्रे मासि जगद्ब्रह्मा ससर्ज प्रथमेऽहनि । शुक्लपक्षे समग्रं तु तदा सूर्योदये सति ।' इति हेमाद्रौ ब्राह्मोक्तेः । दिनद्वये तद्व्याप्तावव्याप्तौ वा पूर्वैव । तदुक्तं ज्योतिर्निबन्धे च—'चैत्रे सितप्रतिपदि यो वारोऽर्कोदये स वर्षेशः । उदयद्वितये पूर्वो नोदययुगलेऽपि पूर्वः स्यात् । यस्माच्चैत्रसितादेरुदयाद्भानोःप्रवृत्तिरब्दादेः ।' इति । वसिष्ठेनाप्युक्तम्—'वत्सरादौ वसन्तादौ बलिराज्ये तथैव च । पूर्वविद्धैव कर्तव्या प्रतिपत्सर्वदा बुधैः ।' इति । अस्य मलमासत्वेऽपि तत्रैव वत्सरारम्भः । तस्या एव सर्ववत्सराद्यत्वादिति कृत्यरत्नावल्याम् । निर्णयसिन्धौ तु—यदा चैत्रो मलमासो भवति तदा दैवकार्यस्य तत्र निषिद्धत्वात्तच्छुद्धे मासि संवत्सरारम्भः कार्य इति केचिदाहुरिति । निष्कर्षस्तु—'शुक्लादेर्मलमासस्य सोऽन्तर्भवति चोत्तरः ।' इत्यादिवचनादग्रिमवर्षान्तःपातिमलमासमारभ्यैव वर्षप्रवृत्तेः शुक्रास्तादाविव मलमास एव कार्य इति । ननु शुक्रास्तादौ चैत्रशुक्लप्रतिपदन्तरस्याभावाद्युक्तं तन्मध्य एवानुष्ठानम् । मलमासे तु शुद्धप्रतिपदन्तरस्य संभवाच्छुद्ध एव वत्सरारम्भो युक्त इति चेत् । भ्रान्तोऽसि । न हि प्रतिपदन्तरसत्त्वं प्रयोजकमपि वत्सरारम्भः । स तु मलमासेऽपीत्युक्तं प्राक् । न हि चैत्रशुक्लादिर्मलमासःपूर्ववर्षेऽन्तर्भवतीति ब्रह्मणाऽपि सुवचम् । भास्करे तु—चैत्रस्य मलमासत्वे तैलाभ्यङ्गशकादिश्रवणात् शुद्ध एव कार्यम् । यद्यपि वत्सर एव वसन्तयोःप्रवृत्तिर्जाता तथापि तत्प्रयुक्तकृत्यम् 'षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः । पूर्वमर्द्धं परित्यज्य कर्तव्या चोत्तरे क्रिया ।' इति वचनादुत्कृष्योत्तर एव कार्यम्, नवरात्ररामनवम्यादिवत् इति । अत्र तैलाभ्यङ्गो नित्यः 'वत्सरादौ वसन्तादौ बलिराज्ये तथैव च । तैलाभ्यङ्गमकुर्वाणो नरकं प्रतिपद्यते ।' इति वृद्धवसिष्ठोक्तेः । कौस्तुभे अस्यामेव प्रतिपदि वत्सराधिपपूजोक्ता ज्योतिर्निबन्धे-'यश्चैत्रशुक्लप्रतिपद्दिनवारो नृपो हि सः । तस्य पूजा विधातव्या पताका-

तोरणादिभिः। प्रतिगेहं ध्वजाकर्म शक्त्या ब्राह्मणतर्पणम्। निरीक्षणं च कर्तव्यं शकुनानांशुभेप्सुभिः।' इति। भविष्ये—'चैत्रे मासि महाबाहो पुण्या या प्रतिपत्परा। अस्यां वै निम्बपत्राणि प्राश्य संशृणुयात्तिथिम्।' इति। शकादिश्रवणमप्यत्रोक्तं ज्योतिःशास्त्रे—'शकवत्सरभूपमन्त्रिणां रसधान्येश्वरमेघपातिनाम्। श्रवणात्पठनाच्च वै नृणां शुभतां यात्यशुभं सह श्रिया।' इति। अस्यामेव नवरात्रारम्भः। तदुक्तं मार्कण्डेयपुराणे—'शरत्काले महापूजा क्रियते या च वार्षिकी।' इति मलमासपाते तूत्कर्ष इति कृत्यरत्नावल्याम्। तत्र परयुतैव ग्राह्या 'अमायुक्ता न कर्तव्या प्रतिपच्चण्डिकार्चने। मुहूर्तमात्रा कर्तव्या द्वितीयादिगुणान्विता।' इति देवीपुराणात्। 'तिस्रो ह्येताः पराः प्रोक्तास्तिथयः कुरुनन्दन। कार्तिकाश्वयुजोर्मासोश्चैत्रे मासि च भारत।' इति हेमाद्रौ ब्राह्मोक्तेः। 'पराः परयुताः कार्याः।' विशेषस्तु शारदे नवरात्रे वक्ष्यते। अत्र प्रपादानमुक्तमपरार्के भविष्ये—'अतीते फाल्गुने मासि प्राप्ते चैत्रमहोत्सवे। पुण्येऽह्नि विप्रकथिते प्रपादानं समारभेत्।' इति। तत्र मन्त्रः। 'प्रपेयं सर्वसामान्या भूतेभ्यः प्रतिपादिता। अस्याः प्रदानात्पितरस्तृप्यन्तु च पितामहाः। अनिवार्यं ततो देयं जलं मासचतुष्टयम्।' इति। तथा 'प्रपां दातुमशक्तेन विशेषाद्धर्ममीप्सुना। प्रत्यहं धर्मघटको वस्त्रसंवेष्टिताननः। ब्राह्मणस्य गृहे देयः शीतामलजलः शुचिः।' तत्र मन्त्रः। 'एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः। अस्य प्रदानात्सकला मम सन्तु मनोरथाः।' इति। 'अनेन विधिना यस्तु धर्मकुम्भं प्रयच्छति। प्रपादानफलं सोऽपि प्राप्नोतीह न संशयः।' इति। इयं प्रतिपत् श्वेतकल्पादिः। अत्र श्राद्धादि महाफलम्। तदुक्तं हेमाद्रौ नागरखण्डे—'अथ कल्पादयः पुण्याः कथ्यन्ते तिथयः शुभाः। यासु श्राद्धे कृते तृप्तिः पितॄणामक्षया भवेत्। चैत्रशुक्लप्रतिपदि श्वेतकल्पः पुराऽभवत्। तस्य शुक्लत्रयोदश्यामुदानः समजायत। कल्पस्तु नारसिंहाख्यः कृष्णायां प्रतिपद्यभूत्। अथ कृष्णत्रयोदश्यां गौरीकल्पोऽप्यकल्प्यत। वैशाखस्य द्वितीयायां शुक्लायां नीललोहितः। चतुर्दश्यां तु शुक्लायां प्रवृत्तो गारुडाभिधः। समानस्तु द्वितीयायां कृष्णायामुदपद्यत। महेश्वरश्चतुर्दश्यां कृष्णपक्षे समागमत्। ज्येष्ठशुक्लतृतीयायां वामदेवस्य संभवः। पौर्णमास्यां तु तस्यैव कौर्मः प्रववृते नृप। कृष्णपक्षे तृतीयायामाग्नेयः समगच्छत। पञ्चदश्यां तु कृष्णाया पितृकल्पः समागमत्। शुक्लां चतुर्थीमाषाढे प्राप्य राथन्तरोऽभवत्। चतुर्थ्यां तस्य कृष्णायां सोमकल्पःसमापतत्। श्रावणे शुक्लपञ्चम्यां रावणः समवर्तत। तस्यैव कृष्णप-

ष्टम्यां मानवः प्रत्यपद्यत। षष्ठीं प्रौष्ठपदे शुक्लां प्राप्य प्राणाभिधोऽभवत्। सितेतराया षष्ठ्यां तु तस्य तत्पुरुषाह्वयः। बृहत्कल्पस्तु सप्तम्यां शुक्लायामाश्विनस्य तु। कृष्णायामपि वैराजो विरराज महामनाः। इति त्रिंशदमी कल्पास्तिथयः परमेष्ठिनः। आरम्भतिथयस्तासु शुक्लाः पुण्यतमा मताः। तासु श्राद्धे कृते पुण्यमाकल्पस्थायि कल्प्यते।' इति। एतत्कर्तुमसमर्थं प्रति मात्स्ये—'ब्रह्मणो यद्दिनादर्वाक्कल्पस्यादिः प्रकीर्तिता। वैशाखस्य तृतीयायां कृष्णायां फाल्गुनस्य च। पञ्चमी चैत्रमासस्य तस्यैवान्या तथा पराः। शुक्ला त्रयोदशी माघे कार्तिकस्य तु सप्तमी। नवमी मार्गशीर्षस्य सप्तैताः संस्मराम्यहम्। कल्पानामादयो ह्येता दत्तस्याक्षयकारिकाः।' इति। अत्र ब्रह्मपूजोक्ता हेमाद्रौ विष्णुधर्मोत्तरे-'चैत्रमासस्य या शुक्ला प्रथमा प्रतिपद्भवेत्। तदाह्नि ब्रह्मणः कृत्वा सोपवासस्तु पूजनम्। संवत्सरमवाप्नोति सौख्यानि रघुनन्दन।' इति। प्रथमा सर्वतिथीनामाद्या। अत्र कैश्चित्तु सिन्धुकारैस्तज्ज्येष्ठैश्च प्रथमा अमाविद्धेति व्याख्यातम्। तत्प्रचिन्त्यमित्युक्तम्। तदेव प्रचिन्त्यम्। तादृशव्याख्यानस्य तत्रानुपलम्भात्। तादृग्व्याख्यानसत्त्वेऽपि उत्तरेऽह्नि प्रतिपदसत्त्वे अमाविद्धाया ग्राह्यत्वाच्च। स्मृतिकौस्तुभे तु इयमेव मत्स्यजयन्ती 'कृते च प्रभवे चैत्रे प्रतिपच्छुक्लपक्षगा। रेवत्यां योगविष्कुम्भे दिवा द्वादश नाडिकाः। मत्स्यरूपी कुमार्यां तु अवतीर्णो हरिः स्वयम्।' इति। मात्स्यादित्युक्तम्।

## अथ प्रतिपद्व्रतान्युच्यन्ते।

तत्रादौ चैत्रशुक्लप्रतिपदि ब्रह्मपुराणोक्तः संवत्सरारम्भविधिरुच्यते। भगवानुवाच। 'चैत्रे मासि जगद्ब्रह्मा ससर्ज प्रथमेऽहनि। शुक्लपक्षे समग्रं तु तदा सूर्योदये सति। प्रवर्तयामास तथा कालस्य गणनामपि। ग्रहान्नागानृतून्मासान्वत्सरान्वत्सराधिपान्। ददौ स भगवान्ब्रह्मा सर्वदेवसमागमे। ब्राह्म्यां सभायां ब्रह्माणमनिर्देश्यतनुं ततः। यथोक्तैस्ते नमस्यन्तः स्तुवंतश्चाप्युपासते। ततस्तु कृतशुश्रूषास्ततो गत्वा स्वमालयम्। स्वानि स्वान्यथ कर्माणि ते नियुक्तास्तु चक्रिरे। ब्राह्मी सभा कामरूपा विशेषण तदाऽनघ। धारयन्त्यमलं रूपमनिर्देश्यं मनोहरा। ततः प्रभृति यो धर्मः पूर्वैः पूर्वतरैः कृतः। अद्यापि गूढं सुतरां कर्तव्योऽसौ प्रयत्नतः। तत्र कार्या महाशान्तिः सर्वकल्मषनाशिनी। सर्वोत्पातप्रशमिनी कलिदुःस्वप्ननाशिनी। आयुःप्रदा पुष्टिकरी धनसौभाग्यवर्धिनी। मङ्गल्या च पवित्रा च लोकद्वयसुखावहा। तस्यामादौ च संपूज्यो ब्रह्मा

१—तस्यैव चैत्रस्यैव। परा कल्पादिरित्यर्थः।

कमलसंभवः। पाद्यार्घपुष्पधूपैश्च वस्त्रालङ्कारभोजनैः।होमैर्बल्युपहारैश्च तथा ब्राह्मणतर्पणैः। ततः क्रमेण देवेभ्यः पूजा कार्या पृथक्पृथक। कृत्वोंकारनमस्कारौ कुशोदकतिलाक्षतैः। पुष्पधूपप्रदीपाद्यैर्भोजनैश्च यथाक्रमम्। मन्त्रं संपूजनार्थं तु बहुरूपं परिस्पृशेत्।' मन्त्रमिति जातावेकवचनम्। बहुरूपं मन्त्रं नानास्वरूपान्मन्त्रान्। परिस्पृशेत्परिगृह्णीयादित्यर्थः। तेन 'ॐनमो ब्रह्मणे' इत्यादि 'विष्णवे परमात्मने नमः' इत्यव मन्त्रवाक्यवृन्दोपात्ता देवताशब्दाश्चतुर्थ्यन्ताः प्रणवशब्दादयो नमोन्ता मन्त्रत्वेन ग्राह्याः। 'ॐनमो ब्रह्मणे तुभ्यं कालाय च महात्मने। नमस्तेऽस्तु निमेषाय त्रुटये च नमोस्तु ते। लवाय च नमस्तुभ्यं नमस्तेऽस्तु क्षणाय च। नमो नमस्ते काष्ठायै कलायै चाथ सर्वदा। नाडिकायै सुषुम्णायै मुहूर्ताय नमो नमः। नमो निशाभ्यः पुण्येभ्यो दिवसेभ्यश्च नित्यशः। पक्षाभ्यां चाथ मासेभ्य ऋतुभ्यः षड्भ्य एव च। अयनाभ्यां च पञ्चभ्यो वत्सरेभ्यश्च सर्वदा।' पञ्चसंवत्सरेभ्यः संवत्सरपरिवत्सरइद्वत्सरअनुवत्सरवत्सरेभ्यः। 'नमः कृतयुगादिभ्यो ग्रहेभ्यश्च नमो नमः। अष्टाविंशतिसंख्येभ्यो नक्षत्रेभ्यो नमो नमः। राशिभ्यः करणेभ्यश्च व्यतीपातेभ्य एव च। प्रतिवर्षाधिपेभ्यश्च विज्ञातेभ्यो नमः सदा। नमोऽस्तु कुलनागेभ्यः सानुपात्रेभ्य एव च। नमश्चतुर्दशभ्यश्च मनुभ्योस्तु नमो नमः। नमः पुरंदरेभ्यश्च तत्संख्येभ्यो नमो नमः। पञ्चाशद्भ्यो नमो नित्यं दक्षकन्याभ्य एव च। नमो देव्यै सुभद्रायै जयायै चाथ सर्वदा। भृशाश्वाय नमस्तुभ्यं सर्वास्त्रजनकाय च। नमस्ते बहुरूपाय पत्नीभिः सहिताय च। नमो बुद्ध्यै तथा वृद्ध्यै निद्रायै धनदाय च। नलकूबरयक्षाय गुह्यकस्वामिने नमः। नमोऽस्तु शंखपद्माभ्यां निधिभ्यामथ नित्यशः। भद्रकाल्यै नमो नित्यं सुरभ्यै च नमो नमः। वेदवेदान्तवेदाङ्गविद्यासंस्थेभ्य एव च। नागयक्षसुपर्णेभ्यो नमोऽस्तु गरुडाय च। अरुणाय नमस्तुभ्यं सप्तद्वीपेभ्य एव च। सप्तभ्यस्तु समुद्रेभ्यः सागरेभ्यश्च सर्वदा। उत्तरेभ्यः कुरुभ्यश्च नमो ह्यैरावताय च। भद्राश्वकेतुमालाभ्यां नमः सर्वत्र सर्वदा। इलावृत्ताय च नमो हरिवर्षाय चैव हि। नमः किंपुरुषेभ्यश्च भरताय नमोनमः। नमो भारतभेदेभ्यो नवभ्यश्चाथ सर्वदा। पातालेभ्यश्च सप्तभ्यो नरकेभ्यो नमो नमः। कालाग्निरुद्रशेषेभ्यो हरये क्रोडरूपिणे। सप्तभ्यस्त्वथ लोकेभ्यो महाभूतेभ्य एव च। तमसे रजसे चैव नमः प्रकृतये तथा। पुरुषायाभिमानाय तमोऽस्त्वव्यक्तमूर्तये। हिमवत्प्रमुखेभ्य-

---

१–देवेभ्यो वक्ष्यमाणेभ्य कालादिभ्य।

श्च पर्वतेभ्यो नमस्तथा। पुराणीभ्यश्च गङ्गाभ्यः सप्तभ्यश्च नमो नमः। नमोऽस्त्वाद्य-मुनिभ्यश्च सप्तभ्यश्चाथ सर्वदा। नमोऽस्तु पुष्करादिभ्यस्तीर्थेभ्यश्च पुनः पुनः। निम्न-गाभ्यो नमो नित्यं वितस्ताद्याभ्य एव च। चतुर्दशभ्यो दीर्घेभ्यो धारिणीभ्यो नमो नमः। नमो धात्रे विधात्रे च छन्दोभ्यश्च नमो नमः। सुरभ्यै रावणाभ्यां च नमो भूयो नमो नमः। नमस्तथोच्चैःश्रवसे ध्रुवायै च नमो नमः। नमोऽस्तु धन्वन्तरये शस्त्रास्त्राभ्यां च सर्वदा। विनायककुमाराभ्यां विघ्नेभ्यश्च नमो नमः। शाखाय च विशाखाय नैगमे-याय वै नमः। नमः स्कन्दग्रहेभ्यश्च स्कन्दमातृभ्य एव च। ज्वराय रोगपतये भस्म-प्रहरणाय च। ऋत्विग्भ्यो वालखिल्येभ्यः केशवाय नमः सदा। अगस्तये नारदाय व्यासादिभ्यो नमो नमः। अप्सरोभ्यः सोमपेभ्यो देवेभ्यश्च नमो नमः। असोमपेभ्यश्च नमस्तुषितेभ्यो नमः सदा। आदित्येभ्यो नमो नित्यं द्वादशभ्यश्च सर्वदा। एकादशभ्यो रुद्रेभ्यः सगणेभ्यो नमो नमः। दशभ्यो विश्वदेवेभ्यः पुण्येभ्यश्च नमो नमः। नमो वसुभ्यस्त्वष्टभ्यो नमो योगिभ्य एव च। द्वादशभ्यो भृगुभ्यश्च नमः सर्वत्र सर्वदा। दशभ्यस्त्वङ्गिरोभ्यश्च तपस्विभ्यो नमो नमः। नमो नासत्यदस्राभ्यामश्विभ्यां नित्यमेव हि। साध्येभ्यो द्वादशभ्यश्च पौराणेभ्यो नमः सदा। एकोनपञ्चाशद्भ्योऽथ मरुद्भ्यश्च नमो नमः। शिल्पाचार्याय देवाय नमस्ते विश्वकर्मणे। अष्टभ्यो लोकपालेभ्यः सानुगे-भ्यश्च सर्वदा। आयुधेभ्यो वाहनेभ्यो वर्मभ्यश्च नमः सदा। आसनेभ्यो दुन्दुभिभ्यो देवेभ्यश्च नमो नमः। दैत्यराक्षसगन्धर्वपिशाचेभ्यश्च नित्यशः। पितृभ्यः सप्तभेदेभ्यः प्रेतेभ्यश्च नमो नमः। सुसूक्ष्मेभ्यश्च देवेभ्यो भावगम्येभ्य एव च। नमस्ते बहुरूपाय विष्णवे परमात्मने। अथ वा किं बहुनोक्तेन मन्त्रेणानेन चार्चयेत्। प्राङ्मुखो-दङ्मुखान्विप्रान्देवानुद्दिश्य पूर्ववत्।' अथ वा बहुविस्तरेण किं ब्राह्मणानेव देवतोद्देशेन पूजयेत्। पूर्ववत् मन्त्रोक्तक्रमेण। 'अर्घ्यैः पुष्पैश्च धूपैश्च वस्त्रैर्माल्यैः सहृष्टकम्।' सहृष्टकं सरोमाञ्चं हृष्टरोमा सन्नर्चयेदित्यर्थः। 'धनधान्यानुवि-भवैर्दक्षिणाभिश्च सर्वदा। इतिहासपुराणाभ्यां प्रवक्तॄंश्च द्विजोत्तमान्। कालज्ञा-न्वेदवेदज्ञान्भृत्यान्संबन्धिबान्धवान्। अनेनैव तु मन्त्रेण स्वाहान्तेन पृथक्पृथक्। यविष्ठायाग्नये होमः कर्तव्यः सर्वतृप्तये। वेदवच्चक्षुषी दत्वा स्थाने प्रधानिके सति।' यविष्ठः श्रेष्ठः। वेदवद्वेदोक्तविधिना। चक्षुषी आज्यभागौ। प्रधानिके प्रधानहो-मारम्भे 'शालाशोभा ततः कार्या मङ्गलालम्भनं तथा। भोजयित्वा द्विजान्सर्वान्सु-हृत्संबन्धिबान्धवान्। विशेषेण च भोक्तव्यं कार्यश्चापि महोत्सवः। नवसंवत्सरारम्भः

सर्वसिद्धिप्रदायकः ।' इति ब्रह्मपुराणोक्तः संवत्सरारम्भविधिः । इयं च पूजा दमनकेन कार्या इति स्मृतिकौस्तुभे । यथोक्तं देवीपुराणे—ब्रह्मोवाच । 'चैत्रादौ कारयेत्पूजां मम वत्स यथाविधि । गन्धधूपार्चनादानैर्माल्यैश्च मदनोद्भवैः । 'इति ।

अस्यामेवारभ्यं भविष्योत्तरोक्तं तिलकव्रतम् । युधिष्ठिर उवाच । 'ब्रह्मेशकेशवादीनां गौर्यागणपतेस्तथा । दुर्गासोमाग्निसूर्याणां व्रतानि मधुसूदन । शास्त्रान्तरेण दृष्टानि भवद्बुद्धिगतानि च । तानि सर्वाणि मे देव येन देवकिनन्दन । प्रतिपत्क्रमयोगेन विहिता यस्य या तिथिः । देवस्य यस्यां तत्कार्यं तदशेषेण मे वद। ' श्रीकृष्ण उवाच । 'वसन्ते किंशुकाशोकशोभिते प्रतिपत्तिथिः । शुक्ला तस्यां प्रकुर्वीत स्नानं नियममास्थितः । नारी नरो वा राजेन्द्र संतर्प्य पितृदेवताः । नद्यास्तीरे तडागे वा गृहे वा तदलाभतः । पिष्टातकेन विलिखेद्वत्सरं पुरुषाकृतिम् ।' पिष्टातकः पटवासको गन्धद्रव्यचूर्णविशेषः । 'ततश्चन्दनचूर्णेन पुष्पधूपादिनाऽर्चयेत् । मासर्तुनामभिः पश्चान्नमस्कारान्तयोजितैः । मासर्तुनामभिश्चैत्रवसन्तादिकनामभिः । पूजयेद्ब्राह्मणो विद्वान्मन्त्रैर्वेदोदितैः शुभैः । संवत्सरोऽसीति पठन्मन्त्रं वेदोदितं द्विजः । नमस्कारेण मन्त्रेण शूद्रोऽपीत्थं प्रपूजयेत् ।' शूद्रोऽपीत्यनेन स्त्रीणां परिग्रहः । तासां विशेषविध्यभावे वैदिकमन्त्रानधिकारात । 'संवत्सरोऽसि परिवत्सरोऽसीडावत्सरोसि वत्सरोसि' इति यजुर्वेदप्रसिद्धो मन्त्रः । नमस्कारेण मन्त्रेण 'संवत्सराय नमः' इत्यादिना । 'एवमभ्यर्च्य वासोभिः पश्चात्तमभिवेष्टयेत् । कालोद्भवैर्मूलफलैर्नैवेद्यैर्मोदकादिभिः । ततश्च पूजयेत्पार्थ पुरः स्थित्वा कृताञ्जलिः । भगवंस्त्वत्प्रसादेन वर्षं क्षेममिहास्तु मे । संवत्सरोपसर्गा मे विलयं यात्वशेषतः । एवमुक्त्वा यथाशक्त्या दत्वा विप्राय दक्षिणाम् । ललाटपट्टे तिलकं कुर्याच्चन्दनपङ्कजम् । ततः प्रभृत्यनुदिनं तिलकालंकृतं मुखम् । धार्यं संवत्सरं यावच्छशिनेव नभस्तलम् । एवं नरो वा नारी वा व्रतमेतत्समाचरेत् । सदैव पुरुषव्याघ्र भोगान्भुवि भुनक्त्यसौ । भूतप्रेतपिशाचाद्या दुर्वारा वैरिणो ग्रहाः । निरर्थका भवन्त्येते तिलकं वीक्ष्य तत्क्षणात् । एतत्त्रिलोकतिलकाख्यविभूषणं च पुण्यं व्रतं सकलदुष्टहरं परं च । इत्थं समाचरति यः स सुखं विहृत्य मर्त्यः प्रयाति पदमच्युतमिन्दुमौलेः ।' इति भविष्योक्ततिलकव्रतम् ।

अस्यामेवारभ्यं विष्णुधर्मोत्तरोक्तमारोग्यव्रतम् । 'संवत्सरावसाने तु पञ्चदश्यामुपोषितः । प्रातः प्रतिपदि स्नात्वा कुर्याद्व्रतमनन्यधीः । पूजयेद्भास्करं देवं वर्णकैः कमले कृते । ' शुचौ स्थण्डिलदेशे नानावर्णकैः कमलं विधाय तत्र भास्करं ध्यात्वा पूजयेदित्यर्थः । 'शुक्लेन गन्धमाल्येन चन्दनेन सितेन

च। तथा कुन्दुरुधूपेन घृतधूपेन भार्गव ।' कुन्दुरुः सल्लकीनिर्यासः । 'अपूपैः सैकतैर्दध्ना परमान्नेन भूरिणा ।' सैकतैः शर्कराविकारैः । 'ओदनेन च शुक्लेन सता लवणसर्पिषा । क्षीरेण च फलैः शुक्लैर्वह्निब्राह्मणतर्पणैः । पूजयित्वा जगद्धाम दिनभागे चतुर्थके । आहारं प्रथमं कुर्यात्सघृतं पुरुषोत्तमः । सर्वं च मनुजश्रेष्ठ घृतहीनं विवर्जयेत् । भुक्त्वा च सकृदेवान्नमाहारं च समाचरेत् । पानीयपानं कुर्वीत ब्राह्मणानुमते पुनः ।' प्रथममाहारं प्रथमग्रासम् । सर्वं प्रथममप्रथमं वाहारम् । सकृदेवान्नं भुक्त्वा एकमेव ग्रासं भक्षयित्वाऽवशिष्टान्नं त्यजेत् । ब्राह्मणानुमत्या पुनराहारमवशिष्टान्नभोजनं पुनः पानीयपानं कुर्यादित्यर्थः । ब्राह्मणानुमत्या भुञ्जानोऽपि घृतहीनं न भुञ्जीत 'घृतहीनं विवर्जयेत्' इति निषेधात् । 'संवत्सरमिदं कृत्वा ततः साक्षात्त्रयोदशम् । पूजनं देवदेवस्य तस्मिन्नहनि भार्गव ।' संवत्सरं प्रतिमासं शुक्लप्रतिपदि । ततः साक्षात्त्रयोदशामिति लिङ्गदर्शनात् । 'समापयेद्व्रतं पुण्यं राम इत्यभिधीयते ।' हे राम ! शास्त्रेष्वभिधीयते इत्यर्थः । संध्यभावश्छान्दसः । 'सहिरण्यं सवस्त्रं च तथा दद्याद्द्विजोत्तमे । व्रतेनानेन धर्मज्ञो रोगमेवं व्यपोहति । आरोग्यमाप्नोति गतिं तथाग्र्यां यशस्तथाग्र्यं विपुलांश्च भोगान् । व्रतेन सम्यक्पुरुषोऽथ नारी संपूजयेद्यस्तु जगत्प्रधानम् ।' इति विष्णुधर्मोत्तरोक्तमारोग्यप्रतिपद्व्रतम् ।

अथास्यामेवारभ्यं विष्णुधर्मोत्तरोक्तं विद्याव्रतम् । मार्कण्डेय उवाच । 'अष्टपत्रं तु कमलं विन्यसेद्वर्णकैः शुभैः । ब्रह्माणं कर्णिकायां तु तस्य[1] संपूजयेद्विभुम् । ऋग्वेदं पूर्वपत्रे तु यजुर्वेदं तु दक्षिणे । पश्चिमे सामवेदं तु उत्तरेऽथर्वणं तथा । आग्नेये च तथाङ्गानि धर्मशास्त्राणि नैर्ऋते । पुराणं चैव वायव्ये ऐशान्ये न्यायविस्तरम् । एवं विन्यस्य धर्मज्ञः सोपवासस्तु पूजयेत् । चैत्रशुक्लमथारभ्य सोपवासो जितेन्द्रियः । सदा प्रतिपदं प्राप्य शुक्लपक्षस्य यादव । संवत्सरं महाभाग शुक्लगन्धानुलेपनैः । भूरिणा परमान्नेन धूपदीपैरतन्द्रितः । संवत्सरान्ते गां दद्याद्व्रते चीर्णे नरोत्तम । इदं व्रतं यस्तु करोति राजन्स वेदवित्स्याद्भुवि धर्मनिष्ठः । कृत्वा तदा द्वादश वत्सराणि विरञ्चिलोकं पुरुषः प्रयाति ।' इति विद्याप्रतिपद्व्रतम् ।

अस्यामेव गरुडपुराणोक्तं विद्याव्रतान्तरम् । सनत्कुमार उवाच । 'अथ त्वं प्रतिपत्कल्पं शृणु संपत्करं व्रतम् । यत्कुर्वाणः श्रियं विन्देद्दुर्लभां मानुषैरिह । शालितण्डुलसंसिद्धे मण्डले चतुरस्रके । श्रीशं श्रियमथो ब्रह्म पूजये-

१ तस्य कमलस्य ।

त्सपुरःसरम्। अप्रच्छन्नदलैः पद्मैरयुतैस्तं प्रपूजयेत्। सहस्रैर्वा यथायोगं पयसा पायसेन च। ततश्च विधिनाऽभ्यर्च्य पार्श्वे देवीं सरस्वतीम्। अग्रतः पूजयेदिन्दुं गुरुं पश्चादनन्यधीः। परिवारनियोगेन तांस्तु तत्कारयेदथ।' प्रार्थनामन्त्रः। 'मम विद्यां प्रदिशतु देवी वागीश्वरो हरिः। विद्याधिदैवतं देवी विद्यां दिशतु मे द्दश। सरस्वतीं प्रदिशतु वागृद्धिमतिशायिनीम्। सितांशुरपि संपुष्टिं सर्वभोगप्रपूरणीम्।' पूजा तु प्रणवादिनमोन्तैर्नाममन्त्रैरेव कर्तव्या। 'इत्येवं कारयेत्साध्यं प्रसन्नः पूजितो गुरुः। विधिना चोपवासं तु कारयेन्नियमान्वितम्। समभ्यर्च्य द्वितीयायां देवदेवं श्रियः पतिम्। भुञ्जीत पायसान्नेन शुचिराचम्य सन्निधौ। आचार्याय वरं दत्वा कुर्यात्सुप्रीणनं पुनः। अनधीतमनारब्धं तदानीमारभेत ह। विद्याव्रतप्रदं नित्यं गुरुं दैवतमित्यपि। तन्मुखाद्धि तदा तस्य निःश्रेयससमागमः। सदा तदुक्तकारी स्यान्न स्यात्तच्छासनातिगः। तिष्ठेत्तिष्ठत्सु गुरुषु न चासीत तदग्रतः। न शयीत तदासीने कुर्वीत वचनान्यपि। न लङ्घयीत वचनं गुरोः कृत्ये यतेत च। निवेद्य गुरवे सर्वं कुर्यादादौ हिताहितम्। यशश्च विपुलं लब्ध्वा सदाचारप्रवर्तनम्। पुत्रपौत्रश्रिया जुष्टः पुण्यां गतिमवाप्नुयात्। एवं समापयेद्विद्वान्विद्याव्रतमुदारधीः। दद्यात्फलानि विप्रेभ्यो ह्युत्कृष्टानि बहून्यथ। कदलीचूतपनससंभवानि शुचीनि च। यस्त्वेवं कुरुते विद्वान्विद्याव्रतमनन्यधीः। समस्तविद्यानिपुणो वैष्णवं पदमृच्छति।' इति विद्याव्रतम्।

### अथ ज्येष्ठशुक्लप्रतिपदि भविष्योत्तरोक्तं करवीरव्रतम्।

श्रीकृष्ण उवाच। 'ज्येष्ठे मासि सिते पक्षे प्रथमेऽह्नि दिनोदये। देवोद्यानभवं हृद्यं करवीरं समर्चयेत्। रक्ततन्तुपरीधानगन्धधूपविलेपनैः। प्ररूढसप्तधान्यैश्च नारंगैर्बीजपूरकैः। गुणकैर्बदरैर्भक्ष्यैर्नारिकेलैः सुशोभनैः। अभ्युक्ष्याक्षततोयेन मन्त्रेणेत्थं क्षमापयेत्। करवीर विषावास नमस्ते भानुवल्लभ। मौलिमण्डन दुर्गादिदेवानां सततं प्रिय। आकृष्णेनेति वेदोक्तमन्त्रेणाभ्यर्च्य शक्तितः। एवं भक्त्या समभ्यर्च्य दत्वा विप्राय दक्षिणाम्। प्रदक्षिणमतः कुर्यात्ततः स्वभवनं व्रजेत्। एतद्व्रतं पुरा पार्थ सूर्याराधनकाम्यया। अनुष्ठितं निक्षुभया सावित्र्या सत्यभामया। दमयन्त्या सरस्वत्या गायत्र्या गङ्गया तथा। अन्याभिरपि नारीभिर्मर्त्यलोकेऽप्यनुष्ठितम्। करवीरव्रतं पार्थ सर्वसौख्यफलप्रदम्। संपूज्य रक्तकुसुमार्चितसर्वशाखं नीलैर्दलैस्तततनुं करवीरवृक्षम्।

१—अप्रच्छन्नदलैर्विकसितैः। २—साध्य शिष्यमुपदेश्यम्। ३ साध्ये इति शेष। ४ वरशब्देन हिरण्यमभिधीयते। ५ मन्येतेति शेष.। ६ निःश्रेयसमातिशयितं श्रेय.।

भुक्त्वा मनोभिलषितान्भुवि भव्यभोगांस्ते वै प्रयान्ति भुवनं भरताग्र्य भानोः।' इति भविष्योत्तरोक्तं करवीरव्रतम्।

ज्येष्ठे शुक्लप्रतिपदि दशहरास्नानाद्यारम्भः।

काशीखण्डे—'ज्येष्ठे मासि सिते पक्षे प्राप्य प्रतिपदं तिथिम्। दशाश्वमेधिके स्नात्वा मुच्यते सर्वपातकैः। एवं सर्वासु तिथिषु क्रमस्नायी नरोत्तमः। आशुक्लपक्षदशमीं प्रतिजन्माघमुत्सृजेत्।' इति। दशहरास्तोत्रपूजादिकं तु दशमीप्रकरणे वक्ष्यते। श्रावणकृष्णप्रतिपदि मार्गशीर्षव्रतं हेमाद्रौ द्रष्टव्यम्।

अथ भाद्रपदशुक्लप्रतिपदि स्कन्दपुराणोक्तं महत्तमाख्यं शिवव्रतम्।

तदेव मौनव्रतमित्युच्यते। इदं व्रतं पूर्वविद्धायामेव कर्तव्यम्। तदुक्तं निर्णयामृते ब्रह्मवैवर्ते—'रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः।' इति। मदनरत्ने स्कान्दे-नन्दिकेश्वर उवाच—'देव केन विधानेन व्रतं पुण्यं महत्तमम्। तस्मिंस्तिथौ तु कर्तव्यं विधानं तद्वदस्व मे।' स्कन्द उवाच। 'मासि भाद्रपदे शुक्ले पक्षे च प्रतिपत्तिथौ। नैवेद्यं तु पचेन्मौनी षोडश त्रिगुणानि च। फलानि मिष्टपक्वानि दद्याद्विप्राय षोडश। देवाय षोडशैतानि दातव्यानि प्रयत्नतः। भुज्यन्ते षोडश तथा व्रतस्य नियमाश्रयात्। सौवर्णं कारयेद्देवं यथाशक्त्या हिरण्मयम्। नेत्रत्रयसमायुक्तं जटामण्डलमण्डितम्। पञ्चवक्त्रं चतुर्बाहुं षडस्राब्जस्य मध्यगम्। त्रिशूलं चाक्षसूत्रं च वहन्तं दक्षिणे करे। कपालं कुण्डिकां वामे शिखाया चन्द्रधारिणम्। पञ्चामृतेन स्नपनं कृत्वा संस्थापयेत्ततः। कुम्भस्योपरि देवेशं शुक्लवस्त्रयुगान्वितम्। गन्धपुष्पैः समभ्यर्च्य फलैर्नानाविधैस्तथा। प्रसीद देवदेवेश चराचर जगद्गुरो। वृषध्वज महादेव त्रिनेत्राय नमोनमः।' पूजामन्त्रः। 'देवस्य च परीधानं दद्याद्धेनुं पयस्विनीम्। अनेन तु विधानेन यः कुर्याद्व्रतमुत्तमम्। स राज्यं लभते देव दीर्घमायुस्तथैव च। सर्वपापविनिर्मुक्तः शिवलोके महीयते। भुक्त्वा तु विविधान्भोगांस्ततः शिवपुरं व्रजेत्।' इति महत्तमव्रतम्।

अथास्यामेव स्कन्दपुराणोक्तं मौनव्रतम्।

पार्वतीप्रश्नानन्तरम्। ईश्वर उवाच 'शृणु देवि प्रवक्ष्यामि यत्पृष्टोहं त्वयाऽधुना। व्रतमेतत्पुरा चीर्णं सीतया राघवेण च। अन्यैरपि जनैः सर्वैः संचीर्णं व्रतमुत्तमम्। नभस्यत्र व्यतिक्रान्ते नभस्ये च प्रवर्तिते। व्रतमेतत्तु कर्तव्यं षोडशैव

१—सौवर्णं कर्षपरिमितसुवर्णघटितं यथाशक्ति वा। २—नभा॰ श्रावणः नभस्यो भाद्रपदः। तौ चात्र पूर्णिमान्तौ ग्राह्यौ। 'एवं कालक्रमेणैव श्रावणी पूर्णिमागता। तद्दिनं प्राप्य विप्रेण' इत्यग्रे तत्रैवाभिधानात्।

दिनानि तु । एतच्छुत्वा ततो देवी प्रहृष्टा वाक्यमब्रवीत्' । पार्वत्युवाच । 'किं विधानं पुरा प्रोक्तं व्रतं मौनव्रतात्मकम् । तत्समस्तं समाचक्ष्व प्रसादं कुरु मे प्रभो । ' ईश्वर उवाच । 'तद्दिनं चैव संप्राप्य सभार्यःसह बान्धवैः । गत्वा प्रभातसमये स्नानार्थं जलसंनिधौ । तडागे वा नदीतीरे गत्वा प्रस्रवणे तथा । स्नानं कार्यं तदा सर्वैः शिवध्यानपरायणैः । दूर्वाः षोडश संगृह्य षोडशग्रन्थिसंयुतम् । तत्सूत्रं च करे न्यस्य स्त्रिया वामेन दक्षिणे । एवं विधानं कर्तव्यं यावत्स्यात्प्रतिपद्दिनम् । तद्दिने चैव संप्राप्ते समाप्त्यर्थं व्रतस्य तु । मौनेनैवानयेत्तोयं मौनगोधूमपेषणम् । मौनेनैव च कर्तव्यं नैवेद्यं भोजनादिकम् । सर्वोपस्करमादाय गत्वा च जलसंनिधौ । स्नानं कार्यं तदा तत्र नित्यकर्म ततः परम् । देवर्षिमनुजानां च पितॄणां चैव तर्पणम् । पश्चाद्देवाधिदेवेशं मन्त्रैः संपूजयेत्ततः । शूलपाणे वृषारूढ अर्धचन्द्रविभूषण । तोयेन स्नापितो देव पवित्रं कुरु मां सदा । देवैस्तु वन्दिता धेनुः सर्वपापप्रणाशिनी । तत्क्षीरस्नापितो देव नित्यं मे वरदो भव । कामतोऽकामतो वापि यन्मया दुष्कृतं कृतम् । तत्सर्वं विलयं यातु दध्ना स्नानेन मे शिव । रसानामुत्तमं त्वाज्यं देवानां च सदा प्रियम् । तेन त्वं स्नापितो देव निधिकान्तिप्रदो भव । यस्योच्चारणमात्रेण तृप्तिं यान्ति पितामहाः । मधुना स्नापितो देव नित्यं शोकहरो भव । यमलोकभयत्रस्तः शरणं त्वां गतः शिव । खण्डस्नानेन देवेश मां कुरुष्व सुमानुषम् । यस्य दर्शनमात्रेण शुद्धिमायाच्च जीवितम् । तेनैवोत्तमतोयेन स्नातो देहि प्रियं ध्रुवम् । सुगन्धं चन्दनं देव कुङ्कुमेन समन्वितम् । अर्चितोऽसि मया भक्त्या शिवलोकप्रदो भव । अक्षयान्बन्धुपुत्रादीन्कामं चैवाक्षिवाङ्मनः । अन्ते चैवाक्षयं लोकमक्षतैरर्चितः कुरु । संतानः पारिजातश्च ये चान्ये सुरपादपाः । तेषां पुष्पैर्मया देव पूजितः सुखदो भव । धूपोऽयं गृह्यतां देव सुन्दरो गन्धवाञ्छुचिः । ईप्सितं मे वरं देहि परत्र च शुभां गतिम् । शुद्धा शुक्ला वरा वर्तिराज्येन च समन्विता । दीपवर्तिप्रदानेन प्रीतः स्यादीश्वरो मम । सर्वमन्नमयान्नं तद्देवानां च सदा प्रियम् । तेनैवान्नप्रदानेन सुप्रीतो वरदो मम । शाखा प्रशाखा च सिता च दूर्वा विस्तारभूता धरणीतले यथा । ममापि संतानवरं तथाऽक्षयं कुरुष्व दूर्वे शिवपूजने रता । नानाविधं फलं मुख्यं सुपुष्पाक्षतचन्दनम् । भक्त्या परमया दत्तं गृहाण त्वं सुरेश्वर । जन्मजन्मान्तरेष्वेव भावाभावेन यत्कृतम् । क्षंतव्यं देव तत्सर्वं शंभो त्वां शरणं गतः । एतत्सर्वं तु मौनेन शुद्धो भूत्वा समाहितः । शिवपूजां प्रकुर्वाणः कृतकृत्यो भवेन्नरः ।' इति पूजा ' एवं संपूज्य विधिना संकल्पः क्रियते ततः । सदा संपन्नपूजायां प्रीयतां

मम शंकरः । संप्रीतो भव देवेश भक्तिग्राह्य सदार्चित । एवं पञ्चामृतस्नानं यः कारयति मानवः । आजन्मोपार्जितात्पापाच्छुध्यते नात्र संशयः । विभागेन प्रदातव्यं ब्राह्मणाय शिवाय च । आत्मना चैव भोक्तव्यं पक्वान्नं विधिवच्छुभम् । एवं क्रमेण कर्तव्यं सहेष्टजनबान्धवैः । व्रतिना हितकामार्थं द्विजो भोज्यः सदक्षिणः । दातव्यं प्रीतिपूर्वेण याचेताच्छिद्रकं द्विजम् । ततश्च शिवपूजादि भावाभावेन यत्कृतम् । तत्सर्वं मम पूर्णं स्याद्धर्मकामार्थसाधनम् । पुत्रपौत्रप्रदं ह्येतत्सर्वकामप्रदं व्रतम् । एतत्सर्वं मयाख्यातं त्वदग्रे प्रीतिपूर्वकम् । श्रुतमात्रेण देवेशि सर्वपापैः प्रमुच्यते ।' इति मौनव्रतम् ।

## अथाश्विनशुक्लप्रतिपदि भविष्योत्तरोक्तमशोकव्रतम् ।

'अश्वयुक्छुक्लपक्षस्य प्रथमेऽह्नि दिनोदये । अशोकं पूजयेद्वृक्षं प्ररूढशुभलक्षणम् । प्ररूढैः सप्तधान्यैश्च गुणकैर्मोदकैः शुभैः । फलैः कालोद्भवैर्हृद्यैर्नारिकेलैः सदाडिमैः । पुष्पधूपादिना तत्र पूजयेत्तं तरूत्तमम् । अशोकं पांडवश्रेष्ठ शोकं नामेति कुत्रचित् । अशोकः शोकशमनो भव सर्वत्र नः कुले । इत्युच्चार्य ततो दद्यादर्घ्यं श्रद्धासमन्वितः । पताकाभिरलंकृत्य प्रच्छाद्य च सुवाससा । दमयन्ती यथा स्वाहा यथा देवी च जानकी । तथाऽशोकव्रतादस्माज्जायते पतिवल्लभा । वने वसन्त्या सद्धर्मशीलया संप्रदर्शितम् । दृष्ट्वाऽशोकं वने पार्थ पल्लवालंकृतं तरुम् । कृत्वा समीपे भर्तारं देवरं च तिलाक्षतैः । दीपालंकृतनैवेद्यैर्धूपसूत्रफलार्चनैः । अर्चयित्वाऽभ्यर्थितोऽसौ रक्ताशोको युधिष्ठिर । मैथिल्या प्रांजलिं[1] कृत्वा शृण्वतो राघवस्य च । चिरं जीवतु मे वृद्धः श्वशुरः कोशलेश्वरः । भर्ता मे देवरश्चैव जीवन्तु भरतादयः । कौशल्यामपि जीवन्तीं पश्येयमिति मैथिली । ययाचेदं महाभागा द्रुमं वनविभूषणम् । प्रदक्षिणमुपावृत्य ततः सा प्रययौ गृहम् । एवमन्यापि या नारी पूजयेदवनीनगम् । तिलतण्डुलसंमिश्रैर्यवगोधूमसर्षपैः । समर्च्य सेचयेन्मूले पादपं रक्तपल्लवम् । तदभावे च सौवर्णं राजतं वा स्वशक्तितः । वर्णकैर्वा समालिख्य पूजयेद्विधिवत्ततः । मन्त्रेणानेन कौन्तेय प्रणम्य स्त्री धृतव्रता । महावृक्ष महाशाख मकरध्वजमन्दिर । प्रार्थये त्वां महाभाग सर्वकामप्रदो भव । एवं समर्च्य तं वृक्षं दत्त्वा विप्राय दक्षिणाम् । तं च वृक्षं कृतं[2] दत्वा वस्त्रयुग्मसमन्वितम् । सखीभिः सहिता साध्वी भुञ्जीत ब्रह्मचारिणी । याः शोकनाशनमशोकतरुं युवत्यः संपूजयन्ति कुसुमाक्षतधूपदीपैः । ताः प्राप्य सौख्यमतुलं भुवि भर्तृजातं गौरीपदं प्रमुदिताः परमाप्नुवन्ति ।' इति भविष्योत्तरोक्तमशोकव्रतम् ।

---

१—प्राञ्जलि प्रबद्धमञ्जलिम् । २ कृतं सुवर्णादिघटितम् ।

## अथाश्विनशुक्लप्रतिपत्तिथिकृत्यानि ।

आश्विनशुक्लप्रतिपद्याचाराज्जीवत्पितृकेण दौहित्रेण महालयापरपक्षनिमित्तकं मातामहश्राद्धं कार्यम् । तदुक्तं हेमाद्रौ संग्रहे च—'जातमात्रोऽपि दौहित्रो विद्यमानेऽपि मातुले । कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विने सिते।' इति । इयं सङ्गवव्यापिनी ग्राह्येति निर्णयदीपे उक्तम्—'प्रतिपद्याश्विने शुक्ले दौहित्रस्त्वेकपार्वणम् । श्राद्धं मातामहं कुर्यात्सपिता संगवे सति । जातमात्रोऽपि दौहित्रो जीवत्यपि च मातुले । प्रातःसंगवयोर्मध्ये आर्यस्य प्रतिपद्भवेत् । 'इत्यादिवचनाच्च । जातमात्रः अधिकारी जात इत्यर्थः जायमानो ह वै ब्राह्मणवत् । न तूत्पन्नमात्रः । तदानीं तस्यानुपनीतत्वेनानधिकारात्, शास्त्रस्य चोपनीताधिकारिकत्वात् । एतच्च वचनं निर्मूलमिति सर्वनिबन्धकाराः । तेन पार्वणश्राद्धत्वादत्रापराह्णव्यापिनी ग्राह्या । अत्र च सपत्नीकानां मातामहानां देवतात्वं द्रष्टव्यम् । अमावास्याश्राद्धाद्यन्तर्गतमातामहपार्वणवदिहापि सत्यपि पितृपार्वणविकृतित्वे सपत्नीकत्वगुणालम्भकस्य प्रमाणस्य 'स्वभर्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता' इत्यस्यानेन प्रतिबन्धासंभवात् । इदं च मलमासे न कार्यम् 'स्पष्टमासविशेषाख्याविहितं वर्जयेन्मले ।' इति निषेधात् । इदं च जीवत्पितृकेणैव कार्यमिति शिष्टाः । इदं च शिष्टाचारात्सपिण्डं कार्यमिति केचित् पिण्डरहितं तु युक्तं जीवत्पितृकस्य । 'मुण्डनं पिण्डदानं च प्रेतकर्म च सर्वशः । न जीवत्पितृकः कुर्याद्गुर्विणीपतिरेव च ।' इति दक्षेण पिण्डनिषेधात् । आन्वष्टक्यवद्विशेषवचनाभावाच्चेति केचित् । अन्ये तु न जीवत्पितृकं प्रति पिण्डदानमात्रमनेन निषिध्यते । किं तु 'दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपाक्षिकम् । न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणम् । पित्र्यं जीवत्पितुर्नेष्टम्' इत्यादिवचनैकवाक्यतया श्राद्धमेव निषिध्यते । अथवा श्राद्धाभावेऽपि 'यन्नाम्ना पातयेत्पिण्डं तं नयेद्ब्रह्म शाश्वतम् ।' इत्यादिशास्त्रेण प्रसक्तस्य पिण्डपातनस्य विषयीकरणेन निषेध उपपद्यते । एवं च तत्र विशेषवचनप्राप्तंश्राद्धं सपिण्डमेव भवतीत्याहुः । अस्यामेव प्रतिपदि नवरात्रव्रतारम्भः ।

## अस्यामेव प्रतिपदि नवरात्रव्रतारम्भः ।

तन्निर्णयस्तु निर्णयामृते देवीपुराणे—सुमेधा उवाच । 'शृणु राजन्प्रवक्ष्यामि चण्डिकापूजनक्रमम् । आश्विनस्य सिते पक्षे प्रतिपत्सु शुभे दिने । पुण्याहवाचनं कृत्वा कन्यामावाहयेत्ततः । कृत्वा स्वर्णमयीं देवीं कलामात्रात्मिकाम्बिकाम् । भैरवाष्टकसं-

---

१ संदेत्यपि पाठ ।

युक्तां न्यसेदुड्डानपीठके । पञ्चप्रणवमुच्चार्य पश्चाद्देवीं समर्चयेत् । शुद्धे तिथौ प्रकर्तव्यं प्रतिपच्चोर्ध्वगामिनी । आद्यास्तु नाडिकास्त्यक्त्वा षोडश द्वादशापि वा।अपराह्णे प्रकर्तव्यं शुद्धसंततिकाङ्क्षिभिः ।' इदं चापराह्णयोगिन्याः प्राशस्त्यं द्वितीयदिने प्रतिपदोऽभावे ज्ञेयम् । तथा तत्रैव देवीवचनम्—'अमायुक्ता न कर्तव्या प्रतिपत्पूजने मम । मुहूर्तमात्रं कर्तव्या द्वितीयादिगुणान्विता । आद्याः षोडश नाड्यश्च लब्ध्वा यः कुरुते नरः । कलशस्थापनं तत्र अरिष्टं जायते ध्रुवम् । वर्जनीया प्रयत्नेन अमायुक्ता तु पार्थिव । द्वितीयादिगुणैर्युक्ता प्रतिपत्सर्वकामदा । शरत्काले विधातव्यमम्बामाश्रित्य यत्नतः । पूजनं गन्धपुष्पाद्यैर्नानाभक्ष्यसमन्वितैः ।' देवीवचनम्—'यो मां संपूजयेन्नित्यं द्वितीयादिगुणान्विते । प्रतिपच्छरदि ज्ञात्वा सोऽश्नुते सुखमव्ययम् । यदि कुर्यादमायुक्तप्रतिपत्स्थापनं मम । तस्य शापायुतं दत्त्वा भस्मशेषं करोम्यहम् । आग्रहात्कुरुते यस्तु प्रथमे स्थापनं मम । तस्य संपद्विनाशः स्याज्ज्येष्ठः पुत्रो विनश्यति । अमायुक्ता न कर्तव्या प्रतिपच्चण्डिकार्चने । धनार्थिभिर्विशेषेण वंशहानिश्च जायते । न दर्शकलया युक्ता प्रतिपच्चण्डिकार्चने । उदये द्विमुहूर्तापि ग्राह्या सोदयगामिनी ।' रुद्रयामले—'अमायुक्ता सदा चैव प्रतिपन्निन्दिता मता । तत्र चेत्स्थापयेत्कुम्भं दुर्भिक्षं जायते ध्रुवम् । प्रतिपत्सद्वितीया स्यात्कुम्भारोपणकर्मणि ।' यत्तु कैश्चिदुक्तम् । न दर्शकलयेत्यादि शतयज्ञफलप्रदमित्यन्तान्यमायोगनिषेधकानि यानि च 'द्वितीयाशेषसंयुक्ता प्रतिपच्चण्डिकार्चने।मोहादथोपदेशाद्वा कृता पुत्रविनाशकृत् । आरम्भे नवरात्रस्य द्वितीयात्रुटिसंयुता।न केवलं तिथिं हन्ति वेधात्सा पुत्रसंपदः।' इत्यादीनि द्वितीयायोगनिषेधकानि तान्युभयविधान्यपि सर्वाणि निर्मूलानि । समूलत्वेऽपि वा परस्परं सत्प्रतिपक्षत्वादनिर्णायकानीति तत्प्रौढिवादमात्रम् । प्रत्यक्षतो देवीपुराणे सर्वेषामेवोपलम्भात् । वाक्योपपत्तिरपीत्थं कर्तव्या । न दर्शकलयेत्यादिवाक्यानि प्रतिपदः खण्डत्वे पूर्वविद्धानि निषेधकानि । द्वितीयाशेषसंयुक्तेत्यादिवाक्यानि तु यदामाविद्धा प्रतिपत्परदिने नास्ति तदा विद्धापि ग्राह्येति तत्पराण्येतद्विषयाण्येव । 'अमायुक्तैव कर्तव्या प्रतिपच्चण्डिकार्चने ।' इत्यादीनिनृसिंहप्रासादोदाहृतानीति । अत्रेदं तत्त्वम्—या पूर्वदिने षष्टिदण्डा भूत्वा परदिने त्रिमुहूर्तापि सा अमायोगाभावात्पूर्वैव ग्राह्या पूर्णत्वात् । 'आदित्योदयवेलायामारभ्य षष्टिनाडिकाः । तिथिस्तु सा हि शुद्धा स्यात्सार्वतिथ्यो ह्ययं विधिः।' इति नारदीयात् । यानि च द्वितीयायोगनिषेधकानि वचनानि तान्यपि शुद्धाधिकनिषेधपराणि । परदिने प्रतिपदोऽत्यन्तासत्त्वे तु प्रति-

दप्यमावास्येति युग्मवाक्याद्दर्शयुतैव ग्राह्येति । तदाह लल्लः—'तिथिः शरीरं तिथिरेव कारणम्' इत्यादि । कालतत्वविवेचनकारैस्तदनुसारिभिश्च माधवहेमाद्या-युक्तनक्तव्रतत्वानुरोधेन खण्डा प्रतिपत्प्रदोषव्यापिनी ग्राह्येत्युक्तम् । नक्तव्रतत्वं च न नक्तभोजनरूपत्वात्तस्य पाक्षिकत्वादङ्गत्वाच्च किं तु पूजारूपस्य प्रधानस्य नक्तकाल-साध्यत्वात् । तच्च 'निशि भ्रमन्ति भूतानि शक्तयः शूलभृद्यतः ।' इत्यादिसामान्यवच-नात् । 'आश्विने मासि मेघान्ते महिषासुरमर्दिनीम् । निशासु पूजयेद्भक्त्या सोपवासा-दिकं क्रमात् ।' तथा 'आश्विने मासि मेघान्ते प्रतिपद्या तिथिर्भवेत् । तस्यां नक्तं प्रकुर्वीत रात्रौ देवीं च पूजयेत् ।' तथा 'मासि चाश्वयुजे शुक्ले नवरात्रे विशेषतः । संपूज्य नवदुर्गां च नक्तं कुर्यात्समाहितः ।' नक्तं नक्तभोजनमिति पाक्षिकनक्तभो-जनपरामर्शः । तथा 'रात्रिव्रतमिदं देवि सर्वपापप्रणाशनम् । सर्वकामप्रदं नृणां सर्वशत्रुनिबर्हणम् ।' तथा 'रात्रिव्रतमिदं तस्य रात्रौ कर्तव्यतेष्यते ।' इत्यादि-देवीपुराणादिवचनेभ्यश्चावगम्यते । एवं च पूजारूपस्य प्रधानस्य रात्रिकालत्वे स्थिते 'कर्मणो यस्य यः कालः' इति वचनात् 'प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा ।' तिथिः शरीरमित्यादि नक्तव्रतेष्वित्यादिवचनाच्च प्रदोषव्यापिनी प्रति-पन्नवरात्रव्रते ग्राह्या अयमेव निर्णयो द्वितीयादिषु रात्रिपूजने द्रष्टव्यः । कौस्तुभे-ऽप्येवमेव । तत्र पूर्वदिन एव प्रदोषव्याप्तौ पूर्वा । एतद्विषयाण्येव अमायुक्तैव कर्त-व्येत्यादिनृसिंहप्रासादोदाहृतवचनानि । द्वितीयाशेषसंयुतेत्यादिलल्लसंहितावचनानि च । तथा 'द्वितीयादिकलोपेता प्रतिपच्चण्डिकार्चने । वर्जनीया प्रयत्नेन विप्रलेशो यथाम्भसि ।' धवलनिबन्धे देव्युवाच—'प्रतिपच्छेषसंयुक्तद्वितीयायां ममार्चनम् । कृतं धर्मं नाशयति संततिं पुत्रपौत्रिकीम् । अमायुक्तैव सा ग्राह्या प्रतिपच्चण्डिकार्चने । अन्यथाकरणे तावद्राज्यभङ्गः प्रजायते ।' इत्यादीनि च । दिनद्वये तद्व्याप्तावुत्तरदिन-द्वये तदव्याप्तावप्युत्तरैव, सायाह्नरूपगौणकालव्याप्तिलाभात् । एतद्विषयाण्येव द्विती-यायुक्तविधायकान्यमायुक्तनिषेधकानि वचनानि । द्विमुहूर्तापीत्यपिशब्देन कैमुत्य-न्यायप्रदर्शनात्कलादिशब्दा अविरुद्धाः । यत्तु—'आद्यास्तु नाडिकास्त्याज्याः षोडश द्वादशापि वा । अपराह्णे च कर्तव्यं शुद्धसंततिकाङ्क्षिभिः ।' इति वचनं, तत् 'आद्याः षोडश नाड्यस्तु लब्ध्वा यः कुरुते नरः । कलशस्थापनं तत्र अरिष्टं जायते ध्रुवम् ।' इति वचनान्तरैकवाक्यतया कुलाचारप्राप्तकलशस्थापनविषयम् । एवं द्वितीयाविद्ध-

प्रतिपद्विधायकानि वचनानि वस्तुतस्तद्विषयाण्येवेत्येव प्राहुः । तत्र प्रारम्भतिथेः खण्डत्वे समग्रत्वे वा देवीपूजनरूपं व्रतं कदा प्रारब्धव्यमिति संशये कालव्याप्त्या निर्णयार्थस्तस्य कालो निर्णेयः । अत्र गौडाः—'पूर्वाह्ण एव तत्कालस्तद्व्याप्त्यैव च निर्णयः ।' तथा हि देवीपुराणे—'प्रातरावाहयेद्देवीं प्रातरेव प्रवेशयेत् । प्रातः प्रातश्च संपूज्य प्रातरेव विसर्जयेत् ।' इति । अत्र प्रातःशब्दः पूर्वाह्णपरः । 'आश्विनस्य सिते पक्षे प्रतिपत्सु यथाक्रमम् । सुस्नातस्तिलतैलेन पूर्वाह्णे पूजयेच्छिवाम् ।' इति वचनेन नवतिथ्यधिकरणकप्रातःपूजा विधीयते । प्रतिपत्स्विति बहुवचनान्तस्य लिङ्गसमवायेन प्रतिपत्तदितरतिथिपरत्वादिति कौस्तुभे । अत एव कालतत्त्वविवेचने प्रतिपदादीत्युक्तम् । तथा तत्रैव 'भगवत्याः प्रवेशादिविसर्गान्ताश्च याः क्रियाः । तिथ्योरुदयगामिन्योः सर्वास्ताः कारयेद्बुधः ।' इत्यादि च । तस्मात्पूर्वाह्ण एव पूजादि कर्तव्यमित्याहुः । अयमेव मुख्यः पक्ष इति प्रतिभाति । 'पूर्वाह्णे दैविकं कर्म' इत्यादि । 'पूर्वाह्णो वै देवानाम्' इत्यादिश्रुतेः । 'शरत्काले महापूजा क्रियते या च वार्षिकी । सा कार्योदयगामिन्यां न तत्र तिथियुग्मता ।' इत्यादिनन्दिकेश्वरपुराणादिवचनाच्च । युग्मतेति न युग्मवाक्यानुरोधेन निर्णय इत्यर्थः । वार्षिकीत्यनेन संवत्सरस्यादौ चैत्रशुक्लप्रतिपद्युपक्रम्य नवम्यन्ता पूजाऽभिधीयते । ततश्च शरद्वसन्तयोस्तुल्य एव दुर्गोत्सवः कार्य इति फलितम् । निर्णयसिन्धौ तु गौडनिबन्धेषु विशेषनिर्णयादौदयिकी ग्राह्या । तत्रापि घटिकैकेत्यस्य मुहूर्तस्तुतित्वोक्तेर्द्विमुहूर्ता ग्राह्या । 'उदिते दैवतं भानौ' इत्यत्र 'द्विमुहूर्ता त्रिरह्नश्च' इति वचनादौदयिक्या द्विमुहूर्ताया एव ग्राह्यत्वनियमात् । तेन 'उदये द्विमुहूर्तापि' इत्याद्यनुसारोऽपि । 'मुहूर्तमात्रा कर्तव्या' इति द्विमुहूर्तस्तुतिरिति स्थितम् । एवममायुक्ताया निषेधादपि पूर्वाह्णस्य मुख्यकर्मकालत्वम् । तथा च देवीपुराणे—'कुहूकाष्ठोपसंयुक्तां वर्जयेत्प्रतिपत्तिथिम् । राज्यनाशाय सा प्रोक्ता निन्दिता चाश्वपूजने ।' इति । रुद्रयामले—'अमायुक्ता सदा चैव प्रतिपन्निन्दिता मम । तत्र चेत्स्थापयेत्कुम्भं दुर्भिक्षं जायते ध्रुवम् । प्रतिपत्सु द्वितीया सा कुम्भारोपणकर्मणि ।' इति । उदयकालिकतिथेः सविस्तरपूजापर्याप्तत्वे संक्षेपपूजायां कालिकापुराणे—'सम्यक्कल्पोदितां पूजां यदि कर्तुं न शक्नुयात् । उपचारांस्तथा दातुं पञ्चैनान्विचरेत्तदा । गन्धं पुष्पं च धूपं च दीपं नैवेद्यमेव च । अभावे तोयपुष्पाभ्यां तदभावे तु भक्तितः । संक्षेपपूजा कथिता' इति । यत्तु कैश्चिदुक्तं रुद्रयामलडामरवचनं निर्मू-

१—'नवरात्रमुपोषित' ।' इति पुस्तकान्तरे पाठः ।

त्वमिति। तन्न। तयोरपि वेदाङ्गत्वावगमादन्याङ्गवत्प्रामाण्यस्य स्वीकर्तव्यत्वात्। तदुक्तं शिवार्चनचन्द्रिकायां कपिलपञ्चरात्रे—'न वेदः प्रणवं त्यक्त्वा मन्त्रो वेदसमुत्थितः। तस्माद्वेदः परो मन्त्रो वेदाङ्गं चागमः स्मृतः। वश्याकर्षादिकं कर्म दृष्टादृष्टफलप्रदम्। वेदेन साध्यते सर्वं ग्रहयज्ञादिभिः किल। न वेदेन विना यज्ञा न वेदा यज्ञवर्जिताः। तस्माद्वेदः परो मन्त्रो न मन्त्रो वेदवर्जितः। न मन्त्रेऽत्राधिकारोऽस्ति शूद्राणा नियमः परः। मन्त्राभावादमन्त्रेण भाषितं सर्वकर्म हि।' इति। व्यवस्थापितं च शारदाटीकायामागमानां श्रुतिमूलत्वम्। प्रत्यक्षोपलभ्यमानरामपूर्वोत्तरतापनीयनृसिंहपूर्वोत्तरतापनीयसौराष्टाक्षरशिवपञ्चाक्षरश्रीविद्यात्मिकासु च साक्षात् श्रुतिराथर्वण्युपलभ्यत एव। अत एवोपासनाकाण्डमेव आगमशास्त्रात्मकं लोकप्रसिद्धम्। किं च ऋग्वेदचतुर्थाष्टकतृतीयाध्यायप्रथमवर्गे चतुर्थ्यामृचि श्रीविद्यामन्त्रोद्धारः श्रूयते। सा च—'चत्वार ईं बिभ्रति क्षेमयन्तो दशगर्भं च रसे धापयन्ते। त्रिधातवः परमा अस्य गावो दिवश्चरन्ति परिसद्यो अन्तान्' इति अस्या अर्थस्तु लक्ष्मीधरकृतसौन्दर्यलहरीटीकायां द्रष्टव्यः। तस्मात्सर्वथा रुद्रयामलडामरादि वेदाङ्गमेवेति सर्वैरभ्युपेयम्। निर्णयसिन्धौ तु—एषु वचनेषु कलशस्थापनग्रहणात् तदेव प्रथमे दिने निषिध्यते न तूपवासादि तस्य 'प्रतिपद्यप्यमावस्या' इति युग्मवाक्यात् 'शुक्ला स्यात्प्रतिपत्तिथिः प्रथमतः' इति दीपिकोक्तेः। शुक्लपक्षे दर्शविद्धेति माधवोक्तेश्च पूर्वदिने प्राप्तस्य बाधे मानाभावात् इति केचित्। वस्तुतस्तु पूर्वोक्तवाक्येषु चण्डिकार्चनपूजनग्रहणादुपवासादेश्चाङ्गत्वात्प्रधानदेवीपूजादावपि परेति युक्तम्। कलशस्थापनग्रहणं तूपलक्षणम्। अत एव देवलः—'व्रतोपवासनियमे घटिकैकापि या भवेत्। सा तिथिस्तद्दिने पूज्या विपरीता तु पैतृके।' इति स्थितम्। प्रसङ्गात् द्वितीयायुक्तप्रतिपदो ग्राह्यताबोधकानि अमायुक्ताया निषेधकान्यन्यान्यपि वाक्यानि लिख्यन्ते—'या चाश्वयुजमासे स्यात्प्रतिपद्भद्रयान्विता। शुद्धा ममार्चनं तस्यां शतयज्ञफलप्रदम्। देशभङ्गो भवेत्तत्र दुर्भिक्षं चोपजायते। नन्दायां दर्शयुक्तायां यत्र स्यान्मम पूजनम्। तस्माद्भद्रान्विता नन्दा नवरात्रे प्रशस्यते। आश्विने मासि मे भक्तैः कर्तव्या शुक्लपक्षगा। प्रतिपत्त्रिमुहूर्तापि पुत्रपौत्रप्रवर्धिनी। धनवृद्धिकरी पुंसां सर्वसौख्यकरी तथा। अतोऽन्यथा न कर्तव्या नवरात्रव्रते मम। योऽन्यथा कुरुते मोहाद्राजा पूजाविधौ मम। तस्य राष्ट्रे प्रजानाशं करिष्यामि न संशयः। साऽमया सहिता ग्राह्या न कदाचिद्विचक्षणैः। सर्वक्षयकरी यस्मात्तस्मात्तां

परिवर्जयेत् । अमावास्यायुतां कुर्याद्यदि कश्चित्कदाचन । राज्यनाशमवाप्नोति पञ्चत्वं चाधिगच्छति । पूर्वविद्धा तु या शुक्ला भवेत्प्रतिपदाश्विनी । नवरात्रव्रतं तस्यां न कार्यं शुभमिच्छता।' इत्यादि तथा 'यथा द्वादशभिर्मासैर्मासो वृद्धो मलिम्लुचः । तथा तिथिस्त्वहोरात्रवृद्धौ प्रोक्ता मलिम्लुचा । यथा मलिम्लुचः पूर्वो मासो दैवस्तथोत्तरः । त्याज्या तिथिस्तथा पूर्वा ग्राह्या दैवे तथोत्तरा।' इत्यादि । प्रतिपदि चित्रावैधृत्यादियोगनिषेधो भार्गवार्चनदीपिकायां देवीपुराणे-'प्रारभ्यं नवरात्रे स्याद्धित्वा चित्रां च वैधृतिम् ।' इति । 'त्वाष्ट्रवैधृतियुक्ता चेत्प्रतिपच्चण्डिकार्चने । तयोरन्ते विधातव्यं कलशारोपणं गुह ।' इति । रुद्रयामलेऽपि-'वैधृतौ पुत्रनाशः स्याच्चित्रायां धननाशनम् । तस्मान्न स्थापयेत्कुंभं चित्रायां वैधृतौ तथा ।' इति । तत्र विशेष उक्तः कात्यायनेन-'प्रतिपद्याश्विने मासि भवेद्वैधृतिचित्रया । आद्यपादौ परित्यज्य प्रारभेन्नवरात्रकम् ।' भविष्ये-' चित्रावैधृतिसंयुक्ता प्रतिपच्चेद्भवेन्नृप । त्याज्या ह्यंशास्त्रयस्त्वाद्यास्तुरीयांशे तु पूजनम् ।' इति । चित्रावैधृतियुक्तापि द्वितीयायुक्ता चेत्सैव ग्राह्या इत्युक्तं दुर्गोत्सवे-' अर्द्धान्विता चेत्प्रतिपत्तु लभ्यते विरुद्धयोगैरपि संगता सती । सैवापराह्णे विबुधैर्विधेया स्त्रीपुत्रराज्यादिविवृद्धिहेतुः ।' इति । रुद्रयामले-' संपूर्णा प्रतिपद्येव चित्रायुक्ता यदा भवेत् । वैधृत्या वापि युक्ता स्यात्तदा मध्यंदिने रवौ । अभिजित्तु मुहूर्तं यत्तत्र स्थापनमिष्यते ।' इति । एवं रात्रौ चित्रावैधृत्योरन्तलाभेऽपि दिवैव कलशस्थापनं कार्यं न रात्रौ ' न च कुम्भाभिषेचनम् ' इति वचनेन रात्रौ तन्निषेधात् । विष्णुधर्मे-'भास्करोदयमारभ्य यावत्तु दश नाडिकाः । प्रातःकाल इति प्रोक्तः स्थापनारोपणादिषु ।' इति ।

## अथ विस्तरेण नवरात्रकृत्यम् ।

'आश्विने मासि शुक्ले तु कर्तव्यं नवरात्रकम्।प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत्।' भविष्योत्तरे-'एवं च विन्ध्यवासिन्यां नवरात्रोपवासतः । एकभुक्तेन नक्तेन स्वशक्त्याऽयाचितेन वा । पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे।गृहे गृहे शक्तिपरैर्ग्रामे ग्रामे वने वने । स्नातैः प्रमुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियैर्नृप । वैश्यैः शूद्रैर्भक्तियुतैर्म्लेच्छैरन्यैश्च मानवैः । स्त्रीभिश्च कुरुशार्दूल तद्विधानमिदं शृणु ।' इति । विन्ध्यवासिन्यामधिष्ठाने देवी पूजनीयेति संभवाभिप्रायेण न तु नियतम् । स्थाने स्थाने पुरे गेहे तदसंभवात् । अत्रोपवासादिदेवीपूजाकुमारिकापूजादिबहुकर्माभिधानेऽपि पूजाया एव प्राधान्यम् ।

[पू]जयित्वाश्विने मासि विशोको जायते नरः।' इति हेमाद्रौ भविष्ये तस्या एव फल-[सं]बंधावगमात्, व्रतत्वोक्तेश्च । तथा हि भागवते—'चेरुर्हविष्यं भुञ्जानाः कात्यायन्य-[र्च]नव्रतम्।' इति । देवीपुराणेऽपि शारदीं पूजामुपक्रम्योक्तम्—'महाव्रतं महापुण्यं शंक-राद्यैरनुष्ठितम् । कर्तव्यं सुरराजेन्द्र देवीभक्तिसमन्वितैः।' इति । तस्या एव हि नत्रै-वान्यद्वारापि कर्तव्यत्वाभिधानेनावश्यकता प्रतीयते । 'स्वयं वाप्यन्यतो वापि पूजये-त्पूजयीत वा।' इति । पूजाया एव त्रिविधत्वमुक्तं स्कन्दपुराणे भविष्ये च—'शारदी चण्डिकापूजा त्रिविधा परिगीयते । सात्त्विकी जपयज्ञाद्यैर्नैवेद्यैश्च निरामिषैः।माहात्म्यं भगवत्याश्च पुराणादिषु कीर्तितम् । पाठस्तस्य जपः प्रोक्तः पठेद्देवीमनास्तथा । राजसी बलिदानेन नैवेद्यैः सामिषैस्तथा । सुरामांसाद्युपाहारैर्जपहोमैर्विना तु या । विना मंत्रांस्तामसी स्यात्किरातानां तु संमता । ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च मानवैः । एवं नानाम्लेच्छगणैः पूज्यते सर्वदस्युभिः।' अत एव होमादेरपि पूजात्वमुक्तं लिङ्गपु-राणे—'शारदी या महापूजा चतुःकर्ममयी शुभा । तां तिथिं यत्र मासाद्ये कुर्याद्भक्त्या विधानतः।' इति । अत्र स्नपनपूजनबलिदानहोमरूपाणि चत्वारि कर्माणीत्युक्तं काल-तत्त्वविवेचने । तिथित्रयं सप्तम्यादि मदनरत्ने देवीपुराणे—'कन्यासंस्थे रवौ शुक्र शुक्लामारभ्य नन्दिकाम् । अयाची ह्यथ वैकाशी नक्ताशी वापि वाग्यदः । प्रातः स्नायी जितद्वन्द्वस्त्रिकालं शिवपूजकः ॥ जपहोमसमायुक्तः कन्यकां भोजयेत्सदा ।' शिवा च शिवश्च शिवौ तयोः पूजकः । मयूखे—'भूमौ शयीत चामन्त्र्य कुमारीं भोजयेन्मुदा - वस्त्रालङ्कारदानैश्च संतोष्या प्रतिवासरम् । बलिं च प्रत्यहं दद्यादोदनं मांसमाषवत् । त्रिकालं पूजयेद्देवीं जपस्तोत्रपरायणः ।'इति । नन्दिका प्रतिपदिति मैथिलाः । षष्ठीति गौडाः । सा च काम्या नित्या च । 'एवमन्यैरपि तथा देव्याः कार्यं प्रपूजनम् । विभूति-मतुलां लब्धुं चतुर्वर्गप्रदायकम् ।' इति । 'यो मोहादथ वालस्याद्देवीं दुर्गां महोत्सवे । न पूजयति दम्भाद्वा द्वेषाद्वाऽप्यथ भैरव । क्रुद्धा भगवती तस्य कामानिष्टान्निहन्ति वै ।' इति कालिकापुराणे फलनिन्दाश्रुतेः । भविष्योत्तरेऽपि—'भवानीतुष्टये पार्थ संवत्सरसुखाय च । भूतप्रेतपिशाचानां नाशार्थं चोत्सवाय च ।' इति । अन्यत्रापि—'पूजयित्वाश्विने मासि विशोको जायते नरः।' इति । 'वर्षेवर्षे विधातव्यं स्थापनं च विसर्जनम्।' इति तिथितत्त्वे देवीपुराणाच्च । पूजा च रात्रावपि कार्या—'आश्विने मासि मेघान्ते महिषासुरमर्दिनीम् । निशासु पूजयेद्भक्त्या सोपवासादिकः क्रमात् ।' इति देवीपुराणात् । संग्रहेऽपि—'आश्विने मासि मेघान्ते प्रतिपद्या तिथिर्भवेत् ।

तस्यां नक्तं प्रकुर्वीत रात्रौ देवीं प्रपूजयेत् । रात्रिरूपा यतो देवी दिवारूपो महेश्वरः । रात्रिव्रतमिदं देवि सर्वपापप्रणाशनम् । सर्वकामप्रदं नृणां सर्वशत्रुनिबर्हणम् । रात्रिव्रतमिदं तस्य रात्रौ कर्तव्यतेष्यते । नरकव्रतमिदं तस्मादन्यथा नरके गतिः ।' इत्यादिवचनाच्च । अष्टम्यां विशेषतो रात्रौ पूजा विहिता । 'निशायां पूजिता देवी वैष्णवी पापनाशिनी । तस्मात्सर्वप्रयत्नेन अष्टम्यां निशि पूजयेत् ।' इति । 'कन्यासंस्थे रवावीषे या शुक्ला तिथिरष्टमी । तस्यां रात्रौ पूजितव्या महाविभवविस्तरैः । ' इति च । यत्तु–'अत्यर्थं पूजनीया सा तस्मिन्नहनि मानवैः ।' इति । तत्राहःपदं तिथिरूपचन्द्रदिनपरं तस्मिन्निति प्रकृताष्टमी-परामर्शात् । ननु ' आश्विनस्यासिते पक्षे' इत्यादिपूर्वोक्तवचनैः रात्रिपूजाऽभिहिता । ' प्रातरावाहयेद्देवीम् ' इत्यादिवचनैश्च पूर्वाह्णे पूजनमभिहितम्, एवमेतेषां वचनानां परस्परविरोधे कुत्र पूजनं कर्तव्यमित्यनिर्णय इति चेत् । अत्रोच्यते–प्रातर्मध्याह्नयोः संक्षेपपूजनम् । अङ्गादिविस्तरपूजनं तु रात्रावेव । रात्रौ शक्तिपूजनस्य फलाधिक्यात् । एवं सति प्रातरेव कलशस्थापनादिपूर्वकं देवीस्थापनम् । ' पूर्वाह्णे पूजयेच्छिवाम् ' इत्यादिवचनानि प्रथमकालपूजार्थकानि च संगच्छन्ते । तथा च देवीपुराणे काल-त्रयेऽपि पूजनमुक्तम्–'त्रिकालं पूजयेद्देवीं जपस्तोत्रपरायणः ।' इति । नवरात्ररूपं कर्म तु दशमीपर्यन्तं कार्यम् । ' संपूज्य प्रेषणं कुर्याद्दशम्यां शाबरोत्सवैः ।' इति भविष्यो-त्तरात् । अत्र प्रतिपदमारभ्य नवमीपर्यन्तं वृद्ध्या पूजाजपकुमारीपूजनादिकं विहितम् । ' यदाद्ये दिवसे कुर्याच्चण्डिकापूजनादिकम् । द्विगुणं तद्द्वितीयेऽह्नि त्रिगुणं तत्परेऽहनि। नवमीतिथिपर्यन्तं वृद्ध्या पूजाजपादिकम् ।' इति । अत्र केचित्–नवरात्रशब्दो नवाहो-रात्रपरः इति मत्वा ' तिथिवृद्धौ तिथिह्रासे नवरात्रमपार्थकम् ।' इति पूर्वपक्षयित्वा ' वृद्धौ समाप्तिरष्टम्यां ह्रासेमा प्रतिपन्निशि । प्रारम्भो नवचण्ड्यास्तु नवरात्रमतोऽर्थ-वत् ।' इति देवीपुराणवचनेन समादधिरे । अन्ये तु वचनमिदं निर्मूलमिति मत्वा तिथिविशेषपरतामेवाहुः । युक्तं चैतत् । अमावास्यारात्रौ प्रतिपत्प्रवेशाभावेऽपि प्रतिपत्प्रभृत्येवात्यन्तापचयेनाष्टरात्रो यजने तिथिवृद्ध्या वाष्टम्यहोरात्रास्पर्शिनवमीं गृहीत्वा दशरात्रो यजने तिथिपरत्वस्यावश्यकत्वात् । प्रारम्भो नवरात्रस्येत्यादौ तु नवरात्रशब्दस्य लक्षणया कर्मपरत्वम् । अत्र कालतत्त्वविवेचनकाराः–नवरात्रशब्दो रात्रिशब्दस्य तिथिविषयपूर्ववाक्यैकवाक्यतयौत्सर्गिकसंपूर्णतिथिरेव प्रायो व्यवहार-विषयत्वेन संप्रतिपत्त्या च तिथिलक्ष्यकत्वात् । सप्तम्यन्तः कालरूपगुणविधिः द्विती-

यान्तोऽपि क्वचिच्छ्रुतः। "कालाध्वनोरत्यन्तसंयोगे" इति वचनात्तादृश एव न तु नामधेयम्। तत्रैव ग्रन्थे वाक्यान्तरेण प्रवृत्तिनिमित्तकालसंबन्धस्याविधानेन तत्प्रख्य-न्यायाभावात्। श्रुत्या गुणविधाने संभवति बहुव्रीहौ समासान्तानुपपत्त्या समाहार-द्विगुत्वे तु रात्रिसमुदायवचनतया निरूढप्रायस्य लक्षणया नामधेयत्वानौचित्यात्। 'नवरात्रोपवासतः' इत्यत्र कथंचिदुपवाससामानाधिकरण्यसंभवेऽपि प्रधानेन पूजनेन वैकल्पिकैकभुक्तादिनित्यदेवीपूजनादिष्वघटितसमुदायेन वा सामानाधिकरण्याभा-वाच्च। नच तिथिह्रासवृद्ध्योर्गुणविध्यसंभवान्नित्यवच्छ्रवणविरोधः। नामधेयत्वं तु यदा कदाचित्प्रवृत्तिनिमित्तसद्भावेनाप्युपपन्नम्। वैश्वदेवशब्दस्यैवैकदेवतासंबन्धे-नेति वाच्यम्। रात्रिशब्दस्य तिथिपरत्वेन ह्रासवृद्ध्योरपि तद्गुणविधिसंभवेनावि-रोधात्। ह्रासे तिथिद्वयप्रयुक्तस्य पूजादेस्तत्रानुष्ठानेन वृद्धौ चैकतिथिप्रयुक्त-स्य प्रक्रान्तनियमभङ्गभयादावृत्त्यानुष्ठानेन सर्वदा नवतिथिप्रयुक्तकर्मसत्त्वादिति। दीक्षितनिर्णयसिन्धुकारप्रभृतयोऽप्येवमाहुः। अत्र मुख्यकल्पेऽसमर्थस्यान्येपि पक्षा उक्ताः 'अथात्र नवरात्रं च सप्तपञ्चत्रिका दिवा। एकभक्तेन नक्तेनायाचितोपो-षितैः क्रमात्।' इति। अत्रादिशब्देनाष्टरात्रद्विरात्रैकरात्रपक्षाः सगृहीताः। भविष्यपु-राणे—'व्रती प्रपूजयेद्देवीं सप्तम्यादिदिनत्रयम्।' इति। भविष्योत्तरेऽपि—'आश्विने मासि शुक्ले तु कर्तव्यं नवरात्रकम्। प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत्। त्रिरात्रं वापि कर्तव्यं सप्तम्यादि यथाक्रमम्।' इति। अष्टमीनवम्योरेव वा देवीपूजनं कर्तव्यम् 'अष्टम्यां च नवम्यां च जन्ममोक्षप्रदां शिवाम्। पूजयित्वाश्विने मासि विशोको जायते नरः।' इति। केवलाष्टमीकेवलनवमीकल्पावुक्तौ कालिकापुराणे—'यस्त्वेक-स्यामथाष्टम्यां नवम्यां वापि साधकः। पूजयेद्वरदां देवीं महाविभवविस्तरैः।' इति। गोविन्दार्णवे देवीपुराणेऽपि—'नवरात्रव्रतेऽशक्तस्त्रिरात्रं चैकरात्रकम्। व्रतं चरति यो भक्तस्तस्मै दास्यामि वाञ्छितम्।' इति। भविष्ये—'प्रथमा द्वितीया तृतीया चतुर्थी नराधिप। एतास्तु एकभुक्तेन प्रवदन्ति मनीषिणः।' इति। नेया इति शेषः। पञ्चमी च तथा षष्ठी सप्तमी चाष्टमीषु च। उपवासपरो भूत्वा पूजयेच्चण्डिकां बुधः।' इति। सप्तरात्रपक्षो रुद्रयामले—'दुर्गोत्सवे स्मृतं देवि उपवासस्य सप्तकम्। अष्टमे दिवसे होमस्ततः किंचित्तु भक्षयेत्।' इति। पञ्चरात्रपक्षो भविष्ये—'एकभुक्तस्तु पञ्चम्यां षष्ठ्यां नक्तं प्रवर्तयेत्। अयाचितस्तु सप्तम्यामष्टम्यां तु उपोषितः। नवम्यां पारणं कुर्यादित्येवं पञ्चरात्रकम्।' इति। षष्ठ्यादिपक्षोऽप्युक्तः कालिकापुराणे—'बोधयेद्बिल्व-

शाखायां षष्ठ्यां देवीं फलेषु च । सप्तम्यां बिल्वशाखायां तामाहृत्य प्रपूजयेत् । पुनः पूजां तथाऽष्टम्यां विशेषेण समाचरेत् । जागरं च स्वयं कुर्याद्बलिदानं महानिशि । प्रभूतबलिदानं च नवम्यां विधिवच्चरेत् । ध्यायेद्दशभुजां देवीं दुर्गातन्त्रेण पूजयेत् । विसर्जनं दशम्यां तु कुर्याद्वै साऽऽरवोत्सवैः । धूलिकर्दमविक्षेपैः क्रीडाकौतुकमङ्गलैः । भगलिङ्गाभिधानैश्च भगलिङ्गप्रगीतकैः ।' इति । कल्पान्तरप्रतिपादकदेवीपुराणेऽपि—'इषे मासि सिते पक्षे कन्याराशिगते रवौ । नवम्यां बोधयेद्देवीं क्रीडाकौतुकमङ्गलैः । ज्येष्ठानक्षत्रयुक्तायां षष्ठ्यां बिल्वाभिमन्त्रणम् । सप्तम्यां मूलयुक्तायां पत्रिकायाः प्रवेशनम् । पूर्वाषाढायुताष्टम्यां पूजाहोमाद्युपोषणम् । उत्तरेण नवम्यां तु बलिभिः पूजयेच्छिवाम् । श्रवणेन दशम्यां तु प्रणिपत्य विसर्जयेत् ।' इति । अत्र देवीपूजाप्रकार उक्तो रुद्रयामले—'स्नानं माङ्गलिकं कृत्वा ततो देवीं प्रपूजयेत् । शुभाभिर्मृत्तिकाभिश्च पूर्वं कृत्वा तु वेदिकाम् । यवान्वै वापयेत्तत्र गोधूमैश्चापि संयुतान् । तत्र संस्थापयेत्कुम्भं विधिना मन्त्रपूर्वकम् । सौवर्णं राजतं वापि ताम्रं मृण्मयजं तु वा । प्रतिमां पूजयेत्तत्र' इति । प्रतिमां तु मण्डलमध्यस्थापितकलशोपरि स्थापयित्वा पूजयेत् । 'पूज्या मण्डलकुम्भस्था' इति देवीपुराणात् । सा च हेमादिमयी भवति 'तस्मिन्देवी प्रकर्तव्या हैमी वा राजती तथा । मृद्वार्क्षी लक्षणोपेता पट्टे शूलेऽथ पूजयेत् ।' तथा 'हैमराजतमृद्धातुशैलचित्रार्पितापि वा । खड्गे शूलेऽर्चिता देवी सर्वकामफलप्रदा ।' तथा 'मृन्मयीं प्रतिमां कृत्वा बिल्वैर्मां यस्तु पूजयेत् । आत्मवित्तानुसारेण स लभेन्मौक्तिकं फलम् ।' इत्यादिदेवीपुराणादिवचनात् । अन्यत्रापि 'काञ्चनी राजती ताम्री पैत्तली मृन्मयी तथा । वार्क्षी मणिमयी चैव वर्णकैर्लिखिता तथा ।' इति । अन्यत्रापि 'कांस्या विभवतः शुभा' इति । हयशीर्षपञ्चरात्रे—'मृन्मयी दारुघटिता लोहजा रत्नजा तथा । शैलजा गन्धजा चैव कौसुमी सप्तधा स्मृता । कौसुमी गन्धजा चैव मृन्मयी प्रतिमा हिता । तत्कालपूजिताश्चैताः सर्वकामफलप्रदाः ।' अथासां फलानि—'दारुजा कामदा प्रोक्ता सौवर्णी भुक्तिमुक्तिदा । राजती स्वर्गसुखदा ताम्री ह्यायुर्विवर्धिनी । कांस्या बह्वापदं हन्ति रैतिकी शत्रुनाशिनी । सर्वभोगप्रदा शैली स्फाटिकी मोक्षकारिका । महाभोगप्रदा ख्याता मृन्मयी खलु शोभना ।' देवीमूर्तिस्थापनं दुर्गाभक्तितरङ्गिण्यां देवीपुराणे-'याम्यास्या शुभदा दुर्गा पूर्वास्या जयवर्धिनी । पश्चिमाभिमुखी स्थाप्या न स्थाप्या सौम्यदिङ्मुखी ।' प्रतिमाभावे विशेषस्तत्रैव—

'यद्यद्यस्यायुधं प्रोक्तं तस्मिंस्तस्मिंस्तु पूजयेत् । देवी भक्त्याऽर्चिता पुंसां राज्यायुः-सुतसौख्यदा ।' कृत्यतत्त्वार्णवे कालिकापुराणे—'लिङ्गस्थां पूजयेद्देवीं मण्डलस्थां तथैव च । पुस्तकस्थां महादेवीं पावके प्रतिमासु च । चित्रे च त्रिशिखे खड्गे जलस्थां वापि पूजयेत् ।' चित्रमृन्मय्यादौ स्नानाद्यसंभवे तत्रैवोक्तम्—' सद्यः स्निग्धे मृन्मये वा सर्पिःसिन्दूरजे तथा । श्रीचन्दनप्रतिष्ठे वा लेपजे प्रतिमातनौ । अन्तिके स्थापिते खड्गे स्थापयेद्दर्पणेऽथवा ।' इति । अन्यत्रापि—'अङ्गुष्ठपर्वमारभ्य वितस्तिर्यावदेव तु । गृहे तु प्रतिमा कार्या नाधिका शस्यते बुधैः ।' इति । 'मानाङ्गुलप्रमाणेन दशमं चाङ्गुलात्मिका । गृहे तु प्रतिमा पूज्या नाधिका हि प्रशस्यते ।' इति । 'सौम्या तु हस्तमात्रा वसुदा हस्तद्वयोच्छ्रिता प्रतिमा । क्षेमसुभिक्षाय भवेत्त्रिचतुर्हस्तप्रमाणा च ।' इति तु स्थापितप्रतिमाविषयं ज्ञेयम् । मृन्मय्यां विशेष उक्तः—'मृन्मयीं प्रतिमां वक्ष्ये यथावत्तां निबोध मे । पक्काऽपक्का द्विधा प्रोक्ता मृन्मयी प्रतिमा क्रमात् । सर्वे लोका न शंसन्ति प्रतिमां दग्धमृन्मयीम् । अपक्का प्रतिमा शस्ता सैव कार्या विचक्षणैः । सुधायाश्चैव कर्तव्या नाश्मचूर्णैः कदाचन ।' अथ मृद्भेदः—'मृदैव मृन्मयीं कुर्याद्यथावदनुपूर्वशः । ब्राह्मणस्य सिता मृद्वै क्षत्रियस्यारुणा स्मृता ।' अन्यच्च—'नृपभयमत्यङ्गायां हीनायामल्पता कर्तुः । क्षामोदर्यां क्षुद्भयमर्थविनाशः कृशाङ्गायाम् । मरणं तु सक्षतायां शस्त्रनिपातेन निर्दिशेत्कर्तुः । वामे विनता पत्नीं दक्षे विनता हिनस्त्यायुः । अन्धत्वमूर्ध्वदृष्टौ करोति चिन्तामधोमुखी दृष्टिः । सर्वप्रतिमास्वेवं शुभाशुभं भास्करोक्तमवगच्छेत् ।' इति । तथाऽन्यत्रापि—' नाधिकाङ्गी न हीनाङ्गी कर्तव्या देवता क्वचित् । अधिका शिल्पिनं हन्यात्कृशा चैवार्थनाशिनी । कृशोदरी तु दुर्भिक्षं निर्मांसा धननाशिनी । वक्रनासा तु दुःखाय संक्षिप्ताङ्गी भयंकरी । चिपिटा दुःखशोकाय अनेत्रा नेत्रनाशिनी । दुःखदा हीनवक्त्रा तु' इत्यादि । 'पाणिपादविहीनायां जायते नरको महान् । जङ्घाहीना च या मूर्तिः शत्रुकल्याणकारिणी । पुत्रमित्रविनाशाय हीना वक्षःस्थले तु या । संपूर्णावयवा या तु आयुर्लक्ष्मीप्रदा सदा । एवं लक्षणमासाद्य कर्तव्या मूर्तिरुत्तमा ।' इति । अन्यत्र विशेषः 'खण्डिते स्फुटिते भ्रष्टे दग्धे मानविवर्जिते । यागहीनेऽथ वोच्छिष्टे पतिते दुष्टभूमिषु । अन्यमन्त्रार्चिते चैव पतितस्पर्शदूषिते । दशस्वेतेषु नो चक्रुः संनिधानं दिवौकसः ।' अत्र मण्डपादिकमपि कुर्यात् । तदुक्तं निर्णयामृते भविष्योत्तरे—'देव्या गृहं प्रकर्तव्यं चतुरस्रं सुशोभनम् । रहस्यं स्वस्तिकाद्यैश्च चर्चितं वस्त्र-

मण्डितम् । गौरमृद्गोमयाभ्यां च लिप्तं शस्त्रसमन्वितम् । तन्मध्ये वेदिका कार्या चतुर्हस्ता समा शुभा । तस्यां सिंहासनं क्षौमकंबलाजिनसंयुतम् । तत्र दुर्गां प्रतिष्ठाप्य सर्वलक्षणसंयुताम् । सर्वदेवमयीं प्रौढयौवनोन्मादशालिनीम् । भुजैश्चतुर्भी रुचिरैर्दशभिर्वा विभूषिताम् । तप्तहाटकवर्णाभां त्रिनेत्रां शशिशेखराम् । पीताम्बरपरीधानां नीलकौशेयसंयुताम् । ग्रैवेयहारकेयूरनूपुराभरणान्विताम् । नानारत्नविचित्रेण मुकुटेन विराजिताम् । अनेककुसुमाकीर्णां कंपर्देन सुशोभिताम् । नितम्बबिम्बसंबद्धकिङ्किणीक्वणनादिताम् । शूलचक्रदण्डशक्तिवज्रपाशासिधारिणीम् । घण्टाक्षमालाकरकपानपात्रलसत्कराम् । तदग्रे छिन्नशिरसं महिषं रुधिरप्लुतम् । निःसृतार्धतनुं कुन्तनाराचमसिधारिणम् । देवीकरधृतग्रीवं शूलेनोरसि ताडितम् । दैत्यं करालदंष्ट्रास्यं विद्युत्कपिलमूर्द्धजम् । नागपाशेन संक्षिप्तं हर्यक्षेणापि विप्लुतम् । वमद्रुधिरवक्त्रेण ह्युन्नतोर्ध्वसटं रुषा । अर्धलाङ्गूलदण्डेन दण्डाधिष्ठानशोभिना । सर्वतो मातृचक्रेण सेव्यमानां सुरैस्तथा । पूजयेत्प्रयतो देवीं नरो नियममास्थितः ।' इति । वेदिकोणेष्वपि कलशस्थापनविधिना चत्वारः कलशाः स्थाप्याः । 'चतुरः कलशान्यस्तु दद्याद्देवगृहे नरः । चतुःसमुद्रवलयां स तु भुङ्क्ते वसुंधराम् ।' इति विष्णुधर्मोत्तरात् । ततः पूजनं कुर्यात् ।

अथ पूजाविधिः । तत्र प्रतिपदि पूर्वाह्णे पुष्पतैलादिना कृतमङ्गलस्नानो नित्यक्रियां कृत्वा नवे वाससी परिधाय चन्दनमृगमदकुङ्कुमैः सर्वाङ्गमनुलिप्य त्रिपुंड्रं कृत्वा पूर्वाभिमुखो देवीमुखो वा समुपविश्य सोपग्रहपाणिराचम्य ममेह जन्मनि दुर्गाप्रीतिद्वारा सर्वपापक्षयपूर्वकदीर्घायुर्विपुलधनपुत्रपौत्राद्यनवच्छिन्नसंततिवृद्धिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयसदाभीष्टसिद्ध्यर्थं शारदनवरात्रप्रतिपदि विहितकलशस्थापनदुर्गापूजाकुमारीपूजादि करिष्ये इति संकल्प्य गणपतिपूजनं स्वस्तिवाचनं कृत्वा शुभे दारुमये देवीपूजार्थमेव निर्मिते कदलीस्तम्भादिमण्डिते गृहे उत्तमवस्त्रादिभूषिते पूर्वगृहे एव वा चतुरस्रचतुर्हस्तवेदिकोपरि सर्वतोभद्रादिमण्डलं विधाय मण्डपं च कृत्वा तत्र प्रतिमास्थापनं कुर्यात् । तत्र क्रमः । आदौ 'गणानां त्वा–' इति मन्त्रेण गणेशं संस्थाप्य तदनन्तरम् 'हे हेरम्ब त्वमेह्येहि चाम्बिकात्र्यम्बकात्मज । सिद्धिबुद्धिपते त्र्यक्ष लक्षसूर्यसमप्रभ । नागास्य नागहार त्वं गणराज् चतुर्भुज । भूषित स्वायुधैर्दिव्यैः पाशाङ्कुशपरश्वधैः । आवाहयामि पूजार्थं रक्षार्थं च मम क्रतोः । इहागत्य गृहाण त्वं पूजां कर्तुश्च रक्ष मे । आवा-

ह्येवं गणेशानं पूजाद्रव्यैः प्रपूजयेत् । ' इति । एवं यथासंभवं पूजयित्वाऽर्घ्यपात्रे गन्धादिकं दत्त्वाऽर्घ्यं दद्यात् । तत्र मन्त्रः— 'रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक । भक्तानामभयं कर्ता त्राता भव भवार्णवात् । द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो । वरद त्वं वरं देहि वाञ्छितं वाञ्छितार्थद । गृहाणार्घ्यमिदं देव सर्वदेवनमस्कृत । अनेन फलदानेन फलदोऽस्तु सदा मम।' इति। 'विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय । नागाननाय श्रुतियज्ञविभूषणाय गौरीसुताय गणनाथ नमो नमस्ते । भक्तार्तिनाशनपराय गणेश्वराय सर्वेश्वराय शुभदाय सुरेश्वराय। विद्याधराय विकटाय च वामनाय भक्तप्रसन्नवरदाय नमो नमस्ते । विघ्नराज नमस्तेऽस्तु उमापुत्राघनाशन । यदुद्दिश्य कृतं तेऽस्तु मया भक्त्या प्रपूजनम् । त्वां विघ्नशत्रुदलनेति च सुन्दरेति भक्तिप्रियेति सुखदेति फलप्रदेति । विद्याप्रदेत्यघहरेति च ये स्तुवन्ति तेभ्यो गणेश वरदो भव नित्यमेव । तेन तुष्टो ममाप्याशु सर्वान्कामान्प्रपूरय । विघ्नान्नाशय मे सर्वान्दुर्ग्रहादिभिरागतान् । त्वत्प्रसादेन कार्याणि सर्वाणीह करोम्यहम् । शत्रूणां बुद्धिनाशार्थं मित्राणामुदयाय च । नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः । विश्वरूपस्वरूपाय नमस्ते रुद्ररूपिणे । भक्तिप्रियाय देवाय नमस्तुभ्यं विनायक । लम्बोदर नमस्तेऽस्तु सततं मोदकप्रिय । अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा।' इति प्रार्थयेत् । ततः "मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षिताम् । पिपृतान्नो भरीमभिः " इति भूमिं स्पृष्ट्वा "ओषधयः संवदन्ते सोमेन सह राज्ञा । यस्मै कृणोति ब्राह्मणस्तं राजन्पारयामसि" इति यवान्निक्षिप्य "आ कलशेषु धावति पवित्रैः परिषिच्यते। उक्थैर्यज्ञेषु वर्धते" इति कलशं संस्थाप्य "इमं मे गङ्गे यमुने सरस्वति शुतुद्रिस्तोमं सचता परुष्ण्या। असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया" इति जलेनापूर्य । "गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्" इति गन्धं निक्षिप्य । "या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा । मनैनु बभ्रूणामहं शतं धामानि सप्त च" इति सर्वौषधीः "काण्डात्काण्डात्प्ररोहन्ति परुषः परुषः परि।एवानो दूर्वे प्रतनु सहस्रेण शतेन च" इति दूर्वाः "अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता । गोभाज इत्किलासथ यत्सनवथ पूरुषम् " इति पञ्चपल्लवान् " स्योना पृथिवी भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः " इति सप्त मृदः "याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो मुञ्चत्वंहसः" इति फलम्।

"स हि रत्नानि दाशुषे सुवाति सविता भगः । तं भागं चित्रमीमहे" इति पञ्चरत्नानि । "हिरण्यरूपः सहिरण्यसंदृगपांनपात्सेदु हिरण्यवर्णः । हिरण्ययात्परियोनेर्निषद्या हिरण्यदादत्यन्नमस्मै" इति हिरण्यं निक्षिप्य। "युवा सुवासाः परिवीत आगात्स उश्रेयान्भवति जायमानः । तं धीरासः कवय उन्नयन्ति स्वाध्यो३मनसा देवयन्तः" इति वस्त्रेणावेष्टय "पूर्णादर्वि परापत सुपूर्णा पुनरापत । वस्नेव विक्रीणावहाइषमूर्जं शतक्रतो" इति पूर्णपात्रं निधाय।तत्र वरुणं संस्थाप्य "तत्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेळमानो वरुणेहबोध्युरुशंसमान आयुःप्रमोषीः" इति वरुणं संपूज्य पुष्पाञ्जलिं दद्यात्। 'कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः।मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः। कुक्षौ तु सागराःसप्त सप्तद्वीपा वसुन्धरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः । अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः । अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा । आयान्तु यजमानस्य दुरितक्षयकारिकाः । सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयान्तु यजमानस्य दुरितक्षयकारकाः।' इति कलशं प्रार्थयेत् ॥ इति ऋग्वेदिनां कलशस्थापनविधिः । अनेनैव प्रकारेण चतुर्ष्वपि वेदिकोणेषु कलशचतुष्टयं स्थापयेत् ॥ अथ कात्यायनानां कलशस्थापनविधिर्लिख्यते ॥ मही द्यौरिति भूमिं स्पृष्ट्वा या ओषधीरित्यनेन धान्यमसीत्यनेन वा यवान्प्रकिरेत् 'धान्यमसि धिनुहि देवान्प्राणाय त्वोदानाय त्वा व्यानाय त्वा' 'आजिघ्र कलशम्'–इति कलशं संस्थापयेत् । "आजिघ्र कलशं मह्या त्वा विशंत्विन्दवः पुनरूर्जा निवर्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वतीः पुनर्मा विशताद्रयीः" । वरुणस्योत्तम्भनमसीति जलं प्रपूरयेत् । "वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनीस्थो वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद" अश्वत्थेव इति पञ्च पल्लवान् या ओषधीरिति सर्वौषधीर्निक्षिपेत् । काण्डादिति दूर्वा निक्षिपेत्। स्योना पृथिवीति सप्तमृदो निक्षिपेत् । परिवाजपतिरिति पञ्चरत्नानि । "परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे" । युवा सुवासा इति सूत्रेण वेष्टयेत् । 'युवा सुवासा०' याः फलिनीरिति फलम् । हिरण्यगर्भेति हिरण्यम् । "हिरण्यगर्भः समवर्तताग्रे भूतस्य जातःपतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम" । पूर्णा दर्वीति पूर्णपात्रम् । 'पूर्णादर्वि०' तत्त्वायामीति शुनःशेप ऋषिः त्रिष्टुप्छन्दः वरुणो देवता वरुणावाहने विनियोगः । 'तत्त्वायामि०' अस्मिन् कलशे वरुण इहागच्छ इह तिष्ठ कलशस्य मुखे विष्णुरित्यादि दुरितक्षयकारकाः

इत्यन्तं पठित्वा 'देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् । त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः । शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः । आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः । त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदः।त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव।सांनिध्यं कुरु मे देव प्रसन्नो भव सर्वदा।' इति पठेत् । अथ स्वस्तिवाचनम् । 'ब्राह्म्यं पुण्यमहर्यच्च सृष्ट्युत्पादनकारकम्।वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः।'अस्य कर्मणः पुण्याहं भवन्तो ब्रुवन्तु इति त्रिः । पुनन्तु मेति पठित्वा 'पृथिव्यामुद्धृतायां तु यत्कल्याणं पुरा कृतम् । ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः ।'अस्य कर्मणः कल्याणं भवन्तो ब्रुवन्तु इति त्रिः । यथेमां वाचं कल्याणीमित्यादि । 'सागरस्य यथा ऋद्धिर्महालक्ष्म्यादिभिः कृता । संपूर्णा सुप्रभावा च तां तामृद्धिं ब्रुवन्तु नः ।' ऋद्धिं भवन्तो ब्रुवन्तु इत्युक्त्वा "सत्रस्य ऋद्धिरस्यगन्मज्योतिरमृता अभूम । दिवं पृथिव्या अध्यारुहामाविदाम देवान्त्स्वर्ज्योतिः ।" "स्वस्तिर्याऽविनाशाख्या पुण्यकल्याणवृद्धिदा । विनायकप्रिया नित्यं तां तां स्वस्तिं ब्रुवन्तु नः ।' इति स्वस्तिं भवन्तो ब्रुवन्त्वित्युक्त्वा 'समुद्रमथनाज्जाता जगदानन्दकारिका । हरिप्रिया च माङ्गल्या तां तां श्रियं ब्रुवन्तु नः । श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण' इति पठेत् । इति कातीयानां स्वस्तिवाचनम् । ' अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः । ये भूता विघ्नकर्तारस्ते गच्छन्तु शिवाज्ञया ।' इति सर्वदिक्षु सर्षपान्विकीर्य 'सूर्यः सोमो यमः कालः संध्ये भूतान्यहः क्षपाः । पवनो दिक्पतिर्भूमिराकाशं खचरामराः । ब्राह्म्यं शासनमास्थाय कल्पध्वमिह संनिधिम्' इत्यनेन भूमिं स्पृष्ट्वा दिग्बन्धं कुर्यात् । पञ्चगव्येन भूमिं प्रोक्षयेत् । ततो भूतशुद्धिप्राणप्रतिष्ठामातृकान्यासान्कृत्वा स्वेष्टदेवतामागमोक्तमार्गेण मत्स्यपुराणोक्तमार्गेण वा ध्यायेत् । तद्यथा—'जटाजूटसमायुक्तामर्धेन्दुकृतलक्षणाम् । लोचनत्रयसंयुक्तां पद्मेन्दुसदृशाननाम् । अतसीपुष्पवर्णाभा सुप्रतिष्ठां सुलोचनाम् । नवयौवनसंपन्नां सर्वाभरणभूषिताम् । सुचारुवदनां तद्वत्पीनोन्नतपयोधराम् । त्रिभङ्गस्थानसंस्थानां महिषासुरमर्दिनीम् । त्रिशूलं दक्षिणे दद्यात्खड्गं चक्रं क्रमादधः । तीक्ष्णं बाणं तथा शक्तिं वामतोऽपि निबोधत । खेटकं पूर्णचापं च पाशमङ्कुशमूर्ध्वगम् । घण्टां वा परशुं वापि वामतः

संनिवेशयेत् । अधस्तान्महिषं तद्वद्विशिरस्कं प्रदर्शयेत् । शिरश्छेदोद्भवं तद्वद्दानवं खड्गपाणिनम् । हृदि शूलेन निर्भिन्नं तिर्यगन्त्रविभूषितम् । रक्तरक्तीकृताङ्गं च रक्तविस्फारितेक्षणम् । वेष्टितं नागपाशेन भ्रुकुटीभीषणाननम् । सपाशवामहस्तेन धृतकेशं च दुर्गया । वमद्रुधिरवक्त्रेण च देव्याः सिंहं प्रदर्शयेत् । देव्यास्तु दाक्षिणं पादं समं सिंहोपरि स्थितम् । किंचिदूर्ध्वं तथा वाममङ्गुष्ठं महिषोपरि । स्तूयमानं च तद्रूपममरैः संनिवेशयेत् ।' इति । एवं ध्यात्वा अर्घ्यस्थापनं कुर्यात् । ततो नूतनमूर्तिः स्वर्णादिमयी चेत्तदा अग्न्युत्तारणादिकं कुर्यात् । तत्र क्रमः । स्वर्णादिशलाकया प्रतिमां मधुसर्पिर्भ्यामभ्यज्य "इमं मे गङ्गे०" इति पुरुषसूक्तेन चाभ्युक्ष्य पञ्चगव्येन प्रोक्ष्य अग्निसूक्तेन प्रतिमायां जलधारां कुर्यात् । तच्चाग्निसूत्रम् ऋग्वेदिनाम्—'अग्निःसप्तिं वाजंभरं ददात्यग्निर्वीरं श्रुत्यं कर्मनिष्ठाम् । अग्नी रोदसी विचरन्त्समञ्जन्नग्निर्नारीं वीरकुक्षिं पुरन्धिम् । अग्नेरप्नसःसमिदस्तुभद्राग्निर्मही रोदसी आविवेश । अग्निरेकं चोदयत्समत्स्वग्निर्वृत्राणि दयते पुरूणि । अग्निर्हत्यजरतः कर्णमावाग्निरद्भ्योनिरदहज्जरूथम् । अग्निरत्रिं घर्मउरुष्यदन्तरग्निर्नृमेधं प्रजयाऽसृजत्स्वम् । अग्निर्दाद्द्रविणं वीरपेशा अग्निर्ऋषिं यः सहस्रासनोति । अग्निर्दिवि हव्यमाततानाग्नेर्धामानि विभृता पुरुत्र । अग्निमुक्थैर्ऋषयो विह्वयन्तेऽग्निंनरो यामानिबाधितासः । अग्निं वयो अन्तरिक्षे पतन्तोग्निः सहस्रा परियाति गोनाम् । अग्निं विश ईळते मानुषीर्या अग्निं मनुषो नहुषो विजाताः । अग्निर्गान्धर्वीं पथ्यामृतस्याग्नेर्गव्यूतिर्घृत आनिषत्ता । अग्नये ब्रह्म ऋभवस्ततक्षुरग्निं महामवोचामासु वृक्तिम् । अग्ने प्रावजारितारं यविष्ठाग्ने महिद्रविणमायजस्व ।' इति । अत्र च पूर्वमग्निशब्दरहितान्मन्त्रान् सकृत्पठित्वा अग्निपदसहितान्मन्त्रान्वारत्रयं पठेत् । अथ कातीयानामग्न्युत्तारणसूक्तम् 'हिमस्य त्वा जरायुणाग्नेपरिव्ययामसि । पावकोऽस्मभ्य ँ शिवो भव । उपज्मन्नुपवेतसेऽवत्तरं नदीष्वा अग्ने पित्तमपामसि । मण्डूकि ताभिरागहि सेमंनो यज्ञं पावकवर्णं शिवं कृधि । अपामिदं न्ययन ँ समुद्रस्य निवेशनम् । अन्यांस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्य ँ शिवो भव । अग्ने पावक रोचिषा मन्द्रया देवजिह्वया । आदेवान्वक्षि यक्षि च । स नः पावक दीदिवोग्ने देवां इहावह । उप यज्ञ ँ हविश्च नः । पावकया यश्चितयन्त्या कृपाक्षामन्नुरु च । उषसो न भानुना । तूर्णं न या मन्येत सस्य नूरण आयो घृणेन तस्तृषाणो अजर । नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे । अन्यांस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्य ँ शिवो भव । अग्निस्तिग्मेन शोचिषा यं सद्विश्वं न्यत्रिणम् । अग्निर्नो वनते रयिम्' इति वाजसनेयिनांमग्निसूक्तम् ।

लेख्या मूर्तिश्चेत् 'लेख्यायां नाभिषेकः स्यात्' इत्यादिवचनात् अभिषेकादिकं तत्र न कर्तव्यं किं तु तदग्रे पात्रं स्थापयित्वा तस्मिन्नेव कर्तव्यम् । तत्र पञ्चगव्यपञ्चामृतादिना मूर्तिं संस्नाप्य पुरुषसूक्तेन स्नापयित्वा 'पूज्यपूजकयोर्मध्ये प्राची प्रोक्ता विचक्षणैः । ' इति प्राचीं प्रकल्प्य मण्डूकादिपीठपूजां कृत्वा सिंहासनं संपूज्य ईशानादिक्रमेण विष्णुहरैकदन्तरवीन्फलेषु चतुर्षु कलशेषु वा संपूज्य वेदिमध्यस्थकलशे स्वर्णादिमूर्तौ दुर्गां पूजयेत् । कलश एव देवीपूजनं चेत् मूर्तिस्थापनं सिंहासनोपरि कार्यम् । अत्र चतुर्भिरायतनैः सह दुर्गापूजनं गौडानुसारेण लिखितम् । अत्र प्रमाणत्वेन कालिकापुराणवचनं तैरुपन्यस्तम् । 'शिवं भास्करमग्निं च केशवं कौशिकीमपि । मनसाऽनर्चयन्याति देवलोकादधोगतिम् ।' इति । अत्राग्निशब्देन गणेश इति शिवार्चनचन्द्रिकायाम्—'पावकः कार्तिकेयोऽसौ कार्तिकेयो विनायकः' इति भविष्योत्तरवचनात् । यत्तु गौडैरग्निपूजनं पार्थक्येन क्रियते तन्मृग्यम् । एतच्च ब्राह्मणादिभिर्यथाधिकारं वैदिकादि कार्यम् । तदुक्तं मन्त्रराजानुष्टुब्विधाने-'श्रौतार्चनं तु विप्राणां विशेषेण भवेत्तदा । स्मार्तागमार्चनं क्षत्रैर्वैश्यैः केवलमागमम् ।' इति पूर्वोक्तक्रमेण चतुरायतनपूजानन्तरं जटाजूटेत्यादि ध्यात्वा हस्तस्थपुष्पाञ्जलौ 'अथार्कतो वा हृदयारविन्दादावाहयेत्' इति वचनात् सूर्यमण्डलाद्धृदयारविन्दाद्वा देवीमागतां विभाव्य पुष्पाणि कलशे मूर्तौ वा प्रक्षिपेत् । तत आत्मसंस्थामिति । 'एहि दुर्गे महाभागे रक्षार्थं मम सर्वदा । आवाहयाम्यहं देवि सर्वकामार्थसिद्धये । अस्यां मूर्तौ समागच्छ स्थितिं मत्कृपया कुरु । रक्षां कुरु सदा भद्रे विश्वेश्वरि नमोऽस्तु ते ।' इति । आगच्छ वरदे देवि दैत्यदर्पनिषूदनि । पूजां गृहाण सुमुखि नमस्ते शंकरप्रिये । सर्वतीर्थमयं वारि सर्वदेवसमन्वितम् । इमं घटं समागच्छ तिष्ठ देवगणैः सह । दुर्गे देवि समागच्छ सांनिध्यमिह कल्पय । बलिं पूजां गृहाण त्वमष्टाभिः शक्तिभिः सह । ' इत्यावाहनमन्त्रैरावाहयेत् । मूर्तिपूजने तु सर्वतीर्थमयमिति श्लोको न पठनीयः । पूजा तु जयन्तीमन्त्रेण दुर्गामन्त्रेण वा कार्या । तदुक्तं देवीपुराणे—'कुर्याद्देव्यास्तु मन्त्रेण पूजां क्षीरघृतादिभिः ।' इति । 'जयन्ती मङ्गला काली भद्रकाली कपालिनी । दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते । अनेनैव तु मन्त्रेण जपहोमौ तु कारयेत् ।' इति । दुर्गामन्त्रः वैदिकः आगमिको वा । वैदिकः 'जातवेदसे' इत्यादि । आगमिकस्तु 'ॐ दुर्गे दुर्गे रक्षणि स्वाहेति नवाक्षरः । तल्लिङ्गैः पूजयेन्मन्त्रैः सर्वदेवान्समाहितः ।' इत्यग्निपुराणात् । प्रणवादिचतुर्थ्यन्तं

नमोन्तं वा । 'नाम्ना सर्वं समापयेत्' इति । साधारणवाक्यात् । स्कान्दे तु— 'दुर्गे मे दुस्तरे कार्ये भव दुःखविनाशिनी । पूजयामि सदा भक्त्या दुर्गां दुर्गार्तिनाशिनीम् । अनेनैव तु मन्त्रेण जपहोमादि कारयेत् ।' इत्युक्तम् । पूजा च षोडशोपचारैः पञ्चोपचारैर्वा अन्यैश्च राजोपचारैः छत्रचामरादिभिर्वा यथाविभवं कार्या । पूजायां वादित्राणामभावे घण्टावादनं कार्यम् । तदुक्तम्— 'वादित्राणामभावे तु पूजाकाले च सर्वदा । घण्टाशब्दो नरैः कार्यः सर्ववाद्यमयी यतः ।' पाद्यादौ विशेषो देवीपुराणे—'पाद्ये श्यामाकदूर्वार्कविष्णुक्रान्तादिरिष्यते । गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपाः ।' तत्रैव । 'बिल्वरक्ताक्षतैः पुष्पैर्दधिदूर्वाकुशैस्तिलैः । सामान्यः सर्वदेवानामर्घोऽयं परिकीर्तितः ।' पुष्पसारसुधानिधौ—'इक्षुर्मधु घृतं चैव पयो दधि सदैव तु । प्रस्थप्रमाणं वा ग्राह्यं मधुपर्क इहोच्यते । 'आचमने तु जातीलवङ्गकक्कोलादिद्रव्याणि देयानि। पञ्चामृते,स्कान्दे—'क्षीराद्दशगुणं दध्ना घृतेनैव दशोत्तरम् । घृताद्दशगुणं क्षौद्रं क्षौद्राच्चैवेक्षुजं तथा ' इति। पूजोत्तरं माषभक्तबलिं कूष्माण्डादिबलिं वा निवेदयेत्। ततो नीराजनं कृत्वा यथाशक्ति वैदिकमागमिकं वा दुर्गामन्त्रं जपेत् 'दुर्गाग्रतो जपेन्मन्त्रमेकाचित्तःसमाहितः ।' इति देवीपुराणात् । ततश्चण्डीपाठं कृत्वा देवीं प्रार्थयेत् । 'महिषघ्नि महामाये चामुण्डे मुण्डमालिनि। द्रव्यमारोग्यविजयं देहि देवि नमःसदा। भूतप्रेतपिशाचेभ्यो रक्षोभ्यश्च महेश्वरि । देवेभ्यो मानुषेभ्यश्च भयेभ्यो रक्ष मां सदा । सर्वमङ्गलमङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते । रूपं देहि यशो देहि भगं भवति देहि मे । पुत्रान्देहि धनं देहि सर्वान्कामान्प्रदेहि मे।' इति । ततः शिवरहस्योक्तां दुर्गास्तुतिं पठेत् । 'दुर्गां शिवां शान्तिकरीं ब्रह्माणीं ब्रह्मणः प्रियाम् । सर्वलोकप्रणेत्रीं च प्रणमामि सदा शिवाम् । मङ्गलां शोभनां शुद्धां निष्कलां परमां कलाम् । विश्वेश्वरीं विश्वमातां चण्डिकां प्रणमाम्यहम् । सर्वदेवमयीं देवीं सर्वरोगभयापहाम् । ब्रह्मेशविष्णुनमितां प्रणमामि सदा उमाम् । विन्ध्यस्थां विन्ध्यनिलयां विंध्याचलनिवासिनीम् । योगिनीं योगमाता च चण्डिकां प्रणमाम्यहम् । ईशानमातरं देवीमीश्वरीमीश्वरप्रियाम् । प्रणतोऽस्मि सदा दुर्गां संसारार्णवतारिणीम् । य इदं पठति स्तोत्रं शृणुयाद्वापि यो नरः । स मुक्तः सर्वपापैस्तु मोदते दुर्गया सह।' इति । ततः पुष्पाञ्जलिं दद्यात् ॥ इति दुर्गापूजाविधिः ।

### विस्तृतपूजायामशक्तं प्रति संक्षिप्तपूजाविधिः ।

कालिकापुराणे—'सम्यक्कल्पोदितां पूजां यदि कर्तुं न शक्नुयात् । उपचारा-

स्तथा दातुं पञ्चैतान्वितरेत्तदा । गन्धं पुष्पं च धूपं च दीपं नैवेद्यमेव च । अभावे तोयपुष्पाभ्यां तदभावे तु भक्तितः । संक्षेपपूजा कथिता' इति स्मृतिकौस्तुभे । अत्राखण्डदीपदानमुक्तं नारदीये—'अखण्डदीपकं देव्याः प्रीतये नवरात्रके । उज्ज्वालयेदहोरात्रमेकचित्तो धृतव्रतः ।' इति ।

## अथ चण्डीपाठविधिः ।

देवीपुराणे—'माहात्म्यं भगवत्यास्तु पुराणादिषु कीर्तितम् । पठेच्च शृणुयाद्वापि सर्वकामसमृद्धये ।' श्रवणं च ब्राह्मणेनैव कारणीयम् । 'ब्राह्मणं वाचकं विद्यान्नान्यवर्णजमादरात् ।' इति भविष्योक्तेः । तथा 'एकोत्तराभिवृद्ध्या तु नवमीं यावदेवहि । चण्डीपाठं जपेच्चैव जापयेद्वा विधानतः ।' इति । वाराहीतन्त्रे—'संकल्पितस्तोत्रपाठे संख्यां कृत्वा पठेत्सुधीः ।' आवृत्तिसंख्याभेदेन फलभेदश्च तत्रैवोक्तः— 'चण्डीपाठफलं देवि शृणुष्व गदतो मम । एकावृत्त्यादिपाठानां यथावत्कथयामि ते । संकल्पपूर्वं संपूज्य न्यस्याङ्गेषु मनून्सकृत् । पाठाद्बलिप्रदानाच्च सिद्धिमाप्नोति मानवः । उपसर्गोपशान्त्यर्थं त्रिरावृत्तं पठेन्नरः । ग्रहोपशान्तौ कर्तव्यं पञ्चावृत्तं वरानने । महाभये समुत्पन्ने सप्तावृत्तं समुच्चरेत् । नवावृत्ताद्भवेच्छान्तिर्वाजपेयफलं लभेत् । राजवश्याय भूत्यै च रुद्रावृत्तमुदीरयेत् । अर्कावृत्ते काम्यसिद्धिर्वैरहानिश्च जायते । मन्वावृत्ताद्रिपुर्वश्यस्तथा स्त्री वश्यतामियात् । सौख्यं पञ्चदशावृत्त्या श्रियमाप्नोति मानवः । कलावृत्त्या पुत्रपौत्रधनधान्यागमं विदुः । राज्ञां भीतिविमोक्षाय वैरस्योच्चाटनाय च । कुर्यात्सप्तदशावृत्तं तथाऽष्टादशकं प्रिये । महाग्रहविमोक्षाय विंशावृत्तं पठेत्सुधीः । पञ्चविंशावर्तनात्तु भवेद्बन्धविमोक्षणम् । संकटे समनुप्राप्ते दुश्चिकित्स्यामये तथा । जातिध्वंसे कुलोच्छेदे आयुषो नाश आगते । वैरिवृद्धौ व्याधिवृद्धौ धननाशे तथा क्षये । तथैव त्रिविधोत्पाते तथा चैवातिपातके । कुर्याद्यत्नाच्छतावृत्तं ततः संपद्यते शुभम् । श्रेयोवृद्धिः शतावृत्ताद्राज्यवृद्धिस्तथा परा । मनसा चिन्तितं देवि सिद्ध्येदष्टोत्तराच्छतात् । शताश्वमेधयज्ञानां फलमाप्नोति सुव्रते । सहस्रावर्तनाल्लक्ष्मीरावृणोति स्वयं स्थिरा । भुक्त्वा मनोरथान्कामान्नरो मोक्षमवाप्नुयात् । यथाश्वमेधः क्रतुराड् देवानां च यथा हरिः । स्तवानामपि सर्वेषां तथा सप्तशतीस्तवः । अथवा बहुनोक्तेन किमेतेन वरानने । चंड्याः शतावृत्तपाठात्सर्वाः सिध्यंति सिद्धयः ।' इति । स चैवंगुणयुक्तः 'विस्पष्टमद्रुतं शान्तं स्पष्टाक्षरपदं तथा । सकलस्वरसंयुक्तं रस-

भावसमन्वितम् । बुध्यमानः सदा ह्यर्थं ग्रन्थार्थं कृत्स्नतो नृप । ब्राह्मणादिषु सर्वेषु ग्रन्थार्थं चार्पयेन्नृप । य एवं वाचयेद्ब्रह्मन्स विप्रो व्यास उच्यते ।' इति । स्तोत्रपाठश्च नारायणादीन्नमस्कृत्य कर्तव्यः । 'नारायणं नमस्कृत्य नरं चैव नरोत्तमम् । देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ।' इति वचनात् । जयशब्दार्थश्च भविष्ये–'अष्टादश पुराणानि रामस्य चरितं तथा । विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत । कार्ष्ण्यं च पञ्चमो वेदो यन्महाभारतं स्मृतम् । शैवाश्च धर्मा राजेन्द्र मानवोक्ता महीपते । जयेति नाम एतेषां प्रवदन्ति मनीषिणः ।' इति । पाठप्रकारश्च मत्स्यसूक्ते–'प्रणवं चादितो जप्त्वा स्तोत्रं वा संहितां पठेत् । अन्ते च प्रणवं दद्यादित्युवाचादिपूरुषः । सर्वत्र पाठे विज्ञेयो ह्यन्यथा विफलं भवेत् । शुद्धेनानन्यचित्तेन पठितव्यं प्रयत्नतः । न कार्यासक्तमनसा कार्यं स्तोत्रस्य वाचनम् । आधारे स्थापयित्वा तु पुस्तकं प्रजपेत्सुधीः । हस्तसंस्थापनादेव यस्मादल्पफलं भवेत् । स्वयं च लिखितं यत्तु यतिना लिखितं च यत् । अब्राह्मणेन लिखितं तच्चापि विफलं भवेत् । ऋषिच्छन्दादिकं न्यस्य पठेत्स्तोत्रं विचक्षणः । स्तोत्रे न दृश्यते यत्र प्रणवन्यासमाचरेत् । संकल्पं स्तोत्रपाठे च संख्यां कृत्वा पठेत्सुधीः । अध्यायं प्राप्य विरमेन्न तु मध्ये कदाचन । कृते विरामे मध्ये तु अध्यायादिं पठेत्पुनः ।' इति ।

## अथ प्रसङ्गाच्छतचण्ड्यादिविधानं लिख्यते ।

रुद्रयामले–'शतचण्डीविधानं च प्रोच्यमानं शृणुष्व तत् । सर्वोपद्रवनाशार्थं शतचण्डीं समाचरेत् । षोडशस्तम्भसंयुक्तं मण्डपं पल्लवोज्ज्वलम् । वसुकोणयुता वेदिं मध्ये कुर्यात्त्रिभागतः । पक्केष्टकचितां रम्यामुच्छ्राये हस्तसंमिताम् । पञ्चवर्णरजोभिश्च कुर्यान्मण्डलकं शुभम् । पञ्चवर्णवितानं च किंकिणीजालमण्डितम् । आचार्येण समं विप्रान्वरयेद्दश सुव्रतान् । ऐशान्यां स्थापयेत्कुम्भं पूर्वोक्तविधिना हरेः । वारुण्यां च प्रकर्तव्यं कुण्डलक्षणलक्षितम् । मूर्तिं देव्याः प्रकुर्वीत सुवर्णस्य पलेन वै । तदर्द्धेन तदर्द्धेन तदर्द्धेन महीपते । अष्टादशभुजां देवीं कुर्यादष्टकरामपि । पट्टकूलयुगच्छन्नां वेदीमध्ये निधापयेत् ।' वैकृतिकरहस्ये–'आयुधान्यत्र वक्ष्यन्ते दक्षिणाधःकरक्रमात् । अक्षमाला च कमलं बाणोऽसिः कुलिशं गदा । चक्रं त्रिशूलं परशुः शंखो घण्टा च पाशकः । दण्डं शक्तिश्चर्म चापं पानपात्रं कमण्डलुः । अलंकृतभुजामेभिरायुधैः कमलासनाम् ।' तत्रैव–'दधौ चाष्टभुजा बाणमुसले शूलचक्रभृत् । शंखं घंटां लाङ्गलं च कार्मुकं

वसुधाधिप । देवीं संपूज्य विधिवज्जपं कुर्युर्दश द्विजाः । शतमादौ शतं चान्ते जपेन्मन्त्रं नवार्णकम् । चण्डीसप्तशतीमध्ये संपुटोऽयमुदाहृतः ।' स च "ऐंह्रीं क्लीं चामुण्डायै विच्चे" इति । एकं द्वित्रीणि चत्वारि जपेद्दिनचतुष्टयम् । रूपाणि क्रमशस्तद्वत्पूजनादिकमाचरेत् । पञ्चमे दिवसे प्रातर्होमं कुर्याद्विधानतः । गुडाज्यपायसं दूर्वा तिलाञ्छुक्लान्यवानपि । चण्डीपाठस्य होमं च प्रतिश्लोकं दशांशतः । होमं कुर्याद्ग्रहादिभ्यः समिदाज्यचरून्क्रमात् । हुत्वा पूर्णाहुतिं दद्याद्विप्रेभ्यो दक्षिणां क्रमात् । कपिलां गां नीलमणिं श्वेताश्वं छत्रचामरे । अभिषेकं ततः कुर्युर्यजमानस्य ऋत्विजः । एवं कृतेऽमरेशान सर्वसिद्धिः प्रजायते ।' इति । इति शतचण्डीविधिः ।

## अथ सहस्रचण्डीविधिः ।

'सहस्रचण्डीं विधिवच्छृणु विष्णो महामते । राज्यभ्रंशे महोत्पाते जनमारे महाभये । राजमारेऽश्वमारे च परचक्रभये तथा । इत्यादिविविधे दुःखे क्षयरोगादिजे भये । सहस्रचण्डिकापाठं कुर्याद्वा कारयेत्तथा । जापकास्तु शतं प्रोक्ता विंशद्धस्तश्च मण्डपः । भोज्याः सहस्रं विप्रेन्द्रा गोशतं दक्षिणां दिशेत् । गुरवे द्विगुणं देयं शय्यादानं तथैव च । धनं धान्यं च भूदानं श्वेताश्वं च मनोहरम् । पञ्चनिष्कमिता मूर्तिः कर्तव्या वाऽर्धमानतः । अष्टादशभुजा देवी सर्वायुधविभूषिता । अवारितान्नं दातव्यं सहस्रं प्रत्यहं विभो । शतं वा नियताहारः पयःपानेन वर्तयेत् । एवं यश्चण्डिकापाठं सहस्रं तु समाचरेत् । तस्य स्यात्कार्यसिद्धिस्तु नात्र कार्या विचारणा ।' इति सहस्रचण्डीविधिः ।

## अथ कुमारीपूजनम् ।

तच्च प्रत्यहं यथाशक्ति एकद्व्यादिक्रमेण कार्यं तत्प्रकारश्च देवीपुराणे—'ब्रह्मोवाच । न तथा तुष्यते शक्र होमदानजपेन तु । कुमारीभोजनेनात्र[1] यथा देवी प्रसीदति । पितरो वसवो रुद्रा आदित्या गणलोकपाः । सर्वे ते पूजितास्तेन कुमार्यो येन पूजिताः । शुक्लाष्टमीचतुर्दश्योर्नवम्यां च विशेषतः । कृष्णपक्षे विशेषेण भोजयेत्तु कुमारिकाः ।' इति । अन्यत्रापि—'प्रक्षाल्य पादौ सर्वासां कुमारीणां च वासव । सुलिप्ते भूतले रम्ये तत्र ता आसने स्थिताः । पूजयेद्गन्धपुष्पैश्च स्रग्भिश्चापि मनोरमैः । पूजयित्वा विधानेन भोजनं तासु दापयेत् । खण्डलड्डुगुडं सर्पिर्दधि क्षीरं समाक्षिकम् । तासां देयं कुमारीणां शनैर्भुञ्जापयेत्तु ताः । पानीयं याचितं देयमन्नं वा याचितं

१ अत्र नवरात्रे ।

शुभम् । तास्तृप्तास्तु यदा सर्वास्तदा स्वाचमनं ददेत् । आचम्य चाक्षतान्दत्वा त्वया क्षन्तव्यमित्युत । दातुः शिरसि दातव्याः कन्यकाभिरथाक्षताः । तेनापि प्रणिपातस्तु कर्तव्यो भक्तिपूर्वकः । अनेन विधिना शक्र देवी क्षिप्रं प्रसीदति । ददाति विविधान्कामान्मनोभीष्टान्सुराधिप । राज्यं कृत्वा ततः पश्चाद्देवलोकं च गच्छति ।' कौस्तुभे तु–'एकां कन्यां भोजयित्वा ऐश्वर्यं लभते नरः । कन्याद्वयं भुक्तिमुक्ती त्रिवर्गफलदं त्रयम् । चतुष्टयं राज्यदं च सर्वकामफलप्रदम् । विद्याप्रदं पञ्चकं च षट्कं षट्कर्मसिद्धिदम् । सप्तभिर्लभते राज्यमष्टभिर्गुणसंपदः । नवभिः पृथिवीशः स्यात्कुमारीभिश्च पूजनात् ।' इत्युक्तम् । स्कान्दे–'एकैकां पूजयेत्कन्यामेकवृद्ध्या तथैव च । द्विगुणं त्रिगुणं वापि प्रत्येकं नवकं वरम् । नवभिर्लभते भूमिमैश्वर्यं द्विगुणेन तु । एकवृद्ध्या लभेत्क्षेममेकैकेन श्रियं लभेत् । एकवर्षा तु या कन्या पूजार्थं तां विवर्जयेत् । गन्धपुष्पफलादीनां प्रीतिस्तस्या न विद्यते । द्विवर्षकन्यामारभ्य दशवर्षावधिक्रमात् ।' तासां च क्रमेण कन्यका त्रिमूर्तिः कल्याणी रोहिणी काली चण्डिका शाम्भवी दुर्गा सुभद्रेति नामान्युक्तानि स्कान्दे–'कुमारिका द्विवर्षा तु त्रिवर्षा तु त्रिमूर्तिनी । चतुर्वर्षा तु कल्याणी पञ्चवर्षा तु रोहिणी । षड्वर्षा तु भवेत्काली सप्तवर्षा तु चण्डिका । अष्टवर्षा शांभवी तु दुर्गा तु नवभिः स्मृता । दशवर्षा सुभद्रेति नामभिः परिकीर्तिताः । अत ऊर्ध्वं तु याः कन्याः सर्वकार्येषु वर्जिताः ।' आसां क्रमेण फलान्याह स एव–'दुःखदारिद्र्यनाशाय शत्रूणां नाशनाय च । आयुष्यबलवृद्ध्यर्थं कुमारीं पूजयेन्नरः । आयुष्कामस्त्रिमूर्तिं तु त्रिवर्गस्य फलाप्तये । अपमृत्युव्याधिपीडादुःखानामपनुत्तये । सौख्यधान्यधनारोग्यपुत्रपौत्राभिवृद्धये । कल्याणीं पूजयेद्धीमान्नित्यं कल्याणवृद्धये । आरोग्यसुखकामी तु धनकामस्तथैव च । यशस्कामी नरो नित्यं रोहिणीं परिपूजयेत् । विद्यार्थी च जयार्थी च राज्यार्थी च विशेषतः । शत्रूणां च विनाशार्थी कालिकां पूजयेन्नरः । संग्रामजयकामी च चण्डिकां परिपूजयेत् । दुःखदारिद्र्यनाशाय नृपसंमोहनाय च । महापापविनाशाय शांभवीं च प्रपूजयेत् । सबलोत्कटशत्रूणामुग्रसाधनकर्मणि । दुर्गां दुर्गार्तिनाशाय पूजयेद्यत्नतो बुधः । सौभाग्यधनधान्यादिवांछितार्थफलाप्तये । सुभद्रां पूजयेन्मर्त्यो दासीदासविवृद्धये ।' पूजाप्रकारश्च तत्रैव 'प्रातःकाले विशेषेण कृताभ्यङ्गो विशेषतः । आवाहयेत्ततः कन्यां मन्त्रेणानेन भार्गव । मन्त्राक्षरमयीं लक्ष्मीं मातॄणां रूपधारिणीम् । प्रथमं शैलपुत्री च द्वितीयं ब्रह्मचारिणी । तृतीयं चन्द्रघण्टेति कूष्माण्डेति चतुर्थकम् । पञ्चमं स्कन्दमातेति षष्ठं कात्यायनीति च । सप्तमं कालरा-

त्रिश्च महागौरीति चाष्टमम् । नवमं सिद्धिदा प्रोक्ता नव दुर्गाः प्रकीर्तिताः । नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम् ।'आवाहनमन्त्रः । 'ततः संपूजयेद्धीमान्मंत्रैरेभिः पृथक्पृथक् । जगत्पूज्ये सर्ववन्द्ये सर्वशक्तिस्वरूपिणि । पूजां गृहाण कौमारि जगन्मातर्नमोऽस्तु ते।'कुमार्याः।'त्रिपुरांत्रिपुराधारांत्रिवर्गज्ञानरूपिणीम्।त्रैलोक्यवन्दितां देवीं त्रिमूर्तिं पूजयाम्यहम्।' त्रिमूर्तेः।'कलात्मिकां कलातीतां कारुण्यहृदयां शिवाम् । कल्याणजननीं नित्यं कल्याणीं पूजयाम्यहम् ।' कल्याण्याः।'अणिमादिगुणाधाराम-काराद्यक्षरात्मिकाम् । अनन्तशक्तिकां लक्ष्मीं रोहिणीं पूजयाम्यहम् ।' रोहिण्याः । 'कामचारीं शुभां कान्तां कालचक्रस्वरूपिणीम् । कामदां करुणोदारां कालीं संपूजयाम्यहम्।' काल्याः । 'चान्द्रीं वीरां चण्डमायां चण्डमुण्डप्रभञ्जनीम् । चण्डिकां सर्वदां चण्डविक्रमां पूजयाम्यहम् ।' चण्डिकायाः । 'सदानन्दकरीं शान्तां सर्वदेवनमस्कृताम् । सर्वभूतात्मिकां लक्ष्मीं शांभवीं पूजयाम्यहम् ।' शांभव्याः । 'दुर्गमे दुस्तरे कार्ये भवदुर्गविनाशिनीम् । पूजयामि सदा भक्त्या दुर्गां दुर्गार्तिनाशिनीम् ।' दुर्गायाः । 'सुन्दरीं स्वर्णवर्णाभां सुखसौभाग्यदायिनीम् । सुभद्रजननीं देवीं सुभद्रां पूजयाम्यहम् ।' सुभद्रायाः ।' एवमभ्यर्चनं कुर्यात्कुमारीणां प्रयत्नतः । कञ्चुकैश्चैव वस्त्रैश्च गन्धपुष्पाक्षतादिभिः । नानाविधैर्भक्ष्यभोज्यैर्भोजयेत्पायसादिभिः ।' प्रत्यहं ब्राह्मणभोजनं चोक्तं नारदीये—' प्रत्यहं भोजयेद्विप्रान्कुमारीर्योगिनीरपि । हीनाधिकाङ्गीं कुष्ठादिविकारां कुकुलां तथा । ग्रन्थिस्फुटितगर्भाङ्गीं रक्तपूयव्रणाङ्किताम् । जात्यन्धां केकरां काणां कुरूपां तनुरोमशाम् । संत्यजेद्रोगिणीं कन्यां दासीगर्भसमुद्भवाम् । अरोगिणीं सुपुष्टाङ्गीं सुरूपां व्रणवर्जिताम्। एकवंशसमुद्भूतां कन्यां सम्यक्प्रपूजयेत् । ब्राह्मणीं सर्वकार्येषु जयार्थे नृपवंशजाम् । लाभार्थं वैश्यवंशोत्थां सुतार्थे शूद्रवंशजाम् । दारुणे चान्त्यजातीनां पूजयेद्विधिना नरः।' इति । क्वचिन्मन्त्राक्षरमयीमिति सर्वासामेक एव मन्त्र उक्तः । यथोक्तालाभे तु देवीपुराणे—'विवाहानन्तरं चासां कन्यात्वं नोपगच्छति । तावत्संपूज्यते कन्या यावत्पुष्पं न दृश्यते ।' इति कन्यापूजनम् ।

अत्र वेदपारायणमप्युक्तं रुद्रयामले—' एवं चतुर्वेदविदो विप्रान्सर्वान्प्रसादयेत् । तेषां च वरणं कार्यं वेदपारायणाय वा ।' इति शिष्टाः । वेदपारायणविधिः—' तत्रादौ ब्रह्मादिपूजाविधिर्महार्णवे—' तीर्थे देवालये गेहे प्रशस्ते सुपरिष्कृते । कलशं विधिना तत्र वेदिमध्ये न्यसेत्पुनः । पञ्चाशद्भिः कुशैः कार्यो ब्रह्मा पश्चान्मुखः स्थितः । स्नापितः स्थापितः कुम्भे चतुर्बाहुश्चतुर्मुखः ।

वत्सजान्वाकृतिं वेदमुत्तराग्रैः कुशैः कृतम् । ब्रह्मोपधाने दत्त्वा तं ततः स्वस्त्ययनं पठेत् । ब्रह्मजज्ञानमिति वा गायत्र्या वा प्रपूजयेत्।उपाध्यायं च संपूज्य यथापाठं पठेत्ततः ।' बौधायनः—'स्थण्डिलं कल्पयित्वाऽग्निमुपसमाधाय संपरिस्तीर्याज्येनैतेभ्यो देवताभ्यो जुहोति । अग्नये सोमायेन्द्राय विश्वेभ्यो देवेभ्य ऋषिभ्य ऋग्भ्यो यजुर्भ्यः सामभ्योऽथर्वभ्यः श्रद्धायै मेधायै प्रज्ञायै धारणायै श्रियै ह्रियै सावित्र्यै सवित्रे, प्रजापतये काण्वऋषये, सोमाय काण्वऋषये, अग्नये काण्वऋषये, विश्वेभ्यो देवेभ्यः काण्वऋषिभ्यः, सांहितीभ्यो देवताभ्यः, उपनिषद्भ्यो याज्ञिकीभ्यो देवताभ्यः, उपनिषद्भ्यो वारुणीभ्यो देवताभ्यः,उपनिषद्भ्यो हव्यवाहाय विश्वेभ्यो देवेभ्यः स्वयंभुवे वरुणेभ्योऽनुमत्यै स्विष्टकृते च पृथक् स्वाहाकारेण हुत्वा व्याहृतिभिश्च पुनः परिषिञ्चति । समाप्ते चैता यजुषा तर्पयति । एवमृग्वेदस्य काण्वऋष्यादिवर्जमास्विष्टकृतस्तेषां स्थाने शतर्चिभ्यो गृत्समदाय विश्वामित्राय वामदेवायात्रये भारद्वाजाय जामदग्न्याय गौतमाय वसिष्ठाय प्रागाथेभ्यः क्षुद्रसूक्तेभ्यो महानाम्नीभ्य इति । ततो वेदादिमारभ्य सततमधीयेतेत्याह भगवान् बौधायनः ।' इति वेदपारायणविधिः । शिष्टाः पुराणादि पारायणमपि कुर्वन्ति ।

अथ बलिदानम् । तत्राश्वमेधच्छागमहिषस्य मांसानामुत्तरोत्तरं प्राशस्त्यं फलविशेषश्च । बलिद्रव्याणि कालिकापुराणे—'पक्षिणः कच्छपा ग्राहामत्स्या नवविधा मृगाः । महिषो गोधिकागारे छागो बभ्रुश्च शूकरः । खड्गश्च कृष्णसारश्च गोधिका शरभो हरिः । शार्दूलश्च नरश्चैव स्वगात्ररुधिरं तथा ।' अगारे' गोधिकेति ग्राम्यत्वं ज्ञाप्यते । द्वितीयगोधाग्रहणमारण्याभिप्रायम् । क्षत्रियादिकं प्रति कृष्णसारनिषेधस्तत्रैव—'न कृष्णसारं वितरेद्बलिं तु क्षत्रियादिकः । प्रददत्कृष्णसारं तु ब्रह्महत्यामवाप्नुयात् ।' हयोष्ट्रावपि पशुस्थाने नियोक्तव्यौ इति तिथितत्त्वे । तच्च प्रत्यहं कार्यम्।तथा च देवीपुराणे—'बलिं च प्रत्यहं दद्यादोदनं मांसमाषवत् । त्रिकालं पूजयेद्देवीं जपस्तोत्रपरायणः।' इति । यत्तु कैश्चिदुक्तम्—होमोऽष्टम्यां नवम्यां वा कार्यः' बलिदानमपि अष्टमीनवम्योरेवेति । तत्तुच्छम् । देवीपुराणे—'बलिं च प्रत्यहं दद्यात्' इति वाक्येन प्रतिदिनं तस्याभिधानात् । होमोऽपि प्रत्यहं कार्यः । पूर्वोक्तदेवीपुराणवाक्ये 'जपहोमसमायुक्तः' इत्युक्तेः । 'पुनः पूजां तथाऽष्टम्याम्' इत्यादिवचनं तु अष्टमीनवम्योर्विशेषपूजापरम् । कौस्तुभेऽप्येवमेव । अत्र छागादिबलिदानमग्नीषोमीयपशुहिंसान्यायेन धर्म्यमपि क्षत्रियादिविषयमेव । ब्राह्मणस्य तु 'सात्विकी जपयज्ञाद्यैर्नैवेद्यैश्च निरामिषैः ।' इति वाक्योपात्तसात्विकपूजायामेवाधिकारात् । तथैव

भवगद्गीतादिषु प्रतिपादितत्वात् । यदपि कालिकापुराणादिषु मद्यस्वगात्ररुधिरनिवेदनादिकमुक्तम् । तदपि ब्राह्मणस्य न भवति । 'न दद्याद्ब्राह्मणो मद्यं तथा देव्यै कदाचन । सिंहव्याघ्रनरान्हत्वा ब्राह्मणो नरकं व्रजेत् । इहापि स्यात्स हीनायुः सुखसौभाग्यवर्जितः । स्त्रियं न दद्यात्तु बलिं दत्त्वा नरकमाप्नुयात् । स्वगात्ररुधिरं दत्त्वा ब्रह्महत्यामवाप्नुयात् । मद्यं दत्त्वा ब्राह्मणस्तु ब्राह्मण्यादेव हीयते ।' इति कालिकापुराण एव निषेधात् । ब्राह्मणेन तु माषभक्तादिना बलिदानं कार्यम् । तदुक्तं कालिकापुराणे— 'माषकुल्माषमांसाद्यैर्देयो दिक्षु बलिर्निशि । कूष्माण्डमिक्षुदण्डश्च मद्यमासव एव च । एते बलिसमाः प्रोक्तास्तृप्तौ छागसमाः स्मृताः ।' एतेष्वपि ब्राह्मणस्य मद्यमांसव्यतिरिक्तमेव भवति । 'राजसी बलिदानाद्यैर्नैवेद्यैः सामिषैस्तथा ।' इति मांसबलिदानादे राजसत्वाभिधानात् । रुद्रयामलेऽपि-'छागाभावेऽपि कूष्माण्डं श्रीफलं वा मनोहरम् । वस्त्रसंवेष्टितं कृत्वाच्छादयेच्छुरिकादिना ।' तथा 'ब्राह्मणेन सदा देयं कूष्माण्डं बलिकर्मणि । श्रीफलं वा सुराधीश च्छेदं नैव तु कारयेत् ।' ब्राह्मणस्य च्छेदननिषेधाच्छेदस्य ब्राह्मणातिरिक्तकर्तृकता । 'कृत्वा घृतमयं व्याघ्रं नरं सिंहं तथैव च । अथ वा पूपविकृतं यवक्षोदमयं च वा । घातयेच्चन्द्रहासेन मन्त्रेण संस्कृतं नरः ।' कालिकापुराणे—'माषान्नेन बलिर्देयो ब्राह्मणेन विजानता ।' भुवनशीतपारिजातेऽपि 'अन्नं व्यञ्जनपुष्पाम्बु बलिद्रव्यमुदाहृतम् ।' इति ।

अथ बलिदानविधानम् । तत्रादौ देवीप्रीत्यर्थं बलिदानमहं करिष्ये इति संकल्पयेत् । कालिकापुराणे—'उत्तराभिमुखो भूत्वा बलिं पूर्वमुखं तथा । निरीक्ष्य साधकः पश्चादिमं मन्त्रमुदीरयेत् । पशो त्वं बलिरूपेण मम भाग्यादुपस्थितः । प्रणमामि ततः सर्वरूपिणं बलिरूपिणम् ।' मन्त्ररत्नप्रकाशे—पशुं स्नापयित्वा सिन्दूरतिलकं दत्त्वा अस्त्रेणावलोकयेत् । मूलेन प्रोक्ष्य तीर्थमन्त्रैः प्रोक्षयेत् । तीर्थमन्त्रा वैदिकास्तान्त्रिकाश्च । 'अग्निः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्नग्निः स ते लोको भविष्यति तं जेष्यसि पिबैता अपः ॥ १ ॥ वायुः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्वायुः स ते लोको भविष्यति तं जेष्यसि पिबैता अपः ॥ २ ॥ सूर्यः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन् सूर्यः स ते लोको भविष्यति तं जेष्यसि पिबैता अपः ॥ ३ ॥ वाचं ते शुन्धामि प्राणं ते शुन्धामि चक्षुस्ते शुन्धामि श्रोत्रं ते शुन्धामि नाभिं ते शुन्धामि मेढ्रं ते शुन्धामि पायुं ते शुन्धामि चरित्रांस्ते शुन्धामि मनस्त आप्यायतां चक्षुस्त आप्यायतां देव्यै त्वां जुष्टमुपाकरोमि ॥ ४ ॥ 'वाराही

यमुना गङ्गा करतोया सरस्वती।कावेरी चन्द्रभागा च सिन्धुभैरवसागराः । अजस्नाने समायान्तु ये चान्ये नदसंज्ञकाः । पशुपाशविनाशाय हेमकूटस्थिताय च। पराय परमेष्ठिने हुंकाराय च मूर्तये । एभिर्मन्त्रैश्च संप्रोक्ष्य वामे मण्डलमालिखेत् । चण्डेश्वरीं यजेत्तत्र कुमारीं पूजयेत्ततः । तद्बलिं तत्र संस्थाप्य प्रोक्षयेत्साधकोत्तमः । 'हुं हुं पशून् हन हन हूं २ फट् स्वाहा इत्यभ्युक्षेत् । ततो रज्जुमादाय मस्तके पशुं बन्धयेत् । मेषाकारस्तम्भमध्ये पशुं बन्ध बन्ध सश्रृङ्गे सर्वावयवं पशुं बन्धय २ ब्रह्माण्डखण्डमध्ये पशुं बन्धय २ ॐ ह्रीं फट् इति बद्ध्वा पूजयेत्।परमपशुरूपिणे नमः रुधिरबन्धनायै नमः शिरसि, चण्डिकायै०ललाटे, सरस्वत्यै०मुखे, चन्द्रादित्याभ्यां० नासिकायाम्, बृहस्पतये० चक्षुषोः, अग्रनासिकायै० कर्णयोः, वैष्णव्यै जिह्वायाम्, पद्मनाभाय० उदरे, भैरव्यै० नाभौ, रुधिरोन्मत्तायै० पादेषु। ततः कर्णे जपेत्। हिलि २ बहुरूपधरायै चण्डदुर्गायै इमं पशुं स्वर्गं नियोजय २ मुक्तिं प्रदर्शय २ ह्रीं चन्द्रमण्डलाधिष्ठितविग्रहायै पशुरूपचाण्डिकायै पशुं प्रोक्षयामि स्वाहा इति कुशाक्षतजलान्यादायोत्सृजेत् । कृताञ्जलिः पठेत् । 'यज्ञार्थे पशवः सृष्टाः स्वयमेव स्वयंभुवा । अतस्त्वां घातयिष्यामि तस्माद्यज्ञे वधोऽवधः । पशुरुत्पादितो देवैर्यज्ञार्थं च विधानतः । इदानीं त्वं महोत्साहाच्छेत्तव्योऽसि मया पुनः । अजोऽसि त्वं पशुत्वेन यज्ञार्थे निर्मितः पुरा । अतः सर्वनिदानेन त्वां श्रीपूजां करोम्यहम् । पशुमेनं मया दत्तमपशुत्वं प्रदेहि मे । देवताबलिदानेन मांसेन रुधिरेण च । दातुरापद्विनाशाय छागलाय नमोनमः । लोकानामुपकारार्थं पशुः सृष्टो मयाऽधुना । प्रोक्षितो भवतीप्रीत्यै ममात्मानं च तारय । '

अथ खड्गपूजा । 'कृष्णं पिनाकपाणिं च कालरात्रिस्वरूपिणम् । उग्रं रक्तास्यनयनं सर्वासुरभयंकरम् । रक्ताम्बरधरं चैव पाशहस्तं कुटुम्बिनम् । पिबमानं च रुधिरं भुञ्जानं क्रव्यसंहतिम् । रसना त्वं चण्डिकाया सुरलोकप्रसादकः । ' इति ध्यात्वा पूजयेत् । ॐ स्रें २ फट् वज्रेश्वरि खड्गरूपिणि तीक्ष्णधारेण पशुं प्रहर २। ॐ ह्रीं कालि कालि वज्रेश्वरि लोहदण्डायै नमः । इति संपूज्य । 'असिर्विनाशनः खड्गस्तीक्ष्णधारो दुरासदः। श्रीगर्भो विजयश्चैव धर्मपाल नमोऽस्तुते। इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा । नक्षत्रं कृत्तिका ते तु गुरुर्देवो महेश्वरः। हिरण्यं च शरीरं ते दैवतं च जनार्दनः।पिता पितामहो देवस्त्वं मां पालय सर्वदा । नीलजीमूतसंकाशस्तीक्ष्णदंष्ट्रः कृशोदरः । भावशुद्धोऽमर्षणश्च अतितेजास्तथैव च । इयं येन धृता क्षोणी

हतश्च महिषासुरः। तीक्ष्णधाराय शुद्धाय तस्मै खड्गाय ते नमः।' इति स्तुत्वा। 'रक्षार्थं बन्धनस्थोऽसि मुक्तये मोचितो मया। देव्याः प्रीतिं समुत्पाद्य स्वर्गं गच्छ पशूत्तम।' इति बन्धान्मोचयित्वा मूलमन्त्रं पठेत्। अथापरेण मन्त्रेण छेदयेत्। ॐ ह्रीं श्रीं चौं चण्डिकायै लोहदण्डायै ह्रीं ह्रीं इमं पशुं महातृप्तिं महानन्दं कुरु कुरु मुर २ स्वेष्टं देवि गृह्ण २ स्वाहा, कालि कालि खं २ कालि वज्रेश्वरि खड्गपाणिनि तीक्ष्णधारेण हन स्वाहा। 'अयं बलिर्मया दत्तः पशूनां च पशूत्तमम्। गृह्ण २ महादेवि रक्ष मां दुरितार्णवात्। रुधिरं मस्तकं स्कन्धं ततो देव्यै निवेदयेत्। घोरदंष्ट्रे करालास्ये सुरामांसप्रिये सदा। बलिं गृह्ण महादेवि पशुरक्तं समांसकम्।' अं चण्डिके चण्डिकायै काकोलूकगृध्रपरिवृतायै ह्रीं २ इदं पिशितं रक्ताक्तं गृह्ण २ स्वाहा। 'आहारे रुधिराकाङ्क्षि बलिं गृह्ण जयं कुरु। मम शत्रुसंहारिणि नवदुर्गे सुरार्चिते।' इमं पिशितरक्तान्नं गृह्ण स्वाहा। ततो देवीं स्तुत्वा नत्वा स्वहृद्युद्वास्य विहरेत्। इति मन्त्ररत्नदीपकोक्तबलिदानविधिः।

अथ संक्षिप्तबलिदानविधिः। 'उत्तराभिमुखो भूत्वा बलिं पूर्वमुखं तथा। निरीक्ष्य साधकः पश्चादिमं मन्त्रमुदीरयेत्। पशुस्त्वं बलिरूपेण मम भाग्यादुपस्थितः। प्रणमामि ततः सर्वरूपिणं बलिरूपिणम्। चण्डिकाप्रीतिदानेन दातुरापद्विनाशन। चामुण्डाबलिरूपाय बले तुभ्यं नमोऽस्तु ते। यज्ञार्थे बलयः सृष्टाः स्वयमेव स्वयंभुवा। अतस्त्वां घातयाम्यद्य तस्माद्यज्ञे वधोऽवधः। ऐं ह्रीं श्रीमिति मन्त्रेण तं बलिं मत्स्वरूपिणम्। चिन्तयित्वा न्यसेत्पुष्पं मूर्ध्नि तस्य तु भैरव। ततो देवीं समुद्दिश्य काममुद्दिश्य चात्मनः। अभिषिच्य बलिं पश्चात्करवालं च पूजयेत्।' अयमत्र क्रमः। बलिमभिषिच्य चन्दनादिभिः संपूज्य अद्येत्यादि, दशवर्षावच्छिन्नदुर्गाप्रीतिकाम इमं छागबलिं वह्निदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहं घातयिष्य इति संकल्प्य खड्गं पूजयेदिति। 'कृष्णं पिनाकपाणिं च कालरात्रिस्वरूपिणम्। उग्रं रक्तास्यनयनं रक्तमाल्यानुलेपनम्। रक्ताम्बरधरं चैव पाशहस्तं कुटुम्बिनम्। पिबमानं च रुधिरं भुञ्जानं क्रव्यसंचयम्। रसना त्वं चण्डिकायाः सुरलोकप्रसादक।' इति ध्यात्वा ह्रीं ह्रीं खं खड्गाय नमः इति चन्दनपुष्पधूपदीपनैवेद्यताम्बूलानि दद्यात्। तिथितत्त्वे तु ऐं ह्रीं श्रीं खड्ग इति मन्त्रेण धृत्वा खड्गमिति पूजयेत्। ततः कृताञ्जलिः पठेत्। 'असिर्विनाशनः खड्गस्तीक्ष्णधारो दुरासदः। श्रीगर्भो विजयश्चैव धर्माधार नमोऽस्तु ते। इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा।' इत्यादि 'पूजयित्वा ततः खड्गं "आं हुं फट्"

इति मन्त्रकैः । गृहीत्वा विमलं खड्गं छेदयेद्बलिमुत्तमम् । पश्चाब्दं लक्षणोपेतं गन्धपुष्पसमन्वितम् । विधिवत्कालिकालीति जप्त्वा खड्गेन घातयेत् ।' इति । "ॐ कालिकालि वज्रेश्वरि लोहदण्डायै नमः" इति मन्त्रः । 'तदुत्थं रुधिरं मांसं गृहीत्वा पूतनादिषु ।' आदिशब्दाच्चरकीविदारीपापराक्षस्यः । 'नैर्ऋतेभ्यः प्रदातव्यो महाकौशिकमन्त्रतः ।' "ॐ ऐं ह्रीं कौशिकी रुधिरेणाप्यायताम्" इति 'तस्याग्रतो नृपः स्नात्वा कृत्वा शत्रुं तु पैष्टिकम् । खड्गेन घातयित्वा तु दद्यात्स्कन्दविशाखयोः । स्थाने नियोजयेद्रक्तं शिरश्च सप्रदीपकम् । एवं दत्वा बलिं पूर्णफलं प्राप्नोति साधकः । बलिदाने तु दुर्गायाः सर्वत्रायं विधिः स्मृतः ।' इति । अथ महिषबलिदानमन्त्रः । 'यथा वाहं भवान्द्वेष्टि यथा वाहसि चण्डिकाम् । तथा मम रिपून्हिंस शुभं वह लुलायक । यमस्य वाहनस्त्वं तु पशुरूपधराव्यय । आयुर्वित्तं यशो देहि कासराय नमोऽस्तु ते ।' विस्तरस्तु तिथितत्त्वे द्रष्टव्यः । इति संक्षिप्तबलिदानम् ।

अत्र च तिथिह्रासे तन्त्रेणोपवासः तिथिद्वयनिमित्तं पूजादि महालयश्राद्धवदेकदिन आवृत्त्या कार्यम् । वृद्धौ तद्वदेवावृत्तिरिति निर्णयसिन्धौ । एककालकर्तव्यत्वेनोपवासवत्पूजापि तन्त्रेण कार्येति कालतत्त्वविवेचने । स्वस्याशक्तावन्येन पूजादि कारयेत् । 'स्वयं वाप्यन्यतो वापि पूजयेत्पूजयीत वा ।' इति प्रागेवोक्तत्वात् । इदं च देवीपूजनं शुक्रास्तादावपि कर्तव्यम् । तदुक्तं धर्मप्रदीपे— 'नष्टे शुक्रे तथा जीवे सिंहस्थे च बृहस्पतौ । कार्या चैव स्वदेव्यर्चा प्रत्यब्दं कुलधर्मतः ।' इति । मलमासे तु वचनाभावान्न भवति । अत्र दुर्गायात्रोक्ता शिवरहस्ये—'तत्रैव दुर्गा विमला तिष्ठत्यमललोचना । सर्वदुर्गहरा नित्यं स्वभक्ताभयदायिनी । तत्राश्विने शुक्लपक्षे प्रतिपद्यवधिक्रमात् । नवमीदिनपर्यंतं पूजा कार्या प्रयत्नतः । सा सर्वार्तिहरा नित्यं देवी काशीनिवासिनाम् । पूजिता भक्तवरदा भवत्येव न संशयः ।' इति प्रतिपत्पूजनम् ।

प्रतिपदादिषु विशेषो दुर्गाभक्तितरङ्गिण्यां भविष्ये—'केशसंस्कारद्रव्याणि प्रदद्यात्प्रतिपद्दिने । पट्टदोरं द्वितीयायां केशसंचयहेतवे । दर्पणं च तृतीयायां सिन्दूरालक्तकं तथा । मधुपर्कं चतुर्थ्यां तु तिलकं नेत्रमण्डनम् । पञ्चम्यामङ्गरागं च शक्त्यालंकरणानि च । षष्ठ्यां बिल्वतरौ बोधं सायं संध्यासु कारयेत् । सप्तम्यां प्रातरानीय गृहमध्ये प्रपूजयेत् । उपोषणमथाष्टम्यामात्मशक्त्या च पूजनम् । नवम्यामुग्रचण्डायाः पूजां कुर्याद्बलिं तथा । कुमारी पूजनीया च भूषणीया च भूषणैः । संपूज्य प्रेषणं

कुर्याद्दशम्यां शावरोत्सवैः। अनेन विधिना यस्तु देवीं प्रीणयते नरः॥ स्कन्दवत्पालयेद्देवी तं पुत्रधनकीर्तिभिः।' कृत्यतत्त्वार्णवे लैङ्गे—'कन्यायां कृष्णपक्षे तु पूजयित्वार्द्रे भेऽपि वा। नवम्यां बोधयेद्देवीं महाविभवविस्तरैः॥शुक्लपक्षे चतुर्थ्यां तु देवीकेशविमोक्षणे। प्रातरेव तु पञ्चम्यां स्नापयेत्सुशुभैर्जलैः॥षष्ठ्यां सायं प्रकुर्वीत बिल्ववृक्षेऽधिवासनम्। सप्तम्यां पत्रिकापूजा अष्टम्यां चाप्युपोषणम्। पूजा च जागरश्चैव नवम्यां विधिवद्बलिः। विसर्जनं दशम्यां तु क्रीडाकौतुकमङ्गलैः।' प्रत्यहं साधारणं दानान्तरमप्युक्तं देवीपुराणे-'नारिकेलफलादीनि नवकं नवकं प्रिये। ताम्रमृन्मयपात्राणि सपयांसि तथैव च। वंशपात्राणि वस्त्राणि भक्ष्यभोज्यान्वितानि च। यदि वा तिलपात्राणि मृत्पात्राण्यथ वा पुनः। अथ वा चान्यपात्राणि पञ्चामृतभृतानि च। सौभाग्यपात्राण्यथ वा कुङ्कुमादिभृतानि च। दुर्गा देवी प्रीयतां मे इत्युक्त्वा विधिवद्ददेत्। दुर्गा देवी प्रसन्ना स्यात्' इति। अत्र स्त्रीव्रते विशेषः परिभाषायां ज्ञेयः।

अथाशौचे विशेषो निर्णयामृते विश्वरूपनिबन्धे—'आश्विनस्य सिते पक्षे प्रारब्धे नवरात्रके। शावाशौचे समुत्पन्ने क्रियाः कार्याः कथं बुधैः।' इति प्रश्ने 'सूतकं वर्तमाने च समुत्पन्नं यदा भवेत्। देवीपूजा प्रकर्तव्या पशुयज्ञविधानतः।'। अत्र नवरात्रे वर्तमाने सूतकं यदोत्पन्नं भवेदित्यन्वयः। तथा 'सूतके पूजनं देव्या दानं चैव विशेषतः। देवीमुद्दिश्य कर्तव्यं तत्र दोषो न विद्यते।' इति। गौडनिबन्धे तिथितत्त्वेऽप्युक्तम्--आश्विनकृष्णनवम्यादि शुक्लप्रतिपदादि षष्ठ्यादि सप्तम्यादि चैकं कर्म। अतश्च मध्ये आशौचपातेऽपि न दोषः। 'संकल्पो व्रतसत्रयोः' इति विष्णूक्तेः। आरब्धं स्वयमेव कार्यम् अनारब्धं त्वन्येन कारयेदिति। दिवोदासीये—रजस्वला त्वन्येन कारयेत् सूतकादिवद्विशेषवचनाभावात्। अत्र निर्णयामृतादौ यदाशौचेऽपि नवरात्रपूजादिकं स्वयमेव कर्तव्यमित्युक्तं तन्मृग्यम्। शिवार्चनचन्द्रिकाग्रन्थलिखितनारदादिपञ्चरात्रग्रन्थविरोधात्। तथा च तत्त्वसागरसंहितायाम्-'आतुरी सौतिकी चैव त्रासी दौर्बोधिकी तथा। साधनाभाविनी चेति पञ्चधा भिद्यते पुनः। यदि लङ्घनपर्यन्तो व्याधिरात्मनि दृश्यते। तदा पूजा न कर्तव्या स्थण्डिले प्रतिमासु च। न स्नानं दन्तकाष्ठं वा कुर्याद्धोममथापि वा। रविमण्डलमालोक्य प्रतिमामथ वा पुनः। मूलमन्त्रं सकृज्जप्त्वा पुष्पं साक्षतमुत्क्षिपेत्। श्रान्तो व्याधिभिरत्युग्रैः क्लान्तश्चैवोपवासकैः। निजसामयिकैर्वापि स्वकर्तव्यं समापयेत्। स्नात्वा देवमथाग्नींश्च गुरून्विप्रान्प्रपूज्य च। एतावत्कालविच्छिन्ना पूजा युष्मत्प्रसादतः। न दोषोऽस्त्विति संप्रार्थ्य

पुनः पूर्ववदाचरेत् । यस्तु रोगवशान्मोहवशाद्दोष उपागतः । जपेन क्षालनीयः स्याद्दानेन हवनेन च । अथ सूतकिनः पूजां वदाम्यागमबोधिताम् । स्नात्वा नित्यं च निर्वर्त्य मानस्या क्रियया तु वै । बाह्यपूजाक्रमेणैव स्थानयोगेन पूजयेत् । यदि कामी नचेत्कामी नित्यं पूर्ववदाचरेत् । त्रासिनो वक्ष्यते पूजा तथैवागमबोधिता । लब्धं वा यदि वाऽलब्धम्' इत्यादि । सर्वालाभे तु 'पूजोदकेन कर्तव्या न चेत्तोयं च विद्यते । तथा संपूजयेद्देवं भावनाकुसुमादिभिः । दौर्बोधिकीं प्रवक्ष्यामि पूजामागमबोधिताम् । मूर्खस्त्रीबालवृद्धाद्या दुर्बोधा इति भाषिताः । मूलमूर्तिषडङ्गानि तेषां पूजा विधीयते । अन्येषामपि सर्वेषां प्रोक्ता संक्षेपकर्मणि ।' इति । यानि विष्ण्वादिवचनानि 'यज्ञव्रतविवाहेषु श्राद्धे होमार्चने जपे । प्रारब्धे सूतकं न स्यादनारब्धे च सूतकम् । प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः । नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया ।' इति । 'जपो देवार्चनविधिः कार्यो दीक्षान्वितैर्नरैः । नास्ति पापं यतस्तेषां सूतकं वा यतात्मनाम् ।' इति देवीयामलवचनम् । 'सूतके मृतके चैव धूमोद्गारादिके तथा । जप्यं वार्घ्यं तथा कुर्यान्मन्त्रन्यासपुरःसरम् ।'इति मृडानीतन्त्रवचनम् । अर्घ्यग्रहणं पूजोपलक्षणम् 'शिवविष्णवर्चने दीक्षा यस्य चाग्निपरिग्रहः।ब्रह्मचारियतीनां च शरीरे नास्ति सूतकम् ।' इति विष्णुयामलवचनम्।सूतके मृतके चैव नित्यं विष्णुयमस्य च।सानुष्ठानस्य विप्रेन्द्र सद्यःशुद्धिः प्रजायते।' इति नारदपञ्चरात्रवचनम्।'उपासने तु विप्राणामङ्गशुद्धिः प्रजायते ।' इति पराशरवचनम् । 'सूतके मृतके वापि न त्याज्यं शिवपूजनम् ।' इति लिङ्गपुराणवचनम्।एतानि सर्वाणि ब्राह्मणपराण्येव, विप्राणामित्युक्तेः। 'ब्राह्मणस्यैव पूज्योऽहं शुचेरप्यशुचेरपि । पूजां गृह्णामि शूद्रस्य पुनःस्वाचारवर्तिनः ।' इति शिववचनाच्च । अत्र शूद्रस्येत्युपलक्षणं क्षत्रियवैश्ययोरपि । विप्राणामपि तान्त्रिकनित्यपूजायामेवाधिकारः, यज्ञादौ तु न 'अग्निहोत्रादिकर्मार्थं शुद्धिस्तात्कालिकी मता ।' इति वचनेनाग्निहोत्रादावेव शुद्ध्यभिधानात् । तात्कालिकी यावता कर्म सिद्ध्यति । नैमित्तिककाम्यतान्त्रिकपूजायां तु तेषामप्यनधिकारः । ' सूतके मृतके चापि वर्तमाने तु नारद । कामतःपूजिते मन्त्रे शान्तिकादौ च कुत्रचित् । जपेत्पञ्चशतं मन्त्री सिद्धमन्त्रस्य भक्तितः । शतत्रयमकामाच्च प्रायश्चित्तविधौ जपेत् ।' इति नारदपञ्चरात्रवचनात् । कृत्यरत्नावल्यामपि मात्स्ये—'अन्तरा तु रजोयोगे पूजामन्येन कारयेत् ।' एवमाशौचेऽपि । 'सूतकात्प्राक्समारब्धमनेकाहं तु यद्व्रतम् । कायिकं तत्तु कुर्वीत न तु दानार्चनं जपम् । सूतकाहे तु यत्कि-

चिह्नानाद्यन्तरितं भवेत्। सूतकानन्तरे त्वन्हि तत्कर्तव्यमतन्द्रितैः। ' इति। तस्मात्सूतकिभिः पूजनं न कार्यम्। प्रतिनिधिद्वारा तु कार्यमेव। दीक्षितीयेऽप्येवम्। अत एव सूतके शिष्टैः पूजनं न क्रियते इत्याचारोऽपि इत्यलं विस्तरेण। इति नवरात्रे सूतकादिनिर्णयः॥ आश्विनशुक्लद्वितीयायां दानस्यानन्तफलम्। वचनं तु द्वितीयाप्रकरणे वक्ष्यते। आश्विनशुक्लपञ्चम्यामुपाङ्गललितांव्रतं दाक्षिणात्येषु प्रसिद्धम्। तदुक्तं स्कान्दे—' शुक्लपक्षस्य पञ्चम्यामिषे मासि चरेद्व्रतम्। ' इत्यादि। अत्र पञ्चमी रात्रिव्यापिनी ग्राह्येति केचित्। मध्याह्नव्यापिनी ग्राह्येत्यपरे। वचनानि तु पञ्चमीप्रकरणे वक्ष्यन्ते। कथापूजनादिकमपि तस्मिन्नेव प्रकरणे बोद्धव्यम्। इति पञ्चमीकृत्यम्। आश्विनशुक्लपक्षे मूलनक्षत्रे सरस्वतीस्थापना कार्या। यथोक्तं निर्णयामृते देवीपुराणे—' मूलेषु स्थापनं देव्याः पूर्वाषाढासु पूजनम्। उत्तरासु बलिं दद्याच्छ्रवणेन विसर्जयेत्। ' रुद्रयामले—' मूलर्क्षे च सुराधीश पूजनीया सरस्वती। पूजयेत्प्रत्यहं देव यावद्वैष्णवमृक्षकम्। नाध्यापयेन्न च लिखेन्नाधीयेत कदाचन। पुस्तके स्थापिते देव विद्याकामो द्विजोत्तम।' मूलस्याद्यपादे आवाहनमिति शिष्टाः। श्रवणाद्यपादे च विसर्जनम्। ' आदिभागो निशायां तु श्रवणस्य यदा भवेत्। संप्रेषणं तदा देव्या दशम्यां च महोत्सवः।' इति चिन्तामणौ ब्रह्माण्डपुराणात्। अथ षष्ठीकृत्यं निर्णयामृते—आश्विनशुक्लपञ्चम्यां स्नापिताया देव्याः सप्तम्यां पूजार्थं षष्ठ्यां नक्षत्रयुक्तायामसंभवे केवलायामपि बिल्ववृक्षनिमन्त्रणं कार्यम्। कालिकापुराणे—'बोधयेद्बिल्वशाखायां षष्ठ्यां देवीं फलेषु च।' इत्यादि। अत्र सर्वत्र तिथिनक्षत्रयोगादरो मुख्यः कल्पः। तदभावे तु तिथिरेव ग्राह्या। 'तिथिः शरीरं देवस्य तिथौ नक्षत्रमाश्रितम्। तस्मात्तिथिं प्रशंसन्ति नक्षत्रं न तिथिं विना। ' इति विद्यापतिलिखितवचनात्। देवलः—'तिथिनक्षत्रयोर्योगे द्वयोरेवानुपालनम्। योगाभावे तिथिर्ग्राह्या देव्याः पूजनकर्मणि। ' इति। अत्र च षष्ठी सायंकालव्यापिनी ग्राह्या। ' षष्ठ्यां बिल्वतरौ बोधं सायं संध्यासु कारयेत्।' इति भविष्यवचनात्। पत्रीप्रवेशात्पूर्वेद्युः सायंकाले षष्ठ्यभावे तत्पूर्वदिनेऽधिवासनं कार्यं कालेत्यन्तासत्त्वे त्वधिवासनलोपः। ' षष्ठ्यां सायं प्रकुर्वीत बिल्ववृक्षेऽधिवासनम्। ' इति वचनादिति कल्पतरुः। सायंश्रुतिः फलातिशयमात्रार्था न तु कर्मलोपः इत्याचार्यचूडामणिकृत्यरत्नावल्याम्। तत्त्वविवेचने चैवमेव। आमन्त्रणं तु पत्रीप्रवेशाव्यवहितपूर्वदिने कार्यम्। पत्रीप्रवेशनं रात्रौ न कार्यम्। ' पत्रीविसर्जनं रात्रौ प्रवेशं वा करोति यः। तस्य राज्यविनाशः स्याद्रा-

जा च विकलो भवेत् । ऋक्षयोगानुरोधेन रात्रौ पत्रीप्रवेशनम् । विसर्गं वा चरेद्यस्तु सराष्ट्रः स विनश्यति । ' इति निषेधात् । तेन च पत्रीप्रवेशनस्याष्टमीविद्धायां सप्तम्यां प्रातः कर्तव्यत्वात्तदव्यवहितपूर्वदिन एव सायाह्ने षष्ठ्यभावेप्यामन्त्रणं कार्यम् । ' पत्रीप्रवेशात्पूर्वेद्युः सायाह्ने बिल्ववासिनीम् । चण्डीमामन्त्रयेद्विद्वान्नात्र षष्ठीपुरस्क्रिया । ' इति ब्रह्माण्डपुराणवचनात् । मत्स्यसूक्तेऽपि—'ज्येष्ठा चाप्यथ वा षष्ठी सायंकाले न चेद्भवेत् । सायमेव तथापि स्याद्बिल्वशाखाभिमन्त्रणम् । पूर्वां षष्ठीं सनक्षत्रां सायं प्राप्तामपि त्यजेत् । यदा तु पत्रिकापूजा न परेद्युर्भविष्यति । सन्निकृष्टं तु यत्पूर्वं पत्रिका दिवसस्य तु । तद्दिने वरणं कृत्वा परे शाखां प्रवेशयेत् ।' इति । तत्र च पूजनक्रमः । बिल्वाभ्याशं गत्वा बिल्ववृक्षाय नम इति बिल्वतरुं संपूज्य बिल्ववृक्षे जयन्तीमन्त्रेण दुर्गे इहागच्छेह तिष्ठेति दुर्गामावाह्य षोडशभिः पञ्चभिर्वोपचारैस्तां तत्रैव संपूज्य गीतवाद्यघोषपुरःसरं तत्रैव बोधयेत् । तत्र मन्त्रः 'रावणस्य वधार्थाय रामस्यानुग्रहाय च । अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतः पुरा । अहमप्याश्विने षष्ठ्यां सायाह्ने बोधयाम्यतः । ' ततो बिल्वतरुमामन्त्रयेत् । 'मेरुमन्दरकैलासहिमवच्छिखरे गिरौ । जातः श्रीफलवृक्षस्त्वमम्बिकायाः सदा प्रिय । श्रीशैलशिखरे जातः श्रीफल श्रीनिकेतन । नेतव्योऽसि मया वृक्ष पूज्यो दुर्गास्वरूपतः ।' इति । एवं देवीमधिवास्य स्वगृहमागच्छेदिति । इतिषष्ठीकृत्यम् । ततः परदिने सप्तम्यां मूलयुक्तायां केवलायां वा पूर्वदिनामन्त्रितबिल्वतरुसमीपं गत्वा पुनस्तं संपूज्य गृहं प्रवेशयेत् । तदुक्तं हेमाद्रौ लैङ्गे—'मूलाभावे तु सप्तम्या केवलायां प्रवेशयेत् । युग्माभ्यां नवबिल्वस्य फलाभ्यां शाखिकां तथा । तथैव प्रतिमां देव्याः स्नात्वाऽभ्युक्ष्य प्रवेशयेत् ।' अत्र चोपवासपूजादावौदयिकी सप्तमी ग्राह्या न तु युग्मवाक्यात्पूर्वा । 'युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया । रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता ।' इति कृत्यतत्त्वार्णवोदाहृतवचनात् । 'भगवत्याः प्रवेशादिविसर्गान्ताश्च याः क्रियाः । तिथावुदयगामिन्या सर्वास्ताः कारयेद्बुधः ।'इति तिथितत्त्वे नन्दिकेश्वरपुराणवचनाच्च । दुर्गाभक्तितरङ्गिण्यामप्येवम् । तत्रापि घटिकातो न्यूनत्वे परा न कार्या ।'व्रतोपवासनियमे घटिकैकापि या भवेत् ।'इति देवलोक्तेः इति गौडाः ।दाक्षिणात्यास्तु-युग्मवाक्यात्पूर्वां कुर्वन्ति । पत्रिकापूजा च पूर्वाह्ण एव कार्या न तु मलानुरोधान्मध्याह्नादाविति कृत्यतत्त्वार्णवे उक्तम् । ज्योतिषेऽपि—'पूर्वाह्णे नवपत्रिका शुभकरी संग्रामघोरावहा सायाह्नेवधबन्धनादिकलहं सर्वक्षतं सर्वदा । सप्तम्यामस्तगायां यदि

विशति गृहं पत्रिका श्रीफलाख्या राज्ञः सप्ताङ्गराज्यं जनसुखमखिलं हन्ति मूलानुरोधात् । तस्मात्सूर्योदयस्थां नरपतिशुभदां सप्तमीं प्राप्य देवीं भूपालो वेशयेत्तां सकलजनहितां राक्षसर्क्षं विहाय।' इति । अथ सप्तम्यादिदिनत्रयविहितं पत्रिकापूजनं तत्कृत्यं चोच्यते । नित्यविधिं निर्वर्त्य पूर्वनिमन्त्रितबिल्वसमीपं गत्वा संपूज्य आगच्छ वरदे देवीति पूर्वोक्तमन्त्रं पठित्वा प्रार्थयेत् । 'बिल्ववृक्ष महाभाग सर्वदा शंकरप्रिय । गृहीत्वा तव शाखां तु दुर्गापूजां करोम्यहम् । शाखाच्छेदोद्भवं दुःखं न च कार्यं त्वया प्रभो । ' इति । ततः फलद्वययुक्तां शोभनापराजितादिग्गतामेकां शाखां छेदयेत् वनस्पत इत्यनेन मन्त्रेण। मन्त्रस्तु-'वनस्पते शतवल्शो विरोह सहस्रवल्शाविवयं रुहेम । यं त्वामयं स्वधितिस्तेजमानः प्रणिनाय महते सौभगाय ।' इति । क्वचित्तु "छिन्धि फट् ॐ हुं स्वाहा" इति मन्त्रः । ततस्तां शाखामानीय गृहाङ्गणे पीठे संस्थाप्य शुद्धोदकेन संस्नाप्य बिल्वशाखायै नमः इति पूजयित्वा बिल्वशाखायां मृण्मयप्रतिमायां च देवीमावाहनपुरःसरं तथैव पुजयित्वा माषभक्तादिबलिं च दत्वा दोलादिना शाखां प्रतिमां च पूजागृहद्वारदेशमानीय तत्रैव स्थापयित्वा पूजागृहस्थितानि भूतानि भूतेभ्यो नम इति गन्धादिभिः संपूज्य ' भूताः प्रेताः पिशाचाश्च ये वसन्त्यत्र भूतले । ते गृह्णन्तु मया दत्तो बलिरेष प्रसाधितः । पूजिता गन्धपुष्पाद्यैर्बलिभिस्तर्पितास्तथा । देशादस्माद्विनिःसृत्य पूजां पश्यन्तु मत्कृताम् ।' भूतेभ्य एष माषभक्तबलिर्नमः इति सपुष्पजलोत्सर्गेण बलिं तेभ्यो दत्त्वा ' अपसर्पन्तु ते भूता ये भूता भूमिपालकाः । भूतानामविरोधेन पूजाकर्म करोम्यहम् ।' इति पठित्वा फडिति तान्यपसारयेत् । सर्षपादींश्च विकिरेत् । तदकरणे दोषश्रवणात् । तथा च कालिकापुराणे—'स्थितेषु तत्र भूतेषु नैवेद्यं मण्डलं तथा । विलुम्पन्ति महालुब्धा न च गृह्णन्ति देवताः । तस्माद्यत्नेन कर्तव्यं भूतानामपसारणम् ।' इति । शारदातिलके-' विकिरान्विकिरेत्तत्र सप्तसप्तान् शराणुना । लाजचन्दनसिद्धार्थफलपुष्पकुशाक्षताः । विकिरा इति संप्रोक्ताः सर्वविघ्नविनाशनाः ।' इति । शराणुः फडिति अस्त्रमन्त्रः । स चाभिमन्त्रणे विकिरणे च । ततः पुनः शाखायां प्रतिमायां च देवीं संपूज्य श्रीशैलेत्यादि ' नेतव्योऽसि मयागच्छ पूज्यो दुर्गास्वरूपतः ।' इति दुर्गास्वरूपतया शाखां ध्यात्वा गीतवाद्यादिघोषेण प्रतिमासहितां ता पूजागृहं प्रवेश्य ' आरोपितासि दुर्गे त्वं मृण्मये श्रीफलेऽपि च । स्थिरा नितान्तं भूत्वा मे गृहे त्वं कामदा भव ।' इति पूजास्थाने शोभनपीठोपरि स्थिरीकृत्य पूर्वोक्तप्रकारेण प्राणप्रतिष्ठां कृत्वा प्राणप्रतिष्ठामन्त्रेण

प्रतिष्ठाप्य सपुष्पाक्षतानादाय 'आवाहयाम्यहं देवीं मृण्मये श्रीफले तथा । कैलासशिखराद्देवि विन्ध्याद्रेर्हिमपर्वतात् । आगत्य बिल्वशाखायां चण्डिके कुरु संनिधिम् । भगवति दुर्गे इहागच्छेत्युभयोरावाह्य 'स्थापितासि मया देवि श्रीफले मृण्मयेऽपि च । आयुरारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते ।' भगवति दुर्गे इह तिष्ठेति स्थापयित्व कृताञ्जलिः 'दुर्गे दुर्गस्वरूपासि सुरतेजोमहाबले।सदानन्दकरे देवि प्रसीद मम सिद्धये। एह्येहि भगवत्यम्ब शत्रुक्षयजयप्रदे । भक्तितः पूजयामि त्वां दुर्गे देवि सुरार्चिते।पल्लवैश्च फलोपेतैःपुष्पैश्च सुमनोहरैः । पल्लवे संस्थिते देवि पूजये त्वां प्रसीद मे । दुर्गे देवि इहाऽऽगच्छ सांनिध्यं परिकल्पय । यज्ञभागान्गृहाण त्वं योगिनीकोटिभिः सह।' इति पठेत्।-ततो जयन्तीत्यादिमन्त्रेणानुलेपनान्तं पूजयित्वा पुष्पाञ्जलित्रयं दद्यात् ॐ दुर्गायै नम इत्यादिमन्त्रेण । ततः 'अमृतोद्भवं श्रीवृक्षं शंकरस्य सदा प्रियम् । बिल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि ।' इति बिल्वपत्रम् । 'ब्रह्मविष्णुशिवादीनां द्रोणपुष्पं सदा प्रियम् । तत्ते दुर्गे प्रयच्छामि सर्वकामार्थसिद्धये ।' इति द्रोणपुष्पं च निवेद्य जयन्तीत्यादि इमानि पुष्पाणि दुर्गायै नम इति जातीचम्पकादिसुगन्धिपुष्पकाण्यपि दत्त्वा तथैव धूपदीपनानानैवेद्यपुनराचमनीयताम्बूलानि दत्त्वा पूजासाद्गुण्यार्थं किंचिद्दक्षिणां च दत्त्वा स्तुतिभिः स्तुत्वा प्रणम्य बद्धाञ्जलिः प्रार्थयेत् । 'महिषघ्नि महामाये चामुण्डे मुण्डमालिनि । द्रव्यमारोग्यमैश्वर्यं देहि देवि नामेऽस्तु ते । कुङ्कुमेन समालब्धे चन्दनेन विलेपिते । बिल्वपत्रकृतापीडे दुर्गेऽहं शरणं गतः ।' सर्वमङ्गलेति रूपं देहीति श्लोकद्वयं पठेत् । ततः कदल्यादिपात्रिकासु पूजनम्।तास्तु—'रम्भा कपिहारिद्रा च जयन्ती बिल्वदाडिमौ । अशोको मानवृक्षश्च धान्यादिनवपत्रिकाः।' इति कृत्यतत्त्वार्णवे उक्ताः । तत्र कदल्यां ब्रह्माणीं, दाडिमे रक्तदन्तिकां, धान्ये लक्ष्मीं, हरिद्रायां दुर्गां, माने चामुण्डां; कपौ, कालिकां, बिल्वे शिवाम्, अशोके शोकरहितां, जयन्त्यां कीर्तिं चावाह्य पूजयेत् । कौस्तुभे तु बिल्वाभावे पत्रिकान्तरेऽपि बोधनं कार्यम्, दुर्गाभक्तितरङ्गिण्यां रम्भादीनामपि तत्समत्वेनाभिधानादिति स्थितम् । ततो बलिं दद्यात् दुर्गां शिवामित्यादि च पठेत् । कालतत्त्वविवेचने पत्रिकापूजा प्रतिपत्प्रतिष्ठापितदेवीप्रतिमासमीप एव । यदा प्रतिमापूजायामपि सप्तम्यादिपक्षस्तदा पत्रिकयैव सह प्रतिमाया अपि देव्यर्थकृतगृहप्रवेशादिविसर्जनान्तं कर्तव्यमिति दुर्गाभक्तितरङ्गिण्यामिति । एवमेवाष्टमीनवमीदशमीदिनेष्वपि पूजा बोध्या । इति सप्तमीपूजाविधिः ।

अथाष्टमी ॥ सा च पूर्णा चेत्सैव खण्डा चेन्नवमीविद्धा ग्राह्या।सप्तमीविद्धाया निषिद्धत्वात् । सर्वथा नवमीविद्धालाभे सप्तमीविद्धैव ग्राह्या । वचनानि तु अष्टमीप्रकरणे वक्ष्यन्ते । अत्र कृत्यमुक्तं निर्णयामृते भविष्योत्तरे—'तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी । प्रादुर्भूता महाघोरा योगिनीकोटिभिः सह । अतोऽर्थं पूजनीया सा तस्मिन्नहनि मानवैः । उपोषितैर्वस्त्रमाल्यधूपरत्नानुलेपनैः । आमिषैर्विविधैः शाकैर्होमैर्ब्राह्मणतर्पणैः । बिल्वपत्रैः श्रीफलैश्च चन्दनेन घृतेन वा । पशुभिः पानकैर्हृद्यै रात्रौ जागरणेन च।' इति । अयं च केवलाष्टम्युपवासः पुत्रवतो निषिद्धः । 'उपवासं महाष्टम्यां पुत्रवान्न समाचरेत्।यथा तथा वा पूतात्मा व्रती देवीं प्रपूजयेत् ।' इति कालिकापुराणोक्तेः । अहनीति श्रवणाद्दिवापूजा प्रतीयते । 'निशायां पूजिता देवी' इत्यनेन प्रागुक्तवचनेन । कन्यासंस्थे रवावित्यादिना चाष्टम्यां रात्रावपि पूजनं कर्तव्यमित्युक्तम् । विशेषतोऽपि पूजनं तत्र कर्तव्यमित्युक्तमन्यत्र । 'पुनः पूजां तथाऽष्टम्यां विशेषेण समाचरेत् । जागरं च स्वयं कुर्याद्बलिदानं महानिशि ।' इति कालतत्त्वविवेचने देवीपुराणे—'पशुघातः प्रकर्तव्यो गवयाजवधस्तथा । देवीं तु पूजयित्वा ये अर्द्धरात्रेऽष्टमीषु च । घातयन्ति पशून्भक्त्या ते भवन्ति महाबलाः । बलिं च ये प्रयच्छंति सर्वभूतविनाशनम् । तेषां तु तुष्यते देवी यावत्कल्पं तु शांकरम्।' इत्यादि । भविष्योत्तरे—'तस्यां सदा पूजनीया चामुण्डा मुण्डमालिनी । तस्यां ये ह्युपयुज्यन्ते प्राणिनो महिषादयः । सर्वे ते स्वर्गतिं यान्ति घ्नतां पापं न विद्यते । यावन्न चालयेद्गात्रं पशुस्तावन्न हन्यते । न तथा बलिदानेन पुष्पधूपविलेपनैः । यथा संतुष्यते मेषैर्महिषैर्विन्ध्यवासिनी । बलिदानं च मांसेन मद्येन सहितौदनम् । सप्तम्यां पत्रिकापूजा अष्टम्यां चाप्युपोषणम् । पूजा च जागरैश्चैव नवम्यां विधिवद्बलिः ।' इति । अत्र साश्वस्याश्वपूजनमुक्तं देवीपुराणे—'अश्वयुक्छुक्लप्रतिपत्स्वातियुग्मे शुभे दिने । पूर्वमुच्चैःश्रवानाम प्रथमं श्रियमाहरत् । तस्मात्साश्वैर्नरैः सोऽत्र पूज्योऽसौ श्रद्धयाऽन्वितैः । पूजनीयाश्च तुरगा नवमीं यावदेव हि । शान्तिः स्वस्त्ययनं कार्यं तदा तेषां दिने दिने । धान्यं भल्लातकं कुष्ठं वचासिद्धार्थकास्तथा । पञ्चवर्णेन सूत्रेण ग्रन्थिं तेषां तु बन्धयेत् । वायव्यैर्वारुणैः सौरैः शाक्तैर्मन्त्रैः सवैष्णवैः । वैश्वदेवैस्तथाग्नेयैर्होमः कार्यो दिने दिने ।' अत्र वायव्यैरित्यादि बहुवच-

नेभ्यः प्रत्येकं कपिञ्जलाधिकरणन्यायेन मन्त्रेषु त्रित्वं लभ्यते 'तुरङ्गा रक्षणीयास्तु पुरुषैः शस्त्रपाणिभिः । न च ताड्याः क्वचित्तत्र न च वाह्याः कथंचन ।' इति । एतदुत्तरकृत्यं भविष्योत्तरे—'जयाभिलाषी नृपतिः प्रतिपत्प्रभृति क्रमात् । लोहाभिसारिकं कर्म कारयेद्यावदष्टमीम् ।' इति । लोहाभिसारिकविधानं तत्रैवोक्तम् । 'प्रागुदक्प्रवणे देशे पताकाभिरलंकृतम् । मण्डपं कारयेद्दिव्यं नवसप्तकरं वरम् । 'षोडशहस्तप्रमाणमित्यर्थः । 'आग्नेय्यां कारयेत्कुण्डं हस्तमात्रं सुशोभनम् । मेखलात्रयसंयुक्तं योन्याऽश्वत्थदलाभया । राजचिन्हानि सर्वाणि शस्त्राण्यन्यानि यानि च । आनीय मण्डपे तानि सर्वाण्यत्राधिवासयेत् । ततस्तु ब्राह्मणः स्नातः शुक्लाम्बरधरः शुचिः । ॐकारपूर्वकैर्मन्त्रैस्तल्लिङ्गैर्जुहुयाद्धृतम् ।लोहनामाभवत्पूर्वं दानवः सुमहाबलः । स देवैः समरे क्रूरो बहुधा शकलीकृतः।तदङ्गसंभवं सर्वं लोहं संदृश्यते क्षितौ।शस्त्रास्त्रमन्त्रैर्होतव्यं पायसं घृतसंयुतम् । हुतशेषं तुरङ्गाणां राजान्नमुपहारयेत् । लोहाभिसारिकं कर्म तेनैतदृषिभिः स्मृतम् । धृतपल्ययणानश्वान्गजांश्च समलंकृतान् । भ्रामयेन्नगरे नित्यं नन्दिघोषपुरस्कृतान् । प्रत्यहं नृपतिः स्नात्वा संपूज्य पितृदेवताः । पूजयेद्राजचिन्हानि फलमाल्यविलेपनैः । हुतशेषं प्रदातव्यमौपनायनिके गजे। तस्याभिसारणाद्राज्ञो विजयः समुदाहृतः । पूजामन्त्रान्प्रवक्ष्यामि पुराणोक्तानहं तव । यैः पूजिताः प्रयच्छन्ति कीर्तिमायुर्यशो बलम् ।' इति । अथ प्रयोगः । विजयप्राप्तिकामो लोहाभिसारिकं कर्म करिष्ये इति संकल्प्य षोडशहस्तप्रमाणं मण्डपं पताकोपशोभितमैशानप्रवणदेशे विधाय तदाग्नेय्यां हस्तमात्रं त्रिमेखलमश्वत्थदलोपमयोनियुक्तं मनोहरं कुण्डं विधाय मण्डपैशानदेशे राजचिन्हानि शस्त्राणि स्थापयेत् । अश्वशालां गोमयलिप्तां सर्वतो वेष्टनेन जनसंचारवर्जितां नानापुष्पफलाद्यलंकृतां धूपितां कृत्वा तस्यामुदयात्प्राक् एव स्नापितानलंकृतान् निर्जलपुष्पमालाभिरलंकृतांस्तुरगान् सूर्यकरस्पर्शवर्जं शस्त्रपाणयः पुरुषाः सप्ताहं रक्षेयुः तेषां कण्ठेषु गुग्गुलामलकीधान्यभल्लातककुष्ठवचापामार्गबीजलोहश्वेतसर्षपाणां पञ्चवर्णसूत्रेण वस्त्रे पोटलिकां कृत्वा बध्नीयात् । प्रतिपदःस्वातियोगाभावे यस्यां तिथौ स्वातियोगःप्रातर्भवति तामारभ्य नवमीपर्यन्तमश्वपूजा कार्या।'अश्वयुक्छुक्लपक्षे तु स्वातियोगे शुभे दिने।'इति प्रकृत्य ब्राह्मे वाजिनीराजविधेः इति संप्रदायविदः । अन्ये तु सत्यामसत्यामपि स्वात्यां प्रतिपदि चित्रावैधृतियोगे द्वितीयायां पञ्चम्यां वाऽश्वपूजारम्भः 'वाजिनीराजनं पश्चाद्धित्वा चित्रां च वैधृतिम् ।' इत्यश्वशास्त्रोक्तेः इत्याहुः । द्वितीयाविधिश्च व्यवहारोच्चये—'आश्वयुजशुक्लपक्षे तिथौ

द्वितीयादिसप्तरात्रं तु । तत्र दिवाकरकिरणैरस्पृष्टा वाजिनो रक्ष्याः । गुग्गुलं हिङ्गुलं चैव वचापामार्गतण्डुलान् । लोहं सिद्धार्थकं चैव बध्नीयाद्वाजिकण्ठके । ग्रहहोमश्च कर्तव्यो ग्रहाणामर्चनं तथा ।' इति । तृतीयापञ्चम्योरपि विधिर्दृष्टो गोविन्दार्णवे—'स्वात्यादित्ये तृतीयादौ सप्ताहं चाश्विने सिते । रक्षां कृत्वा हयानां तु शान्त्या नीराजयेत्ततः ।' इति । भूपालवल्लभे—'कार्तिके मासि पूर्णायामष्टम्यां द्वादशीदिने । आश्विने शुक्लपञ्चम्यां हयनीराजनं स्मृतम् ।' इति । अत्र पञ्चम्यन्तोक्तकालेषु दैवात्तदनारम्भे गौणकालत्वेनाष्टमीद्वादशीपूर्णिमा विहिता इति बोध्यम् । सौगन्धिकपुष्पसूर्यवल्लीदर्शनं तुरगाणां न कारयेत् । 'दृष्ट्वा पुष्पद्वयं वाहा न लभन्ते शुभां गतिम् । तस्मात्सौगन्धिकं पुष्पं सूर्यवल्लीं च वर्जयेत्।' इति हयशारीरवचनात् । 'सौगन्धिकं तु कल्हारम्' इत्यमरः । सूर्यवल्ली (हुरहुरा) इति प्रसिद्धा । 'ततो यजमानः देशकालौ संकीर्त्य सकलशत्रुजयसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं लोहाभिसारिकं यज्ञं वाजिनीराजनसहितं करिष्ये' इति संकल्प्य गणपतिपूजादि आचार्यवरणान्तं कुर्यात् । तत आचार्यः प्रत्यक्षाश्वपूजनात्पूर्वं प्रतिमादौ उच्चैःश्रवःपूजां विधाय रेवन्तपूजनं कुर्यात् । तत्र मन्त्रः शालिहोत्रे—'नमो देवाधिदेवाय तुरङ्गबलचारिणे । सूर्यपुत्राय देवाय तुरङ्गमहिताय च । तुरङ्गपरिषघस्य नृगजोपरि धावति । साश्वमश्वाधिपं रक्ष शरणं त्वां व्रजाम्यहम्।' इति । 'सूर्यपुत्र महाबाहो छायाहृदयनन्दन । शान्तिं कुरु तुरङ्गाणां रेवन्ताय नमोऽस्तु ते।' इति वा । सारसिन्धौ-'कुङ्कुमागरुकर्पूरचन्दनाद्यनुलेपनैः । पशुपुष्पार्घधूपैश्च दधिमोदकपायसैः । ये पूजयन्ति रेवन्तं तेषां श्रीरनपायिनी ।' इति । ततः प्रत्यक्षाश्वपूजनं तन्नीराजन च कृत्वा सिंहासनान्तपूजां कुर्याद्वक्ष्यमाणमन्त्रैः । कदाचिदेतासु पूजासु स्त्रीकर्तृकत्वप्रसक्तावपि रेवन्तपूजां स्त्री न कुर्यात् । 'अभूद्वै पूर्वभूपस्य पत्न्या रेवन्तपूजने । सूनुनाशस्ततो नारी न नियोज्या तदर्चने ।' इति गोविन्दार्णवसारसिन्धुवचनात् । सर्वपूजान्ते कुण्डे गृह्योक्तविधिनाऽग्निस्थापनादि । ततो ग्रहाणामावाहनम् । ततो गृह्योक्तविधिना वायव्यादिलिङ्गैर्मन्त्रैरेकविंशतिमाज्याहुतीर्जुहुयात् । 'ॐकारपूर्वकैर्मन्त्रैस्तल्लिङ्गैर्जुहुयाद्घृतम् ।' इति भविष्ये । वायवायाहीति तिसृणां मधुच्छन्दा वैश्वामित्रो वायुर्गायत्री वाजिनीराजनप्रधानहोमे विनियोगः । 'ॐ वायवायाहि दर्शतेमे सोम अरंकृताः । तेषां पाहि श्रुधी हवं स्वाहा' वायवे इदम् । 'ॐ वायउक्थेभिर्जरन्ते त्वामच्छा जरितारः । सुतसोमा अहर्विदः स्वाहा' वायवे इदम् । 'ॐ वायो तव प्रपृंचती धेनाजिगाति

दाशुषे। उरूची सोमपीतये स्वाहा' वायव इदम्। न हिते इति तिसृणामाजीगर्तो वरुणस्त्रिष्टुप् वाजिनीराजनप्रधानहोमे विनियोगः। 'ॐ न हि ते क्षत्रं सहो न मन्युं च यश्चनामी पतयन्ता आपुर्नेमा आपो अनिमिषं चरन्तीर्न ये वातस्य प्रमिनन्त्यभ्वं स्वाहा' वरुणायेदम्। 'ॐ अबुध्ने राजा वरुणो वनस्योर्ध्वं स्तूपं ददते पूतदक्षः। नीचीनास्थुपरिबुध्न एषामस्मै अन्तर्निहिताः केतवः स्युःस्वाहा' वरुणायेदम्। 'ॐ उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेत वाऊ। अपदे पादा प्रतिधातवे करुतापवक्ता हृदयाविधश्चित्स्वाहा' वरुणायेदम्। उदुत्यमिति तिसृणां प्रस्कण्वः सूर्यो गायत्री वाजिनीराजनप्रधानहोमे विनियोगः। 'ॐ उदुत्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम् स्वाहा' सूर्यायेदम्। 'ॐ अपत्येतायवो यथा नक्षत्रा यंत्यक्तुभिः। सूराय विश्वचक्षसे स्वाहा' सूर्यायेदम्। उक्थमिन्द्रायेति द्वयोर्मधुच्छन्दा इन्द्रोऽनुष्टुप् वाजिनीराजनप्रधानहोमे विनियोगः।'ॐउक्थमिन्द्राय शंस्यं वर्धनं पुरुनिःषिधे।शक्रो यथा सुतेषुणो रारणेत्सख्येषु च तस्मिन् सखित्व ईमहे तं राये तं सुवीर्ये। स शक्रतनुतनःशकदिन्द्रो वसु दयमानः स्वाहा' इन्द्रायेदम्। 'ॐज्येष्ठेन सोतरिन्द्राय सोमं वीराय शक्राय। भरा पिब भर्याय स्वाहा' इन्द्रायेदम्। अतोदेवेति तिसृणां मेधातिथिर्विष्णुर्गायत्री वाजिनीराजनप्रधानहोमे विनियोगः। 'ॐअतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे। पृथिव्याः सप्त धामभिः स्वाहा' विष्णव इदम्। 'ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूळ्हमस्य पांसुरे स्वाहा' विष्णव इदम्। 'ॐत्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः। अतो धर्माणि धारयन् स्वाहा' विष्णव इदम्। ओमास इति तिसृणां मधुच्छन्दा विश्वेदेवा गायत्री वाजिनीराजनप्रधानहोमे विनियोगः। 'ॐओमासश्चर्षणीधृतो विश्वे देवास आगत। दाश्वांसो दाशुषः सुतं स्वाहा' विश्वेभ्यो देवेभ्य इदम्। 'ॐविश्वेदेवासो अप्तुरः सुतमागन्त तूर्णयः। उस्रा इव स्वसराणि स्वाहा' विश्वेभ्यो देवेभ्य इदम्। 'ॐविश्वेदेवासो अस्रिध एहि मायासो अद्रुहः। मेधं जुषन्त वह्नयः स्वाहा' विश्वेभ्यो देवेभ्य इदम्। अग्निमीळे इति तिसृणा मधुच्छन्दा अग्निर्गायत्री वाजिनीराजनप्रधानहोमे विनियोगः। 'ॐअग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमं स्वाहा' अग्नये इदम्। 'ॐअग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत। स देवां एह वक्षति स्वाहा' अग्नय इदम्। 'ॐअग्निना रयिमश्नवत्पोषमेव दिवेदिवे। यशसं वीरवत्तमं स्वाहा' अग्नय इदम्।इति ऋक्छाखिनाम्। अथ यजुःशाखियजमानापेक्षितास्तच्छाखीयमन्त्रा

लिख्यन्ते । पीवो अन्नां रायेनु आनो नियुद्भिरिति तिसृणां वसिष्ठ ऋषिः वायुर्देवता त्रिष्टुप्छन्दः वाजिनीराजनप्रधानहोमे विनियोगः । एवमग्रेऽपि विनियोगो ज्ञातव्यः । 'ॐपीवो अन्नां रयिवृधःसुमेधाःश्वेतः सिशक्ति नियुतामभिश्रीः । ते वायवे समनसो वितस्थुर्विश्वेन्नरः स्वपत्यानि चक्रुः स्वाहा ।' 'राये नुपजज्ञतू रोदसी मे राये देवी धिषणा धाति देवम् । अध वायुर्नियुतः सश्चतस्वा उतः श्वेतं वसुधितिं निरेके स्वाहा।' 'आनो नियुद्भिः शतिनीभिरध्वरम् । सहस्रिणीभिरुपयाहि यज्ञम् । वायो अस्मिन् सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः स्वाहा' इदं वायवे न मम इति तिसृणां त्यागः। उरुᳬहि राजा इमं मे तत्वायामीति तिसृणामृचां शुनःशेपो वरुणः आद्यन्तयोस्त्रिष्टुप् मध्यमाया गायत्री । 'उरु॰हि राजा वरुणश्चकार सूर्याय पन्थामन्वेत वाउ। अपदे पादा प्रतिधावते करुतापवक्ता हृदयाविधश्चित्स्वाहा।' 'इमं मे वरुणश्रुधी हवमद्या च मृडय । त्वामवस्युराचके स्वाहा ' 'तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशᳬसमान आयुः प्रमोषीः स्वाहा' इदं वरुणाय।उद्वयमुदुत्यमिति द्वयोः प्रस्कण्वः सूर्यः क्रमेणानुष्टुब्गायत्री।चित्रमिति कुत्स आङ्गिरसः सूर्यस्त्रिष्टुप् । 'उद्वयन्तमसस्परिस्वः पश्यन्त उत्तरम्।देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्।' 'उदुत्यं जातवेदसं देवं वहन्ति केतवः।दृशे विश्वाय सूर्यम्।' 'चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षᳬ सूर्य आत्माजगतस्तस्थुषश्च स्वाहा' इदं सूर्याय।त्रातारमित्यस्य गर्गः इन्द्रःसुत्रामा तस्य वयः इत्यनयोः प्रजापत्यश्विसरस्वत्यऋषयः इन्द्रो देवता त्रिष्टुप् । 'त्रातारमिन्द्रमवितारमिन्द्रᳬहवे हवे सुहवᳬशूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्र॰ स्वस्तिनोमघ वा धात्विन्द्रः स्वाहा' 'इन्द्रः सुत्रामा स्ववां अवोभिः । सुमृडीको भवतु विश्ववेदाः । बाधतां द्वेषो अभयं कृणोतु । सुवीर्यस्य पतयः स्याम स्वाहा' 'तस्य वयᳬसुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम । स सुत्रामा स्ववा॰इन्द्रोऽ अस्मे आराच्चिद्द्वेषः । सनुतर्युयोतु स्वाहा ' इदमिन्द्राय । इदं विष्णुरित्यस्य मेधातिथिर्ऋषिः विष्णुर्गायत्री, इरावती इत्यस्य वसिष्ठो विष्णुः त्रिष्टुप्, उरुविष्णो इत्यस्य प्रजापतिर्विष्णुः अनुष्टुप् । ' इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाᳬसुरे स्वाहा । ' ' इरावती धेनुमतीहि भूतं सूयवासिनीमनवेदशस्ये । व्यस्तभ्नाद्रोदसी विष्णुरेते दाधार पृथिवीमभितो मयूखैः । ' ' उरु विष्णो विक्रमस्योरुक्षयाय नस्कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिन्तिर स्वाहा ' इदं विष्णवे न मम ।

ओमास इति मधुच्छंदा विश्वेदेवास इत्यस्य गृत्समदः विश्वेदेवा देवताः गायत्र्यौ विश्वे-देवास इत्यस्याःसुहोत्रादयो विश्वेदेवाः त्रिष्टुप्। 'ओमासश्चर्षणीधृतो विश्वेदेवास आगत। दाश्वा ᳪ सो दाशुषः सुतं स्वाहा' 'विश्वेदेवासो अप्तुरः सुतमागन्तु तूर्णयः। उस्रा इव स्वसुराणि स्वाहा' 'विश्वे देवाः शृणुतेम ᳪ हवं मे ये अन्तरिक्षे य उप द्यविष्ठ। ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्व ᳪ स्वाहा' इदं विश्वेभ्यो देवेभ्यो न मम। अग्नेनयेत्यस्य अगस्त्य ऋषिः आपन्न इति प्रजापतिर्ऋषिः अग्नि-र्दैवता त्रिष्टुभौ, यमग्न इति मधुच्छन्दा अग्निर्गायत्री। 'अग्ने नय सुपथा रायेऽस्मा-न्विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम स्वाहा।' 'आपन्नो अग्निर्वरिवस्कृणोत्वयं मृधः। पुर एतु प्रभिन्दन् अयं वाजं जयतु वाजसातावय ᳪ शत्रूञ्जयतु जर्हृषाणः स्वाहा।' 'यमग्नेपृत्सु मर्त्यमवावाजेषु यंजुनाः स यन्ता शश्वतीरिषः स्वाहा' इदमग्नये न मम। शस्त्रास्त्रमन्त्रैः प्रतिमन्त्र-मष्टोत्तरशतमष्टाविंशतिं वाऽष्टौ वा घृतपायसाज्याहुतीर्हुत्वा हुतशेषं तुरङ्गगजेभ्यो दद्यादिति। इति कातीयानाम्। इति प्रयोगः। अथ समलंकृतान् सपल्ययणान-श्वान् गजांश्च वाद्यघोषपुरःसरं नगरे प्रत्यहं भ्रामयेत्। ततो राजा कृतमङ्गलस्नानः पितृदेवताः संपूज्य विजयारोग्यादिवृद्ध्यर्थं छत्रादिपूजनमहं करिष्ये इति संकल्प्य छत्राय नम इत्यादिमन्त्रेण गन्धादिभिः संपूज्य इति पठेत्—'यथाऽम्बुदश्छादयति शिवायेमां वसुंधराम्। तथा छादय राजानं विजयारोग्यवृद्धये।' अथ चामरमन्त्रः। 'शशाङ्ककरसंकाशक्षीरडिण्डीरपाण्डुर। प्रोत्सारयाशु दुरितं चामरामरदुर्लभ।' अथ खड्गमन्त्रः। 'असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः। श्रीगर्भो विजयश्चैव धर्मधा-रस्तथैव च। इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा। नक्षत्रं कृत्तिका ते तु गुरुर्दे-वो महेश्वरः। हिरण्यं च शरीरं ते धाता देवो जनार्दनः। पिता पितामहो देवस्त्वं मां पालय सर्वदा। नीलजीमूतसंकाशस्तीक्ष्णदंष्ट्रः कृशोदरः। भावशुद्धोऽमर्षणश्च अतितेजास्तथैव च। इयं येन धृता क्षोणी हतश्च महिषासुरः। तीक्ष्णधाराय शुद्धाय तस्मै खड्गाय ते नमः।' अत्र केचिन्मन्त्रा निबन्धेष्वदृष्टा अपि पद्धतिदृष्टा लिख्य-न्ते। अथ कटारमन्त्रः।'रक्षाङ्गानि गजान्रक्ष रक्ष वाजिधनानि च। मम देहं सदा रक्ष कट्टारक नमोऽस्तु ते।' अथ च्छुरिकामन्त्रः। 'सर्वायुधानां प्रथमं निर्मितासि पिना-किना। शूलायुधाद्विनिष्कृष्य कृत्वा मुष्टिग्रहं शुभम्। चण्डिकायाः प्रदत्तासि सर्वदुष्ट-निबर्हिणी। तया विस्तारिता चासि देवानां प्रतिपादिता। सर्वसत्त्वाङ्गभूतासि सर्वाशु-

भनिबर्हिणी। छुरिके रक्ष मां नित्यं शान्तिं यच्छ नमोऽस्तु ते।' अथ कवचमन्त्रः। 'शर्मप्रदस्त्वं समरे वर्म सर्वायशो नुद। रक्ष मां रक्षणीयोऽहं तापनेय नमोऽस्तु ते।' अथ चर्ममन्त्रः-'चण्डिकायाः प्रदत्तं त्वं सर्वदुष्टनिबर्हणम्। त्वया निस्तारिता देवाः सुप्रतिष्ठं पितामहैः। अतस्त्वयि बलं सर्वं विन्यस्तं देवसत्तमैः। तस्मादायोधने रक्ष शत्रून्नाशय सर्वदा।' अथ चापमन्त्रः-'सर्वायुधमहामात्र सर्वदेवारिषूदन। चाप मां समरे रक्ष साकं शरवरैरिह। धृतः कृष्णेन रक्षार्थं संहाराय हरेण च। त्रयीमूर्तिगतं देवं धनुरस्त्रं नमाम्यहम्।' अथ शक्तिपूजा-'शक्तिस्त्वं सर्वदेवानां गुहस्य च विशेषतः। शक्तिरूपेण देवि त्वं रक्षां कुरु नमोऽस्तुते।' अथ कुन्तमन्त्रः-'प्रास पातय शत्रूंस्त्वमनया नाकमायया। गृहाण जीवितं तेषां मम सैन्यं च रक्षय।' अथाग्नियन्त्रमन्त्रः-'अग्निशस्त्र नमस्तेऽस्तु दूरतः शत्रुनाशन। शत्रून्दह हि शीघ्रं त्वं शिवं मे कुरु सर्वदा।' अथ पाशमन्त्रः-'पाश त्वं नागरूपोऽसि विषपूर्णो विषोद्भवः। शत्रवो हि त्वया बद्धा नागपाश नमोस्तु ते।' अथ परशुमन्त्रः-'परशो त्वं महातीक्ष्ण सर्व देवारिसूदन। देवीहस्तस्थितो नित्यं शत्रुक्षय नमोस्तु ते।' अथ ध्वजमन्त्रः-'शक्रकेतो महावीर्य सुपर्णस्त्वय्युपाश्रितः। पत्रिराज नमस्तेऽस्तु तथा नारायणध्वज। काश्यपेयारुणभ्रातर्नागारे विष्णुवाहन। अप्रमेय दुराधर्ष रणे देवारिसूदन। गरुत्मान्मारुतगतिस्त्वयि संनिहितो यतः। साश्वचर्मायुधान्योधान्रक्ष त्वं च रिपून्दह।' अथपताकामन्त्रः-'हुतभुग्वसवो रुद्रा वायुः सोमो महर्षयः। नागकिंनरगन्धर्वयक्षभूतगणग्रहाः। प्रमथास्तु सहादित्यैर्भूतेशो मातृभिः सह। शक्रसेनापतिः स्कन्दो वरुणश्चाश्रितस्त्वयि। प्रदहन्तु रिपून्सर्वान्राजा विजयमृच्छतु। यानि प्रयुक्तान्यरिभिरायुधानि समंततः। पतन्तूपरि शत्रूणां हतानि तव तेजसा। हिरण्यकशिपोर्युद्धे युद्धे देवासरे तथा। कालनेमिवधे यद्वद्यद्वत्त्रिपुरघातने। शोभितासि तथैवाद्य शोभयास्मांश्च संस्मर। नीलां श्वेतामिमां दृष्ट्वा नश्यन्त्वाशु नृपारयः। व्याधिभिर्विविधैर्घोरैः शस्त्रैश्च युधि निर्जिताः। सद्यः स्वस्था भवन्त्वस्मात्त्वद्वातेनापमार्जिताः। पूतना रेवती नाम्ना कालरात्रिश्च या स्मृता। दहत्वाशु रिपून्सर्वान्पताके त्वं मयार्चिता।' अथ कनकदण्डमन्त्रः-'प्रोत्सारणाय दुष्टानां साधुसंरक्षणाय च। ब्रह्मणा निर्मितश्चासि व्यवहारप्रसिद्धये। यशो देहि सुखं देहि जयदो भव भूपतेः। ताडयस्व रिपून्सर्वान्हेमदण्ड नमोऽस्तु ते।' अथ दुन्दुभिमन्त्रः-'दुन्दुभे त्वं सपत्नानां घोरो हृदयकर्षणः। तथास्तु तव शब्देन हर्षोऽस्माकं मुदावहः। भव भूमिपसैन्यानां तथा विजयवर्धनः।

यथा जीमूतघोषेण प्रहृष्यंति च बर्हिणः। तथाऽस्तु तव शब्देन हर्षोऽस्माकं मुदावहः। यथा जीमूतशब्देन स्त्रीणां त्रासोऽभिजायते। तथैव तव शब्देन त्रस्यन्त्वस्मद्विषो रणे।' अथ शंखमन्त्रः-'पुण्यस्त्वं शंख पुण्यानां मङ्गलानां च मङ्गलम्। विष्णुना विधृतो नित्यमतः शान्तिप्रदो भव।' अथ सिंहासनमन्त्रः—'विजयो जयदो जेता रिपुहन्ता शुभंकरः। दुःखहा धर्मदः शान्तः सर्वारिष्टविनाशनः। एते वै संनिधौ यस्मात्तव सिंहा महाबलाः। तेन सिंहासनेति त्वं वेदैर्मन्त्रैश्च गीयसे। त्वयि स्थितः शिवः शान्तस्त्वयि शक्रः सुरेश्वरः। त्वयि स्थितो हरिर्देवस्त्वदर्थं तप्यते तपः। नमस्ते सर्वतोभद्र भद्रदो भव भूपतेः। त्रैलोक्यजय सर्वस्व सिंहासन नमोऽस्तु ते।' अथाश्वं संपूज्य तद्दक्षिणकर्णे जपेत्। 'कुलाभिजनजात्या च लक्षणैर्व्यञ्जनोत्तमैः। भर्तारमभिरक्ष त्वं शिवं तव भवेदिति। कशाघातमधिष्ठानं क्षमस्व तुरगोत्तम।' ततोऽश्वाय भक्ष्यं दत्त्वा 'अश्वराज पुरोधास्तु विष्णुस्ते पुरतः स्थितः। वरुणः पाशहस्तस्त्वां पृष्ठतः परिरक्षतु। वैवस्वतकुबेरौ च पार्श्वयोरभिरक्षताम्। चन्द्रादित्यौ पृष्ठवंश उदरं पृथिवीधरः। रक्षन्तु वक्त्रं गन्धर्वा बलमिन्द्रो ददातु ते। हविःशेषमिति प्राश्यं विजयार्थं महीपतेः।' तत आचमनीयं दत्त्वा स्तुतिं पठेत्—'गन्धर्वकुलजातस्त्वं मा भूयाः कुलदूषकः। ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च। प्रभावाच्च हुताशस्य वर्धय त्वं तुरङ्गमान्। तेजसा चैव सूर्यस्य मुनीनां तपसा तथा। रुद्रस्य ब्रह्मचर्येण पवनस्य बलेन च। स्मर त्वं राजपुत्रं च कौस्तुभं च मणिं स्मर। सुरासुरैर्मथ्यमानक्षीरोदादमृतादिभिः। जात उच्चैःश्रवाः पूर्वं तेन जातोऽसि तत्स्मर। यां गतिं ब्रह्महा गच्छेन्मातृहा पितृहा तथा। भूमिहाऽनृतवादी च क्षत्रियश्च पराङ्मुखः। सूर्याचन्द्रमसौ वायुर्यावत्पश्यति दुष्कृतम्। व्रजाश्व तां गतिं क्षिप्रं तच्च पापं भवेत्तव। विकृतिं यदि गच्छेथा युद्धाध्वनि तुरङ्गम। रिपुं विजित्य समरे सह भर्त्रा सुखी भव।' ततः सुखयानसिद्ध्यर्थं शिबिकां पूजयेत्। तत्र मन्त्रः—'महेन्द्रनिर्मिते दिव्ये देवराजादिसेविते। शिबिके रक्ष मां नित्यं सदा त्वं संनिधौ भव। निर्मितासि कुबेरेण या त्वं निद्रासुखार्थिना। शिबिके पाहि मां नित्यं शान्तिं देहि नमोऽस्तु ते।' रिपुक्षयकामो रथं पूजयेत्—तत्र मन्त्रः—'शस्त्रास्त्रधारणार्थाय निर्मिते विश्वकर्मणा। रथनेमिस्वनैर्घोरै रिपोर्हृदयकम्पनः।' युद्धेजयप्राप्त्यर्थं गजं पूजयेत्। तत्र मन्त्रः—'कुमुदैरावणौ पद्मः पुष्पदन्तोऽथ वामनः। सुप्रतीकोऽञ्जनो नील एतेऽष्टौ देवयोनयः। तेषां पुत्राश्च पौत्राश्च वनान्यष्टौ समाश्रिताः। मन्दो भद्रो मृगश्चैव राजा संकीर्ण एव च। वने वने प्रसूतास्ते स्मर योनिं महागज। पान्तु त्वां

वसवो रुद्रा आदित्याः समरुद्गणाः । भर्तारं रक्ष नागेन्द्र स्वामी च प्रतिपाल्यताम् । अवाप्नुहि जयं युद्धे गमने स्वस्तितो व्रज । श्रीस्ते सोमाद्बलं विष्णोस्तेजः सूर्याज्जवोऽनिलात् । स्थैर्यं मेरोर्जयं रुद्राद्यशो देवात्पुरंदरात् । युद्धे रक्षन्तु नागास्त्वां दिशश्च सह दैवतैः । अश्विनौ सह गन्धर्वैः पान्तु त्वां सर्वतः सदा ।' इति राजचिह्नपूजनम् । 'तथैव कर्मचिह्नानि स्वानि पूज्यानि शिल्पिभिः । लोहाभिसारिकं कर्म कृत्वैवं मन्त्रपूर्वकम् । यमं कृत्वा तथाऽष्टम्यां पूर्वाह्णे स्नानमाचरेत् । दारुणि विचित्रतोरणविन्यस्ते शोभने स्थाने । पुरतो विन्यस्तमृगां विचित्रगृहमध्यगां स्नाताम् । कुङ्कुमचम्पकचन्दनचतुःसमैः शैलपुष्टैश्च । चर्चितगात्रां चण्डीं कुसुमैरभ्यर्चयेद्बहुभिः । कुमुदैः सगन्धकुसुमैः सदीपधूपैः सनैवेद्यैः । मांसैर्बल्युपहारैर्मङ्गलशब्दैः समुच्चलितैः । विहितच्छत्रैर्यानैः स्यन्दनशितशस्त्रधारिजनलोकैः।तुष्टैर्वरवस्त्रादि तु निवेद्य सर्वमेव भगवत्यै ।' जयन्तीत्यादिपूजामन्त्रः।विल्वपत्रमन्त्रस्तु 'अमृतोद्भवं क्षीरवृक्षम्'इत्यादि।'दुर्गा सा पूजनीया तु तद्दिने द्रोणपुष्पकैः ।' इत्युक्तत्वादत्रापि द्रोणपुष्पं समर्पयेत्तत्र मन्त्रो ब्रह्मविष्णुशिवाम्बानामित्यादि सप्तमीप्रकरणे द्रष्टव्यः ततः पुष्पाञ्जलिं दद्यादिति । इत्यष्टम्यामहःकृत्यम् ।

अथ राजा विजयकामोऽर्धरात्रे विशेषपूजापूर्वकं बलिं दद्यात् । 'तदर्धयामिनीशेषे विजयार्थं नृपोत्तमः । पञ्चाब्दं लक्षणोपेतं गन्धधूपस्रगर्चितम् । विधिवत्कालि कालीति जप्त्वा खड्गेन घातयेत्' इति देवीपुराणात् । अत्र नैमित्तिकपूजोत्तरं चतुःषष्टियोगिनीपूजा कार्या।तन्नामानि तु—ॐविजयायै नमः १ ॐमङ्गलायै नमः २ ॐभद्रायै नमः ३ ॐधृत्यै नमः ४ ॐ शान्त्यै नमः ५ ॐक्षमायै नमः ६ ॐशिवायै नमः ७ ॐसिद्ध्यै नमः ८ ॐउमायै नमः ९ ॐश्रियै नमः १० ॐरत्यै नमः ११ ॐदीप्तायै नमः १२ ॐकान्त्यै नमः १३ ॐयशस्विन्यै नमः १४ ॐलक्ष्म्यै नमः १५ ॐ ईश्वर्यै नमः १६ ॐवृद्ध्यै नमः १७ ॐसिद्ध्यै नमः १८ ॐजयायै नमः १९ ॐब्राह्म्यै नमः २० ॐजयन्त्यै नमः २१ ॐअपराजितायै नमः २२ ॐजितायै नमः २३ ॐमानस्यै नमः २४ ॐश्वेतायै नमः २५ ॐदित्यै नमः २६ ॐउमायै नमः २७ ॐमहामायायै नमः २८ ॐमोहिन्यै नमः २९ ॐरतिलालसायै नमः ३० ॐतारायै नमः ३१ ॐविमलायै नमः ३२ ॐगौर्यै नमः ३३ ॐशरण्यायै नमः ३४ ॐकौशिक्यै नमः ३५ ॐमत्यै नमः ३६ ॐदुर्गायै नमः ३७ ॐक्रियायै नमः ३८ॐअरुंधत्यै नमः ३९ ॐघण्टायै नमः ४० ॐकर्णायै नमः ४१ ॐकपालिन्यै नमः ४२ ॐरौद्र्यै नमः ४३ ॐकाल्यै नमः ४४ ॐमयूर्यै नमः ४५ ॐत्रिनेत्रायै नमः ४६ ॐ

सुरूपायै नमः ४७ ॐबहुरूपायै नमः ४८ ॐरिपुहायै नमः ४९ ॐअम्बिकायै नमः ५० ॐचर्चिकायै नमः ५१ ॐसुरपूजितायै नमः ५२ ॐवैवस्वत्यै नमः ५३ ॐकौमार्यै नमः ५४ ॐवैष्णव्यै नमः ५५ ॐमहालक्ष्म्यै नमः ५६ ॐकार्तिक्यै नमः ५७ ॐ शिवदूत्यै नमः ५८ ॐचामुण्डायै नमः ५९ ॐब्रह्माण्यै नमः ६० ॐमाहेश्वर्यै नमः ६१ ॐवैष्णव्यै नमः ६२ ॐवाराह्यै नमः ६३ ॐइन्द्राण्यै नमः ६४ । 'ततः खड्गं नमस्कृत्य शत्रूणां वधसिद्धये । इच्छेत विजयं राज्यं सुभिक्षं चात्मनो नृपः । पुनः पुनः प्रणम्याथ संस्मरन्हृदये शिवाम् । ततो जयजयालापैः स्तवं कुर्यादिमं ततः । सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । उमे च त्र्यम्बके गौरि नारायणि नमोऽस्तु ते । कुङ्कुमेन समालब्धे चन्दनेन विलेपिते । बिल्वपत्रकृतापीडे दुर्गेहं शरणागतः । सर्वं कृत्वेति कौरव्य अष्टम्यां जागरं निशि । नटनर्तकगीतैश्च कारयेच्च महोत्सवम् । एवं हृष्टैर्निशां नीत्वा प्रभाते चारुणोदये । घातयेन्महिषान्मेषान्नटतो नतकंधरान् । शतमर्धशतं वापि तदर्धं वा यथेच्छया । सुरासवभृतैः कुम्भैस्तर्पयेत्परमेश्वरीम् । कापालिकेभ्यस्तद्देयं दीनानाथेभ्य एव च । दासीदासजने देयं तद्भक्तेभ्यस्तथैव च । सर्वं विभज्य कौन्तेय सुहृत्संबन्धिबन्धुषु । ततोऽपराह्णसमये नवम्यां वै रथे स्थिताम् । भवानीं भ्रामयेद्राष्ट्रे स्वयं राजाससैन्यवान् । आदिष्टैः पुरुषैर्वापि रथयुक्तैः सुशिक्षितैः । शनैः शनैरनुनयेज्ज्वलद्भिर्दीपवृक्षकैः । आकृष्टखड्गैर्योधैश्च धानुष्कैश्च प्रगल्भितैः । नदद्भिः शंखपटहैर्नृत्यद्भिर्बहुचारणैः । कश्चिच्चोपोषितो वीरो विधृतोऽन्येन खड्गवान् । भूतेभ्यश्च बलिं दद्यान्मन्त्रेणानेन सामिषम् । सरक्तं सजलं चान्नं गन्धपुष्पाक्षतैर्युतम् । त्रींस्त्रीन्वारान्सशूलेन दिग्विदिक्षु किरेद्बलिम् ।' मन्त्राश्च— 'बलिं गृह्णन्त्विमे देवा आदित्या वसवस्तथा । मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः । असुरा यातुधानाश्च पिशाचोरगराक्षसाः । डाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः । जम्भकाः सिद्धगन्धर्वा मालाविद्याधरानगाः । दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः । जगतां शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः । मा विघ्नो मा च मे पापं मा सन्तु परिपन्थिनः । सौम्या भवन्तु तृप्ताश्च भूतप्रेताः सुखावहाः ' इति । महिषघ्नि महामाये इत्यादि' दुर्गां शिवां शान्तिकरीमित्यादि च पठेत् । 'अष्टम्यां च चतुर्दश्यां नवम्यां चैकचेतसः ।' इति मार्कण्डेयपुराणवचनात् चण्डीपाठोऽपि विशेषतः कार्यः । अत्र गौरीतृतीयावत्कर्मकालव्यापि शास्त्रं बाधित्वा नवमीयुतायामेव रात्रावसत्यामष्टम्यां नवमीपूजया सह तन्त्रेणाष्टमीपूजोपवासावुचितौ इति कालतत्त्वविवेचने। निर्णयसि-

न्धौ तु अत्र तिथियौगपद्ये तन्त्रेणोपवासस्तिथिद्वयनिमित्तं पूजादिकं तु भवेदेवेति समासः । कौस्तुभे तु नवमीविद्धायां तु तस्यां पूजात्रयस्याप्येककालप्रसक्तावष्टमीपूजां नवमीपूजां तत्संबन्धिपूजां च तन्त्रेण करिष्ये इति संकल्पः । अष्टमीनवमीपूजयोः पूर्वोत्तरदिनगतयोः प्रातःकालस्थयोः पृथक्संभवे संधिकालस्य ततः पृथग्लाभे संधिपूजापि दिवा रात्रौ वा पृथगेव कार्या । 'अष्टमीनवमीसंधौ तृतीया खलु कथ्यते । तत्र पूज्या त्वहं पुत्र योगिनीगणसंयुता ।' इति कालिकापुराणे देवीवाक्ये तृतीयसंधिपूजाविधानात् । अस्याश्च कालविशेषेण फलतारतम्यं मत्स्यसूक्ते—'अष्टमीनवमीयोगे रात्रियोगो विशिष्यते । अर्धरात्रे दशगुणं संध्यायां त्रिगुणं भवेत्' इति।संधिश्च तिथ्योरन्त्याद्यदण्डात्मकः । ' अष्टम्याः शेषदण्डश्च नवम्याः पूर्व एव च । तत्र या क्रियते पूजा विज्ञेया सा महाफला ' इति कामरूपीयनिबन्धोक्तेः । यदा पूर्वनिबन्धस्थितषष्टिदण्डाष्टम्यां नवमीदिनशेषो भवति तदा अष्टमीपूजा पूर्वेद्युरेव संधिपूजा च नवमीपूजया सह परत्र कार्येत्युक्तम् । इत्यष्टमीकृत्यम् ।

अथ नवमीकृत्यम् । इयं च नवमी दुर्गापूजायामष्टमीविद्धा ग्राह्या । सेयं त्रिमुहूर्तयोगे पूर्वा नवमी । ' श्रावणी दुर्गनवमी ' इति वचनात्, दशमीविद्धानिषेधाच्च । त्रिमुहूर्तयोगाभावे तु निषिद्धापि परैव कार्येति निर्णयसिन्धौ । मदनरत्ने तु बल्यादौ परा कार्या । ' अश्वयुक्छुक्लनवमी मुहूर्तं वा कला यदि । सा तिथिः सकला ज्ञेया लक्ष्मीविद्याजयार्थिभिः । ' इति सौरपुराणात् । सूर्योदये परं रिक्ता पूर्णा स्यादपरा यदि । बलिदानं प्रकर्तव्यं तत्र देशशुभावहम् । बलिदाने कृतेऽष्टम्यां पुत्रभङ्गो भवेन्नृप ।' इति देवीपुराणाच्च । उपवासे पूर्वेति निर्णयदीपे तु महानवमी परदिनेऽपराह्णव्यापित्वे परा अन्यथा पूर्वैव, वचनानि तु नवमीप्रकरणे वक्ष्यन्ते । कालतत्त्वविवेचने—यदा तु नवम्यष्टमीविद्धा भूत्वा द्वितीयदिनेऽपि कियती भवति तदा नवमीप्रयुक्तस्य पूजादेः पूर्वदिनेऽनुष्ठानेऽपि महाबलिदानमात्रं द्वितीयदिने कर्तव्यम् । 'प्रभूतबलिदानं तु नवम्यां विधिवच्चरेत् ' इति कालिकापुराणादिति । ' दशम्यां बलिदानं तु दीयते यत्र मानवैः । तद्राष्ट्रं नाशमायाति मरकोपद्रवैः किल' इति भविष्यवचनात् । नवमीप्रयुक्तं बलिदानं सर्वथा नवमीमध्य एव कार्यं न तु दशम्याम् । अत्र केचित्— 'पूर्वाषाढायुताष्टम्यां पूजा होमाद्युपोषणम्' इति कालिकापुराणवचनादष्टम्यां होममाहुः । कौस्तुभे तु—' शुंभासुरवधार्थाय रक्तबीजो महासुरः । अष्टम्यां

निहतो देव्या रात्रौ चैवारुणोदये। ततः प्रभृति विन्ध्याद्रौ स्थिता पूजा प्रवर्तिका। शस्त्रास्त्रमन्त्रैर्होतव्यं पायसं घृतसंयुतम्। मांसानि तत्र होमार्थं मेषाद्यानि च सर्वशः। अजस्त्वेको हि होतव्यो रक्तवर्णो विशेषतः। कृष्णवर्णस्तु होतव्यो गौरस्तित्तिर एव वा। रोहितं मत्स्यमांसं च होतव्यं जयमिच्छता' इति धौम्यवचनाद्धोमस्याष्टमीकृत्यत्वेनैव प्रतीतेस्तत्रैव होमः कार्य इत्युक्तम्। अन्ये तु—'नवम्यां बलिदानं वै कर्तव्यं तु यथाविधि। जपहोमं च विधिवत्कुर्यात्तत्र विभूतये' इत्यादिवचनैर्नवम्यामेवारभ्य नवम्यां होमं समापयेदित्याहुः। अपरे तु अष्टम्यामारभ्य नवम्यां समापयन्ति, तत्र मूलं शिष्टाचार एव। वस्तुतस्तु अष्टमीहोमवचनानि लोहाभिसारकर्मपराणि। 'लोहाभिसारिकं कर्म कारयेद्यावदष्टमीम्' इति भविष्योत्तरपुराणेऽष्टमीपर्यन्तमेव तस्योक्तत्वात्। नवमीहोमवचनं नवरात्रव्रतविषयम् इति न काऽप्यनुपपत्तिः। अष्टमीनवमीहोमवचनान्यष्टरात्रनवरात्रपक्षयोर्व्यवस्थया होमविधायकानि। यत्तु निर्णयसिन्धौ समुच्चयपक्ष एव युक्त इति। तदेतेन परास्तम्। यदपि रुद्रयामले विकल्प उक्तस्तन्निर्मूलमिति प्रौढिवादमात्रं यामलस्यैव मूलत्वात्। अथ तस्यैव निर्मूलत्वमित्यभिप्रायस्तन्न। तन्त्राणामपि वेदमूलकतया नारदपञ्चरात्रादिषूक्तत्वात्। दुर्गाभक्तितरङ्गिण्यादिगौडग्रन्थेष्वपि नवम्यां होम उक्तः। अत्र डामरतन्त्रे विशेषः—'पायसं सर्पिषा युक्तं तिलैः शुक्लैर्विमिश्रितम्। होमयेद्विधिवद्भक्त्या दशांशेन नृपोत्तमः। रुद्राध्याये यथा होमो मन्त्रेणैकेन साध्यते। तथा स्तोत्रं जपेद्धोमं श्लोकेनैकेन साधयेत्। यद्वा शतशतीजप्ये होमे मंत्रो नवाक्षरः।'(ऐं ह्रीं क्लीं चामुण्डायै विच्चे) इति पूर्वोक्तः। कृत्यरत्नावल्यां देवीपुराणे—'पूजयेत्तिलहोमैश्च दधिक्षीरघृतादिभिः' इति। मन्त्रश्च जयन्तीत्यादि। अनेनैव तु मन्त्रेण जपहोमादि कारयेत्' इति देवीपुराणात्। दुर्गाभक्तितरङ्गिण्यामप्येवम्। केचित्तु—मार्कण्डेयपुराणगतसप्तशतीस्तवेन प्रतिश्लोकं स्वाहान्तेन तिलपायसेन होमं कुर्वंति। 'प्रतिश्लोकं च जुहुयात्पायसं तिलसर्पिषा' इति रहस्यग्रन्थवचनात्। 'पुरश्चरणकार्ये तु बिल्वपत्रयुतैस्तिलैः' इति वचनाद्बिल्वपत्रयुततिलैर्होम इति स्मार्तः। यत्तु निर्णयसिन्धौ मानाभावादिति स्मार्तमते दूषणमभिहितं तत्तुच्छम्। पूर्वोक्तवचनस्य मानत्वात्। यदि चैतद्वचनस्य नवरात्रसंबन्धिहोमाङ्गत्वेन बिल्वपत्रयुततिलविधायकत्वे मानाभाव इत्यभिप्रायस्तर्हि भावानवबोधः। नवरात्रसंबंधिकाम्यपुरश्चरणाङ्गहोमाभिप्रायेण तथाभिधानात्। तिथितत्त्वे नवरात्रप्रकरणे कालिकापुराणेऽपि—'पुरश्चरणकार्येषु बिल्वपत्रयुतैस्तिलैः। साक्षतैः सघृतैर्वापि शिवामुद्दिश्य

। जुहुयादनलं वृद्धं संस्कृतं कायवृद्धये।' रुद्रयामलेपि—'प्रधानद्रव्यमुद्दिष्टं पायसं तथा। यवैर्वा श्रीफलैर्दिव्यैर्नानाविधफलैस्तथा। रक्तचन्दनखण्डैश्च गुग्गुलैश्च मनोहरैः। प्रतिश्लोकं च जुहुयात्सर्वद्रव्याणि च क्रमात्' इति। 'नवाक्षरेण वा हुत्वा नमो देव्या इतीति च' इति। एवं नवम्यां होमकुमारीपूजनब्राह्मणभोजनादि कृत्वा दक्षिणाद्याचार्याय निवेदयेत्। 'नवम्यां पूर्ववत्पूजा कर्तव्या भूतिमिच्छता। दक्षिणां वस्त्रयुग्मं च आचार्याय निवेदयेत्' इति मत्स्यसूक्तात्। पूर्ववत्प्रतिपदावदिति कालतत्त्वविवेचने तत्रैव भविष्योत्तरे-'कृताभिषेका वरदा शुक्ले चाश्वयुजस्य च। तस्मात्सा तत्र संपूज्या नवम्यां चण्डिका बुधैः' इति। इति नवमीकृत्यम्।

विसर्जनं तु दशम्यामेव कार्यम्। 'संपूज्य प्रेषणं कुर्याद्दशम्यां शाबरोत्सवैः' इति भविष्यपुराणात्। रुद्रयामले-'दशम्यामभिषेकं च कृत्वा मूर्तिं विसर्जयेत्' इति। तत्र दशम्याः पूर्णतिथित्वे प्रातस्तत्कृत्वा, तदुत्तरं पारणा तदुत्तरमपराजितापूजनम् इति क्रमो निःसंदिग्ध एव। यत्र तु नवम्युत्तरमपराह्णे दशमी प्रवृत्ता उत्तरदिने श्रवणाभावश्च। तत्र विसर्जनव्रतपारणापराजितापूजनक्रमे भवति संदेहः। पारणोत्तरकर्तव्यस्य तत्रैवापराह्णे शिष्टैः क्रियमाणस्यापराजितापूजनस्य विसर्जनं विनाऽनुपपत्तेः। अत्रोच्यते—नवमीदशमीपारणाविधायकवचनद्वैविध्येन पारणाया अनियतकर्तव्यत्वेऽपि 'संप्रेषणं तु कर्तव्यं दशम्यां शाबरोत्सवैः। प्रातरावाहयेद्देवीं प्रातरेव विसर्जयेत्' इत्यादिवचनैर्विसर्जनस्य दशम्यां प्रातःकर्तव्यत्वेन निर्णीतत्वात्पूर्वेद्युर्नवम्यां दशम्यां वा यथाचारं पारणां कृत्वापराह्णेऽपराजितापूजनं विधाय प्रातर्दशम्यां विसर्जनं कर्तव्यमिति। तथा च रुद्रयामले—'अष्टम्यां जागरं कुर्यान्नवम्यां पारणं तथा। दशम्यां च विसर्गः स्यात्' इति। धवलनिबन्धे तु विशेषः—'अन्त्यपादो दिवाभागे श्रवणस्य यदा भवेत्। संप्रेषणं तदा देव्या दशम्यां तु पुनर्दिवा' इति दिनद्वये दशमीसत्त्वे पूर्वदशम्यां श्रवणान्त्यभागयोगे तत्रैव विसर्जनम्। तत्र तद्योगाभावे तु परदशम्यामेव तत्। पूर्वदिने नक्षत्रयोगानुरोधेन क्रियमाणविसर्जनेन पूर्वाह्णादरः इत्याशयेनोक्तं राजमार्तण्डे—'निर्माल्यं तु श्रवणदशमीवासरान्ते तु जह्यात्' इति। निर्माल्यत्यागेन देवीविसर्जनमुपलक्ष्यते। कृत्यतत्त्वार्णवेऽपि—'नक्षत्रं श्रवणं तिथिं च दशमीं संप्राप्य संप्रेषयेत्' इति। रूपनारायणीये तु दशम्यां प्रातः संप्रेषयेदिति वचनात्प्रातःकालस्यैव प्राशस्त्यमित्युक्तं कौस्तुभे।

अथ नवरात्रपारणानिर्णयः। तत्र द्विविधानि वचनानि। कानिचिन्नवमीपारणाविधायकानि कानि दशमीनिषेधकानि च। कानिचिद्दशमीपारणाविधायकानि नवमीनिषेधकानि च। तत्र यथाकुलाचारं व्यवस्था। वचनानि तु दशमीप्रकरणे वक्ष्यन्ते। नवरात्रव्रते पारणाहे सत्यपि सूतके पारणं कार्यम्। तदुक्तं रुद्रयामले— 'सूतके पारणं कुर्यान्नवम्यां होमपूर्वकम्। तदन्ते भोजयेद्विप्रान्दानं दद्याच्च शक्तितः।' इति। तदन्ते सूतकान्ते। माधवीये कौर्मेऽपि—'काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके। तत्र काम्यव्रतं कुर्याद्दानार्चनविवर्जितम्।' इति। 'व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे। प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम्।' इति विष्णुवचनमपि आशौचमध्ये तत्कर्तव्यतामवगमयति। प्रारम्भस्तु तेनैवोक्तः—'प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः। नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया।' इति। स्त्रिया तु रजोदर्शनमध्येऽपि पारणा कार्या। तदाह सत्यव्रतः—'प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत्। न तत्रापि व्रतस्य स्यादुपरोधः कदाचन।' इति। निर्णयसिन्धौ यत्तु 'नियमस्था यदा नारी प्रपश्येदन्तरा रजः। उपोष्यैव तु ता रात्रीः स्नात्वा शेषं चरेद्व्रतम्।' इत्यङ्गिरोवचनम्, यच्च हारीतवचनम्—'नियमस्था यदा नारी रजः पश्येत्कथंचन। त्रिरात्रं तु क्षिपेदूर्ध्वं व्रतशेषं समापयेत्।' इति। तद्विधवोपवासविषयम्, तासां तत्र भोजननिषेधादिति केचित्। वयं तु प्रागुक्तसत्यव्रतवचने दीर्घतपसामिति विशेषोपादानाद्द्वादशीव्यतिरिक्तसकलैकाहोपवासविषयोऽयं निषेधः। त्रिरात्रनवरात्रादिदीर्घव्रतेषु तु रजोमध्य एव पारणेति ब्रूमः। इति। आशौचमध्ये तु सर्वापि पारणा भवति प्रागुक्तकौर्मवचनादिति स्थितम्। पारणायां विधिनिषेधयोः सत्त्वादाचारतो व्यवस्थेति केचित्। मयूखे तु सत्यव्रतवचनं सधवापरं विधवायास्तु तन्न, त्रिरात्रमध्ये भोजननिषेधादित्यन्ये। तत्र निषेधस्य रागप्राप्तभोजनगोचरत्वेन वैधपारणविषयत्वायोगात्। वस्तुतस्तु—रजस्वलाया विधवायास्त्रिरात्रमध्ये भोजननिषेध एव खपुष्पायमाण इति। कृत्यरत्नावल्यां तु—अत्र नवरात्रहोमस्य पूजारूपत्वेन प्रधानत्वात्तस्य चानन्यसाध्यत्वेनाशौचासंभवान्न तु दानार्चनं जपमिति निषेधात्तत्समाप्तिं विना च नियमरूपोपवाससमाप्त्यसंभवादाशौचान्ते होमादिपूर्वकं पारणं कर्तव्यम्। प्राचीनशिष्टाचारेऽप्येवमेव। यैस्तु होमो न क्रियते तेषां पारणं भवत्येवेति स्थितम्। इति नवरात्रमध्ये आशौचरजोदर्शनपाते पारणानिर्णयः।

अथ दशमीकृत्यम्। दुर्गाभक्तितरङ्गिण्यां देवीपुराणे—'ततः प्रातः

पूजयित्वा दशम्यां विधिपूर्वकम् । संप्रेषणं तु कर्तव्यं गीतवादित्रनिःस्वनैः 'इत्यादि । तत्र क्रमः । प्रातःपूजां बलिदानरहितां विधाय नीराजनान्तं कृत्वा दुर्गां शिवामिति रूपं देहीति गृहिपत्नीत्यादि च पठित्वा पुष्पाञ्जलिं दत्त्वा कर्तव्यं समापयेत् ।'विधि-हीनं क्रियाहीनं भक्तिहीनं यदर्चितम् । पूर्णं भवतु तत्सर्वं त्वत्प्रसादान्महेश्वरि' इति प्रसाद्य क्षमस्वेत्युक्त्वैकं पुष्पम् ॐ दुर्गायै नम इत्यैशान्यां निक्षिपन् विसृजेत् । 'महि-षघ्नि महामाये शुभां पूजां प्रगृह्य च । कुरुष्व मम कल्याणमष्टाभिः शक्तिभिः सह ।' कुत्रचित्तु उत्तिष्ठ देवि चण्डीति पाठः । 'उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । उपप्रय-न्तु मरुतः सुदानव इन्द्र प्राशूर्भवासचा । अभ्यारयिमिन्द्रयोनिषिक्तं पुष्करे मधु । अव तस्य विसर्जने ।' यान्तु देवगणाः सर्वे पूजामिति पठित्वा 'गच्छ गच्छ परं स्थानं स्वस्थानं देवि चण्डिके । व्रज स्रोतोजलं वृद्ध्यै तिष्ठ गेहे च भूतये' इत्युत्था-पयेत् । ततो गीतवाद्यघोषपुरःसरं स्रोतोजलसमीपं नीत्वा 'दुर्गे देवि जगन्मातः स्व-स्थानं गच्छ पूजिते । षण्मासेषु व्यतीतेषु पुनरागमनाय वै । इमां पूजां मया देवि यथाशक्त्योपपादिताम् । रक्षार्थं त्वं समादाय व्रज स्वस्थानमुत्तमम् ।' इति जले प्रवाहयेत् । ततो गृहमागत्य शान्तिकलशोदकेन ब्राह्मणैरभिषिक्तो दुर्गाप्रतिष्ठासि-द्ध्यर्थं ब्राह्मणेभ्यो दक्षिणां दत्त्वा ब्राह्मणान्भोजयित्वा बन्धुभिः सह भुञ्जीतेति । देवी-पूजनोपकल्पितं द्रव्यादिकं तु ब्राह्मणाय देयम् । तदुक्तं मत्स्यसूक्ते—'देवे दत्त्वा तु दानानि देवे दद्याच्च दक्षिणाम् । तत्सर्वं ब्राह्मणे दद्यादन्यथा विफलं भवेत् ।' इति । इति दशमीकृत्यम् ।

इयमेव विजयदशमीत्युच्यते । सा च श्रवणयोगवती ग्राह्या । पूर्वदिवसे चेत्पूर्वा द्वितीये श्रवणयोग एकादशीयुक्तापि ग्राह्या उभयदिने श्रवणयोगाभावेऽपराह्ण-योगवती दशमी ग्राह्या । दिनद्वयेऽपराह्णयोगवती पूर्वा । दिनद्वयेऽपराह्णयोगाभावे नक्षत्रयोगिनी ग्राह्या । वचनानि तु दशमीप्रकरणे वक्ष्यन्ते । अस्यामेव दशम्यां गोपथब्राह्मणोक्तः प्रस्थानविधिः कर्तव्यः । मूलवचनानि दशमीप्रकरणे वक्ष्यन्ते । तत्र राजा स्वलंकृतः वीणादिमङ्गलशब्दाञ्छृण्वन्होमसंभारानुपकल्प्य मैत्रे मुहूर्तेऽ-ग्निप्रतिष्ठापनं कुर्यात् । मैत्रमुहूर्तस्तु प्रातःकालतृतीयमुहूर्तः ततः शान्तिप्रतिसरं कारयित्वा वोढारं तेनाभिषिञ्चेरन् । ऋत्विज इति शेषः । यजमानं वस्त्रादिभि-रलंकृत्य स्वसमीप उपवेश्याचार्योऽभयैरपराजितैरायुष्यैः स्वस्त्ययनैः शर्म-वर्मभिः जनवेदनैश्च हुत्वा पार्थिवस्येति माप्रगामेति च हुत्वा आगच्छ-

तागतस्येतीन्द्रं स्थालीपाकेनेष्ट्वा । आतिष्ठ जिष्णुरनृक्षरा ऋजव इति पन्थान मास्थाय जपेदिमौ पादौ यत इन्द्र त्रातारमिन्द्रं मा नो विदन्नभयं सोमो बृहस्पतिर्नः परिपातु पश्चादिति त्रीन् विष्णुक्रमान्क्रान्त्वेत्यादि । मन्त्रास्तु आथर्वणे राज्याभिषेकप्रकरणे द्रष्टव्याः । अथापराजितादशम्यां पूर्वोक्तविजयमुहूर्ते उक्तं प्रास्थानिकमित्युपक्रम्य तेऽप्येते श्लोकाः—'अलंकृतो भूषितभृत्यवर्गः परिष्कृतोत्तुङ्गतुरङ्गनागः । वादित्रनादप्रतिनादिताशः सुमङ्गलाचारपरम्पराशीः । राजा निर्गत्य भवनात्पुरोहितपुरोगमः । प्रास्थानिकविधिं कृत्वा प्रतिष्ठेत्पूर्वतो दिशि । गत्वा नगरसीमान्तं वास्तुपूजां समारभेत् । संपूज्य चाथ दिक्पालान्पूजयेत्पथिदेवताः । मन्त्रैर्वैदिकपौराणैः पूजयेच्च शमीतरुम् । अमङ्गलानां शमनीं दुष्कृतस्य च नाशिकाम् । दुःस्वप्न शमनीं धन्यां प्रपद्येऽहं शमीं शुभाम् । ततः कृताशीः पूर्वस्यां दिशि विष्णुक्रमान्क्रमेत् । रिपोः प्रतिकृतिं कृत्वा ध्यात्वा च मनसा च तम् । शरेण स्वर्णपुङ्खेन विध्येद्धृदयमर्मणि । दिशां विजयमन्त्राश्च पठितव्याः पुरोधसा । एवमेव विधिं कुर्याद्दक्षिणादिदिशास्वपि । पूज्यान्द्विजांश्च संपूज्य सांवत्सरपुरोहितौ । गजवाजिपदातीनां प्रेक्षाकौतुकमाचरेत् । जयमङ्गलशब्देन ततः स्वभवनं विशेत् । नीराज्यमानः पुण्याभिर्गणिकाभिः समङ्गलम् । एवं यः कुरुते राजा वर्षे वर्षे सुमङ्गलम् । आयुरारोग्यमैश्वर्यं विजयं समधि गच्छति । नाधयो व्याधयस्तस्य भवन्ति न पराजयः । श्रियं पुण्यमवाप्नोति विजयश्च सदा भुवि।' इत्यादि पुराणसमुच्चये । ज्योतिर्निबन्धे—'आश्विनस्य सिते पक्षे दशम्यां तारकोदये । स कालो विजयो ज्ञेयः सर्वकार्यार्थसिद्धये ।' रत्नकोशे—'ईषत्संध्यामतिक्रान्तः किञ्चिदुद्भिन्नतारकः । विजयो नाम कालोऽयं सर्वकार्यार्थसाधकः।इषस्य दशमीं शुक्लां पूर्वविद्धां न कारयेत् । श्रवणेनापि संयुक्तां राज्ञां पट्टाभिषेचने ।' नारदः—'सूर्योदये यदा राजन्दृश्यते नवमी तिथिः । आश्विने मासि शुक्ला तु विजयां तां विदुर्बुधाः । अथ विजयदशम्यां पूर्वभाजि प्रयत्नात्क्षितिपतिरपराह्णे पूजयेदीशकोणे । निखिलभुवनवन्द्यां चण्डिकामिष्टसिद्ध्यै श्रवणभसहिता चेत्प्राक्परा वा प्रशस्ता।' तथा च स्कान्दे—'मार्तण्डस्योदये पुण्या वर्तते दशमी तिथिः । आश्विने शुक्लपक्षे तु सा भवेज्जयदा नृणाम् । निषिद्धमपि कर्तव्यं तैलाभ्यञ्जनमादरात् । अश्वानामपि कर्तव्यं तैलस्नानं नदीजले । तूर्यघोषसमायुक्तान्पुरं प्रावेशयेद्धयान् । पुष्पमालापरीतांस्तान्हयांश्चन्दनभूषितान् । संपूज्य विधिवद्राजा नमस्कुर्यात्प्रयत्नतः । भक्ष्यभोज्यं स्वहस्तेन भोजयेदनुगान्नृपः । वाहाधिकारिणः सर्वान्दानमानैस्तु तोषयेत् । तथैव वारणान्राजा

पूजयेच्च क्रमेलकान्। नानामन्त्रेण विधिवच्चतुर्थ्यन्तेन मन्त्रवित्। कृताभ्यङ्गे महाघोषैस्तूर्याणां शुभलब्धये। ततश्च पूजयेद्देवानन्धपुष्पादिकैरलम्। आहूय ब्राह्मणान्सर्वान्वाचयेत्स्वस्तिमङ्गलम्। ततस्तुरगमारुह्य तूर्यघोषसमन्वितः। बन्दिभिः स्तूयमानस्तु संमानः शकुनैर्व्रजेत्। ज्योतिःशास्त्रोदितां काष्ठां सुहृद्भिः परिपूरितः। संप्राप्तस्तु शमीवृक्षमश्मंतकमथापि वा। अवतीर्य नृपो वाहाद्वेगात्सह पुरोधसा। स निषण्णः शमीमूलं विदध्यात्स्वस्तिवाचनम्। कार्यो द्विशाङ्गैनैः साकं प्रयोगकुशलैर्वदन्। ततः प्रोक्ष्य शमीमूलभूमिं भूमिपतिर्ध्रुवम्। उत्कृत्य मृत्तिकां तत्र प्रक्षिपेत्तन्दुलाञ्छुभान्। सपूगं हेम शक्त्या तु अभावे तारमुत्तमम्। ततः प्रदक्षिणां कुर्यात्तस्य वृक्षस्य भूपतिः।' तत्र मन्त्रः शमी शमयत इत्यादिः। अश्मन्तकमन्त्रः—' अश्मन्तक महावृक्ष महादोषनिवारण। इष्टानां दर्शनं देहि शत्रूणां च विनाशनम्।' ततः शमीतरोरश्मन्तकस्य वा उभयोः पत्राणि गृहीत्वा तस्यां मृदि तन्दुलपूगादि प्रक्षिप्य गोलकं बद्ध्वा सर्वकार्यार्थसिद्ध्यर्थं गृह्णाति। ततो वृक्षं नमस्कृत्य दिग्लिङ्गैर्मन्त्रैः प्राचीपूर्वादिजयं गृहीतखड्गः करोति। एवं त्रिचतुःपादक्रमेण चलित्वा सर्वदिग्विजयं कृत्वा शत्रवो जिता इति ब्रूयात्। इन्द्रादीन्देवान्विप्रांश्च नमस्कृत्य स्वपुरं प्रविशेत्। ततः प्रविष्टः स महाद्वारसमीपे पुण्यस्त्रीभिर्नीराजितो द्वारि न्यस्तेषु तूलिकोपरि तन्दुलैः कृतमूर्तिषु शत्रुषु पादं कृत्वा लब्धविप्रानुज्ञः निषण्णो भूत्वा द्रव्यवस्त्रताम्बूलादि दद्यात्। 'एवं कृत्वा विसर्ज्याशु सर्वान्पौरान्निजालयात्। प्रतिवर्षं कृतं चैवं सर्वकार्यपरो भवेत्। एवं सर्वेषु घोरेषु विधिरेष सनातनः। निष्पादितो यथा धर्मं विदधाति श्रियं सुखम्। एवं कृते विधाने तु तुष्टिदे पुष्टिदे नृणाम्। सर्वैः पौरजनैः सार्धं विजयं प्राप्नुयान्नरः।' इति। अस्यामेवापराजितापूजोक्ता निर्णयामृते—'दशम्यां पूजयित्वा तु मृन्मयीं चापराजिताम्। कलशीं तोयसंपूर्णां जयन्तीपल्लवाननाम्। चतुर्वर्णैस्तदा यात्रां साधयेत्साधनेन च। दशम्यां च बलं राजा पूजयित्वाऽपराजिताम्। दशदिक्षु मनोयोगान्धात्र्यां कृत्वोऽथ वै नृपः।नीराजनं स्वस्य कृत्वा ततो नीराजयेद्बलम्।' इति।अथ पूजनक्रमः। आश्विनशुक्लदशम्यां क्षेमसिद्ध्यर्थं यात्रायां विजयसिद्ध्यर्थं वास्तुपूजनदिक्पालपूजनमार्गदेवतापूजनापराजितापूजनविष्णुपूजनशमीपूजनानि करिष्ये इति संकल्प्य पूगीफलादिषु चन्दनादिलिखिताष्टदलमध्ये मृन्मयप्रतिमायां वा ॐअपराजितायै नम इत्यपराजितां तद्दक्षिणतः, ॐक्रियाशक्त्यै नम इति जयां तद्वामतः, ॐ उमायै नम इति विजयां प्रतिष्ठाप्य वाहनाद्युपचारैः संपूज्य प्रणम्य प्रार्थयेत्। ' चारुणा मुखप-

ञ्चेन विचित्रकनकोज्ज्वला । जया देवी भवे भक्ता सर्वकामान्ददातु मे । काञ्चनेन विचित्रेण केयूरेण विभूषिता । जयप्रदा महामाया शिवभावितमानसा । विजया च महाभागा ददातु विजयं मम । हारेण सुविचित्रेण भास्वत्कनकमेखला । अपराजिता रुद्ररता करोतु विजयं मम ।' इति । एवं संप्रार्थ्य हरिद्रारक्तवस्त्रे दूर्वायुक्तसिद्धार्थकान्प्रदक्षिणां वलयाकारेणाबध्य 'सदाऽपराजिते यस्मात्त्वं लतासूत्तमा स्मृता । सर्वकामार्थसिद्ध्यर्थं तस्मात्त्वां धारयाम्यहम् । भवापराजिते देवि मम सर्वसमृद्धये । पूजितायां त्वयि श्रेयो ममास्तु दुरितं हतम् ।' इति तद्वलयमभिमन्त्र्य । 'जयेद वरदे देवि दशम्यामपराजिते । धारयामि भुजे दक्षे जयलाभाभिवृद्धये । बलमाधेहि वलय मयि शत्रौ पराजयम् । त्वद्धारणाद्वर्धेयुर्मे धनधान्यसमृद्धयः ।' इति मन्त्रेण दक्षिणबाहौ धारयित्वा 'इमां पूजां मया देवि यथाशक्ति निवेदिताम् । रक्षार्थं तु समादाय व्रज स्वस्थानमुत्तमम् ।' इति विसर्जयेदिति । सर्वे च जनास्तस्यां ग्रामसीमानमुलङ्घ्य अपराजितां पूजयेयुः । तथा च पुराणसमुच्चये—'दशम्यां च जनैः सम्यक्पूजनीयाऽपराजिता । ऐशानीं दिशमाश्रित्य चापराह्ने प्रयत्नतः ।' इति । भविष्येऽपि—'शमीं सलक्षणोपेतामीशानाशाप्रतिष्ठिताम् । संप्रार्थ्य तां च संपूज्य वत्सरं स सुखी भवेत् ।' शमीमन्त्रस्तु हेमाद्रौ गोपथब्राह्मणे—'अमंगलानां शमनीं शमनीं दुष्कृतस्य च । दुःस्वप्ननाशिनीं धन्यां प्रपद्येऽहं शमीं शुभाम् ।' तथा च भविष्ये-'शमी शमय मे पापं शमी लोहितकण्टका । धारिण्यर्जुनबाणानां रामस्य प्रियवादिनी । करिष्यमाणयात्रायां यथाकालं सुखं मम । तत्र निर्विघ्नकर्त्री त्वं भव श्रीरामपूजिते ।' इति । ततो रिपोः प्रतिकृतिं कृत्वेत्यादि कर्तव्यं पूर्वमेवोक्तम् । ततः शमीमूलमृदं गृह्णीयात् । तदुक्तम्—'गृहीत्वा साक्षतामार्द्रां शमीमूलगतां मृदम् । गीतवादित्रनिर्घोषैरानयेत्स्वगृहं प्रति । ततो भूषणवस्त्रादि धारयेत्स्वजनैः सह ।' इति । अत्र बलनीराजनमुक्तम् । तत्र मन्त्रः—'चतुरंगं बलं मह्यं निरिरिष्टं व्रजत्विह । सर्वत्र विजयो मेऽस्तु त्वत्प्रसादान्महेश्वरि ।' इति । ज्योतिषे—'कृत्वा नीराजनं राजा बलवृद्ध्यै यथाक्रमम् । शोभनं खञ्जनं पश्येज्जलगोष्ठस्य संनिधौ ।' इति । तत्र मन्त्रस्तिथितत्त्वे—'नीलग्रीव शुभग्रीव सर्वकामफलप्रद । पृथिव्यामवतीर्णोऽसि खञ्जरीट नमोऽस्तु ते ।' वसन्तराजे—'त्वं योगयुक्तो मुनिपुत्रकस्त्वमदृश्यतामेषि शिखोद्गमेन । संदृश्यसे प्रावृषि निर्गतायां त्वं खञ्जनाश्चर्यतमो नमस्ते ।' दर्शनफलं तिथितत्त्वे—'अब्जेषु गोषु गजवाजिमहोरगेषु राज्यप्रदः कुशलदः शुचिशाद्वलेषु । भस्मास्थिकेशनखलोमतुषेषु दृष्टो दुःखं ददाति बहुशः

खलु खञ्जरीटः।' तत्रैव--'वित्तं ब्रह्मणि कार्यसिद्धिरतुला शक्रे हुताशे भयं याम्यामग्निभयं सुरद्विषि कलिर्लाभः समुद्रालये। वायव्यां वरवस्त्रगन्धसलिलं दिव्यांगना चोत्तरे ऐशान्यां मरणं ध्रुवं निगदितं दिग्लक्षणं खञ्जने।' इदं तु सर्वं नवरात्रप्रसङ्गादत्र लिखितम्। रामार्चनचन्द्रिकायां तु-'आश्विनस्य सिते पक्षे दशम्यां श्रवणर्क्षगे। कर्तव्यः स्वजनैः सार्धं सर्वत्र विजयार्थिभिः। हनुमद्वाक्यमाकर्ण्य हृष्टेति जनकात्मजा। आनन्दपूर्णैः कविभिर्विज्ञापितमुपस्थितम्। रथमारोप्य देवेशं सर्वालंकारभूषितम्। सासितूणधनुर्बाणपाणिं नक्तंचरान्तकम्। स्वलीलया जगत्त्रातुमाविर्भूतमजं विभुम्। रथैरश्वैर्गजैः पद्भिः ससौमित्रिहरीश्वरैः। युतं रामं हृदि ध्यायञ्छमीवृक्षे प्रपूजयेत्। विष्णुधर्मोक्तमार्गेण यात्रानिर्विघ्नसिद्धये। शमीविष्ण्वर्चनं कुर्वन्निति संकल्प्य पूजयेत्। सीताकान्तं समुद्युक्तं भक्तानामभयंकरम्। अर्चयित्वा शमीवृक्षमर्चयेत्तु ततः पुनः। शमी शमयते पापं शमी लोहितकण्टका। धारिण्यर्जुनबाणानां रामस्य प्रियवादिनी। करिष्यमाणयात्रायां यथाकालं सुखं मया। तत्र निर्विघ्नकर्त्री त्वं भव श्रीरामपूजिते। गृहीत्वा साक्षतां सार्द्रां शमीमूलगतां मृदम्। गीतवादित्रनिर्घोषैर्युतो देवं गृहं नयेत्। कैश्चिद्दृक्षैस्तत्र भाव्यं कैश्चिद्भाव्यं तु वानरैः। कैश्चिद्रक्तमुखैर्भाव्यं कोशलेन्द्रस्य तुष्टये। निर्जिता राक्षसा दैत्या वैरिणो जगतीतले। रामराज्यं रामराज्यं रामराज्यमिति ब्रुवन्। आनीय स्थापयेत्स्वस्थं दिव्यसिंहासने विभुम्। ततो नीराज्य देवेशं प्रणमेद्दण्डवद्भुवि। देवोपभुक्तं वस्त्रादि धारयेत्स्वजनैः सह।' इति विष्णुधर्मोत्तरोक्तो विजयप्रस्थानोत्सवः।

इति पौण्डरीकयाजिरत्नाकरविरचिते जयसिंहकल्पद्रुमोद्द्योते नवरात्रप्रकरणम्॥

अथ कार्तिकशुक्लप्रतिपत्कृत्यम्। अत्र द्यूतादिकं कर्तव्यम्। तथा हेमाद्रावादित्यपुराणे—'शंकरस्तु पुरा द्यूतं ससर्ज सुमनोहरम्। कार्तिके शुक्लपक्षे तु प्रथमेऽहनि सत्यवान्। जितश्च शंकरस्तत्र जयं लेभे च पार्वती। अतोऽर्थं शंकरो दुःखी उमा नित्यं सुखोचिता। तस्माद्द्यूतं प्रकर्तव्यं प्रभाते तत्र मानवैः। तस्मिन्द्यूते जयो यस्य तस्य संवत्सरं जयः। पराजये विरुद्धं तु लब्धनाशस्ततो भवेत्। श्रोतव्यं गीतवाद्यादि स्वनुलिप्तैः स्वलंकृतैः। दीपमालापरिक्षिप्तं तथा धूपेन धूपितम्। दयिताभिश्च सहितैर्नेया सा च भवेन्निशा। नवैर्वस्त्रैश्च संपूज्या द्विजसंबन्धिबान्धवाः।' इति। अन्यदपि मदनरत्ने भविष्ये—'ततः प्रबुद्धे सकले जने ग्राममहोत्सवे। माल्यदीपकहस्ते

च स्नेहनिर्भरवत्सले। वेश्याविलासिनीसार्थस्वस्तिमङ्गलचारिणी । गृहाद्गृहं व्रजति च पादाभ्यङ्गप्रदायिनी। पिष्टकोद्वर्तनपरे गुरुशुश्रूषणाकुले। द्विजाभिवादनपरे सुखरात्र्यादिवादिनि। प्रभातसमये राज्ञा तोषणीयास्ततो जनाः । सुवासिनीभ्यो देयानि वस्त्राण्याभरणानि च। सद्भावेनैव संतोष्या दानेन च तथा द्विजाः। वस्त्रैस्ताम्बूलदानैश्च पुष्पकर्पूरकुङ्कुमैः।भोजयेत्पूजयेद्यत्नैरन्तःपुरविलासिनीः। पदातिजनसंघातान्ग्रैवेयैः कंचुकैः शुभैः। स्वनामाङ्कैः स्वयं राजा तोषयेत्स्वजनान्पृथक्। तथा गणाधिपत्यांश्च तथा मल्लान्नटान्भटान्। वृषभान्महिषांश्चैव युध्यमानान्परैः सह। गजानश्वांश्च योधांश्च पदातीन्समलंकृतान्। मञ्चारूढः स्वयं पश्येन्नटनर्तकचारणान्। क्रुद्धापयेत्त्रासयेच्च गोमहिष्यादिकं ततः। वृषान्कर्षापयेद्गोभिरुक्तिप्रत्युक्तिवादिभिः। ततोऽपराह्णसमये पूर्वस्यां दिशि भारत। मार्गपालीं प्रबध्नीयात्तुङ्गे स्तम्भेऽथ पादपे। कुशकाशमयीं दिव्यां लम्बकैर्बहुभिर्वृताम्। दीक्षयित्वा गजानश्वान्सायमस्यास्तले नयेत् । गावो वृषाः समहिषा मण्डिता घण्टिकोत्कटाः। कृते होमे द्विजेन्द्रस्तु बध्नीयान्मार्गपालिकाम्। दुर्गामन्त्रेण होमस्तु घृतेनाष्टोत्तरं शतम्। नमस्कारं ततः कुर्यान्मन्त्रेणानेना सुव्रत। मार्गपालि नमस्तेऽस्तु सर्वलोकसुखप्रदे। विधेयैः पुत्रदाराद्यैः पुनरेहि व्रतस्य मे। नीराजनं च तत्रैव कार्यं राष्ट्रजयप्रदम्। मार्गपालीतले चेत्थं यान्ति गावो गजा वृषाः। राजानो राजपुत्राश्च ब्राह्मणाः शूद्रजातयः। मार्गपालीं समुल्लङ्घ्य नीरुजः स्युः सुखान्विताः। यो यादृशेन भावेन तिष्ठत्यस्यां युधिष्ठिर। हर्षदैन्यादिरूपेण तस्य वर्षं प्रयाति हि। रुदिते रोदिति वर्षं हृष्टो वर्षं प्रहृष्यति। भुक्तौ भोक्ता भवेद्वर्षं स्वस्थः स्वस्थो भविष्यति। तस्मात्प्रहृष्टैस्तुष्टैस्तु कर्तव्या कौमुदी नरैः। वैष्णवी दानवी चेयं तिथिः पैत्री युधिष्ठिर।' इति।अथास्या निर्णयः—इयं बलिपूजने गोपूजनादौ च पूर्वविद्धा ग्राह्या।तथा च बृहद्यमः—'श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी। पूर्वविद्धैव कर्तव्या शिवरात्रिर्बलेर्दिनम्।' इति। 'प्रतिपद्दर्शयोगे पूजनं तु गवां मतम् । परविद्धेषु यः कुर्यात्पुत्रदारधनक्षयः। या कुहूः प्रतिपन्मिश्रा तत्र गाः पूजयेन्नृप । पूजने त्रीणि वर्धन्ते प्रजा गावो महीपतिः।' इति देवलवचनाच्च । माधवोऽपि—'बल्युत्सवं च पूर्वेद्युरुपवासवदाचरेत् ।' इति । दिनद्वये सायाह्नव्यापित्वे तु परैव ग्राह्या । तदुक्तं निर्णयामृते पुराणसमुच्चये—'वर्धमानतिथौ नन्दा यदि सार्धत्रियामिका । द्वितीयावृद्धिगामित्वादुत्तरा तत्र चोच्यते।' इति। तत्र गोक्रीडनादौ। स्मृत्यन्तरेऽपि—'त्रियामगा दर्शतिथिर्भवेच्चेत्सार्धत्रियामा प्रतिपद्विवृद्धौ। दीपोत्सवे ते मुनिभिः

प्रद्विष्टे अतोऽन्यथा पूर्वयुते विधेये।' इति। सार्धत्रियामा इत्यनेन चन्द्रदर्शनाभाव उक्तः। द्वितीयायाः पञ्चधा विभक्तदिनचतुर्थांशरूपापराह्णव्याप्त्यभावे चन्द्रदर्शनासंभवात् । अत्र दीपोत्सवपदेन गोपूजनादिकमेव गृह्यते कालानुग्रहात्। न तु बलिपूजादि कालबाधप्रसङ्गात् । चन्द्रदर्शनाभावप्रयोजकसार्धत्रियामोक्तिसामर्थ्याच्च। पूजायां दीपदानसत्त्वेन दीपोत्सवपदस्य उभयत्र संभवाच्च । अमावास्यायामपि 'स्त्रियः क्रीडन्त्यमावस्यां गावो नन्दासु कार्तिके।' इति वचनोक्तेः स्त्रीक्रीडने नीराजने दीपसंबन्धात्तत्रापि दीपोत्सवपदस्य संभवात्। यानि तु 'भद्रायां गोकुलक्रीडा स देशो वै विनश्यति।' इति। भद्रायां द्वितीयायाम्। तथा 'प्रतिपद्यग्निकरणं द्वितीयायां तु गोर्चनम्। छत्रच्छेदं च कुरुते वित्तनाशं कुलक्षयम्।' इत्यादीनि निषेधवाक्यानि तानि पूर्वदिने प्रतिपदः सायाह्नव्यापित्वे द्वितीयदिने चन्द्रदर्शसंभवे ज्ञेयानि । यद्यपि 'पूर्वाह्णे क्रीडनं गवाम्। नन्दोदये तु तत्रैव पूजयेत्सुरभीस्तथा।' इत्यादिवचनाच्च प्रातःकालव्यापिन्युत्तरैव गोक्रीडनादौ प्रतिभाति । तथापि 'गवां क्रीडादिने यत्र रात्रौ दृश्येत चन्द्रमाः। सोमो राजा पशून्हन्ति सुरभीः पूजकांस्तथा।' इति देवलेन प्रतिषिद्धत्वात्सा न तत्र ग्राह्या । नीराजनमङ्गलमालिके तूत्तरस्यामेव कार्ये। तथा च मदनरत्ने ब्रह्मपुराणे—'कार्तिके शुक्लपक्षे तु विधानद्वितयं भवेत् । नारीनीराजनं प्रातः सायं मङ्गलमालिका । अथ चेत्प्रतिपत्स्वल्पा नारीनीराजनं भवेत्। द्वितीयायां तदा कुर्यात्सायं मङ्गलमालिकाम् । लभ्यते यदि वा प्रातः प्रतिपद्घटिकाद्वयम् । तस्यां नीराजनं कार्यं सायं मङ्गलमालिका।' इति भविष्यपुराणाच्च। देवीपुराणेऽपि—'प्रातर्वा यदि लभ्येत प्रतिपद्घटिका शुभा। द्वितीयायां तदा कुर्यात्सायं मङ्गलमालिकाम्। आश्विनान्ते यदा दर्शे नारीनीराजनं भवेत्। नारीणां तत्र वैधव्यं देशदुर्भिक्षमेव च। कार्तिके शुक्लपक्षादौ अमावास्या घटीद्वयम्। देशभङ्गभयान्नैव कुर्यान्मङ्गलमालिकाम्।' इति। तैलाभ्यङ्गे तु पूर्वविद्धा ग्राह्या बलिराज्ये तस्योक्तेः। बल्युत्सवं च पूर्वयुरिति वचनेन बल्युत्सवे पूर्वविद्धाया एव पूर्वं ग्राह्यत्वोक्तेः। यत्तु तिथ्यर्के—'नन्दायामुदयेऽभ्यङ्गं कृत्वा नीराजनं ततः। सुवेषः सत्कथागीतैर्दानैश्च दिवसं नयेत्।' इति। ज्योतिर्निबन्धधृतवचनादभ्यङ्गे उत्तरविद्धा ग्राह्येत्युक्तम्। तन्न। एतद्वचनस्य हेमाद्र्यादिसकलनिबन्धकारैरलिखनान्निर्मूलत्वात्। अत्र तैलाभ्यङ्गो नित्यः। 'वत्सरादौ वसन्तादौ बलिराज्ये तथैव च। तैलाभ्यङ्गमकुर्वाणो नरकं प्रतिपद्यते।' इति वृद्धवशिष्ठवचनात् । अत्र स्नानादिनित्यकर्मोत्तरं गोवर्धनपूजादि कार्यम् ।

तदुक्तं हेमाद्रौ भविष्ये—'प्रातर्गोवर्धनः पूज्यो द्यूतं चापि समाचरेत् । भूषणीयास्तथा गावः पूजाश्चावाहदोहनाः ।' इति । गोवर्धनपूजामन्त्रः—'गोवर्धन धराधार गोकुलत्राणकारक । विष्णुबाहुकृतोच्छ्राय गवां कोटिप्रदो भव ।' अथ गोपूजनमन्त्रः—'लक्ष्मीर्या लोकपालानां धेनुरूपेण संस्थिता । घृतं वहति यज्ञार्थे मम पापं व्यपोहतु । अग्रतः सन्तु मे गावो गावो मे सन्तु पृष्ठतः । गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ।' इति । अपराह्णे मार्गपाल्युल्लङ्घनादि कार्यम् । तद्विधिस्तु पूर्वमेवोक्तः । अन्यच्च आदित्यपुराणे—'कुशकाशमयीं कुर्याद्यष्टिकां सुदृढां नवाम् । तामेकतो राजपुत्रा हीनवर्णास्तथाऽन्यतः । गृहीत्वा कर्षयेयुस्तां यथासारं मुहुर्मुहुः । जयेऽत्र हीनजातीनां जयो राज्ञस्तु वत्सरम् । जयचिह्नमिदं राजा विदधीत प्रयत्नतः । कृत्वैतत्सर्वमेवेह रात्रौ दैत्यपतेर्बलेः । पूजां कृत्वा नृपः साक्षाद्भूमौ मण्डलके शुभे । बलिमालिख्य दैत्येन्द्रं वर्णकैः पञ्चरङ्गकैः । सर्वाभरणसंपूर्णं विन्ध्यावल्या सहोषितम् । कूष्माण्डबाणजम्भोरुमुरुदानवसंवृतम् । संपूर्णहृष्टवदनं किरीटोत्कटकुण्डलम् । द्विभुजं दैत्यराजानं कारयित्वा नृपः स्वयम् । गृहस्य मध्ये शालायां विशालायां ततोऽर्चयेत् । भ्रातृमातृजनैः सार्धं संतुष्टो बन्धुभिस्ततः । कमलैः कुमुदैः पुष्पैः कह्लारैः पङ्कजोत्पलैः । गन्धपुष्पान्ननैवेद्यैरक्षतैर्गुडपूपकैः । मद्यमांससुरालेह्यदीपबल्युपहारकैः । मन्त्रेणानेन राजेन्द्र समन्त्री सपुरोहितः । बलिराज नमस्तुभ्यं विरोचनसुत प्रभो । भविष्येन्द्र सुराराते पूजेयं प्रतिगृह्यताम् । एवं पूजां नृपः कृत्वा रात्रौ जागरणं ततः । कारयेत्प्रेक्षणीयादिनटनर्तकनाटकैः । लोकश्चापि गृहस्यान्तः शय्यायां शुक्लतन्दुलैः । संस्थाप्य बलिराजानं फलैः पुष्पैश्च पूजयेत् । बलिमुद्दिश्य दीयन्ते दानानि कुरुनन्दन । यानि तान्यक्षराण्याहुर्मयैतत्संप्रदर्शितम् ।' इति बल्युद्देशेन दीपदानमुक्तं वामनपुराणे वामनकर्तृकबलिवरदानव्याजेन । 'वीरप्रतिपदं प्राप्य तव भावी महोत्सवः । तत्र त्वां नरशार्दूल हृष्टाः पुष्टाः स्वलंकृताः । अर्घदीपप्रदानेन अर्चयिष्यंति मानवाः ।' इति ब्रह्मपुराणे । 'एवं पूजां नृपः कृत्वा रात्रौ जागरणं ततः ।' इति । इति कार्तिकशुक्लप्रतिपत्कृत्यम् ।

अथ मार्गशीर्षशुक्लप्रतिपदारभ्यं वाराहपुराणोक्तधन्यव्रतम् । अगस्त्य उवाच । 'अथातः संप्रवक्ष्यामि धन्यव्रतमनुत्तमम् । येन सद्यो भवेद्धन्यो ह्यधन्योऽपि हि यो भवेत् । मार्गशीर्षे सिते पक्षे प्रतिपद्या तिथिर्भवेत् । तस्यां नक्तं प्रकुर्वीत रात्रौ विष्णुं

च पूजयेत् । वैश्वानराय पादौ च अग्नये चोदरं तथा । हविर्भुजे तथोरश्च द्रविणोदाय वै भुजौ । संवर्तायेति च शिरो ज्वलनायेति सर्वतः । अभ्यर्च्यैवं विधानेन देवदेवं जनार्दनम् । तस्यैव पुरतः कुण्डं कारयित्वा विधानतः । होमं तत्रैव कुर्वीत एतैर्मन्त्रै[१]र्विचक्षणः।ततस्तु यावकं चान्नं भुञ्जीत घृतसंयुतम्।कृष्णपक्षे त्वेवमेव चातुर्मास्ये तु यावकम्।चैत्रादिषु तु भुञ्जीयात्पायसं सघृतं बुधः । श्रावणादिषु सक्तूंश्च ततश्चैव समाप्यते। समाप्ते च व्रते वह्निं काञ्चनं कारयेन्नृप । रक्तवस्त्रयुगच्छन्नं रक्तपुष्पानुलेपितम् । कुङ्कुमेन तथा लिप्येद्ब्राह्मणं त्वेवमेव । सर्वावयवसंपूर्णं गुणाढ्यं प्रियदर्शनम् । पूजयित्वा विधानेन रक्तवस्त्रयुगेन च । धन्येनानेन चीर्णेन व्रतेन स्यां सदा सुखी । एवमुच्चार्य तं विप्रे न्यस्य कोशामिवात्मनः । सद्यो धनमवाप्नोति योऽपि स्याद्भाग्यवर्जितः। इह जन्मनि सौभाग्यं धनं धान्यं च पुष्कलम् । अनेन कृतमात्रेण जायते नात्र संशयः। प्राग्जन्मसंचितं पापं वह्निर्दहति तस्य वै । दग्धपापः स शुद्धात्मा अमुत्रेह च नन्दति।' इति वाराहपुराणोक्तं धन्यव्रतम् ।

अथ फाल्गुनशुक्लप्रतिपदमारभ्य द्वादशदिनपर्यन्तं पयोव्रतम् । तच्च भागवते द्रष्टव्यम् । अथ फाल्गुनकृष्णप्रतिपन्निर्णयः तत्कृत्यं च । कृष्णादिमानेन चैत्रकृष्णप्रतिपदियं सा चौदयिकी ग्राह्या । 'प्रवृत्ते माधवे मासि प्रतिपद्युदिते रवौ ।' इति भविष्योक्तेः । दिनद्वये तथात्वे पूर्वा । 'वत्सरादौ वसन्तादौ बलिराज्ये तथैव च । पूर्वविद्धैव कर्तव्या प्रतिपत्सर्वदा बुधैः ।' इति वृद्धवसिष्ठवचनादिति केचित् । निर्णयामृते तु चैत्रकृष्णप्रतिपदि पूर्वविद्धायां नीराजनादि कर्म कर्तव्यम् । अस्य होलिकानन्तरे कर्तव्यत्वाद्धोलिकायाश्च पूर्वविद्धाया एव प्रशस्तत्वादेतदपि पूर्वविद्धायामेवेत्यवसीयत इत्युक्तम् । अत्र प्रतिपदि प्रातरुत्थाय श्वपचं स्पृष्ट्वा स्नानादिकं कुर्यात् तदुक्तं हेमाद्रौ भविष्योत्तरे—'चैत्रे मासि महाबाहो पुण्या प्रतिपदा परा । यस्तस्यां श्वपचं स्पृष्ट्वा स्नानं कुर्यान्नरोत्तमः । न तस्य दुरितं किंचिन्नाधयो व्याधयो नृप । भवन्ति कुरुशार्दूल तस्मात्स्नानं समाचरेत् । दिव्यं नीराजनं तद्धि सर्वरोगविनाशनम् ।' इति । तत्रैव—युधिष्ठिर उवाच—'प्रभाते किं जनैर्देव कर्तव्यं सुखमीप्सुभिः । प्रवृत्ते माधवे मासि प्रतिपद्युदिते रवौ।'—श्रीकृष्ण उवाच—'कृत्वावश्यककर्माणि संतर्प्य पितृदेवताः । वन्दयेद्धोलिकाभूतिं सर्वदुःखोपशान्तये ।' विभूतिवन्दनमन्त्रश्च-

१ एतैर्मन्त्रैर्वैश्वानरायेति प्रागुक्तैः ।

'वन्दिताऽसि सुरेन्द्रेण ब्रह्मणा शंकरेण च । अतस्त्वं पाहि नो देवि भूते भूतिप्रदा भव।' इति । अत्र तैलाभ्यङ्गो नित्यो वत्सरादाविति पूर्वोक्तवचनात् । अस्यामेव वसन्तोत्सवः । 'मण्डिते चर्चिते चैव उपलिप्ते गृहाजिरे । चतुष्कं कारयेच्छ्रेष्ठं वर्णकैश्चाक्षतैः शुभैः । तन्मध्ये स्थापयेत्पीठं शुक्लवस्त्रोत्तरच्छदम् । अग्रतः पूर्णकलशं स्थापयेत्पल्लवैर्युतम् । साक्षतं सहिरण्यं च सितचन्दनचर्चितम् । आसने चोपविष्टं च ब्रह्मघोषेण भारत । चर्चयेच्चन्दनैर्नारी अभ्यङ्गाङ्गा सुलक्षणा । पद्मरागोत्तरपदा श्रेष्ठा शुक्लविभूषिता । वसुधाद्यं शिरोन्तं च दधिदूर्वाक्षतान्वितम् । वर्धापयित्वा श्रीकण्ठमायुरारोग्यवृद्धये ।' वसुधाद्यमिति पादादारभ्य मूर्धान्तं चन्दनेन चर्चयेदित्यर्थः । तच्चन्दनं वर्धापयित्वा किंचिदवशेष्यम् । 'पश्चाच्च प्राशयेद्विद्वांश्चूतपुष्पं सचन्दनम् । मनोभवस्य सा पूजा ऋषिभिः संप्रदर्शिता ।' पुराणसमुच्चयेऽपि—'वृत्ते तुषारसमये सितपञ्चदश्यां प्रातर्वसन्तसमये समुपस्थिते च । संप्राश्य चूतकुसुमं सह चन्दनेन सत्यं हि पार्थ पुरुषोऽथ समां सुखी स्यात् ।' समां संपूर्णसंवत्सरमित्यर्थः । गोमयोपलिप्ते चतुष्कैश्चर्चितगृहाङ्गणे शुक्लवस्त्रोत्तरच्छदे आसने प्राङ्मुख उपविष्टो ब्राह्मणैः कृतस्वस्त्ययनः शुभलक्षणया सुवासिन्या कृतचन्दनतिलकनीराजनादिमङ्गलः सचन्दनमाम्रमुकुलं प्राश्नीयादित्यर्थः । एषा हृत्स्थकामपूजा । तदुक्तं कृष्णेन युधिष्ठिरं प्रति—'ये पिबंति वसन्ताद्ये चूतपुष्पं सचन्दनम् । सत्यं हृत्स्थस्य कामस्य पूजेयं क्रियते जनैः ।' इति । वसन्ताद्ये चैत्रकृष्णप्रतिपदीत्यर्थः । प्राशनमन्त्रश्च—'चूतमग्र्यं वसन्तस्य माकन्द कुसुमं तव । सचन्दनं पिबाम्यद्य सर्वकामसमृद्धये । अनन्तरं द्विजेन्द्राणां सूतमागधबन्दिनाम् । दद्याद्दानं यथाशक्त्या कामो मे प्रीयतामिति । ततो भोजनवेलायां शृतं वाकेन तेन हि । प्राशयेत्प्रथमं चान्नं ततो भुञ्जीत कामतः । य एवं कुरुते पार्थ शास्त्रोक्तं फाल्गुनोत्सवम् । अनायासेन सिध्यंति तस्य सर्वे मनोरथाः ।' इति । एतदनन्तरद्वितीयाकृत्यमुक्तं निर्णयामृते—'ततः प्रातर्द्वितीयायां पुत्रमित्रादिसंयुतः । नृपतिर्विततें देशे वितानवरशोभिते । सर्वतश्च समास्तीर्णरक्तकम्बलशोभिते । उपविश्यासने रम्ये पौरजानपदैः सह । सिन्दूरकुङ्कुमक्षोदपटवासैः सचन्दनैः । विकीर्य लोकांस्ताम्बूलैः संमान्य च पृथक्पृथक् । नृत्यगीतविनोदैश्च कुर्यात्काममहोत्सवम् । एवं कुर्वन्नवाप्नोति यावत्संवत्सरं सुखम् ।' इति । इति चैत्रकृष्णप्रतिपन्निर्णयः समाप्तः ।

अन्यमासप्रतिपत्सु कश्चिद्व्रतादिविशेषो न प्रसिद्धः । यदि क्वचित्स्यात्तदा सोऽपि युग्मवाक्येन पूर्वविद्धायामेव कार्यः । नक्तादिव्रतविशेषे तु तत्कालव्यापिनी ग्राह्येति सिद्धान्तः । अत्रैव प्रतिपद्वर्ज्यप्रसङ्गात्सर्वतिथिषु वर्ज्यान्युच्यंते । तत्र मुहूर्तदीपिकायाम्—'कूष्माण्डं बृहतीफलानि लवणं वर्ज्यं तिलाम्लं तथा तैलं चामलकं दिवं प्रवसता शीर्षं कपालांत्रकम् । निष्पावांश्च मसूरिकाफलमथो वृन्ताकसंज्ञं मधु द्यूतं स्त्रीगमनं क्रमात्प्रतिपदादिष्वेवमाषोडश ।' शीर्षं नारिकेलं कपालमलाबु । अन्त्रं पटोलभूपालः । 'कूष्माण्डं बृहती क्षारं मूलकं पनसं फलम् । धात्री शिरः कपालान्त्रं नखचर्मतिलानि च । क्षौरकर्माङ्गनासेवां प्रतिप्रत्प्रभृति त्यजेत् ।

अथ सिद्धाविरुद्धादिकं लिख्यते । प्रतिपच्छुक्रवारेण युक्ता सिद्धोच्यते । तदुक्तम्—'शुक्रेण प्रतिपत्षष्ठी एकादश्या त्रयोदशी । सिद्धा याम्योत्तराषाढहस्तश्रवणरेवती ।' अत्र सर्वाणि शुभकर्माणि कार्याणि, इयं भौमवारेण बुधवारेण च विरुद्धा । तदुक्तम्—'कुजे तु वैश्वदेवार्द्रा प्रतिपत्पूर्वभाद्रपात् । दारुणं वासुदेवं च पूर्णया सह वर्जयेत् ।' इति । तथा 'बुधे धनिष्ठाभरणीदास्रमूलसमन्विता । तृतीयानवमीप्रतिपद्रेवतीभिर्विवर्जयेत् ।' इति । सामान्यतः सर्वास्वपि प्रतिपदादिषु वह्न्यादितिथयः स्वस्वतिथौ पूज्याः । ते च रत्नमालायाम्—'वह्निर्विरञ्चिर्गिरिजा गणेशः फणी विशाखो दिनकृन्महेशः । दुर्गान्तको विष्णुहरी स्मरश्च शर्वः शशी चेति पुराणदृष्टाः ।' कालादर्शेऽपि—अग्निर्विरञ्चिरित्याद्युक्त्वा 'शिवं चन्द्रं प्रतिपदाद्यासु वै तिथिषु क्रमात् । शुक्ले कृष्णेऽपि वा पक्षे विधिवत्पूजयेदिति ।' रत्नमालायामेकादशीद्वादश्योर्विष्णुरेव देवतोक्ता । तत्रैकादश्याः शिवो द्वादश्या विष्णुरितीयान्भेदः । अथ पक्षद्वयगतासु सर्वप्रतिपत्तिथिषु तिथिपत्वेन वह्निः पूज्यः । तदुक्तं ब्रह्मपुराणे—'प्रतिपद्यग्निपूजा स्यात्' इति । प्रतिपदादीनां त्रिरावृत्त्या 'नन्दा च भद्रा च जया च रिक्ता पूर्णेति सर्वास्तिथयः क्रमात्स्युः । कनिष्ठमध्येष्टफलास्तु शुक्ले कृष्णे भवन्त्युत्तममध्यहीनाः ।' अथ प्रतिपत्कृत्यमुच्यते । सर्वासु प्रतिपत्सु विवाहक्षेत्रवास्तुचित्रोत्सवाख्यं कर्म कार्यम् । यथाह भोजः—'विवाहं प्रतिपत्पष्ठ्योः क्षेत्रवास्तु तथोत्सवम् ।' इति । अत्र प्रतिपदि दन्तकाष्ठं पूर्वादिगमनं च वर्जयेत् । तदुक्तम्—' नष्टेन्दुषष्ठीप्रतिपत्सु धीमान्राजा तु दन्तोत्कषर्णं विदध्यात् ।' इति तथा 'क्रमात्पूर्वोत्तराग्नेयनैर्ऋते यामपश्चिमे । वायवैशानयोर्योगिन्यः स्युः प्रतिपदादिषु ।' प्रतिपदि नवम्यां च

पूर्वस्यां योगिनी । अतस्तत्सांमुख्येन यात्रा निषिद्धेत्यर्थः । रविभौमशनीनामन्यतमे क्रूरग्रहे मेषस्थे सति प्रतिपत्पञ्चमी च दुष्टा भवतीति ।

श्रीमत्पण्डितदेवशर्मतनयः श्रीराघवांघ्रिद्वय-
ध्यानावाप्तसमस्तकामनिवहः सम्राट् स रत्नाकरः ॥
तुष्ट्यै श्रीजयसिंहवर्मनृपतेः कल्पद्रुमे कामदं
प्रत्यग्रे प्रतिपत्तिथेः समकरोद्गुच्छं सुनिर्णायकम् ॥ १ ॥

इति देवभट्टात्मजपौण्डरीकयाजिरत्नाकरविरचिते जयसिंहकल्पद्रुमे प्रतिपत्प्रकरणं समाप्तम् ।

---

## अथ द्वितीयानिरूपणम् ।

तत्रादौ शुक्लकृष्णद्वितीयाध्यानम् हेमाद्रौ—'द्वितीया हंसगा शुभ्रा पात्रपुस्तकधारिणी ।' इति । 'द्वितीया कुमुदाभासा वृषस्था साक्षकुण्डिका ।' इति अथ द्वितीयानिर्णयः । तत्र कृष्णा पूर्वा शुक्लोत्तरेति हेमाद्रिः । कृष्णद्वितीयादिमा पूर्वाह्ने यदि सासिता परतः सर्वा इति दीपिकोक्तेः । 'सा द्वितीया परोपोष्या पूर्वविद्धा ततोऽन्यथा ।' इति स्मृत्यन्तरात् । 'एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी त्रयोदशी।अमावास्या उपोष्याः स्युः परान्विताः।'इति विष्णुधर्मोत्तराच्च। मदनरत्नेऽपि—शुक्लद्वितीया परा ग्राह्या युग्मानीति वचनात्। कृष्णद्वितीया तु पूर्वविद्धैवग्राह्या द्वितीया प्रतिपद्युतेति आपस्तम्बवचनात् । 'प्रतिपत्संमुखी कार्या द्वितीया द्विजसत्तम।' इति ब्रह्मवैवर्तवचनाच्च । प्रतिपत्संमुखी प्रतिपत्संगता । तद्विद्धेत्यर्थ इत्युक्तम् । नन्वेतेषु वचनेषु द्वितीयामात्रश्रवणात्कथं द्वितीयाविशेषविषयत्वमेषामिति चेदुच्यते । युग्मवाक्ये कृष्णप्रतिपदोऽमावास्यायुक्तत्वासंभवाच्छुक्लप्रतिपदमावास्यायुग्मस्य प्राशस्त्यमुक्तम् । तथा च शुक्लप्रतिपद्द्वितीयायुग्ममेतद्व्यस्तमिति दोषाभिधानेन निषिद्धत्वान्निगमवाक्यस्य विषयः । एवं च प्रतिपत्सद्वितीयेत्यादिवाक्यस्य शुक्लप्रतिपद्द्वितीयातृतीयायुग्मवाक्यविषयत्वे निगमवाक्याविरोधः। निगमवाक्यस्य च कृष्णद्वितीयाविषयत्वे निरवकाशापस्तम्बवचनविरोधः । इति यथोक्तविषयत्वमेवाङ्गीकर्तव्यं विशेषश्च तत्प्रकरणे वक्ष्यते । इति द्वितीयासामान्यनिर्णयः ।

अथ द्वितीयाविशेषकृत्यानि । निर्णयामृते-चैत्रशुक्लद्वितीयायामुमापूजाऽग्निपूजा च कार्या । तदुक्तं भविष्योत्तरे—'चैत्रशुक्लद्वितीयायामुमापूजा फलार्थिभिः । शिवपू-

जाऽग्निपूजा च कर्तव्या मुनिसत्तम।' इति। देवीपुराणे—'उमां शिवं हुताशं च द्वितीयायां प्रपूजयेत् । हविष्यमत्र नैवेद्यं देयं गन्धार्चनान्वितम् । फलमाप्नोति विप्रेन्द्र सर्वक्रतुसमुद्भवम् ।' इति ।

## अस्यामेवारभ्यं विष्णुधर्मोक्तं बालेन्दुव्रतम् ।

मार्कण्डेय उवाच—'इमां तथाऽन्यां वक्ष्यामि द्वितीयां सर्वकामदाम् । यामुपोष्य नरः कामान्सर्वान्प्राप्नोत्यभीप्सितान् । चैत्रशुक्लद्वितीयायां संप्राप्य नृप मानवः। दिनावसाने कुर्वीत सम्यक्स्नानं नदीजले । बालेन्दुमण्डलं कृत्वा पूजयेच्छ्वेतवर्णकैः ।' मण्डलं कृत्वा तत्र चन्द्रदर्शनकाले चन्द्रमावाह्य पूजयेदित्यर्थः । 'श्वेतपुष्पैः फलैश्चैव परमान्नेन भूरिणा । इक्षुणेक्षुविकारैश्च शुद्धेन लवणेन च । दिनावसाने देवेशं पूजयेद्वा निशाकरम् ।' दिनावसाने चन्द्रदर्शनकाले गगनस्थमेव वा चन्द्रमण्डलं विनाऽपि पूजयेदित्यर्थः। 'घृतेन हवनं कृत्वा नक्तं भुञ्जीत वाग्यतः । प्रणवादिनमोन्तेन स्वाहान्तेन क्रमेण तु।' नाममन्त्रेण पूजाहोमौ । 'ततस्तैले पाचितं तु भक्षयेत्सर्वदैव न ।' ततस्तद्दिनमारभ्य सर्वदैव व्रताचरणं यावत्प्रत्यहं तैलपक्वं न भुञ्जीतेत्यर्थः । 'एतद्व्रतं नरः कृत्वा सम्यक्संवत्सरं शुचिः । सौभाग्यं महदाप्नोति स्वर्गलोकं च गच्छति ।' 'संवत्सरं वर्षपर्यंतं प्रतिमासं शुक्लद्वितीयायां पूजाहोमनक्तभोजनानि कार्याणि । 'एतत्पवित्रं रिपुनाशकारि सौभाग्यदं रोगहरं च राजन् । प्रोक्तं व्रतं यादववंशमुख्य कार्यं प्रयत्नेन कुलस्त्रियाऽपि'इति विष्णुधर्मोत्तरोक्तं बालेन्दुद्वितीयाव्रतम्।

## अथ तस्यामेव विष्णुधर्मोत्तरोक्तं नेत्रव्रतम् ।

मार्कण्डेय उवाच। 'नासत्यौ देवभिषजावश्विनौ परिकीर्तितौ । तावेव कथितौ लोके सूर्यताराधिपौ नृप । 'सूर्यताराधिपौ सूर्यचन्द्ररूपौ । 'अश्वयानरतौ यस्मादश्विनौ परिकीर्तितौ।चैत्रशुक्लद्वितीयायां सोपवासो जितेन्द्रियः। नासत्यौ देवभिषजौ पूजयेत्प्रयतःशुचिः । गन्धमाल्यनमस्कारैर्धूपदीपान्नसंपदा । कृत्वा च मूर्तिनिर्माणं नासत्यौ पूजयेन्नरः ।' नासत्यमूर्तिस्तु विश्वकर्मोक्ता । 'द्विभुजौ देवभिषजौ गौरांगौ चारुलोचनौ । तयोरोषधयः कार्या दिव्या दक्षिणहस्तयोः । सपुस्तककरौ कार्यौ दर्शनीयौ तथा द्विज। दीपमालां तथा दद्यात्तयोर्निशि विशेषतः । कनकं रजतं चोभे दद्याद्विप्रेषु दक्षिणाम् । संपूज्य नेत्रयुगलं विष्णोः संवत्सरं नरः । प्रदीप्ततेजा भवति

---

१ दिनावसाने सन्ध्यासंनिहितकाले ।

चक्षुष्मांश्चैव जायते । प्राणयात्रां तु कुर्वीत दध्ना युतघृतेन च । नेत्रव्रतं द्वादशवत्सराणि कृत्वा भवेद्भूमिपतिप्रदीपः । सुरूपरूपोऽरिगणप्रमाथी धर्माभिरामो नृपवर्गमुख्यः ।' इति विष्णुधर्मोत्तरोक्तं नेत्रव्रतम् ।

ज्येष्ठकृष्णद्वितीयायां समानकल्पादिः । ज्येष्ठशुक्लद्वितीयायां कल्किजयन्ती । तदुक्तम्‘ ज्येष्ठशुक्लद्वितीयायां बौद्धः कल्की भविष्यति । नभस्ये च द्वितीयायां बलभद्रोऽभवत्तदा।' इति । इयं सोमपदा । तदुक्तं कालादर्शे—‘सिता ज्येष्ठद्वितीया च आश्विने दशमी सिता । चतुर्थी द्वादशी माघे एताः सोमपदाः स्मृताः।' अत्र वेदाध्ययननिषेधो नारदीये—‘युगादिषु च सर्वासु तथा मन्वन्तरादिषु । अनध्यायं प्रकुर्वीत तथा सोमपदास्वपि ।' इति।

आषाढशुक्लद्वितीयायां रामयात्रोत्सवः कार्यः । तथा च स्कान्दे—‘आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता । तस्यां रथे समारोप्य रामं वै भद्रया सह ।' इति। यात्रोत्सवं प्रवर्त्याथ प्रीणयेच्च द्विजान्बहून् ।' भद्रा सुभद्रा ।

श्रावणकृष्णद्वितीया बृहत्तपेत्युच्यते ।

## अस्यामेवारभ्यं भविष्यपुराणोक्तमशून्यशयनव्रतम् ।

तत्र सा पूर्वविद्धा ग्राह्या । तदाह संवर्तः—‘कृष्णाष्टमी बृहत्तपा सावित्री वटपैतृकी । कामत्रयोदशी रम्भा उपोष्याः पूर्वसंयुताः ।' इति केचित् । मदनरत्ननिर्णयामृतादौ तु यदैव चन्द्रोदयव्यापिनी तदैव कार्या । ‘एकभक्ते दिवानक्ते निशि चन्द्रोदयव्रते । तिथिस्तात्कालिकी ग्राह्या परा तिथिरिति स्मृता।' इति संग्रहवचनात्। चन्द्रोदयव्रतत्वं चास्य ‘चन्द्राय चार्घ्यो दातव्यो दध्यक्षतफलादिभिः ।' इति स्मृत्यन्तरवचनात् । दिनद्वये तत्र सत्त्वेऽसत्त्वे वा परा । ‘चतुर्ष्वसितपक्षेषु मासेषु श्रवणादिषु । अशून्याख्यव्रतं कुर्याज्जयया तु फलादिकम्।' इति। अथ कथा । सुमन्तुरुवाच- ‘अशून्यशायिनीं नाम द्वितीयां शृणु भारत।यामुपोष्य न वैधव्यं स्त्री प्रयाति नराधिप । पत्नीप्रयुक्तस्तु नरो न कदाचित्प्रजायते ।' यामुपोष्य यस्यां देवतामुपास्य उपासनमेवात्रोपवासोऽभिमतो न भोजनाकृतिः, नक्तं भुञ्जीतेत्युत्तरवाक्यविरोधात् । ‘ शेते जगत्पतिः कृष्णः श्रिया सार्धं यदा नृप । अशून्यशयनी नाम तदा ग्राह्या तु सा तिथिः । कृष्णपक्षे द्वितीयायां श्रावणे मासि भारत।' यदा शेते तदा ग्राह्या शयनीसंनिहिता द्वितीया ग्राह्येत्यर्थः । अत एव श्रावणोऽत्र पौर्णमास्यन्तः । वामनपुराणे—

'एकादश्यां जगत्स्वामी शयनं परिकल्पयेत् । शेषाहिभोगपर्यङ्कं कृत्वा संपूज्य केशवम् । अनुज्ञां ब्राह्मणेभ्यश्च द्वादश्यां प्रयतः शुचिः । लब्ध्वा पीताम्बरधरः स्वस्तिनिद्रां समानयेत् । त्रयोदश्यां ततः कामः स्वपते शयने शुभे । चतुर्दश्यां ततो यक्षाः स्वपन्ति सुखशीतले । पौर्णमास्यामुमानाथः स्वपते चर्मसंस्तरे । वैयाघ्रे च जटाभारं समुद्ग्रथ्यान्यचर्मणा । ब्रह्मा प्रतिपदि तथा नीलोत्पलमयेऽनघ । तल्पे स्वपिति लोकानां दर्शयन्मार्गमुत्तमम् । विश्वकर्मा द्वितीयायां तृतीयायां गिरेः सुता ।' इति । आषाढ्यव्यवहितोत्तरद्वितीयायां विश्वकर्मस्वापमभिधाय 'यस्यां तिथ्यां प्रस्वपिति विश्वकर्मा प्रजापतिः । द्वितीया सा शुभा पुण्या पुण्यस्य शयनोचिता । तस्यां तिथावर्च्य हरिं श्रीवत्साङ्कं चतुर्भुजम् । पर्यङ्कस्थं समं लक्ष्म्या गन्धपुष्पादिभिर्मुने । ततो देवाय शय्यायां फलानि प्रक्षिपेत्क्रमात् ।' इत्यादिना तस्यामेव तिथावशून्यशयनव्रतविधानात् 'इदमुच्चारयेन्मन्त्रं प्रणम्य च जगत्पतिम्। श्रीवत्सधारिञ्छ्रीकान्त श्रीवास श्रीपतेऽव्यय। गार्हस्थ्यं मा प्रणाशं मे यातु धर्मार्थकामदम्। शुचयो मा प्रणश्यन्तु मा प्रणश्यन्तु निर्जराः। याम्यगा मा प्रणश्यन्तु मत्तो दाम्पत्यभेदतः ।' शुचयोऽग्नयः निर्जरा देवाः याम्यगाः पितरः ।' लक्ष्म्या वियुज्यते देव न कदाचिद्यथा भवान् । तथा कलत्रसंबन्धो देव मामेव पूज्यताम्। लक्ष्म्या न शून्यं वरद यथा ते शयनं सदा । शय्याममाप्यशून्यास्तु तथा च मधुसूदन ।' विष्णुरहस्ये पुनरिमे मन्त्राः—'पत्नी भर्तृवियोगं च भर्ता भार्यासमुद्भवम् । नाप्नुवन्ति यथा दुःखं दाम्पत्यानि तथा कुरु । यथा श्रिया युतो विष्णुर्लक्ष्मीर्देव त्वया यथा । प्रसादात्तव देवेश भक्तिरस्तु तथावयोः । माऽस्मत्पुत्राःप्रणश्यन्तु माधानं मा कुलक्रमः । अग्नयो मा प्रणश्यन्तु गृहभङ्गस्तु मावयोः ।' शेषो ग्रन्थो भविष्यपुराणतुल्यार्थः ।' एवं प्रसाद्य पूजां च कृत्वा लक्ष्म्यास्तथा हरेः । फलानि दद्याच्छय्यायामभीष्टानि जगत्पतेः । 'अत्र चन्द्रार्घदानमुक्तं पुराणान्तरे—'चन्द्राय चार्घ्यो दातव्यो दध्यक्षतफलादिभिः।' इति । अर्घ्यमन्त्रश्च—'गगनाङ्गणसंदीप क्षीराब्धिमथनोद्भव । भाभासितदिगाभोग रमानुज नमोऽस्तु ते।' इति । 'नक्तं प्रणम्यायतने हरिं भुञ्जीत वाग्यतः।' हरिं प्रणम्य नक्तं भुञ्जीतेत्यन्वयः ।' ब्राह्मणाय द्वितीयेऽह्नि शक्त्या देया च दक्षिणा । यानि तत्र महाबाहो काले सन्ति फलानि च । मधुराणि न तीव्राणि न चापि कटुकानि च । दातव्यानि नृपश्रेष्ठ स्वशक्त्या शयने नृप । मधुराणि च दत्वा तु मनोवल्लभतां व्रजेत् । तस्मात्कटुकतीव्राणि स्त्रीलिङ्गानि चवर्जयेत् । खर्जूरमातुलुङ्गानि स्थितेन शिरसा सह । फलानि दद्याच्छय्यायाम्' इति शयने

दातव्यतया सामान्येनोपात्तानां फलानां यानीत्यादिविशेषाभिधानम् । 'फलानि शयने राजन्यज्ञभागहरस्य तु । एतान्येव तु विप्रस्य गाङ्गेयसहितानि च । द्वितीयेऽह्नि प्रदेयानि भक्त्या शय्या च भारत । वासोदानं तथा धान्यफलदानसमन्वितम् ।' एतानि यज्ञभागहरस्यशयने उपकल्पितानि फलानि द्वितीयेऽह्नि गाङ्गेयसहितानि विप्रस्य प्रदेयानीत्यन्वयः । तथा वासोदानं कार्यमिति शेषः । यज्ञभागहरः यज्ञपुरुषः । गाङ्गेयमत्र सुवर्णम् । स्थितेनशिरसा विद्यमानेन वृन्तेन । 'एवं करोति यः सम्यङ्नरो मासचतुष्टयम् । तस्य जन्मत्रयं वीर गृहभङ्गो न जायते ।' मासचतुष्टयं कृष्णद्वितीयास्विति शेषः । बोधिन्यनन्तरद्वितीयायां समापनीयमित्यर्थः । समाप्तौ कर्त्तव्यताविशेषः पद्मपुराणे—तस्य देवस्य सकलं मन्त्रादिकमभिधाय शंकर उवाच—'गीतवादित्रनिर्घोषं देवदेवस्य कारयेत् । घण्टा भवेदशक्तस्य सर्ववाद्यमयी यतः । एवं संपूज्य गोविन्दमश्नीयात्तैलवर्जितम् । नक्तमक्षारलवणं यावन्मासचतुष्टयम् । ततः प्रभाते संजाते लक्ष्मीपतिसमन्विताम् । दीपान्नभाजनैर्युक्तां शय्यां दद्याद्विलक्षणाम् ।' इदं मासचतुष्टयान्ते न तु प्रतिमासम् । 'कार्तिके त्वथ संप्राप्ते शय्यां श्रीकान्तसंयुताम् । सोपस्करां सोदकुम्भां सान्ना दद्याद्द्विजातये ।' इति भविष्योत्तरात् । 'पादुकोपानहच्छत्रचामरासनसंयुताम् । अभीष्टोपस्करैर्युक्तां शुक्लपुष्पाम्बरावृताम् । सोपधानकविश्रामां फलैर्नानाविधैर्युताम् । तथाभरणधान्यैश्च यथाशक्त्या समन्विताम् । अव्यङ्गाङ्गाय विप्राय वैष्णवाय कुटुम्बिने । दातव्या वेदविदुषे न च कुव्रतिने क्वचित् ।' दातव्योक्तिः पूर्वोक्तदानानुवादेन संप्रदानविवेचनम् । 'तत्रोपविश्य दाम्पत्यमलंकृत्य विधानतः । पत्न्याश्च भाजनं दद्याद्भक्ष्यभोज्यसमन्वितम् । ब्राह्मणस्यापि सौवर्णीमुपस्करसमन्विताम् । प्रतिमां देवदेवस्य सोदकुम्भां निवेदयेत् । एवं यस्तु पुमान्कुर्यादशून्यशयनं हरेः । वित्तशाठ्येन रहितो नारायणपरायणः । पत्न्या न तस्य विरहः कदाचिदपि जायते । नारी चाविधवा ब्रह्मन्यावच्चन्द्रार्कतारकम् ।' मत्स्यपुराणे—'न विरूपं न शोकार्तं दाम्पत्यं जायते क्वचित् । न पुत्रपशुरत्नानि क्षयं यान्ति नृपोत्तम । सप्त कल्पसहस्राणि सप्त कल्पशतानि च । कुर्वन्नशून्यशयनं विष्णुलोके महीयते ।' भविष्यपुराणे—'अशून्यशयनः सोऽथ धर्मकामार्थसाधकः । भवत्यव्याहतैश्वर्यः पुरुषो नात्र संशयः । नारी च राजन्धर्मज्ञा व्रतमेतद्यथाविधि । या करोति न शोच्यासौ बन्धुवर्गस्य जायते । वैधव्यं दुर्भगत्वं च भर्तृत्यागं च सत्तम । नाप्नोति जन्मत्रितयमेतत्कृत्वा महाव्रतम् । इत्येषा कथिता राजन्द्वितीया तिथिरुत्तमा । यामुपोष्य नरो राजन्नृद्धिं खलु स्वयं व्रजेत् ।' इत्यशून्यशयनद्वितीयाव्रतम् ।

अथाश्विनशुक्लद्वितीयाकृत्यम्। स्कन्दपुराणे—'आश्विने मासि वै पुण्या द्वितीयाशुक्लपक्षगा। दानं प्रदत्तमेतस्यामनन्तफलमुच्यते।'

कार्तिकशुक्लद्वितीया यमद्वितीया। सा चापराह्णव्यापिनी ग्राह्येत्युक्तं निर्णयामृतादौ। मध्याह्नव्यापिनी पूर्वविद्धा चेति हेमाद्रिः। इयं या कर्मकालव्यापिनी सैव ग्राह्या। दिनद्वये कर्मकालव्याप्तावव्याप्तौ वा द्वितीयासामान्यनिर्णयो द्रष्टव्यः इति मदनः। अष्टधा विभक्तदिनपञ्चमभागव्यापिनी ग्राह्येति स्मार्तः। अपराह्णशब्देन द्वेधाविभक्तदिनोत्तरविभागो ग्राह्य इति तु युक्तमिति कृत्यरत्नावल्याम्। अत्र कृत्यमुक्तं स्कान्दे—'ऊर्जे शुक्लद्वितीयायामपराह्णेऽर्चयेद्यमम्। स्नानं कृत्वा भानुजायां यमलोकं न पश्यति। ऊर्जे शुक्लद्वितीयायां पूजितस्तर्पितो यमः। महिषासनमारूढो दण्डमुद्गरधारिभिः। वेष्टितः किंकरैर्हृष्टैस्तस्मिन्यच्छति वाञ्छितम्।'यमुनायां स्नानं कृत्वा यमं पूजयेत्तर्पयेच्च। अस्यां भगिनीभिर्भ्रातृपूजनं कार्यम्। तथा च लिङ्गपुराणे—'कार्तिके तु द्वितीयायां शुक्लायां भ्रातृपूजनम्। या न कुर्याद्विनश्यन्ति भ्रातरः सप्तजन्मसु।' तस्या इति शेषः। भविष्योत्तरेऽपि—'कार्तिके शुक्लपक्षे तु द्वितीयायां युधिष्ठिर। यमो यमुनया पूर्वं भोजितः स्वगृहे स्वयम्। अतो यमद्वितीया सा प्रोक्ता लोके युधिष्ठिर। अस्यां निजगृहे पार्थ न भोक्तव्यमतो बुधैः। यत्नेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्धनम्। दानानि च प्रदेयानि भगिनीभ्यो विशेषतः। स्वर्णालंकारवस्त्राणि पूजासत्कारभोजनैः। सर्वा भगिन्यः संपूज्या अभावे प्रतिपन्नकाः।'प्रतिपन्नकाः प्रतिपन्ना भगिनीत्वेन व्यवहृता इत्यर्थः।मित्रभगिन्य इतिहेमाद्रिः।पितृव्यभगिन्य इत्यपि हेमाद्रिः। ब्रह्माण्डे—'या तु भोजयते नारी भ्रातरं युग्मके तिथौ। अर्चयेच्चापि ताम्बूलैर्न सा वैधव्यमाप्नुयात्। भ्रातुरायुःक्षयो राजन्न भवेत्तत्र कर्हिचित्। चित्रगुप्तस्य पूजां च कुर्याज्ज्ञानस्य वृद्धये। मषीपात्रं लेखनीं च संपूज्य च प्रयत्नतः। सर्वान्कामानवाप्नोति यमलोकं न पश्यति।' गौडग्रन्थे तु—'यमं च चित्रगुप्तं च यमदूतांश्च पूजयेत्। अर्घ्यश्चात्र प्रदातव्यो यमाय सहजद्वयैः।' भ्रातृभगिनीभिरित्यर्थः। अर्घ्यमन्त्रः।'एह्येहि मार्तण्डज पाशहस्त यमान्तकालोकधरामरेश। भ्रातृद्वितीयाकृतदेवपूजां गृहाण चार्घ्यं भगवन्नमोऽस्तु ते।' पूजानन्तरं प्रणाममन्त्रः—'धर्मराज नमस्तुभ्यं नमस्ते यमुनाग्रज।पाहि मां किंकरैः सार्धं सूर्यपुत्र नमोऽस्तु ते। यमस्वसर्नमस्तेऽस्तु यमुने लोकपूजिते।वरदा भव मे नित्यं सूर्यपुत्रि नमोऽस्तु ते।' क्वचिद्भ्रातृभोजनदाने मन्त्रः।'भ्रातस्तवानुजाताऽहं भुङ्क्ष्व भक्तमिमं शुभम्। प्रीतये यमराजस्य यमुनाया

विशेषतः ।' ज्येष्ठा तु तवाग्रजाताहमिति पठेत् । इति यमद्वितीयाकृत्यम् । **अथ भविष्योत्तरोक्तं यमद्वितीयाव्रतम्** । श्रीकृष्ण उवाच–'सन्त्येतास्तिथयः पार्थ द्वितीयाद्याश्च विश्रुताः । मासैश्चतुर्भिश्चतस्रः प्रावृट्काले मलापहाः । गोपितास्ताः सदा पार्थ न प्रोक्ताश्च मया क्वचित् । प्रकाशयामि ताः सम्यक् शृणु सर्वाः समाहितः । प्रथमा श्रावणे मासि तथा भाद्रपदेऽपरा । तृतीयाश्वयुजे मासि चतुर्थी कार्तिके भवेत् । श्रावणे कलुषानाम तथा भाद्रे च गीर्मला । आश्विने प्रेतसंचारा कार्तिके याम्यका मता ।' युधिष्ठिर उवाच । 'कस्मात्सा कलुषा प्रोक्ता कस्मात्सा गीर्मला मता । कस्मात्सा प्रेतसंचारा कस्माद्याम्या प्रकीर्तिता ।' श्रीकृष्ण उवाच । 'पुरा वृत्रवधे वृत्ते प्राप्तराज्ये पुरंदरे । ब्रह्महत्यापनोदार्थमश्वमेधे प्रवर्तिते । क्रोधादिन्द्रेण वै ब्रह्महत्या सा विनिषूदिता । षड्विधा सा क्षितौ क्षिप्ता वृक्षे तोये महीतले । नार्यां वह्नौ ब्रह्महणि संविभज्य यथाक्रमम् । तत्पादं श्रावणे व्यूढं द्वितीयायां दिनोदये । नारीं वृक्षं नदीं भूमिं वह्निं ब्रह्महणं तथा । निर्मलीकरणाज्जाता यतः सा कलुषा स्मृता । मधुकैटभयो रक्ते पुरा मग्ना तु मेदिनी । अष्टाङ्गुला पवित्रा स्यान्नारीणां तु रजोमलम् । नद्यो जलमलाः सर्वा वह्नेर्धूमशिखा मलम् । कलुषा विचरन्त्यस्यां तेनैषा कलुषा मता ।' विचरन्ति कृतप्रायश्चित्तान्परित्यज्याकृतप्रायश्चित्तान्ग्रहीतुं विचरन्ति । अत एव तस्यां प्रतिसंवत्सरं प्रायश्चित्तं कर्तव्यम् । 'गीर्गिरा भारती वाणी वाग्रा मेधा सरस्वती । गीर्मलं वहते यस्माद्द्वितीया गीर्मला मता । देवर्षिपितृधर्माणां निन्दका नास्तिकाः खलाः । तेषां सा वाङ्मलं व्यूढा द्वितीया तेन गीर्मला । अनध्यायेषु शास्त्राणि पाठयन्ति पठन्ति च । शाब्दिकास्तार्किकाः श्रौत्रास्तेषां ये शब्दजाः स्मृताः । मला व्यूढा द्वितीयायां ततोऽथ गीर्मला च सा ।' अतस्तस्यां सरस्वतीपूजा कार्येत्यर्थः । 'प्रेतास्तु पितरः प्रोक्तास्तेषां तस्यां तु संचरः । द्वितीयायां यतो लोके तेन सा प्रेतसंचरा । अग्निष्वात्ता बर्हिषद आज्यपाः सोमपास्तथा । पितामहादयः सर्वे ये चान्ये प्रेतसंचराः । पुत्रैः पौत्रैश्च दौहित्रैः स्वधामन्त्रैस्तु पूजिताः । श्राद्धदानमखैस्तृप्ता यान्त्यतः प्रेतसंचरा ।' अतस्तस्यां पथि श्राद्धं कार्यम् । 'कार्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर । यमो यमुनया पूर्वं भोजितः स्वगृहे तदा । द्वितीयायां महोत्सर्गे नारकीयाश्च तर्पिताः । पापेभ्योऽपि विनिर्मुक्तास्ते मुक्ताः सर्वबन्धनात् । भ्रंशिताश्चापि सन्तुष्टाः स्थिताः सर्वे यदृच्छया । तेषां महोत्सवो वृत्तो यमराष्ट्रसुखावहः । अतो यमद्वितीया सा प्रोक्ता लोके युधिष्ठिर । अस्यां निजगृहे पार्थ न भोक्तव्यमतो बुधैः ।

स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्धनम् । दानानि च प्रदेयानि भगिनीभ्यो विधानतः ॥ स्वर्णालंकारवस्त्राणि पूजासत्कारभोजनैः । सर्वा भगिन्यः संपूज्या अभावे प्रतिपन्नकाः । पितृव्यभगिनीहस्तात्प्रथमायां युधिष्ठिर ।' पितृव्यभगिनी पितृव्यसंबन्धाद्भगिनी पितृव्यकन्यकेत्यर्थः । 'मातुलस्य सुताहस्ताद्द्वितीयायां तथा नृप । पितुर्मातुः स्वसुः कन्ये तृतीयायां तयोः करात् । भोक्तव्यं सहजायाश्च भगिन्या हस्ततः परम् । सर्वासु भगिनीहस्ताद्भोक्तव्यं बलवर्धनम् ।' सर्वासु सर्वद्वितीयासु । 'धन्यं यशस्यमायुष्यं धर्मकामार्थसाधकम् । व्याख्यातं सकलं पार्थ सरहस्यं मया तव । यस्यां तिथौ यमुनया यमराजदेवः संभोजितश्च जगति स्वसृसौहृदेन । तस्यां स्वसुः करतलादिह यो भुनक्ति प्राप्नोति वित्तमथ भोगमराजदेवः ।' इति भविष्योत्तरोक्तं यमद्वितीयाव्रतं समाप्तम् ।

मार्गशीर्षशुक्लद्वितीयायां पितृपूजनं कार्यम् । तदुक्तं हेमाद्रौ लिङ्गपुराणे— 'वृश्चिके च द्वितीयायां शुक्लायां पितृपूजनम् । यो न कुर्याद्विनश्यन्ति भ्रातरः सप्तजन्मगाः ।'

अथ पौषशुक्लद्वितीयायां विष्णुधर्मोत्तरोक्तमारोग्यव्रतम् । पुष्कर उवाच 'पौषशुक्लद्वितीयायां गवां शृङ्गोदकेन तु । स्नात्वा शुक्लाम्बरो भूत्वा सूर्ये त्वस्तमुपागते । बालेन्दोः पूजनं कृत्वा गन्धमाल्यानुलेपनैः । धूपदीपनमस्कारैस्तथा चैवान्नसंपदा । दध्ना च परमान्नेन गुडेन लवणेन च । पूजनैर्ब्राह्मणानां च पूजयित्वा निशाकरम् । यावदस्तं न यातीन्दुस्तावदेव समाचरेत् । आहारं गोरसप्रायमधः शायी निशां नयेत् । एवं संवत्सरे पूर्णे सौम्ये मासि द्विजोत्तम ।' एवमिति प्रतिमासं शुक्लद्वितीयासु चन्द्रपूजनविधिनेत्यर्थः । सौम्ये मार्गशीर्षे । 'बालेन्दोः पूजनं कृत्वा पूर्वं स्मृत्वा विशेषतः । वासांसि रसकुम्भं च काञ्चनं च द्विजातये । दत्त्वा तु पूर्ववद्भुक्त्वा व्रतपारंगतो भवेत् । व्रतेनानेन धर्मज्ञो रोगमेवं व्यपोहति । सौभाग्यमाप्नोति तथा पुष्टिं च मनुजोत्तम । कामं समाप्नोत्यथ चैकमिष्टं यशस्तथोग्रं प्रचुरं च धर्मम् । अभ्यासतस्तस्य समस्तकामान्नरस्तथाप्नोत्यथ वापि नारी ।' इति विष्णुधर्मोत्तरोक्तमारोग्यद्वितीयाव्रतम् ।

बृहस्पतिवारद्वितीयासु विधिपूजनमुक्तं ब्रह्मपुराणे—'बृहस्पतौ द्वितीयायां विधिवद्विधिपूजनम् । कृत्वा नक्तं समश्नीयाल्लभते भूतिमुत्तमाम् ।' विधिर्ब्रह्मा तत्पू-

जनं च गायत्र्या पौराणमन्त्रेण वा । अन्यमासद्वितीयासु कश्चिद्व्रतविशेषः प्रसिद्धो नास्ति । यदि कश्चित्स्यात्तर्हि युग्मवाक्येन परविद्धायामेव कार्यः । नक्तव्रतविशेषे तु तत्कालव्यापिन्यामेवेति सिद्धान्तः ।

अथ सिद्धाविरुद्धादिकम् । द्वितीया बुधवारेण सिद्धा । ज्योतिषे—'बुधवारे द्वितीया च द्वादशी सप्तमी पुनः । मृगोऽनुराधा हस्तश्च कृत्तिका सिद्धिदायिका ।' इति । अत्र कार्यारम्भः सिद्धो भवति इयं शुक्रवारेण विरुद्धा । अत्र शुभकार्यं न कार्यम् । 'भार्गवे रोहिणी ज्येष्ठा द्वितीया सप्तमी पुनः । पुष्यो मघा तथाश्लेषा सर्वकार्येषु वर्जिता ।' इति । द्वितीयायां वैवाहिकं कर्म भूषणकर्म रथादीनां मार्गगमनं व्रतारम्भं पौष्टिकं कर्म कुर्वीत । तदुक्तं भास्करेण—'व्रतपौष्टिके द्वितीयाद्वादश्योः सप्तमीषु कुर्वीत । पत्न्युद्वहनगृहाशयनशकटयानाश्वकर्माणि ।' इति । द्वितीयायां शूद्रविट्क्षात्रियैः मलापहस्नानं कार्यम् । तदुक्तं भास्करेण—'त्रयोदश्यां द्वितीयायां सप्तम्यां च विशेषतः । शूद्रविट्क्षत्रियाः स्नानं नाचरेयुः कथंचन' इति । 'स्नातुस्तनूजान्दशमी त्रयोदश्यर्थं द्वितीया द्वितयं निहन्ति । मलापहस्नाननिषेध एव न नित्यनैमित्तिककाम्यबाधः।' इति । अत्रोत्तरस्यां दिशि यात्रा न कर्तव्या।धनुर्मीनस्थे रवौ द्वितीया दग्धा भवति ।

श्रीमत्पण्डितदेवशर्मतनयः श्रीराघवांघ्रिद्वय-
ध्यानावाप्तसमस्तकामनिवहः सम्राट्सरत्नाकरः ।
तुष्ट्यै श्रीजयसिंहवर्मनृपतेः कल्पद्रुमे कामदं
गुच्छं धातृतिथेश्चतुर्थमकरोन्निर्णायकं सद्गुणम् ॥ १ ॥

इति देवभट्टात्मजपौण्डरीकयाजिरत्नाकरविरचिते जयसिंहकल्पद्रुमे द्वितीयाप्रकरणं समाप्तम् ॥

---

## अथ तृतीयातिथिव्रतनिर्णयः ।

तत्रादौ शुक्लकृष्णभेदेन तृतीयाध्यानम् । 'तृतीया वृषगा गौरी शूलपात्रधरा मता । तृतीया तार्क्ष्यगा नीला शंखपात्रधरा द्विदोः ।' इति । रम्भाव्यतिरिक्ता तृतीया चतुर्थीयुतैवोपवासादिषु ग्राह्या । 'एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी । अमावास्या तृतीया च ता उपोष्याः परान्विताः ।'इति विष्णुधर्मोत्तरव-

चनात्।युग्मवाक्यं रम्भाव्रतविषयम्। 'रम्भाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तम।अन्येषु सर्वकार्येषु गणयुक्ता प्रशस्यते ।' इति ब्रह्मवैवर्तात्।गणयुक्ता चतुर्थीयुक्ता । आपस्तम्बोऽपि-'चतुर्थीसंयुता या च सा तृतीया फलप्रदा।अवैधव्यकरी स्त्रीणां पुत्रसौभाग्यदायिनी।' इति।द्वितीयावेधनिषेधो ब्रह्मवैवर्ते-'द्वितीयाशेषसंयुक्तां या करोति विमोहिता।सा वैधव्यमवाप्नोति प्रवदन्ति मनीषिणः।'दीपिकायामपि—'रम्भां विहायोत्तरतस्तृतीयाम्' इत्यादि।अयं च द्वितीयावेधः स्वल्पोऽपि गौरीव्रतेषु त्याज्यो न मुहूर्तत्रयपरिमित एव । अत एव मदनरत्ने स्कन्दपुराणे-'कलाकाष्ठापि वा चैव द्वितीया संप्रदृश्यते।सा तृतीया न कर्तव्या कर्तव्या गणसंयुता।' इति । तेनैतेषु गौरीव्रतेषु उत्तरदिने स्वल्पापि तृतीया ग्राह्या न त्रिमुहूर्तत्वकर्मकालव्यापित्वाद्यादरः । 'मुहूर्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परे । शुद्धाधिकायामप्येवं गणयोगप्रशंसनात् ।' इति माधववचनात् । यदा तूत्तरदिने स्वल्पापि न लभ्यते तदा द्वितीयाविद्धापि ग्राह्या । तथा च वृद्धवसिष्ठः—'एकादशी तृतीया च षष्ठी चैव त्रयोदशी । पूर्वविद्धा तु कर्तव्या यदि न स्यात्परेऽहनि ।' इति । रम्भाव्रतविषये तु पूर्वैव ग्राह्या । 'कृष्णाष्टमी बृहत्तपा सावित्री वटपैत्रिकी । अनङ्गत्रयोदशी रम्भा उपोष्याः पूर्वसंयुताः ।' इति निगमवचनात् । इति तृतीयानिर्णयः ।

अथ तृतीयाकृत्यानि । तत्र चैत्रशुक्लतृतीयायां श्रीरामचन्द्रदोलोत्सवो रामार्चनचन्द्रिकायां गारुडे—'मधौ शुक्लतृतीयायां जानकीरमणं प्रभुम् । राजोपचारैः संपूज्य मासमान्दोलयेत्कलौ । दक्षिणाभिमुखं देवं दोलमानं सुरेश्वरम् । सुपूजितं सकृद्दृष्ट्वा सर्वपापैः प्रमुच्यते । चैत्रमासि सिते पक्षे तृतीयायां रमापतिम् । दोलारूढं समभ्यर्च्य मासमान्दोलयेत्कलौ । दोलारूढं प्रपश्यन्ति ये कृष्णं मधुमाधवे । अपराधसहस्रैस्तु मुक्तास्ते नात्र संशयः । दोलारूढस्य देवस्य येऽग्रे कुर्वंति जागरम् । सर्वपुण्यफलावाप्तिर्निमिषे निमिषे भवेत् । 'नित्यं चैतत् । 'ऊर्जे व्रतं मधौ दोला' इति वचनात् । दोलानिर्माणं चैत्रमासकृत्ये बोध्यम् । इयमेव गौरीतृतीयोच्यते । तत्र मुहूर्तमात्रापि परयुता ग्राह्येत्युक्तम् । अथास्यामारभ्यं गौरीव्रतम् । 'गौरीव्रतमथो वक्ष्ये सर्वसौभाग्यवर्धनम् । चैत्रशुक्लतृतीयायां गौरीव्रतं समाचरेत् । उपोष्य तु प्रयत्नेन विधानमिदमाचरेत् । रक्ताम्बरधरो भूत्वा क्रोधलोभविवर्जितः । स्थण्डिले हस्तमात्रे तु कर्तव्यं गन्धमण्डलम् । कुङ्कुमेन्दुसुशीतेन वर्तुलं परिवर्तयेत् ।' इन्दुः कर्पूर सुशीतं चन्दनम् । 'तत्र मध्ये पूजितव्या प्रतिमा हेमसंभवा । मधुजा तदभावे तु

पुरा केनापि निर्मिता। रक्तचन्दनजा वाथ कर्तव्या सा प्रमाणतः॥ पञ्चवृत्ताऽथवा पूज्या तत्र मासं विधानतः।' पञ्चवृत्ता पञ्चपिण्डमयीत्यर्थः। रक्तपुष्पैस्तु संपूज्या जाती चम्पकसंयुतैः। पाटलाकरवीरैश्च रक्तपद्मैर्यथा तथा। पारिजैर्मल्लिकाकुब्जैस्तथा रक्तोत्पलैरलम्। स्थलपद्मैः किंशुकैश्च सुमनोत्पलकेतकैः। एवं पुष्पैस्तथाऽन्यैश्च पूजनीया प्रयत्नतः।' पारिजः पारिजातः। 'इन्दुना कुङ्कुमेनैव भूयो भूयः समालभेत्। नानाविधानि रत्नानि मुकुटाङ्गदकानि च। कुण्डलाभरणान्यत्र रशनादीनि दापयेत्।' रशना क्षुद्रघण्टिका। 'भक्ष्याणि यत्नात्क्लृप्तानि घृतखण्डयुतानि च। शीतलं च घनं दुग्धं मुग्धं च दधि पिच्छिलम्।' घनं क्वाथेन घनीकृतम्। मुग्धं मनोहरम्। पिच्छिलं चिक्कणम्। 'करम्भं नवनीतं च तथा शिखरिणी पुनः।' करंभो दधिसक्तवः। शिखरिणी रसाला मध्यदेशे प्रसिद्धा। 'पानकं चैव पानीयं सचन्द्रं दापयेत्ततः।' पानकं सशर्कराम्रफलादिरसः। सचन्द्रं सकर्पूरम्। 'रक्तवस्त्राणि देयानि संरम्भादीनि चाग्रतः। आचार्यश्चैव पूजान्ते पूजनीयः प्रयत्नतः। हेमवस्त्रान्नपानैश्च वित्तशाठ्यं विना सुत। रात्रौ जागरणं कार्यं कुमारीं भोजयेत्तथा। देवीनामानि वक्ष्यामि मासि मासि यथाक्रमम्। प्राशनं तु विशेषेण यथावदनुपूर्वशः। गौरी उमा च ललिता सुभगा भगमालिनी। मनोन्मनी भवानी च कामदा भोगवर्धिनी। अम्बिका च तथा कृष्णा रुद्राणी पूजयेत्क्रमात्। इत्येताः सितपक्षे तु कृष्णपक्षे तथा शृणु। रतिः प्रीतिर्धृतिर्बुद्धिर्मतिः पुष्टिश्च कीर्तिताः। प्रज्ञा मेधा तथा चार्या श्रीरक्ता कीर्तिरेव च। सितासिताभ्यां पक्षाभ्यां व्रतं यत्नात्समाचरेत्। अशक्तत्वादभावाच्च द्रव्याणां तु स्थितं हितम्। प्राशनं तत्र कर्तव्यं शास्त्रोक्तेनैव वर्त्मना।' तत्तन्मासोक्तद्रव्यस्यालाभे रोगादिजनकत्वेन प्राशनाशक्तौ च क्रमेण द्वादशसु मासेषु यत्स्थितं लब्धं यच्च हितं तत्प्राशनीयमित्यशक्तत्वादेरर्थः।' प्रतिमासं प्रवक्ष्यामि शुक्लपक्षे क्रमेण तु। क्षीरं दधि घृतं चैव गोमूत्रं च कुशोदकम्। बिल्वपत्रोदकं चैव तथाऽन्यच्चन्दनोदकम्। जातीपत्रोदकं चैव पद्मकेशरमेव च। नागकेसरसंज्ञं च लवङ्गं चन्द्रमेव च। शुक्लपक्षे तु कथितं चैत्रात्प्रभृति षण्मुख। प्राशनं कृष्णपक्षे तु कथ्यमानं शृणुष्व तत्। बलाङ्कोलकं चैव प्राशयेत्तु शतावरीम्। घनं लघु सुरं दारु सारिवां शंखपुष्पिकाम्। शैरीषं सुरभीयुक्तं रक्तं च मौक्तिकं तथा। तारोदकं द्वादशक प्राशने कथितं तव। इति गौरीव्रतं ख्यातं सौभाग्यस्त्रीसुपुत्रदम्। आयुरारोग्यदं स्त्रीणामिह लोके परत्र च। इदं व्रतवरं त्यक्त्वा स्त्रीषु नान्यद्व्रतं हितम्। तस्मात्सर्वप्रयत्नेन गौरीव्रतमुपाचरेत्। अञ्जनं रक्तवस्त्रं च ताम्बूलं कुङ्कुमं तथा। दर्पणं

व्यजनं छत्रमासनं यानमुत्तमम् । गृहोपकरणं सर्वं हेमजं वाऽथ ताम्रजम् । व्रतान्ते चैव दातव्यमाचार्याय प्रयत्नतः । स्त्रीणां चैव कुमारीणां वस्त्राण्याभरणानि च । दातव्यानि प्रयत्नेन यदीच्छेद्भूतिमात्मनः । इत्येतत्सरहस्यं तु गौरीव्रतमुदाहृतम् ।' इति कालोत्तरोक्तं गौरीव्रतम् । इयमेव गौरीतृतीयेत्युच्यते । इयं दोलनतृतीयेत्यप्युच्यते । तत्र पार्वतीमीश्वरं च संपूज्यान्दोलयेत् । रात्रौ जागरणं दक्षिणादानं च कुर्यात् । तदुक्तं देवीपुराणे—'तृतीयायां यजेद्देवीं शंकरेण समन्विताम् । कुङ्कुमागुरुकर्पूरमणिवस्त्रसुगन्धकैः । स्रग्गन्धधूपदीपैश्च दमनेन विशेषतः । आन्दोलयेत्ततो वत्स शिवोमातुष्टये सदा । रात्रौ जागरणं कृत्वा प्रातर्देया च दक्षिणा । हेमवस्त्रान्नपानानि ताम्बूलानि स्रजस्तथा । सौभाग्याय सदा स्त्रीभिः कार्या पुत्रसुखेप्सुभिः।' इति । शंकरोमास्वरूपं च तत्रैवोक्तम् । 'सौवर्णी तु उमा कार्या राजतः शंकरस्तथा । चतुर्भुजस्तु देवेशो द्विभुजा तु उमा भवेत्।' इति दोलनतृतीयाव्रतम् ।

अथ चैत्रभाद्रमाघशुक्लतृतीयासु भविष्योत्तरोक्तं गौरीव्रतम् । युधिष्ठिर उवाच 'चैत्रे भाद्रपदे माघे रूपसौभाग्यसौख्यदम् । तृतीयात्रयमेतन्मे कृष्ण कस्मान्न कीर्तितम् । किमहं भक्तिरहितस्त्वर्यामार्गातिगोऽथ वा । सुप्रसिद्धं जगत्येतद्गोपितं केन हेतुना।' श्रीकृष्ण उवाच । 'भवान्धर्मार्थकुशलः सर्वज्ञ इति मे मतिः । व्रतं चैतज्जगत्ख्यातं नाख्यातं तेन ते मया । यद्यस्ति श्रवणे बुद्धिः श्रूयतां पाण्डुनन्दन । कोऽन्यः श्रोता जगत्यस्मिन्भवता सदृशो मम । जया च विजया चैव उमायाःपरिचारिके । आगत्य मुनिकन्याभिः पृष्टेऽभीष्टफलेच्छया । भवत्यौ सर्वदा देव्याश्चित्तवृत्तिविदे किल । केन व्रतोपचारेण कस्मिन्नहनि पार्वती । पूजिता तोषमायाति मन्त्रैः कैश्च वरानने । तासां तद्वचनं श्रुत्वा जया प्रोवाच सादरम्।श्रूयतामभिधास्यामि सर्वकामफलप्रदम्।व्रतमुत्सवसंयुक्तं नरनारीमनोरमम् ।चैत्रे मासि तृतीयायां दन्तधावनपूर्वकम् । उपवासस्य नियमं गृह्णीयाद्भक्तिभावतः । अञ्जनं च सताम्बूलं सिन्दूरं रक्तवाससी । बिभृयात्सोपवासापि अवैधव्यकरं परम् । विधवा यतिमार्गेण कुमारी वा यदृच्छया । कुर्यादार्यार्चनविधिं श्रूयतामत्र च क्रमः । विचित्रपट्टवस्त्रैश्च कुर्यान्मण्डपिकां शुभाम्। कारयेत्कुसुमामोदवासितां धूपितां शुभाम् । प्रवालालम्बितप्रान्तामन्तर्दिव्यवितानकाम् । विन्यस्तपूर्णकलशां पीठसंन्यस्तसद्द्विजाम् । पुरतः कारयेत्कुण्डं हस्तमात्रं समेखलम् । ततः स्नात्वा शुचिर्भूत्वा परिधाय सुवाससी । देवान्पितॄन्समभ्यर्च्य ततो देवीगृहं व्रजेत् । नामाष्टकेन संपूज्य गौरीं शंकरवल्लभाम् ।' नामाष्टकेन वक्ष्यमाणेन । गोभर्तृवल्लभा-

मिति पाठे वृषभध्वजवल्लभामित्यर्थः । 'तत्कालप्रभवैः पुष्पैर्गन्धादलिकुलाकुलैः । कुङ्कुमेन समालभ्य कर्पूरागुरुचन्दनैः । एवं संपूज्य विधिवत्सुधूपेनाधिवासयेत् । पार्वती ललिता गौरी गायत्री शांकरी शिवा । उमा सती समुद्दिष्टं नामाष्टकमिदं शुभम् । लड्डुकैः खण्डवेष्टैश्च गुणकैः सिंहकेसरैः । सौहालकैश्चेक्षुरसैर्दधिभक्तैः सपूपकैः । घृतपक्वैर्बहुविधैः शुचिभिः परिकल्पितैः । दृष्टिप्राणप्रियैर्हृद्यैर्नैवेद्यैः पूजयेदुमाम्।' सिंहकेसरैः सिंहकेसरवद्वलीकृतैः । 'धान्यकं जीरकं भव्यं कुङ्कुमं लवणं गुडम् । कुसुम्भं चेक्षुकाण्डं च हरिद्रां च पुरो न्यसेत् ।' भव्यमुत्कृष्टम् । नारिकेलं सनारङ्गं बीजपूरं सदाडिमम् । कूष्माण्डं त्रपुसं वृन्तं दधित्थं पनसं तथा ।' वृन्तं वृन्तवत् नातिपक्वमित्यर्थः । त्रपुसं वालुकम् । दधित्थं कपित्थम् । 'कालोद्भवानि चान्यानि फलानि पुरतो न्यसेत् । यत्र चोलूखलशिलाशूर्पाणां ततिभिः सह । नेत्राञ्जनं शलाकां च नखसाधनकानि च । दर्पणं निर्मलं घण्टां भवान्यै विनिवेदयेत् । शंखतूर्यनिनादैश्च गीतमङ्गलनिःस्वनैः । भक्त्या शक्त्या च संपूज्य देवीं शंकरवल्लभाम् । ततोऽस्तसमये भानोः कुमार्यः करकैर्नवैः । स्नानं कुर्युर्मुदायुक्ताः सौभाग्यारोग्यवृद्धये ।' कुमार्य इति व्रतचारिणीनामुपलक्षणम् । 'यामे यामे गते स्नानं देवीपूजनमेव च । तैरेव नामभिर्होमस्तिलाज्येनप्रशस्यते । पद्मासनस्थितासाध्वी तेनैवार्द्रेणवाससा । गौरीवक्त्रेक्षणपरा तां रात्रिमतिवाहयेत् । काश्चिद्गायन्तिसंहृष्टाः काश्चिन्नृत्यान्तिहार्षिताः । कथयन्ति कथाः काश्चिद्धर्मकामार्थसंश्रयाः । गीततालानुसंवद्धमनुद्धतसमाकुलम् । नृत्यन्तिचपुरोदेव्याः काश्चिद्विलसितभ्रुवः । नृत्येन तुष्यति हरो गौरी गीतेन तुष्यति । सद्भावेनाथ वा सर्वे गृह्यन्ते त्रिदिवौकसः । सुवासिनीभ्यस्ताम्बूलं कुङ्कुमं कुसुमानि च । प्रदेयं जागरवतामन्येषामप्यवारितम् । नटैर्विटैर्भटैर्भद्रैः प्रेरणैः प्रेक्षणोत्सवैः । सखीभिः सहिता रात्रिं गीतनृत्यहसैर्नयेत् । एवं प्रभातसमये स्नात्वा संपूज्य पार्वतीम् । शक्त्या तुलां समारोहेद्वस्त्रालंकारभूषिताम् । तोलयेत्सितयात्मानं गुडेन लवणेन च । ' सितया शर्करया । 'कुङ्कुमेनाथ वा शक्त्या कर्पूरागुरुचन्दनैः । पर्वतानामपीच्छन्ति दानं केचिच्च सूरयः । कुण्डमण्डपसंभारमन्त्रैरधिवसेच्च तत् । लवणेन सहात्मानं तोलयन्त्या गुडेन वा । कयापि शक्तिरतया सौभाग्यमतुलीकृतम् ।' शक्तिरतया देवीभक्त्या । 'एवं देवीं प्रणम्यार्यां क्षमाप्य गृहमाविशेत् । आमन्त्र्य द्विजदाम्पत्यं वासोभिर्भूषणैस्तथा । संपूज्य भोजयित्वाऽथ दद्यात्तेभ्योऽथ दक्षिणाम् । यद्यदात्माभीष्टतमं शयनं यानमेव वा । वस्त्रमाभरणं गावः सर्वं तेभ्यो निवेदयेत् । हैमं पत्रं रत्नफलं

मुक्ताचूर्णावचूर्णितम् । ताम्बूलं केचिदिच्छन्ति दीयमानं सखीजने ।' पत्रस्थाने सुवर्णपत्राणि । पूगस्थाने रत्नानि । चूर्णस्थाने मुक्ताफलानि एवंविधं ताम्बूलं सखीजने देयम् । 'अन्नं च मधुरप्रायं भोजयित्वा सुवासिनीः । स्वयं भुञ्जीत सहिता ज्ञातिबन्धुजनैः स्वकैः । यच्च देव्याः पुरो दत्तं नैवेद्यादिसुशोभनम् । प्रतिगेहं नयेत्सर्वं विभज्याभ्रान्तमानसा । दत्त्वायनकाहृष्टाकृतकृत्याभवेत्ततः ।' वायनकंवाणामितिलोके प्रसिद्धम् । 'विधिर्भाद्रपदे ह्येष सौख्यसंपत्प्रदायकः । सप्तधान्यविरूढैश्च शूर्पस्थां पूजयेदुमाम् ।' पूर्णकलशस्थाने शूर्प इति शेषः । 'गोमूत्रप्राशनं यस्मात्तस्माद्गोमूत्रसंज्ञिता । माघमासे तृतीयायां विशेषः श्रूयतामयम् । पूर्वोक्तं सकलं कृत्वा प्रभाते यवसंस्तरे । स्थापयित्वा कुन्दपुष्पैः पूजयेत्ससुतामुमाम् । एतेनकारणेनोक्ता चतुर्थी कुन्दसंज्ञिता ।' पूर्वोक्तं सकलं तृतीयायां कृत्वा प्रभाते चतुर्थीदिवसे ससुतां विनायकसहितामुमां पूजयेदित्यर्थः । 'उमारूपं तु कर्तव्यं गोधासनगतं शुभम् । सौवर्णं च महाराज साक्षसूत्रकमण्डलु । विनायकश्च कर्तव्यो गजवक्त्रश्चतुर्भुजः । तृतीयात्रयमेतत्ते कथितं सर्वकामदम् । जयया मुनिकन्यानां यत्पुरा समुदाहृतम् । एवं या कापि कुरुते नारी व्रतमिदं शुभम् । सा रूपसौभाग्ययुता मृता स्वर्गे महीयते । न दुर्भगा कुले तस्याः काचिद्भवति भारत । न दुर्विनीतश्च सुतो न भृत्यो विघ्नकृद्भवेत् । न दारिद्र्यं गृहे तस्मिन्न व्याधिरुपजायते । यत्र सा रमते साध्वी धौतचामीकरप्रभा । अन्याश्च याः करिष्यन्ति ब्राह्मणानुमते व्रतम् । संपूज्य वाचकं भक्त्या भूषणाच्छादनाशनैः । तास्ताः स्युः सुखसंपन्ना अविपन्नमनोरथाः । भविष्यन्ति कुलश्रेष्ठ कुलज्येष्ठ नमोऽस्तुते । माघे महार्हमणिमण्डितपादपीठां चैत्रे विचित्रकुसुमोत्करचर्चिताङ्गीम् । शूर्पप्ररूढयवशष्पमयीं नभस्ये संपूज्य शंभुदयितां प्रभवन्ति नार्यः ।' इति भविष्योत्तरोक्तं गौरीतृतीयात्रयव्रतम् ।

अस्यामेव तृतीयायामारभ्यं मत्स्यपुराणोक्तं सौभाग्यशयनव्रतम् । मत्स्य उवाच । तथैवान्यत्प्रवक्ष्यामि सर्वकामफलप्रदम् । सौभाग्यशयनं नाम यत्पुराणविदो विदुः । पुरा दग्धेषु लोकेषु भूर्भुवः स्वर्महादिषु । सौभाग्यं सर्वलोकानामेकस्थमभवत्तदा । तच्च वैकुण्ठमासाद्य विष्णुवक्षःस्थले स्थितम् । ततः कालेन महता पुनः सर्गविधौ नृप । अहंकारावृते लोके प्रधानपुरुषान्विते । विवादे संप्रवृत्ते च कमलासनकृष्णयोः । लिङ्गाकारा समुद्भूता ज्वाला तीव्रोग्ररूपिणी । तयाभितप्तदेहस्य विष्णोर्वक्षःस्थलाश्रितम् । सौभाग्यं तद्द्रवीभूतं न्यपतत्तस्य वक्षसः । रसरूपेण

तद्यावत्प्राप्नोति वसुधातलम् । उत्क्षिप्तमन्तरिक्षस्थं ब्रह्मपुत्रेण धीमता । दक्षेण पीत-मात्रं तु रूपलावण्यकारकम् । बलं तेजो महज्जातं दक्षस्य परमेष्ठिनः । शेषं तदाऽप-तद्भूमावष्टधा तदजायत । इक्षवस्तवराजं च निष्पावाजाजिधान्यकम् । विकारवच्च गोक्षीरं कुसुम्भकुसुमं तथा । लवणं चाष्टमं तत्र सौभाग्याष्टकमुच्यते ।' स्तवराजमत्यु-त्तमाशर्करा । विकारवद्विकारसहितम् । 'पीतंयद्ब्रह्मपुत्रेणयोगज्ञानविदा तथा । दुहिताऽ-स्याभवत्तस्माद्या सतीत्यभिधीयते ।' दुहितास्येत्यदो रूपम् । 'लोकानतीत्य ललिता ललिता तेन चोच्यते । त्रैलोक्यसुन्दरी राजन्नुपयेमे पिनाकधृक् । या सौभाग्यकनि-ष्पन्ना भुक्तिमुक्तिफलप्रदा । तामाराध्य उमां भक्त्या नारी वा किं न विन्दति।' मनु-रुवाच । 'कथमाराधनं तस्या जगद्धात्र्या जनार्दन । तद्विधानं च जगतो जायते तद्वदस्व नः ।' मत्स्य उवाच । 'वसन्तमासमासाद्य तृतीयायां जनप्रियम् । शुक्ल-पक्षस्य पूर्वाह्णे तिलैः स्नानं समाचरेत् । तस्मिन्नहनि सा देवी किल विश्वात्म-ना सती । पाणिग्रहणकैर्मन्त्रैरुदूढा वरवर्णिनी । तया सहैव देवेशं तृतीयायां समर्चयेत् । फलैर्नानाविधैर्धूपैर्दीपैर्नैवेद्यसंयुतैः । प्रतिमां पञ्चगव्येन तथा गन्धो-दकेन च । स्नापयित्वार्चयेद्गौरीमिन्दुशेखरसंयुताम् ।' प्रतिमामित्येकवचनो-क्तावपि गौरीशयोः । सौवर्णमेव प्रतिमाद्वयं कर्तव्यम् । उपरिष्टात्सौवर्णप्र-तिमाद्वयं प्रतिपादयेदिति वक्ष्यमाणत्वात् ।' नमोऽस्तु पाटलायै तु पादौ देव्याःशिवस्य तु । शिवायेति च संकीर्त्य जयायै गुल्फयोर्द्वयोः । त्रिगुणायेति रुद्रस्य भवान्यै जङ्घ-योर्युगम् । शिवं रुद्रेश्वरायेति जयायै इति जानुनी । संकीर्त्य हरिकेशाय तथोरू वरदे नमः । ईशायेशं कटिं देव्यै शंकरायेति शंकरम् । कुक्षिद्वये च कोटव्यै शूलिनं शूल-पाणये । मङ्गलायै नमस्तुभ्यमुदरं चापि पूजयेत् ।सर्वात्मने नमो रुद्रमीशान्यै च कुच-द्वयम् । शिवं वेदात्मने तद्वद्रुद्राण्यै कण्ठमर्चयेत् । त्रिपुरघ्नाय विश्वेशमनन्तायै कर-द्वयम् । त्रिलोचनायेति हरं बाहुं कालानलप्रिये । सौभाग्यभवनायेति भूषणाहिं समर्च-येत् ।' भूषणाहिं शिवम् । 'स्वाहास्वधायै च मुखमीश्वरायेति शूलिनः । अशोकमधुवा-सिन्यै पूज्यावोष्ठौ च कामदौ । स्थाणवे च हरं तद्वदास्यं चन्द्रमुखप्रिये । नमोऽर्ध-नारीश हरमसिताङ्गीति नासिकाम् ।' अर्धनारीशाय नम इति हरं पूजयेत् इत्यर्थः । नमउग्राय लोकेशं ललितेति पुनर्भुवौ । शर्वाय पुरहन्तारं वासुदेव्यै तथालकम् । नमः श्रीकण्ठनाथाय शिवकेशांस्तथाऽर्चयेत् ।' तथा अलकपूजामन्त्राभ्यामुमेशयोःकेशान-र्चयेदित्यर्थः ।' भीमोग्रसौम्यरूपिण्यै शिरः सर्वात्मने नमः । शिवमभ्यर्च्य विधिव-

त्सौभाग्याष्टकमग्रतः । स्थापयेद्घृतनिष्पावकुसुम्भक्षीरजीरकान् । स्तवराजेक्षुलवणं कुस्तुम्बुरुमथाष्टमम् । दत्तं सौभाग्यकृद्यस्मात्सौभाग्याष्टकमित्यतः ।' अत्र घृतक्षीरयोरेककोटिः।विकारवत्तु गोक्षीरमिति सौभाग्याष्टके मध्ये मत्स्यपुराण एव पूर्वत्राभिधानात् । कुस्तुम्बुरुर्धान्याकम् ।' एवं निवेद्य तत्सर्वमग्रतः शिवयोः पुरा । चैत्रे शृङ्गोदकं प्राश्य स्वपेद्भूमावरिंदम । पुनः प्रभाते तु तथा कृतस्नानजपः शुचिः । संपूज्य द्विजदाम्पत्यं माल्यवस्त्रादिभूषणैः । सौभाग्याष्टकसंयुक्तं सुवर्णप्रतिमाद्वयम् । प्रीयतामत्र ललिता ब्राह्मणाय निवेदयेत् । एव संवत्सरं यावत्तृतीयायां सदा मनो । प्राशने दानमन्त्रे च ग्रवशपा यन्निबोध मे । गोशृङ्गोदकमाद्ये स्याद्वैशाखे गोमयं पुनः । ज्येष्ठे मन्दारकुसुमं बिल्वपत्रं शुचौ स्मृतम् । श्रावणे दधि संप्राश्यं नभस्ये च कुशोदकम् । क्षीरमाश्वयुजे मासि कार्तिके पृषदाज्यकम् ।' पृषदाज्यं दधिमिश्रं घृतम् ।' मार्गशीर्षे तु गोमूत्रं पौषे संप्राशयेद्घृतम् । माघे कृष्णतिलांस्तद्वत्पञ्चगव्यं च फाल्गुने । ललिता विजया भद्रा भवानी कुमुदा शिवा । वासुदेवी तथा गौरी मङ्गला कमला सती । उमा च दानकाले तु प्रीयतामिति कीर्तयेत् । मल्लिकाशोककमलकदम्बोत्पलमालती । कुब्जकं करवीरं च बाणमम्लानकुङ्कुमम् । सिन्दुवारं च सर्वेषु मासेषु क्रमशः स्मृतम् ।' बाणं नीलकुरण्टकः । अम्लानं महासहापुष्पम् । सिन्दुवारं निर्गुडीपुष्पम् । 'जपाकुसुम्भकुसुमं मालती शतपत्रिका । यथालाभं प्रशस्तानि करवीरं च सर्वदा । एवं संवत्सरं यावदुपोष्य विधिवत्ततः । स्त्री वा भक्त्या कुमारी वा शिवामभ्यर्च्य शक्तितः । व्रतान्ते शयनं दद्यात्सर्वोपस्करसंयुतम् । उमामहेश्वरं हैमं वृषभं च गवा सह । स्थापयित्वा च शयने ब्राह्मणाय निवेदयेत् ।' उपस्करमुपधानादि । गोमिथुनमपि हैममेव मुख्यस्य शयने स्थापनासंभवात् ।' अन्यान्यपि यथाशक्त्या मिथुनान्यम्बरादिभिः । धान्यालंकारगोदानैरभ्यर्च्य धनसंचयैः । वित्तशाठ्येन रहितः पूजयेद्गतविस्मयः । एवं करोति यः सम्यक्सौभाग्यशयनव्रतम् । सर्वान्कामानवाप्नोति पदमानन्त्यमश्नुते । फलस्यैकस्य च त्यागमेतत्कुर्वन्समाचरेत् । अत्र कीर्तिं समाप्नोति प्रतिमासं नराधिप । सौभाग्यारोग्यरूपायुर्वस्त्रालंकारभूषणैः । न विमुक्तो भवेद्राजन्नब्दार्बुदशतत्रयम् । यस्तु द्वादशवर्षाणि सौभाग्यशयनव्रतम् । करोति सप्त चाष्टौ वा श्रीकण्ठभवनेऽमरैः । पूज्यमानो वसेत्सम्यग्यावत्कल्पायुतत्रयम् । नारी वा कुरुते यापि कुमारी वा नरेश्वर । सापि तत्फलमाप्नोति देव्यनुग्रहलालिता । शृणुयादपि यश्चैव प्रदद्यादथवा मतिम् । सोऽपि विद्याधरो भूत्वा स्वर्गलोके चिरं वसेत् ।' इति सौभाग्यशयनव्रतम् ।

इयं च मन्वादिः। सा चापराह्णव्यापिनी ग्राह्या स्नानदानादावुत्तरा। अत्र श्राद्धमुक्तं मात्स्ये—'कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु। हायनानां द्विसाहस्रं पितॄणां तृप्तिदं भवेत्।' इति। अधिमासे शुद्धे चापीदं कर्तव्यम्। 'यौगादिकं मासिकं च श्राद्धं चापरपाक्षिकम्। मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेऽपि च।' इति स्मृतिचन्द्रिकोक्तेः। अपरपक्षो नाम कृष्णपक्षोऽत्र गृह्यते न तु महालयः मलमासे महालयस्य निषेधात्। मदनरत्ने मरीचिः—'प्रतिमासं मृताहे च श्राद्धं यत्प्रतिवासरम्। मन्वादौ च युगादौ च तन्मासोरुभयोरपि।' इति। प्रतिवत्सरं क्रियमाणं कल्पादिश्राद्धमिति तत्रैव व्याख्यातम्। अत्र पिण्डदानं नास्ति। तथा च कालादर्शे—'विषुवायनसंक्रान्तिमन्वादिषु युगादिषु। विहाय पिण्डनिर्वापं सर्वं श्राद्धं समाचरेत्।' इति। मन्वादिश्राद्धं च नित्यम्। एतदकरणे प्रायश्चित्तविधानात्। यथा ऋग्विधाने—'त्वं भुवः प्रतिमन्त्रं च शतवारं जले जपेत्। मन्वादयो यदा न्यूनाः कुरुते नैव वा यदि।' मन्त्रस्तु—'त्वं भुवः प्रतिमानं पृथिव्या ऋष्ववीरस्य बृहतः पतिर्भूः विश्वमाप्रा अन्तरिक्षं महित्वा सत्यमद्धा न किरन्यस्तावान्।' एवं षण्णवतिश्राद्धान्यपि नित्यानि तेषामयं संग्रहः। 'अमामनुयुगक्रान्तिधृतिपातमहालयाः। अन्वष्टक्यं च पूर्वेद्युः षण्णवत्योऽष्टकास्तथा।' इति। अथ मन्वादिसंख्या। तदुक्तं निर्णयामृते मत्स्यपुराणे—'अश्वयुक्छुक्लनवमी द्वादशी कार्तिके सिता। तृतीया चैत्रमासस्य तथा भाद्रपदस्य च। श्रावणे चाष्टमी कृष्णा पौषे चैकादशी तथा।' तथा शुक्लेत्यर्थः। 'तथाषाढस्य दशमी माघमासस्य सप्तमी। श्रावणे चाप्यमावास्या ज्येष्ठे पञ्चदशी तथा। आषाढी कार्तिकी माघी चैत्री चैव विशेषतः। एता मन्वादयः प्रोक्ता मुनिभिः पूर्वदर्शिभिः।' हेमाद्रौ मदनरत्ने स्मृत्यर्थसारे चैवम्। 'अश्वयुक्छुक्लनवमी द्वादशी कार्तिके सिता। तृतीया चैत्रमासस्य तथा भाद्रपदस्य च। फाल्गुनस्य त्वमावास्या पौषस्यैकादशी सिता। श्रावणस्याष्टमी कृष्णा तथाषाढस्य पूर्णिमा। आषाढे शुक्लदशमी तथा माघस्य सप्तमी। कार्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी तथा। मन्वन्तरादयस्त्वेता दत्तस्याक्षयकारकाः।' इति। दीपिकायामपि—'तिथ्यग्नी न तिथिस्तिथ्यंशे कृष्णेभोनलोग्रहः। तिथ्यर्कौ न शिवोऽश्वोमातिथी मन्वादयो मधोः।' इति। तिथिः पूर्णिमा अग्निस्तृतीया। नेति वैशाखे नास्तीत्यर्थः। आशा दशमी कृष्णेभः कृष्णाष्टमी। अनलस्तृतीया। ग्रहो नवमी। अर्को द्वादशी। शिव एकादशी। अश्वः सप्तमी। मधोश्चैत्रादारभ्यैता मन्वादय इत्यर्थः। अत्र च विशेषो

युगादिनिर्णये वक्ष्यते । चैत्रशुक्लतृतीयायां मत्स्यजयन्ती । चैत्रशुक्लपञ्चमीत्यन्ये । आषाढशुक्लैकादशीत्यपरे । अत्रैव प्रसङ्गाद्दशावतारजयन्त्य उच्यन्ते। पुराणसमुच्चये–'मत्स्योऽभूद्धुतभुग्दिने मधुसिते कूर्मो विधौ माधवे वाराहो गिरिजासुते नभसि यद्भूते सिते माधवे। सिंहो भाद्रपदे सिते हरितिथौ श्रीवामनो माधवे रामो गौरितिथावतः परम-भूद्रामो नवम्यां मधोः । कृष्णोऽष्टम्यां नभसि सितपरे चाश्विने यद्दशम्यां बुद्धं कल्की नभसि समभूच्छुक्लषष्ठ्यां क्रमेण । अह्नोर्मध्ये वामनो रामरामौ मत्स्यः क्रोडश्चापराह्णे विभागे । कूर्मः सिंहो बौद्धकल्की च सायं कृष्णो रात्रौ कालसाम्ये च पूर्वा।' इति । केचित्तु स्फुटाञ्श्लोकान्पठन्ति। यथा। 'चैत्रे तु शुक्लपञ्चम्यां भगवान्मीनरूपधृक्। ज्येष्ठे तु शुक्लद्वादश्यां कूर्मरूपधरो हरिः । चैत्रे कृष्णनवम्यां तु हरिर्वाराहरूपधृक् । नरसिंहश्चतुर्दश्यां वैशाखे शुक्लपक्षके । मासि भाद्रपदे शुक्लद्वादश्यां वामनो हरिः । राधशुक्लतृतीयायां रामो भार्गवरूपधृक् । चैत्रशुक्लनवम्यां तु रामो दशरथात्मजः । नभस्ये तु द्वितीयायां बलभद्रोऽभवद्धरिः । श्रावणे बहुलेऽष्टम्यां कृष्णोऽभूल्लोकरक्षकः । ज्येष्ठे शुक्लद्वितीयायां बौद्धः कल्की भविष्यति।' इति । अन्ये तु वाराहपुराणस्थत्वेन वाक्यानि पठन्ति–'आषाढे शुक्लपक्षे तु एकादश्यां महातिथौ। जयन्ती मत्स्यनाम्नीति तस्यां कार्यमुपोषणम् । नभोमासि तृतीयायां हरिः कमठरूपधृक् । नभस्यशुक्लपञ्चम्यां वराहस्य जयन्तिका । वैशाखे तु चतुर्दश्यां नृसिंहः समपद्यत । वैशाखे शुक्लपक्षे तु तृतीयायां भृगूद्वहः । मासि भाद्रपदे शुक्लैकादश्यां वामनो हरिः। चैत्रे नवम्यां रामोभूत्कौशल्यायाः परःपुमान्। श्रावणे बहुलेऽष्टम्यां वासुदेवो जनार्दनः । पौषशुक्ले तु सप्तम्यां कुर्याद्बौद्धस्य पूजनम् । माघशुक्लतृतीयायां कल्किनः पूजनं हरेः । प्रातः प्रातस्तु मध्याह्ने सायं सायं तथा निशि । मध्याह्ने मध्यरात्रे च सायं प्रातरनुक्रमात्।' इति । अत्र समूलत्वनिर्णये सति कल्पभेदेन व्यवस्था द्रष्टव्या । एताश्च तदुपासकानां नित्याः अन्येषां काम्याः । अत्र विशेषस्तत्तत्प्रकरणे ज्ञेयः । वैशाखशुक्लतृतीया अक्षयतृतीया । इयं गौरीव्रते कलाकाष्ठादियुक्ताऽप्युत्तरा कार्या । तदुक्तं निर्णयामृते नारदीये–'वैशाखे शुक्लपक्षे तु तृतीया रोहिणीयुता । दुर्लभा बुधवारेण सोमेनापि युता तथा । रोहिणी बुधयुक्तापि पूर्वविद्धा विवर्जिता । भक्त्या कृतापि मान्धातः पुण्यं हन्ति पुरा कृतम् । गौरी विनायकोपेता रोहिणी बुधसंयुता । विनापि रोहिणीयोगात्पुण्यकोटिप्रदा सदा ।' इति । गौरीतृतीया विनायकचतुर्थी । यदा तु चतुर्थीयुता न लभ्यते तदा गौरीव्रते त्रिमुहूर्तलाभे द्वितीयाविद्धापि ग्राह्या ।

एकादशी तृतीयेति वृद्धवसिष्ठवचनात् । इयं च त्रेतायुगादिः । तदुक्तं रत्नमाला-यामू--'माघे पञ्चदशी कृष्णा नभस्ये च त्रयोदशी । तृतीया माधवे शुक्ला नवम्यूर्जे युगादयः ।' भविष्योत्तरेऽपि--'नवम्यां शुक्लपक्षस्य कार्तिके निरगात्कृतम् । त्रेता सिततृतीयायां वैशाखे समपद्यत । दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगम् । कलिः कृष्णत्रयोदश्यां नभस्ये मासि निर्गतः।' इति । हेमाद्रौ--'एताश्चतस्रो राजेन्द्र युगानां प्रभवाः शुभाः । युगादयस्तु कथितास्तेनैताः पूर्वसूरिभिः । उपवासस्तपो दानं श्राद्धं होमो जपस्तथा । यदत्र क्रियते किंचित्सर्वं कोटिगुणं भवेत् ।' इति । मनुः--'सहस्रगुणितं दानं भवेद्दत्तं युगादिषु । कर्मश्राद्धादिकं चैव यथा मन्वन्तरादिषु ।' इति । हेमाद्रौ नागरखण्डे'अधुना शृणु राजेन्द्र युगाद्याः पितृवल्लभाः । यासां संकीर्तने नापि क्षीयते पापसंचयः । नवमी कार्तिके शुक्ला तृतीया माधवे सिता । अमावा-स्या च तपसो नभस्ये च त्रयोदशी । त्रेताकृतकलीनां तु द्वापरस्योदयः क्रमात् । स्नाने दाने जपे होमे विशेषात्पितृतर्पणे । कृतस्याक्षयकारिण्यः सुकृतस्य महाफलाः ।' यत्तु ब्रह्मपुराणे--'वैशाखे मासि शुक्लायां तृतीयायां जनार्दनः । ब्रह्मलोकात्त्रिपथगां पृथि-व्यामवतारयत् । यवानुत्पादयामास युगं चारब्धवान्कृतम् ।' इति । यदपि हेमाद्रौ 'माघस्य पौर्णमास्यां तु घोरं कलियुगं तथा ।' इति । यच्च बृहन्नारदीये--'कार्तिके नवमी शुद्धे माघमासे च पूर्णिमा ।' इति । तदपि कल्पभेदेन व्यवस्थाप्यम् । अत्र श्राद्धं नित्यं काम्यं च । युगादीन्प्रक्रम्य तद्विधानासंभवे 'पानीय-मप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः । श्राद्धं कृतं तेन समाः सहस्रं रह-स्यमेतत्पितरो वदन्ति ।' इति विष्णुपुराणेऽनुकल्पविधानात् । 'युगादयः स्मृता ह्येताः पितॄणां तृप्तिहेतवः ।' इति मत्स्यपुराणाच्च । भारतेऽपि—'या मन्वाद्या युगाद्याश्च तिथ-यस्तासु मानवः । स्नात्वा हुत्वा च दत्वा च जप्त्वाऽनन्तफलं लभेत् ।' इति । भविष्ये—'यत्त्वेषा कुरुशार्दूल वैशाखे तु महातिथिः । तृतीया साऽक्षया लोके गीर्वाणैरभिनन्दिता । यत्किंचिद्दीयते दानं स्वल्पं वा यदि वा बहु । तत्सर्वमक्षयं यस्मात्तेनेयमक्षया स्मृता ।' इति । इयं च विष्णुपूजाहोमदानादिषु पूर्वाह्णव्यापिनी ग्राह्येति निर्णयामृते । 'द्वे शुक्ले द्वे तथा कृष्णे युगाद्याः कवयो विदुः । शुक्ले पूर्वाह्णिके कार्ये कृष्णे चैवापराह्णिके ।' इति भविष्योत्तरवचनात् । श्राद्धेऽपि पूर्वाह्णव्यापिनी ग्राह्येति स्मृत्यर्थसारगोविन्दार्णवादय इति भट्टोजिदीक्षिताः । एताश्च मन्वादियुगादयो हेमाद्रिमते शुक्लपक्षस्थाः पौर्वाह्णिक्यः कृष्णपक्षस्था आपराह्णिक्यो ग्राह्याः । 'पूर्वाह्णे तु सदा कार्याः शुक्ले मनुयुगादयः ।

दैवे कर्मणि पित्र्ये च कृष्णे चैवापराह्निकाः।' इति पाद्मोक्तेः । 'द्वे शुक्ले द्वे तथा कृष्णे' इति नारदीयवचनाच्च । दीपिकायामपि—' अथो युगादिमन्वादिकर्मतिथयः पूर्वाह्निकाः । स्युः सिते विज्ञेया अपराह्निकाश्च बहुले' इति । स्मृत्यर्थसारेऽपि—युगादिमन्वादिश्राद्धेषु शुक्लपक्ष उदयव्यापिनी तिथिर्ग्राह्या कृष्णपक्षे पूर्वाह्णव्यापिनीति । निर्णयसिन्धावप्येवमेव । दिवोदासीये गोभिलः—' वैशाखस्य तृतीयां यः पूर्वविद्धां करोति वै । हव्यं देवा न गृह्णन्ति कव्यं च पितरस्तथा।' इति । तेनेयं पूर्वाह्णव्यापिनी ग्राह्या । दिनद्वये तत्त्वे परैवेति हेमाद्र्यादिमतनिगर्वः । उपवासे तु पूर्वा । अनन्तभट्टोऽपि—'सवैधृतिर्व्यतीपातो युगमन्वादयस्तथा । संमुखा उपवासे स्युर्दानादावन्तिमाः स्मृताः ।' इत्याह । दानादाविति श्राद्धसंग्रहः।अत्र शुक्लपक्षयुगादिश्राद्धं पूर्वाह्णे कार्यमिति शूलपाणिः ।' शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः । कृष्णपक्षापराह्णे हि रोहिणीं तु न लङ्घयेत्।' इति मार्कण्डेयवचनात् रोहिणो नवमो मुहूर्तः । यत्तु कैश्चिदुक्तम्—'दानं तु शुक्ले पूर्वाह्णे कृष्णेऽपराह्णे शुक्ले पूर्वाह्णिके ग्राह्ये कृष्णे चैवापराह्णिके ।' इत्युक्तत्वादिति । तन्न । हेमाद्र्यादिभिर्दानस्य प्रातरेव कर्तव्यत्वाभिधानात् । कृत्यरत्नावल्यां तु—इयं श्राद्धेऽपराह्णव्यापिनी ग्राह्या तस्यापराह्णकालत्वात् कालव्यापिशास्त्रस्य सर्वापेक्षया प्रबलत्वात् । अत एवामावास्याश्राद्धनिर्णयमुक्त्वोक्तं कालादर्शे—'एवंमन्वन्तरादीनांयुगादीनां विनिर्णयः । महालयस्यपक्षस्यअष्टकानामपि स्मृतः ।'इति। यत्तु द्वे शुक्लेत्यादिवचनं तदुपक्रमकालपरम् । शुक्लपक्षस्य पूर्वाह्णे इति वचनात् । यद्वा यदा शुक्लपक्षगता युगादितिथिः पूर्वदिने कुतुपोत्तरार्धमेवारभ्य प्रवृत्तोत्तरदिने वृद्ध्याऽपराह्णेऽपि किंचिद्वर्तते तदा संपूर्णापराह्णव्यापित्वेन पूर्वदिनगताया एव ग्राह्यत्वे प्राप्ते तदपवादत्वेन कुतुपपूर्वार्धरूपपूर्वाह्णव्यापिनी अल्पापराह्णस्पर्शिन्यप्युत्तरा ग्राह्येति विधीयते।न च तदा अपराह्णशास्त्रस्याप्यत्यन्तबाधः अपराह्णेऽपि तस्याः किंचिद्विद्यमानत्वात् । हेमाद्रेस्तु मन्वादिष्वप्ययं निर्णयः संमतः । या मन्वाद्येति वचनात् । स्नानादौ तूत्तरेति।केचित्तु—वैशाखस्य तृतीयायामिति वचनात्, पूर्वाह्णे तु सदा कार्या इति नारदवचनाच्च श्राद्धेऽपि पूर्वाह्णव्यापिन्युत्तराकार्येति वदन्ति तत्कालादर्शविरुद्धमयुक्तं च । 'अपराह्णः पितॄणां तु अपराह्णे तु पैतृकम् । अपराह्णे पितृक्रिया' इत्यादिवचनैरपराह्णकालाभिधानात्कर्मणो यस्येति वचनात् श्राद्धेऽपराह्णव्यापिन्या एव ग्राह्यत्वात् । गोभिलवचनं तु तर्पणविषयम् । नारदवचनं तु द्वे शुक्ले इति वचनादेव व्याख्येयमिति रामभट्टाः । निर्णयामृतेऽपि—अतश्च युगादिप्रयुक्तया विहितश्राद्धविषयेऽ

मावास्यावदपराह्णिका ग्राह्येति । एतच्च श्राद्धमपिण्डं कार्यम् । तथा च हेमाद्रौ मत्स्यपुराणे—'वैशाखस्य तृतीयायां नवम्यां कार्तिकस्य च । श्राद्धं कार्यं च शुक्लाया संक्रान्तिविधिना नरैः ।' इति । अत्रैव पुलस्त्योऽपि—'अयनद्वितये श्राद्धं विषुवद्द्वितये तथा । युगादिषु च सर्वासु पिण्डनिर्वपणादृते।' इति । इदं च युगादिश्राद्धं युगादितिथिमध्य एव कर्तव्यम् । 'मन्वादौ च युगादौ च ग्रहणे चन्द्रसूर्ययोः । व्यतीपाते वैधृतौ च तत्कालव्यापिनी क्रिया।' इति स्कान्दवचनात् । अत्र विशेषो हेमाद्रौ भविष्ये—'वैशाखे शुक्लपक्षे तु तृतीयायां तथैव च । गङ्गातोये नरः स्नात्वा मुच्यते सर्वकिल्बिषैः ।' तथा 'योऽस्यां ददाति करकान्वारिवाजसमन्वितान् । स याति पुरुषो वीर लोकान्वै हेममालिनः ।' तथा 'तस्यां कार्यो यवैर्होमो यवैर्विष्णुं समर्चयेत् । यवान्दद्याद्द्विजातिभ्यः प्रयतः प्राशयेद्यवान् । स्नानं दानं तथा श्राद्धं जपहोमादिकं च यत् । श्रद्धया क्रियते तत्र तदानन्त्याय कल्प्यते ।' इति । दानविशेषस्तत्रैव भविष्ये इमां प्रक्रम्य 'उदकुम्भान्सकरकान्सान्नान्सर्वरसैः सह । यवगोधूमचणकान्सक्तून्दध्योदनं तथा । ग्रैष्मिकं सर्वमेवात्र सस्यं दाने प्रशस्यते ।' इति । अपरार्के यमः—'कृतोपवासाः सलिलं ये युगादिदिनेषु च । दास्यन्त्यन्नादिसहितं तेषां लोका महोदयाः ।' इति । देवीपुराणेऽपि—गौरीपूजां प्रक्रम्य 'तृतीयायां तु वैशाखे रोहिण्यर्क्षे प्रपूज्य च[2] । उदकुम्भप्रदानेन शिवलोके महीयते ।' मन्त्रस्तु 'एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः । अस्य प्रदानात्सकला मम सन्तु मनोरथाः । गन्धोदकतिलैर्मिश्रं सान्नं कुम्भं फलान्वितम् । विष्णवे संप्रदास्यामि अक्षय्यमुपतिष्ठतु।' इति । पित्रुद्देश्यकदाने तु—'एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः । तस्य प्रदानात्तृप्यन्तु पितरोऽपि पितामहाः । गन्धोदकतिलैर्मिश्रं सान्नं कुम्भं फलान्वितम् । पितृभ्यः संप्रदास्यामि अक्षय्यमुपतिष्ठतु।' इति विष्णुधर्मोत्तरे—'यः पश्यति तृतीयायां कृष्णं चन्दनभूषितम् । वैशाखस्य सिते पक्षे स यात्यच्युतमन्दिरम् ।' इति । अत्र रात्रिभोजने प्रायश्चित्तमुक्तमृग्विधाने—'रात्रौ भुङ्क्ते वत्सरे तु मन्वादिषु युगादिषु । अभिस्ववृष्टिं मन्त्रं च जपेद्दशनपातकम् ।' इति । मंत्रस्तु—'अभिस्ववृष्टिं मदे अस्य युध्यतो रघ्वीरिव प्रवणे सस्तुरूपतयः । इन्द्रो यद्वज्री धृषमाणो अन्धसाभिनद्वलस्य परिधीरिव त्रितः ।' वैशाखे मलमासे सति तत्रैव युगादिः कार्या । तथा च हेमाद्रौ ऋष्यशृङ्गः । 'दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु । उपाकर्मणि चोत्सर्गे ह्येतदिष्टं वृषादितः ' इति ।'अब्दो-

१—वाजोऽन्नम् । २—देवीमिति शेषः ।

दकुम्भमन्वादिमहालययुगादिषु।' इति कालादर्शे मलमासकर्तव्येषु परिगणनाच्च। अत्र महालयशब्देन मघात्रयोदश्युच्यते इति माधवः। स्मृतिचन्द्रिकायां तु यौगादिकमिति वचनेन मासद्वयेऽपि कर्तव्यमित्युक्तम्। अत्र श्राद्धाकरण प्रायश्चित्तमुक्तमृग्विधाने—'न यस्य द्यावामन्त्रं च शतवारं तदा जपेत्। युगादयो यदा न्यूनाः कुरुते नैव चापि यः।' इति। मन्त्रस्तु—'न यस्य पातकं द्यावापृथिवीनधन्वनाऽन्तरिक्षं नाद्रयः सोमो अक्षाः। यदस्य मन्युरधिनियमानः शृणाति वीलुरुजति स्थिराणि।' अथ प्रसङ्गाद्युगान्ता उच्यंते—हेमाद्रौ पद्मपुराणे—'सूर्यस्य सिंहसंक्रान्त्यामन्तः कृतयुगस्य तु। अथ वृश्चिकसंक्रान्त्यामन्तस्त्रेतायुगस्य तु। ज्ञेयस्तु वृषसंक्रान्त्यां द्वापरान्तस्तु संख्यया। तथा तु कुम्भसंक्रान्त्यामन्तः कलियुगस्य तु।' आदित्यपुराणे—'दिनर्क्षं रेवती यत्र गमनं चैव राशिषु। युगान्तदिवसं विद्धि तत्र दानमनन्तकम्। ग्रहणे विषुवे चैव सौम्ये वा मिहिरो यदि। सप्तमी शुक्लकृष्णा वा युगान्तदिवसं विदुः।' सौम्ये उदगयने। ब्रह्मपुराणे—'युगाद्येषु युगान्तेषु श्राद्धमक्षय्यमुच्यते। तत्रैव 'युगादिषु युगान्तेषु स्नानदानजपादिकम्। यत्किंचित्क्रियते तस्य युगान्तफलसाक्षिता।' अत्र समुद्रस्नानं प्रशस्तम्। तदुक्तं पृथ्वीचन्द्रोदये सौरपुराणे—'युगादौ तु नरः स्नात्वा विधिवल्लवणोदधौ। गोसहस्रप्रदानस्य कुरुक्षेत्रे फलं हि यत्। तत्फलं लभते मर्त्यो भूमिदानस्य च ध्रुवम्।' इति। निर्णयामृते-अत्रैव लक्ष्मीसहितविष्णुपूजा भविष्योत्तरे विहिता 'वैशाखस्य तृतीयायां श्रीसमेतं जगद्गुरुम्। नारायणं पूजयेथाः पुष्पधूपविलेपनैः। वस्त्रालंकारसंनादैर्नैवेद्यैर्विविधैस्तथा। ततस्तस्याग्रतो धेनुर्लवणस्याढकेन तु। कार्या कुरुकुलश्रेष्ठ तुर्यभागेन वत्सकः। अविचर्मोपरि स्थाप्य कल्पयित्वा विधानतः। शास्त्रोक्तक्रमयोगेन ब्राह्मणायोपपादयेत्। श्रीधरः श्रीरितः श्रीमाञ्छ्रीशः संप्रीयतामिति। अनेन विधिना दत्त्वा धेनुं विप्राय भावतः। गोसहस्रप्रदानस्य पुण्यमाप्नोत्यसंशयम्।' इति। अथ लक्ष्मीनारायणध्यानं विश्वकर्मशास्त्रे-'लक्ष्मीनारायणौ कार्यौ संयुक्तौ दिव्यरूपिणौ। दक्षिणस्था विभोर्मूर्तिर्लक्ष्मीमूर्तिस्तु वामगा। दक्षिणः कण्ठलग्नोऽस्य वामो हस्तः सरोज धृक्। विभोर्वामः करो लक्ष्म्याः कुक्षिभागस्थितः सदा। सर्वावयवसंपूर्णा सर्वालंकारशोभिता। सुष्ठुनेत्रकपोलास्या रूपयौवनसंयुता। सिद्धिः कार्या समीपस्था चामरग्राहिणी शुभा। कर्तव्यं वाहनं सव्ये वाधोभागगतं सदा। शंखचक्रधरौ तस्य द्वौ कार्यौ पुरुषौ पुरः। वामनौ हारकेयूरकोटीरमणिभूषणौ। उपवासकौ समी-

पस्थौ प्रभोर्ब्रह्मशिवात्मकौ । रसनां योगपट्टं च शिरस्यञ्जलिमास्थितौ ।' इति ध्यात्वा पूजयेत् । पुराणान्तरे तु 'गां लवणमयीं कृत्वा षोडशप्रस्थसंयुताम् । चतुर्भिर्वत्सो राजेन्द्र' इत्यादिना लवणपरिमाणान्तरमुक्तम् । अत्र त्रिलोचनयात्रोक्ता काशीखण्डे—'राधशुक्लतृतीयायां स्नात्वा पैलिप्पिले ह्रदे । सन्तर्प्य पितृन्देवांस्त्रिलोचनमथार्चयेत् ।' इति ।

इयमेव तृतीया परशुरामजयन्ती । सा प्रदोषव्यापिनी ग्राह्या । तदुक्तं भार्गवार्चनचन्द्रिकायां स्कान्दभविष्ययोः—'वैशाखस्य सिते पक्षे तृतीयायां पुनर्वसौ । निशायाः प्रथमे यामे रामाख्यः समये हरिः । स्वोच्चगैः षड्ग्रहैर्युक्ते मिथुने राहुसंस्थिते । रेणुकायास्तु यो गर्भादवतीर्णो हरिः स्वयम् ।' इति । दिनद्वये तद्व्याप्तावंशतः समव्याप्तौ च परा । अन्यथा पूर्वैव । तदुक्तं भविष्ये—'शुक्ला तृतीया वैशाखे शुद्धोपोष्या दिनद्वये । निशायाः पूर्वयामे चेदुत्तराऽन्यत्र पूर्विका ।' इति । 'अह्नोर्मध्ये वामनो रामरामौ' इत्यस्य समूलत्वे तु तत्कालव्यापिनी ग्राह्या । कल्पभेदेन व्यवस्थेति पूर्वमुक्तमेव । अथ परशुरामध्यानं वीरमित्रोदये—'कार्यस्तु भगवान्रामो जटामण्डलमण्डितः । हस्तेऽस्य परशुः कार्यः कृष्णाजिनधरस्य तु ।' हेमाद्रौ—'क्षत्रान्तकरणं घोरमुद्वहन्परशुं करे । जामदग्न्यः प्रकर्तव्यो रामो रोषारुणेक्षणः ।' अध्यात्मरामायणे—'नीलमेघनिभः प्रांशुर्जटामण्डलमण्डितः । धनुःपरशुपाणिश्च साक्षात्काल इवान्तकः । चूडाचुम्बितकङ्कपत्रमसितं तूणीद्वयं पृष्ठतो भस्मस्निग्धपवित्रलाञ्छिततनुर्धत्ते त्वचं रौरवीम् । मौर्व्या मेखलया च यन्त्रितमधोवासश्च माञ्जिष्ठकं पाणौ कार्मुकमक्ष सूत्रवलयं दण्डोऽपरः पैप्पलः ।' इति । एवं ध्यात्वा पूजनं कुर्यात् । इति परशुरामजयन्तीविधानम् ।

अथाक्षयतृतीयाव्रतं भविष्योत्तरे युधिष्ठिरं प्रति कृष्णवाक्यम् । 'बहुनाऽत्र किमुक्तेन किं बह्वक्षरमालया । वैशाखस्य सितामेकां तृतीयामक्षयां शृणु । तस्यां स्नानं जपो होमः स्वाध्यायः पितृतर्पणम् । दानं च क्रियते किंचित्तत्सर्वं स्यादिहाक्षयम् । आदिः कृतयुगस्येयं युगादिस्तेन कथ्यते । सर्वपापप्रशमनी सर्वसौख्यप्रदायिनी । पुरा महोदये पार्थ वणिगासीत्सुनिर्धनः । प्रियंवदः सत्यवृत्तिर्देवब्राह्मणपूजकः । पुण्याख्यानैकवित्तोऽभूत्कुटुम्बव्याकुलोऽपि सन् । तेनश्रुतावाच्यमाना तृतीया रोहिणीयुता । यदा स्याद्बुधसंयुक्ता तदा सा वै महाफला । तस्यां यद्दीयते किंचिदक्षयं स्यात्तदेव हि । इति श्रुत्वा स गङ्गायां संतर्प्य पितृदेवताः । गृहमागत्य करकान्सान्नानुदकसंयुतान् ।

अन्नपूर्णान्बृहत्कुम्भाञ्जलेन विमलेन च । यवगोधूमचणकान्सक्तुदध्योदनं तथा । इक्षुक्षीरविकारांश्च हिरण्यं च स्वशक्तितः । शुचिः शुद्धेन मनसा ब्राह्मणेभ्यो ददौ वणिक् । भार्ययावार्यमाणोऽपिकुटुम्बासक्तचित्तया । तावत्तस्थौ स्थिरे सत्त्वे मत्वा सर्वविनश्वरम् । धर्मासक्तमतिः पार्थ कालेन बहुना ततः । जगाम पञ्चत्वमसौ वासुदेवमनुस्मरन् । तत सः क्षत्रियो जातः कुशावत्यां युधिष्ठिर । बभूव चाक्षया तस्य समृद्धिर्धर्मसंयुता । इयाज स महायज्ञैः समाप्तवरदक्षिणैः । स ददौ गोहिरण्यादिदानान्यन्यान्यहर्निशम् । बुभुजे कामतो भोगान्दीनानार्थांस्तर्पयञ्छनैः । तथाप्यक्षय्यमेवास्य क्षयं याति न तद्धनम् । श्रद्धापूर्वं तृतीयायां यद्दत्तं विभवं विना । इत्येतत्ते समाख्यातं श्रूयतामस्य यो विधिः । तृतीयां तां समासाद्य स्नात्वा संतर्प्य देवताः । एकभक्तं तदा कुर्याद्वासुदेवं प्रपूजयेत् । उत्कुम्भांश्च सकरकान्सान्नान्सर्वरसैः सह । ग्रैष्मिकं सर्वमेवात्र सस्यं दाने प्रशस्यते । छत्रोपानत्प्रदानं च गोभूकाञ्चनवाससाम् । यद्यदिष्टतमं चान्यत्तद्देयमविशङ्कया । एतत्ते सर्वमाख्यातं किमन्यच्छ्रोतुमिच्छसि । अनाख्येयं न मे किंचिदस्ति स्वस्त्यस्तु तेऽनघ । अस्यां तिथौ क्षयमुपैति हुतं न दत्तं तेनाक्षयेति कथिता मुनिभिस्तृतीया । उद्दिश्य यत्सुरपितॄन्क्रियते मनुष्यैस्तच्चाक्षयं भवति भारत सर्वमेव ।' इति भविष्योत्तरोक्तमक्षयतृतीयाव्रतम् ।

अथास्यामेव विष्णुधर्मोत्तरोक्तमक्षयतृतीयाव्रतम् । 'वैशाखे शुक्लपक्षे तु तृतीयायामुपोषितः । अक्षयं फलमाप्नोति सर्वस्य सुकृतस्य तु । सा तथा कृत्तिकोपेता विशेषेण च पूजिता । तत्र दत्तं हुतं जप्तं सर्वमक्षयमुच्यते । अक्षया सा तिथिस्तस्मात्तस्यां सुकृतमक्षयम् । अक्षतैः पूज्यते विष्णुस्तेन साऽप्यक्षया स्मृता । अक्षतैस्तु नरः स्नातो विष्णोर्दत्वा तथाऽक्षतान् । सक्तून्सुसंस्कृतांश्चैव हुत्वा चैव तथाऽक्षतान् । विप्रेषु दत्वा तानेव तथा सक्तून्सुसंस्कृतान् । यवान्नं तु महाभाग फलमक्षयमश्नुते । एकामप्युक्तवत्कृत्वा तृतीयां भृगुनन्दन । एतामब्दतृतीयानां सर्वासां तु फलं लभेत् ।' इति विष्णुधर्मोत्तरोक्तमक्षयतृतीयाव्रतम् ।

ज्येष्ठशुक्लतृतीयायां भविष्योत्तरोक्तं रम्भाव्रतम् । तदुक्तं माधवीये भविष्ये—'भद्रे कुरुष्वयत्नेन रम्भाख्यव्रतमुत्तमम् । ज्येष्ठशुक्लतृतीयायां स्नाता नियमतत्परा ।' इति । सासर्वमतेपूर्वविद्धा ग्राह्या । 'बृहत्तपातथारम्भा तृतीया वटपैत्रिकी । कृष्णाष्टमी च भूता च कर्तव्यासंमुखीतिथिः ।' इतिस्कान्दोक्तेः । अथरम्भाव्रतकथा । युधिष्ठिरउवाच-'स्त्रीणां

संपद्यते येन मृत्युलोके गृहं शुभम् । सर्वोपस्करसंयुक्तं सुखसौभाग्यवृद्धिमत् । सपत्नीरहितं कान्तं महिमानमनुत्तमम् । एतदाचक्ष्व मे कृष्ण प्रसादात्संमुखो भव ।' श्रीकृष्ण उवाच— 'कैलासशिखरे रम्ये नानाधातुविचित्रिते । शंकरः पार्वतीं प्राह किं त्वयासीत्कृतं व्रतम् । येन सौभाग्यमत्यन्तं प्राप्तासि वरवर्णिनि ।' देव्युवाच—' पुराऽहं देव तिष्ठामि कुमारी पितुरन्तिके । तत्र पृष्टा मया नाथ जननी सुखमास्थिता । कथयस्वाम्बिके किंचिद्व्रतं सौभाग्यवर्धनम् । एवमुक्ता मया देवी जननी मामथाब्रवीत् । भद्रे कुरुष्व यत्नेन रम्भाख्यं व्रतमुत्तमम् । मनोभिलषितं कान्तं येन प्राप्नोषि शंकरम् । ज्येष्ठशुक्लतृतीयायां स्नात्वा नियमतत्परा । कुरु पार्श्वेषु पञ्चाग्नीञ्ज्वलमानोज्ज्वलाहुतीन् । गार्हपत्यं दक्षिणाग्निं सभ्यमाहवनीयकम् । पञ्चमं भास्करं तेज इत्येते पञ्च वह्नयः । एतेषां मध्यगा भूत्वा तिष्ठ त्वं पूर्वदिङ्मुखी । चतुर्भुजां ध्यानपरां पङ्कजोपरि संस्थिताम् । मृगाजिनच्छन्नकुचां जटावल्कलधारिणीम् । सर्वाभरणसंपूर्णां देवीमभिमुखीं कुरु । महाकाली महालक्ष्मीर्महामाया महानिशा । महामाया महादेवी महामहिषनाशिनी । गङ्गा च यमुना सिन्धुः शतद्रुर्नर्मदा तथा । सरस्वती वैतरणी सैव प्रोक्ता महासती । प्रणवाद्यैर्नमोन्तैश्च नामभिः पूजनं भवेत् । चतुर्थीसहितैश्चैव स्वाहान्तैर्होम इष्यते । तदाऽस्य प्रेक्षणपरा भवेत्तद्भावभाविता । होमं कुर्युर्महात्मानो ब्राह्मणाः सर्वतोदिशम् । देव्याः पूजा च कर्तव्या पुष्पधूपादिना ततः । बहुप्रकारं नैवेद्यं दातव्यं घृतपाचितम् । स्थापयेदग्रतो देव्याः सौभाग्याष्टकमेव च । कुस्तुम्बुरं जीरकं च कुसुम्भं कुङ्कुमं तथा । निष्पावाः पञ्चमाः पुत्रि लवणं शर्करा गुडः । पुष्पमण्डपिका कार्या गन्धधूपादिवासिता । ततः संपूजयेद्देवीं शक्त्या स्वर्णादिनिर्मिताम् । पद्मासनस्थां संतिष्ठेद्यावत्परिणतो रविः । ततः प्रणम्य रुद्राणीं मन्त्रमेतमुदीरयेत् । वेदेषु सर्वशास्त्रेषु दिवि भूमौ रसातले । दृष्टः श्रुतश्च बहुशो न शक्त्या रहितः शिवः । त्वं शक्तिस्त्वं स्वधा स्वाहा त्वं सावित्री सरस्वती । पतिं देहि गृहं देहि सुतान्देहि नमोऽस्तु ते । एवं क्षमाप्यतां देवीं प्रणिपत्य पुनः पुनः । देहि शक्त्या गृहं रम्यं विचित्रं बहुभूमिक । छायकह्लारकेदारप्रतोलीभिरलंकृतम् । कुड्यस्तंभगवाक्षाढ्यं मणिमण्डिततोरणम् । पद्मरागमहानीलमणिवैडूर्यशोभितम् । गृहदानं विधानेन ब्राह्मणाय यशस्विने । सपत्नीकाय संपूज्य सर्वोपस्करसंयुतम् । प्रयच्छेत्प्रणता भूत्वा मनोवाञ्छितदायकम् । सुवासिनीभ्यस्तद्देयं नैवेद्यं शूर्पसंस्थितम् । निर्वर्त्य विधिनाऽनेन ततः पश्चात्क्षमापयेत् । दाम्पत्यानि च भोज्यानि संपत्त्या मधुरै रसैः ।' देव्युवाच—'इत्युक्तया मया चीर्णं देव रम्भाव्रतं पुरा ।

व्रतान्ते देवदेवेश दत्तं गृहवरं मया। लोपामुद्रा सपतिका तस्मिन्वेश्मनि पूजिता। व्रतेन तेन देवेश भर्ता लब्धोऽसि शंकर। अर्धकाये स्थिता तेऽहं सौभाग्यबलगर्विता। एवमेतन्मयाख्यातं याश्चरिष्यन्ति योषितः। पुरुषास्त्वथ कौन्तेय ख्यातं रम्भाव्रतं भुवि। भार्यापुत्रगृहं भोगान्कुलवृद्धिमवाप्नुयुः। स्त्रीणां चातुलसौभाग्यं गार्हस्थ्यं सार्वकामिकम्। बालमध्यस्थवृद्धानांरूपलावण्यबृंहणम्। अनेनव्रतधर्मेणपरलोकेयुधिष्ठिर। कामगेनविमानेनवाञ्छितार्थप्रदेन तु। रुद्रलोके महाभोगान्भुक्त्वा पाण्डवनन्दन। मर्त्यलोकेशुभेदेशे धनधान्यसमाकुले। हिमवद्विन्ध्ययोर्मध्ये आर्यावर्ते मनोरमे। कुलेचधर्मशीलानां पार्थिवानां च पाण्डव। उत्पत्स्यते न संदेहो रूपसौभाग्यसंयुतः। नारी चेत्थं महाभागं प्राप्नोत्यविकलं धनम्। व्रतस्यास्य प्रभावेण शिवधर्मोपरो भवेत्। भुक्त्वा भोगान्सुविपुलान्रुद्रैकगतमानसः। गतोऽत्र कर्मनिर्मुक्तो रुद्रस्यानुचरो भवेत्। भद्रं भवोद्भवभयापहरं त्रिलोके गौर्या स्वमातृभवनस्थितया च चीर्णम्। या स्त्री व्रतं भुवि करोति रता स्वधर्मे ब्रह्मेशकेशवसमं पतिमाप्नुयात्सा।' इति रम्भाव्रतम्।

अथ श्रावणकृष्णतृतीया कज्जलीसंज्ञा सा परेति दिवोदासीय इति कृत्यरत्नावल्याम्। श्रावणस्य तृतीयायां श्रवणयुक्तायां विष्णुपूजा कार्या। तदुक्तं हेमाद्रौ विष्णुधर्मोत्तरे—'तृतीया श्रावणे कृष्णा या स्याच्छ्रवणसंयुता। तस्यां संपूज्य गोविन्दं तुष्टिमग्र्यामवाप्नुयात्।' इति। श्रावणशुक्लतृतीया मधुश्रवाख्या गुर्जरेषु प्रसिद्धा। सा परयुता ग्राह्येति दिवोदास इति निर्णयसिन्धौ।

अस्यामेव तृतीयायां स्वर्णगौरीव्रतम्। अत्रादौ गौरीपूजा। 'देवि देवि समागच्छ प्रार्थयेऽहं जगत्पते। इमां मया कृतां पूजां गृहाण सुरसत्तमे।' आवाहनम्। 'भवानि त्वं महादेवि सर्वसौभाग्यदायिके। अनेकरत्नसंयुक्तमासनं प्रतिगृह्यताम्।' आसनम्। 'सुचारु शीतलं दिव्यं नानागन्धसुवासितम्। पाद्यं गृहाण देवेशि महादेवि नमोऽस्तु ते।' पाद्यम्। 'श्रीपार्वति महाभागे शंकरप्रियदायिनी। अर्घ्यं गृहाण कल्याणि भर्त्रा सह पतिव्रते।' अर्घ्यम्। 'गङ्गातोयं समानीतं सुवर्णकलशे स्थितम्। आचम्यतां महाभागे रुद्रेण सहितेऽनघे।' आचमनम्। 'गङ्गासरस्वतीरेवाकावेरीनर्मदाजलैः। स्नापितासि मया देवि यथा शान्तिं कुरुष्व मे।' स्नानम्। 'सर्वसत्त्वाधिकेसौम्येलोकलज्जानिवारणे। मयोपपादितेतुभ्यंवाससीप्रतिगृह्यताम्।' वस्त्रम्।

'कर्पूरकुङ्कुमैर्युक्तं हरिद्रादिसमन्वितम् । कस्तूरिकासमायुक्तं चन्दनं प्रतिगृह्यताम् ।' चन्दनम् । 'माल्यादीनि सुगन्धीनिमालत्यादीनिवै प्रभो । मयाहृतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम् ।' पुष्पम् । 'देवद्रुमरसोद्भूतःकालागुरुघृतान्वितः । आदीयतामयंधूपो भवानि घ्राणतर्पणः । ' धूपम् । 'आज्यं च वर्तिसंयुक्तं वह्निना योजितं मया । दीपं गृहाण देवेशि त्रैलोक्यतिमिरापहम् ।' दीपम् । 'अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् । नैवेद्यं गृह्यतां देवि प्रसादं कुरु सर्वदा ।' नैवेद्यम् । 'कर्पूरैलालवङ्गादिताम्बूलदलसंयुतम् । क्रमुकस्य फलं चैतत्ताम्बूलं प्रतिगृह्यताम् ।' ताम्बूलम् । 'इदं फलं मया देवि स्थापितं पुरतस्तव । तेन मे सफलावाप्तिर्भवेज्जन्मनिजन्मनि ।' फलम् । 'हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः । अनन्तपुण्यफलदमतः शान्ति प्रयच्छ मे ।' दक्षिणाम् । 'पुत्रान्देहि धनं देहि सौभाग्यं देहि सुव्रते । अन्यांश्च सर्वकामांश्च देहि देवि नमोऽस्तु ते ।' प्रार्थना । 'भवान्याश्च महादेव्या व्रतसंपूर्णहेतवे । प्रीतये द्विजवर्याय वाणकं प्रददाम्यहम् ।' वायनमन्त्रः । 'नानाषोडशपक्वान्नैर्वेणुपात्राणि षोडश । कुर्याद्वस्त्रादिभिर्युक्तान्याहूय द्विजदम्पतीन् । व्रतस्य परिपूर्त्यर्थं ब्राह्मणेभ्यो ददाम्यहम् । स्वलंकृताः सुवासिन्यः पातिव्रत्येन भूषिताः । मम कामसमृद्ध्यर्थं प्रतिगृह्णन्तु भूषिताः ।' इति शूर्पदानमन्त्रः । इतिगौरीपूजा । अथ कथा । 'कैलासशिखरेरम्ये सिद्धगन्धर्वसेविते । उमया सहितं स्कन्दः पप्रच्छ शिवमव्ययम् ।' स्कन्द उवाच—'करुणासागरेशान लोकानां हितकाम्यया । व्रतं कथय देवेश पुत्रपौत्रप्रवर्धनम् ।' शंकर उवाच—'साधु पृष्टं महाभाग कथयामि षडानन । स्वर्णगौरीव्रतं नाम सर्वसंपत्करं नृणाम् । पुरा सरस्वतीतीरे विमलाख्या महापुरी । तत्र चन्द्रप्रभुर्नाम राजाऽभूद्धनदोपमः । तस्यास्तां रूपलावण्यसौन्दर्यस्मरविभ्रमे । महादेवी विशालाक्षी द्वे भार्ये वै मृगेक्षणे । तयोः प्रियतमा ज्येष्ठा तस्यासीन्नृपतेर्मता । स कदाचिद्वनं भेजे मृगयासक्तमानसः । तत्र शार्दूलवाराहवनमाहिषकुञ्जरान् । हत्वा बभ्राम तृष्णार्तः सरसीविपिने महत् । चकोरचक्रकारण्डपुण्डरीकशताकुलम् । उत्फुल्लबहलोल्लोलकुमुदोत्पलमण्डितम् ।अपूर्वमवनीशोऽसौ ददर्शाप्सरसां सरः । समासाद्य सरस्तीरं पीत्वा जलमनुत्तमम् । भक्त्या गौरीमर्चयन्तं ददर्शाप्सरसां गणम् । किमेतदिति पप्रच्छ राजा राजीवलोचनः । स्वर्णगौरीव्रतमिदं क्रियतेऽस्माभिरुत्तमम् । सर्वसंपत्करं नृणां तत्कुरुष्व नृपोत्तम । ' राजोवाच—'विधानं कीदृशं ब्रूत किं फलं विस्तरान्मम । ता ऊचुर्योषितः सर्वा नभोमासि पितृप्रिये । प्रारब्धव्यं व्रतमिदं गौर्याः षोडशवत्सरान् ।

तच्छ्रुत्वा सोऽपि जग्राह व्रतं नियतमानसः । गुणैः षोडशभिर्युक्तं दोरकं दक्षिणे करे । बबन्धानेन मन्त्रेण सुखसौभाग्यवृद्धये । गुणैः षोडशभिर्युक्तं षोडशग्रंथिसंयुतम् । बद्ध्वा तु दक्षिणे हस्ते करिष्येऽहं व्रतं तव । एवं कृत्वा व्रतं देव्या जगाम स्वगृहं पुनः । एकदा सा महादेवी मदिरामदविह्वला । प्रधृतं दोरकं हस्ते दृष्ट्वा सपदि कोपना । त्रोटित्वा साशु चिक्षेप बाह्यशुष्कतरूपरि । न कर्तव्यं न कर्तव्यमिति राज्ञि वदत्यपि । तेन संस्पृष्टमात्रेण तरुः पल्लवितां गतः । द्वितीया तु ततो दृष्ट्वा विस्मयाकुलिताऽभवत् । तन्मूले दोरकं छिन्नं गृहीत्वा सा बबन्ध ह । ततस्तद्व्रतमाहात्म्यात्पतिप्रियतराऽभवत् । देवीव्रतोपचारेण साऽत्यन्तं दुःखिता वने । प्रययौ सा महादेवी गौरीध्यानसमन्विता । मुनीनामाश्रमे पुण्ये निवसन्ती ततः क्वचित् । निवारिता मुनिवरैर्गच्छ पापे यथासुखम् । धावती विपिनं घोरं गणाध्यक्षं ददर्श ह । तया पृष्टः स गणपो गौरी दृष्टा त्वया क्वचित् । ततो ददर्शाग्रतरुं गच्छन्ती च सरोद्वयम् । ततो वनश्रियं चाग्रे सर्वाभरणभूषिताम् । पश्यन्ती शनकैस्तद्वद्व्रजन्ती चैव मानुषी । तैस्तैर्निराकृता दृष्ट्वा विषण्णा निषसाद ह । ततस्तत्कृपया गौरी प्रादुरासीन्महासती । तां दृष्ट्वा दण्डवद्भूमौ नत्वा स्तुत्वा नृपप्रिया । जय देवि नमस्तुभ्यं नमो भक्तवरप्रदे । जय शंकरवामाङ्गे मङ्गले सर्वमङ्गले । ततो लब्ध्वा वरं भक्त्या गौरीमभ्यर्च्य तद्व्रतम् । चक्रे देवीपदं तस्या ददौ सौभाग्यसंपदः । इति तस्याः प्रसादेन सर्वान्भोगानवाप्य च । अन्ते शिवपुरं प्राप्तः कान्ताभ्यां सहितो नृपः । यः शोभनं व्रतमिदं कथितं शिवायाः कुर्यान्मम प्रियतरो भविता च गौर्याः । लब्ध्वा श्रियं सुविपुलां भुवि शत्रुसंघान्निर्जित्य निर्मलपदं च मृतः प्रयाति ।' इति स्कन्दपुराणे गौरीखण्डे स्वर्णगौरीव्रतम् । अथोद्यापनम् । युधिष्ठिर उवाच । 'उद्यापनविधिं ब्रूहि तृतीयायाः सुरेश्वर । भक्तितः श्रोतुमिच्छामि व्रतसंपूर्णहेतवे ।' श्रीकृष्ण उवाच—'उद्यापनविधिं वक्ष्ये सुविधानेन वै शृणु । त्रिंशद्दण्डप्रमाणेन[1] कल्पितं दक्षिणोत्तरे । प्रत्यक्प्रागपि राजेन्द्र नवगोचर्म इष्यते । गोचर्ममात्रं संलिप्य गोमयेन विचक्षणः । मण्डलं कारयेत्तत्र नानावर्णं सुशोभनम् । गृहमण्डलपार्श्वे तु पद्ममष्टदलं लिखेत् । तन्मध्ये स्थापयेत्कुम्भमव्रणं मृण्मयं शुभम् । ताम्रपात्रं प्रकुर्वीत पलैः षोडशभिस्तथा । तदर्धार्धेन वा कुर्याद्वित्तशाठ्यं विवर्जयेत् । कर्षमात्रसुवर्णेन प्रतिमां कारयेद्बुधः । तदर्धं मध्यमं प्रोक्तं तदर्धं तु कनिष्ठकम् । कृत्वा रूपं प्रयत्नेन पार्वत्याश्च हरस्य च । अथ ताम्रमये पात्रे

---

१—दशहस्तोऽत्र दण्डः ।

प्रतिमां तत्र विन्यसेत् । प्रतिमायुगलं तत्र स्थापयित्वा विधानतः । वेदोक्तेन प्रतिष्ठाऽपि कर्तव्या तु यथाविधि । पञ्चामृतेनस्नपनंकृत्वादेवस्यचोत्तमम् । स्नानं च कारयेत्पश्चात्ततः पूजां समारभेत् । चन्दनेन सुगन्धेन सुपुष्पैश्च प्रपूजयेत् । धूपं च कल्पयेद्गन्धं चन्दनागुरुसंयुतम् । नानाप्रकारनैवेद्यं तथा दीपं च कारयेत् । भवानीं पूजयेद्भक्त्या गन्धपुष्पैः फलाक्षतैः । आवाहनादि कर्तव्यं पुराणागमसंभवैः । कार्या विधानतः पूजा भक्तिश्रद्धासमन्वितैः । देवदेव समागच्छ प्रार्थयेऽहं जगत्पते । इमां मया कृतां पूजां गृहाण सुरसत्तम । एवं पूजा प्रकर्तव्या रात्रौ जागरणं ततः । गीतनृत्यादिसंयुक्ता कथापुस्तकवाचनैः । प्रातस्तु पूजयेद्देवं पश्चाद्धोमं च कारयेत् । स्वगृह्योक्तविधानेन कृत्वाऽग्निस्थापनं ततः । प्रारभेत व्रती होमं नवग्रहपुरःसरम् । तिलांश्च यवसंमिश्रानाज्येन च परिप्लुतान् । जुहुयाच्छिवमन्त्रेण शिवायाश्च ततः परम् । एवं समाप्य होमं तु तत्राचार्यं प्रपूजयेत् । अर्घ्यपुष्पप्रदानैश्च वस्त्रालंकारभूषणैः । शक्त्याऽथ दक्षिणां दद्याच्छय्यां सोपस्करां तथा । धेनुं सदक्षिणां दद्यात्सुशीलां च पयस्विनीम् । स्वर्णशृङ्गीं रौप्यखुरां कांस्यदोहनसंयुताम् । रत्नपुच्छां वस्त्रयुतां ताम्रपृष्ठामलंकृताम् । सुवर्णेन समोपेतामाचार्याय च साधवे । षोडशभिः प्रकारैश्च पक्वान्नैः प्रीणयेत्सदा । षोडशप्रमितैर्दद्याद्ब्राह्मणेषु प्रयत्नतः । वंशपात्रस्थितैःपश्चात्पक्वान्नैरायतैः शुभैः । अन्येभ्यो ब्राह्मणेभ्यश्च दक्षिणां च प्रयत्नतः । प्रयत्नपरया भक्त्या प्रदद्याद्वित्तसारतः । बन्धुभिःसह भुञ्जीत नियतश्च परेऽहनि । एवं कृत्वा भवेत्पार्थ परिपूर्णव्रती यतः ।' इति भविष्योत्तरपुराणे स्वर्णगौरीव्रतोद्यापनम् ।

भाद्रपदकृष्णतृतीयायां विशालाक्षीयात्रोक्ता काशीखण्डे—'भाद्रकृष्णतृतीयायामुपवासपरैर्नरैः । कृत्वा जागरणं रात्रौ विशालाक्षीसमीपतः'। इति । अत्र रात्रिव्यापिनी ग्राह्या रात्रौ जागरणविधानात् । भाद्रशुक्लतृतीयायां काञ्चनीं गौरीं कृत्वा संपूज्य गुडापूपनैवेद्यं दद्यात् । तदुक्तं निर्णयामृते भविष्योत्तरे—'गुडापूपाश्च दातव्या मासि भाद्रपदे तथा । तृतीया शुक्लपक्षस्य सर्वपापहरा स्मृता' । इति । इति मन्वादिः ।

अस्यामेव तृतीयायां हरितालिकाव्रतम् । तत्र परा ग्राह्या । 'मुहूर्तमात्रसत्त्वेऽपि' इति माधवोक्तेः । 'आद्या मधुश्रावणिका कज्जली हरितालिका । चतुर्थीमिश्रिता स्त्रीभिर्दिवा नक्तं विधीयते । तृतीया नभसः शुक्ला मधुश्रावणिका स्मृता । भाद्रस्य कज्जली कृष्णा शुक्ला च हरितालिका' । इति दिवोदासोदाहृतवचनाच्च । द्वितीयायोग

निषेधकानि चतुर्थीयोगफलाधिक्यबोधकानि वचनानि तु पूर्वमेवोक्तानि । अथ हरितालिकापूजाविधिः । तत्र मण्डपादिकदलीस्तम्भयुक्ते सुशोभिते गृहे पूजासामग्रीं संपाद्य सुप्रक्षालितपाणिपादा सौभाग्यवती विधवा च पूजां कुर्यात् । अद्येत्यादि मम समस्तपापक्षयपूर्वकं सप्तजन्मसु राज्यसौभाग्यादिसिद्ध्ये उमामहेश्वरसायुज्यसिद्ध्यर्थं च हरितालिकाव्रतं करिष्ये इति संकल्पयेत् । तदादौ गणपतिपूजनं कृत्वा महीद्यौरित्याद्याजिघ्रेति यथाशाखं पठित्वा कलशस्थापनादि कृत्वा तत्र सौवर्णीं रजतादिनिर्मितां वा प्रतिमां प्रतिष्ठापयेत् । गणानां त्वा गृत्समदो गणाधिपतिर्जगती गणपत्यावाहने विनियोगः 'ॐगणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आनः शृण्वन्नूतिभिः सीद सादनम्' ऋद्धिबुद्धिसहितं गणपतिमावाहयामि स्थापयामि । एवमासनादि मन्त्रपुष्पाञ्जल्यन्तं संपूज्य मन्दारमालेति ध्यात्वा प्राणप्रतिष्ठां कृत्वा 'आगच्छ देवदेवेश मर्त्यलोकहिताय च । यावद्व्रतं समाप्येत तावत्त्वं सन्निधौ भव।' इति पठेत् । सहस्रशीर्षेति भवानीशंकरयोः आवाहनम् । 'सिंहासनं जगन्नाथ कृतं रत्नैः सुशोभनम् । शोभायै शुभसंयुक्तमासनं प्रतिगृह्यताम् ।' पुरुष एवेत्यासनम् । 'नानाभरणचित्राङ्ग सर्वदेवनमस्कृत । पाद्यं गृहाण देवेश गन्धपुष्पाक्षतैः सह।' इति एतावानस्येति पाद्यम् ।'गङ्गोदकेन पुष्पेण चन्दनेन समन्वितम् । अर्घ्यं गृहाण देवेश उमया सह शंकर।' त्रिपादूर्ध्वेत्यर्घ्यम् । 'गङ्गाजलं समानीतं सुवर्णकलशे स्थितम् । आचम्यतां महादेवि मया दत्तं हि भक्तितः।' ततो विराडजायतेत्याचमनम् । 'सितासितजलं पुण्यं तापत्रयहरं शिवम् । मया भक्त्या समानीतं स्नानार्थं प्रतिगृह्यताम् । पूर्वस्नानम् । 'पञ्चामृतं समानीतं पयो दधि घृतं मधु । शर्कराभिः सुसंयुक्तं स्नानार्थं प्रतिगृह्यताम्।' ततः पञ्चामृतस्नानम् । तत्तन्मंत्रैश्च । अथोत्तरस्नानम् । 'मन्दाकिन्याः समानीतं हेमाम्भोरुहवासितम् । स्नानाय ते मया भक्त्या नीरं स्वीक्रियतामिदम् ।' यत्पुरुषेणेति पुरुषसूक्तेन वा शुद्धोदकस्नानम् । 'सूक्ष्माण्यतीव वस्त्राणि सुदृढानि नवानि च । मया दत्तानि देवेशि प्रीत्यर्थं प्रतिगृह्यताम्।' तं यज्ञमिति वस्त्रम् । 'सुवर्णतन्तुरचितमौदार्येण समन्वितम् । उपवीतं गृहाणेदं देवदेव जगत्पते ।' तस्माद्यज्ञात्सर्व०यज्ञोपवीतम् । 'अखण्डकामदं दिव्यं कर्पूरागुरुवासितम् । शीतलंबहुधामोदं चन्दनंप्रतिगृह्यताम् ।' तस्माद्यज्ञात्सर्वहुत ऋचः इति गन्धम् । नानासुगन्धद्रव्याणि० अक्षताश्च सुरश्रेष्ठ० माल्यादीनि० । तस्मादश्वा अजायन्तेति पुष्पम् । तत्र मन्त्रः—'सन्मल्लिकाबकुलचम्पकपाटलाब्जपुन्नागजातिकरवीररसालपुष्पैः ।

बिल्वप्रवालतुलसीदलमालतीभिस्त्वां पूजयामि जगदीश्वर मे प्रसीद।' । अथ नामपूजा॥ ॐ उमायै नमः, पार्वत्यै०, जगद्धात्र्यै०, जगत्प्रतिष्ठायै०, शान्तिरूपिण्यै०, शिवायै०, ब्रह्मरूपिण्यै०, ॐ हराय नमः महेश्वराय०, शंभवे०, शूलपाणये०, पिनाकधृषे० शिवाय०, पशुपतये० महादेवाय०, । वनस्पतिरसेति० यत्पुरुषमिति च धूपम् । आज्यं च वर्तिसंयुक्तम्० । ब्राह्मणोस्येति दीपम् । नैवेद्यं गृह्यतां देव० चन्द्रमा मनसो जात इति नैवेद्यम् । उत्तरापोशनम् । हस्तप्रक्षालनम् । श्रीखण्डेन करोद्वर्तनम् । इदं फलं मया देव इति फलम् । पूगीफलं महद्दिव्यं० ताम्बूलम् । 'पूजाफलप्रसिद्ध्यर्थं तवार्थे स्वर्णमीश्वरि । स्थापितं तेन मे देवि पूर्णं कुरु मनोरथम् ।' दक्षिणा । श्रिये जात इति नीराजनम् । नाभ्या आसीदिति नमस्कारः । सप्तास्यासन्निति प्रदक्षिणा । यज्ञेनेति पुष्पाञ्जलिः । तत्र मन्त्रः— 'सन्मल्लिकाबकुलचम्पकपाटलाब्जपुंनागजातिकरवीररसालपुष्पैः । बिल्वप्रवालतुलसीदलमालतीभिस्त्वां पूजयामि जगदीश्वरि मे प्रसीद । देवि देवि उमे गौरि त्राहि मां करुणानिधे । ममापराधाः क्षंतव्या भुक्तिमुक्तिप्रदा भव ।' इति प्रार्थना । ततो गन्धपुष्पाक्षतवस्त्राद्यलंकारादिभिः 'दीनं कुटुम्बिनं विप्रं वेदशास्त्रविशारदम् । विधिज्ञं शिवदीक्षायां शिवतत्त्वैकसाधनम्।' इत्यादिलक्षणोपेतमाचार्यं संपूज्य सुवर्णादिभोजनयुग्मं षोडशपक्वान्नसंयुक्तं सौभाग्यद्रव्यवस्त्रसहितं सहिरण्यं च तस्मै दद्यात् 'अन्नं सुवर्णपात्रस्थं सवस्त्रफलदक्षिणम् । वायनं गौरि विप्राय ददामि प्रीतये तव । सौभाग्यारोग्यकामानां सर्वसंपत्समृद्धये । गौरीगिरीशतुष्ट्यर्थं वायनं ते ददाम्यहम् । प्रतिगृह्ण द्विजश्रेष्ठ संपूर्णफलदायक । त्वत्प्रसादात्सुरश्रेष्ठ मुच्येऽहं सर्वपातकात् ।' इति वायनदानम् । 'आचार्याय च गां दद्यात्सवत्सां च पयस्विनीम् । शक्त्या च दक्षिणां दद्याद्व्रतसंपूर्तिहेतवे ।' अथोपवासनिवेदनम्—'निराहारार्थं देवेश उमाकान्त जगद्गुरो । भोक्ष्यामि श्वो जगन्नाथास्मिन्हरितालिकाव्रते ।' कथां श्रुत्वा तदनन्तरं प्रतिमादानम् । अथ कथा । नारायणं नमस्कृत्य०। सूत उवाच । 'मन्दारमालाकुलितालकायै कपालमालाङ्कितशेखराय । दिव्याम्बरायै च दिगम्बराय नमः शिवायै च नमः शिवाय । कैलासशिखरासीनं गौरी पृच्छति शंकरम् । गुह्याद्गुह्यतरं गुह्यं कथयस्व महेश्वर । सर्वेषां धर्मसर्वस्वमल्पायासं महाफलम् । प्रसन्नोऽसि जगन्नाथ तथ्यं ब्रूहि मम प्रभो । केन व्रतप्रभावेण तपोदानेन शंकर । अनादिमध्यनिधनो भर्ता त्वं जगतः प्रभुः । मया

प्राप्तोऽसि देवेश न जाने तत्सदाशिव । कथयस्व प्रसादेन यद्यहं तव वल्लभा । ' ईश्वर उवाच—' शृणु देवि प्रवक्ष्यामि तवाग्रे व्रतमुत्तमम् । येन व्रतप्रभावेण प्राप्तमर्धासनं प्रिये । यद्गुह्यं मम सर्वस्वं कथयामि तव प्रिये । यथा चोडुगणे चन्द्रो ग्रहाणां भानुरेव च । वर्णानां तु यथा विप्रो देवानां विष्णुरुत्तमः । नदीनां तु यथा गङ्गा पुराणानां तु भारतम् । वेदानां तु यथा साम इन्द्रियाणां मनो यथा । पुराणवेदसर्वस्वमागमेषु यथोदितम् । तदेकाग्रेण मनसा शृणुष्वेदं सनातनम् । येन पुण्यप्रभावेण प्राप्तमर्धासनं मम । तत्सर्वं कथयिष्यामि त्वं मम प्रेयसी यतः । भाद्रे मासि सिते पक्षे तृतीया हस्तसोमयुक् । तदनुष्ठानमात्रेण सर्वान्कामानवाप्नुयात् । शृणु पूर्वं तु यद्देवि त्वया तस्यामनुष्ठितम् । तत्सर्वं कथयिष्यामि यथा वृत्तं हिमाचले । अस्ति तत्र महान्दिव्यो हिमवान्पर्वतेश्वरः । नानासिंहसमायुक्तो नानाद्रुमसमाकुलः । नानापक्षिगणैर्युक्तो नानामृगनिषेवितः । यत्र देवाः सगन्धर्वाः सिद्धचारणगुह्यकाः । विहरन्ति यथासौख्यं गन्धर्वा गीततत्पराः । स्फाटिकैः काञ्चनैः शृङ्गैर्मणिवैडूर्यभूषितैः । भुजैर्लिखन्निवाकाशं सुदृढो मन्दरो यथा । हिमेनापूरितः सर्वो गङ्गाध्वनिविराजितः । नृत्यन्त्यप्सरसो यत्र शोभमानो नगेश्वरः । तत्र त्वं पार्वती बाल्ये आचरन्ती महत्तपः । द्वादशाब्दानि देवेशि धूमपानमधोमुखी । भूत्वा त्वं पतिरित्येवं मदाराधनतत्परा । संवत्सरचतुःषष्टिं पक्वपर्णाशनं त्वया । दृष्ट्वा तातस्तु ते कष्टं दुःखिताश्चिन्तितो भृशम् । कस्मै देया मया कन्या एवं चिन्तातुरोऽभवत् । इत्येवं चिन्तयाविष्टे देवर्षिर्नारदोऽभ्यगात् । पाद्यार्घ्याचमनादीनि नारदाय ददौ गिरिः ।' हिमवानुवाच—'किमर्थमागतः स्वामिन्वदस्व मुनिसत्तम । महाभाग्येन संप्राप्तं त्वदीयागमनं प्रभो । अद्य मे सफलं जन्म अद्य मे सफलाः क्रियाः । गतं चाद्य जडत्वं मां यज्जातं तव दर्शनम् । गताऽद्य मानसी चिन्ता यथाऽहं दुःखितो भृशम् । कन्यारत्नमिदं कस्मै देयं तद्ब्रूहि मे मुने ।' नारद उवाच—' शृणु शैलेन्द्र मद्वाक्यं विष्णुना प्रेषितो ह्यहम् । योग्यं योग्याय दातव्यं कन्यारत्नमिदं त्वया । वासुदेवसमो नास्ति ब्रह्मसूर्यशिवादिषु । चतुर्वर्गप्रदश्चैव दीयतां मम संमतम् । ' हिमवानुवाच—' वासुदेवसमो देवः कन्या प्रार्थयते यदि । तस्मै देया मया कन्या त्वदागमनगौरवात् । इत्येवं गदितं श्रुत्वा वैकुण्ठं नारदो ययौ । प्रीतः पीताम्बरधरं शंखचक्रगदाधरम् । चतुर्भुजं वासुदेवं नमस्कृत्याभ्यभाषत ।' नारद उवाच—'शृणु देव विवाहार्थं गन्तव्यं शैलजां प्रति । तेन दत्तं प्रतिग्राह्यं कन्यारत्नं सुशोभनम् । हिमवांस्तु तदा गौरीमुवाचातीव हर्षितः । दत्तासि त्वं मया

देवि देवाय गरुडध्वजे । श्रुत्वा वाक्यं पितुर्देवी सख्या सार्धं वनान्तरम् । गता ह्यनशनं कृत्वा तपस्तप्तुं सुदुःखिता ।' सख्युवाच–'किमर्थं नगपुत्रि त्वं दुःखिता तप्यसे पुनः । को वा कामोऽभिलषितः सखि ज्ञातो न वै शुभे ।' पार्वत्युवाच–'सखि शृणु महान्कामो मनसा चिन्तितो मया । अल्पेन तपसा किं स प्राप्यते मादृशैः खलु । अतो मया सह पुनश्चल तप्तुं वनान्तरे ।' सख्युवाच–'को वा कामोऽभिलषितो योऽल्पेन तपसा नरैः । न प्राप्यते तं मे ब्रूहि उपायं चिन्तयामि वै ।' पार्वत्युवाच–'कैलासशिखरासीनं देवदेवं वृषध्वजम् । भर्तृत्वेनैव मनसा कामयेऽहं न संशयः । सोऽयं कामो महानद्य मे तातेन कृतोऽन्यथा । तस्माद्देहपरित्यागं करिष्येहं न संशयः । पार्वत्या वचनं श्रुत्वा सखी वचनमब्रवीत् । नगपुत्रि महद्भाग्यं प्रार्थिता विष्णुना यतः । स सेव्यो दैवतैः सर्वैर्महेन्द्रादिपुरोगमैः । यस्यैकगुणलेशेन गुणवन्तो भवन्ति हि । सगुणानामनन्तत्वादनन्त इति विश्रुतः । देवानां कन्यका भद्रे स्वकीयां चेष्टदेवताम् । संपूज्य यस्य वांच्छन्ति प्रार्थयन्ति दिवानिशम् । अतिभाग्यवशाद्देवी माहिष्यं प्राप्यते यथा । किं त्वया पायसं त्यक्त्वा भिक्षार्थं गम्यतेऽन्यतः । प्राप्यापि कामदं देवं प्रार्थ्यते कामदाहकः । अस्ति काचित्क्वचिद्रम्या त्रिलोक्यां त्वद्विना प्रिये । नरोत्तमाय दत्तासि तव पित्रा शुभं कृतम् । मा शोचस्व निवर्तस्व जानासि त्वं गुणांस्तयोः । भ्रामिताऽस्यथ केन त्वं शृणुष्वैकमनानघे । किरीटी केशवो नित्यं जटी मृत्युंजयोऽनघे । केशवः सुमुखो भद्रे स च भीममुखः सदा । सुपङ्क्तिरक्तदन्तश्च विपङ्क्तिदीर्घदंष्ट्रकः । रत्नकुण्डलवान्विष्णुर्नागकुण्डलवाञ्छिवः । विष्णुः कमलनेत्रश्च ज्वलन्नेत्रः सदाशिवः । चतुर्भुजधरो विष्णुः स वै दशभुजो महान् । श्रीवत्सलाञ्छनो विष्णुः शिवस्य ब्रह्मणः शिरः । पीताम्बरधरो विष्णुः स च चर्माम्बरः सदा । पद्मपाणिर्युवा विष्णुः स वृद्धः शूलपाणिधृक् । अम्लानपद्ममालः स मुण्डमालाप्रियः स च । कण्ठेऽस्य कौस्तुभं रत्नं तस्य कण्ठे विषं सदा । वाहनं गरुडो यस्य जरठोक्षा शिवस्य च । शेषपर्यंकशायी स चिताभस्मशयः स च । गन्धर्वध्वनिना हृष्टो भूतानां रोदनेन सः । विष्णुर्भोगी च योगी च कथं कामयसे शिवम् ।' पार्वत्युवाच–'न जानासि विमूढा त्वं योगिनं शूलपाणिनम् । यस्याज्ञासाधको विष्णुस्त्रिलोकीं पाति नान्यथा । राजसेन स्वरूपेण ब्रह्मा सृष्टिं विधाति च । तामसेन स्वरूपेण रुद्रोऽत्ति सकलं रुषा । गुणानां तस्य वै शंभोर्महत्त्वं वेत्ति कः शुभम् । यस्याज्ञाकामगो भूत्वा विष्णुः पृथ्वीं दधार वै । पुनः स सूकरो भूत्वा तां च दन्ते दधार वै । यद्दत्तान्भु-

ञ्जते भोगान्विष्णुर्भोगीति कथ्यते। स हेमकमलैः पूर्वं विष्णुनाराधितः शिवः। वैकुण्ठसंश्रयं तेजस्तेन दत्तं निजेक्षणात्। इन्द्रादीनां तु यो दाता स देवो न श्रुतस्त्वया। यद्दत्तं देवराज्यं तु इन्द्राद्या भुञ्जते सुखम्। कुबेरेणापि महती श्रीरवाप्ता वरानने। वरुणेनजलेशत्वं शेषःपातालसंस्थितः। सूर्यस्तपति भीत्वा वै वायुर्वाति दिवानिशम्। यमः संयमनीशत्वं तं देवं किं न वेत्स्यसि। यस्याज्ञया स्वकालेन मेघा वर्षन्ति सवतः। पावकः सर्वदेवानां वन्दनं वर्ततेऽनघे। पितरःपितृलोकत्वं मत्पितापर्वतेश्वरः। चन्द्रो ह्युडुगणेशत्वं समुद्रो वै गभीरताम्। सोमः प्रापौषधीशत्वं चन्दनश्च सुगन्धिताम्। यस्याज्ञया स्वकालेऽपि भवन्त्यादेशवर्तिनः। वृष्टिः शीतं च घर्मश्च स्वकाले च गमागमम्। शक्राद्या अपि दिक्पालाः स्वां दिशं पालयन्ति ते। येषु कृत्येषु ये देवा योजितास्ते तु तत्पराः। अन्यथा करणे तेषां स च दण्डं विधास्यति। परात्परः स वै देवो निर्गुणः सगुणोऽपि वा। निराकारश्च साकारो योगी भोगी स एव हि। केवलो निर्गुणः साक्षी क्षरश्चाक्षर एव च। को वेद तस्य तद्रूपं यद्ब्रह्मेति प्रचक्षते। ब्रह्माद्या देवताः सर्वा ऋषयश्च तपोधनाः। योगिनो ज्ञाननिष्ठा ये यदर्थे त्यक्तबन्धनाः। तेऽपि तस्य न जानन्ति स्वरूपं सखि शूलिनः। अतस्तं कामयेऽहं वै विपत्तिं पतिता शुभे।' सख्युवाच—'सम्यक्कामोऽभिलपितस्तदर्थे त्यक्तजीविता। यत्र वै निश्चिता बुद्धिः स कामो भवति ध्रुवम्। ममापि च महद्भाग्यं यतस्त्वत्कर्मकारिका। किंचिद्विज्ञप्तुमिच्छामि त्वया चेच्छ्रूयते वचः। अम्बिकापूजनं कार्यं तन्मया कामदं श्रुतम्। तवेष्टदात्री या देवी सापि पूज्या प्रयत्नतः। तत्पित्रनुग्रहं देवि मयि प्रीतिरनुत्तमा। अनुज्ञादानमात्रेण नित्यं सफलतां नय। करिष्याम्यहमप्येतद्गौर्याः पूजनमुत्तमम्। तथेति संमतं कृत्वा याता यत्र महावनम्। पिता निरीक्षयामास हिमवांस्त्वां गृहे गृहे। केन नीता तु सा पुत्री देवदानवकिन्नरैः। सत्यं कृतं च ऋषये किं दास्ये गरुडध्वजे। इत्येवं चिन्तयाविष्टो मूर्च्छितो निपपात ह। हाहा कृत्वा ततो लोकाः प्रधावन्ति गिरिं प्रति। आगत्य मुनयः सर्वे पप्रच्छुस्तं हिमालयम्। किमर्थं मूर्च्छनां प्राप्तः कथयस्व हृदि स्थितम्।' हिमवानुवाच—'यदर्थं दुःखसंभ्रान्तः कन्यारत्नं हृतं मम। दष्टा वा कालसर्पेण सिंहव्याघ्रेण वा हता। पतितः शोकसंतप्तो वातेनेव यथा तरुः। निर्गतो गिरिराजस्तु दुहितुश्च गवेषणे। गत्वाऽथ विपिनं घोरं सिंहशार्दूलसंकुलम्। व्याघ्रसिंहैश्च भल्लूकैर्युध्यमानैर्महागजैः। तस्मिन्वने महाघोरे गता त्वं सखिभिर्युता। दृष्ट्वा तत्र नदीं रम्यां वनमध्ये गुहान्तरे। उप-

विष्टालिभिः सार्धमन्नाहारविवर्जिता । संस्थाप्य वालुकापिण्डं पार्वत्या सहितं मम । हस्तनक्षत्रसंयुक्ता मासि भाद्रे सिता जया । तत्र वाद्येन गीतेन रात्रौ जागरणं कृतम् । तेन व्रतप्रभावेण आसनं चलितं मम । प्राप्तोऽहं देवि तत्रैव यत्र त्वं सखिभिः सह । करोषि मम प्रीत्यर्थं मदगन्धानुलेपनम् । गुरूपदिष्टमार्गेण तेन तुष्टो भृशं मुदा । प्रसन्नोऽस्मि वरं ब्रूहि मया प्रोक्तं वरानने ।' पार्वत्युवाच–'प्रसन्नोऽसि यदा देव ददस्व मनसेप्सितम् । सर्वज्ञस्य न चाज्ञातं किंचिदस्ति महीतले ।' महादेव उवाच–'अहं भर्ता भवेयं वै इति हेतोः कृतं व्रतम् । तत्प्राप्स्यसि त्वं सुभगे न वृथा मम दर्शनम् । व्रतमेतत्करिष्यन्ति या नार्यो दृढमानसाः । प्राप्यापि सकलान्कामान्युज्यन्ते ब्रह्मणा सह । इत्युक्त्वाऽथ ततो देवि कैलासमहमागतः । ततः प्रभातसमये नद्यामेव विसृज्य ताम् । पारणं तु ततः कृत्वा यत्प्राप्तं वनमध्यगम् । पुनस्तत्रैव सुप्तासि सख्या सार्धं सरित्तटे । हिमवानपि तत्रैव संप्राप्तस्त्वदन्वेषणात् । पश्यन्ययौ चतुर्दिक्षु अन्नपानविवर्जितः । सुप्तं दृढं नदीतीरे दूरतः कन्यकाद्वयम् । उत्थाप्योत्सङ्गमानीय रुदन्तीं त्वामुवाच ह । सिंहव्याघ्रादिभिर्जुष्टं सेवितं हि महावनम् । पुत्रि प्राप्ता किमर्थं त्वं प्रियं किं करवाणि ते ।' श्रीपार्वत्युवाच–'शृणु तात मया ज्ञातं त्वं मां दास्यसि शूलिने । तदन्यथा कृतं तात तेनाहं वनमागता । तथेत्युक्तं हिमवता त्वमानीता गृहं प्रति । तेनाप्युक्तस्त्वहं देवि विवाहार्थं त्वया सह ।' श्रीपार्वत्युवाच–'किं कृतं गिरिणा तेन विवाहोऽभूत्कथं मम । त्वयाऽत्र किं कृतेनाथ श्रोतुमिच्छामि विस्तरात् ।' श्रीमहादेव उवाच । 'ऋषयः सप्त भो देवि त्वदर्थे प्रेषिता मया । दृष्टास्ते नगराजेन पप्रच्छ मुदिताननान् । कुत आगमनं जातं भवतां ज्ञानचक्षुषाम् । अन्यथा महतां प्राप्तिर्जडानां वै कथं भवेत् ।' ऋषय ऊचुः–'नगराज वयं तावच्छंकराज्ञाविधायिनः । त्वत्समीपे तु कन्यार्थं दीयतां यदि रोचते । गिरिरुवाच–' महादेवो यदा मत्तः कन्यां प्रार्थयते तदा । कन्यया च कृतं सम्यगयदर्थे दुश्चरं तपः । अतस्तेन प्रसादोऽस्याः कर्तव्यः शूलपाणिना । ऋषिभिर्बहुभिर्गीतः स देवो भक्तवत्सलः । इति श्रुत्वा गता विप्रा महादेवस्य संनिधौ । तद्वृत्तान्तं समाकर्ण्य आजगाम महेश्वरः । आजग्मुस्तत्र वै सर्वे देवा इन्द्रपुरोगमाः । पातालादागतः शेषः क्षीराब्धिशयनाद्विभुः । यत्र यत्र स्थिता देवा गन्धर्वाः सिद्धचारणाः । ते तत्स्थानात्समाजग्मुस्तन्महोत्सवसंभ्रमाः । विष्णुना च धृतं छत्रं श्वेतं शतशलाकजम् । इन्द्रो वै चामरे दिव्ये कुबेरः कोशधारकः । स्वफणामणिभिः शेषो दीपमालां बिभर्ति

सः। सहस्रयोजनायामं तेनाकारि सुमण्डपम्। एकस्तम्भमयं प्रोक्तं योजनानां शताधिकम्। ब्रह्माद्या देवताः सर्वे मन्त्राशिषमचीकरन्। जयशब्दकृतो देवा ऋषयश्च तपोधनाः। नृत्यन्त्यप्सरसस्तत्र गन्धर्वा ललितं जगुः। वाद्यानां स्वनितं मेघो मन्दंमन्दं च गर्जति। विकिरेच्च चतुर्दिक्षु तुषारकुसुमानि सः। देवकन्या नागकन्या लाजैस्तु कृतमङ्गलाः। सरस्वती रमा देवी शच्याद्या देवतास्त्रियः। स्वर्णपात्रे निधायाशु पुष्पचन्दनमक्षतान्। दधि दूर्वां च सिद्धार्थान्हरिद्रां रत्नदीपिकाः। नीराजनं प्रकुर्वन्ति गिरिजायाः शिवस्य च। पुष्पवृष्टिं प्रकुर्वन्ति देवं सव्यापसव्यतः। महोत्सवः प्रवृत्तोऽभूद्धिमालयगिरौ तथा। गिरिणा च तदा तस्मै दत्तं जामातृतोषकम्। गजानां दशसाहस्रमश्वानां नियुतं तथा। अनर्घ्याण्यपि रत्नानि ददौ तस्मै गिरीश्वरः। मुक्तानां दशकोट्यश्च शतकोटयश्च विद्रुमाः। हीरकान्कोटिकोटींस्तु पारिबर्हं ददौ गिरिः। असंख्याताश्च वै दास्यो मनःसंतुष्टिकारिकाः। मैनाकस्तत्प्रियार्थं वै गिरिणा प्रेषितः स्वयम्। एवं गिरिजया सार्धं कैलासमहमागतः। आगत्य देवतानां स स्वे स्वे स्थाने समादिशत्।' शिव उवाच—'तेन व्रतप्रभावेण सौभाग्यमतुलं त्वया। प्राप्तमर्धासनं देवि साधितं सुमहत्तरम्। अद्ययावद्व्रतं देवि न कस्यापि निवेदितम्। यद्गोप्यं परमं देवि यन्नोक्तं कस्यचिन्मया। तदुक्तं त्वत्समीपं तु त्वत्सौभाग्यविमोहनात्। व्रतराजस्य नामापि शृणु देवि यथाऽभवत्। आलिभिर्हरिता यस्मात्तस्मात्सा हारितालिका।' पार्वत्युवाच—'केन पूर्वं कृतं नाथ विधिं चास्य वद प्रभो। किं पुण्यं किं फलं चास्य कैश्च वै क्रियते नरैः।' महादेव उवाच—'शृणु देवि विधिं वक्ष्ये नारीणां व्रतमुत्तमम्। कर्तव्यं तु प्रयत्नेन यदि सौभाग्यमिच्छति। तोरणादि च कर्तव्यं कदलीस्तम्भमण्डितम्। आच्छाद्य पट्टवस्त्रैर्वा नानावर्णविचित्रकैः। चन्दनानि सुगन्धीनि लेपयेद्गृहमण्डपे। शंखभेरीमृदङ्गैश्च वादित्रैर्बहुनिःस्वनैः। नानामङ्गलचारस्तु कर्तव्यो मम सद्मनि। स्थापयेत्प्रतिमां तत्र पार्वत्या सहितां मम। पूजयेद्बहुभिः पुष्पैर्गन्धधूपैर्मनोहरैः। नानाकारैश्च नैवेद्यैर्नानाभक्ष्योपचारकैः। नानोपहारताम्बूलैरुपवासप्रजागरैः। नारिकेलैः पूगफलैर्दाडिमैः कनकादिभिः। बीजपूरैः सनारिङ्गैरन्यैर्ऋतुभवैस्तथा। कालदेशोद्भवैः सर्वैः फलैश्च विविधैः शुभैः। गन्धपुष्पैस्तथा दीपैर्मन्त्रेणानेन पूजयेत्। नमः शिवाय शान्ताय पञ्चवक्त्राय शूलिने। नन्दिभृङ्गिमहाकालगणयुक्ताय शंभवे। शिवायै हरकान्तायै प्रकृत्यै सृष्टिहेतवे। शिवायै सर्वमङ्गल्यै शिवरूपे जगन्मये। शिवे कल्याणदे नित्यं शिवरूपे नमो नमः। शिवरूपे नम-

स्तुभ्यं शिवायै सततं नमः। नमस्ते ब्रह्मरूपिण्यै जगद्धात्र्यै नमोनमः । संसारभयसंतापात्त्राहि मां सिंहवाहिनि। येन कामेन देवि त्वं पूजितासि मयेश्वरि। राज्यं सौभाग्यसंपत्तिं देहि मामम्ब पार्वति। पूर्वोक्तेन विधानेन पूजयेदुमया सह। कथां श्रुत्वैकाचित्तेन दद्यादन्नानि भूरिशः। आचार्याय प्रदातव्यं वस्त्रधेनुहिरण्यकम्। अन्येषा दीयते दानं स्त्रीणां वा भूषणादिकम्। ततो वाद्येन गीतेन ता निशां कौतुकादिना। नयेदतन्द्रिता देवि यदि सौभाग्यमिच्छति। तस्मिन्नहनि या नारी भोजनं कुरुते यदि। सप्तजन्म भवेद्वन्ध्या वैधव्यं च पुनः पुनः। दारिद्र्यं पुत्रशोकं च कर्कशा दुःखभागिनी। पतेत्सा नरके घोरे नोपवासं करोति या। काञ्चनं राजतं ताम्रं वेणुजं वापि मृन्मयम्। संपुटीकृत्य तन्मध्ये फलानि विविधानि च। हरिद्रा कुङ्कुमं चैव अञ्जनादि प्रकल्पयेत्। वस्त्राण्याभरणादीनि ताम्बूलं सहिरण्यकम्। कृत्वा संछाद्य वस्त्रेण प्रदद्याद्ब्राह्मणस्त्रियै। प्रीत्यर्थं तव देवेशि दानं देयं स्वशक्तितः। दत्त्वा तेन विधानेन पारणं तदनन्तरम्। एवं विधिं या कुरुते च नारी भर्त्रा समं सा रमते सुखेन। विनाशकाले मम तुल्यरूपं सायुज्यमुक्तिं लभते सुखेन। अश्वमेधसहस्राणि वाजपेयशतानि च। कथाश्रवणमात्रेण तत्पुण्यं लभते नरः। एतत्ते कथितं देवि विधानं सरहस्यकम्। कोटियज्ञकृतंपुण्यमस्यानुष्ठानमात्रतः।' इति भविष्योत्तरपुराणे हरितालिकाव्रतम्।

अथोद्यापनम्। पार्वत्युवाच—'उद्यापनविधिं ब्रूहि तृतीयायां सुरेश्वर। भक्तितः श्रोतुमिच्छामि व्रतसंपूर्तिहेतवे।' महादेव उवाच—'उद्यापनविधिं वक्ष्ये येन साङ्गं फलं लभेत्। प्राप्ते भाद्रपदे मासि तृतीयाहस्तसोमयुक्। तस्यां रात्रौ प्रयत्नेन यथोक्तं सर्वमाचरेत्। सर्वतोभद्रसंज्ञं वा लिङ्गतोभद्रमेव च। कारयेद्विधिवद्देवि मण्डलस्य प्रपूजनम्। तस्याग्रे स्थापयेत्कुम्भं व्रणच्छिद्रविवर्जितम्। तस्योपरि न्यसेद्धैमं पार्वत्या सहितं शिवम्। वस्त्रयुग्मेन संवेष्ट्य पूर्ववत्पूजनं चरेत्। ततः प्रभातसमये युग्मान्यष्टौ निमन्त्रयेत्। आचार्यं वरयेत्तत्र चतुर्भिर्ब्राह्मणैः सह। स्थण्डिलं तु प्रकर्तव्यं हस्तमात्रं सुशोभनम्। ततो होमं प्रकुर्वीत घृतदूर्वासमित्तिलैः। पृथक्पृथक्छतं कृत्वा मन्त्रेण जातवेदसे। पातयित्वा वसोर्धारां पुनः पूजनमाचरेत्। नमः प्रणतपालाय नमः कैलासवासिने। नमो वेदान्तवेद्याय उमादेहार्धधारिणे। उत्पत्तिस्थितिसंहारकर्त्रे नेत्रे नमोऽ-

---

१—क्वचित्तु—'षोडशाद्विजयुग्मांश्च पक्वान्नाद्यैश्च पूजयेत्। सौभाग्यद्रव्यवस्त्राणि वंशपात्राणि षोडश।' इत्युक्तम् तच्छक्तपरतया ज्ञेयम्।

स्तु ते । येन कामेन भो देव पूजितश्चोमया सह । व्रतं संपूर्णतां यातु त्वत्प्रसादाज्जगद्गुरो । इति स्तुत्वा महादेवं प्रणिपत्य पुनः पुनः । गोभूहिरण्यदानानि वस्त्रदानान्यनेकशः । सहिरण्यं सवस्त्रं च तेभ्यो दद्याच्च भक्तितः । उमामहेश्वरो देवः प्रीयतां मे नमोनमः । ततः कुर्यात्स्वयं देवि बन्धुभिः सह भोजनम् । सर्वान्कामानवाप्नोति सौभाग्यं लभते ध्रुवम् । मृतवत्सा तु या नारी पुत्रं प्राप्य चिरायुषम् । न पुनर्गर्भमायाति सा गौर्या सह लीयते।' इति स्कन्दपुराणे उमामहेश्वरसंवादे सोद्यापनहरितालिकाव्रतकथा संपूर्णा।

अस्यामेव भाद्रपदशुक्लतृतीयायां भविष्योत्तरोक्तहरिकालीव्रतम् । युधिष्ठिर उवाच—'भगवन्हरिकालीति का देवी प्रोच्यते भुवि। आर्द्रधान्ये स्थिता कस्मात्पूज्यते स्त्रीजनेन सा । पूजिता किं ददातीह सर्वं मे ब्रूहि केशव ।' श्रीकृष्ण उवाच ।' पार्थ पौराणिकीं दिव्यामतः शृणु कथामिमाम् । आसीद्दक्षस्य दुहिता काली नाम्नी तु कन्यका । वर्णेनापि च सा कृष्णा नवनीलोत्पलप्रभा । त्र्यम्बकाय च सा दत्ता महादेवाय शूलिने । विवाहिता विधानेन शंखतूर्यनिनादिना । यज्ञयात्रागतैर्देवैर्ब्राह्मणानां च निःस्वनैः । निर्वर्तिते विवाहे तु काल्या सार्धं त्रिलोचनः । क्रीडते विविधैः कामैर्मनसः प्रीतिवर्धनैः । अथ देवसमाजे तु कदाचिद्वृषभध्वजः । आस्थानमण्डपे रम्ये आस्ते विष्णुसहायवान् । तत्रस्थश्चाह्वयामास नर्मणा त्रिपुरान्तकः । कालीं नीलोत्पलश्यामां गणमातृगणान्विताम् । एह्येहि त्वमितः कालि भिन्नकृष्णाञ्जनप्रभे । कालमप्यतिसौन्दर्यात्तव रूपं मम प्रियम् । इत्येवमुक्ता सा देवी व्रीडिता क्षोभमानसा । निःश्वासोच्छ्वासताम्राक्षी बाष्पगद्गदया गिरा । रुरोद सस्वनं बाला प्रोवाच स्फुरिताधरा । किं देव नाम्ना या गौरी सा गौरीत्यभिधीयते । यस्मान्ममोपमा दत्ता भिन्नाकृष्णाञ्जनं विभो । समाजे देवसंघानां वासुदेवस्य संनिधौ । तस्माद्देहमिमं कृष्णं जुहोमि ज्वलितानले । इत्युक्ता वार्यमाणापि हरिकाली रुषान्विता । मुमोच हरितच्छाया कान्तिं हरितशाद्वले । चिक्षेप देहं रोषेण ज्वलिते हव्यवाहने । पुनः पर्वतराजस्य गृहे गौरी बभूव सा । महादेवस्य देहार्धे स्थिता संपूज्यते सुरैः । या मुक्ता शाद्वले देव्या कालकान्तिः स्वदेहजा । सा बभूव महावीर्या देवी कात्यायनी पुनः । तया कृतानि भूरीणि देवकार्याणि पाण्डव । तुष्टैर्देवगणैर्दत्तो वरस्तस्यै शृणुष्व मे । ये त्वां शाद्वलसंस्थां वै कालीति वरदायिनीम् । पूजयिष्यन्ति पुरुषा नार्यो वापि विशेषतः । सर्वपापविनिर्मुक्ताः सुखसौभाग्यगर्विताः । चिरायुषो भविष्यन्ति भर्तृपुत्रसमन्विताः । एवं सा हरिकालीति गौरी सस्ये व्यवस्थिता ।' श्रीकृष्ण उवाच—'शुक्ले भाद्रपदस्यै-

वं तृतीयाया समाचरेत् । सप्तधान्यैस्तु वैरूढैः कृत्वा हारितशाद्वलीम् । खर्जूरैर्नारिके-लैश्च फलैश्च मधुरैस्तथा । मातुलुङ्गकुसुम्भैश्च धान्यकैर्जीरकैस्तथा । गन्धैः पुष्पैः फलैर्धूपैर्नैवेद्यैर्मोदकादिभिः । प्रीणयित्वा समाच्छाद्य पद्मरागेण भास्वता । घण्टा-वाद्यादिभिर्गीतैः शुभैर्दिव्यकथानकैः । पूजनीया महाराज मन्त्रेणानेन भक्तितः । हरे-र्नाम्नि समुत्पन्ने हरिकालि हरिप्रिये । सर्वदा सस्यमूर्तिस्थे प्रणतार्तिहरे नमः । इत्थं संपूज्य तां देवीं दद्याद्विप्राय दक्षिणाम् । कृत्वा जागरणं रात्रौ प्रभाते किंचिदु-द्गते । रवौ सुवासिनीभिश्च सा नेया तु जलाशये । ततो जलाशये रम्ये मन्त्रेणैवं विसर्जयेत् । अर्चितासि मया भक्त्या गच्छ देवि सुरालयम् । मम दौर्भाग्यनाशाय पुनरागमनाय च । एवं यः पाण्डवश्रेष्ठ हरिकालीव्रतं चरेत् । प्रतिवर्षं विधानेन नारी वा भक्तितत्परा । नीत्वा यत्फलमाप्नोति तदन्येन न चाप्यते । मर्त्यलोके चिरं जीवे-त्सर्वकामैः सुपूजिता । पुत्रपौत्रसुहृन्मित्रनप्तृदौहित्रसंकुलम् । साग्रं वर्षशतं जीवेद्भो-गान्भुक्त्वा महीतले । ततोऽवसाने देहस्य शिवलोके महीयते । वीरभद्रमहाकालनन्दी-श्वरविनायकाः । सर्वे प्रसादसुमुखा भवन्ति व्रतयोगतः । संपूज्य शूर्पगतसप्तविरूढ-सस्यां देवीं हिमाद्रितनयां हरिकालिकाख्याम् । नैवेद्यजागरसमुद्धतगीतवाद्यैः संप्राप्नुव-न्ति मनुजाः सुचिरं सुखानि ।' इति भविष्योत्तरोक्तं हरिकालीव्रतम् ।

अथ हस्तगौरीव्रतम् । सूत उवाच—'कुन्त्यां सुखोपविष्टायां हस्तिनापुरमुत्त-मम् । मानितायां नरेन्द्रैश्च तनयैः पञ्चभिः सह । तस्याः कुशलमन्विच्छन्नाजगा-माथ माधवः । अभिनन्द्य सुखासीनं देवदेवं जनार्दनम् । उवाच कुन्ती सानन्दा ह्यप्र-गल्भमिदं वचः ।' कुन्त्युवाच—'धन्यास्मि कृतकृत्यास्मि सनाथास्मि परंतप । सा-ऽहं संभाविताऽद्यास्मि त्वया सर्वजगद्गुरो । यदि मे सुप्रसन्नोऽसि तदाचक्ष्व व्रतं विभो । यद्विधाय सुखं राज्यं प्राप्नुयां तनयैः सह ।' कृष्ण उवाच—' कुन्ति ते कथ-यिष्यामि व्रतानामुत्तमं व्रतम् । यत्कृत्वा सुखसंतानं धनधान्यसमन्वितम् । विधूतदु-ष्कृता पुण्या सपुत्रा राज्यमाप्स्यसि । हस्तगौरीव्रतं भद्रे कुरुष्व शुचिमानसा ।' कुन्त्युवाच—' यच्चोक्तं ते व्रतं नाथ विधानं तस्य कीदृशम् । केन पूर्वं कृतं देव तन्मे ब्रूहि जनार्दन ।' कृष्ण उवाच । 'कैलासशिखरे देवी हस्तस्थे च दिवाकरे । दिवा प्रसुप्ता सा गौरी हरसंनिधिमानसा । सा सुप्ता देवदेवेशं स्वप्ने शंभुं ददर्श ह । अर्धदेहं वृषार्धस्थमर्धचन्द्रकलाधरम् । उत्थाय सहसा गौरी प्रोवाच शंकरं प्रति । किमिदं तन्ममाचक्ष्व तप्यते मानसं मम ।' ईश्वर उवाच—'देवि पूर्वं निषिद्धासि हस्तऋक्ष-

गते रवौ । न स्वप्तव्यं दिवा तत्र तस्येदं विहितं फलम् । शृणु देवि त्वया येन खण्डितोऽहं विलोकितः । त्वयारब्धं व्रतं देवि मदाराधनकाम्यया । अपूर्णेऽस्मिन्प्रसन्नोऽस्मि तत्त्वया च समुज्झितम् । अपूर्णव्रतचारेण दृष्टोऽहं तादृशस्त्वया । तत्कुरुष्वाधुना देवि हस्तगौरीव्रतं शुभम् ।' श्रीपार्वत्युवाच—'आदिश्यतां व्रतं नाथ विधानेन महेश्वर । आरम्भोऽस्य कदा कार्यः को विधिः कस्य पूजनम् ।' ईश्वर उवाच— ' मण्डपे स्थापनं कुर्यात्सर्वालंकारभूषिते । अन्वहं काञ्चनैः पुष्पैः फलमुक्तान्वितैः शुभैः । नैवेद्यैः पञ्चखाद्यैश्च शृणुयात्प्रत्यहं कथाम् । दिने चतुर्दशे प्राप्ते स्थापयेत्प्रतिमां शुभाम् । पक्वान्नैः पूरितैः शुभ्रैः सर्वैः सार्धत्रयोदशैः । सार्धत्रयोदशदिनं नैवेद्यमुपकल्पयेत् । फलमूलानि चान्यानि तावन्ति समुपाहरेत् । पूजयेच्च सुवर्णस्य पुष्पैश्चान्यैः सुगन्धिभिः । चन्दनैर्धूपदीपैश्च ताम्बूलैश्च फलादिभिः । ध्यायेच्च हृदये गौरीं हरहेरम्बसंयुताम् । दक्षिणां च ततो दत्त्वा नत्वा देवीं विसर्जयेत् । सार्धत्रयोदश तथा दीपकाः पोलिकान्विताः । सुवासिन्यै स्त्रियै दत्त्वा तावतः स्वयमाहरेत् । व्रतं समाचरेद्देवि यावद्वर्षं त्रयोदशम् । स्वर्णभाजनगौर्यादि प्रतिवर्षं विसर्जयेत् । ततश्चतुर्दशे वर्षे तदुद्यापनमाचरेत् । संस्थाप्य गणपं गौरीं काञ्चनीं काञ्चने गजे । पूर्वोक्तविधिना पूज्य वासराणि त्रयोदश । चतुर्दशेऽथ दिवसे संयाते प्रातरुत्थिता । कृत्वोपवासनियमं गजं गौरीं प्रपूजयेत् । पक्वान्नं स्वर्णपात्रेषु त्रयोदशसु निक्षिपेत् । स्त्रीभ्यश्च कञ्चुकीर्दत्त्वा भोजयित्वा विसर्जयेत् । एवं देवि व्रतं कृत्वा सर्वान्कामानवाप्नुयात् । अशक्तौ तु सदा कार्या प्रतिमा मृत्तिकामयी । पात्राणि चैव तान्येव पीतपुष्पाणि चैव हि ।' श्रीकृष्ण उवाच— 'ततश्चक्रे व्रतं गौरी प्राप्ता सा वाञ्छितं फलम् । त्वमप्येतद्व्रतं कुन्ति कुरु श्रद्धासमन्विता । अथ भक्त्या व्रतं कुन्ती सविधानं तदाऽकरोत् । गान्धारी चापि तच्छ्रुत्वा व्रतं चक्रे यथाविधि । तुष्टा च भक्तिभावेन पुष्टा गौरी ततोऽब्रवीत् ।' पार्वत्युवाच— ' कुन्ति ते परितुष्टाऽस्मि वरं वरय सुव्रते ।' कुन्त्युवाच— ' देहि मे सर्वसंपत्तिं सर्वसौख्यं सदोदयम् । प्रयच्छ मम पुत्राणां महद्राज्यमनामयम् । व्रतमेतत्तु यः कुर्यात्तव लोकमवाप्स्यति । न दारिद्र्यं न वैधव्यं न शोको नापि दुष्कृतम् । कृच्छ्रं नोपहतं देवि कदाचित्संभविष्यति । तथेत्युक्त्वा ततो गौरी तत्रैवान्तरधीयत । एतद्व्रतं सकलदुःखविनाशहेतुः सौभाग्यराज्यफलभावनया चरन्ति । या योषितः सुखमनन्तमिहापि पूज्या गौरीपतिं पतिरतास्तु ततो लभन्ते ।' इति भविष्योत्तरोक्तं भाद्रपदशुक्लतृतीयायां हस्तगौरीव्रतम् ।

अथ भाद्रपदशुक्लतृतीयायां कोटीश्वरीव्रतम् । मदनरत्ने स्कान्दे रम्भोवाच— 'देवलोके महादेवि गणिका सौख्यसंयुता । मर्त्यलोके तथा सर्वाः स्त्रियः सौभाग्यवर्जिताः । कथं भाग्यं च भोगांश्च लभन्ते परमेश्वरि ।' पार्वत्युवाच— 'शृणु भद्रे परं गुह्यं सर्वकामफलप्रदम् । दुर्भगानां च नारीणां सौभाग्यकरणं परम् । लक्षेश्वरीति विख्यातं ततः कोटीश्वरीव्रतम् । तृतीया शुक्लपक्षे तु मासि भाद्रपदे भवेत् । तस्यां व्रतं तु संग्राह्यं यावद्वर्षचतुष्टयम् । उपवासेन कर्तव्यं वर्षे वर्षे तु सुन्दरि । अखण्डानां तन्दुलानां तिलानां वा सुलोचने । लक्षमेकं विविच्याथ क्षिपेत्पयसि शोभने । क्षीरसंमिश्रितैः कार्या देव्या मूर्तिः सुलोचना । कृत्वा तु पुष्पप्राकारं पुष्पमालाभिमण्डितम् । संस्थाप्य पार्वतीं देवीं पूजयेद्भक्तिशक्तितः । पूजयेद्विविधैः पुष्पैः कुङ्कुमागुरुचन्दनैः । गन्धैर्धूपैश्च नैवेद्यैः फलैश्च विविधैस्तथा । वस्त्रेण चैव रक्तेन पूजयेत्परमेश्वरीम् । नमो नमस्ते देवेशि लक्षेश्वरि नमोस्तु ते । कोटीश्वरि नमस्तुभ्यं नमस्ते हरिवल्लभे । उमादेवि नमस्तुभ्यं कात्यायनि नमोऽस्तु ते । नमः कालि महाकालि शिवदुर्गे नमोऽस्तु ते । नमः शर्वाणि रुद्राणि अपर्णे शंकरप्रिये । सर्वभूतहिते देवि त्राहि संसारसागरात् ।' पूजामन्त्रः— 'नमो लक्षेश्वरी देवि कोटीश्वरि नमोऽस्तु ते । गृहाणार्घ्यं मया दत्तं शंकरेण समं मम ।' अर्घ्यमन्त्रः— 'पुरा व्रतमिदं भद्रे इन्द्राण्या यत्कृते कृतम् । विन्ध्यावल्या बलेः पत्न्या अरुन्धत्या कृतं पुरा । दमयन्त्या च रोहिण्या कृतं व्रतवरं शुभम् । गौरिणीर्भोजयेच्छक्त्या विप्रांश्चैव सुदीक्षितान् । एवं विधिविधानेन करोति नियतव्रतम् । न तस्याः स्याच्च दारिद्र्यं न चैवेष्टवियोजनम् । अष्टपुत्रा भवेन्नारी भर्त्तारं च गुणाधिकम् । सुरूपं गुणिनं कान्तं पण्डितं प्रियदर्शनम् । ईश्वरं चैव राजानं लभेद्दीर्घायुषं प्रियम् । दातारं चैव भोक्तारं समस्तजनवल्लभम् । सुशीलं धार्मिकं शूरं चन्द्रवत्प्रियदर्शनम् । सुरूपा सुभगा चैव सदा पत्युः प्रिया भवेत् । सह पत्या वरारोहा कुरुते राज्यमुत्तमम् । अन्तकाले समं तेन मोदते त्रिदिवे तथा । षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च । इदं कृत्वा पुरेन्द्राणीन्द्रं लेभे पतिमुत्तमम् । रोहिणी पतिमालेभे चन्द्रं व्रतनिषेवणात् । राणादेवी तु भर्तारमादित्यं प्राप सत्पतिम् । इदं ते कथितं भद्रे व्रतं कोटीश्वरीपरम् । लक्षेश्वरीति विख्यातं कुरु रम्भे मनोहरम् ।' इति कोटीश्वरीव्रतम् ।

मार्गशीर्षशुक्लतृतीयायामारभ्यं भविष्योत्तरोक्तं रम्भाव्रतम् । श्रीकृष्ण

---

१ गौरिणीः सुवासिनी ।

उवाच—'रम्भातृतीया वक्ष्यामि सर्वपापप्रणाशिनीम् । सुखसौभाग्यफलां सर्वामयनिवारिणीम् । सर्वदुःखहरां पुण्यां पुत्रपौत्रप्रदां तथा । सपत्नीदर्पदलिनीं रूपैश्वर्यकरीं शुभाम् । शंकरेण पुरा ख्याता पार्वत्यै प्रियकाम्यया । तामिमा शृणु भूपाल भूतानां परमं हितम् । मार्गशीर्षे शुभे मासि तृतीयायां नराधिप । शुक्लायां प्रातरुत्थाय दन्तधावनपूर्वकम् । उपवासस्य नियमं गृह्णीयाद्भक्तिभाविता । देवी संवत्सरं यावत्तृतीयायामुपोषिता । प्रतिमासं करिष्यामि पारणं चापरेऽहनि । तदविघ्नेन मे यातु समाप्तिं व्रतमुत्तमम् । शरणं त्वां प्रपन्नास्मि दौर्भाग्याद्दुद्धरस्व माम् । एवं संकल्प्य विधिवत्कौन्तेय कृतनिश्चया । भक्त्या नारी ध्यानपरा स्नानं कृत्वा जितेन्द्रिया । नद्यां तडागे वाप्यां वा गृहे वा नियतेन्द्रिया । पूजयेत्पार्वतीं नाम्ना रात्रौ प्राश्य कुशोदकम् । प्रभाते भोजयेद्विप्राञ्छिवभक्तान्विशेषतः । सहिरण्यं च लवणं दद्यात्तेषां च दक्षिणाम् । गौरिणीश्च यथाशक्त्या भोजयेत्प्रयता सती । अनेन विधिना राजन्या कुर्यात्पार्वतीव्रतम् । सा कुलाना शतं साग्रं तारयेन्नात्र संशयः । इह लोके सुखं भुक्त्वा शिवलोके महीयते । पौषे मासि तृतीयायां गिरिजां नाम पूजयेत् । गोमूत्रं प्राशयेद्रात्रौ प्रभाते भोजयेद्द्विजान् । हिरण्यं जीरकं चैव स्वशक्त्या दापयेत्ततः । शक्रलोके वसेत्कल्पं ततः शिवपुरं व्रजेत् । माघमासे तृतीयायां सुदेवीं नाम पूजयेत् । गोमयं प्राशयेद्रात्रौ स्वपेद्रात्रौ यतव्रता । सहिरण्यंकुसुम्भं तु दिवादद्याद्द्विजातये । विष्णुलोके चिरं स्थित्वा प्राप्नोति शिवमन्दिरम् । गौरीति फाल्गुने नाम गोक्षीरं प्राशयेन्निशि । प्रभाते भोजयेद्विप्रान्यथाशक्त्या सुवासिनीः । कुस्तुम्बुरून्सकनकांस्तेभ्यो दत्वा विसर्जयेत् । वाजपेयातिरात्राणां फलं प्राप्य दिवं व्रजेत् । चैत्रे मासि विशालाक्षीं पूजयेद्भक्तितत्परा । दधि प्राश्यस्वपेत्प्रातर्दद्याद्धेमसकुङ्कुमम् । शुभसौभाग्यसंपन्ना मृता शिवपुरं व्रजेत् । वैशाखस्य तृतीयायां श्रीमुखीं नाम पूजयेत् । घृतं च प्राशयेद्रात्रौ पुनर्दद्याद्द्विजातये । कनकं शर्करां चैव पूजयित्वा क्षमापयेत् । सर्वान्कामानवाप्नोति मृता शिवपुरं व्रजेत् । ज्येष्ठेनारायणींनाम पूजयेत्कुसुमैः शुभैः । प्राशयेल्लवणं रात्रौ ततश्चैका निशिस्वपेत् । शिवभक्तान्द्विजान्प्रातर्भोजयित्वा यथेप्सितान् । सुवासिनीर्यथाशक्त्या भक्ष्यभोज्यैश्च भोजयेत् । ताम्बूलं कनकं दद्यात्प्रणिपत्य क्षमापयेत् । अन्तकाले सुखं याति यत्र देवो महेश्वरः । आषाढे माधवीनाम प्राशयीत तिलोदकम् । प्रभाते भोजयेद्विप्रान्हेमयुक्तं गुडं ददेत् । सर्वसंपत्सुखं भुक्त्वा देव्याश्चानुचरी भवेत् । भोगान्भुक्त्वा मही-

१–गौरिणी सुवासिनी ।

पृष्ठे गोलोकमधिगच्छति । अथ भाद्रपदे मासि सुभद्रां नाम पूजयेत् । बिल्वपत्रं च संप्राश्य स्वपेत ब्रह्मचारिणी । प्रभाते विप्रमुख्याय दद्याद्धेम फलैः सह । सर्वलोकेश्वरी भूत्वा भुक्त्वा भोगाननेकधा । प्राप्नोति ब्रह्मसदनं व्रतस्यास्य प्रभावतः । आश्विनस्य तृतीयाया पूजयित्वा शिवप्रियाम् । प्राशयेत्तन्दुलजलं प्रातर्विप्रांश्च भोजयेत् । दक्षिणा चात्र निर्दिष्टा चन्दनं च सकाञ्चनम् । सर्वयज्ञफलं प्राप्य गौरीलोके महीयते । पद्मोद्भवा कार्तिके च पञ्चगव्यं पिबेन्निशि । वादित्रैर्जागरं कृत्वा प्रभाते भोजयेत्तदा । उमामहेश्वरं हैमं समाप्ते कारयेच्छुभम् ।' उमामहेश्वरस्वरूपं च विष्णुधर्मेऽभिहितम् । 'वामार्धे पार्वती कार्या शिवः कार्यश्चतुर्भुजः । अक्षमालां त्रिशूलं च डमरुं च वरं दधत् । एकवक्त्रस्त्रिनेत्रश्च वामे च दयितातनुः । यथाविभवसारेण वितानं पञ्चवर्णकम् । शय्या चात्र विनिर्दिष्टा सर्वोपस्करसंयुता । सवत्सां शीलसंपन्नां गां च दद्यात्पयस्विनीम् । आसनंमृदुलंदद्याच्छ्वेतच्छत्रं कमण्डलुम् । पादुकोपानहौदिव्ये वस्त्रयुग्मं च पाण्डुरम् । पीत यज्ञोपवीतं च पट्टसूत्रसमुद्भवम् । शंखशुक्तिसमोपेतं दर्पणं च समुज्ज्वलम् । रक्तं च कञ्चुकंदेयं स्त्रियाश्चपरिधानकम् । उमामहेश्वरंस्थाप्य आसनेताम्रजे नृप । पूजां विरचयेद्भक्त्याध्यायमानामहेश्वरम् । नानाविधैःसुगन्धैश्च पुष्पैःपत्रैःफलैस्तथा । घृतपक्वैश्च नैवेद्यैर्दीपमालाविभूषितैः । कूष्माण्डैर्नारिकेलैश्च दाडिमैर्बीजपूरकैः । जीरकैर्लवणैश्चैव कुसुम्भैः कुङ्कुमैस्तथा । रसपात्रैः समृष्टैश्च गीतवाद्यैरनेकधा ।पूजयेद्देवदेवेशं सपत्नीकं क्षमापयेत् । ततो द्विजं समाहूय वेदवेदाङ्गपारगम् । वेदध्वनिसमायुक्तमुपवेश्य शुभासने । सपत्नीकं नृपश्रेष्ठं दिव्यचन्दनचर्चितम् । परिधाप्य स्वलंकृत्य सर्वं तस्मै निवेदयेत् । एवं कृते फलं यत्स्यान्न तच्छक्यं मयेरितुम् । सर्वोक्तफलसंयुक्ता सर्वं देवैः सुपूजिता । जाता जाता महाकल्पे सर्वान्कामानवाप्नुयात् । तदन्ते शिवसायुज्यं नारी प्राप्नोत्यसंशयम् । पुरुषो वा नृपश्रेष्ठ शिवभक्तश्च सुव्रतः।सोऽपि तत्फलमाप्नोति नान्यथा शिवभाषितम् । सौभाग्यार्थं पुरा चीर्णं रम्भया राजसत्तम । तेन रम्भातृतीयेयं परसौभाग्यदायिनी । योऽहं स एव भूतेशो गौरी सैव न संशयः । इति मत्वा महाभाग शरणं व्रज पार्वतीम् । एषा हिमाद्रिदुहितुर्दयिता तृतीया रम्भाभिधानमभवद्भुवि तत्कृतेति । संप्राशनैरुचितनामयुतामुपोष्य प्राप्नोति वाञ्छितफलान्यबला बहूनि ।' इति रम्भातृतीयाव्रतम् ।

अस्यामेव तृतीयायां कालीपुराणोक्तमवियोगव्रतम् । तृणबिन्दुरुवाच । 'येनावियोगमासाद्य व्रतेन नियमेन वा । सदा नारी सुतैश्चैव व्रजेद्येन पदं च तत् ।

विधवा परलोके च भर्त्रा तु न वियुज्यते । सुखेनापि सदा ब्रह्मन्वद येन धनेन च । ' अनिलाद उवाच । ' उमया चरितं यच्च भवान्या ललिताव्रतम् । बाल्ये हिमवतो जन्यां दक्षकोपाद्विमुक्तया । महासौभाग्यसंदोहं दृष्ट्वा देव्या महात्मना । अरुन्धत्या वसिष्ठेन कथितं तद्व्रतं शृणु । ' वसिष्ठ उवाच । ' अरुन्धति शृणुष्वेदं सुखसौभाग्यवर्धनम् । अवैधव्यप्रदं स्त्रीणामवियोगव्रतं शृणु । मार्गशीर्षे सिते पक्षे स्नाता शुक्लाम्बरप्रिया । दृष्ट्वा चन्द्रं द्वितीयायां नक्तं भुञ्जीत पायसम् । आचम्य च शुचिर्भूत्वा दण्डवच्छंकरं नमेत् । मुदान्विता नमस्कृत्य विज्ञाप्य परमेश्वरम् । उदुम्बरमयं वृत्तं ग्राह्यमष्टाङ्गुलं शुभम् । उत्तराशागतं साग्रं सत्वचं निर्व्रणं दृढम् । वाग्यता प्राङ्मुखी भूत्वा भक्षयेद्दन्तधावनम् । द्वितीयायां ततः स्वप्याद्भूमौ तद्गतमानसा । तृतीयाया समुत्थाय मुहूर्ते ब्रह्मणः शुभे । कृतकार्या च सुस्नाता शुक्लमाल्याम्बरा ततः । शालिपिष्टमये कृत्वा स्त्रीपुंसप्रतिमे शुभे । वेणुपात्रे तु संस्थाप्य पूजयेद्भक्तितत्परा । उपवासं च कुर्वीत सर्वभोगविवर्जितम् । पाखण्ड्यादिभिरालापं कृतस्नाना विवर्जयेत् । ततो निशायां सुश्रोणि कृतपूजा कृतोत्सवा । कृतवादित्रनिर्घोषं जागरं तत्र कल्पयेत् । विधिवत्पूजयित्वा तु पैष्टं तत्पुत्रिकाद्वयम् । सुप्रभाते द्विजाग्र्यांश्च पूजयित्वा प्रदापयेत् । यथाशक्त्यामहाभागे वित्तशाठ्यंविवर्जयेत् । उमामहेश्वरं ह्येतत्कल्पयित्वा सुचेतसि । ब्राह्मणोऽपि जलेऽगाधे पैष्टं तन्मिथुनं क्षिपेत् । एवं कृतस्वस्त्ययना मिथुनानि तु भोजयेत् । शिवभक्तान्द्विजान्भोज्य मिष्टान्नेन स्वशक्तितः । प्रतिमासं प्रकुर्वीत विधानेन सुसंयुतम् । मार्गशीर्षं पुनर्मासि कार्तिकान्ते समुद्यते । नामानि ते प्रवक्ष्यामि प्रतिमासं क्रमेण तु । पूजाजपनिमित्तं च सिद्ध्यर्थं चिंतितस्य च । शंकरं मार्गशीर्षे तु नाम गौर्या समन्वितम् । गौरीशं पार्वतीं चैव पुष्यमासे तु पूजयेत् । भवं चैव भवानीं च माघमासे प्रपूजयेत् । फाल्गुने तु महादेवमुमया सहितं यजेत् । चैत्रे त्रिलोचनं देवं ललितां च प्रपूजयेत् । स्थाणुं वैशाखमासे तु लोलनेत्रासमन्वितम् । रुद्राण्या सहितं रुद्रं ज्येष्ठे मासि यजेत वै । आषाढे पशुनाथं च सत्या सार्धं शुचिस्मिते । श्रीकण्ठं श्रावणे देवं सुभगां परमेश्वरीम् । भीमं भाद्रपदे तद्वत्कालरात्र्या समन्वितम् । शिवमाश्वयुजे भक्त्या गङ्गया सहितं यजेत् । ईशानं कार्तिके मासि शिवादेवीयुतं विभुम् । प्रतिमासं विना नाम्ना व्रतसिद्धिर्न विद्यते । प्रतिमासं तु पुष्पाणि यानि पूजासु योजयेत् । तानि ते संप्रवक्ष्यामि सद्यः प्रीतिकराणि वै । आदौ नीलोत्पलं योज्यं तदभावे पराण्यपि । पवित्राणि सुगन्धीनि योजयेद्भक्तितोऽर्चने । करवीरं बिल्वपत्रं किंशुकं कुब्जमल्लिकाम् ।

पाटलाभकदम्बं च तगरं द्रोणमालतीम् । एतान्युक्तक्रमेणैव मासेषु द्वादशेष्वपि । भक्त्या योज्यानि रम्भोरु देवस्य प्रियकाम्यया । तथा च पञ्चगव्यस्य प्राशनं प्रतिमासकम् । नान्यद्धि पावनं किंचित्पञ्चगव्यात्परं स्मृतम् । एवं व्रतं कृतं भद्रे शिवभक्तिसमन्विता । वत्सरान्ते वितानं च ध्वजं किंकिणिमालिनम् । दीपं च वस्त्रयुगं च शिवे भक्त्या निवेदयेत् । स्नापयित्वा विलिप्त्वा च सौवर्णं मूर्ध्नि पङ्कजम् । यथाविभवतो देयं देवदेवस्य तुष्टये । रौप्यं च रूपयुगलं देवस्य पुरतो न्यसेत् । बहुप्रकारं नैवेद्यं गीतवाद्यसमन्वितम् । कुर्यान्नीराजनं शंभोस्ततो गच्छेद्गृहं स्वकम् । चतुरस्रं महादेव युग्मां चैव त्रिकोणिकाम् । ध्यात्वाचार्याय तद्युग्मं मौक्तिकादियुगं ददेत् । कर्षैकैकप्रमाणेन शातकुम्भमयं शुभम् । उमामहेश्वरं चैव कारयित्वा सुशोभनम् । मौक्तिकानिचतुःषष्टिस्तावन्तोऽपिप्रवालकाः । तावन्ति पुष्परागाणि ताम्रपात्रोपरि न्यसेत् । वस्त्रेणवेष्टयित्वातुगन्धपुष्पैःसमर्चयेत् । एतत्सर्वंसारयुक्तमाचार्यायनिवेदयेत् । व्रतिनांब्राह्मणानांवा मिथुनानामथापि वा । अशक्त्या निष्क्रयं दद्याद्वित्तशाठ्यविवर्जिता । दत्त्वा हिरण्यं वासांसि प्रणिपत्य क्षमापयेत् । चत्वारिंशत्तथाष्टौ च कुम्भांश्छत्रमुपानहौ । सहिरण्याक्षतान्सर्वान्दद्यात्पुष्पोदकान्वितान् । दीनांधबधिरादीनांतद्दिनेचानिवारितम् । कल्पयेदन्नपानं च सुमृष्टं रुच्यमात्मनः । न्यूनाधिकं न कर्तव्यं स्वस्ववित्तानुसारतः । संपूजयेत्कल्पनया यदि वित्तं न विद्यते । अवियोगकरं चैतद्रूपसौभाग्यवित्तदम् । आयुःपुत्रप्रदं काम्यं शिवलोकप्रदायकम्।' इति कालिकापुराणोक्तमवियोगव्रतम् ।

अथ माघशुक्लतृतीयायामुमामहेश्वरप्रीत्यर्थं गुडलवणदानं कुर्यात् । तदुक्तं भविष्योत्तरे-'माघे शुक्लतृतीयायां गुडस्य लवणस्य च। दानं श्रेयस्करं राजन्स्त्रीणां च पुरुषस्य च । गुडेन तुष्यते देवी लवणेन स्वयं प्रभुः ।' इति ।

फाल्गुनशुक्लतृतीयायां वाराहपुराणोक्तं सौभाग्यतृतीयाव्रतम् । 'फाल्गुनस्य तु मासस्य तृतीया शुक्लपक्षगा । उपोषितव्या नक्तेन शुचिना सत्यभाषिणा । सश्रीकं च हरिं पूज्य रुद्रं वा उमया सह।' इति । एवमन्यान्यपि तृतीयाव्रतानि चतुर्थीयुक्तायामेव कार्याणीति सिद्धान्तः । पक्षद्वयगतासु सर्वास्वपि तृतीयासु तिथिपत्वेन गौरी पूज्या । तदुक्तम् 'चतुर्थ्यां गणनाथस्य गौर्यास्तत्पूर्ववासरे ।' इति ।

अथ सिद्धाविरुद्धादिकं लिख्यते । तृतीया भौमवारेण सिद्धा । तदुक्तम्-'भौमे षष्ठी तृतीया स्यादष्टमी च त्रयोदशी। मूलाश्विन्यौ मृगोऽश्लेषा सिद्धा उत्तरभाद्रपात् ।' तृतीया बुधवारेण विरुद्धा । 'बुधे धनिष्ठाभरणीदस्रमूलसमन्विता ।

तृतीया नवमी प्रतिपद्रेवतीभिर्विवर्जिता।' इति। विरुद्धयोगे शुभकर्म न कार्यम्। अथात्र कृत्यानि। 'जयासु संग्रामबलोपयोगिकार्याणि सिद्ध्यन्ति विनिर्मितानि।' तृतीयायामाग्नेय्या दिशि योगिन्यः प्रतिवसन्त्यतस्तत्संमुखी यात्रा न कार्या। अत्रान्यान्यपि तृतीयाव्रतान्यस्मत्कृतव्रतरत्नाकरे द्रष्टव्यानि।

श्रीमद्दिल्लीशसेनोद्भटविकटभटश्रेणिमत्तेभसिंह-<br>
श्चण्डोन्माद्यत्तुरुष्कक्षुभितवसुमतीपालने धर्मराजः॥<br>
पौत्रः श्रीकृष्णसिंहक्षितिपकुलमणेर्विष्णुसिंहस्य पुत्रः<br>
श्रीमान्राजाधिराजो जयहरिरमराधीशवत्कौ सुखी स्तात्॥ १॥

श्रीमत्पण्डितदेवभट्टतनयः श्रीराघवाङ्घ्रिद्वय-<br>
ध्यानावाप्तसमस्तकामनिवहः सम्राट् स रत्नाकरः<br>
तुष्ट्यै श्रीजयसिंहवर्मनृपतेः कल्पद्रुमे पञ्चमं<br>
गुच्छं हैमवतीतिथेः समकरोत्सद्वस्तुनिर्णायकम्॥ २॥

इति देवभट्टात्मजपौण्डरीकयाजिरत्नाकरविरचिते जयसिंहकल्पद्रुमोद्द्योते तृतीयाप्रकरणं समाप्तम्।

---

## अथ चतुर्थीतिथिव्रतनिर्णयः।

अथ चतुर्थी निर्णीयते। तत्रादौ शुक्लकृष्णभेदेन चतुर्थीध्यानम्। 'नीलोत्पलदलश्यामा चतुर्थी मूषकस्थिता। परशुं बिभ्रती पात्रं पीतवस्त्रादिसंयुता। चतुर्थी कज्जलाभासा महिषस्था चतुर्भुजा। धत्तेऽक्षमालिकां दण्डं चतुर्थी या च दंष्ट्रिणी।' इति। चतुर्थीतिथिर्गणेशकुण्डचतुर्थी बहुलाव्रतव्यतिरिक्तेषु पञ्चमीयुता ग्राह्या। 'गणेशगौरीबहुलाव्यतिरिक्ताः प्रकीर्तिताः। चतुर्थ्यः पञ्चमीविद्धा देवतान्तरयोगतः।' इति मदनरत्ने ब्रह्मवैवर्तात्। युगभूतानीति युग्मवाक्यात्। 'एकादशी तथा षष्ठी अमावास्या चतुर्थिका। उपोष्याःपरसंयुक्ताःपराः पूर्वेण संयुताः।' इति माधवीये वृद्धवसिष्ठोक्तेश्च। गणेशव्रतेचतुर्थीतृतीयायुतैवोपोष्या। 'चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते।' इति बृहस्पत्युक्तेः।हेमाद्रौ ब्रह्मवैवर्तेऽपि-'चतुर्थीसहिता या तु सा तृतीयाफलप्रदा। चतुर्थी च तृतीयायां महापुण्यफलप्रदा। कर्तव्याव्रतिभिर्वत्सगणनाथसुतोषिणी।'इति। गणनाथंसुतरांतोषयतीति गणनाथचतुर्थीत्यर्थः। तथा च स्कन्दपुराणे-'कृष्णाष्टमी चतुर्थी च सावित्री वटपैतृकी। शुक्लत्रयोदशी रम्भा नोपोष्याः परसंयुताः।' अत्रापि चतुर्थी गणेशचतुर्थ्येव वेदितव्या। अन्यथा युगभूतानीति निगमवा-

क्यविरोधः स्यात् । नागचतुर्थी तु मध्याह्नव्यापिनी पञ्चमीयुता ग्राह्येति निर्णयामृते माधवीये चोक्तम् । विनायकव्रते तु मध्याह्नव्यापिनी ग्राह्येति निर्णयामृते माधवीये च ।' चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते । मध्याह्नव्यापिनी चेत्स्यात्परतश्चेत्परेऽहनि ।' इति बृहस्पतिवचनात् ।' प्रातः शुक्लतिलैःस्नात्वा मध्याह्ने पूजयेन्नृप ।' इति तत्कल्पेऽभिधानाच्च । तेन परदिने तत्त्वे परा अन्यथा पूर्वे वेत्युक्तम् ।' जया च यदि संपूर्णा चतुर्थी ह्रसते यदि । सजया चैव कर्तव्या नागविद्धां न कारयेत् ।' इति वचनात् । एवं भाद्रपदशुक्लचतुर्थ्यपि मध्याह्नव्यापिनी ग्राह्या । संकष्टचतुर्थी तु चन्द्रोदयव्यापिनी ग्राह्या । दिनद्वये तत्त्वे मातृयोगस्य सत्त्वात्पूर्वे वेति केचित् । अन्ये तु पूर्वदिने मुहूर्तत्रयादिरूपस्य तृतीयायोगस्याभावात्परदिने माधवोक्तमध्याह्नव्यापिसत्त्वात्संपूर्णत्वाच्च परेत्याचक्षते । दिनद्वये तदभावे तु परैव गौरीव्रते पूर्वे वेति निर्णयसिन्धौ । अयमेव पक्षो ज्यायान् । 'यो यस्य विहितः कालः कर्मणस्तदुपक्रमे । तिथिर्याऽभिमता सा तु कार्या नोपक्रमोज्झिता ।' इति बौधायनवचनात् ।' कर्मोपक्रमकालगा तु कृतिभिर्ग्राह्या न युग्मादरः ।' इति दीपिकोक्तेश्च । उपक्रमस्तु-'तैलाभ्यङ्गं प्रकुर्वीत रात्रौ पूजां समाचरेत् ।' इत्यत्रोक्तः । विशेषस्तु तत्प्रकरणे वक्ष्यते ।

अथ चतुर्थीकृत्यं निर्णयामृते—चैत्रशुक्लचतुर्थ्यां लड्डुकादिभिर्गणेशमर्चयित्वा सर्वकामानवाप्नुयात् । तदुक्तं देवीपुराणे चैत्रमासे तिथिकृत्यप्रकरणे—'गणेशे कारयेत्पूजां लड्डुकादिभिरादरात् । चतुर्थ्यां विघ्ननाशाय सर्वकामसमृद्धये ।' इति ।

अस्यामेव चतुर्थ्यां विष्णुधर्मोत्तरोक्तमाश्रमव्रतं चतुर्मूर्तिव्रतं च ।'चैत्रस्यामलपक्षे तु सोपवासो जितेन्द्रियः । चतुर्थ्यां वासुदेवस्य कृत्वा संपूजनं शुभम् । काञ्चनं दक्षिणांदद्याद्द्विजाय ब्रह्मचारिणे ।' इत्यादि । एवं वैशाखज्येष्ठाषाढशुक्लचतुर्थीषु संकर्षणप्रद्युम्नानिरुद्धान्संपूज्य गृहवनस्थयतिभ्यः शंखफलमूलाद्यलाबुपात्राणि क्रमेण दद्यात् । एवं कृते स्वर्गादिप्राप्तिर्भवतीति । इत्याश्रमव्रतम् ।

अथ चतुर्मूर्तिव्रतम् । चैत्रशुक्लचतुर्थ्यां तु सोपवासस्तु पूजयेत् । देवेशं चतुरात्मानं वित्तशक्त्या नराधिप ।' इत्यादि । इति चतुर्मूर्तिव्रतम् ।

ज्येष्ठशुक्लचतुर्थ्यां पार्वतीपूजोक्ता निर्णयामृते—'ज्येष्ठशुक्लचतुर्थ्यां तु जाता पूर्वमुमा सती । तस्मात्सा तत्र संपूज्या स्त्रीभिः सौभाग्यवृद्धये । उपहारैश्च विविधैर्गीतनृत्योत्सवादिभिः । होमैः पयोभिर्वस्त्रैश्च पत्रपुष्पैः सुगन्धिभिः ।' इति । इति ज्येष्ठशुक्लचतुर्थी । आषाढशुक्लचतुर्थी राथन्तरकल्पादिः ।

श्रावणकृष्णचतुर्थी संकष्टचतुर्थीत्युच्यते । सा चन्द्रोदयव्यापिनी ग्राह्या । तदुक्तं स्कान्दे—'श्रावणे बहुले पक्षे चतुर्थ्यां च विधूदये । तस्मिन्दिने व्रतं कार्यं संकष्टाख्यं सुरेश्वरि।' इति । दिनद्वये चन्द्रोदये सत्त्वेऽसत्त्वे वा परैवेत्यादि पूर्वमेवोक्तम् । कृत्यरत्नावल्यां तु-भाद्रपदकृष्णचतुर्थी संकष्टचतुर्थी । 'श्रावणे बहुले' इति स्कान्दवचने श्रावणोऽमान्तमासेन ग्राह्यः । 'व्रते शुक्लादिमेव च' इति वचनादित्युक्तम् । इयमेव बहुला मध्यदेशे प्रसिद्धा । 'गौर्याश्चतुर्थी वटधेनुपूजा दुर्गार्चनं दुर्गरहोलिके च । वत्सस्य पूजा शिवरात्रिरेताः परान्विता घ्नन्ति नृपं सराष्ट्रम् ।' इति गोविंदार्णवधृतदिवोदासीयवचनात् । अत्र वत्सपूजायाः पृथगुपादानाद्धेनुपूजाशब्देन बहुलाख्या गृह्यते इति स एव व्याचख्यौ । मदनरत्नेऽप्येवम् । कृत्यरत्नावल्यां तु श्रावणकृष्णचतुर्थी बहुलाख्या मध्यदेशे प्रसिद्धेत्युक्तम् । सा च सायाह्नव्यापिनी ग्राह्या । दिनद्वये तथात्वे पूर्वा । अत्र गोपूजा यवान्नाशनं च कार्यमिति दिवोदासीये भट्टोजिदीक्षितीये मयूखे निर्णयसिन्धौ च।पूर्णिमान्तमासीयश्रावणकृष्णचतुर्थ्यां संकष्टचतुर्थीव्रतमुक्तम्।भाद्रपदकृष्णचतुर्थ्यां तु बहुलाव्रतमुक्तम्।अथ संकष्टचतुर्थीव्रतविधिः। प्रातःकृत्यादि कृत्वा सूर्यादिदेवताभ्यो व्रतं निवेद्याचम्योदङ्मुखो वारिपूर्णं ताम्रपात्रं गृहीत्वा मासाद्युल्लिख्य मम सर्वकर्मनिर्विघ्नसिद्धिपुत्रपौत्रसौभाग्यादिसिद्ध्यर्थं श्रीसंकष्टहरगणपतिप्रीत्यर्थं संकष्टहरचतुर्थीव्रतमहं करिष्ये, इति संकल्प्य मौनेन दिनमतिवाह्य संध्यासमये तैलाभ्यङ्गपूर्वकं स्नानं कृत्वा सायं संध्यादि कृत्वा भूतशुद्धिप्राणप्रतिष्ठां केवलमातृकान्यासं च कृत्वा सर्वसंकष्टहरणार्थं चतुर्थ्यां गणपतिपूजनमहं करिष्ये इति संकल्प्यार्घ्यादिस्थापनं कृत्वा पीठे मण्डूकादिपरतत्त्वान्तं संपूज्य । तीव्रायै, ज्वालिन्यै, नन्दायै, भोगदायै, कामरूपिण्यै, उग्रायै, तेजोवत्यै, सत्यायै, दिक्षु विदिक्षु च मध्ये विघ्ननाशिन्यै सर्वशक्तिकमलासनाय नम इति पूजयेत् । ततः पीठमध्ये मूर्तौ फले वा स्वेष्टदेवमागमोक्तप्रकारेण 'कोटिसूर्यप्रभं देवं गजवक्त्रं चतुर्भुजम् । पाशाङ्कुशधरं देवं ध्यायेत्सिद्धिविनायकम्। ' इति ध्यात्वा 'आत्मसंस्थमजं शुद्धं त्वामहं परमेश्वरम् । अरण्यामिव हव्यांशं मूर्तावावाहयाम्यहम्।' इति पठित्वा सहस्रशीर्षेति पठित्वा गणेशेत्यावाहनं कुर्यात्। 'आगच्छ देवदेवेश गणनाथ नमोऽस्तु ते। विनायक नमस्तुभ्यं गौरीमलसमुद्भव ।' इति । 'अनेकरत्नसंयुक्तं मुक्ताफलविभूषितम् । स्वर्णसिंहासनं देव प्रीत्यर्थं प्रतिगृह्यताम् ।' पुरुष एवेति पठित्वा विघ्ननाशिने नम आसनं समर्पयामि । 'तवेयं महिमा मूर्तिस्तस्यां त्वां सर्वगं प्रभो । भक्तिस्नेहसमाकृष्टं दीपवत्स्थापयाम्यहम् ।' इति

स्थापनम् । 'अनन्या तव देवेश मूर्तिशक्तिरियं प्रभो। सांनिध्यं कुरु तस्यां त्वं भक्तानुग्रहतत्पर ।' इति संनिधापनम् । 'आज्ञया तव देवेश कृपाम्भोधे गुणाम्बुधे। आत्मानन्दैकतृप्तं त्वां निरुणध्म्यतिनिर्गुण ।' इति संनिरोधः । 'अज्ञानाद्दुर्मनस्त्वाद्वा वैकल्यात्साधनस्य च । यदपूर्णं भवेत्कृत्यं तथाप्यभिमुखो भव ।' इति संमुखीकरणम् । 'अभक्तवाङ्मनश्चक्षुःश्रोत्रदूरायतद्युते । स्वतेजःपञ्जरेणाशु वेष्टितो भव सर्वतः ।' इत्यवगुण्ठनम् । ततः सकलीकरणम् । अमृतीकरणं परमीकरणम् । ऐं वद वद वाग्वादिनि, ऐं क्लीं क्लिन्ने क्लेदिनि क्लेदय महाक्षोभं कुरु कुरु सौः ह्यौः अं आं इत्यादि प्रोक्ष्य प्राणप्रतिष्ठां कुर्यात् । ॐ आं ह्रीं क्रोम् इत्युच्चार्य देवस्य सर्वेन्द्रियाणि ।ॐ आं ह्रीं क्रोमित्युच्चार्य देवस्य वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा । इति प्राणप्रतिष्ठा । ततः पाद्यम् । 'गौरीपुत्र नमस्तेऽस्तु गणानामीश्वर प्रभो । भक्त्या पाद्यं मया दत्तं स्नेहेन प्रतिगृह्यताम् ।' एतावानस्येति पठित्वा लम्बोदराय नमः पाद्यं समर्पयामि । ततोऽर्घ्यम् । 'व्रतमुद्दिश्य देवेश गन्धपुष्पाक्षतैर्युतम् । गृहाणार्घ्यं मया दत्तं सर्वसिद्धिं प्रयच्छ मे ।' त्रिपादूर्ध्वेति पठित्वा चन्द्रार्धधारिणे नमोऽर्घ्यं समर्पयामि । तत आचमनम् । 'आचम्यतां गणाधीश सर्वसिद्धिप्रदायक । अनाथनाथ सर्वज्ञ गीर्वाणपरिपूजित ।' तस्माद्विराडिति पठित्वा विश्वप्रियाय नमःआचमनीयं समर्पयामि । ततो मधुपर्कः । 'गव्यं दधि समानीतं मधुना च समन्वितम् ।गृह्योक्तविधिना दत्तं मधुपर्कं गृहाण भोः ।' गणपतये नमः मधुपर्कं समर्पयामि । मधुपर्कानन्तरं पुनराचमनीयं, ततः पञ्चामृतस्नानम् । 'पञ्चामृतं मयानीतं पयो दधि घृतं मधु । सितया च समायुक्तं स्नानार्थं प्रतिगृह्यताम्।' ततः शुद्धोदकस्नानम्। 'गङ्गादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतम् । गृहाणविघ्नराजेन्द्रमयादत्तं हि भक्तितः ।' यत्पुरुषेणेति ब्रह्मचारिणे नमःशुद्धोदकस्नानं समर्पयामि । ततआचमनीयंसमर्पयामि । वस्त्रम् । 'रक्तवर्णं महादिव्यं दिव्यगन्धोपवासितम्।भक्त्या दत्तं गृहाणेश लम्बोदर हरात्मज।' तं यज्ञमिति कुमारगुरवे नमः वस्त्रं समर्पयामि । ततो यज्ञोपवीतम् । 'राजतं ब्रह्मसूत्रं च काञ्चनस्योत्तरीयकम् । गृहाणेश्वर सर्वज्ञ भक्तानां वरदायक।' तस्माद्यज्ञात्सर्वहुतः संभृतमिति शिवात्मजाय नमः उपवीतं समर्पयामि । ततश्चन्दनम् । 'गन्धं गृहाण देवेश दिव्यचन्दनमुत्तमम् । कर्पूरागुरुसंयुक्तं गणाध्यक्ष सुरार्चित।' तस्माद्यज्ञात्सर्वहुत ऋचः रुद्रपुत्राय नमः चन्दनं समर्पयामि । ततोऽक्षताः । 'अक्षताश्चसुरश्रेष्ठकुङ्कुमाक्ताःसुशोभनाः । गृहाणविघ्नराजेन्द्रदयां कृत्वा ममोपरि ।' विघ्नहर्त्रे नमः अक्षतान् समर्पयामि । 'सिन्दूरं गृह्यतां देव

बालार्कसदृशद्युति । सर्वसंकष्टनाशार्थं दत्तं परशुधारिणे ।' परशुधारिणे नमः सिन्दूरं समर्पयामि । पुष्पाणि । 'विनायक नमस्तुभ्यं सुरासुरसुपूजितम् । सुगन्धीनि च पुष्पाणि गृहाण परमेश्वर ।' तस्मादश्वा इति गुणशालिने नमः पुष्पाणि समर्पयामि । ततः पुष्पाञ्जलिं दत्त्वा स्वाभीष्टगणपत्यावरणपूजां कुर्यात् । धूपः । 'दशाङ्गं गुग्गुलं धूपं सुगन्धं सुमनोहरम् । उमासुत नमस्तेऽस्तु गृहाण वरदो भव ।' यत्पुरुषमिति भवानीप्रीतिकर्त्रे नमः धूपं समर्पयामि । दीपः । 'गृहाण मङ्गलं दीपं घृतवर्तिसमन्वितम् । भासनं सर्ववस्तूनां तेजोराशे जगत्पते ।' ब्राह्मणोऽस्येति गजकर्णाय नमः दीपं समर्पयामि । ततो नैवेद्यम् । 'लड्डुकापूपपक्वान्नं नानाभक्ष्यं च पायसम् । गृहाण विघ्नराजेन्द्र फलैर्वा विविधैर्युतम् ।' चन्द्रमा मनसः इति अघनाशिने नमः नैवेद्यं समर्पयामि । प्राणादिपञ्चाहुतीर्दत्त्वा 'नमस्ते देवदेवेश सर्वतृप्तिकरं परम् । अन्यानिवेदितं शुद्धं प्रकृतिस्थं सुशीतलम् । परमानन्दसंपूर्णं गृहाण जलमुत्तमम् ।' इति मध्ये पानीयं दत्त्वा ब्रह्मेन्द्राद्यैरिति च पठित्वा यथाशक्ति जपं कृत्वोत्तरापोशनं दत्त्वा करोद्वर्तनादि दत्त्वा ताम्बूलं दद्यात् 'पूगकर्पूरसंयुक्तं नागवल्लीदलैर्युतम् । ताम्बूलं गृह्यतां देव सर्वमङ्गलदायक ।' सिद्धिदाय नमः ताम्बूलं समर्पयामि । ततः फलम् । नारिकेलं सनारिङ्गं कदलीमातुलुङ्गकम् । इक्षुदण्डं गृहाणेश सर्वप्रिय नमोऽस्तु ते । संकष्टनाशिने नमः फलमिक्षुदण्डं समर्पयामि । 'हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ।' सर्वभोगदायिने नमः दक्षिणां समर्पयामि । ततः पुष्पाञ्जलिं दत्त्वैकविंशतिदूर्वाङ्कुरान्गृहीत्वा वक्ष्यमाणनामभिः पूजां कुर्यात् । गणाधिपाय नमः दूर्वायुग्मम् । उमापुत्राय २ । अघनाशाय २ । एकदन्ताय २ । इभवक्त्राय २ । मूषकवाहनाय २ । विनायकाय २ । ईशपुत्राय २ । सर्वसिद्धिप्रदायकाय २ । कुमारगुरवे २ । एकां दूर्वां गृहीत्वा 'गणाधिप नमस्तेऽस्तु उमापुत्राघनाशन । एकदन्तेभवक्त्रेति तथा मूषकवाहन । विनायकेशपुत्रेति सर्वसिद्धिप्रदायक । कुमारगुरवे तुभ्यं पूजयामि प्रयत्नतः । 'एभिर्नामभिः समर्पयेत् । ततः पुष्पाञ्जलिं दत्त्वा नीराजनं दद्यात् । 'कर्पूरवर्तिकायुक्तः सर्ववस्तुप्रकाशकः । नीराजनार्थमानीतो दीपोऽयं प्रतिगृह्यताम् ।' सर्वविघ्नविनाशिने नमो नीराजनं समर्पयामि । पुष्पाञ्जलिं दत्त्वा प्रार्थनां कुर्यात् ।' संकष्टहरणं कृत्वा हृत्स्थान्कामान्प्रपूरय । विघ्नान्नाशय मे सर्वान्नाशयोपस्थितान्प्रभो । त्वत्प्रसादेन कार्याणि सर्वाणीह करोम्यहम् । इति विज्ञाप्य देवेशं प्रणिपत्य पुनः पुनः । नमस्कारं करोमीश सर्वकामार्थसिद्धये । प्रीत्याऽनुगृह्य देवेश

प्रसादाभिमुखो भव' नाम्ना आसीदिति नमस्कारः । ततः प्रदक्षिणा । प्रदक्षिणां करोमीश सर्वकामार्थसिद्धये । सर्वकामप्रदस्त्वं हि सर्वविघ्नहरो भव' सप्तास्यासन्निति उमासुताय प्रदक्षिणां समर्पयामि । नमस्कारं कृत्वा पुनः प्रार्थनां कुर्यात् । संसारपीडाव्यथितं हि मां सदा संकष्टभूतं सुमुख प्रसीद । त्वं त्राहि मां मोचय कष्टसंघान्नमो नमो विघ्नविनाशनाय । त्वामुद्दिश्य कृतं मेऽद्य यथाशक्त्या तु पूजनम् । तत्सर्वं पूर्णमेवास्तुत्वत्प्रसादाद्गजानन ।' ततो वायनदानम् । 'श्रीविप्रायनमस्तुभ्यं साक्षाद्देवस्वरूपिणे । गणेशप्रीतये तुभ्यं मोदकान्वै ददाम्यहम् । मोदकान्सफलान्मुद्गान्दक्षिणाभिः समन्वितान् । आवयोस्तारणार्थाय गृहाणेमान्नमोनमः ।' इति वायनदानम् । ततश्चन्द्रपूजनं कृत्वा चन्द्रायाघ्र्यान्दद्यात् शङ्खदुग्धदूर्वाक्षतफलानि दत्त्वा 'ज्योत्स्नापते नमस्तुभ्यं नमस्ते ज्योतिषां पते । नमस्ते रोहिणीकान्त गृहाणार्घ्यं नमोऽस्तु ते । सौम्याय देवदेवाय ग्रहराजाय शालिने । अर्घ्यं गृहाण देवेश द्विजराज नमोऽस्तु ते । क्षीरोदार्णवसंभूत अत्रिनेत्रसमुद्भव । गृहाणार्घ्यं मया दत्तं रोहिण्या सहितः शशिन् । गगनाङ्गणसंदीप क्षीराब्धिमथनोद्भव । भाभासितदिगन्तान्त सोमराजाय ते नमः । क्षीरोदार्णवसंभूत लक्ष्मीबन्धो निशाकर । गृहाणार्घ्यं मया दत्तं गणेशप्रीतिवर्धन । समस्ततारकाधीश जगदाह्लादकारक । गृहाणार्घ्यं मया दत्तं बालचन्द्र नमोऽस्तु ते ।' इत्यनेनार्घ्यान्दत्त्वा 'शंकरस्य ललाटस्थं तिलकं तु मनोहरम् । अत्रिनेत्रसमुद्भूतं नमामि शशिनं सदा । नभोमण्डलदीपाय शिरोरत्नाय धूर्जटेः । कलाभिर्वर्धमानाय नमश्चन्द्राय चारवे।' इति चन्द्रप्रार्थनां कुर्यात् । ततो गणेशायार्घ्यं दद्यात् । 'गणेशाय नमस्तुभ्यं सर्वसिद्धिप्रदायक । संकष्टं हर मे देव गृहाणार्घ्यं नमोऽस्तु ते । गौरीसुत नमस्तेऽस्तु सततं मोदकप्रिय । सर्वसंकष्टनाशाय गृहाणार्घ्यं नमोऽस्तु ते । कृष्णपक्षे चतुर्थ्यां वै पूजितोऽसि शुभाप्तये । गृहाणार्घ्यं मया दत्तं मम कामान्प्रपूरय ।' इत्यर्घ्यत्रयं दत्त्वा तिथ्यर्घ्यं दद्यात् । 'तिथीनामुत्तमे देवि गणेशप्रियवल्लभे । गृहाणार्घ्यं मया दत्तं सर्वसिद्धिप्रदायिके ।' चतुर्थ्यै नमोऽर्घ्यम् । 'यद्दत्तं भक्तिमात्रेण पत्रं पुष्पं फलं जलम् । निवेदितं च नैवेद्यं तद्गृहाणानुकम्पया । आवाहनं न जानामि न जानामि विसर्जनम् । पूजां चैव न जानामि त्वं गतिः परमेश्वर । कर्मणा मनसा वाचा त्वत्तो नान्या गतिर्मम । अन्तश्चरेण भूतानामिष्टं त्वं परमेश्वर । देव योनिसहस्रेषु येषु येषु व्रजाम्यहम् । तेषु तेष्वचला भक्तिरच्युताऽस्तु सदा त्वयि । देवो दाता च भोक्ता च देवः सर्वमिदं जगत् । देवो जयति सर्वत्र यो देवः सर्वमेव हि ।' अर्घ्यपात्रमुद्धृत्य । 'साधु वाऽसाधु

वा कर्म यद्यदाचरितं मया । तत्सर्वं भगवन्देव गृहाणाराधनं परम् ।' इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारजाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्कृतं यदर्चितं तत्सर्वं ब्रह्मार्पणं भवतु । श्रीगुरुदेवसमर्पितमस्तु । 'रश्मिरूपा गणेशस्य पूजिता याश्च देवताः । गणेशाङ्गे विलीनास्ताः सन्तु सर्वसुखावहाः ।' इति पुष्पाञ्जलिं दत्त्वा दन्तपाशाङ्कुशविघ्नपरशुलड्डुकबीजपूराख्याः सप्तमुद्राः प्रदर्श्य व्रतसमर्पणं कृत्वा ब्राह्मणभोजनस्य संकल्पं कृत्वा सुवर्णमूर्तेश्च दानं कृत्वोद्वासयेत् । फलादावावाहनं चेद्विसर्जनमात्रम् । दानमन्त्रस्तु—'सुवर्णनिर्मितं देवं रक्तवस्त्रेण संयुतम् । ददाम्यहं द्विजेन्द्राय प्रीयतां गणनायकः ।' विसर्जनमन्त्रस्तु—'आयातस्त्वमुमापुत्र ममानुग्रहकाम्यया । पूजितोसि मया भक्त्या गच्छ स्थानं स्वकं प्रभो ।' उत्तिष्ठ ब्रह्मणस्पते इत्यादिना विसर्जनं कृत्वा ब्राह्मणान्भोजयित्वा स्वयमपि वाग्यतोऽतैलपक्वभोजनं कुर्यात् । इति संकष्टचतुर्थीपूजाविधिः । अथ कथा । सूत उवाच । 'अरण्ये वर्तमानं तु पाण्डुपुत्रं युधिष्ठिरम् । सबान्धवंसुखासीनमाययौव्यासआदरात् । तं दृष्ट्वा मुनिशार्दूलं व्यासं प्रत्याययौ नृपः । मधुपर्कं तथाऽर्घ्यं च कृत्वा तस्मै ह्यवोचत ।' युधिष्ठिर उवाच—'अद्य मे सफलं जन्म भवदागमनं यतः । संकष्टा ये तु मे जाता वने वननिवासिनः । ते सर्वे विलयं याता भवतां दर्शनेन हि । आत्मानं साधु मन्येऽहं राज्यतृष्णापराङ्मुखम् । दुःखितं मां कथं स्वामिन्राज्यतृष्णाविचेतसम् । इमे भीमादयः सर्वे बान्धवा व्यथयन्ति माम् । दुराधर्षाः सुवीर्या हि मच्छासनविधौ रताः । इयं तु द्रौपदी साध्वी राजपुत्री पतिव्रता । राज्योपभोगयोग्या हि साऽद्य दुःखोपभोगिनी । मया च किं कृतं व्यास पूर्वकर्मानुवर्तिना । दायादैर्वञ्चितं राज्यं द्यूतच्छद्मरतैस्तथा । पराजिता वयं ब्रह्मन्सुहृद्भिर्बन्धुभिः सह । वनं प्रस्थापिता दुष्टैरित्थमुक्तं च कौरवैः । कुर्वन्तु गमनं शीघ्रं वनाय भवदादयः । इत्थं निराकृताः सर्वे तदा तु वनमागताः । अहं तदाप्रभृत्याप्तान्न द्रक्ष्यामि भवादृशान् । यद्यस्ति व्रतमेकं हि सर्वसंकष्टनाशनम् । राज्यदं राज्यमुक्तानां दुःखितानां सुखप्रदम् । पुरा केन कृतं भूमौ फलदं दुःखनाशनम् । तत्सर्वं कथय ब्रह्मन्ननुग्राह्योऽसि सुव्रत । इत्युक्तवन्तं राजानं दुःखसंकष्टभाजनम् । उवाच कृपया व्यासो धर्मज्ञं मेदिनीपतिम् ।' व्यास उवाच—' नास्ति भूमण्डले राजा त्वत्समो धर्मतत्परः । कथयामि व्रतं तुभ्यं व्रतानामुत्तमं व्रतम् । संकष्टनाशनं नित्यं शुभदं फलदं भुवि । यत्कृत्वा सर्वकार्याणां निष्पत्तिर्जायते भुवि । यस्तु कुर्याद्व्रतमिदं प्राप्नोति स फलं पुमान् ।

विद्यार्थी लभते विद्यां धनार्थी लभते धनम् । योषिद्वापि पुमान्वापि करोति व्रतमुत्तमम् । ईप्सितं फलमाप्नोति पतिना सह मोदते । संकष्टेषु सदाक्षिप्तो मानवो ग्रहपीडितः । सदा कुर्याद्व्रतमिदं सर्वसंकष्टनाशनम् । यत्कृत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः । आसीत्पुराकृतयुगे चन्द्रसेनोमहीपतिः । साम्राज्यदीक्षितो नित्यं मन्त्रिभिः परिवारितः । सुहृद्भिर्बन्धुभिश्चैव तथा पुत्रैश्च संयुतः । तस्यापि हितकर्त्री च पत्नी गुणवती प्रिया । नाम्ना रत्नावती चासीत्पतिव्रतपरायणा । तयोः परस्परं प्रीतिरभवच्च गुणाधिका । कदाचिद्दैवयोगेन हृतं राज्यं च वैरिभिः । कोशो बलं चापहृतं विध्वस्तं बन्धुभिः सह । रत्नवत्या तया सार्धं निर्गतो भूमिवल्लभः । वनं क्षुधायतिक्रान्तो ह्येकवासास्तथार्दितः । इतस्ततश्चरन्राजा आतपक्लमितेक्षणः । एकाकी वनमासाद्य तया सार्धं युधिष्ठिर । तदा सूर्यास्तसमयेऽरण्ये शिवानिनादिते । व्याघ्राश्च चुक्रुशुस्तत्र पर्जन्यो वै ववर्ष ह । एतस्मिन्नन्तरे राज्ञीं कृच्छ्रेणात्यन्तदुःखिताम् । तां विलोक्य नृपश्रेष्ठो दुःखेनात्यन्तपीडितः । ततः प्रभातसमये मार्कण्डेयं महामुनिम् । ददर्श राजा तत्रैव विस्मयाकृष्टमानसः । उपगम्य शनैस्तत्र दण्डवत्पतितो भुवि । उवाच पश्चाद्भूपोऽसौ मार्कण्डेयं महामुनिम् । ' राजोवाच । 'किं कृतं हि मया ब्रह्मन्दुष्कृतं कथयस्व मे । केन कर्मविपाकेन राज्यलक्ष्मीः पराङ्मुखी ।' मार्कण्डेय उवाच । 'शृणु राजन्प्रवक्ष्यामि यत्त्वया पूर्वजन्मनि । कृतं हि लुब्धकश्चासीर्निर्गतस्त्वं महावनम् । मृगशार्दूलशशकानहनस्त्वं वने तदा । तस्यां रात्रौ भ्रमन्राजंश्चतुर्थ्यां श्रावणस्य हि । दृष्टं शुभं च कृष्णायां तडागं पृथु निर्मलम् । तत्तीरे नागकन्यानां समूहं रक्तवाससाम् । गणेशं पूजयन्तीनां दृष्ट्वा तं नियमं शुभम् । उपगम्य शनैस्तत्र दृष्टवानसि पार्थिव । आर्याः किमेतत्सर्वं हि कथयध्वं ममाग्रतः ।' नागकन्या ऊचुः । 'पूजयामो गणेशं हि सर्वसिद्धिप्रदायकम् । शान्तिदं पुष्टिदं नित्यं सर्वसंकष्टनाशनम् । पुनः पृष्टास्त्वया तास्तु किं दानं कोऽत्र पूज्यते । ' कन्या ऊचुः । ' यदा चोत्पद्यते भक्तिस्तदा पूज्यो गणाधिपः । कृष्णायां च चतुर्थ्यां वै रक्तपुष्पैः प्रपूजयेत् । गन्धैर्धूपैश्च नैवेद्यैर्भक्तिभावसमन्वितैः । विविधान्मोदकान्कृत्वा पूरिका घृतपाचिताः । निवेदयेद्गणेशाय ह्येवं कुर्याद्व्रतं त्विदम् । ततो गृहीत्वा राजेन्द्र त्वया संकष्टनाशनम् । निर्गतस्त्वं वनात्तस्माद्ध्यायन्देवं गणेश्वरम् । तत्प्रभावेण राजेन्द्र गृहं लक्ष्म्या युतं बभौ । जातं हि धनधान्यादिपुत्रपौत्रैः समाकुलम् । रत्नैर्नानाविधैश्चैव गोधनैश्च समन्वितम् । कस्मिंश्चित्समये राजन्धनमोहेन मोहितः । विस्मृतो व्रतराजो हि त्वया मन्देन भूतिदः ।

ततः प्राप्तं हि पञ्चत्वं त्वया प्राणविनाशनम्। तत्प्रभावाद्राजकुले जातस्त्वं विमले नृप। त्वया जन्मप्रभृतितो राज्यं प्राप्तमिह प्रभो। सुहृन्मित्रप्रियायुक्तं प्राप्तं हि विमलं वपुः। कृतावज्ञा व्रतस्यान्ते तत्प्राप्तं फलमीदृशम्।' राजोवाच।'अधुना तत्करिष्येऽहं व्रतं कथय सुव्रत। यत्कृत्वासकलंराज्यं संदेहं मा कुरुष्व हि।' मार्कण्डेय उवाच। 'व्रतं संकल्पपूर्वं त्वं कुरुराजर्षिसत्तम। प्राप्स्यसित्वं निजं राज्यं संदेहं मा कुरुष्व हि।' व्यास उवाच।'ऋषेस्तद्वचनं श्रुत्वा तदादिष्टं महीपतिः।अकरोत्तद्व्रतं भक्त्या मुनिश्चान्तर्दधे नृप। आयातास्तत्क्षणात्सर्वेमन्त्रिणःस्वस्य सैनिकाः। बभूव तैःपरिवृतः साक्षादाखण्डलो यथा। लब्धं राज्यंस्वकीयं वै गणेशस्यप्रसादतः। बुभुजेमेदिनींसर्वां पुत्रपौत्रसमन्वितः। तस्मात्त्वमपि राजेन्द्र कुरु संकष्टनाशनम्। व्रतं सिद्धिप्रदं नृणां स्त्रीणां चापि फलप्रदम्। यत्कृत्वा सकलान्भोगाननायासेन विन्दति। विद्यार्थीलभतेविद्यां धनार्थीलभते धनम्। योषितां या पतिव्रता करोति व्रतमुत्तमम्। ईप्सितं फलमाप्नोति पतिना सह मोदते। कुमारी व्रतसामर्थ्याल्लभते पतिमुत्तमम्। विधवा यदि वा कुर्याद्वैधव्यं न पुनर्भवेत्। पुत्रार्थी लभते पुत्रान्व्रतस्यास्य प्रभावतः।' युधिष्ठिर उवाच। 'सविस्तरं व्रतं ब्रूहि कृपया कष्टनाशनम्। दाने विधिं च विधिवत्सर्वं ब्रूहि तपोधन।' व्यास उवाच 'यदा सं क्लेशतो मर्त्यो नानादुःखैश्च दारुणैः। तदा कृष्णचतुर्थ्यां वै पूजनीयो गणाधिपः। तैलाभ्यङ्गं प्रकुर्वीत रात्रौपूजांसमाचरेत्। रक्तपुष्पैश्च धूपैश्च एभिर्नामपदैः पृथक्। आवाहनं गणेशाय आसनं विघ्ननाशिने। पाद्यं लम्बोदरायेति अर्घ्यं चन्द्रार्धधारिणे। विश्वप्रियायाचमनं स्नानं वै ब्रह्मचारिणे। भवानीप्रीतिकर्त्रे च धूपं दद्याद्यथाविधि। गजकर्णाय वै दीपं नैवेद्यमघनाशिने। ताम्बूलं सिद्धिदायेति फलं संकष्टनाशिने। ततो दूर्वाङ्कुरैः पूज्य एकविंशतिसंख्यया। दशभिर्नामभिर्द्वन्द्वे एकां तां सर्वनामभिः। गणाधिप नमस्तेऽस्तु उमापुत्राघनाशन। एकदन्तेभवक्त्रेति तथा मूषकवाहन। विनायकेशपुत्रेति सर्वसिद्धिप्रदायक। कुमारगुरवे तुभ्यं पूजयामि प्रयत्नतः। एवं पूजा प्रकर्तव्या प्रार्थयेद्गणनायकम्। संसारपीडाव्यथितं हि मां सदा संकष्टभूतं सुमुख प्रसीद। त्वं त्राहि मां मोचय कष्टसंघान्नमो नमो विघ्नविनाशनाय। ततस्तु वायनं दद्यान्मोदकान्घृतपाचितान्। विप्राय दशसंख्याकान्दश चात्मनि योजयेत्।एकं नैवेद्यरूपेण गणेशाय निवेदयेत। ततस्तु मण्डले चन्द्रं संपूज्य विधिवद्व्रती। चन्द्रपूर्वं गणेशाय दुग्धेनार्घ्यं प्रदापयेत्। पूजां जपं तथा होमं कुर्यान्मूलेन मन्त्रवित्। श्रावणे सिद्धिलड्डूकान्नभस्ये दधिभोजनम्। आश्विने चोपवासं च कार्तिके दधिभक्तकम्। मार्गमासे निराहारं

पौषे गोमूत्रभक्षणम् । तिलांश्च भक्षयेन्माघे फाल्गुने घृतशर्कराम् । चैत्रे मासि पञ्च- गव्यं माधवे शतपत्रिकाम् । घृतस्य भोजनं ज्येष्ठे आषाढे मधुभक्षणम् । इति मास- व्रतं कृत्वा नरो मुच्येत संकटात् । भुञ्जीयाद्वा स्वयं विप्रैः सह स्वस्थस्तु सुव्रतः । अशक्तश्च ततः सिद्धिं लभते च न संशयः । कार्यसिद्धौ च जातायां कुर्यादुद्यापनं बुधैः । सौवर्णं वक्रतुण्डं तु भक्त्या कृत्वा विधानतः । पूर्वोक्तेन विधानेन पूजयेद्भ- क्तिमान्नरः । चन्दनेन सुगन्धेन पुष्पैर्नानाविधैः शुभैः । ज्योत्स्नापते नमस्तुभ्यं नम- स्ते ज्योतिषां पते । नमस्ते रोहिणीकान्त गृहाणार्घ्यं नमोस्तु ते । सौम्याय देवदे- वाय ग्रहराजाय शालिने । अर्घ्यं गृहाण देवेश द्विजराज नमोऽस्तु ते । क्षीरोदा- र्णवसंभूत अत्रिनेत्रसमुद्भव । गृहाणार्घ्यं मया दत्तं रोहिण्या सहितः शशिन् । गगना- ङ्गणसंदीप क्षीराब्धिमथनोद्भव । भाभासितदिगन्तात सोमराजाय ते नमः । क्षीरोदार्णव- संभूत लक्ष्मीबन्धो निशाकर । गृहाणार्घ्यं मया दत्तं गणेश प्रीतिवर्धन । समस्ततार- काधीश जगदाह्लादकारक । गृहाणार्घ्यं मया दत्तं बालचन्द्र नमोऽस्तु ते । शंकरस्य ललाटस्थंतिलकंतु मनोहरम् । अत्रिनेत्रसमुद्भूतंनमामिशशिनं सदा । इति चन्द्रप्रार्थ- ना । नभोमण्डलदीपाय शिरोरत्नाय धूर्जटेः । कलाभिर्वर्धमानाय नमश्चन्द्राय चारवे। गजानन नमस्तुभ्यं सर्वसिद्धिप्रदायक । गृहाणार्घ्यं मया दत्तं संकष्टं नाशयाशु मे । कृष्णपक्षे चतुर्थ्यां वै पूजितोऽसि शुभाप्तये । गृहाणार्घ्यं मया दत्तं मम कामान्प्रपूरय । तिथीनामुत्तमे देवि गणेशप्रियवल्लभे । सर्वसंपत्प्रदे देवि गृहाणार्घ्यं नमोऽस्तु ते । एवं पूजा प्रकर्तव्या शक्त्या विप्रांश्च पूजयेत् । स्वयमेव तु भुञ्जीत वाग्यतो बन्धुभिःसह । रात्रौ जागरणं कुर्याद्यथाशक्त्या जितेन्द्रियः । भूमिशायी जितक्रोधो लोभदम्भवि- वर्जितः । प्रतिमासे तु यः कुर्यात्त्र्यब्दमेकाब्दमेव वा । अथवा जन्मतः कुर्यान्न दुःखं जायते ध्रुवम् । दारिद्र्यं न भवेत्तस्य संकष्टाच्च प्रमुच्यते । शृण्वन्ति ये व्रतमिदं स्वयमी- दृशं हि ते वै सुखं भुवि मनोरथपूर्णचित्ताः । नित्यं भवन्ति ललनाः पुरुषैः सुखिन्यः सत्पुत्रपौत्रधनधान्ययुताः पृथिव्याम् ।' सूत उवाच । 'एवमुक्त्वा ततो व्यासस्तत्रैवान्त- रधीयत । युधिष्ठिरस्तु तत्सर्वमकरोद्व्रतमुत्तमम् । तेन व्रतप्रभावेण धर्मो राज्यमवाप ह । हत्वा रिपून्रणे सर्वान्सुहृद्बन्धुयुतैस्तथा । यज्ञान्नानाविधान्कृत्वा ततः सुखमवा- प्तवान् । प्रद्युम्नेन कृतं पश्चाद्गणनाथस्य तोषणम् । कृत्वा बाणासुरे युद्धे जयं प्राप्तो ह्यधोक्षजः । आसीनो ह्युखया सार्धमनिरुद्धो महीपते । अन्यैर्देवासुरनरैः कृतं विघ्ने- शतुष्टये । ऋषिभिर्दानवैश्चान्यैर्यक्षगन्धर्वकिंनरैः।' इति भविष्योत्तरपुराणे व्यासयुधिष्ठि- रसंवादे संकष्टनाशनव्रतकथा संपूर्णा ।

अथ पार्थिवगणेशव्रतविधिः। 'शमीगर्भाच्च वल्मीकान्मूलादश्वत्थतोऽपि च। कुलालचक्रयन्त्रोत्थान्नदीकूलगतां मृदम्। तीर्थे देवकुले चापि गृहे वापि समाचरेत्।' प्रतिमामिति शेषः। गणेशाय नमो मृदाहरणम्। गणपतये नमः सिञ्चनम्। हेरम्बाय नमः संघट्टनम्। धरणीधराय नमः प्रतिष्ठापनम्। महागणपतये नमः आवाहनम्। लक्षलाभकर्त्रे नमः स्नानम्। शिवप्रियाय नमः पूजनम्। क्षिप्राय नमः क्षमापनम्। अमोघसिद्धये नमो विसर्जनम्। 'अनेनैव विधानेन मौनेन प्रतिमां यजेत्। वामहस्ते स्थितां दिव्यां संपूज्याथ विसर्जयेत्। प्रथमादिविभेदेन विशेषाः स्युरिमे स्मृताः। रक्तचन्दनगन्धो वै करवीरं च पुष्पकम्। दशाङ्गो गुग्गुलो धूपो नैवेद्यं च गुडौदनम्। जातीपुष्पं द्वितीये तु नैवेद्यं शर्करा तथा। तृतीये चम्पकं पुष्पं नैवेद्य लड्डुकं मतम्। चतुर्थे बकुलं पुष्पं नैवेद्यं तु ह्यपूपकम्। पञ्चमे शतपत्रं तु नैवेद्यं वटकं तथा। षष्ठे कह्लारकं पुष्पं नैवेद्यं पूरिका मता। सप्तमे चैव मन्दारं नैवेद्यं घारिका स्मृता। अष्टमे ह्यर्कपुष्पं च भक्तं नैवेद्यमुच्यते। नवमेऽगस्तिपुष्पं च नैवेद्यं पायसं स्मृतम्। दशमे रिङ्गिणीपुष्पं दुग्धं नैवेद्यमुच्यते। एकादशे कदम्बं च नैवेद्यं पञ्चखाद्यकम्। द्वादशे कुन्दपुष्पं च नैवेद्यं कदलीफलम्। त्रयोदशे मालतीपुष्पं नैवेद्यं दाडिमीफलम्। चतुर्दशेशमीपुष्पंनैवेद्यंजाम्बवफलम्। षोडशे बिल्वपत्रं च द्राक्षानैवेद्यमेव च। विष्णुक्रान्ता सप्तदशे कलिङ्गं च निवेदयेत्। शतावरी ह्यष्टादशे मधूकं फलमेव च। एकोनविंशे च तथा भृङ्गराजं च खारिका। विंशके च शमीपत्रं प्रियालं च निवेदयेत्। एकविंशे च दूर्वा च नैवेद्यं च घृतौदनम्। दिने दिने तथा दूर्वावृद्धिः कार्या प्रयत्नतः। एकविंशतिमूर्तीर्वा प्रत्यहं पूजयेन्नरः। त्रिःसप्तदिनपर्यन्तं क्षिप्रं सिद्धिः प्रजायते। रक्तचन्दनगन्धो वा सर्वाभावे तथाऽक्षताः। पुष्पार्थे च तथा दूर्वा नैवेद्यं पञ्चखाद्यकम्। एकान्नाहारशीलः स्याद्भूमिशायी जितेन्द्रियः। भाद्रे मासि चतुर्थ्यां तु उद्यापनविधिं चरेत्। चतुर्थ्यां वारणं हैमं पलेनापि तदर्धकम्। सौवर्णं गणपं चापि विधिना पूजयेन्नरः। तद्वत्समाहरेत्सम्यगेव विंशतिपत्रिकाः। रात्रौ जागरणं कुर्याद्गीतवाद्यादिमङ्गलैः। सहस्रनामस्तोत्रं च प्रभाते ह्यरुणोदये। कृत्वा नित्यविधिं सर्वमागमोक्तविधानतः। अष्टद्रव्यैर्गणेशस्य मोदकैः पायसेन वा। रम्भाफलैः सलाजैश्च अष्टोत्तरसहस्रकम्। अष्टोत्तरशतं वापि ततः पूर्णाहुतिं हुनेत्। आग-

---

१ आनीयेति शेषः।

मोक्तविधानेन वैदिकेनाथ वा यजेत् । दिक्पालेभ्यो बलिं दत्त्वा अभिषेकं समाचरेत् । आचार्यं पूजयेत्पश्चाद्वस्त्रालंकारभूषणैः । तस्मै तां प्रतिमां दद्यात्संपूज्य विधिवत्पुनः।' दानमन्त्रः–'यमामनन्ति विश्वेशं विश्वनाथमुमासुतम् । विश्वेश्वरं क्षिप्रचरं तुभ्यं द्दास्याम्यभीष्टदम् । विश्वेश्वरः प्रीयतां मे क्षिप्रकारी शिवप्रदः । हैमवारणदानेन सर्वविघ्नं विनश्यति । ततो गां दक्षिणां दद्यादेकवर्णां पयस्विनीम् । सहस्रं वा शतं वापि एकविंशतिमेव च । ब्राह्मणान्भोजयेत्पश्चात्पायसाज्यैः सशर्करैः । एवं कृते तु देवर्षे सर्वसिद्धिः प्रजायते ।' इति चिन्तामणिकल्पे पार्थिवगणपतिपूजाविधिः समाप्तः ।

उक्तं च हेमाद्रौ विष्णुपुराणे–'चतुर्थ्यां वारणं हैमं पलादूर्ध्वं तु शोभनम् । कारायित्वाङ्कुशयुतं तिलद्रोणोपरि न्यसेत् । वस्त्रपुष्पैः पूजयित्वा नैवेद्यं विनिवेदयेत् । ततस्तुब्राह्मणेदद्याद्गणेशःप्रीयतामिति । कार्यारम्भेषु सर्वेषु तस्य विघ्नं न जायते । राज्यकामस्तथा राज्यं श्रीकामः श्रियमाप्नुयात् । वारणाः सप्त जन्मानि भवन्ति मदविह्वलाः ।' इदं चैत्रे श्रावणे कार्तिके कार्यमिति हेमाद्रिः । अथ दूर्वालक्षणम् ।'सप्तपत्रास्तु हरिता दूर्वाः प्रादेशसंमिताः । यदि वा पञ्चपत्राः स्युर्विस्तृताः षड्भिरङ्गुलैः । प्रत्येकं मूलमन्त्रेण लक्षपूजां समाचरेत् । समाप्तौ तु महापूजां हैमीं दूर्वां समर्पयेत् ।' इति दूर्वाप्रकारः । प्रथमदिनानुसारेण क्रमेण पुष्पनैवेद्यक्रम उच्यते । करवीरपुष्पं कह्लारपुष्पं कदम्बपुष्पं शतावरीपु० जातीपु० मन्दारपुष्पं कुन्दपु० भृङ्गराजपु० चम्पकपु० अर्कपुष्पं मालतीपु० शमीपु० बकुलपु० अगस्तिपु० दाडिमीपु० दूर्वा पु० कमलपुष्पं रिङ्गिणीपु० अपामार्गपु० विल्वपु० विष्णुक्रान्तापुष्पम् । अथ हेमाद्रौ स्कान्दे । ऋषय ऊचुः–'दारिद्र्यशोककष्टाद्यैः पीडितानां च वैरिभिः । राज्यभ्रष्टैर्नृपैः सर्वैः क्रियते किं शुभार्थिभिः । धनहीनैर्नरैः स्कन्द सर्वोपद्रवपीडितैः । विद्यापुत्रगृहभ्रष्टै रोगयुक्तैः शिवार्थिभिः । कर्तव्यं किं वदोपायं पुनः क्षेमार्थसिद्धये ।' स्कन्द उवाच-'शृणुध्वं मुनयःसर्वे व्रतानामुत्तमं व्रतम् । संकष्टतरणं नामामुत्रेह सुखदायकम् । येनोपायेन संकष्टं तरन्ति भुवि देहिनः । यद्व्रतं देवकीपुत्रः कृष्णो धर्माय दत्तवान् । अरण्ये क्लिश्यमानाय पुनः क्षेमार्थसिद्धये । यथा कथितवान्पूर्वं गणेशो मातरं प्रति । तथा कथितवाञ्छ्रीशो द्वापरे पाण्डवान्प्रति ।' ऋषय ऊचुः–'कथं कथितवान्पूर्वं पार्वतीं-श्रीगणेश्वरः । तथा पृच्छन्ति मुनयो लोकानुग्रहकाङ्क्षिणः ।' स्कन्द उवाच– 'पुरा कृतयुगे पुण्ये हिमाचलसुता सती । तपस्तप्तवती भूरीः न दृष्टः शंकर पतिः ।

तदा सस्मार हेरम्बं गणेशं पूर्वजं सुतम्। तत्क्षणादागतं दृष्ट्वा गणेशं परिपृच्छति।' पार्वत्युवाच- 'तपस्ततं मया घोरं दुस्तरं लोमहर्षणम्। न प्राप्तः पार्वतीकान्तो गिरीशो मम वल्लभः। संकष्टतरणं दिव्यं व्रतं नारद उक्तवान्। त्वदीयं तद्व्रतं तावत्कथयस्व पुरातन। तच्छ्रुत्वा पार्वतीवाक्यं संकष्टतरणं व्रतम्। प्रीत्या कथितवान्देवो गणेशो ज्ञानसिद्धिदः।'श्रीगणेश उवाच। 'श्रावणे बहुले पक्षे चतुर्थ्यां तु विधूदये। गणेशं पूजयित्वा तु चन्द्रायार्घ्यं च दीयते।' पार्वत्युवाच—'क्रियते केन विधिना किं कार्यं किं च पूजनम्। उद्यापनं कदा कार्यं मन्त्राः के स्युस्तु पूजने। किं ध्यानं श्रीगणेशस्य गणेश वद विस्तरात्।' गणेश उवाच—' चतुर्थ्यां प्रातरारभ्य दन्तधावनपूर्वकम्। ग्राह्यं व्रतमिदं पुण्यं संकष्टतरणं शुभम्। कर्तव्यमिति संकल्प्य व्रतेऽस्मिन्गणपं स्मरेत्।' स्वीकारमंत्रः—' निराहारोऽस्मि देवेश यावचन्द्रोदयो भवेत्। भोक्ष्यामि पूजयित्वाऽहं संकष्टात्तारयस्व माम्।' 'एवं संकल्प्य राजेन्द्र स्नात्वा कृष्णतिलैः शुभैः। आह्निकं तु विधायैवं पश्चात्पूज्योगणाधिपः। त्रिभिर्माषैस्तदर्धेन तृतीयांशेन वा पुनः। यथाशक्त्या तु वा हैमी प्रतिमा क्रियतेऽमला। माषमात्रा तदर्धस्य तृतीयांशेन वा पुनः। हेमाभावे तु रूप्यस्यताम्रस्यापिथथासुखम्। सर्वथैव दरिद्रेण क्रियते मृन्मयी शुभा। वित्तशाठ्यं न कर्तव्यं कृते कार्यं विनश्यति।जलपूर्णं वस्त्रयुतं कुम्भं तस्याग्रतो न्यसेत्। पद्ममष्टदलं पुण्यं गन्धपुष्पैः प्रपूजयेत्।'श्रीगणेश उवाच-'एवं व्रतं तु कर्तव्यं प्रतिमासं त्वयाऽद्रिजे। यावज्जीवं तु वा वर्षाण्येकविंशति पार्वति। अशक्त्या त्वेकवर्षं वा प्रतिवर्षमथापि वा। उद्यापनं तु कर्तव्यं चतुर्थ्यां श्रावणे सिते। 'स्वीकारश्च तथा कार्यः संकष्टहरणे तिथौ। गाणपत्यं तथाचार्यं सर्वशास्त्रविशारदम्। श्रद्धया प्रार्थयेदादौ तेनोक्तं विधिमाचरेत्। एकविंशतिविप्रांश्च वस्त्रालंकारभूषणैः। पूजयेद्गोहिरण्याद्यैर्हुत्वादौ विधिनाऽनलम्। होमयेन्मोदकान्पश्चात्तिलजान्घृतसंयुतान्। अष्टोत्तरसहस्रं वा नो चेदष्टोत्तरं शतम्। अष्टाविंशतिसंख्याकैर्मोदकैर्वा सशर्करैः। अशक्तोऽष्टौ शुभान्स्थूलाञ्जुहुयाज्जातवेदसि। पुष्पमण्डपिका कार्या गणेशाह्लादकारिणी। पूजयेत्तत्र गणपं भक्तसंकष्टनाशनम्। गीतैर्वादित्रनिनदैर्भक्तिभावपुरस्कृतैः। पुराणवेदाध्ययनैस्तोषयेच्छ्रीगणेश्वरम्। एवं जागरणं कार्यं शक्त्या दानादिकं तथा। सपत्नीकमथाचार्यं भूषयेद्वस्त्रभूषणैः। उपानच्छत्रगोदानकमण्डलुफलादिभिः। शय्यावाहनभूदानधनधान्यगृहादिभिः। यथाशक्त्या तु कर्तव्यं दारिद्र्याभावमिच्छता। एकविंशतिविप्रांश्च भोजयेन्नामभिर्मम। गजास्यो विघ्नराजश्च लम्बोदरशिवासुतौ। वक्रतुण्डः शूर्पकर्णः

कुब्जश्चैव गणेश्वरः । विघ्ननाशो हि विकटो वामनः सर्वदैवतम् । सर्वार्तिनाशी भगवान्विघ्नहन्ता च धूम्रकः । सर्वदेवाधिदेवश्च सर्वे षोडश वै स्मृताः । एकदन्तः कृष्णपिङ्गो बालचन्द्रो गणेश्वरः । गणपश्चैकविंशश्च सर्व एते गणेश्वराः । दुर्गोपेन्द्रश्च रुद्रश्च कुलदेव्याधिक भवेत् । विशेषेणाष्टदशभिर्मोदकैर्वायनं स्मृतम् । एवं कृतविधानेन प्रसन्नोऽहं न संशयः । ददामि वाञ्छितान्कामांस्तद्व्रतं मत्प्रियं कुरु ।' श्रीकृष्ण उवाच–'एवं तु कथितं सर्वं गणेशेन स्वयं नृप । पार्वत्या तत्कृतं राजन्व्रतं संकष्टनाशनम् । व्रतेनानेन सा लेभे महादेवं पतिं स्वयम् । तत्कुरुष्व महाराज व्रतं संकष्टनाशनम् । चतुर्थी संकटा नाम स्कन्देन कथिता ऋषे । ऋषिभिर्लोककामैस्तैर्लोके ततमिदं शुभम् ।' सूत उवाच–'कृतं युधिष्ठिरेणैवराज्यकामेनवैद्विजाः । तेन शत्रून्निहत्याजौ स्वराज्यं प्राप्तवान्स्वयम् । तस्मात्सर्वप्रयत्नेन व्रतं कार्यं विचक्षणैः । येन धर्मार्थकामाश्च मोक्षं चापि लभेत्किल । यः करोति व्रतं विप्राः सर्वकामार्थसिद्धिदम् । स वाञ्छितफलं याति व्रजेत्पश्चाद्गणेशताम् । यदा यदाऽऽपदं विप्रा नरः प्राप्नोति संकटम् । तदा तदा प्रकर्तव्यं व्रतं संकष्टनाशनम् । त्रिपुरं हन्तुकामेन कृतं देवेन शूलिना । त्रैलोक्यभूतिकामेन महेन्द्रेण च तत्कृतम् । रावणेन कृतं पूर्वं बलिबन्धनसंकटे । स्वकीयं प्राप्तवान्राज्यं गणेशस्य प्रसादतः । सीतान्वेषणकामेन कृतं वायुसुतेन च । संकल्प्य दृष्टवान्सोऽयं सीतां रामप्रियां पुरा । दमयन्त्या कृतं पूर्वं नलान्वेषणकारणात् । सा पतिं नैषधं लेभे पुण्यश्लोकं द्विजोत्तमाः । अहल्यापि पतिं लेभे गौतमं प्राणवल्लभम् । विद्यार्थी लभते विद्यां धनार्थी धनमाप्नुयात् । पुत्रार्थी पुत्रमाप्नोति रोगी रोगात्प्रमुच्यते ।' इति हेमाद्रौ संकष्टचतुर्थीव्रतं समाप्तम् ।

अथ संकष्टहरचतुर्थीव्रतोद्यापनम् । गणेश उवाच–'सदा कृष्णचतुर्थ्यां वै मोदकाद्यैः प्रपूज्य माम् । रोहिणीसहितं त्वां हि समभ्यर्च्यार्घ्यदानतः । यथाशक्त्या च मद्रूपंस्वर्णेनपरिकल्पितम् । दत्त्वा द्विजाय भुक्त्वाऽथ कथां श्रुत्वा विधानतः। यावज्जीवं तु कर्तव्यमेकविंशतिसंख्यया । अशक्तौ वर्षमेकं हि प्रतिमासमथापि वा । व्रतं कृत्वा विधानेन तत उद्यापनं चरेत् । कार्यसिद्धौ च जातायां यथाशक्त्या विधानतः। भाद्रशुक्लचतुर्थ्यां वा अन्यस्यामपि तत्तिथौ । प्रातर्मण्डपिका कार्या वस्त्रैर्माल्यादिभिःशुभैः । वेदिं कृत्वा विधानेन पञ्चरङ्गविभूषिताम् । आचार्यवरणं कृत्वा ततः कृत्यं समाचरेत् । स्थापयेदव्रणं कुम्भं धान्यस्योपरि लोहितम् । यथाशक्त्या च मद्रूपं सुवर्णपरिनिर्मितम् । वस्त्रद्वयसमाच्छन्नं मोदकाद्यैः प्रपूजयेत् । रक्ताम्बरधरो मर्त्यो ब्रह्मचर्यरतः

शुचिः । रोहिणीसहितस्त्वं च पूजांप्राप्स्यसिमत्परः । राजतं तव रूपं वै यथाशक्त्या विनिर्मितम् । षोडशैरुपचारैश्च परिपूज्य विधानतः । कुर्याच्च हवनं धीमान्स्वगृह्योक्तविधानतः । अष्टोत्तरसहस्रं तु शतं वाऽष्टाधिकं तथा । अष्टद्रव्यैश्च होतव्यं गणेशप्रीतिदायकैः । आचार्यं च सपत्नीकं गोवस्त्रादिविभूषणैः । छत्रं चोपानहौ दद्यात्कमण्डलुगृहादिभिः । संपूज्य वरणं कुर्याद्गणेशस्य च तुष्टये । गणेशमूर्तिपूजां च चन्द्रमूर्तिं तथैव च । मन्त्रेणानेन तत्सर्वं ब्राह्मणाय निवेदयेत् ।' तत्र मन्त्रः । 'दानेनानेन देवेश प्रीतोभवगणेश्वर । सर्वत्र सर्वदा देव निर्विघ्नं कुरु सर्वदा । मानोन्नतिं च सौभाग्यं पुत्रान्पौत्रांश्च देहि मे । गावो धान्यं च वासांसि दद्यात्सर्वं स्वशक्तितः । शय्यां दद्यात्ततो रम्यां सोपधानां सगेन्दुकाम् । गां सवत्सां ततो दद्यात्सर्वालंकारभूषिताम् । प्रीयतां गणनाथोऽत्र इति मन्त्रमुदीरयेत् । एकविंशतिविप्रांश्च वस्त्रालंकारभूषणैः । प्रतिपूज्य हिरण्याद्यैर्मोदकाद्यैश्च भोजयेत् । तेभ्यस्तु करकान्दद्यात्तिलपात्रसमन्वितान् । अनेन विधिना यस्तु करोति व्रतमुत्तमम् । न विघ्नैरभिभूयेत गणनाथप्रसादतः । ब्राह्मणान्भोजयित्वा तु स्वयं भुञ्जीत कामतः । मोदकापूपमधुरं लवणक्षारवर्जितम् । एवं करोति यश्चन्द्र तस्याहं सर्वदा जयम् । सिद्धिं धनं च धान्यं च ददामि विपुलां प्रजाम् । यदा यदा मनःकष्टं संदेहमुपजायते । तदा तदा तु श्रोतव्यमाख्यानं कष्टवारणम् ।' इति श्रीस्कन्दपुराणे संकष्टचतुर्थीव्रतोद्यापनं समाप्तम् । इयं सोमकल्पादिः ।

श्रावणशुक्लचतुर्थ्यां दूर्वागणपतिव्रतम् । तत्र सा मध्याह्नव्यापिनी ग्राह्या । दिनद्वये तद्व्याप्तावव्याप्तौ वा पूर्वा । 'चतुर्थीगणनाथस्य' इति बृहस्पतिवचनात् । अथ दूर्वागणपतिव्रतम् । स्कन्द उवाच । 'केन व्रतप्रभावेण सौभाग्यमतुलं भवेत् । पुत्रपौत्रधनैश्वर्यैर्मनुजः सुखमेधते । तन्मे वद महादेव व्रतानामुत्तमं व्रतम् । येन चीर्णेन देवेश नरो राज्यं च विन्दति । राज्ञीव जायते नारी अपि दासकुलोद्भवा । राजपुत्रो जयेच्छत्रून्गरुडः पन्नगानिव । ब्राह्मणो ब्रह्मवर्चस्यं प्राप्य सर्वाधिको भवेत् । वर्णाश्रमविहीनोऽपि सोऽपि सिद्धिं च विन्दति ।' ईश्वर उवाच । 'शृणु वत्स प्रवक्ष्यामि व्रतानामुत्तमं व्रतम् । अस्ति दूर्वागणपतेर्व्रतं त्रैलोक्यविश्रुतम् । भगवत्या पुरा चीर्णं पार्वत्या श्रद्धया सह । सरस्वत्यामहेन्द्रेण विष्णुनाधनदेन च । अन्यैश्च देवैर्मुनिभिर्गन्धर्वैः किंनरैर्नरैः । चीर्णमेतद्व्रतं सर्वैः पुरा कल्पे षडानन । चतुर्थी या भवेच्छुक्ला नभोमासस्य पुण्यदा । तस्यां

१—इक्षव' सक्तवो रम्भाफलानि चिपिटास्तिला । मोदका नारिकेलानि लाजा द्रव्याष्टकं स्मृतम् ।

व्रतमिदं कुर्यात्कार्तिक्यां वा षडानन । गजाननं चतुर्बाहुमेकदन्तं विपाटितम् । विधाय हेम्नाविघ्नेशं हेमपीठासनस्थितम् । तथा हेममयींदूर्वां तदाधारेव्यवस्थिताम् । संस्थाप्य विघ्नकर्तारं कलशे ताम्रभाजने । वेष्टितं रक्तवस्त्रेण सर्वतोभद्रमंडले । पूजयेद्रक्तकुसुमैः पत्रिकाभिश्च पञ्चभिः । बिल्वपत्रमपामार्गं शमीं दूर्वां हरिप्रियाम् । अन्यैः सुगन्धकुसुमैः पत्रिकाभिः सुगन्धिभिः । फलैश्च मोदकैः पश्चादुपहारं प्रकल्पयेत् । यथावदुपचारैस्तु पूजयेद्गिरिजासुतम् । नमोस्तुते नमस्तुभ्यं विश्वव्यापिन्सनातन । विघ्नौघं छिन्धि सकलमर्घ्यं पाद्यं ददामि ते ।' अर्घ्यमन्त्रः । 'गणेश्वराय देवाय उमापुत्राय वेधसे । पूजामद्य प्रयच्छामि गृहाण भगवन्नमः । विनायकाय शूराय वरदाय गजानन । उमासुताय देवाय कुमारगुरवे नमः । लम्बोदराय देवाय सर्वविघ्नापहारिणे ।' पूजनमन्त्रः । 'उमाङ्कमलसंभूतो दानवानां वधाय वै । अनुग्रहाय लोकानां स देवः पातु विश्वधृक् ।' धूपमन्त्रः । 'परंज्योतिःप्रकाशाय सर्वसिद्धिप्रदाय च । दीपं तुभ्यं प्रदास्यामि महादेवात्मने नमः ।' दीपमन्त्रः । 'गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ।' उपहारमन्त्रः । 'गणेश्वर गणाध्यक्ष गौरीपुत्र गजानन । व्रतं संपूर्णतां यातु त्वत्प्रसादादिभानन ।' प्रार्थनामन्त्रः । 'एवं संपूज्य विघ्नेशं यथाविभवविस्तरैः । सोपस्करं गणाध्यक्षमाचार्याय निवेदयेत् । गृहाण भगवन्ब्रह्मन्गणराजं सदक्षिणम् । व्रतं त्वद्वचनादद्य संपूर्तिं यातु सुव्रत ।' दानमन्त्रः । 'एवं यः पञ्चवर्षाणि कृत्वोद्यापनमारभेत् । ईप्सिताल्लँभते कामान्देहान्ते शांकरं पदम् । अथ वा शुक्लपक्षस्य चतुर्थ्यां संयतेन्द्रियः । कुर्याद्वर्षत्रयं त्वेवं सर्वसिद्धिमवाप्नुयात् । उद्यापनं विना यस्तु करोति व्रतमुत्तमम् । तेन शुक्लतिलैः कार्यं प्रातः स्नानं षडानन । हेम्ना वा रजतेनापि कृत्वा गणपतिं बुधः । पञ्चगव्यैस्तु संस्नाप्य दूर्वाभिः संप्रपूजयेत् । मन्त्रैस्तु दशभिर्भक्त्या दूर्वायुक्तैः शिखिध्वज ।' दूर्वायुक्तैरित्यनेन प्रतिमन्त्रं दूर्वानुवृत्तिरनुज्ञायते । मन्त्राश्च नामात्मकाः स्कन्दपुराणे दर्शिताः । गणाधिप नमस्तेऽस्तु उमापुत्राघनाशन । विनायकेशपुत्रेति सर्वसिद्धिप्रदायक । एकदन्तेभवक्त्रेति तथा मूषकवाहन । कुमारगुरवे तुभ्यमेभिर्नामपदैः पृथक् ।' इति । 'इत्येवं कथितं वत्स सर्वसिद्धिप्रदं शुभम् । व्रतं दूर्वागणपतेः किमन्यच्छ्रोतुमिच्छसि ।' इदं व्रतं श्रावणे वा कार्तिके वारम्भणीयम् । 'चतुर्थी या भवेच्छु-

---

१ कार्तिक्या कार्तिकसंबन्धिन्या चतुर्थ्याम् । २ हरिप्रिया—तुलसी ।

क्ला नभोमासस्य पुण्यदा। तस्यांव्रतमिदंकुर्यात्कार्तिक्यां वा षडानन।' इति वाक्यात्। यद्यपि कार्तिक्यामित्यनेन शुक्ला चतुर्थी प्रतीयते तथापि शुक्लचतुर्थीप्रतिपादकेन समभिव्याहारात्कार्तिकशुक्लचतुर्थी प्राप्यते तथा च नभोमासस्य तस्यां कार्तिक्यां वा तस्यां व्रतं कुर्यादित्यर्थः। इति सौरपुराणोक्तं दूर्वागणपतिव्रतम्।

भाद्रपदकृष्णचतुर्थी बहुलाख्या मध्यदेशे प्रसिद्धा तत्तत्त्वं पूर्वमेव निरूपितम्।

भाद्रपदशुक्लचतुर्थ्यां सिद्धिविनायकव्रतम्। सैव वरदचतुर्थी। तदुक्तं गोविन्दार्णवे वाराहे—'सुरासुरान्प्रापयन्ती गणेशं भक्तिपूर्वकम्। तस्मात्प्रादाद्वरं यस्मात्तस्माद्वरचतुर्थिका।' इति। सा तत्र मध्याह्नव्यापिनी ग्राह्या। प्रातः शुक्लतिलैरित्यादिवचनेन मध्याह्नस्य कर्मकालत्वाभिधानात्। 'चतुर्थी गणनाथस्य' इत्यादिवचनाच्च। 'मातृविद्धा प्रशस्ता स्याच्चतुर्थी गणनायके। मध्याह्ने परतश्चेत्स्यान्मातृविद्धा प्रशस्यते।' इति माधवीये स्मृत्यन्तराच्च। अत्र परतश्चेदिति वचनात्परदिन एव मध्याह्नव्यापित्वे परा अन्यथा सर्वपक्षेषु पूर्वा मातृयोगस्य प्रशस्तत्वात्। यदा वैषम्येण मध्याह्नव्याप्तिस्तदाधिकैकदेशयोगिनी ग्राह्या। इयमेव रविवारेण भौमवारेण वा युता महाचतुर्थीत्युच्यते। अत्र कल्पोक्तविधिना गणेशपूजनात्सर्वकार्यसिद्धिर्भवति। तदुक्तं वाराहपुराणे—'भाद्रशुक्लचतुर्थी या भौमेनार्केण वा युता। महती चात्र विघ्नेशमर्चित्वेष्टं लभेन्नरः।' अत्रैव रात्रौ चन्द्रं न पश्येत्। तद्दर्शनान्मिथ्याभिशप्तिर्भवति। तदाहापरार्के मार्कण्डेयः—'भाद्रे मासि सिते पक्षे चतुर्थी स्वातियोगिनी। मिथ्याभिशापं कुरुते दृष्टचन्द्रान्न संशयः।' पराशरोऽपि—'कन्यादित्ये चतुर्थ्यां तु शुक्ले चन्द्रस्य दर्शनम्। मिथ्याभिदूषणंकुर्याद्रात्रौपश्येन्न तं सदा। पञ्चाननगते भानौ पक्षयोरुभयोरपि। चतुर्थ्यामुदितःसोमो नेक्षितव्यःकदाचन।' इति। तेन चतुर्थ्यां न पश्येदित्यर्थः। प्रधानक्रियान्वयलाभात्। तेनचतुर्थ्यामुदितस्य पञ्चम्यां न निषेधः। अत्ररात्रिग्रहणाद्दिवा चन्द्रदर्शने न दोष इति। यत्तु केनचिदुक्तं रात्रिशब्दोऽत्र अहोरात्रपर इति तन्मृग्यम्। एतादृशार्थस्य तत्प्रतिपादकवचनस्य च महानिबन्धेष्वदृष्टत्वात्। प्रमादाद्दृष्ट्वा विष्णुपुराणोक्तं श्लोकं पठेत्। तथा च पुराणान्तरे—'ततश्चतुर्थ्यां रात्र्यां यः प्रमादादीक्ष्य मानवः। पठेत्पौराणिकं वाक्यं प्राङ्मुखो वाप्युदङ्मुखः।' इति। निर्णयामृते ब्रह्मपुराणे तु शुक्लचतुर्थ्यां चन्द्रदर्शने विशेष उक्तः। 'वासुदेवोऽभिशस्तस्तु निशाकरमरीचिषु। स्थितश्चतुर्थ्यामाद्यायां मनुष्याणां पतिश्च सः। ततश्चतुर्थ्यां चन्द्रं तु प्रमादादीक्ष्य मानवः। पठेत्पौराणिकं वाक्यं प्राङ्मुखो वाप्युदङ्मुखः।' इति। मार्क-

ण्डेयोऽपि—' तद्दोषशान्तये सिंहः प्रसेनमिति वै पठेत् । ' प्राङ्मुख उदङ्मुखो वा । 'सिंहः प्रसेनमवधीत्सिंहो जाम्बवता हतः । सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः ।' इति । सिंहः प्रसेनमिति मन्त्रेणाभिमन्त्रितं जलं पेयम् । स्यमन्तकोपाख्यानं च श्रोतव्यमाचारादिति स्मार्त इति कृत्यरत्नावल्याम् ।

## अथ स्यमन्तकोपाख्यानम् ।

नन्दिकेश्वर उवाच । 'शृणुष्वैकाग्रचित्तः सन्व्रतं गाणेश्वरं शुभम् । चतुर्थ्यां शुक्लपक्षे तु सदा कार्यं प्रयत्नतः । सनत्कुमार योगीन्द्र यदीच्छेच्छुभमात्मनः । नारी वा पुरुषो वापि यः कुर्याद्व्रतमुत्तमम् । मोचयत्याशु संकष्टाद्द्विपेन्द्र व्रतिनं नरम् । अपवादहरं चैव सर्वविघ्ननिवारणम् । कान्तारे विषमे चैव गृहे राजकुले तथा । सर्वसिद्धिकरं चैव व्रतानामुत्तमोत्तमम् । गजाननप्रियं चैव त्रिषु लोकेषु विश्रुतम् । अतो न विद्यते ब्रह्मन्सर्वसंकष्टनाशनम् ।' सनत्कुमार उवाच । 'केन चादौ पुरा चीर्णं मर्त्यलोके कथं गतम् । एतत्समस्तं विस्तार्य ब्रूहि गाणेश्वरं व्रतम् ।' नन्दिकेश्वर उवाच। 'चक्रे व्रतं जगन्नाथो वासुदेवः प्रतापवान् । आदिष्टं नारदेनैव वृथालाञ्छनशान्तये । सनत्कुमार उवाच । ' षड्गुणैश्वर्यसंपन्नः सृष्टिसंहारकारकः । वासुदेवो जगद्व्यापी प्राप्तवाल्लाँञ्छनं कथम् । एतदाश्चर्यमाख्यानं ब्रूहि त्वं नन्दिकेश्वर । भुवो भारावतारार्थं वसुदेवसुतावुभौ । रामकृष्णौ समुत्पन्नौ पद्मनाभहलायुधौ । जरासंधभयात्कृष्णो द्वारकां समकल्पयत् । विश्वकर्माणमाहूय पुरीं हाटकनिर्मिताम् । तत्र षोडशसाहस्रं स्त्रीणां चैव शताधिकम् । भवनानि मनोज्ञानि तेषां मध्ये व्यकल्पयत् । यादवानां गृहास्तत्र षट्पञ्चाशच्च कोटयः । अन्ये च बहवो लोका वसन्ति विगतज्वराः । यत्किंचित्त्रिषु लोकेषु सौन्दर्यं तत्र दृश्यते । सत्राजितप्रसेनाख्यौ पुत्रावुग्रस्य विश्रुतौ । अम्भोधितीरमासाद्य तन्मनस्कतया च सः । सत्राजितस्तपस्तेपे सूर्यमुद्दिश्य बुद्धिमान् । व्रतं निरशनं गृह्य सूर्यसंबद्धलोचनः । ततः प्रसन्नो भगवान्सत्राजितपुरः स्थितः । सत्राजितोऽपि तुष्टाव दृष्ट्वा देवं दिवाकरम् । तेजोराशे नमस्तेऽस्तु नमस्ते सर्वतोमुख । विश्वव्यापिन्नमस्तेऽस्तु नमस्ते विश्वरूपिणे । काश्यपेय नमस्तेऽस्तु हारिदश्व नमोऽस्तु ते । ग्रहराज नमस्तेऽस्तु नमस्ते चण्डरोचिषे । वेदत्रय नमस्तेऽस्तु सर्वदेव नमोऽस्तु ते । प्रसीद पाहि देवेश सुदृष्ट्या मां दिवाकर । इत्थं संस्तूयमानोऽसौ देवदेवो दिवाकरः । स्निग्धगम्भीरमधुरं सत्राजितमुवाच ह । वरं ब्रूहि प्रसन्नोऽस्मि यत्ते मनसि वर्तते । सत्राजित महाभाग तुष्टोऽहं तव निश्चयात् । ' सत्राजित उवाच । ' स्यमन्तकमणिं देहि परितुष्टोऽसि भास्कर । ददौ तस्य च तद्रत्नं

स्वकण्ठादवतार्य सः।' सूर्य उवाच। 'भाराष्टकं शातकुम्भं स्रवतेऽसौ महामणिः। शुचिष्मता सदा धार्य रत्नमेतन्महोत्तमम्। सत्राजित क्षणेनैतदशुचिं हन्ति मानवम्। इत्युक्त्वान्तर्दधे देवस्तेजोराशिर्दिवाकरः। तत्कण्ठरत्नज्वलमानरूपः पुरीं स कृष्णस्य विवेश सत्वरम्। दृष्ट्वा तु लोका मनसा दिवाकरं संचिन्तयन्तस्तिमिरास्तदृष्टयः। समागतोऽयं हरिदश्वदीधितिर्जनार्दनं द्रष्टुमसंशयेन। नायं सहस्रांशुरितीह लोकाः सत्राजितोऽयं मणिकण्ठभास्वान्। स्यमन्तकं महारत्नं दृष्ट्वा तत्कण्ठमण्डले। स्पृहां चक्रे जगन्नाथो न जहार मणिं तदा। सत्राजितो जातभयो याचयिष्यति मां हरिः। प्रसेनाय ददौ भ्रात्रे धार्योऽयं शुचिना त्वया। एकदा कण्ठदेशेऽसौ क्षिप्त्वा तं मणिमुत्तमम्। मृगयाक्रीडनार्थाय ययौ कृष्णेन संयुतः। अश्वारूढोऽशुचिश्चासौ हतः सिंहेन तत्क्षणात्। रत्नमादाय सिंहोऽपि गच्छञ्जाम्बवता हतः। नीत्वा स विवरे रत्नं ददौ पुत्राय जाम्बवान्। पुरीं विवेश कृष्णोऽपि स्वकैः सर्वैः समावृतः। प्रसेनोऽद्यापि नायाति हतः कृष्णेन निश्चितम्। मणिलोभेन हा कष्टं बान्धवः पापिना हतः। द्वारकावासिनः सर्वे जना ऊचुः परस्परम्। वृथापवादसंतप्तः कृष्णोऽपि नगराच्छनैः। सहैव तैर्यथारण्यं दृष्ट्वा सिंहेन पातितम्। प्रसेनं वाहनयुतं तत्पादानुसरं गतः। ऋक्षेण निहतं सिंहं दृष्ट्वा कृष्णश्च तद्बिलम्। विवेश योजनशतमन्धकारं स्वतेजसा। निवारयन्ददर्शाग्रे प्रासादं बद्धभूमिकम्। कुमारं जाम्बवन्तस्य दोलायाममितद्युतिम्। माणिक्यं लम्बमानं च ददर्श भगवान्हरिः। रूपयौवनसंपन्नां कन्यां जाम्बवतीं पुनः। दोलां दोलयमानां च ददर्श कमलेक्षणः। महान्तं विस्मयं चक्रे दृष्ट्वा तां चारुहासिनीम्। सिंहः प्रसेनमवधीत्सिंहो जाम्बवता हतः। सुकुमारक मारोदीस्तव ह्येष स्यमन्तकः। मदनज्वरदाहार्ता दृष्ट्वा तं कमलेक्षणम्। उवाच ललितं वाक्यं गम्यतां गम्यतामिति। रत्नं गृहीत्वा वेगेन यावच्छेते तु जाम्बवान्। इत्याकर्ण्य हसञ्छौरिः शंखं दध्मौ प्रतापवान्। आकर्ण्य सहसोत्थाय ऋक्षः स युयुधे ततः। तयोर्युद्धमभूद्घोरं हरिजाम्बवतोस्तदा। द्वारकावासिनः सर्वे गतास्ते सप्तमे दिने। मृतः कृष्णो भक्षितो वा निःसंदिग्धं विचार्य च। परलोकक्रियां चक्रुः परेतस्य तु ते तदा। एकविंशं दिनं यावद्बाहुप्रहरणे। विभुः। युयुधे तेन ऋक्षेण युद्धकर्माणि तोषितः। जाम्बवान्प्राक्तनं स्मृत्वा दृष्ट्वा देवबलं महत्।' जाम्बवानुवाच। 'अजेयोऽहं सुरैः सर्वैर्यक्षराक्षसदानवैः। त्वया जितोऽहं देवेश देवस्त्वमसि निश्चितम्। जाने त्वां वैष्णवं तेजो नान्यथा बलमीदृशम्। इति प्रसाद्य देवेशं ददौ माणि-

क्यमुत्तमम् । सुतां जाम्बवतीं चाथ भार्यार्थे वरवर्णिनीम् । पाणिं च ग्राहयामास देवदेवं च जाम्बवान् । मणिमादाय देवोपि जाम्बवत्या च संयुतः । तद्वृत्तान्तं समाचष्ट द्वारकावासिनं ततः । सत्राजितस्य माणिक्यं दत्तवान्संसदि स्थितः । मिथ्याभिशापसंशुद्धिं प्राप्तवान्मधुसूदनः । सत्राजितोऽपि संत्रस्तःकृष्णाय प्रददौ सुताम् । सत्यभामां महाबुद्धिर्ददौ सर्वगुणान्विताम् । शतधन्वाक्रूरमुख्या यादवा दुष्टमानसाः । सत्राजितेन ते वैरं चक्रू रत्नाभिलाषिणः । दुरात्मा शतधन्वापि गते कृष्णेऽपि कुत्रचित् । सत्राजितं निहत्याशु मणिं जग्राह पापधीः । कृष्णस्य पुरतः सत्या समाचष्टे विचेष्टितम् । अन्तर्हृष्टो बहिः कोपी कृष्णः कपटनायकः । बलदेवपुरो वाक्यमुवाच धरणीधरः । हत्वा सत्राजितं हृत्वा मणिमादाय गच्छति । निहत्य शतधन्वानं गृहीत्वा रत्नमावयोः । मम भाग्यं च तद्रत्नं भविष्यति न संशयः । एतच्छ्रुत्वाभयत्रस्तः शतधन्वापि यादवः । आहूयाक्रूरनामानंमाणिक्यंप्रददौ च सः । आहूयवडवां वेगान्निर्गतोदक्षिणां दिशम् । रथस्थावनुगच्छेतांतदारामजनार्दनौ । शतयोजनमात्रेण ममार वडवा तदा । पलायमानो निहतः पदातिस्तुपदातिना । अदृष्टंतत्रतद्रत्नंबलदेवं पुरोऽवदत् । तदाकर्ण्यमहारोषादुवाचवचनं बली । कपटीत्वंसदाकृष्णपापीलोभीसुनिश्चितम् । अर्थाय स्वजनं हंसि कस्त्वांबन्धुः समाश्रयेत् । अनेकशपथैः कृष्णो बलदेवं प्रसादयन् । सोऽपि धिक्कष्टमित्युक्त्वा ययौ वैदर्भमण्डलम् । कृष्णोऽपि रथमारुह्य द्वारकां प्रययौ पुनः । तथैवोचुर्जनाः सर्वे न साधीयानयं हरिः । निष्कासितो रत्नलोभाज्ज्येष्ठो भ्राता बलो बली । तच्छ्रुत्वा दीनवदनः संतप्तो नैव भाति च । वृथाभिशापसंतप्तो बभूव स जगत्पतिः । अक्रूरोऽपि विनिष्क्रम्य तीर्थयात्रामिषात्ततः । काशीं गत्वा सुखेनासावयजत्प्रभुमीश्वरम् । तोषमुत्पादयामास तेन द्रव्येण बुद्धिमान् । सुरालयगृहैश्चित्रैर्नगरं समकल्पयत् । न दौर्भिक्षं न वै रोगा ईतयो न च विड्वरम् । शुचिना धार्यते तत्र मणिः सूर्यस्य निश्चितम् । जानन्नपि हि सर्वज्ञो मानुषं भावमास्थितः । लोकाचारं तथा मायामज्ञानं च समाश्रितः । बन्धुवैरं समुत्पन्नं लाञ्छनं समुपस्थितम् । वृथापवादबहुलं जायमानं कथं सहे । इति चिन्तातुरं कृष्णं नारदः समुपस्थितः । गृहीत्वा तत्कृतां पूजां सुखासीनस्ततोऽब्रवीत् । ' नारद उवाच ' किमर्थं खिद्यसे देव किं वा ते शोककारणम् । यथावृत्तं समाचष्ट नारदाय च केशवः । जानामि कारणं देव यदर्थं लाञ्छनं तव । त्वया भाद्रपदे शुक्लचतुर्थ्यां चन्द्रदर्शनम् । कृतं तेन समुत्पन्नं लाञ्छनं तु वृथैव हि । ' श्रीकृष्ण उवाच । ' वद नारद मे शीघ्रं को दोषश्चन्द्रदर्शने । किमर्थं

तु द्वितीयायां तस्य कुर्वन्ति दर्शनम् । ' नारद उवाच । ' गणनाथेन संशप्तश्चन्द्रमा रूपदर्पितः । त्वद्दर्शने नराणां हि वृथा निन्दा भविष्यति ।' श्रीकृष्ण उवाच । ' किमर्थं गणनाथेन शप्तश्चन्द्रः सुधामयः । इदमाख्यानकं श्रेष्ठं यथावद्वक्तुमर्हसि ।' नारद उवाच । ' गणानामाधिपत्येन रुद्रेण ब्रह्मणा पुरा । अणिमा महिमा चैव लघिमा गरिमा तथा । प्राकाम्येशिवशित्वं च अर्थकामावसायिता । भार्यार्थं प्रददौ देवो गणेशस्य प्रजापतिः । पूजयित्वा गणाध्यक्षं स्तुतिं कर्तुं प्रचक्रमे । ' ब्रह्मोवाच । ' गजवक्त्र गणाध्यक्ष लम्बोदर वरप्रद । विद्याधीश्वर देवेश सृष्टिसंहारकारक । पूजयेयुर्गणाध्यक्षं मोदकाद्यैः प्रयत्नतः । तेषां प्रजायते सिद्धिर्निर्विघ्नेन न संशयः । असंपूज्य गणाध्यक्षं ये वाञ्छन्ति सुरासुराः । न तेषां जायते सिद्धिः कल्पकोटिशतैरपि। त्वद्भक्त्या तु गणाध्यक्ष विष्णुः पालयते सदा । रुद्रोऽपि संहरत्याशु त्वच्छक्त्यैव करोम्यहम् । इत्थं संस्तूयमानोऽसौ देवदेवो गजाननः । उवाच परमप्रीतो ब्रह्माणं जगतां पतिम् । ' गणेश उवाच । ' वरं ब्रूहि प्रदास्यामि यत्ते मनसि वर्त्तते । ' ब्रह्मोवाच । ' क्रियमाणा तु मे सृष्टिर्निर्विघ्नं जायतां प्रभो । एवमस्त्विति देवोऽसौ गृहीत्वा मोदकान्करे । सत्यलोकात्समागच्छत्स्वेच्छया गगने शनैः । चन्द्रलोकं समासाद्य स्खलितो गणनायकः । अथ हास्यं महच्चक्रे सोमो रूपमदान्वितः । तं दृष्ट्वा कोपताम्राक्षो गणनाथः शशाप ह । दर्शनीयः सुरूपोऽहं सुन्दरश्चाहमित्यथ । गर्वितोऽसि शशाङ्क त्वं फलं प्राप्स्यसि सत्वरम् । अद्य प्रभृति लोकास्त्वां न हि पश्यन्ति पापिनम् । ये पश्यन्ति प्रमादेन त्वां नरा मृगलाञ्छनम् । मिथ्याभिशापसंयुक्ता भविष्यन्ति हि ते ध्रुवम् । हाहाकारो महाञ्जातः श्रुत्वा शापं सुभीषणम् । अत्यन्तम्लानवदनो जलं चन्द्रः समाविशत् । कुमुदे कौमुदीनाथः स्थितस्तत्र कृतालयः । ततो देवर्षिगन्धर्वा निराशा दीनमानसाः । तुरासाहं पुरोधाय जग्मुस्ते तु पितामहम् । दृष्ट्वा पितामहं देवं शशंसुश्चन्द्रचेष्टितम् । दत्तः शापो गणेशेन कथयामासुरादरात् । विचार्य भगवान्ब्रह्मा तान्सुरानिदमब्रवीत् । गणेशशापो देवेन्द्राः शक्यते केन चान्यथा । कर्तुमिन्द्रेण न मया विष्णुनापि विनिश्चितम् । तमेव देवदेवेशं व्रजध्वं शरणं सुराः । स एव शापमोक्षं च करिष्यति न संशयः । ' देवा ऊचुः । ' केनोपायेन वरदो गजवक्त्रो गणेश्वरः । पितामह महाप्राज्ञ तदस्माकं वद प्रभो । ' पितामह उवाच । ' चतुर्थ्यां देवदेवोऽसौ पूजनीयः प्रयत्नतः । कृष्णपक्षे विशेषेण नक्तं कुर्याच्च तत्प्रियम् । अपूपैर्घृतसंयुक्तैर्मोदकैः

परितोषयेत् । मधुरान्नं हविष्यं च स्वयं भुञ्जीत कामतः । स्वर्णरूपं गणेशस्य दातव्यं द्विजसत्तमे । शक्त्या च दक्षिणां दद्याद्वित्तशाठ्यं न कारयेत् । गीष्पतिं प्रेषयामासुः समेत्य त्रिदिवेश्वराः । स गत्वा कथयामास वचो ब्रह्मोदितं तु तत् । व्रतं चक्रे ततश्चन्द्रो यथोक्तं ब्रह्मणा पुरा । आविर्बभूव भगवान्गणेशो व्रततोषितः । तं क्रीडमानं गणनायकं च तुष्टाव दृष्ट्वा तु कलानिधानः ।' चन्द्र उवाच । 'त्वं कारणं कारणकारणानां वेत्ताऽसि वेद्यं च विभो प्रसीद । प्रसीद देवेश जगन्निवास गणेश लम्बोदर वक्रतुण्ड । विरञ्चिनारायणपूज्यमान क्षमस्व मे गर्वकृतं च हास्यम् । ये त्वामसंपूज्य गणेश नूनं वाञ्छन्ति मूढा विदितार्थसिद्धिम् । ते देवनष्टा निभृतं च लोके ज्ञातो मया ते सकलः प्रभावः । ये चाप्युदासीनतरास्तु पापास्ते यान्ति पापं नरके सदैव । एवं संस्तूयमानेऽसौ चन्द्रेणाथ गजाननः । उवाच स हसन्वाक्यं मेघगम्भीरया गिरा ।' गणेश उवाच । 'तुष्टोऽहं तव दास्यामि वरं ब्रूहि निशाकर ।' चन्द्र उवाच। 'लोकानां दर्शनीयोऽहंभवामिपुनरेवहि । विपापोऽहंविशापोऽहं त्वत्प्रसादाद्गणेश्वर ।' गणेशउवाच । 'वरमन्यं प्रदास्यामि नैतद्देयं मया तव । विघ्नेशवचनं श्रुत्वा ब्रह्माद्याः सभयाकुलाः । देवं विज्ञापयांचक्रुर्गणेशं भक्तवत्सलम् ।' देवा ऊचुः । 'विशापं कुरु देवेश प्रार्थयामो वयं तव । विशापमकरोच्चन्द्रं कमलासनगौरवात् । शुक्लपक्षे चतुर्थ्यां तु ये पश्यन्ति सदैव हि । मिथ्याभिशापमायासं ते प्राप्स्यन्ति न संशयः । मासादौ पूर्वमेव त्वां ये पश्यन्ति सदा जनाः । भद्रायां शुक्लपक्षस्य तेषां दोषो न जायते । तदाप्रभृति लोकोऽयं द्वितीयायां कृतादरः । चन्द्रस्य दर्शनार्थाय गणनाथस्य भाषितम् । भाद्रे शुक्लचतुर्थ्यां तु यस्त्वां पश्यति पापधीः । मिथ्यापवादमालिन्यमावर्षं तस्य जायते । पुनरेव तु पप्रच्छ कलावान्गणनायकम् । केनोपायेन देवेश तुष्टो भवसि तद्वद ।' गणेश उवाच । 'सदा कृष्णचतुर्थ्यां तु मोदकाद्यैः प्रपूज्य माम् । रोहिणीसहितं त्वां च समभ्यर्च्य विधानतः । यथाशक्त्या च मद्रूपं स्वर्णेन परिकल्पितम् । दत्त्वा द्विजाय भुक्त्वाथ कथां श्रुत्वा विधानतः । सदा तस्य करिष्यामि संकष्टस्य निवारणम् । भाद्रशुक्लचतुर्थ्यां तु मृण्मयी प्रतिमा शुभा । हेमाभावे तु कर्तव्या नानापुष्पैः प्रपूज्य माम् । ब्राह्मणान्भोजयेत्पश्चाज्जागरणं च विशेषतः । स्थापयेदव्रणं कुम्भं धान्यस्योपरि शोभितम् । यथाशक्त्या तु मद्रूपं शातकुम्भेन निर्मितम् । वस्त्रद्वयसमाच्छन्नं मोदकाद्यैः प्रपूज्य माम् । रक्ताम्बरधरो मर्त्यो ब्रह्मचर्यरतः शुचिः । रोहिणीसहितस्त्वं च पूजां प्राप्य च मत्परः । रजतस्य तु रूपं ते यथाशक्त्या विनि-

र्पितम् । वस्त्रं शिवप्रियायेति गणाधिप नमोऽस्तु ते । गन्धं लम्बोदरायेति पुष्पं सिद्धिप्रदाय च । धूपं गजमुखायेति दीपं मूषकवाहने । विघ्ननाथाय नैवेद्यं फलं सर्वार्थसिद्धये । ताम्बूलं कामरूपाय दक्षिणां धनदाय च । इक्षुदण्डैस्तदा पूज्य नाम्ना शोभाकरं शुभम् । विसर्जनं समारम्भैः सर्वसिद्धिप्रदायकम् । एवं संपूज्य विघ्नेशं कथांश्रुत्वाविधानतः । मन्त्रेणानेन तत्सर्व ब्राह्मणाय निवेदयेत् । दानेनानेन देवेश प्रीतोभव गणेश्वर । सर्वत्र सर्वदा देव निर्विघ्नं कुरु सर्वदा । मानोन्नतिं च राज्यं च पुत्रान्पौत्रान्प्रदेहि मे । गाश्च धान्यं च वासांसि दद्यात्सर्वं स्वशक्तितः । दत्त्वा तु ब्राह्मणे सर्वं स्वयं भुञ्जीतकामतः । मोदकापूपमधुरं लवणक्षारवर्जितम् । एवंकरोतियश्चन्द्र तस्याहं सर्वदा जयम् । सिद्धिं च धनधान्यं च ददामि विपुलां प्रजाम् । इत्युक्त्वान्तर्दधे देवो गणनाथो विनायकः । तद्व्रतं कुरु कृष्ण त्वं ततः शुद्धिमवाप्स्यसि । नारदेनैवमुक्तश्च व्रतं चक्रे हरिः स्वयम् । मिथ्यापवादसंशुद्धिं प्राप देवो जनार्दनः । ये शृण्वन्ति तवाख्यानं स्यमन्तकमणीयकम् । चन्द्रस्य चरितं सर्वं तेषां दोषो न जायते । भाद्रे शुक्लचतुर्थ्यां तु चन्द्रस्य दर्शनं क्वचित् । जातं तत्परिहारार्थं श्रोतव्यं सर्वमेव तु । यदा यदा मनःकष्टं संदेहमुपजायते । तदा तदा च श्रोतव्यमाख्यानं कष्टनाशनम् । एवमुक्त्वा ततो देवो गणेशः कृष्णतोषितः । यदा यदा पश्यति कार्यमुद्यतं नारी नरश्चापि करोति सद्व्रतम् । सिध्यन्ति कार्याणि समीप्सितानि किं दुर्लभं विघ्नहरे प्रसन्ने । श्रावणस्यासिते पक्षे चतुर्थ्यामेकभुग्व्रती । व्रतं कुर्याद्गणेशस्य यावन्मासचतुष्टयम् ।' इति स्कन्दपुराणे स्यमन्तकाख्यानं संपूर्णम् ।

अथ सिद्धिविनायकपूजनम् । प्रातःकृत्यादि कृत्वा सूर्यदेवताभ्यो व्रतं निवेद्याचम्योदङ्मुखो वारिपूर्णं ताम्रपात्रं गृहीत्वा, मासाद्युल्लिख्य मम सर्वकर्मनिर्विघ्नसिद्धिपुत्रपौत्रसौभाग्यादिसिद्ध्यर्थं श्रीसिद्धिविनायकगणपतिप्रीत्यर्थं श्रीसिद्धिविनायकपूजनमहं करिष्ये इति संकल्प्य । 'एकदन्तं शूर्पकर्णं गजवक्त्रं त्रिलोचनम् । पाशाङ्कुशधरं देवं ध्यायेत्सिद्धिविनायकम्' इति ध्यानम् । 'आगच्छ जगदाधार सुरासुरवरार्चित । अनाथनाथ सर्वज्ञ गीर्वाणपरिपूजित ।' आवाहनम् । 'स्वर्णसिंहासनं दिव्यं सर्वमङ्गलसंयुतम् । तवाहं स्थापयिष्यामि गणाध्यक्ष नमोऽस्तुते ।' आसनम् । 'गौरीसुत नमस्तेस्तुशंकरप्रियसूनवे । पाद्यंगृहाणदेवेशगन्धपुष्पाक्षतैः सह ।' पाद्यम् । 'अर्घ्यंगन्धोदकं दिव्यंसर्वमङ्गलसंयुतम् । गृहाण देवदेवेशभक्तानांवरदायक ।' इत्यर्घ्यम् । गङ्गाजलं समानीतं सुवर्णकलशेस्थितम् । आचम्यतांगणाध्यक्ष सर्वविघ्नहरो भव ।' इत्याचमनम् ।

'दधि क्षीरं घृतं चैव मधुखण्डविमिश्रितम्। तृप्त्यर्थं तव देवेश मधुपर्कं ददामि ते।' इति मधुपर्कम्। 'स्नानं पञ्चामृतैर्देव गृहाण वरदायक। अनाथनाथ सर्वज्ञ सर्वसिद्धिप्रदो भव।' इति पञ्चामृतस्नानम्। 'सर्वतीर्थात्समुद्धृत्य गन्धतोयैः कुशोदकैः। फलतोयैर्जलैर्गन्धैः स्नापयामि गणेश्वर।' इति शुद्धोदकस्नानम्। 'रक्तवस्त्रद्वयं देव देवाङ्गसदृशं प्रभो। गणेश्वर गृहाण त्वं भक्तानां वरदायक।' इति रक्तवस्त्रद्वयम्। 'राजतं ब्रह्मसूत्रं च काञ्चनंचोत्तरीयकम्। गृहाणदेवदेवेशगणाध्यक्ष नमोऽस्तुते।' इति यज्ञोपवीतम्। 'श्रीखण्डं चन्दनं दिव्यं कर्पूरेण च संयुतम्। गन्धं दास्यामि देवेश गणाध्यक्ष नमोऽस्तुते।' इति गन्धम्। 'अक्षतान्धवलान्देवगृहाण द्विरदानन। सर्वदेवोत्तमस्त्वं हि चाक्षयं कुरुमेफलम्।' इत्यक्षतान्। 'सुगन्धीनि सुपुष्पाणि गृहाण द्विरदानन। विनायक नमस्तेऽस्तु सुरासुरसुपूजित।' इति पुष्पम्। अथाङ्गपूजा। गणेशाय नमः पादौ पूजयामि। विघ्नराजाय नमः जानुनी पूजयामि। आखुवाहनाय नमः ऊरू पूजयामि। हेरंबाय नमः कटिं पूजयामि। गणाधिपायनमः नाभिंपूजयामि। लम्बोदरायनमः उदरंपूजयामि। गणनाथाय नमः हृदयं पूजयामि। गुहाग्रजाय नमः स्कन्धौ पूजयामि। स्थूलकण्ठाय नमः कण्ठं पूजयामि। परशुहस्ताय नमः हस्तान् पूजयामि। गजवक्त्राय नमः वक्त्रं पूजयामि। विघ्नराजाय नमः नेत्राणि पूजयामि। सर्वेश्वराय नमः शिरः पूजयामि। अथ पत्रिकापूजा॥ सुमुखाय नमः काकमाचीपत्रं समर्पयामि। गणाधिपाय नमः भृंगराजपत्रं समर्पयामि। उमापुत्राय नमः बिल्वपत्रं समर्पयामि। गजाननाय नमः दूर्वापत्रं समर्पयामि। लम्बोदराय नमः बदरीपत्रं समर्पयामि। हरसूनवे नमः धत्तूरपत्रं समर्पयामि। गजकर्णाय नमः तुलसीपत्रं समर्पयामि। गुहाग्रजाय नमः अपामार्गपत्रं समर्पयामि। एकदन्ताय नमः कण्टकारिकापत्रं समर्पयामि। वक्रतुण्डाय नमः शमीपत्रं समर्पयामि। विकटाय नमः करवीरपत्रं समर्पयामि। इभतुण्डाय नमः अश्मातपत्रं समर्पयामि। विनायकाय नमः अर्कपत्रं समर्पयामि। कपिलाय नमः अर्जुनपत्रं समर्पयामि। भिन्नतुण्डाय नमः विष्णुक्रांतापत्रं समर्पयामि। पत्नीहीनाय नमः दाडिमीपत्रं समर्पयामि। बटवे नमः देवदारुपत्रं समर्पयामि। भालचन्द्राय नमः मरुबकपत्रं समर्पयामि। शूर्पकर्णाय नमः जातीपत्रं समर्पयामि। सुराग्रजाय नमः गान्धारीपत्रं समर्पयामि। सिद्धिविनायकाय नमः केतकीपत्रं समर्पयामि। एवमेकविंशतिपत्राणि समर्पयेत्। अथ वा करवीरजातीचम्पकबकुलकमलकह्लारमन्दारार्कागस्तिरिङ्गिणीकदम्बकुन्दमालतीदाडिम्ब्यपामार्गबिल्वाविष्णुक्रान्ता-

शतावरीभृङ्गराजशमीदूर्वा एतान्येकविंशतिपत्राणि । एकविंशतिपत्रिकासमर्पणोत्तरं धूपदीपादिदक्षिणान्तं कृत्वा दूर्वायुग्मार्पणम् । अथ दूर्वापूजा । 'दूर्वायुग्मं गृहीत्वा तु गन्धपुष्पाक्षतैर्युतम् । पूजयेत्सिद्धिविघ्नेशं प्रत्येकं सर्वनामभिः ।' एकां समर्पयेदिति शेषः । गणाधिपाय नमः दूर्वायुग्मम् । उमापुत्राय नमः । अघनाशिने नमः विनायकाय नमः । ईशपुत्राय नमः । सर्वसिद्धिप्रदायकाय नमः । एकदन्ताय नमः । इभवक्त्राय नमः । मूषकवाहनाय नमः । कुमारगुरवे नमः । दशाङ्गं गुग्गुलं धूपं सुगन्धि च मनोहरम् । गृहाणेश्वर सर्वज्ञ उमापुत्र नमोऽस्तु ते ।' धूपम् । 'सर्वज्ञ सर्वलोकेश सर्वेषां तिमिरापह । गृहाण मङ्गलं दीपं रुद्रप्रिय नमोऽस्तु ते ।' दीपम् । 'नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु । ईप्सितं मे वरं देहि परत्र च परां गतिम् ।' नैवेद्यमन्त्रः । 'ताम्बूलं गृह्यतां देव नागवल्लीदलैर्युतम् । कर्पूरेण च संयुक्तं देवतानां परं प्रियम् ।' ताम्बूलमन्त्रः । इदं फलमिति फलम् । 'इदं फलं मया देव स्थापितं पुरतस्तव । तेन मे सुफलावाप्तिर्भवेज्जन्मनि जन्मनि ।' फलं समर्पयामि । 'हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ।' इति दक्षिणा । 'विघ्नेश्वर विशालाक्ष सर्वाभीष्टफलप्रद । प्रदक्षिणं करोमि त्वां सर्वान्कामान्प्रयच्छ मे ।' प्रदक्षिणा । 'नमस्कृतोऽसि देवेश सर्वविघ्नहरो भव । ईप्सितं मे वरं देहि नमस्ते भक्तवत्सल । देवदेव जगन्नाथ भक्तानां वरदायक । अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ।'नमस्कारः । 'विनायक नमस्तेऽस्तु विघ्नेश सुरपूजित । ईप्सितं मे वरं देहि नमस्ते करुणाकर ।' प्रार्थनामन्त्रः । पुष्पाञ्जलिं प्रयच्छामीति पुष्पाञ्जलिम् । 'मालतीमल्लिकापुष्पैर्नागचम्पकसंयुतैः । पुष्पाञ्जलिं गृहाणेमां पादाम्बुजयुगार्पिताम् ।' गणानां त्वेति मन्त्रेण वा । 'गणाधिप नमस्तेऽस्तु सततं मोदकप्रिय ।अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा । दाता विघ्नेश्वरो देवो ग्रहीता च स विघ्नराट् । तस्मादिदं मया दत्तं संपूर्ण व्रतमस्तु मे । गणेशः प्रतिगृह्णाति गणेशो वै ददाति च । दीयते गणनाथाय प्रीयतां मे गणाधिपः । सौख्यं सौमनसं नित्यं करोति गणनायकः । इति मन्त्रं समुच्चार्य दश दद्याद्द्विजातये ।' इति वायनदानम् । 'विनायकस्य प्रतिमां वस्त्रयुग्मसमन्विताम् । ब्राह्मणाय प्रदास्यामि सर्वविघ्नोपशान्तये ।' इति प्रतिमादानम्। पुनः प्रार्थनामन्त्रः । 'विघ्नानि नाशमायान्तु सर्वाणि सुरनायक । कार्यं मे सिद्धिमायातु पूजिते त्वयि धातरि । न्यूनातिरिक्तानि परिस्फुटानि यानीह कर्माणि मया कृतानि ।क्षम्याणि चैतानि शुभं प्रदाय प्रयाहि तुष्टः पुनरागमाय ।' अथ संकष्टचतुर्थ्युक्तप्रकारेण रोहिणीसहितचन्द्रपूजां कुर्यात् ॥

अथ कथा। ऋषय ऊचुः। 'निर्विघ्नेन तु कार्याणि कथंसिध्यन्तिसूतज। अर्थसिद्धिः कथंनृणां पुत्रसौभाग्यसंपदः। दम्पत्योःकलहे चैक्यं बन्धुभेदे तथा नृणाम्। उदासीनेषु लोकेषु कथंसंमुखताभवेत्। विद्यारम्भेतथानृणां वाणिज्यायां कृषौ तथा। नृपतेः परचक्रस्य जयसिद्धिः कथं भवेत्। कां देवतां नमस्कृत्य पूजा सिद्धिकरी नृणाम्।' सूत उवाच। 'संनद्धयोः पुरा विप्राः कुरुपाण्डवसेनयोः। पृष्टवान्देवकीपुत्रं धर्मराजो युधिष्ठिरः।' युधिष्ठिर उवाच। 'निर्विघ्नेन जयो ह्येषां वद देव कथं भवेत्। कां देवतां नमस्कृत्य सम्यग्राज्यं लभेमहि।' श्रीकृष्ण उवाच। 'पूजयस्व गणाध्यक्षं विघ्नेशं सिद्धिदायकम्। तस्मिन्संपूजिते राजन्सर्वान्कामानवाप्स्यसि।' युधिष्ठिर उवाच। 'देव केन विधानेन पूजनीयो गणाधिपः। पूजितस्तु तिथौ कस्यां सिद्धिदो गणपो भवेत्।' श्रीकृष्ण उवाच। 'गजवक्त्रं तु शुक्लायां चतुर्थ्यां पूजयेन्नृप। यदा चोत्पद्यते भक्तिस्तदा पूज्यो गणाधिपः। शुक्लपक्षे चतुर्थ्यां तु मासि भाद्रपदे नृप। प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृप। निष्कमात्रसुवर्णेन तदर्धार्धेन वा पुनः। स्वशक्त्या गणनाथस्य स्वर्णरौप्यमयाकृतिम्। अथवा मृण्मयीं कुर्याद्वित्तशाठ्यविवर्जितः। कृत्वा पूजां प्रयत्नेन स्नाप्य पञ्चामृतैः पृथक्। रक्तं सर्वप्रदे वस्त्रयुग्मं दद्यात्सुभावितम्। गणाध्यक्षेति नाम्ना वै गन्धं दद्याच्च भक्तितः। विनायकेति पुष्पाणि धूपं चोमासुतेति च। दीपं रुद्रप्रियायेति नैवेद्यं विघ्ननाशिने। ततो दूर्वाङ्कुरान्गृह्य विंशतिं चैकमेव च। पूजयेत्तु प्रयत्नेन एभिर्नामपदैः पृथक्। गणाधिप नमस्तेऽस्तु उमापुत्राघनाशन। विनायकेशपुत्रेति सर्वसिद्धिप्रदायक। एकदन्तेभवक्त्रेति तथा मूषकवाहन। कुमारगुरवे तुभ्यं पूजनीयः प्रयत्नतः। दूर्वायुग्मं गृहीत्वा तु गन्धयुक्तं प्रपूजयेत्। एकैकेन च नाम्ना वै पूजा चैकेन सर्वतः।' एकेन दूर्वाङ्कुरेण युग्मावशिष्टेन सर्वतः सर्वैर्नामभिः पूजा कार्या। 'दत्त्वैकां सर्वनामभिः' इति पाठो वीरमित्रोदये। 'तथैव विंशतिं गृह्य मोदकान्घृतपाचितान्। स्थापयित्वा गणाध्यक्षसमीपे कुरुनन्दन। दश विप्राय दातव्याः स्वयं चाद्यात्तथा दश। एकं गणाधिपे दद्यात्सनैवेद्यं नृपोत्तम। गणेशः प्रतिगृह्णाति गणेशो वै ददाति च। दीयते गणनाथाय प्रीयतां मे गणाधिपः। सौख्यं सौमनसं नित्यं करोतु गणनायकः। इति मन्त्रं समुच्चार्य दश दद्याद्द्विजातये। गुरुं व्रतोपदेष्टारमलंकृत्य प्रयत्नतः। दद्याच्च दक्षिणां सम्यग्यथाविभवविस्तरम्। जातरूपमयं देवं ब्राह्मणाय निवेदयेत्। कृत्वा नैमित्तिकं कर्म पूजयेदिष्टदेवताम्।' ततः प्रार्थनां कुर्यात्। 'विघ्नानि नाशमायान्तु सर्वाणि सुरनायक।

कार्यं मे सिद्धिमायातु पूजिते त्वयि धातरि ।' प्रार्थनामन्त्रः । 'विप्राय भोजनं दद्या-द्भुञ्जीयात्तैलवर्जितम् । एवं कृते धर्मराज गणनाथस्य पूजने । विजयस्ते भवेन्नित्यं सत्यं सत्यं मयोदितम् । त्रिपुरं दग्धुकामेन पूजितः शूलपाणिना । शक्रेण पूजितः पूर्वं तथा वृत्रवधे नृप । रामेणाराधितः पूर्वं सीतामन्वेषता पुरा । दृष्टा सीता महाभागा वानरेण हनूमता । भगीरथेन तद्वच्च गङ्गामानयता पुरा । अमृतोत्पादनार्थाय तथा देवासुरैरपि । अमृताहरणात्पूर्वं वैनतेयेन पक्षिणा । आराधितो गणाध्यक्षो ह्यमृतं तद्धृतं बलात् । यदा पूर्वं हि दैत्येन हृतो रुक्मिणिनन्दनः । आराधितो मया तद्वद्रुक्मिण्या सहितेन च । कुष्ठव्याधियुतेनाथ साम्बेनाराधितः पुरा । जयकामस्तथा त्वं हि तमाराधय शांकरिम् । प्राप्स्यसि त्वं निजं राज्यं हत्वा शत्रून्रणाजिरे । सिध्यन्ति सर्वकार्याणि तस्मिन्संपूजिते यतः । तेनाख्यातिं गतो लोके नाम्ना सिद्धिविनायकः । पूजयित्वा महाभाग गणेशं सिद्धिदायकम् । सिध्यन्ति सर्वकार्याणि नात्र कार्या विचारणा । ' सूतउवाच—' एवमुक्तस्तु कृष्णेन सानुजः पाण्डुनन्दनः । पूजयामास देवं च पुत्रं त्रिपुरघातिनः । शत्रुसंघं निहत्याशु प्राप्तवान्राज्य-मोजसा । सिध्यन्ति सर्वकार्याणि मनसा चिन्तितान्यपि । विद्यारम्भे पूजनीयो विद्यालाभो भवेन्नृणाम् । विवाहे क्रियमाणे तु पूज्यश्चासौ विनायकः । सिध्यन्ति सर्वकार्याणि अर्थसिद्धिर्भवेद्ध्रुवम् । कृषिप्रारम्भसमये कर्षकेण विनायकः । पूजनीयः प्रयत्नेन धान्यं तस्याक्षयं भवेत् । पुष्टिकामैस्तथा शूद्रैः पूजनीयो गणाधिपः । विद्या-कामो लभेद्विद्यां धनकामो लभेद्धनम् । जयं च जयकामश्च पुत्रार्थी लभते सुतम् । पतिकामा च भर्तारं सौभाग्यं च सुवासिनी । विधवा पूजयित्वा तु वैधव्यं नाप्नुया-त्क्वचित् । यं यं चिन्तयते कामं तं तं प्राप्नोति लीलया । वैष्णव्यादिषु दीक्षासु आदौ पूज्यो गणाधिपः । यस्मिन्संपूजिते विष्णुरीशो भानुस्तथा ह्युमा । हव्यवाहमुखा देवाः पूजिताः स्युर्न संशयः । चण्डिकाद्या मातृगणाः परितुष्टा भवन्ति च । यस्मिन्संपूजिते भक्त्या विघ्नाः सिद्धिविनायके । य इदं शृणुयान्नित्यं श्राव-येद्वा समाहितः । सिध्यन्ति सर्वकार्याणि सिद्धिदस्य प्रसादतः ।' इति स्कन्दपुरा-णोक्तं सिद्धिविनायकव्रतम् ।

इयमेव चतुर्थी शिवासंज्ञा । सुमन्तुरुवाच । ' शिवान्ताशा सुखा राजंश्च-तुर्थी त्रिविधा स्मृता । मासि भाद्रपदे शुक्ला शिवलोकेषु पूजिता ।' भाद्रशुक्लचतुर्थी शिवा । माघशुक्लचतुर्थी शान्ता । भौमवारे शुक्लचतुर्थी सुखा । 'तस्यां स्नानं तथा

दानमुपवासो जपस्तथा । क्रियमाणं शतगुणं प्रसादाद्दान्तिनो[1] नृप । गुडलवणघृतानां दानं शुभकरं स्मृतम् । गुडापूपैस्तथा वीर पुण्यं ब्राह्म　न । चतुर्थ्यां नरशार्दूल पूजनीयाः सदा स्त्रियः । गुडैर्लवणपूजाभिः स्वसृश्वश्रूस्वमातरः । ताः सर्वाः सुभगाः स्युर्वै विघ्नेशस्यानुमोदनात् । कन्यकाश्च विशेषेण विधिनानेन पूजयेत् ।' इति भविष्यपुराणोक्तं शिवाचतुर्थीव्रतम् । इति भाद्रशुक्लचतुर्थीव्रतानि ।

अथाश्विनशुक्लचतुर्थी निर्णयामृते　। भाद्रपदकृष्णनवम्यां प्रतिबोधिताया देव्या अश्वयुक्चतुर्थ्यामभ्यङ्गादिसंस्कारैः केशान्विशोधयेत् । तच्छुक्लपञ्चम्यां पूर्वाह्णे गन्धोदकैस्तां देवीं स्नापयेत् । तत्सप्तम्यां तां बिल्वपत्रैः पूजयेत् । अष्टम्यामुपोष्य रात्रौ जागरणं कृत्वा प्रतियामं देवीं पूजयेत् । तन्नवम्यां विधिवत्संपूज्य बलिदानं कुर्यात् । तद्दशम्यां देवीं रथमारोप्य गीतवादित्रशब्दैः सह नगरे भ्रामयेत् । तदुक्तं देवीपुराणे–'कन्यायां कृष्णपक्षे तु पूजयित्वार्द्रभेऽपि वा ।' कन्यायां दर्शान्तभाद्रे इत्यर्थ इति मदनरत्ने । 'नवम्यां बोधयेद्देवीं गीतवादित्रनिस्वनैः । शुक्लपक्षे चतुर्थ्यां तु देवीकेशविशोधनम् । प्रातरेव तु पञ्चम्यां स्नापयेत्सलिलैः शुभैः । सप्तम्यां पत्रिकापूजा अष्टम्यामप्युपोषणम् । पूजा जागरणं चैव रथमारोप्य वै पुरे । भ्रामयेत्' इति । इत्याश्विनशुक्लचतुर्थी ।

कार्तिककृष्णचतुर्थी करकचतुर्थी । सा चन्द्रोदयव्यापिनी ग्राह्या । अत्र स्त्रीणामेवाधिकारः तासामेव फलश्रुतेः । अथ व्रतविधिः । आचम्य मासपक्षाद्युल्लिख्य सौभाग्यपुत्रपौत्रादिसुस्थिरश्रीप्राप्तये करकचतुर्थीव्रतं करिष्ये इति संकल्प्य । अश्वत्थं विलिख्य तदधस्ताच्छिवं षण्मुखयुक्तां गौरीं च लिखित्वा षोडशोपचारैः पूजयेत् । पूजामन्त्रः । 'नमः शिवायै शर्वाण्यै सौभाग्यं संततिं शुभाम् । प्रयच्छ भक्तियुक्तानां नारीणां हरवल्लभे ।' इति । ततो नमोन्तनाममन्त्रेण शिवषण्मुखयोः पूजा कार्या ततः पक्वान्नाक्षतदीपयुक्तकरकान्ब्राह्मणेभ्यो दद्यात् । ततः पिष्टकनैवेद्यं भोज्यं सर्वं निवेदयेत् । ततश्चन्द्रोदयोत्तरं चन्द्रायार्घ्यं दद्यात् । अथ कथा । मान्धातोवाच–'अर्जुने तु गते तप्तुमिन्द्रकीलगिरिं प्रति । विषण्णमानसा सुभ्रूर्द्रौपदी समचिन्तयत् । अहो किरीटिना कर्म समारब्धं महत्किल । विघ्नप्रवणमेतद्धि बहवः परिपन्थिनः । चिन्तयित्वेति सा देवी कृष्णा कृष्णं जगद्गुरुम् । भर्तुः प्रियं चिकीर्षन्ती साऽपृच्छद्विघ्नवारणम् ।' द्रौपद्युवाच । 'कथयस्व जगन्नाथ व्रतमेकं सुदुर्लभम् । यत्कृत्वा

१–दन्तिनो गणनायकस्य । २ कृष्णं कृष्णमुनि व्यासमित्यर्थः ।

यान्ति विघ्नानि विजयस्ते सदा प्रियः ।' श्रीवेदव्यास उवाच । 'एतदेव महाभागे शंभुः पृष्टः किलोमया । यत्पृष्टोऽहं त्वया कृष्णे जगद्धितमनुत्तमम् । तस्यास्तद्वचनं श्रुत्वा प्राह देवो महेश्वरः । शृणु देवि वरारोहे वक्ष्यामि त्वां महेश्वरि । पतिविघ्नहर्रीं श्रेष्ठां करकाख्यां चतुर्थिकाम् ।' पार्वत्युवाच—'भगवन्कीदृशी प्रोक्ता चतुर्थी कर-कान्विता । विधानं कीदृशं प्रोक्तं केनेयं च पुरा कृता ।' ईश्वर उवाच—'शाकप्र-स्थपुरे रम्ये विद्वज्जनसमाकुले । स्वर्णरूप्यसमाकीर्णे रक्तप्राकारशोभिते । दिव्यनारी-जनालोकवशीकृतजगत्त्रये । वेदध्वनिसमायुक्ते स्वर्गादपि मनोहरे । वेदधर्मा द्विजस्त-त्रावसद्देशे विदांवरः । पत्नी तस्यैव विप्रस्य नाम्ना लीलावती शुभा । सा तु संजनया-मास पुत्रान्सप्तामितौजसः । कन्यां वीरवतीनाम्नीं सर्वलक्षणसंयुताम् । नीलोत्पलाभ-नयनां पूर्णेन्दुसदृशाननाम् । ततः काले शुभदिने विधिवच्च द्विजोत्तमः । ददौ तां वेद-विदुषे विप्राय विधिपूर्वकम् । अत्रान्तरे च संप्राप्ता चतुर्थी करकाभिधा । वीरवत्या समारब्धं व्रतं कामप्रदं शुभम् । कुड्ये बोधिद्रुमं चक्रे गौरीं तस्य तलेऽलिखत् । शिवेन विघ्ननाथेन षण्मुखेन समन्विताम् । गन्धपुष्पाक्षतैर्गौरीं पूजयामास मन्त्रतः । नमः शिवायै शर्वाण्यै सौभाग्यं संततिं शुभाम् । प्रयच्छ भक्तियुक्तानां नारीणां हरवल्लभे । तस्याः पार्श्वे महादेवं विघ्ननाथं षडाननम् । पुनः पुष्पाक्षतैर्धूपैरानर्च च पृथक्पृथक् । पक्वान्नाक्षतसंपन्नान्सदीपान्करकान्भृशम् । तथा पिष्टकनैवेद्यं भोज्यं सर्वं न्यवेदयत् । प्रतीक्षन्त्यः स्त्रियः सर्वाश्चन्द्रमर्घ्यपराः स्थिताः । सा बाला विकला दीना क्षुत्तृषा-परिपीडिता । निपपात महीपृष्ठे रुरुदुर्बान्धवास्तदा । समाश्वास्य च तां ते तु मुखम-भ्युक्ष्य वारिणा । तद्भ्राता तु विचिन्त्यैवमारुरोह महावटम् । हस्तेनोल्कां समादाय ज्वलन्तीं स्नेहपीडितः । भगिन्यै दर्शयामास चन्द्रं व्याजोदितं तदा । तं दृष्ट्वा चार्ति-मुत्सृज्य बुभुजे सुमनास्तदा । चन्द्रोदयं समाज्ञाय अर्घ्यं दत्त्वा विधानतः । तद्दोषेण मृतस्तस्याः पतिर्धर्मश्च दूषितः । पतिं तथाविधं दृष्ट्वा शिवमभ्यर्च्य सा पुनः । व्रतं निर-शनं चक्रे यावत्संवत्सरो गतः । चक्रुः संवत्सरततं व्रतं तद्भ्रातृयोषितः । पूर्वोक्तेन विधानेन सापि चक्रे शुभानना । तदायाता शचीकन्या सखीभिः परिवारिता । एत-देव व्रतं कर्तुमागता स्वर्गलोकतः । वीरवत्यास्तदाभ्याशमगमद्भाग्यतः स्वयम् । दृष्ट्वा तां मानुषीं देवीं पप्रच्छ सकलं शची । वीरवती तदा पृष्टा प्रोवाच विनयान्विता ।अहं पितृगृहं प्राप्ता मृतो मेऽयं पतिः प्रभुः । न जाने कर्मणः कस्य फलं प्राप्तं मयाऽधुना । मम भाग्यवशाद्देवि आगतासि महेश्वरि । अनुगृह्णीष्व मां मातर्जीवयाशु पतिं मम ।' इन्द्राण्यु-

वाच–' त्वया पितृगृहे पूर्वं कुर्वन्त्या करकाव्रतम् । वृथैवार्घ्यस्त्वया दत्तो विना चन्द्रोदयं शुभे । तेन ते व्रतदोषेण स्वामी लोकान्तरं गतः । इदानीं कुरु यत्नेन करकाव्रतमुत्तमम् । पतिं ते जीवयिष्यामि व्रतस्यास्य प्रभावतः ।' व्यास उवाच–' तस्यास्तद्वचनं श्रुत्वा व्रतं चक्रे विधानतः । प्रसन्ना साऽभवद्देवी शक्रस्य प्राणवल्लभा । तया व्रते कृते देवी जलेनाभ्युक्ष्य तत्पतिम् । जीवयामास चेन्द्राणी देववच्च बभूव सः । ततश्चागाद्गृहं स्वीयं रेमे सा पतिना सह । धनं धान्यं सुपुत्रांश्च दीर्घमायुश्च लब्धवान् । तस्मात्त्वयापि यत्नेन व्रतमेतद्विधीयताम् ।' सूत उवाच–' द्वैपायनवचःश्रुत्वा चकार द्रौपदी व्रतम् । तद्व्रतस्य प्रभावेण जित्वा तान्कौरवान्रणे । लेभिरे राज्यमतुलं धनधान्यसमन्वितम् । करकं क्षीरसंपूर्णं तोयपूर्णमथापि वा । ददामि रत्नसंयुक्तं चिरं जीवतु मे पतिः । इति मन्त्रेण करकान्प्रदद्याद्द्विजसत्तमे । सुवासिनीभ्यो दद्याच्च आदद्यात्ताभ्य एव च । एवं व्रतं या कुरुते नारी सौभाग्यकाम्यया । सौभाग्यं पुत्रपौत्रादि लभते सुस्थिरां श्रियम् ।' इति श्रीवामनपुराणे करकचतुर्थीव्रतम् ।

कार्तिककृष्णचतुर्थ्यां कृत्यविशेषः संवत्सरप्रदीपे–' आश्विने कृष्णपक्षस्य चतुर्थ्यां रात्रियोगतः । मृण्मयेऽवस्थितः पूज्यो राजा दशरथः स्त्रिया । दुर्गा च तत्र संपूज्या सर्वसौख्यप्रवृद्धये ।' आश्विनोऽत्र मुख्यचान्द्रेणेति तत्रैवोक्तम् । इयं प्रदोषव्यापिनी ग्राह्या । उभयत्र तथात्वे परेति तत्रैवोक्तम् ।

अथ कार्तिकशुक्लचतुर्थ्यां कूर्मपुराणोक्तं नागव्रतम् । मदनरत्ने–कार्तिकशुक्लपक्षमुपक्रम्य ' तिथौ युगाह्वयायां तु समुपोष्य यथाविधि । शंखपालादिनागानां शेषस्य च महात्मनः । पूजा कार्या पुष्पगन्धक्षीराप्यायनपूर्वकम् ।' इति । युगाह्वयायां चतुर्थ्याम् । एतच्च मध्याह्नव्यापिन्यां कर्तव्यम् । यथा च स्कन्दपुराणे–' युगं मध्ये दिने यत्र तत्रोपोष्य फणीश्वरान् । क्षीरेणाप्याय पञ्चम्यां कारयेत्प्रयतो नरः । विषाणि तस्य नश्यन्ति न तं हिंसन्ति पन्नगाः ।' इति नागव्रतम् ।

अथ मार्गशीर्षशुक्लचतुर्थ्यां कृच्छ्रचतुर्थीव्रतम् । स्कन्द उवाच–'केन भोगानवाप्नोति निर्विघ्नं पुरसूदन । पुत्रपौत्रांस्तथारोग्यं व्रतेनाप्नोति शंकर ।' ईश्वर उवाच । ' पुरा देवासुरे युद्धे असुरैर्निर्जिता रणे । शक्राद्या देवताः सर्वास्त्रिपुरावासिभिर्जिताः । तदा विवर्णवदनास्ते सर्वे मामुपागताः । त्राहि त्राहि वदन्तस्ते मयाप्याश्वासितास्तदा । विघ्नैरुपहतानां च समादिष्टं व्रतं मया । तत्कृतं तैस्तदा स्कन्द तेषां तुष्टो गणाधिपः । गणेशेन तु तुष्टेन विघ्नानां संक्षयः कृतः ।' स्कन्द उवाच–' विधिना केन देवेश

व्रतमेतन्महाफलम् । कृतं भवति देवेश तन्मे ब्रूहि वृषध्वज । ' ईश्वर उवाच ।' मार्गशीर्षे शुभे मासि सितपक्षेषु षण्मुख । चतुर्थ्यां नियमं गृह्य विघ्नेशं पूज्य यत्नतः । पुष्पैर्गन्धैश्च नैवेद्यैर्लड्डुकैश्च सुसंस्कृतैः । पललोण्डेरकैश्चैव तथा सोहालकैः प्रभुः । पूजयित्वा विधानेन प्रार्थयेत्तञ्च मानवः । त्वत्प्रसादेन देवेश व्रतं वर्षचतुष्टयम् । निर्विघ्नेन तु मे यातु प्रमाणं मूषकध्वज । संसारार्णवदुस्तारं सर्वविघ्नसमाकुलम् । तस्माद्दीनं जगन्नाथ त्राहि मां गणनायक । एवं प्रार्थ्य गणाध्यक्षं भुञ्जीयाद्वाग्यतस्ततः । एवं क्रमेण संपूज्य एकभक्ती नरोत्तमः । गणेशं मनसा ध्यायंस्ततो रात्रौ स्वपेद्बुधः । एवं संवत्सरं कृत्वा चतुर्थीं प्रति षण्मुख । ततो मार्गशिरे मासि विधानेन प्रपूजनम् । नक्ताशी च भवेत्तद्वद्यावत्संवत्सरं पुनः । मार्गशीर्षे तु संप्राप्ते तथैवायाचिती भवेत् । अयाचितेनाब्दमेकं ततो मार्गशिरे पुनः । आरभ्योपवसेदब्दमेकं तद्वच्च पूजनम् । एवं क्रमेण विधिवच्चत्वार्यब्दानि मानवः । समाप्य तु ततो ह्यन्ते व्रतस्नातो महाव्रती । कारयेद्धेमघटितं स्वशक्त्याखुरथं शुभम् । कारयेद्वर्णकैः शुभ्रैररविन्दं सुपत्रकम् । तस्योपरि घटं स्थाप्य ताम्रपात्रेण संयुतम् । पूजयेच्छुभ्रशालेयैस्तन्दुलैरेव षण्मुख । तस्योपरि न्यसेद्देवं वासोभिर्वेष्टय सुव्रत । पूजयेत्पुष्पधूपाद्यैर्नैवेद्यैर्विविधैस्तथा । मोदकैश्च ततः शुभ्रैः पक्वान्नैर्घृतपाचितैः । नैवेद्यं कल्पयेत्तत्र गणेशः प्रीयतामिति । जागरं कारयेद्विद्वान्गीतवादित्रनिःस्वनैः । पुराणाख्यानकैश्चैव तां रात्रिं क्षपयेद्बुधः । प्रभाते विमले स्नातो होमकार्याणिकारयेत् । तिलव्रीहियवैश्चैव तथा सिद्धार्थकैः शुभैः । ' होमश्चैतैर्मन्त्रैःकार्यः । ॐगणाय स्वाहा । ॐगणाधिपतये स्वाहा । ॐ मेघवर्णाय स्वाहा । ॐकूष्माण्डायस्वाहा । ॐत्रिपुरान्तकायस्वाहा । ॐएकदन्तायस्वाहाॐलम्बोदरायस्वाहा । ॐरुक्मदंष्ट्राय स्वाहा । ॐविघ्नेश्वराय स्वाहा । ॐब्रह्मणे स्वाहा । ॐइन्द्राय स्वाहा । ॐयमायस्वाहा । ॐवरुणायस्वाहा । ॐसोमाय स्वाहा । ॐसूर्याय स्वाहा । ॐगणेशाय स्वाहा । ॐपरमेष्ठिने स्वाहा । 'अष्टोत्तरशतं हुत्वा ततो व्याहृतिभिर्हुनेत् । यावच्छक्त्या महाबाहो ततो होमः समाप्यते । ततस्तु अर्चयेद्विद्वानाचार्यं भक्तिभावतः । वस्त्रैराभरणैर्दिव्यैः पूजयित्वा क्षमापयेत् । तत्पत्नीं पुरुषो भक्त्या रत्नैराभरणैः शुभैः । शय्यां दद्यात्ततो राजन्सोपधानां सगेन्दुकाम् । गां सवत्सां ततो दद्यात्सर्वालङ्कारभूषिताम् । प्रीयतां गणनाथोऽत्र इति मन्त्रमुदाहरेत् । ब्राह्मणान्भोजयेद्भक्त्या चतुर्विंशतिसंख्यया ।

---

१—पललं तिलपिष्टम् । उण्डेरका• पिष्टादिमया वर्तुलाकारा• । २ प्रमाणं मर्यादा समाप्तिरिति यावत् । प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु ' इत्यभिधानात् ।- ३—आखुरथं गणेशम् ।'

तेभ्यस्तु करकान्दद्यात्तिलपात्रसमन्वितान् । अनेन विधिना यस्तु करोति व्रतमुत्तमम् । न विघ्नैरभिभूयेत गणनाथप्रसादतः । यं करोति समारम्भं निर्विघ्नं तत्फलप्रदम् । पूर्वं तथा कृतं सर्वैरिन्द्राद्यैस्त्रिदशैर्विभो । रुद्रेण ब्रह्मणा चैव विष्णुना च कृतं पुरा । अन्यैश्चैव महीपाल राजभिर्बहुभिः कृतम् । एतदेव व्रतं चीर्णं मानुषैर्भूतले मुने । अनेन क्रियमाणेन न विघ्नैरभिभूयते । स्वर्गलोकात्परिभ्रष्टस्ततो याति परां गतिम् ।’

**इति स्कन्दपुराणोक्तं सोद्यापनं कृच्छ्रचतुर्थीव्रतम् ।**

मार्गशीर्षशुक्लचतुर्थी वरचतुर्थी तस्यां सर्वार्थसाधकमब्दचतुष्टयसाध्यं व्रतमुक्तं **स्कन्दपुराणे**—‘चतुर्थ्यां मार्गशीर्षे तु शुक्लपक्षे नृपोत्तम । प्रारभ्य प्रतिमासं च चतुर्थ्यां गणनायकम् । संपूज्य विधिना कुर्यादेकभक्तं समाहितः । अक्षारलवणं त्वेवं पूर्णे संवत्सरे ततः । द्वितीये वत्सरे चाथ नक्तं प्रतिचतुर्थिकम् । कुर्याद्गणेशमभ्यर्च्य तृतीयेऽयाचितं तथा । एवमेव प्रकुर्वीत चतुर्थे स्यादुपोषणम् । ततश्चतुर्थे संपूर्णे तदुद्यापनमाचरेत् । इदं वरचतुर्थ्याख्यं व्रतं सर्वार्थसाधकम् ।’ इति । इति **स्कन्दपुराणोक्तं** वरचतुर्थीव्रतम् । अत्र प्रथमवर्षे एकभक्तमुक्तं तत्स्वरूपं तु दिनार्धसमये इत्यादिना पूर्वमेवोक्तम् । यत्तु केनचिदुक्तम्—‘भोजनं तु विधिप्राप्तं द्वात्रिंशद्ग्राससंमितम् ।’ तेनैकभक्तम् एकोनत्रिंशद्ग्रासा इति फलितोऽर्थ इति । तत्तुच्छम् । भिक्षुकस्यैकभुक्ते कदाचित्स्वल्पबुभुक्षाप्राभावेतन्नियमस्यासंभवात्, वचनाभावाच्च । स्वल्पबुभुक्षावत एकोनत्रिंशद्ग्रासादनासंभवाच्च । ननु ‘अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः । द्वात्रिंशतं गृहस्थस्यापारिमितं ब्रह्मचारिणः ।’ इति वचनमस्तीति चेत् । सत्यम् । एतद्वचनस्य परिगृहीतनियतसायंप्रातरनुष्ठेयप्रमाणाग्निहोत्रविषयत्वात् । एतद्वचनस्य तद्विषयत्वं च बौधायनसूत्रे स्पष्टम् । ग्रासलक्षणं तु—‘कुक्कुटाण्डसमो ग्रासो यथा वा मुखमाविशेत् ।’ इति । यावदेवं ग्रसितुं शक्यमिति याज्ञवल्क्यधर्मप्रश्नयोरुक्तम् । तस्मान्न्यूनग्रासत्रयेण त्वित्यत्र ग्रासत्रयशब्दो न्यूनत्वोपलक्षणार्थः ।

माघकृष्णचतुर्थी वक्रतुण्डचतुर्थीति भट्टोजिदीक्षितः । माघकृष्णचतुर्थ्यां संकष्टचतुर्थीव्रतारम्भ इति कश्चित् । ‘माघमासे कृष्णपक्षे चतुर्थ्यां व्रतमुत्तमम् । प्रतिमासं प्रकुर्वीत व्रतं संकष्टनाशनम् ।’ इति भविष्योत्तरोक्तवचनात् । माघकृष्णचतुर्थ्यां व्रतारम्भं कृत्वा प्रतिमासं कार्यमित्यर्थः । इयं चन्द्रोदयव्यापिनी ग्राह्या । पूजा विधूदये कार्येति तत्रैवोक्तेरिति ।

माघशुक्लचतुर्थी वरदाख्या कुन्दचतुर्थीति हेमाद्रौ निर्णयामृते चोक्तम् ।

तत्र सा प्रदोषव्यापिनी ग्राह्या। अत्र कुन्दपुष्पैःशिवमभ्यर्च्य नरो नक्तभोजी श्रियमाप्नोति। तदुक्तं कूर्मपुराणे--'कुम्भे शुक्लचतुर्थ्यां तु कुन्दपुष्पैः सदाशिवम्। संपूज्य यो हि नक्ताशी स प्राप्नोति श्रियं नरः।' इति।

अस्यामेव चतुर्थ्यां ब्रह्मपुराणोक्तं गौरीचतुर्थीव्रतम्। 'उमाचतुर्थ्यां माघे तु शुक्लायां योगिनीगणैः। प्रागभक्षयित्वा सृष्टा च भूयः स्वाङ्गात्स्वकैर्गणैः। ससृजुः सहिता यस्मात्तस्मात्प्रोक्ता सतीत्युमा। तस्मात्सा तत्र संपूज्या नरैः स्त्रीभिर्विशेषतः। कुन्दपुष्पैः प्रयत्नेन सम्यग्भक्त्या समाहितैः। कुङ्कुमालक्तकाभ्यां च रक्तसूत्रैः सकङ्कणैः। अर्घ्यैः पुष्पैस्तथा धूपैर्दीपैर्बलिभिरेव च। गुडार्द्रकाभ्यां पयसा लवणेनाथ पालकैः। पूज्याः स्त्रियश्चाविधवास्तथा विप्राश्च शोभनाः। सौभाग्यवृद्धये पश्चाद्भोक्तव्यं बन्धुभिः सह।' इति। पालकैः कुण्डकैः मृद्भाण्डविशेषैरित्यर्थः। अविधवा इत्यनेन सधवाः कुमार्यश्च संगृहीताः। इति गौरीचतुर्थीव्रतम्। देवीपुराणे त्वियं कुण्डचतुर्थीत्युक्तम्। 'माघमासे तु संप्राप्ते चतुर्थी कुण्डसंज्ञिता। उपोष्या सा सुरश्रेष्ठ ततो राज्यं भविष्यति। सर्वोपहारसंयुक्तं सर्वोपस्करमाहरेत्। पुष्पपत्रफलं नालं कन्दमूलानि यानि च। वन्यानि चैव धान्यानि तदन्यानि विशेषतः। त्वक्सारचारबीजानि नवानि पल्लवानि च। बल्लवं दुर्लभं शाकं लवणं गुडशर्करा। खण्डजीरककुस्तुम्बुधान्यानि विविधानि च। दातव्यानि सुरश्रेष्ठ कन्यकानां तु भक्तितः। शूर्पपात्रं तथा भाण्डं मृण्मयानि विशेषतः। उद्दिश्य दापयेद्देवी प्रीयतां मे सदा इति। अनेन विधिना शक्र सौभाग्यं पुत्रसंततिः। वर्धते नात्र संदेहो नान्यथा मम भाषितम्।' इति देवीपुराणोक्तं कुण्डचतुर्थीव्रतम्।

माघशुक्लचतुर्थ्यां ढुण्ढिपूजोक्ता काशीखण्डे। इयमेव तिलचतुर्थीत्युच्यते। माघशुक्लचतुर्थ्यां तु नक्तव्रतपरायणाः। ये त्वां ढुण्ढेऽर्चयिष्यन्ति तेऽर्च्याः स्युरसुरद्रुहाम्। विधाय वार्षिकीं यात्रां चतुर्थीं प्राप्य तापसीम्। शुक्लां शुक्लतिलैर्बद्ध्वा प्राश्नीयाल्लड्डुकान्व्रती। तां यात्रां नात्र यः कुर्यान्नैवेद्यं तिललड्डुकैः। उपसर्गसहस्रैस्तु स हन्तव्यो ममाज्ञया। होमं तिलाज्यद्रव्येण यः करिष्यति भक्तितः। तस्यां चतुर्थ्यां मन्त्रज्ञस्तस्य मन्त्रः प्रसेत्स्यति।' इति। 'माघमासे चतुर्थ्यां तु तस्मिन्काले उपोषितः। अर्चयित्वा तु यो देवि जागरं तत्र कारयेत्।' इति त्रिस्थलीसेतौ लैङ्गेऽपि। तिथितत्त्वे भविष्योत्तरे माघशुक्लमधिकृत्य 'चतुर्थी वरदानाम तस्यां गौरी सुपूजिता। सौभाग्यं मङ्गलं कुर्यात्पञ्चम्यां श्रीरपि श्रियम्।'

माघशुक्लचतुर्थ्यां भविष्यत्पुराणोक्तं शान्तिचतुर्थीव्रतम् । सुमन्तुरुवाच । 'माघे मासि तथा शुक्ला या चतुर्थी महामते । सा सर्वशान्तिदा नित्यं शान्तिं कुर्यात्सदैव हि । स्नानं दानं बलिः कर्म सर्वमस्यां कृतं विभो । भवेत्सहस्रगुणितं प्रसादाद्दन्तिनः सदा । कृत्वोपवासं यस्तस्यां पूजयेद्विघ्ननायकम् । तस्य होमादिकं कर्म भवेत्साहस्रकं नृप । लवणं गुडपूपांश्च घृताक्तांस्तांश्च भारत । दत्वा भक्त्यैव विघ्नेशे फलं साहस्रकं लभेत् । विशेषतस्तथा राजन्पूजयेत्स्वगुरुं नृप । गुडलवणघृतैर्वीर सदाऽस्यां कुरुनन्दन ।' इति भविष्यत्पुराणोक्तं शान्तिचतुर्थीव्रतम् । भौमवारयुक्तचतुर्थ्यां विशेष उक्तो लैङ्गे—'अङ्गारकचतुर्थ्यां ये स्नात्वोत्तरवहाम्भसि । अभ्यर्च्याङ्गारकेशानं नमस्यन्ति नरोत्तमाः । न तेषां ग्रहपीडा च कदाचित्क्वापि जायते ।' इति । अथ मत्स्यपुराणोक्तमङ्गारकचतुर्थीव्रतम् । शुक उवाच ।'चतुर्थ्यङ्गारकदिने यदा भवति दानव । मृदा स्नानं तदा कुर्यात्पद्मरागविभूषणैः । अग्निर्मूर्द्धादिवो मन्त्रं जपंस्तिष्ठेदुदङ्मुखः । शूद्रस्तूष्णीं स्मरन्मौनमास्ते भोगविवर्जितः । अथास्तमितआदित्येगोमयेनोपलिप्य च । प्राङ्गणंपुष्पमालाभिरक्षताभिःसमंततः । अभ्यर्च्याभिलिखेत्पद्मं कुङ्कुमेनाष्टपत्रकम् । कुङ्कुमस्याप्यभावे तु रक्तचन्दनमिष्यते । चत्वारः करकाः कार्या भक्ष्यभोज्यसमान्विताः । तण्डुलै रक्तशालीयैः पद्मरागैश्च संयुताः । चतुष्कोणेषुतान्कृत्वा[1] फलानिविविधानि च । गन्धमाल्यादिकंसर्वं तथैव विनिवेदयेत् । सुवर्णशृङ्गीं कपिलामथार्च्य रौप्यैः खुरैः कांस्यदुहां सवस्त्राम् ।धुरंधुरं रक्तमतीव सौम्यं धान्यानिसप्ताम्बरसंयुतानि ।'धुरंधुरंवृषभम्। 'सप्त धान्यानि यवगोधूमधान्यतिलकङ्गुश्यामाकचीनकानि। 'अङ्गुष्ठमात्रं पुरुषं तथैव सौवर्णमत्यायतबाहुदण्डम् । चतुर्भुजं हेममये निविष्टं पात्रे गुडस्योपरि सर्पिषा युतम् । सामस्वरज्ञाय जितेन्द्रियाय पात्राय शीलान्वयसंयुताय । दातव्यमेतत्सकलं द्विजाय कुटुम्बिने नैव च दम्भयुक्ते । भूमिपुत्र महातेजः स्वेदोद्भव पिनाकिनः । रूपार्थी त्वां प्रपन्नोऽहं गृहाणार्घ्यं नमोऽस्तु ते । मन्त्रेणानेन दत्वाऽर्घ्यं रक्तचन्दनवारिणा । ततोऽर्चयेद्विप्रवरं रक्तमाल्याम्बरादिभिः । दद्यान्मन्त्रेण तेनैव भौमं गोमिथुनान्वितम् ।' भौमं पूर्वोक्तां सुवर्णमयीं भौमप्रतिमां मिथुनं पूर्वोक्तमेव पूर्वोक्तगुणसंपन्नाय ब्राह्मणाय दद्यादित्यर्थः । 'शय्यां च शक्तितो दद्यात्सर्वोपस्करसंयुताम् । दद्यादिष्टतमं लोके यच्चास्य दयितं गृहे । तत्तद्गणपतेर्देयं तदेवाक्षतमिच्छता ।' अन्यत्रापि । 'अङ्गारकदिने प्राप्ते चतुर्थी वा चतुर्दशी । षष्टिवर्ष-

१—तान्करकान् ।

सहस्राणि तत्कर्ताविन्दतेफलम्।' चतुर्थी भूमिपुत्रेणेत्यादि व्रतमुमाप्रकरणे द्रष्टव्यम्। अथात्रोपयुक्तोभौमपूजाविधिर्लिख्यते। ओं ह्रां हं सः खं ख इत्यनेनप्राणायामत्रयं कृत्वा अस्य मन्त्रस्य विरूपऋषिर्गायत्रीच्छन्दो मङ्गलो देवता अँबीजं ह्रां शक्तिः खं कीलकम् इष्टार्थे विनियोगः इति पठित्वा ऋष्यादीन् शिरःप्रभृतिषु विन्यस्य षड्भिर्बीजैः षडङ्गानि विधाय 'जपाभं शिवस्वेदजं हस्तपद्मैर्गदां शूलशक्ती वरं धारयन्तम्। अवन्तीसमुत्थं सुमेषासनस्थं धरानन्दनं रक्तवस्त्रं समीडे।' इति ध्यात्वा मानसोपचारैः संपूज्य पुष्पान्तां बाह्यपूजां कृत्वा षड्भिर्वर्णैः षडङ्गानि संपूज्यैकविंशतित्रिकोणकोष्ठेषु मङ्गलादीन्पूजयेत्। तद्यथा। मङ्गलाय नमः, भूमिपुत्राय नमः, ऋणहर्त्रे नमः, धनप्रदाय नमः, स्थिरासनाय नमः, महाकायाय नमः, सर्वकर्मावरोधकाय नमः, लोहिताय नमः, लोहिताक्षाय नमः, सामगानां कृपाकराय नमः, धरात्मजाय नमः, कुजाय नमः, भौमाय नमः, भूतिदाय नमः, भूमिनन्दनाय नमः, अङ्गारकाय नमः, यमाय नमः, सर्वरोगापहारकाय नमः, वृष्टिकर्त्रे नमः, वृष्टिहर्त्रे नमः, सर्वकामफलप्रदाय नमः। तत इन्द्रादीन्वज्रादींश्च संपूज्य धूपादिशेषपूजां समापयेत्। ततो विशेषार्घ्यं दद्यात्। 'प्रदक्षिणां ततः कृत्वा विसर्ज्य द्विजपुङ्गव। नक्तमक्षारलवणमश्नीयाद्घृतसंयुतम्। शक्त्या यस्तु पुमान्कुर्यादेवमङ्गारकाष्टकम्। चतुरो वाऽथ वा तस्य तत्पुण्यं तद्वदामि ते। रूपसौभाग्यसंपन्नः पुनर्जन्मनि जन्मनि। वैष्णवोऽथ शिवे भक्तः सप्तद्वीपाधिपो भवेत्। सप्तकल्पसहस्राणि इह लोके महीयते।' इति मत्स्यपुराणोक्तमङ्गारकचतुर्थीव्रतम्।

अथ भविष्यत्पुराणोक्तं गणेशव्रतम्। ब्रह्मोवाच। 'गणेशः पूजितः कुर्याच्चतुर्थ्यां सर्वकर्मसु। अविघ्नं सुरलोके च गतिमिष्टां प्रयच्छति। कर्मस्वविदुषां विघ्नं कुर्याच्चैव न संशयः।' अविदुषां स्मरणमकुर्वतां तेन कर्मकालेऽवश्यं कर्तव्यः पूज्यश्च। 'मूलमन्त्राः स्वसंज्ञाभिरङ्गमन्त्राश्च कीर्तिताः। पूर्ववत्पद्ममध्यस्थः कर्तव्यश्च तिथीश्वरः।' अत्र तिथीश्वरो गणेशः 'गन्धपुष्पोपहारैश्च यथाशक्त्या विधीयते। पूजाशाठ्येन शाठ्येन कृतापि तु फलप्रदा। आज्यधारासमिद्भिश्च दधिक्षीरान्नमाक्षिकैः। पूर्वोक्तफलदो होमः कृतः शान्तेन चेतसा।' इति भविष्यत्पुराणोक्तं गणेशव्रतम्।

सूत उवाच। 'चतुर्थ्यां न तु भुञ्जीत स्नात्वा नद्यां नृपोत्तम। रक्ताम्बरधरो भूत्वा रक्तगन्धानुलेपनैः। रक्तवीतो गणाधीशं विनायकमथार्चयेत्। रक्तचन्दनतो-

येन स्नानपूर्वं विधानतः । विलिप्य रक्तगन्धेन रक्तपुष्पैरपूजयत् । ततोऽसौ दत्तवान्धूपमाज्ययुक्तं सचन्दनम् । नैवेद्यं चैव हारिद्रं गुडखण्डघृतप्लुतम् । एवं संवत्सरं पूज्य विनायकमथास्तुवत् । ' इक्ष्वाकुरुवाच । ' नमस्कृत्वा महादेवं स्तोष्येऽहं तं विनायकम् । महागणपतिं शूरमूर्जितं जयवर्धनम् । एकदन्तं द्विदन्तं च चतुर्दन्तं चतुर्भुजम् । त्र्यक्षं त्रिशूलहस्तं च रक्तनेत्रं वरप्रदम् । आम्बिकेयं शङ्कुकर्णं प्रचण्डं दण्डनायकम् । आरक्तं दण्डिनं चैव वह्निवक्रं हुतप्रियम् । अनर्चितो विघ्नकरः सर्वकार्येषु यो नृणाम् । तं नमामि गणाध्यक्षं भीममुग्रमुमासुतम् । मदमत्तं विरूपाक्षं भवचक्रसमुद्भवम् । सूर्यकोटिप्रतीकाशं भिन्नाञ्जनसमप्रभम् । बुधं सुनिश्चलं शान्तं नमस्यामि विनायकम् । नमोऽस्तु ब्रह्मरूपाय विष्णुरूपाय ते नमः । नमोऽस्तु गजरूपाय गजानां पतये नमः । मेरुमन्दररूपाय नमः कैलासवासिने । नमो विघ्नविनाशाय नमस्ते ब्रह्मचारिणे । भक्तस्तुताय देवाय नमस्तुभ्यं विनायक । त्वया पुराणे पूर्वेषां देवानां कार्यसिद्धये । गजरूपं समास्थाय त्रासिताः सर्वदानवाः । ऋषीणां देवतानां च कृताः सर्वे मनोरथाः । यतस्ततः सुरैरुग्रैः पूज्यसे त्वं भवात्मज । त्वामाराध्य गणाध्यक्षं सर्वज्ञं कामरूपिणम् । कामार्थं रक्तकुसुमै रक्तचन्दनवारिभिः । रक्ताम्बरधरो भूत्वा चतुर्थ्यामर्चयेज्जपेत् । त्रिकालमेककालं वा नियतो नियताशनः । राजानं राजपुत्रं वा राजमन्त्रिणमेव च । राज्यं वा सर्वविघ्नेश वशीकुर्यात्सराष्ट्रकम् । अविघ्नं तपसामद्य कुरु विघ्नविनायक । मया त्वं संस्तुतो भक्त्या पूजितश्च विशेषतः । यत्फलं सर्वतीर्थेषु सर्वयज्ञेषु यत्फलम् । तत्फलं सर्वमाप्नोति स्तुत्वा देवं विनायकम् । विषमं न भवेत्तस्य न स गच्छेत्पराभवम् । न च विघ्नो भवेत्तस्य जातो जातिस्मरो भवेत् । य इदं पठति स्तोत्रं षड्भिर्मासैर्वरं लभेत् । संवत्सरेण सिद्धिं च लभते नात्र संशयः ।' इति नृसिंहपुराणोक्तं **गणेशचतुर्थीव्रतं गणेशस्तोत्रं च समाप्तम् ।**

अथाङ्गारकशुक्लचतुर्थ्यां भविष्यपुराणोक्तं सुखचतुर्थीव्रतम् । सुमन्तुरुवाच । ' सुखावहां शृणु सुखां सौभाग्यकरणीं पराम् । चतुर्थीं कुरुशार्दूल रूपसौभाग्यदां शुभाम् । सुखव्रतं महापुण्यं रूपारोग्यप्रदायकम् । सुसूक्ष्मं सुकरं धन्यमिदं पुण्यं सुखावहम् । परत्र फलदं वीर दिव्यरूपप्रदायकम् । विलासं विभ्रमाक्षेपहसितं चेष्टितं शुभम् । सुखव्रतेन सर्वं स्याच्छुभं कुरुकुलोद्वह । कृतपूजे तु देवेशे विघ्नेशे शिवयोः सुते । यदा शुक्लचतुर्थ्यां तु वारो भौमस्य वा भवेत् । तदा सा सुखदा ज्ञेया चतुर्थी वै सुखेति च । पुरा मैथुनमाश्रित्य स्थिताभ्यां तुहिनाचले । भीमोमाभ्यां महाबाहो

रक्तबिन्दुश्च्युतः क्षितौ । मेदिन्या स प्रयत्नेन सुखेन तु धृतो जयः । जातस्तस्यां महावीर रक्तो रक्तसमुद्भवः । उमाया आर्तवोत्पन्नस्तस्मादङ्गारको ह्ययम् । अङ्गदोऽङ्गारकान्तिश्च अङ्गानां सुखदो नृप । सौभाग्यादिकरो यस्मात्तस्मादङ्गारको मतः । भक्त्या चतुर्थ्यां नक्तेन यो वै श्रद्धासमन्वितः । उपोष्यति नरो राजन् नारी वाऽनन्यमानसा । पूजयेच्च कुजं भक्त्या रक्तपुष्पविलेपनैः। गणेशं प्रथमं पूज्य भक्त्या श्रद्धासमन्वितः । स तु तुष्टः प्रयच्छेत सौभाग्यं रूपसंपदम् । पूर्वं तु कृतसंकल्पः स्नानं कृत्वा यथाविधि । गृहीत्वा मृत्तिकां वन्देन्मन्त्रेणानेन भारत । इह त्वं वन्दिता पूर्वं कृष्णेनोद्धरता किल । तस्मान्मे दह पाप्मानं यो मया पूर्वसंचितः । इमं मन्त्रं पठन्वीर आदित्याय प्रदर्शयेत् । आदित्यरश्मिभिः पूतां गङ्गाजलकणोक्षिताम् । दत्त्वा मृदं शिरसि तां सर्वाङ्गेषु नियोजयेत् । ततः स्नानं प्रकुर्वीत मन्त्रपूर्वं जले शुभे । यूयमापः स्थ सर्वेषां दैत्यदानवसेविताः । स्वेदाण्डजोद्भिजानां च जरायूणां च योनयः । स्नातोऽहं सर्वतीर्थेषु सर्वप्रस्रवणेषु च । तथा काश्यादितीर्थेषु मानसादिसरःसु च । नदीषु देवखातेषु स्नातोऽहं तेषु तेषु वै । ध्यायन्पठन्निमं मन्त्रं ततः स्नानं समाचरेत् । ततः स्नातः शुचिर्भूतो गृहमागत्य च स्पृशेत् । दूर्वाश्वत्थशमीर्दृष्ट्वा गां च मन्त्रेण मन्त्रवित् । दूर्वां नमस्य मन्त्रेण अश्वत्थशमयस्तथा । गां दृष्ट्वा तु ततो देव्यै दद्याद्वीर प्रदक्षिणाम् । समालभ्य तु हस्तेन ततो मन्त्रमुदीरयेत् । सर्वदेवमयी देवी निर्ऋतिस्त्वं प्रपूजिता । तस्मात्स्पृशामि वन्दे त्वां वन्दिता पापहा भव । ततो भवनमागत्य वन्दित्वा गृहदेवताः। प्रक्षाल्य च मृदा पादावाचान्तोऽग्निगृहं विशेत् । होमं तत्र प्रकुर्वीत एतैर्मन्त्रपदैर्वरैः । शर्वाय शर्वपुत्राय पार्वतीशसुताय च । कुजाय लोहिताङ्गाय ग्रहेशाङ्गारकाय च । ओंकारपूर्वकैर्मन्त्रैःस्वाहाकारसमन्वितैः । अष्टोत्तरशतं, वीर अर्धमर्धार्धमेव वा । एभिर्मन्त्रपदैर्भक्त्या कामतोऽकामतो नृपः । खादिरीभिः समिद्भिश्च आज्यमिश्रैर्यवैस्तिलैः । भक्ष्यैर्नानाविधैश्चान्यैःशक्त्या भक्तिसमन्वितः । कृत्वा होमं ततो वीर देवं संस्थापयेत्क्षितौ । सौवर्णं राजतं ताम्रं भद्रदारुमयं[1] नृप । देवदारुमयं वापि श्रीखण्डघटितं तथा । गाङ्गेयपात्रे रौप्ये वा अर्च्यः कुङ्कुमकेसरैः । अन्यैर्वा लोहितैर्भव्यैः पत्रैः पुष्पैः फलैरपि । रक्तैश्च विविधैर्वीर अथ वा भक्तितोऽर्चयेत् । यावद्विसृज्यते वित्तं पुष्पं वा वीर भक्तितः । तावद्विवर्धते पुण्यं दातुः शतसहस्रकम् । यद्वा ताम्रमये पात्रे वंशजे मृण्मयेऽथ वा । पूजयेत्तु नरो भक्त्या शक्त्या कुङ्कुमकेसरैः ।' ओं अङ्गारकाय नमः पादयोः ।

१ भद्रदारुः सरल ।

ॐ कुजाय नमो वदने। ॐ भौमाय नमः स्कन्धयोः। ॐ मङ्गलाय नमो बाह्वोः। ॐ वज्राय नम ऊर्वोः। ॐ वक्राय नमो जङ्घयोः। ॐ लोहिताय नमः शिखायाम्। 'पुरुषाकृतिं कुजं पात्र एतैर्मन्त्रपदैर्यजेत्। भूमिपुत्र महातेजः स्वेदोद्भव पिनाकिनः। रूपार्थी त्वां प्रपन्नोऽस्मि गृहाणार्घ्यं नमोऽस्तु ते।' अर्घ्यमन्त्रः। 'महादेवाङ्ग-संभूत मेदिनीगर्भसंभव। अङ्गारक महाराज लोहिताङ्ग नमोऽस्तु ते। सुगन्धपुष्पधूपाद्यैर्ब्राह्मणो यः प्रपूजयेत्। गुडौदनघृतक्षीरगोधूमाञ्च्छालित-ण्डुलान्। अपेक्ष्य शक्तिं दद्याद्वै ब्राह्मणेभ्यो यतेन्द्रियः। वित्तशाठ्यं न कुर्वीत विद्यमाने धने नृप। वित्तशाठ्यं हि कुर्वाणो नामुत्र फलभाग्भवेत्।'शतानीक उवाच। 'अङ्गारकेण संयुक्ताश्चतुर्थ्यो नक्तभोजनैः। उपोष्याः कतिसंख्यास्तु उताहो सकृ-देव हि।' सुमन्तुरुवाच। 'चतुर्थी तु चतुर्थी तु यदाऽङ्गारकसंयुता। चतुर्थ्यां तु चतुर्थ्यां तु विधानं शृणु यादृशम्।' एकश्चतुर्थीशब्दस्तिथिविशेषवचनः अपरस्तत्संख्यापर इत्यर्थः। 'उपोष्या तत्र तत्रैव प्रदेयो विधिवत्कुजः।' या या शुक्ला अङ्गारकच-तुर्थी सा सोपोष्या उपोष्य नक्ते नक्तेन विभो चतस्रः कुजसंयुताः सर्वास्वङ्गारकच-तुर्थीषु सामान्यविधिनोपोष्यमाणासु तिसृभिस्तिसृभिरन्तरितायां चतुर्थ्यां विशेषविधिं शृणिवत्यर्थः। 'दशसौवर्णिकं मुख्यं दशार्धार्धमथापि वा। सौवर्णपात्रे रौप्ये वा भक्त्या ताम्रमयेऽपि वा। विंशत्पलानि पात्राणि विंशत्यर्धमयानि वा। विंशत्कर्षाणि वा वीर अतो हीनं न कारयेत्। शक्त्या वित्तस्य भक्त्या तु पात्रे ताम्रमयेऽपि वा। प्रतिष्ठाप्य कुजं पात्रे रक्तवस्त्रेण वेष्टितम्। पुष्पमण्डपिकां कृत्वा द्विव्यैर्धूपैश्च धूपिताम्। तत्रस्थं पूजयेद्देवं पूर्वमन्त्रैः क्रमेण तु। भक्ष्यभोज्यैरनेकैश्च फलै रत्नैश्च संयुतैः। वस्त्रैः प्रावरणैर्यानैः शय्योपानद्वरासनैः। छत्रैः पुष्पैर्गन्धवरैः शक्त्या वित्तानुसारतः। ब्राह्मणाय च तं दद्याद्दक्षिणासहितं नृप। वाचकाय महाबाहो गुणिने श्रेयसेऽनघ। अङ्गारकेण संयुक्ता धेनुं शीलसमन्विताम्। अनेन विधिना दत्वा यथोक्तफलभाग्भ-वेत्। इति ते कथिता पुण्या तिथीनामुत्तमा तिथिः। यामुपोष्य नरो रूपं दिव्यमा-प्नोति भारत। कान्त्यात्रेयसमं वीर तेजसा रविसप्रभम्। प्रतापे हरितुल्यं तु सर्वतो बलसंमितम्। ईदृग्रूपं वरं प्राप्य याति भौमसदो नृप। प्रसादाद्विघ्ननाथस्य गणेशस्य गणायते। पठतां शृण्वतां राजन्कुर्वतां च विशेषतः। ब्रह्महत्यादिपापानि क्षीयन्ते नात्र संशयः।' इति भविष्यत्पुराणोक्तसुखदाचतुर्थी।

हेमाद्रौ भविष्यत्पुराणे--'चतुर्थ्यां च सदा राजन्निराहारो व्रतान्वितः । दत्त्वा तिलान्नं विप्राय स्वयं भुङ्क्ते तिलौदनम् ।' दिवा निराहारो रात्रौ भुङ्क्ते इति विरोधपरिहारः । 'वर्षद्वये समाप्तिर्हि व्रतस्य तु यदा भवेत् । विनायकस्तस्य तुष्टो ददाति फलमीहितम् ।' इति भविष्यत्पुराणे गणपतिचतुर्थीव्रतम् ।

'भरण्यां तु चतुर्थ्यां तु शनैश्चरदिने यमम् । पूजयेत्सप्तजन्मोत्थैर्मुच्यते पातकैर्नरः ।' इति कूर्मपुराणोक्तं यमव्रतम् ।

अथ फाल्गुनादिचतुर्षु मासेषु चतुर्थीव्रतमुक्तं वाराहपुराणे । अगस्त्य उवाच-'अथ विघ्नहरं राजन्कथयामि तवानघ । येन सम्यक्कृतेनेह न विघ्नमुपजायते । चतुर्थ्यां फाल्गुने मासि गृहीतव्यं व्रतं त्विदम् । नक्ताहारेण राजेन्द्र तिलानां पारणं स्मृतम् । तदेवाग्नौ च होतव्यं तद्देयं ब्राह्मणेषु च । 'पूजामन्त्रस्तु । 'दिव्याय शूराय गजाननाय दंष्ट्राकरालया नमः शिवाय । नगात्मजादेहमलोद्भवाय कुठारहस्ताय नमो वराय । ताम्रपात्रैः पायसाद्यैश्चतुर्भिः सहितं नृप । पञ्चमेन तिलैः सार्धं गणशान्तिकरेण च ।' निर्णयामृते तु--'आयसैः पञ्चभिः पात्रैरुपेतं नवभिस्तथा ।' इति पाठः । 'मृण्मयानि दरिद्रस्तु विधिनानेन कारयेत् । चातुर्मास्यव्रतं चैव कृत्वैवं पञ्चमे तथा ।' अनेन मन्त्रेण पूजां कृत्वा स्वाहान्तेन तिलान्नं हुत्वा ब्राह्मणेभ्यो दत्त्वा स्वयमपि तदेव नक्तमश्नीयात् । 'सौवर्णं गजवक्त्रं तु कृत्वा विप्राय दापयेत् । इत्थं व्रतमिदं कृत्वा सर्वविघ्नात्प्रमुच्यते ।' निर्णयामृते--एवं मासचतुष्टये व्रतं कृत्वाषाढशुक्लचतुर्थ्यां सौवर्णविनायकदानमात्रं कुर्यादिति । 'हयमेधस्य विघ्ने तु संजाते सगरः पुरा । एतदेव चारित्वा तु हयमेधं समाप्तवान् । एतदेव हरश्चक्रे त्रिपुरो येन घातितः । मया समुद्रमथने त्वेतदेव व्रतं कृतम् । अन्यैरपि महीपालैरेतदेव पुरा कृतम् । ततो निर्विघ्नसिद्ध्यर्थं विघ्नोपशमनं परम् । अनेन कृतमात्रेण सर्वविघ्नैः प्रमुच्यते । ततो रुद्रपुरीं याति वराहवचनं यथा । विघ्नानि तस्य न भवन्ति गृहे कदाचिद्धर्मार्थकामसुखसिद्धिविघातकानि । यः सप्तमीन्दुशकलाकृतिकांतदन्तं विघ्नेशमर्चयति नक्तकृती चतुर्थ्याम् ।' इति वाराहपुराणोक्तमविघ्नविनायकव्रतम् ।

निर्णयामृते मत्स्यपुराणे--'चतुर्थ्यां नक्तभुग्दद्यादब्दान्ते हेमवारणम् । व्रतं वैनायकं नाम शिवलोकफलप्रदम् ।' इति । इदं व्रतं विशेषानभिधानात् द्वादशस्वपि मासेषु उभयचतुर्थ्योर्विधेयमिति गम्यते । एवं मनोरथविनायकचतुर्थ्यादिविनायकव्रतानि

१ आरवारे इति निर्णयामृते पाठः ।

कुन्दचतुर्थ्यादिगौरीव्रतानि च तृतीयायुक्तचतुर्थ्यामेव कार्याणि । अन्यानि नागचतुर्थ्यादिव्रतानि पञ्चमीयुक्तायां चतुर्थ्यामिति सिद्धान्तः । पक्षद्वयगतासु सर्वास्वपि चतुर्थीषु तिथ्यधिपो गणेशः पूज्यः । 'चतुर्थ्यां गणनाथस्य' इत्युक्तत्वात् । सर्वासु चतुर्थीषु ढुण्ढियात्रोक्ता काशीखण्डे-'कुर्यात्प्रतिचतुर्थीह यात्रां विघ्नेशितुः सदा । ब्राह्मणेभ्यस्तदुद्देशाद्देया वै मोदका मुदा।' इति ।

अथ सिद्धाविरुद्धादिकं लिख्यते। चतुर्थी शनिवारेण सिद्धा जीवेन विरुद्धा । तदुक्तम्-'शनौ चतुर्थी नवमी चतुर्दश्यथ रोहिणी । शततारा स्वातिमघाभाग्यं चैव तु सिद्धयः ।' इति ।'जीवेऽष्टमी चतुर्थी चआर्द्रा चोत्तरफाल्गुनी । रोहिणीवारुणं चैव विरुद्धं मृगशीर्षकम्।' इति। अत्र कृत्यमुच्यते। शत्रुवधाग्निविषप्रयोगाद्यनिष्टकर्म चतुर्थ्यादिरिक्तातिथिषु कार्यम् । तदुक्तं भास्करेण-' चतुर्थ्यां तु चतुर्दश्यां नवम्यां चारिमर्दनम् । दमनं बन्धनं भेदमभियोगाभिचारकम् । विषाग्निसंप्रयोगं च कुर्वीत कपटानि च ।' इति । चतुर्थ्यां नैर्ऋत्यां योगिन्यः प्रतिवसन्ति अतस्तत्संमुखा तत्र यात्रा न कर्तव्या । क्रमात्पूर्वोत्तराग्नेयनैर्ऋत्य इत्युक्तत्वात् । रविभौमशनीनामन्यतमक्रूरग्रहे कर्कस्थे सति चतुर्थी शुभकार्येषु वर्जिता । आद्याश्वतस्र इत्युक्तत्वात् । सूर्ये वृषभकुम्भस्थिते सति चतुर्थी दग्धा भवति ।

श्रीमद्दिल्लीशसेनोद्भटविकटभटश्रेणिमत्तेभसिंह-<br>श्चण्डोन्माद्यत्तुरुष्कक्षुभितवसुमतीपालने धर्मराजः ।<br>पौत्रः श्रीकृष्णसिंहक्षितिपकुलमणेर्विष्णुसिंहस्य पुत्रः<br>श्रीमान्राजाधिराजो जयहरिरमराधीशवत्क्षौ सुखी स्तात्॥ १॥

श्रीमत्पण्डितदेवभट्टतनयः श्रीराघवाङ्घ्रिद्वय-<br>ध्यानावाप्तसमस्तकामनिवहः सम्राट् स रत्नाकरः ।<br>तुष्ट्यै श्रीजयसिंहवर्मनृपतेः कल्पद्रुमे कामदं<br>गुच्छं तूर्यतिथेः परं समकरोत्षष्ठं सुनिर्णायकम् ॥ २ ॥

इति श्रीदेवभट्टात्मजवाजपेययाजिरत्नाकरविरचिते जयसिंहकल्पद्रुमोद्द्योते चतुर्थीनिर्णयः समाप्तः ।

---

## अथ पञ्चमीतिथिव्रतनिर्णयः ।

अथ पञ्चमी निर्णीयते । तत्रादौ शुक्लकृष्णपञ्चमीध्यानम् । 'ग्राहस्था चन्द्रगौरा सा पञ्चमी साक्षकुण्डिका ।' इति । 'पङ्कजस्था प्रवालाभा फणामस्तकभूषणा । शंखमुद्रां तथा पाशं बिभ्राणा पञ्चमी मता।'पञ्चमी माधवमते सर्वापि पूर्वा ।'चतुर्थीसंयुता

कार्या पञ्चमी परया न तु । दैवे कर्मणि पित्र्ये च शुक्लपक्षे तथाऽसिते।' इति हारीतोक्तेः। स्कन्दपुराणेऽपि—'पञ्चमी च तथा कार्या चतुर्थीसंयुता विभो ।' इति । तथा पद्मपुराणभविष्योत्तरपुराणयोः पूर्वोत्तरविद्धाविषयौ विधिनिषेधौ स्मर्येते। 'पञ्चमी च चतुर्थ्यां तु कार्या षष्ठ्या न संयुता ।' इति । मदनरत्नेऽपि पूर्वविद्धा ग्राह्येत्युक्तम् । युगभूतानामिति युग्मवचनात् । 'पञ्चमी सप्तमी चैव दशमी च त्रयोदशी । प्रतिपन्नवमी चैव कर्तव्या संमुखी तिथिः । ' इति पैठीनसिवचनाच्च । संमुखी सायाह्नव्यापिनी । ब्रह्मवैवर्तेऽपि—'प्रतिपत्पञ्चमी भूतसावित्री वटपूर्णिमा । नवमी दशमी चैव नोपोष्याः परसंयुताः ।' इति । स्कन्दोपवासव्रते तु माधवमतेऽप्युत्तरा कार्या। 'स्कन्दोपवासे स्वीकार्या पञ्चमी परसंयुता। ' इति ब्रह्मवैवर्तात् । मदनरत्ने निर्णयामृते च—स्कन्दोपवासपञ्चमीव्यतिरिक्ता सर्वापि पञ्चम्युपवासे पूर्वविद्धैव ग्राह्या । 'प्रतिपत्पञ्चमी चैव उपोष्या पूर्वसंयुता ।' इति जाबालिवचनात् । नागव्रते तु पञ्चमी परविद्धा ग्राह्या । तदुक्तं स्मृत्यन्तरे—'श्रावणे पञ्चमी शुक्ला संप्रोक्ता नागपञ्चमी । तां परित्यज्य पञ्चम्यश्चतुर्थीसहिता हिताः । ' इति । हेमाद्रिमते तु कृष्णा पूर्वा परा सिता । दीपिकायामपि—'कृष्णा पूर्वयुता सिता परयुता स्यात्पञ्चमी—' इति । यत्तु 'पञ्चमी तु प्रकर्तव्या षष्ठ्या युक्ता तु नारद।' इत्यापस्तम्बीयं तन्नागपूजाविषयमित्यनन्तभट्टनिर्णयामृतादयः । चमत्कारचिन्तामणौ च—'पञ्चमी नागपूजायां कार्या षष्ठीसमन्विता । तस्यां तु तुषिता नागा इतरा सचतुर्थिका । ' इति । तेन नागपूजादौ परैव।इति पञ्चमीनिर्णयः।

अथात्र कर्तव्यानि पूजाव्रतानि। चैत्रशुक्लपञ्चमी मत्स्यजयन्तीति केचित् । इयं च मध्याह्नव्यापिनी ग्राह्या । तदुपासकानां च नित्या । अन्येषां काम्या । अस्यामेव श्रीपूजोक्ता हेमाद्रौ विष्णुधर्मोत्तरे—'चैत्रस्य शुक्लपञ्चम्यां पूजयित्वा तथा श्रियम् । सकृदेवाप्नुयादेतत्फलं संवत्सरोद्भवम् । ' इति । मात्स्ये ब्रह्मपुराणे च—'शुक्लायामथ पञ्चम्यां चैत्रे मासि शुभानना । श्रीब्रह्मलोकान्मानुष्यं संप्राप्ता केशवाज्ञया । ततस्तां पूजयेत्तत्र यस्तं लक्ष्मीर्न मुञ्चति । एषा श्रीपञ्चमी प्रोक्ता विष्णुलोकगतिप्रदा ।' इति मत्स्यपुराणद्वयोक्तं श्रीव्रतम् ।

अथ हेमाद्रौ विष्णुधर्मोत्तरोक्तं श्रीव्रतम् । मार्कण्डेय उवाच—'अथातः संप्रवक्ष्यामि श्रीव्रतंनाम ते व्रतम् । चैत्रशुक्लतृतीयायां स्नानमभ्यङ्गपूर्वकम् । कृत्वा शुक्लाम्बरो राजञ्छुक्लमाल्यानुलेपनः । तिष्ठेद्धृतौदनाहारो भूमौ स्वप्यान्निशां च ताम् । चतुर्थ्यां च तथा स्नानं बहिरेव समाचरेत् । पञ्चम्यां च विशेषेण शुक्लाम्बर-

धरः शुचिः। लक्ष्मीं संपूजयेत्पद्मे कृतकेऽकृतके[1] ऽपि वा। शुक्लेन गन्धमाल्येन घृतदीपेन वाप्यथ। हरिद्रया च धान्येन आर्द्रकेण गुडेन च। इक्षुणेक्षुविकारैश्च लवणेन च भूरिणा। स्वशक्त्या च महाराज भूरिणा बलिकल्पनम्। श्रीसूक्तेन ततो वह्नौ पद्मानि जुहुयाच्छुचिः। तदलाभे च बिल्वानि तदलाभे तथा घृतम्। ब्राह्मणान्गोरसप्रायं घृतभूयिष्ठमाशयेत्[2]। सुवर्णमाषकं दद्याद्ब्राह्मणाय च दक्षिणाम्। अनाहारस्ततः स्वप्याच्छुचौ देशे यथाविधि। ततस्तु पञ्चमीं प्राप्य पूर्वाह्णे पद्मिनीजले। स्नात्वा संपूजनं कुर्यात्प्रागवदेव तथा श्रियः। भूय एव द्विजे दद्यात्पूर्वं[3] कनकमाषकम्। पद्माक्षमथ वा बिल्वं प्राश्नीयात्तदनन्तरम्। ततो हविष्यमश्नीयाद्वाग्यतो मानवोत्तमः। संवत्सरमिदं कृत्वा व्रतं पार्थिवसत्तम। फलमाप्नोति विपुलं राजसूयाश्वमेधयोः। विना कनकदानेन व्रतमेतत्समाचरेत्। व्रतान्ते माषकं सर्वमग्निष्टोमफलं लभेत्। संपूज्य सोपवासस्तु शुक्लपक्षस्य पञ्चमीम्। नित्यमेव श्रियं देवीं श्रियमाप्नोत्यनुत्तमाम्। धनमुत्तममाप्नोति रूपमारोग्यमेव च। जगत्प्रधानां वरदां च पुण्यां विभावरीं सर्वगतां नरेन्द्र। श्रद्धान्वितः पूजयतीह यस्तु कामानवाप्नोति स सर्वकालम्।' इति विष्णुधर्मोत्तरोक्तं श्रीव्रतं समाप्तम्।

अथ संवत्सरपर्यन्तं पञ्चम्यां लक्ष्मीव्रतम्। 'लक्ष्मीमभ्यर्च्य पञ्चम्यामुपवासी भवेत्तु यः। समान्ते हेमकमलं दद्याद्धेमसमन्वितम्। स वैष्णवं पदं याति मानवः कुलनन्दिनि। एतल्लक्ष्मीव्रतं नाम दुःखशोकविनाशनम्।' इति पद्मपुराणोक्तं लक्ष्मीव्रतम्।

अथास्यामेव पञ्चम्यां चन्द्रपूजनं पृथिवीपूजनं चोक्तं वीरमित्रोदये विष्णुधर्मोत्तरे—'पञ्चम्यां पूजनं कृत्वा तथा चन्द्रमसो नरः। आयुश्च विपुलां लक्ष्मीं सर्वैश्वर्यं च विन्दति।' इति विष्णुधर्मोत्तरोक्तं सौभाग्यव्रतम्।

'पञ्चम्यां पृथिवीं देवीं तथा संपूजयेन्नरः। तामेवाप्नोत्ययत्नेन नात्र कार्या विचारणा।' इति विष्णुधर्मोत्तरोक्तं पृथिवीव्रतम्।

अस्यामेव चैत्रशुक्लपञ्चम्यां पद्मपुराणीयपातालखण्डोक्तं हयपञ्चमीव्रतम्। 'अश्वराडमृताज्जातो वातरंहा मनोजवः। उच्चैःश्रवाः पूजनीयः पञ्चम्यां चैत्रशुक्लके। तत्रैव पूज्या गन्धर्वास्तुरङ्गाणां तु बान्धवाः।' इति हयपञ्चमी।

इयमेव चैत्रशुक्लपञ्चमी कल्पादिरपि। ताश्चोक्ता हेमाद्रौ मात्स्ये—' ब्रह्मणो

---

१—अकृतके पद्मत्वजात्याक्रान्ते। २—आशयेद्भोजयेत्। ३—पूर्वं दक्षिणात्वेन पूर्वोक्तम्।

या दिनस्यादिः कल्पादिः सा प्रकीर्तिता । वैशाखस्य तृतीया या कृष्णा या फाल्गुनस्य च । पञ्चमी चैत्रमासस्य तत्रैवान्त्या तथापरा । शुक्ला त्रयोदशी माघे कार्तिकस्य तु सप्तमी । नवमी मार्गशीर्षस्य सप्तैताः संस्मराम्यहम् । कल्पानामादयो ह्येता दत्तस्याक्षयकारिकाः ।' इति । अत्रैताः शुक्लाः पौर्वाह्णिक्यः कृष्णा आपराह्णिक्यः इति युगादिवद्व्यवस्था । 'शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः । कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तंगतो रविः ।' इति वाक्यात् । इति चैत्रशुक्लपञ्चमीकृत्यम् ।

अथ श्रावणशुक्लपञ्चमी । सा नागपूजायां परविद्धा ग्राह्या । तदुक्तं चमत्कारचिन्तामणौ—'पञ्चमी नागपूजायां कार्या षष्ठीसमन्विता । तस्यां तु तुषिता नागा इतरा सचतुर्थिका ।' इति । प्रतापमार्तण्डमदनरत्नादावप्येवम् । अत्र कृत्यमुक्तं काशीखण्डे—'यः स्नातो नागपञ्चम्यां कुण्डे वासुकिसंज्ञके । न तस्य विषसंसर्गो भवेत्सर्पसमुद्भवः । कर्तव्या नागपञ्चम्यां यात्रा वर्षासु तत्र वै । नागाः प्रसन्ना जायन्ते कुले तस्यापि सर्वदा ।' इति । अत्र विशेषो हेमाद्रौ भविष्ये—'श्रावणे मासि पञ्चम्यां शुक्लपक्षे नराधिप । द्वारस्योभयतो लेख्या गोमयेन विषोल्बणाः । पूजयेद्विधिवद्वीर दधिदूर्वाङ्कुरैः कुशैः । गन्धपुष्पोपहारैश्च ब्राह्मणानां च तर्पणैः । ये तस्यां पूजयन्तीह नागान्भक्तिपुरःसरम् । न तेषां सर्पतो वीर भयं भवति कुत्रचित् ।'[2] इति । नागप्रतिमालक्षणमुक्तं मात्स्ये—'नागाश्चैव तु कर्तव्याः खड्गखेटकधारिणः । अधःसर्पाकृतिस्तेषां नाभेरूर्ध्वं तु मानुषी । फणाश्च मूर्ध्नि कर्तव्या द्विजिह्वा बहवोऽसमाः[1] ।' इयमेव रौरवकल्पादिः ।

अस्यां पञ्चम्यां स्कन्दपुराणीयप्रभासखण्डोक्तं सर्पविषापहपञ्चमीव्रतम् । ईश्वर उवाच— 'श्रावणे मासि पञ्चम्यां शुक्लपक्षे वरानने । द्वारस्योभयतो लेख्या गोमयेन विषोल्बणाः । कृत्वा च कुसुमान्नागानिन्द्राणीं च प्रपूजयेत् । घृतोदकाभ्यां पयसा स्नापयित्वा वरानने । गोधूमैः पयसापूपैर्लाजैश्च विविधैस्तथा । पूजयेद्विधिवद्देवि दधिदूर्वाङ्कुरैः क्रमात् । गन्धपुष्पोपहारैश्च ब्राह्मणानां च तर्पणैः । ये तस्यां पूजयन्तीह नागान्भक्तिपुरःपरम् । न तेषां सर्पतो देवि भयं भवति कुत्रचित् ।' इति सर्पभयपञ्चमीव्रतम् ।

अथवा श्रावणे मासि पञ्चम्या श्रद्धयान्वितः । यस्त्वालेख्य नरो नागान्क-

१—असमा विषमसंख्या । २—'तथा भाद्रपदे ।' इति खपुस्तके पाठः ।

ष्णवर्णादिवर्णकैः । कुरुकुल्यां तथा वीथ्यां स्वगृहे विलिखेद्बुधः । पूजयेद्गन्धपुष्पाद्यैः पयसा पायसेन च । तस्य तुष्टिं समायान्ति पन्नगास्तक्षकादयः । आसप्तमात्कुलात्तस्य न भयं नागतो भवेत् । अयं तु प्रोच्यते मन्त्रः सर्वसर्पनिषेधकः । तस्मिन्प्रजप्तमात्रे तु न विषं क्रमते सदा । " ॐ कुरुकुल्ये हुं फट् स्वाहा । " 'इत्येवं कथितं देवि नागव्रतमनुत्तमम् । यच्छ्रुत्वा च पठित्वा च मुक्तः स्यात्सर्वपातकैः ।' इत्यालेख्यपञ्चमीव्रतम् ।

सर्वा पञ्चमी नागपञ्चमी । तदुक्तं हेमाद्रौ भविष्यत्पुराणे—' पञ्चमी दयिता राजन्नागानन्दविवर्धिनी । पञ्चम्यां स्नपयन्तीह नागान्क्षीरेण ये नराः । तेषां कुले प्रयच्छन्ति अभयं प्राणदक्षिणाम् । '

अथ भाद्रपदशुक्लपञ्चमी । इयम् ऋषिपञ्चमीत्युच्यते।सा मध्याह्नव्यापिनी ग्राह्या । 'पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिः।' इति हारीतोक्तेः। दिनद्वये तत्त्वे हेमाद्रिमते परा 'पञ्चमी तु प्रकर्तव्या षष्ठीयुक्ता तु नारद।' इति वाक्यात् । सिता परयुता स्यात्पञ्चमीति दीपिकोक्तेश्च । 'शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।' इति वचनाच्च । ऋषिपञ्चमी षष्ठीयुतैवेति दिवोदासीये । माधवमदनरत्नादिमते तु पूर्वा।सर्वत्र पञ्चमी पूर्वेत्युक्तेः । निर्णयसिन्धौ कृत्यरत्नावल्यामप्येवम् । अत्र ऋषिपूजनमुक्तं ब्रह्मपुराणे—'नभस्ये शुक्लपक्षे तु यदा भवति पञ्चमी । नद्यादिषु तथा स्नानं कृत्वा नियममेव च। ब्राह्मणी क्षत्रिया वैश्या शूद्रा चापि वरानने। कृत्वा नैमित्तिकं कर्म गत्वा निजगृहं पुनः । वेदिं सम्यक्प्रकुर्वीत गोमयेनोपलेपिताम् । रङ्गवल्लिसमायुक्तां नानापुष्पोपशोभिताम् । तत्र सप्त ऋषीन्दिव्यान्भक्तियुक्तान्प्रपूजयेत् । गन्धैश्च विविधैः पुष्पैर्धूपदीपैः सुशोभनैः । ततो नैवेद्यसंपन्नमर्घ्यं दद्याच्छुभैः फलैः ।'अर्घ्यमन्त्रश्च । 'कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः। जमदग्निर्वसिष्ठश्च सप्तैते ऋषयः स्मृताः। गृहीत्वार्घ्यं मया दत्तं तुष्टा भवन्तु सर्वदा'।इति।'एवं पूजां विनिर्वर्त्य ऋषीन्ध्यात्वा'समाहितः। अकृष्टपृथ्वीसंजातशाकाहारं प्रकल्पयेत्। शयीत ब्रह्मचर्येण ऋषीन्ध्यायेत्समाहितः । अनेन विधिना सप्त वर्षाणि व्रतमाचरेत् ।' इति । 'आदौ मध्ये तथा चान्ते कुर्यादुद्यापनं बुधः । आचार्यान्वरयेत्सप्त वेदवेदाङ्गपारगान् । प्रतिमाः सप्त कुर्वीत सुवर्णेन स्वशक्तितः । जटिलाः साक्षसूत्राश्च कमण्डलुसमन्विताः । संस्थाप्य कलशेष्वेतान्मृन्मयेष्वव्रणेषु च। स्नापयेद्विधिवद्भक्त्या पञ्चामृतैर्यथाविधि । एवं पूजां

१–कुरुकुल्यां वक्ष्यमाणमन्त्रम् । २–रगवल्ली हरिद्रापिष्टादिनिर्मितचतुष्कादिः ।

विनिर्वर्त्य अर्घ्यं दद्याद्यथा पुरा । ततो होमं प्रकुर्वीत तिलव्रीहियवैः क्रमात् । सहस्तोमाः सहेत्येवं नाममन्त्रैस्तु वा पृथक् ।' मन्त्रश्च—"सहस्तोमाः सह छन्दस आवृतः सह प्रमा ऋषयः सप्त दैव्याः । पूर्वेषां पन्थामनुदृश्य धीरा अन्वालेभिरे रथ्यो ३ न रश्मीन् ।' इत्यादि । 'सप्त गावश्च दातव्या वस्त्रालङ्कारसंयुताः । आचार्यं पूजयेद्भक्त्या वस्त्रालङ्कारभूषणैः । अनुज्ञया गुरोः पश्चाद्ब्राह्मणेभ्यो निवेदयेत् । प्रीतिभावसमायुक्ता भोजयित्वा यथाविधि । अनेन विधिना सम्यग्व्रतमेतत्समाचरेत् । सर्वव्रतेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् । सर्वदानेषु दत्तेषु तदेव व्रतधारिणी ।' इति ऋषिपञ्चमीव्रतकृत्यम् ।

अथ ब्रह्माण्डपुराणोक्तमृषिपञ्चमीव्रतोपाख्यानम् । सिताश्व उवाच—'श्रुतानि देवदेवेश व्रतानि सुबहूनि च । सांप्रतं मे समाचक्ष्व व्रतं पापप्रणाशनम् ।' ब्रह्मोवाच—'शृणु राजन्प्रवक्ष्यामि व्रतानामुत्तमं व्रतम् । ऋषिपञ्चमीति विख्यातं सर्वपापहरं परम् । येन चीर्णेन राजेन्द्र नरकं नैव पश्यति । अत्रैवोदाहरन्तीममितिहासं पुरातनम् । वैदिशेऽभूद्द्विजवर उत्तंको नाम नामतः । तस्य भार्या सुशीलेति पतिव्रतपरायणा । तस्या अपत्ययुगलं पुत्रोऽहि सुविभूषणः । अधीतवान्सुतस्तस्य वेदान्साङ्गपदक्रमान्त । समानकुलशीलेन सुता चापि विवाहिता । विवाहितैव सा दैवाद्वैधव्यं प्राप्य सत्तमा । सतीत्वं पालयन्ती सा आस्ते निजपितुर्गृहे । तस्या दुःखेन संतप्तः सुतं संस्थाप्य वेश्मनि । गङ्गातीरवनं प्राप्तः सकलत्रस्तया सह । स तत्राध्यापयामास शिष्यान्वै वेदवित्तमः । सुता च कुरुते तस्य पितुः शुश्रूषणं परम् । पितुः शुश्रूषणं कृत्वा परिश्रान्ता कदाचन ॥ निशीथे किल संसुप्ता कृमिराशिरजायत । तां ते तथाविधां दृष्ट्वा विवस्त्रां प्रस्तरस्थिताम् । शिष्या निवेदयामासुर्मातरं करुणास्थिताः । न जानीमो वयं किंचिद्देवी साध्वी तथाविधा । कृमिराशिमयी जाता मातः संप्रति दृश्यते । वज्रपातसदृक्षं तच्छ्रुत्वा शिष्यैरुदीरितम् । संभ्रान्तमानसा शीघ्रं तत्समीपमुपागता । सा तां तथाविधां दृष्ट्वा विललाप सुदुःखिता । उरश्च ताडयामास सुतरां मोहमाप च । क्षणेन प्राप्य चैतन्यमुत्थाप्य प्रतिमृज्य च । समालम्भ्य च बाहुभ्यां निन्ये तत्पितुरन्तिकम् । स्वामिन्कथय मे साध्वी केन दुष्कृतकर्मणा । निशीथे संप्रसुप्तेयं जातेयं कृमिसंकुला । एतच्छ्रुत्वा ततो वाक्यमृषिर्ध्यानपरायणः । ज्ञात्वा निवेदयामास तस्याः प्राग्जन्मचेष्टितम् ।'ऋषिरुवाच—'प्रागियं सप्तमेऽतीते जन्मनि ब्राह्मणी ह्यभूत् ।

नोत्ससार स्वभाण्डेभ्यः संजाता च रजस्वला । अस्यास्तत्पापजातेन जायते कृमिवद्वपुः । रजस्वला या पापेन युक्ता भवति साऽनघे । प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी । तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति । तथाऽनया सखीसंघाद्व्रतं दृष्ट्वावमानितम् । दृष्टव्रतप्रभावेण जाता द्विजकुलेऽमले । अवमानाद्व्रतस्यास्य कृमिराशिमयी ह्यभूत् । एतत्ते कथितं सर्वं कारणं कन्यकाकृते ।' सुशीलोवाच—'दर्शनादपि यस्य स्याद्विप्राणां निर्मले कुले । जन्म युष्मद्विधानां हि जायते ब्रह्मतेजसाम् । अवज्ञया प्रजायन्ते विग्रहे कृमिराशयः । महाश्चर्यकरं नाथ तद्व्रतं कथयस्व मे ।' ऋषिरुवाच—'सुशीले शृणु तत्सम्यग्व्रतानामुत्तमं व्रतम् । येन चीर्णेन सहसा पापादस्माद्विमुच्यते । दुःखत्रयाभिघातश्च जायते नात्र संशयः । कल्याणानि विवर्धन्ते संपदश्च निरापदः । नभस्ये शुक्लपक्षे तु यदा भवति पञ्चमी । नद्यादिषु तदा स्नानं कृत्वा नियममेव च । विधाय नित्यकर्माणि गत्वा द्वारवतीमृषीन्[१] । स्नापयेद्विधिवद्भक्त्या पञ्चामृतरसैः शुभैः । चन्दनागुरुकर्पूरैर्विलिप्य च सुगन्धिभिः । पूजयेद्विविधैः पुष्पैर्गन्धधूपादिदीपकैः । समाच्छाद्य शुभैर्वस्त्रैः सोपवीतैर्यथाविधि । ततो नैवेद्यसंपन्नमर्घ्यं दद्याच्छुभैः फलैः ।' अर्घ्यमन्त्रः—'कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः । जमदग्निर्वसिष्ठश्च सप्तैते ऋषयःस्मृताः । श्रोतव्यमिदमाख्यानं शाकाहारं प्रकल्पयेत् । स्थातव्यं ब्रह्मचर्येण ऋषिध्यानपरायणैः । अनेन विधिना सम्यग्व्रतमेतत्समाचरेत् । तस्य यज्जायते पुण्यं तच्छृणुष्व समाहिता । सर्वव्रतेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् । सर्वदानेषु दत्तेषु तदस्य व्रतपारणात् । कुरुते या व्रतं चैतत्सा नारी सुखभागिनी । रूपलावण्यसंपन्ना पुत्रपौत्रादिसंयुता । इह लोके सदैव स्यात्परत्राप्यक्षया गतिः । व्रतस्यास्य प्रभावेण जातिं स्मरति पौर्विकीम् ।' इति ब्रह्माण्डपुराणोक्तऋषिपञ्चमीव्रतकथा समाप्ता ।

अथ भविष्योत्तरोक्तशिष्टाचारानुसारिव्रतविधिः । मासपक्षाद्युल्लिख्य मया ज्ञानतोऽज्ञानतो वा रजस्वलावस्थायां कृतसंपर्कजनितदोषपरिहारार्थम् ऋषिपञ्चमीव्रतं करिष्ये इति संकल्प्य, अरुन्धतीसहितान् सप्त ऋषीन् पूजयेत् । तत्र पूजाविधिः । 'आगच्छन्तु महाभागाश्चतुर्वेदस्वरूपिणः । यावद्व्रतमहं कुर्वे कृपया भवतां प्रभो ।' आवाहनम्—'मूर्तं ब्रह्मण्यदेवस्य ब्रह्मणस्तेज उत्तमम् । सूर्यकोटिप्रतीकाशमृषिवृन्दं विचिन्तयेत् ।' ध्यानम्—'ऋग्यजुः सामवेदानां स्वरूपेभ्यो नमो नमः । पुराणपुरुषेभ्यो

१—द्वारवतीमग्निहोत्रशाला धूमनिर्गमार्थं कृतैरनेकद्वारैर्युक्तत्वात् ।

हि देवर्षिभ्यो नमो नमः।' आसनम्। 'गन्धपुष्पाक्षतैर्युक्तं पाद्यं गृह्णन्तु भो द्विजाः। प्रसादं कुरुत प्रीतास्तुष्टाः सन्तु सदा मम।' पाद्यम्। 'नभस्ये शुक्लपञ्चम्यामर्चिता ऋषिसत्तमाः। दहन्तु पापं मे सर्वे अर्घ्यं गृह्णन्तु वै नमः।' अर्घ्यम्। 'लोकानां तुष्टिकर्तारो यूयं सर्वे तपोधनाः। नमो वो ब्रह्मविज्ञेभ्यो महर्षिभ्यो नमो नमः।' आचमनम्। 'मन्दाकिनी गौतमी च यमुना च सरस्वती। कावेरी नर्मदा तापी ताभ्यः स्नानीयमाहृतम्।' स्नानम्। 'सर्वे नित्यं तपोनिष्ठा ब्रह्मज्ञाः सत्यवादिनः। वस्त्राणि प्रतिगृह्णन्तु भक्तिदाः सन्तु मे सदा।' वस्त्रम्। यज्ञोपवीतमन्त्रेण यज्ञोपवीतानि। 'कुङ्कुमागुरुकर्पूरसुगन्धैर्मिश्रितं शुभम्। गन्धाढ्यं चन्दनं दिव्यं गृह्णन्तु ऋषिसत्तमाः।' चन्दनम्। 'रञ्जिताः कुङ्कुमौघेन अक्षतास्तु सुशोभनाः। गृह्णन्तु मम संतुष्टाः प्रसन्ना ऋषिसत्तमाः।' अक्षताः। 'मालतीचम्पकादीनि मल्लिकादीनि वै प्रभो। मयाहृतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम्।' पुष्पम्। 'वनस्पतिरसोद्भूतो गन्धाढ्यः सुमनोहरः। आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्।' धूपम्। 'साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया। दीपं गृह्णन्तु देवेशास्त्रैलोक्यतिमिरापहाः।' इति दीपम्। 'नानापक्वान्नसंयुक्तं रसैः षड्भिः समन्वितम्। नैवेद्यमृषयः सर्वे गृह्णन्तु वसुदायकाः।' नैवेद्यम्। लोकानामित्याचमनम्। चन्दनेन करोद्वर्तनम्॥ 'पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम्। कर्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम्।' ताम्बूलम्। इदं फलमिति फलम्। हिरण्यगर्भगर्भस्थमिति दक्षिणाम्। यानि कानि च पापानि इति प्रदक्षिणा। 'एते सप्तर्षयः सर्वे भक्त्या संपूजिता मया। सर्वपापं व्यपोहन्तु ज्ञानतोऽज्ञानतः कृतम्।' नमस्कारः। 'वायनं फलसंयुक्तं सघृतं दक्षिणान्वितम्। द्विजवर्याय दास्यामि व्रतसंपूर्तिहेतवे। भवन्तः प्रतिगृह्णन्तु ज्योतीरूपास्तपोधनाः।' वायनम्। 'न्यूनातिरिक्तकर्माणि मया यानि कृतानि च। क्षमध्वं तानि सर्वाणि यूयं सर्वे तपोधनाः।' क्षमापनम्। अथ कथा। युधिष्ठिर उवाच—'श्रुतानि देवदेवेश व्रतानि सुबहूनि च। सांप्रतं मेऽन्यदाचक्ष्व व्रतं पापप्रणाशनम्।' श्रीकृष्ण उवाच—'अथान्यामपि राजेन्द्र पञ्चमीमृषिसंज्ञिताम्। कथयिष्यामि यां कृत्वा नारी पापात्प्रमुच्यते।' युधिष्ठिर उवाच—'कीदृशी पञ्चमी कृष्ण कथं च ऋषिसंज्ञिता। पातकान्मुच्यते कस्मान्नारी यदुकुलोद्भव। पापानि च बहून्यत्र विद्यन्ते किल केशव। कृतायामृषिपञ्चम्यां नारी कस्मात्प्रमुच्यते।' कृष्ण उवाच—'अज्ञानाज्ज्ञानतो वापि या स्त्री जाता रजस्वला। दुष्टा स्पृशति भाण्डानि गृहकर्माणि संस्थिता। प्राप्नोति सा महापापं सर्वा नारी रजस्वला। शृणुष्व कारणं

यस्माद्वर्जनीया रजस्वला । प्रोत्सार्या गृहतश्चापि चातुर्वर्ण्येन भारत । ब्रह्महत्यां पुरा शक्रो वृत्रं हत्वा समाप्तवान् । तया वै राजशार्दूल व्रीडितो वृत्रसूदनः । ब्रह्माणं समुपागच्छदात्मनः शुद्धिकारणात् । शुद्धौ शक्रस्य राजेन्द्र प्रहृष्टेनान्तरात्मना । विभज्य ब्रह्महत्यां तु चतुर्धा च चतुर्मुखः । प्राक्षिपद्राजशार्दूल चतुःस्थानेषु वै तदा । वह्नौ प्रथमजातासु ज्वालासु च नदीषु च । पर्वतेषु च राजेन्द्र नारीरजसि पार्थिव । अतो रजस्वला नारी प्रोत्सार्या च प्रयत्नतः । ब्रह्मणः शासनात्पार्थ चातुर्वर्ण्येन सर्वदा।प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी । तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति । अज्ञानाज्ज्ञानतो वापि जातं संसर्गपातकम् । तत्पापसंक्षयार्थं हि कार्येयमृषिपञ्चमी । सर्वपापप्रशमनी सर्वोपद्रवनाशिनी । ब्रह्मक्षत्रियविट्शूद्रैः स्त्रीभिः कार्या विशेषतः ।' कृष्ण उवाच—' अथान्यदपि राजेन्द्र प्रवक्ष्यामि कथानकम् । पुरा कृतयुगे राजन्विदर्भायां बभूव ह । श्येनजिन्नाम राजर्षिश्चतुर्वर्णानुपालकः । तस्य देशेऽवसद्विप्रो वेदवेदाङ्गपारगः । सुमित्रो नाम राजेन्द्र सर्वभूतहिते रतः । कृषिवृत्त्या समासीनः कुटुम्बपरिपालकः । तस्य भार्या सुसाध्वी च पतिशुश्रूषणे रता । जयश्रीर्नाम विख्याता बहुभृत्यसुहृज्जना । क्षेत्रादिषु रता साध्वी व्याकुलीकृतमानसा । एकदा सात्मनः प्राप्तमृतुकालं व्यलोपयत् । रजस्वलापि सा राजन्गृहकर्म चकार ह । भाण्डानि साऽस्पृशद्राजन्नृतौ प्राप्तेऽपि भामिनी । कालेन बहुना साध्वी पञ्चत्वमगमत्तदा । तस्या भर्तापि विप्रोऽसौ कालधर्ममुपेयिवान् । एवं तौ दम्पती राजन्स्वकर्मवशगौ तदा। भार्या तस्य जयश्रीः सा ऋतुसंपर्कदोषतः । शुनीयोनिमनुप्राप्ता सुमित्रोऽपि नरेश्वरः। तस्याः संपर्कदोषेण बलीवर्दो बभूव ह । तद्दोषेण महाराज दुर्गतिं तौ गतौ तदा । सुमित्रस्य च पुत्रोऽभूत्पितृशुश्रूषणे रतः । सुमतिर्नाम धर्मज्ञो देवतातिथिपूजकः । तस्य तौ पितरौ पार्थ ऋतुसंपर्कदोषतः । तिर्यग्योनिमनुप्राप्तावुभौ जातिस्मरौ नृप । उच्छिष्टभोजिनी साऽभूत्स्मरन्ती पूर्वपातकम् । सुमित्रोऽपि पिता तस्य बलीवर्दो बभूव ह । अथ क्षयाहे संप्राप्ते पितृशुश्रूषणे रतः । भार्यां चन्द्रवतीं प्राह सुमतिः श्रद्धयान्वितः । अद्य संवत्सरदिनं पितुर्मे चारुहासिनि । भोजनीया मया विप्राः पाकशुद्धिर्विधीयताम् । तया कृता पाकशुद्धिः सुमतेर्भर्तुराज्ञया । मुक्तं पायसभाण्डे तु सर्पेण गरलं ततः । दृष्ट्वा ब्रह्मवधाद्भीता शुनी भाण्डानि साऽस्पृशत् । द्विजभार्या च तद्दृष्ट्वा उल्मुकेन जघान ताम् । भोजिता ब्राह्मणास्तत्र श्राद्धं कृत्वा प्रयत्नतः । ततो भुक्तेषु विप्रेषु नोच्छिष्टं तु ददौ बहिः । द्वारस्थायास्तदा शुन्या उपवासस्ततोऽभवत् ।

ततो रात्र्यां प्रवृत्तायां सा शुनी क्षुधिता नृप । बलीवर्दमुपागत्य भर्तारमिदमब्रवीत् । बुभुक्षिताद्य नाथाहं न दत्तं भोजनं तु मे । ग्रासादिकं च न लभे क्षुधा मां बाधते बलात् । अन्यस्मिन्दिवसे पुत्रो मम लेह्यं ददात्यसौ । अद्य मह्यं किमप्येष उच्छि- ष्टमपि नो ददौ । पायसान्ने पपाताद्य गरलं सर्पसंभवम् । मया विचिन्त्य मनसा मरि- ष्यन्ति द्विजोत्तमाः । संस्पृष्टं पायसं रोषाद्बध्वाहं ताडिता भृशम् । दुःखितं तेन गात्रं मे कटिर्भग्ना करोमि किम् । ततः प्रहस्य वै भर्ता भद्रे ते पापसंग्रहात् । किं करो- मि ह्यशक्तस्तु भारवाहत्वमागतः । अद्याहमात्मजक्षेत्रे वाहितः सकलं दिनम् । मारि- तश्चात्मजेनाहं मुखं बद्ध्वा बुभुक्षितः । वृथा श्राद्धं कृतं तेन जाताद्य मम कष्टता । ' श्रीकृष्ण उवाच—' तयोः संवदतोरेवं मात्रापित्रोश्च भारत । श्रुत्वा पुत्रस्तदा वाक्यं यदुक्तं च तदोभयोः । ततो रजन्यां तत्कालं भोजनं तु तयोः पुनः । पितरौ तौ विदित्वा च दत्तवान्सुमतिस्तदा । ततोऽसौ दुःखितः पुत्रो ज्ञात्वाऽवस्थां तदा तयोः । मातापि- त्रोस्तु राजेन्द्र तदाऽसौ प्रस्थितो वनम् । ज्ञातुं तदा वैकृतं वै मातापित्रोश्च भारत । तत्र गत्वा ज्ञानवृद्धानृषीन्सप्त वनाश्रितान् । प्रणिपत्याब्रवीद्वाक्यं हितं चैव तदा तयोः । ' सुमतिरुवाच—' कथयध्वं ब्रह्मर्षयः प्रश्नमेकं समाहिताः । केन कर्मविपा- केन पितरौ मे तपोधनाः । इमामवस्थां संप्राप्तौ मोक्ष्येते पातकात्कथम् । ' ऋषय ऊचुः—' तव माता पुरा विप्र स्वगृहे बालभावनः । प्राप्तमृतुं विदित्वा तु संपर्कमक- रोद्द्विज । तेन कर्मविपाकेन शुनीयोनिमुपागता । पिता च स्पर्शदोषेण बलीवर्दो बभूव ह । एतयोर्मुक्तिकामो वै कुरु त्वमृषिपञ्चमीम् । भार्यया सह विप्रेन्द्र ऋषीन्संपूज्य यत्नतः । आचरस्व व्रतं तत्र सप्तवर्षं द्विजोत्तम । अन्ते चोद्यापनं कुर्याद्वित्तशाठ्य- विवर्जितः । शाकाहारस्तु कर्तव्यः श्यामाकाहार एव वा । नीवारैर्वापि कर्तव्यः कृष्ट- पच्यं न भक्षयेत् । प्राप्य भाद्रपदे मासि शुक्लपक्षस्य पञ्चमीम् । तस्यां मध्याह्नसमये नद्यादौ विमले जले । कृत्वाऽपामार्गवृक्षेण दन्तधावनमादितः । आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च । ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते । संप्रार्थ्य तेन मन्त्रेण कुर्याद्वै दन्तधावनम् । अनेन दन्तान्संशोध्य स्नायान्मृत्स्नानपूर्वकम् । तिलामल- ककल्केन केशान्संशोध्य यत्नतः । परिधाय नवे शुद्धे वाससी सुसमाहितः । पूजयस्व ऋषीन्दिव्यानरुन्धत्या समन्वितान् । कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽ- थ गौतमः । जमदग्निर्वसिष्ठश्च साध्वी चैवाप्यरुन्धती । ऋतुसंपर्कजो दोषः क्षयं याति न संशयः । ' श्रीकृष्ण उवाच—' तच्छ्रुत्वा सुमतिर्वाक्यं परमं चर्षिभा-

षितम् । गृहमेत्य व्रतं चक्रे सभार्यः श्रद्धयान्वितः । व्रतं तु ऋषिपञ्चम्याः सर्वपाप-प्रणाशनम् । कृत्वा सर्वं यथोक्तं च मातापित्रोः फलं ददौ । व्रतपुण्यप्रभावेण माता तस्य श्वयोनितः । मुक्ता नृपतिशार्दूल विमानवरसंस्थिता । दिव्याम्बरधरा भूत्वा गता स्वर्गे च भारत । पितापि स मृतोऽगच्छत्सुमित्रः पशुयोनितः । स्वर्गं प्राप्तो महाराज व्रतस्यास्य प्रभावतः । अस्य यज्जायते पुण्यं तच्छृणुष्व द्विजोत्तम । सर्वव्रतेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् । सर्वदानेषु दत्तेषु तदेतद्व्रतपारणात् । कुरुते या व्रतं नारी सा भवेत्सुखभोगिनी । रूपलावण्ययुक्ता च पुत्रपौत्रादिसंयुता । इह लोके सदैव स्यात्परत्र च परा गतिः । एतत्ते कथितं राजन्व्रतानामुत्तमं व्रतम् । सर्वसंपत्प्रदं चैव नारीणां पापनाशनम् । धनं यशश्च स्वर्गं च पुत्रानपि युधिष्ठिर । पठतां शृण्वतां चापि सर्वपापप्रणाशनम् ।' इति भविष्योत्तरपुराणे ऋषिपञ्चमी-व्रतकथा समाप्ता ।

अथोद्यापनम् । युधिष्ठिर उवाच—'किमस्योद्यापनं प्रोक्तं व्रतपूर्णफल-प्रदम् । सुमतिः केन विधिना चकार वद तत्त्वतः ।' श्रीकृष्ण उवाच-' पूर्वस्मिन्दिवसे कुर्यादेकभक्तं समाहितः । शुचौ देशे समालिप्य सर्वतोभद्रमण्डले । अव्रणं सजलं कुम्भं ताम्रं मृन्मयमेव वा । संस्थाप्य वस्त्रसंवीतं कण्ठदेशे सुशोभनम् । पञ्चरत्नसमा-युक्तं फलगन्धाक्षतैर्युतम् । सहिरण्यं समाच्छाद्य ताम्रेण पटलेन वै । वंशमृन्मय-पात्रेण यवपूर्णेन चैव हि । आच्छादयेत्तच्चैलेन लिखेदष्टदलं ततः । सौवर्णीः प्रतिमाः कार्या ऋषीणां भावितात्मनाम् । पलेन वा तदर्धेन तदर्धार्धेन वा पुनः । शक्त्या वा कारयेत्तत्र वित्तशाठ्यविवर्जितः । वितानं पञ्चवर्णं च फलपुष्पसमन्वितम् । बध्नी-यात्तदुपरि श्रीमत्संभारान्संविधाय च । मध्याह्ने पूजयेद्भक्त्या ऋषीञ्छ्रद्धासमन्वितः । कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः । जमदग्निर्वसिष्ठश्च साध्वी चैवाप्यरुन्धती । मन्त्रेणानेन राजेन्द्र कृत्वा पूजां समाहितः । रात्रौ जागरणं कुर्यात्पुराणश्रवणादिभिः। कृतनित्यक्रियः प्रातर्जुहुयात्तिलसर्पिषा । वैदिको वापि पौराणो ह्यधिकारान्मनुः स्मृतः । अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा । पुनः पूजां ततः कृत्वा गुरुं संपूजये-द्व्रती । स्वर्णाङ्गुलीयवासोभिः कुण्डलामृतभाजनैः । दद्यादेकां सवत्सां च गुरवे गां पयस्विनीम् । पूजयेदृत्विजः सप्त वासोभिर्दक्षिणादिभिः । कलशांश्च पवित्रांश्च दद्या-त्तेभ्यः सुभक्तितः । आचार्यं च सपत्नीकं प्रणिपत्य क्षमापयेत् । भोजयेद्ब्राह्मणा-न्भक्त्या दीनानाथान्प्रतर्प्य च । सोपस्करां तां प्रतिमामाचार्याय निवेदयेत् । लब्ध्वा-

नुज्ञां तु भुञ्जान इष्टैर्बन्धुजनैः सह। उद्यापनविधिः प्रोक्तः सर्वेत्रायं फलार्थिनाम्। एवं या कुरुते भूप उद्यापनविधिं परम्। सर्वपापविनिर्मुक्ता स्वर्गलोके महीयते। इह लोके चिरं कालं भर्त्रा सह शुचिस्मिता। पुत्रपौत्रैः परिवृता भुक्त्वा भोगान्मनोरमान्। निःपापा सुभगा नित्यं लभते चाक्षयां गतिम्।' इति ऋषिपञ्चमीव्रतोद्यापनम्।

अथाश्विनशुक्लपञ्चमी। तत्र शचीसहितान्कुशमयान्नागान्घृतसहितैः सलिलैः दुग्धेन च स्नापयित्वा संपूज्य क्षीरसिक्तं गोधूमान्ननैवेद्यं दद्यात्। तदुक्तं हेमाद्रौ भविष्योत्तरे—सुमन्तुरुवाच—'तथा चाश्वयुजे मासि पञ्चम्यां कुरुनन्दन। कृत्वा कुशमयान्नागानिन्द्राण्या सह पूजयेत्।' नागाः—'अनन्तं वासुकिं शंखं पद्मं कंबलमेव च। तथा कर्कोटकं नागं नागमश्वतरं नृप। धृतराष्ट्रं शंखपालं कालियं तक्षकं तथा। पिङ्गलं च महानागं मासि मासि क्रमाद्यजेत्।' इति तत्रैवोक्ताः। इन्द्राणीस्वरूपं ग्रन्थान्तरे—'शची द्विबाहुः संतानमालाहस्ता गजास्थिता।' इति। 'घृतोदकाभ्यां पयसा स्नापयित्वा विशांपते। गोधूमैः पायसास्विन्नभक्ष्यैश्च विविधैस्तथा। ध्यात्वा च विधिवन्नागाञ्छुचिर्भक्त्या समाहिताः। पूजयेत्कुरुशार्दूल तस्य शेषादयो नृप। नागाः प्रीता भवन्तीह शान्तिमाप्नोति वै विभो। स शान्तिलोकमासाद्य मोदते शाश्वतीः समाः। यत्रायं कथ्यते मन्त्रः सदा विषनिषेधकः।' "ॐ कुरु कुल्लयं हुंफट् स्वाहा।' इति भविष्यत्पुराणोक्तं शान्तिपञ्चमीव्रतम्।

निर्णयामृते—अत्रैव चतुर्थ्यां प्रसाधितकेशाया देव्याः पूर्वाह्णे स्नानं कारयेत्। तदुक्तं देवीपुराणे—'प्रातरेव तु पञ्चम्यां स्नापयेत्सलिलैः शुभैः।' इति।

अस्यामेव पञ्चम्यामुपाङ्गललिताव्रतं महाराष्ट्रेषु प्रसिद्धम्। तत्र यद्यपि कथायां कालविशेषो नोक्तस्तथापि 'रात्रौ जागरणं कुर्याद्गीतवादित्रनिःस्वनैः।' इति रात्रौ जागरोक्तेः, शक्तिपूजाया रात्रौ प्राशस्त्यात्। 'व्रतस्यास्य फलं प्रोक्तं जागरे मुनिसत्तमाः।' इति वचनेन जागरस्य प्राधान्यात् युग्मवाक्याच्च। 'भुक्त्वा जागरणे नक्ते चन्द्रार्घ्यर्घव्रते तथा। ताराव्रतेषु सर्वेषु रात्रियोगो विशिष्यते।' इति कालहेमाद्रौ वचनादपि रात्रिर्ग्राह्येति भट्टोजिदीक्षितप्रभृतयः। पूर्वविद्धेति माधवमदनरत्नादीनामपि मतम्। चतुर्थी संयुता कार्येति पूर्वोक्तवचनात्। रात्रिशब्दः पूर्वविद्धावचन इति हेमाद्रिरिति निर्णयसिन्धुस्तन्मतेऽपि पूर्वविद्धैव। दिवोदासीयेऽप्येवमेव। मयूखकृत्स्यरत्नावल्यादौ तु-'पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिः।'इति सामान्यवचनान्मध्याह्नव्यापिनी ग्राह्येत्युक्तम्। उभयत्र तथात्वेऽतथात्वे वा पूर्वोदाहृतवचनेभ्यः पूर्वेत्यपि

कृत्यरत्नावल्याम्।अथ व्रतविधिः।प्रातःकृत्यं निर्वर्त्याष्टाचत्वारिंशत्संख्यान्यपामार्गदन्तकाष्ठान्युपादाय जलाशयं गत्वा आयुर्बलमिति मन्त्रेण दन्तकाष्ठमभिमन्त्र्य मुखदुर्गन्धिनाशायेति मन्त्रेण तावत्संख्यया दन्तधावनानि स्नानानि च कृत्वा ततःस्नानविधिना स्नात्वा शुक्लं वासः परिधाय गृहं गत्वा शुचौ देशे मण्डपिकां कृत्वा तत्र सौवर्णीं प्रतिमां स्थापयेत्।आचम्य प्राणानायम्य मासपक्षाद्युल्लिख्य पुत्रधनविद्यारोगनिर्मुक्तिसुखगोविजयपुष्ट्यादिकामः, स्त्री त्ववैधव्यकामा उपाङ्गललिताप्रीत्यर्थं यथामिलितोपचारैः उपाङ्गललितापूजनमहं करिष्ये, इति संकल्प्य पूजां कुर्यात्। 'अथ पूजाविधानं च कुर्यादेकाग्रमानसः। सौवर्णीं प्रतिमां कृत्वा शक्त्या मन्त्रैश्च पूजयेत्। नीलकौशेयवसनां हेमाभां कमलासनाम्। भक्तानां वरदां नित्यं ललितां चिन्तयाम्यहम्।' ध्यानम्—'निजासने स्वपुत्रैश्च सहिते भक्तवत्सले। उपाङ्गललिते मातर्देहि मे व्रतकर्मणि। आगच्छ ललिते देवि सर्वसंपत्तिदायिनी। यावद्व्रतं समाप्येत तावत्त्वं संनिधौ भव।' हिरण्यवर्णामित्यावाहनम्। 'कार्तस्वरमयं देवि नानामणिगणार्चितम्। 'अनेकशक्तिसंयुक्तमासनं प्रतिगृह्यताम्।' तां म आवह इत्यासनम्। 'गङ्गादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतम्। तोयमेतत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यताम्।' अश्वपूर्वां पाद्यम्। 'निधानं सर्वरत्नानां त्वमनर्घ्यगुणा ह्यसि। तथापि भक्त्या ललिते गृहाणार्घ्यं नमोऽस्तु ते।' कांसोऽस्मितामित्यर्घ्यम्। 'पाटलोशीरकर्पूरसुरभि स्वादु शीतलम्। तोयमाचमनीयार्थं ललिते प्रतिगृह्यताम्।' चन्द्रां प्रभासामित्याचमनम्। 'पञ्चामृतं समानीतं पयो दधि घृतं च वै। शर्करामधुसंयुक्तं स्नानार्थं प्रतिगृह्यताम्।' पञ्चामृतम्। 'मन्दाकिन्याः समानीतं हेमाम्भोरुहवासितम्। स्नानीयं ते मया भक्त्या गाङ्गं स्वीक्रियतां जलम्।' आदित्यवर्णेति स्नानम्। 'सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे। मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम्।' उपैतु मामिति वस्त्रम्। 'मलयाचलसंभूतं घनसारं मनोहरम्। हृदयानन्दनं चारु चन्दनं प्रतिगृह्यताम्।' क्षुत्पिपासेति चन्दनम्। 'अक्षता विमलाः शुद्धा मुक्तामणिसमप्रभाः। भूषणार्थं मया दत्ता देहि मे निर्मलां धियम्।' गन्धद्वारामित्यक्षतान्। 'मालतीकेतकीजातितुलसीचम्पकानि च। मयाहृतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम्।' मनसः काममेति पुष्पम्। अथ पुष्पैः प्रत्यङ्गपूजा। ॐ उपाङ्गललितायै नमः पादौ पूजयामि। भवान्यै नमः गुल्फौ पूजयामि। सिद्धेश्वर्यै नमः जङ्घे पूजयामि। भद्रकाल्यै नमः जानुनी पूजयामि। श्रियै नमः ऊरू पूजयामि। विश्वरूपिण्यै नमः कटिं पूजयामि। देव्यै

नमः नाभिं पूजयामि। वरदायै नमः कुक्षिं पूजयामि। शिवायै नमः हृदयं पूजयामि। वागीश्वर्यै नमः स्कन्धौ पूजयामि। महादेव्यै नमः बाहू पूजयामि। प्रकृतिभद्रायै नमः करौ पूजयामि। पद्मिन्यै नमः कण्ठं पूजयामि। सरस्वत्यै नमः मुखं पूजयामि। पद्मकेसरवासिन्यै नमः नासिकां पूजयामि। महिषमर्दिन्यै नमः नेत्रे पूजयामि। लक्ष्म्यै नमः कर्णौ पूजयामि। भवान्यै नमः ललाटं पूजयामि। विन्ध्यवासिन्यै नमः शिरः पूजयामि। सिंहवाहिन्यै नमः सर्वाङ्गानि पूजयामि। इत्यङ्गपूजा। 'देवद्रुमरसोद्भूतः कालागुरुसमन्वितः। आघ्रीयतामयं धूपो भवानि घ्राणतर्पणः।' कर्दमेनेति धूपम्। चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणम्। आर्तिक्यंकल्पितं भक्त्या गृहाण परमेश्वरि।' आपः सृजन्त्विति दीपम्। 'मोदकापूपलड्डूकवटकोदुम्बरादिभिः। सघृतं पायसेनान्नं नैवेद्यं प्रतिगृह्यताम्।' आर्द्रां पुष्करिणीमिति नैवेद्यम्। आचमनम्। 'मलयाचलसंभूतं कर्पूरेण समन्वितम्। करोद्वर्तनकं चारु गृहाण परमेश्वरि। कर्पूरैलालवङ्गादिताम्बूलीदलसंयुतम्। क्रमुकस्य फलं तुभ्यं ताम्बूलं प्रतिगृह्यताम्।' आर्द्रां पुष्करिणीं पुष्टिमिति ताम्बूलम्। इदं फलमिति फलम्। हिरण्यगर्भमिति दक्षिणाम्। 'चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च। त्वमेव सर्वज्योतींषि आर्तिक्यं प्रतिगृह्यताम्।' नीराजनम्। 'उपाङ्गललिते मातर्नमस्ते विन्ध्यवासिनि। दुर्गे देवि नमस्तुभ्यं नमस्ते विश्वरूपिणि।' ताम्म आवहेति पुष्पाञ्जलिः। ततोऽष्टाचत्वारिंशद्दूर्वाङ्कुरान्हस्ते गृहीत्वा 'बहुप्ररोहा सततममृता हारितालिका। यथेयं ललिते मातस्तथा मे स्युर्मनोरथाः।' इति मन्त्रेणाभिमन्त्र्य प्रत्येकं समर्पयेत्। ततः प्रदक्षिणा नमस्कारः। 'अथ वाणकमादाय वटकौदुम्बरादिभिः। कः[1] इत्यादिकमन्त्रेण आचार्याय निवेदयेत्। पक्वान्नं फलसंयुक्तं सघृतं दक्षिणान्वितम्। द्विजवर्याय दास्यामि व्रतसंपूर्तिहेतवे। उपाङ्गललितादेव्या व्रतसंपूर्तिहेतवे। वाणकं द्विजवर्याय सहिरण्यं ददाम्यहम्।' इति वायनमन्त्रः। 'ततः कथां समाकर्ण्य वाणकान्नस्य संख्यया। स्वयमेव तदेवाद्याद्वाग्यतः सह बान्धवैः। रात्रौ जागरणं कुर्यान्नृत्यगीतादिमङ्गलैः। प्रभाते पूजयेद्देवीं ततः कुर्याद्विसर्जनम्। सवाहना शक्तियुता वरदा पूजिता मया। मातर्मामनुगृह्याथ गम्यतां निजमन्दिरम्।' इति पूजा। अथ कथा। 'पुरा कैलासशिखरे सुखासीनं षडाननम्। कथयन्तं कथां दिव्यामिदमूचुर्महर्षयः।' ऋषय ऊचुः-'महासेन महादेवनन्दनानन्तविक्रम। आख्यानानि सुपुण्यानि श्रुतानि त्वत्प्रसादतः। कथास्त्वद्वचनादेव प्रभूता भूरिभूतयः। न तृप्तिमधिग-

---

१-"कोऽदात्कस्माअदात्कामोऽदात्कामायादात्। कामो दाता कामःप्रतिग्रहीता कामैतत्ते।" इत्यादिभिः।

चञमः पायंपायं सुधामिव। शुश्रूषवो वयंदेव्या व्रतं तत्कथयस्व नः। मनोभिलषितार्थानां सिद्धिर्यस्मिन्कृते भवेत्।' स्कन्द उवाच-'साधु पृष्टं महादेव्या माहात्म्यं मुनिपुङ्गवाः। तच्छृणुध्वं विधानेन कथ्यमानं जगद्धितम्। भृगुक्षेत्रे किल पुरा विप्रोऽभूद्गौतमाभिधः। श्रुतिस्मृतिपुराणज्ञो धनी च बहुबान्धवः। अथ कालेन संजातौ रमतस्तस्य वै सुतौ। श्रीपतिर्गोपतिश्चैव नामनी विदधे तयोः।अचिरेणैव कालेन स पञ्चत्वमगाद्द्विजः। तौ तु बालौ धनं बन्धुं हित्वा सा धर्मचारिणी। सती विवेश दहनं स्वर्याता पतिना सह। अथ तद्बान्धवाः सर्वे हा कष्टमिति चुक्रुशुः। निन्दन्तो दुःखिताश्चक्रुस्तत्क्रियां पारलौकिकीम्। अथ तस्य सपत्नोऽभूद्भ्राता स जगृहे धनम्। आक्रोशन्तौ गतो गेहं निजमानयि दुर्मनाः। नास्ति चक्रे धनं सर्वं ताभ्यां किंचिन्न वै ददौ। ततो मौञ्जीधरौ बालौ बहुभिः कथितं वसु। ययाचतुः पितृव्यं तं देहि नो द्रविणं हि तत्।स तावूचे गतं द्रव्यं युवां केन प्रतारितौ। निर्गच्छतं मम गृहादित्यादि परुषं बहु। तौ तद्वचोभिर्निर्विण्णौ बालौ श्रीपतिगोपती। बभाषतुर्मिथः कष्टं धिगहो पितृहीनताम्। यावो देशान्तरं यत्र स्वजनो नास्ति कश्चन।अनाभाष्यैवासुहृदो जग्मतुर्दिशमुत्तराम्। भिक्षाचरौ बहून्देशान्वनानि सरितो गिरीन्। समतिक्रम्य ययतुर्विशालां नामतः पुरीम्। कासारमीक्षांचक्राते ततोऽस्याः संनिधौ शुभम्। पुण्डरीकवनाकीर्णं रक्तसंध्यविभूषितम्। संध्याभ्रकपिशं चारु यथा तारकितं नभः। श्रान्तौ पथि गतौ बालौ क्षणं विश्रम्य तत्तटे। आचम्य शिशिरं तोयं सस्नतुश्च यथाविधि। गताध्वखेदौ विप्राग्र्यौ पुरीं प्राविशतां ततः। वापीं चतुःपथयुतां चारुगोपुरमण्डिताम्। देवतागाररुचिरां सौधराजिविराजिताम्। नानावीथीरतिक्रम्य विप्रावासमवापतुः। कस्यचित्त्वथ विप्रस्य क्षुत्पिपासार्दितौ गृहम्। ईयतुर्वेदिकायां तावुपविष्टौ श्रमातुरौ। स्वामी ततोऽस्य गेहस्य विवेक इति विश्रुतः।आयातो वैश्वदेवान्ते स ददर्शातिथी द्विजौ। अनापृच्छ्य तथा शीलं तथा च कुलनामनी। ऋषिवत्पूजयामास स्मरन्धर्मं सनातनम्। अतिथी भोजयामास सदन्नं सह चात्मना। तौ ब्रह्मचारिणौ विप्रौ सपर्यां तां विलोक्य च। देशबन्धुपरित्यागखेदमुज्झांबभूवतुः। अथापृच्छत्कृपालुस्तौ कौ युवां कुत आगतौ। किमर्थमल्पवयसौ निर्गतौ स्वगृहादिति। तद्विवेकस्य वचनमाकर्ण्य श्रीपतिस्तदा। आनुपूर्व्येण सकलं वृत्तान्तं समभाषत। पितृहीनौ च तौ ज्ञात्वा त्यक्तौ बन्धुजनेन च। आश्वास्य स्थापयामास स्वगृहे बहुवासरम्। प्रचक्रमेऽथ शिष्यैश्च सहाध्यापयितुं श्रुतिम्। बभूवतुश्च तौ बालौ गुरुशुश्रूषणे रतौ। गुरोर्गेहेऽथ वसतो-

रागता निर्मला शरत्। फुल्लपद्मविशालाक्षी प्रसन्नेन्दुशुभानना। तस्यां सशिष्यमाचार्यं चरन्तं व्रतमुत्तमम्। पप्रच्छतुर्भोः किमिदमावाभ्यामपि कथ्यताम्। ताभ्यामेवं कृते प्रश्ने विवेक इदमब्रवीत्।' विवेक उवाच—'उपाङ्गललितादेव्या व्रतं देवर्षिपूजितम्। सर्वकामकरं नृणामस्माभिः समुपास्यते। विद्याकामेन कर्तव्यं तथैव धनकाम्यया। सुतार्थिना च कर्तव्यं व्रतमेतदनुत्तमम्। विद्याकामौ च तौ बालौ व्रतमाचरतुर्मुदा। भक्तितो गुर्वनुज्ञातौ यथाशक्ति यथाविधि। तौ तत्प्रसादात्सकलशास्त्रवेदनवापतुः। अन्यस्मिन्हायने भक्त्या विवाहार्थं प्रचक्रतुः। श्रीपतिर्गोपतिश्चैव व्रतमेतत्तपोधनाः। अचिरेणैव कालेन मासि माघे तयोर्गुरुः। स्वां विवाहोचितां कन्यां नाम्ना गुणवतीमिति। विनीताय श्रुतवते यूने श्रीपतये तदा। विचार्य बान्धवैः साकं ददौ पुण्यर्क्षवासरे। पारिबर्हं बहु मुदा प्रादाद्दुहितृवत्सलः। विवेकोऽपि मुदं लेभे सानुरागौ विलोक्य तौ। अन्याब्दे पुनरेतत्तु व्रतं देव्याश्च चक्रतुः। भ्रातरौ तौ निजं देशमिच्छन्तौ च धनादिकम्। अथान्येऽहनि कस्मिंश्चित्तावुपाध्यायमूचतुः। स्वामिन्युष्मत्प्रसादेन लब्धा विद्या तथा वसु। अनुजानीहि गच्छामो निजं देशमितः पुनः। इत्याकर्ण्य समालोक्य शुभवासरमादृतः। स्वयं प्रापयितुं तातो विप्रौ कन्यां च निर्ययौ। अथ देव्याः प्रसादेन पितृव्यस्य तयोः किल। अन्वेषणमतिर्जाता कुतः श्रीपतिगोपती। निर्गतौ दैववशतस्तावितः क्वेत्याचिन्तयत्। लोको निन्दति मां कुर्यात्तयोरन्वेषणे मतिम्। दिदृक्षुस्तौ ततः सोऽपि निर्जगाम निजात्पुरात्। किंचित्स नगरं प्राप द्विजो बालौ गवेषयन्। तदेव नगरं प्राप्तो विवेकाख्यो द्विजोत्तमः। स शिष्यकन्यया सार्धं क्रमान्मार्गे शनैः शनैः। तत्र तेषां समजनि संगमो मुनिपुङ्गवाः। विदांचकार तौ कृच्छ्रान्मध्यमे वयसि स्थितौ। तौ मूर्ध्न्योघ्राय परमां मुदं लेभे परां ततः। अशक्नुवन्मुदं वक्तुं प्रेमगद्गदया गिरा। पादानतां गुणवतीं विवेकेन प्रणोदिताम्। आशीर्वादैर्बहुविधैस्तां स्नुषां समयोजयत्। विवेकस्तु तदा तत्र समाभाष्य परस्परम्। सुतावेतौ मया विप्र पालितौ पाठितौ तव। प्रयातस्तौ प्रापयितुं भवज्जायामनुत्तमाम्। इति संभाष्यमाणास्ते भृगुक्षेत्रं ययुर्मुदा। ज्ञातिभिः सह संगम्य शृण्वद्भिस्तद्विचेष्टितम्। स्वपितृव्यगृहे कांश्चिदुषित्वा दिवसांस्तथा। लब्ध्वा पितृधनं गेहे सर्वं श्रीपतिगोपती। ईयतुस्तदनुज्ञातौ विवेकः स्वां पुरीं ययौ। श्रीपतिर्गोपतेस्तत्र विवाहमकरोत्तदा। तावेकचित्तौ चेत्तत्र चक्रतुर्द्विजतर्पणम्। श्रीपतिः श्रद्धया युक्तः कनीयान्व्ययशङ्कितः। विचार्य भार्यया साकं विभक्तः श्रीपतेरभूत्। स भोगान्वि-

विधान्भुञ्जन्प्रसवो बहुसंपदाम् । न देव्याराधनं चक्रे गोपतिः सुखलम्पटः । अथ स्वल्पेन कालेन नष्टं तस्य शनैर्धनम् । अकिंचनो गतश्चिन्तां भार्ययाश्वासितस्तदा । तव भ्रातृगृहे विप्रा भुञ्जन्ते बहवः सदा । गच्छावोऽनुदिनं कान्त तत्र भोक्तुमुभावपि । एवं भोजनवेलायामागत्यागत्य तद्गृहम् । भोजं भोजं निजगृहं गतौ तौ बहुवासरम् । कदाचिदागतो यावद्गोपतिर्भार्यया सह । उपविष्टेषु विप्रेषु भोक्तुं नोऽविन्ददासनम् । अथान्नराशेरभ्याशे भोजनाय क्षुधातुरः । उपविष्टः श्रीपतेस्तु भार्यया स निवारितः । अस्मादुत्तिष्ठ वै तूर्णं त्वमुच्छिष्टं करिष्यसि । तिष्ठ तिष्ठ क्षणं चैकं पश्चाद्भुङ्क्ष्वेति साऽब्रवीत् । गोपतेः कान्तया दृष्टं ततो विमनसावुभौ । अभुक्तावेव निष्क्रान्तौ जग्मतुर्निजमन्दिरम् । ततः स्वजायां प्रोवाच निजमार्गे विचिन्तयन् । भ्रात्रा समं मया वित्तं संविभक्तमपि प्रिये । दुर्गतोऽहं धनोन्मत्तः श्रूयतामत्र कारणम् । पुरावाभ्यां गुरुकुले व्रतमाचरितं शुभम् । उपाङ्गललितादेव्या विद्यादिसकलं ततः । प्राप्तं मया तत्सकलं परित्यक्तं प्रमादतः । ज्येष्ठ आचरते नित्यं तस्माच्छ्रीस्तं तु वर्तते । तस्मादहं तदा भोक्ष्ये यदा द्रक्ष्यामि तां शिवाम् । इत्युक्त्वा निर्गतस्तस्माद्गृहादकृतभोजनः । तद्भार्या चिन्तयाविष्टा सापि तस्थावनश्चितिः । भुक्तवत्सु ब्राह्मणेषु श्रीपतिः पर्यपृच्छत । निर्गतो गोपतिरिति तच्छ्रुत्वा सोऽपि दुःखितः । गोपतिस्तु स दुर्गाणि वनानि बहुशो भ्रमन् । पृच्छंश्च पथिकान्मार्गे स देव्याः पदमभ्यगात् । पञ्चमे वासरे प्राप्ते क्षुत्पिपासार्दितो वने । अलब्धदर्शनो देव्या दुःखितो निपपात ह । तं कृच्छ्रगतमालोक्य भवानी भक्तवत्सला । कृतापराधमपि तमनुजग्राह वै तदा । गतमूर्च्छः समुत्थाय दिगन्तान्प्रविलोकयन् । ददर्श दूरतो गोपं चारयन्तं गवां गणम् । तं दृष्ट्वा किंचिदाश्वस्तो ययौ तस्यान्तिकं शनैः । अपृच्छत्क भवान्यातः कुत्रत्यः कुत आगतः । को देशः कोऽत्र भूपालः किं पुरं नाम तद्वद । निशम्य वचनं तस्य वक्तुं गोपः प्रचक्रमे ।'

गोप उवाच—' उपाङ्गं नाम नगरमुपाङ्गो नाम भूपतिः । तत्र सोऽहं समायातः पुनस्तत्र व्रजाम्यहम् । उपाङ्गललितादेव्या विद्यते तत्र मन्दिरम् । इत्याकर्ण्य वचस्तस्य विप्रः स मुदितोऽभवत् । स गोपसहितः सायं विवरं प्रविवेश ह । दूराद्ददर्श भवनं पुरमध्ये तपोधनाः । उपाङ्गललितादेव्याः स्फाटिकं गगनंलिहम् । सौवर्णेन विचित्रेण कलशेनोपशोभितम् । यथोदयाचलः शैलो दधानो भानुमण्डलम् । त्वरितो गोपमामन्त्र्य प्रासादं स ययौ मुदा । प्रणम्य दण्डवद्भूमौ बद्धाञ्जलिपुटस्तदा । उपाङ्गललितां देवीमथ स्तोतुं प्रचक्रमे ।' गोपतिरुवाच—'नमस्तुभ्यं जगद्धात्रि

भक्तानां हितकारिणि । जगद्भीतिविनाशिन्यै सर्वमङ्गलमूर्तये । हत्वा निशुम्भमहिषप्रभृतीन्सुरारीनिन्द्रादयो निजपदेषु यथाऽभिषिक्ताः । लोकत्रयावनगृहीतमहावतारे मातः प्रसीद सततं कुरुतेऽनुकम्पाम् । त्वां मुक्तये मुनिजनाः कुटिलीकृताङ्गीं गौरि निजे वपुषि कुण्डलिनीं भजन्ति । मुक्त्यै च देवमनुजाः कनकारविन्दबद्धासनामविरतं कमलां स्तुवन्ति । सापराधोस्मि शरणं प्राप्तस्त्वां जगदम्बिके । इदानीमनुकम्प्योऽहं यद्वाञ्छसि कुरुष्व तत् । इति स्तुत्वाऽथ शर्वाणीं प्रणिपत्य पुनः पुनः । कृतसंध्याविधिस्तत्र शेते स्माकृतभोजनः । स्वप्ने मूर्तिमयी देवी विप्रमेवं समादिशत् । गोपते वत्स तुष्टास्मि गच्छोपाङ्गमहीपतिम् । मत्पूजनकरण्डस्य प्रार्थयस्व पिधानकम् । तत्पूजयन्निजगृहे परामृद्धिमवाप्स्यसि । स्वप्न इत्याप्तसंदेशः प्रभाते गोपतिस्तदा । राजदर्शनवेलायां नृपद्वारं समभ्यगात् । प्रविष्टोऽसौ नृपसभां प्रतीहारनिवेदितः । राज्ञा संमानितस्तत्र निषसादासने शुभे । पृष्टागमनहेतुश्च ययाचे नृपपुङ्गवम् । देव्यर्चनकरण्डस्य पिधानं देहि मे नृप । इत्यर्थितः स विप्रेण जातादेशो नृपो ददौ । पिधानकं नमस्कृत्य तस्मै चादाद्धनादिकम् । आशीर्भिरभिनन्द्याथ तमामन्त्र्य च भूपतिम् । उपाङ्गललिनादेव्याः प्रासादं पुनरागतः । प्रणिपत्याम्बिकां विप्रस्त्वरितो निर्ययौ पुरात् । पूजयित्वा पिधानं च विदधे पारणं ततः । एवमाराध्यमानस्तु स समृद्धोऽभवत्पुनः । सोऽपि सत्रं समारेभे द्विजाग्र्यो बहुवासरम् । अथैतस्याभवत्कन्या ललिता नाम सुन्दरी । सा पिधानकमादाय विहर्तुं याति सर्वदा । प्रमत्तत्वात्प्रियत्वाच्च पितृभ्यामनिवारिता । कदाचित्स्ववयस्याभिः स्नातुं गङ्गाजले शुभे । क्रीडन्ती ददृशे तोये नीयमानकलेवरम् । पिधानहस्ता साऽसिञ्चदन्यांश्चाञ्जलिभिस्तदा । स सर्पदष्ट उत्तस्थौ ततो देव्याः प्रसादतः । सा तं द्विजवरं दृष्ट्वा मनसाऽचिन्तयत्पतिम् । जुहावाभ्यवहाराय जनकस्य निवेशने । मार्गे च परिपप्रच्छ कुलवंशे च तस्य सा । सोऽपि सर्वं समाचख्यौ गुणराशीति नाम च । ललिता मन्त्रयामास गुणराशिमिति द्विजम् । परिविष्टेषु पात्रेषु पितृवेश्मनि मे द्विज । गृहीतापोशनो भूत्वा भार्यार्थे मां त्वमर्थय । मयाऽनुमोदितस्तातः स मां तुभ्यं प्रदास्यति । तयोक्तो गुणराशिस्तु तथा सर्वं चकार ह । गोपतिर्भार्यया सार्धं समालोक्य स्वबान्धवैः । परीक्षिताय विप्रत्वे विचार्यां कुलशीलयोः । प्रतिजज्ञे ततः कन्यां ललितां गुणशालिने । शुभे मुहूर्ते च तिथौ विवाहं कृतवान्प्रभुः । वराय ब्राह्मणेभ्यश्च ददौ बहुधनं तदा । विदधे च तयोर्गेहं नातिदूरं स्ववेश्मनः । तत्रोषतुः सानुरागौ मिथस्तौ दम्पती चिरम् । पिधानकं

तथा नीतं निजं ललितया गृहम् । शनैरथ धनं सर्वं गोपतेरगमद्गृहात् । गुणराशिर्धनी जातो महादेव्याः प्रसादतः । करण्डस्य पिधानं तज्जनन्या बहुवासरम् । याचितापि न वै प्रादाल्ललिता पूजितं गृहे । अथ सा गोपतेर्जाया तथैवानर्चनाद्धुतम् । इत्थं विचिन्तयन्ती सा जामातरमघातयत् । समिदर्थं वनं यान्तं स्वयं तद्गेहमागमत् । शोचन्ती किल तां कन्यां स तु देव्याः प्रसादतः । उत्थाय विपिनादेव भुक्त्वा शेते सुखं गृहे । पादसंवाहनं तस्य कुरुते ललिताऽनघा । तं दृष्ट्वा दुःखिता भूमौ प्रणिपत्य पुनः पुनः । लज्जिता कृच्छ्रतः पृष्टा निजमाह स्म पातकम् । गुणराशिरदात्तस्याः प्रायश्चित्तं तदा बहु । सात्मानं बहुकालेन पूतं कृच्छ्रैश्चकार च । श्रीपतेस्त्वचलां लक्ष्मीं समालोक्य तपोधनाः । गोपतिस्तमथापृच्छद्भ्रातस्त्वं वर्तसे कथम् । किमाचरसि कल्याणं येन श्रीरनपायिनी । इति तस्य वचः श्रुत्वा श्रीपतिर्विस्मितः पुनः । अस्माभिस्तद्व्रतं देव्या यत्कृतं गुरुमन्दिरे । तद्व्रतस्य प्रभावेण मयि श्रीरनपायिनी । सोऽपि भक्त्या पुनश्चक्रे व्रतं भ्रात्रोपदेशितम् । लेभे स परमामृद्धिं पुत्रांश्च मुदितोऽभवत् । उपाङ्गललितादेव्याः प्रसादेनाभवत्सुखी । एवमेतत्पुरा वृत्तं माहात्म्यं कथितं मया । कृतमन्यैश्च बहुभिस्तेऽपि लब्धमनोरथाः । विधानं तस्य वक्ष्यामि तच्छृणुध्वं तपोधनाः । शुक्लपक्षे तु पञ्चम्यामिषे मासि चरेद्व्रतम् । गर्जिते संध्ययोस्त्याज्यं दिनवृद्धिक्षये तथा । निर्वर्त्यावश्यकं कर्म शुची रागविवर्जितः । चत्वारिंशत्तथाष्टौ च कल्पितानि विधानतः । दन्तकाष्ठान्युपादाय तडागं वा नदीं व्रजेत् । आयुर्बलं यशो वर्चः प्रजाः पशुधनानि च । ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते । दन्तधावनपूर्वाणि मज्जनानि समाचरेत् । ततो यथाविधि स्नात्वा शुक्लवासा गृहं व्रजेत् । उपचारैः षोडशभिरेभिर्मन्त्रैः समाहितः । कुर्यात्पूजां प्रयत्नेन दूर्वाभिश्च विशेषतः । शुचौ देशे मण्डपं च कृत्वा तावन्मनोहरम् । सौवर्णीं प्रतिमां कृत्वा स्थापितां तत्र पूजयेत् । अथ दूर्वाङ्कुरान्साग्रांश्चत्वारिंशत्तथाष्टभिः । अधिकान्हस्त आदाय मन्त्रमेतज्जपेद्बुधः । 'बहुप्ररोहा सततममृता हरितालिका । यथेयं ललिते मातस्तथा मे स्युर्मनोरथाः ।' दूर्वामन्त्रः । 'इत्युक्त्वा पूजयेद्देवीमेवमेवंविधा सुधीः । चत्वारिंशतकृत्वस्तु अष्टकृत्वः समाचरेत् । ततो वाणकमादाय विंशत्याद्यन्नेण ादिकम् । पठ्यमानेन मन्त्रेण आचार्याय निवेदयेत् ।' मन्त्रस्तु । 'उपाङ्गललितादेव्या व्रतसंपूर्तिहेतवे । वाणकं द्विजवर्याय सहिरण्यं ददाम्यहम् । ततः कथां उपाकर्ण्य वाणकान्नस्य संख्यया । स्वयमद्यात्तदेवान्नं वाग्यतः सह बान्धवैः । रात्रौ

जागरणं कुर्यान्नृत्यगीतादिमङ्गलैः । प्रभाते पूजयेद्देवीं ततः कुर्याद्विसर्जनम् । सवाहना शक्तियुता वरदा पूजिता मया । मातर्मामनुगृह्याथ गम्यतां निजमन्दिरम् । तामर्चां गुरवे दद्यान्निशि वा स्याद्विसर्जनम् । व्रतमेवं च यः कुर्यात्पुत्रवान्धनवान्भवेत् । विद्यावान्रोगनिर्मुक्तः सुखी गोमांश्च जायते । अवैधव्यं च लभते स्त्री कन्या वरमुत्तमम् । विजयः पुष्टिमायुष्यं यच्चान्यदपि वाञ्छितम् । इत्येतद्व्रतमाख्यातं सेतिहासं महर्षयः । शृण्वन्नपि नरो भक्त्या सुखमाप्नोति निश्चितम् ।' यच्चात्रोक्तं 'गर्जितसंध्ययोस्त्याज्यं दिनवृद्धिक्षये तथा ।' इति तत्प्रथमारम्भविषयम् । आवश्यकं प्रातःस्नानादि । अत्राष्टचत्वारिंशद्दूर्वाङ्कुरान्हस्ते गृहीत्वा मन्त्रेण पूजयेदित्युक्त्वा एवमेवंविधां पूजामष्टचत्वारिंशद्वारं समाचरेदिति वचनादेकैकावृत्तौ अष्टचत्वारिंशद्दूर्वा विज्ञायन्ते । स्वयमद्यात्तदेवान्नमिति अन्यान्नपरिसंख्या क्रियते न च त्रैदोष्यम् एवकारेणान्यनिवृत्तेरुक्तत्वादिति कृत्यरत्नावल्याम् । वस्तुतस्तु-प्रत्येकमेकैकावृत्तौ अष्टचत्वारिंशद्दूर्वाग्रहणे वचनाभावादेकैकयैव दूर्वया अष्टचत्वारिंशद्वारं पूजनमिति सिद्धान्तः । दूर्वापूजाकरणमन्त्रे एकवचनान्तेदंशब्दपाठात् । इत्युक्त्वा पूजयेद्देवीमित्यत्रापि एवंविधामित्यस्य पूर्वोक्तध्येयरूपामित्यर्थकत्वेन एवमित्यस्य च संनिहितपूजनपरामर्शकत्वेन व्यवहितदूर्वासंपरामर्शकत्वे प्रमाणाभावाच्च । इति स्कान्दे उपाङ्गललिताव्रतं संपूर्णम् । इत्याश्विनशुक्लपञ्चमीनिर्णयः ।

अथ कार्तिकशुक्लपञ्चमी । अस्यां भविष्योत्तरोक्तं जयापञ्चमीव्रतम् । श्रीकृष्ण उवाच--'माहात्म्यमपि वक्ष्यामि पञ्चम्यास्तव भारत । जयेति या च विख्याता व्रतिना जयदायिनी । यस्यां जयजयाशब्दं कुर्वन्ति व्रतिनो बुधाः । परिपूर्णं व्रतं यस्यां सा ज्ञेया जयपञ्चमी । जया च विजया चैव जयन्ती पापनाशिनी । केशवो भगवाञ्छंभुर्गङ्गाद्याः सरितस्तथा । प्रभासाद्यानि तीर्थानि जम्बूद्वीपसरांसि च । प्रयागं पुष्करं चैव गयाक्षेत्रं कुरुस्त्वथ । एतान्यन्यानि तीर्थानि व्रतिनः स्नापयन्त्युत । तस्मात्सर्वप्रयत्नेन स्नानं कुर्याज्जयादिने । स्नेहेनोद्वर्तनेनैव द्विजान्संस्नापयेद्बहून् । तीर्थे प्रस्रवणे गत्वा स्थापयेत्सजयं हरिम् । शंखचक्रगदापाणिं वामभागे जयां स्थिताम् । पूजयेद्विविधैः पुष्पैर्धूपनैवेद्यजातिभिः । एभिर्मन्त्रैस्तु तं देवं

१--जया कार्तिकशुक्लपञ्चमी । २ सजय जयासहितम् ।

जयां च प्रतिपूजयेत् । पादौ वै पद्मनाभाय जानुभ्यां माधवेति च । ऊरू वै नारसिंहाय मेढ्रे वै मन्मथाय च । दामोदरायेत्युदरं वक्षः श्रीवत्सधारिणे । श्रीकण्ठायेति कण्ठे च बाहू सर्वास्त्रधारिणे । मुखं पद्ममुखायेति शिरः सर्वात्मने नमः । अनेन विधिना चैव पूजयेद्गरुडध्वजम् । अनन्तरं तु तां देवीं वेणुपात्रोपरि स्थिताम् । जातीलताधोभागस्थां ता देवीं प्रतिपूजयेत् । नमस्तुष्ट्यै पादयुग्मे जानुभ्यां तु श्रियै नमः । नन्दायै कटिदेशे च विजयायै च वक्षसि । शिरः सर्वार्थदायिन्यै सर्वाङ्गे विजयां तथा । विधिनानेन संपूज्य अर्पयेद्द्विजयाहरिम् । ॐ जयाय जयरूपाय जय गोविंदरूपिणे । जय दामोदरायेति जय सर्व नमोऽस्तु ते ।' अर्घमन्त्रः । 'वेणुपात्राणि सर्वाणि सप्तधान्यभृतानि च । रक्तसूत्रेण संसूत्र्य[1] सफलानि निवेदयेत् । यथा वेणुफलं दृष्ट्वा तुष्यते मधुसूदनः । तथा मेऽस्तु शुभं सर्वं वेणुपात्रप्रदानतः ।' वेणुपात्रप्रदानमन्त्रः । 'अनेन विधिना चैव दत्त्वा पात्राणि गोसुरे[2] । रक्षाबन्धं ततः कृत्वा सुहृत्स्वजनबन्धुषु । अक्षताः सर्षपा दूर्वा रक्षामध्ये च रोचनाः । येन बद्धो बली राजा दानवेन्द्रो महाबलः । तेन त्वामनुबध्नामि रक्षे मा चल मा चल ।' रक्षाबन्धनमन्त्रः । 'रक्षाबन्धं नरो यस्तु कुर्याद्भक्तिसमन्वितः । न तस्य ग्रहपीडा स्यान्न च मृत्युभयं भवेत् । भूतवेतालयक्षाद्यैः पिशाचैर्नाभिभूयते । रक्षाया बन्धनं कृत्वा संग्रामं प्रविशेत्तु यः । जयते स रिपून्सर्वाञ्जीयते न च केनचित् । तस्मात्सर्वप्रयत्नेन रक्षाबन्धं तु कारयेत् । यस्तु वै भक्तितः कृत्वा स्नानं कुर्याज्जयादिने । कुतस्तस्यैव पापानि माघमासप्लुवे तथा । यथाश्वमेधावभृथं तादृशं कारयेद्बुधः । जलाञ्जलिस्तु व्रतिना क्षिप्यते यस्य मूर्धनि । ब्रह्महत्यादिपापेभ्यो मुच्यते नात्र संशयः । अपुत्रो लभते पुत्रान्वन्ध्या गर्भं च विन्दति । रोगी रोगैर्विमुच्येत प्रयाति हरिमन्दिरम् ।' इति कार्तिकशुक्लपञ्चम्यां जयाव्रतम् ।

मार्गशीर्षशुक्लपञ्चम्यपि नागपञ्चमी । तदुक्तं हेमाद्रौ स्कन्दपुराणे । 'शुक्ला मार्गशिरे पुण्या श्रावणे या च पञ्चमी । स्नानदानैर्बहुफला नागलोकप्रदायिनी ।' इति । इयमपि नागपूजायां परविद्धा ग्राह्या । 'पञ्चमी नागपूजायां कार्या षष्ठीसमन्विता । तस्यां तु तुषिता नागा' इत्युक्तत्वात् ।

अथ मार्गशीर्षशुक्लपञ्चम्यामारभ्यं भविष्योत्तरोक्तं श्रीपञ्चमीव्रतम् । युधिष्ठिर उवाच—'कथं संप्राप्यते लक्ष्मीर्दुर्लभा याऽमरैर्विभो । दानेन तपसा वापि व्रतेनापि वदस्व तत् । जपहोमनमस्कारैः संस्कारैर्वा पृथग्विधैः । एतद्वद यदुश्रेष्ठ सर्ववित्त्वं

---

१—संसूत्र्य संवेष्ट्य । २—गोसुरे ब्राह्मणे ।

मतो मम ।' कृष्ण उवाच-'भृगोः ख्यात्यां समुत्पन्ना पूर्वं श्रीः श्रीयते तु या । वासुदेवाय दत्ता सा मुनिना सुसमृद्धिना । वासुदेवोऽपि तां प्राप्य पीनोन्नतपयोधराम् । पद्मपत्रविशालाक्षीं पूर्णचन्द्रनिभाननाम् । भाभासितदिगाभोगां साक्षाद्भानोःप्रभामिव । नितम्बाडंबरवतीं मत्तमातङ्गगामिनीम् । रेमे सह तया राजन्विभ्रमोद्भ्रान्तचित्तया । सा च विष्णुं जगज्जिष्णुं पतिं श्रीर्जगतां पतिम् । प्राप्य कृतार्थमात्मानं मेने मानयशोधरा । कष्टनष्टं जगत्सर्वमृद्धिमद्धारितं तया । लक्ष्म्या च पालितं सम्यक्सद्दृष्टयेव महीतलम् । क्षेमं सुभिक्षमारोग्यं क्रमानन्दमनामयम् । हृदये ब्राह्मणैर्वह्नौ भुज्यते त्रिदशैर्हविः । चातुर्वर्ण्यमसंकीर्णं पाल्यते पार्थिवैर्नरैः । विरोचनप्रभृतिभिर्दैत्यैर्दैत्यसत्तमैः । तपस्तप्तमथारब्धमर्थमाश्रित्यसंयतैः । सोमसंस्थाहविःसंस्थापाकसंस्थादिभिर्नरैः । सदाचारैःसमारब्धं यष्टुमुच्छिष्टकारिभिः । एवं धर्मप्रधानैस्तु देवैर्दानरतात्मभिः । जगदासीत्समाक्रान्तं विक्रमेण क्रमेण च । लक्ष्मीविलासप्रभवो देवानां च सदा मदः । शीलं शौचं च सत्यं च सद्यो लीनमभूद्गृहे । सत्यशौचविहीनांस्तान्देवान्संत्यज्य चञ्चला । जगाम दानवकुलं कुलदेवानुरागतः । लक्ष्मीभावितदेहैस्तैः पुनरुद्धतमानसैः । व्यवहर्तुं समारब्धमन्यायेन मदोद्धतैः । वयं देवा वयं यज्ञा वयं विप्रा वयं जगत् । ब्रह्मविष्णुसशक्राद्या वयं सर्वे दिवौकसः । अहंकारविमूढांस्ताञ्ज्ञात्वा दानवसत्तमान् । सागरे संविवेशाथ भ्रान्तचित्ता भृगोः सुता । क्षीराब्धिमध्यगतया लक्ष्म्या क्षीणार्थसंचयम् । निरानन्दं हतश्रीकमभवद्भुवनत्रयम् । गतश्रीकमथात्मानं मत्वा स बलसूदनः । पप्रच्छाङ्गिरसं विप्र ब्रूहि किंचिद्व्रतं मम । येन संप्राप्यते लक्ष्मीर्लब्धा न चलते पुनः । निश्चलापि सुहृन्मित्रभोग्या भवति सा मुने । न सा श्रीरभिमन्तव्या कन्या सा पाल्यते गृहे । परार्थं या सुहृन्मित्रभृत्यैर्नैवोपभुज्यते । शक्रस्यैतद्वचः श्रुत्वा बृहस्पतिरुदारधीः । कथयामास संचिन्त्य शुभं श्रीपञ्चमीव्रतम् । यत्पुरा कस्यचिन्नोक्तं व्रतानामुत्तमं व्रतम् । तदिदं कथयामास सरहस्यमशेषतः । तच्छ्रुत्वा कर्तुमारब्धं शुभं तदक्षरैः सह । दैत्यदानवगन्धर्वैर्यक्षैः प्रक्षीणकल्मषैः । सिद्धैः प्रसिद्धचरितैर्विष्णुना प्रभविष्णुना । ब्राह्मणैर्ब्रह्मतत्त्वज्ञैः समर्थैः पार्थिवैः सह । कैश्चित्सात्विकभावेन राजसेनापरैरपि । तामसेन तथा कैश्चित्कृतं व्रतमिदं तथा । व्रते समाप्तप्राये तु निष्ठया परया प्रभो । देवानां दानवानां च बुद्धिरासीदथो हिता । निर्मथ्य भुजवीर्येण सागरं सरितां पतिम् । समाहरामो ह्यमृतं हिताय त्रिदिवौकसाम् । य इत्थं समयं कृत्वा ममन्थुर्वरुणालयम् । मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् । मथ्यमाने जलाज्जात-

१-सुहृदो बन्धुजना ।

श्चन्द्रः शीतांशुरुज्वलः । अनन्तरं समुत्पन्ना लक्ष्मीः क्षीराब्धिमध्यतः । तया चालोकिताः सर्वे दैत्यदानवसत्तमाः । आलोक्य ताञ्जगामाशु विष्णोर्वक्षःस्थलं शुभम् । विधिनाविष्णुनाचीर्णं व्रतं तेनाब्धिसंभवा । शरीरस्थावभूवास्य विभ्रमोद्भ्रान्तलोचना । किं च राजसभावेन शक्रेणैतत्कृतं यतः । ततस्त्रिभुवनैश्वर्यं प्राप्तं तेन महर्द्धिमत् । तमसावृतचित्तैस्तु संचीर्णं दैत्यदानवैः । तेन तेषामथैश्वर्यं दृष्टनष्टमभूत्किल । एवं सश्रीकमभवत्सदेवासुरमानुषम् । जगच्च जगतां श्रेष्ठ व्रतस्यास्य प्रभावतः ।' युधिष्ठिर उवाच—'कथमेतद्व्रतं कृष्ण क्रियते मानुषैः कदा । प्रारभ्यते प्राप्यते च सर्वमेव जनार्दन ।' श्रीकृष्ण उवाच ।' यदिन्द्रेण पुरा चीर्णं श्रीवियुक्तेन पार्थिव । श्रीसमृद्धिकरं तद्धि शृणु श्रीपञ्चमीव्रतम् । मार्गशीर्षे सिते पक्षे पञ्चम्यां पन्नगोत्सवे । उपवासस्य नियमं कुर्यात्पद्मां स्मरन्हृदि । स्वर्णरौप्यां यथाशक्त्या ताम्रां मृत्काष्ठजामथ । चित्रपट्टगतां देवीं लक्ष्मीं क्ष्मापाल कारयेत् । पद्मासनां पद्महस्तां लक्ष्मीं पद्मदलेक्षणाम् । दिग्गजेन्द्रैः स्नाप्यमानां काञ्चनैः कलशोत्तमैः । ततो यामत्रये जाते निम्नगायां गृहेऽथवा । स्नानं कुर्यादसंभ्रान्तः शक्तवच्चोपचारतः । देवान्पितॄंश्च संतर्प्य ततो देवगृहं व्रजेत् । तत्रस्थां पूजयेद्देवीं पुष्पैस्तत्कालसंभवैः । चपलायै पुनः पादौ चञ्चलायै च जानुनी । कटिं कमलवासिन्यै नाभिं ख्यात्यै नमो नमः । स्तनौ मन्मथवासिन्यै ललितायै भुजद्वयम् । उत्कण्ठितायै कण्ठं च माधव्यै मुखपङ्कजम् । नमः श्रियै शिरः पूज्यं दद्यान्नैवेद्यमादरात् । फलानि च यथालाभं विरूढं धान्यसंचयम् । ततः सुवासिनी पूज्या कुसुमैः कुङ्कुमेन च । भोजयेन्मधुरान्नेन प्रणिपत्य विसर्जयेत् । ततस्तु तन्दुलं प्रस्थं घृतपात्रेण संयुतम् । ब्राह्मणाय प्रदातव्यं सा श्रीर्मे प्रीयतामिति । निर्वर्त्यैतदशेषेण ततो भुञ्जीत वाग्यतः । मासानुमासं कर्तव्यं विधिनाऽनेन भारत । श्रीर्लक्ष्मीः कमला संपत्पद्मा नारायणी तथा । तथा धृतिः स्मृतिः पुष्टिस्तुष्टिः सिद्धिः क्षमा क्रमात् । मासानुमासं राजेन्द्र प्रीयतामिति कीर्तयेत् । ततो द्वादशके मासि संप्राप्ते पञ्चमीदिने । वस्त्रमण्डपिकां कृत्वा पुष्पगन्धादिवासिताम् । शय्यायां स्थापयेल्लक्ष्मीं सर्वोपस्करसंयुताम् । सौभाग्याष्टकसंयुक्तां नेत्रपादावृतस्तनीम् । सप्तधान्यसमोपेतां रसध्यानसमन्विताम् । पादुकोपानहच्छत्रभाजनासनसत्कृताम् । देवीं संपूज्य विधिवद्ब्राह्मणाय कुटुम्बिने । व्यासाय वेदविदुषे यस्मै वा रोचते स्वयम् । सोपस्करां सवत्सां च धेनुं दत्त्वा क्षमापयेत् । क्षीराब्धिम-

१–येन विष्णुना सह वर्तते इति सा विष्णुसहिता श्रीरित्यर्थः । २–व्यासाय व्यासप्रणीतपुराणाभिज्ञाय ।

थनोद्भूते विष्णोर्वक्षःस्थलालये । सर्वकामप्रदे देवि ऋद्धिं यच्छ नमोऽस्तु ते । ततः सुवासिनी पूज्या वस्त्रैराभरणैः शुभैः । भोजयित्वा स्वयं पश्चाद्भुञ्जीत सह बन्धुभिः । य एवं कुरुते पार्थ भक्त्या श्रीपञ्चमीव्रतम् । तस्य श्रीर्भवने भाति कुलानामेकविंशतिम् । नारी वा कुरुते या तु प्राप्यानुज्ञां स्वभर्तृतः । सुभगा दर्शनीया च बहुपुत्रा च जायते । यः पञ्चमीव्रतमिदं दयितं मुरारेर्भक्त्या समाचरति पूज्य भृगोस्तनूजाम् । राज्यश्रियं स भुवि भव्यजनोपभोग्यां भुक्त्वा प्रयाति भवनं मधुसूदनस्य ।' इति भविष्योत्तरोक्तं श्रीपञ्चमीव्रतम् ।

माघशुक्लपञ्चमी श्रीपञ्चमी । इयं माधवमते पूर्वा हेमाद्रिमते परा । तत्र मदनं संपूज्य वसन्तोत्सवारम्भः कार्य इति निर्णयामृते । रतिकामपूजनं कार्यमिति मदनरत्ने । 'माघमासे नृपश्रेष्ठ शुक्लायां पञ्चमीतिथौ । रतिकामौ च संपूज्य कर्तव्यः सुमहोत्सवः । दानानि च प्रदेयानि तेन तुष्यति माधवः ।' इति पुराणसमुच्चयवचनात् । इयं वसन्तपञ्चमीति भट्टोजिदीक्षिताः । माघशुक्लमधिकृत्य तिथितत्त्वे भविष्योत्तरे-'चतुर्थी वरदा नाम तस्यां गौरी सुपूजिता । सौभाग्यं मङ्गलं कुर्यात्पञ्चम्यां श्रीरपि श्रियम् ।' हेमाद्रौ वाराहे-'माघशुक्लचतुर्थ्यां तु वरमाराध्य च श्रियः । पञ्चम्यां कुन्दकुसुमैः पूजां कुर्यात्समृद्धये ।' अथ रतिध्यानं वीरमित्रोदये-'शुभा रतिः प्रकर्तव्या वसन्तोज्ज्वलभूषणा । नृत्यमाना शुभा देवी समस्ताभरणैर्युता । वीणावादनशीला च मदकर्पूरचर्चिता ।' इति रतिध्यानम् । अथ मन्मथध्यानं हेमाद्रौ-'कामदेवस्तु कर्तव्यो रूपेणाप्रतिमो भुवि । अष्टबाहुः स कर्तव्यः शंखपद्मविभूषणः । चापबाणकरश्चैव मदादञ्चितलोचनः । रतिः प्रीतिस्तथा शक्तिर्मदशक्तिस्तथोज्ज्वला । चतस्रस्तस्य कर्तव्याः पत्न्यो रूपमनोहराः । चत्वारश्च करास्तस्य कार्या भार्यास्तनोपगाः । केतुश्च मकरः कार्यः पञ्चबाणमुखो महान् ।' इति । एवमन्यान्यपि स्कन्दोपवासनागपूजाव्यतिरिक्तपञ्चमीव्रतानि चतुर्थीयुक्तपञ्चम्यामेव कार्याणि इति सिद्धम् ।

अथ सिद्धाविरुद्धादिकम् । पञ्चमी गुरुवारेण सिद्धा । तदुक्तम्-'गुरौ दशमीपञ्चम्यौ पौर्णमासी विशाखिका । भाग्यानुराधा सिद्धाः स्युस्तथा पुष्यपुनर्वसू ।' इति । भाग्यं पूर्वा । शनिवारेण निषिद्धा । 'सौरे हस्तोत्तराषाढरेवतीचित्रया सह । पञ्चमी चैव षष्ठी च अर्यम्णा सह वर्जिते ।' पञ्चम्यादिपूर्णातिथिषु माङ्गल्यविवाहयात्रापौष्टिकादिशान्तिकर्माणि कार्याणि । अमायां तु श्राद्धं कार्यम् । तथा

च श्रीपतिः--'पूर्णासु माङ्गल्यविवाहयात्रासपौष्टिकं शान्तिककर्म कार्यम् । सदैव दर्शे पितृकर्म मुक्त्वा नान्यद्विदध्याच्छुभमङ्गलादि ।' पौष्टिकं नामायुर्वृद्ध्यर्थं क्रियमाणं होमादिकं कर्म । शान्तिकं ग्रहपीडोत्पातादिशान्तये क्रियमाणम् । शुभमङ्गलादीति । शुभं शान्तिकादि । मङ्गलं विवाहादि । इयं पञ्चमी रविभौमशनीनामन्यतमे क्रूरग्रहे मेषादिराशिचतुष्टयस्थिते दुष्टा भवति । अत्र दक्षिणस्यां दिशि योगिनीसांमुख्यात् यात्रा न कार्या । पक्षद्वयगतासु सर्वासु पञ्चमीषु तिथित्वेन नागाः शेषादयः पूज्याः । उक्तंच 'शेषादीनां फणानां च पञ्चम्यां पूजनं भवेत् । इति ।

श्रीमद्दिल्लीशसेनोद्भटविकटभटश्रेणिमत्तेभसिंह-
श्चण्डोन्माद्यत्तुरुष्कक्षुभितवसुमतीपालने धर्मराजः ।
पौत्रः श्रीकृष्णसिंहक्षितिपकुलमणेर्विष्णुसिंहस्य पुत्रः
श्रीमान्राजाधिराजो जयहरिरमराधीशवत्क्षौ सुखी स्तात् ॥ १ ॥
श्रीमत्पण्डितदेवभट्टतनयः श्रीराघवाङ्घ्रिद्वय-
ध्यानावाप्तसमस्तकामनिवहः सम्राट् स रत्नाकरः ।
तुष्ट्यै श्रीजयसिंहवीरनृपतेः कल्पद्रुमे सप्तमं
गुच्छं नागतिथेः परं समकरोत्सद्व्रातनिर्णायकम् ॥ २ ॥

इति श्रीदेवभट्टात्मजपौण्डरीकयाजिरत्नाकरविरचिते जयसिंहकल्पद्रुमे पञ्चमीनिर्णयो नाम सप्तमः स्तबकः समाप्तः ।

---

## अथ षष्ठीनिर्णयः ।

अथ षष्ठीनिर्णीयते । तद्ध्यानं तु हेमाद्रौ—'मयूरगाऽरुणा षष्ठी पात्रकुक्कुटधारिणी ।' इति । कृष्णपक्षे । 'त्र्यक्षा मयूरगा रक्ता शक्तिकुक्कुटधारिणी । 'एकास्या द्विभुजा षष्ठी रक्तवस्त्रा सुभूषणा । नीलकुण्डलकण्ठा सा जटाखण्डेन्दुभूषणा ।' इति शुक्लपक्षे । षष्ठीतिथिरुपवासव्रतादिषु स्कन्दव्रतातिरिक्तेषु सप्तमीयुतैव ग्राह्या षण्मुन्योरिति वाक्यात् । बृहस्पतिनाप्युक्तम्—'एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी । अमावास्या तृतीया च ता उपोष्याः परान्विताः ।' इति । स्मृतिसमुच्चयविष्णुधर्मोत्तरयोरप्येवमेव । स्कान्देऽपि—'नागविद्धा न कर्तव्या षष्ठी चैव कदाचन । सप्तमीसंयुता कार्या षष्ठी धर्मार्थचिन्तकैः ।' इति । 'नागविद्धा तु या षष्ठी शिवविद्धा तु सप्तमी ।

दशम्येकादशीविद्धा नोपोष्याः स्युःकथञ्चन।' इति शिवरहस्यसौरपुराणवचनेन पूर्वविद्धाया निषेधाच्च। अत्र पञ्चमीवेधः षण्मुहूर्तात्मको ज्ञेयः। तथा च माधवीये स्कन्दपुराणे—'नागो द्वादशनाडीभिर्दिक्पञ्चदशभिस्तथा। भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम्।' इति। तेन षण्मुहूर्तन्यूनपञ्चमीयोगे पूर्वैव। स्कन्दषष्ठी तु पूर्वैवोपोष्या। तदुक्तं स्कन्दपुराणे—'कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी। एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत्।' इति। अस्यां सप्तमीभानुयोगे पद्मकाख्यो योग उक्तो निर्णयामृते—'षष्ठी च सप्तमीयोगे वारे चेदंशुमालिनः। योगोऽयं पद्मको नाम सूर्यकोटिग्रहैः समः।' इति। अत्र स्नानदानादि कृतमक्षयफलदं भवतीति। सर्वेष्वपि मासेष्वविशेषादयं योगो बोद्धव्य इति निर्णयसिन्धौ। अचलासप्तम्यामित्यन्ये। अस्यामेव रविवासरयोगे लोलार्कयात्रोक्ता काशीखण्डे—'कृतानि यानि पापानि नरैः संवत्सरादपि। नश्यन्ति क्षणतस्तानि षष्ठ्यर्के लोलदर्शनात्।' लोलो लोलार्कः। वार्षिकयात्राप्युक्ता तत्रैव—'मार्गशीर्षस्य सप्तम्यां षष्ठ्यां वा रविवासरे। विधाय वार्षिकीं यात्रां नरः पापात्प्रमुच्यते।' इति।

## अथ षष्ठीव्रतान्युच्यन्ते।

मदनरत्ने—तत्र चैत्रशुक्लषष्ठ्यामारभ्यं कालोत्तरोक्तं कुमारव्रतम्। ईश्वर उवाच—'चैत्रशुक्लात्समारभ्य व्रतार्थमधुनोच्यते। उपोष्य विधिना षष्ठ्यां विशेषात्षण्मुखं यजेत्। मृन्मयीं प्रतिमां रम्यां तदा कुर्याद्विशेषतः। षण्मुखं द्वादशभुजं बालवत्काञ्चनप्रभम्। मयूरवाहनं देवं सौम्यं लावण्यपूरितम्। शक्तिं घण्टां पताकां च पाशकुक्कुटभूषितम्। दण्डाभयं सवरदं खड्गेषुधिशरासनम्। संपूज्य परया भक्त्या शुक्लपुष्पोपचारकैः। नैवेद्यं गन्धवस्त्राणि शुक्लान्येव प्रदापयेत्। ब्राह्मीरसं समादाय कपिलाज्यं पलं तथा। सरस्वत्यणुनामन्त्र्य सहस्राष्टोत्तरेण तु।' सरस्वत्यणुना मन्त्रेण। 'आचार्यं पूजयेद्भक्त्या वस्त्रहेमान्नवाहनैः। ब्राह्मीरसं घृतं पश्चाद्व्रतान्ते प्राशने हितम्। मासि मासि प्रकर्तव्यं यावत्संवत्सरावधि। ब्रह्मचर्येण शुचिना अब्दमेकं समाचरेत्। महाकविर्भवेत्सोऽपि भुवि वाचस्पतिर्यथा। सकृद्गृह्णाति शास्त्राणि वादिनां मूर्ध्नि तिष्ठति। रक्षोविनायकास्तस्य न हिंसन्ति कदाचन। स्कन्दग्रहा महाघोरास्तथापस्मारदुर्ग्रहाः। न हिंसन्ति महासेन व्रतस्यास्य प्रभावतः। इदं व्रतोत्तमं श्रेष्ठं कर्तव्यं भूतिवर्धनम्। षण्मुखं पार्वतीपुत्रं स्कन्दं गुहकुमारकम्। कार्तिकेयं

तथा बालं तथाऽन्यं क्रौञ्चसूदनम् । तारकारातिसंज्ञं च तथान्यं कृत्तिकासुतम् । वैशाखं च विशाखं च मासि मासि प्रपूजयेत् । सूर्यं सूर्यकलायुक्तं शशिना मूर्ध्नि भूषितम् । क्रमेण मन्त्रा बोद्धव्या द्वादशानां शिखिध्वज ।' इति चैत्रशुक्लषष्ठ्या-मारभ्यं कुमारव्रतम् ।

अथ पुत्रावाप्तिव्रतम् । स्कन्दं प्रति शिववाक्यम् । ' वैशाखमासादारभ्य पञ्चम्यां य उपोषितः । भवन्तं पूजयेत्षष्ठ्यां संवत्सरमतन्द्रितः । पुत्रार्थी प्राप्नुयात्पुत्रं धनकामो धनी भवेत् । स्वर्गार्थी प्राप्नुयात्स्वर्गं त्वयि तुष्टे ममात्मज । स्तोत्रेण च मदीयेन ये स्तोष्यन्ति तव प्रभो । लोकद्वयेऽपि ते कामान्प्राप्स्यन्ति मनसः प्रियान् । कुमारश्च तथा स्कन्दो विशाखश्च गुहस्तथा । चतुरात्मा विनिर्दिष्टो भगवान्क्रौञ्चसूदनः । तमभ्यर्च्य नरः षष्ठ्यां पुत्रानाप्नोत्यभीप्सितान् । बालकानां गृहे श्रेयो नरः प्राप्नोत्यसंशयम् । ' इति विष्णुधर्मोत्तरोक्तं पुत्रादिप्राप्तिव्रतम् ।

आषाढशुक्लषष्ठी स्कन्दषष्ठी । सा पञ्चमीयुता कार्या । कृष्णाष्टमी स्कन्दषष्ठीति पूर्वोदाहृतपाद्मवचनात् । तत्र पञ्चम्यामुपोष्य षष्ठ्यां स्कन्दं पूजयेत् । तदुक्तं वाराहपुराणे—' आषाढशुक्लषष्ठी तु तिथिः कौमारिकी स्मृता । कुमारमर्चयेत्तत्र पूर्वत्रोपोष्य वै दिने ।' इति ।

भाद्रपदशुक्लषष्ठी सूर्यषष्ठी सा सप्तमीयुतेति दिवोदासीय इति निर्णयसिन्धौ। अत्र स्नानादि कृतमक्षयं भवति । तदुक्तं भविष्योत्तरे—' येयं भाद्रपदे मासि षष्ठी स्याद्भरतर्षभ । इयं पापहरा पुण्या शिवा शान्ता शुभा नृप । स्नानदानादिकं सर्वमस्यामक्षयमुच्यते । योऽस्यां पश्यति गाङ्गेयं दक्षिणापथवासिनम् । ब्रह्महत्यादिपापैस्तु मुच्यते नात्र संशयः । ' अत्र भास्करपूजनादिकमप्युक्तं तत्रैव—' शुक्ले भाद्रपदे षष्ठ्यां स्नानं भास्करपूजनम् । प्राशनं पञ्चगव्यस्य अश्वमेधफलप्रदम् ।' इति ।

भाद्रपदशुक्लषष्ठ्येव चम्पाषष्ठी । तदुक्तं हेमाद्रौ स्कान्दे—' षष्ठी भाद्रपदे शुक्ला वैधृत्या तु समन्विता । विशाखाभौमयोगेन सा चम्पेतीह विश्रुता । देवासुरमनुष्याणां दुर्लभा षष्टिहायनी । कृते त्रेतायां पञ्चाशद्धायनी द्वापरे पुनः । चत्वारिंशत्कलौ विंशद्धायनी दुर्लभा ततः ।' इति । ब्रह्माण्डे मल्लारिमाहात्म्ये एतैरेव श्लोकैरुपक्रम्य ' यस्तु पश्यति देवेशं मल्लारिं पूजयत्यपि । सर्वजन्मकृतं पापं दर्शनात्तस्य नश्यति।' इत्युक्तम् । अस्या व्रतविशेषो मदनरत्ने स्कान्दे—' पंचम्यां नियमं कुर्यादुपवासस्य च व्रती । चम्पाषष्ठीव्रतं कुर्याद्यथोक्तवचनाद्गुरोः ।' इत्युपक्रम्य प्रातर्मृदा शुक्ल-

तिलैश्च स्नात्वा कुम्भोपरि पात्रे कुङ्कुमेन द्वादशारमालिख्य तत्र सरथं सारुणं सूर्यं कर्णिकायां पूजयित्वा द्वादशनामभिर्द्वादशारे पूजयित्वा ब्राह्मणान्भोजयित्वा स्वयं भुञ्जीतेति । इति भाद्रपदशुक्लषष्ठी ।

अथ भाद्रपदकृष्णषष्ठी भौमवासरेण रोहिणीनक्षत्रेण व्यतीपातयोगेन च युक्ता कपिलाषष्ठीत्युच्यते इत्युक्तं निर्णयामृते।तत्र व्रतोपवासादिभिर्भास्करं पूजयित्वा ब्राह्मणाय कपिलां दद्यात् । तदुक्तं वाराहपुराणे—'नभस्यकृष्णपक्षे या रोहिणीपातभूसुतैः । युक्ता षष्ठी पुराणज्ञैःकपिला परिकीर्तिता । व्रतोपवासनियमैर्भास्करं तत्र पूजयेत् । कपिलां च द्विजाग्र्याय दत्त्वा क्रतुफलं लभेत् ।' इति।पुराणसमुच्चये विशेष उक्तः—'भाद्रे मास्यसिते पक्षे भानौ चैव करे स्थिते । पाते कुजे च रोहिण्यां सा षष्ठी कपिला भवेत् ।' इति । अत्र भाद्रपदकृष्णपष्ठ्यमान्तचान्द्रमासाभिप्रायेणोक्तेति निर्णयामृते हेमाद्रौ च । अतश्चापरपक्षे कपिला षष्ठी भवति । अत्र भाद्रपदमासकृष्णपक्षे षष्ठ्यां रोहिणीनक्षत्रभौमवासरव्यतीपातहस्तार्काणां चतुर्णां योगेनैव प्राशस्त्यम् । न केवलषष्ठ्यादीनाम् । 'संयोगे तु चतुर्णां तु निर्दिष्टा परमेष्ठिना ।' इत्युक्तत्वात्सूर्यस्य हस्तस्थितत्वं सति संभवे फलातिशयप्रदम् । अतश्चेयं षष्ठी पूर्वदिने वा परदिने वा यत्रैव योगचतुष्टयवती संभवति सैव ग्राह्या । अत्र देवदार्वादिद्रव्याणि संपेष्य क्षीरेणालोड्य तेन कल्केन सर्वाङ्गाणि विलिप्य आपस्त्वमसि देवेशेति वक्ष्यमाणमन्त्रेण स्नात्वा पञ्चगव्येन च स्नात्वा पञ्चपल्लवैर्मार्जयेत्।ततश्चन्दनोदकपूरितं कुम्भं रक्तवस्त्रद्वयोपेतं संस्थाप्य तदुपरि ताम्रपात्रे रौप्यरथं संस्थाप्य तत्र सौवर्णीं सूर्यप्रतिमां रत्नयुतां सकपिलां षोडशोपचारैः संपूज्य ब्राह्मणाय दिव्यमूर्तिर्जगच्चक्षुरिति वक्ष्यमाणमन्त्रेण दद्यात् । इति कपिलाषष्ठीकृत्यम् । इयमेव चन्द्रषष्ठी । सा चन्द्रोदयव्यापिनी ग्राह्या । उभयतस्तथात्वे पूर्वा।तदुक्तं भविष्ये—'तद्भाद्रपदे मासि षष्ठ्यां पक्षे सितेतरे । चन्द्रषष्ठीव्रतं कुर्यात्पूर्वविधः प्रशस्यते । चन्द्रोदये यथा षष्ठी पूर्वेद्यु वा परेऽहनि । चन्द्रषष्ठ्यसिते पक्षे सैवोपोष्या प्रयत्नतः ।' इति । इयमेव षष्ठी हंसषष्ठी । सा सप्तमीयुतेति दिवोदासः इति निर्णयसिन्धौ । इयमेव तत्पुरुषकल्पादिः ।

अथ कपिलाषष्ठीकथा । वाराहे—विक्रान्त उवाच—'रूपसंपदमारोग्यं स्वर्गे वासं च पुष्कलम् । प्राप्नुवन्ति नरा येन नियमं तं वदस्व मे ।' अगस्त्य उवाच—'साधु साधु महाप्राज्ञ यत्पृष्टोऽहं त्वयाऽनघ । तत्सर्वं कथयिष्यामि ततः श्रेयो भविष्यति । शृणु पार्थिव वक्ष्यामि स्वर्गमोक्षप्रदं नृणाम् । यच्च गुप्तं पुरा राजन्ब्रह्मविष्ण्विन्द्रदैवतैः । असुराणां च सर्वेषां राक्षसानां तथैव च । शंकरेण पुरा चैव षण्मुखाय निवेदितम् ।

षण्मुखेन ममाख्यातं महापातकनाशनम् । यच्छ्रुत्वा ब्रह्महा गोघ्नः सुरापो गुरुतल्पगः । आगारदाही गरदः सर्वपापरतोऽपि वा । मुच्यते सर्वपापेभ्यः स्वर्गलोकं च गच्छति । यच्च पुण्यं पवित्रं च नृणामद्भुतनाशनम् । उपकाराय लोकानां तथा तव नृपोत्तम । शृणु भूप महापुण्यं षष्ठीमाहात्म्यमुत्तमम् । [1]प्रौष्ठपदासिते पक्षे षष्ठी भौमेन संयुता । व्यतीपातेन रोहिण्यां सा षष्ठी कपिला स्मृता । द्वितीया तु महापुण्या दुर्लभा व्रतिनां क्वचित् । षष्टिसंवत्सरस्यान्ते सा पुनस्तेन संयुता । चैत्रवैशाखयोर्मध्ये सिते पक्षे शुभोदया । वैशाखेऽपि च राजेन्द्र द्वारवत्यां परा स्मृता । तस्यां चैव हुतं दत्तं यत्किञ्चित्प्रतिमादिकम् । तस्य सर्वस्य पुण्यस्य संख्यां वक्तुं न शक्यते । यस्मिन्काले भवेदेतैर्गुणैः षष्ठी युता ततः । पञ्चम्यामेकभक्तं च कुर्यात्तत्र विचक्षणः । षष्ठ्यां प्रातः समुत्थाय कृत्वादौ दन्तधावनम् । जलपूर्णाञ्जलिं कृत्वा इमं मन्त्रमुदीरयेत् । निराहारोऽद्य देवेश त्वद्भक्तस्त्वत्परायणः । पूजयिष्याम्यहं भक्त्या शरणं भव भास्कर । अर्घ्यं दत्त्वेति संकल्पं कृत्वा यत्नशुचिस्ततः । स्नानं कृत्वा प्रयत्नेन नद्यां तीर्थेऽथ वा जले । तडागे दीर्घिकायां वा गृहे वा नियतात्मवान् । देवदारु तथोशीरं कुङ्कुमैला मनःशिला । पत्रकं पद्मकं षष्ठी मधुगव्येन पेषयेत् । क्षीरेणालोड्य कल्केन स्नानं कुर्यात्समन्त्रकम् । आपस्त्वमसि देवेश ज्योतिषां पतिरेव च । पापं नाशय मे देव वाङ्मनःकायकर्मजम् । पञ्चगव्यकृतस्नानः पञ्चभङ्गै[2]स्तु मार्जयेत् । आनयेन्मृत्तिकां शुद्धां स्नानार्थं तु प्रयत्नतः । मृत्तिके ब्रह्मपूतासि काश्यपेनाभिमन्त्रिता । पवित्रं कुरु मां नित्यं सर्वपापात्समुद्धर । मन्त्रेणानेन वरुणं पूजयेद्बुद्धिमान्नरः । पाशाग्रहस्त वरुण सर्ववारीश्वर प्रभो । अद्याहं प्रार्थयामि त्वां पूतं कुरु सुरेश्वर । आदित्यो भास्करो भानू रविः सूर्यो दिवाकरः । प्रभाकरोऽमितो वीरो देवः सर्वेश्वरो हरिः । गोमयेनोपलिप्तायां भूम्यां वै कुङ्कुमेन तु । मण्डलं सर्वतोभद्रमालिखेद्बुद्धिमान्नरः । तत्र मध्ये लिखेत्पद्ममष्टपत्रं सकर्णिकम् । पूर्वपत्रे न्यसेत्सूर्यमाग्नेये तपनं न्यसेत् । सुवर्णरेतसं याम्ये नैर्ऋत्ये च न्यसेद्रविम् । आदित्यं वारुणे पत्रे वायव्ये च दिवाकरम् । सौम्ये प्रभाकरं तत्र सूरमीशानपत्रके । तीव्ररश्मिधरं देवं ब्रह्माणं चैव विन्यसेत् । आधाररूपिणं देवं मध्ये वै वरुणं न्यसेत् । सहस्ररश्मिं सूर्यं च सूक्ष्मं स्थूलं गुणान्वितम् । सर्वगं सर्वरूपं च मध्ये भास्करमेव च । सप्ताश्वरथमारूढं पद्महस्तं दिवाकरम् । अक्षसूत्रधनुष्पाणिं कुण्डलैर्मुकुटेन च । रत्नैर्नानाविधैर्युक्तं सौवर्णं तत्र कारयेत् । शक्ति-

---

१-प्रौष्ठपदो भाद्रपदः । स चात्र दर्शान्तो वेदितव्यः । तत्रैव रोहिणीयोगसंभवात् । २ -पञ्चभङ्गैः पञ्चपल्लवैः ।

तस्तु पलादूर्ध्वं तदर्धं कर्षतोऽपि वा । सौवर्णमरुणं कुर्याद्रौक्मं चैव तथा रथम् । सप्ताश्वैर्भूषितं कृत्वा रथं तस्याग्रतः स्थितम् । अरुणं विनतापुत्रं गृहीताश्वमनूरुकम् । एवंरूपं रथं कृत्वा पद्मस्योपरि विन्यसेत् । तस्योपरि न्यसेद्देवं रक्तवस्त्रविभूषितम् । रत्नचन्दनमाल्यादिमण्डितं चातिशोभितम् । अग्रतः सारथिं कृत्वा पूजयेदरुणं शुचिः । रक्तपुष्पैः सुगन्धैश्च तथाऽन्यैरपि शक्तितः । ॐ विनतातनयो देवः सर्वसाक्षी तमोनुदः । सप्ताश्वः सप्तरज्जुश्च अरुणो मे प्रसीदतु । मन्त्रेणानेन संपूज्य सारथिं तदनन्तरम् । देवस्य चासनं कल्प्यं प्रभूतादिकपञ्चकम् । प्रभूतं विमलं सारमाराध्यं परमं शुभम् । दीप्तादिशक्तिभिश्चैव ततो भानुं प्रपूजयेत् । दीप्ता सूक्ष्मा तथा भद्रा बिम्बिनी विमलानघा । अमोघा विद्युता चेति नवमी सर्वतोमुखी । अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा । यः स्मरेद्भास्करं देवं स बाह्याभ्यन्तरः शुचिः । शिखायां भास्करं न्यस्य ललाटे सूर्यमेव च । चक्षुर्मध्ये न्यसेद्भानुं मुखे तत्र रविं न्यसेत् । कण्ठे न्यसेद्भानुमन्तं पद्मगर्भं द्विहस्तयोः । तिमिरक्षयकृद्देवं स्तनयोरेव विन्यसेत् । जातवेदोभिधं नाभ्यां कट्या भानुं तथा न्यसेत् । उग्ररूपं गुह्यदेशे तेजोरूपं द्विजङ्घयोः । पादयोः सर्वरूपं तु सूक्ष्मं स्थूलगुणान्वितम् । एवं यथोक्तं विन्यस्य पात्रं गृह्य ततोऽर्चयेत् । करवीरार्ककुसुमै रक्तचन्दनचम्पकैः । पुष्पैः सुगन्धैर्धूपैश्च कुङ्कुमैरुपशोभितम्[१] । मार्तण्डं भानुमादित्यं भास्करं तपनं रविम् । हंसं दिवाकरं चेति पादतो मुकुटावधि । पादौ जङ्घे तथा जानुद्वयमूरुः कटिस्तथा । नाभिर्वक्षःस्थलं शीर्षमेतेष्वङ्गेषु पूजयेत् । आनयेदर्घ्यपात्रं तद्रौप्यं वा ताम्रमेव वा । अर्घ्यार्थं दैवतं पात्रमुदकेन प्रपूरयेत् । पूजयेत्तत्र प्रागादिदेवतास्ताः समाहितः। दिग्देवतास्ततः पूज्या गन्धपुष्पानुलेपनैः । पात्रे तोयं समादाय सपुष्पफलचन्दनम् । जानुभ्यामवनीं गत्वा सूर्यायार्घ्यं निवेदयेत् । वेदगर्भ नमस्तुभ्यं देवगर्भ नमोऽस्तु ते । अव्यक्तमूर्तये तुभ्यमर्घ्यं गृह्ण नमोऽस्तु ते । ब्रह्ममूर्तिधरायेश चतुर्वक्त्र सनातन । सृष्टिस्थितौ संस्थिताय गृहाणार्घ्यं नमोस्तु ते । विष्णुरूपधरो देवः पीतवस्त्रश्चतुर्भुजः । प्रभवः सर्वलोकानामर्घ्यं गृह्ण नमोऽस्तु ते । यं रुद्ररूपिणं देवं भगवन्तं त्रिशूलिनम्। यो दहेच्च त्रिलोकं वै अर्घ्यं गृह्ण नमोऽस्तु ते । उदयन्तं महद्भूतं तेजोराशिसमुद्भवम् । तिमिरक्षयकृद्देवमर्घ्यं गृह्ण नमोऽस्तु ते । मन्त्रपूतं गुडाकेशं नृगतिं व्याधिनाशनम् । सप्तभिश्चैव जिह्वाभिरर्घ्यं गृह्ण नमोऽस्तु ते । त्वं ब्रह्मा त्वं च विष्णुश्च रुद्रश्चैव

१–उपशोभितामिति भावे क्तः । क्रियाविशेषणं चेदम् ।

प्रजापतिः । त्वमेव सर्वभूतात्मा अर्घ्यं गृह्ण नमोऽस्तु ते । कालात्मा सर्वभूतात्मा वेदात्मा सर्वतोमुखः । जन्ममृत्युजराशोकसंसारभयनाशनः । दारिद्र्यव्यसनध्वंसी श्रीमान्देवो दिवाकरः । सुवर्णस्फाटिको भानुः स्वर्णरेता दिवाकरः । हरिदश्वोंऽशुमाली च अर्घ्यं गृह्ण नमोऽस्तु ते । अत्र हरिदश्व इत्यर्घस्य कालात्मेत्याद्यर्धचतुष्टयान्तेषु प्रत्येकमपकर्षेण मन्त्रचतुष्टयं बोध्यम् ।' अत एव दारिद्र्येत्यर्धद्वये दिवाकरस्य पद-पाठनिमित्तपौनरुक्त्याभावः । ततश्च द्वादशमन्त्रैर्द्वादशार्घ्या देयाः । 'चतुर्भिर्मूर्तिभिः संस्था अष्टाभिः परिगीयते । सामध्वनिस्तु यो यज्ञे अर्घ्यं गृह्ण नमोऽस्तु ते । अथ गन्धं च पुष्पं च तथा धूपं प्रदीपकम् । नैवेद्यं च यथाशक्त्या प्रार्थयेत्सूर्यदेवताम् । अग्निमीळे नमस्तुभ्यं नमस्ते जातवेदसे । इषे चैव नमस्तुभ्यमग्ने चैव नमो नमः । शन्नोदेवीर्नमस्तुभ्यं जगज्जन्म नमो नमः । आत्मरूपिन्नमस्तुभ्यं विश्वमूर्ते नमो नमः । त्वं ब्रह्मा त्वं च विष्णुश्च धाता त्वं च हुताशनः । मुक्तिकाममभीप्सादिप्रार्थयामि सुरेश्वर । इति मन्त्रं समुच्चार्य नमः कुर्वीत भास्करम् । संवर्चसेति पाणिभ्यां तोयेन विमृजेन्मुखम् ।' मन्त्रस्तु—'संवर्चसा पयसा सं तनूभिरगन्महि मनसा सं शिवेन । त्वष्टा नो अत्र विदधातु स योनुमार्ष्टु तन्वो यद्विलिष्टम् ।' 'हंसः शुचिषदि त्यृचा सूर्यस्यैवावलोकनम् । उदुत्यं चित्रमित्येतत्सूक्तं देवाग्रतो जपेत् । 'प्रशस्ते चैव कोणे च फलकं चैव कारयेत् ।' ( प्रथमेऽस्ते शैवकोणे ) इति कौस्तुभे पाठः । अस्तप्रा-रम्भसमये ऐशान्यामिति तदर्थः । 'फलैः पुष्पैरक्षतैश्च भक्ष्यैर्नानाविधैरपि । शय्यां तत्र च देवस्य शुभे देशे प्रकल्पयेत् । षड्धान्यं षड्रसं देवं रौप्यं चैव महाप्रभुम् । पुरुषं खड्गहस्तं च कारयेच्चैव बुद्धिमान् । वस्त्रयुग्मेन संछन्नं लवणोपरि विन्यसेत् । अनेनैव तु मन्त्रेण स्नानमर्चितं ततः । नमस्ते क्रोध-रूपाय खड्गहस्ताजिघांसवे । जिघांसुकामं त्वां दृष्ट्वा दुद्रुवुः सर्वदेवताः । त्वया व्याप्तं मेरुपृष्ठं चण्डभास्करसुप्रभ । अतस्त्वां पूजयिष्यामि अर्घ्यं गृह्ण नमो-ऽस्तु ते । क्षपयित्वा तु तां रात्रीं गीतवादित्रनिस्वनैः । ततस्त्वभ्युदिते सूर्ये होमं कुर्यात्स्वशक्तितः। पूजयेत्तत्र शक्त्या च देवांश्च विधिवद्गुरुम् । होमोर्कस्य समिद्भिश्च घृतमिश्रैस्तिलैस्तथा । संसिद्धं चरुकं चैव घृतं च जुहुयाद्द्विजः । आकृष्णेनेति मन्त्रेण शतमष्टोत्तरं क्रमात् । होमो व्याहृतिभिर्वाऽथ स्विष्टकृत्तदनन्तरम् । कपिलां पूजयेद्देवीं सवत्सां पापनाशिनीम् । वस्त्रयुग्मां सघण्टां च स्वर्णशृङ्गविभूषिताम् । सौवर्णास्यां रौप्यखुरां कांस्यदोहनकान्विताम् । मन्त्रेणानेन तां दद्याद्ब्राह्मणाय च

१—मन्त्रेणेति तृतीयान्तस्य पूजयेदित्यनेनान्वयः ।

शक्तितः । कपिले सर्वदेवानां पूजनीयासि रोहिणी । सर्वतीर्थमयी यस्मादतः शान्तिं प्रयच्छ मे । या लक्ष्मीः सर्वदेवानां या च देवेष्ववस्थिता । धेनुरूपेण सा देवी मम शान्तिं प्रयच्छतु । देहस्था या च रुद्राणां शंकरस्य च या प्रिया । धेनुरूपेण सा देवी मम पापं व्यपोहतु । विष्णोर्वक्षसि या लक्ष्मीः स्वाहा चैव विभावसोः । चन्द्रार्कानलशक्तिर्या धेनुरूपाऽस्तु सा श्रिये । चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च । लक्ष्मीर्या लोकपालानां सा धेनुर्वरदास्तु मे । सुधा त्वं पितृमुख्यानां स्वाहा यज्ञभुजामपि । वषट् या प्रोच्यते लोके सा धेनुस्तुष्टिदाऽस्तु मे । गावो मे चाग्रतः सन्तु गावो मे सन्तु पृष्ठतः । गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ।' गोपूजनमन्त्रः । 'गावः स्पृष्ट्वा नमस्कृत्य यो वै कुर्यात्प्रदक्षिणाम् । प्रदक्षिणीकृता तेन सप्तद्वीपा वसुंधरा । नमस्ते कपिले देवि सर्वपापप्रणाशिनि । संसारार्णवमग्नं मां गोमातस्त्रातुमर्हसि ।' गोदानमन्त्रः । 'हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे । रक्तं वस्त्रयुगं यस्मादादित्यस्य च वल्लभम् । प्रदानात्तस्य मे सूर्य अतः शान्तिं प्रयच्छ मे । सुवर्णं वस्त्रयुग्मं च परिधानं च कारयेत् । एतैः प्रकारैः संयुक्तां दद्याद्धेनुं द्विजातये। भानुं सदक्षिणं दद्यान्मन्त्रेणानेन यत्नतः । भास्करो विधितो जातो द्रव्यस्थो भास्करः स्वयम् । भास्करस्य प्रदाता च तेन वै भास्करो मम ।' दानमन्त्रः । 'भास्करः प्रतिगृह्णाति भास्करो वै ददाति च । भास्करस्तारको द्वाभ्यां भास्कराय नमो नमः ।' प्रतिग्रहमन्त्रः । 'ब्राह्मणान्भोजयेत्पश्चात्पायसेन गुडेन च । शक्त्या च दक्षिणां दद्यात्तेभ्यश्चैव विशेषतः । अल्पवित्तोऽपि यः कश्चित्सोऽपि कुर्यादिमं विधिम् । आत्मशक्त्यनुसारेण सोऽपि तत्फलमाप्नुयात् । आचार्यस्य ततो भक्त्या सर्वं पाणौ विनिक्षिपेत् । गोभूहिरण्यवासांसि व्रीहयो लवणं तिलाः । एतत्सर्वं प्रदत्त्वा च कपिलां प्रार्थयेत्ततः । कपिले पुण्यकर्मासि निष्पापे पुण्यकर्मणि । मां समुद्धर दानं च ददतो ह्यभयं कुरु । दिवि वादित्रशब्दैश्च सेव्यसे कपिले सदा । तथा विद्याधराः सिद्धा भूतनागगणा ग्रहाः । कपिलारोमसंख्यातास्तत्र देवाः प्रतिष्ठिताः । पुष्पवृष्टिं प्रमुञ्चन्ति नित्यमाकाशमास्थिताः । ब्राह्मणोत्पादिता देवी अग्निकुण्डात्सुसुप्रभा । नमस्ते कपिले पुण्ये सर्वदेवनमस्कृते । जय नित्यमहासत्त्वे सर्वतीर्थादिमङ्गले । दातारं स्वजनोपेतं ब्रह्मलोकं नयाशु वै । ततः प्रदक्षिणां कृत्वा नत्वा ब्राह्म-

णपुङ्गवान् । आशीर्वादान्वदेयुस्ते पुत्रपौत्रधनागमान् । आरोग्यं रूपसौभाग्यं सर्वदुः-खविवर्जितम् । अन्ते गोलोकमासाद्य चिरायुः सुखवान्भवेत् । यदा स्वर्गात्प्रपतति राजा भवति धार्मिकः । सप्तद्वीपवतीं भुङ्क्ते भुक्त्वा राज्यमकण्टकम् । अहो व्रतमिदं पुण्यं सर्वपापप्रणाशनम् । अतः परं प्रवक्ष्यामि दानस्य फलमुत्तमम् । महादेवमये पात्रे सद्वृत्ते चाक्षयं भवेत् । व्रतं सर्वव्रतश्रेष्ठमिदमग्र्यं महाफलम् । तारयिष्यति दातारमूनमक्षयमव्ययम् । एवं देवगणाः सर्वे भूतसंघाः प्रहर्षिताः । आकाशस्थाः प्रनृत्यन्ति पुण्येऽस्मिन्दिवसागमे । पात्रभूताय ऋषये श्रोत्रियाय कुटुम्बिने । एवं यः कपिलां दद्याद्विधिदृष्टेन कर्मणा । स याति परमं स्थानं यावन्न च्यवते पुनः ।' अत्र कपिलास्वरूपं तदीयशृङ्गादिगतसुवर्णादिमानं विशेषान्तरसहितं कपिलादानप्रकरणोक्तं ग्राह्यम् । तद्यथा मदनरत्ने वाराहे–'सुवर्णकपिला पूर्वा द्वितीया गौरपिङ्गला । तृतीया चैव रक्ताक्षी चतुर्थी गुडपिङ्गला । पञ्चमी बहुवर्णा स्यात्षष्ठी च श्वेतपिङ्गला । सप्तमी श्वेतपिङ्गाक्षी अष्टमी कृष्णपिङ्गला । नवमी पाटला ज्ञेया दशमीपुच्छपाटला ।' इति । व्यासः–'स्वर्णशृङ्गींरौप्यखुरांमुक्तालांगूलभूषिताम् । कांस्योपदोहनांधेनुंवस्त्रच्छन्नामलंकृताम् । दत्त्वा द्विजेन्द्राय नरः स्वर्गे लोके महीयते ।' कौर्मे–'दशसौवर्णिके शृङ्गे खुराः पञ्चपलान्विताः । पञ्चाशत्पलिकं ताम्रं कांस्यं चैतावदेव तु । वस्त्रं तु त्रिगुणं धेन्वा दक्षिणा च चतुर्गुणा । एतैश्चालंकृता धेनुर्घण्टागलविभूषिता । कपिला विप्रमुख्याय दत्ता स्वर्मोक्षदा मता।' इति । वस्त्रादेस्त्रैगुण्यादि गोदानसामान्योक्तवस्त्राद्यपेक्षमिति दानरत्ने । स्कान्दे प्रभासखण्डे तु संक्षेपेणोक्तो व्रतविशेषः । 'उपलिप्ते शुभे देशे पुष्पाक्षतविभूषितम् स्थापयेदव्रणं कुम्भं चन्दनोदकपूरितम् । पञ्चरत्नसमायुक्तं दूर्वापुष्पाक्षतान्वितम् । रक्तवस्त्रयुगच्छन्नं ताम्रपात्रेण संयुतम् । रौप्यरुक्मपलस्यैव एकचक्रःसुचित्रितः । सौवर्णपलसंयुक्तां मूर्तिं सूर्यस्य कारयेत् । कुम्भस्योपरि संस्थाप्य गन्धपुष्पैस्तथाऽर्चयेत् । आदित्यं पूजयेद्देवं नामभिः स्वैर्यथोदितैः । आदित्यो भास्करः सूर्यः प्रभाकरदिवाकरौ । प्रभाकर नमस्तुभ्यं संसारान्मां समुद्धर । भुक्तिमुक्तिप्रदो ह्यस्मात्तस्माच्छान्तिंप्रयच्छमे ।' प्रार्थनामन्त्रः । 'नमोनमस्तेवरद ऋक्सामयजुषां पते । नमोऽस्तु विश्वरूपाय विश्वधाम्ने नमोस्तु ते । एवं संपूज्य विधिवद्देवदेवं दिवाकरम् । पूजयेत्कपिलांधेनुंवस्त्रमाल्यानुलेपनैः ।'दानमन्त्रः ।'दिव्यमूर्तिर्जगच्चक्षुर्द्वादशात्मा दिवाकरः । कपिलासहितो देवो मम मुक्तिं प्रयच्छतु । तस्मात्त्वं कपिले पुण्या सर्वलोकस्य

पावनी । प्रदत्ता सह सूर्येण मम मुक्तिप्रदा भव ।' इति स्कन्दपुराणोक्तं कपिलाषष्ठीव्रतम् । इति भाद्रपदषष्ठी ।

आश्विनशुक्लपञ्चम्यां स्थापिताया देव्याः सप्तम्यां पूजार्थं षष्ठ्यां ज्येष्ठानक्षत्रयुक्तायामसंभवे केवलायां बिल्ववृक्षनिमन्त्रणं कार्यमित्युक्तं प्राक् । इत्याश्विनषष्ठी ।

अथ कार्तिकषष्ठी । कार्तिकस्य शुक्लषष्ठ्यां भौमवारयुक्तायां वह्निं संपूज्य वन्हिमहोत्सवं कुर्यात् । तदुक्तं मत्स्यपुराणे—'वृश्चिकार्के शुक्लषष्ठी भौमवारेऽप्युपस्थिता । महाषष्ठी तु सा प्रोक्ता सर्वपापहरा तिथिः । तस्यां स्वपिति वै वह्निः पूर्वत्रोपोष्य वै दिने । षष्ठ्यां वह्निं समभ्यर्च्य कृत्वा वह्निमहोत्सवम् । ' वृश्चिकार्के कार्तिके मासीति कालादर्शे । सर्वासु षष्ठीषु विशेषतः षष्ठ्यां कृत्यविशेषो भविष्योत्तरे—'षष्ठ्यां फलाशनो राजन्विशेषात्कार्तिके नृप । राज्यच्युतो विशेषेण स्वराज्यं लभतेऽचिरात् । दत्त्वाऽर्घ्यं कार्तिकेयाय स्थित्वा वै दक्षिणामुखः । दध्ना घृतोदकैः पुष्पैर्मन्त्रेणानेन सुव्रत । सप्तर्षिदारज स्कन्द सेनाधिप महाबल । रुद्रोमाग्निज षड्वक्त्र गङ्गागर्भ नमोऽस्तु ते । प्रीयतां देवसेनानीः संपादयतु हृद्गतम् । दत्त्वा विप्राय चामान्नं यच्चान्यदपि वर्तते । पश्चाद्भुङ्क्ते त्वसौ रात्र्यां भूमिं कृत्वा तु भाजनम् । ' इत्यब्दपर्यन्तं षष्ठीषु राजतं स्कन्दं संपूज्य विप्राय दद्यादिति दिवोदासः । इति कार्तिकषष्ठी ।

अथ मार्गशीर्षशुक्लषष्ठी स्कन्दषष्ठी । सा च पूर्वविद्धा ग्राह्येति पूर्वमेवोक्तम् । कृष्णाष्टमीति वाक्यात् । तत्र स्कन्दस्तारकं हतवानतस्तत्र स्कन्दं संपूज्य स्नानदानादि कृतमक्षयं भवति । तदुक्तं भविष्योत्तरे—' येयं मार्गशिरे मासि षष्ठी भरतसत्तम । पुण्या पापहरा धन्या शिवा शान्ता ग्रहप्रिया । निहत्य तारकं षष्ठ्यां गुहस्तारकराजवत् । रराज तेन दयिता कार्तिकेयस्य सा तिथिः । स्नानदानादिकं कर्म तस्यामक्षयमुच्यते ।' इति । अस्यामेव षष्ठ्यां खण्डेरायाख्यमल्लारिपूजा ब्राह्मणभोजनादि मल्लारिमाहात्म्ये उक्तम् । दाक्षिणात्येषु च प्रसिद्धम् । तच्चोत्तरविद्धायां कार्यम् । षण्मुन्योरिति युग्मवाक्यात् ।

इयमेव योगविशेषेण चम्पाभिधा । तदुक्तं ब्रह्माण्डपुराणे मल्लारिमाहात्म्ये 'मार्गे भाद्रपदे शुक्ला षष्ठी वैधृतिसंयुता । रविवारेणसंयुक्तासाचम्पेतीह कीर्तिता ।' इति । 'विशाखाभौमयोगेन सा चम्पेतीह विश्रुता ।' इति मदनरत्ने । अस्यां विश्वेश्वरदर्शनमुक्तं तत्रैव—' मार्गशीर्षेऽमले पक्षे षष्ठ्यां वारेऽशुमालिनः । शततारागते चन्द्रे लिङ्गं

स्याद्दृष्टिगोचरम् ।' इति । इयमुक्तयोगयुक्ता पूर्वा परा वा कार्या । चम्पाषष्ठी सप्तमीयुतेति दिवोदासीय इति निर्णयसिन्धौ ।

अथ चम्पाषष्ठीकथा । स्कन्द उवाच–'प्राप्तराज्यं च राजानं धर्मपुत्रं युधिष्ठिरम् । कदाचिदाययौ द्रष्टुं दुर्वासा मुनिसत्तमः । तं पप्रच्छ महातेजा धर्मसूनुः कृताञ्जलिः । तद्व्रतं श्रोतुमिच्छामि कर्तुं च मुनिसत्तम ।' दुर्वासा उवाच–' शृणु राजन्महाभाग व्रतानामुत्तमं व्रतम् । अस्तीह यच्चीर्णमात्रं सर्वकामांस्तु पूरयेत् । सर्वपापक्षयं कुर्यादखण्डितव्रतान्यपि । यदि लभ्येत जीवद्भिर्दैवेन नृपसत्तम । षष्ठी भाद्रपदे शुक्ला वैधृतेन समन्विता । विशाखाभौमयोगेन सा चम्पेतीह विश्रुता । देवासुरमनुष्याणां दुर्लभा षष्टिहायिनी । कृते त्रेतायां पञ्चाशद्दायिनी द्वापरे पुनः । चत्वारिंशत्कलौ त्रिंशद्दायिनी दुर्लभा ततः । आदौ कृतयुगे पूर्वं या चीर्णा विश्वकर्मणा । तत्फलाद्विश्वकर्तृत्वं प्राजापत्यमवाप्तवान् । पृथुना कार्तिकेयेण भुवि नारायणेन च । ईश्वरेणोमया सार्धमितरेतरलिप्सया । यश्चैनां विधिवत्कुर्यात्सोऽत्यन्तं फलमश्नुते।' युधिष्ठिर उवाच। 'तद्विधिं श्रोतुमिच्छामि विस्तराद्वद मे मुने। के मन्त्राःके च नियमाः सा च किंलक्षणा भवेत् ।' दुर्वासा उवाच । ' द्विदैवतर्क्षभौमेन[1] वैधृतेन समन्विता । नभस्ये या सिता षष्ठी सा चम्पेति निगद्यते । पञ्चम्यां नियमं कुर्यादुपवासस्य[2] च व्रती । ततश्चम्पाव्रतं कुर्याद्यथोक्तवचनाद्गुरोः । ततः प्रभाते विमले दन्तधावनपूर्वकम् । कृत्वा[3] सम्यग्व्रतं तस्य संकल्पं कुरुते नरः । निराहारोऽद्य देवेश त्वद्भक्तस्त्वत्परायणः। पूजयिष्याम्यहं भक्त्या शरणं भव भास्कर ।' संकल्पमन्त्रः–' ततः स्नानं प्रकुर्वीत नद्यादौ विमले जले। मृदमालभ्य मन्त्रैश्च तिलैः शुक्लैश्च मन्त्रवित्। सावित्रःपरमस्त्वं हि परं धाम जले मम । त्वत्तेजसा परिभ्रष्टं पापं यातु सहस्रधा ।' प्रार्थनामन्त्रः । ' आपस्त्वमसि देवेश ज्योतिषां पतिरेव च । पापं नाशय मे देव वाङ्मनःकर्मभिः कृतम् ।' स्नानमन्त्रः ।' ततः संतर्पयेद्देवानृषीन्पितृगणानपि । ततश्चैत्य गृहं मौनी पाखण्डालापवर्जितः। स्थण्डिलं कारयेच्छुभ्रं चतुरस्रं सुशोभनम्। स्थापयेदव्रणं कुम्भं पञ्चरत्नसमन्वितम् । रक्तवस्त्रयुगच्छन्नं रक्तचन्दनचर्चितम् । तस्योपरि न्यसेत्पात्रं सौवर्णं ताम्रमेव वा । कुङ्कुमेन लिखेत्पद्मं द्वादशारं सकर्णिकम् । तस्योपरि न्यसे–

---

१–द्विदैवतर्क्षं विशाखा। २–उपवासस्याङ्गभूतं नियममेकभक्तं कुर्यादित्यर्थः। ३–कृत्वेति सकलाङ्गोपेतं व्रतं स्वसाध्यत्वेन मनसि निर्धार्येत्यर्थः ।

त्सूर्यं सौवर्णं सरथारुणम् । शक्त्या वा वित्तसारेण वित्तशाठ्येन वर्जितः । तमर्चये-द्गन्धपुष्पैर्विधिमन्त्रपुरःसरम् । पञ्चामृतेन स्नपनं कुर्याद्देवस्य संयतः । ततस्तु गन्धतो-येन परां पूजां समाचरेत् । गन्धैर्नानाविधैर्दिव्यैः कर्पूरागुरुकुङ्कमैः । फलैस्तदृतुसंभूतै-रन्नैकैश्च सुगन्धिभिः । मण्डपं कारयेत्तत्र पुष्पमालाविभूषितम् । यथाशोभं प्रकुर्वीत अधश्चोपरि सर्वतः । ततस्तु पूजयेद्देवं भास्करं कमलोपरि ।' आदित्याय नमः, तप-नाय नमः, पूष्णे नमः, भानुमते नमः, भानवे नमः, अर्यम्णे नमः, विश्वचक्राय नमः, अंशुमते नमः, सहस्रांशवे नमः, स्वर्नायकाय नमः, सूरायनमः, सूर्याय नमः, खगाय नमः, एषु त्रयोदशसु नामसु आदित्याय नम इत्यनेन मध्ये पूजनम् । इतरैर्द्वादशभिः पूर्वादिदलक्रमेण पूजनम् । ' जन्मान्तरसहस्रेण दुष्कृतं यन्मया कृतम् । तत्सर्वं नाशमायातु दिवाकर तवार्चनात् ।' प्रार्थनामन्त्रः । ' विनतातनयो देवः कर्मसाक्षी तमोनुदः । सप्ताश्वः सप्तरज्जुश्च अरुणो मे प्रसीदतु ।' अरुणपूजामन्त्रः । 'ततः संपू-जयेद्देवमच्युतं सद्रथस्थितम् । अष्टाक्षरेण मन्त्रेण गन्धपुष्पादिभिः क्रमात् । कालात्मा सर्वभूतात्मा विश्वात्मा सर्वतोमुखः । जन्ममृत्युजरारोगसंसारभयनाशनः ।' सूर्योदये अर्घ्यमन्त्रः । ' ततः संपूजयेच्छुक्लां सवत्सां गां पयस्विनीम् । सवस्त्रकण्ठाभरणां सुघ-ण्टाभिरलंकृताम् । ब्रह्मणोत्पादितं देवि सर्वपापविनाशिनि । संसारार्णवमग्नानां गोमा-तस्त्रातुमर्हसि । सुरूपा बहुरूपाश्च मातरो लोकमातरः । गावो मामुपसर्पन्तु सरितः सागरं यथा । या लक्ष्मीः सर्वदेवानां या च देवेषु संस्थिता । धेनुरूपेण सा देवी मम पापं व्यपोहतु । या लक्ष्मीर्लोकपालानां या लक्ष्मीर्धनदस्य च । चन्द्रार्कशुक्रशक्तिर्या सा धेनुर्वरदाऽस्तु मे ।' धेनुपूजामन्त्रः । 'तिलहोमं ततः कुर्यात्सावित्र्याष्टोत्तरं शतम् । ततस्तां कल्पयेद्धेनुमर्को मे प्रीयतामिति । आचार्याय ततो दद्यादादित्यं सरथारुणम् । सकुम्भवस्त्रै रत्नैश्च सर्वोपस्करणैः सह । ददामि भानुं भवते सर्वोपस्करसंयुतम् । मनो-भिलषितावाप्तिं करोतु मम भास्करः । गृह्णामि भास्कर रवे भवन्तं सर्वतोमुखम् । मनोभिलषितावाप्तिमुभयोः कर्तुमर्हसि ।' प्रतिग्रहमन्त्रः । ' सर्वतीर्थमयीं धेनुं सर्वयज्ञ-मयीं शुभाम् । सर्वदानमयीं देवीं ब्राह्मणाय ददाम्यहम् ।' गोदानमन्त्रः । ' गृह्णामि सुरभिं देवीं सर्वयज्ञमयीं शुभाम् । उभौ पुनीहि वरदे उभयोस्तारका भव ।' धेनुप्रतिग्रह-मन्त्रः । ' ततस्तु भोजयेद्विप्रान्द्वादशैव स्वशक्तितः । दद्याच्च दक्षिणां तेभ्यः प्रणिपत्य

---

१-अष्टाक्षरो घृणिमन्त्र ।

विसर्जयेत् । अवैकल्यं व्रते तस्य शंसेयुर्द्विजसत्तमाः । अभिनन्द्य तमाशीर्भिः परिरेमुरनिन्दिताः । ततस्तु स्वयमश्नीयाद्द्विजानां शेषमिष्टकम् । सह पुत्रैः कलत्रैश्च अन्यैर्बहुजनैर्वृतः । एवं यः कुरुते चम्पां सोऽत्यन्तं फलमश्नुते । प्रभणा च विधिः प्रोक्तस्त्वत्प्रभूणां च गोचर । सर्वैश्चैतद्व्रतं कार्यं स्वशक्त्या दुःखभीरुभिः । प्रभुः प्रथमकल्पस्य यो न कल्पेन वर्तते । विफलं तस्य तत्तु स्यादनीशस्त्वानुकल्पिकः । पञ्चम्यां नियमं कुर्यादाचार्यवचनाद्व्रती । षष्ठ्यां स्नानं प्रकुर्वीत संतर्प्य पितृदेवताः । अभ्येत्य स्वगृहं मौनी सूर्यं मनसि चिन्तयेत् । स्थापयेदव्रणं कुम्भं मृत्पात्रं च तथोपरि । तस्योपरि न्यसेत्सूर्यं पलेनैकेन निर्मितम् । सौवर्णं भक्तिसंयुक्तं वित्तसारं यथारुणम् । तमर्चयेज्जगन्नाथं गृहीत्वाज्ञां गुरोः स्वयम् । षडक्षरेण मन्त्रेण गन्धपुष्पानुसंभवम् ।' "ॐनमः सूर्याय" इति षडक्षरमन्त्रः । 'संपूज्य विधिवद्देवं फलपुष्पादिकं च यत् । सूर्यायावेदयेत्सर्वं सूर्यो मे प्रीयतामिति । ततः प्रभाते विमले गत्वा गुरुगृहं व्रती । सर्वोपस्करणैःसूर्यमाचार्याय निवेदयेत् । धान्यं पुष्पं फलं वस्त्रं रत्नं धेन्वादिकं च यत् । गवां कोटिसहस्रेण कुरुक्षेत्रेऽर्कपर्वणि । चम्पादानस्य राजेन्द्र कलां नार्हति षोडशीम् । सर्वतीर्थप्रदानानि तथाऽन्यान्यपि षोडश । चम्पायां तुलिता न्यायैश्चम्पैका त्वतिरिच्यते । आदित्यस्तपनः पूषा भानुमान्भानुरर्यमा । विश्वचक्रोंशुमान्देवः सहस्रांशुः स्वनायकः । सूरः सूर्यः खगः पूज्यः सर्वपत्रादिषु क्रमात् ।' देव इत्यंशुमतो विशेषणम् । पञ्चम्यामित्यादिना पुनर्व्रतविधिर्धनहीनविषयः । इति स्कन्दपुराणोक्त—चम्पाषष्ठीव्रतम् ।

माघशुक्लषष्ठ्यां भविष्योत्तरोक्तं मन्दारषष्ठीव्रतम् । श्रीकृष्ण उवाच—'शृणु पार्थ प्रवक्ष्यामि सर्वपापप्रणाशिनीम् । सर्वकामप्रदां पुण्यां षष्ठीं मन्दारसंज्ञिताम् । माघस्यामलपक्षे तु पञ्चम्यां लघुभुङ्नरः।दन्तकाष्ठं ततः कृत्वा स्वपेद्भूमौ जितेन्द्रियः। सर्वभोगविहीनस्तु षष्ठीमुपवसेन्नरः । प्राप्यानुज्ञां द्विजश्रेष्ठान्मन्दारं[१] प्राशयेन्निशि । ततः प्रभात उत्थाय कृतस्नानः पुनर्द्विजान् । संपूज्य संहतं कृत्वा मन्दारकुसुमाष्टकम् । सौवर्णं पूषणं तद्वत्पद्महस्तं सुशोभनम् । पद्मं कृष्णतिलैः कृत्वा ताम्रपात्रे दलाष्टकम् । पूज्य मन्दारकुसुमैर्भास्करायेति पूर्वतः । नमस्कारेण तद्वच्च सूर्यायेत्यनले दले । दक्षिणे तद्वदर्काय यज्ञेशाय च नैर्ऋते । पश्चिमे वसुधाम्नेति वायव्ये चण्डभानवे । कृष्णायोत्तरतः पूज्य आनन्दायेत्यतः परम् । कर्णिकायां च पुरुषं पूज्य सर्वात्मना हरिम् । शुक्लवस्त्रैः समावेष्ट्य भक्ष्यमाल्यफलादिभिः । एवमभ्यर्च्य तत्सर्व-

१—मन्दारो राजार्कः ।

मुपाध्याये निवेदयेत् । भुञ्जीतातैललवणं वाग्यतः प्राङ्मुखः क्षितौ । अनेन विधिना सर्वं सप्तम्यां मासि मासि च । कुर्यात्संवत्सरं यावद्वित्तशाठ्यविवर्जितः । एतदेव व्रतान्ते तु निधाय कलशोपरि । रवियुक्तं[1] द्विजेन्द्राय दातव्यं भूतिमिच्छता । नमो मन्दारनाथाय मन्दारभवनाय च । त्वं रवे तारयस्वास्मानस्मात्संसारसागरात् । विधिनानेन यः कुर्यात्षष्ठीं मन्दारसंज्ञिताम् । विपाप्मा स सुखी मर्त्यो मृतः स्वर्गे महीयते । इमां संमोहपटलध्वान्तोद्दामनदीपिकाम् । प्रगृह्य गच्छन्संसारगर्तायां न पतेन्नरः । मन्दारषष्ठीं विख्यातामीप्सितार्थफलप्रदाम् । यः पठेच्छृणुयाद्वापि सोऽपि पापैः प्रमुच्यते । षष्ठीमुपोष्य तिलपङ्कजकर्णिकायां संपूज्य भास्करमहो सुरवृक्षपुष्पैः[2] । यत्प्राप्नुवन्ति पुरुषा न हि तत्कदाचिद्गोभूहिरण्यतिलदाः फलमाप्नुवन्ति ।' इति भविष्योत्तरोक्तं मन्दारषष्ठीव्रतम् ।

अथ स्कन्दपुराणोक्तं दारिद्र्यहरषष्ठीव्रतम्—'षष्ठी नाम तिथिः पूज्या सामान्या दैवतैरपि । एकभक्तेन नक्तेन तथैवायाचितेन वा । उपवासेन दानेन तैलक्षारविवर्जितः । अयं च भगवान्देवो भास्करः स्वपरद्युतिः । येन शैघ्र्येण दृश्येत तद्गुह्यं कथयाम्यहम् । गोपनीयं व्रतं दिव्यमिहलोकफलप्रदम् । यस्मिन्कृते व्रते चैव दारिद्र्यं न भवेत्कुले । षष्ठीतिथिं समुद्दिश्य ब्राह्मणस्य च भोजनम् । शाल्योदनं च पयसि कृत्वा शर्करया युतम् । वर्तुलं घृतसंयुक्तं वर्षमेकं प्रदापयेत् । कुले तस्यैव ये जाता ये भविष्यन्ति मानवाः । अक्षयास्ते महात्मानो व्रतेन पुण्यपावनाः । इह तस्यैव ये सन्ति तद्दारिद्र्यं च गच्छति ।' इति दारिद्र्यहरषष्ठीव्रतम् । पक्षद्वयगतासु सर्वमासषष्ठीषु तिथिपरत्वेन स्कन्दं संपूजयेत् । तदुक्तम्—षष्ठ्यां पूजा गुहस्य चेति ।

अथ सिद्धविरुद्धादिकम् । शुक्रेण प्रतिपत्षष्ठीत्यादि प्रतिपन्निर्णये उक्तम् । भौमेनापि सिद्धा । भौमे षष्ठी तृतीया स्यादिति चोक्तमेव । षष्ठी शनिवारेण विरुद्धा । तदुक्तम्—'सौरे हस्तोत्तराषाढे रेवती चित्रया सह । पञ्चमी चैव षष्ठी च अर्यम्णा सह वर्जिता ।' इति । षष्ठ्यां शनिवारेण क्रकचाभिधो योगः । तदुक्तं रत्नमालायाम्—'तिथिश्च वारस्य च यत्र संख्यया त्रयोदश स्युर्मिलने कृते सति । स्मृतः स योगः क्रकचाभिधानको विवर्जनीयः शुभकर्मसु ध्रुवम् ।' इति । अत्र दन्तकाष्ठतैलाभ्यङ्गस्नानं च निषिद्धम् । यथा-'दन्तकाष्ठेकुलद्रव्यजातिनाशो यथाक्रमम् । जायतेषष्ठ्यमावास्याप्रति-

---

१—रवियुक्तमिति सौवर्णरविसयुतम् । २—सुरवृक्षो मन्दार ।

पत्सुक्तेसति ।' तथाच रत्नमालायाम्- 'षष्ठीषु तैलं पलमष्टमीषु क्षौरक्रियां चैव चतुर्दशीषु स्त्रीसेवनं नष्टकलासु पुंसामायुःक्षयार्थं मुनयोवदन्ति ।' अयं दन्तकाष्ठादिनिषेधस्तात्कालिकतिथ्यामेव । तदुक्तम्—'स्नाने चाभ्यञ्जने चैव दन्तधावनमैथुने । तिथिस्तात्कालिकी ज्ञेया तथा मरणजन्मनोः । ' अत्र षष्ठीतैलमित्युक्तत्वात्तिलतैलमेव स्नाने निषिद्धं न तु सर्वतैलम् । स्मृतिसमुच्चये—'यत्र तैलं निषिद्धं स्यात्तिलतैलं निषिध्यते । अभ्यङ्गस्य निषेधे तु सार्षपादेरपीष्यते ।' इति पुष्पतैलस्य सर्वदा सर्वथा अनिषेधः । 'सार्षपं गन्धतैलं च यत्तैलं पुष्पवासितम् । अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन ।' इति प्रचेतोवचनात् । रविभौमशनीनामन्यतमे क्रूरग्रहे सिंहस्थिते सति षष्ठी दुष्टा भवति । पराः परेषामित्युक्तवात् । तथा कर्कमेषस्थे सूर्ये षष्ठी दग्धा भवति । तत्र शुभकर्म न कार्यम् । षष्ठयां पश्चिमे योगिनीसांमुख्यात् यात्रा न कार्या । इति सर्वषष्ठीनिर्णयः ।

श्रीमद्दिल्लीशसेनोद्भटविकटभटश्रेणिमत्तेभसिंह—
श्चण्डोन्माथत्तुरुष्कक्षुभितवसुमतीपालने धर्मराजः ।
पौत्रः श्रीकृष्णसिंहक्षितिपकुलमणेर्विष्णुसिंहस्य पुत्रः
श्रीमान्राजाधिराजो जयहरिरमराधीशवत्क्ष्मौ सुखी स्तात् ॥ १ ॥
श्रीमत्पण्डितदेवभट्टतनयः श्रीराघवाङ्घ्रिद्वय—
ध्यानावाप्तसमस्तकामनिवहः सम्राट् स रत्नाकरः ।
तुष्टयै श्रीजयसिंहवर्मनृपतेः कल्पद्रुमे कामदं
षष्ठीनिर्णयगुच्छकं समकरोद्धुण्यं पदं ह्यष्टमम् ॥ २ ॥

इति देवभट्टात्मजपौण्डरीकयाजिरत्नाकरविरचिते जयसिंहकल्पद्रुमोद्द्योते षष्ठीनिर्णयस्तबकः समाप्तः ।

---

## अथ सप्तमीनिर्णयः ।

अथ सप्तमीनिर्णीयते तत्रादौ सप्तमीध्यानम् । 'ताम्रवर्णाब्जपात्रा सा हयस्थासप्तमी मता ।' इति । कृष्णपक्षे ।'नीलकुन्तेन्दुकण्ठा सा जटाखण्डेन्दुभूषिता । इभस्थासप्तमी गौरी द्विभुजा वज्रपात्रिणी ।'इति शुक्लपक्षे।सप्तमीतिथिरुपवासादिषु षष्ठीयुतैव ग्राह्या युग्मवाक्यात् । 'षष्ठ्या युता सप्तमी चेत्कर्तव्या तात सर्वदा । षष्ठी च सप्तमी यत्र तत्र

संनिहितो हरिः ।' इति मदनरत्नीयस्कन्दवचनात् । 'षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाष्टमी । सप्तमी परविद्धा च नोपोष्यं तिथिपञ्चकम् ।' इति स्कन्दपुराणवचने परविद्धायाः सप्तम्या उपवासे निषेधाच्च । अत्र माधवः—यदा पूर्वेद्युरस्तमयपर्यन्ता षष्ठी परेद्युस्तिथिक्षेपेणास्तमयादर्वागष्टमी त्रिमुहूर्ता तदा पूर्वविद्धाया अलाभादुत्तरविद्धायाश्च प्रतिषिद्धत्वात्कुत्रानुष्ठानमिति चेत् । निषेधमुल्लङ्घ्याप्युत्तरविद्धायामिति ब्रूमः यद्यप्यस्मिन्नर्थे वचनं नोपलभ्यते तथापि शेषलोपस्यान्यत्वादुत्तरविद्धा गौणकालत्वेन स्वीकर्तव्या इति । इति सप्तमीसामान्यनिर्णयः ।

## अथ सप्तमीकृत्यानि ।

चैत्रशुक्लसप्तम्यां दमनकादिभिः सूर्यपूजा कर्तव्या । तदुक्तं निर्णयामृते देवीपुराणे चैत्रमासतिथिप्रक्रमे—'भास्करस्य तु सप्तम्यां पूजां दमनकादिभिः । कृत्वा प्राप्नोति भोगादीन्विगतारिमहाशयः ।' इति महातपा इत्यपि पाठः ।

अस्यामेव भविष्यत्पुराणोक्तमनोदनसप्तमीव्रतं हेमाद्रौ-शुक्लपक्षे तु चैत्रस्येत्यादि । अस्यां श्रीसूर्यं संपूज्य दध्ना पायसेन वा द्विजान्संतर्प्य तदेव स्वयमश्नीयादिति । इत्यनोदनसप्तमी ।

अस्यामेव भविष्यत्पुराणोक्तं नामसप्तमीव्रतम् । तदुक्तं हेमाद्रौ—'चैत्रात्प्रभृति कर्तव्या सर्वदा नामसप्तमी ।' इत्यादि । अत्र चैत्रमासाद्यारभ्य धाता, अर्यमा, मित्रः, वरुणः, इन्द्रः, विवस्वान्, पर्जन्यः, पूषा, अंशुः, भगः, त्वष्टा, जिष्णुः, एतैर्नामभिः प्रतिमासमेकैकेन नाम्ना इत्येवं क्रमेण द्वादशादित्याः पूजनीयाः इति नामसप्तमीव्रतम् ।

अस्यामेवारभ्यं विष्णुधर्मोत्तरोक्तं सूर्यव्रतम् । मार्कण्डेय उवाच—'चैत्रस्य शुक्लपक्षे तु सम्यक्षष्ठ्यामुपोषितः । सप्तम्यामर्चनं कुर्याद्देवदेवस्य गोपतेः । बहिः स्थानं नरः कृत्वा गोमयेनोपलेपितम् । लेपयेत्स्थण्डिलं सम्यक्ततो गौरमृदा नृप । तत्राष्टपत्रं कमलं वर्णकैस्तु समालिखेत् । कर्णिकायां न्यसेत्तत्र देवदेवं विभावसुम् । पूर्वपत्रे न्यसेद्देवौ द्वौ राजन्नृतुचारकौ । आग्नेये च न्यसेत्पत्रे गन्धर्वौ ऋतुकारकौ । दक्षिणे च न्यसेत्पत्रे तथैवाप्सरसां द्वयम् । राक्षसौ द्वौ महाराज पत्रे नैर्ऋतिके न्यसेत् । काद्रवेयौ महानागौ पश्चिमे ऋतुकारकौ । वायव्ये यातुधानौ द्वौ तथैव नृपसत्तम । उत्तरे च तथा पत्रे विन्यसेच्चऋषिद्वयम् । ऐशाने विन्यसेत्पत्रे ग्रहमेकं द्विजोत्तम । तेषां संपूजनं कार्यं गन्धमाल्यानुलेपनैः । धूपदीपैः सनैवेद्यैः पृथक्पृथगरिन्दम ।

एवं संपूजनं कृत्वा सर्वेषां तदनन्तरम् । घृतेन होमं कुर्वीत सूर्यस्याष्टशतेन तु । अन्येषां[1] च तथा दद्यादष्टावष्टौ नरोत्तम । नाम्ना तथैव सर्वेषामेकैकं भोजयेद्द्विजम् । शक्त्या च दक्षिणा देया तेषामेव यदूत्तम । एवं संवत्सरं कृत्वा व्रतमेतन्नरोत्तम । पौराणिकाय विप्राय व्रतस्यान्ते पयस्विनीम् । विधिवच्च ततो दद्यात्ससुवर्णं यदूत्तम । सर्वकामप्रदं ह्येतद्व्रतमुक्तं स्वयंभुवा । व्रतेनानेन चीर्णेन सूर्यलोकमवाप्नुयात् । अथ द्वादशवर्षाणि करोत्येतन्महाव्रतम् । भित्त्वाऽर्कमण्डलं राजन्विष्णोः सायुज्यतां व्रजेत् । एतद्व्रतं पापविनाशकारि धन्यं यशस्यं रिपुनाशकारि । लोके ह्यमुष्मिंश्च परे च राजन्स्वर्गप्रदं मोक्षकरं तथैव ।' इति चैत्रशुक्लसप्तम्यां सूर्यव्रतम् ।

अस्यामेव सप्तम्यां वैशाखशुक्लसप्तम्यां वा कमलसप्तमीव्रतम् । तदुक्तं पाद्मे–वसन्तामलसप्तम्यां स्नातः सन्गौरसर्षपैः । तिलपात्रे तु सौवर्णं निधाय कमलं शुभम् । वस्त्रयुग्मावृतं कृत्वा गन्धपुष्पैरथार्चयेत् । नमस्ते पद्महस्ताय नमस्ते विश्वधारिणे । दिवाकर नमस्तुभ्यं प्रभाकर नमोऽस्तुते ।' इति संप्रार्थ्यास्तसमये सोदकुम्भं सूर्यं विप्राय दत्त्वा कपिलां च दत्त्वोपवासं कुर्यात् । ततः प्रातर्द्विजान्संभोज्य स्वयं भुञ्जीत । एवं संवत्सरं कृत्वाऽन्ते स्वर्णकमलान्वितं सूर्यं शयनादि च दद्यात्सर्वसौख्यान्वितो भवतीति कमलसप्तमीव्रतम् ।

वैशाखशुक्लसप्तम्यां निम्बसप्तमीव्रतं कुर्यात् । तदुक्तं भविष्योत्तरे–'तृतीयां सप्तमीं वीर शृणुष्व गदतो मम । निम्बपत्रैः स्मृता पूजा पापघ्नी शोकनाशिनी ।' 'ॐखखोल्काय नमः' अनेन सूर्यपूजनं कुर्यात् निम्बपत्रभक्षणं च कुर्यात् । तदुक्तं हेमाद्रौ–'वैशाखशुक्लपक्षस्य जितक्रोधो जितेन्द्रियः । निम्बपत्रं ततोऽश्नीयात्सप्तम्यां मन्त्रतो नृप । निम्बपल्लव भद्रं ते सुभद्रं तेऽस्तु वै सदा । ममापि कुरु भद्रं वै प्राशनाद्रोगहा भव।' इति मन्त्रः । 'इत्थं प्राश्य स्वपेद्भूमौ देवस्य पुरतो नृप ।' अष्टम्यां भानुं पूजयित्वा ब्राह्मणान्संभोज्य स्वयं भुञ्जीतेति निम्बसप्तमीव्रतम् ।

अस्यामेव सप्तम्यां गङ्गोत्पत्तिस्तत्पूजा चोक्ता ब्राह्मे–'वैशाखे शुक्लसप्तम्यां जन्हुना जान्हवी पुरा । क्रोधात्पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात् । तां तत्र पूजयेद्देवीं गङ्गां गगनमेखलाम् ।'इति । गङ्गापूजनप्रकारस्तु दशहराप्रकरणे द्रष्टव्यः । अत्र पूर्वाह्णव्यापिनी ग्राह्या । दिनद्वयेन साम्येन पूर्वाह्णगामिन्यां पूर्वा सामान्यनिर्णयादिति मयूखे । निर्णयसिन्धौ तु शिष्टाचारान्मध्याह्नव्यापिनी ग्राह्या । दिनद्वये तद्व्याप्ता-

१–अन्येषां कमलविन्यस्तदेवानामष्टावष्टौ आहुतीरिति शेष. ।

व्याप्तावेकदेशव्याप्तौ वा पूर्वा युग्मवाक्यात्। भट्टोजिदीक्षितग्रन्थकृत्यरत्नावल्यो-रप्येवम्।

अस्यामेव सप्तम्यां पद्मपुराणोक्तं शर्करासप्तमीव्रतम्। पुलस्त्य उवाच— 'शर्करासप्तमीं वक्ष्ये सर्वकल्मषनाशिनीम्। आयुरारोग्यमैश्वर्यं ययाऽनन्तं प्रजायते। माधवस्य सिते पक्षे सप्तम्यां श्रद्धयान्वितः। प्रातः स्नात्वा तिलैः शुक्लैः शुक्लमाल्यानु-लेपनैः। स्थण्डिले पद्ममालिख्य कुङ्कुमेन सकर्णिकम्। तस्मै नमः सवित्रेति पुष्पं धूपं निवेदयेत्। स्थापयेदव्रणं कुम्भं शर्करापात्रसंयुतम्। शुक्लवस्त्रेण संवेष्ट्य शुक्लमा-ल्यानुलेपनैः। सहिरण्यं यथाशक्त्या मन्त्रेणानेन पूजयेत्। विश्वदेवमयो यस्माद्वेदवा-दीति पठ्यसे। त्वमेवामृतसर्वस्वमतः पाहि सनातन। पञ्चगव्यं ततः पीत्वा स्वपेत्तत्पा-र्श्वतः क्षितौ। सौरसूक्तं जपंस्तिष्ठेत्पुराणश्रवणेन वा। अहोरात्रे गते पश्चादष्टम्यां कृतनित्यकः। तत्सर्वं वेदविदुषे ब्राह्मणाय निवेदयेत्। भोजयेच्छक्तितो विप्राञ्छर्क-राघृतपायसैः। भुञ्जीतातैललवणं स्वयमप्यथ वाग्यतः। अनेन विधिना सर्वं मासि मासि समाचरेत्। वत्सरान्ते पुनर्दद्याद्ब्राह्मणाय समाहितः। शयनं वस्त्रसंवीतं शर्करा-कलशान्वितम्। सर्वोपस्करसंयुक्तं तथैकां गां पयस्विनीम्। गृहं च शक्तितो दद्या-त्समस्तोपस्करान्वितम्। सहस्रेणाथ निष्काणां कृत्वा दद्याच्छतेन वा। दशभिर्वा त्रिभिर्वापि निष्केणैकेन वा पुनः। पद्मं स्वशक्तितो दद्याद्वित्तशाठ्यविवर्जितः। अमृतं पिबतो वक्त्रात्सूर्यस्यामृतबिन्दवः। निष्पेतुर्ये समुत्पन्नाः शालिमुद्गयवाः स्मृताः। शर्करा च पुनस्तस्मादिक्षुसारोऽमृतोपमः। इष्टा रवेरतः पुण्या शर्करा हव्यकव्ययोः। शर्करासप्तमी चैषा वाजिमेधफलप्रदा। सर्वदुःखोपशमनी पुत्रसंततिवर्धिनी। यः कुर्यात्परया भक्त्या स वै सद्गतिमाप्नुयात्। कल्पमेकं वसेत्स्वर्गे ततो राजा भवेत्परम्। इदमपि च शृणोति यः स्मरेद्वा पठति स याति सुरेश्वरस्य लोकम्। मतिमपि च ददाति यो जनानाममरवधूजनकिंनरैः स पूज्यः।' इति पद्मपुराणे शर्करासप्तमीव्रतम्।

आषाढशुक्लसप्तम्यां कश्यपाद्विवस्वान्नामा सूर्यो जात इति निर्णयामृते। तत्र वर्तुलमण्डलस्थितं सूर्यं धूपदीपानुलेपनादिभिः संपूज्य भोज्यनैवेद्यं दद्यात्। तदुक्तं ब्रह्मपुराणे—'आषाढशुक्लसप्तम्यां विवस्वान्नाम भास्करः। जातः पूर्वस्तु तस्मात्तं तत्रोपोष्य यजेत्सदा। रथचक्राकृतौ रम्ये मण्डले सर्वकामदम्। भक्ष्यभो-ज्यैस्तथा पेयैः पुष्पैर्धूपविलेपनैः।' इति।

---

१—पद्म सुवर्णम्।

अथ श्रावणशुक्लसप्तम्यामव्यङ्गसप्तमीव्रतम् । तदुक्तं भविष्योत्तरे—'श्रावणे मासि सप्तम्यां देवाग्र्यं सप्तिवाहनम् । शुक्लपक्षे समभ्यर्च्य पुष्पधूपादिभिः शुचिः । प्राप्येह विपुलं देव धर्मानन्तरमक्षयम् । अमुत्र लोकमायाति दिव्यं खगपतेः शुभम् ।' खगपतिरत्रादित्यः । अस्यामव्यङ्गमर्पणं नक्तभोजनं च कर्तव्यम् । अव्यङ्गशब्देन कार्पाससूत्रनिर्मितः सर्पनिर्मोकाकृतिरन्तःशुषिरो द्वाविंशत्यधिकशताङ्गुलपरिमित उत्कृष्टः । विंशत्यधिकशताङ्गुलपरिमितो मध्यमः । अष्टोत्तरशताङ्गुलपरिमितो ह्रस्व इति बोद्धव्यमिति वीरमित्रोदये भविष्ये प्रतिवर्षसर्पणमुक्तम् । इत्यव्यङ्गसप्तमीव्रतम् ।

अस्यामेव सप्तम्यां पापनाशिनीसप्तमीव्रतम् । हेमाद्रौ—'शुक्लपक्षस्य सप्तम्यां यदर्क्षं तु करो भवेत् । तदा स्यात्सुमहापुण्या सप्तमी पापनाशिनी ।' इति । अयं च योगो बहुलं श्रावण एव भवति । 'तस्यां संपूज्य देवेशं चित्रभानुं जगद्गुरुम् ।' सप्तजन्मकृतपातकहानिर्भवति दानहोमादिकं चाक्षयं भवतीति भविष्यत्पुराणोक्तं पापनाशिनीव्रतम् । इति श्रावणशुक्लसप्तमीव्रतम् ।

अथ शुक्लादिश्रावणकृष्णसप्तम्यां शीतलाव्रतम् । तच्च मध्याह्नव्यापिन्यां कार्यम् । तथा च माधवीये हारीतः-'पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिः ।' इति । अथ तद्विधिः । मासपक्षाद्युल्लिख्य ममावैधव्यादारिद्र्यभर्तृवियोगसौख्यधनधान्यप्राप्तये शीतलाव्रतमहं करिष्ये इति संकल्प्य तत्र यथामिलितोपचारैः शीतलां पूजयिष्ये इति संकल्प्य एकं कलशं संस्थाप्य तदुपरि शीतलां पूजयेत् । तत्र ध्यानं स्कान्दे—'वन्देऽहं शीतलां देवीं रासभस्थां दिगम्बराम् । मार्जनीकलशोपेतां शूर्पालंकृतमस्तकाम् ।' इति । कुम्भे संस्थापयेद्देवीं पूजयेन्नाममन्त्रतः । शीतले दह मे पापं पुत्रसौख्यफलप्रदे । धनधान्यप्रदे देवि पूजां गृह्ण नमोऽस्तु ते ।' इति प्रार्थनां विधाय । 'शीतले शीतलाकारे अवैधव्यसुतप्रदे । श्रावणस्यासिते पक्षे अर्घ्यं गृह्ण नमोऽस्तु ते ।' इत्यर्घ्यं दद्यात् । 'शीतलेऽन्नानि पक्वानि दध्ना समन्वितानि च । नैवेद्यं च प्रयच्छामि घृतमिश्रं च सुन्दरम् । गौरिणीर्भोजयेत्सप्त पूजनीयाः प्रयत्नतः ।' इति पूजाविधिः ।

अथ कथा हेमाद्रौ भविष्यत्पुराणे-कृष्ण उवाच—'प्रसिद्धं श्रूयतां रम्यं नगरं हस्तिनापुरम् । इन्द्रद्युम्नश्च राजाऽभून्नृपतिर्लोकपालकः । धर्मशर्मविधा नाम तस्य भार्या यशस्विनी । क्रियानाम्न्यत्रसाध्वी च दानशीला प्रियंवदा । बभूव प्रथमः पुत्रो महाधर्मेति

---

१—धर्मानन्तरमिति धर्मार्थकाममोक्षेति चतुर्वर्गगणनायां धर्मानन्तरमर्थाभिधानादर्थ उच्यते ।

नामतः। नन्दनः पितृवात्सल्यात्कालादस्मात्ततोऽन्वभूत्। द्वितीया च तथा पुत्री तस्य जाता गुणोत्तमा। सर्वलक्षणसंपन्ना शुभकारीति नामतः। ववृधे सा पितुर्गेहे सर्वाङ्गगुणसुन्दरी। नाम्ना रूपेण सा बाला सर्वाभ्यः सुगुणाधिका। सामुद्रिकगुणोपेता पद्महस्ता प्रियंवदा। वरः कुलेन मानेन लक्ष्मीवान्रूपवान्गुणैः। समाययौ च जग्राह पाणिग्रहणपूर्वकम्। कदाचित्स पितुर्गेहं जामात्रानयनाय च। आजगाम जनैः सार्धं तत्पुत्रीगमनोत्सुका। प्रणम्य च पितुः पादौ त्वरितं चारुहासिनी। तत्पुत्रीं मन्त्रयामास जामाता कृतविग्रहः। रथमारुह्य हे स्वामिन्यास्यामि स्वपुरे गृहम्। तस्याः पिता ह्युवाचेदं दम्पत्योः शुभहेतवे। पुत्रि त्वं सुस्थिरा भूत्वा दिनमेकं क्षमस्व मे। शीतलासप्तमी नाम व्रतं कुरु सुते शुभे। सौभाग्यारोग्यजननमवैधव्यप्रदं तथा।' कन्योवाच—'तात तत्र परिज्ञातं यदुक्तं पद्मयोनिना। पतिव्रतासमो धर्मो नास्तीह भुवनत्रये। ततस्तां कारयामास शीतलाव्रतमुत्तमम्। स्वपत्नीं प्रेषयामास ब्राह्मणो ब्रह्मपारगः। भर्त्रा सहैव सा बाला जगाम श्वशुरालये। मार्गे पद्मानि संगृह्य व्रतोपकरणं शुभम्। शीतलापूजनार्थं तु तडागं सा ह्यमार्गयत्। तदा दृष्टं तया नैव तडागं विधिसाधनम्। बभ्राम सा वने शून्ये स्मरन्ती शीतलाव्रतम्। अतिश्रान्ता पपातोच्चै रुरोद करुणं बहु। स्मरन्ती शीतलां वृद्धां भक्तानामभयंकरीम्। एतस्मिन्नेव काले तु नारीरूपं ददर्श सा। सा नारी तामथापृच्छत्किं त्वं रोदिषि सुस्वरम्। वृद्धाया वचनं श्रुत्वा ब्राह्मणी वाक्यमब्रवीत्। भर्तारं रथसंयुक्तं मार्गे संस्थाप्य शोभने। तडागं द्रष्टुमायाता शीतलापूजनाय वै। मया न दृष्टः कासारो भर्तृदुःखमतीव मे। इति बालावचः श्रुत्वा वृद्धा तां प्रत्युवाच ह। भविष्यति चिरंजीवी भर्ता ते मृगलोचने। आगच्छ पूजनार्थाय दर्शयामि सरोवरम्। तया सह गता साध्वी तडागं विधिपूर्वकम्। पूजयामास शर्वाणीं तोषयामास शीतलाम्। पूजयित्वा च तां देवीं पन्थानं गन्तुमुद्यता। शीतलायां वरं गृह्य सह सख्या च प्रस्थिता। चिन्तयाऽभिपरीताङ्गी मद्भर्ता किं नु वक्ष्यति। सरोवरे समायातोन्वेषयञ्छान्तविग्रहः। ब्राह्मणो निद्रया सुप्तः पूर्वकर्मप्रभावतः। दष्टो भुजंगरूपेण स ह्युक्तः पूर्वकर्मणा। सा च हतं पतिं दृष्ट्वा शीतलायाः पतिव्रता। वरं संस्मृत्य शालायां रुरोद करुणं बहु। तयोस्तरुणदम्पत्योर्योगसौभाग्यदर्शनात्। वनदेव्यश्च ऋषयो रुरुदुर्दुःखकर्षिताः। शपंती करुणं बाला शोचयामास तद्व्रतम्। यावन्न परलोकस्थं जनं संमत्य तत्कृतम्। कुशलाकुशलं पश्ये तावन्मे नास्ति निर्वृतिः। वह्निना साधयिष्यामि आत्मानं पतिना सह। अर्चयिष्ये तथा दिव्यमक्षयं सुखमुत्त-

मम् । इति तस्या व्यवसितं ज्ञात्वा देवी ह्युपस्थिता । ' शीतलोवाच–' वत्से किमिदमित्युक्तं न श्रुतं वरवर्णिनि । शीतलाव्रतचारिण्या वैधव्यं नैव जायते । स्वयमुत्थाय कल्याणि पतिं सुप्तं गृहे यथा । बोधयाशु त्वया चीर्णं व्रतं वैधव्यनाशनम् । इत्युक्ता बोधयामास भर्तारं सा पतिव्रता । भर्तापि मुदितो दृष्ट्वा स्वां प्रियां प्रीतिकर्मणा । दृष्ट्वा तु महदाश्चर्यं तद्वनस्थायिनो जनाः । सर्वे ते विस्मयं जग्मुर्ब्राह्मणीपतिरक्षणात् । ब्राह्मणी हर्षिता वृद्धां प्रणिपत्य पतिव्रता । याचे मातर्न भूयो नो वैधव्यं च वियोगिता । अन्यापि शीतलायास्तु व्रतं नारी करिष्यति । अवैधव्यमदारिद्र्यमवियोगं सभर्तृका । इत्युक्त्वान्तर्दधे देवी शीतला कामरूपिणी । शीतलाया वरं लब्ध्वा जगामात्मीयवेश्मनि । पद्मानिवासप्रभुविश्ववन्द्यसमर्हणासाधितसर्वमङ्गला । प्रसादमासाद्य च शीतलाया नित्योत्सवा पार्वतिवद्बभूव ।' इति हेमाद्रौ भविष्ये शीतलाव्रतम् ।

अथ स्तोत्रम् ।'नमामि शीतलां देवीं रासभस्थां दिगम्बराम् । मार्जनीकलशोपेतां शूर्पालंकृतमस्तकाम् । ' स्कन्द उवाच–'भगवन्देवदेवेश शीतलायाः स्तवं शुभम् । श्रोतुमिच्छामि देवेश विस्फोटकभयापहम् ।' ईश्वर उवाच–'वन्देऽहं शीतलां देवीं सर्वरोगभयापहाम् । यामासाद्य निवर्तेत विस्फोटकभयं महत् । शीतले ज्वरदग्धस्य पूतिगन्धवहस्य च । प्रणष्टचक्षुषः पुंसस्त्वामाहुर्जीवनौषधम् । शीतले शीतले चेति यो ब्रूयाद्दाहपीडितः । विस्फोटकभवो दाहः शीघ्रं तस्य प्रणश्यति । यस्त्वामुदकमध्ये तु ध्यात्वा पूजयते नरः । विस्फोटकभयं घोरं कुले तस्य न जायते । शीतले तनुजान्रोगान्नृणां हरसि दुस्त्यजान् । विस्फोटकविशीर्णानां त्वमेकाऽमृतवर्षिणी । गलगण्डग्रहा रोगा ये चान्ये दारुणा नृणाम् । त्वदनुध्यानमात्रेण शीतले यान्ति संक्षयम् । न मन्त्रो नौषधं किंचिद्ये चान्ये दारुणा नृणाम् । न मन्त्रो नौषधं किंचित्पापरोगस्य विद्यते । त्वमेका शीतले धात्री नान्यां पश्यामि देवताम् । मृणालतन्तुसदृशीं नाभिहृन्मध्यसंस्थिताम् । यस्त्वां संचिन्तयेद्देवि तस्य मृत्युर्न जायते । श्रोतव्यं पठितव्यं च श्रद्धाभक्तिसमन्वितैः । उपसर्गविनाशाय परं स्वस्त्ययनं महत् । शीतलाष्टकमेवेदं न देयं यस्य कस्यचित् । दातव्यं च तदा तस्मै भक्तिश्रद्धान्वितो हि यः ।' इति स्कन्दपुराणोक्तं शीतलास्तोत्रं संपूर्णम् ।

अथ भाद्रपदकृष्णसप्तम्यां वाराहपुराणोक्तं पुत्रव्रतम् । तत्र विष्णुं संपूज्य

गोपालमन्त्रेण सघृतैः कृष्णतिलैरष्टम्यां होमं कृत्वा ब्राह्मणान्संभोज्य बिल्वफलप्राश-नपूर्वकं स्वयमपि षड्रसं भुञ्जीत। वत्सरान्ते गोयुग्मं दद्यादिति **पुत्रसप्तमीव्रतम्।**

अथ भाद्रपदशुक्लसप्तम्यां भविष्यत्पुराणोक्तं **फलसप्तमीव्रतम्।** तत्र दिवा-करं फलैः संपूज्य स्वयमपि तान्यवहरेत्। तदुक्तं हेमाद्रौ—'मासि मासि फलाहारः फलदायी फलार्चनः।' इत्यादि। इति **फलसप्तमीव्रतम्।**

अस्यामेव सप्तम्यां **मुक्ताभरणव्रतम्।** तत्र सप्तमी पूर्वविद्धा ग्राह्या षण्मुन्यो-रिति युग्मवाक्यात्। अथ व्रतकृत्यं हेमाद्रौ भविष्योत्तरे—भूमौ लिखितप्रतिमायाम् 'एह्येहि भगवन्देव सर्वपापप्रणाशन। तव पूजां करिष्यामि संनिधौ भव शंकर।' इति भवानीशंकरावावाह्य षोडशोपचारैः संपूज्य। 'नमस्ते भूतनाथाय नमस्ते शशिशेखर। नमस्ते दक्षयज्ञघ्न नमस्ते कामनाशन। नमस्ते पार्वतीदेव्यै चण्डिकायै नमो नमः। वर-दायै नमस्तेऽस्तु भद्रकाल्यै नमो नमः।' इति संप्रार्थ्य शर्कराघृतमिश्रतण्डुलपिष्टमुपहारं निवेद्य एकादशतन्तुयुतसूत्रमेकादशग्रन्थिविशिष्टं वामहस्ते बद्ध्वा कथां शृणुयात्।

अथ कथा। श्रीकृष्ण उवाच—'मुनीन्द्रो लोमशो नाम मथुरायां गतः पुरा। सोऽ-र्चितो वसुदेवेन देवक्या च युधिष्ठिर। उपविष्टः कथाः काश्चित्कथयित्वा मनोरमाः। ततः कथयितुं भूयः कथामेतां प्रचक्रमे। कंसेन निहताः पुत्रि पुत्रा जाताः पुनःपुनः। मृतवत्सा देवकि त्वं पुत्रदुःखेन दुःखिता। यथा चन्द्रमुखी दीना बभूव नहुषप्रिया। पश्चाच्चीर्णव्रता सैव बभूवामृतवत्सका। त्वमेव देवकि तथा भविष्यसि न संशयः।' देवक्युवाच—'का सा चन्द्रमुखी ब्रह्मन्बभूव नहुषप्रिया। किं च चीर्णं व्रतं पुण्यं तया संतानवर्धनम्। सपत्नीदर्पदलनं सौभाग्यारोग्यदं विभो।' लोमश उवाच—'अयोध्यायां पुरा राजा नहुषो नाम नामतः। तस्यासीद्रूपसंपन्ना देवी चन्द्रमुखी प्रिया। तथा तत्रैव नगरे विष्णुगुप्तोऽभवद्द्विजः। आसीद्भद्रमुखी तस्य पत्नी गुणवती तथा। तयोरासी-द्दृढा प्रीतिः स्पृहणीया परस्परम्। अथ ते द्वेऽपि सख्यौ वै स्नानार्थं सरयूतटे। प्राप्ते प्राप्ताश्च तत्रैव बाह्यारण्ये नगराङ्गनाः। ताः स्नात्वा मण्डलं चक्रुस्तन्मध्ये व्यक्तरू-पिणम्। लेखयित्वा शिवं शान्तमुमया सह शंकरम्। गन्धपुष्पाक्षतैर्भक्त्या पूजयित्वा यथाविधि। प्रणम्य गन्तुकामास्ताः पप्रच्छतुर्वरास्त्रियः। ता ऊचुः शंकरो-ऽस्माभिः पार्वत्या सह पूजितः। वर्ध्रसूत्रमयं तन्तुं शिवस्यात्मा निवेदितः। धारणी-यमिदं तावद्यावत्प्राणविधारणम्। तासां तद्वचनं श्रुत्वा सख्यौ ते चापि देवकि। कृत्वा चासमयं तत्र बद्ध्वा दोर्भ्यां तु दोरकम्। ततस्ताः स्वगृहे जग्मुः स्वसखीभिः समा-

वृताः । कालेन महता जातस्तस्यास्तत्तद्व्रतं शुभम् । चन्द्रमुख्याः प्रमत्ताया विस्मृतः स च दोरकः । भद्रमुख्यास्तथा भद्रे विस्मृतं सर्वमेव तत् । गतैः कैश्चिदहोरात्रैः सा बभूव प्लवंगमी । भद्रास्या कुक्कुटी जाता व्रतभङ्गाच्छुभानने । कालेन पञ्चतां प्राप्ते सखीभावात्सहैव ते । अदेवमातृके देशे जाते गोकुलसंकुले । ब्राह्मणी ब्राह्मणी जाता क्षत्रियाणी च क्षत्रिया । राज्ञो जाया बभूवाथ पृथ्वीनाथस्य वल्लभा । ईश्वरी नाम विख्याता यासीचन्द्रमुखी पुरा । नाम्ना भद्रमुखी या स्याद्भूषणा नाम साभवत् । अग्निमीलाय सा दत्ता पित्रा तस्याः पुरोधसे । अतीव वल्लभा चासीद्भूषणा भूषणप्रिया । भूषिता भूषणवरै रूपेणालंकृता स्वयम् । तस्या बभूव अष्टौ च पुत्राः सर्वगुणान्विताः । मातृवद्रूपसंपन्नाः पितृवद्धर्मशालिनः । सख्यौ ते चैव तद्वच्च जाते जातिस्मरे किल । पुनर्निरन्तरा प्रीतिस्तयोरासीद्यथा पुरा । काले बहुतिथे जाते त्यक्ता सा त्यक्तवल्लभा । मध्ये वयसि सा राज्ञी पुत्रमेक-मजीजनत् । ईश्वरी रोगिणं मूकं प्रज्ञाहीनं च विस्वरम् । तादृशोऽपि महाभागे मृतोऽसौ नववार्षिकः । ततस्तां भूषणा द्रष्टुमीश्वरीं पुत्रदुःखिताम् । सखीभावादतिस्ने-हात्पुत्रैश्च परिवारिता । आमुक्ताभरणा भद्रा स्वरूपेणैव भूषिता । तां दृष्ट्वा तादृशीं भव्यां प्रजज्वालेश्वरी रुषा । ततो गृहं प्रेषयित्वा ब्राह्मणीं तां समत्सरा । चिन्तयामास सा राज्ञी तस्याः पुत्रवधं प्रति । निश्चित्य चेतसा क्रूरा घातयामास तत्सुतान् । हता हताश्च तत्पुत्राः पुनर्जीवन्त्यनामयाः । तदद्भुततरं दृष्ट्वा सतीमाहूय भूषणाम् । उपवेश्यासने श्रेष्ठे बहुमानपुरःसरम् । अपृच्छद्विनयापृष्टा राज्ञी सा नृपवल्लभा । ब्रूहि तथ्यं महाभागे किं त्वया सुकृतं कृतम् । दानव्रतं ततो वापि शुश्रूषणमुपोषितम् । येन ते निहताः पुत्राः पुनर्जीवन्त्यनामयाः । तथा हि बहुपुत्रा च जीवयेत्सा शुभानने । आमुक्ताभरणा नित्यं भर्तुश्चित्ते व्यवस्थिता । अतीव शोभसे भद्रे विद्युद्धर्मात्यये यथा ।' भूषणोवाच—'श्रृणु देवि प्रवक्ष्यामि जन्मान्तरविचेष्टितम् । किं तद्धि विस्मृतं सर्वमयोध्यायां कृतं च यत् । आवाभ्यां व्रतवैकल्यं प्रमत्ताभ्यां वरानने । येन त्वं प्लवगी जाता जाताऽहं कुक्कुटी तथा । तथापि व्रतवैकल्यं त्वया चाप्यल्पतः कृतम् । सर्वा तु सर्वभावेन चेतसा ध्याय शंकरम् । तिर्यग्योन्या तु तापेन मनो-वृत्त्यानुनुष्ठितम् । यत्तदादौ व्रतं सर्वं त्वया सह मया कृतम् । तन्मयाचरितं भक्त्या तेनाहं सुचिरं सुखा । त्वया नाचरितं सम्यग्भयोद्विग्नशरीरया । तेन वः संतति-श्छिन्ना राज्येपि सति दुःखिनी । इदानीमपि तद्भक्त्या कुरु श्रेयो भविष्यति । एतद्धि

कारणं भद्रे नान्यत्किंचित्करोम्यहम् ।' लोमश उवाच-'इत्याकर्ण्य च संस्मृत्य पूर्वज-न्मविचेष्टितम् । ईश्वरी च तया सार्धं पुनः सम्यक्चकार ह । व्रतस्यास्य प्रभावेण पुत्र-पौत्रादिसंभवम् । भुक्त्वा च सौख्यमतुलं मृता शिवपुरं गता । एष प्रभावः कथितो व्रतस्या-स्य मया तव । तस्मात्त्वमपि कल्याणि व्रतमेतत्समाचर । आरब्धेऽस्मिन्व्रते दिव्ये जीवत्पुत्रा भविष्यसि ।' देवक्युवाच—'ब्रह्मन्नाख्याहि मे सम्यग्व्रतमेतत्सुखप्रदम् । संतानवृद्धि-करणं शिवलोकस्थितिप्रदम् ।' लोमश उवाच—'भद्रे भाद्रपदे मासि सप्तम्यां सलिला-शये । स्नात्वा शिवं मण्डलके लेखयित्वा तथा शिवाम् । भक्त्या संपूज्य समयं कुर्याद्बद्ध्वा करे गुणम् । सौवर्णं राजतं वापि सौत्रं वा धारयेत्करे । मण्डकान्वेष्टिका-न्दद्यादस्वपक्षेऽथ वा द्विजे । स्वयं ताश्च न भोक्तव्या व्रतभङ्गभयाच्छुभे । पारिते मुद्रिकां चैव हैमीं रौप्यां स्वशक्तितः । ताम्रपात्रे तु संस्थाप्य ब्राह्मणेभ्यो निवेदयेत् । आचार्याय विशेषेण दातव्यं चाङ्गुलीयकम् । पुष्पकुङ्कुमसिन्दूरताम्बूलजनसूत्रकैः । एवं तत्पारयित्वा तु व्रतं संततिवर्धनम् । सर्वपापविनिर्मुक्ता भुक्त्वा सौख्यं मनोरमम् संतानं वर्धयित्वा तु शिवलोके महीयते । तस्मात्पार्थ नरैः कार्यं स्त्रीभिः कार्यं विशे-षतः । व्रतं पापहरं भक्त्या सुखसंततिदं सदा । इदं यः शृणुयाद्भक्त्या यश्चापि प्रति-पादयेत् । व्रतमाख्यानसहितं सोऽपि पापैः प्रमुच्यते । साख्यानकं व्रतमिदं सुख-सौख्यकामा या स्त्री चरिष्यति शिवं हृदये निधाय । विस्मृत्य दुःखमतुलं गतकल्म-षौघा सा स्त्री व्रताद्भवति शोभनजीववत्सा ।' इति । इत्यामुक्ताभरणं व्रतम् ।

अस्यामेव फलसप्तमीव्रतं हेमाद्रौ—'अथ भाद्रपदे मासि सितपक्षे महीपते ।' इत्यादि । अत्र खखोल्कं संपूज्य प्रातरष्टम्यां फलैर्द्विजं संतर्प्य तैरेव पारणं कुर्या-दिति फलसप्तमीव्रतम् ।

अस्यामेवानन्तफलसप्तमीव्रतं हेमाद्रौ—'शुक्लपक्षे तु सप्तम्या मासि भाद्रपदेऽ-च्युत ।' इत्यादि । तत्र सूर्यं संपूज्य नक्तं भुञ्जीत एवं संवत्सरं कुर्यादिति । इत्यनन्त-फलसप्तमीव्रतम् ।

अथाश्विनशुक्लसप्तमी । अस्यां मूलयुक्तायां केवलायां वा पूर्वनिमन्त्रितां फलद्वय-युक्तां शाखामानीय तया सह पञ्चम्यां स्थापितां देवीं पूजयेदित्युक्तं प्राक् इयं सप्तमी देव-पूजायां सूर्योदययुक्ता परा ग्राह्या । युगाद्या वर्षवृद्धिश्चेति प्रतापमार्तण्डभविष्योक्तेः । वर्षवृद्धिर्जन्मतिथिः । सप्तमीकृत्यविशेषस्तु नवरात्रप्रकरणे द्रष्टव्यः । अत्रैव मूलनक्षत्रे पुस्तकस्थापनमुक्तं रुद्रयामले—'मूले ऋक्षे सुराधीश पूजनीया सर-

स्वती । पूजयेत्प्रत्यहं देवं यावद्वैष्णवमृक्षकम् । नाध्यापयेन्न तु लिखेन्नाधीयीत कदाचन । पुस्तके स्थापिते देवि विद्याकामो द्विजोत्तम ।' अथ पूजोपयुक्तं सरस्वतीध्यानं वीरमित्रोदये—'देवी सरस्वती कार्या सर्वाभरणभूषिता । चतुर्भुजा सा कर्तव्या तथैव च समुच्छ्रिता । पुस्तकं चाक्षमाला च तस्या दक्षिणहस्तयोः । वामयोश्च तथा कार्या वैणवी[1] च कमण्डलुः । समपादप्रतिष्ठा च कार्या सौम्यमुखी तथा ।' इति ।

अस्यामेव सप्तम्यां शुभसप्तमीव्रतं हेमाद्रौ पाद्मे—'शुक्लामाश्वयुजे मासि कृतस्नानजपः शुचिः । वाचयित्वा ततो विप्रानारभेच्छुभसप्तमीम् ।' तत्र कपिलां गन्धादिभिः संपूज्य प्रार्थयेत् । 'नमामि सूर्यसंभूतामशेषभुवनालयाम् । त्वामहं सर्वकल्याणशरीरां सर्वसिद्धये ।' इति । ताम्रपात्रे वस्त्रावेष्टितं सौवर्णं वृषभं तिलस्योपरि संस्थाप्य घृतपायसादियुतम् 'अर्यमा प्रीयताम्' इत्युक्त्वा ब्राह्मणाय दद्यात् स्वयं पञ्चगव्यं प्राशयेत् द्वितीयेऽह्नि ब्राह्मणान्संभोज्य स्वयमपि भुञ्जीत । एवं सप्तवर्षपर्यन्तं कृत्वा तदन्ते इक्षुदण्डान्वितं शयनादि दद्यात् । इति शुभसप्तमीव्रतम् ।

कार्तिकशुक्लसप्तमीमारभ्य संवत्सरसाध्यं शाकसप्तमीव्रतम् । अत्र शाकदानं कृत्वा रात्रौ शाकभोजनं कुर्यादिति ।

मार्गशीर्षशुक्लसप्तमी त्रितयसप्तमी । सत्कुलजन्मारोग्यधनत्रितयप्रापकत्वात् । तत्कृत्यं हेमाद्रौ—'यो मार्गशीर्षे सितसप्तमीदिने हस्तर्क्षयोगे जगतः प्रसूतिम् । संपूज्य भानुं विधिनोपवासी स्रग्गन्धधूपान्नवरोपहारैः ।' इति । एवं संवत्सरं संपूज्य तदन्ते घृतसुवर्णादिकं देयमिति ।

इयमेव सप्तमी मित्रसप्तमी । तस्यां मित्रनामकसूर्यपूजोक्ता निर्णयामृते—तत्र पूर्वदिने उपोष्य कृतवपनः स्नात्वा रविं सर्वोपचारैः संपूज्य ब्राह्मणान् भोजयेत् । ततः स्वयं मधुप्लुतं मिष्टान्नं भुञ्जीत । तदुक्तं ब्रह्मपुराणे—'यद्विष्णोर्दक्षिणं नेत्रं तदेवाकृतिमत्पुनः । अदितेः कश्यपाज्जज्ञे मित्रो नाम दिवाकरः । सप्तम्यां तेन सा ख्याता लोकेऽस्मिन्मित्रसप्तमी । षष्ठ्यां च स्नपनं कार्यं तस्मै मित्राय भानवे । तत्रोपवासः कर्तव्यो भक्ष्याण्यथ फलानि वा । रात्रौ जागरणं कार्यं गीतनृत्यपुरस्कृतम् । सप्तम्यां वपनं कार्यं स्नातः संपूजयेद्रविम् । नानाकुसुमसंभारैर्भक्ष्यैः पिष्टमयैः शुभैः । मधुना च प्रभूतेन होमो जाप्यं समाधिना । ब्राह्मणान्भोजयेत्पश्चाद्दीनानाथांश्च मानवान् । अष्टम्यां संविभोज्याश्च तथा च नटनर्तकाः । दिनद्वये च भोक्तव्यमिष्टमन्नं मधुप्लुतम् ।'

---

१ वैणवी वीणा ।

इति । दिनद्वये सप्तम्यामष्टम्यां च । अथ मित्रध्यानं वीरमित्रोदये—'शूलं वामकरे यस्या दक्षिणे सोम एव च । मित्रानामा त्रिनयना कुशेशयविभूषिता ।' इति । इयमेव नन्दासप्तमी । अत्रापि सूर्यपूजादि पूर्ववत्कार्यम् ।

अथ विष्णुसप्तमीव्रतम् । 'मार्गशीर्षस्य मासस्य शुक्लपक्षे नराधिप । सोपवासस्तु सप्तम्याम् ।' इत्यादि । ततः कमले रविं रक्तचन्दनरक्तपुष्पैर्वटकैः पूरणेन च पूजयेदिति । इति मार्गशीर्षसप्तमी ।

अथ पौषशुक्लमारभ्य संवत्सरसाध्यमुभयसप्तमीव्रतम् । तत्र सप्तम्यामुपोषणं कृत्वा त्रिसंध्यं सूर्यमभ्यर्च्य रात्रावधः शयनं कृत्वा पूर्णे मासि सप्तम्यां घृतादिभिर्भानुं संपूज्य क्षारासिद्धं मोदकप्रस्थं निवेद्य द्विजान्भोजयित्वा कपिलां दद्यात् । एवं कृते सर्वकामावाप्तिर्भवतीति । इत्युभयसप्तमीव्रतम् ।

अस्यामेव सप्तम्यां मार्तण्डसप्तमीव्रतम् । प्रतिमासं मार्तण्डं संपूज्य गवाह्निकं दद्यादिति । इति पौषशुक्लसप्तमी ।

अथ माघकृष्णसप्तम्यां सर्वाप्तिसप्तमीव्रतम् । तदुक्तं हेमाद्रौ भविष्ये—'कृष्णपक्षे तु माघस्य सर्वाप्तिसप्तमीं शृणु । यामुपोष्य समाप्नोति सर्वान्कामान्मनःस्थितान्' इत्यादि । इति सर्वाप्तिसप्तमीव्रतम् ।

माघशुक्लसप्तमी अचला सप्तमी सा जयन्तीत्युक्तं भविष्योत्तरे—'माघस्य शुक्लपक्षे तु सप्तमी या त्रिलोचन । जयन्ती नाम सा प्रोक्ता सर्वपापहरा तिथिः ।' इति ।

इयमेव रथसप्तमी । 'यस्यां मन्वन्तरस्यादौ रथमाप दिवाकरः । जयन्ती नाम सा प्रोक्ता माघमासस्य सप्तमी । सा तस्माद्रथसप्तमी' इति मत्स्यपुराणात् । सा स्नानादावरुणोदयव्यापिनी ग्राह्या । 'सूर्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी । अरुणोदयवेलायां तस्यां स्नानं महाफलम् ।' इति विष्णूक्तेः । दिनद्वये अरुणोदये चेत्पूर्वैव षण्मुन्योरिति युग्मवाक्यादिति भट्टोजिदीक्षिताः । यत्तु तिथ्यर्के—अयं च स्नानकालोऽरुणोदये माघे स्नान्ति तान्प्रत्येव, अन्यान्प्रति श्रीसूर्योदयः । 'माघमासस्य सप्तम्यामुदयत्येव भास्करे । विधिवत्तत्र च स्नानं महापातकनाशनम् ।' इत्यपरार्के विष्णूक्तेरित्युक्तं तन्मृग्यम् । मदनरत्नादिसर्वप्राचीननवीनग्रन्थेष्वेतद्वचनस्यानुपलम्भात् तद्ग्रन्थविरोधाच्च । माघस्नानकालः सूर्योदय एव । समुद्गच्छति भास्करे इति 'माघमासे रटन्त्यापः

किंचिदभ्युदिते रवौ।' इति। 'यो माघमास्युषसि सूर्यकराभितप्ते स्नानं समाचरती' त्यादि-नारदीयपाद्मभविष्योत्तरवचनडिण्डिमस्य जागरूकत्वात्। तस्मान्माघस्नानं सूर्यो-दये कर्तव्यम्। अचलासप्तमीस्नानं त्वरुणोदये इति सिद्धान्तः। यत्तु दिवोदासीये— 'अचलासप्तमी दुर्गाशिवरात्रिर्महाल्तरः। द्वादशीवत्सपूजायां सुखदा प्राग्युता सदा।' इति षष्ठीयुक्तत्वमुक्तं तद्यदा पूर्वेऽह्नि घटिकाद्वयं षष्ठी सप्तमी च परेद्युः क्षयवशादरुणो-दयात्पूर्वमेव समाप्यते तत्परंज्ञेयम्। तत्र षष्ठ्या सप्तमीक्षयं प्रवेश्यारुणोदये स्नानंकार्य-म्।इयं च प्रयागेप्रशस्ता। 'अरुणोदयवेलायां शुक्लामाघस्यसप्तमी। प्रयागे यदि लभ्येत कोटिसूर्यग्रहैः समा।' इति वचनात्। तथा-'माघे मासि सिते पक्षे सप्तमी कोटिभा-स्करा। कुर्यात्स्नानार्घ्यदानाभ्यामायुरारोग्यसंपदः।' इति। इदं च स्नानं तिथ्यादि संकीर्त्य सप्तार्कपत्राणि सप्त बदरीपत्राणि सुवर्णादिपात्रस्थतिलतैलकुसुम्भवर्तिप्रज्वा-लितदीपं च शिरसि निधायेक्षुदण्डेन जलं चालयित्वा भास्करं हृदये ध्यात्वा 'नमस्ते रुद्ररूपाय रसानां पतये नमः। वरुणाय नमस्तेऽस्तु हरिवास नमोस्तु ते' इति श्लोकं पठित्वा दीपं प्रवाहे विसृज्य शुक्लतिलैरङ्गोद्वर्तनं कर्तव्यम्। दिवोदासीये मदनरत्ने तु इक्षुदण्डेन जलं चालयित्वा सप्तार्कपत्राणि शिरसि निधाय वक्ष्यमाणैर्मन्त्रैः स्नात्वा तिल-पिष्टमयापूपैर्हैमं सूर्यं संपूज्य विप्राय दद्यादित्युक्तम्।स्नानमन्त्रश्च काशीखण्डे-'यद्यज्ज-न्मकृतं पापं मया सप्तसु जन्मसु। तन्मे रोगं च शोकं च भाकरी हन्तु सप्तमी। एत-ज्जन्मकृतं पापं यच्च जन्मान्तरार्जितम्। मनोवाक्कायजं यच्च ज्ञाताज्ञाते च ये पुनः। इति सप्तविधं पापं स्नानान्ते सप्तसप्तिके। सप्तव्याधिसमाकीर्णं हर भास्करि सप्तमि। एतन्मन्त्रत्रयं जप्त्वा स्नात्वा पादोदके नरः। केशवादित्यमालोक्य क्षणान्निष्कलुषो भवेत्।' ततोऽर्घ्यं दद्यात्। स चोक्तः सौरागमे—'अर्कपत्रैः सबदरैर्दूर्वाक्षतसचन्दनैः। अष्टाङ्गविधिना चार्घ्यं दद्यादादित्यतुष्टये।' अर्घ्यदानमन्त्रो मदनरत्ने—'सप्तसप्तिवह-प्रीत सप्तलोकप्रदीपन। सप्तम्यासहितो देव गृहाणार्घ्यं दिवाकर।' इति। ततः सप्तमी-प्रार्थना। 'जननी सर्वलोकानां सप्तमी सप्तसप्तिके। सप्तव्याहृतिके देवि नमस्ते सूर्यम-ण्डले।' इति। अत्रोपयुक्तसप्तमीध्यानं तु पूर्वमेवोक्तम्। ततो नित्यविधिं निर्वर्त्य चन्दनेनाष्टपत्रं कमलं विलिख्य तत्कर्णिकायां प्रणवसहितं सपत्नीकं शिवं संपूज्य पूर्वा-दिदलेषु रविं भानुं वैवस्वतं भास्करं सहस्रकिरणं सर्वात्मानं च क्रमेण प्रणवादिनमो-न्तनामभिर्वस्त्रादिभिः संपूज्य स्वस्थानं गम्यतामिति विसृजेत्। ततस्ताम्रादिपात्रे काञ्चनं कर्णाभरणम्। घृतगुडतिलपिष्टसहितमशक्तस्तिलपिष्टजं संस्थाप्य रक्तवस्त्रे-णाच्छाद्य पुष्पादिभिः संपूज्य ब्राह्मणैः स्वस्तिवाचनं कारयित्वा ब्राह्मणाय दद्यात्

तत्र मन्त्रः । 'आदित्यस्य प्रसादेन प्रातःस्नानफलेन च । दुष्टदौर्भाग्यदुःखघ्नं मया दत्तं तु तालकम् ।' इति । ततो गुरुं संपूज्य सूर्यं ध्यायन् विप्रान् संभोज्य नक्तं स्वयं भुञ्जीत । इति तालकदानविधिः । ससारथिं रथं वर्णकैर्विलिख्य तत्र यथाशक्त्या सुवर्णघटितं भानुं संपूज्य दद्यात् । इति रथदानविधिः । अन्यो विशेष इतिहासे द्रष्टव्यः । इत्यचलासप्तमीकृत्यम् । इयं मन्वादिः । शुक्लपक्षस्थत्वात्पौर्वाह्णिकी ग्राह्या । माघस्य मलमासत्वे मन्वादिश्राद्धमुभयत्रापि कार्यम् । मन्वादिकमिति पूर्वोक्तवचनात् । अस्य काशीखण्डे विशेष उक्तः । 'लोलार्के रथसप्तम्यां स्नात्वा गङ्गासिसंगमे । सप्तजन्मकृतैः पापैर्मुक्तो भवति तत्क्षणात् ।' इति । पद्मकयोगश्चात्र सति संभवे ज्ञेयः । स च षष्ठीप्रकरणेऽभिहितः ।

अथ भविष्यत्पुराणोक्ता अचलासप्तमीव्रतकथा । युधिष्ठिर उवाच । कथं स्त्रियः सुरूपाः स्युः सुभगाः सुप्रजास्तथा । पुण्यस्य महतश्चात्र सर्वमेतत्फलं यतः । अल्पायासेन सुमहद्येन पुण्यमवाप्यते । स्त्रीभिर्माघे मम ब्रूहि स्नानमेकं जगद्गुरो ।' श्रीकृष्ण उवाच—'श्रूयतां भरतश्रेष्ठ रहस्यं मुनिभाषितम् । यन्मया कस्यचिन्नोक्तमचलासप्तमीव्रतम् । वेश्या चेन्दुमती नाम रूपौदार्यगुणान्विता । आसीत्कुरुकुलश्रेष्ठ सगरस्य विलासिनी । सा वसिष्ठाश्रमं पुण्यं जगाम गजगामिनी । वसिष्ठमृषिमासीनं प्रणम्यानतकंधरा । कृताञ्जलिपुटा भूत्वा प्राहेदं जगतो हितम् । मया न दत्तं तद्रत्नं नोपवासव्रतं कृतम् । भक्त्या संपूजितः शंभुः स्वामिञ्छार्ङ्गधरोऽपि च । सांप्रतं तप्यमानाया व्रतं किंचिद्दिशस्व मे । येन दुःखाम्बुपङ्कौघादुत्तरामि भवार्णवम् । एतत्तस्याः सुबहुशः श्रुत्वाऽतिकरुणं वचः । कारुण्यात्कथयामास वसिष्ठो मुनिसत्तमः । माघस्य सितसप्तम्यां सर्वकामफलप्रदम् । रूपसौभाग्यजननं स्नानं कुरु वरानने । कृत्वा षष्ठ्यामेकभक्तं सप्तम्यां निश्चलं जलम् । रात्र्यन्ते चालयेथास्त्वं दत्त्वा शिरसि दीपकम् । माघस्य सितसप्तम्यामचलं चालितं च यत् । जलं मलानां सर्वेषां स्मृतं प्रक्षालनं ततः । वसिष्ठवचनं श्रुत्वा तस्मिन्नहनि भारत । चकारेन्दुमती स्नानं दानं सम्यग्यथाविधि । स्नानस्यास्य प्रभावेण भुक्त्वा भोगान्यथेप्सितान् । इन्द्रलोकेऽप्सरःसंघनायकत्वमवाप सा । अचलासप्तमीस्नानं कथितं ते विशांपते । सर्वपापप्रशमनं सुखसौभाग्यवर्धनम् ।' युधिष्ठिर उवाच—'सप्तमीस्नानमाहात्म्यं श्रुतं नर· विशेषतः । सांप्रतं श्रोतुमिच्छामि विधिमन्त्रसमन्वितम् ।' श्रीकृष्ण

उवाच--'एकभक्तेन संतिष्ठेत्षष्ठ्यां संपूज्य भास्करम् । सप्तम्यां तु व्रती प्रातःसुगम्भीरं जलाशयम् । सरित्सरं तडागं वा देवखातमथापि वा । सुखावगाहं सत्त्वेष्टं दुष्टसत्त्वैरदूषितम् । व्यालाम्बुपक्षिभिश्चैव जलगैर्मत्स्यकच्छपैः । न केन चाल्यते यावत्तावत्स्नानं समाचरेत् । सौवर्णे राजते पात्रे भक्त्यालाबुमये तथा । तैलवर्तिस्तु दातव्या महारञ्जनरञ्जिता । समाहितमना भूत्वा दत्त्वा शिरसि दीपकम् । भास्करं हृदये ध्यात्वा इमं मन्त्रमुदीरयेत् । नमो रुद्राय रूपाय रसानां पतये नमः । वरुणाय नमस्तेऽस्तु हरिवास नमोऽस्तु ते । जलोपरि तरेद्दीपं स्नात्वा संतर्प्य देवताः । चन्दनेन लिखेत्पद्ममष्टपत्रं सकर्णिकम् । मध्ये शिवं सपत्नीकं प्रणवेन च संयुतम् । शाक्रे दले रविः पूज्यो भानुश्चैवानले तथा । याम्ये विवस्वान्नैर्ऋत्ये भास्करं पूजयेद्बुधः । पश्चिमे सविता पूज्यः पूज्योऽर्कश्चानिले दले । सौम्ये सहस्रकिरणः शैवे सर्वात्मने नमः । पूज्याः प्रणवपूर्वास्तु नमस्कारान्तयोजिताः । पुष्पैः सुगन्धिधूपैश्च पृथक्त्वेन युधिष्ठिर । विसर्ज्य वस्त्रसंवीतं स्वस्थानं गम्यतामिति । विसर्जिते सहस्रांशौ समागम्य स्वमालयम् । ताम्रपात्रे यथाशक्त्या मृन्मये वाथ भक्तिमान् । स्थापयेत्तिलपिष्टं च सघृतं सगुडं तथा । काञ्चनं तालकं कृत्वा अशक्तस्तिलपिष्टजम् । संछाद्य रक्तवस्त्रेण पुष्पैर्धूपैरथार्चयेत् । ततस्तां वाचयेद्विप्रैर्दद्यान्मन्त्रेण तालकम् । आदित्यस्य प्रसादेन प्रातःस्नानफलेन च । दुष्टदौर्भाग्यदुःखघ्नं मया दत्तं तु तालकम् ।' तालकं तालपत्रं कर्णाभरणविशेषः । दीपपात्रमिति हेमाद्रिः । 'पूजयित्वोपदेष्टारं विप्रानन्यांश्च पूजयेत् । ततो दिनं समग्रं च भास्करध्यानतत्परः । ता एवं च कथाः शृण्वन्नन्या वा धर्मसंहिताः । पाखण्डादिभिरालापं दर्शनस्पर्शनादिकम् । वर्ज्यश्च प्रेषयेत्प्राज्ञस्ततो बन्धुजनैः सह । नक्तं भुञ्जीत च नरो दीनान्संभोज्य शक्तितः । एतत्ते कथितं पार्थ रूपसौभाग्यकारकम् । अचलासप्तमीस्नानं सर्वकामफलप्रदम् । इति पठति य इत्थं यः शृणोति प्रसङ्गात्कलिकलुषविनाशं सप्तमीस्नानमेतत् । मतिमपि च जनानां यो ददाति प्रयत्नात्सुरभवनगतोऽसौ सेव्यते चाप्सरोभिः ।' इत्यचलासप्तमीव्रतकथा ।

अथ भविष्योत्तरपुराणोक्ता रथसप्तमीव्रतकथा । युधिष्ठिर उवाच--'कथं सा क्रियते कृष्ण मनुष्यै रथसप्तमी । चक्रवर्तित्वफलदा या विख्याता त्वया मम ।' श्रीकृष्ण उवाच--'आसीत्काम्बोजविषये यशोवर्मा नराधिपः । वृद्धे वयसि तस्यासीत्सर्वव्याधियुतः सुतः । तत्कर्मपाकं सोऽपृच्छद्विनीतो द्विजपुङ्गवम् । स चाह राजन्वैश्योऽयं कृपणः पूर्वजन्मनि । ददर्श रथसप्तम्यां क्रियमाणं व्रतं नृप । व्रतदर्शनमाहात्म्या-

द्रुत्पन्नो जठरे तव । अदाता विभवे तस्मात्तेन च व्याधितोऽभवत् । ततः स राजा पप्रच्छ किमेतस्य विधीयताम् ।' द्विज उवाच—'यस्य संदर्शनात्प्राप्तो लोभी तव निकेतनम् । तदेव क्रियतां राजन्रथसप्तमिसंज्ञितम् । व्रतं पापहरं येन चक्रवर्तित्वमाप्यते ।' राजोवाच—'ब्रूहि विप्र व्रतं कृत्स्नं सविधानं समन्त्रकम् । ईश्वराणां दरिद्राणा सर्वसंपत्प्रदायकम् ।' द्विज उवाच—' शुक्लपक्षे तु माघस्य षष्ठ्यामामन्त्रयेद्गृही । स्नानं शुक्लतिलैः कार्यं नद्यभावे तु कुत्रचित् । विमले सलिले राजन्विधिवद्वर्णधर्मतः । देवादीन्पूजयित्वा तु गत्वा सूर्यालयं ततः । सूर्यं सम्यङ्नमस्कृत्य पुष्पधूपाक्षतैः शुभैः । आगत्य भवनं पश्चात्पञ्च यज्ञांश्च निर्वपेत् ।संतोष्यातिथिभृत्यांश्च बालवृद्धाश्रितान्स्वयम् । विद्यमाने दिनेऽश्नीयाद्वाग्यतस्तैलवर्जितम् । रात्रौ विप्रं समाहूय विधिज्ञं वेदपारगम् । संपूज्य नियमं कुर्यात्सूर्यमाधाय चेतसि । सप्तम्यां तु निराहारो भूत्वा भोगविवर्जितः । भोक्ष्येऽष्टम्यां जगन्नेत्र निर्विघ्नं तत्र मे कुरु । इत्युच्चार्य नृपश्रेष्ठ तोयं तोयेषु निक्षिपेत् । ततो विसृज्य तं विप्रं स्वपेद्भूमौ जितेन्द्रियः।ततः प्रातः समुत्थाय कृतावश्यः शुचिर्नरः । कारयित्वा रथं दिव्यं किंकिणीजालमालिनम् । सर्वोपस्करसंयुक्तं रत्नैः सर्वाङ्गचित्रितम् । काञ्चनं राजतं चाथ हयसारथिसंयुतम् । ततो मध्याह्नसमये कृतस्नानादिको व्रती । अतिर्यग्वीक्ष्यमाणस्तु पाखण्डालापवर्जितः । सौरसूक्तं जपन्प्राज्ञः समागच्छेत्स्वमालयम् । विनिवृत्तान्यकार्यस्तु कृत्वा ब्राह्मणवाचनम् । वस्त्रमण्डपिकामध्ये स्थापयेत्तं रथोत्तमम् । कुङ्कुमेन सुगन्धेन चर्चयित्वा समंततः । मालाभिः पुष्पदीपानां समन्तात्परिवेष्टयेत् । धूपेनागुरुमिश्रेण धूपयित्वा तथोपरि । रथे तु स्थापयेद्भानुं सर्वसंपूर्णलक्षणम् । वित्तानुरूपं हैमं च वित्तशाठ्यविवर्जितः । शाठ्याद्व्रजति वैकल्यं वैकल्याद्विकलं फलम् । ततो देवं समभ्यर्च्य सरथं च ससारथिम् । पुष्पैर्धूपैस्तथा गन्धैर्वस्त्रालंकारभूषणैः । फलैर्नानाविधैर्भक्ष्यैर्नैवेद्यैर्घृतपायसैः । पूजयेद्भास्करं भक्त्या मन्त्रैरेभिः क्रमात्प्रभुम् । भानो दिवाकरादित्य मार्तण्ड जगतांपते । अपांनिधे जगद्रक्ष भूतभावन भास्कर । प्रणतार्तिहराचिन्त्य विश्वचिन्तामणे विभो । विष्णो हंसादिभूतेश आदिमध्यान्तकारक । भक्तिहीनं क्रियाहीनं मंत्रहीनं जगत्पते । प्रसादात्तव संपूर्णमर्चनं यदिहास्तु मे । एवं संपूज्य देवेशं प्रार्थयेत्स्वमनोगतम् । ददाति प्रार्थितो भानुर्भक्त्या संतोषितो नरैः । वित्तहीनोपि विधिना सर्वमेतत्प्रकल्पयेत् । रथं ससारथिं साश्वं वर्णकैर्भित्तिलेखितम् । सौवर्णं च तथा भानुं यथाशक्त्या प्रकल्पितम् । प्रागुक्तेन विधानेन पूजयित्वा सुवि-

स्तरम् । जागरं कारयेद्रात्रौ गीतवादित्रनिःस्वनैः । प्रेक्षणीयैर्विचित्रैश्च पुण्याख्यान-कथादिभिः । रथयात्रां प्रपश्येत भानोरायतनं श्रितः । अनिमीलितनेत्रस्तु नयेत्तां रजनीं बुधः । प्रभाते विमले स्नातः कृतकृत्यस्ततो द्विजान्।तर्पयेद्विविधैः कामैर्दानैर्वासोविभूषणैः।अश्वमेधेन तुल्यं तदिदं ब्रह्मविदो विदुः।अतो देयानि दानाति यथाशक्त्या विचक्षणैः।रथं तु गुरवे दद्यात्सर्वोपस्करसंयुतम्।रक्तं च वस्त्रयुगलं रक्तधेनुसमन्वितम् । एवं चीर्णे व्रते राजन्कि न नौति जगत्त्रयम् । तस्मात्सर्वप्रयत्नेन कुरु त्वं रथसप्तमीम् । येनारोगो भवेत्पुत्रस्तदीयो नृपसत्तम । व्रतस्यास्य प्रभावेण प्रसादाद्भास्करस्य च । भविष्यति महातेजा महाबलपराक्रमः । भुक्त्वा सुविपुलान्भोगान्कृत्वा राज्यमकण्टकम् । दत्त्वासौ रथसप्तम्यां मृते त्वयि महाभुजः । उत्पाद्य पुत्रान्पौत्रांश्च सूर्यलोकं स यास्यति । तत्र स्थित्वा कल्पमेकं चक्रवर्ती भविष्यति ।' श्रीकृष्ण उवाच–'इति सर्वं समाख्याय क्षितिपाय द्विजोत्तमः । यथागतं जगामासौ नृपः सर्वं चकार ह । यदादिष्टं द्विजेन्द्रेण तत्तत्सर्वं बभूव ह । एवं स चक्रवर्तित्वं प्राप्तवान्नृपनन्दन । श्रूयते यस्तु मान्धाता पुराणेषु परंतप । य इदं शृणुयाद्भक्त्या यश्चापि परिकीर्तयेत् । तस्मै च तुष्यते भानुर्यच्छत्येवाभयं सदा । एवंविधं रथवरं रथवाजियुक्तं हैमं च हेमशतदीधितिना समेतम् । दद्याच्च माघसितसप्तमिवासरे यः सोऽभङ्गचक्रगतिरेव महीं भुनक्ति।' इति रथसप्तमीव्रतकथा ।

इयमेव महतीसंज्ञा । तदुक्तं हेमाद्रौ मत्स्यपुराणे–'इत्येषा कथिता वीर रथाह्वा सप्तमी परा । महतीति च विख्याता महापातकनाशिनी । तस्यां संपूज्य देवेशं चित्रभानुं दिवाकरम् । सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः । यश्चोपवासं कुरुते तस्यां नियतमानसः । सर्वपापविशुद्धात्मा सर्वलोके महीयते ।' इति ।

अस्यामेव सप्तम्यां भविष्यत्पुराणोक्तं रथाङ्कसप्तमीव्रतम् । हेमाद्रौ भविष्योत्तरे–माघमासीत्यादि सप्तम्यामुपोष्य भानुं पूजयित्वा संवत्सरान्ते स्वर्णरथे सूर्यं संपूज्य ब्राह्मणाय दद्यादिति । इति रथांकसप्तमी ।

इयमेव महासप्तमी । अस्यामेवादित्यपुराणोक्तं पुत्रसप्तमीव्रतम् । आदित्य उवाच–'माघमासे तु शुक्लायां सप्तम्यां समुपोषितः । यः पूजयेच्च मां भक्त्या तस्याहं पुत्रतां व्रजे । एवं चोभयसप्तम्यां मासि मासि सुरोत्तम । यस्तु मां पूजयेद्भक्त्या सुमेकमेकमादरात्[1] । प्रयच्छामि सुतं तस्य स्वात्मनो ह्यङ्गसंभवम् । वित्तं यशस्तथा पुत्रमारोग्यं परमं सदा । माघमासे तु यो ब्रह्मञ्छुक्लपक्षे जितेन्द्रियः ।

१–सुमेकः संवत्सरः ।

पाखण्डान्पतितानन्त्यानजल्पन्विजितेन्द्रियः । उपोष्य विधिवत्षष्ठ्यां श्वेतमाल्यविलेपनैः । पूजयित्वा तु मां भक्त्या निशि भूमौ स्वपेद्बुधः । पुनरुत्थाय सप्तम्यां कृत्वा स्नानादिकां क्रियाम् । पूजयित्वा तु मां ब्रह्मन्वीरहोमं[1] समाचरेत् । प्रीणयित्वा हरिं[2] भक्त्या हविषा पद्मलोचनम् । दध्योदनेन पयसा पायसेन द्विजांस्तथा । तस्यैव[3] कृष्णपक्षस्य षष्ठ्यां सम्यगुपोषितः । रक्तोत्पलैः सुगन्धाद्यैः रक्तपुष्पैश्च पूजयेत् । एवं यः पूजयेद्भक्त्या नरो मां विधिवत्सदा । उभयोरपि देवेन्द्र सुपुत्रं लभते वरम् ।' इति पुत्रसप्तमीव्रतम् । इति माघशुक्लसप्तमी ।

अथ सप्तमीभेदा हेमाद्रौ—'जया च विजया चैव जयन्ती चापराजिता । महाजया च नन्दा च भद्रान्या च प्रकीर्तिता । शुक्लपक्षस्य सप्तम्यां नक्षत्रं पञ्चतारकम् । यदा भवेत्तदा ज्ञेया जयानामेति सप्तमी ।' पञ्चतारकमिति रोहिण्यर्[4]श्लेषा मघा हस्तश्च । 'तस्यां दत्तं हुतं जप्तं तर्पणं देवपूजनम् । सर्वं शतगुणं प्रोक्तं पूजा चापि दिवाकरे ।' अत्र पञ्चम्यामेकभुक्तं षष्ठ्यां नक्तं सप्तम्यामुपवासं कृत्वा रविं रक्तचन्दनादिभिः संपूज्य अष्टम्यां पारणं कुर्यादेतत्संवत्सरं समापयेदिति । इति जयासप्तमीव्रतम् ।

'माघमासस्य सप्तम्यां सूर्यवारो भवेद्यदि । सप्तमी विजया नाम तत्र दत्तं महाफलम् । स्नानं दानं तपो होम उपवासस्तथैव च । सर्वं विजयसप्तम्यां महापातकनाशनम् ।' वीरमित्रोदये तु शुक्लपक्षस्य सप्तम्यामिति पाठः । अस्यां फलादिभिः प्रदक्षिणा कार्या । तानि तु नारिकेलबीजपूररक्तनारिङ्गकदलीफलकूष्माण्डतिन्दुकवृन्ताकमौक्तिकपद्मरागगोमेदवज्रवैडूर्यइङ्गुदबदरबिल्वकरमर्दाम्रातकजम्बूककर्कटिकापुष्पपूगीफलपत्रमोदकानि । 'एभिर्विजयसप्तम्यां भानोः कुर्यात्प्रदक्षिणाः[5] । उपवासेन नक्तेन भक्तैकायाचितेन वा । नेया नियमयुक्तेन राजन्विजयसप्तमी ।' एवं संवत्सरं कृत्वा अन्ते सुवर्णसहितान्मुद्रान्दद्यादिति विजयसप्तमी । निर्णयामृते तु—अन्यापि भानुवारयुक्ता महाफलप्रदा । तदुक्तम्—'सोमवारे त्वमावास्या भानुवारेण सप्तमी । अङ्गारकदिने प्राप्ते चतुर्थी वा चतुर्दशी ।' अत्र चतुर्थीसाहचर्यात्कृष्णचतुर्दशी प्रशस्ता । 'षष्टिवर्षसहस्राणि तत्कर्ता विन्दते फलम् ।' इति । इति विजयसप्तमी ।

अथ जयन्तीसप्तमीव्रतम् । 'माघस्य शुक्ले पक्षे तु सप्तमी या त्रिलोचन ।

---

१—वीरहोममग्निहोमम् । 'अशनो ग्रसनो वीरः खचरो वडवानलः ।' इति हैमाभिधानात् । २—हरिरत्रादित्य । ३—तस्येति माघमासस्येत्यर्थः । ४-एतानि चत्वारि नक्षत्राणि पञ्चतारकाणि भवन्ति । ५-अष्टोत्तरशतमिति शेष. ।

जयन्ती नाम सा प्रोक्ता पुण्या पापहरा तथा।' इति। सूर्यपूजादिकं प्रतिमासं कृत्वा संवत्सरान्ते पारणं कुर्यादिति। इति भविष्योत्तरोक्तं जयन्तीसप्तमीव्रतम्।

अथापराजिता। 'मासि भाद्रपदे शुक्ला सप्तमी या गणाधिप। अपराजितेति विख्याता महापातकनाशिनी। स्नानदानादिकं सर्वमस्यामक्षयमुच्यते।' अस्यामपि सूर्यपूजनाश्वदानादि कार्यमिति। इति भविष्यत्पुराणोक्तमपराजिताव्रतम्।

अथ भविष्यत्पुराणोक्तं महाजयाव्रतम्। ब्रह्मोवाच—'शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः। महाजया तदा स्याद्वै सप्तमी भास्करप्रिया। स्नानं दानं जपो होमः पितृदेवादिपूजनम्। सर्वं कोटिगुणं प्रोक्तं तपनेन महौजसा। यस्तस्यां मानवो भक्त्या घृतेन स्नापयेद्रविम्। सोऽश्वमेधफलं प्राप्य ततः सूर्यपदं व्रजेत्। पयसा स्नापयेद्यस्तु भास्करं भक्तिमान्नरः। विमुक्तः सर्वपापेभ्यो याति सूर्यसलोकताम्।' इति महाजयासप्तमीव्रतम्।

मार्गशीर्षशुक्लसप्तमी नन्दासप्तमी। तदुक्तम्— 'या तु मार्गशिरे मासि शुक्लपक्षे तु सप्तमी। नन्दा सा कथिता वीर सर्वानन्दकरी शुभा।' इति। अत्रापि दध्योदनादिनैवेद्यं भास्कराय दद्यादिति। इति भविष्यत्पुराणोक्तं नन्दासप्तमीव्रतम्।

अथ भद्रासप्तमीव्रतम्। 'शुक्लपक्षे तु सप्तम्यां नक्षत्रं सवितुर्भवेत्। यदा प्रथमनाथेन तदा सा भद्रतां व्रजेत्।' इति। सवितृनक्षत्रं हस्तः। प्रथमनाथेन मेषनाथेन। तत्र देवस्य घृतेन क्षीरेण इक्षुरसेन च स्नपनं कृत्वा अष्टम्यां पारणं कुर्यादिति भविष्योत्तरोक्तं भद्रासप्तमीव्रतम्।

अथ भविष्यत्पुराणोक्तं निक्षुभार्कसप्तमीव्रतम्। सुमन्तुरुवाच—'सूर्यभक्ता च या नारी ध्रुवं सा पुरुषो भवेत्। स्त्रीत्वे चाप्युत्तमं नाथं यत्कृत्वा शृणु सांप्रतम्। निक्षुभार्कव्रतं भानोः सदा प्रीतिविवर्धनम्।' इत्यादि। 'अवियोगकरं वीर धर्मकामार्थसाधनम्। सप्तम्यामथवा षष्ठ्यां संक्रान्तौ मानवे दिने। हविषा हविषा होमं सोपवासः समाचरेत्। निक्षुभार्कस्य कृत्वार्चां कृत्वा स्वर्णमयीं शुभाम्।' इत्यादि। 'राजती वाऽथवा वार्क्षी स्नापयेच्च घृतादिभिः।' इति। निक्षुभार्या सूर्यपत्नी तया सहितोऽर्कः। इति निक्षुभार्कसप्तमीव्रतम्।

अन्यदपि हेमाद्रौ—या वर्षमेकं षष्ठ्यां सप्तम्यां वा न भुञ्जीत निक्षुभार्कं च पूजयेत। वर्षान्ते प्रतिमां दद्यात्सा राजानं पतिं प्राप्नुयादिति प्रथमम्। 'या नार्युपवसे-

देवं कृष्णामेकां तु सप्तमीम् । सा गच्छेत्परमं स्थानं भानोः ।' इत्यादि । इति द्वितीयम् । 'सप्तम्यां या निराहारा भवेदब्दं च यन्त्रिता । गजं पिष्टमयं कृत्वा वर्षान्ते विनिवेदयेत् । भ्रूणहत्यादिकं पापं गच्छति ।' इत्यादि । इति तृतीयम् । 'कृष्णपक्षे तु माघस्य सप्तम्यां या दृढव्रता । वर्षैकमुपवासेन सर्वभोगविवर्जिता । वर्षान्ते सर्वगन्धोत्थं निक्षुभार्कं निवेदयेत् । सुवर्णमणिमुक्ताढ्यं भोजयित्वा द्विजोत्तमम् ।' इत्यादि इति चतुर्थम् । इति भविष्योत्तरोक्तं निक्षुभार्कव्रतचतुष्टयम् ।

अथ भविष्यत्पुराणोक्तं सिद्धार्थकादिसप्तमीव्रतम् । तदुक्तं हेमाद्रौ—'माघे वा मार्गशीर्षे वा कार्या शुक्लार्थसप्तमी ।' इत्यादि । जले सिद्धार्थकं कृत्वा प्राशयेदिति सिद्धार्थसप्तमी ।

अथ सूर्यारुणसंवादोक्ताः सप्तमीभेदाः । 'अर्कसंपुटकैरेका द्वितीया मरिचैस्तथा । तृतीया निम्बपत्रैस्तु चतुर्थी फलसप्तमी । अनोदना पञ्चमी स्यात्षष्ठी विजयसप्तमी । सप्तमी कामिकी ज्ञेया विधिं तासां निबोध मे । शुक्लपक्षे रविदिने प्रवृत्ते चोत्तरायणे । पुन्नामधेये नक्षत्रे गृह्णीयात्सप्तमीव्रतम् । सर्वासु ब्रह्मचारी स्याच्छौचयुक्तो जितेन्द्रियः । सूर्यार्चनरतो दान्तो जपहोमपरस्तथा ।' निर्णयामृते तु—'रविवारेण युक्तायां सप्तम्यामुत्तरायणे । पुन्नामधेयनक्षत्रे पूजयेच्च दिवाकरम् ।' इति । उत्तरायणे माघमासे । पुन्नामनक्षत्राणि 'हस्तो मैत्रस्तथा पुष्यो मृगशीर्ष पुनर्वसुः । पुन्नामधेयनक्षत्राण्येतान्याहुर्मनीषिणः ।' इति । आसां फलानि 'अर्कसंपुटकैर्वित्तमलं साप्तपौरुषम् । मरिचैः संगमः स्याद्वै प्रियपुत्रार्थिभिः सदा । सर्वे रोगाः प्रणश्यन्ति निम्बपत्रैर्न संशयः । फलैश्च पुत्रपौत्राश्च दौहित्राश्चापि पुष्कलाः । अनोदनाद्धनं धान्यं सुवर्णं रजतं तथा । तथा यशो हिरण्यं च आरोग्यं संततिं नृप।उपोष्य विजयां शत्रून्राजा जयति नित्यशः । साधयेत्कामदा कामान्विधिवत्पर्युपासिता ।'पुत्रादीन्सर्वानित्यर्थः ।

अथ विजयसप्तमीव्रतान्तर हेमाद्रौ—'माघमासे सिते पक्षे सप्तम्यां कुरुनन्दन । निराहारो रविं भक्त्या पूजयेद्विधिना नृप । पूर्वोक्तेन जपेज्जप्यं देवस्य पुरतः स्थितः । वायो बलिषु भद्रं ते सुभद्रं तेऽस्तु वै सदा । ममापि कुरु भद्रं वै प्राशनाच्छत्रुहा भव ।' अनेन मन्त्रेण पीतपवनो रात्रिमतिवाह्य द्वितीयेऽह्नि पारणं कुर्यादिति विजयसप्तमीव्रतम् । हेमाद्रौ तत्र सूर्यं संपूज्य अतैललवणं भुञ्जीत ।

अस्यामेव माघशुक्लसप्तम्यामारोग्यसप्तमीव्रतम्। तत्र सप्तम्यामुपवासादिकम् अष्टम्यां पारणं कुर्यादिति।

अथ फाल्गुनशुक्लसप्तम्यां भविष्यत्पुराणोक्तमर्कपुटसप्तमीव्रतम्। तत्र 'खखोल्काय नमः' इत्यनेन सूर्यं संपूज्य अष्टम्यामर्कपत्रं प्राश्य भुञ्जीत इति। इत्यर्कपुटसप्तमीव्रतम्।

अस्यामेव भविष्यत्पुराणोक्तं त्रिवर्गेष्टदासप्तमीव्रतम्। तदुक्तं हेमाद्रौ— 'सप्तम्यां शुक्लपक्षे तु फाल्गुनस्येह यो नरः। जपेद्वेलीति देवस्य नाम।' इत्यादि। तेनैव पूजनादिकं कर्तव्यमिति।

अस्यामेव भविष्यत्पुराणोक्तं यज्ञसप्तमीव्रतम्। तत्र द्वादशमासेषु द्वादश मासाधिपान्पूजयेदित्यादि।

अस्यामेव भविष्यत्पुराणोक्तं कामदासप्तमीव्रतम्। पितामह उवाच— 'फाल्गुनेऽमलपक्षस्य सप्तम्यां क्ष्माधराधर। उपोषितो नरो नारी समभ्यर्च्य तमोपहम्। सूर्यनाम जपन्भक्त्या भावयुक्तो जितेन्द्रियः। उत्तिष्ठन्प्रस्वपंश्चैव सूर्यमेवानुकीर्तयेत्। ततोऽन्यदिवसे प्राप्ते अष्टम्यां नियतो रविम्। स्नात्वा सम्यक्समभ्यर्च्य दद्याद्विप्राय दक्षिणाम्। रविमुद्दिश्य चैवाग्नौ घृतहोमकृतक्रियः। प्रणिपत्य जगन्नाथमिति वाक्यमुदीरयेत्। यमाराध्य पुरा देवी सावित्री काममाप वै। स मे ददातु देवेशः सर्वान्कामान्विभावसुः। समभ्यर्च्यादितिः प्राप्ता तांस्तान्कामान्यथेप्सितान्। स ददात्वखिलान्कामान्प्रसन्नो मे दिवस्पतिः। नष्टराज्यः स देवेन्द्रो यमभ्यर्च्य दिवाकरम्। कामार्थं प्राप्तवान्राज्यं स मे कामान्प्रयच्छतु। एवमभ्यर्च्य पूजां च निष्पाद्य हविशेषतः। भुञ्जीत प्रयतः सम्यग्घविष्यं पतगध्वज। फाल्गुने चैत्रवैशाखे ज्येष्ठे मासि तथापरम्। चतुर्भिः पारणं मासैरेभिर्निष्पादितं भवेत्। करवीरैश्च चतुरो मासान्संपूजयेद्रविम्। कृष्णागुरुं दहेद्धूपं प्राश्य गोशृङ्गजं जलम्। नैवेद्यं खण्डवेष्टांश्च दद्याद्विप्रेभ्य एव च। ततश्च श्रूयतामन्या त्वाषाढादिषु या क्रिया। जातीपुष्पाणि शस्तानि धूपो गुग्गुलुरेव च। कुतपोदकमश्नीयान्नैवेद्यं पायसं मतम्। स्वयं तदेव चाश्नीयाच्छेषं पूर्ववदाचरेत्। कार्तिकादिषु मासेषु गोमूत्रं कायशोधनम्। महाङ्गधूपमुद्दिष्टं पूजा रक्तोत्पलैस्तथा। 'महाङ्गधूपो भविष्यपुराणे एवोक्तः। तद्यथा। 'कर्पूरं कुङ्कुमैः पुष्पमगुरुं चन्दनं तथा। गृञ्जनं शर्करा कुष्ठं महाङ्गं सिल्हकं तथा। महाङ्गोयं स्मृतो धूपः प्रियो देवस्य सर्वदा।' इति। पलाशपुष्पमिति वीरमित्रोदयस्वरसः।

१—कुतपोदकं कुशोदकम्।

महाङ्गं मासी । ' कासारं चैव नैवेद्यं निवेद्यं भास्कराय वै । प्रतिमासं च विप्राय दातव्या दक्षिणा तथा । प्रीणनं स्वेच्छया भानोः पारणे पारणे गते । यथाशक्ति यथायोग्यं वित्तशाठ्यं विवर्जयेत् । सद्भावेनैव सप्ताश्वः पूजितः प्रीयते ततः । पारणान्ते यथाशक्त्या पूजितः स्नापितो रविः । प्रीणितश्चेप्सितान्कामान्दद्यादव्याहतान्रविः । एषा पुण्या पापहरा सप्तमी सर्वकामदा । यथाभिलषितान्कामान्ददाति गरुडध्वज । अपुत्रः पुत्रमाप्नोति अधनो धनमाप्नुयात् । रोगाभिभूतश्चारोग्यं कन्या विन्दति सत्पतिम् । समागमं प्रवासिभिः उपोष्यैतदवाप्नुयात् । सर्वान्कामानवाप्नोति गोगतश्चापि मोदते । पुनरेत्य महीं कृष्ण घनाघनसमो नृपः । क्ष्मातले स्यान्न संदेहः प्रसादाद्ग्रहपतेर्नरः ।'
इति कामदासप्तमीव्रतम् ।

रविवारयुक्तशुक्लसप्तमी कल्याणसप्तमी विजया च । तस्यां श्रीसूर्यं संपूज्य सोदकुम्भं सकनकं घृतपात्रं दत्त्वा गुडक्षीरघृतादिभिः पायसेन द्वितीयदिवसे विप्रान्संभोज्य स्वयं पायसभोजनं कुर्यात् । इति कल्याणविजयाव्रतम् ।

अथ भविष्योत्तरोक्तं द्वादशसप्तमीव्रतम् । हेमाद्रौ भविष्ये—श्रीकृष्ण उवाच-' अथान्यं ते प्रवक्ष्यामि सप्तमीकल्पमुत्तमम् । माघमासात्समारभ्य शुक्लपक्षे युधिष्ठिर । सप्तम्यां कृतसंकल्पो वर्षमेकं व्रती भवेत् । वरुणं माघमासे तु भानुं संपूज्य कारयेत् । ब्रह्मकूर्चविधानं च यथाशक्त्या नृपोत्तम । अष्टम्यां भोजयेद्विप्रांस्तिलपिष्टगुडौदनैः । अग्निष्टोमस्य यज्ञस्य फलं कृत्स्नमवाप्यते । तद्वच्च फाल्गुने मासि सूर्यायेति प्रपूजयेत् । वाजपेयस्य यज्ञस्य यथोक्तं लभते फलम् । सप्तम्यां चैत्रमासे तु वेदांशुरिति पूजयेत् । उक्थाध्वरसमं पुण्यं नरः प्राप्नोत्यसंशयम् । वैशाखस्य तु सप्तम्यां धातारमभिपूजयेत् । पशुबन्धाध्वरं पुण्यं नरः प्राप्नोत्यसंशयम् । सप्तम्यां ज्येष्ठमासस्य इन्द्रमित्यभिपूजयेत् । अश्वमेधफलावाप्तिर्जायते तस्य नान्यथा । तथाषाढस्य सप्तम्यां पूजयित्वा दिवाकरम् । बहुस्वर्णप्रदानस्य फलं प्राप्नोति पुष्कलम् । आतपीति श्रावणे च नाम्ना देवं प्रपूजयेत् । सौत्रामणिफलं पार्थ नरः प्राप्नोति भारत । रविं भाद्रपदे मासि सप्तम्यामर्चयेच्छुचिः । तुलापुरुषदानस्य गुडेन फलमाप्नुयात् । आश्वयुक्छुक्लसप्तम्यां सवितारं प्रपूजयेत् । गोसहस्रप्रदानस्य फलमाप्नोति मानवः । कार्तिके शुक्लसप्तम्यां सप्ताश्वं नाम पूजयेत् । योऽभ्यर्चयति पुण्यात्मा पौण्डरीकफलं लभेत् । मार्गशीर्षे तथा भानुं

---

१—गोगत. स्वर्गत. । २ घनाघनः शक्रः ।

पूजयित्वा विधानतः । चतुर्णामपि वेदानां स्वाध्यायस्य फलं लभेत् । राजसूयस्य यज्ञस्य फलभागी भवेन्नरः । भास्करं पुष्यमासे तु पूजयित्वा तथैव च । माघे च कृष्णसप्तम्यां नाम पूजादिकं च यः । सोपवासः प्रयत्नेन वर्षमेकं समाचरेत् । पूरिते नियमे पार्थ सूर्ययागं समाचरेत् । शुद्धभूमौ शुभे देशे रक्तचन्दनलेपिते । एकहस्तं द्विहस्तं वा चतुर्हस्तमथापि वा । सिन्दूरेणातिरागेण सूर्यमण्डलमालिखेत् । रक्तपुष्पैः पायसैश्च धूपैः कुन्दुरुकादिभिः । संपूज्य दद्यान्नैवेद्यं विचित्रं घृतपाचितम् । पुरतः स्थापयेत्कुम्भांस्तिलपूर्णान्सदक्षिणान् । द्वादशात्र नृपश्रेष्ठ रक्तवर्णान्सुचर्चितान् । अग्निकार्यं ततः कार्यं सम्यगर्च्य हुताशनम् । आकृष्णेनेति मन्त्रेण समिद्भिश्चार्कसंभवैः । तिलैराज्यगुडोपेतैर्दद्यादष्टशताहुतीः । दक्षिणा च ततो देया ब्राह्मणेभ्यः पृथक्पृथक् । देयानि रक्तवासांसि द्वादशानां द्विजन्मनाम् । द्वादशात्र प्रशंसति गावो वस्त्राणि भूषिताः । छत्रोपानद्युगं चैवमेकैकस्मै प्रदापयेत् । वित्तहीनो न शक्नोति दाने द्वादश धेनवः । एका ह्यपि सुशीला च रक्तवर्णा पयस्विनी । उपदेष्ट्रे प्रदातव्या वित्तशाठ्यमकुर्वता । ततो विसृज्य तान्विप्रान्स्वयं भुञ्जीत वाग्यतः । य एवं कुरुते पार्थ सप्तमीव्रतमादरात् । नीरुजो रूपवान्वाग्मी दीर्घायुश्चाभिजायते । विशेषो दीर्घरोगेण ग्रस्तः कुष्ठादिना तु यः । तेन कार्यं प्रयत्नेन व्रतमेतद्रुजापहम् । न ह्यस्ति भास्करादन्यदौषधं रोगहानिदम् । भास्करैकगतिर्यस्तु सर्वभूतहिते रतः । तस्य संदर्शनात्स्पर्शाद्रोगहानिः प्रजायते । कथं तु सूर्यभक्तानां रोगो दौर्गत्यसंभवः । जायते भरतश्रेष्ठ प्रत्यक्षे परमेष्ठिनि । सप्तम्यां प्रतिमासं तु जन्मव्रतपरो हि यः । उपवासी रवेर्भक्तः सर्वभूतहिते रतः । अष्टम्यां विप्रसहितो हविष्यं भोजयेन्नरः । एकादश समादाय नित्यरूपा च सप्तमी । सूर्यस्य मण्डलं भित्त्वा याति ब्रह्म सनातनम् । व्रतमेतन्महाराज सर्वाशुभविनाशनम् । सर्वदोषोपशमनं शरीरारोग्यकारकम् । सूर्यलोकप्रदं चान्ते प्राहेदं नारदो मुनिः । ये सप्तमीमुपवसन्ति सितासितां च नामाक्षरैरहिमदीधितिमर्चयन्ति।ते सर्वरोगरहिताः सुखिनः सदैव भूत्वा रवेरनुचराः सुचिरं वसन्ति ।' इदमेवोद्यापनमुक्तो द्यापनसप्तमीव्रतेषु ज्ञेयम् । इति भविष्यत्पुराणोक्तं द्वादशसप्तमीव्रतम् ।

अथ नानासप्तमीव्रतानि हेमाद्रौ-सुमन्तुरुवाच । 'यः क्षिपेद्गोमयाहारः शुक्लद्वादशसप्तमीः । राजेन्द्र यावकाहारः शीर्णपर्णाशनोऽपि वा । क्षीराशी वैकभक्तो वा भिक्षाहारोऽथ वा पुनः । जलाहारोऽथ वा भूत्वा पूजयित्वा दिवाकरम् ।' इत्यादि । 'एवं भक्त्या विवस्वन्तं प्रतिमासं समाहितः । पूजयेद्विधिवद्भक्त्या यानि नामानि कीर्ते–

येत् ।' तानि च नामानि मधौ विष्णुः, माधवे अर्यमा, शुक्रे विवस्वान्, शुचौ दिवाकरः, श्रावणे पर्जन्यः, नभस्ये वरुणः, आश्वयुजे मित्रः, कार्तिके मार्तण्डः, मार्गशीर्षे अण्डजः, पौषे पूषा, फाल्गुने त्वष्टेति । इति भविष्योत्तरोक्तं गोमयादिसप्तमीव्रतम् ।

अथोदकसप्तमीव्रतम् । 'उदकप्रसृतिं पीत्वा क्रियते या च सप्तमी । सैवोदकसप्तमी' इत्यादि ।

अथ भविष्यत्पुराणोक्तं वराटिकासप्तमीव्रतं हेमाद्रौ—वराटिकात्रयमूल्येन यदन्नादि लभ्यं तदेव भक्ष्यं कल्पयित्वा उपोषणं कुर्यादिति । इति वराटिकासप्तमीव्रतम् ।

अथ भविष्यत्पुराणोक्तं यस्यां कस्यांचित्सप्तम्यामादित्यमण्डकव्रतम् । तत्र रक्तचन्दनजे मण्डले सूर्यं संपूज्य सहिरण्यं सवस्त्रं मण्डकं दद्यात् । तत्र मन्त्रः 'आदित्यतेजसोत्पन्नं राजीकरविनिर्मितम् । श्रेयसे मम विप्र त्वं प्रतीच्छापूपमुत्तमम् ।' इति । अथ प्रतिग्रहमन्त्रः 'कामदं धनदं धर्म्यं पुत्रदं सुखदं तथा । आदित्यप्रीतये दत्तं प्रतिगृह्णामि मण्डकम् ।' एवं प्रतिसंवत्सरं कर्तव्यमिति । इति आदित्यमण्डकविधिः ।

यस्यां कस्यांचिच्छुक्लसप्तम्यां मत्स्यपुराणोक्तं सप्तमीस्नपनम्—'सप्तमीस्नपनं नाम व्याधिपीडाविनाशनम् । बालानां मरणं यत्र क्षीरपाणां तु दृश्यते ।' इत्यादि । 'जातस्य मृतवत्सायाः सप्तमे मासि नारद । अथवा शुक्लसप्तम्यामेतत्सर्वं प्रशस्यते ।' इत्यादि । 'गोमयेनोपलिप्तायां भूमावेकाग्निवत्तदा । तन्दुलै रक्तशालेयैश्चरुं गोक्षारसंयुतम् । निर्वपेत्सूर्यरुद्राभ्यां मातृभ्यश्च विशेषतः । कीर्तयेत्सूर्यदैवत्यं सप्त चैव घृताहुतीः । जुहुयाद्रुद्रसूक्तेन तद्वद्रुद्राय नारद । होतव्याः समिधश्चात्र तथैवार्कपलाशयोः । यवकृष्णतिलैर्होमः कर्तव्योऽष्टशतं पुनः । व्याहृतीभिरथाज्येन तथैवाष्टशतं द्विज । हुत्वा स्नानं च कर्तव्यं मन्त्रैस्तैरेव धीमता । विप्रेण वेदविदुषा विधिवद्दर्भपाणिना । स्थापयित्वा तु चतुरः कुम्भान्कोणेषु शोभितान् । पञ्चमे च पुनर्मध्ये दध्यक्षतविभूषितम् । स्थापयेदव्रणं कुम्भं सप्तर्षेणाभिमन्त्रितम् ।' "सप्तऋषयः प्रतिहिताः शरीरे सप्तरक्षन्ति सदमप्रमादम् । सप्तापः स्वपतो लोकमीयुस्तत्र जाग्रतो स्वप्नजौ सत्रसदौ च देवौ।" इति। 'सौरेण तीर्थतोयेन पूर्णरत्नसमन्वितम् । सर्वान्सर्वौषधियुतान्पञ्चभङ्गजलान्वितान् । पञ्चरत्नफलैर्युक्तान्वासोभिः परिवेष्टितान् ।' सप्तमृत्तिकायुक्तांश्च कृत्वा । 'चतुर्ष्वपि च कुम्भेषु तोयगर्भेषु मध्यमम् । गृहीत्वा ब्राह्मणस्तत्र सौरान्मन्त्रानुदीरयेत् ।

नारीभिः सप्तसंख्याभिरव्यङ्गाङ्गीभिरत्र च । पूजिताभिर्यथाशक्त्या माल्यवस्त्रादि-भूषणैः । सविप्राभिश्च कर्तव्यं मृतवत्साभिषेचनम् । दीर्घायुरस्तु बालोयं जीवत्पुत्रा त्वियं तथा।आदित्यश्चन्द्रमासार्धग्रहनक्षत्रमण्डलैः।शक्रःसलोकपालो वै ब्रह्मा विष्णुर्म-हेश्वरः । एते चान्ये च देवाद्याः सदा पान्तु कुमारकम् । मा शनिर्मात्र राहुश्च मात्र बालग्रहाः क्वचित् । पीडां कुर्वन्तु बालस्य मा मातुर्जनकस्य च । ततः शुक्लाम्बरधरा कुमारपतिसंयुता । सप्तकं पूजयेत्स्त्रीणामाचार्यं भार्यया सह । काञ्चनीं च ततः कृत्वा ताम्रपात्रोपरिस्थिताम् । प्रतिमां धर्म-राजस्य गुरवे विनिवेदयेत् । वस्त्रैः काञ्चनरत्नाद्यैर्भक्ष्यैः सघृतपायसैः । पूजयेद्ब्राह्मणांस्तत्र वित्तशाठ्यविवर्जितः । भक्त्या च गुरुणा चेदमुच्चार्यं पुत्रसंततिः । दीर्घायुरस्तु बालोऽयं यावद्वर्षशतं सुखी । यत्किंचिदस्य दुरितं तत्क्षिप्तं वडवामुखे । ब्रह्मा रुद्रो वसुः स्कन्दो विष्णुः शक्रो हुताशनः । रक्षन्तु सर्वदुष्टेभ्यो वरदाः सन्तु सर्वदा । एवमाद्यानि चान्यानि वदन्तं पूजयेद्गुरुम् । शक्तितः कपिलां दत्त्वा प्रणिपत्य विसर्जयेत् । गुरुं च पुत्रसहिता प्रणम्य रविशंकरौ । हुतशेषं तदश्नीया-दादित्याय नमोऽस्तु ते ।' इति मत्स्यपुराणोक्तं सप्तमीस्नपनम् ।

'यश्चोपवासी सप्तम्यां समाप्ते हेमपङ्कजम् । गाश्च वै शक्तितो दद्याद्धोमान्ते घटसंयुताः । एतत्सौरव्रतं नाम सूर्यलोकप्रदायकम् ।' इति । इति पद्मपुराणोक्तं सौर-व्रतम् । इति सप्तमीव्रतानि ।

अथ सूर्यप्रियाण्यन्यानि । 'शाल्योदनं तथा मुद्गान्सुगन्धं घृतमेव च । अपूपान्गुडपूर्णांश्च पयो दधि तथा गुडम् । एतैस्तु तृप्तिमायाति भास्करोऽन्नेन सप्तधा । वर्षाणि भरतश्रेष्ठ नात्र कार्या विचारणा । कुलत्थकान्मसूरांश्च वल्लांश्चाढक एव च । शिग्रुं कुन्दं तथात्यम्लं राजमाषांस्तथैव च । एतान्न भास्करे दद्याद इच्छेच्छ्रियमात्मनः । सप्तम्यां न स्पृशेत्तैलं नीलं वस्त्रं न धारयेत् । न चाप्यामलकैः स्नानम्' इत्या-दिनिषेधास्तु हेमाद्रौ स्पष्टाः । पक्षद्वयगतासु सर्वमाससप्तमीषु तिथिपत्वेनादित्यः पूज्यः । उक्तं च—'सप्तम्यां भास्करस्य' इति ।

अथ सिद्धविरुद्धादिकं लिख्यते । सप्तमी बुधवारेण सिद्धा । तदुक्तम्—'बुधवारे द्वितीया च द्वादशी सप्तमी पुनः ।' इति । सप्तम्यां रविवारेण संवर्ताख्यो योगो विरुद्धो भवति । 'सप्तम्यां दिनकरवासरो यदि स्याद्वारश्चेत्प्रतिपदि चेन्दुनन्दनस्य । संवर्तो मुनिभिरुदीरितः स योगः संत्याज्यः शुभफलकाङ्क्षिभिः प्रयत्नात् ।' इति ।

सप्तमीरविवारयोगादिविरुद्धयोगेषु कश्चिद्विशेषो लिख्यते । यथा 'विरुद्धयोगास्तिथिवारजाता नक्षत्रवारप्रभवाश्च ये च । हूणेषु वङ्गेषु खशेषु वर्ज्या अन्येषु देशेषु न ते विरुद्धाः ।' सप्तम्यां च द्वितीया चेद्व्रतपौष्टिकादि कर्म कार्यम् ।'[1] व्रतपौष्टिके द्वितीयद्वादशीसप्तमीषु कुर्वीत' इत्युक्तत्वात् । सप्तम्यामामलकस्नानं लक्ष्मीनाशकम् । तदुक्तम्—'सप्तम्यनिन्दुनवमीषु च संपदिच्छुः स्नायात्कदाचिदपि नामलकैर्मनुष्यः ।' रविभौमशनीनामन्यतमे ग्रहे कन्याराशिस्थिते सप्तमी शुभकर्मसु निषिद्धा । तदुक्तम्—परा परेषामित्यादि । सप्तम्यां वायव्यदिशि योगिनीसांमुख्यात् यात्रा न कार्या । वायव्येशानयोरित्युक्तत्वात् । इति सर्वसप्तमीनिर्णयः ॥

श्रीमद्दिल्लीशसेनोद्भटविकटभटश्रेणिमत्तेभकुम्भ-
श्चण्डोन्माद्यत्तुरुष्कक्षुभितवसुमतीपालने धर्मराजः ।
पौत्रः श्रीकृष्णसिंहक्षितिपकुलमणेर्विष्णुसिंहस्य पुत्रः
श्रीमान्राजाधिराजो जयहरिरमराधीशवत्कौ सुखी स्तात् ॥ १ ॥
श्रीमत्पण्डितदेवभट्टतनयः श्रीराघवाङ्घ्रिद्वय-
ध्यानावाप्तसमस्तकामनिवहः सम्राट् स रत्नाकरः ।
तुष्ट्यै श्रीजयसिंहवर्मनृपतेः कल्पद्रुमे कामदं
सद्गुच्छं नवमं शिवं समकरोत्सत्सप्तमीनिर्णयम् ॥ २ ॥

इति श्रीदेवभट्टात्मजपौण्डरीकयाजिरत्नाकरविरचिते जयसिंहकल्पद्रुमोद्द्योते सप्तमीनिर्णयो नाम नवमः स्तबकः ॥ ९ ॥

---

## अथाष्टमीनिर्णयः ।

अथाष्टमी निर्णीयते । तत्रादौ शुक्लाष्टमीध्यानम् । 'घण्टापात्रधरा गोस्था गोक्षीरधवलाऽष्टमी ।' इति । अथ कृष्णाष्टमीध्यानम् । 'प्रेतगा चाष्टमी रक्ता कृष्णग्रीवा सितांशुका । अक्षं खड्गं तथा खेटं पात्रं धत्ते चतुर्भुजा।' इति । अष्टमी सर्वमते कृष्णा पूर्वा सिता परा । 'व्रतमात्रेऽष्टमी कृष्णा पूर्वा शुक्लाऽष्टमी परा ।' इति माधवोक्तेः । परयुक्छुक्लाष्टमी पूर्वयुक् कृष्णेति च दीपिकोक्तेः । 'शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी । पूर्वविद्धैव कर्तव्या परविद्धा न कुत्रचित् । उपवासेषु राजेन्द्र एष धर्मः सनातनः ।' इति नैगमाच्च । हेमाद्रिमाधवनिर्णयसिन्धुकालतत्त्वविवेचनप्रभृतिसर्वमते कृष्णाष्टम्युपवासादिषु पूर्वविद्धैव ग्राह्येति सिद्धान्तः । मदनरत्ने तु उपवासे तु पक्षद्व-

---

१ सप्तमीद्वित्वे द्वितीयस्या सप्तम्यामित्यर्थ ।

ग्रेऽप्यष्टमी परयुतैव ग्राह्या ।'उपवासे सप्तमी तु वेधाद्धन्त्युत्तरं दिनम् । पक्षयोरुभयो-रेष उपवासविधिः स्मृतः।' इति नारदीयवचनेन पक्षद्वयेऽपि सप्तमीविद्धाया निषेधात्। एकादश्यष्टमी षष्ठीति पूर्वोदाहृतभृगुवचनाच्चेति निगमवचने उपवासग्रहणं रुद्रोपवास विषयम् ।'रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः । अन्येषु व्रतकल्पेषु यथोद्दिष्टा-मुपावसेत् ।'इति स्मृत्यन्तरवचनान्न तेनास्य विरोधः । शक्तिपूजायां त्वष्टमी रात्रि-व्यापिनी ग्राह्या । तदुक्तं देवीपुराणे—'निशायां पूजिता देवी वैष्णवी पापनाशिनी । तस्मात्सर्वप्रयत्नेन अष्टम्यां निशि पूजयेत् ।'इति।अत एव दुर्गाभक्तितरङ्गिण्यामपि रात्रिपूजायामष्टमी रात्रियोगिनी ग्राह्येत्युक्तम् । कालव्याप्तिशास्त्रात् । शुक्लपक्षे पूर्व-विद्धादरेण कृष्णपक्षे विचाराभावाच्च । दिनद्वये रात्रिव्याप्तावधिकरात्रिव्यापिनी ग्राह्या । तुल्यव्याप्तावुत्तरैव । प्रातरारभ्य कर्मकालपर्यन्तं सद्भावात् शिवार्चनच-न्द्रिकायां कुलार्णवे-' नित्यार्चनं दिवा कुर्याद्रात्रौ नैमित्तिकार्चनम् ।' इत्यभिधानाच्चे-ति । इत्यष्टमीसामान्यनिर्णयः ।

अथाष्टमीकृत्यानि । तत्र सर्वास्वष्टमीषु भैरवयात्रोक्ता काशीखण्डे— 'अष्टम्यां च चतुर्दश्यां रविभूमिजवासरे । यात्रां च भैरवीं कृत्वा नरः पापैः प्रमुच्यते ।' इति। तत्रैव—'अष्टम्यां च चतुर्दश्यां भौमवारे विशेषतः । संपूज्य सततं काश्यां दुर्गां दुर्गार्तिनाशिनीम् ।' इति ।

चैत्रकृष्णाष्टम्यां विष्णुधर्मोत्तरोक्तं संतानाष्टमीव्रतं हेमाद्रौ—'कृष्णाष्टम्यां चैत्रमासे स्नातो नियतमानसः ।' इत्यादि । तत्र कृष्णं देवकीं चाभ्यर्च्योपोष्योत्तर-दिने पारणं कुर्यात् । इति संतानाष्टमीव्रतम् ।

इयमेव शीतलाष्टमी । स्कन्द उवाच— 'भगवञ्छीतलास्तोत्रं वद देव्या महत्फलम् । अतीव भक्तिर्मे जाता व्रतं चापि ब्रवीहि मे।' ईश्वर उवाच—'साधु वत्स महाभाग यत्पृच्छसि व्रतोत्तमम् । कथयामि यथापूर्वं पार्वत्या त्वत्कृते कृतम् । सर्वोपद्रवनाशाय सर्वविघ्नोपशान्तये । चैत्रे मास्यसिते पक्षे याऽष्टमी शीतलाह्वया । तामारभ्य प्रकर्तव्यं यावन्मासचतुष्टयम् । पतिपुत्रसमेताभिर्योषिद्भिः श्रद्धयान्वितम् । विधानं शृणु मे वत्स येन सम्यक्प्रपूजयेत् । सुशीतलजलैः स्नात्वा स्थाने गोमयले-पिते । सुगन्धैः शीतलैस्तोयैः कलशं लक्षणान्वितम् । आपूर्य विधिवत्तं च स्थापये-त्तत्र शीतलाम् । लिखित्वावाह्य तां मूर्तिं पूजयेद्विधिनाऽमुना । पुष्पचन्दनकर्पूरवा-सितं शीतलं जलम् । पाद्यार्घ्याचमनीयं च शीतले प्रतिगृह्यताम् । पाद्यादिसर्वसंता-पशमनं प्रतिगृह्यताम् ।चन्दनं शीतलं देवि मत्कुलं शीतलं कुरु । खरयानसमारूढे निम्ब-

पल्लवधारिणि । शीतले कुरु कल्याणं पूजेयं प्रतिगृह्यताम् । संपूज्य विधिवद्देवीं शृणुयाच्छीतलाष्टकम् । पूर्वं मयैव संप्रोक्तं तच्छृणु त्वं समाहितः । नमामि शीतलां देवीं रासभस्थां दिगम्बराम् । मार्जनीकलशोपेतां शूर्पालंकृतमस्तकाम् ।' स्कन्द उवाच— 'भगवन्देवदेवेश शीतलास्तोत्रमुत्तमम् । वक्तुमर्हस्यशेषेण विस्फोटकभयापहम् ।' ईश्वर उवाच—' वन्देऽहं शीतलां देवीं सर्वरोगभयापहाम् । यामाराध्य निवर्तेत विस्फोटकभयं महत् । शीतले शीतले चेति यो ब्रूयाद्दाहपीडितः । विस्फोटकभयं पापं क्षिप्रं तस्य प्रणश्यति । यस्त्वामुदकमध्ये तु ध्यात्वा पूजयते नरः । विस्फोटकभयं घोरं कुले तस्य न जायते । शीतले ज्वरदग्धस्य पूतिगन्धगतस्य च । प्रणष्टचक्षुषः पुंसस्त्वामाहुर्जीवनौषधम् । शीतले तनुजान्रोगान्नृणां हरसि दुस्त्यजान् । विस्फोटकविशीर्णानां त्वमेकामृतवर्षिणी । गलगण्डग्रहा रोगा ये चान्ये दारुणा नृणाम् । त्वदनुध्यानमात्रेण शीतले यान्ति संक्षयम् । न मन्त्रं नौषधं किंचित्पापरोगस्य विद्यते । त्वमेका शीतले धात्री नान्यां पश्यामि देवताम् । मृणालतन्तुसदृशीं नाभिहृन्मध्यसंस्थिताम् । यस्त्वां चिन्तयते देवि तस्य मृत्युर्न जायते । शीतले त्वं जगन्माता शीतले त्वं जगत्पिता । शीतले त्वं जगद्धात्री शीतलायै नमो नमः । शीतलाष्टकमेवेदं न देयं यस्य कस्यचित् । दातव्यं हि सदा तस्मै यः श्रद्धाभक्तिसंयुतः । श्रोतव्यं पाठितव्यं च श्रद्धाभक्तिसमन्वितैः । उपसर्गविनाशाय परं स्वस्त्ययनं महत् । रासभो गर्दभश्चैव खरो वैशाखनन्दनः । शीतलावाहनं चैव दूर्वाकन्दनकन्दनः । एतानि खरनामानि शीतलाग्रे च यः पठेत् । तस्य देहे च गेहे च शीतलारुङ्न जायते ।' इति शीतलाष्टकम् । 'ततः क्षमाप्य तां देवीं दद्याद्विप्राय दक्षिणाम् । सेचयेत्तेन तोयेन स्वात्मानं पतिपुत्रकम् । भोजनं यत्प्रकर्तव्यं तच्छृणु त्वं षडानन । भक्षयेद्वटकान्पूपांश्चैत्रे शीतजलान्वितान् । वैशाखे सक्तुकं तावत्साज्यं शर्करयान्वितम् । ज्येष्ठे शष्कुलिकाः शीताः पोलिकाश्च तथाविधाः । आषाढे पायसं साज्यं सितशर्करयान्वितम् । एतन्मासविधानं ते कथितं पार्वतीसुत । एवं या कुरुते नारी व्रतं वर्षचतुष्टयम् । तत उद्यापनविधिं वाञ्छितं फलमाप्नुयात् । तत्कुले नोपसर्पन्ति गलगण्डग्रहादयः । न च व्याधिभयं तस्याः पुत्रपौत्रसमन्विता । पतिसौख्ययुता साध्वी चि[र]कालं प्रमोदते ।' इति स्कन्दपुराणे शीतलास्तोत्रं समाप्तम् ।

चैत्रशुक्लाष्टम्यां भवान्या उत्पत्तिः । तत्राष्टमीयुक्ता नवमी, नवमी चाष्टमीयुक्तेति ब्र[ह्म]वैवर्तोयुग्मवाक्याच्च परा । अत्र भवानीयात्रोक्ता काशीखण्डे—'चैत्राष्टम्यां महाया[त्रां] भवान्याः कारयेत्सुधीः । अष्टाधिकाः प्रकर्तव्याः शतकृत्वः प्रद-

क्षिणाः । भवानीं यस्तु पश्येत शुक्लाष्टम्यां मधौ पुनः । न जातु शोकं लभते सदानन्दमयो भवेत् ।' इति ।

अत्रैवाशोककलिकाशनं लैङ्गे-'अशोककलिकाश्चाष्टौ ये पिबन्ति पुनर्वसौ। चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः । ' कौर्मे-' चैत्रे मासि सिताष्टम्यां बुधवारे पुनर्वसौ । अशोककुसुमै रुद्रमर्चयित्वा विधानतः । अशोकस्याष्ट कलिका मन्त्रेणोक्तेन भक्षयेत् । शोकं नैवाप्नुयान्मर्त्यो रूपवानपि जायते।' इति । अत्र पुनर्वसुयोगः प्राशस्त्यार्थः । ' तिथिः शरीरं देवस्य तिथौ नक्षत्रमाश्रितम् । तस्मात्तिथिं प्रशंसन्ति न नक्षत्रं तिथिं विना।' इति ज्योतिःशास्त्रादिति कृत्यरत्नावल्याम्।अत एव लिङ्गपुराणे-- 'अशोककलिकापानमशोकतरुपूजनम्। शुक्लाष्टम्यां तु चैत्रस्य कृत्वा प्राप्नोति निर्वृतिम् ।' इत्यत्र केवलाष्टम्युपादानम्।प्राशनमन्त्रस्तु लिङ्गपुराणे-'त्वामशोक हराभीष्ट मधुमाससमुद्भव।पिबामि शोकसंतप्तो मामशोकं सदा कुरु।'इति कूर्मपुराणोक्तस्तु- 'त्वामशोक नमाम्येनं मधुमाससमुद्भवम् । शोकार्तःकलिकां प्राश्य मामशोकं सदा कुरु।' इति । इत्यशोकाष्टमीव्रतम् । तिथितत्त्वे स्कान्दे-'मीने मधौ शुक्लपक्षे अशोकाख्यां तथाष्टमीम् । पिबेदशोककलिकां स्नायाल्लौहित्यवारिणि।' इति। अत्र मधुश्चान्द्रः पृथङ्मीनग्रहणात्।निर्णयसिन्धौ तिथितत्त्वे कालिकापुराणेऽपि-'चैत्रे मासि सिताष्टम्यां यो नरो नियतेन्द्रियः।'स्नायाल्लौहित्यतोयेषु स याति ब्रह्मणः पदम्। चैत्रं तु सकलं मासं शुचिःप्रयतमानसः। लौहित्यतोये यः स्नायात्स कैवल्यमवाप्नुयात्।'लौहितो ब्रह्मपुत्रः। स्नानमन्त्रस्तु-'ब्रह्मपुत्र महाभाग शन्तनोः कुलसंभव । अमोघगर्भसंभूत पापं लौहित्य मे हर।' इति । पृथ्वीचन्द्रोदये विष्णुः-'पुनर्वसुबुधोपेता चैत्रे मासि सिताष्टमी।प्रातस्तु विधिवत्स्नात्वा वाजपेयफलं भवेत्।'इति।निर्णयामृते-अस्यामेवाष्टम्यां महापूजा कार्या। तदुक्तं मार्कण्डेयपुराणे-'शरत्काले महापूजा क्रियते या च वार्षिकी । तस्यां ममैतन्माहात्म्यं श्रुत्वा भक्तिसमन्वितः।'इति । अत्र या च वार्षिकीत्यनेन संवत्सरस्यादौ चैत्रशुक्लप्रतिपदमुपक्रम्याष्टमीपर्यन्तं क्रियमाणा पूजाऽभिधीयते। ततश्च शरद्वसन्तयोस्तुल्य एव दुर्गोत्सवः । इति चैत्राष्टमीव्रतानि ।

अथ वैशाखशुक्लाष्टमीव्रतं निर्णयामृते-वैशाखशुक्लाष्टम्यामुपोषिता आम्रखारसेन स्नात्वाऽपराजिताख्यां देवीं मांसीवालकवारिभिः स्नापयित्वा शर्करासर्वसंतादत्वा नवम्यां तदेव ब्राह्मणान्कुमारीः भोजयित्वा पारणं कुर्यात् । मांसरूढे निम्ब-

वालकमुशीरम् । तदुक्तं देवीपुराणे—'सहकारफलैः स्नानं वैशाखस्याष्टमीदिने । आत्मानं देवतां स्नात्वा मांसीवालकवारिभिः । लेपनं फलकर्पूरं धूपं पञ्चसुगन्धिकम् ।' फलं जातीफलम्।पञ्चसुगन्धिकम्—'कङ्कोलपूगकर्पूरं जातीफललवङ्गके।सुगन्धपञ्चकं प्रोक्तमायुर्वेदप्रकाशके । देव्याः पूजां च कुर्वीत केतक्या पञ्चकेन तु । शर्कराक्षीरनैवेद्यं कन्याविप्रेषु भोजनम् । आत्मनः पारणं पश्चाद्दक्षिणां शक्तितो ददेत् । सर्वतीर्थाभिषेकं चानेन प्राप्नोति भार्गव ।' इति । इति वैशाखाष्टमीव्रतम् ।

ज्येष्ठशुक्लाष्टम्यां शिवपूजा कार्या । तदुक्तं भविष्योत्तरे—'ज्येष्ठे मासि द्विजश्रेष्ठ कृष्णाष्टम्यां त्रिलोचनम् । यः पूजयति देवेशमीशलोकं व्रजेन्नरः । इति । 'ज्येष्ठे मासि तथाषाढे श्रावणे च तथा परे । पूजयेच्चतुरो मासान्नीलोत्पलकदम्बकैः । त्रिपुरान्तकरं शंभुम् ।' इत्यादि । अस्यैव शुक्लाष्टम्यां शुक्लां देवीं पूजयेत् । तदुक्तं देवीपुराणे—'शुक्लाष्टम्यां पुरा देव शुक्ला देवी महाशनिम्।वधाय दानवेन्द्राणां शुक्लपक्षे ततो यजेत्। इति ज्येष्ठाष्टमी ।

आषाढशुक्लाष्टम्यामुपोष्य हरिद्रातोयेन स्नात्वा महिषघ्नीनाम्नीं देवीं तेनैव स्नापयेत् पूजयेत् । तदुक्तं देवीपुराणे—'अष्टम्यां च तथाषाढे निशातोयेन स्नापयेत् । स्वयं स्नात्वा च कर्पूरैश्चन्दनैस्तां विलेपयेत् ।' हेमाद्रिमदनरत्नयोस्तु—'अष्टम्यां च तथाषाढे निशातोयेन स्नापयेत् । ततो देवीं जलैः कुष्ठैर्वरदामुदकेन च । स्नात्वा विलिप्य कर्पूरं चन्दनै रोचनाम्बुभिः ।' इति पठितम् । 'धूपचन्दनकर्पूरवालकैः सितसिल्हकैः । भक्ष्याञ्छर्करया पूर्णान्यावकानि शुभानि च । दापयेत्कन्यकाविप्रान्भोजनं चात्मनस्तदा । शक्तितो दक्षिणां दद्यान्महिषघ्नीं च कीर्तयेत्। दीपमाला घृतेनैव सर्वान्कामान्प्रयच्छति । सर्वयज्ञमहादानसर्वतीर्थफलं लभेत् । एतद्व्रतवरं शुक्र मया रुद्रेण विष्णुना । जगतो हितमिच्छद्भिश्चीर्णं दुर्गाव्रतं महत् । भानुना ग्रहविध्वंससमरे च कृतं पुरा। तथा देवासुरैर्यक्षनागकिंनरमानवैः । अप्सरोभिस्तथा स्त्रीभिः सौभाग्यस्य विवृद्धये । कृतं वै ग्रहशार्दूल यश्च कुर्याद्यथाविधि । श्रवणादस्य चाप्नोति सर्वान् सुखानि च । इष्टानि लभते मर्त्यो वन्ध्या पुत्रं प्रसूयते।' इति महिषघ्नीव्रतम् ।

श्रावणशुक्लाष्टम्यां देवीपुराणोक्तं दुर्गाव्रतम् । 'देवीव्रतं प्रवक्ष्यामि सर्वकाम-

कृति व्र॰

पां महाय।जगाहेति शेष. ।

प्रसाधनम् । श्रावणे शुक्लपक्षे तु अष्टम्यां वायुभोजनः । [१] स्नात्वा सार्द्रपटो भूत्वा देवीं क्षीरेण संस्नाप्य पायसनैवेद्यं दत्त्वा स्वयं भुञ्जीत । इति दुर्गाव्रतम् ।

अथ जन्माष्टमी निर्णीयते । सा चामान्तमासपक्षे श्रावणकृष्णाष्टमी, पूर्णिमान्तभाद्रपदमासपक्षे कृष्णाष्टमी । उभयथाप्येकैव । उभयविरोधोऽपि स्मार्तव्यवहारो दर्शयिष्यते । सा च द्विविधा, शुद्धा विद्धा च । तत्र शुद्धायामष्टौ भेदाः, विद्धायां चाष्टौ । तत्र सप्तमीयोगरहिता शुद्धा, सप्तमीयुक्ता विद्धा, । शुद्धा च त्रिविधा । समा, न्यूना, अधिका चेति । तत्र सूर्योदयादुदयपर्यन्तं स्थिता समा । ततोऽर्वाङ्निवृत्ता न्यूनामतिक्रम्य प्रवृत्ता अधिका । विद्धाऽपि समन्यूनाधिकभेदेन त्रिधा । तत्र शुद्धासमा रोहिणीसहिता तद्रहिता चेति द्विविधा।शुद्धन्यूनाऽपि रोहिणीसहिता तद्रहिता चेति द्विविधा । शुद्धाधिका तु पूर्वदिन एव रोहिणीसहिता परदिन एव रोहिणीसहिता उभयत्र रोहिणीसहिता चेति चतुर्विधा । एवं विद्धसमापि रोहिणीसहिता तद्रहिता चेति द्विविधा। विद्धन्यूनापि रोहिणीसहिता तद्रहिता चेति द्विविधा । विद्धाधिका तु पूर्वदिन एव रोहिणीसहिता, परदिन एव रोहिणीसहिता, उभयत्र रोहिणीसहिता, उभयत्र रोहिणीरहिता चेति चतुर्विधा । एवं विद्धाप्यष्टविधा । उभयेषां शुद्धविद्धाभेदानां मेलने षोडशप्रकारा भवन्ति । द्वावन्याववान्तरभेदौ । यथा अर्धरात्रे रोहिणीयुक्ताष्टमी जयन्तीत्येकः । द्वितीयो नवमीयुक्ताष्टम्यां बुधवारसोमवारयोरन्यतरेण योगे । एवमष्टादशप्रकारा जन्माष्टमी । तत्र सकामैर्निष्कामैश्च सर्वथोपवासः कर्तव्यः । ‘ गृध्रमांसं खरं काकं श्येनं वा मुनिसत्तम । मांसं च द्विपदं भुङ्क्ते कृष्णजन्माष्टमीदिने।’ तथा—‘जन्माष्टम्या दिने प्राप्ते येन भुक्तं द्विजोत्तम । त्रैलोक्यजनितं पापं भुक्तं तेन न संशयः । ये न कुर्वन्ति जानन्तः कृष्णजन्माष्टमीव्रतम् । ते भवन्ति महाप्राज्ञ व्याला महति कानने । श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम् । न करोति नरो यस्तु सभवेद्‌क्रूरराक्षसः । अकुर्वन्नरकं याति यावदिन्द्राश्चतुर्दश । अतीतानागतं तेन कुलमेकोत्तरं शतम् । पातितं नरके घोरे यो भुङ्क्ते कृष्णवासरे । रटन्तीह पुराणानि भूयोभूयो महामुने । ’ तथा—‘ कृष्णजन्माष्टमीं त्यक्त्वा येऽन्यद्व्रतमुपासते । नाप्नुवन्ति शुभं किंचिदिष्टापूर्तमथापि वा । श्रावणे बहुले पक्षे न करोति यदाऽष्टमीम्। क्रूरायुधाः क्रूरमुखा हिंसन्ति यमकिंकराः ।’ इत्यादिवाक्यैरकरणे प्रत्यवायश्रवणात् । ‘वर्षे वर्षे

---

१—“ पिता माता च भार्या च भगिनी दुहिता तथा । पितृमातृस्वसारौ च सप्त गोत्राणि वै विदुः । तत्रापि विंशतिर्नृपा द्वादशैकादश दश । अष्टाविंति च गोत्राणि कुलमेकोत्तरं शतम् । ” इति ।

तु या नारी कृष्णजन्माष्टमीव्रतम्। न करोति महाप्राज्ञ व्याली भवति कानने। वर्षे वर्षे तु कर्तव्यं तुष्ट्यर्थं चक्रपाणिनः।' इत्यादिस्कान्दादिवाक्येषु वीप्साश्रुतेश्च। वक्ष्यमाणजयन्तीव्रतमनित्यम्। 'यद्बाल्ये यच्च कौमारे यौवने वार्धके तथा। बहुजन्मकृतं पापं हन्ति सोपोषिता तिथिः। सप्तजन्मकृतं पापं राजन्यत्त्रिविधं नृणाम्। तत्क्षालयति गोविन्दस्तिथौ तस्यां समर्चितः। उपवासश्च तत्रोक्तो महापातकनाशनः। जयन्त्यां जगतीपाल विधिना नात्र संशयः।' इति वह्निपुराणवचनेन, तथा—'शूद्रान्नेन तु यत्पापं शवहस्तस्थभोजने[1]। तत्पापं लभ्यते पुंभिर्जयन्त्यां भोजने कृते।' इति स्कन्दपुराणवचनेन, तथा—'ब्रह्मघ्नश्च सुरापश्च गोवधे स्त्रीवधेऽपि वा। न लोको मुनिशार्दूल जयन्तीविमुखस्य च। न करोति यदा विष्णोर्जयन्तीसंभवं व्रतम्। यमस्य वशमापन्नो महतीं नारकीं व्यथाम्। जयन्तीवासरे प्राप्ते करोत्युदरपूरणम्। पाच्यते तिलमात्रं तु यमदूतैः कलेवरम्। यो भुञ्जीत विमूढात्मा जयन्तीवासरे नृप। नरकोत्तरणं नास्ति द्वादशीमपि कुर्वतः।'इत्यादिवचनैश्च तदकरणे दोषश्रवणात्।जन्माष्टमीव्रतं काम्यमपि, फलश्रवणात्। तथा च स्कान्दे—'व्रतेनाराध्य देवेशं देवकीसहितं हरिम्। त्यक्त्वा यमपथं घोरं याति विष्णोः परं पदम्। जन्माष्टमीव्रतं ये वै प्रकुर्वन्ति नरोत्तमाः। कारयन्त्यथवा लोकाँल्लक्ष्मीस्तेषां सदा स्थिता। स्मरणं वासुदेवस्य मृत्युकाले भवेन्मुने।सिध्यन्ति सर्वकार्याणि कृते जन्माष्टमीव्रते।'इत्यादि।तथा जयन्तीव्रतमपि-'महाजयार्थं कुरुतां जयन्तीं मुक्तयेऽनघ। धर्ममर्थं च कामं च मोक्षं च मुनिपुङ्गव। ददाति वाञ्छितानर्थान्ये चान्येऽप्यतिदुर्लभाः।' इति स्कान्दादौ फलश्रुतेः। तथा भविष्योत्तरे जयन्तीकल्पेऽपि—'प्रतिवर्षं विधानेन मद्भक्तो धर्मनन्दन। नरो वा यदि वा नारी यथोक्तं फलमाप्नुयात्।पुत्रसंतानमारोग्यं सौभाग्यमतुलं लभेत्। इह धर्मरतिर्भूत्वा मृतो वैकुण्ठमाप्नुयात्।'इत्यादि। तत्रादौ जयन्तीस्वरूपं तावन्निरूप्यते।माधवीये विष्णुधर्मोत्तरे—'रोहिणी च यदा कृष्णे पक्षेऽष्टम्यां द्विजोत्तम। जयन्ती नाम सा प्रोक्ता सर्वपापहरा तिथिः।'इति। सनत्कुमारसंहितायाम्—'शृणुष्वावहितो राजन्कथ्यमानं मयाऽनघ। श्रावणस्य च मासस्य कृष्णाष्टम्यां नराधिप। रोहिणी यदि लभ्येत जयन्ती नाम सा तिथिः।'इति। स्कान्दे—'प्राजापत्येन संयुक्ता अष्टमी तु यदा भवेत्। श्रावणे बहुले सा तु सर्वपापप्रणाशिनी। जयं पुण्यं च कुरुते जयां पुण्यां च तां विदुः।' इति। शैवपुराणेऽपि शिववाक्यम्—'शृणु वत्स प्रवक्ष्यामि अष्टमीभेदनिर्णयम्।

1— शवहस्तस्थ भोजने शवस्पृष्टाद्धिःस्तस्थभोजने इत्यर्थः।

श्रावणे कृष्णपक्षस्य घटी षष्टी यदा भवेत्। तदा जन्माष्टमी ख्याता संपूर्णा सा प्रकीर्तिता। रोहिणीऋक्षसहिता जयन्ती सा तु कथ्यते। जयन्ती यदि लभ्येत तत्र पुण्यं न गण्यते।' इति। विष्णुरहस्ये–'अष्टमी कृष्णपक्षस्य रोहिणीऋक्षसंयुता। भवेत्प्रौष्ठपदे मासि जयन्ती नाम सा स्मृता।' इति। वसिष्ठसंहितायाम्–'श्रावणे वा नभस्ये वा रोहिणीसहिताऽष्टमी। यदा कृष्णा नरैर्लब्धा सा जयन्तीति कीर्तिता। श्रावणे न भवेद्योगो नभस्ये तु भवेद्ध्रुवम्। तयोरभावे योगस्य तस्मिन्वर्षे न संभवः।' इति। अत्र श्रावणे इति मुख्यः कल्पः नभस्य इत्यनुकल्पः। यदि वा श्रावणे यदि वा नभस्ये सर्वथापि रोहिणी। कृष्णजन्माष्टमीयोगो जयन्तीत्येतदविवादम्। पुराणान्तरेऽपि–'रोहिणी च यदा कृष्णे पक्षेऽष्टम्यां द्विजोत्तम। जयन्ती नाम सा प्रोक्ता सर्वपापहरा तिथिः।' इति। अत्र यद्यपि सामान्यतः कृष्णाष्टमी रोहिणीजयन्तीत्युक्तमिति प्रतिभाति तथापि पूर्वोक्तवचननिचयपर्यालोचनयाऽत्रत्याष्टमीपदस्य जन्माष्टमीपरतयाऽनेनापि वचनेन जन्माष्टमीरोहिणीयोगस्य जयन्तीत्वमुक्तम्। अत्र केवलेनोपवासेनेति वाक्येन केवलोपवासस्य फलसंबन्धप्रतीतेरुपवास एव प्रधानं, पूजादेः स्पष्टतृतीयाश्रुत्या फलसंबन्धानवगमात्तदङ्गत्वम्। 'तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम्।' इत्यादिफलश्रवणं तु पर्णमयीन्यायेन स्तुतिमात्रमिति प्राञ्चः। उपवासः पूजा चेत्युभयं प्रधानं जन्माष्टमीप्राप्ते इति स्कान्दात्। 'अर्धरात्रे तु रोहिण्यां यदा कृष्णाष्टमी भवेत्। तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम्। सोपवासो हरेः पूजां कृत्वा तत्र न सीदति।' इति भविष्यपुराणाच्च तयोरेव फलसंबन्धावगमादिति कालतत्त्वविवेचने। अत्र केचित्। यत्तु मयूखे–सोपवासो हरेः पूजामित्यत्र 'मासे भाद्रपदेऽष्टम्यां कृष्णपक्षेऽर्धरात्रके। शशाङ्के वृषराशिस्थे ऋक्षे रोहिणिसंज्ञके। योगेऽस्मिन्वसुदेवाद्धि देवकी मामजीजनत्। तस्मान्मां पूजयेत्तत्र शुचिः सम्यगुपोषितः।' इत्यादौ उपवासस्य गुणप्रतीतेःसद्तो धावतीत्यादिवत्फलसंस्कारः पूजैव प्रधानमिति तदापाततः। 'केवलेनोपवासेन तस्मिञ्जन्मदिने मम। शतजन्मकृतात्पापान्मुच्यते नात्र संशयः।' इति वचने केवलोपवासस्य फलसंबन्धश्रवणात्। 'अर्धरात्रे तु रोहिण्यां यदा कृष्णाष्टमी भवेत्। तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम्।' इत्यत्र पूजायाः केवलाया इव 'जयन्त्यामुपवासश्च महापातकनाशनः। सर्वैः कार्यो महाभाग पूजनीयश्च केशवः।' इति भविष्यद्विष्णुधर्मयोरप्येकवाक्ये फलसंबन्धश्रवणाच्च। अत एव प्रयोगभेदकल्पनापत्तिरपि परास्ता। यत्राप्येकैकस्य श्रवणं तत्राप्यपरस्योपलक्षणीयत्वाच्च। 'सोपवासो

हरेः पूजाम्।इत्यत्र 'शुचिः सम्यगुपोषितः'इत्यत्र चोपवासस्य विशेषणत्वेनोपादानेऽपि प्राधान्यं न विहन्यते । यजतावुद्देशवत् । एवं च सति 'वासुदेवं समुद्दिश्य सर्वपापप्रशान्तये । उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहम् ।' इति भविष्योक्तेः । संकल्पवाक्ये यदुपवासमात्रग्रहणं तत्पूजाया अप्युपलक्षणम् । विध्यनुसारित्वात्संकल्पस्य । एवं सति वासुदेवं समुद्दिश्येत्यप्याञ्जस्येनान्वेति।पूजायां तस्योद्देश्यत्वादुपवास उद्देश्यानपेक्षणात्।वासुदेवशब्देन तत्प्रतीतिलक्षणायां च तदपेक्षया जघन्ये उपवासपदम्।एवंयथाश्रुततदन्वयार्थं पूजालक्षणायामुक्तत्वात् ।उपवासोपसर्जनकपूजालक्षणायां वासुदेवं समुद्दिश्येत्यस्य विशेषपूजान्वयोपपत्तेः । अत एव द्वितीयसंकल्पवाक्ये 'अर्चयित्वोपवासेन भोक्ष्येऽहमपरेऽहनि ।' इति पूजाया अप्युल्लेखः । तस्मादुभयमपि प्रधानम् । स्मृतिकौस्तुभे मदनरत्नाद्युदाहृतभविष्योत्तरस्थजन्माष्टमीशास्त्रे तावदालोच्यमाने 'कीदृशं तद्व्रतं देव सर्वैर्देवैरनुष्ठितम्।'इत्युपक्रम्य 'प्रसङ्गेनापि यो भक्त्या व्रतं पश्येज्जनाकुलम्।' इत्युपसंहाराज्जन्माष्टमीसंज्ञकव्रतस्यैव प्राधान्यमिति प्रतीयते । व्रतशब्दश्च मानससंकल्पवाचित्वेन स्नातकव्रतप्रकरणेऽभियुक्तैर्व्याख्यातः । किंविषयकः स संकल्प इत्याकाङ्क्षायां यावत्योऽन्तराले उपवासपूजादयः फलसंबन्धितया निविष्टाः क्रियास्तावत्यो विषयत्वेन संबध्यन्ते । यावद्विषयसंकल्पस्य फलसंबन्धज्ञापन एव सकलश्रुतीनां जातेष्टिफलश्रुतीनामिव तात्पर्यावगमात्संभवन्ति ।न चैवं सति कल्पाङ्गमन्त्र उपवासशब्दे नप्रधानक्रियाप्रकाशनमुपवासो नाम सेतिकर्तव्यताको भोजनसंकल्पइति हेमाद्र्यादिभिरुक्तत्वात् । तस्मात्संकल्पस्यैव प्राधान्यमिति । एतेन जयन्तीव्रतमपि व्याख्यातम् । तत्रापि व्रतशब्देनोपक्रमोपसंहारादिति । न चैवमष्टमीरोहिणीति वसिष्ठवचनेऽर्धरात्रस्य मुख्यकालत्वाभिधानमनुपपन्नमिति वाच्यम् । मुख्यस्य काल इति तत्पुरुषापेक्षया मुख्यः काल इति कर्मधारयस्य स्थपत्यधिकरणन्यायेनौचित्यात्।कालस्य मुख्यत्वं च स्वव्याप्त्या असाधारण्येन निर्णायकत्वमतो नानुपपत्तिरित्युक्तम् । अस्याश्च पूजायाः काल उक्तो विष्णुधर्मोत्तरे—' रोहिणीसहिता कृष्णा मासि भाद्रपदेऽष्टमी । सप्तम्यामर्धरात्राधः कलयापि यदा भवेत् । तत्र जातो जगन्नाथः कौस्तुभी हरिरीश्वरः । तमेवोपवसेत्कालं तत्र कुर्याच्च जागरम् । अर्धरात्रे तु योगोऽयं तारापत्युदये तथा । नियतात्मा शुचिः स्नातः पूजां तत्र प्रवर्तयेत् ।' इति । वसिष्ठस्तु स्पष्टमर्धरात्रस्य मुख्यकालत्वमाह— ' अष्टमी रोहिणीयुक्ता निश्यर्धे दृश्यते यदि । मुख्यकालः स विज्ञेयस्तत्र जातो हरिः स्वयम् ।' इति ।मुख्यस्य प्रधानस्य कालो मुख्यकालः ।

श्रीमद्भागवते दशमस्कन्धे तृतीयाध्यायेऽपि—'अथ सर्वगुणोपेतः कालः परमशोभनः। यर्ह्येवाजनजन्मर्क्षं शान्तर्क्षग्रहतारकम्।' इत्युपक्रम्य 'निशीथे तमउद्भूते जायमाने जनार्दने। देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः। आविरासीत्' इत्यादि। अजनजन्मर्क्षं रोहिणी। यद्यपि 'त्रिकालं पूजयेद्देवं दिवा रात्रौ विशेषतः। 'अर्धरात्रेऽपि च तथा पुष्पैर्नानाविधैरपि।' इति भविष्ये अन्यकालेऽपि पूजोक्ता। उपवासश्चाहोरात्रावच्छिन्नाभोजनरूपस्तथाप्यर्धरात्रकालावच्छिन्नैव पूजा प्रधानम्। तथा च भविष्योत्तरे—'मासि भाद्रपदेऽष्टम्यां निशीथे कृष्णपक्षगे। शशाङ्के वृषराशिस्थे ऋक्षे रोहिणिसंज्ञके। योगेऽस्मिन्वसुदेवाद्धि देवकी मामजीजनत्। तस्मान्मां पूजयेत्तत्र शुचिः सम्यगुपोषितः। ब्राह्मणान्भोजयेद्भक्त्या ततो दद्याच्च दक्षिणाम्। हिरण्यं मेदिनीं गावो वासांसि कुसुमानि च। यद्यदिष्टतमं तत्तत्कृष्णो मे प्रीयतामिति।' नारदीयसंहितायामपि—'उपोष्य जन्मचिह्नानि कुर्याज्जागरणं तु यः। अर्धरात्रयुताष्टम्यां सोऽश्वमेधफलं लभेत्।' इति। एवं सत्यर्धरात्रेऽष्टमीसद्भाव एवात्र कर्मकालव्याप्तिरित्यभिधीयते। एतदेवाभिप्रेत्य विष्णुरहस्ये पठ्यते अर्धरात्रे तु रोहिण्यामित्यादि। तस्मिन्नर्धरात्रे पूर्वापरभागयोः कियत्परिमाणमपेक्षितमित्यपेक्षायामादित्यपुराणे दर्शितम्— 'अर्धरात्रादधश्चोर्ध्वं कलयापि यदा भवेत्। जयन्ती नाम सा प्रोक्ता सर्वपापप्रणाशिनी।' इति। वराहसंहितायामपि—'सिंहेऽर्के रोहिणीयुक्ता नभः कृष्णाष्टमी यदि। रात्र्यर्धपूर्वापरगा जयन्ती कलयापि च।' इति। रात्रेरर्धं रात्र्यर्धं पूर्वं च अपरं च पूर्वापरे रात्र्यर्धे च ते पूर्वापरे च तयोर्गच्छति वर्तते इति रात्र्यर्धपूर्वापरगा। योगीश्वरोऽपि 'रोहिणीसहिता कृष्णा मासे च श्रावणेऽष्टमी। अर्धरात्रादधश्चोर्ध्वम्' इत्यादि। कलाया अतिसूक्ष्मत्वेन दुर्लक्षत्वात्स एव पक्षान्तरमाह—'अर्धरात्रादधश्चोर्ध्वमेकार्धघटिकान्विता। रोहिणी चाष्टमी ग्राह्या उपवासव्रतादिषु।' इति। एका चार्धघटिका चैकार्धघटिके ताभ्यामन्विता। कलामपेक्ष्यार्धघटिका स्थूला तामपेक्ष्य घटिका स्थूला। तत्रायमर्थः संपद्यते पूर्वभागावसान एका घटिका उत्तरभागादौ चैकेति मिलित्वा तन्निशीथशब्दवाच्यं मुहूर्तं तत्परिमाणं सर्वैरपि सुलक्ष्यत्वान्मुख्यः कल्पः। तदसंभवे घटिकाऽर्धघटिकाऽन्वेष्टव्या तस्याप्यसंभवे कलेति। तत्र मुख्यं पक्षमभिप्रेत्य विष्णुधर्मोत्तरे निशीथे कृष्णपक्षगे इत्युक्तम्। तच्च वचनं साकल्येन पूर्वमेवोदाहृतम्। अत्र जयन्त्यां चन्द्रार्घ्यस्यावश्यं कर्तव्यत्वात्तस्य च चन्द्रोदयकालीनत्वान्निशीथे योगः प्रशस्तः। एतदेव माधवीये विष्णुधर्मोत्तरेऽभिहितम्।

अर्धरात्रे तु योगोऽयमित्यादि। सोऽयमर्धरात्रयोगो मुख्यः कल्पः। यस्तु कृत्स्नाहोरात्रयोगः सोऽयं मुख्यतरः । यश्च यदा कदाचिदीषद्योगः सोऽनुकल्पः । स च वसिष्ठसंहितायां दर्शितः—'अर्धरात्रे तयोर्योगो ह्यसंपूर्णो भवेद्यदि । मुहूर्तमप्यहोरात्रे योगश्चेत्तामुपोषयेत्।' इति । 'वासरे वा निशायां वा यत्र स्वल्पाऽपि रोहिणी।विशेषेण नभोमासे सैवोपोष्या मनीषिभिः।' इति । योऽयं जयन्तीयोगनिर्णयः जन्माष्टमीव्रतेऽपि द्रष्टव्यः । यस्मिन्वत्सरे योगो नास्ति तस्मिन्वत्सरे जन्माष्टमीव्रतमेकमेव प्रवर्तते । यदा च पूर्वेद्युः परेद्युर्वा रोहिणीयोगस्तदा जन्माष्टमी जयन्त्यामन्तर्भूता ज्ञेया न तु जन्माष्टमीव्रतं पृथक्कार्यम् । तदुक्तं माधवेनैव 'यस्मिन्वर्षे जयन्त्याख्यो योगो जन्माष्टमी तदा।अन्तर्भूता जयन्त्या स्यादृक्षयोगप्रशस्तितः।' इति । मदनरत्ननिर्णयामृतगौडमिथिलमतेऽप्येवम् । निर्णयसिन्धौ तु हेमाद्रिस्तु 'रोहिणीसंयुतोपोष्या सर्वाघौघविनाशिनी।अर्धरात्रादधश्चोर्ध्वम्।'इत्यग्निपुराणादर्धरात्र एव रोहिणीयोगस्य प्राशस्त्यान्मुहूर्तमपि लभ्यते इत्यादीनां चार्धरात्रयोगेऽप्युपपत्तेर्न जयन्तीव्रतं भिन्नम् । किंच रोहिण्यामर्धरात्रे चेति विष्णुधर्मोक्तेः । 'समायोगे तु रोहिण्यां निशीथे कार्यसत्तमः । समजायत गोविन्दो बालरूपी चतुर्भुजः । तस्मात्तं पूजयेत्तत्र यथा वित्तानुरूपतः ।' इति वह्निपुराणाच्चार्धरात्रस्य कर्म कालत्वमवसीयते । अतः 'कर्मणो यस्य यः कालः' इत्यादिवचनात्पूर्वत्रैव प्राप्ते परदिने सतोऽपि रोहिणीयोगस्य न प्रयोजकता अन्यथा बुधवारादेरपि तत्त्वापत्तेः किंच जयन्तीशब्दो रात्रिविशेषवचनः । 'अभिजिन्नाम नक्षत्रं जयन्ती नाम शर्वरी । मुहूर्तो विजयो नाम यत्र जातो जनार्दनः ।' इति ब्रह्माण्डपुराणात् । तेन तद्योगिरोहिण्या गौणत्वान्न व्रतभेद इत्यूचिवानिति स्थितम् । यत्तु निर्णयसिन्धौ रोहिणीयोगश्चाहोरात्रे मुख्यः, निशीथे मध्यमः, दिवसादावधमः। 'अर्धरात्रे तयोर्योगो ह्यसंपूर्णो भवेद्यदि । मुहूर्तमप्यहोरात्रे योगश्चेत्तामुपोषयेत् ।' इति वसिष्ठसंहितोक्तेः इत्याद्युक्तम् । तत्तुच्छम् । माधवाचार्यधृतवसिष्ठसंहितोक्ताष्टमी रोहिणीयुक्तेति मुख्यत्वबोधकवचनविरोधात् पूर्वोक्तमाधवग्रन्थविरोधाच्चेत्यलम् ।

तदेवं कर्मकाले निरूपिते वक्ष्यमाणव्यवस्थोपयोगित्वेन वेधो निरूप्यते । स चात्र तिथ्यन्तरवदष्टम्यादिप्रवेशे सत्येव न, किंतु रात्रिमात्रसत्त्वेऽपि भवत्येव।पूजारूपस्य प्रधानस्यार्धरात्रसाध्यत्वात् । 'अहःसु तिथयः पुण्याः' इति वचनाच्च । अन्यत्रापि— अष्टमी शिवरात्रिश्च ह्यर्धरात्रादधो यदि । दृश्यते घटिकायां सा पूर्वविद्धा प्रकीर्तिता।'

इति। इदमर्धरात्रात्पूर्वं घटिकासद्भाववचनं सर्वकृष्णाष्टमीसाधारणम् । जन्माष्टम्यां तु कलासद्भावोऽपि पूर्वोक्तविष्णुधर्मोत्तरादिवचनेष्वभिहितः । तदेवंविधे निर्णीते संप्रति पूर्वोक्तभेदेषु व्यवस्थोच्यते। तत्र शुद्धयोः समन्यूनयो रोहिणीसहितयोस्तद्रहितयोर्वा न विवादः । उत्तरदिनेऽष्टम्यभावात् । एवं विद्धयोरपि समन्यूनयोर्न विवादः। शुद्धाधिका विद्धाऽधिका वा यदाऽन्यतरस्मिन्नेव दिने रोहिणीसहिता तदा सैव ग्राह्या 'जन्माष्टम्यां भवेदत्र कलैका रोहिणी नृप।जयन्ती नाम सा ज्ञेया उपोष्या सा प्रयत्नतः। सप्तजन्मकृतं पापं राजन्यत्त्रिविधं भवेत् । तत्क्षालयति गोविन्दस्तिथौ तस्यां सुभावितः।' इति वह्निपुराणवचनात् । कालतत्त्वविवेचने—उत्तरदिने एव रोहिणीयोगे निशीथव्यापिनीमपि किं बहुना शुद्धामपि पूर्वां परित्यज्योत्तरैव जन्माष्टमीव्रते ग्राह्या। ननु चार्धरात्रस्य कर्मकालत्वं तावत्स्थितम् । कर्मकालव्याप्तिशास्त्रस्य च सर्वापेक्षया बलवत्त्वमुपपादितमेव।रोहिणीयोगे तु प्राशस्त्यात्फलातिशयमात्रं न तु तस्य निर्णयोपयोगिता नवमी बुधवारादियोगवत्।अन्यथा-'प्रेतयोनिगतानां तु प्रेतत्वं नाशितं नरैः।यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता।किं पुनर्बुधवारेण सोमेनापि विशेषतः । किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा।'इति पद्मपुराणवचनात्पूर्वार्धरात्रे वर्तमाना रोहिणीयुक्तामप्यष्टमीं विहाय बुधवारादियुक्ता परा कर्तव्या स्यादिति । अत्रोच्यते । कर्मकालव्याप्तिशास्त्रादेव प्रधानभूताया अष्टम्या अर्धरात्रत्त्वेन प्राप्तं ग्राह्यत्वम् ।' दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणीकला।' रात्रियुक्तां प्रकुर्वन्ति विशेषेणेन्दुसंयुता ।' इति वचनेन रोहिणीयोगाभावो विषयी क्रियते । एवं हि तस्यार्थः । दिवावच्छेदेन कलामात्रापि चेद्रोहिणी अष्टम्यां नास्ति तदैव चन्द्रोदयसंयुताम् अर्धरात्रव्यापिनीमिति प्रकुर्वीतेति दिनद्वयेऽपि तादृश्या अभावे बहुरात्रिसंयुतामुत्तरां प्रकुर्वीतेति विष्णुरहस्यादिगतं मुहूर्तादिपदमर्धरात्रगततत्परमिति त्वत्यन्ताशुद्धम् । तथात्वे वाक्यस्यैवानर्थक्यप्रसङ्गात् । यदा हि शुद्धाऽप्यष्टमी अर्धरात्रे वर्तमाना ग्राह्या तदा रोहिणी सहितामुत्तरामिति किं वचनेन । मुहूर्तमप्यहोरात्रे इति वचने तु स्पष्टैवाहोरात्रसंबन्धियत्किंचिन्मुहूर्तप्रतीतिः । 'उदये चाष्टमी किंचिन्नवमी सकला यदि।' इत्यत्र च सूर्योदयप्रतीतिः। तेन रोहिणीरहिताया निशीथव्यापिन्या अपवादेन निर्णायक एव रोहिणीयोगो न तु बुधवारादिवत्प्राशस्त्यमात्रहेतुरित्यपि युक्तम् । रात्रियुक्तां प्रकुर्वीत, तामुपावसेत्, उपोष्या सा

१–जन्माष्टम्यां कृष्णजन्माष्टम्याम्।

प्रयत्नतः, इत्यादिनिर्णयत्वस्यैव प्रतीतेः । बुधवारादियोगवाक्येषु तु प्राशस्त्यमात्रप्रतीतेरिति । मयूखे तु—यदा पूर्वेद्यू रोहिणीरहिता निशीथगा च तिथिः परेद्यू रोहिणीसहिता निशीथास्पृक्च तदा पूर्वैव ग्राह्या कर्मकालशास्त्रस्य सर्वापेक्षया प्राबल्यस्य सर्वग्रन्थसिद्धत्वात्।रोहिणीयोगे तु प्राशस्त्यात्फलातिशयमात्रं न तु तस्य निर्णयोपयोगिता। नवमीबुधवारवत् । अन्यथा प्रेतयोनिगतानामिति पाद्मवचसा पूर्वेद्युरर्धरात्रे वर्तमानां सरोहिणीमप्यष्टमीं त्यक्त्वा बुधनवमीयुता परैव कार्येत्यापादयेतेति । निर्णयसिन्धावपि यदा पूर्वेद्युर्निशीथेऽष्टमी परेह्नि रोहिणी तदा परेद्युर्जयन्तीयोगस्य सत्त्वात्परैवेति माधवः। तदुक्तं तेनैव 'यस्मिन्वर्षे जयन्त्याख्ये' इति । 'पूर्वविद्धाऽष्टमी या तु ह्युदये नवमीदिने मुहूर्तमपि संयुक्ता संपूर्णा साऽष्टमी भवेत् । कला काष्ठा मुहूर्ताऽपि यदा कृष्णाष्टमी तिथिः । नवम्यां सैव ग्राह्या स्यात्सप्तमीसंयुता न हि ।' इति पाद्मोक्तेश्च । केचित्तु—हेमाद्रौ—अष्टम्याः प्राधान्यात्तस्याश्च पूर्वेद्युः कर्मकालव्यापित्वात्पूर्वैव । पाद्मं तु पूर्वेऽह्नि निशीथेऽप्यष्टम्यभावे ज्ञेयम् । अन्तर्भावोक्तिस्तु मूर्खदर्पणमात्रमित्याहुः । तत्त्वं त्वष्टम्याः कर्मकालव्याप्तेर्दिवा वा यदि वेति वाक्ये रोहिणीयुताया ग्राह्यत्वोक्तेर्वचनात्कर्मकालव्यापिनीं त्यक्त्वा पूर्वा परा वाऽल्पापि रोहिणीयुता ग्राह्येति । वस्तुतस्तु उपवासद्वयं कार्यं द्वयोर्नित्यत्वादिति स्थितम् । शुद्धादिका यदा पूर्वस्मिन्दिने निशीथे रोहिणीयुक्ता उत्तरदिनेऽपि तद्युक्ता तदा पूर्वैव ग्राह्या । 'रोहिण्यामर्धरात्रे च यदा कृष्णाष्टमी भवेत् । सोपवासो हरेः पूजां कृत्वा तत्र न सीदति।' इति विष्णुधर्मोत्तरवचनात् । यदा तु शुद्धाधिकायां दिनद्वयस्यार्धरात्रं विहाय रोहिणीयोगस्तदापि पूर्वैव ग्राह्या । तस्याः सर्वाहोत्राव्याप्तिप्रथमातिक्रमे कारणाभावाच्च । यदा तु शुद्धाधिका दिनद्वयेऽपि रोहिणीरहिता तदाप्यहोरात्रव्यापित्वात्पूर्वैव ग्राह्या । दिवा वेति वचनाच्च । विद्धाधिका तु यदा पूर्वस्मिन्नेव दिने निशीथे रोहिणीयुक्ता नान्तरे तु निशीथं विहाय रोहिणीयुक्ता तदा पूर्वैव ग्राह्या । 'सप्तमीसंयुताष्टम्यां निशीथे रोहिणी यदि । भविता साऽष्टमी पुण्या यावच्चन्द्रदिवाकरौ ।' इति वह्निपुराणवचनात् । पद्मपुराणेऽपि—'कार्या विद्धाऽपि सप्तम्यां रोहिणीसहिताष्टमी । तत्रोपवासं कुर्वीत तिथिभान्ते च पारणम् ।' इति । आदित्यपुराणेऽपि—'विना ऋक्षं न कर्तव्या नवमीसंयुताऽष्टमी । कार्या विद्धापि सप्तम्यां रोहिणीसहिताष्टमी । तत्रोपवासं कुर्वीत तिथिभान्ते च पारणम्।' इति । विष्णुधर्मोत्तरे—'जयन्ती शिवरात्रिश्च कार्ये भद्राजयान्विते।कृत्वोपवासं तिथ्यन्ते तथा कुर्याच्च पारणम्।'इति।'जन्माष्टमी जयन्ती च शिव-

रात्रिस्तथैव च। पूर्वविद्धेव कर्तव्या तिथिभान्ते च पारणम्।' इति जयन्त्या पूर्वविद्धाया- मुपवासं समाचरेत्।' इति गारुडाच्च। यदा तु विद्धाधिकोत्तरस्मिन्नेव दिने निशीथे रोहि- णीसहिता पूर्वदिने तु निशीथं विहाय रोहिणीसहिता तदोत्तरैव ग्राह्या। 'मासि भाद्रपदेऽ- ष्टम्यां कृष्णपक्षेऽर्धरात्रके। शशाङ्के वृषराशिस्थे प्राजापत्यर्क्षसंयुते। उपोषितोऽर्चयेद्विष्णुं यशोदां देवकीं तथा।' इति भविष्योत्तरवाक्यात्। यदा विद्धाधिका दिनद्वयेऽप्यर्ध- रात्रे रोहिणीयुक्ता दिनद्वयेऽप्यर्धरात्रं विहाय रोहिणीसहिता वा तदोत्तरैव ग्राह्या। 'अविद्धायां तु सर्क्षायां जातो देवकिनन्दनः' इति वचनात्। 'वर्जनीया प्रयत्नेन सप्तमीसंयुताष्टमी। सऋक्षापि न कर्तव्या सप्तमीसंयुताष्टमी।' इति ब्रह्मवैवर्तवचनाच्च। हेमाद्रौ—यदाऽर्धरात्रादूर्ध्वं कलामात्रमपि अतिक्रम्याष्टमी प्रवृत्ता रोहिणी च द्वितीयेऽ- ह्नि मुहूर्तं द्वे मुहूर्ते वा तदा द्वितीयैव ग्राह्या। तथा च स्कन्दपुराणे—'सप्त- मीसंयुताष्टम्यां भूत्वा ऋक्षं द्विजोत्तम। प्राजापत्यं द्वितीयेऽह्नि मुहूर्तार्धं भवेद्यदि। तदाऽष्टयामिकं ज्ञेयं प्रोक्तं व्यासादिभिः पुरा।' इति। पाद्मेऽपि—'मुहूर्तेनापि संयुक्ता संपूर्णा साऽष्टमी भवेत्। किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा।' इति। तत्रैव— 'पूर्वविद्धाष्टमी या तु उदये नवमीदिने। मुहूर्तमपि संयुक्ता संपूर्णा साऽष्टमी भवेत्। कलाकाष्ठामुहूर्तापि यदा कृष्णाष्टमी तिथिः। नवम्यां सैव ग्राह्या स्यात्सप्तमीसंयुता न हि।' इति। यदा शुद्धाधिकाया विद्धाधिकाया वा द्वितीयदिन एव रोहिणीयोगः तदा प्राजापत्यर्क्षसंयुतेति विष्णुरहस्यवचनादुत्तरस्या ग्राह्यत्वं प्रागुक्तम्। तस्या बुधवारादियोगे प्राशस्त्यातिशयोऽपि पूर्वोक्तेः प्रेतयोनिगतानामिति पद्मपुराणे दर्शितः। निर्णयामृतेऽपि यदा स्वल्पापि सूर्योदयेऽष्टमी सा च रोहिणीयुक्ता उपरि सकला नवमी बुधवारेण सोमवारेण वा युता भवति तदा संपूर्णामप्यष्टमीं परित्यज्य सैव स्वल्पाप्युपोष्या। तदुक्तं ब्रह्मपुराणे—'उदये चाष्टमी किंचित्सकला नवमी यदि। भवेद्बु- धेन संयुक्ता प्राजापत्यर्क्षसंयुता। अपि वर्षशतेनापि लभ्यते वा न वा विभो।' केचित्तु—यत्तु मयूखे सोमेनेत्यत्र युक्तं तु चन्द्रोदययुतेत्युक्तं तन्मृग्यम्। बुधवारसान्निध्यात्सोमवारग्र- हणौचित्यात् माधवमदनरत्ननिर्णयामृतादिषु सोमपदेन सोमवारग्रहणाच्च। नृसिंहपरि- चर्यायामपि सोमपदस्य सोमवारपरत्वमुक्तम्। निर्णयसिन्धौ तु उदयेत्यादिवचनं दाना- दिविषयमुपवासाश्रवणात् इत्यनन्तभट्टः। जयन्तीपरमिति हेमाद्रिः। उदये चन्द्रोदये इति दीक्षिता अप्येवम्। गारुडास्तु नवमीक्षयपरमिदं वचनं नवमी सकला यदीति भविष्योक्तेः। एवं तत्पूर्वदिने जयन्त्यभावपरमित्याहुः। जयन्त्यादिसर्वापवादोऽयमि-

त्याचार्यचूडामण्यादयः । वयं तु सत्यं व्रतभेदः । जन्माष्टम्युपवासः पूर्वेद्युरेव । जयन्तीव्रतवता तूपवासद्वयं कार्यमित्यपि स्थितम् । या तु विद्धाधिका दिनद्वयेऽपि रोहिणीयोगरहिता सा चतुर्विधा । पूर्वस्मिन्नेव दिने निशीथे वर्तमाना, उत्तरस्मिन्नेव दिने निशीथे वर्तमाना, दिनद्वये निशीथे वर्तमाना, दिनद्वयेऽपि तत्रावर्तमाना चेति । तत्राद्ययोः पक्षयोर्या निशीथव्यापिनी सैव ग्राह्या दिवा वा यदि वा रात्राविति वचनात् । तृतीयचतुर्थयोस्तूत्तरैव ग्राह्या बहुतरसंकल्पादिकर्मकालव्यापित्वात् । 'वर्जनीया प्रयत्नेन सप्तमीसंयुताष्टमी ।' इत्यादिवचनैः सप्तमीसहिताया अष्टम्या निषेधाच्चेति कृतं विस्तरेण । यद्यप्यत्र द्वितीयचतुर्थभेदौ माधवाद्युदाहृताष्टमी शिवरात्रिश्चेति वचनप्रतिपादितार्धरात्रात्पूर्वं सप्तमीसद्भावरूपवेधग्रहणेऽनुपपन्नौ तथापि विद्धापदेन प्रकृते सप्तमीमिश्रामात्रोपादानेनानुपपन्नौ । अथ नृसिंहपरिचर्याया मतं लिख्यते—सूर्योदयादुपरि पलमात्रेणाप्यष्टमीनिर्गमे सत्यामसत्यां वा रोहिण्यां द्वितीयदिन एव जन्माष्टमीव्रतं कर्तव्यम् । उदये चाष्टमीति स्कन्दवचनात् । प्रेतयोनिगतानामिति पाद्मवचनाच्च । सप्तमीविद्धा तु सर्वथा त्याज्यैव । 'जन्माष्टमीं पूर्वविद्धां सऋक्षां सकलामपि । विहाय नवमीं शुद्धां[1] उपोष्य व्रतमाचरेत् । पलवेधे तु विप्रेन्द्र सप्तम्या अष्टमीं त्यजेत् । सुराया बिन्दुना स्पृष्टं गङ्गाम्भःकलशं यथा ।' इति, 'वर्जनीया प्रयत्नेने' त्यादिपूर्वोक्तस्कन्दवचनाच्च । अष्टम्यनिर्गमे तु सप्तमीविद्धाऽप्युपोष्या । एकादश्या अनिर्गमेऽपि दशमीविद्धापरित्यागेन शुद्धद्वादश्युपवासविधानवच्छुद्धनवम्युपवासविधानाभावात् । रोहिणीयोगस्तु बुधसोमवारादियोगवत्प्राशस्त्यातिरेकपरो नोपवासप्रयोजकः । तथात्वे तदभावे व्रतलोपप्रसङ्गात् । कालनिर्णयकारास्तु उभयार्धरात्रे रोहिण्यष्टमीयोगः उभयार्धरात्रे रोहिण्यष्टमीयोगाभावः उत्तरार्धरात्रे एव रोहिण्यष्टमीयोगे पूर्वार्धरात्रे रोहिणीमात्रयोगे चोत्तरैवोपोष्या अन्यदा पूर्वा । दिनद्वये ऋक्षाभावे पूर्वेति व्यवस्थापयिष्यत्येव । उदये चेत्यस्य दिनद्वयेऽप्यर्धरात्रे रोहिण्यष्टमीयोगपरत्वं वर्णयांबभूवुः । तत्राष्टमीयोगातिरिक्तस्य ऋक्षादियोगस्योपवासविधानायोद्देश्यविशेषणतया विवक्षितत्वे हविरुभयत्ववदापाततो वाक्यभेदस्य परिहारो दिव्यदृष्ट्या शिष्टैरन्वेष्टव्यः । हरिभक्तिविलासमते जन्माष्टमीव्रतदिननिर्णयः । तथा च कारिका—'कृष्णोपोष्याऽष्टमी भाद्रे रोहिण्याढ्या महाफला । निशीथेऽत्रापि किं चेन्दौ ज्ञे वापि

[1] शुद्धाम् ऋक्षहीनाम् ।

नवमीयुता।' अत्र योगबाहुल्यं योगप्राशस्त्यं चोपवासनियामकम्।तथैवाह—'नेन्दुःपूर्वेऽहनि ज्ञो वा परे चेद्रोहिणीयुता।' अत्र योगबाहुल्यं योगप्राशस्त्यम्। 'केवला वाऽष्टमी वृद्धा सोपोष्या नवमीयुता।' वृद्धा वृद्धिगामिनी स्वल्पापीत्यर्थः।तथोक्तम्—उदये चाष्टमी किंचिदित्यादि। 'मुहूर्तेनापि संयुक्ता सा संपूर्णाष्टमी भवेत्।' इति च। ननु परे चेद्रोहिणीयुतेत्यनेन पूर्वेऽहनि रोहिणीयुतत्वं नास्तीति ज्ञापकात्परेऽहनि रोहिणीनवमीयोगेन योगबाहुल्याद्भवतु तादृशस्थले परेह्न्युपवासो रोहिण्यभावेऽपि वृद्धिगामिन्यामष्टम्यामुपवासः कथं संभवतु पूर्वत्रार्धरात्रयोगसत्त्वादित्याशंक्याह—नवमीयुतेति हेतुगर्भविशेषणम्। नवमीयुताऽतः सैवोपोष्येत्यर्थः। नवमीयोगस्य प्राशस्त्यात्। तच्च किं पुनर्नवमीयुक्तेत्यादौ कैमुतिकन्यायात्। 'मासि भाद्रपदे कृष्णा अष्टमी नवमी भवेत्। पूज्याऽष्टमी ततः पुंभिः स्त्रीभिश्चापि विशेषतः।' इति सूक्तोक्तेश्च। गौतमीतन्त्रे च—'अष्टमी नवमीविद्धा उमामाहेश्वरी तिथिः। सैवोपोष्या सदा पुण्यकाङ्क्षिभी रोहिणीं विना।' अत्र कारिका—'अत्र केवलमित्यादावुमामाहेश्वरी तिथिः। तिथिः प्रोक्ता सैव यस्मादुपोष्यत्वेन निश्चिता।' इति। तत्तद्योगाभावे तु केवलाष्टम्युपोष्या। तथा च कारिका—'रोहिण्यादिवियुक्ताऽपि सोपोष्या केवलाष्टमी। तत्तद्योगस्तु वैशिष्ट्ये व्रतलोपोऽन्यथा भवेत्। इत्थं शुद्धैव लिखिता योगाद्बहुविधाष्टमी। त्याज्या विद्धा च सप्तम्या सा विद्धैकादशी यथा।' ननु भवत्यष्टमीनिर्गमे परदिनोपवासः अष्टमीक्षये तदनिर्गमे का व्यवस्थेत्याशङ्क्याह—'तदेवमष्टमीहानौ व्रतलोपः प्रसज्जते। तन्निरस्तं पूर्वमेव स्कन्दवाक्यानुसारतः। जन्माष्टमीं पूर्वविद्धामित्याद्यं यदुदीरितम्।' इति। स्कान्दीयवचनद्वयं पूर्वं लिखितम्। यथा जन्माष्टमीं पूर्वविद्धामित्यादि। 'सकलापि सऋक्षापि नवमीसंयुतापि च। जन्माष्टमी पूर्वविद्धा न कर्तव्या कदाचन।' इति। नवमीसंयुतापीत्यष्टमीक्षयाभिप्रायेण। तदेवमेकादश्यनिर्गमे शुद्धद्वादश्युपवासवदत्रापि नवमीं शुद्धामुपोष्य व्रतमाचरेदिति वचनबलात्तादृशस्थले शुद्धनवमीव्रतमेव विधेयम्। विद्धाव्रतं तु सर्वथैव त्याज्यमिति दिक्। स्मृतिकौस्तुभेऽपि—पूर्वदिने सप्तमीवेधे तु निशीथव्यापिन्या अपि ग्राह्यत्वापवादो वैष्णवीयः। यथोक्तं ज्योतिर्निबन्धे पाद्मे—'सर्वथा सप्तमीयुक्ता संत्याज्या सर्ववैष्णवैः। उपोष्या नवमीयुक्ता तदुक्तं पुष्करे स्फुटम्। वर्जनीया प्रयत्नेन सप्तमीसंयुताऽष्टमी। सऋक्षापि न कर्तव्या सशल्या सा प्रकीर्तिता।' इत्यादि। तदलमतिप्रसङ्गेन। इति जन्माष्टमीजयन्तीनिर्णयः।

अत्र कृत्यविशेषः—'ततोऽष्टम्यां तिलैः स्नातो नद्यादौ विमले जले।' इत्यादि-

वक्ष्यमाणभविष्योक्तेतिहासे द्रष्टव्यः। अथ प्रयोगः। तत्र कर्तोपवासपूर्वदिने लघु-भुग्रात्रौ जितेन्द्रियः सुप्त्वा उपवासदिने प्रातः स्नानादिनित्यकृत्यं विधाय 'सूर्यः सोमो यमः कालः संध्ये भूतान्यहः क्षपा। पवनो दिक्पतिर्भूमिराकाशं खचरामराः॥ ब्राह्मं शासनमास्थाय कल्पध्वमिह संनिधिम्।' इत्युक्त्वा सूर्यादिदेवताभ्यो नमस्कृत्याचम्य प्राणानायम्य प्राङ्मुख उदङ्मुखो वा दर्भहस्तः फलपुष्पाक्षतवारिपूर्णं ताम्रादिपात्रं दक्षिणहस्तेनादाय मासपक्षवारनक्षत्राद्युल्लिख्यामुकफलकामः पापक्षयकामो वा श्रीकृष्णप्रीतये जन्माष्टमीव्रतमहं करिष्ये। तथा—'वासुदेवं समुद्दिश्य सर्वपापप्रशान्तये॥ उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहम्। अद्य कृष्णाष्टमीं देवीं नभश्चन्द्रसरोहिणीम्। अर्चयित्वोपवासेन भोक्ष्येऽहमपरेऽहनि। एनसो मोक्षकामोऽस्मि यद्गोविन्द त्रियोनिजम्। तन्मे मुञ्चतु मां त्राहि पतितं शोकसागरे। आजन्ममरणं यावद्यन्मया दुष्कृतं कृतम्। तत्प्रणाशय गोविन्द प्रसीद परमेश्वर।' इति पठित्वा जलमुत्सृजेत्। नृसिंहपरिचर्यायां तु—'अद्य स्थित्वा निराहारः श्वोभूते परमेश्वर। भोक्ष्यामि पुण्डरीकाक्ष अस्मिञ्जन्माष्टमीव्रते।' इति संकल्पवाक्यं पठितम्। सप्तम्यां चैकभक्तानन्तरं संकल्पं कुर्यादिति चोक्तम्। ततो मध्याह्ने कृष्णतिलैः स्नात्वा देवक्याः सूतिकागृहादि कुर्यात्। तद्यथा। सूपलिप्ते सुदेशे कदलीस्तम्भनानावर्णवासः शोभितं समन्तात्स्थापितैराम्रपल्लवादियुतैर्जलपूर्णनवकलशैर्दीपावलिभिः पुष्पमालाभिर्युतं षष्ठ्या देव्याऽधिष्ठितं देवक्याः सूतिकागृहं विधाय तस्य समन्ताद्भित्तिषु सुकुसुमाञ्जलीन्देवगन्धर्वादीन्खड्गचर्मधरवसुदेवदेवकीगर्गगोपीगोपान्कंसनियुक्तान्गोधेनुकुञ्जरान्यमुनां तद्ध्रदस्थकालियमन्यच्च सकलं तत्कालीनं गोकुलचरितं यथासंभवं लिखित्वा सूतिकागृहमध्ये मञ्चकं स्थापयित्वा तदुपरि सर्वतोभद्रमण्डलोपरि कलशे सिंहासने वा हैमीं राजतीं ताम्रीं पैत्तलीं मणिमयीं वार्क्षीं मृण्मयीं लेख्यरूपां वा संभवन्तीं श्रीकृष्णप्रतिमां देवकीस्तनंधयीं प्रसुप्तां देवक्याश्चरणौ संवाहयन्तीं लक्ष्मीप्रतिमां प्रसुप्तां देवकीप्रतिमां च संस्थापयेत्। तथैव क्वचित्प्रदेशे सकन्यकां यशोदां रोहिणीं वसुदेवं नन्दं बलभद्रं गोपीगोपांश्चोपकल्प्य देवकीसमीपे खड्गहस्तं कंसं पूतनाराक्षसादींश्चावस्थापयेत्। तत्र प्रतिमाया अग्न्युत्तारणं कृत्वा देशकालाद्यनुस्मृत्य सपरिवारं श्रीकृष्णपूजां करिष्ये इति संकल्प्य हस्ते पुष्पाञ्जलिं गृहीत्वा गायद्भिरिति मन्त्रपुरःसरं देवक्यां क्षिपेत्। स च—'गायद्भिः किंनराद्यैः सतत परिवृता वेणुवीणानिनादैर्भृङ्गारादर्शकुम्भप्रवरकृतकरैः किंनरैः सेव्यमाना। पर्यङ्के स्वास्तृते या मुदिततरमुखी

पुत्रिणी सम्यगास्ते सा देवी देवमाता जयति सुवदना देवकी दिव्यरूपा ।' इति । 'विश्वेश्वराय देवाय तथा विश्वंभराय च । विश्वस्य पतये तुभ्यं गोविन्दाय नमो नमः।' श्रीकृष्णाय पुष्पाञ्जलिं दद्यात् । श्रीकृष्णाविर्भावं परिभाव्य 'तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शंखगदार्युदायुधम् । श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्रपयोदसौभगम् । महार्हवैडूर्यकिरीटकुण्डलत्विषा परिष्वक्तसहस्रकुन्तलम् । उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोचमानं वसुदेव ऐक्षत । सविस्मयोत्फुल्लविलोचनो हरिं सुतं विलोक्यानकदुन्दुभिस्तदा । कृष्णावतारोत्सवसंभ्रमोऽस्पृशन्मुदा द्विजेभ्योऽयुतमाप्लुतो गवाम् । अथैनमस्तौदवधार्य पूरुषं परं नताङ्गः कृतधीः कृताञ्जलिः ।' इति जन्मश्लोकान् पठेत् । ततः श्रीकृष्णमन्त्रन्यासान्विदध्यात् । ते च यथा । शिरसि नारदऋषये नमः । मुखे गायत्रीछन्दसे नमः । हृदि श्रीकृष्णाय देवतायै नमः । क्लीं बीजाय नमः गुह्ये । नमः शक्तये पादयोः । ततः कराङ्गन्यासौ । क्लां अङ्गुष्ठाभ्यां नमः । क्लीं तर्जनीभ्यां स्वाहा । क्लूं मध्यमाभ्यां वषट् । क्लैं अनामिकाभ्यां हुं । क्लौं कनिष्ठिकाभ्यां वौषट् । क्लः करतलकरपृष्ठाभ्यां फट् । एवं क्लां हृदयाय नम इत्यादि । ततो मुद्रादिकं प्रदर्श्य ' अव्याद्व्याकोशलीलाम्बुजरुचिररुणाम्भोजनेत्राम्बुजस्थो बालो जङ्घाकटीरस्थलकलितरणत्किङ्किणीको मुकुन्दः। दोर्भ्यां हैयङ्गवीनं दधदतिविमलं पायसं विश्ववन्द्यो गोपीगोपालवीतोरुणनखविलसत्कण्ठभूषश्चिरं वः ।' इति हृदि ध्यात्वा पूजनं कुर्यात् । प्रतिमापूजनं च सर्वत्र प्राणप्रतिष्ठापुरःसरं कर्तव्यम् । 'प्रतिमायाः कपोलौ द्वौ स्पृष्ट्वा दक्षिणपाणिना । प्राणप्रतिष्ठां कुर्वीत तस्यां देवस्य वा हरेः। अकृतायां प्रतिष्ठायां प्राणानां प्रतिमासु च । यथापूर्वं तथाभावः स्वर्णादीनां न देवता । अन्येषामपि देवानां प्रतिमास्वपि पार्थिव । प्राणप्रतिष्ठा कर्तव्या तस्यां देवत्वसिद्धये। वासुदेवस्य बीजेन तद्विष्णोरित्यनेन च । प्राणप्रतिष्ठां सर्वत्र प्रतिमासु समाचरेत् ।' इति कालिकापुराणात् । बीजेन मूलमन्त्रेण । इदं च प्रकृतविष्णवभिप्रायेण । यदा स्वहृदये पूजा क्रियते तदा हृदयेऽङ्गुष्ठं दत्त्वा मन्त्राः पठनीयाः । प्रतिमायां तु कपोलौ हृदयं वा स्पृष्ट्वेति विशेषः।वैदिकमूलमन्त्राभावे प्रणवादिचतुर्थ्यन्तनमोन्तनाम इत्यनेन संगृहीतानि अस्मै इत्यस्य स्थाने तत्तद्देवतानामयुक्तमस्मै इत्यादिस्वाहान्तं मन्त्रं पठन्प्राणप्रतिष्ठां कुर्यात्ततो गायद्भिरित्यनेन देवकीं 'मां चापि बालकं सुप्तं पर्यङ्के स्तनपायिनम्।श्रीवत्सवक्षसं शान्तं नीलोत्पलदलच्छविम्।' इति श्रीकृष्णं च सुप्तं प्रतिमायां ध्यात्वा ॐ देवक्यै नम इति देवकीम् ॐ वासुदेवाय नम इति वासुदेवम् । ॐ श्रीकृष्णाय नम इति

श्रीकृष्णम्।ॐ नमो देव्यै श्रियै इति श्रियं च संपूजयेत्। 'प्रणवादिनमस्यान्तं पृथङ्नामानुकीर्तनम्।कुर्यात्पूजां विधिज्ञश्च सर्वपापापनुत्तये।देवक्यैवसुदेवाय वासुदेवाय चैव हि। बलदेवाय नन्दाय यशोदायै पृथक्पृथक्।'इति।नमो देव्यै श्रियै इतीति च भविष्योत्तरवचनात्। एवं नन्दयशोदाबलभद्रचण्डिकादीन्षोडशोपचारैः प्रत्येकं तन्त्रेण वा पूजयेत्। भविष्योत्तरे तु केचिदुपचारेषु विशेषमन्त्रा अप्युक्ताः। तथा स्नानमन्त्रः। 'योगेश्वराय देवाय योगानां पतये विभो। योगोद्भवाय नित्याय गोविन्दाय नमो नमः।' इति। नृसिंहपरिचर्यायां तु'योगेश्वराय देवाय देवकीसहिताय च। योगोद्भवाय'इति पूर्ववत्क्षीरस्नपने। गारुडे तु-योगाय योगेश्वराय योगपतये योगसंभवाय गोविन्दाय नमो नमः इति शुद्धोदकस्नपने। 'यज्ञेश्वराय देवाय तथा यज्ञोद्भवाय च। यज्ञानां पतये नाथ गोविन्दाय नमो नमः।'इति धूपादौ। अथ नैवेद्यमन्त्रः 'विश्वेश्वराय विश्वाय तथा विश्वोद्भवाय च।विश्वस्य पतये तुभ्यं गोविन्दाय नमो नमः।'इति फलताम्बूलदक्षिणादि सर्वं दत्त्वा देवक्यै अर्घ्यं दद्यात्। 'प्रणमे देवजननीं त्वया जातस्तु वामनः। वसुदेवात्तथा कृष्णो नमस्तुभ्यं नमो नमः। सपुत्रार्घ्यं प्रदत्तं मे गृहाणेमं नमोऽस्तु ते।' इति। ततः कृष्णायार्घ्यं दद्यात्। तत्र मन्त्रो गारुडे-यज्ञाय यज्ञेश्वराय यज्ञपतये यज्ञसंभवाय गोविन्दाय नमोनमःइति।नृसिंहपरिचर्यायांतु-'जातः कंसवधार्थाय भूभारोत्तारणाय च। देवतानां हितार्थाय धर्मसंस्थापनाय च। कौरवाणां विनाशाय दैत्यानां निधनाय च। गृहाणार्घ्यं मया दत्तं देवक्या सहितोऽनघ।' इति। ततो देवकीप्रार्थना 'देवक्यै तु नमस्तुभ्यं कृष्णोत्पादनतत्परे। पापक्षयकरी देवी तुष्टिं यातु मयाऽर्चिता। अदिते देवमातस्त्वं सर्वतापप्रणाशिनि। अतस्त्वं पूजिता देवी भीतोऽहं भवसागरात्। पूजितासि च यद्देवैः प्रसन्ना त्वं वरानने पूजिता तु मया भक्त्या प्रसादं कुरु सुव्रते। यथा पुत्रं हरिं लब्ध्वा जाता ते निर्वृतिः परा। तामेव निर्वृतिं देवि सुपुत्रान्दर्शयस्व मे।' इति। अथ श्रीकृष्णप्रार्थना। 'अवतारसहस्राणि करोषि मधुसूदन। न ते संख्याऽवताराणां कश्चिज्जानाति वै भुवि। देवा ब्रह्मादयो वापि स्वरूपं न विदुस्तव। अतस्त्वां पूजयिष्यामि मातुरुत्सङ्गसंस्थितम्। वाञ्छितं कुरु मे देव दुष्कृतञ्चैव नाशय। कुरुष्व मे दयां देव संसारार्तिभयापह।' इति। ततः कृष्णाय पुष्पाञ्जलिं दद्यात्।गारुडे-धर्माय धर्मेश्वराय धर्मपतये धर्मसंभवाय गोविन्दाय नमोनमः इति। स्वाहान्तो घृताक्ततिलहोमे मन्त्र उपात्तः। ततो गव्यघृतेन वसोर्धारा कार्या। क्वचिद्गुडघृतेनेत्युक्तम्। ततो जातकर्म नालच्छेदनं षष्ठीपूजनं नामकर्म च संक्षेपेण

कार्यम् । तत्रादौ जातकर्मप्रयोगः । मासपक्षाद्युल्लिख्य अस्य कुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणद्वारा गर्भाम्बुजानितदोषपरिहारार्थं मेधायुर्वृद्ध्यर्थं जातकर्माहंकरिष्ये।तत्र निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्धारा नान्दी श्राद्धंच करिष्ये इति संकल्प्य,गणानां त्वेति पञ्चोपचारैर्गणेशं पूजयेत् । तत्र पुण्याहं, कल्याणम्, ऋद्धिः, स्वस्ति, श्रीः, पुनन्तु मां, यथेमां, सत्रस्य ऋद्धिः, स्वस्ति नः, श्रीश्च ते, इति पुण्याहवाचनम् । अथ मातृकापूजनम् ।'गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः । धृतिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवताः । ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । वाराही च तथेन्द्राणी चामुण्डा सप्त मातरः ।' इति । वसोः पवित्रमसि इति घृतधाराः । पञ्च सप्त वा कुड्ये कृत्वा संपूजयेत् । तत आयुष्यसूक्तजपः 'आयुष्यं वर्चस्यं रायस्पोषमौद्भिदम् । इदं हिरण्यं वर्चस्वजैत्रायाविशतादिमाम् । न तद्रक्षांसि न पिशाचाश्चरन्ति देवानामोजः प्रथमजं ह्येतत् । यो बिभर्ति दाक्षायणं हिरण्यं स देवेषु कृणुते दीर्घमायुःस मनुष्येषु कृणुते दीर्घमायुः ।' इति मातृकापूजनम् । अथ नान्दीश्राद्धम् । सत्यवसुसंज्ञका विश्वेदेवा नान्दीमुखा भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः । गोत्रा नान्दीमुखाः मातृपितामहीप्रपितामह्यः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः । पितृपितामहप्रपितामहा नान्दीमुखा भूर्भुवः स्वः इदंवः पाद्यं पादा० ।द्वितीयगोत्रा मातामहप्रमातामहवृद्धप्रमातामहा भूर्भुवः स्वः इदं पाद्यं पादा०। नेत्रस्पर्श।ःमासपक्षाद्युल्लिख्य अस्मिन्कर्माणि सांकल्पेन विधिना नान्दीश्राद्धमहं करिष्ये। सत्यवसुसंज्ञकानां विश्वेषां देवानां भूर्भुवःस्वःइमे आसने वो नमो नमः । नान्दीश्राद्धे क्षणौ क्रियेतां तथा प्राप्नुतां भवन्तौ प्राप्नुवाव । गोत्राणां मातृपितामहीप्रपितामहीनां नान्दी० इमे० नान्दीश्राद्धे गोत्राणां पितृपितामहप्रपितामहानां नान्दी० इमे नान्दीश्राद्धे तथा प्रा०द्वितीयगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानां भू० इमे० नान्दीश्राद्धे । तथा अत्रायान्तुगन्धाः पान्तु अक्षताःपान्तु पुष्पाणि पान्तु।सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो वः गन्धार्चनं स्वाहा संपद्यतां वृद्धिः । गोत्राभ्यः मातृपितामहीप्रपितामहीभ्यो नान्दीमुखीभ्यो वः इत्या० पुनः गन्धादि दत्त्वा गोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः नान्दीमुखेभ्यः वः ग० । द्वितीयगोत्रेभ्यः मातामहप्रमातामहवृद्धप्रमातामहेभ्यः गन्धान् । सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यः दास्यमानब्राह्मणयुग्मभोजनपर्याप्तमन्नम् अमृतरूपेण स्वाहा संपद्यतां वृद्धिः । गोत्राभ्यो मातृपितामहीप्रपिताम-

हीभ्यो नान्दीमुखीभ्यः दास्यमानब्राह्मणभोजन० वृद्धिः । द्वितीयगोत्रेभ्यः मातामहप्र-मातामहवृद्धप्रमातामहेभ्य दास्य० वृद्धिः । सत्यवसुसंज्ञका विश्वेदेवाः प्रीयन्ताम्।गोत्रा नान्दीमुख्यो मातृपितामहीप्रपितामह्यः प्रीयताम् । गोत्रा नान्दीमुखाःपितरः प्रीयन्ताम्। द्वितीयगोत्रा नान्दीमुखा मातामहाः प्रीयन्ताम् । सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्यः कृतैतन्नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलानिःक्र-यणीं दक्षिणां दातुमहमुत्सृजे । गोत्राभ्यो मातृपितामहीप्रपितामहीभ्यो नान्दीश्राद्धस्य० दातुमहमुत्सृजे । गोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः कृतैतन्नान्दी० दातुमहमुत्सृजे । द्वितीयगोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यः कृतैतन्नान्दी० दातुमहमुत्सृजे । 'उपास्मै गायता नरःपच्यमानायेन्दवे अभिदेवां इयक्षते' नान्दीश्राद्धं संपन्नम्। सुसंपन्नम्। अनेन नान्दीश्राद्धेन कर्माङ्गदेवताः प्रीयन्तां वृद्धिः । अनामिकया सुवर्णान्तर्हितया मधु-घृते प्राशयेत् । भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि दधामि भूर्भुवःस्वःसर्वं त्वयि दधामि । अथायुष्यं करोति नाभ्यां दक्षिणे वा कर्णे जपति। 'अग्निरायुष्मान्स वनस्पति भिरायुष्मान्तेन त्वायुषाऽऽयुष्मन्तं करोमि । सोम आयुष्मान्स ओषधीभिरायुष्मांस्तेन त्वायुषायुष्मन्तं करोमि । ब्रह्म आयुष्मत्तद्ब्राह्मणैरायुष्मन्तस्तेन त्वा० । ऋषय आयुष्म न्तस्ते व्रतैरायुष्मन्तः तेन त्वा०।देवा आयुष्मन्तस्तेमृतेनायुष्मन्तस्तेन त्वा०।यज्ञ आयु ष्मान्स दक्षिणाभिरायुष्मांस्तेन०इति त्रिः।त्र्यायुषं जमदग्नेःकश्यपस्य त्र्यायुषं तन्मे अस्तु त्र्यायुषम्' इति । त्रिः स यस्मिन्देशे जातो भवति तमभिमन्त्रयते वेद ते भूमिहृदयं दिवि चन्द्रमसि श्रीः । तं वेदाहं तन्मां तद्विद्यात् । पश्येम शरदः शतं जीवेम शरदः शतं शृणुया म शरदः शतमिति । अथैनमभिमृशति । 'अश्मा न च परशुर्न च हिरण्यमस्तु तं भव। आत्मा वै पुत्रनामासि स जीव शरदः शतम्' इति । ततो नालच्छेदनं षष्ठीपूजनं च कृत्वा मासपक्षाद्युल्लिख्य कुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणद्वारा व्यवहारसि-द्ध्यर्थं नामकर्माहं करिष्ये । तत्र पूर्ववद्गणेशपूजनादि नान्दीश्राद्धान्तं विधाय नामक-रणाङ्गभूतांस्त्रीन्ब्राह्मणान्भोजयित्वा द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तःस्थं दीर्घाभि निष्ठानं कुर्यात् । नामकर्मकरणोत्तरं दशसंख्याकान्ब्राह्मणान्भोजयेत् । संस्कारे तु दशैव चेति वचनात् ॥ इति कातीयानां जातकर्म नामकर्म च ॥ तत्र प्रतिमादौ मण्डले वा सोमाय सोमेश्वराय सोमपतये सोमसंभवाय सोमाय नमो नमः इति गारुडोक्तम-न्त्रेण चन्द्रं संपूज्य 'शंखे तोयं समादाय सपुष्पकुशचन्दनम् । जानुभ्यां धरणीं गत्वा

चन्द्रायार्घ्यं निवदयेत् । क्षीरोदार्णवसंभूत अत्रिनेत्रसमुद्भव । गृहाणार्घ्यं शशांकेमं रोहिण्या सहितो मम । ज्योत्स्नापते नमस्तुभ्यं नमस्ते ज्योतिषां पते । नमस्ते रोहिणीकान्त अर्घ्यं मे प्रतिगृह्यताम्' इति मन्त्राभ्याम् । ततः 'ज्योत्स्नायाः पतये तुभ्यं ज्योतिषां पतये नमः । नमस्ते रोहिणिकान्त सुधावास नमोऽस्तु ते । नभोमण्डलदीपाय शिरोरत्नाय धूर्जटेः । कलाभिर्वर्धमानाय नमश्चन्द्राय चारवे' इति मन्त्राभ्यां प्रणमेत् । ततो भगवत्स्तुतिं कुर्यात् । 'अनघं वामनं शौरिं वैकुण्ठं पुरुषोत्तमम् । वासुदेवं हृषीकेशं माधवं मधुसूदनम् । वराहं पुण्डरीकाक्षं नृसिंहं दैत्यसूदनम् । दामोदरं पद्मनाभं केशवं गरुडध्वजम् । गोविन्दमच्युतं कृष्णमनन्तमपराजितम् । अधोक्षजं जगद्बीजं सर्गस्थित्यन्तकारिणम् । अनादिनिधनं विष्णुं त्रिलोकेशं त्रिविक्रमम् । नारायणं चतुर्बाहुं शंखचक्रगदाधरम् । पीताम्बरधरं नित्यं वनमालाविभूषितम् । श्रीवत्साङ्कं जगत्सेतुं श्रीकृष्णं श्रीधरं हरिम् । प्रपद्येऽहं महादेवं सर्वकामप्रसिद्धये । प्रणमामि सदा देवं वासुदेवं जगत्पतिम्' इति । 'त्राहि मां सर्वलोकेश हरे संसारसागरात् । त्राहि मां सर्वपापघ्न दुःखशोकार्णवात्प्रभो । सर्वलोकेश्वर त्राहि पतितं मां भवार्णवे । देवकीनन्दन श्रीश हरे संसारसागरात् । त्राहि मां सर्वदुःखघ्न रोगशोकार्णवाद्धरे । दुर्गतांस्त्रायसे विष्णो ये स्मरन्ति सकृत्सकृत् । सोऽहं देवातु दुर्वृत्तस्त्राहि मां शोकसागरात् । पुष्कराक्ष निमग्नोऽहं मायाविज्ञानसागरे । त्राहि मां देव देवेश त्वत्तो नान्योऽस्ति रक्षिता । यद्बाल्ये यत्तु कौमारे यौवने यच्च वार्धके । तत्पुण्यं वृद्धिमाप्नोतु पापं हर हलायुध' इति मन्त्रैः प्रार्थयेत् । ततः स्तोत्रपुराणपठनादिभिः रात्रिशेषमतिवाह्य परदिने प्रातःस्नानादिनित्यकृत्यं विधाय पुनः सपरिवारं श्रीकृष्णं यथासंभवं संपूज्य चण्डिकायाश्च यथाविभवं महोत्सवं कृत्वा यथाशक्ति ब्राह्मणान्भोजयित्वा तेभ्यः सुवर्णमेदिनीधेनुवस्त्रादि यद्यदिष्टं तत्तत्कृष्णो मे प्रीयतामिति दत्त्वा 'यद्देवं देवकी देवी वसुदेवादजीजनत् । भौमस्य ब्रह्मणो गुप्त्यै तस्मै ब्रह्मात्मने नमः । सुजन्मा वासुदेवाय गोब्राह्मणहिताय च' शान्तिरस्तु शिवं चास्त्वित्युक्त्वा प्रतिमामुद्वास्य तां ब्राह्मणाय दत्त्वा ब्राह्मणान्विसृज्य इष्टैः सह स्वयं पारणं कुर्यादिति । गारुडे तु—सर्वाय सर्वेश्वराय सर्वपतये सर्वसंभवाय गोविन्दाय नमो नम इति पारणारम्भे भूताय भूतपतये भूतेश्वराय भूतसंभवाय गोविन्दाय नमो नमः इति समापने मन्त्र उक्तः । इदं च प्रतिमासकृष्णाष्टम्यामप्युक्तं मदनरत्ने वह्निपुराणे—'प्रतिमासं च ते पूजामष्टम्यां यः करिष्यति । मम चैवाखिलान्कामान्ससंप्राप्स्यत्यसंशयम्' इति ॥

अथ पारणानिर्णयः । पारणमुपवासपरदिने पूर्वाह्णे कर्तव्यम् । 'उपवासेषु सर्वेषु पूर्वाह्णे पारणं भवेत्' इति देवलस्मरणात् । एवं सामान्यतः पूर्वाह्णे पारणाप्राप्तौ पारणादिने केवलाष्टमीसद्भावे तदन्ते कर्तव्यम् । तदाह भृगुः—'जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च । पूर्वविद्धैव कर्तव्या तिथिभान्ते च पारणम्' इति । अत्र रोहिणीव्रतोपवासे भान्ते कर्तव्यम्' इतरोपवासे तिथ्यन्ते पारणमिति विवेकः । विष्णुरहस्ये—'कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी । एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत्' इति । निगमेऽपि—'पूर्वविद्धासु तिथिषु भेषु च श्रवणं विना । उपोष्य विधिवत्कुर्यात्तत्तदन्ते च पारणम्' इति । विष्णुधर्मेऽपि—'जयन्ती शिवरात्रिश्च कार्ये भद्राजयान्विते । कृतोपवासस्तिथ्यन्ते तथा कुर्याच्च पारणम्' इति । यदा तु पारणदिनेऽष्टमीरोहिण्योः संभवस्तदोभयान्ते पारणं कर्तव्यम् । तदुक्तं पद्मपुराणे—'कार्या विद्धा तु सप्तम्या रोहिणीसहिताऽष्टमी । तत्रोपवासं कुर्यात्तु तिथिभान्ते च पारणम्' इति । ब्रह्मवैवर्तेऽपि—'अष्टम्यामथ रोहिण्यां न कुर्यात्पारणं क्वचित् । हन्यात्पुराकृतं कर्म उपवासार्जितं फलम् । तिथिरष्टगुणं हन्ति नक्षत्रं च चतुर्गुणम् । तस्मात्प्रयत्नतः कुर्यात्तिथिभान्ते च पारणम्' इति । स्कन्दपुराणेऽपि—'तिथिनक्षत्रनियमे तिथिभान्ते च पारणम् । अतोऽन्यथा पारणे तु व्रतभङ्गमवाप्नुयात्' इति । निर्णयामृते—अत्राष्टम्यन्ते पारणं कार्यं रोहिण्यन्तो नापेक्षितः । भान्ते पारणविधानस्य रोहिणीश्रवणाद्यतिरिक्तनक्षत्रविषयत्वात् । 'याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रसंयुताः । ऋक्षान्ते पारणं कुर्याद्विना श्रवणरोहिणीम्' इति स्मरणात् । माधवीये तु— नक्षत्रे च चतुर्गुणामिति प्रत्यवायस्योदाहृतत्वान्नेदं युक्तम् । 'विना श्रवणरोहिणीम्' इति वचनं तु केवलनक्षत्रोपवासविषयमनुकल्पविषयं चेत्यवगन्तव्यमित्युक्तम् । ननु यदा पूर्वविद्धोपवासे परदिनेऽर्धरात्रे तदूर्ध्वं वा तिथ्यन्तो भवति तदा महानिशायां निषेधाद्द्वितीयदिने उपवासः प्रसज्येत, स च न युक्तः, पारणस्यावश्यकाङ्गत्वात् । यदि पारणमङ्गं न स्यात्तदा प्रतिनिधिविधानं नोपपद्येत । तद्विधानं च द्वादशीप्रस्तावे देवलेन दर्शितम् 'संकटे समनुप्राप्ते द्वादश्यां पारयेत्कथम् । अद्भिस्तु पारणं कुर्यात्पुनर्भुक्तं न दोषकृत्' इति । अतः पारणशब्दबलात्प्रतिनिधिबलाच्च पारणस्याङ्गत्वं द्रष्टव्यम् । अत एवादित्यपुराणे—'पारणान्तं व्रतं ज्ञेयं व्रतान्ते तद्धि भोजनम् । असमाप्ते व्रते पूर्वं नैव कुर्याद्व्रतान्तरम्' इति पारणशब्दस्य 'पार तीरकर्मसमाप्तौ' इति धातोर्निष्पन्नत्वेन व्रतसमाप्त्यर्थत्वात् । तदभावे व्रतस्यासमाप्तिः स्यादिति

चेत् । सत्यम् । तिथिभान्तः कालः पारणस्याङ्गं, पारणं चाङ्गि । न ह्यङ्गाभावेऽङ्गिन एव लोप इति प्रसिद्धिरस्ति । अतश्च तिथ्यन्ताभावेऽपि दिवैव पारणं कर्तव्यम् । तदुक्तम्—'तिथ्यृक्षयोर्यदा छेदो नक्षत्रान्तमवाप्य वा । अर्धरात्रेऽपि वा कुर्यात्पारणं ह्यपरेऽहनि' इति । अस्यायमर्थः । तिथ्यृक्षयोश्छेदे द्वयोः परिसमाप्तौ दिवैव पारणं कर्तव्यम् । अयं मुख्यः कल्पः । नक्षत्रान्ते इत्यनुकल्पः । नक्षत्रपदं तिथेरप्युपलक्षणम् । अन्यतरान्ते वा पारणं कुर्यादित्यर्थः । अथ चार्धरात्रे यद्युभयान्तस्तदा दिवसे मुख्यानुकल्पयोरप्यसंभवाद्रात्रौच पारणस्य निषिद्धत्वाच्चार्थात्तत्राप्युपवासप्राप्तौ पारणप्रतिप्रसवः क्रियते 'अर्धरात्रेपि वा कुर्यात्' इति । निर्णयामृते तु अर्द्धरात्रे तिथिभान्तः स्यात्तदा परेहनि दिने पारणं कुर्यात्।दिवसपारणं च सर्वोपवाससाधारणम्।तदुक्तं ब्रह्मवैवर्ते—'सर्वेष्वेवोपवासेसु दिवा पारणमिष्यते । अन्यथा पुण्यहानिः स्याद्दते धारणपारणम्' इति । गरुडपुराणेपि—अन्यातिथ्यागमो रात्रौ तामसस्तैजसो दिवा । तामसे पारणं कुर्वन्तामसीं गतिमश्नुते' इति । तदेवं सति स्मृतिकौस्तुभे—शास्त्रान्तरादेवास्यार्थस्य सिद्धत्वेन वाक्यद्वयवैयर्थ्यापत्तेः, अपिशब्देन प्रतिप्रसवतात्पर्यद्योतनाच्च, अन्यतरान्ते पारणाभ्यनुज्ञानम् । नारदीयेऽपि—'तिथिनक्षत्रसंयोगे उपवासो यदा भवेत् । पारणं तु न कर्तव्यं यावन्नैकस्य संक्षयः' इति।वह्निपुराणे जयन्तीं प्रक्रम्य 'भान्तेकुर्यात्तिथेर्वापि शस्तं भारत पारणम् ।' इति । तथा 'रोहिणीसाहिता चेयं विद्वाद्भिः समुपोषिता।वियोगे पारणं चक्रुर्मुनयो ब्रह्मवादिनः । सांयोगिके व्रते प्राप्ते यद्येकोपि वियुज्यते । तत्रैव पारणं कुर्यादेवं वेदविदो विदुः'इति।मदनरत्नेऽपि-यदा दिने नैकतरस्याप्यन्तः, किंतु रात्रावेव निशीथादर्वागुभयान्तोऽन्यतरान्तो वा तदा रात्रावप्युभयान्तेऽन्यतरान्ते वा पारणं कर्तव्यम् । यदा तु निशीथाव्यवहितपूर्वक्षणे एवोभयान्तः एकतरान्तो वा तदानिशीथे पारणं कर्तव्यम्—तिथ्यृक्षयोरिति वचनादिति । निशीथो रात्रेरष्टमो मुहूर्तः । यस्तु 'न रात्रौ पारणं कुर्याद्दते वै रोहिणीव्रतात् । तत्र निश्यपि तत्कुर्याद्वर्जयित्वा महानिशाम्' इति गौडोदाहृतभविष्योत्तरवचने महानिशायां पारणानिषेधः स महानिशातोऽर्वाक्पारणाकाललाभेऽवगन्तव्यः । निर्णयसिन्धावपि—महानिशातोऽर्वागन्यतरान्तलाभे महानिशानिषेधः' महानिशायामेव लाभे तत्रैव पारणमिति।अत्र केचित् । यत्तु मयूरवे उक्तम्-पारणं रात्रौ न कुर्यात् किं तु दिवैवेति।तत्प्रौढिवादमात्रम् । अर्धरात्रेऽपि वा कुर्यादित्याद्यनेकवचनानर्थक्यप्रसङ्गात्प्राचीनहेमाद्र्यादिसर्वग्रन्थविरोधाच्च । यदप्युक्तं माधवेन अर्धरात्रशब्देन रात्रिमात्रं गृह्यते इति॥तदपि माधवग्रन्थे तादृशा-

र्थानुपलम्भान्मृग्यम् । महानिशा सार्धयामादुपरितनो यामः । तदुक्तम्—'महानिशा तु विज्ञेया मध्यमं मध्ययामयोः ।' 'तथा मध्यमः प्रहरो रात्रेर्विज्ञेया तु महानिशा' । इति स्मृत्यन्तरमपि । इदमेव हेमाद्रिमदनरत्नमाधवादीनां मतम् । कामधेनौ गर्गस्तु 'महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम्' इत्याह । वृद्धशातातपस्तु—'महानिशा द्वे घटिके रात्रौ मध्यमयामयोः' इत्याह । वेदपाठपरं तदित्यन्ये॥ अशक्तस्तु गौणमुख्य-कालालाभेऽपि दिवैव पारण कुर्यात् । 'जयन्त्यां पूर्वविद्धायामुपवासं समाचरेत् । तिथ्यन्ते चोत्सवान्ते वा व्रती कुर्वीत पारणम् । इति' कालादर्शादिनिबन्धवचनात् । उत्सवान्ते जागराद्युत्सवान्ते द्वितीयदिवसे प्रातरित्यर्थः । अत्र केचित् । यत्तु मयूखे—उद्यापनं त्वनुक्तत्वान्नास्तीति । तदप्यपेशलम् । 'उद्यापनं विना यत्तु तद्व्रतं निष्फलं भवेत् । यदि चोद्यापनं नोक्तं व्रतानुगुणतश्चरेत् । वित्तानुसारतो दद्यादनुक्तोद्यापने व्रते । गाश्चैव काञ्चनं दद्याद्व्रतस्य परिपूर्तये ' इति पृथ्वीचन्द्रोदये' नंदिपुराणोक्तेः ॥ तस्मात्सर्वथोद्यापनं कर्तव्यम् । तत्प्रकारश्च भविष्योत्तरोक्तो वक्ष्यते ।। इति जन्माष्टमीव्रतं समाप्तम् ।

अथ भविष्योत्तरोक्तजन्माष्टमीव्रतकथा । युधिष्ठिर उवाच । ' कीदृशं तद्व्रतं देव देवैः सर्वैरनुष्ठितम् । जन्माष्टमीतिसंज्ञं च पवित्रं पापनाशनम् । येन त्वं तुष्टिमायासि चीर्णेन प्रभवाव्यय । एतन्मे तत्त्वतो ब्रूहि सविधानं सविस्तरम् ' । श्रीकृष्ण उवाच । ' मासि भाद्रपदेऽष्टम्यां निशीथे कृष्णपक्षगे । शशाङ्के वृषराशिस्थे ऋक्षे रोहिणीसंज्ञके । योगेऽस्मिन्वसुदेवाद्धि देवकी मामजीजनत् । भगवत्पार्श्वे तत्रैव क्रियते सुमहोत्सवः । योगेऽस्मिन् कथितेऽष्टम्यां सिंहराशिगते रवौ । सप्तम्यां लघु-भुक्कुर्याद्दन्तधावनपूर्वकम् । उपवासस्य नियमं रात्रौ स्वप्याज्जितेन्द्रियः । केवलेनोप-वासेन तस्मिञ्जन्मदिने मम । सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः । उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह । उपवासः स विज्ञेयो सर्वभोगविवर्जितः । ततोऽष्टम्यां तिलैः स्नातो नद्यादौ विमले जले । सुदेशे शोभनं कुर्याद्देवक्याः सूतिकागृहम् । सित पीतैस्तथा रक्तैः कर्बुरैर्हरितैः पृथक् । वासोभिः शोभितं कृत्वा समन्तात्कलशैर्नवैः । भक्ष्यैः फलैरनेकैश्च दीपालिभिरितस्ततः । पुष्पमालाविचित्रं च चन्दनागुरुधूपितम् । अतिरम्यमनौपम्यं रत्नज्वालादिभूषितम् । हरिवंशस्य चरितं गोकुलं च लिखापयेत् । ततो वादित्रनिनदैर्वीणावेणुरवाकुलम् । नृत्यगीतक्रमोपेतं मङ्गलैश्च समंततः । वह्नि-

वारिलोहखड्गकृष्णच्छागं च यत्नतः । द्वारि विन्यस्तमुसलं रक्षितं रक्षपालकैः । षष्ठ्या देव्याऽधिष्ठितं च स्त्रीभिश्च स्वजनैस्तथा । एवं विभवसारेण कृत्वा तत्सूतिकागृहम् । तन्मध्ये प्रतिमा स्थाप्या सा चाप्यष्टविधा स्मृता । काञ्चनी राजती ताम्री पैत्तली मृण्मयी तथा । वार्क्षी मणिमयी चैव वर्णकैर्लिखिता तथा । सर्वलक्षणसंपूर्णा पर्यङ्के चावृता स्मृता । प्रतप्तकाञ्चनाभासां मया सह तपस्विनीम् । प्रसुप्तां च प्रसूतां च स्थापयेन्मञ्चकोपरि । मां तत्र बालकं सुप्तं पर्यङ्के स्तनपायिनम् । श्रीवत्सवक्षसं शान्तं नीलोत्पलदलच्छविम् । यशोदां तत्र चैकस्मिन्प्रदेशे सूतिकागृहे । तद्वच्च कल्पयेत्पार्थ प्रसूतवरकन्यकाम् । तथैव मम पार्श्वस्थाः कृताञ्जलिपुटा नृप । देवा ग्रहास्तथा नागा यक्षा विद्याधरा नटाः । प्रणताः पुष्पमालाग्रचारुहस्ताः सुरासुराः । संचरन्त इवाकाशे प्रहारैरुदितोदितैः । वासुदेवोऽपि तत्रैव खड्गचर्मधरः स्थितः । कश्यपो वसुदेवश्च अदितिश्चैव देवकी । शेषो वै बलभद्रोऽयं यशोदाऽदितिरन्वभूत् । नन्दः प्रजापतिर्दक्षो गर्गश्चापि चतुर्मुखः । गोप्यश्चाप्सरसः सर्वा गोपाः सर्वे दिवौकसः । एषोऽवतारो राजेन्द्र कंसोऽयं कालनेमिनः। तत्र कंसनियुक्ताश्च मोहिता योगनिद्रया । गोधेनुकुञ्जराश्चैव दानवाः शस्त्रपाणयः । नृत्यन्तश्चाप्सरोभिश्च गन्धर्वा गीततत्पराः । लेखनीयश्च तत्रैव कालियो यमुनाह्रदे । इत्येवमादि यत्किंचिच्छक्यते चरितं मम । लेखयित्वा प्रयत्नेन पूजयेद्भक्तितत्परः । रम्यामेवंविधां कृत्वा देवकीं नवसूतिकाम् । ततस्तां पूजयेद्भक्त्या गन्धपुष्पाक्षतैः फलैः।कूष्माण्डैर्नारिकेलैश्च खर्जूरैर्दाडिमीफलैः।बीजपूरैः पूगफलैर्लकुचैस्त्रपुसैस्तथा। कालदेशोद्भवैःपुष्टैः पुष्पैश्चापि युधिष्ठिर। पाद्यार्घ्यैः पूजयेद्भक्त्या गन्धपुष्पाक्षतैः फलैः । मन्त्रेणानेन कौन्तेय देवकीं पूजयेन्नरः । गायद्भिः किन्नराद्यैः सततपरिवृता वेणुवीणानिनादैः शृङ्गारादर्शकुन्तप्रवरकृतकरैःकिन्नरैः सेव्यमाना । पर्यङ्के स्वास्तृते या मुदिततरमुखी पुत्रिणी सम्यगास्ते सा देवी देवमाता जयति सुवदना देवकी देवरूपा । पादौ संवाहयन्ती श्रीर्देवक्याश्चरणान्तिके । निषण्णा पङ्कजे पूज्या नमो देव्यै श्रियै इति । देवक्यै तु नमस्तुभ्यं कृष्णोत्पादनतत्परे । पापक्षयकरी देवी तुष्टिं यातु मयाऽर्चिता । प्रणवादिनमस्यान्तं पृथङ्नामानि।कीर्तयेत्।कृत्वा पूजां विधिज्ञश्च सर्वपापापनुत्तये।देवक्यै वसुदेवाय वासुदेवाय चैव हि।बलदेवाय नन्दाय यशोदायै पृथक्पृथक्।क्षीराद्यैः स्नपनं कृत्वा चन्दनेनानुलेपयेत्॥ विध्यन्तरमपीच्छन्ति केचिदत्रैव-"चन्द्रोदये शशाङ्काय अर्घ्यं दद्याद्धरिं स्मरेत्।अनघं वामनं शौरिं वैकुण्ठं पुरुषोत्तमम्। वासुदेवं हृषीकेशं माधवं मधुसूदनम्। वाराहं पुण्डरीकाक्षं नृसिंहं दैत्यसूदनम् ।

दामोदरं पद्मनाभं केशवं गरुडध्वजम् । गोविन्दमच्युतं कृष्णमनन्तमपराजितम् । अधोक्षजं जगद्बीजं सर्गस्थित्यन्तकारकम् । अनादिनिधनं विष्णुं त्रिलोकेशं त्रिविक्रमम् । नारायणं चतुर्बाहुं शंखचक्रगदाधरम् । पीताम्बरधरं नित्यं वनमालाविभूषितम् । श्रीवत्साङ्कं जगत्सेतुं श्रीधरं श्रीपतिं हरिम् । योगेश्वराय देवाय योगानां पतये नमः । योगोद्भवाय नित्याय गोविन्दाय नमो नमः । ' स्नानमन्त्रः—' यज्ञेश्वराय देवाय तथा यज्ञोद्भवाय च । यज्ञानां पतये नाथ गोविन्दाय नमो नमः । ' धूपादिमन्त्रः । ' विश्वेश्वराय विश्वाय तथा विश्वोद्भवाय च । विश्वस्य पतये तुभ्यं गोविन्दाय नमो नमः । मन्त्रेणानेन नैवेद्यं दद्याच्चन्द्रमसे नरः । तथैवार्घ्यं च मन्त्रेण अनेनैव तु दापयेत् । क्षीरोदार्णवसंभूत अत्रिगोत्रसमुद्भव । गृहाणार्घ्यं शशाङ्केदं रोहिण्या सहितो मम । ज्योत्स्नापते नमस्तुभ्यं नमस्ते ज्योतिषां पते । नमस्ते रोहिणीकान्त अर्घ्यं नः प्रतिगृह्यताम् । स्थण्डिले स्थापयेद्देवं शशाङ्कं रोहिणीयुतम् । देवक्या वसुदेवं च नन्दं चैव यशोदया । बलदेवं मया सार्धं भक्त्या परमया नृप । संपूज्य विधिवद्देही किं नाप्नोत्यतिदुर्लभम् । अर्धरात्रे वसोर्धारां पातयेद्द्रव्यसर्पिषा । ततो वर्धापयेन्नालं षष्ठीनामादिकं मम । कर्तव्यं तत्क्षणाद्रात्रौ प्रभाते नवमीदिने । यथा मया तथा कार्यो भगवत्या महोत्सवः । ब्राह्मणान्भोजयेद्भक्त्या तेभ्यो दद्याच्च दक्षिणाम् । हिरण्यं मेदिनीं गावो वासांसि कुसुमानि च । यद्यदिष्टतमं तत्तत्कृष्णो मे प्रीयतामिति । यं देवं देवकी देवी वसुदेवादजीजनत् । भौमस्य ब्रह्मणो गुप्त्यै तस्मै ब्रह्मात्मने नमः' । सुजन्मवासुदेवाय गोब्राह्मणहिताय च । शान्तिरस्तु शिवं चास्तु इत्युक्त्वा मां विसर्जयेत् । ततो बन्धुजनौघं च दीनानाथजनं बहु । भोजयित्वा तु शान्तात्मा स्वयं भुञ्जीत वाग्यतः । एवं यः कुरुते देव्या देवक्याः सुमहोत्सवम् । प्रतिवर्षं विधानेन मद्भक्तो धर्मनन्दन । नरो वा यदि वा नारी यथोक्तफलमाप्नुयात् । पुत्रसंतानमनघं सौभाग्यमतुलं लभेत् । इह धर्मरतिर्भूत्वा मृतो वैकुण्ठमाप्नुयात् । तत्र दिव्येन मानेन वर्षलक्षं युधिष्ठिर । भोगान्नानाविधान्भुक्त्वा पुण्यशेषादिहागतः । सर्वकामसमृद्धे तु सर्वासुखविवर्जिते । सर्वरत्नयुतः पार्थ सर्वगोलोकमण्डले । कुले नृपवरिष्ठानां जायन्ते हृच्छयो मम । यस्मिन्सदैव देशे तु लिखितं वा पटार्पितम् । मम जन्मदिनं पुण्यं सर्वालंकारभूषितैः । पूज्यते पाण्डवश्रेष्ठ जनैरुत्सवसंयुतैः । परचक्रभयं तत्र न कदाचिद्भवत्युत । पर्जन्यः कामवर्षी स्यादीतिभ्यो न भयं भवेत् । गृहे वा पूज्यते यस्मिन्देवक्याश्चरितं मम । तत्र सर्वसमृद्धिः स्यान्नोप-

सर्गादिजं भयम् । पशुतो नकुलाव्यालात्पापरोगाच्च पातकात् । राजतश्चोरतश्चापि न कदाचिद्भयं भवेत् । प्रसङ्गेनापि यो भक्त्या व्रतं पश्येज्जनाकुलम् । सोऽपि पापविनिर्मुक्तः प्रयाति हरिमन्दिरम् । जन्माष्टमी जनमनोनयनाभिरामा पापापहा झटिति नन्दितनन्दगोपा । यो देवकीं सुतयुतां यजतीह तस्यां पुत्रानवाप्य समुपैति पदं स विष्णोः । ' इति जन्माष्टमीव्रतकथा समाप्ता ।

अथ भविष्योत्तरपुराणोक्तं जन्माष्टमीव्रतोद्यापनम् । युधिष्ठिर उवाच । 'उद्यापनविधिं ब्रूहि देव देव दयानिधे । येन संपूर्णतां याति व्रतमेतदनुष्ठितम् । ' श्रीकृष्ण उवाच । 'पूर्णां तिथिमनुप्राप्य चित्तवित्तादिसंयुतः । पूर्वेद्युरेकभक्ताशी स्वपेन्मां स हृदि स्मरन् । प्रातरुत्थाय संस्मृत्य पुण्यश्लोकान्समाहितः । निर्वर्त्यावश्यकं कर्म ब्राह्मणान्स्वस्ति वाचयेत् । गुरुमानीय धर्मज्ञं वेदवेदाङ्गपारगम् । वृणुयादृत्विजश्चैव वस्त्रालंकरणादिभिः । पलेन वा तदर्धेन तदर्धार्धेन वा पुनः । शक्त्या वा कारयेत्तत्र वित्तशाठ्यविवर्जितः । सौवर्णी प्रतिमा कार्या पाद्यार्घ्याचमनादिकम् । गोचर्ममात्रं संलिप्य मध्ये मण्डलमाचरेत् । ब्रह्माद्या देवतास्तत्र स्थापयित्वा प्रपूजयेत् । मण्डपं रचयेत्तत्र कदलीस्तम्भमण्डितम् । चतुर्द्वारसमोपेतं फलपुष्पादिसंयुतम् । वितानं तत्र बध्नीयाद्विचित्रं चैव शोभितम् । मण्डपे स्थापयेत्कुम्भं ताम्रं वा मृण्मयं शुचिम् । तस्योपरि न्यसेत्पात्रं राजतं वैणवं तु वा । वासआदि च कौन्तेय पूजयेत्तत्र मां बुधः । उपचारैः षोडशभिर्मन्त्रैरेभिः समाहितः । ध्यात्वावाह्यामृतीकृत्य स्वागतादिभिरादरात् । ध्यात्वा चतुर्भुजं देवं शङ्खचक्रगदाधरम् । पीताम्बरयुगोपेतं लक्ष्मीयुक्तं विभूषितम् । लसत्कौस्तुभशोभाढ्यं मेघश्यामं सुलोचनम् । ध्यानमागच्छ देवेश जगद्योने रमापते । शुद्धे ह्यस्मिन्नधिष्ठाने संनिधेहि कृपां कुरु' आवाहनम् । देवदेव जगन्नाथ गरुडासनसंस्थित । गृहाणासनकं दिव्यं जगद्धातर्नमोऽस्तु ते।' आसनम् ।'नानातीर्थाहृतं शुद्धं निर्मलं पुष्पमिश्रितम् । पाद्यं गृहाण दैत्यारे विश्वरूप नमोऽस्तु ते ।' पाद्यम् । 'गङ्गादिसर्वतीर्थेभ्यो मयानीतं सुशीतलम् । गृहाणाचमनं कृष्ण विश्वस्मै वै नमोऽस्तु ते' आचमनीयम् ।'गन्धपुष्पाक्षतोपेतं फलेन च समन्वितम् । अर्घ्यं गृहाण देवेश मया दत्तं हि भक्तितः' अर्घ्यम्।'दधिक्षौद्रघृतं शुद्धं कपिलायाः सुगन्धि यत् । सुस्वादु मधुरं शौरे मधुपर्कं गृहाण मे' मधुपर्कम् । पुनराचमनीयम् । 'पञ्चामृतेन स्नपनं करिष्यामि सुरोत्तम । क्षीरोदधिनिवासाय लक्ष्मीकान्ताय ते नमः' पञ्चामृतस्नानम् ।

'मन्दाकिनी गौतमी च यमुना च सरस्वती। ताभ्यः स्नानार्थमानीतं गृहाण शिशिरं जलम्' स्नानम्। पुनराचमनीयम्। 'शुद्धजाम्बूनदप्रख्येतडिद्भासुररोचिषी। मयोपपादिते। तुभ्यं वाससी प्रतिगृह्यताम्' वस्त्रम्। पुनराचमनीयम्। यज्ञोपवीतं परममिति यज्ञोपवीतम्। 'किरीटकुण्डलादीनि काञ्चीवलययुग्मकम्। कौस्तुभं वनमालां च भूषणानि भजस्व मे।' भूषणानि। 'मलयाचलसंभूतं गन्धसारमनोहरम्। हृदयानन्दनं चारुचन्दनं प्रतिगृह्यताम्।' चन्दनम्। 'मालतीचम्पकादीनि यूथिकाबकुलानि च। तुलसीपत्रमिश्राणि गृहाण सुरसत्तम।' पुष्पाणि। 'देवकीं वसुदेवं च रोहिणीं सबलां तथा। सात्यकिं चोद्धवाक्रूरजानूग्रसेनादियादवान्। नन्दं यशोदां तत्कालप्रसूतां गोपिकास्तथा। कालिन्दीं कालियं चैव पूजयेन्नाममन्त्रतः। वनस्पतिरसोद्भूतं कालागुरुसमन्वितम्। धूपं गृहाण देवेश गोविन्द गुणसागर।' धूपम्। साज्यं त्रिवर्तिसंयुक्तमित्यादिना दीपम्। नैवेद्यं गृह्यतां देवेति, तथा-'शाल्योदनं पायसं च सिताघृतविमिश्रितम्। नानापक्वान्नसंयुक्तं नैवेद्यं प्रतिगृह्यताम्' इति नैवेद्यम्। पुनराचमनीयम्। 'पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम्। कर्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम्। इति ताम्बूलम्। इदं फलमिति फलम्। हिरण्यगर्भगर्भस्थमिति दक्षिणाम्। 'नीराजयेत्ततो भक्त्या मङ्गलं समुदीरयन्। जयमङ्गलनिर्घोषैर्देवदेवं समर्चयेत्। दत्त्वा पुष्पाञ्जलिं चाथ दक्षिणादिपुरःसरम्। प्रणमेद्दण्डवद्भूमौ भक्तिप्रह्वः पुनः पुनः। स्तुत्वा नानाविधैः स्तोत्रैः प्रार्थयेत जगत्पतिम्। नमस्तुभ्यं जगन्नाथ देवकीनन्दन प्रभो। वसुदेवात्मजानन्त यशोदानन्दवर्धन। गोविन्द गोकुलाधार गोपिकाङ्ग नमोऽस्तु ते। ततस्तु दापयेदर्घ्यमिन्दोरुदयतः शुचिः। कृष्णाय प्रथमं दद्याद्देवकीसहिताय च। नारिकेलेन शुद्धेन दद्यादर्घ्यं विचक्षणः। कृष्णाय परया भक्त्या शङ्खे कृत्वा विधानतः। जातः कंसवधार्थाय भूभारोत्तारणाय च। कौरवाणां विनाशाय। दैत्यानां निधनाय च। गृहाणार्घ्यं मया दत्तं देवकीसहितो हरे' कृष्णार्घ्यमन्त्रः। 'शङ्खे कृत्वा ततस्तोयं सपुष्पफलचन्दनम्। जानुभ्यामवनिं गत्वा चन्द्रायार्घ्यं निवेदयेत्। क्षीरोदार्णवसंभूत अत्रिगोत्रसमुद्भव। गृहाणार्घ्यं मया दत्तं रोहिणीसहितो विधो। ज्योत्स्नापते नमस्तुभ्यं नमस्ते ज्योतिषां पते। नमस्ते रोहिणीकान्त गृहाणार्घ्यं नमोऽस्तु ते' चन्द्रार्घ्यमन्त्रः। 'इत्थं संप्रार्थ्य देवेशं रात्रौ जागरणं चरेत्। गीतनृत्यादिना चैव पुराणश्रवणादिभिः। प्रत्यूषे विमले स्नात्वा पूजयित्वा जगद्गुरुम्। पायसेन तिलाज्यैश्च मूलमन्त्रेण भक्तितः। अष्टोत्तरशतं हुत्वा ततः पुरुषसूक्ततः। इदं विष्णु

रिति प्रोक्ता जुहुयाद्वै घृताहुतीः । होमशेषं समाप्याथ पूर्णाहुतिपुरःसरम् । आचार्यं पूजयेद्भक्त्या भूषणाच्छादनादिभिः। गामेकां कपिलां दद्याद्व्रतसंपूर्तिहेतवे । पयस्विनीं सुशीलां च सवत्सां सगुणां तथा । स्वर्णशृङ्गीं रौप्यखुरां कांस्यदोहनिकायुताम् । रत्नपुच्छां ताम्रपृष्ठां स्वर्णघण्टासमन्विताम् । वस्त्रच्छन्नां दक्षिणाशामेवं संपूर्णतां व्रजेत्। कपिलाया अभावे तु गौरन्यापि प्रदीयते । ततो दद्याच्च ऋत्विग्भ्योऽन्येभ्यश्चैव यथार्हतः ।[1]ब्राह्मणान्भोजयेत्पश्चादष्टौ तेभ्यश्च दक्षिणाम् । कलशानन्नसंपूर्णान्दद्याच्चैव समाहितः । प्राप्यानुज्ञां तथा तेभ्यो भुञ्जीत सह बन्धुभिः । एवं कृते महाराज व्रतोद्यापनकर्मणि । निष्पापस्तत्क्षणादेव जायते विबुधोत्तमः । पुत्रपौत्रसमायुक्तो धनधान्यसमन्वितः । भुक्त्वा भोगांश्चिरं कालमन्ते मम पुरं व्रजेत्।' ॥ इति भविष्योत्तरोक्तं जन्माष्टमीव्रतोद्यापनम् ॥

अथ स्मृतिकौस्तुभोक्तं जन्माष्टमीव्रतोद्यापनम् । युधिष्ठिर उवाच । 'त्वत्प्रसादाद्धृषीकेश श्रुतं मे व्रतमुत्तमम् । इदानीं कृपया ब्रूहि व्रतोद्यापनमुच्यत । उद्यापनं विना नैव व्रतस्य फलमश्नुते । कर्तव्यं तु कथं भक्तैरखण्डफलभोक्तृभिः । श्रीकृष्ण उवाच। शृणु पाण्डव वक्ष्यामि व्रतोद्यापनमुत्तमम् । कृतेन येन राजेन्द्र सफलं विपुलं भवेत् । यथा तथा वा तत्कुर्याद्वित्तशाठ्यं न कारयेत् । वर्षे वर्षे तथाऽष्टम्यां कुर्यात्पूजामनुत्तमाम् । सप्तम्यां पञ्चगव्येन विधिवत्कायशोधनम् । कुर्याद्व्रती तथाऽष्टम्यां मध्याह्ने चेष्ट बन्धुभिः । सर्वौषधैः सर्वगन्धैः स्नानं शुक्लतिलामलैः । वेदोक्तविधिना स्नात्वा तर्पयेत्पितृदेवताः । यथोक्तविधिना कृत्वा कुर्यादाराधनं हरेः । एह्येहि कृपया विष्णो क्षीरोदार्णवसंस्थित । पद्मचक्रमहाशंखलक्ष्मीगरुडशोभित । श्रीवत्सकौस्तुभोरस्क फणासप्तान्वित प्रभो । व्रतस्योद्यापनेन त्वं सर्वकामप्रदो भव' । इत्यावाहनमन्त्रः । 'इति प्रार्थ्य ततो देवमार्चितं सनकादिभिः। आगतानर्चयेत्सर्वान् गन्धपुष्पादिभिः क्रमात्। पुण्याहवाचनं कुर्यात्संकल्पं च यथाविधि। आचार्यमर्चयेद्विद्वाञ्छ्रोत्रियं च कुटुम्बिनम्। श्रुतिस्मृतिसमायुक्तं ब्राह्मणं वरयेत्ततः । धर्मशास्त्रार्थतत्त्वज्ञानन्यांश्च वेदपारगान् । वरयेद्यजनार्थं हि ब्राह्मणानां च सप्तकम् । आशीर्वादं गृहीत्वाऽथ सर्वैर्द्विजवरोत्तमैः । शुचौ देशे तु संलिप्य गोमयेन विचक्षणः । मण्डलं कारयेत्तत्र पञ्चवर्णं सुशोभनम् । नवनालं सारविदां सर्वतोभद्रसंज्ञकम् । मण्डलं कारयेन्मध्ये मानसाह्लादकं परम् । मण्डपं कारयेत्तत्र सुतोरणसमन्वितम् । चतुर्द्वारान्वितं ह्येतत्स्थापयेत्तेषु देवताः ।

---

१—इष्टबन्धवोऽपि तत्र सहाया भवेयुरित्यर्थः ।

प्रथमद्वारमार्गे तु वरुणं स्थापयेद्बुधः।अवतेहेलमन्त्रेण नैवेद्यान्तं प्रकल्पयेत् ।द्वितीय-द्वारदेशे तु कुबेरं स्थापयेत्ततः । राजाधिराजमन्त्रेण पूजयेत्प्रयतः शुचिः । तृतीय-द्वारदेशे तु देवेन्द्रं स्थापयेत्ततः। इन्द्रं वो विश्वत इति मन्त्रेणाराधयेत्ततः । गणानां त्वेति मन्त्रेण चतुर्थे गणनायकम् । एवं संपूज्यते तत्र मण्डले पंकजादिभिः । मध्ये च स्थापयेत्कुम्भं सौवर्णं राजतं तथा । अभावे ताम्रजं वापि कारयेत्सुसमाहितः । सुधाधवलितं कृत्वा चन्द्रसूर्यनिभं शुभम्। नामाङ्कितं तु कृत्यं च जलपूर्णं सरत्नकम्। गन्धपुष्पादिसंयुक्तं सपल्लवफलं तथा। पात्रं च कारयेत्पश्चाद्धेम्ना वा रजतेन वा। अभावे ताम्रपात्रं तु कुम्भस्योपरि विन्यसेत्। सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः। आयान्तु यजमानस्य दुरितक्षयकारकाः।' इति जलावाहनम् ।'स्थितं त्वयि जगत्स र्वमसुरासुरमानुषम् । आत्मनः कार्यसिद्ध्यर्थं स्थापयामि घटोपरि । मूर्तिं च कारये त्तत्र कृष्णस्यैवं विचक्षणः । अष्टमाषप्रमाणं तु वित्तशाठ्यं न कारयेत्। तदर्धेनाथ वाप्यर्धं शक्त्या वा कारयेद्बुधः । आवाहयेत्प्रयत्नेन पात्रे कलशसंस्थिते । चामर च्छत्रशय्याश्च पीठिकां चाथ पात्रकम्। सोपस्करसमायुक्तं देवस्याग्रे निवेदयेत्' । एवं प्रश्चामृताद्युपकल्पनं विधातुं महापश्चामृतेन स्नपनं कुर्याद्देवस्य मन्त्रतः।' स्नानं च कारयेत्पार्थ पश्चात्पूजां समाचरेत् । ततस्तु पूजयेद्देवं विष्णुं तं विश्वरूपिणम्। वस्त्रयु ग्मेन संवीतं पीतयज्ञोपवीतिनम्।चन्दनेन सुगन्धेन कर्पूरागुरुगन्धिना। विलेपनेन भोगाय क्रियते मधुसूदन'। उक्तविलेपनेन सह भोगार्थेक्षितं नैवेद्यताम्बूलादि । तस्याप्युपक-ल्पनं कार्यमित्याशयः।'अथ पूजा प्रकर्तव्या मन्त्रैर्वेदपुराणकैः।आगच्छ देवदेवेश तेजो राशे जगत्पते । पूजयिष्याम्यहं देव प्रसादात्संमुखो भव' । सहस्रशीर्षेत्यावाहनम्। 'देवा ब्रह्मादयो येन स्वरूपं न विदुस्तव । अतस्त्वां पूजयिष्यामि मातुरुत्सङ्गवासिनम्। यस्यावताररूपाणि अर्चयन्ति दिवौकसः। अपश्यन्तः स्वयं रूपं तस्मै श्रीब्रह्मणे नमः' पुरुष एवेदमित्यासनम् । 'अवतारसहस्राणि करोषि मधुसूदन। न ते संख्याऽवताराणां कश्चिज्जानाति तत्त्वतः'एतावनस्येति पाद्यम्। 'जातः कंसवधार्थाय धर्मसंस्थापनाय च। कौरवाणां विनाशाय पाण्डवानां हिताय च । गृहाणार्घ्यं मया दत्तं देवक्या सहितो हरे'। त्रिपादूर्ध्वेत्यर्घ्यम्। 'सुरासुरनरेशाय क्षीराब्धिशयनाय च। योगेश्वराय देवाय योगिनां पतये नमः । योगोद्भवाय नित्याय गोविन्दाय नमो नमः। कृष्णाय वासुदेवाय दद्यादाचमनं शुभम्।' तस्माद्विराडित्याचमनीयम्। 'नारायण नमस्तेऽस्तु नरकार्णव-तारक । गङ्गोदकं समानीतं स्नानार्थं प्रतिगृह्यताम्' तस्माद्यज्ञादिति स्नानम् । 'पयो

दधि घृतं क्षौद्रं शर्करास्नानमुत्तमम् । तुष्ट्यर्थं देवदेवेश गृह्यतां देवकीसुत ।' पञ्चामृतस्नानम्, शुद्धोदकस्नानम् आचमनम् । 'क्षौमं च पट्टसूत्रार्थं मया नीतांशुकं शुभम् । गृह्यतां देवदेवेश मया दत्तं सुरोत्तम' तस्माद्यज्ञादिति द्वितीयवस्त्रं च । 'नमः कृष्णाय देवाय शंखचक्रधराय च । ब्रह्मसूत्रं जगन्नाथ गृहाण परमेश्वर' तस्मादश्वेत्युपवीतम्। 'नानागन्धसमायुक्तं चन्दनं चारु चर्चितम् । कुङ्कुमाक्काक्षतैर्युक्तं गृह्यतां परमेश्वर' तं यज्ञमिति गन्धम् । 'पुष्पाणि यानि दिव्यानि पारिजातोद्भवानि च । मालतीकेसरादीनि पूजार्थं प्रतिगृह्यताम्' । यत्पुरुषमिति पुष्पम् । अथाङ्गपूजा । कृष्णाय नमः पादौ पूजयामि । संकर्षणाय नमः स्फिजौ पूजयामि। कालात्मने नमः जानुनी पूजयामि। विश्वकर्मणे नमः जघनं पूजयामि । विश्वनेत्राय नमः कटिं पूजयामि । विश्वकर्मणे नमः मेढ्रं पूजयामि। 'वाचस्पते नमस्तुभ्यमिति संपूजयेन्मुखम्।' केशवाय नमः ललाटं पूजयामि । सर्वात्मने नमः शिरः पूजयामि । 'कालात्मा विश्वरूपात्मा नारायण नमो नमः' इति सर्वाङ्गपूजा । वनस्पतिरसो दिव्यो गन्धाढ्यः । सुमनोहरः । आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यताम्' ब्राह्मणोऽस्येति धूपम् । 'त्वं ज्योतिः सर्वदेवाना तेजस्थं तेजसां परम् । आत्मज्योतिर्नमस्तुभ्यं दीपोऽयं प्रतिगृह्यताम्' चन्द्रमा मनस इति दीपम् । 'नानागन्धसमायुक्तं भक्ष्यभोज्यं चतुर्विधम् । नैवेद्यार्थं मया दत्तं गृहाण परमेश्वर' नाभ्या आसीदिति नैवेद्यम् । 'ताम्बूलं च सकर्पूरं पूगीफल समन्वितम् । मुखवासकरं रम्यं प्रीतिदं प्रतिगृह्यताम्' यत्पुरुषेणेति ताम्बूलम् । 'सौवर्णं राजतं ताम्रं ननारत्नसमन्वितम्। कर्मसाद्गुण्यसिद्ध्यर्थं दक्षिणा प्रतिगृह्यताम् ।सप्तास्यासान्निति दक्षिणाम् । इदं फलं मया देव स्थापितं पुरतस्तव। तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि' यज्ञेन यज्ञमिति फलम् । ततो वैदिकमन्त्रैः पुष्पाञ्जलिं दद्यादिदं विष्णुरित्यादिभिः । 'एवं पूजा प्रकर्तव्या रात्रौ जागरणं तथा । गीतवादित्रसंयुक्तं पुराणश्रवणं तथा । प्रतियामं विधायैवं पूजां देवस्य चक्रिणः । ततः प्रभातसमये स्नात्वा शुचिजलाशये। पूर्ववत्पूजयेद्देवं पश्चाद्धोमं समाचरेत्। स्वगृह्योक्तविधानेन प्रतिष्ठाप्य चरुं ततः । व्रीहियवतिलैश्चैव घृतेन च परिप्लुतैः। अतो देवेति मन्त्रेण शतमष्टोत्तरं क्रमात्। सर्वं हुत्वा विधानेन मन्त्रैरेभिः समाहितः । त्रुटये स्वाहा, । कालात्मने स्वाहा, अहोरात्राय स्वाहा, अर्धमासाय स्वाहा, मासाय स्वाहा, संवत्सराय स्वाहा, सर्वात्मने स्वाहा। ततः 'इदं विष्णुरिति मन्त्रेण पञ्चखाद्यं हुतं स्मृतम् । यथासंख्ये च कर्तव्यं हुतं संपूर्णमेव च। ततो महाव्याहृतयो होममन्त्राः प्रकीर्तिताः । जपेत्पुरुषसूक्तं तु स्मरेद्देवमनन्तकम् । पूर्णाहुतिं

जनिष्यमाणः प्रत्यङ्मुखस्तिष्ठन्सर्वतोमुखः ।' अग्ने वैश्वानर शाण्डिल्यगोत्र मेषध्वज प्राङ्मुख मम संमुखो भव, इति ध्यात्वा । ततोऽन्वादध्यात् । क्रियमाणे रामनवमीव्रतोद्यापने होमदेवतापरिग्रहार्थमन्वाधानं करिष्य इति संकल्प्य, समिद्द्वयमादायास्मिन्नन्वाहितेऽग्नौ जातवेदसमग्निमिध्मेन प्रजापतिं प्रजापतिं चाघारदेवते आज्येनाग्नीषोमौ चक्षुषी आज्येनात्र प्रधानं श्रीराममष्टोत्तरशतसंख्याकाभिः साज्यपायसाहुतिभिः सीतां, रामस्य जननीं, दशरथं, लक्ष्मणं, भरतं, शत्रुघ्नं, हनुमन्तं, हृदयं, शिरः शिखां, कवचं, नेत्रम्, अस्त्रं, सुग्रीवं, भरतं, विभीषणं, लक्ष्मणम्, अङ्गदं, जाम्बवन्तं, धृष्टिं, जयन्तं, विजयं, सुराष्ट्रं, राष्ट्रवर्धनम्, अकोपं, धर्मपालम्, सुमन्तम्, इन्द्रम्, अग्निं, यमं, निर्ऋतिं, वरुणं, वायुं, कुबेरम्, ईशानं, ब्रह्माणम्, अनन्तं, वज्रं, शक्तिं, दण्डं, खड्गं, पाशम्, अङ्कुशं, गदां, शूलं, पद्म, चक्रम्, एताः प्रधानदेवताः प्रत्येकमष्टाविंशतिसंख्याकाभिरष्टाभिर्वा साज्यपायसाहुतिभिः शेषेण स्विष्टकृतमग्निमिध्मसन्नहनेन रुद्रमयासमग्निं देवान्विष्णुम्, अग्निं, वायुं, सूर्यं, प्रजापतिं च, एताः प्रायश्चित्तदेवता आज्यद्रव्येण ज्ञाताज्ञातदोषनिबर्हणार्थं त्रिवारमग्निं सकृन्मरुतश्चाज्येनाङ्गदेवताः प्रधानदेवताः सर्वाः संनिहिताः सन्तु साङ्गेन कर्मणा सद्यो यक्ष्ये व्याहृतीनां परमेष्ठी प्रजापतिः प्रजापतिर्बृहती अन्वाधानसमिद्धोमे विनियोगः ॐ भूर्भुवः स्वःस्वाहा प्रजापतये इदम्।इध्माबर्हिषोः संनहनम् । तत्रायं क्रमः । प्रादेशमात्रान्षट्त्रिंशद्दर्भान् रज्जुकरणार्थं गृहीत्वा तत्र द्वादशदर्भैः संधित्रयवतीं रज्जुं प्रादक्षिण्येन कृत्वा पुनरन्यां रज्जुम् । एवं रज्जुद्वयं गृहीत्वा तद्रज्जुद्वयमप्रादक्षिण्येन समस्य पुनरन्यां रज्जुं पूर्ववत्कृत्वा प्रादक्षिण्येन त्रिवृतं समस्याप्रदक्षिणग्रन्थिं कृत्वा तां रज्जुमुदगग्रां वितत्य त्रिप्रादेशमात्रान्मुष्टिपरिमितान्दर्भान्निधाय तया रज्ज्वा तान्दर्भान्द्विरावेष्ट्य तद्रज्ज्वग्रेण तद्रज्जुमूलं सकृदावेष्ट्य तद्रज्ज्ववशेषं पूर्वमाविष्टरज्ज्वाऽधस्तान्निनीयान्यैर्दर्भैः सहायतनस्य पश्चाद्भागे उपरि निदध्यात् । ततः पूर्ववदन्यां त्रिवृतां रज्जुं कृत्वोदगग्रां वितत्य तत्र पलाशखादरायन्यतमयज्ञियवृक्षसमुद्भवं प्रादेशप्रमाणं पञ्चदशसमिदात्मकमिध्मं प्रागग्रं निधाय तया रज्ज्वा सकृदाबध्यायतनस्य पश्चाद्भागे उपरि विधाय ततोऽग्निमायतनाद्बहिः सोदकेन पाणिनाग्नेरीशानमारभ्यैशानीपर्यन्तं परिसमुह्य ततः प्राच्यामुदगग्रैः दक्षिणस्यां प्रागग्रैः प्रतिच्यामुदगग्रैः उदीच्यां प्रागग्रैर्दर्भैः परिस्तृणीयात् । पूर्वपश्चिमपरिस्तरणमूलयोरुपरि

दक्षिणपरिस्तरणं पूर्वपश्चिमपरिस्तरणाग्रयोरधस्तादुपरिपरिस्तरणम्। एवमग्निं परिस्तीर्य कांश्चिदुत्तरतो दर्भानास्तीर्याग्नेरीशानीमारभ्य पूर्ववत्पर्युक्ष्य दर्भेषूत्तरतः पात्राणि विसादयेत्— दक्षिणसव्यपाणिभ्यां क्रमेण चरुस्थालीप्रोक्षण्यौ दर्वीस्रुवौ प्रणीताज्य-पात्रे इध्माबर्हिषी शूर्पकृष्णाजिने उलूखलमुसले। प्रोक्षणीपात्रमुत्तानीकृत्य प्रादेशमात्रे पवित्रे निधायाद्भिः पूरयित्वाङ्गुष्ठोपकनिष्ठिकाभ्यामसंस्पृष्टे गृहीत्वा त्रिरुत्पूय पात्राण्यु त्तानानि कृत्वा इध्मं विस्रस्य त्रिःप्रोक्षयेत् । प्रणीतापात्रमग्नेः प्रत्यङ्निधाय तत्र पवित्रे निधायोदकं पूरयित्वा गन्धपुष्पाक्षतान्निक्षिप्य यजमानस्तत्प्रणीतापात्रं नासि-कासमीपे नीत्वोत्तरतोऽग्ने दर्भेषु निधाय अन्यैर्दर्भैराच्छादयेत् अस्मिन्कर्मणि ब्रह्मा कृताकृतः । ते पवित्रे शूर्पे निधाय श्रीराममुद्दिश्य तूष्णीं चतुरो मुष्टीन्निरूप्येतर-देवताभ्यः सीतायै त्वा जुष्टं निर्वापयामीत्यादिचतुरश्चतुरो मुष्टीन्निर्वपेत् । श्रीरामाय जुष्टं प्रोक्षामीति तथैव सीतायै त्वा जुष्टं प्रोक्षामीति मन्त्रेण प्रतिदैवतं चतुःसंख्यं प्रोक्ष-णम् । पत्न्या प्रत्यग्ग्रीवे ऊर्ध्वलोम्नि कृष्णाजिने उलूखलं निधायोलूखले निरुप्तव्रीहीं-स्तान्मुसलेन त्रिरवहतान् त्रिःफलीकृतांस्तण्डुलान्पयसि श्रपयेत् । असंस्कृताग्नौ श्रप-णपक्षे शूर्पादीनां चतुर्णां निर्वापादीनां च निवृत्तिः,पर्यग्निकरणस्य तु नेति।पवित्रे आज्य-पात्रे निधायाज्यपात्रं पुरतः संस्थाप्य तत्र विलीनाज्यं निक्षिप्य ततः परिस्तरणाद्बहि-रुत्तरतोऽग्नेरङ्गारानपोह्य तेष्वाज्यपात्रं निधाय वामहस्ते दर्भाग्रद्वयं धृत्वा ज्वलता दर्भो-ल्मुकेनावज्वल्य दर्भाग्रद्वयमङ्गुष्ठपर्वमात्रप्रक्षालितं तत्र निक्षिप्य ज्वलता तेनैवोल्मुकेन चरुसहितं त्रिःपर्यग्निकुर्यात् । उल्मुकं निरस्याप उपस्पृश्याज्यं कर्षन्निवोदगुद्वास्या-ङ्गारानग्नौ प्रक्षिपेत् । ततोऽङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां पवित्रे असंहते धृत्वा सवितुष्ट्वा हिरण्यस्तूपः सविता पुर उष्णिक् आज्यस्योत्पवने वि० । 'सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः ।' प्रागुत्पुनाति—सकृन्म-न्त्रेण द्विस्तूष्णीम्। पवित्रे अद्भिः प्रोक्ष्याग्नौ प्रहरेत् । अग्नेः पश्चात्परिस्तरणाद्बहिरात्म-नोऽग्रे भुवं प्रोक्ष्य भुवि बर्हिःसन्नहनीं रज्जुमुदगग्रां वितत्य तद्बहिः प्रागग्रमुदगपवर्गमा-स्तीर्य तत्राज्यस्थापनं कृत्वा सकुशौ दर्वीस्रुवावग्नौ प्रताप्य भूमौ दर्वीं निधाय स्रुव-बिलं दर्भाग्रैःप्रागपवर्गं त्रिः संमृज्य स्रुवपृष्ठं दर्भाग्रैरात्माभिमुखं त्रिः संमृज्य कुशमूलेना-ग्रादारभ्य बिलपर्यन्तं दण्डं त्रिः संमृज्य प्रोक्ष्य प्रताप्य घृतादुत्तरतः स्थापयेत् । तथैव दर्वीं संमृज्य स्रुवादुत्तरतो निधाय तान्दर्भानद्भिः प्रोक्ष्याग्नौ प्रहरेत् । ततःस्रुवे-णाज्यं गृहीत्वा श्रृतं हविरभिघार्योदगुद्वास्याग्न्याज्ययोर्मध्येन नीत्वा दक्षिणतो बर्हि-

न्यासाय पुनरभिघार्य सह श्रपणपक्षे पात्रान्तरे व्युद्धृत्येदं श्रीरामोयति चक्रान्तं पृथ्गभिमृश्य गन्धपुष्पाक्षतैरग्निमर्चयेत् । विश्वानि न इत्यनयोर्वसुश्रुतोऽग्निस्त्रिष्टुप् अग्न्यर्चने विनियोगः । 'विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरितातिपर्षि । अग्ने अत्रिवं नमसा गृणानोऽस्माकं बोध्यविता तनूनाम् । यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि । जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्याम् ।' इत्यृग्भ्यां प्रतिपादं प्रतिदिशं प्राचीरभ्यर्च्य । ' यस्मै त्वं सुकृत इत्यस्य वसुश्रुतोऽग्निस्त्रिष्टुप् अग्न्युपस्थाने विनियोगः । ' यस्मै त्वं सुकृते जातवेद उलोकमग्ने कृणव स्योनम् । अश्विनं सपुत्रिणं वीरवन्तं गोमन्तं रयिन्नशते स्वस्ति ।' इत्युपस्थायात्मानं चालंकृत्य हस्तं प्रक्षाल्येध्मसंनहनीं रज्जुं तत्रैव निधायेध्ममादाय मूलमध्याग्रेष्वभिघार्य । अयन्त इध्म इत्यस्य मन्त्रस्य वामदेवो जातवेदा अग्निस्त्रिष्टुप् इध्महवने विनियोगः । 'अयन्त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्धस्व चेद्ध वर्धय चास्मान् प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा ।' इति । जातवेदसेऽग्नय इदम् । अथ स्रुवेणाज्यं गृहीत्वा परिस्तरणवायव्यकोणमारभ्याग्नेयीपर्यन्तं प्रजापतये इति मनसा स्मरन् स्वाहेत्युच्चार्याऽविच्छेदेनार्जवेणाज्यधारां तप्ताग्नौ इध्मदारुणि प्लावयन्हुत्वा पुनराज्यं गृहीत्वा परिस्तरणनैर्ऋत्यकोणमारभ्यैशानीपर्यन्तं तथैव हुत्वा उभयत्र प्रजापतय इदं न ममेति त्यजेत् । पुनराज्यमादायाग्नये स्वाहेत्युत्तरपार्श्वे पुनराज्यमादाय स्वाहेत्यग्नेर्दक्षिणपार्श्वेऽग्नये इदं सोमाय इदं न ममेति यथाक्रमेण त्यजेत् । ततो यजमानः अष्टोत्तरशतसंख्याहुतिपर्यन्तं साज्यपायसं द्रव्यं श्रीरामाय तथा प्रतिदैवतम् अष्टाविंशतिसंख्याहुतिपर्यन्तं साज्यपायसद्रव्यं चतुर्थ्यन्तेभ्यः सीताप्रभृतिभ्यो न ममेति साक्षतजलेन त्यागं कुर्यात् । ततो राममन्त्रस्य ऋष्यादिस्मरणपूर्वकं तेनाष्टोत्तरशतसंख्यः साज्यपायसहोमः कार्यः कारयितव्यो वा आचार्यहस्तेन । दीक्षाहीनस्तु पूजामिव होममपि वैदिकमन्त्रेण नाममन्त्रेण वा कुर्यात् । वैदिकपक्षे तद्विष्णोरिति मन्त्रस्य मेधातिथिर्विष्णुर्गायत्री रामनवमीव्रताङ्गसाज्यपायसहोमे विनियोगः । 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवी व चक्षुराततं स्वाहा' इति होमः कार्यः । द्वितीयपक्षे श्रीरामाय स्वाहेति । ततः सीतायै स्वाहेत्येवं प्रणवादिस्वाहाकारान्तैर्मन्त्रैः प्रत्येकमष्टाविंशतिसंख्याः साज्यपायसाहुतीर्हुत्वा स्विष्टकृद्धोमं कुर्यात् । दर्व्यामुपस्तीर्य हविष उत्तरार्धात् पूर्ववदानतो भूयोऽनूचानाभिरङ्गुलीभिः सौविष्टकृतमवदाय स्थालीस्थितमभिघार्य दर्व्यां द्विरभिघार्य । यद

स्येत्यस्य हिरण्यगर्भ ऋषिः अग्निःस्विष्टकृद्देवता अतिधृतिश्छदः स्विष्टकृद्धोमे विनियोगः । यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्विद्वान्सर्वं स्विष्टं सुहुतं करोतु मे । अग्नये स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्धयित्रे सर्वान्नः कामान्समर्धय स्वाहा । अग्नेरीशानेदेशे जुहुयात् । अग्नये स्विष्टकृत इदम् । पञ्चावत्तो प्रधानहोमे मध्यात्पूर्वार्धात्पश्चार्द्धात्रिरवद्यति । स्विष्टकृत उत्तरार्धात् पूर्वार्धाच्च द्विरवद्यति । इतरत्समानम् । तत इध्मबन्धनरज्जुं विस्रस्य रुद्राय पशुपतये स्वाहेति हुत्वा रुद्रायेदं न ममेति त्यक्त्वाऽप उपस्पृश्य स्रुवेणाज्यमादाय।अयाश्चेत्यस्य विमदोयाळग्निः पङ्क्तिः प्रायश्चित्तहोमे विनियोगः । 'अयाश्चाग्नेस्यनभिशस्तीश्च सत्यमित्वमया असि । अयासावयसाकृतोऽयासन्हव्यमूहिषेऽयानो धेहि भेषजं स्वाहा।' अग्नये अयसे इदम् । अतो देवा इति द्वयोर्मेधातिथिराद्याया देवा देवताः द्वितीयाया विष्णुर्गायत्री प्रायश्चित्तहोमे विनियोगः। 'ॐ अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्तधामभिः स्वाहा ।' देवेभ्य इदम् । 'इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूळ्हमस्यपांसुरे स्वाहा ।' विष्णव इदम् । व्यस्तसमस्तव्याहृतीनां विश्वामित्रजमदग्निभरद्वाजभृगव ऋषयः अग्निवायुसूर्यप्रजापतयो देवताः गायत्र्युष्णिगनुष्टुब्बृहत्यश्छन्दांसि प्रायश्चित्ताज्यहोमे विनियोगः । ॐभूः स्वाहा अग्नय इदम् । ॐ भुवः स्वाहा वायव इदम्। ॐ स्वः स्वाहा सूर्याय इदम् । ॐ भूर्भुवः स्वः स्वाहा प्रजापतय इदम् । ब्रह्माप्येताः सप्ताज्याहुतीर्जुहुयात् । मन्त्रविपर्यासादिनिमित्ते प्राप्ते।अनाज्ञातमिति मन्त्रस्य हिरण्यगर्भ ऋषिः अग्निर्देवता अनुष्टुप्छन्दः । प्रायश्चित्ताज्य० 'अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु । अग्ने तदस्य कल्पय त्वं हि वेत्थ यथातथं स्वाहा।' अग्नय इदम् । ' पुरुषसंमितो यज्ञो यज्ञः पुरुषसंमितः । अग्ने तदस्य कल्पय त्वं हि वेत्थ यथातथं स्वाहा।' अग्नय इदम् । यत्पाकत्रेत्यास्यत्रितोग्निस्त्रिष्टुप् प्राय श्चित्ता०।'यत्पाकत्रामनसा दीनदक्षान यज्ञस्य मन्वते मर्तासः । अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवानृतुशो यजाति स्वाहा।' अग्नये इदम् । यद्वो देवा अभितपा मरुतस्त्रिष्टुप् प्रायश्चित्ता० । 'यद्वो देवा अतिपातयानि वाचा च प्रयुती देव हेळनम् । अरायो अस्मां अभिदुच्छनायतेऽन्यत्रास्मन्मरुतस्तं निधेतन स्वाहा।' मरुद्भ्य इदम् । सर्वप्रायश्चित्तं करिष्ये—भूर्भुवः स्वः स्वाहा प्रजापतय इदम्।ततो यजमानः अस्य कर्मणः संपूर्णतासिद्ध्यर्थं पूर्णाहुतिं होष्य इति संकल्प्य द्वादशगृहीतेनाष्टगृहीतेन च तुर्गृहीतेन वाज्येन स्रुवं पूरयित्वा तदुपरि वस्त्रादियुतं चन्दनादिभूषितं फलं निधाय यज-

मानान्वारब्धः आचार्यस्तिष्ठन्पूर्णाहुतिं जुहुयात् । समुद्रादूर्मिरित्येकादशर्चस्य सूक्तस्य गौतमो वामदेव आपस्त्रिष्टुप् अन्त्या जगती पूर्णाहुतिहोमे विनियोगः । ॐ समुद्रादूर्मिर्मधुमां उदारदुपांशुना सममृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः । वयं नाम प्रब्रवामाघृतस्यास्मिन्यज्ञे धारयामानमोभिः । उपब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गो वमीद्गौर एतत् । चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश । त्रिधा हुतं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् । इन्द्र एकं सूर्य एकं जजान वेना एकं स्वधयानिष्टतक्षुः । एता अर्षन्ति हृद्यात्समुद्राच्छतव्रजारिषुणा नावचक्षसे । घृतस्य धारा अभिचाकशीमि हिरण्मयो वेतसो मध्य आसाम् । १० । सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः । एतेऽर्षन्त्यूर्मयो घृतस्य मृगा इव क्षिपणो रीषमाणाः सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः । घृतस्य धारा अरुषो न वाजी काष्ठा भिदन्नूर्मिभिः पिन्वमानः। अभिप्रवन्तसमनेव योषाः कल्याण्या स्मयमानासोऽष्ट अग्निम् । घृतस्य धाराः समिधो न संतता जुषाणो हर्यति जातवेदाः । कन्या इव वहतु मे तवाउ अञ्ज्यं जाभा अभिचाकशीमि । यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभितत्स्यवन्ते । अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त । इमं यज्ञं न पत देवतानो घृतस्य धारा मधुमत्पवन्ते । धामं ते विश्वं भुवनमधिश्रितमन्तः समुद्रे हृद्यं ३ तरायुषि । अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिं स्वाहा ।' अपरिमितधारां संततां दर्व्यग्रेण सावशेषं हुत्वाऽग्नय इदं न ममेत्युक्त्वा । विज्योतिषेत्यस्य जानोर्वंश ऋषिः अग्निर्देवता त्रिष्टुप्छन्दः होमे वि० ।'विज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा । प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे स्वाहा ।' अनेनावशिष्टं सर्वं हुत्वाऽग्नये इदं न ममेत्युक्त्वा विश्वेभ्यो देवेभ्यः स्वाहेति संस्रावं हुत्वा विश्वेभ्यो देवेभ्य इदमितिवदेत् । अथ पूर्वमासादितं पूर्णपात्रमास्तीर्णे बर्हिषि दक्षिणपाणिना निधाय तत्र गङ्गादिपुण्यदाः स्मृत्वा दक्षिणपाणिना अभिमृशन् 'पूर्णमसि पूर्णं मे भूयाः सुपूर्णमसि सुपूर्णं मे भूयाः सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः । अक्षितिरसि मा मे क्षेष्ठाः ।' इति जपित्वा प्राच्यादिपञ्चदिक्षु कुशाग्रैः प्रादक्षिण्यक्रमेण उदकमुदुक्षेत् । प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम् । दक्षिणस्यां दिशि मासाः पितरो मार्जयन्ताम् । प्रतीच्यां दिशि ग्रहाः पशवो मार्जयन्ताम् । उदीच्यां दिश्याप

ओषधयो वनस्पतयो मार्जयन्ताम् । ऊर्द्ध्वायां दिशि यज्ञः संवत्सरः प्रजापतिर्मार्जयन्ताम् । ततः स्वशिरसि कुशाग्रैरभिषिञ्चेदेभिर्मन्त्रैः । आपोअस्मानित्यस्य देवश्रवा आपस्त्रिष्टुप् । मार्जने विनियोगः ।'आपो अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः-पुनन्तु।विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरापूतए मि'।इदमाप इत्यस्य सिन्धुद्वीप आपोऽनुष्टुप् मार्जने विनियोगः । इदमापः प्रवहत यत्किंचदुरितं मयि। यद्वाऽहमभिदुद्रोह यद्वा शेप उतानृतम् । सुमित्रिया न आप ओषधयः सन्तु दुर्मित्र्यास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ।' ततो यजमानो वामपार्श्वस्थितपत्न्यञ्जलौ स्ववामकरे च पूर्णपात्रस्थं जलं 'माहं प्रजां परासिचं या नः स यावरीस्थ नसमुद्रे वो नियनानि स्वं पाथो अपीथ ।' इत्येकश्रुत्योक्त्या प्रत्यङ्मुखं निषिच्य तज्जलं बर्हिषि निषिञ्चेत् । ता आपः समुद्रं गच्छन्तीति ध्यात्वा ततो यजमानोऽग्नेर्वायव्यदेशे स्थितः-ॐ'च मे स्वरश्च मे यज्ञोपचते नमश्च यत्ते न्यूनं तस्मै त उपयत्तेतिरिक्तं तस्मै ते नमः ।' इत्युपस्थाय परिस्तरणानि विसृज्य परिसमुह्य पर्युक्ष्य विश्वानि न इत्यग्निमलंकृत्य । मानस्तोके० कुत्सो रुद्रो जगती विभूतिग्रहणे विनियोगः ।'मा नस्तोके तनये मान आयुषि मानो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्रभामितो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ।'इत्यनेन विभूतिं गृहीत्वा त्र्यायुष्यं जमदग्नेरिति ललाटे, कश्यपस्य त्र्यायुषमिति कण्ठे, अगस्त्यस्य त्र्यायुषमिति नाभौ, यद्देवानां त्र्यायुषमिति दक्षिणस्कन्धे, तन्मे अस्तु त्र्यायुषमिति वामस्कन्धे, शतायुषमिति शिरसि, ततः स्थापितानां देवतानामुत्तरपूजनं कृत्वा आचार्यं गन्धादिभिः संपूज्य प्रतिमादानं तस्मै कुर्यात् । आचार्याय दक्षिणां ब्राह्मणभोजनं भूयसीं च दत्त्वा यस्य स्मृत्येति पठित्वा कर्मेश्वरार्पणं कुर्यादिति । इति होमविधिः समाप्तः । 'ततो भक्त्या सुसंतोष्य आचार्यं पूजयेन्मुने । कुण्डलाभ्यांसुरत्नाभ्यामङ्गुलीयैरनेकधा । गन्धपुष्पाक्षतैर्वस्त्रैर्विचित्रैः सुमनोहरैः । ततो रामं स्मरन्दद्यादेतं मन्त्रमुदीरयन् । इमां स्वर्णमयीं रामप्रतिमां समलंकृताम् । चित्रवस्त्रयुगच्छन्नां रामोऽहं राघवाय ते । श्रीरामप्रीयते दास्ये तुष्टो भवति राघवः । इति दत्त्वा विधानेन दद्याद्वै दक्षिणां भुवम् । अन्येभ्यश्च यथान्यायं गोहिरण्यादि शक्तितः । दद्याद्दासोयुगं धान्यं यथाविभवमादृतः । ब्राह्मणैः सह भुञ्जीत तेभ्यो दद्याच्च दक्षिणाम् । ' ततः पारणं कुर्यात् । इयं च पारणा यदा पूर्वविद्धायामुपवासस्तदापि नवमीमतिक्रम्य दशम्यां कर्तव्या । 'दशम्यामेव पारणम्' इत्येवकारेणान्ययोगव्यवच्छेदपरेण नवम्यां पारणस्य

निवर्तितत्वात्। तदनन्तरं पारणनिवेदनम्। 'तव प्रसादस्वीकारात्कृतं यत्पारणं मया। व्रतेनानेन संतुष्टः स्वस्मिन्भक्तिं प्रयच्छ मे।' इति पारणम्। 'कृत्वैवं ब्रह्महत्यादिपापेभ्यो मुच्यते ध्रुवम्। तुलापुरुषदानादिफलमाप्नोति मानवः। अनेकजन्मसंसिद्धपापेभ्यो मुच्यते ध्रुवम्। बहुना किमिहोक्तेन मुक्तिस्तस्य करे स्थिता। कुरुक्षेत्रे महापुण्ये सूर्यपर्वण्यनेकशः। तुलापुरुषदानाद्यैः कृतैर्यल्लभ्यते फलम्। तत्फलं लभते मर्त्यो दानेनानेन सुव्रत।' इति दशम्यांपारणाकृत्यम्।

'अकिंचनोऽपि नियतमुपोष्य नवमीदिने। कृत्वा जागरणं भक्त्या पूजयेद्विधिवन्मुने। जपन्नाममनुं मायारमानङ्गसमन्वितम्। एकाक्षरं वा विधिवत्सर्वन्यासकृतोन्नतिः। प्रातःसंध्यां च विधिवद्दिवासंध्यादिकाः क्रियाः। गोभूतिलहिरण्यादि दद्याद्वित्तानुसारतः। श्रीरामचन्द्रभक्तेभ्यो विद्वद्भ्यः श्रद्धयान्वितः। पारणं च प्रकुर्वीत ब्राह्मणैः सह भक्तितः। एवं यः कुरुते भक्त्या सर्वपापैः प्रमुच्यते। गङ्गायां प्रक्षिपेल्लेख्यां लेख्यां मूर्तिं गृहे न्यसेत्।' इत्यकिंचनव्रतम्। 'शक्तस्य यद्व्रतं प्रोक्तमशक्तोद्यापनं च तत्। तदपि स्याद्यथाशक्त्या साङ्गं तु सकलं सदा। एकामपि नरो भक्त्या श्रीरामनवमीं मुने। उपोष्य कृतकृत्यः स्यात्सर्वपापैः प्रमुच्यते। अपिशब्दादशक्तस्य पूर्त्यै दानं तु सूचितम्।' इत्यकिंचनव्रतोद्यापनम्। 'वर्षे वर्षे समर्थस्य व्रतेनैव प्रपूर्णता। न तस्योद्यापनं किंचिद्व्रतादन्यद्विधीयते। सर्वव्रतस्य पूर्त्यर्थमिदं रामव्रतं चरेत्। नान्येनास्यास्ति यत्पूर्तिरनेनैव प्रपूर्णता।' इति। इति समर्थोद्यापनम्। इति रामनवमीव्रतम्। इदं व्रतं दिनद्वयसाध्यम्। इयं नवमी मलमासे न कार्या। 'सुजन्तमप्यजन्तं स्यान्नोपवासः कृतो भवेत्।' इति। 'न कुर्यान्मलमासे तु महादानव्रतानि च।' इति माधवीये संग्रहवचनात्, इति दीक्षितप्रभृतयः। वस्तुतस्तु उत्सवरूपत्वात्—मदनरत्नधृतात्—'गृहप्रवेशगोदानस्थानाश्रममहोत्सवान्। न कुर्यान्मलमासेऽपि गुरौ शुक्रे तथास्तगे।' इति। मरीचिवचनान्न भवतीति वक्तुं युक्तम्।

अस्यामेव नवम्यां कालोत्तरोक्तं मातृकाव्रतम्। 'चैत्रशुक्लनवम्यां तु मातृव्रतमथाचरेत्। चतुःषष्टिस्तु संपूज्या भैरवेण समन्विताः। स्रग्गन्धवस्त्र नैवेद्यैः प्रभूतैः सुसितैः शुभैः।' इत्युपक्रम्य 'नवम्यां पूजयेद्यस्तु मासि चाश्वयुजे सदा। अखण्डितप्रभावस्तु भवेन्नात्रास्ति संशयः' इत्यादि हेमाद्रौ स्पष्टम्। इति मातृकाव्रतम्।

अस्यामेव भद्रकालीपूजनमुक्तं कल्पतरौ ब्राह्मे—'चैत्रे नवम्यां शुक्लायां भद्रकाली महाबला। योगिनीनां तु सर्वासामाधिपत्येऽभिषेचिता। तस्मात्तां पूजयेत्तत्र सोपवासो जितेन्द्रियः। विचित्रैर्बलिभिर्भक्त्या सर्वासु नवमीषु च' इति।

वैशाखशुक्लकृष्णनवम्योश्चण्डिकां पूजयेत्। तदुक्तं निर्णयामृते भविष्योत्तरे—'वैशाखे मासि राजेन्द्र नवम्यां पक्षयोर्द्वयोः। उपवासपरो भक्त्या पूजयानस्तु चण्डिकाम्। हंसकुन्देन्दुसंकाशस्तेजसा ध्रुवसंनिभः। विमानवरमारूढो देवलोके महीयते।' इति।

ज्येष्ठशुक्लनवम्यां ब्राह्मणीनाम्नीमुमां संपूज्य ब्राह्मणान्कुमारीश्च भोजयेत्। तदुक्तं भविष्योत्तरे—'उपवासपरो भक्त्या नवम्यां पूजयेदुमाम्। ब्रह्माणीं त्विति वै नाम्ना श्वेतरूपेण रूपिणीम्। ज्येष्ठे मासि नृपश्रेष्ठ कृत्वा नक्तस्य वै विधिम्। शाल्यन्नं पयसोपेतं स्वयं भुञ्जीत वाग्यतः। कुमारीर्भोजयेच्चापि स्वशक्त्या ब्राह्मणांस्तथा।' इति।

आषाढशुक्लकृष्णनवम्योरैन्द्रीं पूजयेदित्युक्तं तत्रैव। 'उपवासपरो भक्त्या नवम्यां पक्षयोर्द्वयोः। आषाढे मासि राजेन्द्र यः कुर्यान्नक्तभोजनम्। भोजयेच्छ्रद्धया दुर्गां मैन्द्रीनाम्नीं तु नामतः। ऐरावणगतां शुभ्रां श्वेतरूपेण रूपिणीम्। स ऐरावतमारूढ इन्द्रस्यानुचरो भवेत्।' इति।

श्रावणशुक्लकृष्णनवम्योः कुमारीपूजा कार्या। तदुक्तं निर्णयामृते भविष्योत्तरे-'श्रावणे मासि राजेन्द्र यः कुर्यान्नक्तभोजनम्। क्षीरषष्टिकभक्तेन सर्वभूतहिते रतः। उपवासरतो वापि नवम्यां पक्षयोर्द्वयोः। कौमरीमिति वै नाम्ना चन्द्रिकां पूजयेत्सदा। कृत्वा रौप्यमयीं शक्त्या दुर्गां वै पापनाशिनीम्। करवीरस्य पुष्पैस्तु गन्धैश्चागुरुचन्दनैः। धूपेन च दशाङ्गेन मोदकैश्चापि पूजयेत्। कुमारीं भोजयेद्भक्त्या स्त्रियो विप्रांश्च शक्तितः। भुञ्जीत वाग्यतः पश्चाद्बिल्वपत्रकृताशनः। एवं यः पूजयेदार्यां श्रद्धाभक्तिसमन्वितः। स याति परमं स्थानं यत्र देवो गुहः स्थितः।'

अथ भाद्रपदशुक्लनवमी नन्दा। तस्यां दुर्गापूजनमुक्तं मदनरत्ने भविष्योत्तरे—सुमन्तुरुवाच—'मासि भाद्रपदे या तु नवमी बहुलेतरा[1]। सा तु नन्दा महापुण्या कीर्तिता पापनाशिनी। तस्यां यः पूजयेद्दुर्गां विधिवत्कुरुनन्दन। सोऽश्वमेधफलं विन्द्याद्विष्णुलोकं च गच्छति। एकभक्तं तु सप्तम्यामष्टम्यां समुपोषितः। दूर्वोपरि स्थितां देवीम्' इत्यादि। खर्जूरनारिकेलादिभिः पूजयित्वा रात्रौ जागरणं कृत्वा नन्दामन्त्रं

---

१ बहुल. कृष्णपक्षः। तदितरा शुक्ला।

जपेत् । 'ॐ नन्दायै नमः स्वाहा हूं फट् ।' इति । ततः प्रभाते नवम्यां चण्डिकां पूजयित्वा । 'प्रीणयित्वा गुरुं शक्त्या कुमारीं पूजयेत्ततः । एवं चाश्वयुजे मासि कार्तिके कार्तिकोत्तरे । पूजयेच्चतुरो मासान्नन्दां भगवतीं विभो । स्नाने कुशोदकं प्रोक्तं प्राशने च नराधिप ।' इत्यादि । इति नन्दानवमीव्रतम् ।

अथ भाद्रपदकृष्णनवम्यां देवीपुराणोक्तं दुर्गाबोधनम् । 'कन्यायाः कृष्णपक्षे तु पूजयित्वार्द्रभेऽपि वा । नवम्यां बोधयेद्देवीं गीतवादित्रनिःस्वनैः ।' इति । कन्यायां दर्शान्तभाद्रपदे । इति नानापुराणोक्तं दुर्गापूजनम् ।

आश्विनकृष्णनवम्यां मातृकाश्राद्धम् । यत्तु श्राद्धप्रकरणे वक्ष्यते ।

अथाश्विनशुक्ला नवमी सा च दुर्गापूजादौ पूर्वविद्धा ग्राह्या, युग्मवाक्यात् ।भविष्योत्तरेऽपि 'अश्वयुक्छुक्लपक्षे तु अष्टमी महानवमी।मूलसंयुता।सा महानवमी नाम त्रैलोक्येऽपि सुदुर्लभा ।'इति।तथा 'कन्यागते सवितरि शुक्लपक्षेऽष्टमीयुता। मूलनक्षत्रसंयुक्ता सा महानवमी स्मृता।' इति।अत्र मूलग्रहणं मूलाद्यृक्षत्रयोपलक्षणम् ।तदुक्तं लिङ्गपुराणे- 'दुर्गापूजासु नवमी मूलाद्यृक्षत्रयान्विता । महती कीर्तिता तस्यां दुर्गां महिषमर्दिनीम्। चण्डिकामुपहारैस्तु पूजयेद्राज्यवृद्धये' इति । अस्यां पूजाहोमादि कृत्वा प्रभूतबलिदानं कार्यम्।'प्रभूतबलिदानं च नवम्यां विधिवच्चरेत्।'इति कालिकापुराणात्।यदा तु नवम्यष्टमीविद्धा भूत्वा द्वितीयदिनेऽपि कियती भवति तदा नवमीप्रयुक्तपूजादेः पूर्वदिनेऽनुष्ठाने महाबलिदानं मात्रं द्वितीयदिने कर्तव्यम् । 'अष्टम्यामुदिते सूर्ये दिनान्ते नवमी भवेत् । प्रभाते बलिदाने तु कियन्मात्रापि लभ्यते । नवम्यां तत्र संपूज्या दुर्गा दुर्गार्तिनाशिनी' इति वचनात् । मदनरत्नेपि बल्यादौ परा कार्या उपवासे तु पूर्वेति । प्रतापमार्तण्डेऽप्येवम् । द्वितीयदिने नवम्या अलाभे तु पूर्वेद्युरेव नवमीमध्ये कार्यम्।'दशम्यां बलिदानं तु दीयते यत्र मानवैः।तद्राष्ट्रं नाशमायाति मारकोपद्रवैः स्फुटम्।'इति भविष्योत्तरे-नवमीप्रयुक्तस्य बलिदानस्य दशम्यां दोषश्रवणात्। 'नन्दायां ज्वलते वह्निः पूर्णायां पशुघातनम्। भद्रायां गोकुलक्रीडा तत्र राज्यं विनश्यति।'इति । 'नवम्यामपराह्णे तु बलिदानं प्रशस्यते । दशम्यां वर्जयेत्तत्र नात्र कार्या विचारणा । ' इति । 'नन्दायां दर्शने रक्षा बलिदाने दशासु च । भद्रायां गोकुलक्रीडा देशनाशः प्रजायते ।' इति । मदनरत्ने—यानि तु 'न कार्या दशमीविद्धा नवमी तु सदा बुधैः । नवमीं दशमीविद्धां ये कुर्वन्ति विमोहिताः । वृथा तेषां भवेत्सर्वं बलि-

पूजाविधानकम्।' इत्यादीनि कचिद्वचनानि तानि शुद्धाधिकानिषेधपराणि । अन्यथा पूर्वोदाहृतेन—'सूर्योदये परं रिक्ता' इति वाक्येन विरोधप्रसङ्ग इति । अत्र निर्णयसिन्धुकाराः—वेधश्च त्रिमुहूर्तात्मकः । यद्यपि हेमाद्रिमते मुहूर्तद्वयात्मकोऽपि वेधोऽस्ति । तथापि सूर्योदय एव सः । सायं तु त्रिमुहूर्त एव । तदुक्तं दीपिकायम्—त्रिमुहूर्तगा तु सकला सायमिति । माधवोऽपि 'सायं तूत्तरया तद्वन्न्यूनया तु नविध्यत' इति तेन त्रिमुहूर्तयोगे पूर्वा नवमी, पूर्वोक्तवचनात् ।'न कुर्यान्नवमीं तत्र दशाम्यां तु कदाचन।' इति स्कान्दे परानिषेधाच्च । त्रिमुहूर्तयोगाभावे तु परैव कार्येति निष्कर्ष इत्याहुः । निर्णयदीपे तु—महानवमी परदिनेऽपराह्णव्यापित्वे परा अन्यथा पूर्वेत्युक्तम् ।'आवर्तनात्पूर्वकाले नवमी स्यात्परेऽहनि । दुर्गार्चा तत्र पूर्वेद्युः पूर्वाह्णे त्वष्टमी यदा ।' इति धौम्यवचनात् । अस्य शारदनवमीविषयत्वे समूलत्वे च प्रमाणाभावाद्विमृश्यते तत् । नवम्यामेव दुर्गापूजनहोमबलिदानाद्युपक्रम्य समापनीयमिति राजमार्तण्डः ।' नवम्यां च जपं होमं समाप्य विधिवद्बलिम् ।' इति वचनात् । ब्रह्मवैवर्तेऽपि—'अत्रापराह्णिके काले बलिदानं प्रशस्यते । दशमीं वर्जयेत्तत्र नात्र कार्या विचारणा ।' इति । देवीपुराणेऽपि—'सूर्योदये परं रिक्ता पूर्णा स्यादपरा यदि । बलिदानं प्रकर्तव्यं तत्र देव्यै शुभावहम् । बलिदाने कृतेऽष्टम्यां राष्ट्रभङ्गो भवेन्नृप ।' इति । ' नवम्यां जपहोमं च समाप्य श्रवणेऽपि च ।' इति संग्रहोक्तेः । 'व्रतं च जागरश्चैव नवम्यां विधिवद्बलिः ।' इति देवीपुराणाच्च । इदं च बलिदानं नवमीप्रयुक्तम् । अष्टमीप्रयुक्तस्य तत्रैव कर्तव्यत्वात् । इयं च नवम्युपवासादिष्वतिप्रशस्ता।तदुक्तं भविष्ये—'तस्मादियं महापुण्या नवमी पापनाशिनी। उपोष्या सुप्रयत्नेन सततं सर्वपार्थिवैः ।' हेमाद्रौ देवीपुराणेऽपि 'आश्विने नवमी शुक्ला तस्यां कोटिगुणं फलम् ।' तथा—' आश्विनस्य तु मासस्य नवमी शुक्लपक्षगा । जायते कोटिगुणितं दानं तस्यां नराधिप ।' इति । इयं मन्वादिरपि । इति महानवमीनिर्णयः ।

अस्यामेव नवम्यां विष्णुधर्मोत्तरोक्तं भद्रकालीव्रतम् । राम उवाच—'विधिना पूजयेत्केन भद्रकालीं नराधिप ।' पुष्कर उवाच—' पूर्वोत्तरे तु दिग्भागे शिववास्तुमनोहरे । भद्रकालीगृहं कुर्याच्चित्रवस्त्रैः स्वलंकृतम् । भद्रकालीपदं कृत्वा तत्र सपूजयेद्द्विज ।' भद्रकालीनिरूपणं तु विष्णुधर्मोत्तरे दर्शितम् । ' अष्टादशभुजा कार्या भद्रकालीमनोहरा। आलीढस्थानसंस्थाना चतुःसिंहरथे स्थिता । अक्षमाला त्रिशूलं च खड्गं चन्द्रश्च यादव। बाणचापौ च कर्तव्यौ शंखपद्मौ तथैव च । स्रुक्स्रुवौ च तथा

कार्यौ तथा वैदिकमण्डले । दण्डशक्ती च कर्तव्ये तथा शक्तिहुताशनौ । हस्ताना भद्रकाल्याश्च भवेत्कान्तिकरः करः । एकत्रैव महाभाग रत्नपात्रधरो भवेत् ।' इति । 'आश्विने शुक्लपक्षस्य अष्टम्यां प्रयतः शुचिः । तत्रैवायुधवर्माद्यं छत्रं वस्त्रं च पूजयेत् । राजलिङ्गानि सर्वाणि तथा शस्त्राणि पूजयेत् । पुष्पैर्मेध्यैः फलैर्भक्ष्यैर्भोज्यैश्च सुमनोहरैः । बलिभिश्च विचित्रैश्च प्रेक्षादानैस्तथैव च । रात्रौ जागरणं कुर्यात्तत्रैव वसुधाधिप । उपोषितो द्वितीयेऽह्नि पूजयेत्पुनरेव ताम् । आयुधाद्यं च सकलं पूजयेद्वसुधाधिप । एवं संपूजयेद्देवीं वरदां भक्तवत्सलाम् । कात्यायनीं कामगां च बहुरूपां वरप्रदाम् । पूजिता सर्वकामैः सा भुनक्ति वसुधाधिप । एवं हि संपूज्य जगत्प्रधानां यात्रा तु देया वसुधाधिपेन । प्राप्नोति सिद्धिं परमां महेशो जनस्तथान्येपि विचित्रशक्त्या ।' इति भद्रकालीव्रतम् ।

अस्यामेव नवम्यां भविष्यत्पुराणोक्तं रथनवमीव्रतम् । सुमन्तुरुवाच-'कृत्वैवाश्वयुजे मासि शुक्लपक्षे नराधिप । नवम्यामुपवासं तु दुर्गां देवीं प्रपूजयेत् ।' इत्युपक्रम्य वस्त्रादिशोभितं नवरथं कृत्वा 'कृत्वा स्वर्णमयीं दुर्गां महिषासनसंस्थिताम् ।' दुर्गां कुर्यात् तत्स्वरूपं तु'आलीढस्थानसंस्थाना तथा राजंश्चतुर्भुजा। असृक्पात्रकरा देवी शूलखड्गधरा तथा। चतुर्थस्तु करस्तस्यास्तथा कार्यस्तु सामिषः।'इति।रथमध्ये तां विन्यस्य रथं राजमार्गेण भ्रामयित्वा दुर्गालये संस्थाप्य प्रभाते पुनः पूजां कृत्वा ब्राह्मणान्संभोज्य स्वयं भुञ्जीतेत्युक्तम् । अत्र भगवतीप्रीत्यर्थं शय्यादानं शूलाङ्कितवृषदानमुभयतोमुखीदानं च कर्तव्यम् । तदुक्तम्—' रत्नोपस्करणैर्युक्तां दन्तदारुमयीं शुभाम् । शय्यां निवेदयेद्यस्तु भगवत्यै नराधिप । संपूज्य गन्धपुष्पाद्यैर्विधिवच्चण्डिकां नृप । दुकूलवस्त्रतूलानां परिसंख्या तु यावती । तावद्वर्षसहस्राणि दुर्गालोके महीयते । वृषं शूलाङ्कितं यश्च भगवत्यै निवेदयेत् । आसप्तमं तत्तु कुलं महादेवालयं व्रजेत् । यश्चोभयमुखीं गां च भगवत्यै सुशोभनाम् । सप्तद्वीपां धरां दत्त्वा यत्फलं तदवाप्नुयात् । पदद्वयं शिरोर्धं च यावद्वत्सस्य निर्गतम् । तावद्गौः पृथिवी ज्ञेया तद्दाने स्यान्महीप्रदः ।' इति रथनवमीव्रतम् ।

अस्यामेव नवम्यामारभ्यं ब्रह्मपुराणोक्तं शौर्यव्रतम् । अगस्त्य उवाच । 'अतः परं प्रवक्ष्यामि शौर्यव्रतमनुत्तमम् । येन भीरोरपि महच्छौर्यं भवति तत्क्षणात् । मासि चाश्वयुजे शुद्धां नवमीं समुपोषितः । सप्तम्यां कृतसंकल्पः स्थित्वाष्टम्यां निरोदनः । नवम्यां प्राशयेत्पिष्टं प्रथमं भक्तितो नृप । ब्राह्मणान्भोजयेद्भक्त्या देवीं चैव

तु पूजयेत् । दुर्गां देवीं महामायां महाभागां महाप्रभाम् । एवं संवत्सरं यावदुपोष्य तु विधानतः।व्रतान्ते भोजयेद्धीमान्यथाशक्त्या कुमारिकाः।'इत्यादि।इति शौर्यव्रतम्।

अथ कार्तिकशुक्लनवमीव्रतम् । सा च युगादिः । तदुक्तम्—'वैशाखमासस्य तु या तृतीया नवम्यसौ कार्तिकशुक्लपक्षा ।' इत्यादि । इयं पूर्वाह्णव्यापिनी ग्राह्या । शुक्लपक्षस्थत्वात् । निर्णयस्तु पूर्वमेवोक्तः । इयमेवाक्षयनवमीत्युच्यते । तदुक्तं हेमाद्रौ देवीपुराणे—'शुक्लपक्षे नवम्यां यः कार्तिकस्य समाहितः । स्नायाद्दद्यान्नमस्कुर्याद-क्षयं लभते फलम् ।' इति । अत्र श्राद्धं कर्तव्यम् । तथा च कृत्यरत्नार्णवे—'कार्तिके नवमी शुक्ला पितॄणां तृप्तिदा सदा । तस्यां स्नानं तथा दानमनन्तफल-साधकम् ।' इति । ब्रह्माण्डपुराणे—'आषाढ्यामथ कार्तिक्यां माघ्यां मन्व-न्तरादिषु । युगादिषु च दुःस्वप्ने जन्मर्क्षे ग्रहपीडिते । प्रौष्ठपद्यां सिते पक्षे श्राद्धं कुर्वीत यत्नतः ।' इति । अस्यां गोदानादिकमुक्तं विष्णुपुराणे—'अस्मिंश्च गोभूमिहि-रण्यवस्त्रदानेन सर्वं प्रविहाय पापम् । शूरत्वमिन्द्रस्य सुहृत्त्वमेति मर्त्याधिपत्यं लभते मनुष्यः।'इति।अस्यामेव कूष्माण्डदानाचारः । तत्र मन्त्रः।'ब्रह्महत्यादिपापानां ब्रह्मणा निर्मितं पुरा।कूष्माण्डं बहुबीजाढ्यमतः शान्तिं प्रयच्छ मे।'पापानामित्यनन्तरं क्षयकर मितिशेषः।अस्यामेव मथुराप्रदक्षिणोक्ता वाराहे।तद्विधिश्च मथुरासेतौ द्रष्टव्यः।अस्या-मेव विष्णुत्रिरात्रारम्भं कृत्वा तुलसीविवाहः कर्तव्यः । तदुक्तं हेमाद्रौ पद्मपुराणे—'कार्तिके शुक्लनवमीमवाप्य विजितेन्द्रियः। हरिं विधाय सौवर्णं तुलस्या सहितं विभुम्। पूजयेद्विधिवद्भक्त्या व्रती तत्र दिनत्रयम्। एवं यथोक्तविधिना कुर्याद्वैवाहिकं विधिम्।' इति । अथ तुलसीविवाहविधिर्विष्णुयामले—'आदावुपोष्य तुलसीं वने वा स्वगृहे-ऽपि वा । मासत्रयेण संवर्ध्य ततः पूजनमारभेत् । सौम्यायने प्रकर्तव्यं गुरुशुक्रो-दये तथा । अथ वा कार्तिके मासि भीष्मपञ्चदिनेऽपि वा । वैवाहिकेषु ऋक्षेषु पूर्णि-मायां विशेषतः । मण्डलं कारयेत्तत्र कुण्डवेदिं विवाहवत् । ब्राह्मणांश्च शुचीन्दान्ता-न्वेदवेदाङ्गपारगान्।ब्राह्मणान्देशिकं चैव चतुरश्च तथर्त्विजः।ग्रहयज्ञं पुरः कृत्वा मातॄणां जपनं तथा।कृत्वा नान्दीमुखं श्राद्धं सौवर्णं स्थापयेद्धरिम्।कृत्वा चारोप्य तुलसीं लग्ने स्वस्तमिते रवौ ।' ज्योतिःशास्त्रप्रसिद्धे गोधूलिकलग्ने इत्यर्थः । 'संपूज्यालंकृतां तां च प्रदद्याद्विधिना हरेः । वासः श्रुतेन मन्त्रेण वस्त्रयुग्मेन वेष्टयेत् । यदाबध्नेति मन्त्रेण कङ्कणं पाणिपल्लवे । कोदादिति च मन्त्रेण करग्रहो विधीयते । आचार्यो वेदिकाकुण्डे

१—षष्ठी चतुर्थ्या अर्थे ।

जुहुयाच्च नवाहुतीः।' नवाहुतीश्चतस्रो व्याहृतिभिः पञ्च त्वं नो अग्ने इत्यादिभिः। कर्तव्यश्च ततो होमो विशेषाद्विधिपूर्वकम्।' ॐ नमो भगवते वासुदेवाय नमः स्वाहा। ॐ नारायणाय०। माधवाय०, गोविन्दाय० विष्णवे० मधुसूदनाय० त्रिविक्रमाय० वामनाय० श्रीधराय० हृषीकेशाय० पद्मनाभाय० दामोदराय० उपेन्द्राय० वासुदेवाय० अनिरुद्धाय० अच्युताय० अनन्ताय० गदिने० चक्रिणे० विष्वक्सेनाय० वैकुण्ठाय० जनार्दनाय० मुकुन्दाय० अधोक्षजाय०। 'यजमानः सपत्नीकः सहामात्यैश्च गोत्रजैः। प्रदक्षिणाः प्रकुर्वीत चतस्रो विष्णुना[1] सह। पठेयुः शान्तिकाध्यायांस्तथा वैष्णवसंहिताम्। गायन्ति मङ्गलं नार्यो भेरीतूर्यादिनिःस्वनैः। गोपदं च तथा शय्यामाचार्याय प्रदापयेत्। ऋत्विग्भ्यो दापयेद्वस्त्राण्यन्येषां चैव दक्षिणाम्। ब्राह्मणान्भोजयेत्पश्चात्सर्पिःक्षीरैः सशर्करैः। एवंप्रतिष्ठां तां देवीं विष्णुना च समर्पयेत्। आजन्मोपार्जितं पापं दर्शनेन प्रणश्यति।' इति। इति तुलसीविवाहविधिः। इति कार्तिकशुक्लनवमीनिर्णयः।

मार्गशीर्षशुक्लनवमी नन्दिनी। तदुक्तं मदनरत्ने भविष्ये—'मासि मार्गशिरे वीर शुक्लपक्षे तु या भवेत्। सा नन्दिनी महापुण्या नवमी परिकीर्तिता। यस्तस्यां पूजयेद्देवीं त्रिरात्रोपोषितो नरः। सोऽश्वमेधमवाप्येह विष्णुलोके महीयते।' इति। इति मार्गशीर्षशुक्लनवमी।

माघशुक्लनवम्यामारभ्यं भविष्यत्पुराणोक्तं महानन्दानवमीव्रतम्। 'माघमासे तु या शुक्ला नवमी लोकपूजिता। महानन्देति सा प्रोक्ता सदानन्दकरी नृणाम्। तस्यां दानं तथा स्नानं जपहोमौ उपोषितम्। सर्वं तदक्षयं प्रोक्तं यदस्यां क्रियते नरैः।' इति महानन्दानवमीव्रतम्।

फाल्गुनशुक्लनवम्यां भविष्यत्पुराणोक्तमानन्दानवमीव्रतम्। 'अनन्दानन्दिनी नन्दा महानन्दा महीयते। तथान्या नवमी पुण्या पञ्चमी महती स्मृता। फाल्गुनामलपक्षस्य नवमी या महीयते। अनन्दा सा महापुण्या सर्वपापहरा शुभा। कृत्वैकभक्तं पञ्चम्यां षष्ठ्यां नक्तं तथा नृप। अयाचितं च सप्तम्यामुपवासः परेऽहनि। य एवं पूजयेद्भक्त्या नवम्यां विधिवन्नृप। सोपवासः'। इत्यानन्दनवमीव्रतम्।

सर्वासु नवमीषु तिथिपत्वेन सरस्वती पूज्या। तदुक्तम्—'सरस्वत्यां नवम्यां च' इति।

---

[1]--विष्णुना सह तुलस्या इत्यर्थः।

अथ सिद्धविरुद्धादिकं लिख्यते। नवमी शनिवारेण सोमवारेण च सिद्धा। तदुक्तम्-'शनौ चतुर्दशी नवमी' इति। 'सोमे तु नवमी पुष्यः श्रवणो रोहिणी मृगः। एतानि सर्वदा वत्स सिद्धिदानि स्वकर्मसु।' इति। बुधवारेण च विरुद्धा। तृतीया नवमीत्याद्युक्तमेव। नवम्यां शत्रुवधबन्धनादि उग्रं कर्म कार्यम्। 'चतुर्दश्या चतुर्थ्या च नवम्या चारिमर्दनम्।' इत्यादि। अत्रामलकस्नानं न कार्यम्। तदुक्तम्—'सप्तम्यानन्दनवमीषु च' इत्यादि। दन्तकाष्ठमपि वर्जयेत्। तदुक्तं व्यासेन—'प्रतिपत्पर्वषष्ठीषु नवम्यां हरिवासरे। दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम्।' इति। अत्र योगिनीसांमुख्यात्पूर्वदिशि यात्रा न कर्तव्या। वृश्चिकस्थे क्रूरग्रहे नवमी दशमी चाशुभा भवति। उक्तं च पराः परेषामित्यादि। नवम्यां तुम्बीफलं न भक्षयेत इत्युक्तमेवेति शिवम्।

श्रीमद्दिल्लीशसेनोद्भटविकटभटश्रेणिमत्तेभसिंह-
श्चण्डोन्माद्यत्तुरुष्कक्षुभितवसुमतीपालने धर्मराजः।
पौत्रः श्रीकृष्णसिंहक्षितिपकुलमणेर्विष्णुसिंहस्य पुत्रः
श्रीमान्राजाधिराजो जयहरिरमराधीशवत्कौ सुखी स्तात् ॥ १ ॥
श्रीमत्पण्डितदेवभट्टतनयः श्रीराघवाङ्घ्रिद्वय-
ध्यानावाप्तसमस्तकामनिवहः सम्राट् स रत्नाकरः।
तुष्ट्यै श्रीजयसिंहवर्मनृपतेः कल्पद्रुमे कामदं
प्रत्यग्रं दशमं शिवं समकरोद्गुच्छं तिथिज्ञापकम् ॥ २ ॥

इति श्रीपौण्डरीकयाजिरत्नाकरविरचिते जयसिंहकल्पद्रुमोद्योते
नवमीनिर्णयोनाम एकादशः स्तबकः ॥ ११ ॥

---

## अथ दशमीनिर्णयः।

अथ दशमी निर्णीयते—तत्र क्रमेण शुक्लकृष्णदशमीध्यानम्। हेमाद्रौ वीरमित्रोदये च—'सिंहासनस्थिता शुभ्रा दशमी पीतकुण्डला। ज्ञानमुद्राभया चेयं पीतवस्त्राब्जमालिनी। कृष्णवर्णा लुलायस्था दशमी दण्डपात्रिणी।' इति। सा पूर्वविद्धा ग्राह्या। तथा च स्कन्दपुराणे—'दशमी चैव कर्तव्या सदुर्गा द्विजसत्तम।' इति। यदा दिनद्वये कर्मकालव्यापिनी तदा परा वेति हेमाद्रिः। 'संपूर्णा दशमी कार्या पूर्वया परयाऽथ वा। युक्ता न दूषिता यस्मादतः सा सर्वतोमुखी।' इत्यङ्गिरोवचनात्। 'कृष्णा पूर्वोत्तरा शुक्ला दशम्येवं व्यवस्थिता।' इति माधवः। मदन-

रत्ननिर्णयामृतनिर्णयसिन्धुषु तु उपवासादिषु नवमीविद्धैव ग्राह्या । तदुक्तं पैठीनसिना—'पञ्चमी सप्तमी चैव दशमी च त्रयोदशी । प्रतिपन्नवमी चैव कर्तव्या संमुखी तिथिः ।' इति । आपस्तम्बोऽपि—'दशमी तु प्रकर्तव्या सदुर्गा द्विजसत्तम ।' इति। यत्तु—संपूर्णा दशमी कार्या इत्यङ्गिरोवचनम् । तन्नवमीयुक्ताया अलाभे उदयकालव्यापिनी ग्राह्येत्येवंपरम् । अथ वा एकादशीव्रताङ्गत्वेन क्रियमाणं दशम्यामेकभक्तादिकं परविद्धायामित्येतत्परम् । यत्तु नन्दाविद्धेति कूर्मपुराणवचनमुत्तरविद्धानिषेधकं तत्कृष्णपक्षविषयमिति कालतत्त्वविवेचने । अत्र केचित् । यत्तु हेमाद्रिः दिनद्वये कर्मकालव्याप्त्यभाव ऐच्छिको विकल्प इत्याह । तन्न । शास्त्रतो व्यवस्थासंभवे ऐच्छिकत्वायोगादित्यूचुः । तन्मृग्यम् । दिनद्वये हेमाद्रिणा कर्मकालव्याप्त्यभाव ऐच्छिकविकल्पानभिधानेऽनुक्तोपालम्भप्रसङ्गात् । इति दशमीसामान्यनिर्णयः ।

अथ दशमीकृत्यानि । तत्र चैत्रशुक्लदशम्यां यमपूजनमुक्तं निर्णयामृते देवीपुराणे—'धर्मराजं दशम्यां तु पूजयित्वा सुगन्धिकैः । विगतारिर्निरातङ्क इह चान्ते परं पदम् ।' इति । प्राप्नुयादिति शेषः ।

अथ ज्येष्ठशुक्लदशमी दशहरा । तत्र स्नानादिकं कार्यम् । तदुक्तं मदनरत्ने निर्णयामृते च—'ज्येष्ठस्य शुक्लदशमी संवत्सरमुखी स्मृता । तस्यां स्नानं प्रकुर्वीत दानं चैव विशेषतः ।' अत्रैव ब्रह्मपुराणे विशेष उक्तः—'ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता । हरते दशपापानि तस्माद्दशहरा स्मृता ।' इति । वाराहे तु गङ्गाया दशहरात्वमुक्तम् । 'दशम्यां शुक्लपक्षे तु ज्येष्ठे मासि कुजेऽहनि । अवतीर्णा ह्यतः स्वर्गाद्धस्तर्क्षे च सरिद्वरा । हरते दश पापानि तस्माद्दशहरा स्मृता । तस्यां स्नानं प्रकुर्वीत दानं चैव विशेषतः ।' इति । दश पापान्याह मनुः—'अदत्तानामुपादानं हिंसा चैवाविधानतः । परदारोपसेवा च कायिकं त्रिविधं स्मृतम् । पारुष्यमनृतं चैव पैशुन्यं चापि सर्वशः । असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् । परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् । वितथ्याभिनिवेशश्च मानसं त्रिविधं स्मृतम् ।' इति । अस्यां दश योगा उक्ताः स्कान्दे—'ज्येष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः । व्यतीपाते गरानन्दे कन्याचन्द्रे वृषे रवौ । दशयोगे नरः स्नात्वा सर्वपापैः प्रमुच्यते।' इति । इह बुधभौमयोः कल्पभेदेन व्यवस्था। इयं च योगविशेषबाहुल्यात्पूर्वापरा वा ग्राह्येति निर्णयसिन्धुमयूखकृत्यरत्नावल्यादौ । कौस्तुभे तु पाठादेव दशत्वे सिद्धे

पुनर्दशयोग इति कीर्तनं कीर्तितानां दशानामेव पुण्यकालत्वज्ञापनार्थम् । अत एव यत्कैश्चिदुक्तम्—दिनद्वये कतिपययोगसत्त्वे यत्रैव योगभूयस्त्वं तत्रैव स्नानादि कार्यमिति तच्चिन्त्यम्। दशमीव्यतीपातयोर्योगान्तरनिरपेक्षयोः पुण्यकालत्वलाभेऽपि बुधवारगरानन्दादीनां योगान्तरनिरपेक्षाणां पुण्यकालत्वे मानाभावात् । अतो दिनद्वये कतिपययोगवद्दशमीसत्त्वे गङ्गापूजनादौ देवकर्मणि पूर्वाह्णस्य पुण्यकालत्वात्तद्व्यापिनी दशमी ग्राह्येति । ज्येष्ठे मलमासे सति तत्रैव दशहरा कार्या न तु शुद्धे । तदाह हेमाद्रौ ऋष्यशृङ्गः—'दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु। उपाकर्ममहाषष्ठ्योरेतदुक्तं वृषादितः ।' इति । हेमाद्रौ—'गङ्गास्नाने कृतार्थः स्यात्तस्मिन्योगे सकृन्नरः । हरेद्दै पापानि गङ्गा तत्र न संशयः ।' इति । काशीखण्डे—' ज्येष्ठे मासि सिते पक्षे । प्रतिपदं तिथिम् । दशाश्वमेधिके स्नात्वा मुच्यते सर्वपातकैः । एवं सर्वासु तिथिषु क्रम स्नायी नरोत्तमः । आशुक्लपक्षदशमीं प्रतिजन्माघमुत्सृजेत् ।'इति। तथा—'लिङ्गं ... श्वमेधेशं दृष्ट्वा दशहरातिथौ । दशजन्मार्जितैः पापैस्त्यज्यते नात्र संशयः ।' इति । अत्र विशेषो भविष्योत्तरकाशीखण्डयोः—'निशायां जागरं कृत्वा समुपोष्य च भक्तितः । गन्धैःपुष्पैश्च नैवेद्यैःफलैश्च दशसंख्यया।तथा दीपैश्च ताम्बूलैः पूजयेच्छ्रद्धयान्वितः । स्नात्वा भक्त्या तु जाह्नव्यां दशकृत्वो विधानतः । दशप्रसृतिकृष्णांश्च तिलान्सर्पिश्च वै जले । सक्तुपिण्डान्गुडपिण्डान्दद्याच्च दशसंख्यया । ततो गङ्गातटे रम्ये हेम्ना रूपेण वा तथा । गङ्गायाः प्रतिमां कृत्वा वक्ष्यमाणस्वरूपिणीम् । संस्थाप्य पूजयेद्देवीं तदलाभे मृदापि च । अथ तत्राप्यशक्तिश्चेल्लिखेत्पिष्टेन वै भुवि । वक्ष्यमाणेन मन्त्रेण कुर्यात्पूजां विशेषतः। नारायणं महेशं च ब्रह्माणं भास्करं तथा । भगीरथं च नृपतिं हिमवन्तं नगेश्वरम् । गन्धपुष्पादिभिः सम्यग्यथाशक्ति प्रपूजयेत् दशप्रस्थांस्तिलान्दद्याद्दशविप्रेभ्य एव च । दशप्रस्थान्यवान्दद्याद्दशसंख्या गवीस्तथा प्रस्थः षोडशपलानि । प्रस्थादिमानं भविष्ये—'पलं च कुण्डवः प्रस्थ आढको द्रोण एव च। धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः' 'इति मुष्टिमात्रं प... स्मृतम्' इति महार्णवे। 'मत्स्यकच्छपमण्डूकमकरादिजलेचरान् । कारयित्वा यथाशक्ति स्वर्णेन रजतेन वा । तदलाभे पिष्टमयानभ्यर्च्य कुसुमादिभिः । गङ्गायां प्रक्षिपे... ज्यदीपांश्चैव प्रवाहयेत् । पुष्पाद्यैः पूजयेद्गङ्गां मन्त्रेणानेन भक्तितः।' "ॐनमः शिवायै नारायण्यै दशहरायै गङ्गायै नमोनमः "। 'इति मन्त्रं तु यो मर्त्यो दिने तस्मिन्दिवानिशम् । जपेत्पञ्च सहस्राणि दशधर्मफलं लभेत् ।' इति । काशीखण्डे त्वन्यो मन्-

उक्तः। 'नमः शिवायै प्रथमं नारायण्यै पदं ततः। दशहरायै पदमिति गङ्गायै मन्त्र एष वै। स्वाहान्तः प्रणवादिश्च भवेद्विंशाक्षरो मनुः। पूजा दानं जपो होमोऽनेनैव मनुना स्मृतम्।' इति। अत्र गङ्गास्तोत्रपाठमपि दशवारं कुर्यात्। तदुक्तं भविष्योत्तरे—।'तस्यां दशम्यामेतच्च स्तोत्रं गङ्गाजले स्थितः। यः पठेद्दशकृत्वस्तु दरिद्रो वापि चाक्षमः। सोऽपि तत्फलमाप्नोति गङ्गां संपूज्य यत्नतः।' तच्च प्रतिपदादिदशमीपर्यन्तं दिनसंख्यया पठनीयमित्याचारः। एवं कुर्वतः फलमुक्तं काशीखण्डे—एवं कृत्वा विधानेन वित्तशाठ्यविवर्जितः। उपवासी वक्ष्यमाणैर्दशपापैः प्रमुच्यते। सर्वान्कामानवाप्नोति प्रेत्य ब्रह्मणि लीयते।' इति। गङ्गाया अलाभेऽन्यस्यामपि सरिति कार्यम्। तथा च स्कान्दे—'यां कांचित्सरितं प्राप्य दद्यादर्घ्यं तिलोदकम्। मुच्यते दशभिः पापैः सुमहापातकैरपि।' तिलोदकमिति तीर्थप्राप्तिनिमित्तकतर्पणानुवाद इति कौस्तुभे। अस्यां सेतुबन्धरामेश्वरप्रतिष्ठापनादिकमुक्तं स्कान्दे सेतुमाहात्म्ये—'ज्येष्ठेमासिसितेपक्षे दशम्यां बुधहस्तयोः। गरानन्दे व्यतीपाते कन्याचन्द्रे वृषे रवौ। दशयोगे सेतुमध्ये लिङ्गरूपधरं हरम्। रामो वै स्थापयामास शिवलिङ्गमनुत्तमम्।' इति। अथ गङ्गापूजनविधिः। तत्र कलशादिस्थापनं कृत्वा स्वर्णादिपात्रे गङ्गामूर्तिं लिखेत्। तत्स्वरूपं तु—'चतुर्भुजां त्रिनेत्रां च सर्वावयवशोभिताम्। रत्नकुम्भसिताम्भोजवरदाभयसत्कराम्। श्वेतवस्त्रपरीधानां मुक्तामणिविभूषिताम्। एवं ध्यायेत्सुसौम्यां च चन्द्रायुतसमप्रभाम्। चामरैर्वीज्यमानां च श्वेतच्छत्रोपशोभिताम्। सुप्रसन्नां च वरदां करुणार्द्रनिरन्तराम्।सुधाप्लावितभूपृष्ठां दिव्यमाल्यानुलेपनाम्।त्रैलोक्यनमितां गङ्गां सर्वैर्देवैरधिष्ठिताम्।दिव्यरत्नविभूषां च दिव्यमाल्योपशोभिताम्।ध्यात्वा जले यथा प्रोक्तं तथा चार्या प्रपूजयेत्।''ॐनमःशिवायै नारायण्यै दशहरायै गङ्गायै स्वाहा।' अनेन मन्त्रेण आवाहनाद्यशेषानुपचारानुपकल्प्य "ॐनमो भगवति ऐं ह्रीं श्रीं हिलिहिलि मिलिमिलि गङ्गे मां पावय पावय स्वाहा।" अनेन मन्त्रेण आगमोक्तेन गन्धपुष्पाञ्जलीन् श्रीगङ्गायै निवेदयेत्। 'देवोद्यानसमुद्भूतान्यम्लानानि विशेषतः। मयाहृतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम्।' इति पुष्पाणि समर्पयेत्। अथ धूपः। 'दशाङ्गं गुग्गुलं धूपं सुगन्धि च मनोहरम्। गङ्गे देवि नमस्तेऽस्तु गृहाण वरदा भव।' अथ दीपः। 'गृहाण मङ्गलं दीपं घृतवर्तिसमन्वितम्। रुद्ररूपे नमस्तेऽस्तु गृहाण [व]रदा भव।' अथ नैवेद्यम्। 'शर्कराखण्डखाद्यानि दधिक्षीरघृतानि च। आहारं

भक्ष्यसंयुक्तं नैवेद्यं प्रतिगृह्यताम् ।' फलताम्बूलनीराजनान्तं कृत्वा पुष्पाञ्जलिं दत्त्वा 'नारायणं महेशं च ब्रह्माणं भास्करं तथा ।' भगीरथं हिमवन्तं च गन्धपुष्पादिभिः पूजयित्वा दश फलानि दश दीपान्दशप्रस्थतिलान्गङ्गायै नम इति मन्त्रेण दत्त्वा सर्पिःसक्तुपिण्डान्गुडपिण्डांश्च जले क्षिप्त्वा मत्स्यकच्छपमण्डूकादीन्स्वर्णरजतमयान्पिष्टमयान्वा शक्त्याऽभ्यर्च्य जले क्षिपेत् । ततो दशप्रस्थतिलान्यवान्दश गाश्च दशसंख्येभ्यो ब्राह्मणेभ्यो दद्यादिति ।'एवं कृत्वा दशजन्मार्जितैः पापैः प्रमुच्यते।' इति । 'परदारपरद्रव्यपरद्रोहपराङ्मुखः । गङ्गा ब्रूते कदागत्य मामयं पावयिष्यति'॥ इति श्रीवैश्वानरनारदसंवादे दशपापहरायाः श्रीगङ्गाया ध्यानार्चनविधिः॥

एवं ध्यानार्चनविधिं विधाय पश्चाज्जलान्तरे स्थित्वा ज्येष्ठे मासि सिते पक्षे प्रतिपदमारभ्य दशमीपर्यन्तं दशविधपापप्रणाशनार्थं प्रतिदिनमुत्तरोत्तरवृद्ध्या दशहरास्तोत्रजपमहं करिष्ये इति संकल्प्य पठेत् । ब्रह्मोवाच—'नमः शिवायै गङ्गायै शिवदायै नमो नमः । नमस्ते विष्णुरूपिण्यै ब्रह्ममूर्त्यै नमो नमः । नमस्ते रुद्ररूपिण्यै शाङ्कर्यै ते नमो नमः । सर्वदेवस्वरूपिण्यैनमोभेषजमूर्तये । सर्वस्यसर्वव्याधीनांभिषक्छ्रेष्ठ्यै नमो नमः । स्थाणुजङ्गमसंभूतेविषहन्त्र्यैनमोऽस्तु ते । संसारविषनाशिन्यैजीवनायै नमोनमः । तापत्रितयसंहर्त्र्यैप्राणेश्वर्यै नमोनमः । शान्तिसंतानकारिण्यै नमस्ते शुद्धमूर्तये । सर्वसंशुद्धिकारिण्यै नमःपापारिमूर्तये । भक्तिमुक्तिप्रदायिन्यैभद्रदायैनमोनमः । भोगोपभोगदायिन्यै भोगवत्यै नमो नमः।मन्दाकिन्यै नमस्तेऽस्तु स्वर्गदायै नमो नमः। नमस्त्रैलोक्यभूषायै त्रिपथायैनमो नमः।नमस्त्रिशुक्लसंस्थायै क्षमावत्यै नमोनमः। त्रिहुताशनसंस्थायै तेजोवत्यै नमोनमः । नन्दायैलिङ्गधारिण्यै नारायण्यै नमो नमः । नमस्ते विश्वमित्रायै नन्दिन्यै ते नमो नमः। बृहत्यै ते नमस्तेऽस्तु लोकधात्र्यै नमो नमः।पृथ्व्यै शिवामृतायै च सुवृषायै नमो नमः । परापरशताद्यायै तारायै ते नमो नमः । पाशजालनिकृन्तिन्यै अभिन्नायै नमो नमः । शान्तायै च वरिष्ठायै वरदायै नमो नमः । उस्रायै सुखदोग्ध्र्यै च संजीविन्यै नमो नमः । ब्रह्मिष्ठायै ब्रह्मदायै दुरितघ्न्यै नमो नमः । प्रणतार्तिप्रभञ्जिन्यै जगन्मात्रे नमो नमः । सर्वापत्प्रतिपक्षायै मङ्गलायै नमो नमः । शरणागतदीनार्तपरित्राणपरायणे । सर्वस्यार्तिं हरे देवि नारायणि नमोऽस्तु ते । निर्लेपायै दुर्गहन्त्र्यै दक्षायै ते नमो नमः । परापरपरे तुभ्यं नमस्ते मोक्षदे सदा । गङ्गे ममाग्रतो भूया गङ्गे मे देवि पृष्ठतः । गङ्गे मे पार्श्वयोरेधि त्वयि गङ्गेऽस्तु मे स्थितिः । आदौ त्वमन्ते मध्ये च सर्व त्वं गां गते शिवे । त्वमेव मूलप्रकृतिस्त्वं हि नारायणः परः । गङ्गे त्वं पर-

तमा च शिवस्तुभ्यं नमः शिवे । य इदं पठते स्तोत्रं भक्त्या नित्यं नरोऽपि यः। शृणोति श्रद्धया युक्तः कायवाक्चित्तसंभवैः। दशधा संस्थितैर्दोषैः सर्वैरेव प्रमुच्यते। रोगस्थो मुच्यते रोगादापद्भ्यश्च प्रमुच्यते । द्विषद्भ्यो बन्धनाद्येश्च भयेभ्यश्च प्रमुच्यते। सर्वान्कामानवाप्नोति प्रेत्य ब्रह्मणि लीयते। इमं स्तवं गृहे यस्तु लेखयित्वा विनिःक्षिपेत् । नाग्निचौरभयं तत्र पापेभ्योऽपि भयं न हि। ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता। संहरेत्त्रिविधं पापं बुधवारेण संयुता। तस्यां दशम्यामेतच्च स्तोत्रं गङ्गाजले स्थितः। यःपठेद्दशकृत्वस्तुदरिद्रोवाऽपिचाक्षमः। सोऽपि तत्फलमाप्नोति गङ्गां संपूज्य यत्नतः। पूर्वोक्तेन विधानेन फलं यत्संप्रकीर्तितम्। यथा गौरी तथा गङ्गा तस्माद्गौर्यास्तु पूजने। विधिर्यो विहितः सम्यक्सोऽपि गङ्गाप्रपूजने । यथा शिवस्तथा विष्णुर्यथा विष्णुस्तथा ह्युमा । उमा यथा तथा गङ्गा चतूरूपं न भिद्यते । विष्णुरुद्रान्तरं यच्च श्रीगौर्योरन्तरं तथा । गङ्गागौर्यन्तरं यच्च यो ब्रूते मूढधीस्तु सः । रौरवादिषु घोरेषु नरकेषु पतत्यधः । अदत्तानामुपादानं हिंसा चैवाविधानतः । परदारोपसेवा च कायिकं त्रिविधं स्मृतम् । पारुष्यमनृतं चैव पैशुन्यं चापि सर्वतः । असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् । परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम्। वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् । एतानि दश पापानि हर त्वं मम जाह्नवि। दशपापहरा यस्मात्तस्माद्दशहरा स्मृता। एतैर्दशविधैः पापैः कोटिजन्मसमुद्भवैः। मुच्यते नात्र संदेहो ब्रह्मणो वचनं यथा। दशत्रिंशच्छतान्सर्वान्पितॄनथ पितामहान्।उद्धरत्येव संसारान्मन्त्रेणानेन पूजिता। "ॐ नमो भगवत्यै दशपापहरायै श्रीगङ्गायै नारायण्यै रेवत्यै शिवायै दक्षायै अमृतायै विश्वमुख्यायै नन्दिन्यै नमो नमः।" 'ज्येष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः। गरानन्दे व्यतीपाते कन्याचन्द्रेवृषे रवौ। दशयोगे नरः स्नात्वा सर्वपापैः प्रमुच्यते। सितमकरनिषण्णां शुभ्रवर्णां त्रिनेत्रां करधृतकलशोद्यत्सोत्पलाभीत्यभीष्टाम् । विधिहरिहररूपां सेन्दुकोटीरजूटां कलितसितदुकूलां जाह्नवीं तां नमामि । आदावादिपितामहस्य नियमव्यापारपात्रे जलं पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनम्। भूयः शंभुजटाविभूषणमणिर्जह्नोर्महर्षेरियं कन्या कल्मषनाशिनी भगवती भागीरथी दृश्यते। विष्णुपादाब्जसंभूते गङ्गे त्रिपथगामिनि । धर्मद्रवेति विख्याते पापं मे हर जाह्नवि।' इति श्रीस्कन्दपुराणे काशीखण्डे दशहरास्तोत्रं संपूर्णम्। इति ज्यष्ठशुक्लदशमीकृत्यम्।

आषाढशुक्लदशमी मन्वादिः। 'आषाढस्यापि दशमी।' इत्युक्तेः। अत्र च श्राद्धादिकं कर्तव्यमित्युक्तं प्राक्।

अथ भाद्रपदशुक्लदशम्यामारभ्यं भविष्योत्तरोक्तं दशावतारव्रतम्। युधिष्ठिर उवाच—'व्रतं दशावताराख्यं कृष्ण ब्रूहि सविस्तरम्। समन्त्रं सरहस्यं च सर्वपापौघशान्तिदम्।' श्रीकृष्ण उवाच—'दशम्यां शुक्लपक्षस्य मासे प्रौष्ठपदे शुचिः। स्नात्वा जलाशये स्वस्थः पितृदेवादितर्पणम्। कृत्वा कुरुकुलश्रेष्ठ गृहमागत्य मानवः। गृह्णीयाद्धान्यचूर्णस्य स्वहस्तप्रसृतिद्वयम्। क्रमेण पाचयेत्तत्तु पुंसंज्ञं घृतसंयुतम्। वर्षे वर्षे दिने तस्मिन्नेवं वर्षाणि वै दश।' अपूपघृतपूयकासारमोदकसोहालखण्डवेष्टककोकरसार्कपुष्पकर्ण वेष्टमण्डूकेषु प्रतिवर्षमेकैकंकृत्वा निवेदयेत्। 'दशात्मनो दश हरेर्दशविप्रायदापयेत्। क्रमेण भक्षयेद्दत्त्वा यथोक्तविधिना नृप। अर्धार्धं वैष्णवे देयमर्धार्धं च द्विजातये। ततोऽपरार्धमश्नीयाद्गत्वारम्येजलाशये। दशावतारानभ्यर्च्य पुष्पधूपविलेपनैः। मन्त्रेणानेन मेधावी हरिमभ्युक्ष्य वारिणा। मत्स्यं कूर्मं वराहं च नारसिंहं त्रिविक्रमम्। रामं रामं च कृष्णं च बौद्धं चैव सकल्किनम्। गतोऽस्मि शरणं देवं हरिं नारायणं विभुम्। प्रणतोऽस्मि जगन्नाथं स मे विष्णुः प्रसीदतु। छित्त्वा तु वैष्णवीं मायां भक्त्या प्रीतो जनार्दनः। श्वेतद्वीपं नयत्वस्मान्मयात्मा संनिवेदितः। एवं यः कुरुते।' इत्यादि। इति भाद्रपदशुक्लदशम्यां दशावतारव्रतं समाप्तम्।

अथाश्विनशुक्लदशमी। तस्यां देवीं संपूज्य विसर्जनं कृत्वा पारणं कुर्यात्। देवीपुराणे-'ततः प्रातः पूजयित्वा दशम्यां विधिपूर्वकम्। संप्रेषणं तु कर्तव्यं गीतवादित्रनिःस्वनैः।' इति विसर्जनविधिस्तु नवरात्रप्रकरणे एव लिखितः। अथ नवरात्रपारणानिर्णयः। सा च दशम्या कार्या। 'आश्विने मासि शुक्ले तु कर्तव्यं नवरात्रकम्। प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत्। नवमीतिथिपर्यन्तं वृद्ध्या पूजाजपादिकम्।' इत्यादिप्रागुक्तवचनैर्नवमीपर्यन्तं प्रधानभूतपूजाद्युक्तेः। उपवासादेश्चाङ्गत्वेन तत्पर्यन्तत्वात्। यावच्छब्दोऽभिव्याप्तौ। देवीपुराणेऽपि—'उत्तरेण नवम्यां तु बलिना पूजयेच्छिवाम्। श्रवणेन दशम्यां तु प्रणिपत्य विसर्जयेत्।' इति। तत्रैव—'महानवम्यां पूजेयं स्वर्गमोक्षप्रदायिनी।' इत्युक्तेश्च। नवरात्रसमाख्यानेऽपि नवम्या अप्युपोष्यत्वाच्च। यत्तु देवीपुराणे—'कन्यासंस्थे रवौ शक्तः शुक्लामारभ्य नन्दिकाम्। अयाची ह्यथ वैकाशी नक्ताशी अथ वाऽऽब्दः।' इति व्रतचतुष्टयमुक्तम्। तल्लोहाभिसारिकविषयम्। 'लोहाभिसारिकं कर्म कारयेद्यावदष्टमीम्।' इति भविष्येऽष्टमीपर्यन्तत्वोक्तेः। येऽपि—

'अष्टम्यां जागरं कुर्यान्नवम्यां पारणं तथा । दशम्यां च विसर्गः स्यादभिषेकश्च माधव ।' इति, 'नवम्यां च विशालाक्षी कुर्याद्धोमादिकाः क्रियाः । पारणं च प्रकुर्वीत देवीपूजनपूर्वकम् ।' इति वचने । यान्यपि निर्णयदीपे—'आश्विने शुक्लपक्षे तु नवरात्रमुपोषितः । नवम्यां पारणं कुर्याद्दशमीमिश्रिता न चेत् । दशम्या मिश्रिता यत्र पारणे नवमी भवेत् । सप्तजन्मकृतं पुण्यं तत्क्षणादेव नश्यति ।' तथा—'यो मोहात्पारणं कुर्याद्दशमे दिवसे विभो । तद्राष्ट्रं नाशमाप्नोति दुर्भिक्षादिभयं भवेत् । नृपहीनं भवेद्राष्ट्रं दशम्यां पारणे कृते । तस्मात्तु पारयेदेव नवम्यां भक्तितत्परः । नवम्यां पारिते देवी कुलवृद्धिं प्रयच्छति । दशम्यां पारिता देवी कुलनाशं करोति वै । तस्मात्तु पारणं कुर्यान्नवम्यां विबुधाधिप ।' इत्यादीनि रुद्रयामले देवीपुराणवचनानि-तान्यपि लोहाभिसारिकविषयाणि। अथ वा यदाष्टमी विद्धा नवमी त्रिमुहूर्ता लभ्यते तदा पूर्वनवम्यां नवमीकृत्ये जाते द्वितीयनवम्यां पारणा विधीयते। दशमीमिश्रिता न चेदित्यनेन तूत्तरनवम्यन्ते प्राप्तायाः पारणायाः बाधेन नवमीमध्ये एव विधानम् । यद्वेदमष्टरात्रादिपक्षविषयमिति कृत्यरत्नावल्याम् । निर्णयसिन्धौ तु नवमीपारणाविधायकानि वचनानि हेमाद्र्यादिविरुद्धत्वान्निर्मूलानि। समूलत्वेऽपि यदा दिनद्वये नवमी तदा द्वितीयदिने तिथ्यन्ते पारणा न। किं तु नवमीमध्ये कार्येत्येवं नेयानि शिवरात्रिपारणावदिति। एष एव मयूखसिद्धान्तः । दीक्षितास्तु नवमीपारणमेवाङ्गीचक्रुः । अत्र यथाकुलाचारं व्यवस्था । अष्टरात्रादिपक्षाः सूतके पारणविचारश्च नवरात्रप्रकरण एवोक्तः ॥ ॥ इयमेव विजयदशमी । तस्यां नवमीयुक्तायां श्रवणयुक्तायां चापराजितां संपूज्य प्रस्थानं कार्यम् । तदुक्तं पुराणसमुच्चये आश्विनशुक्लपक्षं प्रक्रम्य 'दशम्यां च जनैः सम्यक् पूजनीयाऽपराजिता । ऐशानीं दिशमाश्रित्य अपराह्णे प्रयत्नतः ।' इति । तथा—'या पूर्णा नवमीयुक्ता तस्यां पूज्याऽपराजिता । क्षेमार्थं विजयार्थं च पूर्वोक्तविधिना नरैः । नवमीशेषयुक्तायां दशम्यामपराजिता । ददाति विजयं देवी पूजिता जयवर्धिनी ।' इति । तथा—'आश्विने शुक्लपक्षे तु दशम्यां पूजयेन्नरः । एकादश्यां न कुर्वीत पूजितां वाऽपराजिताम् ।' इति। तथा—'श्रवणर्क्षे तु पूर्णायां काकुत्स्थः प्रस्थितो यतः । उल्लङ्घयेयुः सीमानं तद्दिनर्क्षे ततो नराः ।' इति । पूर्वायामिति पाठो मदनरत्ने । यदा तु पूर्वदिने श्रवणयोगाभावः परदिने चाल्पापि तद्योगिनी तदा परैव । तथा च हेमाद्रौ व्रतकाण्डे कश्यपः—'उदये दशमी किंचित्संपूर्णैकादशी यदि । श्रवणर्क्षं यदा काले सा तिथिर्विजयाभिधा ।' इति । कालेऽपराह्णे । परदिनेऽपराह्णे श्रवणाभावे तु सर्वपक्षेषु

पूर्णा इति निर्णयसिन्धौ। कृत्यरत्नावल्यां संपूर्णैकादशीति वचनात्तदा दशम्याः कर्म-कालव्याप्तिर्नापेक्षिता। उत्तरदिने श्रवणयोगाभावे 'सर्वपक्षेषु पूर्वा। 'दशम्यां तु जनैः सम्यक्' इति पूर्वोक्तवचने पराह्णस्य कर्मकालत्वाभिधानादिति स्थितम्। '[1]दशमीं यः समुल्लङ्घ्य प्रस्थानं कुरुते नरः। तस्य संवत्सरं राज्ये न क्वापि विजयो भवेत्।' इति स्कान्दवचनं तु, दशम्यामेव प्रस्थेयं न त्वालस्यादिना तामुल्लङ्घ्यैकादश्यामिति नियमार्थम्[2]। नवमीयुक्तत्वमुभयत्र श्रवणासंभवे उभयत्र श्रवणसंभवे च वेदितव्यम्। श्रवणदशमीयोगस्य मुख्यत्वात्। 'श्रवणर्क्षे तु पूर्वायाम्' इत्युक्तेः। मदनरत्नेऽप्येवम्। श्रवणदशम्योर्योगाभावे तु केवलायामेव कार्यम्। तदुक्तं लल्लेन-'तिथिः शरीरं तिथिरेव कारणं तिथिः प्रधानं तिथिरेव साधनम्।' इति। दीक्षितमयूखयोस्त्वियं नक्षत्रोदयव्यापिनी ग्राह्या। तदुक्तं ज्योतिर्निबन्धे रत्नकोशे च नारदेन-'ईषत्संध्यामतिक्रान्तः किंचिदुद्भिन्नतारकः। विजयो नाम कालोऽयं सर्वकार्यार्थसाधकः।' इति। चिन्तामणावपि-' आश्विनस्य सिते पक्षे दशम्यां तारकोदये। स कालो विजयो ज्ञेयः सर्वकार्यार्थसाधकः।' इति। निर्णय-सिन्धौ त्वपराह्णो मुख्यः कालः, तत्रैव पूजाद्युक्तेः, प्रदोषो गौणः। तत्र दिनद्वयेऽ-पराह्णव्यापित्वे पूर्वा। प्रदोषव्याप्तेराधिक्यात्। दिनद्वये प्रदोषव्यापित्वे परा। अपराह्ण-व्याप्तेराधिक्यात्। श्रवणस्तु रोहिणीवदप्रयोजकः। दिनद्वये पराह्णस्पर्शे पूर्वा। पूर्वोक्तयुक्तेः। तत्रापि परदिने पराह्णे श्रवणसत्त्वे परैवेति स्थितम्[3]। अत्र यच्छ्रव-णस्य रोहिणीवदप्रयोजकत्वमुक्तं तन्मन्दम्। दृष्टान्तासिद्धेः। तत्र सति संभवे निर्णा-यकत्वस्वीकारात्। पट्टाभिषेचने तु सर्वथोत्तरैव। 'इषस्य दशमीं शुक्लां पूर्वविद्धां न कारयेत्। श्रवणेनापि संयुक्तां राज्ञां पट्टाभिषेचने। सूर्योदये यदा राजन्दृश्यते दशमी तिथिः। आश्विने मासि शुक्ले तु विजयां तां विदुर्बुधाः।' इति ज्योतिर्निबन्धे नारदोक्तेः। दीक्षितीये मयूखे च-दिनद्वये तारकोदयकालाभावे परदिने एकादश-मुहूर्ते यात्रादि कार्यम्। 'आश्विनस्य सिते पक्षे दशम्यां सर्वराशिषु। सायंकाले शुभा यात्रा दिवा वा विजयक्षणे। एकादशो मुहूर्तोऽपि विजयः परिकीर्तितः। तस्मि-न्सर्वैर्विधातव्या यात्रा विजयकाङ्क्षिभिः।' इति भृगूक्तेः। परदिने एकादशमुहूर्तव्या-

१ ननु एकादशीविद्धायाः परस्याः ग्राह्यत्वे एकादश्यां प्रस्थाननिषेधोऽनुपपन्नः स्यादित्यत आह। दशमीमिति। २ तथा चात्र वचने प्रस्थानमात्रनिषेधाद्यावद्वचन वाचनिकमिति न्यायाद्वचनमिदं पराविद्धाया ग्राह्यत्वनिषेधकं न। किं तु दशम्यामेकादश्यां वेच्छया प्रस्थाने प्राप्ते एकादश्यां निषेधकमिति भावः। ३ अत्रेदं वक्तव्यम्। उभ-यत्र पराह्णे श्रवणसत्त्वेऽसत्त्वे वा परविद्धाया निषेधकमिदम्।

त्यभावेऽपि श्रवणयोगश्चेत्तदैव यात्रा कार्या । पूजा तु पूर्वदिन एव । उदये दशमी किंचिदिति पूर्वोक्तवचनादित्युक्तम् । अस्यामेव दशम्यां राजा गोपथब्राह्मणेन विवाहमुद्दिश्योक्तं प्रास्थानिकविधिं कुर्यात् । स च यथा—"अथातः प्रस्थानं व्याख्यास्यामः । जन्येषु गमिष्यत्सु पार्थिवा वानस्पत्या दुन्दुभयः स्युर्वीणाश्चोपवादयेरन् । हृष्टालंकृताश्चारु वदन्त उदगयने पूर्वपक्षे पुण्यनक्षत्रे केशश्मश्रुरोमनखानि वापयित्वा संभारानुपकल्प्य मैत्रं मुहूर्तमुपसमाधाय शान्तिप्रतिसरं कारयित्वा वोढारं तेनाभिषिञ्चेरन् । यथोक्तमञ्जनाञ्जनानुलेपनं कारयित्वा वासोगन्धान् स्रजश्चाबध्य पुरःस्थातारं स्थापयित्वा कर्तान्वालभ्य जुहोत्यभयैरपराजितैरायुष्यैः स्वस्त्ययनैः शर्मवर्मभिर्जनवेदनैश्च हुत्वा पार्थिवस्येति मा प्रगामेति च हुत्वा अगच्छतागतस्येतीन्द्रं स्थालीपाकेनेष्ट्वा अतिष्ठज्जिष्णुरनृक्षरा ऋजव इति पन्थानमास्थाय जपेत् । इमौ पादौ यत इन्द्र त्रातारमिन्द्रं मनो विदन्नभयं सोमो बृहस्पतिर्नः परिपातु पश्चात्, इति त्रीन् विष्णुक्रमान् क्रान्त्वा" इत्यादि । अपराजितापूजनादिकं तु नवरात्रप्रकरणवशात्तत्रैवोक्तम् । इत्याश्विनशुक्लदशमीकृत्यम् ।

अथ कार्तिकशुक्लदशम्यां वाराहपुराणोक्तं सार्वभौमव्रतम् । 'सार्वभौमव्रतं चान्यत्कथयामि समासतः । येन सम्यक्कृतेनाशु सार्वभौमो भवेन्नृपः । कार्तिकस्य तु मासस्य दशमी शुक्लपक्षगा । तस्यां नक्ताशनो नक्तं दिक्षु शुद्धबलिं[1] हरेत् । विचित्रैः कुसुमैर्भक्ष्यैः पूजयेच्च द्विजांस्तथा । सर्वा भवत्यः[2] सिध्यन्तु मम जन्मनि जन्मनि एवमुक्त्वा बलिं तासु दत्त्वा शुद्धेन चेतसा । ततोऽर्धरात्रे भुञ्जीत दध्यन्नं च सुसंस्कृतम् । पूर्वं पश्चाद्यथेष्टं च एवं संवत्सरं नृप । यः करोति नृपो नित्यं तस्य दिग्विजयो भवेत् ।' इति सार्वभौमव्रतम् ।

अथ कस्यांचिच्छुक्लदशम्यामारभ्यं भविष्योत्तरोक्तमाशादशमीव्रतम् । युधिष्ठिर उवाच—'राज्याशया राजपुत्रः कृष्यर्थी तु कृषीवलः । वाणिज्यार्थे वणिक्पुत्रः पुत्रार्थे गुर्विणी तथा । धर्मकामार्थसंसिद्ध्यै लोकाः कन्या वरार्थिनी । यष्टुकामो द्विजवरो रोगी श्रेयोऽर्थमेव च । चिरप्रवासिते कान्ते बाले दन्तनिपीडिते । एतेष्वन्येषु कर्तव्यमाशाव्रतमिदं तथा । तस्माद्यस्य भवेदार्तिः कार्यं तेन तदा व्रतम् । शुक्लपक्षे दशम्यां तु स्नात्वा संपूज्य देवताः । नक्तमाशास्तु पूज्या वै पुष्पालक्तकचन्दनैः । गृहाङ्गणे लेखयित्वा यवैः

१—शुद्धबलि. पवित्रद्रव्यै पूजोपहार । २—भवत्यो दिश इत्यर्थः ।

पिष्टातकेन वा । स्त्रीरूपाश्चाधिदेवस्य शस्त्रवाहनचिह्निताः ।' अधिदेवस्य तत्तद्दिक्पालस्येन्द्रादेस्तत्तच्छस्त्रैर्वाहनैश्च चिह्निता लेखयित्वेत्यर्थः । 'दत्त्वा घृताक्तं नैवेद्यं पृथग्दीपांश्च दापयेत् । फलानि कालजातानि ततः कार्यं निवेदयेत् । आशाः स्वाशाः सदा सन्तु सिध्यन्तां मे मनोरथाः । भवतीनां प्रसादेन सदा कल्याणमस्त्विति । एवं संपूज्य विधिवद्दत्त्वा विप्राय दक्षिणाम् । अनेन क्रमयोगेन मासि मासि समाचरेत् । वर्षमेकं कुरुश्रेष्ठ ततः पश्चात्समुद्यपेत् । अर्वाक्संवत्सरस्यापि सिद्धार्थो वा समुद्यपेत् । सौवर्णीः कारयेदाशा रौप्याः पिष्टातकेन वा । ज्ञातिबन्धुजनैः सार्धं स्नातः सम्यगलंकृतः । पूज्याः प्राक्क्रमयोगेन मन्त्रैरेभिर्गृहाङ्गणे । त्वयि संनिहितः शक्रः सुरासुरनमस्कृतः । पूर्वा त्वं भुवनस्यास्य ऐन्द्री दिग्देवते नमः । अग्नेः परिग्रहादाशे त्वमाग्नेयीति पठ्यसे । तेजोरूपा परा शक्तिराग्नेयी वरदा भव । धर्मराट् त्वां समाश्रित्य लोकान्संदमयत्यसौ । तेन संयमिनी चापि याम्येऽस्मत्कामदा भव । खड्गहस्ताऽतिविकृते-निर्ऋतिस्त्वां समाश्रितः । तेन निर्ऋतिनामासि त्वमाशां पूरयस्व मे । त्वय्यास्ते भुवनाधारो वरुणो यादसां पतिः । कामार्थं मम धर्मार्थं वारुणि प्रवणा भव । अधिष्ठिताऽसि यस्मात्त्वं वायुना जगदायुना । वायव्ये त्वमतः शान्तिं नित्यं यच्छ ममालये । धनदेनाधिष्ठिता वै प्रख्याता त्वमिहोत्तरा । निरुत्तरा भवास्मासु दत्त्वा सद्यो मनोरथम् । ऐशानि जगदीशेन शंभुना त्वमलंकृता । पूरयस्वाशु मे देवि वाञ्छितानि नमो नमः । भुजंगाष्टकुलेन त्वं सेवितासि यतो ह्यधः । नागाङ्गनाभिः सहिता हिता भव ममाद्य वै । सर्वलोकोपरिगता सर्वदा त्वं शिवाय च । सनकाद्यैः परिवृता ब्राह्मि मां पाहि सर्वदा । नक्षत्राणि च सर्वाणि ग्रहास्तारागणास्तथा । नक्षत्रमातरो याश्च भूतप्रेतविनायकाः । सर्वे ममेष्टसिद्ध्यर्थं भवन्तु प्रवणाः सदा । एभिर्मन्त्रैः समभ्यर्च्य पुष्पधूपादिना ततः । वासोभिरभिसंछाद्य फलानि विनिवेदयेत् । ततो वीणानिनादेन गीतवादित्रमङ्गलैः । नृत्यन्तीभिर्वरस्त्रीभिर्जाग्रतां च निशां नयेत् । कुङ्कुमाक्षतताम्बूलदानमात्रादिभिः सुखम् । प्रभाते वेदविदुषे ब्राह्मणाय निवेदयेत् । अनेन विधिना सर्वं क्षमाप्य प्रणिपत्य चाभुञ्जीत मित्रसहितः सुहृद्बन्धुजनेन च । य एवं कुरुते पार्थ दशमीव्रतमादरात् । सर्वान्कामानवाप्नोति मनसोभिमतान्नरः । स्त्रीभिर्विशेषतः कार्यं व्रतमेतद्युधिष्ठिर । प्राणिवर्गे यतो नार्यः श्रद्धाकामपरायणाः । धन्यं यशस्यमायुष्यं सर्वकामफलप्रदम् । कथितं ते महाराज मया व्रतमनुत्तमम् । ये मानवा मनुजपुङ्गवकामकामाः संपूजयन्ति दशमीषु सदा दशाशाः । तेषां विशेषनिहितान्हृदयेऽभिकामानाशाः फलन्त्यलमलं बहुनोदितेन ।'

इत्याशादशमीव्रतम् ।

अथ सर्वदशम्यामनुष्ठेयमारोग्यव्रतम् । सनत्कुमार उवाच 'अथ त्वं शृणु विप्रर्षे दशमीव्रतमुत्तमम् । सर्वरोगार्त्तिशमनं सर्वपुष्टिप्रदं शुभम् । व्रतमेतन्महाबुद्धे कार्यमारोग्यमिच्छता । सर्वदा कार्यमेतद्धि लिप्सता जीवितं चिरम् । उपवासश्च कर्तव्यो नवम्यामपि सुव्रत । दशम्यां च कृतस्नानो मङ्गलायतनं हरिम् । देवमिन्दिरया सार्धं ध्यात्वा च जगतां पतिम् । वैनतेयभुजासक्तं वनमालाविभूषितम् । शंखचक्रगदापद्मशार्ङ्गासिधरमच्युतम् । फलैश्च मधुरैः पुष्पैः पायसेन समर्चयेत् । अग्रतः स्थापयेत्कुम्भं तीर्थतोयेन पूरितम् । तस्मिन्नावाहयेत्पञ्च चक्रादीन्यायुधान्यपि । पूजयेद्रक्तपुष्पैस्तु गुडान्नेन समाहितः । द्रोणमात्रतिलैनाब्जं कारयेदजिनोपरि । तस्मिन्नष्टदलं पद्मं सौवर्णं हि निधाय च । मनःषष्ठानीन्द्रियाणि प्राणं बुद्धिं दलेष्वपि । कर्णिकायां तथा कालं क्रमेणैवं समर्चयेत् । अनामयानीन्द्रियाणि प्राणश्च चिरसंस्थितः । अनाकुला च मे बुद्धिःसर्वेस्युर्निरुपद्रवाः । मनसा कर्मणा वाचा मया जन्मनि जन्मनि । संचितं क्षपयत्वेनः कालात्मा भगवान्हरिः ।' एवं संप्रार्थ्य गुरवे सदक्षिणमुपस्करं दत्त्वा ब्राह्मणान्भोजयित्वा आचार्येण कुम्भवारिणा साधकः संस्नापितोऽवशिष्टेनान्नेन गुर्वनुज्ञापुरःसरं बान्धवैः सह भुक्त्वा नियमानुत्सृजेत् । एवं कृते क्षिप्रमारोग्यं भवति । इति गरुडपुराणोक्तमारोग्यव्रतम् ।

मार्कण्डेय उवाच—' क्रतुर्दक्षो वसुः सत्यः कालः कामो मुनिस्तथा । कुरुवान्मनुजो विप्रो राम सारश्च ते दश । विश्वेदेवाः समाख्याता दशात्मा केशवो विभुः । तस्य संपूजनं कार्यं सितपक्षे नराधिप । आरभ्य कार्तिकान्मासाद्दशम्यां मुनिपुङ्गव । मण्डलेष्वथ पुण्येषु यदि वार्च्चासु यादव । गन्धमाल्यनमस्कारधूपदीपान्नसंपदा । व्रतान्ते कनकं दद्याद्यथाशक्ति द्विजातये । कृत्वा व्रतं केवलमेतदिष्टं प्राप्नोति तेषां सुचिरं तु लोकान् । तत्रोष्य कालं पुरुषत्वमेत्य राजा भवेद्ब्राह्मणपुङ्गवो वा ।' इति विष्णुधर्मोत्तरोक्तं राज्यावाप्तिव्रतम् ।

मार्कण्डेय उवाच—'आत्मा ह्यायुर्मनो दक्षो मदः प्राणस्तथैव च । हविष्मांश्च गविष्ठश्च दत्तः सत्यश्च ते दश । देवास्त्वङ्गिरसो नाम दशम्यां पूजयेन्नरः । सोपवासः पूर्वपक्षे पूर्वोक्तविधिना नरः । कृत्वा व्रतं केवलम्—'इत्यादि । इति विष्णुधर्मोत्तरोक्तं ब्रह्मावाप्तिव्रतम् ।

---

१—चक्रादीनि चक्रगदामुसलधनुःखड्गानीति हेमाद्रिः । २—मनः श्रोत्रं त्वक् चक्षुर्जिह्वा घ्राण प्राणो बुद्धिरिति क्रमात्पूर्वादिदलेषु । ३—कुरुवान्मनुज एकः । ४ अर्च्या प्रतिमा । ५ पूर्वपक्षे शुक्लपक्षे । ६ पूर्वोक्तविधिना निरन्तरोक्तविधिना ।

**अथ पदार्थव्रतम्।** शुक्लपक्षे दशम्यां तु सोपवासस्तथा नरः। मार्गशीर्षादथारभ्य यावत्संवत्सरो भवेत्।' ततो गन्धमाल्यनमस्कारधूपदीपान्नसंपद्भिर्दिगीशपूजनं दिक्पूजनं च कुर्यात्। तत्र दिगीशा इन्द्रादिरुद्रान्ता दश बोध्याः। वत्सरान्ते विप्राय पयस्विनीं गां दत्त्वेष्टं कामं यात्रासिद्धिं चाप्नोति। 'वाणिज्यकं तस्य नरस्य शस्तं यात्रा तथा गां विजिगीषतश्च। विद्यार्थिनो वा रिपुनाशनार्थं हितं पदार्थव्रतमेतदुक्तम्।' इति **विष्णुधर्मोत्तरोक्तं पदार्थव्रतम्।**

मार्कण्डेय उवाच—'शुक्लपक्षे दशम्यां तु सोपवासस्तु मानवः। धर्मं संपूजयेद्देवं सर्वलोकसुखावहम्। मार्गशीर्षादथारभ्य नित्यमेतदरिंदम।' ततो 'गन्धमाल्यनमस्कारधूपदीपान्नसंपदा।' संपूज्य घृतेन वन्हौ हुत्वा विप्रान्पूजयेत्। व्रतान्ते च पयस्विनीं गां दत्त्वाऽश्वमेधफलं प्राप्नोति। 'कृष्णपक्षे तथाप्येतत्कृत्वा संवत्सरं व्रतम्। राजसूयमवाप्नोति कुलमुद्धरति स्वकम्। कृत्वा पक्षद्वयेऽप्येतद्व्रतं मनुजसत्तमः। राजसूयाश्वमेधाभ्यां फलं प्राप्नोत्यसंशयम्। शुक्लायां कृष्णायां द्वयोर्वेति त्रीणि व्रतानि च। स्वर्गलोकमवाप्नोति कुलमुद्धरति स्वकम्। धर्मे मतिर्भवेत्तस्य धर्ममाप्नोति मानवः। यत्र यत्राभिजायेत तत्र धर्मपरो भवेत्। आरोग्यमायुष्यकरं यशस्यं ज्ञानप्रदं पापविनाशकारि। कर्तव्यमेतत्पुरुषैर्यथावत्पूज्यो हि विष्णुर्भगवान्समर्थः।' इति **विष्णुधर्मोत्तरोक्तं धर्मव्रतत्रयम्।**

'दशम्यां यममुद्दिश्यः सर्वव्याधिहरो ध्रुवम्। मूलमन्त्राः स्वसंज्ञाभिरङ्गमन्त्राश्च कीर्तिताः।' मूलमन्त्राः प्रधानमन्त्राः अङ्गमन्त्राः परिवारदेवतामन्त्राः। पद्मपत्रेषु परिवारसहितं कर्णिकास्थं तिथीशं कृत्वा गन्धादिभिः संपूज्य समित्क्षीरान्नदधिमाक्षिकैर्होमं कुर्यात्। अत्रादौ पूजा, ततो घृताक्तधान्यहोमः, तत आज्यधारादिहोमः। इति **भविष्यत्पुराणोक्तं यमव्रतम्।**

पुलस्त्य उवाच—'दशम्यामेकभक्ताशी समान्ते दश धेनवः। दिशश्च काञ्चनीर्दद्यान्नारीरूपा महीपते। तिलद्रोणोपरिगताः सार्वभौमो भवेन्नृप। एतद्विश्वव्रतं नाम महापातकनाशनम्।' इति **पद्मपुराणोक्तं विश्वव्रतम्।**

**अथ दशादित्यव्रतम्।** कश्यप उवाच—'भानुवारे सिते पक्षे दशम्यां चैव नारद। प्रातःकालेऽथ मध्याह्ने स्नानं कुर्याद्यथाविधि। स्नात्वा नद्यां देवखाते तीर्थे प्रस्रवणे तथा। विधाय नित्यकर्माणि तर्पयेत्पितृदेवताः। तत आगत्य स्वे गृहे स्थंण्डिलं कारयेच्छुभम्। तस्योपरि न्यसेत्पद्मं द्वादशारं च कीर्तितम्। ततः पूजा प्रक-

र्तव्या गभस्त्यस्य क्रमेण च ।' सूर्यपूजनं सौरमन्त्रैरावाहनादि षोडशोपचारपूजां कृत्वा नमः सवित्रे आवाहनमासनं पाद्यमर्घ्यमाचमनं स्नानं वस्त्रं चोपवीतं गन्धपुष्पाक्षतधूपदीपनैवेद्यफलताम्बूलदक्षिणाश्च विसर्जनम् । ततो दुर्मुखादिपूजनम् । कृष्णवर्णा दश पुत्रिकाः कुर्यात्। दुर्मुखायै नमः, दीनवदनायै नमः, मालिन्यैनमः, सत्यनाशिन्यै नमः, सुबुद्धिनाशिन्यै०, हिंस्रायै नमः, दुष्टायै नमः' मित्रविरोधिन्यै नमः, उच्चाटकारिण्यैनमः, बहुचिन्ताप्रदायै नमः । एभिर्नाममन्त्रैः प्रतिष्ठापूजां कृत्वा गोमयेन लेपयेत् । ततः प्रार्थना । 'नित्यं पापकरे पपे देवद्विजविरोधिना। गच्छ त्वं दुर्दशे देवि नित्यं शास्त्रविरोधिनि ।' इति विसर्जनम् । 'दशग्रन्थिसमायुक्तं दशसूत्रोपशोभितम् । दोरकं तु प्रतिष्ठाप्य करे बद्ध्वा प्रपूजयेत् ।' सौरमन्त्रेण षोडशोपचारदोरकपूजनमावाहनेत्यादि । ' ततः क्षमापयेद्देवं भास्करं च दशाकरम् । दुर्दशानाशनं देवं चिन्तयेद्विश्वरूपिणम् ।' अनेन नमस्कारः । अथ वायनमन्त्रः । 'फलानां दशकं दद्याच्छ्रोत्रियाय कुटम्बिने । दक्षिणासहितं तेन प्रीतो भव दिवाकर । भास्करो बुद्धिदाता च द्रव्यस्थो भास्करः स्वयम् । भास्करस्तारकोभाभ्यां भास्कराय नमोऽस्तु ते ।' अनेन वायनदानम् । अथ दशापूजनम् । कुड्यस्थाने चन्दनेन दश पुत्रिकाः कृत्वा, सुबुद्धिदायिन्यै नमः, सुखकारिण्यै नमः,सर्वसंपत्तिदायै नमः, इष्टभोगदायै नमः, लक्ष्म्यै कान्तिदायै नमः, दुःखनाशिन्यै नमः, पुत्रप्रदायै नमः, विजयायै नमः, धर्मदायिन्यै नमः,एभिर्नाममन्त्रैः षोडशोपचारपूजां कृत्वा ' विशुद्धवसनां देवीं सर्वाभरणभूषिताम् । ध्यायेद्दशदशां देवीं वरदाभयदायिनीम् ।' इति ध्यानम् । इति पूजनम् । अथ कथा । सूत उवाच—'मेरुपार्श्वे भद्रपीठे सुखासीनं जगद्गुरुम् । कश्यपं सृष्टिकर्तारं तापसं शुद्धमानसम् । नारदो वैष्णवश्रेष्ठस्त्रैलोक्यभ्रमणप्रियः । कदाचिद्दुर्दशां प्राप्तः कश्यपं शरणं गतः । ' नारद उवाच । ' देवदानवगन्धर्वा ऋषिपन्नगमानवाः । स्रष्टासि सर्वभूतानां धर्माधर्मवतां वर । दुष्टग्रहाभिभूतानां दुर्दशाहतचेतसाम् । स्तुत्वा विज्ञापयामास कश्यपं धर्मवत्सलम् । ' कश्यप उवाच—' देवानां दुर्दशा चैव जायते ब्रह्मवादिनाम् । प्रसन्नोऽहं मुनिश्रेष्ठ लोकानां हितकाम्यया । ' नारद उवाच—' देवदानवगन्धर्वा मानवाश्च विशेषतः । प्राप्तास्तु दुर्दशां येन मुक्ताः केन भवन्त्युत । ' कश्यप उवाच—' साधु पृष्टं महाभाग जगदानन्दकारकम् । वक्ष्ये सौरव्रतं पुण्यं दुर्दशानाशनं परम् । दशाकरं हि भूतानां

मनोरथफलप्रदम् । भानुवारे सिते पक्षे दशम्यां चैव नारद । प्रातःकालेऽथ मध्याह्ने स्नानंकुर्याद्यथाविधि । भानुंध्यायेत्त्रिमूर्तिं च सर्वदैत्यविनाशनम् । सूर्यपूजा च कर्तव्या तथा गन्धानुलेपनैः । उपचारैः षोडशभिर्नैवेद्यैस्तु फलादिभिः । बहिर्देशे लिखेत्कृष्णा दुर्दशादशपुत्रिकाः । पूजयेत्ताःप्रयत्नेन गन्धपुष्पादिभिर्बहिः । पूजयेद्दुर्दशास्तत्र लिखित्वा दशपुत्रिकाः । दुर्मुखादीनवदना मलिनीसत्यनाशिनी । सुबुद्धिनाशिनीहिंस्रा दुष्टमित्रविरोधिनी । उच्चाटनकरी नाम बहुचिन्ताप्रवर्धिनी । एताः पूज्याः कृष्णवर्णा भक्तियुक्तेन चेतसा । आदौ पूजाप्रयत्नेन गोमयेनानुलेपयेत् । नित्यं पापकरे पापे देवद्विज विरोधिनि । गच्छ त्वं दुर्दशे देवि नित्यं शास्त्रविरोधिनि। अनेन प्रार्थ्यमानाश्च विसर्ज्याश्च प्रयत्नतः । ततः पूजा प्रकर्तव्या दोररूपधरस्य च । दशग्रन्थिसमायुक्तं दशसूत्रोपशोभितम् । दोरकं च प्रतिष्ठाप्य करे बद्ध्वा प्रपूजयेत् । आवाहनादिदानान्तं पूजनं कारयेत्ततः । भक्तिभावेन चन्दनेन लेखयेद्दश पुत्रिकाः । सुबुद्धिदा सुखकरी सर्वसंपत्प्रदायिनी । इष्टभोगप्रदा लक्ष्मीः कीर्तिदा दुःखनाशिनी । पुत्रप्रदा च विजया दशमी धर्मदायिनी । एताहि नाममन्त्रैश्च पूजयेच्च पृथक्पृथक् । प्रतिष्ठां पूजनं कुर्यान्नैवेद्यं च यथाविधि । ततः प्रार्थ्य क्षमाप्यैव भक्तानुग्रहकारिणीम् । विशुद्धवसनां देवीं सर्वाभरणभूषिताम् । ध्यायेद्दशदशां देवीं वरदाभयदायिनीम् । इति ध्यानं प्रकुर्वीत दशायास्तु प्रयत्नतः । फलकैर्दशसंख्याकैर्भर्जितैस्तैलपाचितैः । एवं व्रतं प्रकर्तव्यं दशाकारकमुत्तमम् । ' नारद उवाच—' कथयस्व प्रसादेन व्रतमेतत्तपोधन । दशाव्रतं कृतं केन कस्य तुष्टो हि भास्करः । ' कश्यप उवाच—' पुरा तु नलभूपालश्चक्रवर्ती सुधार्मिकः । राज्यभ्रष्टो दशाहीनो द्यूतेनैव हि नारद । तेनापि पूजितः सूर्यो व्रतं कृत्वा प्रयत्नतः । दुर्दशां नाशयित्वा तु प्राप्तं राज्यं श्रिया सह । ततश्च द्वापरे विप्र पाण्डवो दुर्दशान्वितः । भ्रममाणं च घोरेण प्राप्तं सत्यवतीसुतम् । अभिवाद्य मुनिश्रेष्ठं सर्वज्ञं करुणान्वितम् । ' धर्म उवाच—' राज्यभ्रष्टो दशाहीनो जातोऽहं केन कर्मणा । प्रत्युपायं हितं ब्रूहि राज्यप्राप्तिकरं मुने । क्षणं ध्यात्वा मुनिश्रेष्ठो दृष्ट्वा सूर्यं दशाकरम् । दशाव्रतं प्रकर्तव्यं प्रयत्नेन नराधिप । यत्तद्व्रतस्य सामर्थ्यं प्राप्स्यसे वसुधामिमाम् । व्यासस्य वचनं श्रुत्वा धर्मराजो युधिष्ठिरः । व्रतं कृत्वा प्रयत्नेन चतुर्भिर्भ्रातृभिः सह । तस्य व्रतस्य सामर्थ्यात्प्राप्तराज्यो बभूव ह । श्रुत्वैव नारदो वाक्यं पुनः पप्रच्छ सारवित् । ' नारद उवाच—' केन कर्मविपाकेन दुर्दशा प्राप्यते नरैः । जायते मुनिशार्दूल तत्त्वतस्तद्वदस्व मे । ' कश्यप उवाच—' तुषभस्मास्थिमुसलं कदाचिल्लङ्घये-

न्नरः । कुमारीरजकीवृद्धापशुयोनिरताश्च ये । अयोनौ गुदगामी च ब्राह्मणीगमनेन च । संध्यासु पर्वसमये रमते च रजस्वलाम् । पितृमातृपरित्यागी स्वामिनं रणसंकटे । त्यजेद्वा धर्मपत्नीं च दुर्दशा प्राप्यते नरैः । तस्मात्सर्वप्रयत्नेन न्यायमार्गरतो भव । आयुर्दशा ततो राज्यं न्यायमार्गेण वर्तते ।' इति श्रीस्कन्दपुराणे कश्यपनारदसंवादे दशादित्यव्रतं संपूर्णम् ।

पक्षद्वयगतासु सर्वास्वेव दशमीषु तिथिपत्वेनान्तकः पूज्यः । तदुक्तम्—'दशम्यामन्तकस्यापि' इति ।

अथ सिद्धविरुद्धादिकं लिख्यते । दशमीगुरुवारेण सिद्धा यथा गुरौ दशमीपञ्चम्याविति । दशम्यां भौमवारेण क्रकचयोगः । दशम्यां पञ्चमीवन्माङ्गल्यविवाहयात्रादिकं कार्यमित्याद्युक्तमेव । वृश्चिकस्थिते सूर्ये दशमी दग्धा भवति । दशम्यां क्षत्रियादित्रयो वर्णा अभ्यङ्गस्नानं न कुर्युः । उक्तं च—'त्रयोदश्यां द्वितीयायां दशम्याम्' इत्यादि अत्र नालीशाकं नाद्यात् । उक्तं च 'शीर्षकपालान्त्राणि' इति । दशम्यामुत्तरदिशि गमनं योगिनीसांमुख्यान्न कुर्यात् इति दशमीनिर्णयः ।

श्रीमद्दिल्लीशसेनोद्भटविकटभटोद्दण्डमत्तेभसिंह—<br>
श्चण्डोन्माद्यत्तुरुष्कक्षुभितवसुमतीपालने धर्मराजः ।<br>
पौत्रः श्रीकृष्णसिंहक्षितिपकुलमणेर्विष्णुसिंहस्य पुत्रः<br>
श्रीमान्राजाधिराजो जयहरिरमराधीशवत्कौ सुखी स्तात् ॥ १ ॥<br>
श्रीमत्पण्डितदेवभट्टतनयः श्रीराघवाङ्घ्रिद्वय-<br>
ध्यानावाप्तसमस्तकामनिवहः सम्राट् स रत्नाकरः ।<br>
तुष्ट्यै श्रीजयसिंहवर्मनृपतेरेकादशं स्वर्द्रुमे<br>
सद्गुच्छं दशमीतिथेः समकरोद्गुण्यं बुधाह्लादकम् ॥ २ ॥

इति श्रीदेवभट्टात्मजपौण्डरीकयाजिरत्नाकरविरचिते जयसिंहकल्पद्रुमे दशमीनिर्णयो नाम द्वादशः स्तवकः ॥ १२ ॥

---

## अथैकादशीनिर्णयः ।

अथैकादशी निर्णीयते । तत्र शुक्लकृष्णैकादशीध्यानम् । 'एकादशी वृषस्था तु नीलशुभ्रा त्रिशूलिनी । ताम्रवर्णा रथारूढा पात्रखेटासिपङ्कजा । एकादशी मृगाङ्कस्था तुलाकर्तरिकायुता । सिंहाननारुणगला तुन्दिनी लासिनी परा ।' इति । अथै-

कादशीमहिमा हेमाद्रौ तत्त्वसागरे—'मातेव सर्वबालानामौषधं रोगिणामिव । रक्षार्थं सर्वलोकानां निर्मितैकादशी तिथिः ।' तथा-'एकादश्युपवासी यः स धन्यः स च बुद्धिमान् ।' तथा-'एकादशीं परित्यज्य योऽन्यद्व्रतमुपासते । स करस्थं महारत्नं त्यक्त्वा लोष्ठं हि याचते । एकामेकादशीं वापि समुपोष्य जनार्दनम् । कामेनापि समभ्यर्च्य संसारान्मुक्तिमाप्नुयात् ।' पुराणान्तरे तु—तोयेनापि समभ्यर्च्येति पाठः । 'प्रसङ्गाद्वाऽथवा दम्भाल्लोभाद्वा त्रिदशाधिपम् । एकादश्यां नमस्कृत्वा सर्वदुःखाद्विमुच्यते । संसाराख्यमहाघोराद्दुःखिनां सर्वदेहिनाम् । एकादश्युपवासोऽयं निर्मितं परमौषधम् । संसारोरगदष्टानां नराणां पापकर्मणाम् । एकादश्युपवासोऽयं निर्मितं परमौषधम् । संसारोरगदष्टानां नराणां पापकर्मणाम्।एकादश्युपवासेन सद्य एव सुखं भवेत् ।' नारदीयपुराणे वसिष्ठः—'एकादशीसमुत्थेन वह्निना पातकेन्धनम् । भस्मतां याति राजेन्द्र अपि जन्मशतोद्भवम् । तावत्पापानि देहेऽस्मिंस्तिष्ठन्ति मनुजाधिप । यावन्नोपवसेज्जन्तुः पद्मनाभदिनं शुभम् । अश्वमेधसहस्राणि वाजपेयशतानि च । एकादश्युपवासस्य कलां नार्हन्ति षोडशीम् । एकादशेन्द्रियैः पापं यत्कृतं भवता प्रभो । एकादश्युपवासेन तत्सर्वं प्रलयं व्रजेत् ।' इत्यादि हेमाद्रौ द्रष्टव्यम् । ब्रह्मवैवर्ते—'सर्वप्रायश्चित्तमिदं संसारोत्तारकारकम् । एकादशीव्रतं विप्र कुर्वन्मुक्तिमवाप्नुयात् । नरो दिनैर्यद्दशभिश्चतुर्भिश्च करोत्यघम् । उपोष्य पञ्चदशमं दिनं विष्णोर्हि मुच्यते । कलावस्मिञ्जनन्नीनामहिंसापावितात्मनाम् । एकादशींविनाविप्रन संसाराद्विमोक्षणम् ।' पद्मपुराणे—'एकतः पृथिवीदानमेकतो हरिवासरः । न समः कविभिः प्रोक्तो वासरो ह्यधिको मतः ।' भविष्यत्पुराणे—'एका विष्णुमयी शक्तिरनन्ता ह्यक्षया स्थिता । सा तेन तिथिरूपेण द्रष्टव्यैकादशी सती ।' सनत्कुमारप्रोक्ते—'कृत्वा पापसहस्राणि ब्रह्महत्याशतानि वै । एकामेकादशीं भक्त्या समुपोष्य शुचिर्भवेत् ।' देवीरहस्यस्कन्दपुराणयोः—'पापं च विविधं प्रोक्तं पातकं चोपपातकम् । लघुपातकसंज्ञं च महापातकमेव च । प्रकीर्णकं च तत्सर्वमेकादश्यामुपोषणात् । विलयं याति तोयस्थं यथा मृण्मयभाजनम् ।' सौरधर्मेषु—'एकतश्चाग्निहोत्रादि द्वादशीमेकतःप्रभो । तुलयाऽतोलयत्तत्र द्वादशी च विशिष्यते ।' देवीरहस्ये—'गायत्रीह यथा सर्वपापपञ्जरभेदिनी।एकादशी तथा सर्वपापपञ्जरभेदिनी ।' स्कन्दपुराणेऽपि-'अभोज्यभोजनाज्जातमगम्यागमनाच्च यत् । अयाज्ययाजनाद्यच्च अभक्ष्याणां च भक्षणात् । अस्पृश्यस्पर्शनाद्यच्च परवित्तापहारतः । ज्ञानाज्ञानकृतं यच्च पातकं चोपपातकम् । तत्सर्वं विलयं

याति एकादश्यामुपोषणात्।' वैष्णवतन्त्रे-'एकादशी महापुण्या विष्णोरीशस्य वल्लभा। तस्यामुपोषितो यस्तु द्वादश्यां पूजयेद्धरिम् । तस्य पापानि नश्यन्ति' इत्यादि । स्कन्दभविष्यत्पुराणयोः—'ये द्वादशीमुपवसन्त्यनिलाम्बुभक्ष्या ये वाङ्मनःसुकुसुमैर्हरिमर्चयन्ति । ते धौतपाण्डुरपयोनिधिराजहंसाः संसारसागरजलस्य तरन्ति पारम्।' रुद्रपुराणे—'यः करोति नरो भक्त्या एकादश्यामुपोषणम् । स याति विष्णुसालोक्यं याति विष्णोः सरूपताम् ।' विष्णुपुराणे—'ॐ कारः सर्वदेवानां यथैवाद्यः प्रपूजितः । तथा सर्वव्रतानां तु द्वादशीव्रतमुत्तमम् ।' इत्येकादशीमहिमा । तत्रैकादश्युपवासो द्वेधा । निषेधपरिपालनात्मको, व्रतरूपश्च । तत्राद्यः—'न शंखेन पिबेत्तोयं न खादेत्कूर्मशूकरौ । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।' इति कौर्मदेवलाद्युक्तः । विष्णुस्मृतावपि—'एकादश्यां न भुञ्जीत कदाचिदपि मानवः ।' इति । नारदीयेऽपि—'एकादश्यां न भुञ्जीत महाविघ्नेऽप्युपस्थिते ।' इति। स्कान्देऽपि—न भोक्तव्यं न भोक्तव्यं संप्राप्ते हरिवासरे । ' इति । अत्र न खादेत्कूर्मशूकरावित्यादिनिश्चितनिषेधसमभिव्याहृततया 'एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि' इत्यादेर्निषेधपरतैवाध्यवसीयते । न चैतेषु वाक्येषु पर्युदासकारणं व्रतशब्दसामानाधिकरण्यादि श्रूयते । अतो भोजननिषेधा इमे । व्रतरूपो ब्रह्मवैवर्ते—'प्राप्ते हरिदिने सम्यग्विधाय नियमं निशि । दशम्यामुपवासस्य प्रकुर्याद्वैष्णवं व्रतम् ।'इति।अन्यान्यपि व्रतरूपोपवासबोधकवचनान्यन्यत्र द्रष्टव्यानि । इदं च शिवभक्तादिभिरपि कार्यम् । तथा च हेमाद्रौ विष्णुधर्मोत्तरे—'एकादश्यष्टमी चैव पक्षयोश्च चतुर्दशी । शिवस्य तिथयः प्रोक्ता मुनिभिः शौनकादिभिः । तासामाद्यामुपवसेद्दिवा नाद्यात्तथान्त्ययोः।'इति।तथा 'वैष्णवो वाऽथ शैवो वा कुर्यादेकादशीव्रतम् ।' इति । एकादश्यामुपोषणं सौरैरप्यनुष्ठेयम् ।'वैष्णवो वाऽथ शैवो वा सौरोऽप्येतत्समाचरेत् ।' इति सौरपुराणेऽभिधानात् । व्रतरूपोऽपि द्विधा । नित्यः काम्यश्च । नित्य उक्तो गारुडे—'उपोष्यैकादशीं नित्यं पक्षयोरुभयोरपि । ' इति । सनत्कुमारोऽपि—'पक्षे पक्षे च कर्तव्यमेकादश्यामुपोषणम् ।'इति । नारदोऽपि—'नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः । पक्षे पक्षे च कर्तव्यमेकादश्यामुपोषणम् ।' इति । सनत्कुमारोऽपि—'एकादशी सदोपोष्या पक्षयोः शुक्लकृष्णयोः ।'इति । विष्णुपुराणेऽपि—'द्वादशी न प्रयोक्तव्या यावदायुः सुवृत्तिभिः । ' इति । अग्निपुराणेऽपि—उपोष्यैकादशी राजन्यावदायुः सुवृत्तिभिः ।' इति । कण्वोऽपि—'एकादशीमुपवसेन्न कदाचिदतिक्रमेत् ।'इति । नारदोऽपि-'पक्षे पक्षे च कर्तव्यमेकादश्यामुपोषणम्।' इति ।

माधवीये अकरणे दोषमाह सनत्कुमारः--'न करोति नरो मूढ एकादश्यामुपोषणम् । स नरो नरकं याति रौरवं तमसा कृतम् । एकादश्यां मुनिश्रेष्ठ यो भुङ्क्ते मूढचेतनः । प्रतिमासं स भुङ्क्ते तु किल्बिषं श्वादिविट्समम् । निष्कृतिर्मद्यपस्योक्ता धर्मशास्त्रे मनीषिभिः । एकादश्यन्नकामस्य निष्कृतिः क्वापि नोदिता । मद्यपानान्मुनिश्रेष्ठ पातैव नरकं व्रजेत् । एकादश्यन्नकामस्तु पितृभिः सह मज्जति ।' इति । नारदीयेऽपि--'यानि कानि च पापानि ब्रह्महत्यासमानि च । अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे । तानि पापान्युपाश्नाति भुञ्जानो हरिवासरे ।' इति । स्कान्देऽपि--'मातृहा पितृहा चैव भ्रातृहा गुरुहा तथा । एकादश्यां तु यो भुङ्क्ते पक्षयोरुभयोरपि ।' इति । क्वचित्तु 'एकादश्यां तु भुञ्जानो विष्णुलोकाच्च्युतो भवेत् ।' इति पाठः । ब्रह्मवैवर्तेऽपि--' स केवलमघं भुङ्क्ते यो भुङ्क्ते हरिवासरे । दिने तु सर्वपापानि भवन्त्यन्नस्थितानि तु । तानि मोहेन योऽश्नाति न स पापैर्विमुच्यते ।' इति । विधवायास्तु दोषविशेषः प्रदर्शितः कात्यायनेन--'विधवा या भवेन्नारी भुञ्जीतैकादशीदिने । तस्यास्तु सुकृतं नश्येद्भ्रूणहत्या दिनेदिने ।' इति । अकरण इवासमापनेऽपि दोष उक्तो विष्णुरहस्ये-- ' समादाय विधानेन द्वादशीव्रतमुत्तमम् । तस्य भङ्गं नरः कृत्वा रौरवं नरकं व्रजेत् । परिगृह्य व्रतं सम्यगेकादश्या व्रतं नरः । न समापयते तस्य गतिःपापीयसी भवेत् ।' इति । नारदीयेऽपि--'द्वादशीव्रतमादाय व्रतभङ्गं करोति यः । द्वादशाब्दं व्रतं चीर्णं निष्फलं तस्य जायते ।' इति । अत्यागविधिर्दर्शितो विष्णुरहस्ये--'परमापदमापन्ने हर्षे वा समुपस्थिते । सूतके मृतके वापि न त्याज्यं द्वादशीव्रतम् ।' इति नित्यत्वबोधकानि । अथ काम्यत्वबोधकानि । ' यदीच्छेद्विष्णुसायुज्यं शुभां संपदमात्मनः । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।' कात्यायनोऽपि--'संसारसागरोत्तारमिच्छन्विष्णुपरायणः । ऐश्वर्यं संततिं स्वर्गं मुक्तिं वा यद्यदिच्छति । एकादश्यां न भुञ्जीत कदाचिदपि मानवः ।' स्कान्देऽपि-- ' यदीच्छेद्विपुलान्भोगान्मुक्तिं वाऽत्यन्तदुर्लभाम् । एकादश्यामुपवसेत्पक्षयोरुभयोरपि । इदङ्माहात्म्यरत्नानि शास्त्राम्भोधौ स्फुरन्त्यपि । किं संग्रहीतुं शक्तः स्याद्रङ्कः कृष्णकृपां विना ।' इत्यादि । अत्र निर्णयामृतकारः । नित्यत्वविधायकवाक्यश्रवणात्किं नित्यं किं वा काम्यत्वविधायकवाक्यश्रवणात्काम्यमिति । अत्र कश्चिदाह नित्यकाम्यमिति । तन्न युक्तिसहम् । यतो यदेव नित्यं तदेव काम्यमिति कर्मधारयसमासस्यार्थः । स नोपपद्यते । नित्यत्वं नाम फलानपेक्षत्वम् । काम्यत्वं नाम फलापेक्षत्वम् । न ह्येकस्यैव

फलापेक्षत्वं तदनपेक्षत्वं चोपपद्यते । भावाभावयोः सामानाधिकरण्याभावात् । तथा च 'पूर्वामुपवसेत्कामी निष्कामस्तूत्तरां सदा' इति व्यवस्था वक्ष्यते । एकव्रतत्वे दिनद्वयविधानं कदाचिन्नोपपद्यते । तथैकादशीव्रताङ्गनियमे 'जह्याद्भुक्तद्वयं नित्ये काम्ये भुक्तचतुष्टयम्।' इति भेदः प्रदर्शितः।अतश्च निष्कामो नित्यविधिना नित्यैकादशीव्रतं कुर्यात् । सकामस्तु नित्यविधिना काम्यैकादशीव्रतमिति । माधवाचार्यस्तु-प्रत्यवायजनकाभावप्रतियोगिकृतिविषयत्वस्य नित्यत्वस्य कामनोपाधिकर्तव्यत्वस्य काम्यत्वस्य च भावाभावरूपत्वाभावेन संयोगपृथक्त्वन्यायेन चैकस्यैव नित्यत्वं काम्यत्वं चाविरुद्धम् । ततश्च विविदिषाधिकरणन्यायेन सकृदेवानुष्ठितकाम्यप्रयोगेण प्रसङ्गान्नित्यप्रयोगसिद्धिरिति वर्णयांबभूवुः । कालतत्त्वविवेचने—व्रतं तु संयोगपृथक्त्वादुभयरूपं नित्यं काम्यं च । तस्य चोभयरूपस्यापि निषेधस्य चैकदिने प्राप्तौ काम्यव्रतानुष्ठानेनैव नित्यप्रयोगवन्निषेधपरिपालनस्यापि सिद्धिः । तथा चोक्तं कालादर्शादिषु—'सिद्धिस्तस्यार्थतो व्रते' इति स्थितम् । अथैकादशीव्रतेऽधिकारिणः प्रदर्श्यन्ते । यथाह कात्यायनः—'अष्टवर्षाधिको मर्त्यो ह्यपूर्णाशीतिवत्सरः । एकादश्यामुपवसेत्पक्षयोरुभयोरपि ।' अष्टवर्षाधिक इत्युपनयनोत्तरत्वस्योपलक्षणमिति हेमाद्रिप्रभृतयः।वस्तुतस्तु—अष्टवर्षाधिकग्रहणस्योपलक्षणत्वे प्रमाणाभावः । उपलक्ष्येण नियतसंबन्धाभावात् । किं तु विवक्षितमेव । परं तु शक्तज्ञानवद्विषयत्वेन व्यवस्थितम् । अशक्तस्याज्ञस्य त्वेकादशवर्षोत्तरं व्रतादावधिकारः। 'अपूर्णैकादशाब्दस्य चतुर्वर्षाधिकस्य च । प्रायश्चित्तं चरेन्माता अन्ये चाप्यस्य बान्धवाः ।' इति दीक्षितीये प्रायश्चित्तसारे यमवचने एकादशवर्षपर्यन्तमकरणप्रायश्चित्तादौ साक्षादनधिकारस्योक्तत्वात् । तत्राप्यसामर्थ्ये चतुर्दशवर्षोत्तरमधिकारः । तदुक्तं मणिमाण्डव्यसंवादे महाभारते—'मर्यादां स्थापयाम्यद्य लोकधर्मफलोदयाम् । आ चतुर्दशकाद्वर्षान्न भविष्यति पातकम् । परतः कुर्वतामेव दोष एवं भविष्यति' इति । अत्र मर्त्यग्रहणात्सर्वेषामेवानुलोमप्रतिलोमादीनामत्राधिकारः । नारदीयपुराणेऽपि—'अष्टवर्षाधिको मर्त्यो अशीतिर्न हि पूर्यते । यो भुङ्क्ते मामके राष्ट्रे विष्णोरहनि पापभाक् । स मे वध्यश्च दण्ड्यश्च निर्वास्यो देशतः स मे । एतस्मात्कारणाद्विप्र एकादश्यामुपोषणम् । कुर्यान्नरो वा नारी वा पक्षयोरुभयोरपि ।' इति । एवं पक्षद्वयैकादशीव्रतस्य सर्वत्र प्राप्तौ व्यवस्थया विशेषः कालादर्शेऽभिहितः ।

विधवा या वनस्थस्य यतेश्चैकादशीद्वये । उपवासो गृहस्थस्य शुक्लायामेव पुत्रिणः । भुजेर्निषेधः कृष्णायां सिद्धिस्तस्य ततो व्रते' इति । माधवीयेऽपि—गृहस्थस्य तु शुक्लैकादश्यामेव नित्योपवासः । तथा च कूर्मपुराणे—'एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि। वानप्रस्थो यतिश्चैव शुक्लामेव सदा गृही' इति । भविष्योत्तरपुराणे—'एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । ब्रह्मचारी च नारी च शुक्लामेव सदा गृही ।' इति । अत्र नारीशब्देन विधवोच्यते । तस्या एव यतिसमानधर्मत्वात् । वनस्थयतिसमानधर्मत्वं च तस्या गरुडपुराणे उक्तम्—यथा 'पुनः प्रभातसमये घटिकैकादशी भवेत् । तत्रोपवासो विहितो वनस्थस्य यतेस्तथा । विधवायास्तु तत्रैव परतो द्वादशी न चेत्।' इति । पतिवत्यास्तूपवासनिषेधादिकं परिभाषायां द्रष्टव्यम् । चातुर्मास्यान्तर्गता तु कृष्णापि गृहिणोपोष्या । 'शयिनीबोधिनीमध्ये या कृष्णैकादशी भवेत् । सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन' इति पाद्मात् । एतच्चापुत्रवद्गृहस्थविषयम् । पुत्रवतस्तु सापि निषिद्धा । 'संक्रान्त्यामुपवासं च कृष्णैकादशिवासरे । चन्द्रसूर्यग्रहे चैव न कुर्यात्पुत्रवान्गृही ।' इति नारदोक्तेः । कृष्णैकादश्यां पुत्रिण उपवासनिषेधः कूर्मपुराणेऽपि—'संक्रान्त्यां कृष्णपक्षे तु रविशुक्रदिने तथा । एकादश्यां न कुर्वीत उपवासं च पारणम् ।' इति । अत्र पुत्रवानित्यनुषज्यते । पारणमपि तन्निमित्तमेव निषिध्यते । तच्च 'सप्त वारानुपोष्यैव सप्तधा संयतेन्द्रियः । सप्तजन्मकृतात्पापात्तत्क्षणादेव मुच्यते।' इति वचनविहितशनिवारप्रोक्तोपवासाङ्गभूतं तदुत्तरदिने प्राप्तं रविवारप्रयुक्तम् । 'नित्यं द्वयोरयनयोर्नित्यं विषुवतोर्द्वयोः।चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्वसु । अहोरात्रोषितः स्नानं श्राद्धं दानं तथा जपम् । यः करोति प्रसन्नात्मा तस्य स्यादक्षयं च तत् ।'' इति संक्रान्त्यादिपूर्वदिनविहितोपवासांगभूतं तदुत्तरदिने प्राप्तं संक्रान्त्यादिनिमित्तकं तन्निषेधेन च तदङ्गपूर्वदिनोपवासनिषेध एव द्रष्टव्यः । तथा च शनौ रवौ च संक्रान्तिदिनतत्पूर्वदिनयोश्च पुत्रवद्गृहिणोपवासो न कार्य इति पर्यवस्यति । गौतमोऽपि—'आदित्येहनि संक्रान्त्यामसितैकादशीषु च । व्यतीपाते कृते श्राद्धे पुत्री नोपवसेद्गृही' इति । पद्मपुराणेऽपि—' संक्रान्त्यामुपवासेन पारणेन युधिष्ठिर । एकादश्यां च कृष्णायां ज्येष्ठः पुत्रो विनश्यति ।' इति। नारदीयेऽपि—' इन्दुक्षयार्कसंक्रान्त्योरेकादश्यां सितेतरे । उपवासं न कुर्वीत यदीच्छेत्संततिं ध्रुवाम् ।' इति । यद्यप्येतेषां वचनानां पुत्रवद्गृहिणः सामान्यतः कृष्णैकादश्युपवासनिषेधकता प्रतीयते । तथापि कृष्णैकादश्युपवासविधेर्वनस्थादिविषयत्वेनोपसंहारे गृह-

स्थमात्रस्य तदप्राप्तेर्निषेधस्य प्राप्त्युपजीवित्वेन यथाश्रुतार्थकत्वायोगाच्चातुर्मास्यान्तर्गतकृष्णैकादशीविषयत्वमेवोचितम्।तत्र 'शयनीबोधिनीमध्ये' इति स्मृत्यन्तरवचने गृहस्थंप्रत्युपवासस्य विहितत्वादिति हेमाद्रिनिर्णयामृतप्रभृतयः। माधवस्तु-यानि पुत्रवद्गृहिणः कृष्णैकादश्युपवासनिषेधकानि वचनानि गृहस्थमात्रस्य कृष्णायामुपवासनिषेधेऽपि पुत्रिणस्तस्य प्रत्यवायातिशयार्थानीति । नन्वेषु वचनेषु 'एकादश्यां तु कृष्णायां संक्रमे ग्रहणेऽपि च ।' इत्यादिवाक्येषु च संक्रान्तिरविवारादियुक्तायां शुक्लैकादश्यामप्युपवासनिषेधः प्रतीयते इति चेत् । न । तेषां संक्रान्त्यादिविहितोपवासविषयत्वात्, न तु तद्युक्तैकादश्युपवासविषयता । तदुक्तं कात्यायनेन–'एकादशीषु कृष्णासु रविसंक्रमणे तथा । चन्द्रसूर्योपरागे च न कुर्यात्पुत्रवान्गृही । तत्प्रयुक्तोपवासस्य निषेधोऽयमुदाहृतः । प्रयुक्त्यन्तरयुक्तस्य न विधिर्न निषेधनम् ।' इति । जैमिनिरपि–'तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः । नानुषङ्गकृतो ग्राह्यो यतो नित्यमुपोषणम् ।' इति । अयमर्थः । एकादश्युपवासस्य नित्यत्वात्संक्रान्त्याद्युपवासस्य च काम्यत्वात्काम्योपवासनिषेधेऽपि न नित्योपवासनिषेधः सिध्यतीति । अत एवादित्यवारादियोगेप्येकादशीनिमित्तोपवासो विहितो मदनरत्ने सनत्कुमारप्रोक्ते–' भानुवारेण संयुक्ता तथा संक्रान्तिसंयुता । एकादशी सदोपोष्या सर्वसंपत्करा तिथिः ' इति । कालतत्त्वविवेचने विष्णुधर्मोत्तरे–' भृगुभानुदिनोपेता सूर्यसंक्रान्तिसंयुता । एकादशी सदोपोष्या पुत्रपौत्रविवर्धिनी' इति । कात्यायनोऽपि–'व्यतीपातो वैधृतिर्वा एकादश्यां यदा भवेत् । उपोष्या सा तु विज्ञेया पुत्रसंपद्विवर्धिनी' इति। प्राच्यास्तु वैष्णवगृहस्थानां कृष्णापि नित्या ।'नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः।पक्षे पक्षे च कर्तव्यमेकादश्यामुपोषणम् । सपुत्रश्च सभार्यश्च सजनो भक्तिसंयुतः । एकादश्यामुपवसेत्पक्षयोरुभयोरपि ।' इति नारदोक्तेरित्याहुः । निर्णयसिन्धौ पुत्रशब्दश्चापत्यमात्रवचनः । नारायणवृत्तौ पुमांस एव मे पुत्रा जायेरन्नित्यत्रापत्यमात्रवाचित्वोक्तेः।'जनयेद्बहुपुत्राणि' इति लिङ्गात्।'पुमान् पुत्रो जायते' इति च। काम्यस्तु स्कन्दपुराणे–'पितॄणां गतिमन्विच्छन्कृष्णायां समुपोषयेत्' इति। अयं च पुत्रवतापि विधेयः । 'पुत्रवांश्च सभार्यश्च बन्धुयुक्तस्तथैव च । उभयोः पक्षयोः काम्यं व्रतं कुर्यात्तु वैष्णवम् ।' इति नारदवचनात् । मत्स्यपुराणेऽपि–'एकादश्यां तु कृष्णायामुपोष्य विधिवन्नरः।पुत्रानायुः समृद्धिं च सायुज्यं च स गच्छति।' इति।दिनक्षये पुत्रवतो गृहस्थस्योपवासो निषिद्धः । मदनरत्ने व्यासः–'एकादशीषु नष्टासु रवौ

संक्रमणे तथा । पारणं चोपवासं च न कुर्यात्पुत्रवान्गृही' इति । 'दिनक्षये तु संप्राप्ते नोपोष्या दशमीयुता । यदीच्छेत्पुत्रपौत्राणामृद्धिं संपदमात्मनः।' इति । मत्स्यपुराणेऽपि–'दिनक्षयेऽर्कसंक्रान्तौ ग्रहणे चन्द्रसूर्ययोः । उपवासं न कुर्वीत पुत्रपौत्रसमन्वितः।' इति । दिनक्षयलक्षणं पद्मपुराणे–'द्वौ तिथ्यन्तावेकवारे यस्मिन्स स्याद्दिनक्षयः' इति । वसिष्ठोऽपि–'एकस्मिन्सावने त्वह्नि तिथीनां त्रितयं यदा । तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम्।' इति । फलमत्र पुत्रवत उपवासव्यतिरिक्तदानादिजन्यं द्रष्टव्यम्। तस्योपवासनिषेधात् । ईदृशविषये किं विधेयमित्यपेक्षायां विशेषो वायवीये उक्तः । 'उपवासनिषेधे तु किंचिद्भक्ष्यं प्रकल्पयेत् । न दुष्यत्युपवासेन ह्युपवासफलं लभेत्' इति । भक्ष्यं च विद्वाविषये दर्शितम्–'अविद्धानामलाभे तु पयोदधिफलानि च । सकृदेवाल्पमश्नीयादुपवासस्ततो भवेत् ।' इति । तथा 'नक्तं हविष्यान्नमनोदनं वा फलं तिलाः क्षीरमथाम्बु चाज्यम् । यत्पञ्चगव्यं यदि चापि वायुः प्रशस्तमत्रोत्तरमुत्तरं तु।' इति । हेमाद्रौ–नित्यैकादश्युपवासासमर्थे नैकभक्तादिकं कर्तव्यम् । तथा च मार्कण्डेयः–'एकभक्तेन नक्तेन तथैवायाचितेन च । उपवासेन दानेन न निर्द्वादशिको भवेत् । एकभुक्तेन नक्तेन बालवृद्धातुरः क्षिपेत्। पयोमूलफलैर्वापि न निर्द्वादशिको भवेत्।' इति । स्मृतिरपि–'उपवासे त्वशक्तानामशीतेरूर्ध्वजीविनाम्। एकभक्तादिकं कार्यमाह बौधायनो मुनिः ।' इति । भविष्यत्पुराणे द्वादशीकल्पे–'एकादश्यां प्रभुं विष्णुं समभ्यर्च्य कदाचन । उपोषितेन नक्तेन तथैवायाचितेन वा । एकभक्तेन वा तात न निर्द्वादशिको भवेत् । तदेकनियमो नित्यं न सीदति भवार्णवे। कायशक्तिबलादेव न बलाद्धर्ममाचरेत्।'हेमाद्रौ बोधायनः–'व्याधिभिः परिभूतानां पित्ताधिकशरीरिणाम्।त्रिंशद्वर्षाधिकानां च नक्तादिपरिकल्पना।' त्रिस्त्रिंशद्वर्षकाणामित्यपि क्वाचित्पाठः।तत्र नवतिवर्षाणामित्यर्थः।कूर्मपुराणे–'एकभक्तेन नक्तेन बालवृद्धातुरः क्षिपेत्। नातिक्रमेद्द्वादशीं च उपवासव्रतेन च।' भविष्ये–'उपवासात्परं भैक्ष्यं भैक्ष्यात्परमयाचितम्।अयाचितात्परं नक्तं तस्मान्नक्तेन वर्तयेत् । 'अष्टौ तानि'–इत्यादि परिभाषायां द्रष्टव्यम् । नित्यकाम्ययोरशक्ताः स्वप्रतिनिधिभिर्व्रतं कारयेयुः । तेऽपि तत्रैव द्रष्टव्याः। अस्यापवादः कश्यपपाञ्चरात्रे–'मदुत्थाने च शयने मत्पार्श्वपरिवर्तने।अथ यो दीक्षितः कश्चिद्वैष्णवो भक्तितत्परः।अन्नं वा यदि भुञ्जीत फलमूलमथापि वा।अपराधमहं तस्य न क्षमामि कदाचन । क्षिपामि नरके तावद्यावदाभूतसंप्लवम् ।' इति । 'मच्छयने मदुत्थाने मत्पार्श्वपरिवर्तने । फलमूलजलाहारी हृदि शल्यमिवार्पितम्।' इति।एतच्च हेमा–

द्यादिमहानिबन्धेष्वदर्शनान्निर्मूलम् । यानि वचनानि शुक्लकृष्णैकादश्योः साम्यबोधकानि विष्णुरहस्यस्कन्दपुराणनारदीयपुराणेषु पठ्यन्ते । 'यथा कृष्णा तथा शुक्ला विशेषो नास्ति कश्चन ।' इति । एवमेव सनत्कुमारभविष्यपुराणसौरपुराणेष्वपि । विष्णुरहस्यसौरपुराणयोः—'यथा सुपूजितो गौरः कृष्णो वा वेदविद्द्विजः । संतारयति दातारं द्वादश्यौ च तथा स्मृते ।' तथा स्कन्दपुराणे— 'तैलं शुक्लेतराणां च तिलानां सदृशं यथा । द्वादश्योः सदृशं तद्वत्पुण्यं शुक्लासितोभयोः । दर्शश्च पूर्णमासी च पुण्यतस्तु यथा समे । तथाऽसिते सिते पुण्ये द्वादश्यौ मुनिभिः स्मृते ।' इति । 'यथोत्तरं दक्षिणं च अयने वै प्रकीर्तिते । तुल्यं पुण्यमवाप्नोति द्वादश्योस्तु तथोभयोः ।' तथा—'सोमसूर्यग्रहौ पुण्यौ यथैव मुनिभिः स्मृतौ । तथा सितासिते पुण्ये द्वादश्यौ विष्णुतुष्टिदे । सायं प्रातर्यथा संध्ये सायं प्रातर्यथाहुती । तथा सितासिते पुण्ये द्वादश्यौ धर्मतः समे ।' इति । 'यथा विष्णुः शिवश्चैव संपूज्यौ मुनिभिः स्मृतौ । तथा पूज्यतमे प्रोक्ते द्वादश्यौ शुक्लकृष्णके ।' वाराहपुराणे—'एकादश्यामुपवसेत्पक्षयोरुभयोरपि । द्वादश्यां योऽर्चयेद्विष्णुं स मुक्तिफलभाग्भवेत् ।' इत्यादीनि यान्यपि शुक्लकृष्णविवेके प्रत्यवायबोधकानि कूर्मपुराणे विष्णुधर्मोत्तरे स्कन्दपुराणे च—'स ब्रह्महा सुरापः स्यात्कृतघ्नो गुरुतल्पगः ।' स्कन्दपुराणे—'स ब्रह्महा स गोघ्नश्च सुरापो गुरुतल्पगः ।' कालिकापुराणे— 'सर्वेषामिह पापानामाश्रयः स तु कीर्तितः ।' एतेषामुत्तरार्धं तु 'विवेचयति यो मोहादेकादश्योः सितासिते ।' इति। गरुडपुराणेऽपि—' शुक्ला वा यदि वा कृष्णा विशेषो नास्ति कश्चन । विशेषं कुरुते यस्तु पितृहा स तु कीर्तितः । ह्रासवृद्ध्येन्दुरश्मीनां शुक्लता कृष्णता तथा । एकादश्याः स्वरूपं तु संख्या या सैव केवलम् । अतः कृष्णसितत्वादि शशिनो गुण उच्यते । एकादश्यां न तेनास्ति दूषणं येन दृश्यते ।' सनत्कुमारप्रोक्ते— 'एकादश्योर्द्वयोर्यस्तु विशेषं कुरुते नृप । तस्योद्धारं न पश्यामि यावदाभूतसंप्लवम् ।' इत्यादीनि,-तानि सर्वाणि वानप्रस्थयतिवैष्णवादिविषयाणि । अन्यथा—'शुक्लामेव सदा गृही' इति वाक्यविरोधः स्यादिति दिक् ॥ अथ प्रसङ्गादष्टादशैकादशीभेदा उच्यन्ते । तत्रैकादशी द्विविधा । संपूर्णा विद्धा च । या संपूर्णा सैव शुद्धेत्युच्यते । तत्र शुद्धैकादशी समतान्यूनताधिक्ययोगात्त्रिविधा । सा त्रिविधापि द्वादशीसाम्यन्यूनताधिक्ययोगात्प्रत्येकं त्रिविधा भवति । एवं शुद्धाया नव भेदाः । यथा शुद्धसमा द्वादशीसमा, शुद्धसमा द्वादशीन्यूना, शुद्धसमा द्वादश्यधिका, शुद्धन्यूना द्वादशीसमा, शुद्धन्यूनाद्वादशीन्यूना, शुद्ध-

न्यूना द्वादश्यधिका, शुद्धाधिका द्वादशीसमा, शुद्धाधिकाद्वादशीन्यूना, शुद्धाधिका द्वादश्यधिका चेति । एवं विद्धापि साम्यन्यूनताधिक्ययोगात्रिविधा सती द्वादशीसाम्यन्यूनताधिक्ययोगात्प्रत्येकं त्रिविधा । एवं विद्धाया अपि नव भेदाः । विद्धसमा द्वादशीसमा, विद्धसमाद्वा दशीन्यूना, विद्धसमा द्वादश्यधिका, विद्धन्यूना द्वादशीसमा, विद्धन्यूना द्वादशीन्यूना, विद्धन्यूना द्वादश्यधिका, विद्धाधिका द्वादशीसमा, विद्धाधिका द्वादशी न्यूना, विद्धाधिका द्वादश्यधिका चेति । एवं मिलित्वाऽष्टादश भेदा भवन्ति । अत्र सर्वेष्वपि भेदेष्वेकादशीद्वादश्योः समत्वं नाम षष्टिघटिकात्मकत्वं ततो न्यूनत्वे न्यूनत्वमाधिक्ये आधिक्यं ज्ञेयम् । हेमाद्रौ—तत्र संपूर्णा तावत्कैश्चिदुक्ता उदयादुदयपर्यन्तमवस्थितैकादशी संपूर्णेति । तथा च ज्योतिःसिद्धान्ते— 'सर्वा ह्येताश्च संपूर्णा उदयादोदयस्थिताः' । नारदीयपुराणे-'आदित्योदयवेलास्तुमारभ्य षष्टिस्तु । डिकाः । या तिथिः सा तु संपूर्णा ।' इति । नैतत्साधीयः । 'प्रतिपत्प्रभृतयः सर्वा उदयादोदयाद्रवेः । संपूर्णा इति विख्याता हरिवासरवर्जिताः ।' इति स्कन्दपुराणवचनविरोधात् । कीदृशी तर्हि संपूर्णेत्यपेक्षिते—गरुडपुराणे शिवरहस्ये चोक्तम्— 'उदयात्प्राग्यदा विप्र मुहूर्तद्वयसंयुता । संपूर्णैकादशी नाम तत्रैवोपवसेद्गृही ।' भविष्यपुराणे—'आदित्योदयवेलायाः प्राङ्मुहूर्तद्वयान्विता । एकादशी तु संपूर्णा विद्धान्या परिकीर्तिता ।' इति । वस्तुतस्तु—द्विविधैकादशी संपूर्णा अहोरात्रव्यापिनी अरुणोदयादारभ्य द्वितीयसूर्योदयपर्यन्तमवस्थिता च । तत्रापि सर्वतिथिसाधारणः पूर्वस्यां संपूर्णशब्दो मुख्यः न द्वितीयायाम् । अनेकार्थत्वापातात् । उदयात्प्राग्घटिकाचतुष्टयेऽपि विद्यमानायाः संपूर्णेत्यभिधानमरुणोदयवेधनिराकरणार्थम् । हरिवासरवर्जिता इति चा । कालतत्त्वविवेचने तु—संपूर्णत्वं नोदयमात्रादारभ्य प्रवृत्तायाः । किं तु उदयात्प्रागपि मुहूर्तद्वयव्यापिन्याः । आदित्योदयेति भविष्यपुराणवचनात् । प्रतिपत्प्रभृतय इति स्कन्दपुराणवचने त्वन्यसूर्योदयादारभ्य प्रवृत्तत्वं सूर्योदयपर्यंतं सत्त्वं च द्वयं मिलितं सामान्यतः संपूर्णत्वप्रयोजकं यदुक्तं तन्मध्ये पूर्वमेकादश्यां पर्युदस्यते हरिवासरवर्जिताः इत्यनेन न तूत्तरमपि, तत्रैव वचनान्तरे विशेषविधानात् । तेनारुणोदयादारभ्य द्वात्रिंशन्मुहूर्तव्यापिन्येकादशी संपूर्णा न त्वितरतिथिवत्षष्टिघटिकामात्रव्यापिनी । यत्तु— 'आदित्योदयवेलामास्तुरभ्य षष्टि । नाडिकाः । संपूर्णैकादशी नाम' इतीतरतिथितुल्यं, संपूर्णत्वमेकादश्यामप्युक्तम् । तन्न मुख्यम् । किं त्वनुकल्पः । स च स्मार्तविषये इत्यग्रे स्फुटी भविष्यति । अरुणोदयैकदेशस्य च दशम्याः पूरणादेकादश्याः सकलतद-

व्याप्त्या विरुद्धत्वम्। तेन यैकादशी कृत्स्नाऽरुणोदयव्यापिनी द्वितीयसूर्योदयादर्वागेव रात्रौ दिने वा समाप्ता द्वादश्या युक्ता सा न विद्धा संपूर्णा, किं तु खण्डामात्रं सूर्योदयमारभ्य तदस्तमयमात्रपर्यंतं वर्तमाना इतरतिथय इवेति। अथ दशमीवेधो निरूप्यते। स च वेधस्त्रिविधः। अरुणोदयवेधः, सूर्योदयवेधः, पञ्चदशनाडीवेधश्चेति। तत्रारुणोदयवेधो भविष्यत्पुराणे—'अरुणोदयवेलायां दिशागन्धो भवेद्यदि। दुष्टं तत्तु प्रयत्नेन वर्जनीयं नराधिप।' इति। दिशा दशमी। एतच्च वैष्णवोपोष्यैकादशीविषयम्। 'दशमीवेधसंयुक्तो यदि स्यादरुणोदयः। नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतम्।' इति भविष्यत्पुराणगरुडपुराणवचनात्। वैष्णवलक्षणं च स्कान्दे—'परमापदमापन्नो हर्षे वा समुपस्थिते। नैकादशीं त्यजेद्यस्तु यस्य दीक्षास्ति वैष्णवी। समात्मा सर्वभूतेषु निजाचारादविप्लुतः। विष्णवर्पिताखिलाचारः स हि वैष्णव उच्यते।' स्मृत्यन्तरेऽपि—'वैखानसाद्यागमोक्तदीक्षायुक्तो हि वैष्णवः।' इति। यद्यपि पित्रादेरागमोक्तदीक्षायां तन्मात्रस्यैव वैष्णवत्वं न तत्पुत्रादेः तथापि स्वपारम्पर्यप्रसिद्धमेव वैष्णवत्वं स्मार्तत्वं च मन्यन्ते बुधाः। तत्त्वसागरे—भविष्ये—'यथा शुक्ला तथा कृष्णा यथा कृष्णा तथेतरा। तुल्ये ते मन्यते यस्तु स वै वैष्णव उच्यते।' इति। अरुणोदयप्रमाणं तु स्कन्दनारदाभ्यामुक्तम्—'उदयात्प्राक्चतस्रस्तु नाडिका अरुणोदयः।' इति। हेमाद्रौ—'चतस्रो घटिकाः प्रातररुणोदय उच्यते। यतीनां स्नानकालस्तु गङ्गाम्भःसदृशः स्मृतः।' इति। तथा—'अरुणोदयवेधः स्यात्सार्धं तु घटिकात्रयम्।' इति। एतेषां सर्वेषां वचनानां रात्रिमानह्रासवृद्धिभ्यां मुहूर्तद्वयपरतैव। 'उदयात्प्राग्यदा विप्र मुहूर्तद्वयसंयुता।' इति। 'आदित्योदयवेलायाः प्राङ्मुहूर्तद्वयान्विता।' इति गारुडभविष्यवचनैकवाक्यत्वात्। कालतत्त्वविवेचनेऽपि—'अरुणोदयकाले तु दिशागन्धो भवेद्यदि।' इत्यादिवचनेषु योऽरुणोदय उक्तः स उदयप्राचीनमुहूर्तद्वयात्मक एव द्रष्टव्यः। पूर्वैकवाक्यत्वात्, योगार्थस्यापि तत्रैव संभवाच्च। यच्च क्वचिद्रात्र्यन्त्याष्टमभागस्यारुणोदयत्वाभिधानं तदल्पान्तरत्वादेतत्परमेव। यदपि ब्रह्मवैवर्तीयम्—'चतस्रो घटिकाः प्रातररुणोदयनिश्चयः। चतुष्टयविभागोऽत्र वेधादीनां किलोदितः। अरुणोदयवेधः स्यात्सार्धं तु घटिकात्रयम्। अतिवेधो द्विघटिकः प्रभासंदर्शनाद्रवेः। महावेधोऽपि तत्रैव दृश्यतेऽर्को न दृश्यते। तुरीयस्तत्र विहितो योगः सूर्योदये सति।' इति। अत्रारुणोदयवेधातिवेधमहावेधयोगसंज्ञाकरणं तद्दोषतारतम्यप्रदर्शनार्थम्। मुहूर्तो घटिकाद्वयमितिवद्घटिकाशब्दो

मुहूर्तार्धपरः । 'उदयात्प्राक्चतस्रस्तु नाडिका अरुणोदये ।' इति नारदादिवचने नाडिकाशब्दोऽपि तथा । अत एव 'नागो द्वादशनाडीभिर्दिक्पञ्चदशाभिस्तथा । भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम् ।' इति वचनोक्तविशेषवेधः षट्सार्धसप्तनवमुहूर्तपर्यवसन्न एव कालादर्शादिषु दर्शितः । तेन रात्रिह्रासवृद्धिभ्यां मुहूर्तानामपि ह्रासवृद्धी सम्यगालोच्य वेधनिश्चयः कर्तव्यो न तु स्थूलदृशेति । य एते वेधातिवेधमहावेधाख्या दोषाः पूर्वमुक्ताः तेषु सत्स्वेकादशीसंपृक्तसंदिग्धसंयुक्तसंकीर्णनामभिर्व्यवह्रियते । अरुणोदयप्रथमघटिकायां दशमीसद्भावो वेध इत्युक्तः । स च द्विविधः । घटिकाप्रारम्भे कृत्स्नघटिकायां च दशमीवृत्तिभेदात् । अत्र प्रारम्भमात्रे दशमीयुक्तैकादशी संपृक्तेत्युच्यते । कृत्स्नघटिकावर्तिदशमीसद्भावयुक्तैकादशी संदिग्धा । अरुणोदयप्रथममुहूर्तदशमीव्याप्तिरतिवेधस्तदुपेतैकादशी संयुक्तेत्युच्यते । सूर्यमण्डलदर्शनसंदेहवेलायां दशमीसद्भावो महावधस्तद्युक्तकादशी संकीर्णेत्युच्यते । ता एताः संपृक्तादयश्चतस्रोऽपि त्याज्याः । तथा च गोभिलः—'अरुणोदयवेलायां दशमी यदि संगता । संपृक्तैकादशीं तां तु मोहिन्यै दत्तवान्भुवि।' इति । गरुडपुराणे—'उदयात्प्राक्त्रिघटिकाव्यापिन्येकादशी यदा । संदिग्धैकादशी नाम वर्ज्येयं धर्मकाङ्क्षिभिः । उदयात्प्राङ्मुहूर्तोनव्यापिन्येकादशी यदा । संयुक्तैकादशी नाम वर्जयेद्धर्मवृद्धये । आदित्योदयवेलायामारभ्य षष्टिनाडिकाः । संकीर्णैकादशी नाम त्याज्या धर्मफलेप्सुभिः ।' इति । यद्यपि पूर्वत्र वेधवाक्ये 'सार्धं तु घटिकात्रयम्' इत्युक्तमत्र तु संदिग्धैकादशीवाक्ये त्रिघटिकेत्युक्तं तथापि नैतावता वैषम्येण विरोधः शङ्कनीयः, शास्त्रद्वयस्यापि दशमीवेधत्यागपरत्वात् । यत्तु निर्णयसिन्धौ—'उदयात्प्राक्चतस्रः' इति स्कान्दवचनेन 'मुहूर्तद्वयसंयुता' इति गारुडवचनस्य 'मुहूर्तद्वयान्विता' इति भविष्यवचनस्य चोपसंहाराद्दण्डचतुष्टयमेवारुणोदय इति। चतस्रो घटिका इति भविष्यवचनमप्यवयवद्वारेणारुणोदयवेधविशेषपरमेवेति । यदप्यत्र केचित्—एतेषां सर्वपक्षाणां मुहूर्तद्वयेन क्रोडीकारान्निशः प्रान्त इति वचनाच्च रात्रिमानवशात्सार्धत्रिदण्डादयोऽनेकेऽरुणोदयाः।तदाह हेमाद्रिः-सार्धघटिकात्रयोक्तिरष्टाविंशतिघटीमितरात्रिविषया महत्तमास्तु रात्रीरपेक्ष्य चतस्रो घटिका इत्युक्तमित्याहुः। तन्न । अरुणोदयशब्दस्य अनेकार्थत्वापत्तेः । न च मुहूर्तद्वयमर्थः । दण्डद्वयैकमुहूर्तादिवेधानां तथाप्यनुपपत्तेः । न हि तेषां यामार्धत्वमरुणोदयत्वं चास्तीत्यादि । तदेतदापाततः । रात्रिमानह्रासवृद्धिवशेन त्रिदण्डचतुर्दण्डात्मकत्वान्मुहूर्तद्वयस्यैकमूलक-

त्पनालाघवेन दण्डचतुष्टयादिप्रतिपादकवचनानां मुहूर्तद्वयपर्यवसितार्थप्रतिपादकत्व- स्यैव युक्तत्वात्। मुहूर्तद्वयत्वस्यानुगतस्य वाच्यतावच्छेदकस्य सकलसाधारणत्वेन न नानार्थत्वापत्तिरपि, अरुणोदयशब्दस्य द्विघटिकादौ तदसत्त्वं च न दोषाय, तस्या- रुणोदयानात्मकत्वात्, दोषविशेषबोधनार्थं तदभिधानादित्यलम्। तदेवं सामान्यवि- शेषाभ्यां प्रतिषिद्धत्वादरुणोदयविद्धैकादशी वैष्णवेन परित्याज्या। 'दशमीशेषसं- युक्तो यदि स्यादरुणोदयः। नैवोपोष्यं वैष्णवेन तद्धि नैकादशीव्रतम्'। इति गारुडे भविष्ये च योगमात्रनिषेधात्। नारदीयेऽपि—'लववेधेऽपि विप्रेन्द्र दशम्येकादशीं त्यजेत्। सुराया विन्दुना स्पृष्टं गङ्गाम्भ इव निर्मलम्।' स्कान्देऽपि—'कलाका- ष्ठादिगत्यैव दृश्यते दशमी विभो। एकादश्यां न कर्तव्यं व्रतं राजन्कदाचन।' इति। माधवोऽप्याह—सोऽयं कलादिवेधोऽरुणोदयवेधे सूर्योदयवेधे च समान इति। निगमेऽ- पि—'सर्वप्रकारवेधोऽयमुपवासस्य दूषकः।' इति। योऽयं सूर्योदयात्प्राग्दशमीसद्भाव- रूपो वेधः स सर्वोऽप्यरुणोदयवेध एव विशेषस्तदभिधानं च दोषतारतम्यप्रदर्शनाये- त्युक्तमेव। दोषतारतम्यं प्रायश्चित्ततारतम्यादवगन्तव्यम्। तच्चोक्तं हेमाद्रौ स्मृत्यन्तरे—'अज्ञानाद्यदि वा मोहात्कुर्वन्नेकादशीं नरः। दशमीशेषसंयुक्तां प्रायश्चित्तमिदं चरेत्। कृच्छ्रपादं नरश्चीर्त्वा गां च दद्यात्सवत्सकाम्। धरणस्यार्धकं देयं तिलद्रोणमथापि वा।' इति। अत्र वेधतारतम्याद्व्यवस्थेति हेमाद्रिः। निशः प्रातः इत्यपि मुहूर्तद्वयपरमेव। तस्मादरुणोदयशब्दस्य मुहूर्तद्वयपरतैवेत्यलम्। यत्तु ब्रह्मवैवर्ते—'अर्धरात्रे तु केषांचिद्दशम्या वेध इष्यते। कपालवेध इत्याहुराचार्या ये हरिप्रियाः।' इति। तत्कैमुतिकरीत्याऽ- रुणोदयवेधनिन्दापरमिति माधवनृसिंहपरिचर्याकाराः—ननु 'अर्धरात्रमतिक्रम्य दशमी यदि दृश्यते। उपोष्या द्वादशी शुद्धा त्रयोदश्यां तु पारणम्।' इति अर्ध- रात्रवेधे एकादशीपरित्यागे महाद्वादश्युपवासविधानात्किमुच्यते अरुणोदयवेध एकाद- शी परित्याज्येति। सत्यम्। अत्र केषांचिन्मतम्। 'कपालवेध इत्याहुराचार्या ये हरिप्रियाः। न तन्मम मतं यस्मात्त्रियामा रात्रिरिष्यते।' इति विगानश्रवणात्। किं च 'अर्धरात्रेऽपि केषांचिद्दशम्यां वेध इष्यते। अरुणोदयवेलायां नावकाशो विचारणे।' इति कैमुत्यन्यायेनारुणोदयवेधशेषत्वमेवास्यावसीयते। अथ वा पक्षवर्धिनी- विषयमेवैतत्। 'अर्धरात्रं स्पृशेत्पूर्णा पक्षवृद्धिर्यदाऽग्रतः। कपालवेधिनी सा च शुद्धां भद्रामुपोषयेत्।' इति पाद्मे स्पष्टाभिधानात्। सर्वथा बहुतरशिष्टवैष्णवविरोधदुरा-

ग्रहपरित्यागेनारुणोदयवेध एव वैष्णवैः प्रतिपालनीय इति युक्तमुत्पश्याम इति । तत्त्वं तु पूर्वचतुर्यामेषु व्रतसंकल्पवर्जनार्थमित्यनुपदमेव वक्ष्यते । यदपि 'नागो द्वादशनाडीभिः' इति स्कान्दम् । तद्व्यवस्थोक्ता निगमे—'सर्वप्रकारवेधोऽयमुपवासस्य दूषकः । सार्धसप्तमुहूर्तस्तु योगोऽयं बाधते व्रतम् । ' इति । व्रतमुपवासाभिन्नमिति माधवः-इति । नृसिंहपरिचर्यायामपि—अर्धरात्रादुपरि दशम्यनुवृत्तौ एकादश्याःप्रथमयामचतुष्टयं त्यक्त्वा पूजासंकल्पौ कुर्यादिति । यस्तु योगसंज्ञकश्चतुर्थो वेधस्तस्य त्याज्यत्वमर्थसिद्धम् । अरुणोदयवेधोऽपि यदा त्यज्यते तदा किमु वक्तव्यं सूर्योदयवेध इति ।माधवीये या चतुर्विधवेधरहिता शुद्धैकादशी सा द्विविधा आधिक्येन युक्ता तद्रहिता चेति।आधिक्यं च त्रिविधम् एकादश्याधिक्यं द्वादश्याधिक्यम् उभयाधिक्यं चेति । त्रिष्वप्येतेषु अरुणोदयमारभ्य प्रवृत्तां शुद्धामप्येकादशीं परित्यज्य परेद्युरुपवासःकर्तव्यः।तत्रैकादश्याधिक्ये नारद आह-संपूर्णैकादशी यत्र द्वादश्यां वृद्धिगामिनी।द्वादश्यां लङ्घनं कार्यं त्रयोदश्यां तु पारणम् ।'इति ।स्मृत्यन्तरेऽपि—'एकादशी यदा पूर्णा परतः पुनरेव सा । पुण्यं क्रतुशतस्योक्तं त्रयोदश्यां तु पारणम् ।' इति । विष्णुरहस्येऽपि—'एकादशी कला प्राप्ता येन द्वादश्युपोषिता । तुल्यं क्रतुशतस्योक्तं त्रयोदश्यां तु पारणम् । ' इति । द्वादश्याधिक्ये व्यास आह—'एकादशी यदा लुप्ता परतो द्वादशी भवेत् । उपोष्या द्वादशी तत्र यदिच्छेत्परमां गतिम् । इति । अत्र केचित्-यत्तु माधवाचार्यैः एकादशी यदा लुप्तेति वचनाच्छुद्धायां द्वादशीमात्राधिक्ये परेत्युक्तं, तन्न । लोपपदस्य सूर्योदयास्पर्शे लोपे प्रसिद्ध्या सूर्योदयदशमीविद्धायामेवैतद्वचनप्रवृत्तेः । अतो नेदं शुद्धन्यूनाधिकद्वादशिकायामुपवासविधायकमिति । यदपि कैश्चिदलुप्तेति च्छित्त्वेदमेतत्परतया योजितं तदपि चिन्त्यम् । अकारप्रश्लेषे मानाभावात् । तदेतदपेशलम् । द्वितीयसूर्योदयास्पर्शस्यैव लोपस्य तात्पर्यविषयत्वात् । न चैवं माधवाचार्याणां स्मार्तनिर्णये पुनर्लिखितेऽस्मिन्वचने लुप्तेत्यस्यादौ दशमीमिश्रितत्वात्परतो वृद्ध्यभावाच क्षयं गतेति व्याख्यातं विरुद्ध्येतेति वाच्यम् । शास्त्रस्य बहुविषयत्वस्य न्याय्यत्वेन द्वितीयसूर्योदयास्पर्शपरत्वेऽवधारितेऽग्रे तथाभिधानस्य संभवाभिप्रायकत्वात् । संपूर्णैकादशी त्याज्येति भागवततन्त्रादिवचनसमानकत्वं एकश्रुतिकल्पनालाघवेनाकारप्रश्लेषेणापि व्याख्यातुं शक्यत्वाच्च । उभयाधिक्ये गुरुराह—'संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । तत्रोपोष्या द्वितीया तु परतो द्वादशी यदि । ' इति । नारदोऽपि—'सैवैरेवोत्तरा कार्या परतो द्वादशी यदि । ' इति । स्मृत्यन्तरेऽपि—'एकादशी भवेत्पूर्णा परतो

द्वादशी यदि । एकादशीं परित्यज्य द्वादशीं समुपोषयेत्।' इति।उभयाधिक्यरहितायां शुद्धायां न कोऽपि संदेहोऽस्तीति।यत्त्वत्र कैश्चिद्दूषणमभिहितम्।एतादृशतिथिवृद्ध्यन्तरदिने आकस्मिकह्रासस्य ज्योतिःशास्त्रे प्रसिद्धेस्तिथ्यादिपत्रेऽनुपलब्धेर्दशशुद्धाधिकानधिकद्वादशिकोदाहरणस्य गगनकुसुमायमानत्वादिति । तदेतन्मन्दम्।यत्राक्षांशाःषट्षष्टिमिताः पलभाः सप्तविंशत् तत्र देशान्तरे घनचरघटिका दशाधिका यदा भवन्ति तदा ज्योतिःशास्त्रप्रसिद्धेनाष्टघटिकापेक्षया रात्रिमानह्रासेन घटिकात्मकमुहूर्तद्वयस्याप्यरुणोदयत्वसंभवेन नवपञ्चाशद्घटिकोत्तरप्रवृत्तैकादश्या द्वितीयदिने सूर्योदयोत्तरं विद्यमानायाः शुद्धाधिकत्वेन तदुत्तरं प्रवृत्तद्वादश्या ह्राससंभवेनोदाहरणसंभवात्।'क्षयः कार्तिकादित्रये नान्यतः स्यात्' इत्यादिना कार्तिकादित्रये क्षयस्याभिधानेऽपि यदा मन्दोच्चं मिथुनादौ भवति तदा कार्तिकादित्रय इव, यदा वृश्चिकादौ भवति तदा तदन्येषु मासेषु संभववत् प्रसिद्धदेशे तादृशभेदस्याप्रसक्तावपि देशान्तरे प्रसक्तौ बाधकाभावात्। न च तत्र मनुष्यसंचाराभावादेतादृशैकादशीभेदे व्रतस्याननुष्ठेयत्वेन वृथोत्कीर्तनापत्तिरिति वाच्यम् । चक्रवर्तित्वेन प्रसिद्धैर्विजययात्राप्रसङ्गेन तद्देशगतैर्मान्धात्रादिभिरनुष्ठितत्वेन तथा प्रसक्तेरभावात् । अत एव मदनरत्नादौ परमवृद्धौ सत्यां दण्डषट्कक्षयस्यैव ज्योतिःशास्त्रे प्रसिद्धिरित्युक्तम् । तिथिपत्रेऽनुपलब्धिश्च सकलदेशीयातिथिपत्रानालोचनमूलिकैवेत्यलम् । कालतत्त्वविवेचने यद्यपि माधवाचार्यादिभिः सर्वैर्दाक्षिणात्यनिबन्धकारैः सूर्योदयवेध एव परिशेषादितरेषामित्युच्यते तथाप्यरुणोदयव्यापिन्याः संपूर्णत्वं तदव्यापिन्याश्च विरुद्धत्वं प्रतिपादयतो वचनस्य सामान्यविषयत्वान्नैवोपोष्यमिति वचनेनैवकारप्रयोगेण वैष्णवेन सर्वथा नित्यत्वेन काम्यत्वेन वा परदिन एकादशीद्वादश्योरलाभेऽपि वाऽरुणोदयवेधवत्यां नोपोष्यमित्युक्त्वा सति संभवे वैष्णवेतरैरपि नोपोष्यमिति प्रतीतेः । सति संभवे न तद्विषयत्वमप्यरुणोदयवेधस्यानन्तभट्टीये गौडनिबन्धे चोक्तमिति । तदेवमरुणोदयमारभ्य द्वितीयसूर्यं यावद्वर्तमाना सर्वान्प्रति शुद्धा सूर्योदयोत्तरं कियत्यापि दशम्या युक्ता च सर्वान्प्रति विद्धा ततः प्राचीनमुहूर्तद्वयमध्ये दशम्यान्विता च वैष्णवान्प्रति सर्वदा इतरांस्तु प्रति काम्यव्रते परतोऽन्यसत्त्वे च विद्धेति शुद्धाविद्धाविवेके स्थिते निर्णयः क्रियते । वैष्णवैर्विद्धा सर्वथा त्याज्या दशमी शेषेति वचनात् । शुद्धाप्यन्यतरस्यापि परत्र सत्त्वे त्याज्येति । एवं वैष्णवदीक्षायुक्तानामेकादशी निर्णीता । तद्भिन्नानां स्मार्तपदेन व्यवह्रियमाणानामेकादशी निर्णीयते । अरुणोदयवेधस्य पूर्वो-

त्कवचनैर्वैष्णवविषयत्वे पर्यवसिते सति सूर्योदयवेधस्य तद्भिन्नानुष्ठानविषयत्वं परिशेषान्निर्णीयते । अत एव स्मर्यते–'अतिवेधा महावेधा ये वेधास्तिथिषु स्मृताः। सर्वेऽप्यवेधा विज्ञेया वेधः सूर्योदये स्मृतः।' इति। कण्वोऽप्याह 'उदयोपरि विद्धा तु दशम्यैकादशी यदि। दानवेभ्यः प्रीणनार्थं दत्तवान्पाकशासनः।' इति। स्मृत्यन्तरेऽपि–'दशम्याः प्रान्तमादाय यदोदेति दिवाकरः। तेन स्पृष्टं हारिदिनं दत्तं जम्भासुराय तु।' इति। तथा–'सूर्योदयस्पृशा ह्येषा दशमी गर्हिता सदा।' इति। तत्र सूर्योदयमारभ्योदयपर्यन्तं विद्यमानां संपूर्णां सूर्योदयोत्तरं दशमीसद्भाववर्तीं विद्धां चाभिप्रेत्याष्टादश भेदाः पूर्वमुक्तास्तेषामिदानीं व्यवस्थोच्यते। तत्र शुद्धसमायां न्यूनद्वादशिकायां समद्वादशिकायां च न विवादः, एवं शुद्धन्यूनायामप्येतादृश्यां न विवादः। यदा शुद्धासमा शुद्धन्यूना वाऽधिकद्वादशिका भवति तदा सर्वैरपि शुद्धैकादश्युपोष्या । तदुक्तं स्कन्दपुराणे–'शुद्धा यदा समाहीना समाहीनाधिकोत्तरा । एकादशीमुपवसेन्न शुद्धां वैष्णवीमपि।' इति। शुद्धैकादशी यदा समा न्यूना वा भवति उत्तरा द्वादशीसमा न्यूनाधिका वा भवति तदैकादशीमुपवसेन्न शुद्धां वैष्णवीं द्वादशीमित्यर्थः। नारदोऽपि–'न चेदेकादशी विष्णोर्द्वादशी परतः स्थिता। उपोष्यैकादशी तत्र यदीच्छेत्परमं पदम्।' इति। हेमाद्रौ संपूर्णैकादशी द्विविधा द्वादश्यामसती सती च । तत्राद्या सर्वैरुपोष्या त्रयोदश्यां द्वादश्यभावे सतीति निर्विवादम्। त्रयोदश्यां द्वादशीसद्भावे केचिदाहुः–एकादश्यामुपवासो न द्वादश्याम्। एकादशीलक्षणस्य मुख्यकालस्य द्वादश्यामभावात्। यत्तु वचनम्–'एकादशी त्वहोरात्रं द्वादशी च कलाधिका। त्रयोदश्यां यदा प्रातरुपोष्या द्वादशी तदा।' इति । तद्दशमीविद्धैकादशीविषयम्, द्वादश्यां विद्यमानकियन्मात्रैकविषयं चेत्याहुः। परे तु परतो द्वादशीसद्भावे शुद्धद्वादश्यामुपवासो नैकादश्याम्।'विद्धाप्यविद्धा विज्ञेया परतो द्वादशी न चेत्। अविद्धापि तथा विद्धा परतो द्वादशी यदि।' इति पद्मपुराणवचनात्। तथा च विष्णुपुराणे–' एका लिप्त्या तु संयुक्ता यदि वृद्धापरा तिथिः । अथ वैकादशी नास्ति दशम्या चाप्यसंयुता। कलाऽथ काष्ठा द्वादश्या यदि स्यादपरेऽहनि। द्वादश द्वादशीर्हन्ति पूर्वस्मिन्पारणं कृतम्।' इति। अस्यार्थः। एका पूर्वदिनगता लिप्त्या कलामात्रेण संयुक्ता दशमीमिश्रिता परा परदिनगता तिथेर्वृद्धिपरत्वम् एकादश्यपरदिनेऽस्ति अथवा परदिने नास्ति तत्रोभयत्रापि त्रयोदश्यां द्वादशीसद्भावाच्छुद्धद्वादश्यामुपवसेदिति। अत्र पूर्वपारणनिन्दयोत्तरपारणं विधीयते । पारणं चोपवासमन्तरेणानुपप-

न्तम्। पारणान्तत्वादुपवासस्य। तदुक्तं विष्णुरहस्ये—'पारणान्तं व्रतं ज्ञेयम्' इति तेन शुद्धद्वादश्यामुपवासोऽवसीयते। तथा च स्कन्दपुराणे—'एकादशी भवेत्पूर्णा परतो द्वादशी यदा। तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत्।' स्मृत्यन्तरे 'संपूर्णैकादशी त्याज्या परतो द्वादशी यदि। उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणम्। न गर्भे विशते जन्तुरित्याह भगवान्हरिः।' इति। तस्मादेवंविधे विषये द्वादश्यामेवोपवास इति सिद्धमित्याहुः।अपरे तु—ईदृग्विषये'उदयात्प्राग्यदा विप्र मुहूर्तद्वयसंयुता। संपूर्णैकादशी नाम तत्रैवोपवसेद्गृही।'इति स्मृतेर्गृहिणामेकादश्यामुपवासः। एकादशी भवेत्पूर्णा इत्यादिवचनानि, 'गर्भे विशते जन्तुः' इत्यादिवचनपर्यालोचनया मुमुक्षुविषयाणि। मुमुक्षुव्यतिरिक्तानां तु 'बहुवाक्यविरोधेन संदेहो जायते यदा। द्वादशी तु तदा ग्राह्या त्रयोदश्यां तु पारणम्।' इति स्मृतेर्द्वादश्यामुपवास इत्याहुः। वस्तुतस्तु—'उदयात्प्राग्यदा विप्र' इति वचनपर्यालोचनया गृहिणां पूर्वत्रोपवासस्तद्भिन्नानामुत्तरत्रोपवासः। बहुवाक्यविरोधेनेति वचनं तु दशमीवेधसंदेहविषयम्। यदपि मार्कण्डेयप्रद्युम्नसंवादवचनम्—'विवादेषु तु सर्वेषु द्वादश्यां समुपोषणम्। पारणं हि त्रयोदश्यामाज्ञेयं मामकी मुने। हेतुवादो न कर्तव्यो हेतुना पतते नरः।' इति। तदप्युक्तवेधविषयत्वेन व्याख्येयम्। यो विषयव्यवस्थां निश्चेतुं न शक्नोति तद्विषयं वा।'संदिग्धेषु तु वाक्येषु द्वादशीं समुपोषयेत्।' इत्यपि तथा। अविद्धैकादश्युपवासमात्रेण मोक्षसिद्धेर्न गर्भे विशते जन्तुरित्यस्यार्थवादमात्रत्वात्। सत्त्वशुद्धिद्वारेणोपयोगिता तु गृहस्थादिष्वविशिष्टेति न फलपरत्वेऽपि बाधक इति स्थितम्। मदनरत्ने तु—यानि त्वेकादशी भवेत्पूर्णेत्यादिस्कन्दपुराणादिवचनानि, तानि द्वितीयदिने स्वल्पाया अप्येकादश्याः सद्भावे द्रष्टव्यानि। यत्तु—'अविद्धापि च विद्धा स्यात्परतो द्वादशी यदि।'इति वचनं तदपि शुद्धाधिकविषयम्। यानि तु संपूर्णैकादशी त्याज्येत्यादीनि द्वादशीमात्रवृद्धौ शुद्धद्वादश्युपवासविधायकानि भागवततन्त्रादिवाक्यानि, तानि पञ्चरात्राद्यागमोक्तदीक्षायुक्तवैष्णवविषयाणि। पूर्वोदाहृतस्कन्दपुराणवचनविरोधादिति। या तु शुद्धाधिका न्यूनद्वादशिका समद्वादशिका वा सा सकामैः प्रथमोपोष्या निष्कामैर्द्वितीया। तदुक्तं मार्कण्डेयेन—'संपूर्णैकादशी यत्र परत्र पुनरेव सा। पूर्वामुपवसेत्कामी निष्कामस्तूत्तरां वसेत्।'इति गरुडपुराणेऽपि-'उदयात्प्राग्यदा विप्र मुहूर्तद्वयसंयुता। संपूर्णैकादशी नाम तत्रैवोपवसेद्गृही। ततः प्रभातसमये घटिकैका यदा भवेत्। तत्रोपवासो विहितश्चतुर्थाश्रमवासिनाम्। विधवायाश्च तत्रैव परतो

द्वादशीं न चेत् ।' इति । अत्र चशब्देन वानप्रस्थादीनां ग्रहणम् । अत्रापि संपूर्णत्वमहोरात्रव्यापित्वं विवक्षितं न तु पूर्वारुणोदयकालव्यापित्वमपि । अन्यथा 'परतो द्वादशी न चेत्' इत्यनुवादोऽसंबद्धः स्यात्। पूर्वारुणोदयमारभ्याहोरात्रं व्याप्य स्थिताया एकादश्या उत्तरदिने घटिकामात्रावस्थानस्य घटिकापञ्चकवृद्धौ सत्यां संभवादस्यां च परमवृद्धौ सत्यामनन्तरदिने दण्डषट्कक्षयस्य ज्योतिःशास्त्रविरुद्धत्वात् । उदयप्राचीनमुहूर्तद्वयव्यापित्वाभिधानं तु वैष्णवैरेतत्कालवर्तिदशमीयुक्ताया अपि त्याज्यत्वं ज्ञापयितुं न तु प्रकृतेऽस्य कश्चिदुपयोगः । स्कन्दपुराणेऽपि— 'प्रथमेऽहनि संपूर्णा व्याप्याहोरात्रसंस्थिता । द्वादश्यां च तथा तात दृश्यते पुनरेव सा । पूर्वा कार्या गृहस्थैस्तु यतिभिश्चोत्तरा विभो ।' इति । अत्र यतिगृहस्थपदं निष्कामसकामपरम् । 'निष्कामस्तु गृही कुर्यादुत्तरैकादशीं सदा । प्रातर्भवतु वा मा वा द्वादशी च द्विजोत्तम ।' इति स्कन्दपुराणवचने निष्कामगृहस्थस्याप्युत्तरादिन उपवासविधानादिति । हेमाद्रौ—द्वादश्यां सत्यप्येकादशी त्रयोदश्यामविद्यमानद्वादशिका वा तत्राद्या व्यवस्था। तथा च प्राचेताः—'एकादशी विवृद्धा चेच्छुक्ले पक्षे विशेषतः । उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद्गृही ।' इति।न्यूनद्वादशिकायां तु शुद्धाधिकायां विष्णुप्रीतिकामेन दिनद्वयेऽप्युपवासः कर्तव्य इति विशेषः । तथा वृद्धवसिष्ठः—'संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । लुप्यते द्वादशी तस्मिन्नुपवासः कथं भवेत् । उपोष्ये द्वे तिथी यत्र विष्णुप्रीणनतत्परैः ।' स्कन्दपुराणे— 'संपूर्णैकादशी यत्र परतः पुनरेव सा । त्रयोदशी उषःकाल उपोष्या तत्र का भवेत् । उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैः ।' इति । हेमाद्रौ तु— तस्मिंस्त्रयोदशे त्वह्नि यदा द्वादशी नास्ति तदा पूर्वोक्तगृहस्थाश्रमिचतुर्थाश्रम्यधिकारिभेदेन द्वे तिथी उपोष्ये न त्वेकैवेत्यर्थः । अपरे तु तिथिद्वयोपवासपरत्वेनैव व्याचक्षते । अन्यथाऽधिकारिभेदेन कल्पनाप्रसंगात् । इतरेतरयोगविहितद्वन्द्वापवादैकशेषदर्शनादितरेतरयुक्ततिथिद्वयस्योपोष्यत्वप्रतीतेश्च । विष्णुना प्रीतिकामस्याधिकारिणोऽपि श्रुतेश्च । न च तिथिद्वययुक्तं दिनमेकमुपोष्यमिति व्याख्या, तिथिशब्दस्य तदेकदेशलक्षणप्रसंगादित्युक्तम् । माधवनिर्णयामृतयोरप्येवम् । यदा शुद्धाधिकद्वादशिका तदा शुद्धामेकादशीं परित्यज्य सर्वैर्द्वादशीमिश्रिता कार्या । तदाह भृगुः—'संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। तत्रोपोष्या द्वितीया तु परतो द्वादशी यदि ।' इति। स्कन्दपुराणेऽपि—'पूर्णाप्येकादशी त्याज्या वर्धते द्वितयं यदि ।' इति।

नारदोऽपि-'संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।सैवैरेवोत्तरा कार्या परतो द्वादशी यदि।' इति । स्मृत्यन्तरेऽपि—'संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। वैष्णवी तु त्रयोदश्यां घटिकाऽपि च दृश्यते । गृहस्थोऽपि परां कुर्यात्पूर्वां नोपवसेत्सदा । ' इति। पद्मपुराणेऽपि— 'अविद्धा चैव विद्धा स्यात्परतो द्वादशी यदि । ' इति । हेमाद्र्यादिष्वप्येवम् । तदेवं पूर्णा भेदव्यवस्थोक्ता । अथ विद्धाभेदव्यवस्थोच्यते । तत्र या विद्धसमा समद्वादशिका न्यूनद्वादशिका वा तत्र विद्धापि पूर्वैवोपोष्या । तथा च ऋष्यशृङ्गः—' पारणाहे न लभ्येत द्वादशी कलयापि चेत् । तदानीं द्वादशीविद्धाप्युपोष्यैकादशीतिथिः । ' इति । हारीतोऽपि—'त्रयोदश्यां यदा न स्याद्द्वादशीघटिकाद्वयम् । दशम्यैकादशी विद्धा सैवोपोष्या सदा तिथिः ।' इति । विष्णुरहस्ये—'दशमीशेषसंयुक्ता उपोष्यैकादशी तदा । यदा न स्यात्त्रयोदश्यां मुहूर्तं द्वादशीतिथिः । ' अत्र घटिकाद्वयं मुहूर्तमिति च द्वादशीसद्भावमात्रोपलक्षकम् । तथा च वृद्धवसिष्ठः—'यदाऽर्कोदयमात्रापि द्वादशी न परेहनि । त्रयोदश्यां तदा कार्या दशमीशेषसंयुता । ' इति । तथा—'विद्धाप्यविद्धा विज्ञेया परतो द्वादशी न चेत् । ' इति । ऋष्यशृङ्गोऽपि—'एकादशी न लभ्येत सकला द्वादशी भवेत् । उपोष्या द्वादशीविद्धा ऋषिरुद्दालकोऽब्रवीत् ।'इति । एवं सर्वेषामपि विद्धैकादश्युपवासे प्राप्ते मुमुक्षुविषये विशेषोऽभिहितो विष्णुरहस्ये-'दशमीमिश्रिता पूर्वा पूर्णा च द्वादशी परा।एकादश्यां महाप्राज्ञ उपवासःकथं भवेत्।शुद्धैव द्वादशी राजन्नोपोष्या मोक्षकाङ्क्षिभिः।'इति । व्यासः—'दशमीमिश्रिता पूर्वा द्वादशी यदि लुप्यते । एकादश्यां महाप्राज्ञ उपवासः कथं भवेत् । शुद्धैव द्वादशी राजन्नोपोष्या मोक्षकाङ्क्षिभिः । ' इति । 'पारणं तु त्रयोदश्यां पूजयित्वा जनार्दनम् । ' इति । यदा तु विद्धसमा द्वादश्यधिका तदापि विद्धैकादश्यामुपवासः । तदाह ऋष्यशृङ्गः—'अविद्धानि निषिद्धैश्चेन्न लभ्यन्ते दिनानि तु । मुहूर्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः ।' इति। मुहूर्तपञ्चके वेधस्त्वरुणोदयमारभ्य ज्ञातव्यः । ' सूर्योदयमारभ्य ग्रहणे तूत्तरे दिने । प्रातर्भवतु वा मा वा' इति तद्वचन एकादश्यभावकथनं नोपपद्येत । मुमुक्षुभिस्तु विद्धां परित्यज्य शुद्धद्वादश्यामुपवासः कर्तव्यः । तदुक्तं व्यासेन—'एकादशी यदा लुप्ता परतो द्वादशी भवेत् । उपोष्या द्वादशी तत्र यदीच्छेत्परमां गतिम् ।' इति । यदीच्छेदित्यर्थवादमात्रम् । परमां गतिं मुक्तिम् । लुप्ता दशमीविद्धा सती परदिने वर्तमाना । एवमन्यान्यपि शुद्धद्वादश्युपवासमुमुक्षुपराणि ज्ञातव्यानि । हेमाद्रौ तु--यदा दशमीविद्धैकादश्युदयमात्रं

प्राप्ता द्वादश्यां नास्ति द्वादशी तु त्रयोदश्यां विद्यते तदा शुद्धद्वादश्यामेव सर्वेषामुपवासः । तथा च नारदीयपुराणे—'शुद्धा तु द्वादशी राजन्समुपोष्या तदा तिथिः । दशम्येकादशीमिश्रा न कर्तव्या कदाचन ।' पद्मपुराणेऽपि—'दशमीगर्भिता पूर्वा लुप्येतैकादशी परा । उपोष्या द्वादशी तत्र न दशम्या कथंचन ।' इति । निर्णयामृते--विद्धसमायां द्वादश्याधिक्ययुक्तायां तु द्वादश्यामेकादश्याः सद्भावात्सर्वेषां परत्रोपवासः । तथा च 'कलार्धेनापि विद्धा सा दशम्यैकादशी यदि । तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ।' इति । या तु विद्धाधिका न्यूनद्वादशिका समद्वादशिका अधिकद्वादशिका वा।तत्र विद्धां परित्यज्य द्वादशीमिश्रायामेकादश्यामुपवासः कर्तव्यः।तदुक्तं कूर्मपुराणे- 'एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ।' इति।स्कन्दपुराणेऽपि--'एकादशी द्वादशी च रात्रिशेषे त्रयोदशी। सोपोष्या च प्रयत्नेन महापुण्यविवर्धिनी ।' तथा तत्रैव—'एकादशीकलायुक्ता द्वादशी लुप्यते यदा । उपोष्या च महापुण्या सर्वपापहरा तिथिः ।' इति । पद्मपुराणे--'द्वादशीमिश्रिता ग्राह्या सर्वत्रैकादशी तिथिः । द्वादशी च त्रयोदश्यां विद्यते यदि वा न वा ।' इति । तथा--'सर्वत्रैकादशी कार्या द्वादशीमिश्रिता नरैः । प्रातर्भवतु वा मा वा यतो नित्यमुपोषणम् ।' इति । उपोषणं नित्यं प्रधानं तत्र चान्त्यकालावच्छिन्नैकादशी मुख्या तादृशी चाधिक्ये द्वादश्यां लभ्यते इति सैवोपोष्या । पारणं त्वङ्गं तत्रापि द्वितीयदिनेऽन्त्यकालावच्छिन्नद्वादशी यदि लभ्यते यथोभयाधिक्ये तदा सम्यगेव नो चेत्त्रयोदश्यामपि भवत्वित्यर्थः । अत एव नारदः--'द्वादश्यैकादशी यत्र संगता त्रिदशाधिप । तामुपोष्य ततः कार्यं त्रयोदश्यां तु पारणम् ।' तत्त्वसागरसंहितायाम्— 'द्वादश्यैकादशी यत्र द्वादशी परतो पि हि । द्वादश्यां पारणं कृत्वा क्रतुकोटिफलं लभेत ।' इति । तथा--'द्वादश्यैकादशी यत्र परतो न त्रयोदशी । उपोष्या द्वादशी भक्त्या द्वादश्यां चैव पारणम् ।' इति । यानि पारणाहे न लभ्यतेत्यादीनि ऋष्यशृङ्गादिवचनानि तानि विद्धाधिकाव्यतिरिक्तविषयाणि, पूर्वोदाहृतवचनविरोधात् । हेमाद्रौ—यदा तु दशमीविद्धैकादशी द्वादश्यां विद्यते तादृशी चोदयपर्यन्ता विद्यते तदा द्वितीयैवोपोष्या नित्या काम्या च । तथा च स्कन्दपुराणे—'एका लिस्या समा युक्ता याति वृद्धिं परा तिथिः । द्वादशी पारणार्थं च नोपोष्यं पूर्ववासरम् ।' बौधायनोऽपि—'कलाप्येकादशी यत्र परतो द्वादशी न चेत् । तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ।' इति । किं चैवंविधविषये द्वितीयैव ग्राह्या । दशमीविद्धाया निषेधात् ।

तथा च स्कन्दपुराणे-'तस्मात्सर्वप्रयत्नेन पूर्वविद्धां विवर्जयेत्।'तथा च नारदीये-'पूर्वविद्धा न कर्तव्या तृतीया षष्ठ्यपि द्विज। अष्टम्येकादशी भूता धर्मकामार्थमोक्षिभिः।' अत्रैकादश्यादयः परविद्धा उपोष्याः प्रतीयन्ते। विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वात्परविद्धैकादश्युपोष्येति वचनाच्च। तथा च सुमन्तुसनत्कुमारौ-'तृतीयैकादशी षष्ठी चतुर्थी च चतुर्दशी। अमावास्याष्टमी चैव ता उपोष्याः परान्विताः।' शारदापुराणे-'एकादश्यष्टमी षष्ठी पूर्णमासी चतुर्दशी। तृतीया च चतुर्थी च अमावास्याष्टमी तथा। उपोष्याः परसंयुक्ता नोपोष्याः पूर्वसंयुताः।' पैठीनसिः-'एकादशी तथा षष्ठी शुक्लपक्षे चतुर्दशी। तृतीयां च चतुर्थी च ता उपोष्याः परान्विताः।' या तु विद्धन्यूना न्यूनद्वादशिका समद्वादशिकाऽधिकद्वादशिका वा भवति सा मुमुक्षुव्यतिरिक्तैः सर्वैर्विद्धैवोपोष्या। मुमुक्षुभिस्तु शुद्धा द्वादश्युपोष्या। तथा च नारदः-'दशमीशेषसंयुक्ता नोपोष्यैकादशी तिथिः। एकादश्यां रात्रिशेषे द्वादश्यां चेन्न दृश्यते। यदि दैवात्तु संसिध्येदेकादश्यां तिथित्रयम्। तत्र क्रतुशतं पुण्यं द्वादशी पारणे भवेत्।' इति। स्मृत्यन्तरे-'उपोष्या दशमी तत्र द्वादशी न लभेद्यदि। दशम्यापि हि मिश्रैवमेकादश्येव धर्मकृत्। द्वादशी स्वल्पमल्पापि यदि न स्यात्परेऽहनि। दशम्या मिश्रिता कार्या न दोषोऽस्तीति वेधसः।' वचनमिति शेषः। पद्मपुराणेऽपि-'एकादशी दिशाविद्धा परतोऽपि न वर्धते। यतिभिर्गृहिभिश्चैव सैवोपोष्या क्षये तिथिः।' इति। यतिशब्दो नियमयुक्तमुमुक्षुव्यतिरिक्तब्रह्मचारिवानप्रस्थादिपरः, न तु संन्यासिपरः, तेषां सर्वेषां मुमुक्षुत्वात्,मुमुक्षूणां चास्मिन्विषये शुद्धद्वादश्यामुपवासविधानात्।तथा च सुमन्तुसत्यव्रतौ-'दिनद्वयेऽपि शुद्धैव द्वादशी मोक्षकाङ्क्षिभिः।उपोष्या दशमीविद्धा नोपोष्यैकादशी सदा।'इति।शारदापुराणेऽपि-'उपोष्या द्वादशी शुद्धा एकादश्यां दिनक्षये।मुमुक्षुभिर्दिशाविद्धा नोपोष्यैकादशी तिथिः।'इति।यत्तु वचनं भविष्यपुराणे-'दिनत्रयवती जाता तिथिरेकादशी यदि। प्रथमा तत्र नोपोष्या उपोष्या चोत्तरा भवेत्।' इति। तत्पूर्ववाक्यपर्यालोचनया मुमुक्षुविषयम्। 'दिनक्षये तु संप्राप्ते संपूर्णा वासरद्वये। विशुद्धा द्वादशी राजन्समुपोष्या भवेत्सदा।' इति विष्णुपुराणवचनमपि तद्विषयम। निर्णयामृते पुराणसमुच्चये-'दशमीमिश्रिता पूर्वा द्वादश्यां च विलुप्यते। एकादश्यां तदा ब्रह्मन्नुपवासः कथं भवेत्' इति प्रश्ने 'शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभिः। सकामैर्गृहिभिः पूर्वा विद्धापीति

विनिश्चयः।' इति । एवमन्यान्यप्यस्मिन्विषये शुद्धद्वादश्युपवासविधायकानि मुमुक्षुविषयाणि ज्ञातव्यानि । पुत्रवद्गृहस्थानां तु विद्धन्यूनायामुपवासनिषेधात् 'उपवासनिषेधे तु भक्ष्यं किंचित्प्रकल्पयेत् । न दुष्यत्युपवासेन उपवासफलं लभेत् ।' इति वायुप्रोक्तवचनात् तैः किंचित्फलादि भक्षयित्वोपवासः कार्यः । यदा तु दशमीविद्धैकादशी उदयमात्रपर्यन्ता द्वादशी च समा न्यूना वा तदा गृहिणां पूर्वस्यामेवोपवासः। तथा च स्कान्दे—'पारणाहे न लभ्येत द्वादशी यदि किंचन । द्वादश द्वादशीर्हन्ति त्रयोदश्यां तु पारणम् । ' तत्त्वसागरसंहितायामपि—' दशम्येकादशी यत्र नोपोष्या सकलापहा । सैवोपोष्या कलामात्रा द्वादश्यां चेन्न लभ्यते । ' भविष्येऽपि—' एकादशी कलाप्येका परतो न च वर्तते । गृहिभिः पुत्रवद्भिश्च सैवोपोष्या तदा तिथिः ।' अस्मिन्नेव विषये यत्यादेर्मुमुक्षोरुत्तरत्रोपवासः । तथा च स्मृत्यन्तरे—'यदैव दशमीविद्धं भवत्येकादशीदिनम् । उपोष्या तु तदा शुद्धा द्वादशी मोक्षकाङ्क्षिभिः ।' इति । ' पारणं तु त्रयोदश्यां तत्राक्षयफलं भवेत् ।' यान्येतानि वचनानि कूर्मपद्मपुराणयोः स्कन्दपुराणे च 'एकादशी दशाविद्धा दशमी न च वर्धते। तदोपोष्या द्वादशी स्यात्त्रयोदश्यां तु पारणम् ' इत्यादीनि—तान्युदाहृतवाक्यपर्यालोचनया मुमुक्षुविषयाणि । निर्णयसिन्धौ—विद्धन्यूना समद्वादशिका मुमुक्षूणां पुत्रवतां च परा। अन्येषां पूर्वा । विद्धन्यूना न्यूनद्वादशिका सैव सर्वैः कार्या । विद्धसमा समद्वादशिका च मुमुक्षुभिः पराऽन्यैः पूर्वा कार्या। 'दशमीमिश्रिता पूर्वा' इति व्यासोक्तेः । मोक्षकांक्षिग्रहणादन्येषां पूर्वैव। विद्धाधिका समद्वादशिका च सर्वेषां पूर्वैव । विद्धाधिका न्यूनद्वादशिका मोक्षपापक्षयविष्णुप्रीतिकामैःपरा कार्या।अत्र पुत्रवद्गृहस्थैः'एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । उपवासं न कुर्वीत पुत्रपौत्रसमन्वितः' इत्यादिभिः कूर्मपुराणवचनैरुपवासनिषेधात्तद्दिने 'एकादशी यदा विद्धा द्वादशी च क्षयं गता । क्षीणा सा द्वादशी ज्ञेया नक्तं तत्र विधीयते ।' इति वृद्धशातातपवचनेन 'एकादशी कला यत्र द्वादशी च क्षयं गता । तत्र नक्तं प्रकुर्वीत नोपवासो गृहाश्रमः ।' इत्यादिस्कन्दपुराणवचनैश्च नक्तविधानान्नक्तं कार्यम् । निर्णयामृते—विद्धाधिका द्वादशी हीना तु गृहस्थैः पूर्वैवोपोष्या, यतिभिरुत्तरेति व्यवस्था । तदुक्तं एकादशी द्वादशी चेत्यादि । गृहिणः परत्रोपवासनिषेधादुपवासस्य च नित्यत्वेनावश्यकत्वात्पूर्वत्रैव गम्यते । परविद्धाविधायकवाक्यसामर्थ्याद्यतीनां परत्रैवावसीयते इति हेमाद्रावपि—यदा च दशमीविद्धैकादशी द्वादश्यां कियन्मात्रा विद्यते रात्रिशेषे

त्रयोदशी तदा गृहस्थव्यतिरिक्तानां तत्रोपवासः । तथा च पद्मपुराणे—'द्वादशीसंयुता तत्र भवत्येकादशी कला । दिनद्वयेऽपि सा पुण्या दशम्या न कथंचन । त्रिस्पृगेकादशी यत्र तत्र संनिहितो हरिः । पुण्यं क्रतुशतस्योक्तं त्रयोदश्यां तु पारणम् ।' इति। अपुत्रगृहस्थानां तु पूर्वत्रैवोपवासः। यानि तु 'दशमीशेषसंयुक्तां यः करोति विमूढधीः। एकादशीफलं तस्य न स्याद्द्वादशवार्षिकम् ।' तथा 'दशमीशेषसंयुक्तामुपोष्यैकादशीं कलाम् । संवत्सरकृतेनेह नरो धर्मेण मुच्यते । तथा 'दशम्यनुगता यत्र तिथिरेकादशी भवेत् । तत्रापत्यविनाशश्च परेत्य नरकं व्रजेत्' तथा 'दशमीशेषसंयुक्ता गान्धार्या समुपोषिता । तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् ।' तथा 'एकादशीमुपवसेद्द्वादशीमथ वा पुनः । विमिश्रां वापि कुर्वीत न दशम्या युतां क्वचित् ।' इत्येवमादीनि दशमीविद्धायामेकादश्यामुपवासनिषेधकानि ब्रह्मवैवर्तविष्णुरहस्यादिवचनानितानि या दशमीविद्धोपोष्यत्वेनोक्ता तद्व्यतिरिक्तविद्धाविषयाणि । अन्यथा पूर्वोदाहृतवचनविरोधप्रसङ्गः। यान्यपि 'एकादशीमुपोष्यैव द्वादश्यां पारणं स्मृतम् । त्रयोदश्यां न तत्कुर्याद्द्वादशद्वादशीक्षयात् ।' तथा 'पारणं तु न कर्तव्यमुपोष्यैकादशीमिह । त्रयोदश्यां नरैर्जातु नित्यं धर्ममभीप्सुभिः।' इति । तथा 'दशम्यनुगता हन्ति द्वादशद्वादशीफलम् । धर्मापत्यधनायूंषि त्रयोदश्यां तु पारणम्' इत्यादीनि त्रयोदश्यां पारणनिषेधकानि कूर्मपुराणविष्णुरहस्यादिवचनानि—तान्यपि यस्यां त्रयोदश्यां पारणाभ्यनुज्ञानं पूर्वं दर्शितं तद्व्यतिरिक्तविषयाणि । पूर्वोदाहृतवचनविरोधप्रसङ्गादिति । तदेवं हेमाद्रिमदनरत्ननिर्णयामृताद्यनुसारेणाष्टादशभेदानां व्यवस्थोक्ता। माधवकालतत्त्वविवेचनयोस्तु— शुद्धाधिकाधिकद्वादशिका, शुद्धाधिकानधिकद्वादशिका, शुद्धानधिकानधिकद्वादशिका, शुद्धानधिकाधिकद्वादशिका च, तथा विद्धापीत्यष्टावेव भेदाः । अत्र पूर्वोक्ताष्टादशभेदा अप्यन्तर्भवन्ति । तथा हि । शुद्धानधिकेत्यत्रानधिकेत्यनेन सामान्यन्यूनत्वयोः संग्रहाच्छुद्धसमाधिकद्वादशिकाशुद्धन्यूनाधिकद्वादशिके संगृहीते भवतः । आद्यभेदः समानः । एवमग्रेऽप्यनधिकपदेन साम्यन्यूनत्वयोः संग्रहाच्छुद्धसमा समद्वादशिका शुद्धसमा न्यूनद्वादशिका शुद्धन्यूना समद्वादशिका शुद्धन्यूना न्यूनद्वादशिका चेति चत्वारो भेदाः संगृहीताः । एवमुत्तरत्रापि शुद्धानधिकेत्यनेन भेदद्वयसंग्रह इति क्रमेण नवभेदानां संग्रहः। एवं चतुर्भिर्विद्धाभेदैरपि नवभेदानां संग्रह उन्नेयः॥ एतेषां भेदानां मदनरत्नाद्यनुसारिण्यां व्यवस्थायां लिखितायामपि कालतत्त्वविवेचनाद्यनुसारिणी व्यवस्था

लिख्यते। तत्र तावद्या शुद्धानधिकानधिकद्वादशिका सा निर्विवादैव। एवं शुद्धानधिकाधिकद्वादशिकापि। अत्र च प्रमाणं स्कन्दपुराणवचनं शुद्धा यदेति पूर्वमेवोदाहृतम्। एवं च प्रकृते द्वादश्याधिक्येऽप्येकादशीसाम्यन्यूनत्वयोरन्यतरसत्त्वात्प्रथमैवोपोष्येत्युक्तं भवति। एवं च सति 'न चेदेकादशी विष्णौ' इत्यत्र 'यदीच्छेत्परमं पदम्' इत्यर्थवादः न तु पूर्वत्रोपवासविधौ मुमुक्षुरूपाधिकारिसमर्पकम्। मुमुक्षूणामुत्तरत्रैवोपवासस्य सर्वत्र विधानात्तदनौचित्यात्। ततश्च 'एकादशी भवेत्पूर्णा' इति, 'अविद्धापि च' इत्यादीनि स्कन्दपुराणवचनानि द्वादशीदिने एकादश्या अपि कियत्याः सद्भावे द्रष्टव्यानि। 'पूर्णाप्येकादशी त्याज्या वर्धते द्वितयं यदि' इति वचनान्तरात् एकादश्या एव पूर्णत्वोक्त्या द्वादश्यास्तदनुक्त्या तस्या एकादशीयुक्तत्वस्यापि संभवाच्च। यानि तु एकादश्याः शुद्धसंपूर्णमात्रत्वमुक्त्वा द्वादश्या एव केवलाया आधिक्यं प्रतिपाद्य परदिने उपवासं विदधति बहूनि वचनानि दृश्यन्ते—तेष्वेकादश्याधिक्यमुपलक्ष्यम्। 'एकादशी तु संपूर्णा सदृशी चोत्तरा भवेत्।' इति, 'पूर्णा भवेद्यदा नन्दा भद्रा चैव हि वर्धते' इत्यादिषु चशब्दश्रवणाच्छ्रौतमपि वक्तुं शक्यते। येषु तु 'उपोष्या द्वादशी शुद्धा' इत्यादिषु द्वादश्याः शुद्धत्वाभिधानात्तदुपलक्षयितुं न शक्यते—तानि वैष्णवविषयाणि। यदपि एकलिख्येति ब्रह्मपुराणवचनं शुद्धद्वादश्यां पारणनिषेधद्वारानधिकायामपि शुद्धैकादश्यामुपवासप्रतिषेधकं तच्छुद्धद्वादश्यामेवोपवासं विदधाति-तदपि वैष्णवविषयम्। समाहीनाधिकोत्तरेत्यादिवचनविरोधात्। संयुक्तग्रहणादपि तथा 'उदयात्प्राग्दशम्यास्तु शेषः संयोग उच्यते।' इति कूर्मपुराणात्। यत्तु पृथ्वीचन्द्रोदये बृहन्नारदीयनाम्ना लिखितमनन्यगतिकं स्पष्टं वचनं 'संपूर्णैकादशी शुद्धा द्वादश्यां नैव किंचन। द्वादशी च त्रयोदश्यामस्ति तत्र कथं भवेत्। पूर्वा गृहस्थैः कार्या स्यादुत्तरा यतिभिस्तिथिः।' इति—तद्धेमाद्रिणाप्यलिखनात्सर्वैश्चैकादशीमात्रवृद्धौ विद्धैकादश्यां वा गृहयतिव्यवस्थाप्रतिपादकवाक्यलिखनादनाकरम्। तस्माच्छुद्धायामनधिकायां द्वादश्याधिक्येऽपि पूर्वेद्युरेवोपवासः सर्वेषाम्। या तु शुद्धाधिकाधिकद्वादशिका-तस्यां सर्वेषां परेद्युरेवोपवासः। अत्र च प्रमाणभूतानि भृग्वादिवचनानि पूर्वमेव लिखितानि। एतद्विषयमेव 'षष्टिदण्डात्मिकायाश्च तिथेर्निष्क्रामणे परे। अकर्मण्यं तिथिमलं विद्यादेकादशीं विना।' इति गौडनिबन्धलिखितवचनम्। षष्टिदण्डात्मिकाया इत्यविद्धोपलक्षणम्। पारणं च परदिने द्वादशीमध्य एव तद्योग्यद्वादशीलाभे। या तु शुद्धाधिकानधिकद्वादशिका—तत्र सकामानां पूर्वेद्युर्निष्कामानामुत्तरेद्युरुपवासः। अत्र च मार्कण्डेया-

दिवचनानि प्रमाणभूतानि पूर्वमेव लिखितानि । तदेवं शुद्धाभेदानां चतुर्णां व्यवस्था दिङ्मात्रेण निर्णीता ॥ अथ विद्धाभेदव्यवस्थोच्यते । तत्र या विद्धाधिकाधिकद्वादशिका-सा सर्वेषां परैव । तदुक्तं भविष्यत्पुराणे—'एकादशीं दशायुक्तां वर्धमाने विसर्जयेत् । क्षयमार्गस्थिते सोमे कुर्वीत दशमीयुताम् ।' इति । उभयानाधिक्ये तु नैवास्ति संदेहः । कोट्यन्तराभावात् । न च विद्धत्वादस्ति संदेह इति वाच्यम् । असति कोट्यन्तरे विद्धाया अप्युपादेयत्वात् । तथा च विष्णुरहस्ये—'एकादशी भवेत्कापि दशम्या दूषिता तिथिः । वृद्धिपक्षे भवेद्दोषः क्षयपक्षे तु पुण्यदा ।' इति । एकादशी दशाविद्धेति पद्मपुराणवचनं तु पूर्वमेवोपन्यस्तम् । तत्र परतो न वर्धते इत्यनेनैकादश्याः साम्यमपि गृह्यते क्षयोऽपि । यद्यपि साम्येऽपि क्षयः संभवत्येव एकादश्याः सूर्योदयास्पर्शात् । तथापि पृथक्क्षयग्रहणानर्थक्यापत्तेरत्र न्यूनत्वरूपः सूर्योदयात्प्राक् समाप्तिरूप एकादश्याः क्षयशब्देन गृह्यते । स च यत्यर्थः । साम्ये मुमुक्षूणामुत्तरत्रोपवासस्य विधानात् । यद्यपि चात्रैकादश्या एवानाधिक्यमुक्तम् । तथापि द्वादश्या अपि द्रष्टव्यम् । 'दिनत्रयमृते देवि नोपोष्या दशमीयुता । सैवोपोष्या सदा पुण्या परतश्चेत्त्रयोदशी।' इति स्कन्दपुराणे तस्याअप्यभिधानात् । यदि दैवात्तु संसिध्येदिति नारदवचनेऽपि । अन्यथा द्वितीयदिने उपवासे त्रयोदश्यां पारणं स्यादिति व्यतिरेकप्रतीतेरपि तथा एकादशी यदा विद्धेति बृहन्नारदीये द्वादशीमात्राधिक्ये विद्धायां परत्रोपवासविधानाच्च । एकादश्याश्च नाधिक्यं न्यूनत्वेन साम्येन च भवतीत्युक्तम् । तत्र न्यूनत्वे दिनत्रयमृत इति यदि दैवादिति द्विस्पृगिति चोपोद्वलकानि विद्धोपवासे साम्येऽप्येकादश्यां न लभ्येतेति, द्वादशीस्वल्पमल्पापि इत्यादीनि ऋष्यशृङ्गवसिष्ठादीनां वचनानि विद्धानुग्रहे सामान्यतः प्रवृत्तानि । या च विद्धाधिकानाधिकद्वादशिका—सा सर्वैरेवोपोष्या । द्वादश्यनाधिक्यं द्वेधा । सूर्योदयपर्यन्तत्वेन ततोऽर्वागेव समाप्त्या वा । उभयथापि परा । अत्रापि प्रमाणभूतानि पद्मपुराणवचनानि पूर्वमेव लिखितानि । अत्र ज्योतिःशास्त्रपरिभाषिते दिनक्षये उपवासप्रतिनिधिभूतं नक्तं कार्यमित्युक्तम् । कैश्चित्तु—पूर्वोक्तैकादशीदिनक्षये अत्र च द्वादशीदिनक्षये उपवासनिषेधे त्विति वचनान्नक्तं हविष्यान्नमिति वचनोक्तभक्ष्यकल्पनमुक्तम् । तत्र विशेषतो द्वादश्युपवासविधाने अत्र च नक्तविधाने सति चिन्त्यम् । एवं सति यानि पारणाहे लभ्येतेत्यादीनि विद्धानुग्रहवचनानि सर्वाण्येकादश्या अप्यनाधिक्ये द्रष्टव्यानि । कालमाधवे तु शुद्धावद्विद्धाधिक्येऽपि गृहियत्योर्व्यवस्था द्रष्टव्येत्युक्तम् । एकादशी विवृद्धा चेदिति प्रचेतसो वचनं

प्रमाणत्वेनोपन्यस्तम् । न चैतद्वाक्यं शुद्धाधिक्ये चरितार्थमिति शङ्कनीयम् । बाधकाभावेन विद्धाधिक्येऽपि तद्वचनप्रवृत्तेर्निवारयितुमशक्यत्वादिति । तदयुक्तमिति कालतत्त्वविवेचने । संपूर्णैकादशी यत्रेत्यादिबहुवचनैकवाक्यतया प्रचेतोवचनस्यापि शुद्धाविषयत्वस्यैव युक्तत्वात् । या तु विद्धानाधिकाधिकद्वादशिका-तस्यां शुद्धद्वादश्यामेवोपवासो द्वादश्यामेव पारणं च तत्पर्याप्तद्वादशीलाभे।तदलाभे तामुल्लंघ्यापि। तथा च नारदीये– 'उपवासदिनं विद्धं यदा भवति पूर्वया।द्वितीयेऽह्नि यदा न स्यात्स्वल्पाप्येकादशी तिथिः । तत्रोपवासो विहितः कथं तद्वद सूतज ।' सूत उवाच । 'यदा न प्राप्यते विप्रा द्वादश्यां पूर्ववासरः। रविचक्रार्धमात्रोऽपि तदोपोष्यं परं दिनम्। उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारयेत्। निर्गता चेत्त्रयोदश्यां कला वा द्विकलापि च ।' इति । न चैकादशीनिमित्त उपवासः कथं द्वादश्यां न हि तिथ्यन्तरेष्वेवं कुत्रापि दृष्टमिति वाच्यम् । किमत्र दर्शनेन; वाचनिकेऽर्थे किं हि वचनं न कुर्यान्नास्ति वचनस्यातिभारः । अत एवोक्तं कूर्मपुराणे–' एकादशीमुपवसेद्द्वादशीमथ वा पुनः । विमिश्रां वापि कुर्वीत न दशम्या युतां क्वचित् ।' इति । एवमष्टस्वपि भेदेष्वेकादशी निर्णीता ॥ अथैकादश्यां श्राद्धप्राप्तावुपवासकर्तव्यतोच्यते । तत्र कात्यायनः–'उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत्। उपवासं तदा कुर्यादाघ्राय पितृसेवितम् ।' इति । तथा 'मातापित्रोः क्षये प्राप्ते भवेदेकादशी यदा। अभ्यर्च्य पितृदेवांश्च आजिघ्रेत्पितृसेवितम्।' इति। आघ्राणेनापि भोजनकार्यं सिध्यति । तस्य भोजनकार्ये विधानात् । यत्तु नृसिंहपरिचर्यायाम्– ' एकादश्यां यदा राम श्राद्धं नैमित्तिकं भवेत्। तद्दिनं तु परित्यज्य द्वादश्यां श्राद्धमाचरेत् ।' इति पाद्मवचनं, 'ये कुर्वन्ति महीपाल श्राद्धं त्वेकादशीदिने । त्रयस्ते नरकं यान्ति दाता भोक्ता परेतकः ।' इति ब्रह्मवैवर्तवचनम्, ' एकादशी यदा नित्या श्राद्धं नैमित्तिकं भवेत्। उपवासं तदा कुर्याद्द्वादश्यां श्राद्धमाचरेत्।' इति स्कान्दवचनं च–तानि सर्वाणि निर्मूलानि । हेमाद्रिमाधवादिमहानिबन्धकारैरलिखनात् । हेमाद्र्युदाहृतस्कान्दब्रह्मवैवर्तवचनविरुद्धे च नृसिंहपरिचर्योदाहृतब्रह्मवैवर्तवचने । तथा हि स्कन्दपुराणे– ' यस्मिन्दिने पितुः श्राद्धं मातुर्वाथ भवेद्गुह । तस्मिन्नेव दिने तात भवेदेकादशीव्रतम् । अन्यदापि व्रतं स्कन्द तदा कार्यं च तच्छृणु । न लुप्यते तथा श्राद्धमुपवासोऽथ वा गुह । इति विप्रतिपन्नेऽर्थे उपायः परमो मतः । दृष्टो हितार्थं सर्वेषां नराणां शिखिवाहन । श्राद्धं दिनं समासाद्य उपवासो यदा भवेत् । तदा कृत्वा तु वै श्राद्धं भुक्तशेषं तु

यद्भवेत् । तत्सर्वं दक्षिणे पाणौ गृहीत्वान्नं शिखिध्वज । अवजिघ्रेदने-
नाथ तेन श्राद्धं शिखिध्वज । पितॄणां तृप्तिदं जातं व्रतभङ्गो न विद्यते ।' इति ।
ब्रह्मवैवर्ते—'उपवासदिनं प्राप्य यदा भवति नारद । श्राद्धलोपः कृतस्तेन मातृहा
पितृहा भवेत् । पितृश्राद्धमथान्यद्वा तदा कार्यं च तच्छृणु । सर्वमन्नं समुद्धृत्य दक्षि-
णेन करेण तु । घ्राणाघ्राणं तु कर्तव्यं व्रतभङ्गोऽन्यथा भवेत् । अकृतेन मुनिश्रेष्ठ
घ्राणाघ्राणेन नारद । श्राद्धलोपः कृतस्तेन मातृहा पितृहा भवेत् । एवं ज्ञात्वा तु
विद्वद्भिरुपायश्चिन्तितो द्विजैः ।' इति । न च नृसिंहपरिचर्योदाहृतवचनविरोधाद्धेमा-
द्र्युदाहृतवचनयोरेव निर्मूलत्वं शङ्क्यम् । हेमाद्र्युदाहृतवचनयोर्मदनरत्नादिसकल-
निबन्धकारैर्लिखितत्वेन नृसिंहपरिचर्यामात्रोदाहृतवचनयोरेवाप्रामाण्यौचित्यात् । किं
च महालये 'स पक्षः सकलः पूज्यः श्राद्धषोडशकं प्रति ।' इति श्रुतं
षोडशत्वं पौषैकादश्यां च मन्वादिश्राद्धक्षयाहापरिज्ञाने च तत्पक्षैकादश्यां
विहितं श्राद्धं च बाधितमेव स्यात् । समूलत्वेऽपि वा नैमित्तिकपदश्रवणात्
सावकाशनैमित्तिकतीर्थादिश्राद्धपरतैव तेषाम् । यच्च—'श्राद्धे जन्मदिने चैव संक्रान्त्यां
राहुसूतके । उपवासं न कुर्वीत यदीच्छेच्छ्रेय आत्मनः ।' इति वचनं—तत्र श्राद्ध-
ग्रहणं पूर्ववाक्यपर्यालोचनयैकादशीव्यतिरिक्तविषयं द्रष्टव्यम् । निर्णयसिन्धौ—यो-
ऽपि 'अकृतश्राद्धनिचया जलपिण्डं विना कृताः।' इति लघुनारदीये एकादश्यां श्राद्धा-
दिनिषेधः स मातापितृभिन्नविषयः । पूर्ववाक्ये तद्ग्रहणात् । निचयः प्रतिग्रहः ।
यदपि स्मृतिचन्द्रिकास्थं पठन्ति 'अन्नाश्रितानि पापानि तद्भोक्तुर्दातुरेव च ।
मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः ।' इति—तस्यापि रागप्राप्तभुजिगोचरस्य
न वैधश्राद्धशेषभुजिगोचरत्वम् । यच्च—'व्यतीपाते कृतश्राद्धे पुत्री नोपवसेद्गृही । श्राद्धं
कृत्वा तु यो विप्रो न भुङ्क्ते पितृसेवितम् । हविर्देवा न गृह्णन्ति कव्यानि पितरस्तथा ।',
इत्यादिवचनैः पित्रादिसांवत्सरिकदिने उपवासनिषेधः— सोऽपि रविवाराद्युपवास-
निषेधवत्तन्निमित्तोपवासविषयत्वासंभवेप्यावश्यकैकादश्याद्युपवासव्यतिरिक्तविषयः ।
एवं 'वृद्धिं कृत्वा तु षण्मासान्नोपवासो विधीयते ।'इत्येतदप्यावश्यकैकादश्युपवासव्य-
तिरिक्तविषयम् । एवं च क्रत्वर्थतया श्राद्धशेषभोजननियमस्य विधानान्निषेधोपवा-
सविध्योश्च रागप्राप्तानियतपुरुषार्थभोजनविषयत्वात् । न्यायेन तत्र भोजनस्यैवौचित्ये-
ऽपि वचनवशादेवैवम् । तानि च 'उपवासो यदा नित्यः'—इत्यादिवचनानि पूर्वमेवोदा-
हृतानि । अत एव विधितोऽभोजनेऽपि श्राद्धशेषभोजनरूपाङ्गलोपे तच्छ्राद्धस्य वै-

गुण्यं नास्तीत्येतमर्थं ज्ञापयति शिवरहस्यम् । 'श्राद्धं कृत्वा तु यः शेषं नान्नमश्नाति मन्दधीः। लोभान्मोहाद्भयाद्वापि तस्य तन्निष्फलं भवेत्।' इति। अत्र लोभमोहभयानामुपादानं ज्ञापकम् । अत्र श्राद्धभोजनविधौ रागप्राप्तं भोजनं नियम्यते । लाघवात् । ऋतुगमनवत् । न त्वपूर्वं भोजनं विधीयते । स च नियमः पुरुषार्थभोजनाश्रितोऽपि प्रकरणाच्छ्राद्धाङ्गम् । ह्युपगममांसभक्षणादिप्रतिषेधवत्। तस्य चोपकाराकांक्षायां शेषशब्देन प्रतिपत्त्य ह कृतार्थः। श्राद्धीयद्रव्योपस्थापनात् । तस्य च द्वितीयासंयोगाद्दृष्टत्वाच्च तत्प्रतिपत्तिरेवोपकारः । तेन सर्वस्य श्राद्धीयद्रव्यस्यावैगुण्याय प्रतिपाद्यत्वात्सर्वजातीयं श्राद्धीयमन्नं यजमानेन भोक्तव्यम्। वस्तुतस्तु—प्रयोजनापेक्षं शेषगुणकर्मार्थकमेवैतत् । आनुषङ्गिकी तु प्रतिपत्तिः। अभिमतपक्षे तदर्थत्वानुपपत्तेः। इतरपक्षेऽप्यनुमितवैयर्थ्यापत्तेश्च। अन्यदीयस्यान्यत्र विनियोगे ह्यनुमितिरपेक्ष्यते। न तु तेष्वेव विनियोगो योगिनि संस्कारे । इतराङ्गापेक्षया यजमानभोजनलोपे बहुदोषश्रवणमनुकल्पविधानं च साक्षादङ्गत्वं द्योतयति । द्वितीया तु धात्वर्थकर्मत्वाभिप्राया । तेन सर्वजातीयशेषभोजनेऽपि न किंचिच्छ्राद्धस्य वैगुण्यमिति सुतरां व्रताविरोधेन तत्सिद्धम् । अत एव तीर्थयात्राङ्गघृतश्राद्धे घृतमात्रेणापि शेषभोजनसिद्धिः । शिष्टाचारोऽप्येवमित्यलं प्रसङ्गागतेन ॥ इदं चैकादशीव्रतमाशौचेऽपि न त्याज्यम् ॥ तदुक्तं विष्णुरहस्ये—'परमापदमापन्ने हर्षे वा समुपस्थिते । सूतके मृतके चैव न त्याज्यं द्वादशीव्रतम्।' इति । वाराहपुराणेऽपि—'सूतकेऽपि नरः स्नात्वा प्रणम्य शिरसा हरिम् । एकादश्यां न भुञ्जीत व्रतमेवं न लुप्यते । मृतकेऽपि न भुञ्जीत एकादश्यां सदा नरः । द्वादश्यां तु समश्नीयात्स्नात्वा विष्णुं प्रणम्य च।' इति ।'एकादश्यां ततोऽभुक्त्वा सूतकान्ते जनार्दनम्। पूजयित्वा विधानेन पूजयेच्च द्विजोत्तमान् ।' अत्र स्नात्वेति शरीरनियमोपलक्षणम् । मनसेति कायिकपूजाया अन्येन करणीयत्वमुक्तम्। यद्वा सापि दानादिवदन्ते एव कर्तव्या। तथा च मत्स्यपुराणे—'सूतकान्ते नरः स्नात्वा पूजयित्वा जनार्दनम् । दानं दत्त्वा विधानेन व्रतस्य फलमश्नुते।' इति दानग्रहणेन ब्राह्मणभोजनमपि गृह्यते । तस्याप्यन्नदानरूपत्वात् । रजःप्रभृतिषु व्रतकर्तव्यतानिर्णयादिकं परिभाषायां द्रष्टव्यम् । इति सूतके व्रतकर्तव्यतानिर्णयः ।

अथ दशमीनियमाः । स्कन्दपुराणे—'कांस्यं मांसं मसूरं च क्षौद्रं चानृतभाषणम्। पुनर्भोजनमध्या(भ्या)स्यं दशम्यां परिवर्जयेत्।' मदनरत्ने तु-अध्या(भ्या)स्यस्थाने अन्यान्नमिति पाठः । कूर्मपुराणे—'कांस्यं मांसं मसूरं च चणकान्कोरदूषकान् ।

शाकं मधु परान्नं च त्यजेदुपवसन्स्त्रियम्।' उपवसन्निति वर्तमानसामीप्ये । अनन्तर-दिने उपवत्स्यन्नित्यर्थः । मत्स्यपुराणे-'कांस्यं मांसं सुरां क्षौद्रं तैलं वितथभाषणम् । व्यायामं च प्रवासं च दिवा स्वापं च मैथुनम् । तिलपिष्टं मसूरं च दशम्यादिषु वर्ज-येत् ।' निर्णयामृते— तिलस्थाने शिला इति पाठः । हेमाद्रौ तु द्वादशैतानीति पाठः । तथा—'कांस्यं मांसं मसूरं च पुनर्भोजनमैथुने । द्यूतमत्यम्बुपानं च दशम्यां सप्त संत्य-जेत् ।' माधवीये तु—वैष्णवस्त्यजेदिति पाठः । क्वचित् द्यूतपदस्थाने अनृतपदं पठ्यते । दशमीं प्रकृत्य नारदीये—'अक्षारलवणाः सर्वे हविष्यान्ननिषेविणः । अवनीतल्पशयनाः प्रियासङ्गविवर्जिताः ।' लघुनारदीये— दशमीमारभ्य दिनत्रयमपि केचन नियमा उक्ताः । 'दशम्यादि महीपाल त्रिदिनं परिवर्जयेत् गन्धताम्बूलपुष्पादि स्त्रीसंभोगं महायशाः ।' इति । अन्यत्रापि 'दशम्यामे-कभुक्तं तु कुर्वीत नियतेन्द्रियः । आचम्य दन्तकाष्ठं तु खादेत तदनन्तरम् । ततश्चानन्तरं विप्र ब्रह्मचारी जितेन्द्रियः । रात्रिं नयेत्ततः पश्चात्प्रातः स्नात्वा समाहितः । उपवासं तु संकल्प्य मन्त्रपूतं जलं पिबेत् ।' इदं च दशम्यामेकभुक्तं काम्यैकादशीव्रतविषयम् । 'सायमाद्यन्तयोरह्नोः सायं प्रातश्च मध्यमे । उपवास-फलप्रेप्सुर्जह्याद्भुक्तचतुष्टयम् । अथ नित्योपवासी च सायं प्रातर्भुजिक्रियाम् । वर्ज-येन्मतिमान्विप्रः संप्राप्ते हरिवासरे ।' इति विष्णुरहस्यवचनात् । 'दशम्यामेकभुक्तस्तु मांसमैथुनवर्जितः । एकादशीमुपवसेत्पक्षयोरुभयोरपि। देवतास्तस्य तुष्यन्ति कामितं चास्य सिध्यति ।' इति देवलवचनाच्च । अत्र चैकभुक्तश्रवणेऽपि विशेषणभूता द्विती-यभोजननिवृत्तिरेवानृतवदनादिनिवृत्तिवदङ्गतया विधीयते न तु विशेष्यभूतं भोजनमपि। लाघवात्, पूर्ववचनैकवाक्यत्वाच्च । अन्येऽपि दिनत्रयनियमाः काम्यव्रते आवश्यकाः सति संभवे नित्यव्रतेऽपि कार्याः 'शक्तिमांस्तु ततः कुर्यान्नियमं सविशेषणम् ।' इति कात्यायनोक्तेः । वैष्णवैस्त्ववश्यमनुष्ठेयाः । दशमीं प्रकृत्य 'विष्णोराराधनपरैरेतत्का-र्यमुपोषितैः ।' इति, 'द्वादश्यां द्वादशैतानि वैष्णवः परिवर्जयेत् ।' इत्यादिनृसिंहप-रिचर्योदाहृतवचनात् । अशक्तौ तु माधवीये ब्रह्मवैवर्ते—'इति विज्ञाय कुर्वीतावश्यमे-कादशीव्रतम् । विशेषनियमाशक्तोऽहोरात्रं भुजिवर्जितः ।' इति । दशम्यां च रात्रावु-पवासमुद्दिश्य नियमा ग्रहीतव्याः । तदुक्तं ब्रह्मवैवर्ते—'प्राप्ते हरिदिने सम्यग्विधाय नियमं निशि । दशम्यामुपवासस्य प्रकुर्याद्वैष्णवं व्रतम् ।' इति ।

अथैकादशीनियमाः । पाखण्डिभिरसंस्पर्शो ह्यसंभाषणमेव च । विष्णोरा-

राधनपरैरेतत्कुर्यादुपोषितैः । असकृज्जलपानाच्च ताम्बूलस्य च भक्षणात् । उपवासः प्रदुष्येत दिवा स्वापाच्च मैथुनात् ।' अत्यशक्तौ देवलेन जलपानमभ्यनुज्ञातम् । 'उपवासः प्रणश्येत दिवास्वापान्नमैथुनैः । अत्यये चाम्बुपानेन नोपवासः प्रणश्यति ।' इति । अत्यये जलपानं विना प्राणात्यये । तत्रोपवासस्वरूपं वृद्धवसिष्ठकात्यायनविष्णुधर्मोत्तरेषु–'उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह । उपवासः स विज्ञेयः सर्वभोगविवर्जितः ।' इति । पापेभ्यः परिवर्जनीयेभ्यः उपावृत्तस्य निवृत्तस्येत्यर्थः । पापानि व्रताङ्गनिषेधविषया मैथुनानृतवदनादयः । गुणा व्रताङ्गविधिविषयाः शौचजपध्यानादयः । सर्वस्य वायुपर्यन्तस्यापि भोगे-अभ्यवहारः । तथा च पापनिवृत्त्या गुणानुष्ठानेन च सहितो निराहारस्य वासोऽवस्थानमुपवास इत्युक्तं भवति । इदं च फलसाधनस्योपवासस्य स्वरूपम् । उपवासपदार्थस्तु स्मृतिलोकव्यवहारे रूढ्या निराहारावस्थानमात्रम् । अत एव संकल्पवाक्ये तावन्मात्रमुपात्तम् । तच्चाग्रे वक्ष्यते । विष्णुधर्मेषु–' उपवासी हरिं यस्तु भक्त्या ध्यायति मानवः । तज्जप्यजापी तत्कर्मरतस्तद्गतमानसः । निष्कामो दैत्यवद्ब्रह्मन्पदमाप्नोत्यसंशयम् । ' इति । अन्ये च नियमा भाषायां द्रष्टव्याः ।

अथ द्वादशीनियमाः । ' कांस्यं मांसं मसूरं च चणकं कोरदूषकान् । रत्यौषधिपरान्नं च द्वादश्यामष्ट वर्जयेत् । ' स्कान्दे–' क्षौद्रं मांसं तथा तैलं व्यायामं क्रोधमैथुने । परान्नं कांस्यताम्बूले लोभनिर्माल्यलङ्घनम् । द्वादश्यां द्वादशैतानि वैष्णवः परिवर्जयेत् । ' ब्रह्माण्डपुराणे-' दिवा निद्रां परान्नं च पुनर्भोजनमैथुने । क्षौद्रं कांस्यामिषं तैलं द्वादश्यामष्ट वर्जयेत्।मत्स्यपुराणे-'कांस्यं मांसं सुरां क्षौद्रं लोभं वितथभाषणम् । व्यायामं च प्रवासं च दिवा स्वापमथाञ्जनम् । तिलपिष्टं मसूरं च द्वादशैतानि वैष्णवः । द्वादश्यां वर्जयेन्नित्यं सर्वपापैः प्रमुच्यते । पुनर्भोजनमध्वायो भार आयासमैथुने । उपवासफलं हन्युर्दिवानिद्रा च पञ्चमी ।' बृहस्पतिरपि–' दिवानिद्रां परान्नं च पुनर्भोजनमैथुने । क्षौद्रं कांस्यामिषे तैलं द्वादश्यामष्ट वर्जयेत्।कांस्यं मांसं सुरां घृतं व्यायामं क्रोधमैथुने।दिवा स्वापं पुनर्भक्ष्यं चणकान्कोरदूषकान् । कांस्यं मधु परान्नं च द्वादश्यामष्ट वर्जयेत्।'तथा–'कांस्यं मांसं मसूरांश्च दूष्यं व्यायाममैथुने । हिंसासत्यं च तैलं च लोभं निर्माल्यलङ्घनम् ।' वर्जयेदिति शेषः।एषु वाक्येषु क्वचित्कामितं सिध्यतीति क्वचिदुपवासफलप्रेप्सुरिति क्वचिदुपवासफलं हन्युरिति फलसंबन्धः श्रूयते तेनावगम्यते काम्याधिकारिविषयाणीमानि वचनानीति । यत्र पुनर्दशमीनिय-

मवाक्येषु श्रूयते फलसंबंधः तेनावगम्यते काम्यविषयसाहचर्येण पाठात् । तस्मात्सर्वं काम्यविषयमवसीयते । शक्तौ सत्या नित्यव्रतविषयमपीति प्रागेवोक्तम् । **अथ द्वादश्यां कर्तव्यपारणानिर्णयः ।**- 'पारणं तु ततः कुर्याद्वर्जयित्वा ह्युपोदकीम् ।' इति । उपोदकी भाषायां "पोई" इति प्रसिद्धा । 'पारणं तु ततः कुर्याद्यथासंभवमार्गतः । अत ऊर्ध्वं यथेष्टं तु कारयेत्तु यथारुचि ।' यदा तु द्वादशी पारणमात्रपर्याप्ता तदा रात्रिशेषे स्नानादिकं सर्वं कर्म कृत्वा द्वादशीमध्ये पारणं कार्यं न तु त्रयोदश्याम् । तदुक्तं नारदीये—'भवेद्यदा त्रयोदश्यां द्वादश्यास्तु कलाद्वयम् । द्वादश द्वादशीर्हन्ति त्रयोदश्यां तु पारणम् । कलाद्वयं त्रयं वापि द्वादशीं न त्वतिक्रमेत् । पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता ।' इति । ननु द्वादश्यतिक्रमेऽपि नास्ति दोषः 'सा तिथिः सकला ज्ञेया' इति वचनेन साकल्याभिधानादिति चेत् । मैवम् । साकल्यस्य स्नानादिविषयत्वात् । वाक्यशेषे स्नानदानजपादिष्वित्यभिधानात् । पारणे तु साकल्यवचनं न प्रवर्तते । 'तिथिस्तात्कालिकी ज्ञेया' इति वचनात् । अल्पद्वादशीमध्ये यदा पारणं तदा ततः प्रागेव सर्वाः क्रियाः कर्तव्याः । तथा च स्कन्दपुराणे—'कलाद्वयं त्रयं वापि द्वादशी यत्र दृश्यते । स्नानार्चनादिकं कर्म तदा रात्रौ विधीयते ।' इति । तथा तत्रैव—'कलार्धां द्वादशीं दृष्ट्वा निशीथादूर्ध्वमेव हि । आमध्याह्नाः क्रियाः सर्वाः कर्तव्याः शंभुशासनात् ।' इति । रात्रावित्युक्तेऽप्यरुणोदय एव कार्यम् । तथा च नारदीये-'अल्पायामथ विप्रेन्द्र द्वादश्यामरुणोदये । स्नानार्चनक्रियाः कार्या जपहोमादिसंयुताः ।' स्कन्दपुराणे—'यदा भवेदतीवाल्पा द्वादशी पारणादिने । उषःकाले द्वयं कुर्यात्प्रातर्माध्याह्निकं तदा ।' इति । नारदीयवचने होमशब्देनादिशब्देन चौपासनवैश्वदेवादिकं स्मार्तमेव गृह्यते । सादृश्यात् । न तु श्रौतम् । पारणधर्मानुरोधेन श्रौतकालबाधस्यान्याय्यत्वात् । तदनधिकृतविषयत्वेन सावकाशत्वाच्च । यस्य चावश्यकमरुणोदयाधिककालसाध्यं तेन तद्दिने संध्यादिसंकोचेनाप्यावश्यकं कृत्वा द्वादशीमध्ये पारणं कर्तव्यम् । 'महाहानिकरी ह्येषा द्वादशी लंघिता नरैः । करोति धर्महरणमस्नातेव सरस्वती ।' इति पद्मपुराणे द्वादशीलंघने दोषस्मरणात् । अस्नातेत्यधिकरणे क्तप्रत्ययः । तेन तस्यां स्नानमकृत्वा लंघिता सरस्वती यथा धर्मं हरति तथा भोजने लंघिता द्वादश्यपीत्यर्थः । तेन नद्यन्तर उत्तीर्य स्नानं सरस्वत्याम् । स्नात्वोत्तरणमिति सूचितम् । गारुडपुराणेऽपि 'यदि स्वल्पा द्वादशी स्यादपकर्षो भुजेर्भवेत् । प्रातर्मध्याह्निकस्यापि तत्र स्यादप-

कर्षणम्।' इति। नृसिंहपरिचर्यायां तु 'कलार्धा द्वादशीं दृष्ट्वा निशीथादूर्ध्वमेव हि। आमध्याह्नक्रियाः सर्वाः कर्तव्याः शंभुशासनात् ।' इति स्कन्दवचनान्निशीथादूर्ध्वं क्रियाप्रवृत्तिरित्युक्तम् । कालतत्त्वविवेचने—माध्याह्निकापकर्षो भूयस्यामपि द्वादश्यां भवत्येव।' सर्वेषामुपवासानां प्रातरेव हि पारणम्।' इति माधवाद्युदाहृतवचनात् । भोजनमाध्याह्निकयोश्च वाचनिकपौर्वापर्यसद्भावात् । निर्णयसिन्धौ तु—अत्रास्मद्गुरवः। बहूनां कर्मकालानां विना कारणं बाधापतेः प्रागुक्तवचनैश्चाल्पद्वादश्यामेवापकर्षविधानाद्भूयस्यां द्वादश्यां पारणमपराह्ण एव कार्यम् । प्रातःशब्दस्तु 'सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम्।' इतिवदपराह्णवाचित्वेऽप्युपपन्नः। न च वाक्यवैयर्थ्यम्। पुनर्भोजनसायंपारणानिवृत्त्यर्थत्वात्तस्येत्याहुः। यदा तु त्रयोदशीनिमित्तक्षयाहश्राद्धादिसंकटान्तरं भवति तदा स्वल्पायां द्वादश्यामद्भिः पारणं कृत्वा श्राद्धानन्तरं भोक्तव्यम्। तदाह देवलः— 'संकटे विषमे प्राप्ते द्वादश्यां पारयेत्कथम् । अद्भिस्तु पारणं कुर्यात्पुनर्भुक्तं न दोषकृत्।' इति। कात्यायनः- 'विध्यादिकं भवेन्नित्यं पारणं तु निमित्ततः। अद्भिस्तु पारयित्वाऽथ नित्यकाले भुजिर्भवेत्।' इति । यदा तु प्रातःकालो द्वादशीप्रथमकालव्याप्तो भवति तदा तमतिक्रम्यैव पारणं कर्तव्यम्। 'द्वादश्याः प्रथमः पादो हरिवाससंज्ञितः। तमतिक्रम्य कुर्वीत पारणं विष्णुतत्परः।' इति मदनरत्ननिर्णयामृतधृतविष्णुधर्मोत्तरात् । केचित् विष्णुतत्पर इति वचनाद्वैष्णवविषयमेतदिति वदन्ति। द्वादश्यभावे त्रयोदश्यां पारणार्थसिद्धस्यैव प्रशंसा। नारदीये—'त्रयोदश्यां तु शुद्धायां पारणे पृथिवीफलम्। शतयज्ञाधिकं वापि नरः प्राप्नोत्यसंशयम्।' इति ॥ अथैतेषां दशम्यादिनियमानामङ्गभूतानां लोपे प्रायश्चित्तमुच्यते। तत्र मानसनियमलोपे यमः-' मानसे नियमे लुप्ते स्मरेद्विष्णुमनामयम्।' इति। वाचिकनियमलोपे सामान्यतो योगियाज्ञवल्क्यः—' यदि वाग्यमलोपः स्यात्स्नानदानादिकर्मसु। व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम्।' इति।' अज्ञानाद्यदि वा मोहात्प्रच्यवेताध्वरे च यत्। स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः।' असंभाष्यपाखण्ड्यादिसंभाषणे विष्णुधर्मोत्तरे—'असंभाष्यान्हि संभाष्य तुलस्यतसिकादलम्। आमलक्याः फलं वापि पारणे प्राश्य शुध्यति। ' इति। पाखण्ड्यादिस्पर्शनविषये प्रायश्चित्तं विष्णुपुराणे उक्तम्। यथा ' स्पर्शने च नरः स्नात्वा शुचिरादित्यदर्शनात् । संभाष्य ताञ्छुचिषदं चिन्तयेदच्युतं बुधः। तेषामालोकनात्सूर्यं पश्येत्तु मतिमान्नरः।' इति। शुचिषदं

शुचिप्रदम् ।'इदं चोदाहरेत्सम्यक्कृत्वा तत्श्रवणं मनः । शरीरमन्तःकरणोपघातं वाचश्च विष्णुर्भगवानशेषम् । शमं नयत्वस्तु ममेह शर्म पायादनन्तो हृदि संनिविष्टः । अन्तःशुद्धिं बहिःशुद्धिं शुद्धो धर्ममयोऽच्युतः । स करोति ममैतस्मिञ्छुचिरेवास्मि सर्वदा । बाह्योपघातानघो बौद्धांश्च भगवानजः । शमं नयत्वनन्तात्मा विष्णुश्चेतसि संस्थितः । एतत्संभाष्य जप्तव्यं पाखण्डिभिरुपोषितैः ।' इति ।एतस्य च जपस्य मन्त्रलिङ्गात्सर्वोपघातविषयत्वप्रतीतावपि संभाषणविषयतैव ।' एतत्संभाष्य जप्तव्यम्' इति प्रत्यक्षवचनात् । तत्रैव विशेषो विष्णुधर्मोत्तरे—'नमः शुचिषदेत्युक्त्वा सूर्यं पश्येत दीक्षितः ।' इति । दीक्षितः स्वीकृतनियमः । दन्तधावने प्रायश्चित्तं विष्णुरहस्ये—'श्राद्धोपवासदिवसे खादित्वा दन्तधावनम् । गायत्र्या शतसंपूतमम्बु प्राश्य विशुध्यति ।' इति । चाण्डालादिशब्दश्रवणे बृहन्नारदीये—'रजस्वलां च चाण्डालं महापातकिनं तथा । सूतिकां पतितांश्चैव उच्छिष्टं रजकादिकम् ।' इत्युपक्रम्य 'व्रतादिमध्ये शृणुयाद्येषां ध्वनिमुत्तमः । अष्टोत्तरसहस्रं तु जपेद्वै वेदमातरम् ।' वेदमातरं गायत्रीम् । अनृतभाषणादौ कात्यायनः—'मिथ्यावादे दिवा स्वापे बहुशोम्बुनिषेवणे । अष्टाक्षरं व्रती जप्त्वा शतमष्टोत्तरं शुचिः ।' इति । अष्टाक्षरम् 'ॐ नमो नारायणायेति ।' हिंसास्तेययोः शंखः—'कृत्वा स्तेयं प्राणिहिंसां यथार्हं शास्त्रचोदितम् । प्रायश्चित्तं व्रती कुर्याज्जपेन्नामशतत्रयम् ।'इति।नाम्नां शतत्रयं न त्वेकं नाम शतत्रयवारमिति संख्यायाः पृथक्त्वनिवेशादिति कालतत्त्वविवेचने । 'जपेन्नामसहस्रकम् ।' इति पाठोनिर्णयामृते—'दुष्टहिंसकयोः सख्यं कृत्वा च पश्वहिंसनम् । प्रायश्चित्तं व्रती कुर्याज्जपेन्नामसहस्रकम् ।' इति । नाम विष्णुनाम।ताम्बूलचर्वणादौ पैठीनसिः—'ताम्बूचर्वणे स्त्रीणां भोगे मांसनिषेवणे । व्रतलोपो भवेत्कुर्यादष्टाक्षरमनोर्जपम् ।'इति।मांसस्य भक्ष्यस्य निषेवणे । अभक्ष्यमांसभक्षणे तु स्तेयादिवत्स्मार्तप्रायश्चित्तेन समुच्चयः । एवं मैथुनेपि स्वदारविषये तु पूर्ववत्समुच्चयः । स्वदारमैथुनेऽप्यृतुकालादन्यत्र । तथा च कात्यायनः—' रेतःसंक्रमणाद्भोगाद्भोगेऽन्यत्र क्षयः स्मृतः । जपोऽष्टाक्षरमन्त्रस्य तत्र नामशतस्य च ।' इति । रेतःसंक्रमणं गर्भकोशे तद्योग्यं गमनम् । ऋतुकालगमनमिति यावत् । तदात्मकात्संभोगादन्यत्र संभोगेषु व्रतस्य क्षय इत्यर्थः । देवलेनाप्युक्तम्—'न दारेष्वृतुसंगमात् ।' इति । तेन तत्रैव मन्त्रजपः । जपसंख्या पूर्वोक्ता शतरूपा । ऋतुगमनाभ्यनुज्ञापि । षोडश्यामेव व्रतरात्रौ संनिहितस्यानन्यगतिकत्वात् । एवं ब्रह्मचार्येवेति श्राद्धादिविषयायामप्यनुज्ञायाम् । अस्पृश्यस्पर्शादौ स्मृत्युक्तस्नानादि । अपरस्यापि यस्य कायिकस्य नियमस्य लोपे प्रायश्चित्तविशेषो नोक्तस्तत्र सर्वत्र मन्त्रस्य नाम्नां

वा जपो द्रष्टव्यः । एकादश्यां भोजने प्रायश्चित्तं स्मर्यते—'अष्टम्या च चतुर्दश्यां दिवा भुक्त्वैन्दवं चरेत् । एकादश्यां दिवा रात्रौ नक्तं चैव तु पर्वणि ।' इति स्मृत्यन्तरे—' अर्के पर्वद्वये रात्रौ चतुर्दश्यष्टमीदिवा । एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत् ।' इति । प्रमादेनैकादश्युपवासातिक्रमेऽपरार्के वाराहे—' एकादशी विलुप्ता चेद्द्वादशी परतः स्थिता । उपोष्या द्वादशी तत्र यदीच्छेत्परमं पदम् ।' इति ।

अथैकादशीव्रतानुष्ठानक्रमः—'दशम्यां प्रातरुत्थाय कृतमैत्रादिको व्रती । देवार्चनक्रियां कृत्वा कुर्यात्संकल्पमादृतः । दशमीदिनमारभ्य करिष्येऽहं व्रतं तव।त्रिदिनं देवदेवेश निर्विघ्नं कुरु केशव।इत्युच्चार्यार्पयेत्पुष्पाञ्जलिं श्रीदेवपादयोः । शंखोदकेन संकल्प्य प्रणमेद्दण्डवद्विभुम् ।' ततः संभृतसंभारः श्रीहरिमहोत्सवं कुर्यात्।ततः शक्तौ सत्यां नित्यव्रतेऽवश्यं च काम्यव्रते सकृदेवापराह्णे हविष्यं भुक्त्वाचान्तो दन्तकाष्ठं खादेत्।ततो जितेंद्रियःसन् दिनशेषं नीत्वा रात्रौ देवं नीराज्य उपवासं समुद्दिश्य नियमान्पूर्वोक्तान्स्वीकुर्यात् । 'एकादश्यां तु पर्णाद्यैर्निर्वर्त्य दन्तधावनम् । स्नात्वा देवार्चनं कृत्वा ततः संकल्पमाचरेत्।'संकल्पे विशेषो देवलेनोक्तः— 'गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः। उपवासं तु गृह्णीयाद्यथा संकल्पयेद्बुधः।' इति । औदुम्बरं ताम्रमयं यथा संकल्पयेयत्फलम् कामयेत्तत्फलकाम इत्युल्लिखेदित्यर्थः।संकल्पमन्त्रस्तु 'एकादश्यां निराहारः स्थित्वाहमपरेऽहनि।भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत ।' इति।इमं मन्त्रमुच्चारयन् भगवच्चरणारविन्दयोस्तज्जलमर्पयेत् । संकल्प्य च पुष्पाञ्जलिर्देवायार्पणीयः । 'इत्युच्चार्य ततो विद्वान्पुष्पाञ्जलिमथार्पयेत् ।' इति वाराहपुराणात्। अनन्तरं ताम्रपात्रगतं जलमष्टाक्षरमन्त्रेण त्रिर्जप्तेनाभिमन्त्रितं पिबेत् । तदाह कात्यायनः—'अष्टाक्षरेण मन्त्रेण त्रिर्जप्तेनाभिमन्त्रितम् । उपवासफलं प्रेप्सुः पिबेत्पात्रगतं जलम् ।' इति । संकल्पश्चार्धरात्रादुपर्यनुवर्तमानया दशम्या युक्तायामेकादश्यामाद्ययामचतुष्टयं त्यक्त्वा कर्तव्यः । उदयादुपर्यपि दशम्या युक्तायां चेत्तदा रात्रौ अर्धादुत्तरं पूजादि । तथाच नारदीये—'दशम्याः सङ्गदोषेण अर्धरात्रात्परेण तु । वर्जयेच्चतुरो यामान्संकल्पार्चनयोस्तदा । विद्धोपवासेनभ्रंस्तु दिनं त्यक्त्वा समाहितः । रात्रौ संपूजयेद्विष्णुं संकल्पं च तदाचरेत् ।' तदनन्तरकृत्यं ब्रह्मपुराणे—'एकादश्यां शुभे पक्षे निराहारः समाहितः । स्नात्वा सम्यग्विधानेन सोपवासो जितेंद्रियः । संपूज्य विधिवद्विष्णुं श्रद्धया सुसमाहितः । पुष्पैर्गन्धैस्तथा धूपैर्दीपै र्नैवेद्यकैः परैः । उपचारैर्बहुविधैर्जपहोमप्रदक्षिणैः । स्तोत्रैर्नानाविधैर्दिव्यैर्गीतवाद्यमनोहरैः । दण्डवत्प्र-

णिपातैश्च जयशब्दैस्तथोत्तमैः। एवं संपूज्य विधिवद्रात्रौ कृत्वा प्रजागरम्। याति विष्णोः परं स्थानं नरो नास्त्यत्र संशयः।' इति। तथा तत्रैव—'एकादश्यामुभे पक्षे निराहारः समाश्रितः। स्नात्वा सम्यग्विधानेन सोपवासो जितेन्द्रियः। संपूज्य विधिवद्विष्णुं श्रद्धया सुसमाहितः। पुष्पैर्गन्धैस्तथा धूपैर्दीपैर्नैवेद्यकैः परैः। उपचारैर्बहुविधैर्जपहोमप्रदक्षिणैः। स्तोत्रैर्नानाविधैर्दिव्यैर्गीतवाद्यमनोहरैः। दण्डवत्प्रणिपातैश्च जयशब्दैस्तथोत्तमैः। एवं संपूज्य विधिवद्रात्रौ कृत्वा प्रजागरम्। यान्ति विष्णोः परं स्थानं नरा नास्त्यत्र संशयः।' इति। तथा तत्रैव-'एकादश्यामुभे पक्षे निराहारः समाहितः। नानापुष्पैर्मुनिश्रेष्ठ विचित्रं मण्डपं शुभम्। कृत्वा सावरणं पश्चाज्जागरं कारयेन्निशि।' बृहन्नारदीयेऽपि—'देवस्य पुरतः कुर्याज्जागरं नियतो व्रती। गीतैर्वाद्यैः संस्तवैश्च पुराणश्रवणादिभिः।' तत्रैव 'पञ्चामृतेन संस्नाप्य एकादश्यां जनार्दनम्। द्वादश्यां पयसा स्नाप्य हरिसारूप्यमश्नुते।' इति। नृसिंहपरिचर्यायाम्—नित्यपूजां निर्वर्त्य वितानमाबध्य पुष्पमण्डपं कृत्वा महापूजां कर्तुं गव्येन घृतेनान्येन वा तैलेन वा समन्ततो दीपान् प्रज्वाल्य पञ्चामृतस्नपनं विशेषतः कपिलाया अन्यस्या गोर्वा क्षीरेण स्नपनं कृत्वा दिव्याम्बराण्याभरणानि च दत्त्वा कर्पूरागरुकस्तूरीकुङ्कुमकेसरादिमिश्रितेन चन्दनेनालिप्य सुगन्धपुष्पैश्चूतमञ्जरीभिर्बिल्वपत्रैः श्रीतुलसीदलमञ्जरीभिश्च महापूजां कृत्वा कर्पूरागरुसघृतगुग्गुलुभिर्धूपं समर्प्य सकर्पूरं मङ्गलनीराजनं कृत्वा देवपूजां समाप्य ब्राह्मणानक्षतपुष्पमालादिभिरभ्यर्च्य शंखोदकं देवमूर्ध्नि भ्रामितं सतीर्थं सर्वेभ्यः प्रदाय स्वयं प्राश्योपविश्य पाद्मभारतीयसहस्रनामयुगलगीतागजमोक्षणस्तवराजानुस्मृत्यादीनि स्तोत्राणि जपित्वा भागवतपारायणं भारतकथां श्रीकृष्णबाललीलां ध्रुवचरितं श्रुत्वा नालिकेरादिना महार्घं दत्त्वा स्वयं गीतनृत्यादीनि कुर्यात्। अन्यदीयानि वा पश्येत्। जागरणसमये यथाविभवं दातव्यम्। 'द्रविणं हेमरूप्यादि दातव्यं जागरे नरैः।' इति स्कान्देऽभिधानात्। शिष्टाचाराच्च। जागरे नृत्यगीतादि न निवारयेत्। 'निवारयति यो गीतं नृत्यं जागरणं हरेः। षष्टिवर्षसहस्राणि पच्यते रौरवादिषु। नृत्यमानस्य मर्त्यस्य उपहासं करोति यः। जागरे याति निरयं यावदिन्द्राश्चतुर्दश।' इति पाद्मेऽभिधानात्। एवं रात्रिमतिवाह्य प्रभाते कौशिकीं गायेत्। 'प्रभाते कौशिकीं यस्तु प्रगायेज्जागरे हरेः। स समुद्धरते सर्वान्ब्राह्मणी ब्राह्मणं यथा।' इति स्कान्देऽभिधानात्। ततो देवस्य मङ्गलनीराजनं कृत्वा सर्वेभ्यः प्रसादं प्रदाय ब्राह्मणान्विसर्जयेत् इति।

अथ द्वादशीकृत्यम् । 'प्रातः स्नात्वा हरिं पूज्य उपवासं समर्पयेत् । अज्ञानतिमिरान्धस्य व्रतेनानेन केशव । प्रसादसुमुखो नाथ ज्ञानदृष्टिप्रदो भव । पारणं तु ततः कुर्याद्यथासंभवमार्गतः ।' इति । यथासंभवत्वं च ब्राह्मणभोजनदक्षिणादानबन्धुसाहित्येषु । तथा च बृहन्नारदीये—'ब्राह्मणान्भोजयेच्छक्त्या दद्याद्वै दक्षिणां तथा । ततः स्वबन्धुभिः सार्धं नारायणपरायणः । कृतपञ्चमहायज्ञः स्वयं भुञ्जीत वाग्यतः।' इति । शातातपोऽपि—'उपवासं द्विजः कृत्वा ततो ब्राह्मणभोजनम् । कारयेत्सगुणस्तेन उपवासो हि जायते ।' इति । पारणं च नैवेद्यतुलसीयुक्तेनान्नेन कर्तव्यम् । तदुक्तं स्कन्दपुराणे 'कृत्वा चैवोपवासं तु योऽश्नाति द्वादशीदिने । नैवेद्यं तुलसीमिश्रं हत्याकोटिनिवारणम् ।' इति । ततः श्रीहरिगुणवर्णनादिभिर्दिवसमतिवाह्य सन्ध्याहोमं विधाय देवतार्चनं कृत्वा महानीराजनादिमहोत्सवं च कृत्वा उक्तनियमवानीशं स्मरन्देवस्य पुरतः स्वप्यादिति । इति काम्यैकादशीव्रतानुष्ठानविधिः ।

नित्यव्रते तु शक्यविहितानुष्ठाननिषिद्धवर्जनसहितमनभ्यवहरणात्मकं प्रधानमात्रमवश्यं कृत्वा द्वादश्यां पूर्ववत्पारणं कुर्यात् । अशक्तस्यानुकल्पा उक्ता एवेति । अथैकादशीभेदा ब्रह्मवैवर्ते—' एकादशीव्रतं सर्वव्रतानां प्रवरं स्मृतम् । तदहं संप्रवक्ष्यामि त्वमाकर्णय सांप्रतम् । विशोधनमिदं पुंसां शुष्कार्द्रस्यांहसः परम् । तत्स्वरूपं श्रुतं तीर्थस्नानादप्यधिकं विदुः। एतत्सारमिदं तत्त्वमिदं सत्यमिदं व्रतम्।प्रायश्चित्तमिदं सम्यग्यदेकादश्युपोषणम् । विशेषस्तत्र विज्ञेयो द्वादशीषु द्विजोत्तम।भवन्त्यष्टौ परिख्यातास्ताः शृणुष्व यथोदिताः । उन्मीलिनी वञ्जुली च त्रिस्पृशा पक्षवर्धिनी । जया च विजया चैव जयन्ती पापनाशिनी । द्वादश्योऽष्टौ महापुण्याः सर्वपापहरा द्विज । तिथियोगेन जायन्ते चतस्रश्चापरास्तथा । नक्षत्रयोगात्प्रबलं पापं प्रशमयन्ति ताः । एकादशी तु संपूर्णा वर्धते पुनरेव सा । उन्मीलिनी भृगुश्रेष्ठ कथिता पापनाशिनी । द्वादश्यामुपवासस्तु द्वादश्यामेव पारणम् । वञ्जुलीनाम सा प्रोक्ता हत्यायुतविनाशिनी । अरुणोदय आद्या स्याद्द्वादशी सकलं दिनम् । अन्ते त्रयोदशी प्रातस्त्रिस्पृशा सा हरेः प्रिया । कुहूराके यदा वृद्धिं प्रयाते पक्षवर्धिनी।विहायैकादशीं तत्र द्वादशीं समुपोषयेत् ।' इदमुपवासासमर्थं द्वादशीफलार्थिनं प्रति श्रवणद्वादशीवदिति कालतत्त्वविवेचने।'पुष्यश्रवणपुष्याद्यरोहिणीसंयुतास्तु ताः। उपोषिताः समफला द्वादश्योऽष्टौ पृथक्पृथक्।' इति। वैष्णवैस्तु शुद्धैकादशीं त्यक्त्वा द्वादश्युपवास एव कार्यः। अत एव

हरिभक्तिविलासे ब्रह्मवैवर्ते—'तिथिःसशल्या परिवर्जनीया धर्मार्थकामैस्तु बुधैर्मनुष्यैः। विहीनशल्यापि विवर्जनीया यद्यग्रतो वृद्धिमुपैति पक्षः।' इति। नृसिंहपरिचर्यायाम्—'शुद्धिं वृद्धिमुपैति चेद्धरिदिनं सन्मानसोन्मीलिनी भद्रैषाप्यधिका न हर्यहरियं वञ्जुल्यभीष्टा सताम्। नन्दादित्यजयान्वये तु महती स्यात्रिस्पृशा द्वादशी पूर्वे पर्वणि निर्गते परदिने स्यात्पक्षवर्धिन्यपि। आदित्ये विजयान्वितेन विजया पुष्येण पापापहा रोहिण्या च जयन्तिकासु चतसृष्वृक्षं दिनादेर्भवेत्। पूर्णं वोनमथाधिकं हरिदिनाधिक्ये तु भान्ते भुजिर्ऋक्षाधिक्यसमन्वये तु दिनतः प्राग्भेऽपि पश्चाद्व्रतम्। हित्वा वैष्णवमस्तमत्त्वमितरेष्वृक्षेपु भद्रातिथेस्तत्रार्वागपि ऋक्षखण्डन इहाप्येऽह्नि व्रतं पारणम्। अन्यस्मिन्नधिका तिथिर्यदि भतो भान्ते भवृद्धौ तिथेरन्तः पारणकं भवेदिति महाष्टद्वादशीनिर्णयः।' अयमर्थः। दशमीवेधरहितैकादशी परदिने कियन्मात्रा दृश्यते न द्वादशी सोन्मीलिनी महाद्वादशी। द्वादशीमात्रवृद्धौ वञ्जुली। एकादशीद्वादशीत्रयोदशीयोगे त्रिस्पृशा षष्टिघटिका भूत्वा पूर्णा कुहूर्वा परदिने कियन्मात्रा वर्धते सा पक्षवर्धिनी। पुनर्वसुयोगे जया। श्रवणयोगे विजया। पुष्ययोगे पापनाशिनी। रोहिणीयोगे जयन्तिका। एतासु नक्षत्रप्रयुक्तासु चतसृषु द्वादशीदिने सूर्योदयादारभ्य नक्षत्रेण भवितव्यम्। श्रवणातिरिक्तनक्षत्रव्रतेषु द्वादश्या अस्तमयपर्यन्तता भवितव्यैवेति। निर्णयसिन्धौ—एकादशीद्वादश्योरेकत्वे तन्त्रेणोपवासः। पार्थक्ये तु शक्तस्योपवासद्वयम्। 'एका दशीमुपोष्यैव द्वादशीं समुपोपयेत्।' इति विष्णुरहस्यात्। अशक्तौ तु द्वादश्यामेवोपावसः। 'एवमेकादशीं त्यक्त्वा द्वादशीं समुपोषयेत्। पूर्ववासरजं पुण्यं सर्वं प्राप्नोत्यसंशयम्।' इति तत्रैवोक्तेः। हरिभक्तिविलासटीकायाम्—किं वा तास्वष्टसु मध्ये उन्मीलिन्यादीनामेव चतसृणां प्राधान्याभिप्रायेण तत्र तासामेव नित्यत्वं युक्तमिति। तस्यायमाशयः। 'जया च विजया चैव जयन्ती पापनाशिनी। सर्वपापहरा ह्येताः कर्तव्याः फलकाङ्क्षिभिः।' इति वाक्ये फलकाङ्क्षिभिरित्यधिकारिविशेषणेन फलेप्सून्प्रति चतसृणामेव नित्यत्वम्। 'द्वादश्योऽष्टौ समाख्याता याः पुराणविचक्षणैः। तासामेकापि च हता हन्ति पुण्यं पुराकृतम्।' अथवोन्मीलिन्यादीनां चतसृणां शुक्लपक्ष एवानुष्ठानं भवेदतोऽष्टानां ग्रहणेन कृष्णपक्षस्था अपि संगृह्यन्ते। अत एव स्कान्दे चतसृणामेवोपादानम्। जयादीनां चतसृणां तु काम्यत्वमेव। 'कर्तव्याः फलकाङ्क्षिभिः' इत्यादिवचनैः। किं चोन्मीलिन्यादीनां चतसृणामेव स्कान्दे—नित्यत्वमुक्तं,

जयादीनां नोक्तं, तस्मात्स्कान्दोक्तानामेव नित्यत्वम् । ननु तर्हि द्वादश्योऽष्टाविति वचनेऽष्टग्रहणं कथमिति चेत् । उच्यते । स्कान्दवचनानुरोधेन चतसृणां शुक्लकृष्णभेदेन पूर्वोक्तरीत्याऽष्टसंख्यात्वं ज्ञेयम् । शुक्लकृष्णभेदे बीजं तु—' अप्येति महता पुण्यप्रसारेण हरेर्दिनम् । शुक्लपक्षे भृगुश्रेष्ठ विशेषव्रतसंयुतम् ।' इत्यनेन शुक्लपक्षस्थानामेव ग्रहणं स्यात् अतः कृष्णपक्षस्थैकादश्युन्मीलिन्यादीनामपि ग्रहणार्थमष्टपदोपादानम्, वचनान्तरेण फलश्रवणमपि, अतस्तासां नित्यकाम्यत्वात्प्राधान्यमपीति ।

**इत्यष्टौ महाद्वादश्यः ।**

**अत्रैव प्रसङ्गादुन्मीलिनीप्रभृतीनां कृत्यमभिधीयते ।** एताश्चाष्टौ व्रतरूपेणानुष्ठेयाः । तत्र तावन्मार्गादिमासेषु केशवाद्या देवताः । ततश्च यस्मिन्मासे उन्मीलिनी तन्मासमेकं तदायुधं शक्त्या सौवर्णं देवं विधाय नवं लोहितं शुद्धोदकपूर्णपञ्चरत्नोपेतं गन्धाक्षतपुष्पमालालंकृतं कलशं सर्वतोभद्रमण्डलेऽवस्थाप्य तस्योपरि गोधूमैस्तण्डुलैर्वा पूर्णपात्रं निधाय तदुपरि पञ्चामृतस्नापितं देवमुपवेश्य ' एह्येहि भो जगन्नाथ वैकुंठ पुरुषोत्तम । परिवारगणोपेत लक्ष्म्या सह जगत्पते । ' इत्यावाह्य, मनोजूतिरिति प्रतिष्ठाप्य तन्नाममन्त्रेण गन्धपुष्पाणि च समर्प्य वस्त्रयुग्ममुपवीतं सोत्तरीयं छत्रं जलपात्रमुपानहौ सप्तधान्यानि च प्रदाय पुष्पैर्देवस्यावयवार्चनं कुर्यात् । पादयोः स्वनाम्ने नमः, जान्वोः विश्वरूपिणे नमः, गुह्ये कामपतये नमः, कट्यां पीतवाससे नमः, नाभ्यां ब्रह्मधृते नमः, उदरे विश्वयोनये नमः, हृदये ज्ञानगम्याय नमः, कण्ठे वैकुण्ठाय नमः, ललाटे उरगजाय नमः, बाह्वोः क्षत्रान्तकारिणे नमः, उत्तमाङ्गे सुरेशाय नमः, सर्वाङ्गेषु सर्वमूर्तये नमः । सुदर्शनाय नमः, इत्यादिभिश्चक्रादीनि पूजयेत् । ततः सजलकुसुमशंखे सूत्रवेष्टितं नारिकेलं कृत्वाऽर्घ्यं दद्यात् । तत्र मन्त्रः । ' देवदेव महादेव महापुरुषपूर्वज । सुब्रह्मण्य नमस्तेऽस्तु पुण्यकीर्तिविवर्धन । शोकमोहमहापापान्मामुद्धर महार्णवात् । व्रतेनानेन देवेश ये चान्ये मम पूर्वजाः । वियोनिं च गताश्चान्ये पापान्मृत्युवशं गताः । ये भवष्यन्ति येऽतीताः प्रेतलोकात्समुद्धर । आर्तस्य मम दीनस्य भक्तिरव्यभिचारिणी । दत्तमर्घ्यं मया तुभ्यं भक्त्या गृह्ण गदाधर ।' इति । ततो धूपनैवेद्यफलताम्बूलादीनि समर्प्य शक्त्याचार्यं च संपूज्य गीतनृत्यादिभिर्जागरणं कुर्यात् । ततः प्रातः कृताह्निको देवार्चनं कृत्वा व्रतोपस्करं व्रतसंपूर्तये गुरवे निवेद्य विप्रैर्बन्धुभिः सह पारणं कुर्यात् । ' उन्मीलिनीव्रतं कुर्याद्देवं यः स धनी भवेत् । दीर्घायुः पुत्रवान्विद्वान्न कर्ता नरकं व्रजेत् । ' इति पद्मपुराणे उन्मीलिनीव्रतम् ।

अथ वञ्जुलीव्रतम् । तत्र नियममन्त्रः । 'द्वादश्या तु निराहारः पारणं च परेऽहनि । धर्मार्थकाममोक्षार्थं करिष्ये वञ्जुलीव्रतम् ।' सौवर्णमाषस्य शक्त्या वा नारायणीं तनुं कृत्वा पूर्ववत्सालंकृतघटोपरि न्यस्ते सगोधूमे ताम्रपात्रे सुस्नाता-मुपवेश्यावाह्य प्रतिष्ठाप्य केतकिपत्रच्छत्रं वैष्णवंदण्डं चोपानहौ घृतपूर्णकांस्यपात्रं वस्त्र-युग्मंच समर्प्य गन्धपुष्पादिभिरभ्यर्च्याङ्गपूजां समाचरेत् । पादयोर्नारायणाय नमः । जानुनोः केशवाय नमः । ऊर्वोर्माधवाय नमः । गुह्ये कामाधिपतये नमः । कट्यां गोविन्दाय नमः । नाभौ माधवमूर्तये नमः । उदरे विष्णवे नमः । वक्षसि कौस्तुभ-धारिणे नमः । कण्ठे वैकुण्ठाय नमः । चक्षुषोः ज्योतीरूपिणे नमः । शिरसि सहस्र-शीर्ष्णे नमः । सर्वाङ्गेषु विश्वरूपिणे नमः । स्वनाम्ना आयुधादीनि संपूज्य पूर्ववत् । शंखस्थनारिकेलेनार्घ्यं दद्यात् । अर्घ्यमन्त्रः । 'नारायण जगन्नाथ पीताम्बर जना-र्दन । मामुद्धर महाविष्णो नरकाब्धेः सनातनात् । सप्तकल्पगतं पापं यत्कृतं मम पूर्वजैः । अनेनार्घ्यप्रदानेन सकलं तत्प्रणश्यतु । मुक्तिं प्रयान्तु पितरो मया सह जगत्पते । मया दत्तार्घ्यदानेन ये चान्ये पितरो गताः । व्रतं तु तत्समीपे ते. देवदेव जनार्दन । व्रतं संपूर्णतां यातु वञ्जुलीसंभवं मम । दशमीसंयुतं देव यत्कृतं द्वादशी-व्रतम् । अज्ञानादथ वा ज्ञानात्परिपूर्णं तदस्तु मे ।' ततो धूपदीपादीनि समर्प्य नीराज्य वस्त्रगोधूमधान्यैः शक्त्या वा गुरुं संपूज्य जागरणादिकं पूर्ववत्कुर्यात् । विशेषतोऽत्र सहस्रनामगीता भागवताध्यायान् पठेत् सैषा वञ्जुली अग्निष्टोमवाजपेयपौण्डरीक-सौत्रामण्यश्वमेधराजसूयेभ्य उत्तरोत्तरसहस्रगुणाधिकेभ्योऽतिरिच्यते । इति वञ्जुलीव्रतम् ।

अथ त्रिस्पृशाव्रतम् । हैमीं दामोदरमूर्तिं शक्त्या कृत्वा पूर्वोक्तकलशोपरि तण्डुलपूर्णपात्रे स्नातं देवं स्थापयित्वा वस्त्रयुग्मं वैणवं दण्डं सोत्तरीयमुपवीतं पादुके च समर्प्य गन्धपुष्पादिभिः संपूज्यावयवार्चनं कुर्यात् । पादयोर्दामोदराय नमः । जानुनोर्माधवाय नमः । गुह्ये कामपतये नमः । हृदये ज्ञानगम्याय नमः । नाभ्यां पद्मनाभाय नमः । उदरे विश्वमूर्तये नमः । कण्ठे श्रीचक्राय नमः । बाह्वोः सहस्रबाहवे नमः । चक्षुषोर्योगनायकाय नमः । ललाटे उरु-गाय नमः । शिरसि सहस्रशीर्ष्णे नमः । सर्वाङ्गेषु चारुरूपिणे नमः । स्वनाम्ना आयु-धानि संपूज्य पूर्ववदर्घ्यं दद्यात् । अर्घ्यमन्त्रः । 'स्मृतो हरसि पापानि सत्यं यदि जना-र्दन । दुःस्वप्नं दुर्निमित्तं च मनसा दुर्विचिन्तितम् । नारकं च भयं देव भयं दुर्गतिसंभ-

वम् । भयमन्यन्महादेव ऐहिकं पारलौकिकम् । सर्वं नाशय मे विष्णो गृहाणार्घ्यं जनार्दन । मम भक्तिः सदैवास्तु दामोदर तवोपरि ।' ततो धूपादीनि देवाय समर्प्य नीराज्य सजलं शंखं देवमूर्ध्नि भ्रामयित्वा शुभ्रवस्त्रमुद्रिकोपानच्छत्रकमण्डलुभोजनताम्बूलसप्तधान्यैराचार्यं संपूज्य जागरणं कृत्वा निशान्ते पुनरर्घ्यं दत्त्वा पूर्ववदाप्तभोजनान्तं कुर्यात्। अस्याश्च माहात्म्यं पद्मपुराणादवगन्तव्यम् । इति त्रिस्पृशाव्रतम् ।

अथ पक्षवर्धिनीव्रतम् । सौवर्णं देवं शक्त्या कृत्वा पूर्वोक्तकलशे गोधूमपूर्णे ताम्रपात्रे सुस्नापितमुपवेश्य वस्त्रयुग्मच्छत्रमुपानहौ निवेद्य सुचन्दनेनानुलिप्य पुष्पादिपूजां कृत्वाऽवयवार्चनं कुर्यात् । पादयोः पद्मनाभाय नमः । जानुनोर्योगमूर्तये नमः । ऊर्वोर्नृसिंहाय नमः । कट्यां ज्ञानप्रदाय नमः । उदरे विश्वनाभाय नमः । हृदये श्रीधराय नमः । कण्ठे सकौस्तुभाय नमः । बाह्वोः क्षत्रान्तकाय नमः । ललाटे व्योममूर्तये नमः । शिरसि सर्वरूपिणे नमः । सर्वाङ्गेषु दिव्यरूपिणे नमः । स्वनाम्ना आयुधानि संपूज्य पूर्ववदर्घ्यं दद्यात् । अर्घ्यमन्त्रः । 'संसारसिन्धुपोताय पापक्षयमहानल । नरकाग्निप्रशमनं जन्ममृत्युजरापह । मामुद्धर जगन्नाथ पतितं भवसागरात् । गृहाणार्घ्यं मया दत्तं पद्मनाभ नमोऽस्तु ते ।' इति।ततो धूपदीपादीनि समर्प्य कञ्चुकाद्युपवस्त्रैः यथाशक्ति दक्षिणाभोजनताम्बूलैश्च गुरुं संपूज्य हास्यप्रधानपुराणश्रवणप्रधानं जागरं कृत्वा पूर्ववद्व्रतं समापयेत् । इति पाद्मे पक्षवर्धिनीव्रतम् ।

जयाव्रतमुन्मीलिनीव्रतवदनुष्ठेयम् । विजयैव श्रावणद्वादशीत्यभिधीयते । तत्कृत्यं त्वग्रे वक्ष्यते ।

अथ जयन्तीव्रतम् । गुरुं प्रणम्य नियमं गृह्णीयात् । तत्र मन्त्रः । 'जयन्त्यां तु निराहारः श्वोभूते परमेश्वर । भोक्ष्यामि पुण्डरीकाक्ष शरणं चरणौ तव ।' इति । ततो मध्याह्ने धात्रीफलं शिरसि धृत्वा कृष्णतिलैः स्नायात् । ततःपूर्वोक्तकलशस्थापिते हैमे रौप्ये ताम्रे वैणवे वा तिलपूर्णे पात्रे हैमं देवकीस्तनं धयन्तं जननीमुखमवलोकयन्तं क्षीरादिस्नापितं देवं प्रस्थाप्यावाहयेत् । 'एहिएहि जगन्नाथ वैकुण्ठ पुरुषोत्तम । परिवारगणोपेत लक्ष्म्या सह जगत्पते ।' इत्यावाहनमन्त्रः ।मनोजूतिरिति प्रतिष्ठामन्त्रः 'अदिते देवमातस्त्वं सर्वपापप्रणाशिनी । अतस्त्वां पूजयिष्यामि भीतो भवभयादिह । पूजितासि यथा देवैः प्रयत्नात्त्वं वरानने । पूजिता मे तथा भक्त्या प्रसादं कुरु सुव्रते ।

यथा पुत्रं हरिं लब्ध्वा प्राप्ता ते निर्वृतिः परा । तामेव निर्वृतिं देहि सुपुत्रान्दर्शयस्व मे ।' इति । ततो देवमर्चयेत् । 'अवतारसहस्राणि करोषि मधुसूदन । तव संख्याव-ताराणां कश्चिज्जानाति नो भुवि । ब्रह्मादयोऽपि ये देवाः स्वरूपं न विदुस्तव । अतस्त्वां पूजयिष्यामि मातुरुत्सङ्गसंस्थितम् । वाञ्छितं कुरु मे देव दुष्कृतं देव नाशय। कुरुष्व मे दयां देव संसारार्तिभयापह ।' इति । एवं संपूज्यार्घ्यं दद्यात् । तत्र मन्त्रः । 'जातः कंसवधार्थाय भूभारोत्तारणाय च । देवतानां हितार्थाय धर्मसंस्थापनाय च । कौर-वाणां विनाशाय दैत्यानां निधनाय च । गृहाणार्घ्यं मया दत्तं देवकीसहितो हरे ।' इति । ततो धूपदीपपकान्नाद्यनेकनैवेद्यकूष्माण्डादिफलताम्बूलानि समर्प्य कृष्णबाल-लीलावर्णनपुराणाकर्णनप्रधानं जागरं कृत्वा प्रातर्नित्यकर्म निर्वर्त्याचार्याय देवं समर्प्य वस्त्रकञ्चुकोष्णीषमुद्रिकादक्षिणां शक्त्या दत्त्वा ब्राह्मणान्भोजयित्वा पूर्ववद्व्रतं समापये-दिति । इति स्कान्दे जयन्तीमहाद्वादशीव्रतम् । पापनाशिन्येवामर्दकीत्युच्यते । तत्कृत्यं फाल्गुनशुक्लद्वादशीप्रकरणे वक्ष्यते इत्यष्टौ भेदाः । अथैकादश्यादिधर्मसंदेहे येषां वचनमुपादेयं ते प्रदर्श्यन्ते विष्णुरहस्ये—ब्रह्मोवाच—'अर्चयन्ति महाविष्णुं मनो-वाक्कायकर्मभिः । तेषां हि वचनं ग्राह्यं ते हि विष्णुसमा मताः ।' कूर्मपुराणे—भग-वानुवाच—'संपृष्टा वैष्णवान्विप्रान्विष्णुभक्तिविशारदान् । चीर्णव्रतान्सदाचारांस्त-दुक्तं यत्नतश्चरेत् ।' इति । अन्येषां वचनं वर्जनीयत्वेनोक्तं विष्णुरहस्ये—'येषां न कारणं वेदा न विप्रा न जनार्दनः । तंत्राणि धर्मशास्त्राणि प्रमाणं कारणं मुने ।' पद्मपुराणे—'वाचं व्याकुरुते नैव मीमांसा नैव चाध्वराः । शुष्कतर्करता ये वै तेषां वाक्यं विवर्जयेत् ।' इति ।

अथैकादशीव्रतविशेषाः तत्रादौ चैत्रकृष्णैकादशीव्रतकथोच्यते । युधि-ष्ठिर उवाच । 'फाल्गुनस्य सिते पक्षे श्रुता चामर्दकी मया । चैत्रस्य कृष्णपक्षे तु किंना-मैकादशी भवेत् ।' कृष्ण उवाच—'शृणु राजेन्द्र वक्ष्यामि आख्यानं पापनाशनम् । यल्लोमशोऽब्रवीत्पृष्टो मांधात्रा चक्रवर्तिना ।' मान्धातोवाच—'लोकानां चैव सर्वेषां हितार्थाय तथैव च । पृच्छामि भगवंश्चैव लोमशं मुनिसत्तमम् । चैत्रप्रथमपक्षे तु का वा एकादशी भवेत् । तस्या अपि च माहात्म्यं कथयस्व प्रसादतः ।' लोमश उवाच—'श्रूयतां राजशार्दूल कामदां सिद्धिदां तथा । कथां चैव विचित्रां च पापहां सर्वदायि-नीम् । पुरा चैव रथोद्देशे अप्सरोगणसेविते । वसन्तसमये प्राप्ते षट्पदाकुलिते वने । गन्धर्वकन्यास्तत्रैव रमन्ति सह किंनरैः । पाकशासनमुख्याश्च क्रीडन्ति च दिवौ-

कसः। एको मुनिवरस्तत्र मेधावी नाम नामतः । संनियम्येन्द्रियग्रामं तपस्ते-पेऽन्यदुष्करम् । अप्सरास्तं मुनिवरं मोहनायोपचक्रमे । मञ्जुघोषेति वि-ख्याता भावं तस्य विचिन्वती। क्रोशमात्रं स्थिता तस्य भयादाश्रमसंनिधौ। गायन्ती मधुरं साधु पीडयन्ती विपञ्चिकाम्। गायन्तीं तामथालोक्य पुष्पचन्दनवेष्टिताम्। सकामो विजयाकाङ्क्षी शिवभक्तं मुनीश्वरम्। तस्याः शरीरसंसर्गाच्छिववैरमनुस्मरन्। तुल्यभ्रुवौ धनुःकोटिगुणं कृत्वा कटाक्षकम्। मार्गणे नयने कृत्वा पक्षयुक्ते यथाक्रमम्। कुचौ कृत्वा पुटकुटी विजयायोपसंस्थितः। मञ्जुघोषाऽभवत्तत्र कामस्येव वरूथिनी। मेधाविनं मुनिं दृष्ट्वा सापि कामेन पीडिता। यौवनोद्भिन्नदेहोऽसौ मेधाव्यतिविराजते। स तेन शुशुभे धीरः साक्षात्स्मर इवापरः। मेधावी वसति स्मासौ च्यवनस्याश्रमे शुभे। मञ्जुघोषा स्थिता तत्र दृष्ट्वा तं मुनिपुङ्गवम्। मदनस्य वशं प्राप्ता मन्दं मन्दमगायत। रणद्वलयसंयुक्ता शिञ्जन्नूपुरमेखला । गायन्तीं तामथोद्भूतां विलोक्य मुनिपुङ्गवः। मदनेन ससैन्येन नीतो मोहवशं बलात्। मञ्जुघोषा तु संगम्य मुनिं दृष्ट्वा तथावि-धम्। हावभावकटाक्षैस्तं मोहयामास चाङ्गना। अधः संस्थाप्य वीणां सा सस्वजे तं मुनीश्वरम्। वल्लीवाकलिता वृक्षं वातवेगन वेपिता। सोऽपि रेमे तया सार्धं मेधावी मुनिपुङ्गवः। तस्मिन्नेव वनोद्देशे दृष्ट्वा तद्देहमुत्तमम्। शिवतत्त्वं गतं तस्य कामतत्त्ववशं गतः। न निशां न दिनं सोऽपि रमञ्जानाति कामुकः। बहुलश्च गतः कालो मुनेरा-चारलोपकः। मञ्जुघोषा देवलोकगमनायोपचक्रमे। गच्छन्ती प्रत्युवाचाथ रमन्तं मुनिपुङ्गवम्। आदेशो दीयतां ब्रह्मन्स्वधामगमनाय मे।' मेधाव्युवाच—'अद्यैव त्वं समायाता प्रदोषादौ वराप्सराः।यावत्प्रभातसंध्या स्यात्तावत्तिष्ठ ममान्तिके।इति श्रुत्वा मुनेर्वाक्यं भयभीता बभूव सा।पुनर्वै रमयामास तमृषिमृषिसत्तमम्।मुनिशापभयाद्भीता बहुलान्परिवत्सरान्।वर्षाणां पञ्चपञ्चाशन्नवमासदिनत्रयम्।सा रेमे मुनिना तेन निशार्ध-मेव चाभवत्।सा च तं प्रत्युवाचाथ तस्मिन्काले गते मुनिम्।आदेशो दीयतां ब्रह्मन्ग-न्तव्यं स्वगृहं मया ।' मेधाव्युवाच—'प्रातःकालोऽधुनैवास्ते श्रूयतां वचनं मम। कुर्वे संध्यां गतां यावत्तावत्त्वं वै स्थिरा भव। इति वाक्यं मुनेः श्रुत्वा भयानन्दसमा-कुला। स्मितं कृत्वा तु सा किंचित्प्रत्युवाच सुविस्मिता।' अप्सरा उवाच—'किय-त्प्रमाणं विप्रेन्द्र तव संध्यागता मुने। मयि प्रसादं कृत्वा तु गतः कालो विचार्य-ताम्। तस्या इति वचः श्रुत्वा विस्मयोत्फुल्ललोचनः। संध्यां च हृदि विप्रेन्द्रः प्रमाणमकरोत्तदा। समानां सप्तपञ्चाशद्गतास्तस्य तया सह। चुक्रोध सततं तस्यै

ज्वालामाली बभूव ह। नेत्राभ्यां तु स्फुलिङ्गान्स मुञ्चमानोऽतिकोपनः। कालरूपां तु तां दृष्ट्वा तपसः क्षयकारिणीम्। दुःखार्जितं मम तपो नीतं तदनया क्षयम्। संकम्पोष्ठोमुनिस्तत्र प्रत्युवाचाकुलेन्द्रियः। स तां शशाप मेधावी त्वं पिशाची भवेति च। धिक्त्वां पापे दुराचारे कुलटे पातकप्रिये। तस्य शापेन सा दग्धा विनयावनता स्थिता। प्रसादं कुरु विप्रेन्द्र शापस्यानुग्रहं कुरु। सतां संगतिरेवं च वाक्यैः सप्तभिरीरिता। त्वया सह मम ब्रह्मञ्जातास्तु बहवः समाः। एतस्मात्कारणात्स्वामिन्प्रसादं कुरु सुव्रत।' मुनिरुवाच—'शृणु मे वचनं भद्रे शापानुग्रहकारणम्। किं करोमि त्वया पापे क्षयं नीतं महत्तपः। चैत्रस्य कृष्णपक्षे या भवत्येकादशी शुभा। पापमोचनिका नाम सर्वपापक्षयंकरी। तस्यां व्रते कृते सुभ्रु पिशाचत्वं प्रहास्यसि। इत्युक्त्वा स च मेधावी जगाम पितुराश्रमम्। तमागतं समालोक्य च्यवनः प्रत्युवाच ह। किमेतद्विहितं पुत्र त्वया पुण्यक्षयः कृतः।' मेधाव्युवाच— 'पापं कृतं महत्तात रमिता अप्सरा मया। प्रायश्चित्तं ब्रूहि तात येन पापक्षयो भवेत्।' च्यवन उवाच— 'चैत्रस्य चासिते पक्षे नाम्ना वै पापमोचनी। अस्ते व्रते कृते पुत्र पापराशिः क्षयं व्रजेत्। इति श्रुत्वा पितुर्वाक्यं कृतं तेन व्रतोत्तमम्। गतं पापं क्षयं तस्य पुण्यवान्स बभूव ह। साप्येवं मञ्जुघोषा च कृत्वा तद्व्रतमुत्तमम्। पिशाचत्वविनिर्मुक्ता पापमोचनिकाव्रतात्। दिव्यरूपधरा सापि गता नाकं वराप्सराः।' लोमश उवाच— 'पापमोचनिकां राजन्नैव कुर्वन्ति ये नराः। तेषां पापं च यत्किंचित्तत्सर्वं क्षयतां व्रजेत्। पठनाच्छ्रवणाद्राजन्गोसहस्रफलप्रदा। ब्रह्महा हेमहारी च सुरापो गुरुतल्पगः। व्रतस्य चास्य करणात्पापमुक्ता भवन्ति ते। बहुपुण्यप्रदं ह्येतत्कारणाद्व्रतमुत्तमम्।' इति भविष्योत्तरपुराणे चैत्रकृष्णपक्षे पापमोचनिकामाहात्म्यं समाप्तम्।

अथ चैत्रशुक्लैकादश्यां सलक्ष्मीकस्य वासुदेवस्यान्दोलनं कार्यम्। तदुक्तं निर्णयामृते ब्रह्मपुराणे—'चैत्रमासस्य शुक्लायामेकादश्यां तु वैष्णवैः। आन्दोलनीयो देवेशः सलक्ष्मीको महोत्सवैः।' इति। नृसिंहपरिचर्यायामपि गारुडे—'चैत्रे मासि सिते पक्षे दक्षिणाभिमुखं हरिम्। मासमादौ समभ्यर्च्य मासमान्दोलयेत्कलौ।' दोलारूढश्च भगवानवश्यं सालोक्यार्थिभिः पापक्षयार्थिभिश्चावलोकनीयः। तथा चोक्तं तत्रैव—'दोलासंस्थं च ये कृष्णं पश्यन्ति मधुमाधवे। क्रीडन्ति विष्णुना सार्धं वैकुण्ठे देववन्दिताः। दोलारूढं च पश्यन्ति कृष्णं कलिमलापहम्। अपराधसहस्रैस्तु

मुक्तास्ते घूर्णने कृते।' दोलारूढस्य पुरतो जागरणं कुर्यात् । 'दोलास्थितस्य कृष्णस्य येऽग्रे कुर्वन्ति जागरम् । सर्वपुण्यफलावाप्तिर्निमिषैकेन जायते।' इति तत्रैवोक्तत्वात् । अस्यामेवापराह्णे वास्तुपूजा कार्या । तदुक्तं निर्णयामृते ब्रह्मपुराणे—'तत्रापराह्णे वास्तुश्च वंश्यानां वंशधारकः । अर्घ्यैर्माल्यैश्च वस्त्रैश्च पूज्यो रङ्गैः सुचित्रितैः।' इति । अस्यामेव स्त्रीभी रुक्मिणीपूजा कार्या । तदुक्तं तत्रैव—'एकादश्यां ततः स्त्रीभिर्देवी पूज्या च रुक्मिणी । पुष्पालंकारधूपान्नवस्त्रब्राह्मणतर्पणैः।' इति । अस्यामेवैकादश्या मदनोत्सवः कार्यः।तदुक्तं मदनरत्ने निर्णयामृते च ब्रह्मपुराणे-'चैत्रे मास्यथ शुक्लायाम्' इत्युपक्रम्य 'दमनेनार्चयित्वा च रात्रौ जागरणं चरेत् ।' इति । नृसिंहपरिचर्यायामप्येवम् । रामार्चनचन्द्रिकायां तु— द्वादश्यां दमनोत्सवः कार्य इत्युक्तम् । 'द्वादश्यां चैत्रमासस्य शुक्लायां दमनोत्सवः । बौधायनादिभिः प्रोक्तः कर्तव्यः प्रतिवत्सरम् । तत्र स्यात्स्वीयतिथिषु वह्न्यादेर्दमनार्पणम् ।' ते च प्रतिपत्प्रकरणे द्रष्टव्याः । तत्र देवताविशेषेण तिथिविशेषो ज्योतिर्निबन्धे भविष्योत्तरे—'चतुर्थी गणनाथस्य दुर्गाया नवमी तथा । विष्णोस्तु नवमी पुण्या तथैव द्वादशी शुभा । त्रयोदशीश्वरस्यैव श्रेष्ठारण्यनिवासिनः । भैरवस्यैकवीराया ज्ञेया भूता फलप्रदा । पूर्णिमा सर्वदेवानां श्रेष्ठा दमनकार्पणे।' इति । अथ प्रयोगः । प्रातः स्नानादि निर्वर्त्य प्रार्थनां कुर्यात् ।'क्रियालोपविघातार्थं यत्त्वया विहितं विभो । न मे विघ्नो भवेदत्र कुरु नाथ दयां मयि । सर्वथा सर्वदा विष्णो मम त्वं परमा गतिः । उपवासेन त्वां देव तोषयामि जगत्पते । कामक्रोधादयो ह्येते न मे स्युर्व्रतघातकाः । अद्य प्रभृति देवेश यावद्वैशेषिकं दिनम् । तावद्रक्षा त्वया कार्या सर्वस्यास्य नमोऽस्तु ते ।' इति 'एवं विज्ञाप्य देवेशं गुरुं नत्वा प्रपूज्य च । ततः संपूज्य विधिवद्देवेशं प्रयतः शुचिः । गच्छेद्दमनकारण्यमेकादश्यां सुशोभितम् । क्रयेण स्वायतीकृत्य पूजयेच्चन्दनादिना ।' स्वीयं चेति क्वचित्पाठः । 'नेष्यामि रामपूजार्थमिति संप्रार्थ्य तं नमेत् । सांवत्सारिकपूजायाः पारिपूर्णत्वसिद्धये। दमन त्वं समायाहि क्षमस्व च नमोऽस्तु ते । विष्णुकार्ये समुच्छिद्य नेतव्योऽसि शिवाज्ञया।' इति दमनमामन्त्रयेत् । अन्यदेवतापूजने तन्नाम ऊहनीयम् । उत्पाद्य पञ्चगव्येन प्रोक्ष्य प्रक्षाल्य वारिणा ।' ततोऽशोकमूले देवाग्रे वा स्थण्डिलं कृत्वा तदुपरि फलेष्वक्षतपुञ्जेषु वा अशोकवृक्षकालवसन्तकामान्क्रमेण प्राणप्रतिष्ठापूर्वमन्त्रैः प्रपूजयेत् । तत्राशोकपूजामन्त्रः—'अशोकाय नमस्तुभ्यं कामस्त्रीशोकनाशन । शोकार्तिं हर मे नित्यमानन्दं जनयस्व मे।' इति । कालपूजामन्त्रः—'त्रुट्यादिकालपर्यन्तं

कालरूपो महाबलः। कलते चैव यः सर्वं तस्मै कालात्मने नमः।' इति। वसन्तपूजा-मन्त्रः—'वसन्ताय नमस्तुभ्यं वृक्षगुल्मलताश्रय। सहस्रमुखसंवाह कामरूप नमोऽस्तु ते।' इति। तदनन्तरं वसन्तपुष्पैर्वक्ष्यमाणमन्त्रेण कामतादात्म्याध्यवसितं दमनं पूजयेत्। स च 'कामभस्मसमुद्भूत रतिबाष्पपरिप्लुत। ऋषिगन्धर्वदेवादिविमोहन नमोऽस्तु ते। संगृह्य दमनं पुण्यं पूजयेन्मनुनाऽमुना। नमोऽस्तु पुष्पबाणाय जगदाह्लादकारिणे। मन्मथाय जगन्नेत्रे रतिप्रीतिप्रियाय ते।' ततोऽनेनैव मन्त्रेण दमनमुपस्थाय 'कामभस्मसमुद्भूत रतिबाष्पपरिप्लुत। ऋषिगन्धर्वदेवादिविमोहक नमोऽस्तु ते।' इति संगृह्य दमनं पूजयेन्मनुना नमोऽस्तु इति पूर्वोक्तेन। दमनं संपूज्य तस्मिन्दमनेऽरुणवर्णं रक्तवस्त्राभरणमाल्यानुलेपनं वामदक्षिणयो रतिप्रीतियुतं पाशाङ्कुशपुष्पबाणेक्षुधनुर्धरं कामदेवं ध्यात्वा प्राणप्रतिष्ठापूर्वकम्। 'ॐ क्लीं कामदेवाय नमः' इति मन्त्रेण गन्धादिपञ्चोपचारैः संपूज्य कामदेवस्य वामतो रतिं गौरवर्णां रक्तवस्त्रपरीधाना सर्वाभरणभूषितां पद्मद्वयकरां ध्यात्वा "श्रीं श्रीं श्रीं क्रों रत्यै नमः" इति मन्त्रेण गन्धादिभिः संपूज्य कामस्य दक्षिणभागे प्रीतिं श्यामवर्णां सर्वाभरणभूषितां रक्तवस्त्रपरीधानां ताम्बूलकरां ध्यात्वा "श्रीं श्रीं श्रीं क्रों प्रीत्यै नमः" इति मन्त्रेण पञ्चोपचारैः संपूज्य पूर्वोक्तनमोस्तु पुष्पबाणायेत्यनेन कामप्रार्थनां कुर्यात्। ततो दमनस्य भागद्वयं कृत्वा एकस्मिन्भागे "ॐ कामाय नमः" इति मन्त्रेण मदनं संपूज्य द्वितीयभागे दमनं संपूज्य नवे पटले निधाय धौतेन वाससाच्छाद्य घण्टापुरुषसूक्तादिस्वनैः स्वगृहमानयेत्। इति गृहानयनम्। ततो रामाग्रे पुरतः स्थण्डिलमुपलिप्य तत्राष्टदलं कृत्वा सितकृष्णपीतरक्तवर्णैः संपूर्य तद्बहिश्चतुष्कोणं कृत्वा पीतवर्णेन संपूर्य तद्बहिर्वर्तुलमण्डलत्रयं विधाय श्वेतरक्तपीतैः संपूर्य तद्बहिश्चतुष्कोणं निर्माय रक्तवर्णेन संपूरयेत्। तदेतत्सार्वकामिकमण्डलम्। यद्वा सर्वतोभद्रमुद्धरेत्। उपरि पञ्चवर्णं वितानं कुर्यात्। ततो देवस्य महापूजनं कृत्वा पूर्वोक्तमण्डले कलशं संस्थाप्य तदुपरि दमनाधिवासनं कुर्यात्। तत्रमन्त्रः। 'पूजार्थं देवदेवस्य विष्णोर्लक्ष्मीपतेः प्रभोः। दमन त्वमिहागच्छ सांनिध्यं कुरु ते नमः।' ततो दमनकपूजनं कृत्वा "क्लीं कामदेवाय नमः" इति संपूज्य। "श्रीं श्रीं श्रीं क्रों रत्यै नमः" इति मन्त्रेण रतिम्। "श्रीं श्रीं श्रीं क्रों प्रीत्यै नमः" इति मन्त्रेण पञ्चोपचारैः प्रीतिं च गन्धादिभिः संपूज्य षडङ्गपूजनं कुर्यात्। क्लां हृदयाय नमः। क्लीं शिरसे स्वाहा। क्लूं शिखायै वषट्। क्लैं कवचाय हुम्। क्लौं नेत्राभ्यां वौषट्। क्लः अस्त्राय फट्। इति। ततोऽष्टदलेषु देवाग्र-

आगमारभ्य प्रादक्षिण्येन भस्मशरीराय नमः, अनङ्गाय नमः, मन्मथाय०, कामाय न०, क्लीं वसन्तसखाय०, स्मराय०, इक्षुचापाय०, पुष्पास्त्राय नम इति पूजयित्वा चतुरस्रे लोकपालांस्तदस्त्राणि च संपूज्य पुनः कामदेवं तन्मन्त्रेणाभ्यर्च्य प्रणम्य "ॐ तत्पुरुषाय विद्महे कामदेवाय धीमहि। तन्नोऽनङ्गः प्रचोदयात्" इति कामगायत्र्याऽष्टोत्तरशतं दमनकमभिमन्त्र्य धूपदीपादीनुपचारानुपकल्प्य हृदयमन्त्रेण पुष्पाञ्जलिं दत्त्वा ॐ नमोऽस्तु पुष्पबाणायेत्यनेन कामदेवनमस्कारं कुर्यात्। ततः स्वेष्टदेवं संपूज्य हस्ते पुष्पाञ्जलिं गृहीत्वा आमन्त्रयेत्। 'आमन्त्रितोऽसि देवेश पुराणपुरुषोत्तम। प्रातस्त्वां पूजयिष्यामि सांनिध्यं कुरु केशव। क्षीरोदधिमहानागशय्यावस्थितविग्रह। प्रातस्त्वां पूजयिष्यामि संनिधौ भव ते नमः। निवेदयाम्यहं तुभ्यं प्रातर्दमनकं शुभम्। सर्वथा सर्वदा विष्णो नमस्तेऽस्तु प्रसीद मे। इत्थमामन्त्र्य देवेशं दत्त्वा पुष्पाञ्जलिं पुनः। पूजितं तद्दमनकं कुम्भस्योपरि संस्थितम्। अस्त्रेण सर्वतो रक्षेत्कवचेनावगुण्ठयेत्। रक्षेद्वा चक्रमन्त्रेण नृहरेर्मनुनाऽथ वा।' नृसिंहमन्त्रश्च 'उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम्। नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम्।' 'ब्राह्मणेभ्यो नमस्कृत्य गुरुपादौ प्रणम्य च। गीतमङ्गलनिर्घोषैः कुर्याज्जागरणं ततः।' सद्योधिवासे जागरणं नास्ति। 'ततो जागरणं कुर्यात्सद्योजागरणं न हि।' इति दक्षिणामूर्तिसंहितावचनात्। इति दमनाधिवासः। अथाधिवासोत्तरदिनकृत्यम्। 'प्रातर्नत्वाऽथ देवेशं कुर्यात्स्नानं यथाविधि। नित्यपूजां ततः कृत्वा कुर्यान्नैमित्तिकीं ततः। दमनं दूर्वया युक्तं गन्धाक्षतसमान्वितम्। जयमङ्गलनिर्घोषैर्देवदेवे समर्पयेत्। तत्र मन्त्रः।' देवदेव जगन्नाथ वाञ्छितार्थप्रदायक। कृत्स्नान्पूरय मे कामान्पद्मकामेश्वरि प्रिये। इदं दमनकं देव गृहाण मदनुग्रहात्। इमां सांवत्सरीं पूजां गृहाण मदनुग्रहात्। मूलसंपुटितो ह्येष दमनारोपणे मनुः।' नृसिंहपरिचर्यायां तु-ततो दमनकमञ्जरीर्गृहीत्वा हृदयेनाभिमन्त्र्य 'सर्वरत्नमयीं देव सर्वगन्धमयीं शिवाम्। गृहाण देवदेवेश नमस्तेऽस्तु नृकेसरिन्।' इति मन्त्रेण देवस्य शिरस्यारोपयेत्। रमापते इत्यूहः। ततस्तत्त्वपरिभावनया दमनकमञ्जरीमयीं वनमालां कृत्वा हृदयमन्त्रेणाभिमन्त्र्य 'सर्वरत्नमयीं देव दामनीं वनमालिकाम्। गृहाण देव पूजार्थं सर्वगन्धमयीं विभो।' इति जप्त्वा मूलमन्त्रेण देवस्य मुकुटे समर्प्य अङ्गदेवताभ्यः स्वस्वमन्त्रेण समर्पयेदित्युक्तम्। 'एवं समर्प्य देवाय प्रार्थयेद्विष्णुमव्ययम्। मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः। इयं सांवत्सरी पूजा तवास्तु गरुड-

ध्वज । वनमालां यथा देव कौस्तुभं वहसे हृदि । तद्वद्दामनकीं मालां पूजां च हृदये वह । जानताऽजानता वापि न कृतं यत्तवार्चनम् ।तत्सर्वं पूर्णतां यातु त्वत्प्रसादाद्रमापते । जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन । नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज । मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन । यत्पूजितं मया राम परिपूर्णं तदस्तु मे ।एवं संप्रार्थ्य देवेशं निपतेद्दण्डवद्भुवि । अथ संपूजयेद्भक्त्या गुरुं वस्त्रादिकाञ्चनैः ।स्वयं धृत्वाभ्यर्च्य बन्धून्विप्रान्संपूज्य पारयेत् । स्यादश्वमेधजं पुण्यमित्याह भगवाञ्छिवः । पारणाहे न लभ्येत द्वादशी घटिकापि चेत् । तदा त्रयोदशी ग्राह्या पवित्रदमनार्पणे।' नित्यं चेदम् । 'ऊर्जे व्रतं मधौ दोला श्रावणे तन्तुपूजनम् ।चैत्रे च दमनारोपमकुर्वाणो व्रजत्यधः ।' इति पाद्मात् । 'माधवे दमनारोपःस्यान्मधौ विस्मृतो यदि । वैशाखे श्रावणे भाद्रे कर्तव्यं वा तदर्पणम् ।'इति वचनेन गौणकाले तद्विधानात् ।दक्षिणामूर्तिसंहितायामपि—'चैत्रादयस्त्रयो मासाः पक्षौ सितसितेतरौ । एतेषां पूर्वपूर्वस्तु कालः सर्वोत्तमो भवेत् ।' इति । 'श्रावणावधिशुक्रास्ते कर्तव्यमिति नारदः ।'इति पाठान्तरम् । इदं च मलमासे न कार्यम् । 'उपाकर्मोत्सर्जने च पवित्रदमनार्पणम् ।' इति । कालादर्शे—मलमासवर्ज्येषु परिगणनात् । 'उपाकर्म च हव्यं च कव्यं पर्वोत्सवं तथा । उत्तरे नियतं कुर्यात्पूर्वे तन्निष्फलं भवेत् ।' इति माधवीये प्रजापतिवचनाच्च । शुक्रास्तादौ तु कार्यमेव । पूर्वोक्तवचनात् । 'उपाकर्मोत्सर्जनं च पवित्रदमनार्पणम् । ईशानस्य बलिं विष्णोः शयनं परिवर्तनम् । कुर्याच्छुक्रस्य च गुरोर्मौढ्येपीति विनिश्चयः ।' इति ज्योतिर्निबन्धे गार्ग्यवचनात् । इति दमनकारोपणविधिः । अथ संक्षिप्तदमनकपूजनम् । प्रातः स्नात्वा नित्यपूजान्तं निर्वर्त्य दमनकारामं गत्वा क्रयेण तमादाय चन्दनादिना तत्रैव पूजयेत् । श्रीरामपूजार्थं त्वां नेष्यामीति प्रणमेत् । यथादैवतमन्यत्र ऊहः । ततः पञ्चगव्येनाभिषिच्य शुद्धोदकेन प्रक्षाल्य अशोकमूलस्थण्डिले केवलस्थण्डिले वा स्थापयित्वा तस्मिन्दमनके अशोककालवसन्तकामान्गन्धादिभिः संपूजयेत् । शुचौ देशे काममात्रं पूजयेदित्यन्ये ।' अशोकाय नमस्तुभ्यं कामस्त्रीशोकनाशन । शोकार्तिं हर मे नित्यमानन्दं जनयस्व मे ।' इत्यशोकम् । 'त्रुट्यादिकालपर्यन्तः कालरूपो महाबलः ।कलते चैव यः सर्वं तस्मै कालात्मने नमः ।' इति कालम् । 'वसन्ताय नमस्तुभ्यं वृक्षगुल्मलताप्रिय । सहस्रमुखसंवाह कालरूप नमोऽस्तु ते ।' इति वसन्तम् । नमोऽस्तु पुष्पबाणाय जगदाह्लादकारिणे । मन्मथाय जगन्नेत्रे रतिप्रीतिप्रदाय ते ।' इति कामम् । इति चतुरो देवांस्तत्र संपूज्य 'काम-

भस्मसमुद्भूत रतिबाष्पपरिप्लुत । ऋषिगन्धर्वदेवादिविमोहक नमोऽस्तु ते ।' इति मदनमुपातिष्ठेत् । ततः "ॐ कामाय नमः" इति मन्त्रेण सपरिवारमन्मथरूपिणं दमनं गन्धादिभिः तत एव समुद्धृतदमनेन च पूजयेत् । ततो धौतवाससाच्छाद्य वैणवे पटले निधाय मङ्गलगीतपुरुषसूक्तादिभिर्वेदघोषेण स्वगृहमानयेत् । ततो रात्रौ देवं संपूज्य तदनुज्ञया दमनाधिवासनं कुर्यात् । तदित्थम् । देवस्य पुरतः स्थण्डिलमुपलिप्य तत्राष्टदलं कमलं कृत्वा सितपीतकृष्णरक्तवर्णैः संपूर्य, तद्बहिश्चतुष्कोणं विधाय पीतवर्णेन संपूर्य; तद्बहिर्वर्तुलमण्डलत्रयं विधाय श्वेतरक्तपीतैः संपूर्य, तद्बहिश्चतुष्कोणं विधाय रक्तवर्णेन पूरयेत् सर्वतोभद्रं वा संपादयेत्। तदुपरि पञ्चवर्णकं वितानं कुर्यात् । तत उक्तमण्डले शुद्धोदकपूर्णं हेमरत्नफलयुक्तं कुम्भं निधाय तस्मिन्दमनपटलं संस्थाप्य 'पूजार्थं देवदेवस्य विष्णोर्लक्ष्मीपतेः प्रभोः। दमन त्वमिहागच्छ सांनिध्यं कुरु ते नमः ।' ततो दमनकपूजनं कृत्वा " क्लीं कामदेवाय नमः " इति संपूज्य " श्रीं श्रीं श्रीं क्रौं रत्यै नमः " इति रतिम्. " श्रीं श्रीं श्रीं क्रौं प्रीत्यै नमः " इति मन्त्रेण पञ्चोपचारैः प्रीतिं च गन्धादिभिः संपूज्य षडङ्गपूजनं कुर्यात् । क्लां हृदयाय नमः । क्लीं शिरसे स्वाहा । क्लूं शिखायै वषट् । क्लैं कवचाय हुम् । क्लौं नेत्राभ्यां वषट् । क्लः अस्त्राय फट् । इति । ततोऽष्टदलेषु देवाग्रमारभ्य प्रादक्षिण्येन । भस्मशरीराय नमः । अनङ्गाय नमः । मन्मथाय नमः । कामाय नमः । वसन्तसखाय नमः । स्मराय नमः । इक्षुचापाय नमः । कल्पपुष्पास्त्राय नमः । इति पूजयित्वा चतुरस्रे लोकपालांस्तदस्त्राणि च संपूज्य "तत्पुरुषाय विद्महे कामदेवाय धीमहि। तन्नोऽनङ्गः प्रचोदयात्" इति कामगायत्र्या मदनमष्टोत्तरशतमभिमन्त्र्य गन्धादिभिः संपूज्य हृदयमन्त्रेण पुष्पाञ्जलिं निवेद्य 'नमोऽस्तु पुष्पबाणाय जगदाह्लादकारिणे । मन्मथाय जगन्नेत्रे रतिप्रीतिप्रदाय ते ।' इति नमस्कुर्यात् । 'क्षीरोदधिमहानागशय्यावस्थितविग्रह । प्रातस्त्वां पूजयिष्यामि संनिधौ भव ते नमः ।' इति देवं संप्रार्थ्य पुष्पाञ्जलिं दत्त्वा दमनमन्त्रेण सर्वतो रक्षेत् । कवचेनावगुण्ठयेत् । ततो गीतादिना रात्रिमतिवाहयेदित्यधिवासनं प्रातर्नित्यपूजां विधाय पुनरनेकोपचारैः संपूज्य सदूर्वागन्धाक्षतदमनमञ्जरीं मूलेनाभिमन्त्र्य कराभ्यां गृहीत्वा जय जय श्रीरामचन्द्रेत्युच्चार्य मूलं पठित्वा 'देव देव जगन्नाथ वाञ्छितार्थप्रदायक । हृत्स्थान्पूरय मे विष्णो कामान्कामेश्वरप्रिय । इदं दमनकं देवं गृहाण मदनुग्रहात् । इमां

सांवत्सरीं पूजां भगवन्परिपूरय।' इति जप्त्वा मूलेन भगवन्तमर्पयेत् ततो यथाशोभं दमनकमारोप्य भगवन्तं प्रार्थयेत् । 'मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः । इयं सांवत्सरी पूजा तवास्तु गरुडध्वज । वनमालां यथा देव कौस्तुभं वहसे हृदि । तद्व-द्दामनकीं मालां पूजां च हृदये वह । जानताऽजानता वापि न कृतं यत्तवार्चनम् । तत्सर्वं पूर्णतां यातु त्वत्प्रसादाद्रमापते । जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन। नम-स्तेऽस्तु हृषीकेश महापुरुषपूर्वज । मन्त्रहीनं०।' ततो देवं नमस्कृत्य गुरुं दमनेन वस्त्रा-दिना संपूज्य भगवति कर्म निवेद्य स्वयं च तत्प्रसादत्वेन दमनशेषं धृत्वा द्विजान्संपूज्य भोजयेत्। स्वयं बन्धुभिः सह भुञ्जीत । इति दमनोत्सवः । श्रीमन्नृसिंहपरिचर्यां सकौस्तुभां रामार्चाचन्द्रिकां चैव दृष्ट्वा इयं पद्धतिः कृता । इति संक्षेपप-द्धतिः समाप्ता ।

अथ चैत्रशुक्लैकादशीव्रतकथा। युधिष्ठिर उवाच— 'वासुदेव नमस्तुभ्यं कथ-यस्व ममाग्रतः । चैत्रस्य शुक्लपक्षे तु किंनामैकादशी भवेत् ।' श्रीकृष्ण उवाच— 'शृणुष्वैकमना राजन्कथामेतां पुरातनीम्।वसिष्ठो यामकथयत्प्राग्दिलीपाय पृच्छते ।' दिलीप उवाच । 'भगवञ्छ्रोतुमिच्छामि कथयस्व प्रसादतः। चैत्रे मासि सिते पक्षे किंनामैकादशी भवेत् ।' वसिष्ठ उवाच— 'साधु पृष्टं नृपश्रेष्ठ कथयामि तवाग्रतः । चैत्रस्य शुक्लपक्षे तु कामदा नाम नामतः । एकादशी पुण्यतमा पापेन्धनदवानलः । शृणु राजन्कथामेतां पापघ्नीं पुण्यदायिनीम् । पुरा भोगिपुरे रम्ये हेमरत्नविभूषिते । पुण्डरीकमुखा नागा निवसन्ति मदोत्कटाः।तस्मिन्पुरे पुण्डरीको राजा राज्यं करोति च। गन्धर्वैः किंनरैश्चैव अप्सरोभिःस सेव्यते।वराप्सरास्तु ललिता गन्धर्वो ललितस्तथा।उभौ रागेण संसक्तौ दम्पती कामपीडितौ।रेमाते स्वगृहे रम्ये धनधान्ययुते तदा। ललितायाः स हृदये पतिर्वसति सर्वदा। हृदये तस्य ललिता नित्यं वसति भामिनी। एकदा पुण्डरी-कस्य क्रीडन्सदसि संस्थितः। संगीतगानमकरोल्ललितो दयितां विना । पदबन्धस्ख-लज्जिह्वो बभूव ललितां स्मरन् । मनोभवं विदित्त्वास्य कर्कोटो नागसत्तमः । पदब-न्धच्युतिं तस्य पुण्डरीके न्यवेदयत् । श्रुत्वा कर्कोटवचनं पुण्डरीको भुजङ्गराट् । क्रोधसंरक्तनयनो बभूवातिभयंकरः। शशाप ललितं तत्र गायन्तं मदनातुरम्। राक्षसो भव दुर्बुद्धे क्रव्यादः पुरुषादकः । यतः पत्नीवशे जातो गायमानो ममाग्रतः। वच-नात्तस्य राजेन्द्र रक्षोरूपो बभूव ह। रौद्राननो विरूपाक्षो दृष्टमात्रो भयंकरः । बहु-

योजनविस्तीर्णो मुखं कंदरसंनिभम् । चन्द्रसूर्यनिभे नेत्रे ग्रीवा पर्वतसंनिभा । नासारन्ध्रे सविवरे अधरौ योजनार्धकौ । शरीरं तस्य राजेन्द्र उच्छ्रितं योजनाष्टकम् ईदृशो राक्षसः सोभूद्भुञ्जानः कर्मणः फलम् । ललिता तमथालोक्य स्वपतिं विकृताकृतिम् । चिन्तयामास मनसा दुःखेन महतार्दिता । किं करोमि क्व गच्छामि पतिता येन पीडिता । इति संस्मृत्य मनसा न शर्म लभते तु सा । चचार पतिना सार्धं ललिता गहने वने । बभ्राम विपिने दुर्गे कामरूपः स राक्षसः । निर्विण्णः पापनिरतो विरूपः पुरुषादकः । न सुखं लभते रात्रौ न दिवा पापपीडितः । ललिता दुःखितातीव पतिं दृष्ट्वा तथाविधम् । भ्रमन्ती तेन सार्धं सा रुदन्ती गहने वने । कदाचिदगमद्विन्ध्यशिखरे बहुकौतुके । ऋष्यशृङ्गमुनेस्तत्र दृष्ट्वाश्रमपदं शुभम् । शीघ्रं जगाम ललिता विनयावनता स्थिता । प्रत्युवाच मुनिर्दृष्ट्वा का त्वं कस्य सुता शुभे । किमर्थमिह यातासि सत्यं वद ममाग्रतः ।' ललितोवाच—'वीरधन्वेति गन्धर्वः सुता तस्य महात्मनः । ललितानाम संविद्धि पत्यर्थमिह चागता । भर्ता मे शापदोषेण राक्षसोऽभून्महामुने । रौद्ररूपो दुराचारस्तं दृष्ट्वा नास्ति मे सुखम् । सद्यस्त्वं शाधि मां ब्रह्मन्प्रायश्चित्तं वद प्रभो । येन पुण्येन विप्रेन्द्र राक्षसत्वाद्विमुच्यते ।' ऋषिरुवाच—'चैत्रमासस्य रम्भोरु शुक्लपक्षोऽस्ति सांप्रतम् । कामदैकादशी नाम्ना या पद्मललितापि सा । कुरुष्व तद्व्रतं भद्रे विधिपूर्वं मयोदितम् । अस्य व्रतस्य यत्पुण्यं तत्तु भद्रे प्रदीयताम् । दत्ते पुण्ये क्षणात्तस्य शापदोषः प्रयास्यति । इति श्रुत्वा मुनेर्वाक्यं ललिता हर्षिताभवत् । उपोष्यैकादशीं राजन्द्वादशीदिवसे तदा । विप्रस्यैव समीपे तु वासुदेवाग्रतः स्थिता । वाक्यमूचे च ललिता स्वपत्युत्तारणाय वै । मया तु यद्व्रतं चीर्णं कामदाया उपोषणम् । तस्य पुण्यप्रभावेण गच्छत्वस्य पिशाचता । ललितावचनादेव वर्तमानोऽपि तत्क्षणे । गतपापः स ललितो दिव्यदेहो बभूव ह । राक्षसत्वं गतं तस्य प्राप्ता गन्धर्वता पुनः । हेमरत्नसमाकीर्णे रेमे ललितया सह । तौ विमानसमारूढौ पूर्वरूपाधिकावुभौ । दम्पती अतिशोभेतां कामदायाः प्रभावतः । इति ज्ञात्वा नृपश्रेष्ठ कर्तव्यैषा प्रयत्नतः । लोकानां च हितार्थाय तवाग्रे कथिता मया । ब्रह्महत्यादिपापघ्नी पिशाचत्वविनाशिनी । नातः परतरा काचित्त्रैलोक्ये सचराचरे । पठनाच्छ्रवणाद्राजन्वाजपेयफलं लभेत् ।' इति वाराहपुराणे चैत्रशुक्लैकादश्याः कामदानाम्न्या माहात्म्यं समाप्तम् ।

दुर्वासा उवाच—'एवमेव मुने मासि चैत्रे संकल्प्य द्वादशीम् । उपोष्याराधये-

भक्त्या देवदेवं जनार्दनम् । वामनायेति पादौ तु विष्णवे कटिमर्चयेत् । वासुदेवाय जठरमुरः संकर्षणाय च । कण्ठं विश्वभृते पूज्य शिरो वै व्योमरूपिणे । बाहू विश्वजिते पूज्य स्वनाम्ना शंखचक्रके । अनेन विधिनाभ्यर्च्य देवदेवं जनार्दनम् । प्राग्वद्भक्तोदरं कुम्भं संयुग्मं पुरतो न्यसेत् । प्रागुक्तपात्रे संस्थाप्य वामनं काञ्चनं बुधः । यथाशक्त्या कृतं ह्रस्वं सितयज्ञोपवीतिनम् । कुण्डिकां स्थापयेत्पार्श्वे छत्रिकां पादुके तथा । अक्षमालां च संस्थाप्य यष्टिकां च विशेषतः । एतैरुपस्करैर्युक्तं प्रभाते ब्राह्मणाय तु । दापयेत्प्रीयतां विष्णुर्नृस्वरूपीति कीर्तयेत् । मासनाम्ना तु संयुक्तं प्रादुर्भावानिधानकम् । प्रीयतामिति सर्वत्र विधिरेष प्रकीर्तितः । श्रूयते च पुरा राजा हर्यश्वः पृथिवीपतिः । अपुत्रः स तपस्तेपे पुत्रमिच्छंस्तपोधनः । तस्यैव कुर्वतस्त्विष्टिं पुत्रार्थं मुनिसत्तम । आजगाम हरिर्देवो द्विजरूपसमन्वितः । स उवाच नृपं राजन्किं ते व्यवसितं त्विति । पुत्रार्थमिति प्रोवाच स च तं प्रत्युवाच ह । इदमेव विधानं तु कुरु राजन्प्रयत्नतः । स विप्र एवमुक्त्वा च क्षणादन्तर्हितस्ततः । राजा च तच्चकाराथ मन्त्रैर्वित्तं द्विजातये । दरिद्राय तथा प्रादाज्ज्योतिर्गर्भाय धीमते। यथादितेरपुत्रायाः स्वयं पुत्रत्वमागतः । भगवांस्तेन सत्येन ममाप्यस्तु सुतो वरः । इदमेवं विधानं च वामनद्वादशीव्रतम् । अनेन विधिनोक्तेन तस्य पुत्रोऽभवन्मुने।उग्राश्व इति विख्यातश्चक्रवर्ती महाबलः । अपुत्रो लभते पुत्रान्धनहीनो लभेद्धनम् । भ्रष्टराज्यो लभेद्राज्यमन्ते विष्णुपुरं व्रजेत् ।'इति धरणीव्रते वामनद्वादशीव्रतम् ।

अथ वैशाखकृष्णैकादशीव्रतकथोच्यते । युधिष्ठिर उवाच—'वैशाखस्यासिते पक्षे किंनामैकादशी भवेत् । महिमानं कथय मे वासुदेव नमोऽस्तु ते।' श्रीकृष्ण उवाच—'सौभाग्यदायिनी राजन्निह लोके परत्र च । वैशाखकृष्णपक्षे तु नाम्ना चैव वरूथिनी । वरूथिन्या व्रतेनैव सौख्यं भवति सर्वदा । पापहानिश्च भवति सौभाग्यप्राप्तिरेव च । दुर्भगा या करोत्येनां सा स्त्री सौभाग्यमाप्नुयात् । लोकानां चैव सर्वेषां भुक्तिमुक्तिप्रदायिनी । सर्वपापहरा नृणां गर्भवासनिकृन्तनी । वरूथिन्या व्रतेनैव मान्धाता स्वर्गतिं गतः । धुन्धुमारादयश्चान्ये राजानो बहवस्तथा । अस्या व्रतेन ते सर्वे ब्रह्मलोकं गताः पुनः । ब्रह्मकपालनिर्मुक्तो बभूव भगवान्भवः । दशवर्षसह-

---

१–युग्मं वस्त्रयुग्मम् । २–मासनाम्ना मार्गशीर्षादिमासनाम्ना केशवादिनाम्ना । ३–प्रादुर्भावाभिधानकं मत्स्यरूपी । कूर्मरूपीति कीर्तयेत् । ४–मन्त्रवित् यथादितेरपुत्राया इत्यादिमन्त्रज्ञः । त वामनम् ।

स्राणि तपस्तपति यो नरः। तत्तुल्यं फलमाप्नोति वरूथिन्या व्रतादपि । कुरुक्षेत्रे रविग्रहे स्वर्णभारं ददाति यः । तत्तुल्यं फलमाप्नोति वरूथिन्या व्रतादपि । श्रद्धावान्यस्तु कुरुते वरूथिन्या व्रतं नरः । वाञ्छितं फलमाप्नोति इह लोके परत्र च । पावित्र्यदायिनी ह्येषा महापातकनाशिनी । भुक्तिमुक्तिप्रदा ह्येषा कर्तॄणां नृपसत्तम। अश्वदानान्नृपश्रेष्ठ गजदानं विशिष्यते । गजदानाद्भूमिदानं तिलदानं ततोऽधिकम्। ततः सुवर्णदानं च अन्नदानं ततोधिकम् । अन्नदानात्परं दानं न भूतं न भविष्यति। पितृदेवमनुष्याणां तृप्तिरन्नेन जायते । तत्समं कविभिः प्रोक्तं कन्यादानं नृपोत्तम । धेनुदानं च तत्तुल्यमित्याह भगवान्स्वयम् । प्रोक्तेभ्यः सर्वदानेभ्यो विद्यादानं विशिष्यते । तत्फलं समवाप्नोति नरः कृत्वा वरूथिनीम् । कन्यावित्तेन जीवन्ति ये नराः पापमोहिताः। पुण्यक्षये ते गच्छन्ति निरयं यातनायुतम्। तस्मात्सर्वप्रयत्नेन न ग्राह्यं कन्यकाधनम् । कन्यां पुण्येन यो दद्याद्यथाशक्ति त्वलंकृताम्। तत्पुण्यसंख्यां नृपते चित्रगुप्तो न वेत्त्यलम्। तत्फलं समवाप्नोति नरः कृत्वा वरूथिनीम्। कांस्यं मांसं मसूरान्नं चणकक्कोद्रवांस्तथा। शाकं मधु परान्नं च पुनर्भोजनमैथुने। वैष्णवो व्रतकर्ता च दशम्यां दश वर्जयेत । द्यूतं क्रीडां च निद्रां च ताम्बूलं दन्तधावनम् । परापवादपैशुन्यं स्तेयं हिंसां तथा रतिम्। क्रोधं चानृतवाक्यं च एकादश्यां विवर्जयेत्। कांस्यं मांसं मसूरान्नं क्षौद्रं वितथभाषणम्। व्यायामं च प्रवासं च पुनर्भोजनमैथुने। स्पृष्टास्पृष्टिं च तैलं च द्वादश्यां परिवर्जयेत्। अनेन विधिना राजन्विहिता यैर्वरूथिनी। रात्रौ जागरणं कृत्वा पूजितो मधुसूदनः । सर्वपापविनिर्मुक्तास्ते यान्ति परमां गतिम्। तस्मात्सर्वप्रयत्नेन कर्तव्या पापभीरुभिः।क्षयारितनयाद्भीतैर्नरदेव वरूथिनी। पठनाच्छ्रवणाद्राजन्गोसहस्रफलं लभेत् । सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ।' इति भविष्योत्तरपुराणे वैशाखकृष्णपक्षे वरूथिन्येकादशीमाहात्म्यं समाप्तम् ।

अथ वैशाखशुक्लैकादशीव्रतकथोच्यते । युधिष्ठिर उवाच—'वैशाखशुक्लपक्षे तु किंनामैकादशी भवेत्। किं फलं को विधिस्तस्याः कथयस्व जनार्दन ।' श्रीकृष्ण उवाच—' कथयामि कथामेतां शृणु त्वं ब्रह्मनन्दन। वसिष्ठो याम - यत्पुरा रामाय पृच्छते ।' राम उवाच—'भगवञ्छ्रोतुमिच्छामि व्रतानामुत्तमं व्रतम्। सर्वपापक्षयकरं सर्वदुःखनिकृन्तनम् । मया दुःखानि भुक्तानि सीताविरहजानि वै ।

ततोऽहं भयभीतोऽस्मि पृच्छामि त्वां महामुने ।' वसिष्ठ उवाच- 'साधु पृष्टं त्वया राम तवैषा नैष्ठिकी मतिः । त्वन्नामग्रहणेनैव पूतो भवति मानवः । तथापि कथयिष्यामि लोकानां हितकाम्यया । पवित्रं पावनानां च व्रतानामुत्तमं व्रतम् । वैशाखस्य सिते पक्षे द्वादशी राम या भवेत् । मोहिनी नाम सा प्रोक्ता सर्वपापहरा परा । मोहजालात्प्रमुच्येत पातकानां समूहतः । अस्या व्रतप्रभावेण सत्यं सत्यं वदाम्यहम् । अन्तःकरणतो वापि कर्तव्यैषा भवादृशैः । पातकानां क्षयकरी महादुःख विनाशिनी । शृणुष्वैकमना राम कथां पापहरां पराम् । अस्याः श्रवणमात्रेण महापापं प्रणश्यति । सरस्वत्यास्तटे रम्ये पुरी भद्रावती शुभा । द्युतिमान्नामनृपतिस्तत्र राज्यं करोति वै। सोमवंशोद्भवो राम धृतिमान्सत्यसंगरः । तत्र वैश्यो निवसति धनधान्यसमृद्धिमान् । धनमाल इति ख्यातः पुण्यकर्मप्रवर्तकः । प्रपासत्त्रायतनतडागारामकारकः । विष्णुभक्तिपरः शान्तस्तस्यासन्पञ्च पुत्रकाः । सुमनाः सुद्युमांश्चैव मेधावी कृष्णती तथा । पञ्चमो धृष्टबुद्धिश्च महापापरतः सदा । वारस्त्रीसङ्गनिरतो विटगोष्ठीविशारदः । द्यूतादिव्यसनासक्तः परस्त्रीरतिलालसः । न देवानतिथीन्वृद्धान्पितॄंश्चैव द्विजानपि । संमानयति नास्तिक्यात्सदा दुःसङ्गलालसः । अन्यायकर्ता दुष्टात्मा पितुर्द्रव्यक्षयंकरः । अभक्ष्यभक्षकः पापः सुरापानरतः सदा । वेश्याकण्ठक्षिप्तबाहुर्भ्रमति स्म चतुष्पथे।पित्रा निष्कासितो गेहात्परित्यक्तःस बान्धवैः। स्वदेहभूषणान्येव क्षयं नीतानि तेन वै । गणिकाभिः परित्यक्तो निन्दितश्च धनक्षयात्। ततश्चिन्तापरो जातो वस्त्रहीनः क्षुधार्दितः । किं करोमि क्व गच्छामि केनोपायेन जीव्यते। तस्करत्वं समारब्धं तत्रैव नगरे पुनः । गृहीतो राजपुरुषैर्मुक्तश्च पितृगौरवात् । पुनर्बद्धः पुनर्मुक्तः पुनर्बद्धः ससंभ्रमैः । दुष्टबुद्धिर्दुराचारो निबध्य निगडैर्दृढम् । कशाघातैस्ताडितश्च पीडितश्च पुनः पुनः । एवमुक्त्वा ततो राज्ञा मोचितो दृढबन्धनात् । न स्थातव्यं हि मन्दात्मंस्त्वया मद्देशगोचरे । निर्जगाम भयात्तस्य गतोऽसौ गहनं वनम् । क्षुत्तृषापीडितश्चायमितश्चेतश्च धावति । सिंहवन्निजघानासौ मृगशूकरचित्तलान् । आमिषाहारनिरतो वने तिष्ठति सर्वदा । करे शरासनं कृत्वा निषङ्गं पृष्टिसंगतम् । अरण्यचारिणो हन्ति पक्षिणश्च चतुष्पदान् । चकोरांश्च मयूरांश्च कङ्कतित्तिरिमूषकान् ।

एतानन्यान्हन्ति नित्यं धृष्टधीर्निर्गतान्नरान् । पूर्वजन्मकृतैः पापैर्निमग्नः पापकर्दमे । दुःखशोकसमाविष्टश्चिन्तयन्सोऽप्यहर्निशम् । कौण्डिन्यस्याश्रमपदं प्राप्तः पुण्यागमे क्वचित्। माधवे मासि जाह्नव्यां कृतस्नानं तपोधनम् । आससाद धृष्टबुद्धिः शोकभारेण पीडितः। तद्वस्त्रबिन्दुस्पर्शेन स पापात्मा गताशुभः । कौंडिन्यस्याग्रतः स्थित्वा प्रत्युवाच कृताञ्जलिः।' धृष्टबुद्धिरुवाच—'प्रायश्चित्तं ब्रूहि ब्रह्मन्विना वित्तेन यद्भवेत् । आजन्मकृतपापस्य नास्ति वित्तं ममाधुना ।' ऋषिरुवाच—'शृणुष्वैकमना भूत्वा येन पापक्षयस्तव । वैशाखस्य सिते पक्षे मोहिनी नाम नामतः । एकादशीव्रतं तस्यां कुरु मद्वाक्यनोदितः । मेरुतुल्यानि पापानि क्षयं नयति देहिनाम् । बहुजन्मार्जितान्येषा मोहिनी समुपोषिता । इति श्रुत्वा मुनेर्वाक्यं धृष्टबुद्धिः प्रसन्नहृत्। व्रतं चकार विधिवत्कौण्डिन्यस्योपदेशतः । कृते व्रते नृपश्रेष्ठ हतपापो बभूव सः। दिव्यदेहस्ततो भूत्वा गरुडोपरिसंस्थितः। जगाम वैष्णवं लोकं सर्वोपद्रववर्जितम्। इतीदृशं रामचन्द्र उत्तमं मोहिनीव्रतम् ।नातः परतरं किंचित्त्रैलोक्ये सचराचरे। यज्ञादितीर्थदानानि कलां नार्हन्ति षोडशीम् । पठनाच्छ्रवणाद्राजन्गोसहस्रफलं लभेत् ।' इति श्रीकूर्मपुराणे वैशाखशुक्लपक्षे मोहिन्येकादशीमाहात्म्यं समाप्तम् ।

दुर्वासा उवाच— 'वैशाखेऽप्येवमेवं तु संकल्प्य विधिना नरः । सद्वत्स्नानं मृदा कृत्वा ततो देवालयं व्रजेत् । तत्राराध्य हरिं भक्त्या एभिर्मन्त्रैर्विचक्षणः । जामदग्न्याय पादौ तु उदरं सर्वधारिणे । मधुसूदनायेति कटिमुरः श्रीवत्सधारिणे । क्षत्रान्तकाय बाहू च मणिकण्ठाय कण्ठकम् । स्वनाम्ना शंखचक्रे तु शिरो ब्रह्माण्डधारिणे । एवमभ्यर्च्य मेधावी प्राग्वत्तस्याग्रतो घटम् । विन्यसेत्स्थगितं वस्त्रयुग्मेन च विशेषतः । वैणवेन च पात्रेण तस्मिन्संस्थापयेद्धरिम् । जामदग्न्येन रूपेण कृत्वा सौवर्णमग्रतः । दक्षिणे परशुं हस्ते तस्य देवस्य कारयेत् । सर्वगन्धैश्च संपूज्य पुष्पैर्नानाविधैस्तथा । ततस्तस्याग्रतः कुर्याज्जागरं भक्तिमान्नरः। प्रभाते विमले सूर्ये ब्राह्मणाय निवेदयेत् । एवं नियमयुक्तस्य यत्फलं तन्निबोध मे । आसीद्राजा महाभागो वीरसेनो महाबलः । अपुत्रः स पुरा तीव्रं तपस्तेपे महाबलः। चरंस्ततस्तपो घोरं याज्ञवल्क्यो महामुनिः । आजगाम महायोगी तं द्रष्टुं चाभियोगतः ।' राजोवाच— 'कथं मे भविता पुत्रःस्वल्पायासेन वै द्विज । एतन्मे कथय प्रीत्या भगवन्प्रणतस्य वै । एवमुक्तो मुनिस्तेन पार्थिवेन यशस्विना । आचख्यौ द्वादशीं

चेमां वैशाखे सितपक्षजाम् । स हि राजा विधानेन पुत्रकामो विशेषतः ।' उपोष्य लब्धवान्पुत्रं नतं परमधार्मिकम् । योऽद्यापि कीर्त्यते लोके पुण्यश्लोको नृपोत्तमः । प्रासङ्गिकफलं ह्येतद्व्रतस्यास्य महामुने । यत्पुत्रो जायते वित्तं विद्यावान्कीर्तिरुत्तमा । इह जन्मनि किं चित्रं परलोके शृणुष्व मे । कल्पमेकं ब्रह्मलोके उषित्वाऽप्सरसां गणे । क्रीडन्ति ते पुनः सृष्टौ जायन्ते चक्रवर्तिनः । त्रिंशत्कल्पसहस्राणि जीव्यते नात्र संशयः ।' इति धरणीव्रते जामदग्न्यद्वादशीव्रतम् ।

अथ ज्येष्ठकृष्णैकादशीव्रतकथोच्यते । युधिष्ठिर उवाच—'ज्येष्ठस्य कृष्णपक्षे तु किंनामैकादशी भवेत् । श्रोतुमिच्छामि माहात्म्यं त्वं वदस्व जनार्दन ।' श्रीकृष्ण उवाच—'साधु पृष्टं त्वया राजँल्लोकानां हितकाम्यया । बहुपुण्यप्रदा ह्येषा महापातकनाशिनी । अपरानाम राजेन्द्र अपारफलदायिनी । लोके प्रसिद्धतां याति अपरां यस्तु सेवते । अपरासेवनाद्राजन्विपाप्मा भवति ध्रुवम् । कूटसाक्ष्यं मानकूटं तुलाकूटं करोति च । कूटवेदं पठेद्विप्रः कूटशास्त्रं तथैव च । ज्योतिषी कूटगणकः कूटपूर्वाधिको भिषक् । कूटसाक्षिसमा ह्येते विज्ञेया नरकौकसः । अपरासेवनाद्राजन्पापमुक्ता भवन्ति ते । क्षत्रियः क्षात्रधर्मं यस्त्यक्त्वा युद्धात्पलायते । स याति नरकं घोरं स्वामिधर्मबहिष्कृतः । अपरासेवनाद्राजन्पापं त्यक्त्वा दिवं व्रजेत् । विद्यामधीत्य यः शिष्यो गुरुनिन्दां करोति च । स महापातकैर्युक्तो निरयं याति दारुणम् । अपरासेवनात्सोऽपि सद्गतिं प्राप्नुयान्नरः । महिमानमपारायाः शृणु राजन्वदाम्यहम् । पुष्करत्रितये स्नात्वा कार्तिक्यां यत्फलं लभेत् । मकरस्थे रवौ माघे प्रयागे यत्फलं लभेत् । काश्यां यत्प्राप्यते पुण्यं शिवरात्रेरुपोषणात् । गयायां पिण्डदानेन पितॄणां तृप्तितो भवेत् । सिंहस्थिते देवगुरौ गौतमीस्नातको नरः । यत्फलं समवाप्नोति कुम्भे केदारदर्शनात् । बदर्याश्रमयात्रायां तत्तीर्थश्रवणादपि । यत्फलं समवाप्नोति कुरुक्षेत्रे रविग्रहे । गजाश्वहेमदानेन यज्ञं कृत्वा सदक्षिणम् । तादृशं फलमाप्नोति अपराया व्रतान्नरः । अर्धप्रसूतां गां दत्त्वा सुवर्णं वसुधां तथा । नरस्तत्फलमाप्नोति अपराव्रतसंचयात् । पापद्रुमकुठारेयं पापेन्धनदवानला । पापान्धकारसूर्येयं पापसारङ्गकेसरी । बुद्बुदा इव तोयेषु पूतीका इव जन्तुषु । जायन्ते मरणायैव एकादश्यां व्रतं विना । अपरां समुपोष्यैव पूजयित्वा त्रिविक्रमम् । सर्वपापविनिर्मुक्तो विष्णुलोकं व्रजेन्नरः । लोकानां च हितार्थाय तवाग्रे कथितं मया । पठनाच्छ्रवणाद्राजन्सर्वपापैः प्रमुच्यते ।' इति श्रीब्रह्माण्डपुराणे ज्येष्ठकृष्णपक्षीयापरैकादशीमाहात्म्यं समाप्तम् ।

अथ ज्येष्ठशुक्लैकादशीव्रतकथा । युधिष्ठिर उवाच—'श्रुता मे मानवा धर्मा वासिष्ठाश्च मया श्रुताः । द्वैपायन यथोद्दिष्टान्वैष्णवान्वक्तुमर्हसि ।' व्यास उवाच—'श्रुतास्ते मानवा धर्मा वैदिकाश्च श्रुतास्तु ते । कलौ युगे न शक्यन्ते ते वै कर्तुं जनाधिप । सुखोपायमल्पधनमल्पक्लेशं महाफलम् । पुराणानां च सर्वेषां सारभूतं वदामि ते । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । एकादश्यां न भुङ्क्ते यो न याति नरकं तु सः । व्यासस्य वचनं श्रुत्वा कम्पितोऽश्वत्थपत्रवत् । भीमसेनो महाबाहुर्भीतो वाक्यमभाषत ।' भीमसेन उवाच—'पितामह न शक्तोऽहमुपवासे करोमि किम् । अतो बहुफलं ब्रूहि व्रतमेकमपि प्रभो ।' व्यास उवाच—'वृषस्थे मिथुनस्थेऽर्के शुक्ला ह्येकादशी भवेत् । ज्येष्ठे मासि प्रयत्नेन सोपोष्या जलवर्जिता । स्नाने चाचमने चैव वर्जयेन्नोदकं बुधः । उपयुञ्जीत नैवान्यद्व्रतभङ्गोऽन्यथा भवेत् । उदयादुदयं यावद्वर्जयित्वा जलं बुधः । अप्रयत्नादवाप्नोति द्वादश द्वादशीर्नरः । ततः प्रभाते विमले द्वादश्यां स्नानमाचरेत् । जलं सुवर्णं दत्त्वा तु द्विजातिभ्यो यथाविधि । भुञ्जीत कृतकृत्यस्तु ब्राह्मणैः सहितो वशी । एवं कृते तु यत्पुण्यं भीमसेन शृणुष्व तत् । संवत्सरस्य या मध्ये एकादश्यो भवन्त्युत । तासां फलमवाप्नोति अत्र मे नास्ति संशयः । अस्य व्रतस्य यत्पुण्यं तन्मे प्राह जनार्दनः । एकादश्यां सिते पक्षे ज्येष्ठस्योदकवर्जितम् । उपोष्य फलमाप्नोति यत्तच्छृणु वृकोदर । सर्वतीर्थेषु यत्पुण्यं सर्वदानेषु यत्फलम् । सर्वहोमेषु यत्पुण्यं तदस्याः समुपोषणात् । उपोषितास्तु ताः सर्वा एकादश्यो न संशयः । धनधान्यवहाः पुण्याः पुत्रारोग्यप्रदास्तथा । उपोषिता नरव्याघ्र इति सत्यं ब्रवीमि ते । यमदूता महाकायाः करालाः कृष्णरूपिणः । दण्डपाशधरा रौद्रा मरणे दृष्टिगोचराः । न प्रयान्ति नरव्याघ्र एकादश्यामुपोषणात् । पीताम्बरधराः सौम्याश्चक्रहस्ता मनोजवाः । अन्त्ये काले नयन्त्येनं वैष्णवा वैष्णवीं पुरीम् । तस्मात्सर्वप्रयत्नेन उपोष्या जलवर्जिता । जलधेनुं तथा दत्त्वा सर्वपापैः प्रमुच्यते ।' इति हेमाद्रौ महाभारतोक्तं निर्जलैकादशीव्रतम् ।

अथ ब्रह्मवैवर्तपुराणस्थं निर्जलैकादशीमाहात्म्यं लिख्यते । भीमसेन उवाच—'पितामह महाबुद्धे शृणु मे परमं वचः । युधिष्ठिरश्च कुन्ती च तथा द्रुपदनन्दिनी । अर्जुनो नकुलश्चैव सहदेवस्तथैव च । एकादश्यां न भुञ्जन्ति कदाचिदपि सुव्रत । ते मां ब्रुवन्ति नित्यं हि मा भुंक्ष्व त्वं वृकोदर । अहं तानब्रुवं तात बुभुक्षा

दुःसहा मम । दानं दास्यामि विधिवत्पूजयिष्यामि केशवम् । भीमसेनवचः श्रुत्वा व्यासो वचनमब्रवीत् ।' व्यास उवाच—'यदि स्वर्गो ह्यभीष्टस्ते नरकस्त्याज्य एव च । एकादश्यां न भोक्तव्यं पक्षयोरुभयोरपि ।' भीमसेन उवाच—'पितामह महाबुद्धे कथयामि तवाग्रतः । एकभुक्ते न शक्तोऽहमुपवासे कुतो मुने । वृकनामा तु यो वह्निः स सदा जठरे मम । अतीवान्नं यदाश्नामि तदा समुपशाम्यति । एकं शक्नोम्यहं कर्तुमुपवासं महामुने । येन वै प्राप्यते स्वर्गस्तत्करोमि यथा तथा । तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ।' व्यास उवाच—'वृषस्थे मिथुनस्थे वा यदा चैकादशी भवेत् । ज्येष्ठे मासि प्रयत्नेन सोपोष्योदकवर्जिता । तत्र चाचमनाद्वाह्यं वर्जयित्वोदकं बुधः । माषकस्य सुवर्णस्य यत्र मज्जति वै माणिः । एतदाचमनं प्रोक्तं पवित्रं कायशोधनम् । उपयुञ्जीत नान्यत्र व्रतभङ्गोऽन्यथा भवेत् । उदयादुदयं यावद्वर्जयित्वोदकं ततः । अयत्नात्समवाप्नोति द्वादशद्वादशीफलम् । प्रभाते विमले जाते द्वादश्यां स्नानमाचरेत् । ससुवर्णं जलं दत्वा द्विजातिभ्यो यथाविधि । भुञ्जीत कृतकृत्यस्तु ब्राह्मणैः सहितो वशी । एवं कृते तु यत्पुण्यं भीमसेन शृणुष्व तत् । संवत्सरस्य याश्चैव एकादश्यो भवन्ति वै । तासां फलमवाप्नोति तत्र मे नास्ति संशयः । इति मां केशवः प्राह शंखचक्रगदाधरः । सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज । एकादश्यां निराहारस्ततः पापात्प्रमुच्यसे । द्रव्यशुद्धिः कलौ नास्ति संस्कारः स्मार्त एव च । वैदिकश्च कुतश्चास्ति प्राप्ते दुःखे कलौ युगे । किं तु ते बहुनोक्तेन वायुपुत्र पुनः पुनः । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । एकादश्यां सिते पक्षे ज्येष्ठे मास्युदकं विना । पुण्यं फलमवाप्नोति तच्छृणुष्व वृकोदर । सर्वतीर्थेषु यत्पुण्यं सर्वदानेषु यत्फलम् । तत्फलं समवाप्नोति इमां कृत्वा वृकोदर । संवत्सरेण याश्च स्युः शुक्लाः कृष्णा वृकोदर । उपोषितास्ताः सर्वाः स्युरेकादश्यो न संशयः । धनधान्यवहाः पुण्याः पुत्रारोग्यफलप्रदाः । यमदूता महाकायाः करालाः कृष्णपिङ्गलाः । दण्डपाशधरा रौद्रा नान्ते पश्यन्ति तं नरम् । पीताम्बरधराः सौम्याश्चक्रहस्ता मनोजवाः । अन्तकाले नयन्त्येनं मानवं वैष्णवीं पुरीम् । तस्मात्सर्वप्रयत्नेन सोपोष्योदकवर्जिता । जलधेनुं तदा दत्त्वा सर्वपापैः प्रमुच्यते । इति श्रुत्वा तदा चक्रुः पाण्डवा जनमेजय । तथा त्वमपि भूपाल सोपवासोऽर्चनं हरेः । कुरु सर्वप्रयत्नेन सर्वपापप्रशान्तये । स्वप्नेऽन्नं दृश्यमानं यदन्नं दन्तगतं च यत् । न तस्य मम दोषोऽस्ति प्रार्थये त्वामहं प्रभो । भोक्ष्ये परेऽह्नि देवेश निर्विघ्नं कुरु मेऽच्युत । इत्युच्चार्य ततो मन्त्रमुपवासपरो भवेत् । सर्वपापविनाशाय श्रद्धाभक्तिसमन्वितः । मेरुमन्दरमात्रं

तु स्त्रियो वा पुरुषस्य वा । सर्वं तद्भस्मतां याति एकादश्याः प्रभावतः । न शक्नुवन्ति ये दातुं जलधेनुं नराधिप । सकाञ्चनः प्रदातव्यो घटको वस्त्रसंवृतः । तोयस्य नियमं योऽस्यां कुरुते वै स पुण्यभाक् । पलकोटिसुवर्णस्य यामे यामेऽश्नुते फलम् । स्नानं दानं जपं होमं यदस्यां कुरुते नरः । तत्सर्वं चाक्षयं प्रोक्तमेतत्कृष्णस्य भाषितम् । किं वा परेण धर्मेण निर्जलैकादशीं नृप । उपोष्य सम्यग्विधिवद्वैष्णवं पदमाप्नुयात् । सुवर्णमन्नं वासांसि यदस्यां संप्रदीयते । तत्तस्यैव कुरुश्रेष्ठ सर्वं चैवाक्षयं भवेत् । एकादशीदिने योऽन्नं भुङ्क्ते पापं स केवलम् ।इह लोके स चाण्डालो मृतः प्राप्नोति दुर्गतिम् । ये प्रदास्यन्ति दानानि द्वादशीं समुपोष्य च ज्येष्ठे मासि सिते पक्षे प्राप्स्यन्ति परमं पदम् । ब्रह्महा मद्यपः स्तेयी गुरुद्वेष्टा सदानृती । मुच्यंते पातकैः सर्वैर्द्वादशी यैरुपोषिता । विशेषं शृणु कौन्तेय निर्जलैकादशीदिने । यत्कर्तव्यो नरैः स्त्रीभिः श्रद्धाभक्तिसमन्वितैः । जलशायी तु संपूज्यो देया धेनुश्च तन्मयी ।प्रत्यक्षा वा नृपश्रेष्ठ घृतधेनुरथापि वा । दक्षिणाभिश्च पुष्टाभिर्मिष्टान्नैश्च पृथग्विधैः । तोषणीयाः प्रयत्नेन द्विजा धर्मभृतां वर । तुष्टो भवति वै क्षिप्रं तैस्तुष्टैर्मोक्षदो हरिः । आत्मद्रोहः कृतस्तैस्तु यैरेषा न ह्युपोषिता । पापात्मानो दुराचारा दुष्टास्ते नात्र संशयः । कुलानां शतकं भावि कुलातीतं तथा शतम् । आत्मना सहितं नीतं वासुदेवस्य मन्दिरम् । शान्तैर्दान्तैर्दानपरैरर्चयद्भिर्यथा हरिम् । कुर्वद्भिर्जागरं रात्रौ यैरेषा समुपोषिता । अन्नं पानं तथा गावो वस्त्रं शय्यासनं शुभम् । कमण्डलुस्तथा क्षेत्रं दातव्यं निर्जलादिने । उपानहौ यो ददाति पात्रं भूमिं द्विजोत्तमे । स सौवर्णेन यानेन स्वर्गलोके महीयते ।यश्चेदं शृणुयाद्भक्त्या यश्चापि परिकीर्तयेत् । उभौ तौ स्वर्गगन्तारौ नात्र कार्या विचारणा । यत्फलं संनिहत्यायां राहुग्रस्ते दिवाकरे ।कृत्वा श्राद्धं लभेन्मर्त्यस्तदस्याः श्रवणादपि ।नियमश्च प्रकर्तव्यो दन्तधावनपूर्वकम् । एकादश्यां निराहारो वर्जयिष्यामि वै जलम् । केशवप्रीणनार्थाय अन्यदाचमनादृते । द्वादश्यां देवदेवेशः पूजनीयस्त्रिविक्रमः ।गन्धपुष्पैस्तथा दीपैर्वारिभिः प्रियदर्शनैः । पूजयित्वा विधानेन मन्त्रमेतमुदीरयेत् । देवदेव हृषीकेश संसारार्णवतारक । उदकुम्भप्रदानेन नय मां परमां गतिम् । ततः कुम्भाः प्रदातव्या ब्राह्मणेभ्यः स्वशक्तितः । सान्नवस्त्रयुता भीम च्छत्रोपानद्युगान्विताः । दानानि चात्र देयानि जलधेनुर्विशेषतः । भोजयित्वा ततो विप्रान्स्वयं भुञ्जीत वाग्यतः । एवं यः कुरुते तूर्णं द्वादशीं पापनाशिनीम् । सर्वपापविनिर्मुक्तः पदं गच्छत्यनामयम् । ततःप्रभृति भीमेन कृता ह्येकादशी शुभा ।पाण्डवद्वादशीनाम्ना लोके ख्याताव-

भूव ह।' इति श्रीब्रह्मवैवर्तपुराणे ज्येष्ठशुक्लपक्षीयनिर्जलैकादशीमाहात्म्यं समाप्तम्।

अत्र निर्जलमुपोष्य विप्रेभ्यो जलकुम्भान्दद्यादिति निर्णयामृते उक्तम्। मदनरत्ने स्कान्दे—'ज्येष्ठे मासि नृपश्रेष्ठ या शुक्लैकादशी शुभा। निर्जलं समुपोष्यात्र जलकुम्भान्सशर्करान्। प्रदाय विप्रमुख्येभ्यस्तापत्रयविवर्जितः। विष्णुलोकमवाप्येह मोदते विष्णुसंनिधौ।' इति। एतस्यामेवैकादश्यां पुराणे जलधेनुदानं घृतधेनुदानं चोक्तम्। तत्प्रकारस्तूच्यते हेमाद्रौ-'वसिष्ठ उवाच-'जलधेनुं प्रवक्ष्यामि प्रीयते दत्तया,यया। देवदेवो हृषीकेशः सर्वेशः सर्वभाजनः। जलकुम्भं नरव्याघ्र सुवर्णरजतान्वितम्। जलगर्भमशेषैस्तु ग्राम्यैर्धान्यैः समन्वितम्। सितवस्त्रयुगच्छन्नदूर्वापल्लवशोभितम्। कुष्ठमांसीमुरोशीरवालकामलकैर्युतम्। प्रियंगुपत्रसहितं सितवस्त्रोपवीतिनम्। छत्रोपानहसंयुक्तं दर्भविष्टरसंस्थितम्। चतुर्भिः संयुतं भूप तिलपात्रैश्चतुर्दिशम्। स्थापितं दधिपात्रेण घृतक्षौद्रयुतं मुखे। उपोषितः समभ्यर्च्य वासुदेवं जलेश्वरम्। पुष्पधूपोपहारैश्च यथाविभवमादृतः। संकल्प्य जलधेनुं च कुम्भं तदभिपूज्य च। पूजयेद्वत्सकं तद्वत्कृतं जलमयं बुधः। एवं संपूज्य गोविन्दं जलधेनुं सवत्सकाम्। सितवस्त्रधरः शान्तो वीतरागो विमत्सरः। दद्याद्विप्राय राजेन्द्र प्रीतये जलशायिनः। जलशायी जगद्योनिः प्रीयतां मम केशवः। इति चोच्चार्य भूनाथ विप्राय प्रतिपाद्य ताम्। अपक्वान्नाशिना स्थेयमहोरात्रमतः परम्। जलकुम्भम्' इत्यादि। कुम्भोऽत्र कलशः सुवर्णरजतयोः। रजतस्य खुराकृतित्वं तिलपात्राणां ताम्रमयत्वं दधिपात्रस्य कांस्यमयत्वम्। अनियतपरिमाणतया यथाशक्तिविधानम्। पञ्चरत्नानि धान्यानि च परिभाषायामुक्तानि। अत्र यद्यपि सामान्येनोपदेशः तथापि तत्सामान्यादितरेषु तथात्वमिति न्यायादितरधेनुवदविरुद्धधर्माद्यनुष्ठानं वेदितव्यम्। सुवर्णस्य शृङ्गाकृतित्वं रजतस्य खुराकृतित्वं तिलपात्राणां ताम्रमयत्वं दधिपात्रस्य कांस्यमयत्वं चानुसंधेयम्। तथा धान्यानि पार्श्वद्वये कुष्ठादीनि घ्राणदेशे प्रियङ्गुपत्रं श्रवणे यज्ञोपवीतं शिरःस्थाने स्थापयेत्। वत्सोऽपि चतुर्थांशेन धेनुवत्कार्यः। कचित्तु—'पूजयेद्वत्सकं तद्वत्कृतं घृतमयं बुधः।' इति पाठात् घृतजलयोर्विकल्पोऽवगम्यते। 'कृष्णाजिनं चतुर्हस्तं प्राग्ग्रीवं विन्यसेद्भुवि। गोमयेनोपलिप्तायां दर्भानास्तीर्य सर्वतः। लघ्वेणकाजिनं तद्वद्वत्सस्य परिकल्पयेत्। प्राङ्मुखीं स्थापयेद्धेनुमुदक्पादां सवत्सकाम्।' एणकाजिनं कृष्णाजिनम्। प्राङ्मुखीं प्राक्शिरसमित्यर्थः। तदुत्तरेण वत्सोऽपि तथैव कल्पनीय इति मत्स्यपुराणे। प्राकृतगुडधेनुवदत्र द्रव्यपरिमाणं बोध्यम्। तच्च 'उत्तमा गुडधेनुः स्यात्सदा भारचतु-

ष्टयम् । वत्सं भारेण कुर्वीत भाराभ्यां मध्यमा स्मृता । अर्धभारेण वत्सः स्याद्गृहवित्तानुसारतः।' भारस्तु 'तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुला ।' इति वचनाद्विंशतितुलापरिमितः गृहवित्तानुसारतः इति । अत्रोत्तममध्यमादिकल्पना निजवित्तानुसारतः कर्तव्येत्यर्थः । अथ प्रयोगः । कर्ता देशकालौ स्मृत्वाऽमुकधेनुदानमहं करिष्ये इति संकल्प्य गणेशपूजनं पुण्याहवाचनमाचार्यवरणं कृत्वाचार्येण स्वयं वा भूतशुद्ध्यादि कुर्यात् । तत्र क्रमः । यदत्र संस्थितमिति सर्षपान् विकीर्य शुची वो हव्येति भूमिं संप्रोक्ष्य समे भूदेशे गोमयोपलिप्तायां भूमौ दर्भानास्तीर्य तत्र कृष्णाजिने प्राग्ग्रीवे धेनुवत्सयोरुपकल्पनार्थमास्तीर्य तदुपरि व्रीहिगोधूमकङ्गुसर्षपमाषमुद्गरूपाणि ग्राम्यधान्यानि यथाप्रमाणं पार्श्वद्वये निधाय तत्र कुम्भं सजलं दर्भविष्टरस्थितं सुवर्णरजतान्वितं रत्नगर्भं दूर्वापल्लवशोभितं सितवस्त्रयुगच्छन्नं चतुर्दिक्षु तिलपात्रोपेतं सच्छत्रं सोपानत्कं संस्थाप्य मुखप्रदेशे दधिघृतक्षौद्रसहितानि त्रीणि पात्राणि विन्यस्य घ्राणदेशे कुष्ठमांसीमुरोशीरामलकादीनि विन्यस्य प्रियङ्गुपत्राणि श्रवणयोर्विन्यस्य शिरसि यज्ञोपवीतं निधाय इक्षुपादां मुक्ताफलेक्षणां सितकम्बलगलकम्बलां ताम्रककुत्पृष्ठां सितचामररोमाणं विद्रुमभ्रूयुगोपेतामिन्द्रनीलतारकां नवनीतस्तनाङ्कितां क्षौमपुच्छां कांस्यदोहां स्वर्णशृङ्गाभरणोपेतां राजतमुखीं नानाफलरूपदन्तयुक्तां गां सवस्त्रां संपाद्य एवंभूतं वत्सं च संपाद्य अद्येत्यादि जलधेनुदानमहं करिष्ये इति संकल्प्य तदङ्गत्वेन ब्राह्मणवरणं गोपूजनं च कृत्वा आ गावो अग्मन्निति सूक्तपठनोत्तरं सवत्सायै गवे नमः इत्यावाह्य प्राणप्रतिष्ठां कृत्वा मनोजूतिरिति प्रतिष्ठापूर्वकं संपूज्य पुष्पाञ्जलिं गृहीत्वा त्रिःप्रदक्षिणीकृत्य प्रार्थयेत् । 'या लक्ष्मीः सर्वभूतानां या च देवेष्ववस्थिता । धेनुरूपेण सा देवी मम शान्तिं प्रयच्छतु । देहस्था च रुद्राणी शंकरस्य सदा प्रिया । धेनुरूपेण सा देवी मम पापं व्यपोहतु । विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च विभावसोः । चन्द्रार्कशक्रशक्तिर्या धेनुरूपास्तु सा श्रिये । चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च । लक्ष्मीर्या लोकपालानां सा धेनुर्वरदास्तु मे । स्वधा त्वं पितृमुख्यानां स्वाहा यज्ञभुजां तथा । सर्वपापहरा धेनुस्तस्माच्छान्तिं प्रयच्छ मे । एवमामन्त्र्य तां धेनुं ब्राह्मणाय निवेदयेत् ।' अत्रैष दानवाक्यप्रयोगः । अद्य अमुकस्मिन्काले अमुकसगोत्रोऽहममुकशर्मा अमुककामः अमुकसगोत्राय अमुकशर्मणे ब्राह्मणाय इमां जलधेनुं यथोक्तसर्वोपस्क-

रणवर्ती यथोक्तवत्ससहितां विष्णुदेवतां तुभ्यं संप्रददे न मम । देवस्य त्वा, रुद्राय गामित्यादि । ब्राह्मणस्तु पुच्छदेशे प्रतिगृह्य स्वस्ति कुर्यात् । 'क इदं कस्मा अदात्कामः कामायादात्कामो दाता कामः प्रतिग्रहीता कामं समुद्र-माविश कामेन त्वा प्रतिगृह्णामि कामैतत्ते वृष्टिरसि द्यौस्त्वा ददातु पृथिवी प्रतिगृह्णातु ।' इति कामस्तुतिं पठेत् । ततो दक्षिणादानम् । ततो गोपुच्छे तर्पणं कृत्वा प्रदक्षिणां कृत्वा गोस्तवं कुर्यात् । 'गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश । यस्मा-त्तस्माच्छिवं मे स्यादिह लोके परत्र च । गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठ-तः । गावः शिरसि मे नित्यं गवां मध्ये वसाम्यहम् । पञ्च गावः समुत्पन्ना मथ्यमाने महोदधौ । तासां मध्ये च या नन्दा तस्यै देव्यै नमो नमः ।' कर्म परमेश्वरार्पणं कृत्वा ब्राह्मणान्भोजयित्वा स्वयं भोजनं कुर्यात् । इति जलधेनुदानविधिः ।

अथ घृतधेनुदानविधिः । वसिष्ठ उवाच । 'तिलाभावे तथा दद्याद्घृतधेनुं यतव्रतः । येन भूप विधानेन तदिहैकमनाः शृणु । वासुदेवं जगन्नाथं घृतक्षीराभिषे-चनैः । संपूज्य पूर्ववत्पुष्पैर्गन्धधूपादिभिर्नवैः । अहोरात्रोषितो भूत्वा अभिष्टूय घृतार्चि-षम् । घृतार्चिष जगन्नाथ देवदेव नमोऽस्तु ते ।' इति स्तुतिः । 'गव्यस्य सर्पिषः कुम्भं पुष्प-मालाविभूषितम् । कांस्यापिधानसंयुक्तं सितवस्त्रयुगेन च । हिरण्यगर्भसंयुक्तं मणिवि-द्रुममौक्तिकैः ।' अत्र पलसहस्रपरिमाणः कुम्भः । द्वादशपलाधिकानि पञ्चशतपला-नीति केचित् । कांस्यापिधानसहितं कांस्यपात्रपिहितं मध्यवर्तिना हिरण्येन सहित-मित्यर्थः । मणिविद्रुममौक्तिकैः सहितमिति शेषः । 'इक्षुयष्टियवान्पादान्खुरान्रौ-प्यमयांस्तथा । सौवर्णे चाक्षिणी कुर्याच्छृङ्गे चागुरुकाष्ठके ।' अत्र सुवर्णा-देरनुदितसंख्यतया यथाशक्तिविधानम् । 'सप्तधान्यमये पार्श्वे यत्तोर्णेन च केवलम् । कुर्यात्तुरुष्ककर्पूरैर्घ्राणं फलमयान्स्तनान् । क्षौमसूत्रेण लाङ्गलं रोमाणि सितसर्षपैः । ताम्रपात्रमयं पृष्ठं कुर्याच्छूद्वासमन्वितः । ईदृक्स्वरूपां संकल्प्य घृतधेनुं नराधिप । तद्वत्कल्पनया विद्वान्घृतवत्सं प्रकल्पयेत् । तं च विप्रं महाभागं मनसैव घृतार्चिषम् । कल्पयित्वा ततस्तस्मै प्रयतः प्रतिपादयेत् । एतां ममोपकाराय गृह्णीष्व द्विजसत्तम । प्रीयतां मम देवेशो घृतार्चिः पुरुषोत्तमः । इत्यु-दाहृत्य विप्राय दद्याद्धेनुं नराधिप ।' स्कन्दपुराणे त्वयं मन्त्रः । 'घृतं गावः प्रसूयन्ते

१ तद्वद्धेनुवत् । खुरशृंगादियुक्तामित्यर्थः । स च धेनोश्चतुर्थभागेन कर्तव्य. ।

घृतं भूम्यां प्रतिष्ठितम्। घृतमग्निश्च देवाश्च घृतं मे संप्रयच्छताम्।' इति। विष्णुधर्मोत्तरे तु—'घृतमग्निर्घृतं सोमस्तन्मयाः सर्वदेवताः। घृतधेनुप्रदानेन सर्वास्तुष्यन्तु देवताः। घृतरत्नसुवर्णानां सम्यक्कल्पनया कृताम्। दत्त्वैकरात्रं स्थित्वा तु घृताहारो नराधिप। मुच्यते सर्वपापेभ्यस्तथा दानफलं शृणु। घृतक्षीरवहा नद्यो यत्र पायसकर्दमाः। तेषु सर्वेषु लोकेषु सुपुण्येषूपजायते। पितुरूर्ध्वं नयेत्सप्त पुरुषांस्तस्य येऽप्यधः। तांस्तेषु नृप लोकेषु स नयत्यस्तकल्मषः। सकामानामियं व्युष्टिः कथिता नृपसत्तम। विष्णुलोकं नरा यान्ति निष्कामा घृतधेनुदाः। घृतमग्निर्घृतं सोमस्तन्मयाः सर्वदेवताः। घृतं प्रयच्छतां दत्ता भवन्त्यखिलदेवताः।' सुवर्णमत्र दक्षिणा। अनुक्तदक्षिणेषु तस्य यथाशक्तिविहितत्वात्। कृष्णाजिनाद्यासनादिकं तु जलधेनुवत्कार्यम्। गोस्तुतिः पूर्ववदेव। इति विष्णुधर्मोक्तघृतधेनुदानविधिः।

अस्यामेव राघवद्वादशीव्रतम्। अत्र द्वादशीशब्देनैकादश्येव ग्राह्या। दुर्वासा उवाच—'ज्येष्ठे मासेऽप्येवमेव संकल्प्य विधिना नरः। अर्चयेत्परमं देवं पुष्पैर्नानाविधैः शुभैः। ॐ नमो राघवायेति पादौ पूर्वं समर्चयेत्। त्रिविक्रमायेति कटिं धृतविश्वाय चोदरम्। उरः संवत्सरायेति कण्ठं संवर्तकाय च। सर्वास्त्रधारिणे बाहू स्वनाम्नाब्जरथाङ्गके[1]। सहस्रशिरसेऽभ्यर्च्य शिरस्तस्य महात्मनः। एवमभ्यर्च्य विधिवत्प्राग्वत्कुम्भं प्रकल्पयेत्। प्राग्वद्वस्त्रयुगच्छन्नौ सौवर्णौ रामलक्ष्मणौ।' प्राग्वन्मत्स्यप्रतिमावत्। अनयोः स्वरूपं विष्णुधर्मोत्तरे—'रामो दाशरथिर्मौली[2] राजलक्षणलक्षितः। भरतो लक्ष्मणश्चैव शत्रुघ्नश्च धनुर्धरः। तथैव नूनं कर्तव्याः किंतु मौलिविवर्जिताः' इति। 'अर्चयित्वा विधानेन प्रभाते ब्राह्मणाय तौ। दातव्यौ मनसा काममीहता पुरुषेण तु। प्रीयतां त्रिविक्रमो रामलक्ष्मणरूपीति मन्त्रतः। अपुत्रेण पुरा पृष्टो राज्ञा दशरथेन तु। वशिष्ठः पुत्रकामाय प्रोवाच परमादृतः। इदमेव विधानं तु कथयामास स द्विजः। प्राग्रहस्यं विदित्वा तु स राजा कृतवानिदम्। तस्य पुत्रः स्वयं जज्ञे रामाख्यो मधुसूदनः। चतुरंशोऽप्यभूद्विष्णुः परितोषान्महामुने। एतदैहिकमाख्यातं पारत्रिकमतः शृणु। दिव्यान्भोगान्भुञ्जते स्वर्गसंस्था यावदिन्द्रा दश[3] च द्विद्विसंख्याः। अतीत्य कालं पुनरेत्र मर्त्यं राजा राज्ञां जायते यज्ञयाजी। नश्यन्ति पापानि च तस्य पुंसः कामानवाप्नोति यथा समीहान्। निष्काम एतद्व्रत-

१—अब्जरथांगके शंखचक्रे। २—मौलीमुकुटवान्। ३—दश च द्विद्विसंख्याश्चतुर्दशेत्यर्थ.।

मेव चीर्त्वा प्राप्नोति निर्वाणपदं स्थिरं तत्'इति धरणीव्रते ज्येष्ठशुक्लैकादश्यां राघवद्द्वादशीव्रतम् । इति निर्जलैकादशीविधिः समाप्तः ।

युधिष्ठिर उवाच– 'ज्येष्ठे शुक्ले निर्जलाया माहात्म्यं च श्रुतं मया । आषाढे कृष्णपक्षे तु किंनामैकादशी भवेत् । कथयस्व प्रसादेन ममाग्रे मधुसूदन ।' श्रीकृष्ण उवाच– 'व्रतानामुत्तमं राजन्कथयामि तवाग्रतः।सर्वपापक्षयकरं भुक्तिमुक्तिप्रदायकम् । आषाढस्यासिते पक्षे योगिनीनाम नामतः । एकादशी नृपश्रेष्ठ महापातकनाशिनी । संसारार्णवमग्नानां याति भूता सनातनी । जगत्त्रये सारभूता योगिनी व्रतकारिणाम् । कथयामि तवाग्रेऽहं कथां पौराणिकीं शुभाम् । अलकायां राजराजः शिवभक्तिपरायणः । तस्यासीत्पुष्पबटुको हेममालीति नामतः । तस्य पत्नी सुरूपा च विशालाक्षीति नामतः । स तस्यां स्नेहसंयुक्तः कामपाशवशं गतः । मानसात्पुष्पनिचयमानीय स्वगृहे स्थितः । पत्नीप्रेमसमायुक्तो न कुबेरालयं गतः । कुबेरो देवसदने करोति शिवपूजनम् । मध्याह्नसमये राजन्पुष्पागमसमीक्षकः । हेममाली स्वभवने रमते कान्तया सह । यक्षराट् प्रत्युवाचाथ कालातिक्रमयोगतः । कस्मान्नायाति भो यक्षा हेममाली दुरात्मवान् । निश्चयः कथ्यतां तस्य प्रत्युवाच पुनः पुनः ।' यक्षा ऊचुः– ' वनिताकामुको गेहे रमते स्वेच्छया नृप । तेषां वाक्यं समाकर्ण्य कुबेरः कोपपूरितः । आह्वयामास तूर्णं तु बटुकं हेममालिनम् । ज्ञात्वा कालात्ययं सोऽपि भयव्याकुललोचनः । आख्यात एव आगत्य कुबेरस्याग्रतः स्थितः । तं दृष्ट्वा धनदः क्रुद्धः कोपसंरक्तलोचनः । प्रत्युवाच रुषाविष्टः कोपाद्विस्फुरिताधरः ।' धनद उवाच– ' आः पाप दुष्ट दुर्वृत्त कृताराध्यैकहेलन । अष्टादशश्वित्रयुक्तो वियुक्तः कान्तया सदा । अस्मात्स्थानादपध्वस्तो गच्छ स्थानमथाधमम् । इत्युक्ते वचने तेन तस्मात्स्थानात्पपात सः । महादुःखाभिभूतश्च कुष्ठैः पीडितविग्रहः । नैव तोयं न भक्ष्यं च न वै रौद्रो लभत्यसौ । न सुखं दिवसे तस्य न निद्रां लभते निशि । छायायां पीडिततनुर्निदाघेऽत्यन्तपीडितः । शिवपूजाप्रभावेण मतिस्तस्य न लुप्यते । पातकेनाभिभूतोऽपि पूर्वकर्म स्मरत्यसौ । भ्रममाणस्ततोऽगच्छद्धेमाद्रिं पर्वतोत्तमम् । तत्रापश्यन्मुनिवरं मार्कण्डेयं तपोधनम् । यस्यायुर्विद्यते यावद्ब्रह्मणो दिनसप्तकम् । आश्रमं स गतस्तस्य ऋषेर्ब्रह्मसदःसमम् । ववन्दे चरणौ तस्य दूरतः पापकर्मकृत् । मार्कण्डेयो मुनिवरो दृष्ट्वा तं कुष्ठिनं तदा । परोपकरणार्थाय समाहूयेदमब्रवीत् ।' मार्कण्डेय उवाच– 'कस्मात्कुष्ठाभि-

भूतस्त्वं कुतो निन्द्यतरो ह्यसि । इत्युक्तः स प्रत्युवाच मार्कण्डेयेन धीमता ।' हेममाल्युवाच—'राजराजस्यानुचरो हेममालीति नामतः । मानसात्पुष्पनिचयमानीय प्रत्यहं मुने । शिवपूजनवेलायां कुबेराय समर्पये । एकस्मिन्दिवसे काले लोपश्च विहितो मया । पत्नीसौख्यप्रसक्तेन कामव्याकुलचेतसा । तत्र क्रुद्धेन शप्तोऽस्मि राजराजेन वै मुने । कुष्ठाभिभूतः संजातो वियुक्तः कान्तया सह । अधुना तव सांनिध्यं प्राप्तोऽस्मि शुभकर्मणा । सतां स्वभावतश्चित्तं परोपकरणक्षमम् । इति ज्ञात्वा मुनिश्रेष्ठ मां प्रशाधि कृतागसम् ।' मार्कण्डेय उवाच—त्वया सत्यमिह प्रोक्तं नासत्यं भाषितं यतः । अतो व्रतोपदेशं ते कथयामि शुभप्रदम् । आषाढे कृष्णपक्षे त्वं योगिनीव्रतमाचार । अस्य व्रतस्य पुण्येन कुष्ठं यास्यति ते ध्रुवम् । इति वाक्यमृषेः श्रुत्वा दण्डवत्पतितः क्षितौ । उत्थापितश्च मुनिना बभूवातीव हर्षितः । मार्कण्डेयोपदेशेन कृतं तेन व्रतोत्तमम् । ईदृग्विधं नृपश्रेष्ठ कथितं योगिनीव्रतम् । अष्टाशीतिसहस्राणि द्विजान्भोजयते द्विजः । तत्फलं समवाप्नोति योगिनीव्रतकृन्नरः । महापापप्रशमनं बहुपुण्यप्रदायकम् । पठनाच्छ्रवणाद्राजल्लँभते परमां गतिम् । यत्पृष्टं तु त्वया राजन्योगिन्या व्रतमुत्तमम् । भूतानां च हितार्थाय तवाग्रे कथितं मया । सर्वतीर्थेषु यत्पुण्यं सर्वदानेषु यत्फलम् । तत्फलं समवाप्नोति योगिन्याश्च प्रभावतः । ब्रह्महा च गुरुद्रोही स्त्रीबालपशुघातकः । मुच्यते सर्वपापेभ्यो नात्र कार्या विचारणा । महापापप्रशमनी महातुष्टिफलप्रदा । शुचौ कृष्णैकादशी ते कथिता योगिनी नृप ।' इति ब्रह्मवैवर्तपुराणे आषाढकृष्णपक्षे योगिन्येकादशीमाहात्म्यं समाप्तम् । अस्यां पुण्डरीकाक्षनाम्ना विष्णुपूजनं कुर्यात् ।

अथ भविष्योत्तरपुराणोक्तं शयन्येकादशीमाहात्म्यम् । युधिष्ठिर उवाच—'आषाढस्यासिते पक्षे का च ह्येकादशी भवेत् । किं नाम को विधिस्तस्याः किं पुण्यं च वदस्व मे ।' श्रीकृष्ण उवाच—'शृणु पार्थ प्रवक्ष्यामि गोविन्दशयनव्रतम् । कटिदानं समुत्थानं चातुर्मास्यव्रतक्रमम् ।' युधिष्ठिर उवाच—'किं देवशयनं नाम किं वै देवःस्वपित्यसौ । देवः किमर्थं स्वपिति किं विधानं च तद्वद । के मन्त्राः के च नियमा व्रतान्यत्र कृतिश्च का । किं ग्राह्यं किं च भोक्तव्यं सुप्ते देवे जनार्दने ।' श्रीकृष्ण उवाच—'मिथुनस्थे सहस्रांशौ स्वापयेन्मधुसूदनम् । तुलाराशिगते तस्मिन्पुनरुत्थापयेद्धृतम् । अधिके मासि पतिते उक्त एव विधिक्रमः । नान्यथा स्वापयेद्देवं तथैवोत्थापयेद्धरिम् । आषाढस्य सिते पक्षे एकादश्यामुपोषितः ।

स्थापयेत्प्रतिमां विष्णोः शंखचक्रगदाधराम् । काञ्चनीं राजतीं ताम्रमयीं पैत्त-लकीं तथा । पीताम्बरधरां सौम्यां पर्यङ्के स्वास्तृते शुभे । सितवस्त्रसमा-च्छन्ने सोपधाने युधिष्ठिर । इतिहासपुराणज्ञो ब्राह्मणो वेदपारगः । स्नापयित्वा दधिक्षीरघृतक्षौद्रजलेन वै । समालभ्य शुभैर्गन्धैः पुष्पैर्धूपैः सुधूपिताम् । पूजितां कुसुमैः शुभैर्मन्त्रेणानेन पाण्डव । सुप्ते त्वयि जगन्नाथे जगत्सुप्तं भवेदिदम् । विबुद्धे त्वयि बुध्येत जगत्सर्वं चराचरम्।एवं तां प्रतिमां विष्णोः स्थापयित्वा युधिष्ठिर।तस्यैवाग्रे स्वयं स्थित्वा गृह्णीयान्नियमान्नरः।चतुरो वार्षिकान्मासान्देवस्योत्थापनावधि । गृहीतो नियमः शुद्धो निर्विघ्नं स च यातु मे।स्त्री वा नरो वा मद्भक्तो धर्माधर्मदृढव्रतः।गृह्णीयान्नि-यमानेतान्दन्तधावनपूर्वकम् । तेषां फलानि वक्ष्यामि कर्तॄणां ते पृथक्पृथक् । मधुस्वरो भवेद्राजन्पुरुषो गुडवर्जनात् । लभेच्च संततिं दीर्घां पुत्रपौत्रादिवर्धिनीम् । तैलस्य वर्जनात्पार्थ सुन्दराङ्गः प्रजायते । कटुतैलपरित्यागाच्छत्रुनाशमवाप्नुयात् । मधुतैल-परित्यागात्सौभाग्यमतुलं भवेत् । पुष्पादिभोगत्यागेन स्वर्गे विद्याधरो भवेत् । योगा-भ्यासी भवेद्यस्तु स ब्रह्मपदमाप्नुयात् । कटुकतिक्तमधुरकषायक्षारजान्रसान् । वर्ज-येत्सर्व वैरूप्यं दौर्गन्ध्यं नाप्नुयात्सदा । ताम्बूलवर्जनाद्भोगी रक्तकण्ठश्च जायते । शाक-पत्राशनाद्भोगी अपाकृतमलो भवेत् । पादाभ्यङ्गपरित्यागाच्छिरोभ्यङ्गविवर्जनात् । दीप्तिमान्दीप्तिकरणो यक्षो द्रव्यपतिर्भवेत् । दधिदुग्धपरित्यागी गोलोकं लभते नरः । इन्द्रातिथ्यत्वमाप्नोति स्थालीपाकविवर्जनात् । लभते संततिं दीर्घां तैलपक्वविवर्जनात् । भूमौ संस्तरशायी च हरेरनुचरो भवेत् । सदा मुनिः सदा योगी एकसस्यस्य भोजनात् । निर्व्याधिर्नीरुगोजस्वी मद्यमांसविवर्जनात् । एवमादिपरित्यागाद्धर्मः स्याद्धर्मनन्दन । एकान्तरोपवासे च ब्रह्मलोके महीयते।धारणान्नखलोमानां गङ्गास्नानं दिने दिने । मौन-व्रती भवेद्यस्तु तस्याज्ञाऽस्खलिता भवेत्।भूमौ भुङ्क्ते नरो यस्तु पृथिव्यधिपतिर्भवेत् । ॐ नमो नारायणायेति जपित्वाऽनन्तकं फलम्।विष्णुपादाम्बुजस्पर्शात्कृतकृत्यो भवेन्नरः । विष्णोर्देवालये कुर्यादुपलेपनमार्जनम् । कल्पस्थायी भवेद्राजन्स नरो नात्र संशयः । प्रदक्षिणशतं यस्तु करोति स्तुतिपाठकः । हंसयुक्तविमानेन स तु विष्णुपुरं व्रजेत् । त्रिरात्रभोजनाच्चैव मोदते दिवि देववत् । षडहभोजनाद्राजन्देवो वै मानुषो भवेत् । प्राजापत्यं चरंश्चैव चातुर्मास्यव्रतं नरः । मुच्यते पातकैः सर्वैस्त्रिविधैर्नात्र संशयः । तप्तकृच्छ्रातिकृच्छ्राभ्यां यः क्षिपेच्छयनं हरेः।स याति परमं स्थानं पुनरावृत्तिवर्जितम्। चान्द्रायणैर्नरो राजन्क्षिपेन्मासचतुष्टयम् । दिव्यदेहो भवेत्सोऽथ सोमलोकं च

गच्छति । शुक्लपक्षे नरो यो वै त्यजेदन्नादिभक्षणम् । तेन पक्षोपवासेन प्रतिपक्षं हरिप्रियः । स गच्छेद्धरिसायुज्ये न भूयस्तु प्रजायते । भिक्षाभोजी नरो यो हि स भवेद्वेदपारगः । न लिप्यते स पापैस्तु पद्मपत्रमिवाम्भसा । कृष्णे विष्णौ हृषीकेशे सुप्ते वै मधुसूदने । परान्नं वर्जयेद्यस्तु कृतकृत्यो भवेद्धि सः । परान्नवर्जनात्तात चान्द्रयणफलं लभेत् । सर्वपापविनिर्मुक्तः सोमलोके महीयते । शाकाहारं तु यः कुर्याद्राजन्मासचतुष्टयम् । सबन्धुवर्गसंमानं लभते नात्र संशयः । पयोव्रतेन यो राजन्क्षिपेन्मासचतुष्टयम् । तस्य वंशसमुच्छेदः कदाचिन्नोपपद्यते । लवणं वर्जयेद्यस्तु भूप मासचतुष्टयम् । त्रिजन्मोपार्जितं पापं सर्वं नाशमवाप्नुयात् । शक्त्या दानं तु यः कुर्याद्यावन्मासचतुष्टयम् । विष्णुमुद्दिश्य राजेन्द्र सदेवत्वमवाप्नुयात् । पञ्चगव्याशनः पार्थ चान्द्रायणफलं लभेत् । निर्मलं देहमाप्नोति गङ्गास्नानं दिने दिने । द्यूतानृते कांस्यमांसं व्यायामक्रोधमैथुनम् । हिंसां तैलं विवादं च निद्रां निर्माल्यलङ्घनम् । द्वादश्यां द्वादशैतानि विष्णुभक्तो विवर्जयेत् । उपवासं तथा नक्तमेकभुक्तमयाचितम् । अशक्तस्तु यमान्कुर्यात्सायं प्रातरखण्डितम् । स्नानं पूजादिसंयुक्तं स नरो हरिलोकभाक् । गीतवाद्यकरो विष्णोर्गान्धर्वं लोकमाप्नुयात् । लोकान्प्रबोधयेद्यस्तु सोऽन्ते विष्णुपुरं व्रजेत् । कृत्वा प्रेक्षणकं दिव्यं लोकमप्सरसां व्रजेत् । कृत्वा प्रेक्षणकं दिव्यं निर्मलं देहमाप्नुयात् । नित्यस्नायी नरो राजन्नरकं न स पश्यति । भोजनं वर्जयेद्यस्तु स स्नानं पौष्करं लभेत् । तीर्थजाम्बुहरिस्नानान्निर्मलं देहमाप्नुयात् । एकभुक्ताशनान्नित्यमग्निहोत्रफलं लभेत् । अयाचितेन चाप्नोति वापीकूपप्रपाफलम् । षष्ठाह्नकालभोगेन[1] स्थायी स्वर्गे नरो भवेत् । पत्रेषु यो नरो भुङ्क्ते कुरुक्षेत्रफलं लभेत् । शिलायां भोजने नित्यं प्रयागस्नानजं फलम् । सुप्ते मयि जगन्नाथे केशवे गरुडध्वजे । निवर्तन्ते क्रियाः सर्वाश्चातुर्मास्ये च भारत । यामद्वयं जागरणान्न रोगैरभिभूयते । एवमादिव्रतैः पार्थ तुष्टिमायाति केशवः । विवाहव्रतबन्धादिचूडासंस्कारलक्षणम् । क्षौरग्रामप्रवेशादिगोदानादिप्रतिष्ठितम् । पुण्यानि यानि कर्माणि वर्जयेद्दक्षिणायने । असंक्रान्तं तथा मासं दैवे पित्र्ये च वर्जयेत् । मलिम्लुचमशौचं च सूर्यसंक्रान्तिवर्जितम् । प्राप्ते भाद्रपदे मासि एकादश्यां सितेऽहनि । कटिदानं भवेद्विष्णोर्महापूजा प्रवर्तते । कृष्ण कृष्ण जगन्नाथ योगगम्य निरञ्जन । कटिदानं कुरुष्वाद्य प्राप्ते भाद्रपदे शुभे । यदेतद्देवशयनं तत्रेदं कारणं शृणु । पुरा तपःप्रभावेण तोषयित्वा हरिं

---

१ भोगेन भोजनेन ।

प्रभुम् । याचितं सुखसंवासस्थानं मे योगनिद्रया । निरीक्ष्य चात्मनो देहं रुद्धं लक्ष्म्या उरःस्थलम् । शंखचक्रासिशार्ङ्गैश्च बाहवोऽप्यथ पश्य मे । नाभेरधो निरुद्धं मे वैनतेयेन पक्षिणा । मुकुटेन शिरो रुद्धं कुण्डलैः श्रवणे तथा । ददाम्यहं ततस्तुष्टो नेत्रयोः स्थानमादरात् । चतुरो वार्षिकान्मासान्वस प्रीता भविष्यसि । योगनिद्रापि मद्वाक्यं श्रुत्वा पौराणकं शुभम् । चकार लोचनावासमतोऽर्थे मे युधिष्ठिर । अहं तां तात इच्छामि मानयामि मनस्विनीम् । योगनिद्रां महानिद्रां शेषाहिशयने स्वयम् । क्षीरोदतोयवीच्यग्रैर्धौतपादं समाहितम् । लक्ष्मीकराम्बुजैः श्लिष्टैर्मृध्यमानपदद्वयम् । तत्र काले तु यो मासान्मद्भक्तश्चतुरः क्षिपेत् । व्रतैरनेकनियमैः पाण्डवश्रेष्ठ मानवः । कल्पस्थायी विष्णुलोके वसते नात्र संशयः । ततो विबोधयेद्देवं शंखचक्रगदाधरम् । कार्तिके शुक्लपक्षस्य एकादश्यां पृथासुत । मंत्रेणानेन राजेन्द्र देवमुत्थापयेत्ततः । उत्तिष्ठोत्तिष्ठ गोविन्द योगनिद्रां विहाय च । लक्ष्मीं विसृज्य लोके त्वमलक्ष्मीं नुद केशव।समुत्थिते तदा विष्णौ क्रिया सर्वा प्रवर्तते।तत्रैव देवदेवस्य पूर्ववत्स्नानमाचरेत् । महातूर्यरवे रात्रौ भ्रामयेत्स्यन्दने स्थितम् । उत्थितं देवदेवेशं नगरे पार्थिवः स्वयम् । दीपोद्यतकरे मार्गे नृत्यगीतसमाकुले । यो यो दामोदरं पश्येदुत्थितं धरणीधरम् । स स देशोऽपि राजेन्द्र सर्वः स्वर्गाय कल्पते । रात्रौ जागरणं कार्यमेकादश्यां सुरालये । प्रभाते विमले स्नात्वा द्वादश्यां विष्णुमर्चयेत् । जुहुयाद्धव्यवाहं च हव्यैर्द्रव्यैर्घृतादिभिः । ततो विप्राञ्छुभान्स्नात्वा भोजयेदन्नविस्तरैः । घृतक्षीरदधिक्षौद्रकषायगुडमोदकैः । यजमानोऽग्रतः स्थित्वा त्वराहास्यविवर्जितः । एकादश दशाष्टौ वा भोजयेत्कुरुसत्तम । अर्चयेच्चन्दनैश्चूर्णैः पुष्पैर्गन्धैर्द्विजोत्तमान् । शास्त्रोक्तविधिना पार्थ भोजयेद्भगवद्व्रतान् । आचान्तेभ्यस्ततो दद्यात्त्यक्तं यत्किंचिदेव च । स्वभावाद्यदभीष्टं वै पत्रं पुष्पं फलादिकम् । चतुरो वार्षिकान्मासान्नियमो यस्य यः कृतः । कथयित्वा द्विजेभ्यस्तद्दद्याद्भक्त्या सदक्षिणम् । दत्त्वा विसर्जयेद्विप्रांस्ततो भुञ्जीत तत्स्वयम् । यत्त्यक्तं चतुरो मासान्प्राप्ति तस्य समुच्चरन् । एवं य आचरेत्पार्थ सोऽनन्तफलमाप्नुयात् । अवसाने तु राजेन्द्र वासुदेवपुरं व्रजेत् । यस्याविघ्नं समाप्येत चातुर्मास्यव्रतं नृप । स भवेत्कृतकृत्यस्तु न पुनर्मानुषो भवेत् । यो देवशयनं चापि कटिदानं समाचरेत् । उत्थानं चापि कृष्णस्य स हरेर्लोकमाप्नुयात् । शृणोति ध्यायति स्तौति जुहोत्याख्याति यो नरः । हरेर्भक्तिकरः पार्थ स गच्छेद्वैष्णवं पदम् । दुग्धाब्धिभोगशयने भगवाननन्तो

यस्मिन्दिने स्वपिति चाथ विबुध्यते वा । यस्मिन्ननन्यमनसामुपवासभाजां पुंसां ददाति सुगतिं गरुडाङ्गगामी ।' इति भविष्योत्तरपुराणे विष्णोः शयनकटिदानोत्थानैकादशीमाहात्म्यं संपूर्णम् ।

आषाढशुक्लैकादश्यां स्वापमहोत्सव उक्तो मदनरत्ने ब्रह्मपुराणेऽपि—'एकादश्यां तु शुक्लायामाषाढे भगवान्हरिः । भुजङ्गशयने शेते क्षीरार्णवजले सदा । ततस्तत्प्रतिमा कार्या सर्वलक्षणसंयुता । सुप्ता तु शेषपर्यङ्के शैलमृद्भिस्तु वारिभिः । ताम्रारकूटरजतैस्तथा चित्रपटेऽथ वा । लक्ष्म्या उत्सङ्गहस्ते च विन्यस्तचरणाम्बुजा । नानाविधोपकरणैः पूज्या च विधिपूर्वकम् । उपवासश्च कर्तव्यो रात्रौ जागरणं तथा । तस्यां रात्र्यां व्यतीतायां द्वादश्यां पूजयेत्तथा । त्रयोदश्यां तथा गीतं नृत्यं वाद्यं निवेदयेत् ।' इति । टोडरानन्देऽपि—'आषाढशुक्लैकादश्यां कुर्यात्स्वममहोत्सवम् ।' इति । अयं च द्वादश्यामपि कार्यः । 'आभाकाद्येषु मासेषु मिथुने माधवस्य च । द्वादश्यां शुक्लपक्षे च प्रस्वापावर्तनोत्सवाः ।' इति निर्णयसिन्धौ भविष्योक्तेः । 'आषाढशुक्लद्वादश्यां क्षीराब्धिशयनोत्सवः । कार्योऽन्यथा त्वनावृष्टिर्भवेत्पौराणवाक्यतः ।' इति रामार्चनचन्द्रिकोक्तेश्च । द्वादश्यामित्यत्र पारणाहमात्रं विवक्षितम् । 'पारणाहे पूर्वरात्रे घण्टादीन्वादयेन्मुहुः ।' इति तत्रैवोक्तेः । नृसिंहपरिचर्यायामपि—यद्यपि 'आषाढस्य सिते पक्षे एकादश्यामुपोषितः । नक्तं द्विजवरश्रेष्ठ गृह्णीयान्नियमं व्रती । कार्तिके शुक्लपक्षस्य एकादश्यां समाहितः ।' इत्यादिवचनैरेकादश्यामेवानुष्ठेयता गम्यते । तथापि 'इयं च द्वादशी देवप्रबोधार्थं विनिर्मिता' इति मन्त्रलिङ्गानुगृहीतशिष्टाचाराद्द्वादश्यामप्यनुष्ठेयता निर्धार्यते इत्युक्तम् । यत् द्वादश्यां शयनादिकमुक्तं तन्मिथुनार्क एव । आभाकाद्येषु मासेष्विति भविष्योक्तेः । स्वापकालविशेषस्तु—'निशि स्वापो दिवोत्थानं संध्यायां परिवर्तनम् ।' इति ब्रह्मपुराणवचनेन विशिष्योक्तेः । एताश्च द्वादश्यो रात्रिसंध्यादिनेष्वनुराधाश्रवणरेवतीनामादिमध्यान्तभागयुक्ताः क्रमेण प्रस्वापादिषु प्रशस्ताः । तथा च नारदीये—'मैत्राद्यपादे स्वपितीह विष्णुः श्रुतेश्च मध्ये परिवर्तमेति । पौष्णावसाने च सुरारिहन्ता प्रबुध्यते मासचतुष्टयेन ।' इति । भविष्येऽपि—'आभाकासितपक्षेषु मैत्रश्रवणरेवती । आदिमध्यावसानेषु प्रस्वापावर्तनोत्सवाः ।' यदा तु द्वादशीरात्र्यादिभागेषु तत्तन्नक्षत्रभागो नास्ति तदा द्वादशीनक्षत्रमात्रयोगोऽपि रात्र्यादिगतो ग्राह्यः । 'पादयोगो यदा न स्यादृक्षेणापि

---

१—उत्सङ्गहस्ते उत्सङ्गस्थितहस्ते ।

तदा भवेत् ।' इति वराहपुराणात्—'विष्णुर्दिवा न स्वपिति न च रात्रौ प्रबुध्यते । द्वादश्यामृक्षसंयोगे पादयोगो न कारणम् ।' इति विष्णुधर्मोत्तराच्च । यदा तु द्वादशीषु तानि नक्षत्राणि न सन्त्येव किंत्वेकादशीषु त्रयोदशीषु वा, तदा तत्रापि तत्तदृक्षभाग एव निशादिवेलानादरेण प्रस्वापादि कार्यम् । 'अप्राप्ते द्वादशीमृक्षे उत्थानशयने हरेः । पादयोगेन कर्तव्ये नाहोरात्रं विचिन्तयेत् ।' इति जीमूतवाहनधृतवचनात् । 'पादयोगादन्यतिथौ द्वादश्यामृक्षसंगमात् ।' इति वचनाच्च । कौस्तुभे तु—अप्राप्त इत्यादिवचनं मुख्यकाले केनापि निमित्तेन अकृतोत्सवेन पुंसा त्रयोदश्यादिगौणकाले कर्तव्य उत्सवः । पादयोगवशेन दिवैव वा कार्यो रात्रौ वा तद्रहितायामिति संदेहे नियमार्थं, न तु नक्षत्ररहितद्वादशीबाधेन त्रयोदश्यादौ पादयोगेऽप्राप्तकर्तव्यतायाः प्रापणपूर्वं रात्र्यादिनिषेधार्थम् । अपूर्वविधौ गौरवादिति व्याख्यातम् । एवं च द्वादश्यां निशाद्यादरेऽन्यतिथौ च नक्षत्रपादयोगादरे नियते सति यदा द्वादशीषु निशादेरन्यत्र तत्तदृक्षभागयोगोऽन्यतिथौ च तदितरनक्षत्रस्यैव योगः तदा द्वादशीषु संध्यायां प्रस्वापादि । 'द्वादश्यां संधिसमये नक्षत्राणामसंभवे । आभाकासितपक्षेषु शयनावर्तनादिकम् ।' इति वाराहवचनात् । संधिसमय इति शयनादावन्वेति संधिसमयश्च सायं संध्यैव । 'रेवत्यादिरथान्तो वा द्वादश्यां च विना भवेत् । उभयोरप्यभावे तु संध्यायां च महोत्सवः ।' इति हरिभक्तिविलासे । 'रेवत्यन्तो यदा रात्रौ द्वादश्यां च समागतः । तदा प्रबुध्यते विष्णुर्दिनान्ते प्राप्य रेवतीम् ।' इति जीमूतवाहनधृतवचनात् । अत्र बहुषु वचनेषु चतुर्थभागवाचिपादग्रहणाच्चतुर्धाविभक्तानुराधारेवत्योराद्यान्त्यपादयोरेव स्वापबोधोत्सवौ कार्यौ । न चादिमध्यावसानेषु इति वाक्ये 'समं स्यादश्रुतत्वात्' इति न्यायेन त्रेधा विभाग एव । अत एव मध्यग्रहणमप्युपपद्यते इति वाच्यम् । वचनान्तरेषु पादग्रहणेन विशेषश्रवणादश्रुतत्वादिति हेतोरसिद्धेः । श्रवणस्य तु त्रिधा विभक्तस्य मध्यभाग एव ग्राह्यः । आषाढकार्तिकपौर्णमास्योरपि स्वापप्रबोधावाह यमः—'क्षीराब्धौ शेषपर्यङ्के आषाढ्यां संविशेद्धरिः । निद्रां त्यजति कार्तिक्यां तयोस्तं पूजयेत्सदा ।' इति । अत्र चाषाढीकार्तिकीपदे आषाढस्येयं कार्तिकस्येयमिति व्युत्पत्त्यैकादशीपरे । न च 'वृद्धिर्यस्याचामादिः' इति वृद्धसंज्ञायां छः, आषाढीयमिति स्यादिति वाच्यम् । क्वचिदपवादविषयेऽप्यौत्सर्गिकप्रवृत्तिरिति न्यायेन अण्प्रत्ययेनेष्टसिद्धिरिति लक्ष्मीधरभट्टाः । यत्तु—'आषाढशुक्लपक्षान्ते भगवान्मधुसूदनः । भोगिभोगे निजां मायां योगनिद्रां

समसुयात् । शेतेऽसौ चतुरो मासान्यावद्भवति कार्तिकी ।' इति वचनं तदपि पौर्णमास्यां शयनप्रबोधस्वीकारौ येन कृतौ तद्विषयं बोध्यम् । श्रीदत्तादयस्तु-आषाढशुक्लैकादशीमारभ्य पौर्णमासीपर्यन्तं विष्णोर्निद्राग्रहणरूपशयनसमयः । अत एव एकादश्यां शयनमभिधाय तदादिदिनपञ्चके कर्मकथनं ब्रह्मपुराणे वराहपुराणे च । निद्राग्रहणं मन्त्रानन्तरमाषाढमासे द्वादश्यामित्यभिधानम् । वामनपुराणे च-'अनुज्ञां ब्राह्मणेभ्यश्च द्वादश्यां प्रयतः शुचिः । लब्ध्वा पीताम्बरधरः स्वस्तिनिद्रा समानयेत् ।' इत्यभिधानं च । यमस्मृतौ तु आषाढीपदस्योपाधेस्तत्रैव प्रवृत्तेः पूर्णिमायां शयनाभिधानं च संगच्छते । विष्णुधर्मोत्तरेऽप्येवम् । केचित्तु-भगवतः शयनकाले विकल्प एव कथम् । अन्यथा-' आवैशाखाद्भुजगवनिताचुम्बनायासखिन्नो देवो दैत्यप्रमथनपटुर्यावदेकान्तसुप्तः । अन्तः शय्यापरिणततनुर्योगनिद्रामुपैति तावद्वृष्टेः समय उदितो ब्रह्मणो भाषितेन ।' इति गणकशास्त्राद्वैशाखादिमासे शयनमित्याहुः, एतेषां च पक्षाणां यथासंप्रदायं व्यवस्था । श्रीरामस्य तु पारणोत्तरं द्वादशीमध्ये त्रयोदशीमध्ये वा पूर्वरात्रे स्वापोत्सवः । पारणाहे पूर्वरात्रे इति रामार्चनचन्द्रिकोक्तेः । शिष्टास्तु सर्वदेवानामपि पारणोत्तरमेव रात्रौ कुर्वन्तीति केचित् । यत्तु मोहचूडोत्तरे-' मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत् । द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ।' इति तदुत्तरवर्षगतकर्कार्कस्वापपरमिति माधवः । 'मेषादिमिथुनान्तेषु यदा दर्शद्वयं भवेत् । अब्दान्तर तदावश्यं मिथुनार्के हरिः स्वपेत् ।' इति वराहमिहिरोक्तेः । एतस्य चावश्यानुष्ठेयतोक्ता रामार्चनचन्द्रिकायां गारुडे-'मिथुनस्थे सहस्रांशौ न स्वापयति यो हरिम् । वैष्णवैः सह संभूय ह्यनावृष्टिस्तदा भवेत् ।' इति ।

अथ रामार्चनचन्द्रिकोक्तः स्वापमहोत्सवविधिः । 'पारणाहे पूर्वरात्रे घण्टादीन्वादयेन्मुहुः । विधाय महतीं पूजां विष्णुमभ्यर्च्य वैष्णवान् । नीराज्य नरयानेऽथ राममारोप्य वैष्णवैः । गीतवादित्रघोषेण देवं नीत्वा जलाशयम् । पुष्पाञ्जलिं प्रदायाथ यानादुत्तारयेत्प्रभुम् । तीरेऽङ्घ्रिन्यासमाशास्य हस्तं दत्वोपवेशयेत् । धौताङ्घ्रिपाणिराचान्तः कुर्यात्संकल्पमादृतः ।न्यासं कृत्वा च देवे च स्वर्णघर्मानुवाकतः । तथा पुरुषसूक्तेनोत्तरनारायणेन च । पञ्चामृतेन संस्नाप्य संपूज्याथ रघूत्तमम् । अतो देवेति मन्त्रेण जले प्रस्वापयेत्प्रभुम् । शेषपर्यङ्कवर्येऽस्मिन्फणामणिगणामले । श्वेतद्वीपान्तरे देव करु निद्रां नमोऽस्तु ते । अथ कृत्वा महापूजां गन्धस्रग्धूपदीपकैः

अन्नताम्बूलनृत्याद्यैराशास्यानुग्रहं हरेः। सुप्ते त्वयि जगन्नाथे जगत्सुप्तं भवेदिदम्। विबुद्धे च विबुध्येत प्रसन्नो मे भवाव्यय। इति संप्रार्थ्य तस्याग्रे गृह्णीयान्नियमानि-मान्। श्वेतद्वीपे भोगिनाथे योगिनाथे स्थिते त्वयि। चातुर्मास्यव्रतेऽनुज्ञां देहि लक्ष्मी-पते मम। लब्ध्वाऽनुज्ञां शंखहस्तो यथा प्रोषितभर्तृका। चतुरो वार्षिकान्मासात्रा-घवोत्थापनावधि। इमं करिष्ये नियमं निर्विघ्नं कुरु मेऽच्युत। इदं व्रतं मया देव गृहीतं पुरतस्तव। निर्विघ्नं सिद्धिमायातु प्रसादात्ते रमापते। गृहीतेस्मिन्व्रते देव पञ्चत्वं यदि मे भवेत्। तदा भवतु संपूर्ण प्रसादात्ते रघूत्तम। इत्यभ्यर्थ्याथ देवाय शंखेनार्घ्यं निवेदयेत्।' इति। **अथ प्रयोगः।** एकादश्यां नित्यं नैमित्तिकं च पूजनं कृत्वा नरया-नेन रथेन वा गीतवादित्रघोषेण देवं जलाशयं नीत्वा पुष्पाञ्जलिं प्रदाय यानादुत्तार्य स्वहस्ते हस्तं दत्त्वा तीरे उपवेशयेत्। ततः स्वयं धौताङ्घ्रिपाणिराचान्तः संकल्पं कुर्यात्। ततो विष्णुमन्त्रस्य छन्दऋषिन्यासपूर्वकं ध्यानं कृत्वा केशवादिमातृकां स्वदेहे देवे च न्यसेत्। ततः सुवर्णघर्मानुवाकपुरुषसूक्तोत्तरनारायणानुवाकान्न्यसेत्। ते तु यथा—"सुवर्णं घर्मं परिवेदवेनम् इन्द्रस्यात्मानं दशधा चरन्तम् अन्तः समुद्रे मनसा चरन्तं ब्रह्मान्वविन्दद्दशहोतारमर्णे, अन्तः प्रविष्टः शास्ता जनानाम्, एकः सन् बहुधा विचारः,शतꣳसहस्राणि यत्रैकं भवन्ति। सर्वे वेदा यत्रैकं भवन्ति, सर्वे होतारो यत्रैकं भवन्ति, स मानसीन आत्मा जनानाम्,अन्तः प्रविष्टः शास्ता जनानाꣳ सर्वात्मा, सर्वाः प्रजा यत्रैकं भवन्ति, चतुर्होतारो यत्र संपदं गच्छन्ति देवैः,स मानसीन आत्मा जनानाम्, ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठाम्, दिव आत्मानꣳ सवितारं बृहस्पतिं, चतुर्होतारं प्रदिशोऽनुक्लृप्तं, वाचो वीर्यं तपसाऽन्वविन्दत् अन्तः प्रविष्टं कर्तारमेतं त्वष्टारꣳ रूपाणि विकुर्वन्तं विपश्चिम्। अमृतस्य प्राणं यज्ञमेतं चतुर्होतॄणामात्मानं कवयो निचिक्युः अन्तः प्रविष्टं कर्तारमेतं देवानां बन्धुर्निहितं गुहासु अमृतेन क्लृप्तं यज्ञमेतं चतुर्होतॄणामात्मानं कवयो निचिक्युः शतं नियुतः परिवेद विश्वा विश्ववारः विश्वमिदं वृणोति इन्द्रस्यात्मा निहितः पञ्चहोता अमृतं देवानामायुः प्रजानाम्। इन्द्रꣳ राजानꣳ सवितारमेतं वायोरात्मानं कवयो निचिक्युः रश्मिꣳ रश्मीनां मध्येतपन्तं ऋतस्य पदे कवयो निपान्ति य आण्डकोशे भुवनं बिभर्ति अनिर्भिण्णः सन्नथ लोकान्विचष्टे। यस्याण्डकोशꣳ शुष्ममाहुः प्राणमुल्वं तेन क्लृप्तोमृतेनाहमस्मि। सुवर्णं कोशꣳ रजसा परिवृतं देवानां वसुधानीं विराजम्। अमृतस्य पूर्णां तामु कलां विचक्षते पादꣳ षड्ढोतुर्न किलाविवित्से येनर्तवः पञ्चधोत क्लृप्ताः उत वा षड्धा मनसोत क्लृप्ताः। तꣳ षड्ढोतार-

मृतुभिः कल्पमानं ऋतस्य पदे कवयो निपान्ति अन्तः प्रविष्टं कर्तारमेतम् अन्तश्चन्द्रमसि मनसा चरन्तं सहैवसन्तं न विजानन्ति देवाः इन्द्रस्यात्मान॰ शतधा चरन्तम् । इन्द्रो राजा जगतो य ईशे सप्त होता सप्तधा विकॢप्तः परेण तन्तुं परिषिच्यमानम् अन्तरादित्ये मनसा चरन्तं देवानां हृदयं ब्रह्मान्वविन्दत् ब्रह्मैतद्ब्रह्मण उज्जभार अर्कं॰श्चोतन्त॰ सरिरस्य मध्ये आयस्मिन्त्सप्त पेरवः मेहन्ति बहुला॰ श्रियं बह्वश्वामिन्द्र गोमतीम् । अच्युतां बहुला॰ श्रियं स हरिर्वसुवित्तमः पेरुरिन्द्राय पिन्वते बह्वश्वामिन्द्रगोमतीम् अच्युतां बहुलां श्रियं मह्यमिन्द्रो नियच्छतु शत॰शता अस्य युक्ता हरीणाम् अर्वाङायातु वसुभी रश्मिरिन्द्रः प्रम॰हमाणो बहुलाँश्रिय॰ रश्मिरिन्द्रः सविता मे नियच्छतु घृतं तेजो मधुमदिन्द्रियम् मय्ययमग्निर्दधातु हरिः पतङ्गः पटरी सुपर्णः दिवि क्षयो नभसा य एति स न इन्द्रः कामवरं ददातु पञ्चारं चक्रं परिवर्तते पृथु हिरण्यज्योतिः सरिरस्य मध्ये अजस्रं ज्योतिर्नभसा सर्पदेति स न इन्द्रः कामवरं ददातु सप्त युञ्जन्ति रथमेकचक्रम् । एकोऽश्वो वहति सप्तनामा त्रिनाभिचक्रमजरमनर्वम् येनेमा विश्वा भुवनाधि तस्थुः । भद्रं पश्यन्त उपसेदुरग्रे तपो दीक्षामृषयः सुवर्विदः ततः क्षत्रं बलमोजश्च जातं तदस्मै देवा अभिसंनमन्तु श्वेत॰ रश्मिं बोभुज्यमानम् अपां नेतारं भुवनस्य गोपाम् इन्द्रं निचिक्युः परमे व्योमन् । रोहिणीः पिङ्गला एकरूपाः क्षरन्तीः पिङ्गला एकरूपाः शत॰ सहस्राणि प्रयुतानि नाव्यानाम् अयं यः श्वेतो रश्मिः परिसर्वमिदं जगत् प्रजां पशून्धनानि अस्माकं ददातु श्वेतो रश्मिः पारि सर्वं बभूव सुवन्मह्यं पशून्विश्वरूपान् पतङ्गमक्तमसुरस्य मायया । हृदा पश्यन्ति मनसा मनीषिणः समुद्रे अन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसः पतङ्गो वाचं मनसा बिभर्ति तां गान्धर्वोवदद्गर्भे अन्तः तां द्योतमाना॰ स्वयं मनीषाम् ऋतस्य पदे कवयो निपान्ति ये ग्राम्याः पशवो विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः अग्निस्तामग्रे मुमोक्तु देवः । प्रजापतिः प्रजया संविदानः वीत॰स्तुके युवमस्मासु नियच्छतं प्रप्रयज्ञपतिं तिरये ग्राम्याः पशवो विश्वरूपाः विरूपाः सन्तो बहुधैकरूपाः तेषा॰ सप्तानामिह रन्तिरस्तु रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय य आरण्याः पशवोविश्वरूपा विरूपाः सन्तो बहुधैकरूपाः ।वायुस्ता॰ अग्रे प्रमुमोक्तु देवः प्रजापतिः प्रजया संविदानः इडायै सृप्तं घृतवच्चराचरं देवा अन्वविन्दन् गुहाहितं यज्ञारण्याः पशवो विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः तेषा॰ सप्तानामिह रन्तिरस्तु रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय । सहस्रशीर्षा

पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलम् । पुरुष एवेद१ं सर्वं यद्भूतं यच्च भाव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति । एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः । पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि । त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः । ततो विष्वङ् व्यक्रामत्साशनानशने अभि । ततो विराडजायत विराजो अधिपूरुषः । स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः । यत्पुरुषेण हविषा देवा यज्ञमतन्वत । वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः । सप्तास्यासन्परिधयः त्रिःसप्त समिधःकृताः । देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् । तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः । तेन देवा अयजन्त साध्या ऋषयश्च ये । तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम् । पशूंस्तांश्चक्रे वायव्यान् आरण्यान् ग्राम्याश्च ये । तस्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे । छन्दा१ंसि जज्ञिरे तस्मात् यजुस्तस्मादजायत । तस्मादश्वा अजायन्त ये के चोभयादतः । गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजावयः । यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् । मुखं किमस्यासीत्कौ बाहू कावूरू पादा उच्येते । ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्या१ं शूद्रो अजायत । चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत । नाभ्या आसीदन्तरिक्ष१ं शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात् तथा लोकान् अकल्पयन् । वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसस्तु पारे । सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाभिवदन्यदास्ते । धाता पुरस्ताद्यमुदाजहार शक्रः प्रविद्वान् प्रदिशश्चतस्रः । तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते । यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्ते यत्र पूर्वे साध्याः सन्ति देवाः । अद्भ्यः संभृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताग्रे । तस्य त्वष्टा विदधद्रूपमेति तत्पुरुषस्य विश्वमाजानमग्रे । वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेवं विद्वान् अमृत इह भवति नान्यः पन्था विद्यतेऽयनाय । प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते । तस्य धीराः परिजानन्ति योनिं मरीचीनां पदमिच्छन्ति वेधसः । यो देवेभ्य आतपति यो देवानां पुरोहितः । पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये । रुचं ब्राह्मं जनयन्तः देवा अग्रे तदब्रुवन् । यस्त्वैवं ब्राह्मणो विद्यात् तस्य देवा असन् वशे । ह्रीश्च ते लक्ष्मीश्च पत्न्यौ अहोरात्रे पार्श्वे नक्षत्राणि रूपम् अश्विनौ व्यात्तम् । इष्टंमनिषाण अमुंमनिषाण सर्वं मनिषाण ।" इति पुरुषसूक्तेन संपूज्य अतो देवेति

मन्त्रेण जले प्रस्वापनं कुर्यात् । 'शेषपर्यङ्कवर्येऽस्मिन्फणामणिगणामले । श्वेतद्वीपान्तरे देव कुरु निद्रां नमोऽस्तु ते ।' इति मन्त्रेण तत्रापि महापूजां कृत्वा स्वस्मिन्हरेरनुग्रहमाशास्य 'सुप्ते त्वयि जगन्नाथे जगत्सुप्तं भवेदिदम् । विबुद्धे च विबुद्ध्येत प्रसन्नो मे भवाव्यय ।' इति संप्रार्थ्य 'श्वेतद्वीपे भोगिनाथे योगिनाथे स्थिते त्वयि । चातुर्मास्यव्रतेऽनुज्ञां देहि लक्ष्मीपते मम ।' इति भगवत्कृपाकटाक्षदत्तामाज्ञां लब्ध्वा शंखहस्तो देवस्याग्रे नियमस्वीकारं कुर्यात् । तत्प्रकारस्तु हेमाद्रौ भविष्ये—'एवं तां प्रतिमां विष्णोः पूजयित्वा स्वयं नरः । प्रभाषेताग्रतो विष्णोः कृताञ्जलिपुटस्तथा ।' तत्र मन्त्रः । 'चतुरो वार्षिकान्मासान्राघवोत्थापनावधि । इमं करिष्ये नियमं निर्विघ्नं कुरु मेऽच्युत । इदं व्रतं मया देव गृहीतं पुरतस्तव । निर्विघ्नं सिद्धिमायातु प्रसादात्ते रमापते । गृहीतेऽस्मिन्व्रते देव पञ्चत्वं यदि मे भवेत् । तदा भवतु मे पूर्णं प्रसादात्ते रघूत्तम ।' इति । ततो देवाय शंखेनार्घ्यं निवेदयेत् । तत्र मन्त्रः । 'शंखपात्रगतं तोयं फलपुष्पसमन्वितम् । अर्घ्यं गृहाण देवेश रमाकान्त वरप्रद ।' इति । अर्घ्यदानोत्तरं भगवतः स्तुतिं कुर्यात् । सा च यथा । 'यः पृथ्वीभरवारणाय दिविजैः संप्रार्थितश्चिन्मयः संजातः पृथिवीतले रविकुले मायामनुष्योऽव्ययः । निश्चक्रं हतराक्षसः पुनरगाद्ब्रह्मत्वमाद्यं स्थिरां कीर्तिं पापहरां विधाय जगतां तं जानकीशं भजे । विश्वोद्भवस्थितिलयादिषु हेतुमेकं मायाश्रयं विगतमायमचिन्त्यमूर्तिम् । आनन्दसान्द्रममलं निजबोधरूपं सीतापतिं विदिततत्त्वमहं नमामि । भजेऽहं सदा राममिन्दीवराभं भवारण्यदावानलाभाभिधानम् । भवानीहृदा भावितानन्दरूपं भवाभावहेतुं भवादिप्रपन्नम् । सुरानीकदुःखौघनाशैकहेतुं नराकारदेहं निराकारमीड्यम् । परेशं परानन्दरूपं वरेण्यं हरिं राममीशं भजे भारतीशम् । प्रपन्नाश्रितानन्ददोहं प्रसन्नं प्रपन्नार्तिनिःशेषनाशाभिधेयम् । तपोयोगयोगीशभावाभिभाव्यं कपीशादिमित्रं भजे राममित्रम् । सदा भोगभाजां सुदूरेऽथ भान्तं मुदा योगभाजामदूरे विभान्तम् । चिदानन्दकन्दं सदा राघवेशं विदेहात्मजानन्दरूपं प्रपद्ये । महायोगमायाविशेषानुयुक्तो विभासीश लीलानराकारवृत्तिः । त्वदानन्दलीलाकथापूर्णकर्णाः सदानन्दरूपा भवन्तीह केचित् । अहं मानपानाभिमत्तः प्रमत्तो न वेदाखिलेशाभिमानाभिमानः । इदानीं भवत्पादपद्मप्रसादात्त्रिलोकाधिपत्याभिमानो विनष्टः । स्फुरद्रत्नकेयूरहाराभिरामं धराभारभूतासुरानीकदावम् । शरच्चन्द्रवक्त्रं लसत्पद्मनेत्रं दुरावारपारं भजे राघवेशम् । सुराधीशनीलाभनीलाङ्गकान्तिं विराधादिरक्षोवधाल्लोकशान्तिम् । किरीटादिशोभं पुरारातिलाभं भजे रामचन्द्रं रघूणाम-

धीशम् । लसच्चन्द्रकोटिप्रकाशादिपीठे समासीनमङ्के समाध्याय सीताम् । स्फुरद्धेमवर्णं तडित्पुञ्जभासं भजे रामचन्द्रं निवृत्तार्तितन्द्रम् ।' इत्यध्यात्मरामायणोक्तं रामचन्द्रस्तोत्रम् । ' इति स्तुत्वा प्रजापाले राजन्याशास्य मङ्गलम् । शंखतीर्थं सुसंप्रोक्ष्य गीतनृत्यादिना हरिम् । परितोष्याथ संपूज्य वैष्णवान्नरयानकम् । भगवन्तं समारोप्य गीतवादित्रघोषतः । आदित्यमन्दिरे कृत्वा महानीराजनं प्रभोः । विसर्ज्य वैष्णवान्देवमुपवेश्य सुखं स्वपेत् ।' इति शयनोत्सवः । मदनरत्ने महाभारते— 'आषाढे तु सिते पक्षे एकादश्यामुपोषितः । चातुर्मास्यव्रतं कुर्याद्यत्किंचिन्नियतो नरः ।' सनत्कुमारस्तु चातुर्मास्यव्रतारम्भस्य कालान्तरमप्याह— ' एकादश्यां तु गृह्णीयात्संक्रान्तौ कर्कटस्य वा । आषाढ्यां वा नरो भक्त्या चातुर्मास्योदितं व्रतम् ।' इति । अस्य च प्रारम्भो गुर्वस्तादावपि कार्यः । तथा च वृद्धगार्ग्यः—'न शैशवं न मौढ्यं च शुक्रगुर्वोर्न वा तिथेः । खण्डत्वं चिन्तयेच्चादौ चातुर्मास्यविधौ नरः ।' इति । एतच्चाविशेषान्नित्यव्रतानां प्रथमारम्भविषयमपि । यदपि हेमाद्रौ चातुर्मास्यप्रकरणे भविष्ये— 'असंक्रान्तं तथा मासं दैवे पित्र्ये च कर्मणि । मलमासमशौचं च वर्जयेन्मतिमान्नरः ।' इति । तच्छ्रावणे वर्जयेच्छाकमित्यादिना श्रावणादिमासविशेषविहितव्रतानुवृत्त्यर्थम् 'स्पष्टमासविशेषाख्याविहितं वर्जयेन्मले ।' इति वचनात् । चातुर्मास्यव्रतानि त्वन्तरा मलमासेऽप्युनवर्तन्त एवेत्यपर इति मयूखे । एतद्वचनं चातुर्मास्यप्रकरणे पठितमपि असंबद्धत्वार्थत्वात्पुरुषानुमन्त्रणन्यायेनात्रोत्कृष्टव्यमिति ज्ञेयम् । प्रकरणानिवेशेऽपि वा प्रथमारम्भविषयं ज्ञेयमिति निर्णयसिन्धौ । वस्तुतस्तु—'अधिमासनिपातेऽपि एष एव विधिक्रमः ।' इति वचनेन चातुर्मास्यव्रतारम्भानन्तरं समाप्तेः प्रागन्तरामलमासपातेऽनुवृत्तिविधानेन एतद्वचनं तत्प्रकरणे पठितमपि तद्भिन्नविषयम् । एकादश्यामाशौचे पूर्णिमायां कर्कसंक्रान्तौ वारभेत । त्रितयत्राप्याशौचे प्रथमतोऽनारम्भ एव । 'आरब्धे सूतकं न स्यादनारम्भे तु सूतकम् ।' इति विष्णूक्तेः । द्वितीयारम्भस्तु भवत्येव । 'प्रतिवर्षं च यः कुर्याद्देवं वै संस्मरन्हरिम् । देहान्तेऽतिप्रदीप्तेन विमानेनार्कवर्चसा । मोदते विष्णुलोकेऽसौ यावदाभूतसंप्लवम् ।' इति हेमाद्रौ भविष्यवचनेन प्रतिवर्षं क्रियमाणस्यैकफलसंबन्धेनैकव्रतत्वेन प्रथमारम्भस्य व्रतत्वादिति । यत्त्वर्चनदीपिकायां स्कान्दे— 'अशुचिर्वा शुचिर्वापि यदि स्त्री यदि वा पुमान् । व्रतमेतन्नरः कुर्यान्मुच्यते सर्वपातकैः ।' इति । तदारम्भोत्तरं बोध्यम् । चातुर्मास्यव्रतानि तु भविष्योत्तरीयेतिहासप्रसङ्गेन पूर्वमेवोक्तानि । अथ चातुर्मास्यवर्ज्यानि भविष्ये—'श्रावणे वर्जयेच्छाकं दधि

भाद्रपदे तथा । दुग्धमाश्वयुजे मासि कार्तिके चामिषं त्यजेत् । प्राण्यङ्गचूर्णं चर्माम्बु जम्बीरं बीजपूरकम् । अयज्ञशिष्टमन्नाद्यं यद्विष्णोरनिवेदितम् । दग्धमन्नं मसूरं च मांसमष्टविधं स्मृतम् । रुच्यं तत्तद्देशलभ्यं फलमूलादि वर्जयेत् ।' पाद्मे कार्तिकमाहात्म्ये–'गोछागीमहिषीभूतादन्यदुग्धादि चामिषम् । धान्ये मसूरिका प्रोक्ता अन्नं पर्युषितं तथा । द्विजक्रीतारसाः सर्वे लवणं भूमिजं तथा । ताम्रपात्रस्थितं गव्यं जलं पल्वलसंस्थितम् । आत्मार्थं पाचितं चान्नमामिषं तत्स्मृतं बुधैः । जम्बीरं राजमाषांश्च मूलकं गृञ्जनं तथा । कूष्माण्डं चेक्षुदण्डं च चातुर्मास्ये त्यजेद्बुधः ।' तथा–'विशेषाद्बदरीं धात्रीं कूष्माण्डं तिन्तिणीं त्यजेत् । जीर्णं धात्रीफलं ग्राह्यं कथंचित्कायशोधनम् ।' इति । तथा 'निष्पावान्राजमाषांश्च मसूरं संधितानि च । वृन्ताकं च कलिङ्गं च सुप्ते देवे न भक्षयेत् ।' स्कान्दे–'चत्वार्येतानि नित्यानि चतुराश्रमवर्तिनाम् । प्रथमे मासि कर्तव्यान्नित्यं शाकव्रतं नरैः । द्वितीये मासि कर्तव्यं दधिव्रतमनुत्तमम् । पयोव्रतं तृतीये तु चतुर्थेऽपि निशामय । द्विदलं बहुबीजं च वृन्ताकं चैव वर्जयेत् । नित्यान्येतानि विप्रेन्द्र व्रतान्याहुर्मनीषिणः ।' स्कान्दे–' वार्षिकांश्चतुरो मासान्संसुप्ते वै जनार्दन । मञ्चखट्वादिशयनं वर्जयेद्भक्तिमान्नरः । अनृतौ वर्जयेद्भार्यां मांसं मधु परौदनम् । पटोलं मूलकं चैव वृन्ताकं च न भक्षयेत् ।' इत्यादि । शाकशब्दश्च दशसु रूढः । ' मूलपत्रकरीराग्रफलकाण्डाधिरूढकाः । त्वक्पत्रपुष्पकं चैव शाकं दशविधं स्मृतम् ।' इत्युक्तेः । अधिरूढमङ्कुरः । स्मृतिकौस्तुभे–मूलपत्रेत्याभियुक्तोक्तौ शाकशब्दस्य व्यञ्जनतया प्रसिद्धेष्वेव फलमूलादिषूपसंहारः लोकव्यवहारादिति । यत्तु–' तत्तत्कालोद्भवाः शाका वर्जनीयाः प्रयत्नतः । बहुबीजमबीजं च विकारि च विवर्जयेत् ।' इति भविष्यवचनम्, तत्प्रयत्नत इति विशेषग्रहणात् एतेषां शाकानां दोषाधिक्यज्ञापनार्थम् । बहुबीजमिति च अधिकबीजवत्फलमित्यर्थः । अबीजं विकारि इति पदद्वयेन कालादिकृतविकारवशेन विनष्टबीजं फलमुच्यते । चकारद्वयमेकस्मिन् धर्मिणि विशेषद्वयसूचनार्थम् । आचारप्रदीपे–' वृन्ताकं च कलिङ्गं च बिल्वोदुम्बरभिःसटाः । उदरे यस्य जीर्यन्ति तस्य दूरतरो हरिः ।' भिःसटा दग्धान्नम् । भिस्सटेति दीर्घपाठे तु भीःसटा श्लेष्मातकमिति धन्वन्तरिनिघण्टुः । यत्तु नृसिंहपरिचर्यायाम्–वृन्ताकं सदा वैष्णवैर्वर्ज्यम् । ' ये भक्षयन्ति वृन्ताकं तेषां दूरतरो हरिः ।' इत्यादिनिन्दाश्रवणादिति । तत् श्वेतवृन्ताकपरम् । तथा च

१–द्विदलं त्यजेदित्यपि पाठः ।

पराशरः—' पलाण्डुं श्वेतवृन्ताकं कुसुम्भं वनकण्टकम् । नालिकां बालपुष्पं च भुक्त्वा दिनमभोजनम् । ' अत्रापि पलाण्डुमिति श्वेतपलाण्डावेवोपसंह्रियते इति इति माधवः । देहलीदीपकन्यायेन तथैव युक्तमिति तदाशयः।एतान्यातुरस्य भिषक्क्रियायामप्रतिषिद्धानीति सुमन्तुः।तथा-'चतुर्ष्वपि हि मासेषु हविष्याशी न पापभाक्।'इति । हविष्याणि च परिभाषायां द्रष्टव्यानि।महाभारते दानधर्मेषु-'कंचिद्धर्मं प्रवक्ष्यामि मानुषाणां सुखावहम्।'इति प्रकृत्य'चतुरो वार्षिकान्मासान्यो ददाति तिलोदकम्। भोजनं च यथाशक्ति ब्राह्मणे वेदपारगे।अग्निकार्यं च कर्तव्यं परमान्नेन भोजनम्।दीपकश्चापि कर्तव्यः पितॄणां सतिलोदकः।एतेन विधिना मर्त्यः श्रद्दधानः समाहितः । पशुबन्धशतस्येह फलं प्राप्नोति पुष्कलम् ।' इति । अत्र क्रमेण पैतृकाण्येव तर्पणश्राद्धदीपदानानि विधीयन्ते । अग्निकार्यमग्नौ करणम् । परमान्नेनेत्यस्य मध्यमणिन्यायेनान्वयः । अन्ये च चातुर्मास्यनियमा भविष्योत्तरोक्तेतिहासे द्रष्टव्याः । अथ चातुर्मास्यव्रतसमाप्तौ विशेष उच्यते 'चातुर्मास्ये तु वै त्यक्तं भक्ष्यभोज्यादिकं च यत् । चतुरो वार्षिकान्मासान्नियमो यस्य यः कृतः । कथयित्वा द्विजेभ्यस्तद्दद्याद्भक्त्या सदक्षिणम् । दत्त्वा विसर्जयेद्विप्रांस्ततो भुञ्जीत च स्वयम् ।' इति । अथ तत्तद्वस्तुत्यागव्रतसमाप्तौ देयद्रव्याणि काशीखण्डे—'पत्रभोजी भवेदूर्जे कांस्यं त्याज्यं प्रयत्नतः । कांस्यस्य नियमे दद्यात्कांस्यं सर्पिःप्रपूरितम् । ऊर्जे न भक्षयेत्क्षौद्रमतिक्षौद्रगतिप्रदम् । मधुत्यागे घृतं दद्यात्पायसं च सशर्करम् । अभ्यङ्गे व्यवहारे च तैलमूर्जे विवर्जयेत् । तैलत्यागे तिलान्दद्याद्द्रोणमात्रान्सकाञ्चनान् । बहुले कांस्यभोजी यः स कृमिः पूयशोणिते । मांसाशिनोऽपि ये मूषास्त्यजेयुस्तांश्च कार्तिके । नियमे मत्स्यमांसानां दद्याद्वै कार्तिके व्रती । कूष्माण्डानि समाषाणि विंशत्स्वर्णयुतान्यपि । कार्तिके मौनभोजी यः सोऽश्नात्यमृतमेव हि।सुघण्टां सतिलां मौनी सहिरण्यां प्रदापयेत्। कार्तिके लवणं त्यक्तं येन व्रतभृता सदा। त्यक्ताः सर्वे रसास्तेन तत्त्यागी गां प्रदापयेत् । भूशय्यां कार्तिके कुर्वन्न भुवं संस्पृशेद्व्रती । पर्यङ्कं भूशयो दद्यात्सतूलं सोपधानकम् । फलत्यागे फलं देयं रसत्यागे च तद्रसम् । धान्यत्यागे च तद्धान्यमथ वा शालयः स्मृताः । धेनूर्दद्यात्प्रयत्नेन सालंकाराः सकाञ्चनाः । एकतः सर्वदानानि दीपदानं तथैकतः । कार्तिके दीपदानस्य कलां नार्हन्ति षोडशीम् ।' तथा—'दीपं यः कार्तिके दद्यादखण्डं घृतवर्तिकम् । मोहान्धतमसं प्राप्य स न गच्छति

---

१–विंशदिति कूष्माण्डविशेषणम् ।

दुर्गतिम् ।' इति । चातुर्मास्यव्रतासंभवे कार्तिके किंचिद्व्रतमवश्यं कार्यम् । 'चतुर्ष्वपि च मासेषु न सामर्थ्यं व्रते यदि । तदोर्जे व्रतिना भाव्यमप्यब्दफलमिच्छता । अव्रतः कार्तिको येषां गतो मूढधियामिह । तेषां पुण्यस्य लेशोऽपि न भवेत्सूकरात्मनाम् ।' इति काशीखण्डात् । अत्रैव देवाग्रे स्वस्तिकादिकमपि कर्तव्यमिति पाद्मे । इदं च कार्तिकशुक्लद्वादश्यां वक्तव्यमपि प्रसङ्गादत्र लिखितम् । यथा भार्गवार्चनदीपिकायां पाद्मे—'शयनी बोधनीमध्ये शमीदूर्वापमार्गकैः । भृङ्गराजेन देवांस्तु नार्चयीत कदाचन ।' इति । हेमाद्रौ पाद्मे—'आषाढादिचतुर्मासानभ्यङ्गं वर्जयेन्नरः । समाप्तौ च पुनर्दद्यात्तिलतैलयुतं घटम् । आषाढादिचतुर्मासं वर्जयेन्नखकृन्तनम् । वृन्ताकं गृञ्जनं चैव मधु सर्पिर्घटान्वितम् । कार्तिक्यां तु पुनर्हेम ब्राह्मणाय निवेदयेत् ।' अन्यान्यपि वर्जनसंकल्परूपाणि अन्येभ्यो ग्रंथेभ्यो ज्ञेयानि । आषाढशुक्लद्वादश्यां तप्तमुद्राधारणमुक्तं रामार्चनचन्द्रिकायाम्—'शौनकोक्तप्रकारेण तप्तमुद्रांकधारणम् । कर्तव्यं वैष्णवैरेतत्संप्रदायानुरोधतः । शयन्यां चैव बोधिन्यां चक्रतीर्थे तथैव च । शंखचक्रविधानेन वह्निपूतो भवेन्नरः ।' इति । तथा—'पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः । अतप्ततनूर्नतदामो अश्नुते शृतास इद्वहन्तस्तत्समाशत । तयोः पवित्रं विततं दिवस्पदे शोचन्तोऽस्य तन्तवो व्यस्थिरन् ।' इति ऋग्वेदे । 'स होवाच याज्ञवल्क्यस्तत्पुमानात्महिताय प्रेम्णा हरिं भजेत सुश्लोकमौलिर्वर्माण्यर्थिना संधत्ते' इति शातपथिकश्रुतौ । 'प्रताद्विष्णो अब्जचक्रे सुतप्ते जन्माम्भोधीततवेचर्षणीन्द्राः । मूले बाह्वोर्दधन्ये पुराणालिङ्गान्यङ्के तप्तायुधान्यर्पयन्ते ।' इति सामवेदे । 'उरुक्रमस्य चिह्नैरङ्किता लोके उरुभगा भवेम' इत्यथर्ववेदे । 'अग्निहोत्रं यथा नित्यं वेदस्याध्यनं यथा । ब्राह्मणस्य यथा नित्यं तप्तचक्राङ्कधारणम् ।' इति पाद्मे एतत्प्रकारस्तु रामार्चनचन्द्रिकातो ज्ञेयः । पृथ्वीचन्द्रोदयादिग्रन्थे तु—'यस्तु संतप्तशंखादिलिङ्गाचिन्हतनुर्नरः । स सर्वयातनाभोगी चण्डालो जन्मकोटिषु । द्विजं तु तप्तशंखादिलिङ्गचिह्नतनुंनराः । संभाष्य रौरवं यान्ति यावदिन्द्राश्चतुर्दश ।' इति बृहन्नारदीयोक्तेः । 'शंखचक्राद्यंकनं च गीतनृत्यादिकं तथा । एकजातेरयं धर्मो न जातु स्याद्द्विजन्मनः । शंखचक्रे मृदा यस्तु कुर्यात्तप्तायसेन वा । स शूद्रवद्बहिः कार्यः सर्वस्माद्द्विजकर्मणः । यथा श्मशानजं काष्ठमनर्हं सर्वकर्मसु । तथा चक्राङ्कितो विप्रः सर्वकर्मसु गर्हितः ।' तथा—'शिवकेशवयोरंकाञ्छूलचक्रादिकान्द्विजः । न धारयेत मतिमान्वैदिके वर्त्मनि स्थितः ।' इति विष्णवा-

श्वलायनादिवचनात् । ऋग्वेदादिश्रुतीनां तु धर्मादिस्तुतिपरत्वात् अन्यश्रुतीनां च तथाविधानामनुपलम्भादुदाहृतपाद्मवचनस्य चाकरग्रन्थेष्वनुपलम्भाच्चक्रादिधारणं शूद्रविषयमेवेत्युक्तम् । यद्यपि निषेधस्य प्राप्तिसापेक्षत्वाद्विधिं विना च तदयोगादुपजीव्यविरोधेन न तौ पशौ करोतीतिवद्विकल्पो युक्तस्तथापि एकजातेरयं धर्म इत्यनेन सामान्यवाक्यानामुपसंहाराद्द्विजातिनिषेधो नित्यानुवाद इति तदाशय इति निर्णयसिन्धौ । यद्यपि विष्ण्वाश्वलायनादिवचनेषु मृदापि शंखचक्रादिधारणनिषेधः प्रतीयते । तथापि 'शंखचक्राङ्कितो विप्रः श्मशाने म्रियतेऽपि चेत् । प्रयागे या गतिः प्रोक्ता सा गतिस्तस्य नारद ।' इति । 'कृष्णायुधाङ्कितं चिह्नं गोपीचन्दनमृत्स्नया । प्रयागादिषु तीर्थेषु स गत्वा किं करिष्यति।'इत्यादिवराहपुराणवचनैर्मृदा कर्तव्यतावगमेन विहितप्रतिषिद्धत्वाद्विकल्पोऽवसीयते इत्यलमनया प्रसक्तानुप्रसक्तचिन्तया ।

अथ मत्स्यपुराणोक्तं विभूतिद्वादशीव्रतम् । नन्दिकेश्वर उवाच--'शृणु नारद वक्ष्यामि विष्णोर्व्रतमनुत्तमम् । विभूतिद्वादशीं नाम सर्वामरविभूषिताम् । कार्तिके त्वथ वैशाखे मार्गशीर्षे तु फाल्गुने । आषाढे वै दशम्यां तु शुक्लायां लघुभुङ्नरः । कृत्वा सायंतनीं संध्यां गृह्णीयान्नियमं बुधः । एकादश्यां निराहारः समभ्यर्च्य जनार्दनम्।द्वादश्यां द्विजसंयुक्तः करिष्ये भोजनं ततः।तदविघ्नेन मे यातु साफल्यं मधुसूदन। ततः प्रभाते चोत्थाय कृतस्नानजपः शुचिः । पूजयेत्पुण्डरीकाक्षं शुभमाल्यानुलेपनैः । विभूतिदे नमः पादौ विशोकायेति जानुनी । नमः शिवायेत्यूरू च कटिं वै विश्वरूपिणे । कन्दर्पाय नमो मेढ्रमादित्याय नमः करौ।दामोदरायेत्युदरं वासुदेवाय च स्तनौ।माधवायेत्युरो विष्णोः कण्ठमुत्कण्ठिने नमः । श्रीधराय मुखं केशान्केशवायेति नारद । पृष्ठं शार्ङ्गधरायेति श्रवणौ वरदाय वै । स्वनाम्ना शंखचक्रासिगदावरदपाणयः । शिरः सर्वात्मने ब्रह्मन्नम इत्यभिपूजयेत् । मत्स्यमुत्पलसंयुक्तं हैमं कृत्वा तु शक्तितः । उदकुम्भसमायुक्तं ह्यग्रतः स्थापयेद्विभोः । गुडपात्रं तिलैर्युक्तं सितवस्त्राभिवेष्टितम् । रात्रौ जागरणं कुर्यादितिहासकथादिकम् । प्रभातायां तु शर्वर्यां ब्राह्मणाय कुटुम्बिने । सकाञ्चनोत्पलं देवं सोदकुम्भं निवेदयेत् । यथा न मुच्यते विष्णुः सदा सर्वविभूतिभिः । तथा मामुद्धराशेषदुःखसंसारकर्दमात् । दशावताररूपाणि प्रतिमासं क्रमान्मुने । दत्तात्रेयं तथा व्यासमुत्पलेन समन्वितम् । प्रतिमासं तु कर्तव्या मूर्तयः काञ्चनेन वै । काञ्चनस्यैव पद्मस्य संस्थाप्योपरि पूजयेत् । पुष्पधूपादिनैवेद्यैर्भक्ष्यभोज्यैः सदीपकैः । वस्त्रैराभरणैश्चैव यथा विभवसारतः । रात्रौ जागरणं कुर्याद्गीत-

नृत्यादिभिर्नरः । ततः प्रभाते विमले कृतस्नानादिकक्रियः । उपदेष्ट्रे तु दातव्यं सर्वमेतत्समाहृतम् । प्रतिमासं पुराणज्ञे वेदवेदाङ्गपारगे । ततः संवत्सरान्ते च विश्वेशं शक्तिपूर्वकम्[१] । कृत्वा संपूज्य लवणपर्वतेन[२] समन्वितम् । शय्यां सोपस्करां श्रेष्ठां गां चैवोपस्करान्विताम् । ग्रामं देशपतिर्दद्यात्क्षेत्रं ग्रामपतिस्तथा । निवर्तनं क्षेत्रपतिर्भवनं च समृद्धिमान् । एवं विभवसारेण पूजयित्वेदृशं गुरुम् । अन्यानपि यथाशक्त्या तर्पयित्वा द्विजोत्तमान् । वस्त्रान्नगोहिरण्यादिसत्त्वमास्थाय चोत्तमम् । यत्र सत्त्वं तत्र हरिस्तोषमायात्यसंशयम् । यश्चातिनिःस्वः पुरुषो भक्तिमान्माधवं प्रति । पुष्पार्चनविधानेन स कुर्याद्वत्सरत्रयम् । अनेन विधिना यस्तु विभूतिद्वादशीव्रतम् । कुर्यात्स पापनिर्मुक्तः पितॄणां तारयेच्छतम् । सप्तजन्मन्यसौ मर्त्यो विभूतिं प्राप्नुयात्पराम् । रोगदौर्गत्यपापानां भाजनं नोपजायते । भक्तिश्च यज्ञपुरुषे तस्य जन्मनि जन्मनि । प्राप्नुयादाच्युतं स्थानमच्युतस्य प्रसादतः । इयं चाखण्डितं कार्या विभूतिद्वादशी नरैः। सर्वपापप्रशमनी सर्वफलप्रदायिनी । इति कलुषविदारणं जनानां पठति सदाऽथ शृणोति वातिभक्त्या । मतिमपि च ददाति देवलोके वसति चिरं च स पूज्यतेऽमरौघैः ।' इति मत्स्यपुराणोक्तं विभूतिद्वादशीव्रतम् ।

अस्यामेवैकादश्यां वराहपुराणोक्तं वासुदेवद्वादशीव्रतम् । दुर्वासा उवाच— 'आषाढेऽप्येवमेवं तु संकल्प्य विधिना नरः । अर्चयेत्परमं देवं गन्धपुष्पैर्विधानतः । वासुदेवाय पादौ तु कटिं संकर्षणाय च । प्रद्युम्नायेति जठरमनिरुद्धाय वा उरः । चक्रपाणयेति भुजौ कण्ठं भूपतये तथा । स्वनाम्ना शंखचक्रे तु पुरुषायेति वै शिरः । एवमभ्यर्च्य मेधावी प्राग्वत्तस्याग्रतो घटम् । विन्यसेद्वस्त्रयुग्मं च तस्योपरि ततो न्यसेत् । काञ्चनं वासुदेवं च चतुर्बाहुं सनातनम् । तमभ्यर्च्य विधानेन गन्धपुष्पादिभिः क्रमात् । प्राग्वत्तद्ब्राह्मणे दद्याद्वेदवादिनि सुव्रते । प्रीयतां वामनश्चतुर्विधरूपीति मन्त्रतः । एवं नियमयुक्तस्य पुण्यं तस्य शृणुष्व मे । वसुदेवोऽभवद्राजा यदुवंशविवर्धनः । देवकी तस्य भार्यासीत्समानव्रतचारिणी । सा त्वपुत्राऽभवत्साध्वी पतिधर्मपरायणा । तस्याः कालेन महता नारदोऽभ्यागमद्गृहम् । वसुदेवेन भक्त्याऽसौ पूजितो वाक्यमब्रवीत् । कथयामास धर्मज्ञो देवकीवसुदेवयोः । तावप्येवंविधं भक्त्या चक्रतुः श्रद्धयान्वितौ । तयोस्तुष्टः स्वयं विष्णुः पुत्रत्वं च जगाम ह । एव-

१—शक्तिपूर्वकं विभूतिपुरःसरम् । २—लवणपर्वतदानविधिस्तु दानखण्डे गवेषणीयः ।

मेषा पापहरा द्वादशी पुत्रदा स्मृता। इमामुपोष्येह सुतान्त्रियां वित्तं लभन्ति च। राज्यं च भ्रष्टराज्यास्तु पापिनः पापसंक्षयम्। यथा भारोऽपनीतस्तु धरण्याः केशवेन वै। मृतो विष्णुपुरे रम्ये मोदते कालमक्षयम्। मन्वन्तराणि षट्त्रिंशत्ततः कालात्यये पुनः। इह लोके भवेद्राजा सप्त वर्षाणि तानि तु। दाता यज्वा क्षमायुक्तस्ततो निर्वाणमाप्नुयात्।' इति धरणीव्रते वासुदेवद्वादशीव्रतम्।

अथ श्रावणकृष्णैकादशीमाहात्म्यम्। युधिष्ठिर उवाच—'आषाढशुक्लपक्षे तु यद्देवशयनीव्रतम्। तन्मया श्रुतपूर्वं हि पुराणे बहुविस्तरम्। श्रावणे कृष्णपक्षे तु किंनामैकादशी भवेत्। एतत्कथय गोविन्द वासुदेव नमोऽस्तु ते।' श्रीकृष्ण उवाच—'नारदाय पुरा राजन्पृच्छते च पितामहः। परं यदुक्तवांस्तात तदिदं ते वदाम्यहम्'। नारद उवाच—'भगवञ्छ्रोतुमिच्छामि त्वत्तोऽहं कमलासन। श्रावणस्यासिते पक्षे किंनामैकादशी भवेत्। को देवः को विधिस्तस्याः किं पुण्यं कथय प्रभो।' ब्रह्मोवाच—'शृणु नारद ते वच्मि लोकानां हितकाम्यया। श्रावणैकादशी कृष्णा कामिका नाम नामतः। अस्याः श्रवणमात्रेण वाजपेयफलं लभेत्। अस्यां यः पूजयेद्देवं शंखचक्रगदाधरम्। श्रीधराख्यं हरिं विष्णुं माधवं मधुसूदनम्। जपते ध्यायते यो वै तस्य पुण्यफलं शृणु। न गङ्गायां न काश्यां च नैमिषे न च पुष्करे। तत्फलं समवाप्नोति यत्फलं कृष्णपूजनात्। केदारे च कुरुक्षेत्रे राहुग्रस्ते दिवाकरे। तत्फलं समवाप्नोति यत्फलं कृष्णपूजनात्। गोदावर्यां गुरौ सिंहे व्यतीपाते च गण्डके। न तत्फलमवाप्नोति यत्फलं कृष्णपूजनात्। ससागरवनोपेतां यो ददाति वसुंधराम्। कामिकाव्रतकृच्चैव तावुभौ सफलौ स्मृतौ। प्रसूयमानां यो धेनुं दद्यात्सोपस्करां नरः। तत्फलं समवाप्नोति कामिकाव्रतकृन्नरः। श्रावणे श्रीधरं देवं पूजयेद्यो नरोत्तमः। तेनैव पूजिता देवा गन्धर्वोरगपन्नगाः। तस्मात्सर्वप्रयत्नेन कामिकादिवसे हरिः। पूजनीयो यथाशक्ति मनुष्यैः पापभीरुभिः। संसारार्णवमग्ना वै पातकैश्च समाकुलाः। तेषामुद्धरणार्थाय कामिकाव्रतमुत्तमम्। नातः परतरा काचित्पवित्रा पापहारिणी। एवं नारद जानीहि स्वयमाह पुरा हरिः। अध्यात्मविद्यानिरतैर्यत्फलं प्राप्यते नरैः। ततो बहुतरं विद्धि कामिकाव्रतसेवने। रात्रौ जागरणं कृत्वा कामिकाव्रतकृन्नराः। न पश्यन्ति यमं रौद्रं नैव पश्यन्ति दुर्गतिम्। न पश्यन्ति कुयोनिं च कामिकाव्रतसेवनात्। कामिकाया व्रते चीर्णे वैकल्यं योगिनो गताः। तस्मात्सर्वप्रयत्नेन कर्तव्या नियतात्मभिः। तुलसीप्रभवैः पत्रैर्यो नरः पूजयेद्धरिम्। न वै स लिप्यते पापैः पद्मपत्रमिवाम्भसा।

सुवर्णभारमेकं तु रजतं च चतुर्गुणम् । तत्फलं समवाप्नोति तुलसीदलपूजनात् । रत्नमौक्तिकवैडूर्यप्रवालादिभिरर्चितः । न तुष्यति यथा विष्णुस्तुलसीपूजनाद्यथा । तुलसीमञ्जरीभिस्तु पूजितो येन केशवः । आजन्मकृतपापस्य तेन संमार्जिता लिपिः । या दृष्टा निखिलाघसंघशमनी स्पृष्टा वपुःपाविनी रोगाणामभिवन्दिता निरसिनी सिक्तान्तकत्रासिनी । प्रत्यासत्तिविधायिनी भगवतः कृष्णस्य संरोपिता न्यस्ता तच्चरणे विमुक्तिफलदा तस्यै तुलस्यै नमः । दानं ददाति यो मर्त्यो दिवा रात्रौ हरेर्दिने । तस्य पुण्यस्य संख्यानं चित्रगुप्तो न वेत्त्यलम् । कृष्णाग्रे दीपको यस्य ज्वलत्येकादशीदिने । पितरस्तस्य तृप्यन्ति अमृतेन दिवि स्थिताः। घृतेन दीपं प्रज्वाल्य तिलतैलेन वै पुनः। प्रयाति सूर्यलोकं स दीपकोटिशतैर्वृतः । अयं तवाग्रे कथितः कामिकामहिमा मया । अतो नरैः प्रकर्तव्या सर्वपातकहारिणी । ब्रह्महत्यापहारिणी भ्रूणहत्याविनाशिनी । त्रिदिवस्थानदात्री च महापुण्यफलप्रदा । श्रुत्वा माहात्म्यमेतस्या नरःश्रद्धासमन्वितः। विष्णुलोकमवाप्नोति सर्वपापैः प्रमुच्यते ।' इति श्रीब्रह्मवैवर्तपुराणे श्रावणकृष्णपक्षे कामिकामाहात्म्यं समाप्तम् । अत्र माधवनाम्ना विष्णुपूजनं कुर्यात् नियमादिकं तु पूर्ववदेव ।

अथ भविष्यत्पुराणोक्तं श्रावणशुक्लैकादशीमाहात्म्यम् । युधिष्ठिर उवाच—' श्रावणस्य सिते पक्षे किंनामैकादशी भवेत् । कथयस्व प्रसादेन ममाग्रे मधुसूदन ।' श्रीकृष्ण उवाच—'शृणुष्वावहितो राजन्कथां पापहरां पराम् । यस्याः श्रवणमात्रेण वाजपेयफलं लभेत् । द्वापरस्य युगस्यादौ पुरा माहिष्मतीपुरे । राजा महीजिदाख्यातो राज्यं पालयति स्वयम्। पुत्रहीनस्य तस्यैव न तद्राज्यं सुखप्रदम् । अपुत्रस्य सुखं नास्ति इह लोके परे तथा। यततोऽस्य सुतप्राप्तौ कालो बहुतरो गतः। न प्राप्तश्च सुतो राज्ञा सर्वसौख्यप्रदो नृणाम्। दृष्ट्वात्मानं प्रवयसं राजा चिन्तातुरोऽभवत्। सदोगतः सभामध्ये इदं वचनमब्रवीत्। इह जन्मनि भो लोका न मया पातकं कृतम् । अन्यायोपार्जितं वित्तं क्षिप्तं कोशे मया न हि । ब्रह्मस्वं देवद्रविणं न गृहीतं मया क्वचित् । न्यायापहारो न कृतः परस्य बहुपापदः । सुतवत्पालिता लोका धर्मेण विजिता मही । दुष्टेषु पातितो दण्डो बन्धुपुत्रोपमेष्वपि । शिष्टाः संपूजिता लोके द्विष्या अपि मया जनाः । इत्येवं वर्तमानस्य धर्ममार्गे द्विजोत्तमाः । कस्मान्मम गृहे पुत्रो न जातस्तद्विमृश्यताम् । इति वाक्यं द्विजाः श्रुत्वा सप्रजाः सपुरोहिताः । मन्त्रयित्वा नृपहितं जग्मुस्ते गहनं वनम् । इतश्चेतश्च पश्यन्त आश्रमानृषिसेवितान् । नृपतेर्हितमिच्छन्तो

ददृशुर्मुनिसत्तमम् । तप्यमानं तपो घोरं चिदानन्दं निरामयम् । निराहारं जितात्मानं जितक्रोधं सनातनम् । लोमशं धर्मतत्त्वज्ञं सर्वशास्त्रविशारदम् । दीर्घायुषं महात्मानमनेकब्रह्मसंमितम् । कल्पे कल्पे गते तस्य एकं लोम विशीर्यते । अतो लोमशनामानं त्रिकालज्ञं महामुनिम् । तं दृष्ट्वा विस्मिताः सर्वे आजग्मुस्तस्य संनिधौ । यथान्यायं यथार्हं ते नमश्चक्रुर्यथोचितम् । विनयावनताः सर्वे ऊचुश्चैव परस्परम् । अस्मद्भाग्यवशादेव प्राप्तोऽयं मुनिसत्तमः । तांस्तथा प्रणतान्दृष्ट्वा उवाच मुनिसत्तमः ।' लोमश उवाच—'किमर्थमिह संप्राप्ताः कथयध्वं स्वकारणम् । मद्दर्शनाह्लादगिरः स्तुवन्त इव मां किमु।असंशयं करिष्यामि भवतां यद्धितं भवेत् । परोपकृतये जन्म मादृशानां न संशयः ।' जना ऊचुः—'श्रूयतामभिधास्यामो वयमागमकारणम् । संशयच्छेदनार्थाय तव संनिधिमागताः । पद्मयोनेः परतरस्त्वत्तः श्रेष्ठो न विद्यते । अतः कार्यवशात्प्राप्ताः समीपं भवतो वयम् । महीजिन्नाम राजासौ पुत्रहीनोऽस्ति सांप्रतम् । वयं तस्य प्रजा ब्रह्मन्पुत्रवत्तेन पालिताः । तं पुत्ररहितं दृष्ट्वा तद्दुःखेनैव दुःखिताः । तपः कर्तुमिहायाता मतिं कृत्वा तु नैष्ठिकीम् । तस्य भाग्यवशाद्दृष्टो ह्यस्माभिस्त्वं द्विजोत्तम । महतां दर्शनेनैव कार्यसिद्धिर्भवेन्नृणाम् । उपदेशं वद मुने राज्ञः पुत्रो यथा भवेत् । इति तेषां वचः श्रुत्वा मुहूर्तं ध्यानमास्थितः । प्रत्युवाच मुनिर्ज्ञात्वा तस्य जन्म पुरातनम् ।' लोमश उवाच—'पुरा जन्मनि वैश्योऽयं धनहीनो नृशंसकृत् । वाणिज्यकर्मनिरतो ग्रामाद्ग्रामान्तरं भ्रमन् । ज्येष्ठे मासि सिते पक्षे दशमीदिवसे तथा । मध्यगे द्युमणौ प्राप्तो ग्रामसीम्नि जलाशयम् । कूपिकां निर्जलां दृष्ट्वा जलपाने मनो दधौ । सद्यः सूता सवत्सा च धेनुस्तत्र समागता । तृषातुरा निदाघार्ता तस्याश्चापः पपौ तु सा । पिबन्तीं वारयित्वा तामसौ तोयं स्वयं पपौ । कर्मणस्तस्य पाकेन पुत्रहीनो नृपोऽभवत् । पूर्वजन्मार्जितात्पुण्यात्प्राप्तं राज्यमकण्टकम् ।' जना ऊचुः—' पुण्यात्पापं क्षयं याति पुराणे श्रूयते मुने । पुण्योद्देशं तु कथय येन पापक्षयो भवेत् । यथा भवत्प्रसादेन पुत्रो भवति भूपतेः ।' लोमश उवाच—' श्रावणे शुक्लपक्षे तु पुत्रदा नाम विश्रुता । एकादशी चास्ति तदा कुरुध्वं तद्व्रतं जनाः । यथाविधि यथान्यायं यथोक्तं जागरान्वितम् । तस्याः पुण्यं सुविपुलं ददध्वं नृपतेर्जनाः । एवं कृते सुनियतं राज्ञः पुत्रो भविष्यति । श्रुत्वैतल्लोमशवचस्तं प्रणम्य द्विजोत्तमम् । प्रजग्मुः स्वगृहान्सर्वे हर्षोत्फुल्लविलोचनाः । श्रावणं तु समासाद्य स्मृत्वा लोमशभाषितम् । राज्ञा सह व्रतं चक्रुः सर्वे श्रद्धासमन्विताः । द्वादशीदिवसे पुण्ये ददुर्नृपतये नराः । दत्ते पुण्ये तथा राज्ञी

गर्भमाधत्त शोभनम् । प्राप्ते प्रसवकाले सा सुषुवे पुत्रमूर्जितम् । एवमेषा नृपश्रेष्ठ पुत्रदा नाम विश्रुता । कर्तव्या सुखमिच्छद्भिरिह लोके परत्र च। श्रुत्वा माहात्म्यमेतस्या नरः पापैः प्रमुच्यते । इह पुत्रसुखं प्राप्य परत्र स्वर्गतिं लभेत्।' इति श्रीभविष्यपुराणोक्तं श्रावणशुक्लपक्षे पुत्रदैकादशीमाहात्म्यं समाप्तम् । अस्यामेव कर्तव्यं बुधद्वादशीव्रतम् । दुर्वासा उवाच—'एवमेव श्रावणे तु मासि संकल्प्य द्वादशीम् । अर्चयेत्परमं देवं गन्धपुष्पनिवेदनैः । बुद्धाय पादौ संपूज्य श्रीधरायेति वै कटिम् । पद्मोद्भवाय जठरमुरः संकर्षणाय वै । सुग्रीवायेति कण्ठं तु भुजौ द्वौ विश्वबाहवे । प्राग्वच्छस्त्राणि संपूज्य शिरो वै परमात्मने । एवमभ्यर्च्य मेधावी तस्याग्रे पूर्ववद्घटम् । स्थापयेत्तत्र सौवर्णं बुद्धं कृत्वा विचक्षणः ।' बुद्धस्वरूपमुक्तं पुराणान्तरे—'बुद्धस्तु द्विभुजः कार्यो ध्यानस्तिमितलोचनः ।' इति । 'तमप्येवं तु संपूज्य ब्राह्मणाय निवेदयेत् । प्रीयतां श्रीधरो बुद्धरूपीति देवो मन्त्रतः।' 'अनेन विधिना पूर्वं द्वादशी समुपोषिता । शुद्धोदनेन बुद्धोऽभूत्स्वयं पुत्रो जनार्दनः । महतीं च श्रियं प्राप्तः पुत्रपौत्रसमन्वितः । भुक्त्वा राज्यश्रियं सोऽथ गतिं परमिकां गतः।' इति वाराहपुराणे धरणीव्रते श्रावणशुक्लद्वादश्यां बुद्धद्वादशीव्रतम् ।

अथ पवित्रार्पणम् । तच्च यद्यपि द्वादश्यां विहितं तथाप्येकादश्यामधिवासनकथनादत्रैवोच्यते हेमाद्रौ—नारद उवाच—'श्रुता मया विधानोक्ता विष्णोराराधनक्रिया । त्वत्प्रसादात्सुरश्रेष्ठ जन्मदुःखक्षयप्रदा । भूयोऽथ श्रोतुमिच्छामि सम्यक्पूजाफलप्रदम् । अल्पग्रन्थेन देवेश महापुण्यफलप्रदम् । पवित्रारोपणं कृत्वा विष्णोर्भक्तिसमन्वितैः । किं फलं प्राप्यते देव नरैस्तद्गतमानसैः । यस्मिन्काले च कर्तव्यं विधानं च तथा भवेत् । तिथौ तस्यां यथासूत्रं प्रमाणं च यथाविधि । यावन्तस्तन्तवस्तस्मिंस्तत्र यच्चानुमन्त्रणम् । तत्त्वन्यासविधानं तु तथा चैवाधिवासनम् । आरोपणविधानं च पवित्रारोपणादिकम् । किं कृत्वा फलमाप्नोति हीयते किमकुर्वतः । एतत्सर्वं समाचक्ष्व विधानं त्रिदशेश्वर ।' ब्रह्मोवाच—'शृणु वत्स परं गुह्यं विधानं देवनिर्मितम् । मया श्रुतं पुरा सम्यक्सकाशाच्चक्रपाणिनः। पवित्रारोपणं विष्णोर्भुक्तिमुक्तिप्रदायकम् । आयुःकीर्तियशःपुण्यसुखसंपद्धनावहम् । पुण्यानां तु यथा पुण्यं सर्वपापहरं शुभम् । पवित्रारोपणं तस्मात्पवित्रं परमं स्मृतम् । संवत्सरं नरो भक्त्या समभ्यर्च्य जनार्दनम् । यत्फलं समवाप्नोति पवित्रारोपणेन तत् । न करोति विधानेन पवित्रारोपणं तु यः । तस्य सांवत्सरी पूजा निष्फला मुनिसत्तम । तस्माद्भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः । वर्षे वर्षे प्रकर्तव्यं पवित्रारोपणं हरेः । श्रावणस्य

सिते पक्षे कर्कटस्थे दिवाकरे । द्वादश्यां वासुदेवस्य पवित्रारोपणं स्मृतम् । सिंहस्थे वा रवौ कार्यं कन्यायां तु गतेऽथवा। तस्यामेव तिथौ सम्यक्तुलास्थे न कथंचन। विष्णो रुद्रस्य सूर्यस्य विरञ्चेःषण्मुखस्य च। देव्या गणाधिनाथस्य मातॄणां धनदस्य च।पवित्रारोपणं कार्यमन्येषां च यथाविधि। अकृत्वा फलहानिः स्यात्संवत्सरकृतार्चनात् । सर्वेषां तु महापुण्यं पवित्रारोपणे कृते । तिथयस्तत्त्वविन्यासाः पृथगुक्तास्तपोधन । प्रतिपद्धनदस्योक्ता पवित्रारोपणे तिथिः । श्रियो देव्या द्वितीया तु तिथीनामुत्तमा तिथिः । तृतीया तु भवान्यास्तु चतुर्थी तत्सुतस्य च। पञ्चमी शेषराजस्य षष्ठी प्रोक्ता गुहस्य च। सप्तमी भास्करस्योक्ता दुर्गायाश्चाष्टमी स्मृता। मातॄणां नवमी प्रोक्ता दशमी वासुकेः स्मृता। एकादशीऋषीणां तु द्वादशीचक्रपाणिनः। त्रयोदशी ह्यनङ्गस्य शिवस्योक्ता चतुर्दशी। मम देवमुनिश्रेष्ठ पौर्णमासी तिथिः स्मृता। यथोक्ता शुक्लपक्षे तु तिथयः श्रावणस्य च। सर्वेषामेव देवानां कार्यं तासु यथाविधि ।' नारद उवाच—'कस्मिन्सूत्रं तु कर्तव्यं पवित्रं चक्रपाणिनः । प्रमाणं चैव तन्तूनां पुण्यं चैवेह कीदृशम् । कनिष्ठे मध्यमे चैव उत्तमे च पवित्रके। कृते यथा फलं कर्तुस्तद्वदस्व पितामह।' ब्रह्मोवाच—'शृणु वत्स यथा कार्यं यत्सूत्रं यत्प्रमाणकम्। विधानं च यथा तस्य फलं चैव यथा भवेत्। प्रथमं दर्भसूत्रं च पट्टसूत्रं ततः परम्। शुचिकार्पाससूत्रेण निर्मितं वा शुभावहम्। शुचिर्भूत्वा शुचौ देशे कारयीत प्रयत्नतः।तद्विधानोपयुक्तं तु यथोक्तफलदायकम्। कन्या तु कर्तयेत्सूत्रं नारी वाथ पतिव्रता। विधवा साधुशीला वा सूत्रमेतत्तु कर्तयेत्। केशयुक्तं क्षतं दग्धं मद्यरक्तादिदूषितम्। मलिनं नीलरक्तं वा प्रयत्नेन विवर्जयेत्। यथोक्तं सूत्रमादाय त्रिगुणं त्रिः प्रयोजयेत्। पवित्रं तेन कुर्वीत कनिष्ठोत्तममध्यमम्। कनिष्ठं तत्तु विज्ञेयं सप्तविंशतिभिः शुभम्। मर्त्यलोके तु तत्कीर्तिसुखायुर्धनपुत्रदम्। चतुःपञ्चाशता ज्ञेयं तन्तूनां मध्यमं परम्। दिव्यं भोगावहं पुण्यं स्वर्गवाससुखप्रदम्। उत्तमं चैव तन्तूनां शतमष्टोत्तरं कृतम्। दत्त्वा तद्वासुदेवाय विष्णुलोकं व्रजेन्नरः। अष्टोत्तरसहस्रं तु तन्तूनां परिसंख्यया। वनमाला स्मृता विष्णोर्दत्ता मुक्तिप्रदा हि सा।कनिष्ठं नाभिमात्रं स्यादूरुमात्रं तु मध्यमम्। पवित्रं चोत्तमं प्रोक्तं जानुमात्रं प्रमाणतः। वनमालाप्रमाणेन प्रतिमायाः प्रणीयते। नराणां जन्मसंसारमृत्युदुःखप्रणाशिनी। कनिष्ठे द्वादशैवोक्ता मध्यमे द्विगुणाः

स्मृताः । त्रिगुणास्तूत्तमे प्रोक्ता ग्रन्थयस्तु पवित्रके । शतमष्टोत्तरं कार्यं तिथीनां तु विधानतः । मुनीन्द्र वनमालायां विष्णुपूजनतत्परैः । अधिवासनसूत्रे तु ग्रन्थयो द्वादश स्मृताः । तत्त्वन्यासविधानं तु श्रूयतां गुह्यमुत्तमम् । इदं विष्णुरिति ख्यातो मन्त्र एष द्विजन्मनाम् । शूद्राणां तत्त्वविन्यासे मन्त्रो वै द्वादशाक्षरः । तावदावर्तयेन्मन्त्रं यावतो ग्रन्थयः स्मृताः । एकधा च द्विधा चैव त्रिधा चैव पवित्रके ।' ह्रस्वे प्रतिग्रन्थि सकृन्मन्त्रजपः । मध्यमोत्तमयोर्द्विस्त्रिः । ' कुङ्कुमोशीरकर्पूरचन्दनादिविलेपनैः । पवित्राणि विलिप्याथ तत्त्वन्यासपुरःसरम् । मूलमन्त्रेण वै कार्यं पवित्रारोपणं हरेः । एकादश्यां च तद्रात्रौ मूलमन्त्रेण भक्तिमान् । एकादश्यां शुभैर्गन्धैः पुष्पधूपविलेपनैः । नैवेद्यदीपवस्त्राद्यैः पूजयेद्गरुडध्वजम् । नृत्यगीतशुभाख्यानैर्मल्लयुद्धैः प्रवल्गितैः । वाद्यैर्मुरजशंखाद्यैर्जागरं कारयेन्निशि । क्षीरेक्षुशरसंयाववटकापूपमोदकैः । फलैः सुगन्धैर्मधुरैर्नैवेद्यं कारयेद्धरेः । एकादश्यां नरो भक्त्या संपूज्य मधुसूदनम् । पवित्रारोपणं कुर्याद्देवदेवस्य चक्रिणः । सोपवासः शुचिः स्नातः कृतजप्यो जितेन्द्रियः । दत्त्वा दानं द्विजाग्र्येभ्यः पूजयित्वा जनार्दनम् । पूर्वाधिवासितं सम्यक्समादाय पवित्रकम् । अतो देवेति मन्त्रेण विष्णोर्मूर्ध्नि निवेदयेत् । अयंमन्त्रोद्विजातीनां पवित्रारोपणे स्मृतः । शूद्रस्य मूलमन्त्रो वा येन संपूजयेद्धरिम् । स्तुतिमङ्गलनिर्घोषैर्गीतवादित्रनिःस्वनैः । पवित्रारोपणं कृत्वा देवो याच्यस्त्विमं वरम् । मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः । एषा सांवत्सरी पूजा तवास्तु गरुडध्वज । मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन । यत्पूजितं मया देव परिपूर्णं तदस्तु मे । वनमाला यथा देव कौस्तुभः सततं हृदि । पवित्रमस्तु ते तद्वत्पूजां च हृदये वह । कृत्वा पवित्रकं विष्णोर्वत्स द्वादशवार्षिकम् । फलं प्राप्नोत्यकृत्वा तु पूजाहानिमथाप्नुयात् । एवं संप्रार्थ्य देवेशं प्रणिपत्य पुनः पुनः । भूयोऽपि दद्याद्विप्रेभ्यो हरिमुद्दिश्य दक्षिणाम् । ततोऽनु भोजयेद्भक्त्या गुरुं ज्ञानप्रदायिनम् । वस्त्रगन्धानुलेपाद्यैः पुष्पैस्तु वरभूषणैः । प्राप्य मन्त्रं गुरोः शिष्यो भक्त्या नार्चयते गुरुम् । स गच्छति विमूढात्मा नरकं हि नराधमः । तस्मात्सर्वप्रयत्नेन यथा विष्णुं तथा गुरुम् । आनन्देनार्चयेद्यस्तु स मुक्तिफलमाप्नुयात् । यथा विष्णुस्तथा विद्या यथा विद्या तथा गुरुः । त्रितयं पूजयेद्यस्तु स मुक्तिफलमर्हति । निष्क्रम्य देवतागारात्संपूज्य पितृदेवताः । मूलमन्त्रेण जुहुयाद्वह्नौ सघृतपायसम् । ततोऽनुभोजयेद्विप्रान्दद्याच्छक्त्या च दक्षिणाम्

---

१—च शब्दाद्द्वादशाक्षरो वा ।

ताम्बूलपुष्पगन्धाद्यैः पूजयित्वा विसर्जयेत् । ततो बन्धून्विशिष्टांश्च ज्ञातिमित्रसमाश्रितान् । भोजयेदागतांश्चान्यान्भिक्षुकांश्च स्वशक्तितः । एवं विधिं विनिर्वर्त्य पवित्रारोपणे हरेः। विष्णोःसायुज्यमाप्नोति पुनरावृत्तिदुर्लभम्। स्थण्डिले देवदेवस्य एष एव विधिः स्मृतः। पवित्रारोपणे विष्णोर्विशेषः श्रूयतामिह । यावन्मानसमायुक्तं भावयेत जनार्दनम्। तावदङ्गुलकं तस्य पवित्रं मानवं स्मृतम्। यावन्तो ग्रन्थयः प्रोक्ताः स्वतत्त्वैश्चानुमन्त्रणम्। तत्रैव मूलमन्त्रेण दद्याद्विष्णोः पवित्रकम् । प्रतिमायां स्थण्डिले वा कृत्वा विष्णोः पवित्रकम् । कुलानां शतमुद्धृत्य विष्णुलोकं व्रजेन्नरः । एवं संपाद्य विधिना पवित्रारोपणं हरेः । अर्चयित्वा विधानेन हरिं च सपवित्रकम् । विसर्जयेत्तु मन्त्रेण अनेनैव पवित्रकम् । सांवत्सरीं शुभां पूजां संपाद्य विधिवन्मम । व्रजेदानीं पवित्र त्वं विष्णुलोकं विसर्जितः । मन्त्रेणानेन तत्सूत्रमवतार्य यथाविधि । उत्तार्य ब्राह्मणे दद्यात्तोये वाथ विसर्जयेत् । यावत्पुण्यं स्मृतं सम्यक्पवित्रारोपणे कृते । उपवीते कृते भक्त्या तत्फलं प्राप्नुयान्नरः । अनेनैव विधानेन तस्य पूजा विसर्जनम् । प्रार्थनावाहनं दानं समस्तं विधिमाचरेत् । तत्त्वमन्त्रैः समावेशविसर्जनविधिक्रियाः । अर्चने तु सुरेन्द्राणां सर्वकामानवाप्नुयात् ।आयुर्बलं धनं विद्यामारोग्यं कीर्तिमव्ययाम्। प्रयच्छन्ति यथा शक्त्या प्रसन्नास्तु दिवौकसः। अर्चिते देवदेवेशे शंखचक्रगदाधरे । अर्चिताः सर्वदेवाः स्युर्यतः सर्वगतो हरिः । अर्चिते सर्वलोकेशे सुरासुरनमस्कृते । केशवे कंसकेशिघ्ने न याति नरकं नरः । प्रातर्मध्येऽपराह्णे च सुरासुरगुरुं हरिम् । ये नमान्ति नरा नित्यं न ते नरकगामिनः । तपस्तप्त्वा नरो घोरमरण्ये विजितेन्द्रियः । यत्फलं समवाप्नोति स्मृत्वा तु गरुडध्वजम् । इति गुह्यतमं विष्णोः पूजाकल्पं मयोदितम् । समाचरति यो मर्त्यः स याति परमां गतिम् ।' इति ब्रह्मपुराणोक्तपवित्रारोपणविधिः । शिवागमे शिवपवित्रलक्षणम् । 'एकाशीत्यथवा सूत्रैः त्रिंशत्या चाष्टयुक्तया । पञ्चाशता च कर्तव्यं तुल्यग्रन्थ्यन्तरालकम् । द्वादशाङ्गुलमानानि यावदष्टाङ्गुलानि वा। लिङ्गविस्तारमानानि चतुरङ्गुलकानि वा । तथैव पिण्डिकास्पर्शे चतुर्थं सार्वदैवतम् । गोगावंतारकं[1] कार्यं पवित्रमतिसुन्दरम् ।' अथ विष्णुरहस्योक्तपवित्रारोपणविधिः । नारद उवाच—'भगवन्देवदेवेश परं कौतूहलं हि मे । पवित्रारोपणं पुण्यं प्रसादाद्वक्तुमर्हसि । पवित्रेति कथं संज्ञा कुत्रोत्पन्नं किमुच्यते । कृते च किं फलं प्रोक्तं विधानं तस्य कीदृशम् । द्रव्येण केन वा कुर्यात्किं प्रमाणं हि

१—गोग. शिव ।

तत्स्मृतम् । किं दैवतं च किं छन्दः को वा तस्य ऋषिः स्मृतः । अध्यात्मं चाधिभूतं च आधिदैवं कथं भवेत् । केन मन्त्रेण तत्कुर्याद्विधानं तस्य कीदृशम् । कस्मिन्काले तु कर्तव्यं नक्षत्रे वा तिथौ कथम् । कियन्तं ध्रियते कालमेतद्ब्रूहि सुरेश्वर ।' श्रीभगवानुवाच—'साधु नारद धर्मज्ञ तोषितोऽहं त्वयाऽनघ । शृणुष्व तव वक्ष्यामि पवित्रारोपणं क्रमात् । पावयत्येव यन्नित्यं त्रायते भवबन्धनात् । पवित्रं तेन विख्यातं ब्रह्मतेजो हि गीयते । विष्णवाख्यया तु विख्यातं तदा लोके निगद्यते । तदेव सूत्ररूपेण यज्ञेशः कर्मणः प्रभुः । तदेव त्रिगुणीभूतं मतं नारायणाख्यया । त्रिदेवात्मा त्रिवेदात्मा त्र्यक्षरः प्रणवः स्मृतः । ते तन्तवः समुद्भूता वराहाद्यङ्गिभिश्रिताः ।' कुत उत्पन्न इति प्रश्नस्येदमुत्तरम् । 'संघातेन च तन्तूनां तत्रात्मा परिकीर्तितः । तन्तूनां प्रथमो देवो वासुदेवो जगद्गुरुः । हलायुधो द्वितीयस्तु प्रद्युम्नश्च तृतीयकः । अपरस्त्वनिरुद्धस्तु ततो नारायणः प्रभुः । ब्रह्मा विष्णुस्तथैवाग्निर्वराहेण समाश्रिताः । अधिदैवेन रूपेण अध्यात्मं च निबोध मे । मनोबुद्धिरहंकारस्तन्मात्राणि तथैव च । जीवश्चेति नवैवात्र अध्यात्मे संव्यवस्थिताः । द्यौरन्तरिक्षं पृथिवी भूर्भुवः स्वस्तथैव च । अकारश्चाप्युकारश्च मकारश्चापि भूतके । अग्नित्रयं तथा कर्मत्रयं च सदनत्रयम् । ज्ञेयं पवित्रे तद्विद्वानधिदेवमुदाहरेत् । छन्दश्चैवात्र गायत्री प्रद्युम्न ऋषिरुच्यते । वासुदेवः परा तस्य देवता परिकीर्तिता । योगोऽस्य ब्रह्मकरणे ब्राह्मणानां विशेषतः । अलंकारं द्विजातीनां कर्तव्यं प्रतिवासरम् । शरद्वर्षासु कुर्वीत पवित्रारोपणं शुभम् । यावच्च धारयेत्तन्तुस्तावत्कुर्वीत वै व्रतम् । तथा पवित्रकं कार्यं त्रीन्मासान्मासमेव वा । पक्षं द्विमासं सद्यो वा त्रिरात्रं पञ्च एव वा । अवधिं कार्तिकं विद्धि सितपक्षाद्यनुक्रमात् । यथाशक्त्या यजेद्देवं कालसंकल्पना तथा । पवित्रे ध्रियमाणे त्वै न त्याज्यं दैवताङ्कितम् । उत्पवित्रीकृते पश्चाद्यथेष्टं विचरेद्बुधः । मङ्गलं शोभनं रुद्रं विजयं च चतुर्थकम् । आषाढादिक्रमेणैव नामानीमानि धारयेत् । द्वादश्यां श्रावणे वापि पञ्चम्यामथ वा द्विज । आनुकूल्ये तु कर्तव्यं पञ्चदश्यामथापि वा । सूत्रं तु याज्ञिकं कृत्वा तृणवल्कलसंभवम् । कार्पासिकं तथा कार्यं दार्भिकं वापि कारयेत् । ब्राह्मणीकर्तितं सूत्रमन्यद्वा तु यथारुचि । त्रिगुणं त्रिगुणीकृत्य क्षालयेन्निर्मलाम्भसा । यत्नेन शोधयेद्दोषान्केशाद्यांश्च स्वयं बुधः । अष्टोत्तरशतं कुर्याच्चतुःपञ्चाशदेव वा । सप्तविंशतिरेवार्थं ज्येष्ठमध्यकनीयसाम् । अङ्गुष्ठपर्वमात्रास्तु ग्रन्थयश्चोत्तमाः स्मृताः । तदर्धं मध्यमाश्चैव तदर्धमधमाः स्मृताः । अधमं नाभिमात्रं तदूरुमात्रं तृतीयकम् । उत्तमं जानुमात्रं

च प्रतिमायां निगद्यते । एवं हि रूपतः कुर्यादधमोत्तममध्यमे । यथाशोभं प्रकुर्वीत ग्रन्थयो विषमाः स्मृताः।सैव प्रोक्ता भवेदेव प्रोक्ता यत्र क्वचित्क्वचित्। आरोग्यदं द्विजश्रेष्ठ एवं विन्द्याद्विचक्षणः । स्थण्डिले वाथ वक्ष्यामि प्रथमं कर्णिकान्तरे । दलाग्रगं द्वितीयं च दिशापालान्तगं परम्। यथाशक्त्या तु कर्तव्यं प्रत्यवायो ह्यतिक्रमात्। पितृतो मातृतः शुद्ध आत्मशुद्धस्तथैव च । सदाचारस्थितो मन्त्री वेदवेदाङ्गपारगः। अलुब्धोऽपिशुनः सौम्यः सर्वभूतहिते रतः। आचार्यः स तु विज्ञेयः सर्वकर्मरतो हि सः। ब्राह्मणः क्षत्रियो वैश्यस्तथा स्त्री शूद्र एव च । स्वधर्मावस्थिताः सर्वे भक्ताश्च मधुसूदने । पूर्वोक्तं गुरुमासाद्य भक्त्या संतोषयेच्च तम् । यज्ञार्थं प्रार्थयेत्पश्चादुद्धारं कुरु मे प्रभो । पवित्रेणैव यज्ञेन यजेयं मधुसूदनम् । करिष्याम्येवमित्युक्ते संभारांश्च समाहरेत् । हरेः सूत्रादि यत्सर्वं गुरवे तन्निवेदयेत् । यथाशक्त्या पवित्रं च शुचिः कुर्यादतन्द्रितः । अष्टाक्षरेण मन्त्रेण ग्रथ्यन्ते ग्रन्थयस्तथा । कुङ्कुमं रोचनाञ्चैव कर्पूरेण समन्वितम् । आदावुक्तेन मन्त्रेण व्यस्तेन च विनिक्षिपेत् । समस्तेन ततो मन्त्री मन्त्रयेत विचक्षणः । उक्तेनैवं तु मन्त्रेण चर्चयेत पवित्रकम् ।' ॐ इति कुङ्कुमं निक्षिप्य,नम इति तदुपरि रोचनं,नारायणायेति तदुपरि कर्पूरमिति व्यस्तेन मन्त्रेण मेलयित्वा ॐ नमो नारायणायेति समस्तेन मंत्रेणाभिमन्त्र्य समस्तेनैव पवित्रमलं कुर्यात्।विष्णुरहस्योक्तपवित्रारोपणविधिः।स्मृतिकौस्तुभे हेमाद्रौ कालोत्तरे पवित्रारोपणप्रकरणे—'कृते मणिमयं कार्यं त्रेतायां हेमसंभवम् । पट्टजं द्वापरे सूत्रं कार्पासं तु कलौ स्मृतम् । यतिभिर्मानसं कार्यम्' इति । **अथ रामार्चनचन्द्रिकोक्तपवित्रारोपणविधिः** । 'श्रावणस्य सिते पक्षे द्वादश्यां शौनकादिभिः । उक्तस्तदा प्रकर्तव्यः पवित्रारोपणोत्सवः ।' तथा च बह्वृचपरिशिष्टे-'स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।हरेश्च प्रीतिमाप्नोति यः पवित्रं समाचरेत् । विधिना शास्त्रदृष्टेन यो न कुर्यात्पवित्रकम् । हरन्ति राक्षसास्तस्य वर्षपूजादिजं फलम् ।' पाद्मे तु—'ऊर्जे व्रतं मधौ दोलां श्रावणे तन्तुपूजनम् । चैत्रे दमनकारोपमकुर्वाणो व्रजत्यधः । पवित्रारोपणं विघ्नाच्छ्रावणे न भवेद्यदि । कार्तिकावधि सिंहार्के कर्तव्यमिति नारदः ।' इति पवित्रनित्यता । 'प्रयोगसारादुत्पत्तिः पवित्रस्य प्रतन्यते । कनीयान्वासुकेर्भ्राता पवित्रो नाम नागराट् । निराहारव्रतो भूत्वा दैविकं शरदां शतम्। तपस्तेपे समाश्रित्य देवदेवं महेश्वरम् । प्रसन्नस्तपसा तस्य पुरतः पुरुषोत्तमः । प्रणतार्तिहरः शम्भुराविरासीदुमाधवः । प्रसादाभिमुखं दृष्ट्वा देवं स भुजगेश्वरः । कण्ठाभरणतां प्राप्तुं वव्रे वरमनुत्तमम् । तथेत्याज्ञा-

षितं कण्ठे दधार त्रिपुरान्तकः। प्रादात्तस्मै वरं चान्यं पवित्रायात्मयोगिने। ये त्वा न बहु मन्यन्ते यथा संभावितो मया। जपहोमादिजं तेषां फलं त्वामेतु निश्चयात्। अत्रैव श्रावणे मासि नक्षत्रे वापि वैष्णवे । तस्मादाराधयन्तु त्वां नित्यनैमित्तिकोद्यमाः। वैदिकाः सकृद्धोमेन पूजां कुर्वन्तु तेऽनघ। त्वत्सादृश्यानुकारेण निर्वीतेनैव तान्त्रिकाः। आराध्यारोप्य पूज्यायै देवतायै पवित्रकम्। नानागमोक्तमार्गेण तस्य कर्तव्यतोच्यते। हैमरौप्यताम्रक्षौमैः सूत्रैः कौशेयपद्मजैः । कुशैः काशैश्च कार्पासैर्ब्राह्मण्या कर्तितैः शुभैः। कन्यया वा पवित्रं स्यान्न पुंश्चल्यादिभिः कृतैः । स्नात्वा त्रिगुणितं सूत्रं त्रिगुणीकृत्य शोधयेत् । अभिषिञ्चेत्पञ्चगव्यैरद्भिः प्रक्षालयेत्ततः । मूलेनाष्टोत्तरशतं गायत्र्या रामसंज्ञया। शंखोदकेनाभिषिञ्चेत्पवित्राणि विनिर्मयेत् । दुग्धदध्याज्यविण्मूत्रैः पञ्चगव्यक्रमं विदुः । आप्यायस्व दधिक्राव्णस्तेजोसि पञ्चगव्यके। गन्धद्वारां च गायत्री क्रमाज्ज्ञेयं विचक्षणैः ।' इति सूत्रशुद्धिः। 'तत्रोत्तमपवित्रं तु षष्ट्या सह शतैस्त्रिभिः । सप्तत्या सहितं द्वाभ्यां पवित्रं मध्यमं स्मृतम् । साशीतिना शतेनैव कनिष्ठं तत्समाचरेत् । अष्टोत्तरतदर्धार्धनवसूत्रीक्रमेण वा । जानूरुनाभिपर्यन्तमुत्तमादित्रयं भवेत् । अष्टोत्तरसहस्रेण वनमालां प्रकल्पयेत् । उत्तमस्य पवित्रस्य द्वैगुण्येनापि भावयेत्। आरभ्य मुकुटं या तु सूत्रेण रचिता शुभा। आपादलम्बिता माला वनमाला प्रकीर्तिता । यजमानपवित्रं चाधिवासनपवित्रकम्। कनिष्ठेन समं कार्यं मध्यमेन समं गुरोः । कुर्वीताग्रे पवित्रं च मध्यमेन समं शुभम् । साधारणपवित्राणि त्रिभिः सूत्रैः समाचरेत्। उत्तमं तु शतग्रन्थि पञ्चाशद्ग्रन्थि मध्यमम्। कनिष्ठं तु पवित्रं स्यात्षट्त्रिंशद्ग्रन्थिशोभितम् । षट्त्रिंशच्च चतुर्विंशद्द्वादशेति च केचन । चतुर्विंशद्द्वादश द्वावित्येके मुनयो विदुः । अङ्गुष्ठपर्वमात्रं तु कुर्याद्ग्रन्थिमथोत्तमे । तदर्धेन तदर्धेन मध्यमे च कनिष्ठके । ग्रन्थीन्कुर्वीत सर्वत्र सुव्रतान्सुमनोहरान् । न वै विषमसंख्याकान्ग्रन्थीन्कुर्वीत कर्हिचित् । विशोभसूत्रदानेन कर्तुःस्यादशुभं फलम् । पवित्रं परया भक्त्या तस्मात्कुर्वीत शोभनम् । कुङ्कुमं रोचनं चैव कर्पूरेण च मिश्रितम्। तेन संपूजयेत्सूत्रमष्टवाराभिमन्त्रितम्। ततोऽभिमन्त्रणं कुर्यादिदं विष्णुश्च मन्त्रतः। द्वादशाक्षरमन्त्रो वा सर्वसाधारणः स्मृतः।' इति पवित्रलक्षणम्। 'ततस्तानि पवित्राणि वैणवे पटले शुभे । संस्थाप्य शुचिमन्त्रेण पञ्चगव्येन

१अभिमन्त्रयेदिति शेष. ।

शोधयेत् । तां तु कक्षान्तरे कृत्वा मानसं स्नानमाचरेत् । ततस्तु सर्वतो रक्षां कृत्वाऽग्नौ होममाचरेत् । स्वयं तु भगवत्पूजां महतीं च समाचरेत् । महास्नानं प्रकुर्वीत उपचारांस्तथैव च । देवस्य सर्वतः स्थाप्यं दन्तकाष्ठं जलं कशाः । मृत्तिकां च हरिद्रां च कुष्ठं गोरोचनानि च । पादुकोपानहं छत्रं चामरं व्यजनं तथा । व्रीह्यानि यवधान्यानि पुरतः स्थापयेत्तथा । दण्डवत्प्रणिपातैश्च स्तोत्रैर्नानाविधैरपि । वैदिकैश्च जपैर्देवं यथावत्प्रतिबोधयेत् । क्रियालोपविघातार्थं यत्त्वया विहितं प्रभो । मयैतत्क्रियते देव त्वत्तुष्टचै च पवित्रकम् । न हि विघ्नो भवेदत्र कुरु नाथ दयां मयि । सर्वथा सर्वदा विष्णो मम त्वं परमा गतिः । उपवासेन त्वां देव तोषयामि जगत्पते।कामक्रोधादयोऽप्येते न मे स्युर्व्रतघातकाः।अद्य प्रभृति देवेश यावद्वैशेषिकं दिनम् । तावद्रक्षा त्वया कार्या सर्वस्यास्य नमोऽस्तु ते । एवं विज्ञाप्य देवेशं गुरुपादौ प्रणम्य च । कुर्यात्तु वैष्णवैः सार्धं पवित्रारोपणं हरेः । कुम्भं पुण्याम्बुनापूर्य सर्वतोभद्रके शुभे । स्थापयेत्पुरतो विष्णोस्तत्र सूत्राणि पूजयेत् । सांवत्सरस्य यागस्य पवित्रीकरणाय भोः । विष्णुलोकात्पवित्र त्वमागच्छेह नमोऽस्तु ते । अनेनावाहयेत्सूत्रं मूलमन्त्रयुतेन वा । उत्तमादित्रये विद्वान्स्मरेद्देवत्रयं तथा । गुणान्वेदत्रयं चैव ध्यायेल्लोकत्रयं तथा । प्रकृतिं च न पूर्वायां मालायां निखिलात्मिकाम् । द्युलोकं मुकुटे सूत्रे ध्यायेत्तद्गात्रशालिनि । सर्वाभरणचित्राङ्ग सर्वदेवनमस्कृत । लावण्यरूपविश्वात्मञ्ज्येष्ठसूत्रं समाश्रय । ॐ सर्वलक्ष्मीकर श्रीश सर्वज्ञानमयात्मक । निकृत्तरूप विश्वात्मन्मध्यसूत्रं समाश्रय । अतिवेग जगद्योने पुरुषात्मन्दिवस्पते । कनीयो मे प्रभो देव तेजसा सूत्रमाश्रय । सर्वाधारधरारूप सर्वकर्तः प्रजापते । सर्वथात्मेश सूत्रेऽस्मिन्सांनिध्यं कुरु ते नमः । सर्वरत्नोज्ज्वलाकार ब्रह्माण्डब्रह्मरोचिष । मुकुटोत्तमसर्वाङ्ग शिरःसूत्र इहेहि भोः । प्रकृतिर्जगतः कर्त्री सर्वलावण्यदायिनी । श्रीसूत्रे नित्यकल्याणि सांनिध्यं कुरु ते नमः । उत्तमादीनि सूत्राणि क्रमादालभ्य पाणिना । मनुभिर्मन्त्रयेदेभिः पूजयेन्मूलमन्त्रतः । ब्रह्मविष्णुमहादेवास्त्रिसूत्रीदेवताः स्मृताः । ॐकारः सोमवह्नी च ब्रह्मा नागाः शशी रविः । शिवश्च विश्वेदेवाश्च नवसूत्र्यधिदेवताः । क्रिया च पौरुषी वीरा विजयेशापराजिता । मनोमयी जया भद्रा मुक्तिश्च ग्रन्थिदेवताः । ध्यात्वावाह्यामृतीकृत्य गन्धपुष्पाक्षताङ्कुरैः । धूपदीपान्नताम्बूलैः पवित्राणि बुधोऽर्चयेत् । अथ देवकरे विद्वान्पट्टसूत्रसमुद्भवम् । वितस्तिमानकं दोरे बध्नीयान्मङ्गलात्मकम् । संवत्सरकृताचार्याः संपूर्णफलदोऽसि यत् । पवित्रारोपणायैतत्कुरु कंधरके[1] नमः ।

१ ते इत्यपि पाठ. ।

ॐविष्णुतेजोद्भवं रम्यं सर्वपातकनाशनम् । सर्वकामप्रदं देव तवाङ्गे धारयाम्यहम् । मूलसंपुटितादस्माद्दद्याद्गन्धपवित्रकम् । नीराजयेत्ततो देवं मङ्गलाघोषपूर्वकम् । नैवेद्यं विविधं दद्यात्ताम्बूलमनुलेपनम् । उपतिष्ठेत्ततो देवं जितमित्यादिभिःस्तवैः । मन्त्रेणाथ सुरेशानं देवदेवं निमन्त्रयेत् । आमन्त्रितोऽसि देवेश पुराणपुरुषोत्तम । प्रातस्त्वां पूजयिष्यामि सांनिध्यं कुरु केशव । 'ॐक्षीरोदधिमहाभोगशय्यावस्थितविग्रहम् । प्रातस्त्वां पूजयिष्यामि संनिधौ भव ते नमः । निवेदयाम्यहं तुभ्यं प्रातरेतत्पवित्रकम् । सर्वथा सर्वदा विष्णो नमस्तेऽस्तु प्रसीद मे । निपतेद्दण्डवद्भूमौ क्षिपेत्पुष्पाञ्जलिं पुनः । पूजितान्यत्र सूत्राणि कुम्भं च पुरतः स्थितम् । अस्त्रेण सर्वतो रक्षेत्कवचेनावगुण्ठयेत् । रक्षेद्वा चक्रमन्त्रेण नृहरेर्मनुनाऽथ वा । ब्राह्मणांस्तु नमस्कृत्य गुरुपादौ प्रणम्य च । गीतमङ्गलनिर्घोषैः कुर्याज्जागरणं ततः । अधिवासे विधिः प्रोक्तः कथितो नारदादिभिः ।' अधिवासनकालश्च दीपिकायामुक्तः—'गोदोहान्तरिते काले पूर्वेद्युर्वाधिवासनम्' इति । इति पवित्राधिवासनम् । 'ततः प्रातः समुत्थाय ध्यात्वा देवं यथोदितम् । नित्यपूजां ततः कृत्वा पवित्राणां तथैव च । नीराजयेच्छनैर्दीपैर्मङ्गलाघोषपूर्वकम् । स्तुत्वा च विविधैः स्तोत्रैर्महादेवं सुरार्चितम् । ततो मङ्गलनिर्घोषैः शंखतूर्यादिभिः स्वनैः । गन्धदूर्वाक्षतैर्युक्तं दद्याद्देवाय सूत्रकम् । ॐ राम राम नमस्तुभ्यं गृहाणेदं पवित्रकम् । पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् । पवित्रं तत्कुरुष्वाद्य यन्मया दुष्कृतं कृतम् । शुद्धो भवाम्यहं देव त्वत्प्रसादात्सुरेश्वर । मूलसंपुटितो ह्येष पवित्रारोपणे मनुः । अङ्गाद्यावृतिदेवेभ्यस्ततो दद्यात्स्वनामभिः । नैवेद्यं तु महापूर्वं ततो दद्याच्च भक्तितः । नीराजयेत्ततो देवं रमाकान्तं सुमङ्गलम् । संवीज्य चामरैः पुण्यैर्दर्पणं दर्शयेत्ततः । विविधानि च पुष्पाणि दद्यापुष्पाञ्जलिं ततः । प्रार्थयेद्देवदेवेशं मन्त्रैरेभिर्यथाविधि । मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः । इयं सांवत्सरी पूजा तवास्तु गरुडध्वज । वनमाला यथा देव कौस्तुभः सततं हृदि । पवित्रमस्तु ते तद्वत्पूजां च हृदये वह । जानताऽजानता वापि न कृतं यत्तवार्चनम् । केनचिद्विघ्नदोषेण परिपूर्णं तदस्तु मे । अपराधसहस्राणि क्रियन्तेऽहर्निशं मया । दासोऽहमिति मां मत्वा क्षमस्व मधुसूदन । निपत्य दण्डवद्भूमौ भक्तियुक्तेन चेतसा । प्रणमेद्देवदेवेशं राममिष्टार्थदं बुधः । ततः पवित्रं गुरवे दद्याद्गन्धादिपूर्वकम् । अथैनं पूजयेद्भक्त्या स्वर्णवस्त्रानुलेपनैः । ब्राह्मणान्विष्णुभ-

कान्वै गन्धपुष्पादिनार्चयेत्। भक्त्या प्रतोषयेत्तांस्तु वस्त्रभोजनकाञ्चनैः। मासं पक्षमहोरात्रं त्रिरात्रं धारयेत्तथा। देवं तं सूत्रसंभेदं देशकालविवक्षया। प्रत्यहं स्नानकार्यादि सूत्राण्युत्तार्य कारयेत्। अभिषिच्यार्घ्यतोयेन पुनर्देवे निवेदयेत्। अथान्ते देवमभ्यर्च्य विशेषात्पुष्पचन्दनैः। नैवेद्यं विधिवद्दत्वा ततः सूत्रं विसर्जयेत्। सांवत्सरीं शुभां पूजां संपाद्य विधिवन्मम। व्रजेदानीं पवित्र त्वं विष्णुलोकं विसर्जितः। यावद्देवे पवित्राणि तावत्तिष्ठेत्समाहितः। ब्रह्मचारी हविष्याशी देवपूजापरायणः। पवित्रारोपणं काले न करोति कथंचन। तदायुतं जपेन्मन्त्रं स्तोत्रं वापि समाचरेत्।' इति पवित्रारोपणम्।अथ सर्वसाधारणप्रयोगः। प्रातः कृत्यं कृत्वा सूत्रं त्रिगुणं त्रिगुणीकृत्य पञ्चगव्येन संप्रोक्ष्य उष्णोदकेन शीतलेन वा प्रक्षालयेत् हृदयमन्त्रेण। ततो मूलेनाष्टोत्तरशतसंख्यया रामगायत्र्या चाष्टोत्तरशतवारमभिमन्त्र्य शंखोदकेनाभिषिच्य पवित्राणि निर्मयेत्। ततोऽष्टोत्तरशततदर्धतदर्धनवसूत्र्या ज्येष्ठमध्यकनिष्ठानि देवस्य जानूरुनाभिदघ्नानि षट्त्रिंशच्चतुर्विंशतिद्वादशग्रन्थिकानि कृत्वा कर्पूरकुङ्कुमकेसरगोरोचनागरुसंयुक्तेन चन्दनेन रञ्जयित्वा नारायणाष्टाक्षरेण इदं विष्णुरिति मन्त्रेण द्वादशाक्षरेण वा अभिमन्त्रयेत्। तानि पवित्राणि वैणवपटलसंपुटान्तः शुभ्रवस्त्रेण संछाद्यावस्थाप्य परिवारदेवतानां सप्तविंशतिषड्विंशतिषोडशद्वादशनवत्रिसूत्रीष्वन्यतमाभिःयथासंशोभं दश दश ग्रन्थिकानि कृत्वा 'गुरुपवित्रमहं देव त्वत्प्रसादात्सुरेश्वर। मूलसंपुटितो ह्येष पवित्रारोपणे मनुः।अङ्गाद्यावृत्तिदेवेभ्यस्ततो दद्यात्स्वनामभिः।नैवेद्यं तु महापूर्वं ततो दद्याच्च भक्तितः।नीराजयेत्ततो देवं रमाकान्तं सुमङ्गलम्। संवीज्य चामरैःपुण्यैर्दर्पणं दर्शयेत्ततः। विविधानि च पुष्पाणि दद्यात्पुष्पाञ्जलिं ततः। प्रार्थयेद्देवदेवेशं मन्त्रैरेभिर्यथाविधि। मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः। इयं सांवत्सरी पूजा तवास्तु गरुडध्वज। वनमाला यथा देव कौस्तुभः सततं हृदि। पवित्रमस्तु ते तद्वत्पूजां च हृदये वह।जानताजानता वापि न कृतं यत्तवार्चनम्। केनचिद्विघ्नदोषेण परिपूर्णं तदस्तु मे। अपराधसहस्राणि क्रियन्तेऽहर्निशं मया। दासोऽयमिति मां मत्वा क्षमस्व मधुसूदन। निपत्य दण्डवद्भूमौ भक्तियुक्तेन चेतसा। प्रणमेद्देवदेवेशं राममिष्टार्थदं बुधः। ततः पवित्रं गुरवे दद्याद्गन्धादिपूर्वकम्। अथैनं पूजयेद्भक्त्या स्वर्णवस्त्रानुलेपनैः। ब्राह्मणान्विष्णुभक्तान्वै गन्धपुष्पादिनार्चयेत्। भक्त्या प्रतोषयेत्तांस्तु वस्त्रभोजनकाञ्चनैः। मासं पक्षमहोरात्रं त्रिरात्रं धारयेत्तथा। देवे तं सूत्रसंभेदं देशकालविवक्षया। प्रत्यहं स्नानकार्यादि सूत्राण्युत्तार्य कारयेत्। अभिषिच्यार्घतोयेन पुनर्देवे निवेदयेत्। तथा

तं देवमभ्यर्च्य विशेषात्पुष्पचन्दनैः । नैवेद्यं विधिवद्दत्त्वा ततः सूत्रं विसर्जयेत् । सांवत्सरीं शुभां पूजां संपाद्य विधिवन्मम । व्रजेदानीं पवित्र त्वं विष्णुलोकं विसर्जितः । यावद्देवे पवित्राणि तावत्तिष्ठेत्समाहितः । ब्रह्मचारी हविष्याशी देवपूजापरायणः । पवित्रारोपणं काले न करोति कथंचन । तदायुतं जपेन्मंत्रं स्तोत्रं वापि समाचरेत् ।' इति पवित्रारोपणम् । अथ सर्वसाधारणप्रयोगः । पवित्राणि तु स्वर्णरजतताम्रपट्टसूत्रत्रसरीपद्मसूत्रकुशकाशमुञ्जशणवल्कलकार्पाससूत्रेष्वन्यतमसूत्रैः कुर्यात् । तत्र निषिद्धसूत्राणि । 'केशयुक्तं क्षतं दग्धं मद्यरक्तादिदूषितम् । मलिनं नीलरक्तं वा प्रयत्नेन विवर्जयेत्।' इति। कार्पाससूत्रं चेत्सुवासिनीभिः कर्तितं यथालब्धं वा गृहीत्वा त्रिगुणीकृत्य नवसूत्रस्यैकसरत्वेन कल्पितैः सूत्रैः पवित्राणि कुर्यात् । स्वर्णादिसूत्रकृतपवित्रेषु यथास्थिततन्तुमादाय वक्ष्यमाणसंख्या संपादनीयेति शिवार्चनचन्द्रिकारत्नमालाकारादयः । तत्रादौ सूत्रशुद्धिक्रमः । तत्सूत्रं पञ्चगव्येनाभिषिच्याद्भिः प्रक्षाल्य मूलेन रामगायत्र्या वा अष्टोत्तरशतवारमष्टवारं वा शंखोदकेनाभिमन्त्र्य शुचौ देशे निधाय पवित्राणि कुर्यादिति सूत्रशुद्धिः । तत्रोत्तमपवित्रं षष्ट्यधिकत्रिशतसूत्रैः कार्यम् । द्विसप्तत्यधिकशतद्वयसूत्रैर्मध्यम् । साशीतिशतसूत्रैः कनिष्ठम्। अथ वा अष्टोत्तरशतेनोत्तमम् । तदर्धं चतुःपञ्चाशता मध्यमम् । तदर्धं सप्तविंशत्या कनिष्ठम् । तत्र च देवस्य जानुपर्यन्तमुत्तमम् । ऊरुपर्यन्तं मध्यमम् । नाभिपर्यन्तं कनिष्ठम् । वनमाला त्वष्टोत्तरसहस्रसूत्रैः कार्या उत्तमपवित्रसूत्रप्रमाणद्वैगुण्येन वा कार्या। मुकुटमारभ्य पादपर्यन्ता माला वनमाला । यजमानपवित्रमधिवासनपवित्रम् अशीत्यधिकशतसूत्रैः सप्तविंशतिसूत्रैर्वा कार्यम् । गुरुपवित्रं तु द्विसप्तत्यधिकशतद्वयसूत्रैश्चतुःपञ्चाशता सूत्रैर्वा कर्तव्यम् । नृसिंहपरिचर्यायां तु गुरुपवित्रं सप्तविंशत्या षड्विंशत्या वामनसूत्र्या वा कर्तव्यमित्युक्तम् । अग्निपवित्रं तु गुरुपवित्रेण समं सप्तविंशत्या सूत्रैर्वा कर्तव्यम् । शिवपवित्रं तूत्तममेकाशीत्या सूत्रैः कार्यम् । पञ्चाशता सूत्रैर्मध्यमम्।अष्टत्रिंशता सूत्रैःकनिष्ठम्।तत्पवित्रप्रमाणं च—'द्वादशाङ्गुलमानानि व्यासादष्टाङ्गुलानि वा।लिङ्गविस्तारमानानि चतुरङ्गुलकानि च ।' इति।अन्यानि साधारणपवित्राणि त्रिभिः सूत्रैः कर्तव्यानि।क्रमज्ञानां शिष्याणां स्कन्धादिनाभिपर्यन्तं दैर्घ्यमुक्तम्। नृसिंहपरिचर्यायां तु—परिवारदेवतानां पवित्राणि सप्तविंशतिषोडशद्वादशनवत्रिसूत्रीभिः कर्तव्यानीत्युक्तम् । उत्तममध्यमकनिष्ठसूत्रत्रये एकपक्षानुसारेण पवित्राणि कुर्यादिति शिवार्चनचन्द्रिकाकारः । अथ पवित्रेषु ग्रन्थयः । अष्टाक्षराभिमन्त्रितैः

कुङ्कुमगोरोचनैः सकर्पूरैः अन्यत्सूत्रं रञ्जयित्वा "इदं विष्णुरिति मन्त्रेण द्वादशाक्षरमन्त्रेण वा अभिमन्त्र्य ग्रन्थीन्कुर्यात् । तत्रोत्तमपवित्रे शतग्रन्थयः षट्त्रिंशद्वा चतुर्विंशतिर्वा कर्तव्याः। मध्यमपवित्रे तु पञ्चाशच्चतुर्विंशतिः द्वादश वा ग्रन्थयः कार्याः। कनिष्ठपवित्रे षड्विंशतिः द्वादश अष्टौ वा ग्रन्थयः कार्याः । शिवार्चनचन्द्रिकायां तु एतानि सर्वाणि दशग्रन्थियुक्तानि कर्तव्यानीत्युक्तम् । वनमालायामष्टोत्तरशतं ग्रन्थयः कार्याः । गन्धपवित्रं तु द्वादशनवसूत्रीभिः द्वादशग्रन्थियुक्तमरत्निमात्रं ग्रन्थिरहितं वितस्तिमात्रं कर्तव्यम् । अथ ग्रन्थिरचनाप्रकारमाह—अङ्गुष्ठपर्वमात्रं ग्रन्थिमुत्तमे । तदर्धेन मध्ये तदर्धेन कनिष्ठे । एवं सुवृत्तान् सुशोभान् समानान् ग्रन्थीन्नारायणाष्टाक्षरं कवचमन्त्रं वा जपन् कुर्वीत । शिवार्चनचन्द्रिकायां तु ग्रन्थिसूत्रवेष्टितसंख्या उक्ता । उत्तमपवित्रे षट्त्रिंशत् । मध्यमेषु चतुर्विंशतिः कनिष्ठेषु द्वाविंशतिः इति । ततः वस्त्राच्छादितेन वैणवे पटले तानि पवित्राणि संस्थाप्य वस्त्रेण पिधाय देवस्य पुरतो न्यसेत्। ततः अरत्निसंमितां षट्त्रिंशता कुशैः वेणीं कृत्वा तां वेणीं मूलमन्त्रेणाभिमन्त्र्य पञ्चगव्येन संशोध्य कक्षान्तरे कृत्वा मानसं स्नानं कुर्यात्। तद्यथा 'स्वस्थितं पुण्डरीकाक्षं मन्त्रमूर्तिं प्रभुं स्मरन् । अनन्तादित्यसंकाशं वासुदेवं चतुर्भुजम् । शंखचक्रगदापद्ममुकुटं वनमालिनम् । दिव्यचन्दनलिप्ताङ्गं चारुहासं शुभेक्षणम् । नारदाद्यैः सेव्यमानं भास्वद्विपुलकङ्कणम् । सकिंकिणीककेयूरहारिणं मणिनूपुरम् । ध्वजच्छत्राङ्कुशालक्ष्यपादपङ्केरुहद्वयम् । तत्पादोदकजां धारां निपतन्तीं स्वमूर्धनि । चिन्तयेद्ब्रह्मरन्ध्रेण प्रविशन्तीं स्वकां तनुम् । तया संक्षालयेत्सर्वमन्तर्देहगतं मलम् । तत्क्षणाद्विरजा मन्त्री जायते स्फटिकोपमः । इदं मन्त्रं वरस्नानसहस्रादधिकं स्मृतम् । ' ततः सर्वतो रक्षणं कुर्यात् । तद्यथा जलपुष्पाक्षतान् हस्ते गृहीत्वा ॐ हः अस्त्राय फट् इत्युच्चार्य आत्मनः परितः प्रक्षिप्य अस्त्राय फट् इति छोटिकाभिः सर्वदिग्बन्धनं कृत्वा अग्निप्राकारमुद्रां स्वमूर्धानं परितः प्रादक्षिण्येन त्रिभिर्भ्रामयेत् । तन्मध्यगतमात्मानं संचिन्त्य संक्षेपेण भगवत्पूजां कृत्वा मूलमन्त्रेण वैदिकेन वा होमं विधाय महापूजां कुर्यात् तत्र नित्यपूजनात्पञ्चामृतादिद्रव्यं त्रिगुणितं ग्राह्यम् । ततो गन्धतैलदानानन्तरमुद्वर्तनं कुर्यात् । तत्र प्रकारो महाकपिलपञ्चरात्रे—' रजनी सहदेवी च शिरीषं लक्ष्मणापि च । सदाभद्रा कुशाग्राणि उद्वर्तनमिहोच्यते ।' इति एतदनन्तरं शंखजलेन देवायाभिषेकं कुर्यात् । यदाहुः—' शतं सहस्रमयुतं शक्त्या वाप्यभिषेचयेत् । शंखं संपूर्य तेनैव सपुष्पेण च देवताम् ।' इति । अन्यत्रापि—' स्वशक्त्या गन्धतोयेन संस्नाप्य जगदी-

श्वरम् । महाभिषेकं सर्वत्र शंखेनैव प्रकल्पयेत् ।' इति । ततो देवं सर्वोपचारैः संपूज्य देवस्य पुरतः दन्तकाष्ठं जलं कुशान्मृत्तिकां हरिद्रां कुष्ठं गोराचनां पादुके उपानहौ छत्रं चामरं व्यजनं व्रीह्यादिधान्यानि च स्थापयेत् । तानि चोक्तानि विष्णुपुराणे— 'व्रीहयः सयवा माषा गोधूमा अणवस्तिलाः । प्रियङ्गुसप्तमा ह्येते अष्टमाश्च कुलत्थकाः । श्यामाकास्त्वथ नीवारा जर्तिलाः सगवेधुकाः । तथा वेणुयवाः प्रोक्तास्तथा मर्कटका मुने । ग्राम्यारण्याः स्मृता ह्येता ओषध्यश्च चतुर्दश ।' इति । ततः साष्टाङ्गं प्रणिपत्य नानाविधैः स्तोत्रैर्वैदिकैश्च देवं स्तुत्वा विज्ञापयेत् । 'क्रियालोपविघातार्थं यत्त्वया विहितं प्रभो । मयैतत्क्रियते देव त्वत्तुष्ट्यैव पवित्रकम् । न हि विघ्नो भवेदत्र कुरु नाथ दयां मयि । सर्वथा सर्वदा विष्णो मम त्वं परमा गतिः । उपवासेन त्वां देव तोषयामि जगत्पते । कामक्रोधादयोऽप्येते न मे स्युर्व्रतघातकाः । अद्यप्रभृति देवेश यावद्वैशेषिकं दिनम् । तावद्रक्षा त्वया कार्या सर्वस्य च नमोऽस्तु ते । तव यागं करिष्येऽहं पवित्रमयमच्युत । आमन्त्रितोऽसि सपरीवारः श्रीराम भो मया । राम राम महाराम रक्ष मां शरणागतम् । मद्भक्तितुष्टिसंपूर्णं तव तोषकरं परम् ।' इति निजाराधनाय देवं विज्ञाप्य देवाग्रे सर्वतोभद्रमण्डलं पद्मं वा विरच्य तत्र फलमालालंकृतं वितानमाबध्य मण्डलोपरि जलपूर्णकुम्भं महीद्यौरित्यादिविधिना संस्थाप्य तदुपरि ससूत्रं वैणवं पात्रं च संस्थाप्य पवित्रपूजनं कुर्यात् । 'ॐ सांवत्सरस्य यागस्य पवित्रीकरणाय भोः । विष्णुलोकात्पवित्राद्य आगच्छेह नमोऽस्तु ते ।' इत्यनेन मूलमन्त्रयुतेनावाहयेत् । उत्तममध्यमकनिष्ठेषु ब्रह्मविष्णुरुद्रान्सत्त्वरजस्तमांसि वेदत्रयं लोकत्रयं ध्यात्वा वनमालायां प्रकृतिं मुकुटसूत्रे द्युलोकं ध्यात्वा 'ॐ सर्वाभरणचित्राङ्ग सर्वदेवनमस्कृत । लावण्यरूप विश्वात्मञ्ज्येष्ठसूत्रं समाश्रय । ॐ सर्वलक्ष्मीकर श्रीश सर्वज्ञानमयात्मक । निवृत्तिरूप विश्वात्मन्मध्यसूत्रं समाश्रय । अतिवेग जगद्योने पुरुषात्मन्दिवस्पते । कनीयो मे प्रभो देव तेजसा सूत्रमाश्रय । सर्वाधारधरारूप सर्वकर्तः प्रजापते । सर्वथात्मेश सूत्रेऽस्मिन्सांनिध्यं कुरु ते नमः । सर्वरत्नोज्ज्वलाकार ब्रह्माण्डब्रह्मरोचिष । मुकुटोत्तमसर्वाङ्ग शिरःसूत्र इहेहि भोः । प्रकृतिर्जगतः कर्त्री सर्वलावण्यदायिनी । श्रीसूत्रे सर्वकल्याणि सांनिध्यं कुरु ते नमः ।' उत्तमादीनि सूत्राणि क्रमात्पाणिना एभिर्मन्त्रैरालभ्य त्रिसूत्र्यां ब्रह्मविष्णुरुद्रान् ओंकारं सोमं वह्निं ब्रह्माणं नागान् शशिनं रविं शिवं विश्वान्देवान् । नवसूत्र्यां क्रियां पौरुषीं वीरां विजयाम् ईशाम् अपराजितां मनोमयीं जयां भद्रां मुक्तिं ग्रन्थिषु ध्यात्वा यावद्ग्रन्थिसंख्यामावर्त्यमानैरेतैरेव

नामभिरावाह्य पूजयेत् । ततः आवाहनादिमुद्राः प्रदर्श्य चक्रमुद्रया संरक्ष्य धेनुमुद्रया अमृतीकृत्य गन्धाक्षतपुष्पधूपदीपनैवेद्यफलताम्बूलादिभिःपवित्रदेवता अभ्यर्च्य गन्धपवित्रं वितस्तिदोरकात्मकं गृहीत्वा हृदयमन्त्रेण प्रणवेन वा अभिमन्त्र्य देवं नमस्कृत्य 'संवत्सरकृतार्चायाः संपूर्णफलदोऽसि यत् । पवित्रारोपणायैतत्कुरु कंधरके नमः । विष्णुतेजोद्भवं रम्यं सर्वपातकनाशनम् । सर्वकामप्रदं देव तवाङ्गे धारयाम्यहम् ।' इति मूलसंपुटितं श्लोकद्वयं पठित्वा देवकरे बध्नीयात्।ततो मङ्गलारार्तिकेन देवं नीराज्य पुनश्चन्दननैवेद्यताम्बूलादिभिः संपूज्य 'ध्येयं सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरञ्चिनुतं शरण्यम् । भृत्यार्तिहं प्रणतपालभवाब्धिपोतं वन्दे महापुरुष ते चरणारविन्दम् । त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं धर्मिष्ठ आर्यवचसा यदगादरण्यम्।मायामृगं दयितयेप्सितमन्वधावद्वन्दे महापुरुष ते चरणारविन्दम्।योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां संजीवयत्यखिलशक्तिधरः स्वधाम्ना । अन्यांश्च हस्तचरणश्रवणत्वगादीन्प्राणान्नमो भगवते पुरुषाय तुभ्यम् ।' इत्यादिभिः स्तुत्वा देवं निमन्त्रयेत् । 'देवदेव शृणुष्वाद्य त्वद्भक्तस्यासुरान्तक । जगन्मय जगन्नाथ विश्वेश्वर रमापते । त्रैलोक्यमोहनानन्त कामनासाधनं शृणु । आमन्त्रितोऽसि देवेश पुराणपुरुषोत्तम । प्रातस्त्वां पूजयिष्यामि सांनिध्यं कुरु केशव । क्षीरोदधिमहानागशय्यावस्थितविग्रह । प्रातस्त्वां पूजयिष्यामि संनिधौ भव ते नमः । निवेदयाम्यहं तुभ्यं प्रातरेतत्पवित्रकम् । सर्वथा सर्वदा विष्णो नमस्तेऽस्तु प्रसीद मे।' इति संप्रार्थ्य साष्टाङ्गं प्रणिपत्य पुष्पाञ्जलिं दत्त्वा सूत्राण्यस्त्रेण संरक्ष्य कवचेनावगुण्ठ्य नृसिंहमन्त्रेण रक्षणं कुर्यात् । नृसिंहमन्त्रस्तु—'उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् । नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम ।' ततो ब्राह्मणवन्दनं गुरुवन्दनं च कृत्वा रात्रौ जागरणं कुर्यात् । सद्योऽधिवासने तु जागरणं नास्ति 'ततो जागरणं कुर्यात्सद्यो जागरणं नहि ।' इति दक्षिणामूर्तिसंहितावचनात् । इति एकादश्यां पवित्राधिवासनम्।ततो द्वादश्यां नित्यं नैमित्तिकं च देवपूजनं कृत्वा पवित्राणि च संपूज्य देवं नीराज्य स्तोत्रैः स्तुत्वा गन्धदूर्वाक्षतैर्युक्तं पवित्रं हस्ते गृहीत्वा मूलमन्त्रेणाष्टवारमभिमन्त्र्य मूलसंपुटितेन श्लोकद्वयेन पवित्रमर्पयेत्। 'ॐ राम राम नमस्तुभ्यं गृहाणेदं पवित्रकम् । पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् । पवित्रं तत्कुरुष्वाद्य यन्मया दुष्कृतं कृतम् । शुद्धो भवाम्यहं देव त्वत्प्रसादात्सुरेश्वर ।' इति।ततोऽङ्गावृतिदेवेभ्यस्तत्तन्नामभिर्दद्यात्।ततो महानै-

१ सहितो लोकपालकैः इति खपुस्तके पाठः ।

वेद्यं समर्प्य नीराजनं कृत्वा चामरैः संवीज्यादर्शं दर्शयित्वा पुष्पाञ्जलिं समर्प्य 'मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः । इयं सांवत्सरी पूजा तवास्तु गरुडध्वज । वनमाला यथा देव कौस्तुभः सततं हृदि । पवित्रमस्तु ते तद्वत्पूजां च हृदये वह। जानताऽजानता वापि न कृतं यत्तवार्चनम्। केनचिद्विघ्नदोषेण परिपूर्णं तदस्तु मे।अपराधसहस्राणि क्रियन्तेऽहर्निशं मया। दासोऽयमिति मां मत्वा क्षमस्व मधुसूदन।' इति संप्रार्थ्य साष्टाङ्गं प्रणम्य देवं प्रसादाभिमुखं विचिन्त्य 'मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर। पूजनं पूर्णतामेतु पवित्रेणार्पितेन ते।' इति पठित्वा गुरवे गन्धादिपूर्वकं पवित्रं दत्त्वा सुवर्णवस्त्रादिभिः संपूजयेत् ततो ब्राह्मणान्संभोज्य स्वयं भुञ्जीत । पवित्रधारणं तु देवे स्वदेहे च मासपक्षादि यथासंभवं कार्यम् । स्नानादिकाले तु तदुत्तार्य देवं स्नापयेत् । तथैव स्वयं स्नायात् । अर्घ्यतोयेनाभिषिच्य देवाङ्गे स्वाङ्गे च तद्धारयेत् । विसर्जनसमये देवं सूर्यं विशेषेण गन्धादिभिः संपूज्य विसर्जयेत् । विसर्जनमन्त्रस्तु 'ॐ सांवत्सरीं शुभां पूजां संपाद्य विधिवन्मम। व्रजेदानीं पवित्र त्वं विष्णुलोकं विसर्जितः।' यावद्देवे पवित्राणि तावद्ब्रह्मचर्यादिनियमेनावस्थेयम् । 'एवं यः कुरुते विद्वान्वर्षे वर्षे न संशयः । स याति परमं स्थानं यत्र रामः सनातनः । यावत्तन्तुपवित्रं तु तावत्स्वर्गे महीयते । आयुरारोग्यमैश्वर्यं विपुलं तस्य वर्धते ।' अथ संक्षेपेण पवित्रारोपणविधिः। दशम्यां हैमरूप्यादिसूत्रपवित्राणि कुर्यात् । कार्पाससूत्रं चेत्तस्य नवसूत्रीं विधाय पञ्चगव्येन प्रोक्ष्य प्रणवेन प्रक्षाल्य मूलेनाष्टोत्तरशतमभिमन्त्र्य शुचिदेशेऽष्टोत्तरशततदर्धतदर्धगुणितनवसूत्र्या देवस्य जानूरुनाभिपर्यन्तानि षट्त्रिंशच्चतुर्विंशतिद्वादशग्रन्थिकान्युत्तममध्यमकनिष्ठानि पवित्राणि विधायाष्टोत्तरसहस्रनवसूत्र्या अष्टोत्तरशतग्रन्थिकवनमालां विधाय द्वादशनवसूत्रीभिः तावद्ग्रन्थिकं गन्धपवित्रं सप्तविंशतिनवसूत्र्या गुरुपवित्रं च कृत्वा ग्रन्थीन्कुङ्कुमेन रञ्जयित्वाऽपामार्गबिल्वान्यतरकाष्ठेन दन्तान्संशोध्य 'क्रियालोपविघातार्थं यत्त्वया विहितं प्रभो। मयैतत्क्रियते देव तव तुष्ट्यै पवित्रकम्। न मे विघ्नो भवेदत्र कुरु नाथ दयां मयि। सर्वथा सर्वदा विष्णो मम त्वं परमा गतिः।' इति प्रार्थ्यैकभुक्तेन तद्दिनमतिवाह्यैकादश्यां कृतनित्यक्रियः श्रीरामं महामण्डपे राजोपचारैः संपूज्य हरेः पुरतः सर्वतोभद्रस्थोदकुम्भे वैणवं पटलं निधाय तत्र पूर्वनिर्मितसकलसूत्राणि निधाय त्रिसूत्र्यां ब्रह्मविष्णुशिवान्नवसूत्र्याम् ॐकारसोमवह्निब्रह्मनागशशिसूर्यसदाशिवविश्वेदेवान् ग्रन्थिषु क्रिया पौरुषी वीरापराजिता विजयामुक्तिदा सदाशिवमनोन्मनीसर्वतोमुखीः प्रणवादिनमोन्तैरेव तैरेव

यावद्ग्रन्थिसंख्यमावर्त्यमाननामाभिरावाह्य गन्धादिभिरभ्यर्च्य गन्धपवित्रं धूपितमादाय प्रणवेनाभिमन्त्र्य 'विष्णुतेजोद्भवं रम्यं सर्वपातकनाशनम् । सर्वकामप्रदं देव तवाङ्गे धारयाम्यहम् ।' इति मन्त्रेण मूलसंपुटितेन भगवत्पादयोः समर्प्य प्रार्थयेत् । 'आमन्त्रितोऽसि देवेश पुराणपुरुषोत्तम । प्रातस्त्वां पूजयिष्यामि सांनिध्यं कुरु केशव । क्षीरोदधिमहानागशय्यावस्थितविग्रह । प्रातस्त्वां पूजयिष्यामि संनिधौ भव ते नमः ।' इति । तत्कथाजागरेण तां रात्रिमतिवाह्य द्वादश्यां कृतनित्यक्रियः श्रीरामं पवित्राणि च संपूज्य गन्धदूर्वाक्षतयुक्तं कनिष्ठपवित्रमादाय दद्यात् । मन्त्रः—'देवदेव नमस्तुभ्यं गृहाणेदं पवित्रकम् । पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् । पवित्रकं कुरुष्वाद्य यन्मया दुष्कृतं कृतम् । शुद्धो भवाम्यहं देव त्वत्प्रसादात्सुरेश्वर ।' इति ।एवं मध्यमोत्तमवनमालाः एतन्मन्त्रावृत्त्या समर्प्य । अङ्गदेवताभ्योऽपि यथासंभवं समर्प्य नीराज्य प्रार्थयेत् । 'ॐ मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः । इयं सावत्सरी पूजा तवास्तु गरुडध्वज । वनमालां यथा देव कौस्तुभं सततं हृदि । तद्वत्पवित्रतन्तूंस्त्वं पूजां च हृदये वह । जानताऽजानता वापि यत्कृतं न तवार्चनम् । केनचिद्विघ्नदोषेण परिपूर्णं तदस्तु मे । अपराधसहस्राणि क्रियन्तेऽहर्निशं मया । दासोऽयमिति मां मत्वा क्षम्यतां परमेश्वर । ' ततो गुरुं संपूज्य समर्प्य ब्राह्मणैः सह पारणं विधाय त्रिरात्रं ब्रह्मचर्यादिनियमवान्देवे पवित्रसंदर्भमभिषेकान्यकाले संस्थाप्य त्रिरात्रान्ते देवं संपूज्य पवित्राणि विसर्जयेदिति । इति संक्षिप्तपवित्रारोपणविधिः । अत्राप्यसमर्थश्चेन्निजपूजान्ते पवित्रपूजनं कृत्वा मूलेन देवाय पवित्रं समर्प्यावरणदेवताभ्य एकैकं समर्प्य गुरुं संपूज्य पवित्रं समर्प्य स्वयं पवित्रं धृत्वा ब्राह्मणान्भोजयेदिति। इत्यतिसंक्षिप्तपवित्रारोपणविधिः । इति पवित्रारोपणोत्सवः ।

अथ भाद्रपदकृष्णैकादशीकथा ब्रह्मवैवर्ते—युधिष्ठिर उवाच—'भाद्रस्य कृष्णपक्षे तु किंनामैकादशी भवेत् । एतदिच्छाम्यहं श्रोतुं कथयस्व जनार्दन ।' श्रीकृष्ण उवाच—'शृणुष्वैकमना राजन्कथयिष्यामि विस्तरात् । अजेति नामतः प्रोक्ता सर्वपापप्रणाशिनी । पूजयित्वा हृषीकेशं व्रतं तस्याः करोति यः । पापानि तस्य नश्यन्ति व्रतस्य श्रवणादपि । नातः परतरा राजँल्लोकद्वयहितावहा । सत्यमुक्तं मया ह्येतन्नासत्यं मम भाषितम् । हरिश्चन्द्र इति ख्यातो बभूव नृपतिः पुरा । चक्रवर्ती सत्यसंधः समस्ताया भुवः पतिः । कस्यापि कर्मणः प्राप्तौ राज्यभ्रष्टो बभूव सः । विक्रीय वनितां पुत्रं स चचारात्मविक्रयम् । पुल्कसस्य तु दासत्वं गतो राजा स पुण्यकृत् । सत्य-

मालम्ब्य राजेन्द्र मृतचैलापहारकः । सोऽभवन्नृपतिश्रेष्ठो न सत्याच्चलितस्तथा । एवं गतस्य नृपतेर्बहवो वत्सरा गताः । ततश्चिन्तापरो राजा बभूवातीव दुःखितः । किं करोमि क्व गच्छामि निष्कृतिर्मे कथं भवेत् । इति चिन्तयतस्तस्य मग्नस्य वृजिनार्णवे । आजगाम मुनिः कश्चिज्ज्ञात्वा राजानमातुरम् । परोपकरणार्थाय निर्मिता ब्रह्मणा द्विजाः । स तं दृष्ट्वा द्विजवरं ननाम नृपसत्तमः । कृताञ्जलिपुटो भूत्वा गौतमस्याग्रतः स्थितः । कथयामास वृत्तान्तमात्मनो दुःखसंयुतम् । श्रुत्वा नृपतिवाक्यानि गौतमो विस्मयान्वितः । उपदेशं नृपतये व्रतस्यास्य ददौ मुनिः । मासि भाद्रपदे राजन्कृष्णपक्षे तु शोभना । एकादशी समाख्याता अजानाम्न्यतिपुण्यदा । अस्याः कुरु व्रतं राजन्पापस्यान्तो भविष्यति । तव भाग्यवशादेषा सप्तमेऽह्नि समागता । उपवासपरो भूत्वा रात्रौ जागरणं कुरु । एवमस्या व्रते चीर्णे सर्वपापक्षयो ध्रुवम् । तव पुण्यप्रभावेण आगतोऽहं नृपोत्तम । इत्येवं कथयित्वा स मुनिरन्तरधीयत । मुनिवाक्यं नृपः श्रुत्वा चकार व्रतमुत्तमम् । कृते तस्मिन्व्रते राज्ञः पापस्यान्तोऽभवत्क्षणात् । श्रूयतां राजशार्दूल प्रभावोऽस्य व्रतस्य च । यद्दुःखं बहुभिर्वर्षैर्भोक्तव्यं तत्क्षयो भवेत् । निस्तीर्णदुःखो राजासीद्व्रतस्यास्य प्रभावतः[1] । पत्न्या सह समायोगं पुत्रजीवनमाप सः । देवदुन्दुभयो नेदुः पुष्पवर्षमभूद्दिवः । एकादश्याः प्रभावेण प्राप्तं राज्यमकण्टकम् । स्वर्गं लेभे हरिश्चन्द्रः सपुरः सपरिच्छदः । ईदृग्विधं व्रतं राजन्ये कुर्वन्ति द्विजोत्तमाः। सर्वपापविनिर्मुक्तास्त्रिदिवं यान्ति ते नृप । पठनाच्छ्रवणाद्राजन्नश्वमेधफलं लभेत् ।' इति ब्रह्मवैवर्तपुराणे भाद्रपदकृष्णपक्षे अजैकादशीमाहात्म्यं समाप्तम् ॥

अथ ब्रह्माण्डपुराणोक्तं भाद्रपदशुक्लैकादशीमाहात्म्यम् । युधिष्ठिर उवाच–'नभस्यसितपक्षे तु किंनामैकादशी भवेत्।को देवःको विधिस्तस्या एतदाख्याहि केशव ।' श्रीकृष्ण उवाच– 'कथयामि महीपाल कथामाश्चर्यदायिनीम् । कथयामास यां ब्रह्मा नारदाय महात्मने ।' नारद उवाच– 'कथयस्व प्रसादेन चतुर्मुख नमोऽस्तु ते । नभस्यशुक्लपक्षे तु किंनामैकादशी भवेत् । एतदिच्छाम्यहं श्रोतुं विष्णोराराधनाय वै ।' ब्रह्मोवाच– 'वैष्णवोऽसि मुनिश्रेष्ठ साधु पृष्टं कलिप्रिय । नातः परतरं लोके पवित्रं हरिकीर्तनात् । पद्मानामेति विख्याता नभस्यैकादशी भवेत् । हृषीकेशप्रीतयेऽस्याः कर्तव्यं व्रतमुत्तमम् । कथयामि तवाग्रेऽहं कथां पौराणिकीं शुभाम् । यस्याः श्रवणमात्रेण महापापं प्रणश्यति । मान्धाता नाम राजर्षिर्विवस्वद्वंशसंभवः ।

---

१–'व्रतस्यास्य प्रभावतः' इति खपुस्तके पाठः ।

बभूव चक्रवर्ती स नृपः सत्यप्रतापवान् । धर्मतः पालयामास प्रजाः पुत्रानिवौरसान् । न तस्य राज्ये दुर्भिक्षं न तापो व्याधयस्तथा । निरातंकाः प्रजास्तस्य धनधान्यसमेधिताः । नान्यायोपार्जितं द्रव्यं कोशे तस्य महीपतेः । स्वे स्वे मार्गे प्रवर्तन्ते सर्ववर्णास्तथाश्रमाः । कामधेनुसमा भूमिस्तस्य राज्ये महीपतेः । तस्यैवं कुर्वतो राज्यं बहुवर्षगणा गताः । अथो कदाचित्संप्राप्ते विपाके किल कर्मणः । वर्षत्रयं तद्विषये न ववर्ष बलाहकः।तेनोद्विग्नाः प्रजास्तस्य बभूवुः क्षुधयार्दिताः।स्वाहास्वधावषट्कारवेदाध्ययनवर्जिताः।बभूव विषयस्तस्य सस्याभावेन पीडितः।अथ प्रजाः समागत्य राजानमिदमब्रुवन् । श्रोतव्यं नृपशार्दूल प्रजानां वचनं तथा । आपो नारा इति प्रोक्ता पुराणेषु मनीषिभिः । अयनं ता भगवतस्तस्मान्नारायणः स्मृतः । पर्जन्यरूपी भगवान्विष्णुः सर्वगतः स्थितः । स एव कुरुते वृष्टिं वृष्टेरन्नं ततः प्रजाः । तदभावेन नृपते क्षयं गच्छन्ति ताः प्रजाः । तथा कुरु नृपश्रेष्ठ योगक्षेमो यथा भवेत् ।' राजोवाच—'सत्यमुक्तं भवद्भिश्च न मिथ्याभिहितं वचः । अन्नं ब्रह्मयुतं प्रोक्तमन्ने सर्वं प्रतिष्ठितम् । अन्नाद्भवन्ति भूतानि जगदन्नेन वर्तते । इत्येवं श्रूयते लोके पुराणे बहुविस्तरम् । नृपाणामपचारेण प्रजानां पीडनं भवेत् । नाहं पश्याम्यात्मकृत्यं दोषं बुद्ध्या विचारयन् । तथापि प्रयतिष्यामि प्रजानां हितकाम्यया । इति कृत्वा मतिं राजा परिमेयपरिच्छदः । नमस्कृत्य विधातारं जगाम गहनं वनम्।चचार मुनिमुख्यानामाश्रमं तपसैधितम् । ददर्शाथ ब्रह्मसुतमृषिमङ्गिरसं नृपः। तेजसा द्योतितदिशं द्वितीयमिव पद्मजम् । तं दृष्ट्वा हर्षितो राजा अवतीर्य स्ववाहनात् । नमश्चक्रे स चरणौ कृताञ्जलिपुटो वशी । मुनिस्तमभिनन्द्याथ स्वस्तिवाचनपूर्वकम् । पप्रच्छ कुशलं राज्ये सप्तस्वङ्गेषु भूपतेः । निवेदयित्वा कुशलं पप्रच्छानामयं नृपः । दत्तासनो गृहीतार्घ उपविष्टोऽस्य संनिधौ । प्रत्युवाच मुनिं राजा पृष्टो ह्यागमकारणम् ।' राजोवाच—'भगवन्धर्मविधिना मम पालयतो महीम् । अनावृष्टिः प्रवृत्ता वै नाहं वेद्म्यत्र कारणम् । संशयच्छेदनायात्र आगतोऽहं तवान्तिके । भगवन्सुविधानेन प्रजानां कुरु निर्वृतिम् ।' अङ्गिराउवाच—' एतत्कृतयुगं राजन्युगानामुत्तमं स्मृतम् । अत्र ब्रह्मोत्तरा लोका धर्मश्चात्र चतुष्पदः । अस्मिन्युगे तपोयुक्ता ब्राह्मणा नेतरे जनाः । विषये तव राजेन्द्र वृषलोऽयं तपस्यति । अकार्यकरणात्तस्य न ववर्ष बलाहकः । कुरु तस्य वधे यत्नं येन दोषः प्रशाम्यति।' राजोवाच—'नाहमेनं वधिष्यामि तप-

स्यन्तमनागसम् । धर्मोपदेशं कथय उपसर्गविनाशनम् ।' ऋषिरुवाच—' तदेवं तर्हि नृपते कुरुष्वैकादशीव्रतम् । नभस्यस्य सितेपक्षे पद्मानामेति विश्रुता । तस्या व्रतप्रभावेण सुवृष्टिर्भविता ध्रुवम् । सर्वसिद्धिप्रदा ह्येषा सर्वोपद्रवनाशिनी । अस्या व्रतं कुरु नृप सप्रजः सपरिच्छदः । इति वाक्यमृषेः श्रुत्वा राजा स्वगृहमागतः।प्राप्ते भाद्रपदे मासि पद्माव्रतमथाकरो । प्रजाभिःसहसर्वाभिश्चातुर्वर्ण्यसमन्वितः । एवं व्रते कृते राजन्प्रववर्ष बलाहकः । जलेनाप्लाविता भूमिरभवत्सस्यमालिनी । हृषीकेशप्रसादेन लोकाः सौख्यं प्रपेदिरे । एतस्मात्कारणादेव कर्तव्यं व्रतमुत्तमम् । भुक्तिमुक्तिप्रदं चैव लोकानां सुखदायकम् । पठनाच्छ्रवणाद्राजन्सर्वपापैः प्रमुच्यते ।' इति ब्रह्माण्डपुराणे भाद्रपदशुक्लपक्षे पद्मैकादशीमाहात्म्यं समाप्तम् । अस्यामेव श्रवणनक्षत्रयुक्तायां विजयैकादशीव्रतम् । तदुक्तं हेमाद्रौ मदनरत्ने च भविष्योत्तरे—श्रीकृष्ण उवाच—'द्वादश्यास्तेविधिःप्रोक्तः श्रवणेन युधिष्ठिर । सर्वपापप्रशमनः सौख्यमोक्षप्रदायकः । एकादशी यदा शुक्ला श्रवणेन समन्विता । विजया सा तिथिः प्रोक्ता भक्तानां विजयप्रदा । अभीष्टा देवदेवस्य सर्वदा विजया तिथिः । एषैवं[1] फाल्गुने मासि पुष्येण सहिता नृप । विजया प्रोच्यते सद्भिः कोटिकोटिगुणोत्तरा । एकादश्यां सोपवासो रात्रौ संपूजयेद्धरिम् । सौवर्णरौप्यपात्रे वा दारुवंशमयेऽपि वा । सौवर्णं वामनं कुर्यात्स्ववित्तस्यानुसारतः । शुभाननं धारयन्तमक्षसूत्रं तथैव च । शिखी कमण्डलुधरश्छत्री यज्ञोपवीतवान् । एवंलक्षणसंपन्नं[2] वामनं पूजयेद्धरिम् । आच्छाद्य पात्रं वासोभिरहतैः संयुतं फलैः । मार्गेण[3] चर्मणा वापि भक्त्या वा शक्त्यपेक्षया । तिलोदकेन संपूर्णं प्रस्थेन कुडवेन वा । अलाभे यवैर्गोधूमैः[4] फलं मुख्यं तिलैर्भवेत् । पुष्पैर्गन्धैः फलैर्धूपैः कालोत्थैरर्चयेद्धरिम् । नानाविधैश्च नैवेद्यैर्भक्ष्यैर्भोज्यैर्गुडौदनैः । मन्त्रवत्तच्छतगुणं भक्त्या कोटिगुणोत्तरम् । पूजामन्त्रान्प्रवक्ष्यामि ताञ्छृणुष्व युधिष्ठिर । पादौ मत्स्याय च नमो नमः कूर्माय जानुनी । वराहाय नमो गुह्यं नृसिंहायेति नामतः । उरस्तु वामनायेति भुजौ रामाय वै नमः । मुखं रामाय च नमः कृष्णाय च नमः शिरः । मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः । रामो रामश्च कृष्णश्च अर्चयामि नमो नमः ।' अर्चनमन्त्रः—'गन्धपुष्पफलैश्चैव नैवेद्यैर्विधिनार्चयेत् । एवं ह्यभ्यर्च्य विधिवदेकादश्यां समन्त्रकम् । जागरं तत्र कुर्वीत गेयवादित्रनर्तनैः । एवं सनियमं

---

१–एषैवेति शुक्लपक्षैकादशी परामृश्यते । २–' एवं संपूजयेद्देवं वामनं सर्वलक्षणम् ' इति खपुस्तके पाठः । ३–मृगसंबन्धिना । ४–' तिलगोधूमैः ' इति पाठः ।

स्थित्वा प्रभाते विमले सति । पूर्वोक्तविधिना तद्वदर्चयेद्वामनं हरिम् । प्रदेयः शास्त्रविदुषे ब्रह्मणे मन्त्रतो नृप । वाङ्मनोबुद्धिदो दाता द्रव्यस्थो वामनः स्वयम् । वामनोऽस्य प्रतिग्राही वामनाय नमस्ततः । ब्राह्मणश्चापि मन्त्रेण प्रतिगृह्णीत मन्त्रवित् । वामनः प्रतिगृह्णाति वामनो वै ददाति च । वामनस्तारको द्वाभ्यां वामनाय नमस्ततः।' प्रतिग्रहमन्त्रः ।'एवं दत्त्वा ततः प्रातर्भोजनं पृषदाज्यकम् । पूर्वं दत्त्वा ब्राह्मणेभ्यः पश्चाद्भुञ्जीत च स्वयम् । भूयो यथेच्छया राजन्सर्वत्रैष विधिः स्मृतः । एवं कृते व्रते ब्रह्मन्यत्पुण्यं तन्निबोध मे । यावत्कल्पशतं पूर्णमेकसप्ततिसंख्यया । प्राप्य विष्णुपुरं राजन्क्रीडते कालमक्षयम् । इहागत्य भवेद्राजा प्रतिपक्षक्षयंकरः । हस्त्यश्वरथदानानां दाता भोक्ता विमत्सरी । रूपसौभाग्यसंपन्नो दीर्घायुर्नीरुजो भवेत् । पुत्रपौत्रैः परिवृतो जीवेत्स शरदां शतम् । एषा व्युष्टिः[1] समाख्याता एकादश्या मया तव । पृथगेव समाख्याता द्वादशी श्रवणान्विता । उपोष्यैकादशीं पश्चाद्द्वादशीमप्युपोषयेत् । न चात्र विधिलोपः स्यादुभयोर्देवता हरिः।' इति । इदं च व्रतमुत्तरदिने श्रवणयुक्तैकादश्यलाभे दशमीविद्धायामपि श्रवणयुक्तायामेकादश्यां कर्तव्यम् । दशम्येकादशी यत्रेत्येतद्व्रतप्रकरणस्थवक्ष्यमाणवह्निपुराणवचनात् । विशेषस्तु द्वादशीप्रकरणे वक्ष्यते । एतत्पारणं तु परेद्युः श्रवणापेक्षया द्वादश्याधिक्ये श्रवणमतिवाह्य द्वादश्यां कर्तव्यम् श्रवणस्याधिक्ये तु श्रवणमतिवाह्य त्रयोदश्यामेव कर्तव्यम्।'पारणं तिथिवृद्धौ तु द्वादश्यामुडुसंक्षयात्।वृद्धौ कुर्यात्त्रयोदश्यां तत्र दोषो न विद्यते।'इत्येतत्प्रकरणपठितवह्निपुराणवचनात्।इति विजयैकादशीव्रतम् । श्रवणैकादश्यां मध्याह्ने वामनावतार इति निर्णयामृते निर्णयसिन्धौ च भविष्योत्तरे भागवतेऽष्टमस्कन्धेऽष्टादशाध्याये तु द्वादश्यां वामनोत्पत्तिरुक्ता।'श्रोणायां श्रवणद्वादश्यां मुहूर्तेऽभिजिति प्रभुः।सर्वे नक्षत्रताराद्याश्चक्रुस्तज्जन्म दक्षिणम् । द्वादश्यां सविता तिष्ठन्मध्यंदिनगतो नृप । विजया नाम सा प्रोक्ता यस्यां जन्मविदुर्हरेः ।' अस्यार्थः । श्रोणायां श्रवणस्थे चन्द्रे तत्रापि श्रवणांशे अभिजिति नक्षत्रे तच्च श्रुत्या दर्शितम् "अभिजिन्नाम नक्षत्रमुपरिष्टादषाढानामधस्ताच्छ्रोणायाः" इति । एवंविशिष्टे मुहूर्ते प्रादुर्बभूवेत्यर्थः । यस्यां द्वादश्यां हरेर्जन्म तत्तस्यामेव विदुः। तदा च मध्यंदिनगतः सविता तिष्ठन् सा च द्वादशी विजयानामेति प्रोक्तेत्यन्वय इति श्रीधरस्वामिनः अत्र कल्पभेदाद्व्यवस्थेति कश्चित् । वस्तुतस्तु—द्वादशीशब्देनैकादश्या एवाभिधानात् भविष्योत्तरभागवतयोराञ्जस्येनैव संगतिः । 'संप्रवृत्तेऽपि

[1] व्युष्टि. फलम् ।

रजसि न त्याज्यं द्वादशीव्रतम् ।' इत्यादिषु द्वादशीशब्देनैकादश्या एव गृहीतत्वात् । अथ भविष्योत्तरोक्तवामनपूजाप्रयोगः । तत्र प्रातः स्नानादि निर्वर्त्य मध्याह्ने कलशस्थापनं कृत्वा तदुपरि आढकादिपरिमिततिलयवादिपूर्णे स्वर्णादिपात्रे सौवर्णं वामनं निधाय शुभाननं धारयन्तमित्यादिप्रकारेण ध्यात्वा वामनाय नम इत्यनेन आवाहनादिपुष्पदानान्तं पूजयित्वा मत्स्यादिनामभिः पादादिपूजां विधाय गन्धादिनमस्कारान्तमभ्यर्च्य दध्यक्षतफलयुक्तमर्घ्यं गृहीत्वा 'नमस्ते पद्मनाभाय नमस्ते जलशायिने । तुभ्यमर्घ्यं प्रयच्छामि बालवामनरूपिणे ।' इत्यर्घ्यं समर्प्य नमः कमलकिंजल्केत्यादिधरणीधरेत्यन्तेन स्तुत्वा पुष्पाञ्जलिं दत्त्वा रात्रौ जागरणं विधाय प्रभाते पुनः संपूज्य वामनो बुद्धिदातेत्यादिमन्त्रेण मूर्तिं दद्यादिति वामनपूजाविधिः। अथाग्निपुराणोक्तं विजयद्वादशीव्रतम् । मैत्रेय उवाच—'विधानं शृणु राजेन्द्र यथा दृष्टं मनीषिभिः । यथोक्तं नियमं कुर्यादेकादश्यामुपोषितः । दन्तकाष्ठं प्रगृह्यादौ वाग्यतो विजितेन्द्रियः । श्रवणद्वादशीयोगे समुपोष्य जनार्दनम् । अर्चयित्वा विधानेन अहं भोक्ष्ये परेऽहनि । नदीनां संगमे स्नायादर्चयेत्तत्र वामनम् । सौवर्णं रत्नसंयुक्तं द्वादशाङ्गुलमुच्छ्रितम् । पीतवस्त्रैः शुभैर्वेष्ट्य भृङ्गारे निर्व्रणे नवे । हिरण्मयेन पात्रेण अर्घ्यपात्रं प्रकल्पयेत् । दध्यक्षतफलैश्चैव सहिरण्यं सदक्षिणम् । नमस्ते पद्मनाभाय नमस्ते जलशायिने । तुभ्यमर्घ्यं प्रयच्छामि बालवामनरूपिणे । नमः कमलकिंजल्कपीतनिर्मलवाससे । महाहवारिपुस्कन्धधृष्टचक्राय चक्रिणे । नमः शार्ङ्गासिशंखाब्जपाणये वामनाय च । यज्ञभुक्फलदात्रे च वामनाय नमो नमः । देवेश्वराय देवाय देवसंभूतिकारिणे । प्रभवे सर्वदेवानां वामनाय नमो नमः । मत्स्यकूर्मवराहाय नरसिंहस्वरूपिणे । रामरामत्रिरामाय वामनाय नमो नमः । श्रीधराय नमस्तुभ्यं नमस्ते गरुडध्वज । चतुर्बाहो नमस्तेऽस्तु नमस्ते धरणीधर । संपूज्यैवं विधानेन नरः स्रक्चन्दनादिभिः । रात्रौ जागरणं कुर्यात्पुरतो जलशायिनः । धृत्वा जलमयं रूपं देवदेवस्य चक्रिणः । ब्रह्माण्डमुदरे यस्य महद्भूतैरधिष्ठितम् । मायावी वामनः श्रीमान्सोऽत्रायातु जगत्पतिः । एवं संपूज्य विधिवद्द्वादश्यामुदये रवेः । भृङ्गारं देवसहितं पूर्ववत्संप्रपूजयेत् । वामनः प्रतिगृह्णातु वामनोऽहं ददामि तम् । वामनं सर्वतोभद्रं द्विजायाथ निवेदयेत् । जलधेनुं तथा दद्याच्छत्रं चैव तु पादुके । [१]सहिरण्यानि वस्त्राणि धेनुं वाऽनडुहं नृप । यत्किंचिद्दीयते दानं तदानन्त्याय कल्पते । श्रवणद्वादशीयोगे संपूज्य गरुडध्व-

---

१-अनुष्ठितमित्यपि पाठ. ।

जम् । दत्त्वा दानं द्विजातिभ्यो वियोगे पारणं गतः । सिंहस्थिते तु मार्तण्डे श्रवणस्थे दिवाकरे । सा धेनुद्वादशी ज्ञेया न स्याद्भाद्रपदादृते । दशम्येकादशी यत्र सा नोपोष्या भवेत्तिथिः । श्रवणेन तु संयुक्ता सा शुभा सर्वकामदा । इत्येषा कथिता राजन्द्वादशी श्रवणेन च । कर्तव्या सा प्रयत्नेन इहामुत्र फलप्रदा ।' इत्यग्निपुराणे विजयद्वादशीव्रतम् । अथ नृसिंहपरिचर्यानुसारेण विजयाव्रतानुष्ठानपद्धतिः । विजयाव्रतं संगमेऽनुष्ठेयम् । नद्यादिसंगमालाभे मार्कण्डेयोपदिष्टे संगमे व्रतमनुष्ठेयम् । 'शालिग्रामशिलावारितुलसीजलमेव च । समये वोद्धरेत्तत्र विजयाव्रतमाचरेत् ।' इत्युक्तेः । तत्रादौ गुरुं प्रणम्य संकल्पं विदध्यात् तत्र मन्त्रः । 'द्वादश्यां तु निराहारः स्थित्वाहमपरेऽहनि । भोक्ष्ये त्रिविक्रमानन्त शरणं मे भवाच्युत ।' इति सशार्ङ्गशरायुधं सौवर्णं देवं कृत्वा ताम्रकलशे वैणवपात्रे पञ्चामृतस्नापितं सवस्त्रं देवमुपवेश्य सितचन्दनेनानुलिप्य सितवस्त्रच्छत्रोपानहं समर्प्यावयवपूजां कुर्यात् । शिरसि वासुदेवाय नमः । मुखे श्रीधराय नमः । कण्ठे कृष्णाय नमः । वक्षसि श्रीपतये नमः । बाह्वोः शस्त्रास्त्रधारिणे नमः । पादयोः सर्वात्मने नमः । ततो विशेषार्घ्यं दद्यात् । तत्र मन्त्रः । 'शंखचक्रगदापद्मसशार्ङ्गशरपूजित । गृहाणार्घ्यमुपादत्तं शार्ङ्गपाणे नमोऽस्तु ते ।' इति । ततो धूपदीपौ दत्त्वा घृतपक्वं नैवेद्यं फलताम्बूलादीनि च समर्प्य जागरं च कृत्वा प्रभाते स्नात्वा देवं संपूज्य पुष्पाञ्जलिं दत्त्वाऽनेन मन्त्रेण प्रार्थयेत् । 'नमस्ते चास्तु गोविन्द बुधश्रवणसंज्ञक । अघौघं चाक्षयं कृत्वा सर्वसौख्यप्रदो भव ।' इति । ततः सर्वमाचार्याय दत्त्वा पारणं कुर्यादिति । अस्य च व्रतस्य भाद्रपदबुधयोगे कलातिशयोऽवगन्तव्य इति नृसिंहपरिचर्याकाराः । दध्योदनादिकं तु द्वादशीप्रकरणे द्रष्टव्यम् । दुर्वासा उवाच । 'तद्वद्भाद्रपदे मासि शुक्लपक्षे तु द्वादशी । संकल्पविधिना देवमर्चयेत्परमेश्वरम् । नमोऽस्तु कल्किने पादौ हृषीकेशाय वै कटिम् । म्लेच्छप्रध्वंसनायोरू जगन्मूर्ते तथोदरम् । श्रीकण्ठायेति वै कण्ठं खड्गपाणीति वै भुजौ । स्वनाम्ना शंखचक्रे तु विश्वमूर्ते तथा शिरः । सितवस्त्रयुगच्छन्नं गन्धपुष्पोपशोभितम् । कृत्वा प्रभाते विप्राय प्रदेयं शास्त्रवित्तमे । प्रीयतां मे हृषीकेशः कल्किरूपीति मन्त्रतः । पूर्वं राजा विशालोऽभूत्काशीपुर्यां महाबलः । द्वादशीं कृतवान्सोऽपि चक्रवर्ती बभूव ह । यज्ञैश्च विविधैरिष्ट्वा परं निर्वाणमाप्तवान् । पूज्यते मत्स्यरूपेण सर्वज्ञत्वमभीप्सुभिः । स्ववंशोद्धारणार्थाय कूर्मरूपीति पूज्यते । भवोदधिनिमग्नेन वराहः पूज्यतेहरिः । नरसिंहस्वरूपेण सर्वपापभयातुरैः । वामनो मोहना-

शाय वित्तार्थे जमदग्निजः । क्रूरशत्रुविनाशाय यजेद्दाशरथिं बुधः । बलकृष्णौ यजेद्धीमान्पुत्रकामो न संशयः । रूपकामो यजेद्बुद्धं कल्किनं शत्रुघातने ।' इति धरणीव्रते कल्किद्वादशीव्रतम् ।

अथ भाद्रपदशुक्लैकादश्यां कटिपरिवर्तनोत्सवः । तथा च भविष्योत्तरे—'प्राप्ते भाद्रपदे मासि एकादश्यां सितेऽहनि । कटिदानं भवेद्विष्णोर्महापातकनाशनम् ।' कटिदानं पार्श्वपरिवर्तनम् । रामार्चनचन्द्रिकायाम्—'शयनोत्सववच्चैव देवं नीत्वा जलाशयम् । कटिदानोत्सवं कुर्वे इति संकल्प्य पूजयेत् । देवदेव जगन्नाथ योगगम्य निरञ्जन । कटिदानं करोम्यद्य प्रातर्भाद्रपदे शुभे ।' अनेन कटिपरिवृत्तिं दक्षिणाङ्गे प्रकल्पयेत् । महापूजां ततः कृत्वा पूर्ववत्स्वगृहं व्रजेत् ।' इति । निर्णयसिन्धौ तु द्वादश्यां विष्णोः परिवर्तनकृत्यमेवमुक्तम् । संध्यायां विष्णुं संपूज्य प्रार्थयेत् । मन्त्रस्तु तिथितत्त्वे उक्तः । 'वासुदेव जगन्नाथ प्राप्तेयं द्वादशी तव । पार्श्वेन परिवर्तस्व सुखं स्वपिहि माधव ।' इति । इति भाद्रपदशुक्लैकादशीकृत्यम् ।

अथ ब्रह्मवैवर्तपुराणोक्तमाश्विनकृष्णैकादशीमाहात्म्यम् । युधिष्ठिर उवाच—'कथयस्व प्रसादेन ममाग्रे मधुसूदन । आश्विने कृष्णपक्षे तु किंनामैकादशी भवेत् ।' श्रीकृष्ण उवाच—'आश्विने कृष्णपक्षे तु इन्दिरा नाम नामतः । तस्या व्रतप्रभावेण महापापं प्रणश्यति । अधोयोनिगतानां च पितॄणां गतिदायिनी । शृणुष्वावहितो राजन्कथां पापहरां पराम् । यस्याः श्रवणमात्रेण वाजपेयफलं लभेत् । पुरा कृतयुगे राजा बभूव रिपुमर्दनः । इन्द्रसेन इति ख्यातः पुरीं माहिष्मतीं प्रति । स राज्यं पालयामास धर्मेण यशसाऽन्वितः । पुत्रपौत्रसमायुक्तो धनधान्यसमन्वितः । माहिष्मत्यधिपो राजा विष्णुभक्तिपरायणः । जपन्गोविन्दनामानि मुक्तिदानि नराधिप । कालं नयति विधिवदध्यात्मध्यानतत्परः । एकस्मिन्दिवसे राज्ञि सुखासीने सदोगते । अवतीर्यागमद्धीमाम्नानारदो मुनिः । तमागतं मुनिं प्रेक्ष्य प्रत्युत्थाय कृताञ्जलिः । पूजयित्वाऽर्घ्यविधिना चासने संन्यवेशयत् । सुखोपविष्टः स मुनिः प्रत्युवाच नृपोत्तमम् । कुशलं तव राजेन्द्र सप्तस्वङ्गेषु वर्तते । धर्मे मतिः प्रवर्तेत विष्णुभक्तिरतिः सदा ।' राजोवाच—'त्वत्प्रसादान्मुनिश्रेष्ठ सर्वत्र कुशलं मम । अद्य क्रतुक्रियाः सर्वाः सफलास्तव दर्शनात् । प्रसादं कुरु देवर्षे ब्रूह्यागमनकारणम् ।' नारद उवाच—'श्रूयतां राजशार्दूल मद्वचो विस्मयप्रदम् । ब्रह्मलोकादहं प्राप्तः यमलोकं नृपोत्तम । शमनेनार्चितो भक्त्या उपविष्टो वरासने । धर्मशीलाः सत्यवन्तो भास्करिं समुपासते । बहुपुण्यं प्रकर्तव्यं व्रतवै-

कल्यदोषतः। सभायां श्राद्धदेवस्य मया दृष्टः पिता तव। कथितस्तेन संदेशस्तं निबोध जनेश्वर। इन्द्रसेन इति ख्यातो राजा माहिष्मतीपतिः। तस्याग्रे कथय ब्रह्मन्स्थितं मां यमसंनिधौ। केनापि चान्तरायेण पूर्वजन्मोद्भवेन च। स्वर्गं प्रेषय मां पुत्र इन्दिराव्रतदानतः। इत्युक्तोऽहं समायातः समीपं तव पार्थिव। पितुः स्वर्गतये राजन्निन्दिराव्रतमाचर।' राजोवाच—'कथयस्व प्रसादेन भगवन्निन्दिराव्रतम्। विधिना केन कर्तव्यं कस्मिन्पक्षे तिथौ तथा।' नारद उवाच—'शृणु राजन्नहं वच्मि व्रतस्यास्य विधिं शुभम्। आश्विनस्यासिते पक्षे दशमीदिवसे शुभे। प्रातः स्नानं प्रकुर्वीत श्रद्धायुक्तेन चेतसा। ततो मध्याह्नसमये स्नानं कृत्वा बहिर्जले। पितॄणां प्रीतये श्राद्धं कुर्याच्छ्रद्धासमन्वितः। एकभुक्तं ततः कृत्वा रात्रौ भूमौ शयीत च। प्रभाते विमले जाते प्राप्ते चैकादशीदिने। मुखप्रक्षालनं कुर्यान्न कुर्याद्दन्तधावनम्। उपवासस्य नियमं गृह्णीयाद्भक्तिभावतः। अद्य स्थित्वा निराहारः सर्वभोगविवर्जितः। श्वो भोक्ष्ये पुण्डरीकाक्ष शरणं मे भवाच्युत। इत्येवं नियमं कृत्वा मध्याह्नसमये तथा। शालग्रामशिलाग्रे तु श्राद्धं कृत्वा यथाविधि। भोजयित्वा द्विजवरान्दक्षिणाभिः सुपूजयेत्। पित्र्यमन्नं समाघ्राय गवे दद्याद्विचक्षणः। पूजयित्वा हृषीकेशं गन्धधूपादिभिस्तथा। रात्रौ जागरणं कुर्यात्केशवस्य समीपतः। ततः प्रभातसमये संप्राप्ते द्वादशीदिने। अर्चयित्वा हरिं भक्त्या भोजयित्वा द्विजांस्तथा। बन्धुदौहित्रपुत्राद्यैःस्वयंभुञ्जीत वाग्यतः। अनेन विधिना राजन्कुरु व्रतमतन्द्रितः। विष्णुलोकं प्रयास्यन्ति पितरस्तव भूपते। इत्युक्त्वा नृपतिं राजन्मुनिरन्तरधीयत। यथोक्तविधिना राजा चकार व्रतमुत्तमम्। अन्तःपुरेण सहितः पुत्रभृत्यसमन्वितः। कृते व्रते तु कौन्तेय पुष्पवृष्टिरभूद्दिवः। तत्पिता गरुडारूढो जगाम हरिमन्दिरम्। इन्द्रसेनोऽथ राजर्षिः कृत्वा राज्यमकण्टकम्। राज्ये निवेश्य तनयं जगाम त्रिदिवं स्वयम्। इन्दिराव्रतमाहात्म्यं तवाग्रे कथितं मया। पठनाच्छ्रवणाद्राजन्सर्वपापैः प्रमुच्यते।' इति श्रीब्रह्मवैवर्ते आश्विनकृष्णैकादश्या इन्दिरानाम्न्या माहात्म्यं समाप्तम्।

अथ पद्मपुराणोक्तमाश्विनशुक्लैकादशीमाहात्म्यम्। युधिष्ठिर उवाच—'कथयस्व प्रसादेन भगवन्मधुसूदन। इषस्य शुक्लपक्षे तु किं नामैकादशी भवेत्।' श्रीकृष्ण उवाच—'शृणु राजन्प्रवक्ष्यामि माहात्म्यं पापनाशनम्। शुक्लपक्षे चाश्वयुजि भवेदेकादशी तथा। पापाङ्कुशेति विख्याता सर्वपापहरा परा। पद्मनाभाभिधानं च

पूजयेत्तत्र केशवम् । सर्वाभीष्टफलप्राप्त्यै स्वर्गमोक्षप्रदं नृणाम् । तपस्तप्त्वा ततस्तीव्रं चिरं सुनियतेन्द्रियः । तत्फलं समवाप्नोति तं नत्वा गरुडध्वजम् । कृत्वापि बहुशः पापं नरो मोहसमन्वितः । न याति नरकं नत्वा सर्वपापहरं हरिम् । पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च । तानि सर्वाण्यवाप्नोति विष्णुनामानुकीर्तनात् । देवं शार्ङ्गधरं विष्णुं ये प्रपन्ना जनार्दनम् । न तेषां यमलोकस्य यातना जायते क्वचित् । उपोष्यैकादशीं चैव प्रसङ्गेनापि मानवः । न याति यातनां याम्यां पापं कृत्वापि दारुणम् । वैष्णवः पुरुषोभूत्वा शिवनिन्दां करोति यः । न विन्द्याद्वैष्णवं लोकं स याति नरकं ध्रुवम् । नेदृशं पावनं किंचित्त्रिषु लोकेषु विद्यते । यादृशं पद्मनाभस्य दिनं पातकहानिदम् । तावत्पापानि देहेऽस्मिंस्तिष्ठन्ति मनुजाधिप । यावन्नोपवसेज्जन्तुःपद्मनाभदिनं शुभम् । अश्वमेधसहस्राणि राजसूयशतानि वा । एकादश्युपवासस्य कलां नार्हन्ति षोडशीम् । एकादशीसमं किंचित्पुण्यं लोके न विद्यते । व्याजेनापि कृता राजन्न दर्शयति भास्करिम् । स्वर्गमोक्षप्रदा ह्येषा शरीरारोग्यदायिनी । सुकलत्रप्रदा ह्येषा धनपुत्रप्रदायिनी । न गङ्गा न गया राजन्न काशी न च पुष्करम् । न चापि कौरवं क्षेत्रं यत्पुण्यं तु हरेर्दिनात् । रात्रौ जागरणं कृत्वा समुपास्य हरेर्दिनम् । अनायासेन भूपाल प्राप्यते वैष्णवं पदम् । दश वै मातृकेपक्षे दश राजेन्द्र पैतृके । प्रियाया दश पक्षे तु पुरुषानुद्धरेन्नरः । चतुर्भुजा दिव्यरूपा नागारिकृतकेतनाः । स्रग्विणः पीतवस्त्राश्च प्रयान्ति हरिमन्दिरम् । बालत्वे च युवत्वे च वृद्धत्वेऽपि नृपोत्तम । उपोष्य द्वादशीं नूनं नैति पापोऽपि दुर्गतिम् । पापांकुशामुपोष्यैव आश्विनस्यासितेतरे । सर्वपापविनिर्मुक्तो हरिलोकं स गच्छति । दत्त्वा हेमतिलान्भूमिं गामन्नमुदकं तथा । उपानद्वस्त्रच्छत्रादि न पश्यति यमं नरः । यस्य पुण्यविहीनानि दिनान्यायान्ति यान्ति च । स लोहकारभस्त्रेव श्वसन्नपि न जीवति । अवन्ध्यं दिवसं कुर्याद्दरिद्रोऽपि नरोत्तमः । समाचरन्यथाशक्ति स्नानदानादिकां क्रियाम् । तडागारामसौधान्प्रपुच्छत्रादिपुण्यकर्मणाम् । कर्तारो नैव पश्यन्ति घोरां तां यमयातनाम् । दीर्घायुषो धनाढ्याश्च कुलीना रोगवर्जिताः । दृश्यन्ते मानवा लोके व्रतकर्तार ईदृशाः । किमत्र बहुनोक्तेन यात्यधर्मेण दुर्गतिम् । आरोहन्ति दिवं धर्मैर्नात्र कार्या विचारणा । इति ते कथितं राजन्यत्पृष्टोऽहं त्वयाऽनघ । पापाङ्कुशाया माहात्म्यंकिमन्यच्छ्रोतुमिच्छसि ।' इति पद्मपुराणे आश्विनशुक्लपक्षीयपापांकुशैकादशीमाहात्म्यं समाप्तम् । अथ पद्मनाभद्वादशीव्रतं हेमाद्रौ–दुर्वासा उवाच–'तद्वदाश्वयुजे मासि द्वादशीं सितपक्षिणीम् ।

---

१–नियतमानसः इत्यपि पाठः ।

संकल्प्याभ्यर्चयेद्देवं पद्मनाभं सनातनम्। पद्मनाभाय पादौ तु कटिं वै पद्मयोनये। उदरं सर्वदेवाय पुष्कराक्षाय वै नमः। अव्ययाय तथा बाहू प्राग्वदस्त्राणि पूजयेत्। प्रभवाय शिरः पूज्य प्राग्वदग्रे घटं न्यसेत्। तस्मिन्हेममयं देवं पद्मनाभं तु विन्यसेत्। तमेव देवं संपूज्य गन्धपुष्पादिभिः क्रमात्। प्रभातायां तु शर्वर्यां ब्राह्मणाय निवेदयेत्। प्रीयतां पद्मनाभः पद्मनाभरूपीति मन्त्रः। आसीत्कृतयुगे राजन्भद्राश्वो नाम वीर्यवान्। तस्य नाम्ना भवेद्वर्षं भद्राश्वं नाम नामतः। तस्यागस्त्यः कदाचित्तु गृहमागत्य भूपतेः। उवाच पञ्चरात्रं तु वसामि भवतो गृहे। तं राजा शिरसा नत्वा स्थीयतामित्यभाषत। तस्य कान्तिमती नाम्ना भार्या परमशोभना। तामगस्त्यस्तदा दृष्ट्वा रूपतेजोन्वितां शुभाम्। सपत्न्यश्च भयात्तस्याः कुर्वन्त्यः कर्म शोभनाः। साधु साधु जगन्नाथ स्त्री शूद्रा साधु साध्विति। एवमुक्त्वा ननर्तोच्चैरगस्त्यो राजसन्निधौ।' राजोवाच— 'किं हर्षकारणं ब्रह्मन्येनैवं नृत्यते भवान्।' अगस्त्य उवाच—'इयं राज्ञी त्वदीयाऽभूद्दासी वैश्यस्य वैदिशे। नगरे हरिदत्तस्य त्वमस्याः पतिरेव च। तस्यैव कर्मकारोऽभूच्छूद्रो विन्ध्येति नामतः। स वैश्योऽश्वयुजे मासि द्वादश्यां नियतः शुचिः। स्वयं विष्णवालयं गत्वा गन्धपुष्पादिभिर्हरिम्। अभ्यर्च्य स्वगृहं प्रायाद्भवन्तौ रक्षपालकौ। स्थाप्य द्वावपि दीपानां ज्वलनार्थं महामते। गते तस्मिन्भवन्तौ तद्दीपप्रज्वलने स्थितौ। यावत्प्रभाता रजनी निःशाक्येन नरोत्तम। ततः कालेन महता मृतौ द्वावपि दम्पती। तेन पुण्येन ते जन्म प्रियव्रतगृहेऽभवत्। इयं च पत्नी ते जाता वैश्यदास्यभवत्पुरा। पारक्यस्यापि दीपस्य ज्वालितस्य गृहे हरेः। इयं व्युष्टिः पुरा जाता भक्तिमुक्तस्य ते पुरा। स्वेन यः पुनरर्थेन विष्णुमभ्यर्च्य दीपकम्। ज्वालयेत्तस्य यत्पुण्यं तत्संख्यातुं न शक्यते।' इति धरणीव्रते पद्मनाभद्वादशीव्रतम्। अस्यामेवैकादश्यां भविष्योत्तरोक्तं पुत्रप्राप्तिव्रतम्। युधिष्ठिर उवाच—'ऋणैस्त्रिभिः परिवृतः पुरुषो जायते किल। ऋणत्रयात्प्रमुच्येत पुरुषः पुत्रदर्शनात्। पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः। तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा। दिगम्बरं गतव्रीडं जटिलं धूलिधूसरम्। पुण्यहीना न पश्यन्ति गङ्गाधरमिवात्मजम्। तस्मात्सुपुत्रलाभाय यद्व्रतं तदुदीरय।' श्रीकृष्ण उवाच—'एकादश्यां त्वाश्वयुजे स्नात्वोपोष्यार्चयेद्धरिम्। गां रात्रौ पूजयेद्दद्यात्सवत्सां यागवाहिकाम्। अपरेऽह्नि तथाऽभ्यर्च्य निशि भुञ्जीत वाग्यतः। मासे मासेऽथ चैतानि हरिनामानि कीर्तयेत्। अपराजितोऽजातशत्रुः पुराकृतपुरंदरः। वर्धमानः

सुरेशश्च महाबाहुः प्रभुर्विभुः । सुभूतिः सुमनाश्चैव सुप्रचेता इतीरयेत् । एवं द्वादशभिर्व र्षैर्मासैर्वा पारयेद्व्रतम् । व्रतान्ते जुहुयादेभिर्नामभिर्घृतपायसम् । ब्राह्मणान्भोजयेत्पश्चाद्वरान्नं माससंख्यया । मासे मासे यथाशक्ति दानं प्रार्थनमेव च। यथादितेर्भवान्पुत्रः शाश्वतश्चाक्षयोऽच्युतः। तथा भवतु मे देव पुत्रो जन्मनि जन्मनि । वैष्णवी सुरभी माता ब्राह्मण्यादेव पूजिता । गृहाणेमं मया दत्तं पिण्डं सतृणमूलकम् । वस्त्राभरणगोदानैर्ब्राह्मणान्प्रीणयेद्गुरुम्।' इति भविष्योत्तरोक्तं पुत्रप्राप्तिव्रतम् । आश्विनशुक्लैकादश्यामुपवासजागरणादिकं कृत्वा द्वादश्यादिषु विष्णुपूजादिकं कुर्यात् । तदुक्तं ब्रह्मपुराणे आश्विनतिथिप्रक्रमे–'सोपवासैश्च कर्तव्य एकादश्यां प्रजागरः । द्वादश्यां वासुदेवश्च पूजनीयस्तु सर्वदा । यात्रोत्सवश्च कर्तव्यस्त्रयोदश्यां तु वैष्णवैः । उपवासश्चतुर्दश्यां पौर्णमास्यां हरिं यजेत्।' अस्यामेवैकादश्यां कार्तिकस्नानारम्भ उक्तः पाद्मे–'आश्विनस्य तु मासस्य या शुक्लैकादशी भवेत्। कार्तिकस्य व्रतानीह तस्यां वै प्रारभेत्सुधीः।' इति। विष्णुना तु तुलासंक्रान्तिमारभ्य कर्तव्यमित्युक्तम् । 'तुलामकरमेषेषु प्रातः स्नायी सदा भवेत् । हविष्यं ब्रह्मचर्यं च महापातकनाशनम् ।' इति। 'पूर्णमाश्वयुजे मासि पौर्णमास्यां समाहितः।' इत्युक्त्वा 'मासं समग्रं परया च भक्त्या समाप्यते कार्तिकपौर्णमास्याम्' इति हेमाद्रिलिखितादित्यपुराणं पूर्णिमारम्भे प्रमाणम् । कार्तिकव्रतग्रहणप्रकारादिकं त्वग्रे वक्ष्यामः इत्याश्विनशुद्धैकादशीकृत्यम् ।

अथ ब्रह्मवैवर्तपुराणोक्तं कार्तिककृष्णैकादशीमाहात्म्यम् । युधिष्ठिर उवाच–' कथयस्व प्रसादेन मम स्नेहाज्जनार्दन । कार्तिकस्यासिते पक्षे किंनामैकादशी भवेत् ।' श्रीकृष्ण उवाच–'श्रूयतां राजशार्दूल कथयामि तवाग्रतः। कार्तिके कृष्णपक्षे तु रमा नाम सुशोभना। एकादशी समाख्याता महापापहरा परा । अस्याः प्रसङ्गतो राजन्माहात्म्यं प्रवदामि ते। मुचुकुन्द इति ख्यातो बभूव नृपतिः पुरा । देवेन्द्रेण समं यस्य मित्रत्वमभवन्नृप । यमेन वरुणेनैव कुबेरेण समं तथा । बिभीषणेन यस्यैव सखित्वमभवत्सह। विष्णुभक्तः सत्यसंधो बभूव नृपतिस्तदा । तस्यैवं शासतो राज्यं राजन्निहतकण्टकम्। बभूव दुहिता गेहे चन्द्रभागा सरिद्वरा। शोभनाय च सा दत्ता चन्द्रसेनसुताय वै। स कदाचित्समायातः श्वशुरस्य गृहे नृप । एकादशीव्रतदिनं समायातं सुपुण्यदम् । समागते व्रतदिने चन्द्रभागा व्यचिन्तयत् । किं भविष्यति देवेश मम भर्ताऽतिदुर्बलः । क्षुधां न क्षमते सोढुं पिता चैवोग्रशासनः। पटहस्ताड्यते यस्य संप्राप्ते दशमीदिने । न भोक्तव्यं न भोक्तव्यं न भोक्तव्यं हरेर्दिने । श्रुत्वा पटह-

निर्घोषं शोभनस्त्वब्रवीत्प्रियाम्। किं कर्तव्यं मया कान्ते देहि शिक्षां शुभानने ।' चन्द्रभागोवाच—' मत्पितुर्वेश्मनि विभो भोक्तव्यं नाद्य ते क्वचित् । गजैरश्वैश्च करभैरन्यैः पशुभिरेव च । तृणमन्नं तथा वारि न भोक्तव्यं हरेर्दिने । मानवैश्च कुतः कान्त भुज्यते हरिवासरे । यदि त्वं भोक्ष्यसे कान्त ततो गर्हां प्रयास्यसि । एवं विचार्य मनसा सुदृढं मानसं कुरु ।' शोभन उवाच—'सत्यमेतत्प्रिये वाक्यं करिष्येऽहमुपोषणम् । दैवेन विहितं यद्धि तत्तथैव भविष्यति । इति बुद्धिं दृढां कृत्वा चकार नियमं व्रते । क्षुत्तृषापीडिततनुः स बभूवातिदुःखितः । इति चिन्तयतस्तस्य आदित्योऽस्तमगाद्गिरिम् । वैष्णवानां नराणां सा नित्यं हर्षविवर्धिनी। हरिपूजारतानां च जागरासक्तचेतसाम्। बभूव नृपशार्दूल शोभनश्चातिदुःखितः। रवेरुदयवेलायां शोभनः पञ्चतां गतः । दाहयामास राजा तं राजयोग्यैश्च दारुभिः । चन्द्रभागा नात्मदेहं ददाह पतिना सह। कृत्वौर्ध्वदेहिकं तस्य तस्थौ जनकवेश्मनि । शोभनेन नृपश्रेष्ठ रमाव्रतप्रभावतः । प्राप्तं देवपुरं रम्यं मन्दराचलसानुनि । अनुपममनाधृष्यमसंख्येयगुणान्वितम्। हेमस्तम्भमयैर्नद्धैर्नववैडूर्यमण्डितैः । स्फटिकैर्विविधाकारैर्विचित्रैरुपशोभितम् । सिंहासने समारूढः सुश्वेतच्छत्रचामरः । केयूरकुण्डलयुतो हारकेयूरभूषितः। स्तूयमानश्च गन्धर्वैरप्सरोगणसेवितः । शोभनः शोभते तत्र देवराडपरो यथा । सोमशर्मेति विख्यातो मुचुकुन्दपुरेऽवसत् । तीर्थयात्राप्रसङ्गेन भ्रमन्विप्रो ददर्श तम्। नृपजामातरं ज्ञात्वा तत्समीपे जगाम सः। शोभनोऽपि तदा ज्ञात्वा सोमशर्माणमागतम्। आसनादुत्थितः शीघ्रं नमश्चक्रे द्विजोत्तमम् । चकार कुशलप्रश्नं श्वशुरस्य तु पश्यताम् । कान्तायाश्चन्द्रभागायास्तथैव नगरस्य च ।' सोमशर्मोवाच-' कुशलं वर्तते राजंस्तवाश्चर्यं परं मम । पुरं विचित्रं रुचिरं न दृष्टं केनचित्क्वचित् । एतदाचक्ष्व नृपते कुतः प्राप्तमिदं त्वया।' शोभन उवाच-'कार्तिकस्यासिते पक्षे या नाम्नैकादशी रमा। तामुपोष्य मया प्राप्तं द्विजेन्द्र पुरमध्रुवम्। ध्रुवं भवति येनैव तत्कुरुष्व द्विजोत्तम।' सोमशर्मोवाच-'कथयाध्रुवमेतद्धि कथं भवति तद्ध्रुवम्। तत्त्वं कथय राजेन्द्र तत्करिष्यामि नान्यथा।' शोभन उवाच-'त्वयैतद्विहितं विप्र श्रद्धाहीनं व्रतोत्तमम्। तेनाहमध्रुवं मन्ये ध्रुवं भवति तच्छृणु। मुचुकुन्दस्य दुहिता चन्द्रभागाऽतिशोभना। तस्यै कथय वृत्तान्तं ध्रुवमेतद्भविष्यति। इति श्रुत्वा वचस्तस्य गतो विप्रः स्ववेश्मनि। कथयामास वृत्तान्तं राजकन्याग्रतो द्विजः। श्रुत्वाऽथ सा द्विजवचो विस्मयोत्फुल्ललोचना। प्रत्यक्षमथवा स्वप्नस्त्वयैतत्कथ्यते द्विज ।' सोमशर्मोवाच—'प्रत्यक्षं दयितः कान्तस्तव दृष्टो मया शुभे । देवतुल्यमना-

धर्ष्यं दृष्टं तस्य पुरं मया । अध्रुवं तेन तत्प्रोक्तं ध्रुवं भवति तत्कुरु ।' चन्द्रभागोवाच--'तत्र मां नय विप्रर्षे पतिदर्शनलालसा । आत्मनो व्रतपुण्येन करिष्यामि परं ध्रुवम् । आवयोर्द्विजसंयोगो यथा भवति तत्कुरु । प्राप्नुहि त्वं महत्पुण्यं कृत्वा योगं विमुक्तये । इति श्रुत्वा सह तया सोमशर्मा जगाम ह । आश्रमं वामदेवस्य मन्दराचलसंनिधौ । वामदेवोऽशृणोत्सर्वं वृत्तान्तं कथितं तयोः । अभ्यषिञ्चच्चन्द्रभागां वेदमन्त्रैरथोर्जितैः । ऋषिमन्त्रप्रभावेण विष्णुवासरसेवनात् । दिव्यदेहा बभूवासौ दिव्यां गतिमवाप च। पत्युः समीपमगमत्प्रफुल्लोत्फुल्ललोचना । जहर्ष शोभनोऽतीव दृष्ट्वा कान्तां समागताम्। समागत्य स्वके वामपार्श्वे तां संन्यवेशयत् । अथोवाच प्रिया हर्षाच्चन्द्रभागा शुभं वचः। शृणु कान्त हितं वाक्यं यत्पुण्यं विद्यते मयि। अष्टवर्षाधिका जाता तदाहं पितृवेश्मनि। मया ततः प्रभृत्येव कृतमेकादशीव्रतम्। यथोक्तविधिना युक्तं श्रद्धापूतेन चेतसा। ततः पुण्यप्रभावेण पुरं ते भवति ध्रुवम्। सर्वकामसमृद्धं च यावदाभूतसंप्लवम् । एवंच नृपशार्दूल रमते पतिना सह । दिव्यभोगादिरूपा या दिव्याभरणभूषिता । शोभनोऽपि तया सार्धं रमते दिव्यविग्रहः । रमाव्रतप्रभावेण मन्दराचलसानुनि । चिन्तामणिसमा ह्येषा कामधेनुसमाथवा । रमाभिधाना नृपते तवाग्रे कथिता मया । एकादशीव्रतानां च पक्षयोरुभयोरपि । यथा शुक्ला तथा कृष्णा विभेदं नैव कारयेत् । सेवितैकादशी नृणां भुक्तिमुक्तिप्रदायिनी । धेनुः श्वेता तथा कृष्णा उभयोः सदृशं पयः। तथैव तुल्यफलदं स्मृतमेकादशीद्वयम् । एकादशीव्रतानां च माहात्म्यं शृणुते नरः । सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ।' इति श्रीब्रह्मवैवर्तपुराणे कार्तिककृष्णपक्षे रमैकादशीमाहात्म्यं समाप्तम् ।

अथ कार्तिकशुक्लैकादशीकथा । ब्रह्मोवाच--'बोधिन्याश्चैव माहात्म्यं पापघ्नं पुण्यवर्धनम् । मुक्तिप्रदं सुबुद्धीनां शृणुष्व मुनिसत्तम । तावद्गर्जन्ति तीर्थानि आसमुद्रसरांसि च । यावत्प्रबोधिनी विष्णोस्तिथिर्नायाति कार्तिके । तावद्गर्जति विप्रेन्द्र गङ्गा भागीरथी क्षितौ । यावन्नायाति पापघ्नी कार्तिके हरिबोधिनी । अश्वमेधसहस्राणि राजसूयशतानि च । एकेनैवोपवासेन बोधिन्याः कुरुते नरः । यद्दुर्लभं च दुष्प्राप्यं त्रैलोक्यस्य न गोचरम् । यद्यप्यप्रार्थितं पुत्र ददाति हरिबोधिनी। मेरुमन्दरमात्राणि पापान्युग्राणि यानि तु। एकेनैवोपवासेन दहते पापहारिणी। पूर्वजन्मसहस्रेषु यत्तु दुष्कर्म चार्जितम् । जागरेण प्रबोधिन्यां दहते तूलराशिवत् । यथोक्तं

कुरुते यस्तु विधिवत्सुकृतं नरः। स्वल्पं मुनिवरश्रेष्ठ मेरुतुल्यं भवेत्फलम्। उपवासं प्रबोधिन्यां यः करोति स्वभावतः। विधिवन्मुनिशार्दूल यथोक्तं लभते फलम्। विधिहीनं तु यः कुर्यात्सुकृतं मेरुमात्रकम्। अणुमात्रं न चाप्नोति फलं धर्मस्य नारद। यो ध्यायति मनोवृत्त्या करिष्यामि प्रबोधिनीम्। वसन्ति पितरो हृष्टा विष्णुलोके महीयते। विमुक्ता नारकैर्दुःखैर्यान्ति विष्णोः परं पदम्। कृत्वा तु पातकं घोरं ब्रह्महत्यादिकं नरः। कृत्वा तु जागरं विष्णोर्धौतपापो भवेन्नरः। दुःप्राप्यं यत्फलं विप्र अश्वमेधादिभिर्मखैः। प्राप्यते तत्सुखेनैव प्रबोधिन्यां तु जागरे। आप्लुत्य सर्वतीर्थेषु दत्त्वा गाः काञ्चनं महीम्। नरस्तत्फलमाप्नोति यत्कृत्वा जागरं हरेः। जातः स एव सुकृती कुलं तेनैव पावितम्। कार्तिके मुनिशार्दूल कृता येन प्रबोधिनी। यथा ध्रुवं नृणां मृत्युर्धननाशस्तथा ध्रुवम्। इति ज्ञात्वा मुनिश्रेष्ठ कर्तव्यं वैष्णवं दिनम्। यानि कानि च तीर्थानि त्रैलोक्ये संभवन्ति च। तानि तस्य गृहे सम्यग्यः करोति प्रबोधिनीम्। सर्वकृत्यं परित्यज्य तुष्ट्यर्थं चक्रपाणिनः। उपोष्यैकादशीं सम्यक्कार्तिके हरिबोधिनीम्। किं तस्य बहुभिः पुण्यैः कृता येन प्रबोधिनी। परलोकप्रदा ह्येषा कार्तिके हरिबोधिनी। स ज्ञानी स च योगी च स तपस्वी जितेन्द्रियः। भोगो मोक्षश्च तस्यास्ति उपास्ते हरिबोधिनीम्। विष्णोः प्रियतरा ह्येषा धर्मसारसहायिनी। यः करोति नरो भक्त्या मुक्तिभाक्स भवेन्नरः। प्रबोधिनीमुपोषित्वा गर्भं न विशते नरः। सर्वधर्मान्परित्यज्य तस्मात्कुर्वीत नारद। कर्मणा मनसा वाचा पापं यत्समुपार्जितम्। तत्क्षालयति गोविन्दः प्रबोधिन्यास्तु जागरे। स्नानं दानं जपो होमः समुद्दिश्य जनार्दनम्। नरैर्यत्क्रियते वत्स प्रबोधिन्यां तदक्षयम्। येऽर्चयन्ति नरास्तस्यां भक्त्या देवं च माधवम्। समुपोष्य प्रमुच्यन्ते पापैस्ते शतजन्मजैः। महाव्रतमिदं पुत्र महापापौघनाशनम्। प्रबोधवासरं विष्णोर्विधिवत्समुपोषयेत्। व्रतेनानेन देवेश परितोष्य जनार्दनम्। विराजयन्दिशः सर्वाःप्रयाति हरिमन्दिरम्। कर्तव्यैषा प्रयत्नेन नरैः कान्तिभरार्थिभिः। बाल्ये यच्चार्जितं वत्स यौवने वार्धके तथा। शतजन्मकृतं पापं स्वल्पं वा यदि वा बहु। तत्क्षालयेति गोविन्दस्तस्यामभ्यर्चितः खलु। धनधान्यवहा पुण्या सर्वपापहरा शुभा। तामुपोष्य हरेर्भक्त्या दुर्लभं न भवेत्कचित्। चन्द्रसूर्योपरागे च यत्फलं परिकीर्तितम्। तत्सहस्रगुणं प्रोक्तं प्रबोधिन्यां प्रजागरे। स्नानं दानं जपो होमः स्वाध्यायोऽभ्यर्चनं हरेः।तत्सर्वं कोटिगुणितं प्रबोधिन्यां तु यत्कृ-

तम्।जन्मप्रभृति यत्पुण्यं नरेण वार्जितं भवेत्।वृथा भवति तत्सर्वमकृत्वा कार्तिके व्रतम् । अकृत्वा नियमं विष्णोःकार्तिकं यः क्षिपेन्नरः।जन्मार्जितस्य धर्मस्य फलं नाप्नोति नारद। परान्नं वर्जयेद्यस्तु कार्तिके विष्णुतत्परः । परान्नवर्जनाद्वत्स चान्द्रायणफलं लभेत् । न तथा तुष्यते यज्ञैर्न दानैर्वा गजादिभिः । यथा शास्त्रकथालापैः कार्तिके मधुसूदनः । कुर्वन्ति ये कथां विष्णोर्ये शृण्वन्ति सभाविताः।श्लोकार्धं श्लोकपादं वा कार्तिके गोशतं फलम् । सर्वधर्मान्परित्यज्य कार्तिके केशवाग्रतः । शास्त्रावधारणं कार्यं श्रोतव्यं च महामुने । श्रेयसा लाभबुद्ध्या वा यः करोति हरेः कथाम् । कार्तिके मुनिशार्दूल कुलानां तारयेच्छतम् । नियमेन नरो यस्तु शृणुते वैष्णवीं कथाम् । कार्तिके तु विशेषेण गोसहस्रफलं लभेत् । प्रबोधवासरे विष्णोः शृणुते यो हरेः कथाम् । सप्तद्वीपावतीदानफलं स लभते मुने । कृत्वा विष्णुकथां विष्णोर्येऽर्चयन्ति कथाविदम् । स्वशक्त्या मुनिशार्दूल तेषां लोकोऽक्षयः स्मृतः । गीतवाद्यविनोदेन कार्तिकं यो नयेन्नरः । न तस्य पुनरावृत्तिर्मया दृष्टा किल प्रिय । एकादशीनृत्यनिपुणा वेश्या देवाङ्गनोपमा । गीतेन मोहिता लोकास्तया स्युस्तै विचेतसः । नेक्षन्ते विषयं चान्यं नृत्याच्चक्षुर्हृतं यथा । यदा तस्या भवेद्वारो नृत्यस्य हरिसंनिधौ । विशेषतः समायान्ति जनाः शून्यं भवेत्पुरम् । धनं प्रलोभ्य सर्वेषां हृतं किमिति वर्ण्यते । यत्प्रेमाणं मुहुस्तस्यां दधार धरणीधरः । कदाचित्कार्तिके मासि प्रबोधिन्याः प्रजागरे । ननर्त सविशेषं सा पश्यन्ती प्रतिमां हरेः । तत्र कृष्णस्य सांनिध्ये रूपशृङ्गारमोहिता । कृष्णप्रीत्या द्रवच्चित्ता चित्ते चैतद्व्यचिन्तयत् । अयं नारायणः साक्षादत्यन्ताद्भुतभोगवान् । मया सहैव नृत्येत कथं संभाव्यते त्विदम् । अस्य रागाङ्गहारश्च कीदृशः संविभाव्यते । रूपेणैव हि यस्याहं मुग्धचित्तास्मि रागिणी । बह्वीष्वन्यासु नारीषु मय्येवाधिकप्रीतिमान् । नृत्येतासौ मया सार्धं कण्ठश्लेषादिभावकृत् । इत्थं मनोरथं बाला कुर्वती नृत्यमुत्सुका । हरिप्रीत्या च सर्वां तां रात्रिमेवात्यवाहयत्।ततः प्रातश्च तत्पुण्यं जागरस्य न्ययोजयत् । तस्मिन्मनोरथे काम्ये यच्चकाराति नृत्यकम् । ततः सा कतिभिर्वर्षैस्तत्र त्यक्त्वा कलेवरम् । वित्तं हित्वाऽखिलं स्वर्गं गता देवाङ्गनाऽभवत् । तत्रापि गीतनिपुणा नृत्याभिनयकोविदा । रेमे रम्ये विमानाग्र्ये रूपयौवनशालिनी । कदाचित्स्फटिके कुड्ये स्वरूपं ददृशेऽङ्गना । चिन्तयामास मे रूपं पुंसो योग्यं न कस्यचित् । इत्युदीरितमात्रेण पूर्वजन्ममनोरथम् । सस्मार साऽतितन्वङ्गी कृष्णेन सह नर्तनम्।न पतिं कामये कंचिद्ब्रह्मचर्ये स्थिता सदा।तामेव मूर्तिं ध्यायन्ती चन्द्रका-

न्तिर्वरानना । श्रीकृष्णगाथां गायन्ती रोमाञ्चोद्भेदलक्षणाम् । अस्मिन्मन्वन्तरे प्रीता श्रीकृष्णप्रियवार्तया । एतदन्तर एवासौ भूमिर्भारप्रपीडिता । तदर्थं वासुदेवश्चावतितीर्पुरभूदिह । कृष्णक्रीडार्थमादिष्टा ब्रह्मणा सुरयोषितः । राघवावतरे तस्य ह्येकभार्याव्रतं महत् । आसीत्तथा च तत्प्रीत्यै संभवन्तु सुरस्त्रियः । कैशोरे गोपकन्यास्ता यौवने राजकन्यकाः । भूत्वा देवाङ्गनाः सर्वा जनयन्तु हरेर्मुदम् । इत्याज्ञप्तासु तास्वेषा चन्द्रकान्तिरुवाच तम् । पूर्वजन्मोद्भवो ह्येष मम ह्येको मनोरथः । भूमौ गतायाः पूर्येत त्वत्प्रसादात्पितामह । सतीष्वन्यासु नारीषु जगन्मोहनरूपधृक् । मय्येवातिप्रीतिमांश्च नृत्यतां भगवान्मया । इमं मनोरथं तस्या अनुमोद्य पितामहः । देवांशानवताराय सुरानन्यांस्तथादिशत् । वृषभानुरिति ख्यातो गोपोनन्दव्रजेऽवसत् । तस्य कन्या वरारोहा राधानाम्न्यभवत्पुरा । या चन्द्रकान्तिरित्यासीदित्येतत्कथितं मया । प्रबोधिनी जागरपुण्यवैभवात्प्रसन्न ईशो विधिना स सत्यकृत् । चकार रासोत्सवनर्तनं स वृन्दावनेऽन्याभिरपीह राधया । सा नृत्यमानाऽद्भुतगोपरूपिणा कृष्णेन जन्मान्तरवाञ्छितेन । राधा महाप्रेमजवाकुलेन्द्रिया निन्येऽन्यलोकं कथया व्रतार्थनाम् । तस्मात्सुबोधिनीं कृत्वा रात्रौ कृत्वा तु जागरम् । सुप्तोत्थितं हरिं दृष्ट्वा कामाः संसारजा द्विजाः । मथुरायां तु संवासे जागरे हरिसंनिधौ । कार्तिके बोधिनीं प्राप्य ततः श्रेयः परं नहि । गीतं नृत्यं च वाद्यं च नाट्यं विष्णुकथां मुने । यः करोति च पुण्यात्मा त्रैलोक्योपरिसंस्थितः । बहुपुष्पैर्बहुफलैः कर्पूरागरुकुङ्कुमैः । हरेः पूजा विधातव्या कार्तिके बोधवासरे । वित्तशाठ्यं न कर्तव्यं संप्राप्ते हरिवासरे । यस्मात्पुण्यमसंख्यातं प्राप्यते मुनिसत्तम । पुष्पैर्नानाविधैर्दिव्यैः प्रबोधिन्यां तु जागरे । शंखतोयं समादाय अर्घ्यो देयो जनार्दने । यत्फलं सर्वतीर्थेषु सर्वदानेषु यत्फलम् । तत्फलं कोटिगुणितं दत्त्वाऽर्घ्यं बोधवासरे । गुरुपूजा ततः कार्या भोजनाच्छादनादिभिः । दक्षिणाभिश्च द्विजर्षे तुष्ट्यर्थं चक्रपाणिनः । भगवन्तमभिध्यायन्पुराणंच पठेन्नरः । प्रत्यक्षं च भवेत्तस्य कपिलादानजं फलम् । कार्तिके मुनिशार्दूल मद्भक्तो वैष्णवं व्रतम् । यः करोति यथोक्तं तु मुक्तिस्तस्य सुनिश्चया । केतक्या एकपत्रेण पूजितो गरुडध्वजः । समासहस्रं सुप्रीतो भवेच्च मधुसूदनः । अगस्त्यकुसुमैर्देवं पूजयेद्यो जनार्दनम् । दर्शनात्तस्य देवर्षे नरकाग्निः प्रणश्यति । मुनिपुष्पार्चितो विष्णुः कार्तिके पुरुषोत्तमः । ददात्यभिमुखान्कामाञ्छशी सूर्यस्थितो यथा । विहाय सर्वपुष्पाणि मुनिपुष्पेण केशवम् । कार्तिके योऽर्चयेद्भक्त्या वाजिमेधफलं लभेत् । तुलसीदलपुष्पाणि यो यच्छति जनार्दने ।

कार्तिकं सकलं वत्स पापं जन्मायुतं दहेत् । दृष्टा स्पृष्टाऽथ वा ध्याता कीर्तिता नमिता स्तुता । रोपिता सिञ्चिता नित्यं पूजिता तुलसी शुभा । नवधा तुलसीभक्तिं ये कुर्वन्ति दिने दिने। युगकोटिसहस्राणि तन्वन्ति सुकृतं मुने । यावच्छाखाप्रशाखाभिर्बीजपुष्पफलैर्मुने । रोपिता तुलसी पुंभिर्वर्धते वसुधातले । तेषां वंशे तु ये जाता ये भविष्यन्ति ये गताः । आकल्पयुगसाहस्रं तेषां वासो हरेर्गृहे । यत्फलं सर्वतीर्थेषु सर्वदानेषु नारद । तुलसीदलेन चैकेन कार्तिके प्राप्यते तु तत् । संप्राप्तं कार्तिकं दृष्ट्वा नियमेन जनार्दनः । पूजनीयो महाविष्णुः कोमलैस्तुलसीदलैः दृष्ट्वा । क्रतुशतैरेव दत्वा रत्नान्यनेकशः । तुलसीदलैस्तु तत्पुण्यं प्राप्यते केशवार्चनात् ।' इति श्रीस्कन्दपुराणे कार्तिकशुक्लपक्षीयप्रबोधिनीमाहात्म्यं संपूर्णम् ।

अथ वाराहपुराणोक्तं कार्तिकशुक्लैकादशीव्रतम् । अगस्त्य उवाच— 'शृणुष्व भक्तितो राजन्कार्तिकैकादशीं तथा । उपोष्य विधिनाऽनेन सर्वासां प्राप्नुयात्फलम्।प्राग्विधानेन संकल्प्य तद्वत्स्नानं समाचरेत् । विलोमेनार्चयेद्देवं नारायणमकल्मषम् । नमः सहस्रशिरसे शिरः संपूज्य वै हरेः।पुरुषायेति च भुजौ कण्ठं वै विश्वरूपिणे । ज्ञानात्मनेति चास्त्राणि श्रीवत्साय तथा उरः । जठरं ग्रसिष्णवे पूज्यमुदरं दिव्यमूर्तये । कटिं सहस्रपादाय पादौ देवस्य पूजयेत् । अनुलोमेन देवेशं पूजयित्वा विचक्षणः । नमो दामोदरायेति सर्वाङ्गं पूजयेद्धरेः।एवं संपूज्य विधिना तस्याग्रे चतुरो घटान् । स्थापयेद्रत्नगर्भांस्तु सितचन्दनचर्चितान् । स्रग्दामबद्धग्रीवांस्तु सितवस्त्रावगुण्ठितान् । स्थगितांस्ताम्रपात्रैस्तु तिलपूर्णैः सकाञ्चनैः । चत्वारः सागराश्चैते कल्पिता द्विजसत्तम।तन्मध्ये प्राग्विधानेन सौवर्णं स्थापयेद्धरिम्।षोडशारे रथाङ्गे[१] तु रजोभिर्बहुभिः कृते । योगेश्वरं योगनिद्राशयितं पीतवाससम् । तमप्येवं तु संपूज्य जागरं तत्र कारयेत् । कुर्यात्तु वैष्णवं यागं यजेद्योगेश्वरं हरिम् । एवं कृत्वा प्रभाते तु ब्राह्मणान्पञ्च चानयेत्।चत्वारः कलशा देयाश्चतुर्णां पञ्चमस्य तु । योगेश्वरं तु सौवर्णं प्रदद्यात्प्रयतः शुचिः।प्रीयतां दामोदरो योगेश्वररूपीति मन्त्रतः।वेदाध्येत्रे समं दत्तं तद्विदे द्विगुणं तथा। आचार्ये पञ्चरात्राणां सहस्रगुणितं भवेत् । यस्त्विमं सरहस्यं च समन्त्रं चोपपादयेत् । विधानं तस्य भक्त्या वै दत्तं कोटिगुणोत्तरम्।योग्ये तिष्ठति यस्त्वन्यमासन्नं पूजयेत्कुधीः । स दुर्गतिमवाप्नोति दत्तं तस्य च निष्फलम् । एवं दत्त्वा विधानेन तत्त्वतो विष्णुमच्युतम् । विप्राणां भोजनं दद्याद्यथाशक्त्या सदक्षिणम् । धरणीव्रतमेतद्धि पुरा कृत्वा प्रजापतिः । प्रजां लेभे तथा मुक्तिं ब्रह्मण्यविचले शुभे । युवनाश्वश्च राजर्षि-

१—रथाङ्गे चक्रे ।

रेतेन विधिना पुरा । मांधातारं सुतं लेभे परं ब्रह्म च शाश्वतम् । तथा हैहयदायादः कृतवीर्यो नराधिपः। कार्तवीर्यं सुतं लेभे परं ब्रह्म च शाश्वतम् । शकुन्तलाप्येवमेव व्रतं चीर्त्वा महामुने । लेभे शाकुन्तलं पुत्रं दुर्जयं चक्रवर्तिनम् । अनेन विधिना प्राप्तं चक्रवर्तित्वमुत्तमम् ।धरण्या अपि पाताले मग्नया तु कृतं पुरा । व्रतमेतत्ततो नाम्ना धरणीव्रतमुच्यते । समाप्तेऽस्मिन्धरा देवी हरिणा क्रोडरूपिणा । उद्धृताद्यापि तुष्टेन धारिता नौरिवाम्भसि । य इदं शृणुयाद्भक्त्या यश्च कुर्यान्नरोत्तमः । सर्वपापविनिर्मुक्तो विष्णुसालोक्यतां व्रजेत् । आपत्तिं हरते चैका राज्यमेकैव यच्छति । किं पुनर्द्वादशैतास्तु येनेष्टा न ददुः परम् ।' इति वाराहपुराणोक्तं योगेश्वरद्वादशीव्रतं समाप्तम्।

अथ प्रबोधैकादशीकृत्यम् । तदुक्तं मदनरत्ने ब्रह्मपुराणे—' एकादश्यां च शुक्लायां कार्तिके मासि केशवम् । प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः।' इति। 'नृत्यैर्गीतैस्तथा वाद्यैर्ऋग्यजुःसाममङ्गलैः । वीणापणवशब्दैश्च पुराणश्रवणेन च । वासुदेवकथाभिश्च स्तोत्रैरन्यैश्च वैष्णवैः । सुभाषितैरिन्द्रजालैर्भूरिशोभाभिरेव च । पुष्पैर्धूपैश्च नैवेद्यैर्दीपवृक्षैः सुशोभनैः । होमैर्भक्ष्यैरपूपैश्च फलैः शर्करपायसैः । इक्षोर्विकारैर्मधुरैर्द्राक्षाक्षुद्रैः सदाडिमैः । कुबेरकस्य[1] मञ्जर्या मालत्या कमलेन च । हृद्याभ्यां श्वेतरक्ताभ्यां चन्दनाभ्यां च सर्वदा । कुङ्कुमालक्तकाभ्यां च रक्तसूत्रैः सकङ्कणैः । तथा नानाविधैः पुष्पैर्द्रव्यैर्वीरक्रयाहृतैः[2] । तस्यां रात्र्यां व्यतीतायां द्वादश्यामरुणोदये । आदौ घृतेनैक्षवेण मधुना स्नापयेत्ततः । दध्ना क्षीरेण च ततः पञ्चगव्येन शास्त्रवित् । उद्वर्तनं माषचूर्णमसूरामलकानि च । सर्षपाश्च प्रियङ्गुश्च मातुलिङ्गरसैस्तथा । सर्वौषध्यः सर्वगन्धाः सर्वबीजानि काञ्चनम् । मङ्गलानि यथाकामं रत्नानि च कुशोदकम् । एवं संशोध्य देवेशं दद्याद्गोरोचनां शुभाम् । ततस्तु कलशा देया यथाप्राप्ताः स्वलंकृताः । जातीपल्लवसंयुक्ताः सफलाश्च सकाञ्चनाः । पुण्याहवेदशब्देन वीणावेणुरवेण च । एवं संस्नाप्य गोविन्दमनुलिप्तं स्वलंकृतम् । सुवाससं तु संपूज्य सुमनोभिः सकुंकुमैः । दीपैर्धूपैर्मनोज्ञैश्च पायसेन च भूरिणा । पात्रेभ्यश्चान्नदानैश्च होमैः पुष्पैः सदक्षिणैः । वासोभिर्भूषणैरन्यैर्गोभिरश्वैर्मनोजवैः । ब्राह्मणाः पूजनीयाश्च विष्णोरीड्याश्च मूर्तयः । यत्तु शिष्टामृतं पश्चाद्भोक्तव्यं ब्राह्मणैः सह ।' इति । अथ रामार्चनचन्द्रिकोक्तप्रकारेण बोधिनीविधिः ।'शयन्युक्तप्रकारेण रथमारोप्य माध-

---

[1] कुबेरक पर्णाश कृष्णतुलसीति केचित् । [2] वीरक्रयो विक्रेता प्रथमतोऽभिहितं मूल्य दत्वा क्रियमाणक्रयः ।

वम् । विधाय महतीं पूजां विष्णोरभ्यर्च्य वैष्णवान् । वाद्यघोषेण महता देवं नीत्वा जलाशयम् । धौताङ्घ्रिपाणिः कुर्वीत संकल्पं वैष्णवैः सह । एवंगुणविशिष्टायां बोधिन्यामिन्दिरापतेः । कुर्वे प्रबोधमधुना वाराहोक्तमनूनपठेत्।' इति । भविष्योत्तरेऽपि-'कार्तिके शुक्लपक्षे तु एकादश्यां पृथासुत । मन्त्रेणानेन राजेन्द्र देवमुत्थापयेद्द्विजः । मन्त्राश्च—'ब्रह्मेन्द्ररुद्राग्निकुबेरसूर्यसोमादिभिर्वन्दित वन्दनीय । बुध्यस्व देवेश जगन्निवास मन्त्रप्रभावेण सुखेन देव । इयं तु द्वादशी देव प्रबोधाय विनिर्मिता । त्वयैव सर्वलोकानां हितार्थं शेषशायिना । त्वयि सुप्ते जगन्नाथ जगत्सुप्तं भवेदिदम् । उत्थिते चेष्टते सर्वमुत्तिष्ठोत्तिष्ठ माधव । इदं विष्णुरनेनैव तस्मादुत्थापयेत्प्रभुम् । हिरण्यगर्भ इति च प्राजापत्ये पठेत्तथा । गायत्रं वैष्णवं सूक्तमतो देवा अवन्त्विति । उत्तिष्ठोत्तिष्ठ देवेश योगनिद्रां विहाय च । अनेन मनुनोत्थाप्य घंटावादित्रनिःस्वनैः । तीरे समुपवेश्येशं महानुग्रहमर्थयेत् । सोसावदभ्रकरुणो भगवान्प्रवृद्धप्रेमस्मितेन नयनाम्बुरुहं विजृम्भन् । उत्थाय विश्वविजयाय च नो विषादं मध्व्या गिराऽपनयतात्पुरुषःपुराणः।' इति मन्त्रपुष्पाञ्जलिं दत्त्वा सूक्तमाथर्वणं जपेत् । तच्चोक्तमृग्वेदसर्वानुक्रमण्याम् । 'या ओषधीरित्यधिकाथर्वणोभिषगोषधीस्तुतिरानुष्टुभम् । या ओषधीः पूर्वाजाता देवेभ्यास्त्रियुगंपुरा।मनैनु बभ्रूणामहं शतं धामानि सप्त च । शतं वो अम्ब धामानि सहस्रमुत वो रुहः।अथाशतक्रत्वा यूयमिमं मे अगदं कृतम्।ओषधीः प्रतिमोदध्वंपुष्पवतीःप्रसूवरीः फलिनीरफला उत।अश्वा इव सजित्वरी वीरुधःपारयिष्णवः।ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे स नेयमश्वं गां वास आत्मानं तव पूरुषः।अश्वत्थे वो निषदनं पर्णेवो वसतिष्कृता।गोभाज इत्किलासथ यत्सनवथ पूरुषम्।याओषधीःसमजग्मत राजानः समिताविव। विप्रःसउच्यते भिषग्रक्षोहामीवचातनः।अश्वावतीं सोमावतीमूर्जयन्तीमुदोजसम्।आवित्सि सर्वा ओषधीरस्मां अरिष्टतातये । उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते । धनं सनिष्यन्तीनामात्मानं तव पुरुष । इष्कृतिर्नाम वो माताथो यूयं स्थ निष्कृतिः । सीराः पतत्रिणीः स्थ नयदामयति निष्कृथ । अतिविश्वाः परिष्ठास्ते न इव व्रजमक्रमुः । ओषधीः प्राचुच्यवुर्यत्किंचित्तन्वोरपः।यदि मावजयन्नहमोषधीर्हस्त आदधे । आत्मा यक्ष्मस्य नश्यति पुरा जीवगभो यथा । यस्यौषधीः प्रसर्पथाङ्गमङ्गं परुष्परुः । ततो यक्ष्मं विबाधध्व उग्रो मध्यमशीरिव । साकं यक्ष्म प्रपत चाषेण किकिदीविना । साकं वा तस्य ध्राज्या साकं नश्यति हाकया । अन्या वो अन्यामवत्वन्यान्यस्या उपावत । ताः सर्वाः संविदाना इदं मे प्रावता वचः । याः फलिनीर्या

अफला अपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः । मुञ्चन्तु मा शपथ्यादथो वारुण्यादुत । अथो यमस्यपड्बीशात्सर्वस्माद्देव किल्बिषात् । अवपन्तीरवदन्दिव ओषधयस्परि । यं जीवमश्नवामहै न स रिष्यति पूरुषः । या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः । तासां त्वमस्युत्तमारं कामाय संहृदे । या ओषधीः सोमराज्ञीः प्रविष्टाः पृथिवीमनु । बृहस्पतिप्रसूता अस्यै संदत्त वीर्यम् । मावो रिषत्खनिता यस्मै चाहं खनामि वः । द्विपच्चतुष्पदस्माकं सर्वमस्त्वनातुरम् । याश्चेद मुपशृण्वन्ति याश्च दूरं परागताः । सर्वाः संगत्य वीरुधोऽस्यै संदत्त वीर्यम् । ओषधयः संवदन्ते सोमेन सह राज्ञा । यस्मै कृणोति ब्राह्मणस्तं राजन्पारयामसि । त्वमुत्तमास्योषधे तव वृक्षा उपस्तयः । उपस्तिरस्तु सोऽस्माकं यो अस्मां अभिदासति ।' एवमाथर्वणसूक्तं जपित्वा पुनः पुष्पाञ्जलिं दद्यात् । गता मेघा वियच्चैव निर्मला निर्मला दिशः । शारदानि च पुष्पाणि गृहाण मम केशव।' इति । 'समुत्थिते ततो विष्णौ क्रियाः सर्वाः प्रवर्तयेत् । स्नापयेद्राघवं पञ्चामृतैः पुरुषसूक्ततः । नीराज्य मन्त्रं विन्यस्य वस्त्रालंकारचन्दनैः । स्रग्धूपदीपदिव्यान्नैस्ताम्बूलैस्तोषयेत्प्रभुम् । एवं कृत्वा महापूजां गृहीत्वा चाक्षतं जलम् । प्रतिमासव्रतान्युक्त्वा राघवाय निवेदयेत्।' व्रतसमापनमन्त्रस्तु सनत्कुमारेणोक्तः—'इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो । न्यूनं संपूर्णतां यातु त्वत्प्रसादाज्जनार्दन ।' इति । अनुष्ठितैर्मया नाना चातुर्मास्यव्रतैः प्रभुः । प्रभूतपातकस्यान्ते राघवः प्रीयतां मम।' व्रतारम्भस्तत्समाप्तिश्चतुर्धा । तदुक्तं वाराहपुराणे—चतुर्धा एकादशीद्वादशीपूर्णिमाकर्कसंक्रान्तिष्वारब्धव्यमित्यर्थः । त्यक्तद्रव्यदानानि तु शयनीप्रकरणे द्रष्टव्यानि ।'एवं व्रतान्यर्पयित्वा स्तुवीत परमादृतः । श्रुतिस्तुत्या वेदवादस्तोष्यमाणं रमापतिम् ।' स्तुतिस्तु—'यद्रोषविभ्रमविवृत्तकटाक्षपात संभ्रान्तनक्रमकरो भयगीर्णघोषः । सिन्धुः शिरस्यर्हणं परिगृह्य रूपी पादारविन्दमुपगम्य बभाष एतत् । नत्वा वयं जडधियोऽन्वविदाम भूमन्कूटस्थमादिपुरुषं जगतामधीशम् । यत्सत्त्वतः सुरगणा रजसः प्रजेशा अन्यैश्च भूतपतयः स भवान्गुणेशः । कामं प्रयाहि जहि विश्रवसोवमेहं त्रैलोक्यरावणमवाप्नुहि वीर पत्नीम् । बध्नीहि सेतुमिह ते यशसो वितत्यै गायन्ति दिग्विजयिनो यमुपेत्य भूपाः । स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया।मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी । इत्याशिषः समभ्यर्थ्य गीतवाद्यजयस्वनैः । देवं रथोपरि स्थाप्य जयशब्दपुरःसरम् । महातूर्यरवै रात्रौ भ्रामयेत्स्यन्दनस्थितम् । उत्थितं देव-

देवेशं नगरे पार्थिवः स्वयम् । युक्तः शैब्यादिवाहैर्मरकतसुरणत्किङ्किणीजालमालारत्नौघैर्मौक्तिकानामविरलमणिभिः संभृतैश्चैव हारैः । हैमैः कुम्भैः पताकाशिवतरुरुचिभिर्भूषितः केतुमुख्यैश्छत्रैर्ब्रह्मेशवन्द्यो दुरितहरहरेः पातु जैत्रो रथो वः । वक्त्रं नीलोत्पलरुचिलसत्कुण्डलाभ्यां सुमृष्टं चन्द्राकारं रचिततिलकं चन्दनेनाक्षतैश्च । गत्या लीलां जनसुखकरीं प्रेक्षणेनामृतौघं, पद्मावासः सततमुरसा धारयन्पातु विष्णुः। मोदन्तां सुजनास्त्वनिन्दितधियस्त्यक्ताखिलोपद्रवाः, स्वस्थाः सुस्थिरबुद्धयः प्रतिहतामित्रा रमन्तां सुखम् । रे दैत्या गिरिगह्वराणि गहनान्याशु व्रजध्वं भयाद्दैत्यारिर्भगवानयं नरहरिर्यानं समारोहति । पलायध्वं पलायध्वं रेरे दनुजदानवाः । संरक्षणाय लोकानां रथारूढो नृकेसरी।' 'इत्यादिविष्णुधर्मोक्तमन्त्रैः संतोष्य सादरम् । प्रसादमाला नृहरेर्गृह्णीयाद्भक्तिभावतः । जय देव महादेव देवदेवाखिलश्वेर । वरदेशाखिलं विश्वं रक्ष रक्ष रमापते । नृत्यैर्वाद्यैर्भागवतैर्घण्टावाद्यैर्जयस्वनैः । भ्रामयन्स्यन्दनं विष्णोः पुरमध्ये समन्ततः । रथस्याकर्षणं पूर्वं कुरुते दैत्यनायकः । ततः सुराः सिद्धसंघा मुनिगन्धर्वमानवाः । यावत्पदानि कृष्णस्य रथस्याकर्षणं नरः । करोति क्रतुभिस्तानि तुल्यानि नरनायकः । रथेन सह गच्छन्ति पुरतः पृष्ठतोऽग्रतः । महाविष्णुसमा ह्येते भवन्त्यङ्घ्रिभवा अपि । श्रीकृष्णरथशोभां ये प्रकुर्वन्ति वदन्ति च । जयन्ति च पुनर्ये वै तेषां लोकाः सनातनाः । रथे स्थितो नरैर्यस्तु पूजितो मधुसूदनः । ददाति वाञ्छितं तेषामन्ते च परमां गतिम् । दोलायमानं गोविन्दं मञ्चस्थं मधुसूदनम् । रथस्थं वामनं दृष्ट्वा पुनर्जन्म न विद्यते । रथस्थं ये न गच्छन्ति भ्रममाणं जनार्दनम् । विप्रा वेदविदस्तेऽपि ज्ञेया वै श्वपचाधमाः । येषां गृहाग्रतो याति रथस्थः श्रीनृकेसरी । पूजा तैस्तैः प्रकर्तव्या वित्तशाठ्यविवर्जिता ॥ अनर्चितो यदा याति प्रमादात्स्वगृहाद्धरिः।पितरस्तस्य विमुखा यावत्संवत्सरं नृप।स्त्रियोऽपि मुक्तिमायान्ति रथयात्रापरायणाः । सशैलवनसस्याढ्या तेन दत्ता वसुंधरा। इति पौरजनैः सार्धं भ्रामयित्वा रथं गृहम् । गत्वा नीराज्य देवेशं शयीत राघवं स्मरन् । इति रथोत्सवमाहात्म्यम् । शयीतेति द्वादश्यभिप्रायेण॥एकादश्यां तु—'रात्रौ जागरणं कुर्यादेकादश्यां सुरालये।' इति वचनात् रात्रिजागरणमप्यत्रावश्यकम् । इयमेकादशी सोमवारोत्तरभाद्रपदयोगे महापुण्येत्युक्तं मदनरत्ने वाराहपुराणे शुक्लपक्षं प्रक्रम्य 'एकादशी सोमयुता कार्तिके मासि भामिनि । उत्तराभाद्रसंयोगे अनन्तो सा प्रकीर्तिता । तस्यां यत्क्रियते भद्रे सर्वमानन्त्यमश्नुते । अनन्तपुण्यफलदा तेनानन्ता

स्मृता प्रिये' इति । अथ वाराहोक्तो बोधिनीविधिः । एकादश्यां रात्रौ कुम्भे घृतपात्रोपरि हैमं माषमितं मत्स्यं पञ्चामृतेन संस्नाप्य कुंकुमपीतवस्त्रयुग्मपद्माद्यैः संपूज्य 'मत्स्यरूपो जगद्योनिः प्रीयतां मे जनार्दनः ।' इति दक्षिणां दत्त्वा ब्राह्मणान्भोजयेत् । इति । इति कार्तिकशुक्लैकादशीकृत्यं समाप्तम् ।

अथ मार्गशीर्षकृष्णैकादशीव्रतम् । अर्जुन उवाच—'नमो नारायणाजायाव्ययायात्मस्वरूपिणे । सृष्टिस्थित्यन्तकर्त्रे च केशवाय नमोऽस्तु ते । त्वमेव जगतां नाथ अन्तर्यामी त्वमेव च । शास्त्राणां कविरीशस्त्वं वक्ता त्वं च जगत्पते । एकादशी कथं स्वामिन्नुत्पन्ना इति गीयते । एतद्धि संशयो मह्यं छेत्तुमर्हसि भो प्रभो । ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत । ममोपरि कृपां कृत्वा इदानीं वक्तुमर्हसि । मार्गशीर्षासिते पक्षे किं नामैकादशी भवेत् । किंनामको विधिस्तस्या को देवस्तत्र पूज्यते । कृता केन पुरा देव एतद्विस्तरतो वद ।' श्रीकृष्ण उवाच—'शृणु राजन्प्रवक्ष्यामि कथां पापप्रणाशिनीम् । पृष्टा या तु त्वया राजँल्लोकानां हितकाम्यया । मार्गशीर्षासिते पक्षे उत्पत्तिर्नाम नामतः । तस्या उपोषमात्रेण धर्माढ्यो जायते ध्रुवम् । धर्माद्भवति सत्यं वै लक्ष्मीः सत्यानुसारिणी । पुरा च मुरनाशाय उत्पन्ना मम वल्लभा । ये कुर्वन्ति नरा राजस्तेषां सौख्यं भवेद्ध्रुवम् । तथा पापानि नश्यन्ति न पश्यन्ति यमालयम् ।' अर्जुन उवाच—'उत्पन्ना सा कथं पुण्या सर्वपुण्याधिका शुभा । कथं देव पवित्रा च कथं वै देवताप्रिया ।' श्रीकृष्ण उवाच—'पुरा कृतयुगे पार्थ मुरनामाथ दानवः । अत्यद्भुतं महारौद्रः सर्वदेवभयंकरः । इंद्र उच्छेदितस्तेन अन्यो देवः पुरंदरः । आदित्याश्च शिवो ब्रह्मा वायुरग्निस्तथैव च । नवं प्रतिष्ठितं तेन एवमादि धनंजय । देवता निर्जितास्तेन अत्युग्रेण तु पाण्डव । स्वर्गान्निराकृता देवा विचरन्ति महीतले । सशङ्का भयभीतास्ते गत्वा सर्वे महेश्वरम् । इन्द्रेण कथितं सर्वमीश्वरस्यापि चाग्रतः । स्वर्गलोकं परित्यज्य विचरन्ति महीतले । मर्त्येषु संस्थिता देवा न शोभन्ते महेश्वर । उपायं ब्रूहि मे देव अमरा यान्तु कां गतिम् ।' श्रीमहादेव उवाच—'गच्छ गच्छ सुरश्रेष्ठ यत्रास्ति गरुडध्वजः । शरणागतदीनार्तपरित्राणपरायणः । ईश्वरस्य वचः श्रुत्वा देवराजो महामतिः । त्रिदशैः सहितः सर्वैर्गतस्तत्र धनंजय । अप्सरोगणगन्धर्वाः सिद्धविद्याधरोरगाः । यत्रैव स जगन्नाथः सुप्तोऽस्ति च जनार्दनः । जलमध्ये प्रसुप्तं तं दृष्ट्वा देवं जनार्दनम् । कृताञ्जलिपुटो भूत्वा इदं स्तोत्रमुदैरयत् । ॐ नमो देवदेवेश देवानामपि वन्दित । दैत्यारे पुण्डरीकाक्ष त्राहि मां

मधुसूदन । नमस्ते स्थितिनाशाय नमस्तेऽस्तु जगत्पते । नमो दैत्यविनाशय त्राहि मा मधुसूदन । सुराः सर्वे मया युक्ता भयभीताः समागताः।शरणं त्वां जगन्नाथ त्राहि मा भयविह्वलम् । त्राहि मां देवदेवेश त्राहि मां त्वं जनार्दन । त्राहि मा त्वं सुरानन्द दानवानां विनाशक । त्वं गतिस्त्वं मतिर्देव त्वं कर्ता त्वं परायणः । त्वं माता सर्वगोऽसि त्वं त्वमेव हि जगत्पिता । अत्युग्रेण तु दैत्येन निर्जितास्त्रिदशाः प्रभो । स्वर्गं त्यक्त्वा जगन्नाथ विचरन्ति महीतले । इन्द्रस्य वचनं श्रुत्वा विष्णुर्वचनमब्रवीत्।विष्णुरुवाच—'कीदृशो दानवः शक्र किंनामा कीदृशं कुलम् । किं स्थानं तस्य दुष्टस्य किं वीर्यं कः पराक्रमः ।' इन्द्र उवाच—' बभूव पूर्वं देवेश वेधोवरसमुद्भवः । तालजङ्घस्तु नाम्ना च अत्युग्रोऽपि महाबलः । तस्य पुत्रोऽपि विख्यातो मुरनामेति दानवः । उत्कटश्च महावीर्यो वेधोवरसमुद्भवः । पुरी चन्द्रावती नाम तत्र स्थाने वसत्यसौ । निर्जिता देवताः सर्वे स्वर्गाच्चैव निराकृताः । इन्द्रोऽन्यश्च कृतस्तेन अन्यो देवो हुताशनः । चन्द्रसूर्यौ कृतौ चान्यौ यमो वरुण एव च । सर्वमात्मीकृतं तेन सत्यं सत्यं जनार्दन । तस्य तद्वचनं श्रुत्वा कोपाविष्टो जगत्पतिः।हनिष्ये दानवं दुष्टमित्याह भगवान्हरिः । त्रिदशैः सहितस्तत्र गतश्चन्द्रावतीं पुरीम् । दृष्ट्वा देवान्समायातान्युयुधे दानवो बली । असंख्यातसहस्रैस्तैर्दिव्यप्रहरणायुधैः । हन्यमानास्तु तैर्देवा असुरैश्च पुनः पुनः । तत्रसुर्देवताः सर्वे गताश्चैव दिशो दश । हरिर्निरीक्ष्य तं तत्र तिष्ठतिष्ठाब्रवीद्वचः । सर्वं निरीक्ष्य प्रोवाच तं देवो मधुसूदनः ।' विष्णुरुवाच—' रे दानव दुराचार मम बाहुं निरीक्षय । चक्रं चैव समायातं सक्रोधो रक्तलोचनः । ततस्ते संमुखाः सर्वे विष्णुना दुष्टदानवाः । हता बाणैः पुनर्दिव्यैर्गताश्च भयविह्वलाः।चक्रं मुक्तं च कृष्णेन दैत्यसैन्येषु पाण्डव । तेन वै छिन्नशिरसो बहवो निधनं गताः । एकाङ्गो दानवस्तत्र युध्यमानो मुहुर्मुहुः । नष्टाः सर्वे सुरास्तेन निर्जिता विष्णुना स्वयम् । निर्जितेन च देवाय बाहुयुद्धं च याचितम् । बाहुयुद्धं कृतं तेन दिव्यवर्षसहस्रकम् । विष्णुश्चिन्ताप्रपन्नश्च नष्टाः सर्वेऽपि देवताः । विष्णुश्च त्रासितस्तेन गतो बदरिकाश्रमम् । गुहा सिंहवती नाम तत्र सुप्तो जनार्दनः । दानवः पृष्ठतो लग्नः प्रविष्टस्तां गुहोत्तमाम् । प्रसुप्तं तत्र मां दृष्ट्वा दानवेन सुभाषितम् । हनिष्यामि न संदेहोऽत्रासुराणां भयंकरम् । इत्येवमुक्ते वचने दैत्येनामित्रकर्षण । निर्गता कन्यका तत्र जनार्दनशरीरतः।रूपवती स्वरूपाढ्या दिव्यप्रहरणायुधा । विष्णुतेजःसमुद्भूता महाबलपराक्रमा । मोहितो दानवस्तत्र मुरनामेति पाण्डव । सा कन्या युयुधे तेन सर्वयुद्धविशारदा । निहतो दानवस्तत्र तत्र देवः

प्रबुद्धवान् । पातितं दानवं दृष्ट्वा ततो विस्मयमागतः । क एनं हतवान्रौद्रं मम शत्रुं भयंकरम् । न देवो न च गन्धर्वो न समोऽस्यास्ति भूतले । एवंपार्थ तदा जाते विस्मिते मधुसूदने । अकस्मादेव चोवाच वचो देव्यशरीरिणी ।' एकादश्युवाच—' मया च निहतो दुष्टो देवासुरभयंकरः । जिता येन सुराः सर्वे स्वर्गाच्चैव निराकृताः । तस्यास्तद्वचनं श्रुत्वा विष्णुर्वचनमब्रवीत् ।' विष्णुरुवाच—' उपकारः कृतो भद्रे मम कारुण्यभावतः । दानवो निहतो दुष्टः सुराणां भयकारकः । सोऽहं विनिर्जितो येन कथं सोऽपि निपातितः। विष्णोस्तद्वचनं श्रुत्वा देवी वचनमब्रवीत् । एकादशी त्वहं विष्णो सर्वशत्रुविनाशिनी । मया च निहतो दैत्यः सुराणां त्रासकारकः । इत्येतद्वचनं श्रुत्वा देवदेवो जनार्दनः । प्राह तुष्टोऽस्मि भद्रं ते वरं वरय वाञ्छितम् । निहते दानवेन्द्रे तु संतुष्टास्तत्र देवताः।हृष्टाः पुष्टास्ततो देवा आनन्दं च समागताः ।आनन्दस्त्रिषु लोकेषु मुनयो मुदमागताः।ब्रूहि त्वं वचनं भद्रे यत्ते मनसि वर्तते । ददामि च न संदेहः सुराणामपि दुर्लभम्।' एकादश्युवाच—' यदि तुष्टोऽसि मे देव सत्यं ब्रूहि जनार्दन । वरमेकं तु वाञ्छामि यं ददासि जनार्दन । यदि सत्यं जगन्नाथ तिस्रो वाचो ददस्व मे । श्रीभगवानुवाच—' सत्यमेतन्मया प्रोक्तमवश्यं तव सुव्रते । तिस्रो वाचो मया देयास्तव वाक्यात्सुशोभने ।' एकादश्युवाच—' त्रैलोक्येषु च देवेश मन्वन्तरयुगेष्वपि । अहं च त्वत्प्रिया नित्यं यथा स्यां कुरु मे वरम्।तिथीनां च वरा चाहं सर्वविघ्नविनाशिनी । सर्वपापप्रहन्त्री च आयुर्बलविवर्धिनी । उपोष्यन्ति च ये मर्त्यास्तव भक्त्या जनार्दन । सर्वसिद्धिर्भवत्वेषां यदि तुष्टोऽसि माधव ।' श्रीकृष्ण उवाच—' यत्त्वं वदसि कल्याणि तत्सर्वं च भविष्यति । धर्मार्थकाममोक्षं च यस्त्वामेवं करिष्यति।मम भक्ताश्च ये लोके ये न भक्तास्तवापि चा॰चतु॒गेषु विख्यातास्त्रिषु लोकेषु वै परम् । तं च भक्तमहं मन्ये एकादश्या व्रते स्थितम्।मम पूजां करिष्यन्ति एकादश्यां न संशयः। सर्वतिथ्युत्तमा त्वं च मत्प्रसादाद्भविष्यसि । एवमुक्ता ततः सा तु तत्रैवान्तरधीयत । पुरा कैटभके देशे कर्णिकानगरेषु च । कर्णसेनेति राजर्षिर्न्यवसद्बुद्धिमत्प्रजः । ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चैवानुमोदितः । न दुर्भिक्षं न दारिद्र्यं तस्मिन्राज्ञि स्थिते प्रभौ।अकालकालो न व्याधिर्नैव तस्करतापि च । राजर्षेः कश्चनापुत्री विधवा न च विद्यते । पुत्रदुःखं पिता वापि न पश्यति च कुत्रचित् । एतादृशे महाराजे शासति च प्रजाः प्रभौ। धनहीनो द्विजः कोऽपि क्षुत्क्षामो विपदागतः । कुटुम्बभरणेऽशक्तः कृच्छ्रात्तदनुवर्तते । सुदामा नाम विप्रर्षेर्भार्या साध्वी च तत्समा । भर्तृशुश्रूषणे सक्ता सदाचारे गृहस्य च ।

रहः पृच्छति भर्तारं म्लायन्ती वदने सदा । स्वामिन्पापे कृते पूर्वं धनहीनस्तु जायते । धर्महीने धनं नास्ति धर्महीने क्रिया न हि । तस्मात्केनाप्युपायेन धर्मस्य जननं कुरु । एतस्मिन्नन्तरे राजन्देवर्षिः समुपागतः । दम्पती उत्थितौ तत्र मधुपर्काय आदरात् । आसने तिष्ठ भो स्वामिंस्तं द्विजातिरभाषत । अद्य मे सफलं जन्म अद्य मे सफलाः क्रियाः । अद्य मे सफलं सर्वं भवतां दर्शनेन च । अस्मिन्पुरे तु हे स्वामिन्सर्वे ते सुखिनो जनाः।अहं तु धनहीनस्तु महादुःखेन पीडितः। कथयस्व प्रसादेन धनाढ्यो भवितेति च।धनहीनस्य लोकेऽस्मिन्वृथा तस्य मनोरथाः। एतच्छ्रुत्वा तु राजेन्द्रवचनं नारदोऽब्रवीत्।' नारद उवाच—' मार्गशीर्षासिते पक्षे उत्पत्तिर्नाम नामतः। तस्यामुपोषमात्रेण धनाढ्यो जायते ध्रुवम्। तथा पापानि नश्यन्ति एतत्सत्यं वदाम्यहम्। सर्वसौख्यकरो नृणां हरिवासर उत्तमः। गते तु नारदे पश्चाद्व्रतं कृत्वा प्रयत्नतः।तद्व्रतस्य प्रभावेण सुप्रसन्नो जनार्दनः। स्वयमेव श्रिया तस्मिन्नवात्सीद्विजमन्दिरे। भोगान्सुविपुलान्भुक्त्वा गतो वैकुण्ठसंनिधौ। एतस्मात्कारणाद्राजन्कर्तव्यो हरिवासरः । अन्तरं नैव कर्तव्यं समस्तव्रतकारिभिः । तिथिरेकाभवत्सर्वा पक्षयोरुभयोरपि। एकादश्युदये स्वल्पा अन्ते चैव त्रयोदशी । मध्ये च द्वादशी पूर्णा त्रिस्पृशा सा हरिप्रिया। एकामुपोष्य राजन्य सहस्रैकादशीफलम् । सहस्रगुणितं दानादेकादश्यां तु पारणे। अष्टम्येकादशी षष्ठी तृतीया च चतुर्दशी । पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता । एकामुपोषयेत्तां तु द्वादशीं विष्णुवल्लभाम्। दशमीवेधसंयुक्ता हन्ति पुण्यं पुरा कृतम्। एकादशी अहोरात्रं प्रभाते घटिका भवेत् । सा तिथिः परिहर्तव्या उपोष्या द्वादशी शुभा। एवंविधा मया प्रोक्ता पक्षयोरुभयोरपि। एकादश्यां प्रकुर्वीत उपवासं न संशयः। ते यान्ति परमं स्थानं यत्रास्ते गरुडध्वजः।धन्यास्ते मानवा लोके विष्णुभक्तिपरायणाः। एकादश्याश्च माहात्म्यं पर्वकाले तु यः पठेत् । गोसहस्रफलं तस्य पुण्यं भवति भारत। दिवा वा यदि वा रात्रौ यः शृणोतीह भक्तिमान् । कुलकोटिसमायुक्तो विष्णुलोके वसेद्ध्रुवम् । एकादश्याश्च माहात्म्यं पठ्यमानं शृणोति यः । ब्रह्महत्यादिपापानि नश्यन्ते नात्र संशयः। विष्णुनामसमं नास्ति गीतायाश्च धनजय। एकादशीसमं नास्ति सर्वपापप्रणाशनम्। इति भविष्योत्तरपुराणे मार्गशीर्षकृष्णैकादशीमाहात्म्यं समाप्तम्।

अथ मार्गशीर्षशुक्लैकादश्यां वाराहपुराणोक्तं धरणीव्रतं मदनरत्ने—दुर्वासा

उवाच 'मार्गस्य शुक्लपक्षे तु दशम्यां नियतात्मवान् । स्नात्वा देवार्चनं कृत्वा अग्निकार्यं यथाविधि । शुचिवासाः प्रसन्नात्मा हव्यं चान्नं सुसंस्कृतम् । भुक्त्वा पञ्चपदं गत्वा पुनः शौचं तु पादयोः । कृत्वाऽष्टाङ्गुलमानं तु क्षीरवृक्षसमुद्भवम् (?) । न भक्षेद्दन्तकाष्ठं तु ततश्चाचम्य यत्नतः । स्पृष्ट्वा खानि[1] तथाद्भिश्च चिरं ध्यात्वा जनार्दनम् । शंखचक्रगदापाणिं पीतवस्त्रं किरीटिनम् । प्रसन्नवदनं देवं सर्वलक्षणलक्षितम् । ध्यात्वा जलं गृहीत्वा तु भानुरूपं जनार्दनम् । दृष्ट्वाऽर्घ्यं दापयेत्पश्चात्करतोयेन मानवः । एवमुच्चारयेद्वाचं तस्मिन्काले महामुने । एकादश्यां निराहारो भूत्वाऽहनि परे त्वहम् । भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत । एवमुक्त्वा ततो रात्रौ देवदेवस्य संनिधौ । जपेन्नारायणायेति स्वपेद्भूमौ विधानतः । ततः प्रभाते विमले नदीं गत्वा समुद्रगाम् । इतरं वा तडागं वा गृहे वापि यतात्मवान् । आनीय मृत्तिकां शुद्धां मन्त्रेणानेन मानवः । धारणं पोषणं त्वत्तो भूतानां देवि सर्वदा । तेन सत्येन मां दिव्ये पापान्मोचय मृत्तिके।' मृत्तिकामन्त्रः ।'ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे । भवन्ति पूतानि यतो मृत्तिकामालभेत्ततः ।' आदित्यस्य मृत्तिकादर्शने मन्त्रः । त्वयि सर्वरसा नित्यं स्थिता वरुण सर्वदा । तेनेमां मृत्तिकां प्राप्य त्वं पूतां कुरु मा चिरम्।' मृत्तिकाभ्युक्षणमन्त्रः।'एवं मृदं रविं तोयं प्रसाद्यात्मानमालभेत् । त्रिः कृत्वा शेषमृदया कुण्डमालिख्य वै जले । ततः स्नात्वा नरः सम्यङ्मन्त्रवच्चोपचारतः । आचम्यावश्यकं कृत्वा पुनर्देवगृहं व्रजेत् । तत्राराध्य महायोगं देवं नारायणं प्रभुम् । केशवाय नमः पादौ कटिं दामोदराय च । ऊरुयुग्मं नृसिंहाय उरः श्रीवत्सधारिणे । कण्ठं कौस्तुभनाथाय वक्षः श्रीपतये तथा । त्रैलोक्यविजयायेति बाहू सर्वात्मने शिरः। रथाङ्गधारिणे चक्रं शंकरायेति वारिजम् । गम्भीरायेति च गदां पङ्कजं शान्तमूर्तये। एवमभ्यर्च्य देवेशं देवं नारायणं प्रभुम् । पुनस्तस्याग्रतः कुम्भांश्चतुरः स्थापयेद्बुधः । जलपूर्णान्समाल्यांश्च सितचन्दनचर्चितान्।चतुर्भिस्तिलपात्रैश्च स्थगितान्रत्नगर्भिणः । चत्वारस्ते समुद्रास्तु कलशाःपरिकीर्तिताः । तेषां मध्ये शुभं पीठं स्थापयेद्वस्त्रसंयुतम् । तस्मिंश्च रौप्यं सौवर्णं ताम्रं वा दारवं तथा।अलाभे[2]तस्तोये[3]पूर्णं कृत्वा पात्रं ततो न्यसेत् । सौवर्णं मत्स्यरूपेण कृत्वा देवं जनार्दनम् । वेदवेदाङ्गसंयुक्तं श्रुतिस्मृतिविभूषणम् । तत्रानेकविधैर्भक्ष्यैः फलैः पुष्पैश्च शोभितम्।गन्धैर्धूपैश्च मन्त्रैश्च अर्चयित्वा यथाविधि ।

---

१ खानि इन्द्रियाणि । २–अलाभात सौवर्णादीनामलाभे दारवमपि काष्ठमयमपि कुर्यादित्यर्थ. । ३–तोय पूर्णं पात्र कृत्वा तत्र मत्स्यरूपं जनार्दनं न्यसेदित्यन्वय. ।

रसातलगता वेदा यथा देव त्वयाहृताः । यथाविभवसारेण प्रभाते विमले तथा । चतुर्णां ब्राह्मणानां च चतुरो दापयेद्धटान् । पूर्वं च बह्वृचे दद्याच्छन्दोगे दक्षिणं तथा । यजुःशाखान्विते दद्यात्पश्चिमं घटमुत्तमम् । अथर्वणे चोत्तरं वै दद्यादेषविधिःस्मृतः ऋग्वेदः प्रीयतां पूर्वे सामवेदस्तु दक्षिणे । पश्चिमे तु यजुर्वेदोऽथर्ववेदस्तथोत्तरे । ताम्रपात्रैस्तु सतिलैः स्थगितान्कारयेद्धटान् । ततस्तज्जलपात्रं च ब्राह्मणाय कुटुम्बिने । दद्यादेवं महाभाग ततः पश्चात्तु भोजयेत् । ब्राह्मणान्पायसेनाग्र्यांस्ततः पश्चात्स्वयं नरः । भुञ्जीत सहितो भृत्यैर्वाग्यतः संयतेन्द्रियः । यः सकृद्द्वादशीमेतां करोति विधिवन्मुने । स ब्रह्मलोकमाप्नोति तत्कालं चैव तिष्ठति । ततो ब्रह्मोपसंहारे तल्लयस्तिष्ठते चिरम् । पुनः सृष्टौ भवेद्देवो वैराजो नाम नामतः । ब्रह्महत्यादिपापानि इह लोके कृतान्यपि । अकामतः कामतो वा तानि नश्यन्ति तत्क्षणात् । इह लोके दरिद्रो वा राज्यभ्रष्टोऽथ वा नृपः । उपोष्य तु विधानेन मेश्वरो राज्यभाग्भवेत् । वन्ध्या नारी भवेद्या तु अनेन विधिना शुभा । उपोषति भवेत्तस्याः पुत्रः परमधार्मिकः । अगम्यागमनं येन जानता ऽजानता कृतम् । स इमं विधिमास्थाय तस्मात्पापाद्विमुच्यते । ब्रह्मक्रियाया लोपेन बहुवर्षकृतेन वा । उपोष्येमां सकृद्भक्त्या वेदसंस्कारमाप्नुयात् । किं चात्र बहुनोक्तेन न तदस्ति महामुने । अप्राप्तं व्रतराजेन सत्यं सत्यं न संशयः ।' इह जन्मनि चारोग्यं धनं धान्यं वरास्त्रियः । भवन्ति विविधा यस्तु उपोषति विधानतः ।' इति धरणीव्रतेषु मत्स्यद्वादशीव्रतम् ।

अस्यामेवैकादश्यां भविष्योत्तरोक्तमरण्यद्वादशीव्रतं हेमाद्रौ-युधिष्ठिर उवाच । 'भगवन्ब्रूहि मे सम्यगरण्यद्वादशीव्रतम् । संप्राशनं सोपवासं सरहस्यं समन्त्रकम् ।' श्रीकृष्ण उवाच—'कौन्तेय यत्पुरा चीर्णं सीतया वनसंस्थया । व्रतं राघववाक्येन अगस्त्य ऋषिभावितम् । लोपामुद्रालये सर्वा मुनिपुत्र्यो बहुप्रजाः । भोजितास्तर्पिताः सर्वैराहारैः सर्वकामिकैः । तामिहैकमनाः पार्थ अरण्यद्वादशीं शृणु । मार्गशीर्षे सिते पक्षे एकादश्यां दिनोदये । स्नात्वा नरः सोपवासः कृत्वा पूजां जनार्दने । गन्धधूपान्नपुष्पैश्च दीपजागरणादिभिः । निशां नीत्वा प्रभाते च वनोद्देशेऽतिशोभने । सजले कृष्णसान्निध्ये वेदवेदाङ्गपारगम् । भोजयित्वा फलप्रायं स्वयं भुञ्जीत वाग्यतः । पञ्चगव्यं पूर्वमेव प्राशयेदथ तद्दिने । वर्षमेकं स संपूर्णं पारयित्वा युधिष्ठिर । श्रावणे कार्तिके माघे चैत्रे वाऽथ समुद्यमेत् । व्रती

---

१—द्वादशीशब्दो धरणीव्रतेष्वेकादशीपरः । २—तत्कालं ब्रह्मकालम् । ३— मेश्वरो लक्ष्मीश्वरः ।

पक्वान्नसंपूर्णान्माण्डकान्घृतपूरकान् । अन्नं स्वादु च सुस्विन्नं खण्डखाद्यादिसंयुतम् । भक्ष्यैर्नानाविधैः पार्थ संयुतं षड्रसेन तु । व्यञ्जनैः पत्रशाकैश्च शुष्कार्द्रैरतिशोभनैः । पानकैः पत्रसौरैश्च सुगन्धिस्वादुशीतलैः । फलैः कालोद्भवैः सर्वैर्यथाविभवमात्मनः । गत्वा वनं मुक्तजनं स्वादुतोयघनं च यत् । तत्र विप्रान्सुखासीनान्प्रागुदीच्यमुखाञ्छुचीन् । भोजयेद्दश च द्वौ च कृतपूजादिकक्रियः । अलाभे यतिमुख्यानां गृहस्थानपि भोजयेत् । सपत्नीकान्सदाचारानग्नियुक्तान्गुणप्रियान् । उद्दिश्य देवं गोविन्दं पृथग्द्वादशनामभिः । वासुदेवं हृषीकेशं विष्णुं दामोदरं हरिम् । त्रिविक्रमं च गोविन्दं पद्मनाभं जनार्दनम् । गोवर्धनधरं कृष्णं श्रीधरं क्रमशो नृप । प्रणवादिनमोन्तैश्च नामभिः पूजयेद्द्विजान् । गन्धपुष्पादिना पार्थ भक्त्या तद्भावितात्मना । भोजयित्वा शुभान्नानि स्वाचान्तांस्तान्सदक्षिणान् । प्रणम्याथ विसर्ज्यैतान्विष्णुर्मे प्रीयतामिति । ततोभुञ्जीतसहितो भृत्यैर्बन्धुजनेन च । आश्रितैरर्थिभिः पार्थ सामान्यैरथ वाग्यतः । एवं यः कुरुते सम्यगरण्यद्वादशीव्रतम् । सदेहान्तेविमानस्थो दिव्यकन्यासमावृतः । उद्धृत्यस्वपितॄंश्चापिश्वेतद्वीपं हरेः प्रिये । यत्र लोकाः पीतवस्त्राः श्यामदेहाश्चतुर्भुजाः । शंखचक्रगदापद्मव्यग्रहस्ताःसकौस्तुभाः । तार्क्ष्यासनाःसमुकुटा दिव्यकुण्डलमण्डिताः । नीलोत्पलोद्दामपद्ममालया ललितोरसः । लक्ष्मीधरा मेघवर्णाः केयूराङ्गदभूषणाः । तिष्ठन्तिविष्णुसामान्या यावदाभूतसंप्लवम् । तत्र भोगांश्चिरं भुक्त्वा पश्यन्विष्णुं सनातनम् । पुण्य शेषात्समायातःपृथिव्यां पृथिवीपते । सार्वभौमः श्रिया युक्तो राजा स्याद्राजपूजितः । तत्रापि पुनरेवेमामरण्यद्वादशीं शुभाम् । करोति द्वादशीं वासौ जन्मानि हरितत्परः । तदन्ते बन्धनिर्मुक्तो याति ब्रह्म सनातनम् । ये द्वादशीमुपवसन्ति सितामरण्यनाम्नीं वने द्विजवरानपि भोजयन्ति । साध्व्यः स्त्रियः सुचरिताभरणाश्च तेषां विष्णुः प्रसादमुपयाति ददाति मोक्षम् ।' इति भविष्योत्तरोक्तमरण्यद्वादशीव्रतंसमाप्तम् ।

अस्यामेवैकादश्यां वह्निपुराणोक्तं सुनामद्वादशीव्रतं हेमाद्रौ—अम्बरीष उवाच—'कथं सुनामभिर्देवो द्वादश्यां मुनिसत्तम । पूजितः केशवो मर्त्यैर्मुक्तिकामफलार्थिभिः ।' वसिष्ठ उवाच—'शृणुष्वैकमना भूयः सुनामद्वादशीं शुभाम् । सर्वपापहरां स्वर्ग्यां भुक्तिमुक्तिप्रदायिकाम् । मनसापि चिकीर्षन्ति द्वादशीं ये नरोत्तमाः । तेऽपि घोरं न पश्यन्ति पुनः संसारसागरम् । आद्यं सर्वव्रतानां तु वैष्णवानां नृपोत्तम । नरैःस्त्रीभिश्चकर्तव्यं विष्णोस्तुष्टिकरं परम् । मार्गशीर्षे शुभे मासि शुक्लपक्षे यतव्रतः ।

१ दद्यादिति शेषः ।

प्रथमं चैव गृह्णीयाद्द्वादशीं विधिना नरः।मनोवाक्कायचेष्टाभिः सुविशुद्धो जितेन्द्रियः। दशम्यां नियतं स्नात्वा प्रणिपत्य जनार्दनम्। हविष्यान्नकृताहारः शुचिर्भूत्वा भवेद्व्रती। उपलिप्ते शुचौ देशे भक्षयेद्दन्तधावनम् । उपोष्यैकादशीं सम्यक्पूजयित्वा जनार्दनम्। सुनामद्वादशीं देव अहं भोक्ष्ये परेऽहनि। एवं संकल्प्य नियमं प्रणम्य गरुडध्वजम्। दशम्यामेकभक्ताशी संयतः संवसेन्निशि। एकादश्यां ततः प्रातरेकचित्तः समाहितः। पूर्वं संपूजयेत्सूर्यं ततो दे[1]वं प्रपूजयेत् । नमस्ते देवदेवेश नमस्ते भक्तवत्सल। भास्कराय नमस्तुभ्यं रवयेऽर्काय भानवे। नमः सूर्याय देवाय नमस्ते सप्तसप्तये। एकस्मै हि नमस्तुभ्यमेकचक्ररथाय च।ज्योतिषां पतये नित्यं सर्वतेजोहराय च।दिवाकर नमस्तेऽस्तु प्रभाकर नमोऽस्तु ते।एवं संपूज्य विधिवत्पुष्पधूपानुलेपनैः।दीपैर्वस्त्रैः सुनैवेद्यैस्ततो विष्णुगृहं व्रजेत्। नैवेद्यं हरये दद्यात्फलमोदकफाणितैः। गीतवाद्यैर्हरिं हृष्टः प्रणम्य च मुहुर्मुहुः। एवं पूजां हरेः कृत्वा द्विजं ज्ञानप्रदायकम्। पूजयेदन्तरं नास्ति विप्रकेशवयोरपि। ततोऽव्रणं समालभ्य चन्दनेन नवं घटम् । स्रग्विणं तोयपूर्णं च न्यसेद्देवस्य संनिधौ । सनालं मौक्तिकाख्यं च वज्ररत्नं सुवर्णकम्। न्यस्य गर्भे सवस्त्रं तु पूजयेत्तत्र केशवम्। यस्य रोम्णि स्थिता मेघा सर्वे विषयपन्नगाः। सागराः कुक्षिदेशस्थाः सोऽत्रायातु जगत्पतिः। वनस्पतिरसो दिव्यः सर्वगन्धेषु चोत्तमः। घृतेन देवसंमिश्रो धूपोऽयं प्रतिगृह्यताम्। केशवः केशिहा दुष्टकंसदैत्यनिषूदनः। सर्वकामप्रदो देवः स मे पापं व्यपोहतु। एवमभ्यर्च्य देवेशं प्रणिपत्य क्षमापयेत्। द्वादश्यां गन्धतोयेन स्नापयित्वेह माधवम्। सर्वपापविनिर्मुक्तो वैष्णवीं लभते तनूम्। कृताभिषेकः पुण्यात्मा सम्यगभ्यर्च्य केशवम् । नवं सूतां तथा धेनुं ब्राह्मणायोपपादयेत्। केशवः प्रीयतां देवः केशिहन्ता महाद्युतिः। स तु मे भगवान्प्रीत इष्टान्कामान्प्रयच्छतु। एवं प्रदक्षिणं कृत्वा शृणु तस्यापि यत्फलम्। त्रिंशदब्दकृतं पापं हित्वा स त्रिविधं नरः। षष्टिवर्षसहस्राणि स्वर्गे मोदति देववत्। यदा कालादिहायाति स धर्मधनवान्भवेत्। अभावादथ धेनूनां तन्मात्रं कल्पयेत्ततः। तत्फलं हि विनिर्दिष्टं यथा शक्त्या तु दक्षिणा। विभक्त्या फलमाप्नोति भक्तिरेवात्र कारणम्। पौषे चैव तु मासे च कुर्यादेवं नरोत्तमः। समाहितमना भूत्वा रसधेनुप्रदायकः। आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं वर्त्म यत्तस्मान्नारायण इति स्मृतः। नारायणः प्रीयतां मे देवदेवो नरः सदा । इष्टकामप्रदो नित्यं स मे पापं व्यपोहतु। ततः प्रदक्षिणं कृत्वा ब्राह्मणान्भोजयेत्ततः। एवं हि क्रियमाणस्य तस्य पुण्यफलं शृणु।

---

१—देवं विष्णुम्।

षष्टिवर्षकृतं पापं स्वल्पं वा यदि वा बहु। हित्वा स्वर्गं समाप्नोति वर्षाणामयुतं शुभम्। माघस्यैव तु मासस्य द्वादशीं शुक्लपक्षतः। यः क्षिपेद्धि शुचिर्भूत्वा एकचित्तः समाहितः। स्नपने पूजने नित्यं ब्राह्मणानां च तर्पणे। प्रदाने नृपशार्दूल इमं मन्त्रमुदीरयेत्। मा लक्ष्मीश्च पुरात्रेयी भगिनी शशिनोऽनुजा। धवस्त्वमसि तस्यास्तु सर्वकामद माधव। प्रीयतां देवदेवो मे मधुकैटभसूदनः। कंसकेशिनिहन्ता च मम पापं व्यपोहतु। एवं यः कुरुते नित्यं तस्य पुण्यफलं शृणु। यावज्जन्मकृतं पापं हित्वा सर्वमशेषतः। दिव्यवर्षसहस्राणि स्वर्गे वसति षोडश। गुडधेनुप्रदो माघे इहायातः सदा सुखी। भवेद्राजा निरातङ्कः सर्वैश्वर्यसमन्वितः। तत्र विष्णुपरो भूत्वा क्रमान्मोक्षमवाप्नुयात्। फाल्गुनामलपक्षस्य द्वादश्यां नियतः शुचिः। पूजयित्वा विधानेन गन्धपुष्पादिना हरिम्। तिलधेनुं ततो दद्याद्वृषं वापि सुभक्तितः। मन्त्रेणानेन राजेन्द्र गोविन्दः प्रीयतामिति। गवां भक्तोऽसि गोस्वामी गोवासो गोधृतालयः। सर्वकामप्रदो नित्यं स मे पापं व्यपोहतु। ततः प्रदक्षिणीकृत्य शृणु पापं यथा तथा। बलीवर्दसहस्राणां दशानां धुरवाहिनाम्। दत्तैस्तत्फलमाप्नोति द्वादश्यां यद्भवेन्नृप। दिव्यवर्षसहस्राणि स्वर्गे तिष्ठति देववत्। चैत्रस्य द्वादशीं शुक्लां समुपोष्य नृपोत्तम। स्नात्वा संपूजयेद्विष्णुं जगतोन्तरचारिणम्। पूर्वोक्तविधिना स्नात्वा गोमूत्रैर्गोमयेन वा। स्नापयित्वाऽमृतैश्चैव पञ्चभिर्गन्धसंयुतैः। जलैः पश्चात्प्रपूज्यैवं गन्धधूपविलेपनैः। पुण्यवासोभिरेवं हि मन्त्रेणानेन बुद्धिमान्। व्यापकस्त्वं हि भगवान्साधूनां रक्षणाय च। दुर्वृत्तांश्च विनिर्जेतुमसि विष्णुरतो हरिः। विष्णुर्भवतु मे प्रीतो जिष्णुर्देवः सनातनः। सर्वपापविनाशाय विष्णुर्मे प्रीयतामिति। मधुधेनोरभावाच्च शक्तितः पात्रमेव च। दत्त्वा यत्फलमाप्नोति तदिहैकमनाः शृणु। पूर्वजन्मनि यत्पापमिह जन्मनि सांप्रतम्। वर्तते सकलं हित्वा स्वर्गलोके महीयते। वैशाखस्य तु मासस्य पूजयेन्मधुसूदनम्। पूर्वोक्तविधिना राजन्सौवर्णं मधुसूदनम्। जलकुम्भे तु संस्थाप्य मन्त्रेणानेन पूजयेत्। एकार्णवे जले धातुर्हृता वेदाः पुरा हरेः। मधुना तेन हतः सोऽपि तेनासि मधुसूदनः। स मे भवतु सुप्रीतो देवदेवः सनातनः। सर्वपापापनोदाय प्रीयतां मधुसूदनः। घृतधेनुमथो दत्त्वा ब्राह्मणान्भोजयेत्ततः। ततः प्रदक्षिणं कृत्वा विप्रं दत्त्वा तथैव गाम्। एवं तु क्रियमाणस्य तस्य पुण्यफलं शृणु। कपिलायाः सहस्रस्य सम्यग्दत्तस्य पुष्करे। यत्फलं तदवाप्नोति भक्तियुक्तो न संशयः। यावदिन्द्रो वसेत्स्वर्गे तावदेव स तिष्ठति।

१—पात्र मधुयुतम्। २—मासस्य द्वादश्या प्रकरणात्।

ज्येष्ठस्यैवं तु मासस्य शुक्लपक्षे तु द्वादशीम् । पूजयेद्विधिवद्भक्त्या समुपोष्य त्रिविक्रमम् । जलधेनुमथो दत्त्वा विप्राय नियतः शुचिः । यज्ञभागभुजो दैत्यान्संनिहत्य क्रमैस्त्रिभिः । त्रैलोक्यमाहृतं तस्मात्तेनासि त्वं त्रिविक्रमः । त्रिविक्रमं त्रिलोकेश प्रीणयामि त्रिविक्रमम् । ततः प्रदक्षिणं कृत्वा ब्राह्मणेभ्यश्च दक्षिणाम्।दत्त्वा संपूजयेत्तांस्तु शृणु तस्यापि यत्फलम् । वाजपेयस्य यज्ञस्य सम्यगिष्टस्य पार्थिव।तत्फलं लभते मर्त्यः परत्र च सुखी भवेत् । वामनं तु तथाषाढे समुपोष्य प्रयत्नतः । द्वादश्यां नियताहारो वामनं तत्र पूजयेत् । हिताय सर्वदेवानामादित्यः कामदो यथा । तथा त्वं भव मे देव वामनो बलिबन्धनः । तिलधेनुं ततो दद्याद्वामनः प्रीयतामिति । तदभावात्तथा पात्रं यथाशक्त्या सदक्षिणम् । पूर्वजन्मकृतं पापमिहजन्मकृतं च यत् । तत्सर्वं विनिहत्याशु परत्रैव शुभां गतिम् । श्रावणस्य तु मासस्य द्वादश्यां शुक्लपक्षतः । यः क्षिपेन्नियतो भूत्वा समुपोष्य जनार्दनम् ।समर्चयेद्यथाशक्ति पूर्वोक्तविधिना ततः। धेनुं सर्वगुणोपेतां ब्राह्मणाय निवेदयेत् । मन्त्रेणानेन राजेन्द्र पुराणविहितेन च । समासाद्य यतो लक्ष्मीं लोकेभ्यः क्षीरसागरे।स्वपिषि श्रावणे मासि श्रीधरोसि जगत्पते । श्रावणे श्रीधरो देवः श्रीवत्सः श्रीनिकेतनः । प्रीयतां हि श्रियः कान्तो गतिमिष्टां ददातु मे । गवां दशसहस्रेण पात्रदत्तेन यत्फलम्।सकलं लभते मर्त्यो भक्तियुक्तो न संशयः।स्वर्गे सुविपुलान्भोगान्भुनक्ति सुरराडिव। तेनैव विधिना राजन्मासे भाद्रपदे तथा।समुपोष्य नरो भक्त्या हृषीकेशं प्रपूजयेत् । मुक्ताधेनुं ततो दद्याद्यथाविभवविस्तरम् । हृषीकाणीन्द्रियाण्याहुस्तेषामीशो जगत्पतिः । करोति कर्तृभूतोऽसौ हृषीकेशो भवांस्ततः । देवदेवं हृषीकेशं भूतेषु प्रभवाप्ययम् । प्रीणयामि सुसंप्रीतो मम पापं व्यपोहतु । एवं प्रदक्षिणं कृत्वा शृणु तस्यापि यत्फलम् । इहजन्मकृतं पापं पूर्वजन्मकृतं च यत् । सर्वं तद्भस्मसात्कृत्वा विष्णुलोके महीयते । द्वादश्यां समुपोष्यैवं पद्मनाभं तथाश्विने । पूजयेद्विधिवद्भक्त्या गन्धधूपविलेपनैः । गन्धधेनुं ततो दद्यात्कर्पूरागुरुचन्दनैः । कुङ्कुमेन हि राजेन्द्र वित्तशाठ्यं विवर्जयेत् । एकार्णवे गते तोये स्वपतो यस्य वेधसः । निवासाय भवन्नाभ्यां पद्मनाभोऽसि हेऽच्युत । प्रीयतां पद्मनाभो मे दुष्कृतं चोपशाम्यतु । इत्युक्त्वा तं समभ्यर्च्य दद्याद्धेनुं द्विजातये । इत्येवं क्रियमाणस्य तस्य पुण्यमतः शृणु । सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु । दग्ध्वा तत्सकलं भूप विष्णुलोकं स गच्छति । कार्तिकस्य तु मासस्य एकादश्यामुपोषितः । प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः ।

१–उद्दिश्येति शेषः । २ -पात्रं तिलपात्रम् ।

नृत्यैर्गीतैस्तथा वाद्यैर्ऋग्यजुः साममङ्गलैः । वीणापणवशब्दैश्च पुराणश्रवणेन च । वासुदेवकथाभिश्च स्तोत्रै रम्यैश्च वैष्णवैः।सुभाषितैरिन्द्रजालैर्भूमिशोभाभिरेव च।पुष्पैर्धूपैश्चनैवेद्यैर्दीपवृक्षैश्च शोभनैः।होमैर्भक्ष्यैरपूपैश्च फलैः शाकैश्च पायसैः।इक्षोर्विकारैर्मधुना द्राक्षाक्षोटैः सदाडिमैः। कुबेरकस्य मञ्जर्या मालत्या लवणेन च । हयाभ्यां श्वेतरक्ताभ्यां चन्दनाभ्यां च सर्वदा।कुङ्कुमालक्तकाभ्यां च रक्तसूत्रैः सकङ्कणैः । तथानानाविधैः पुष्पैर्द्रव्यैर्वा विक्रयाहृतैः । तस्यां रात्र्यां व्यतीतायां द्वादश्यामरुणोदये । स्नात्वा नदीजलैः पुण्यैः प्रतिमां स्नापयेत्ततः । उत्थितां च परां रम्यां ताम्रां रौप्यां सुवर्णजाम् । वैष्णवी प्रतिमा यत्र चित्रगुप्ता क्वचिद्भवेत् । तत्र स्नानादिपूजा च देयां कार्या च विष्णवे।आदौ घृतेन तैलेन मधुना तदनन्तरम् । दध्ना क्षीरेण च तथा पञ्चगव्येन शास्त्रवित् । उद्वर्तनं माषचूर्णं मसूरदलकानि च । लोध्रं कालीयकं चैव तगरं वर्णकं तथा । सर्षपाश्च प्रियंगुश्च मातुलुङ्गरसस्तथा । सर्वौषध्यः सर्वगन्धाः सर्वबीजानि काञ्चनम् । मङ्गलानि यथालाभं रत्नानि च कुशोदरम् । हस्तिदन्तोद्धृता मृच्च वृषश्रृंगोद्धृता तथा । नदीतीराद्गतस्थानाद्वल्मीकात्संगमाद्ध्रदात् । इन्द्रस्थानाच्च सरसस्तथा पर्वतमस्तकात् । एताभिः स्थाप्य देवेशं दद्याद्गोरोचनां शुभाम् । तथा च कलशा देया यथा भाग्वत्स्वलंकृताः । जातीपल्लवसंयुक्ताः स फलाश्च सकाञ्चनाः।पुण्याहवेदशब्देन वीणावेणुरवेण च । शब्देन मधुरेणैव सूतमागधवन्दिनाम्।एवं संस्नाप्य गोविन्दं स्वनुलिप्तं स्वलंकृतम् । सुखवासं पूजयेत्तं सुमनोभिश्च कुङ्कुमैः । दीपैर्धूपैर्मनोज्ञैश्च पायसेन तु भूरिणा । मात्रारत्नप्रदानैश्च होमैः पुष्पैः सदक्षिणैः । वासोभिर्भूषणैर्हयैर्गोभिरश्वैर्गजैरपि । ब्राह्मणाः पूजनीयाश्च विष्णोराद्याः सुमूर्तयः । विष्णो रात्रौ प्रसुप्तस्य दामोदरगतं यतः । ब्रह्माण्डस्य तु तेनासि दामोदर इति स्मृतः । दामोदर इमां धेनुं गृह्णीयाः स्वयमेव हि । द्विजरूपेण ते विष्णो प्रकृत्येषा सनातनी । इत्येवं पृथिवीदानफलं प्राप्नोति मानवः । सुवर्णस्य महार्घे नु दत्त्वा नृपवरोत्तमः । हत्वा पापान्यशेषाणि शतजन्मान्तराणि वै । वैष्णवं लोकमायाति यावदिन्द्राश्चतुर्दश । सम्यगत्र-व्रते चीर्णे सप्तजन्मानुगं फलम् । ददाति भगवान्विष्णुः क्रमान्मोक्षं जनेश्वर।ब्राह्मणान्भोजयेद्भक्त्या भक्ष्यैरुच्चावचैरपि।तत्र प्रदक्षिणं

---

१–अक्षोट मदनफलाकार स्निग्धं मधुरफलम् अक्षोटेति प्रसिद्धम् । २–कुबेरकोऽर्जकः । ३–चित्रगुप्ता चित्रलिखिता । ४–कालीयक पीतचन्दनम् । ५–वर्णकं कुकुमम् । ६–इन्द्रस्थानं यत्रेन्द्रयष्टिरारोपिता । ७–विभक्तिलोप आर्ष. । ८–उच्चावचमनेकविधम् ।

कृत्वा यथाशक्त्या च दक्षिणाम् । कालशा द्वादशैतेभ्यो ब्राह्मणेभ्यः प्रदापयेत् ॥ वस्त्रेण वेष्टितग्रीवान्हैमगर्भोपशोभितान् । दधिक्षीरयुतांश्चैव सगुडान्नृप भूरिशः ॥ शक्तिर्यथा तथा दद्याद्भक्तिरेवात्र कारणम् । प्रसङ्गेनापि यो राजन्सुनामद्वादशीं नरः । करोति पुण्यभागी स यथा दैत्यो भवेद्बलिः ॥ एवं यः कुरुते राजन्सुनामद्वादशीं नरः । राजसूयस्य यज्ञस्य फलं समधिकं भवेत् । सर्वदानेषु यत्पुण्यं यच्च पुण्यं तपोवने ॥ सर्वतीर्थेषु यत्पुण्यं तत्पुण्यं समुदाहृतम् ॥ गावो द्वादश दातव्या वस्त्रयुग्मानि काञ्चनम् ॥ अलाभे चैव गामेकां पात्रं वा स्वर्णसंयुतम् । समासेन तथाप्येवं चञ्चलं जीवितं वयः । बहुविघ्नानि धर्मस्य कर्तुश्छिद्रं प्रजायते । एतज्ज्ञात्वा तु मेधावी व्रते युज्येत यत्नतः । न तस्य वित्तलाभोऽस्ति भक्तिग्राह्योऽस्ति केशवः ॥ अनेन विधिना यस्तु द्वादशीं परिवत्सरम् । कृत्वा नरं परं याति विष्णुलोकमनामयम् । सुनामद्वादशी चैषा व्रतानामुत्तमा नृप । आद्या नरैस्तु कर्तव्या तोषयद्भिर्जनार्दनम् । यश्चैनां कीर्तयेत्पुण्यां शृणुयाद्वापि द्वादशीम् । तावुभौ गच्छतः स्वर्गं कर्ता विष्णुपुरं व्रजेत् ।' इति वह्निपुराणोक्तं सुनामद्वादशीव्रतम् ।

अथ ब्रह्माण्डपुराणोक्तं मार्गशीर्षशुक्लैकादशीव्रतम् । युधिष्ठिर उवाच– 'वन्दे विष्णुं प्रभुं साक्षाल्लोकत्रयसुखप्रदम् ॥ विश्वेशं विश्वकर्तारं पुराणपुरुषोत्तमम् ॥ वद मे देवदेवेश संशयोऽस्ति महान्मम । लोकानां च हितार्थाय पापानां क्षयकारणम् । मार्गशीर्षे सिते पक्षे द्वादशी चैव का भवेत् । किं नाम को विधिस्तस्याः को देवस्तत्र पूज्यते । एतदाचक्ष्व मे स्वामिन्विस्तरेण यथातथम् ।' श्रीकृष्ण उवाच–'साधुस्त्वं चैव भो राजन्साधु ते विमलं यशः । कथयिष्यामि राजेन्द्र हरिवासरमुत्तमम् । उत्पन्ना च सिते पक्षे द्वादशी मम वल्लभा । मार्गशीर्षे समुत्पत्तिर्मम देहसमुद्भवा । मुरस्य च वधार्थाय उत्पन्ना राजवल्लभा । कथिता च मया सा वै त्वदग्रे राजसत्तम पूर्वमेकादशी राजंस्त्रैलोक्ये सचराचरे । मार्गशीर्षासिते पक्षे उत्पत्तिरिति नामतः । अतः परं प्रवक्ष्यामि मार्गशीर्षसिते तु या ॥ यस्याः श्रवणमात्रेण वाजपेयफलं लभेत् । प्रसिद्धा मोक्षनाम्नीति सर्वपापहरा परा । देवं दामोदरं चैव पूजयेच्च प्रयत्नतः । तुलस्या मञ्जरीभिश्च धूपैर्दीपैः प्रयत्नतः । तत्रापि पूजने चैव गीतनृत्यैस्तथा परैः । शृणु राजेन्द्र वक्ष्यामि कथां पौराणिकीं शुभाम् ॥ अधोयोनिगताः सर्वे पितृमातृसुतास्तथा । अस्याः पुण्यप्रभावेण स्वर्गं यान्ति न संशयः । एतस्मात्कारणादस्या महिमानं शृणुष्व तत् । पुरा तु नगरे रम्ये गोलेके न्यवसन्नृपः । वैखानसेति राजर्षिः पुत्रवत्पालयन्प्रजाः । द्विजाश्च न्यवसंस्तत्र चतुर्वेदपरायणाः । ऋद्धिमन्तस्सुतस्तस्य वैखानसस्य महात्मनः ॥ एवं स राज्यं

कुर्वाणो रात्रौ तु स्वप्नमध्यतः । ददर्श पितरं स्वं तु अधोयोनिगतं नृपः । एवं दृष्ट्वा तु तं तत्र विस्मयोत्फुल्ललोचनः।कथयामास वृत्तान्तं द्विजाग्रे स्वप्नसंभवम्।' राजोवाच— 'मया तु स्वपिता दृष्टो नरकेऽथ गतो द्विजाः।तारयस्वेति मां तात अधोयोनिगतं त्वितः । इति ब्रुवाणः स तदा मया दृष्टः पिता स्वयम्।तदा प्रभृति भो विप्र नाङ्गे शर्म लभामहे।एतद्राज्यं मम महदसह्यं ससुखं तथा । अश्वा गजा रथाः सर्वे मां ते वै रोचयन्ति न।कोशोऽपि न सुखायैति न किंचित्सुखदं मम।न दारा न सुता मह्यं रोचयन्ति द्विजोत्तमाः।किं करोमि क्व गच्छामि शरीरं मे तु दह्यते । दानं व्रतं तपो योगं येनैव मम पूर्वजाः । मोक्षं यान्ति च ये चैव तदेवं कथयन्तु मे । किं तस्य जीवितं लोके सुपुत्रस्य बलीयसः । पिता तु यस्य नरके तस्य जन्म निरर्थकम् ।' ब्राह्मणा ऊचुः—'पर्वतस्य मुनेरत्र आश्रमो निकटे नृप । गम्यतां राजशार्दूल भूतं भव्यं विजानतः । जगाम तत्र यत्रासौ आश्रमे पर्वतो मुनिः । ब्राह्मणैर्वेष्टितस्तत्र पूजाभिश्च समंततः । आश्रमो विपुलस्तस्य मुनिभिः संनिवेशितः । ऋग्वेदैश्च यजुर्वेदैः सामाथर्वणकोविदैः । वेष्टितो मुनिभिस्तत्र द्वितीय इव पद्मजः । दृष्ट्वा तु मुनिशार्दूलं राजा वैखानसस्तदा । जगाम अवनीं मूर्ध्ना दण्डवत्प्रणिपत्य च । पप्रच्छ कुशलं तत्र सप्तस्वङ्गेष्वसौ मुनिः । राज्ये निष्कण्टकत्वं च राजसौख्यसमन्वितम् ।' राजोवाच—'तव प्रसादाद्भो विप्र कुशलं त्वङ्गसप्तके । भवनेष्वनुकूलत्वं कोशलेष्वप्यविघ्नता । मया स्वप्नेष्वयं दृष्टो जनको दुर्गतिं गतः । केनापि व्रतदानेन मोक्षो भवति तस्य वै । एष मे संशयो ब्रह्मन्हृद्दोलां समुपागतः । एतच्छ्रुत्वा नृपवचः पर्वतो मुनिसत्तमः । ध्यानस्तिमितनेत्रोऽसौ भूतं भव्यं विचिन्तयन् । मुहूर्तमेकं ध्यात्वा च प्रत्युवाच नृपोत्तमम्।' मुनिरुवाच—'जानेऽहं तव राजेन्द्र पितुस्ते पूर्वकर्मणः । तवाद्य जन्मनि पिता क्षत्रियः सुसमाहितः । कामासक्तेन कस्याश्चिदृतुभङ्गः कृतः स्त्रियः । त्रायस्व मेति जल्पन्त्या ऋतुदानान्नराधिप । तेनैव तव पित्रा तु न दत्तमृतुदानकम् । कर्मणा तेन सततं नरके पतितस्त्वयम् ।' राजोवाज—'केनैव व्रतदानेन मोक्षस्तस्य महामुने । निरयात्पापसंस्थानात्तन्ममाचक्ष्व पृच्छतः ।' मुनिरुवाच—'मार्गशीर्षे सिते पक्षे मोक्षानामेति नामतः । सर्वैस्तु तद्व्रतं कृत्वापित्रे पुण्यंप्रदीयताम् । यस्याः पुण्यप्रभावेणमोक्षस्तस्यभविष्यति । मुनेर्वाक्यं ततः श्रुत्वा नृपः स्वगृहमागतः।आग्रहायणिके[1]ःकृच्छ्रात्प्राप्तो भरतसत्तम । अन्तःपुरवरैः सर्वैः

---

1—आग्रहायणिक. मार्गशीर्ष. ।

पुत्रदारैस्तथा नृप। व्रतं कृत्वा विधानेन पुण्यं दत्तं नृपाय तत्। तस्मिन्दत्ते तदा पुण्ये पुष्पवृष्टिरभूद्दिवः। वैखानसपिता तत्र गतः स्वर्गं स्तुतो गणैः। राजानमन्तरिक्षाच्च विमलाङ्गोऽभ्यभाषत। स्वस्ति स्वस्तीति पुत्र त्वामित्युक्त्वा स दिवं गतः। एवं यः कुरुते राजन्मोक्षामेकादशीमिमाम्। तस्य पापं क्षयं याति मृतो मोक्षमवाप्नुयात्। नातः परतरा काचिन्मोक्षदा विमला शुभा। पुण्यसंख्यां तु राजेन्द्र न जानेऽहं परंतप। पठनाच्छ्रवणात्तस्या वाजपेयफलं लभेत्। चिन्तामणिसमा ह्येषा स्वर्गमोक्षप्रदायिनी।' इति ब्रह्माण्डपुराणे मार्गशीर्षशुक्लपक्षे मोक्षैकादशीमाहात्म्यं समाप्तम्।

अथ पौषकृष्णैकादश्या व्रतकथोच्यते। युधिष्ठिर उवाच—'पौषस्य कृष्णपक्षे तु द्वादशी का भवेत्प्रभो। किंनामको विधिस्तस्याः को देवस्तत्र पूज्यते। एतदाचक्ष्व मे स्वामिन्विस्तरेण जनार्दन।' श्रीकृष्ण उवाच—'कथयिष्यामि राजेन्द्र भवतः स्नेहकारणात्। तथा तुष्टिर्न मे राजन्क्रतुभिश्चाप्तदक्षिणैः। यथा मां तुष्टिरायाति एकादश्या व्रतेन वै। तस्मात्सर्वप्रयत्नेन कर्तव्यं हरिवासरम्। पौषस्य कृष्णपक्षे तु द्वादशी या भवेन्नृप। तस्याश्चैवातिमाहात्म्यं शृणुष्वैकाग्रमानसः। आब्दिकाश्चैव भो राजन्नेकादश्यो भवन्ति हि। तासामेव तु सर्वासां विकल्पं नैव कारयेत्। एकादश्यास्तथाप्यस्याः शृणु राजन्कथानकम्। अतःपरं प्रवक्ष्यामि पौषे या कृष्णद्वादशी। लोकानां च हितार्थाय कथयामि विधिं तथा। पौषस्य कृष्णपक्षे वै सफलानाम नामतः। नारायणोऽयं देवोऽस्याः पूजनीयः प्रयत्नतः। पूर्वेण विधिना राजन्कर्तव्यैकादशी जनैः। नागानां च यथा शेषः पक्षिणां गरुडो यथा। देवानां च यथा विष्णुर्द्विपदां ब्राह्मणो यथा। यथाऽश्वमेधो यज्ञानां तीर्थानां जाह्नवी यथा। व्रतानां च तथा राजन्नेकादशी विशेषतः।' वाराहपुराणे—'ते जना भरतश्रेष्ठ मम पूज्याश्च सर्वशः। हरिवासरसंयुक्ता वर्तन्ते ये जना भृशम्। सफलानाम नामेति तस्याः पुण्यं शृणुष्व तत्। फलैर्मां पूजयेत्तत्र कालदेशोद्भवैः शुभैः। नारिकेलफलैः शुद्धैस्तथा वै बीजपूरकैः। जम्बीरैर्दाडिमैश्चैव तथा पूगफलैरपि। लवङ्गैर्विविधैश्चान्यैस्तथा चाम्रादिभिः फलैः। पूजयेद्देवदेवेशं धूपदीपैर्यथाक्रमम्। फलैश्च दीपदानं च विशेषेण प्रकल्पयेत्। रात्रौ जागरणं तत्र कर्तव्यं च प्रयत्नतः। यावदुन्मीलयन्नेत्रे तावज्जागर्ति यो निशि। एकाग्रमानसो भूत्वा तस्य पुण्यं शृणुष्व तत्। तत्समो नास्ति वै यज्ञस्तीर्थं तत्सदृशं न हि। तत्समं च व्रतं किंचिदिह लोके नराधिप।' गरुडपुराणे 'पञ्चवर्षसहस्राणि तपस्तप्तेन यत्फलम्। तत्फलं समवाप्नोति सफलाया व्रतेन वै। श्रूयतां राजशार्दूल सफलायाः कथानकम्। चम्पावतीति विख्याता पुरा माहिष्मतस्य च। माहिष्मतस्य राजर्षेश्चत्वारश्चाभवन्सुताः।

तेषां मध्ये तु यो ज्येष्ठः स महापातकैर्युतः । परदारानुगामी च वेश्यासङ्गरतः सदा । पितुर्द्रव्यं स पापिष्ठोऽनाशयच्च मुहुर्मुहुः। असद्वृत्तिरतो नित्यं देवताद्विजनिन्दकः।वैष्णवानां च देवानां नित्यं निन्दारतोऽत्र वै।ईदृग्विधं तदा दृष्ट्वा पुत्रं माहिष्मतो नृपः।लुम्पको नामनाम्नेति कृतवानभ्यमर्षितः।राज्यान्निष्कासितस्तेन पित्रा चैवापि बन्धुभिः। तस्यैव परिवारैस्तु त्यक्तो राज्ञो भयादिति । लुम्पकोऽपि तदा त्यक्तश्चिन्तयामास एकतः । किं करोमि क्व गच्छामि त्यक्तः पित्रा च बान्धवैः। इति चिन्तापरो भूत्वा मतिं पापे तदाऽकरोत्। मयाऽवगम्यते सम्यग्वनं त्यक्त्वा पुरं पितुः।तस्य चैव पुरं सर्वं व्यापायिष्ये पितुस्तथा । इत्येकं स मतं कृत्वा लुम्पको दैवपातितः । निर्जगाम ततस्तस्माद्गतोऽसौ गहने वने । जीवघातकरो नित्यं नित्यं स्तेयपरायणः। सर्वं च नगरं तेन मुषितं पापकर्मणा । गृहीतश्च परित्यक्तो राज्ञो माहिष्मतेर्भयात् । जन्मान्तरस्य पापेन राज्यभ्रष्टः सपापकृत् । आमिषाशिरतोनित्यंरतो वै फलभक्षणे । आश्रमस्तस्य दुष्टस्य वासुदेवस्य संमतः । अश्वत्थो वर्तते तत्र जीर्णो बहुलवार्षिकः।देवत्वं तस्य वृक्षस्य वर्तते तद्वने महत् । तत्रैव च वसंश्चासौ लुम्पकः पापबुद्धिमान् । एवं कालक्रमेणैव वसतो दुष्टचेतसः । विकर्मणिरतस्यास्य कुर्वतः कर्म निन्दितम्।पौषस्य कृष्णपक्षे तु पूर्वाह्णे सफलादिने।दशम्यांदिवसे राजन्निशायां शीतपीडितः।लुम्पको वस्त्रहीनो वै शीतेन परिपीडितः।पाड्यमानस्तु शीतेन अश्वत्थस्य समीपतः। न निद्रा न सुखं तस्य गतप्राण इवाभवत्। ताड्यन्ते दशनैर्दन्ता एवं च गमिता निशा। भानूदये च तेनापि न संज्ञा प्राप्यते तदा। लुम्पको गतसंज्ञस्तु सफलाया दिने तदा । मध्याह्नसमये प्राप्ते संज्ञां लेभेऽथ लुम्पकः। उन्मील्य नयने सम्यगुत्थितोऽसौ तदासनात् । स्खलितश्च पदन्यासैः क्षीबवच्चलितो मुहुः । वनमध्ये गतस्तत्र क्षुत्तृषापीडितोऽभवत् । न शक्तिर्जीवघातेऽस्य लुम्पकस्य दुरात्मनः । फलानि भूमिपतितान्याजहार स लुम्पकः । यावत्स आगतस्तत्र तावदस्तमगाद्रविः । किं भविष्यत्युवाचेति विललापातिदुःखितः । फलानि तानि सर्वाणि वृक्षमूले न्यवेदयत् ।-प्रत्युवाच फलैरेभिः प्रीयतां भगवान्हरिः । उपविष्टो लुम्पकश्च न निद्रां लभते निशि । रात्रौ जागरणं मेने भगवान्मधुसूदनः । फलानां पूजनं मेने सफलायां तिथौ व्रतम्।इति कृत्वा लुम्पकस्तु अकस्माद्व्रतमुत्तमम्।तेन व्रतप्रभावेण प्राप्तं राज्यमकण्टकम्। पुण्येन सफलायास्तु यथा प्राप्तं तथा शृणु। रवेरुदयवेलायां दिव्यो वाजी जगाम ह। दिव्यवस्तुपरीवारो लुम्पकस्य समीपतः। तस्थौ स तुरगो राजन्वागुवाचाशरीरिणी। प्राप्नुहि त्वं नृपसुत स्वं राज्यं हतकण्टकम् । वासुदेवप्रसादेन सफलायाः प्रसादतः ।

पितुः समीपं गच्छ त्वं कुरु राज्यमकण्टकम् । तथेत्युक्त्वा त्वसौ तत्र दिव्यरूपधरोऽभवत् । कृष्णे मतिश्च तस्यासीत्परमा वैष्णवी तथा । दिव्याभरणभूषोऽसौ तातं नत्वा स्थितो गृहे । वैष्णवाय तदा दत्तं पित्रा राज्यमकण्टकम् । कृतं राज्यं तु तेनैव वर्षाणि सुबहून्यपि। हरिवासरसंलीनो विष्णुभक्तिरतः सदा।मनोज्ञास्तस्य पुत्रास्तु दाराःकृष्णप्रसादतः । पश्चाद्राज्यमसौ त्यक्त्वा पुत्रे राज्यं समर्पयत्। वनं गतः संयतात्मा विष्णुभक्तिपरायणः। साधयित्वा तथात्मानं विष्णुलोकं जगाम ह। गतः कृष्णस्य सांनिध्ये यत्र गत्वा न शोचति। एवं ये वै प्रकुर्वन्ति सफलैकादशीं तथा।इह लोके यशः प्राप्य अन्ते मोक्षमवाप्नुयुः । धन्यास्ते मानवा लोके सफलायामुपोषकाः । तेषां च जन्म सफलमेवमेव न संशयः । पठनाच्छ्रवणाद्वापि करणाच्च विशांपते । राजसूयफलं यस्मात्सदा प्राप्नोति मानवः।' इति श्रीपद्मपुराणे पौषसफलाकृष्णैकादशीमाहात्म्यं समाप्तिमगमत् ।

अथ पौषशुक्लैकादशी । सा च मन्वादिः । यथोक्तम्– 'एकादशी पौषे' इति । अथ पौषशुक्लैकादशीव्रतकथोच्यते। युधिष्ठिर उवाच–'कथिता चैव भोः कृष्ण सफलैकादशी शुभा । कथयस्व प्रसादेन पौषशुक्लस्य या भवेत् । किं नाम को विधिस्तस्याः को देवस्तत्र पूज्यते । कस्मै तुष्टो हृषीकेशस्त्वमेव पुरुषोत्तम।' श्रीकृष्ण उवाच– "शृणु राजन्प्रवक्ष्यामि पौषशुक्लस्य या भवेत्।कथयामि महाराज लोकानां च हिताय च। पूर्वेण विधिना राजन्कर्तव्यैषा प्रयत्नतः।पुत्रदा नाम नामेति सर्वपापहरा परा।नारायणोऽधिदेवोऽस्याःकामदः सिद्धिदायकः।नातः परतरा काचित्त्रैलोक्ये सचराचरे।विद्यावन्तं यशस्वन्तं करोति च नरं हरिः।शृणु राजन्प्रवक्ष्यामि कथां पापहरां पराम्।पुरी भद्रावती नाम राजा वै वसुकेतुमान् । तस्य राज्ञोऽथ राज्ञी च शैब्यानाम प्रवर्तते। पुत्रहीनेन राज्ञा च कालो नीतो मनोरथैः । नैवात्मजं नृपो लेभे वंशकर्तारमेव च।तेनैव राजधर्मेण चिन्तितं बहुकालतः । किं करोमि क्व गच्छामि सुतप्राप्तिः कथं भवेत् । न राष्ट्रे न पुरे सौख्यं लेभे राजा सुकेतुमान् । शैब्यया कान्तया सार्धं प्रत्यहं दुःखितोऽभवत्। तावुभौ दम्पती नित्यं चिन्ताशोकपरायणौ । पितरोऽस्य जलं दत्तं कवोष्णमुपभुञ्जते । राज्ञः पश्चाच्च कौन्तेय कोऽस्माकमनुतर्पयेत् । इत्येवं संस्मरन्तोऽस्य पितरो दुःखिताभवन् । न बान्धवा न मित्राणि नामात्याः सुहृदस्तथा । रोचयन्त्यस्य भूपस्य न गजाश्वपदातयः । नैराश्यं भूपतेस्तस्य नित्यं मनसि वर्तते । नरस्य

१–संधिरार्षः ।

पुत्रहीनस्य नास्ति वै जन्मनः फलम् । अपुत्रस्य गृहं शून्यं हृदयं दुःखितं सदा । पितृदेवमनुष्याणां नानृणत्वं सुतं विना । तस्मात्सर्वप्रयत्नेन सुतमुत्पादयेन्नरः । इह लोके यशस्तेषां परलोके शुभा गतिः । येषां च पुण्यकर्तॄणां पुत्रजन्म गृहे भवेत् । आयुरारोग्यसंपत्तिस्तेषां लोके प्रवर्तते । पुत्रजन्म तु येषां च लोकानां जन्मकारिणाम् । तया विना न च प्राप्तिर्मम भक्त्या नृपोत्तम । पुत्रजन्म भवेन्नृणां भवेज्जन्मनि जन्मनि । इति श्रुत्वा इति स्मृत्वा न शर्म लभते नरः । प्रत्यूषेऽचिन्तयद्राज्ञी निशीथेऽचिन्तयत्ततः । स्वयमात्मनि नाशं तु चिन्तयामास केतुमान् । आत्मघाते दुर्गतित्वं चिन्तयित्वा तदा नृपः । दृष्ट्वात्मदेहपलितमपुत्रत्वं तथैव च । पुनर्विचार्यात्मबुद्ध्या आत्मनो हितकारणम् । अश्वारूढस्ततो राजा जगाम गहनं वनम् । पुरोहितादयः सर्वे न जानन्ति गतं नृपम् । गम्भीरे विपिने राजा मृगपक्षिनिषेविते । विचरन्स तदा राजा वनवृक्षानलोकयत् । वटानश्वत्थबिल्वांश्च खर्जूरान्पनसांस्तथा । बकुलान्सप्तपर्णांश्च तिन्दुकांस्तिलकानपि । शालतालतमालांश्च सरलांश्चम्पकान्नृपः । इङ्गुदीं लकुचांश्चैव ककुभांस्तिलकांस्तथा । शल्लकीकरमर्दांश्च पलाशान्कदलीस्तथा । शाकांश्च देवदारूंश्च शोभितान्ददृशे नृपः । मृगव्याघ्रवराहांश्च सिंहांश्छागान्मृगानपि । गवयान्कृष्णसारांश्च शृगालाञ्छशकानपि । वनमानवमार्जाराञ्छल्लकाञ्छरभानपि । ददर्श भुजगानत्र वल्मीकादर्धनिःसृतान् । तथा वनगजान्मत्तान्कलभैः सह संगतान् । यूथपांश्च चतुर्दन्तान्करिणीव्रजमध्यगान् । तान्दृष्ट्वा चिन्तयामास आत्मनो दुःखकारणात् । तेषां स विचरन्मध्ये राजा शोभामवाप ह । महदाश्चर्यसंयुक्तं ददर्श विपिनं नृपः । क्वचिच्छिवारुतं शृण्वन्नुलूकविरुतं तथा । तांस्तान्पक्षिगणान्पश्यन्बभ्राम वनमध्यगः । एवं ददर्श गहनं नृपो मध्यगते रवौ । क्षुत्तृषापीडितो राजा इतश्चेतश्च धावति । चिन्तयामास नृपतिः स शुष्कगलकंधरः । मया तु किं कृतं कर्म प्राप्तं दुःखं यदीदृशम् । मया वै तोषिता देवाः यज्ञैः पूजाभिरेव च । तथैव ब्राह्मणा दानैस्तोषिता मिष्टभोजनैः । प्रजाश्चैव सदा काले पुत्रवत्परिपालिताः । कस्माद्दुःखं मया प्राप्तमीदृशं दारुणं महत् । इति चिन्तापरो राजा जगाम गहनं वनम् । सुकृतस्य प्रभावेण सरो दृष्टं मनोरमम् । मानसेन स्पर्धमानं पद्मिन्या परिशोभितम् । कारण्डवैश्चक्रवाकै राजहंसैश्च नादितम् । मकरैर्बहुभिर्मत्स्यैरन्यैर्जलचरैर्युतम् । ग्राहैर्नक्रैश्च चक्रैश्च हरिभिस्तरुणैस्तथा । स तीरे सरसस्तस्य मुनीनामाश्रमान्बहून् । ददर्श राजा लक्ष्मीवान्निमित्तैस्तु शुभैस्तथा । सव्यात्परतरं नेत्रं पस्पन्द च तथा करः । स्फुरितं तस्य राज्ञश्च शंसति शुभलक्षणम् । तस्य तीरे

मुनीन्दृष्ट्वा कुर्वतो नियमं जपम् । हर्षेण महताविष्टो बभूव नृपसत्तमः । अवतीर्य हयात्तस्मान्मुनीनामग्रतः स्थितः । पृथक्पृथग्ववन्देऽसौ मुनींस्तत्रापि संस्थितान् । ववन्दे राजशार्दूलो दण्डवत्तान्पुनः पुनः । प्रत्यूचुस्तेऽपि मुनयः प्रसन्नाः स्मो वयं तव । कथयस्वात्र वै राजन्यत्ते मनसि वर्तते ।' राजोवाच ।'ये यूयमुग्रतपसः किमाख्या भवतामपि । किमर्थमागता यूयं वदन्तु मम तत्त्वतः ।' मुनय ऊचुः ।'विश्वेदेवा वयं राजन्स्नानार्थमिह चागताः । माघो निकटमायात एतस्मात्पञ्चमेऽहनि । अथ चैकादशी राजन्पुत्रदा नाम नामतः । पुत्रं ददात्यसौ शुक्ला पुत्रदा कारिणां नृणाम्।'राजोवाच-'एष वै संशयो मेऽद्य सुतस्य करणे महान् । यदि तुष्टा भवन्तो वै पुत्रो मे दीयतां तथा।' मुनय ऊचुः—'अस्मिन्नहनि राजेन्द्र पुत्रदा नाम वर्तते । एकादशीति विख्याता क्रियतां व्रतमुत्तमम् । अभिषेकादथास्माकं कृष्णस्यापि प्रसादतः । अवश्यं तव राजेन्द्र पुत्रप्राप्तिर्भविष्यति । इत्येवं वचनात्तेषां कृतं वै व्रतमुत्तमम् । मुनीनां वचनेनैव एकादश्याः प्रसादतः । द्वादश्यां पारणं कृत्वा मुनीन्नत्वा पुनः पुनः । आजगाम गृहे पश्चाद्राज्ञी गर्भं समादधौ । जातः पुत्रस्तु तत्रैव तेजस्वी वाप्यतन्द्रितः । तेजसस्तु प्रभावेणापालयत्पुत्रवत्प्रजाः । एतस्मात्कारणाद्राजन्कर्तव्यं पुत्रदाव्रतम्। लोकानां तु हितार्थाय तवाग्रे कथितं मया । एतद्धितं तु ये मर्त्याः कुर्वते पुत्रदाव्रतम् । तेषां चैव भवेत्पुत्रो ह्यवश्यं मुक्तिगामिनाम् । पठनाच्छ्रवणाद्राजन्नरमेधफलं लभेत् ।' **इति श्रीब्रह्मवैवर्तपुराणे पौषशुक्ले पुत्रदायिन्या एकादश्या माहात्म्यं समाप्तम् ।**

दुर्वासा उवाच—'पौषमासस्य या पुण्या द्वादशी शुक्लपक्षतः । तस्यां प्रागेव संकल्पं कुर्यात्स्नानादिकाः क्रियाः । निर्वर्त्याराधयेद्रात्रावेकादश्यां जनार्दनम् । पृथङ्मन्त्रैर्द्विजवर देवदेवं जनार्दनम् । कूर्माय पादौ प्रथमं तु पूज्य नारायणायेति कटिं हरेस्तु । संकर्षणायेत्युदरं हरेस्तु उरो विशोकाय भवाय कण्ठम् । सुबाहवे त्येष भुजौ शिरश्च नमो विशालाय रथाङ्गशंखौ । स्वनाममन्त्रैश्च सधूपगन्धैर्नानानिवेद्यैर्विविधैः फलैश्च । अभ्यर्च्य देवं कलशं तदग्रे संस्थाप्य माल्यास्तृतदामकण्ठम् । तं रत्नगर्भं तु पुरेव कृत्वा स्वशक्तितो हेममयं च देवम् । समन्दरं कूर्मरूपेण कृत्वा संस्थापयेत्ताम्रपात्रे घृतस्य । पूर्णे घटोपर्यथ संनिवेश्य श्वो ब्राह्मणायैव सर्वं तु दद्यात् । श्वो ब्राह्मणान्भोज्य सदक्षिणांश्च यथाशक्त्या प्रीणयेद्देवदेवम् । नारायणं कूर्मरूपेण पश्चात्स्वयं तु भुञ्जीत सभृत्यवर्गः।एवं कृते वै त्रिविधं

१—घृतस्य पूर्णे ताम्रपात्रे समन्दरं कूर्मरूपं निधाय घटोपरि निवेश्य प्रभाते दद्यादित्यर्थः ।

हि पापं विनश्यते नात्र विचारणास्ति । संसारचक्रं तु विहाय शुद्धमाप्नोति लोकं तु हरेः पुराणम् । अनेकजन्मान्तरसंचितानि नश्यंति पापानि नरस्य भक्त्या । प्रागुक्तरूपं तु फलं लभेत नारायणस्तुष्टिमुपैति सद्यः ।' इति धरणीव्रते कूर्मद्वादशीव्रतम् ।

अथ माघकृष्णैकादश्यां षट्तिलाव्रतम् । दत्तात्रेय उवाच—'मर्त्यलोकमनुप्राप्ताः पापं कुर्वन्ति जन्तवः ।ब्रह्महत्यादिपापैश्च परद्रव्यैश्च मोहिताः । गच्छेयुर्न कथं ब्रह्मन्नरकान्ब्रूहि तत्त्वतः । अनायासेन भगवन्दानेनाल्पेन केनचित् । पापं प्रशमनं याति येन तद्वक्तुमर्हसि ।' अगस्त्य उवाच—'साधु साधु महाभाग गुह्यमेतदुदाहृतम् । 'यन्न कस्यचिदाख्यातं ब्रह्मरुद्रेन्द्रदैवतैः । तदहं कथयिष्यामि त्वया पृष्टो द्विजोत्तम ।पौषमासे तु संप्राप्ते शुचिःस्नातो जितेन्द्रियः । कामक्रोधाद्यहंकारलोभपैशुन्यवर्जितः । देवदेवं च संस्मृत्य पादौ प्रक्षाल्य वारिभिः । भूमावपतितं ग्राह्यं गोमयं तत्र मानवैः । तिलान्प्रक्षिप्य संगृह्य पिंडकांश्चैव कारयेत् । अष्टोत्तरशतं चैव नात्र कार्या विचारणा।ततो माघे तु संप्राप्ते आर्द्रं चैव भवेद्यदि।मूलं वा कृष्णपक्षस्यैकादश्यां नियमं यतः।गृह्णीयात्पुण्यफलदं विधानं तत्र मे शृणु । देवदेवं समभ्यर्च्य सुस्नातः प्रयतः शुचिः । कृष्णनाम्नां च संकीर्त्य सहस्रं कलुषापहम् । रात्रौ जागरणं कुर्याद्रात्रौ होमं च कारयेत् । अर्चयेद्देवदेवेशं शंखचक्रगदाधरम् । चन्दनागुरुकर्पूरैर्नैवेद्यैः शार्करैस्तथा । संस्मृत्य नाम्नां च ततः कृष्णाख्यानं पुनः पुनः । कूष्माण्डैर्नारिकेलैश्च अथवा बीजपूरकैः । सर्वाभावेऽपि विप्रेन्द्र शस्तं पूगीफलं तथा । दद्यादर्घ्यं विधानेन पूजयित्वा जनार्दनम् । कृष्ण कृष्ण कृपालुस्त्वमगतीनां गतिर्भव । संसारार्णवमग्नानां प्रसीद पुरुषोत्तम । नमस्ते पुण्डरीकाक्ष नमस्ते विश्वभावन । सुब्रह्मण्य नमस्तेऽस्तु महापुरुषपूर्वज । गृहाणार्घ्यं मया दत्तं लक्ष्म्या सह जगत्पते ।' इति अर्घ्यमन्त्रः । 'ततस्तु पूजयेद्विप्रमुदकुम्भं च दापयेत् । छत्रोपानहवस्त्रं च कृष्णो मे प्रीयतामिति । कृष्णधेनुः प्रदातव्या यथा शक्त्या द्विजोत्तमे । तिलपात्रं द्विजश्रेष्ठ दद्यादत्र विचक्षणः ।स्नात्वा प्राविकिरेत्क्षेत्रे सम्यक्कृष्णतिलान्मुने । तिलप्ररोहे जायन्ते यथा शक्त्या तिला द्विज । तावद्वर्षसहस्राणि स्वर्गलोके महीयते । तिलस्नायी तिलोद्वर्ती तिलहोमी तिलोदकी । तिलदाता च भोक्ता च षट्तिला पापनाशना ।' नारद उवाच—'षट्तिलैकादशी देव कीदृशं फलमश्नुते । सोपाख्यानं मम ब्रूहि यदि तुष्टोऽसि यादव ।' विष्णुरुवाच—'शृणु ब्रह्मन्यथावृत्तं दृष्टान्तं कथयामि ते । मर्त्यलोके पुरा ह्यासीद्ब्राह्मणी तत्र नारद । व्रतचर्यारता नित्यं देवपूजारता सदा । मासोपवासनिरता मम भक्ता च सर्वदा । कृच्छ्रोपवाससंयुक्ता मम पूजापरायणा । शरीरं क्लेशितं

चैव उपवासैर्द्विजोत्तम । देवानां ब्राह्मणानां च कुमारीणां च भक्तितः । गृहाणि सा प्रयच्छन्ती सर्वकालं महासती । अतिकृच्छ्ररता सा हि सर्वकालं तु वै द्विज । न दत्ता भिक्षुके भिक्षा ब्राह्मणा न च तर्पिताः । ततः कालेन महता मया वै चिन्तितं द्विज। शुद्धमस्याः शरीरं हि व्रतैः कृच्छ्रैर्न संशयः । अर्जितो वैष्णवो लोकः कायक्लेशेन तत्त्वतः । न दत्तमन्नदानं हि येन तृप्तिः परा भवेत् । एवं ज्ञात्वा मया ब्रह्मन्मर्त्यलोकमुपागतम्। कापालं रूपमास्थाय भिक्षा पात्रेण याचिता । अवोचद्ब्राह्मणी सा तु सादरं मधुरं वचः।कस्मात्त्वमागतो ब्रह्मन्वक्तुमर्हसि शोभन । पुनरेव मया प्रोक्तं देहि भिक्षां च सुन्दरि । तया कोपेन महता मृत्पिण्डस्ताम्रभाजने । क्षिप्तो वाडवया ब्रह्मन्पुनः स्वर्गं गता ततः। ततः कालेन महता तापसी सुमहाव्रता । स्वदेहात्स्वर्गमायाता व्रतचर्याप्रभावतः।मृत्पिण्डकप्रदानेन गृहं प्राप्तं मनोरमम् । स्वं जातं चैव विप्रर्षे धान्यराशिविवर्जितम्। गृहं यावन्निरीक्षेद्वै नापश्यत्तत्र किंचन । तावद्गृहाद्विनिष्क्रान्ता कश्चित्तत्रागतो द्विजः । क्रोधेन महताविष्टा इदं वचनमब्रवीत्।मया व्रतैश्च कृच्छ्रैश्च उपवासैरनेकशः।पूजयाराधितो देवः सर्वलोकस्य भावतः।न तत्र दृश्यते किंचिद्गृहे मम जनार्दन । ततश्चोक्तं मया तस्या गृहं गच्छ पतिव्रते।आगमिष्यन्ति सुतरां कुतूहलसमन्विताः। देवपत्न्यो हि त्वां द्रष्टुं विस्मयाभिसमन्विताः।द्वारं नोद्घाटयन्ती हि तासां भद्रे तपस्विनि। षट्तिला व्रतजं पुण्यं याचनीयं त्वयानघे । एवमुक्ता मया सा तु गता वै मानुषी तदा। अत्रान्तरे समायातो देवपत्न्यश्च नारद । ताभिश्च कथितं तत्र त्वां द्रष्टुं हि समागताः । द्वारमुद्घाटनीयं च त्वा वै पश्याम शोभने ।' मानुष्युवाच । 'यदि द्रष्टुं मया कार्यं सत्यं वच्मि विशेषतः । षट्तिलाव्रतजं पुण्यं द्वारोद्घाटनकारणम् । एकापि चैव तत्रर्षे न ददाति महाव्रतम् । अन्यथा कथितं तत्र द्रष्टव्या मानुषी मया । ततो द्वारं समुद्घाट्य दृष्टा ताभिश्च मानुषी । न देवी नच गन्धर्वी नासुरी न च पन्नगी । दृष्टपूर्वा मया नारी यादृशी सा द्विजोत्तमा। रूपकान्तिसमायुक्ता क्षणेन समपद्यत । धनं धान्यं च वस्त्रादि सुवर्णं रूप्यमेव च । सर्वं गृहं तु संपन्नं षट्तिलायाः प्रसादतः। अतितृष्णा न कर्तव्या वित्तशाठ्यं विवर्जयेत् । आत्मवित्तानुसारेण तिलान्वस्त्राणि दापयेत् । लभते चैवमारोग्यं नरो जन्मनि जन्मनि। दारिद्र्यं न च संक्लेशं न च दौर्भाग्यमेव च। न भवेद्वै द्विजश्रेष्ठ षट्तिलाया उपोषणात् । अनेन विधिना विप्र तिलदानान्न संशयः । मुच्यते पातकैः सर्वैरनायासेन मानवः। दानं च विधिना दत्तं सर्वपातकनाशनम् । नार्थव्ययो न चायासः शरीरे मुनिसत्तम।' इति श्रीद्वादशीकल्पे माघकृष्णे षट्तिलामाहात्म्यं संपूर्णम् ।

अथ माघशुक्लैकादशीव्रतकथा । युधिष्ठिर उवाच—'साधु कृष्ण परं ब्रह्मन्नादिदेव जगत्प्रभो । स्वेदजा अण्डजाश्चैव उद्भिज्जाश्च जरायुजाः । तेषां कर्ता विकर्ता त्वं पालकः क्षयकारकः । माघस्य कृष्णपक्षे तु षट्तिला कथिता त्वया । शुक्ले चैकादशी या च कथयस्व प्रसादतः । किं नाम को विधिस्तस्याः को देवस्तत्र पूज्यते ।' श्रीकृष्ण उवाच—'कथयिष्यामि राजेन्द्र शुक्ले माघस्य या भवेत् । जयानामेति विख्याता सर्वपापहरा परा । पवित्रा पापहन्त्री च कामदा मोक्षदा नृणाम् । ब्रह्महत्यापहन्त्री च पिशाचत्वविनाशिनी । नैव तस्य व्रते चीर्णे प्रेतत्वं जायते नृणाम् । नातःपरतरा काचित्पापघ्नी मोक्षदायिनी । एतस्मात्कारणाद्राजन्कर्तव्येयं प्रयत्नतः । श्रूयतां राजशार्दूल कथा पौराणिकी शुभा । पङ्कजे च पुराणेऽस्या महिमा कथितो मया । एकदा नाकलोके वै इन्द्रो राज्यं चकार ह । देवास्तत्र सुखेनैव निवसन्ति मनोरमे । पीयूषपाननिरता अप्सरोगणसेविताः । नन्दनं तु वनं तत्र पारिजातोपसेवितम् । रेमुर्यत्र समंताच्च अप्सरोभिर्दिवौकसः । एकदा रममाणोऽसौ देवेन्द्रः स्वेच्छया नृप । नर्तयामास हर्षात्तु पञ्चाशत्कोटिनायकः । गन्धर्वास्तत्र गायन्ति गन्धर्वः पुष्पदन्तकः । चित्रसेनस्तु नाम्ना तु तत्रास्ते तत्सुतस्तथा । मालिनीति च नाम्ना तु चित्रसेनः सुलोषितः । मालिन्यां तु समुत्पन्ना नाम्ना पुष्पवती शुभा । पुष्पदन्तस्य पुत्रो वै माल्यवान्नाम नामतः । पुष्पवती तु तेनैव माल्यवतातिमोहिता । कामबाणैः सुतीक्ष्णैश्च विद्धाङ्गी सा बभूव ह । तया हावैः कटाक्षैश्च माल्यवांश्च वशीकृतः । लावण्यरूपसंपन्ना तस्या रूपं नृप शृणु । बाहू तस्यास्तु कामेन कण्ठपाशौ कृताविव । चन्द्रवद्वदनं तस्या नेत्रे कर्णायते तथा । कर्णौ तु शोभितौ तस्याः कुण्डलाभ्यां नृपोत्तम । कम्बुग्रीवायुता सैव दिव्याभरणभूषिता । पीनोन्नतौ कुचौ तस्या मुष्टिग्राह्यं तु मध्यमम् । नितम्बो विपुलस्तस्या विस्तीर्णं जघनस्थलम् । चरणौ शोभनौ चास्या रक्तोत्पलसमद्युती । ईदृश्या पुष्पवत्या च माल्यवानतिमोहितः । शुक्रस्य परितोषाय नृत्यायैव समागतौ । गायमानौ च तौ तत्र अप्सरोगणसंगतौ । मदनातिपरीताङ्गौ परस्परवशानुगौ । परस्परानुरागेण विमोहं च समागतौ । ज्ञात्वा लेखर्षभास्तत्र संगतं मानसं तयोः । कालक्रियामानलोपात्तथा गीतविभञ्जनात् । चिन्तयित्वा तु मघवानवज्ञातं तथात्मनः । कुपितश्च ततो देवः शापं दास्यन्निदं जगौ । धिग्धिक् पापरतौ मूढावाज्ञाभङ्गकरौ मम । युवां पिशाचौ भवतां दम्पती रूपधारिणौ । मर्त्यलोकमनुप्राप्तौ भुञ्जानौ कर्मणः फलम् । एवं मघवता शप्तावतिदुःखितमानसौ । हिमवन्तं गिरिं प्राप्ताविन्द्रशापविमोहितौ । उभौ पिशाचतां प्राप्तौ दारुणं दुःखमेव च । संतप्तमानसौ तत्र महा-

१—पङ्कजेपुराणे— पद्मपुराणे इत्यर्थः ।

दुःखगतावुभौ। गन्धर्वत्वं चाप्सरस्त्वं न जानीतो विमोहितौ। पीड्यमानौ निदाघेन देहपातकजेन च। तौ निद्रां न च सुखं चलेभाते कर्मपीडितौ। परस्परं खिद्यमानौ चेरतुर्गिरिगह्वरे। पीड्यमानौ तु शीतेन तुषारप्रभवेण तौ। दन्तघर्षं प्रकुर्वाणौ रोमाञ्चितवपुर्धरौ। स पिशाचस्तदा ऊचे तां तु पत्नीं पिशाचिकाम्। किमावाभ्यां कृतं पूर्वं पापं वै लोमहर्षणम्। येन प्राप्तं पिशाचत्वं दुःखं च कृतकर्मणा। नराणामधमं मत्वा पिशाचत्वं च दुःखितौ। तस्मात्सर्वप्रयत्नेन पापं नैव समाचरेत्। इति चिन्तापरौ तत्र तौ जातौ दुःखकर्षितौ। दैवयोगात्तयोः प्राप्ता माघस्यैकादशी सिता। जयानामेति विख्याता तिथीनामुत्तमा तिथिः। तस्मिन्दिने तु संप्राप्ते तावाहारविवर्जितौ। चिन्तयानौ च नृपते जलपानविवर्जितौ। न कृतो जीवघातो हि न पत्रफलभक्षणम्। अश्वत्थस्य समीपे तु पतितौ दुःखसंयुतौ। रविरस्तंगतो राजंस्तथैव स्थितयोस्तयोः। प्राप्ता चैव निशा घोरा दारुणा शीतकारिणी। वेपमानौ तु तौ राजन्सुखार्थं मिथुनीकृतौ। परस्परेण संलग्नौ गात्रयोर्भुजयोरपि। न निद्रा न रतिस्तत्र न तौ सौख्यमविन्दताम्। एवं तौ राजशार्दूल शापेनेन्द्रस्य पीडितौ। इत्थं तयोर्दुःखितयोर्निर्जगाम तदा निशा। मार्तण्डस्योदयो जातो द्वादशीदिवसागमे। मया तु राजशार्दूल तयोर्भक्तिर्धृता हृदि। जयायास्तु व्रते चीर्णे रात्रौ जागरणे कृते। तस्माद्व्रतप्रभावाच्च यथा ह्यासीत्तथा शृणु। द्वादशीदिवसे प्रातःप्राक्चीर्णे तु जयाव्रते। विष्णोः प्रभावान्नृपते पिशाचत्वं गतं तयोः। पुष्पवती माल्यवांश्च पूर्वरूपौ बभूवतुः। पुनस्ततः स्नेहयुतौ पूर्वालंकारधारिणौ। विमानमधिरूढौ तावप्सरोगणसेवितौ। स्तूयमानौ तु गन्धर्वैस्तुम्बरुप्रमुखैस्तदा। हावभावसमायुक्तौ गतौ नाके मनोरमे। देवेन्द्रस्याग्रतो राजन्प्रणामं चक्रतुर्मुदा। तथाविधौ तु तौ दृष्ट्वा मघवा विस्मितोऽब्रवीत्। वदतं केन पुण्येन पिशाचत्वं विनिर्गतम्। मम शापवशं प्राप्तौ केन देवेन मोचितौ।' माल्यवानुवाच—'वासुदेवप्रसादेन जयायाः सुव्रतेन च। पिशाचत्वं गतं स्वामिंस्तव भक्तिप्रभावतः। प्रतिश्रुत्य वचस्तस्य प्रत्युवाच सुरेश्वरः। पवित्रपावनौ जातौ वन्दनीयौ ममापि च। हरिवासरकर्तारौ विष्णुभक्तिपरायणौ। हरिभक्तिपरा ये च विष्णुभक्तिरतास्तथा। अस्माकमपि ते मर्त्याः पूज्या वन्द्या न संशयः। विचचार यथासौख्यं पुष्पवत्या सुरालये। एतस्मात्कारणाद्राजन्कर्तव्यो हरिवासरः। जयाव्रतं तु राजेन्द्र ब्रह्महत्यापहारकम्। सर्वदानानि दत्तानि यज्ञास्ते नकृता भुवि। सर्वतीर्थेषु स स्नातः कृतं येन जयाव्रतम्। यः करोति नरो भक्त्या श्रद्धायुक्तो जयाव्रतम्। कल्पकोटिशतं यावद्वैकुण्ठे मोदते ध्रुवम्। पठनाच्छ्रवणाद्राजन्नग्निष्टोमफलं लभेत्।' इति भविष्योत्तरपुराणे माघशुक्ले जयाव्रतं संपूर्णम्। दुर्वासा उवाच—

'एवं माघे सिते पक्षे द्वादशी धरणीभृतः । वाराहस्य शृणुष्वान्यां पुण्यां परमधार्मिक । प्रागुक्तेन विधानेन संकल्पस्नानमेव च । कृत्वा देवं समभ्यर्च्य एकादश्यां विचक्षणः । पुष्पैर्नैवेद्यगन्धैश्च अर्चयित्वाऽच्युतं नरः । पश्चात्तस्याग्रतः कुम्भं जलपूर्णं तु विन्यसेत् । वराहायेति पादौ तु माधवायेति वै कटिम् । क्षेत्रज्ञायेति जठरं विश्वरूपेत्युरो हरेः । सर्वज्ञायेति वै कण्ठं प्रजानां पतये शिरः । प्रद्युम्नायेति च भुजौ दिव्यास्त्राय सुदर्शनम् । अमृतोद्भवाय शंखं वै चैष पर्वार्चने विधिः।एवमभ्यर्च्य मेधावी तस्मिन्कुम्भे तु विन्यसेत्। सौवर्णं रूप्यताम्रं वा शक्त्या पात्रं च भक्तितः । सर्वबीजैस्तु संपूर्णं स्थापयित्वा विचक्षणः । तत्र शक्त्या तु सौवर्णं वाराहं कारयेद्बुधः । दंष्ट्राग्रेणोद्धृता पृथ्वी सपर्वतवनद्रुमा । माधवं मधुहन्तारं वाराहं रूपमालिनम् । सितवस्त्रयुगच्छन्नं ताम्राभावे तु वैणवे । स्थाप्यार्चयेद्गन्धपुष्पैर्नैवेद्यैर्विविधैः फलैः । पुष्पमण्डपिकां कृत्वा जागरं तत्र कारयेत् । प्रादुर्भावान्हरेस्तत्र कारयेद्वाचयेद्बुधः । एवं संस्तूयमानस्य प्रभाते ह्युदिते रवौ । शुचिः स्नातो हरिं पूज्य ब्राह्मणाय निवेदयेत् । वेदवेदाङ्गविदुषे साधुवृत्ताय धीमते । विष्णुभक्ताय विप्रर्षे विशेषेण तु दापयेत् । एवं विधानतो दत्त्वा हरिं वाराहरूपिणम् । ब्राह्मणाय भवेद्यच्च फलं तस्य निशामय । इह जन्मनि सौभाग्यं श्रीः कान्तिस्तुष्टिरेव च । ज्ञानवान्वित्तवान्भोगी अन्ते च पुत्रवान्भवेत् ।' इति धरणीव्रते वाराहद्वादशीव्रतम् ।

अथ फाल्गुनकृष्णैकादशीव्रतकथोच्यते । युधिष्ठिर उवाच—' कथयस्व प्रसादेन वासुदेव ममाग्रतः । फाल्गुनस्यासिते पक्षे किंनामैकादशी भवेत् ।' श्रीकृष्ण उवाच—' कथयिष्यामि राजेन्द्र कृष्णा या फाल्गुने भवेत् । विजयानाम नाम्ना तु कर्तॄणां जयदा वरा । नारदः परिपप्रच्छ ब्रह्माणं कमलासनम् । फाल्गुनस्यासिते पक्षे विजयानाम या तिथिः । तस्यां व्रतं सुरश्रेष्ठ कथयस्व प्रसादतः ।' ब्रह्मोवाच—' शृणु नारद वक्ष्यामि कथां पापहरां पराम् । यन्न कस्यचिदाख्यातं मयैतद्विजयाव्रतम् । पुरातनं व्रतं ह्येतत्पवित्रं पापनाशनम् । जयं ददाति विजया नृणां चैव न संशयः । रामस्तपोवनं यातो वर्षाण्येव चतुर्दश । न्यवसत्पञ्चवट्यां स ससीतः सहलक्ष्मणः । तत्रैव वसतस्तस्य राघवस्य महात्मनः । रावणेन हृता भार्या सीतानाम्नी यशस्विनी । तेन दुःखेन रामोऽसौ मोहमभ्याजगाम ह । ब्रह्मञ्जटायुषमथो ददर्श विगतायुषम् । कबन्धो निहतः पश्चाद्भ्रमताऽरण्यमध्यगः । रक्षसो मरणं चैव वालिनो वै वधस्तथा । सुग्रीवेण सहैवादौ मित्रत्वं समजायत । वानराणामधिष्ठाता वानरैः सह संगतः । ततो

हनूमता दृष्टा लङ्कोद्याने तु जानकी। रामसंज्ञापनं तस्यै दत्तं कर्म महत्कृतम्। समेत्य तत्र रामेण सर्वं तस्मै निवेदितम्। अथ श्रुत्वा रामचन्द्रो वाक्यं चैव हनूमतः। सुग्रीवानुमते चैव प्रापद्यत हि सत्वरम्। स गत्वा वानरैः सार्धं यत्रैषोऽपि ह्यपांनिधिः। दृष्ट्वाऽब्धिं दुस्तरं रामो विस्मितोऽभूत्किल प्रिय। आरक्तलोचनो भूत्वा लक्ष्मणं वाक्यमब्रवीत्। सौमित्रे केन पुण्येन तीर्यते वरुणालयः। अगाधसलिलैः पूर्णो नक्रैर्मत्स्यैः समाकुलः। उपायं नैव पश्यामि येनैष सुतरो भवेत्।' लक्ष्मण उवाच-' आदिदेवस्त्वमेवासि पुराणपुरुषोत्तमः। बकदाल्भ्यो मुनिश्चात्र वर्तते द्वीपमध्यगः। अस्मात्स्थानाद्योजनार्धमाश्रमस्तस्य राघव। अनेन दृष्टा बहवो ब्राह्मणा रघुनन्दन। तं पृच्छ गत्वा राजेन्द्र पुराणमृषिपुङ्गवम्। इति तस्य वचः श्रुत्वा लक्ष्मणस्यातिशोभनम्। जगाम राघवो द्रष्टुं बकदाल्भ्यं महामुनिम्। प्रणनाम मुनिं मूर्ध्ना रामो विष्णुमिवापरम्। मुनी रामं ततो ज्ञात्वा पुराणं पुरुषोत्तमम्। केनापि कारणेनैव प्रविष्टं मानुषीं तनुम्। उवाच स ऋषिस्तुष्टः कुतो राम तवागमः।' राम उवाच-' त्वत्प्रसादादहं विप्र वरुणालयसमीपतः। आगतोऽस्मि ससैन्योऽत्र लङ्कां जेतुं सराक्षसाम्। भवतश्चानुकूलत्वात्तीर्यतेऽब्धिर्यथा मया। तदुपायं वद मुने प्रसादं कुरु सुव्रत। एतस्मात्कारणादेव प्रष्टुं त्वामहमागतः।' मुनिरुवाच-' कथयिष्याम्यहं राम व्रतानामुत्तमं व्रतम्। कृतेन येन सहसा विजयस्ते भविष्यति। लङ्कां जित्वा राक्षसांश्च दीर्घां कीर्तिमवाप्स्यसि। वरुणालयो ह्यगाधस्तु तीर्यते येन सुव्रत। एकाग्रमानसो भूत्वा व्रतं तत्तु निशामय। फाल्गुनस्यासिते पक्षे विजयैकादशी भवेत्। तस्या व्रते कृते राम विजयस्ते भविष्यति। निःसंशयं समुद्रं च तरिष्यसि सवानरः। विधिस्तु श्रूयतां राम व्रतस्यास्य फलप्रदः। दशम्या दिवसे प्राप्ते कुम्भमेकं तु कारयेत्। हैमं वा राजतं वापि ताम्रं वाप्यथ मृन्मयम्। स्थापयेच्छोभितं कुम्भं जलपूर्णं सपल्लवम्। तस्योपरि न्यसेद्देवं हैमं नारायणं प्रभुम्। एकादशीदिने प्राप्ते प्रातःस्नानं समाचरेत्। निश्चलं स्थापयेत्कुंभं कण्ठमाल्यानुलेपनम्। दाडिमैर्नारिकेलैश्च पूजयेच्च विशेषतः। सप्तधान्यमधस्तस्य यवानुपरि विन्यसेत्। गन्धैर्धूपैस्तथा दीपैर्नैवेद्यैर्विविधैरपि। कुम्भाग्रे तद्दिनं राम नीयते भक्तिभावतः। रात्रौ जागरणं चैव तस्याग्रे कारयेद्बुधः। द्वादश्या दिवसे प्राप्ते मार्तण्डस्योदये सति। नीत्वा कुम्भं जले शुभ्रे नद्यां प्रस्रवणे तथा। तडागे स्थापयित्वा वा पूजयित्वा यथाविधि। अनेन विधिना राम यूथपैः सह संगतः। कुरु व्रतं प्रयत्नेन विजयस्ते भविष्यति। इति श्रुत्वा ततो रामो यथोक्तमकरोत्तदा। कृते व्रते स विजयी बभूव रघुनन्दनः। प्राप्ता सीता तु लङ्कायां पौलस्त्यो निहतो रणे।

अनेन विधिना पुत्र ये कुर्वन्ति नरा व्रतम्। इह लोके जयस्तेषां परलोकस्तथाऽक्षयः। एतस्मात्कारणात्पुत्र कर्तव्यं विजयाव्रतम्। पठनाच्छ्रवणाचैव वाजपेयफलं लभेत्।' इति श्रीस्कन्दपुराणे फाल्गुनकृष्णे विजयैकादशीमाहात्म्यं समाप्तम्।

दुर्वासा उवाच—'तद्वच फाल्गुने मासि शुक्लपक्षे तु द्वादशी। उपोष्या प्रोक्तविधिना हरिमाराधयेद्बुधः। नरसिंहाय पादौ तु गोविन्दायोदरं तथा। कटिं विश्वभुजं पूज्य अनिरुद्धेत्युरस्तथा। कण्ठं तु शितिकण्ठाय पिङ्गकेशाय वै शिरः। असुरध्वंसनायेति चक्रं तोयात्मने तथा। शंखमित्येव संपूज्य गन्धपुष्पफलैस्तथा। तदग्रे स्थाप्य तु घटं सितवस्त्रयुगान्वितम्। तस्योपरि नृसिंहं तु सौवर्णं ताम्रभाजनम्। सौवर्णं शक्तितः कृत्वा दारुवंशमयेऽपि वा। रत्नगर्भघटे स्थाप्य तत्संपूज्य विधानतः। द्वादश्यां वेदविदुषे ब्राह्मणाय निवेदयेत्।' ( गोविन्दो नृसिंहरूपः ) इति मन्त्रः। 'एवं कृते फलं प्राप्तं यत्पुरा पार्थिवेन तु। वत्सनाम्ना तु तत्तेऽहं प्रवक्ष्यामि महामुने। तस्य व्रतान्ते भगवान्नरसिंहस्तुतोष वै। चक्रं प्रादाच शत्रूणां विध्वंसनकरं मृधे। तेनास्त्रेण स्वकं राज्यं जितवान्नृपसत्तमः। राज्ये स्थित्वाऽश्वमेधानां सहस्रमकरोत्प्रभुः। अन्ते च ब्रह्मलोकाख्यं पदमागाच सत्तम। एषा धन्या पापहरा द्वादशी भवतो मुने। कथितेमां प्रयत्नेन श्रुत्वा कुरु यथेच्छसि।' इति धरणीव्रते नृसिंहद्वादशीव्रतम्।

मान्धातोवाच—'आमर्दकीव्रतं ब्रूहि महापातकनाशनम्। सरहस्यं मुनिश्रेष्ठ गोसहस्रफलप्रदम्।' वसिष्ठ उवाच—'अत्रैवोदाहरन्तीममितिहासं पुरातनम्। यथा मुक्तिमनुप्राप्तो व्याधो हिंसासमन्वितः। वैदिशं नाम नगरं हृष्टपुष्टजनाकुलम्। ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च समलंकृतम्। रुचिरं नृपशार्दूल ब्रह्मघोषनिनादितम्। न नास्तिको न दुर्वृत्तस्तस्मिन्नासीत्पुरे तदा। तत्र सोमान्वयो राजा विख्यातः स कलान्वितः। राजा चैत्ररथो नाम धर्मात्मा सत्यसंगरः। नागायुतबलः श्रीमाञ्छस्त्रशास्त्रार्थपारगः। तस्मिञ्छासति धर्मज्ञे धर्मात्मनि धरां प्रभौ। कृपणो नैव कुत्रापि दृश्यते नैव निर्धनः। सुकालः क्षेममारोग्यं तस्मिन्राजनि शासति। विष्णुभक्तः सदा राजा तस्मिन्पुरवरे जनाः। हरिपूजारताश्चैव राजा चैव विशेषतः। न वै कृष्णां न शुक्लां च द्वादशीं मुमुचुर्जनाः। सर्वधर्मान्परित्यज्य हरिभक्तिपरायणः। एवं संवत्सरा जग्मुर्बहवो जनसत्तम। जनस्य सौख्ययुक्तस्य हरिधर्मरतस्य च। अथ कालेन संप्राप्ता द्वादशी पुष्यसंयुता। फाल्गुनस्य सिते पक्षे नाम्ना सामर्दकी भवेत्। तामवाप्य जनाः सर्वे सबालस्थविरा नृप। नियमं चोपवासस्य सर्वे चक्रुर्नराधिप। महाफलं व्रतं

ज्ञात्वा स्नानं कृत्वा बहिर्जले । तत्र देवालये राजा लोकयुक्तो महत्तमः । पूर्णकुम्भं च संस्थाप्य छत्रोपानहसंयुतम् । पञ्चरत्नसमायुक्तं दिव्यगन्धाधिवासितम् । दीपमालान्वितं चैव ज्वलदग्निसमन्वितम् । तत्र जागरणं चक्रुर्जनाः सर्वे स्वशक्तितः । एतस्मिन्नेव काले तु व्याधस्तत्स्थानमागतः । क्षुधाश्रमपरिव्याप्तो भारार्तो निःश्वसंस्तदा । संप्राप्तो मलदिग्धाङ्गो महाभारेण पीडितः । कुटुम्बार्थं जीवघाती सर्वधर्मबहिष्कृतः । जागरं तत्र सोऽपश्यदामर्दक्यां क्षुधान्वितः । दीपमालाकुलं दृष्ट्वा तत्रैव निषसाद सः । किमेतदिति संचिन्त्य प्राप्तो विस्मयितां भृशम् । ददर्श कुम्भं तत्रस्थं देवं दामोदरं तथा । ददर्शामलकीवृक्षं तदग्रस्थांश्च दीपकान् । वैष्णवं च तथाख्यानं शुश्राव पठतो द्विजान् । एकादश्याश्च माहात्म्यं शुश्राव क्षुधितोऽपि सन् । जाग्रतस्तस्य सा रात्रिर्गता विस्मितचेतसः । ततः प्रभातसमये विविशुर्नगरं जनाः । व्याधोऽपि गृहमागत्य बुभुजे प्रीतमानसः । ततः कालेन महता व्याधः पञ्चत्वमागतः । एकादश्याः प्रभावेण रात्रौ जागरणस्य च । राज्यं प्रपेदे सुमहच्चतुरङ्गबलान्वितम् । जयन्तीनाम नगरी तत्र राजा विदूरथः । तस्मात्स तनयो जज्ञे नाम्ना च सुरथो बली । चतुरङ्गबलोपेतो धनधान्यसमन्वितः । दशायुतानि ग्रामाणां बुभुजे भयवर्जितः । तेजसादित्यसदृशः कान्त्या चन्द्रसमप्रभः । विक्रमेण समो विष्णोः क्षमया पृथिवीसमः । धार्मिकः सत्यवादी च विष्णुभक्तिपरायणः । ब्रह्मज्ञः सत्यवादी च प्रजापालनतत्परः । ईजे बहुविधैर्यज्ञैः स राजा परदर्पहा । दानानि विविधान्यत्र प्रददाति च सर्वदा । एकदा मृगयां यातो दैवान्मार्गात्परिच्युतः । न दिशं नैव विदिशं वेत्ति तत्र महीपतिः । उपाध्यासुस्तरोर्मूलमेकाकी गहने वने । अत्रान्तरे म्लेच्छगणः पर्वतान्तरवासभाक् । आययौ तत्र यत्रास्ते राजा परबलार्दनः । कृतवैरास्तु वै राज्ञा सर्वदैवोपतापिताः । परिवार्य ततः स्थूला राजानं भूरिदक्षिणम् । हन्यतां हन्यतां चायं पूर्ववैरी विरुद्धधीः । अनेन निहताः पूर्वं पितरो भ्रातरः सुताः । पौत्राश्च भागिनेयाश्च मातुलाश्च निपातिताः । निष्काशिताश्च स्वस्थानाद्विक्षिप्ताश्च दिशो दश । एतावदुक्त्वा ते सर्वे तत्र तं हन्तुमुद्यताः । पाशैश्च पट्टिशैर्वज्रैर्बाणैर्धनुषि संस्थितैः । सर्वाणि शस्त्राणि समाद्रवन्ति न वै शरीरे प्रविशन्ति तस्य । ते चापि सर्वे हतसत्त्वसंघा म्लेच्छा बभूवुर्गतदेहजाताः । यदापि चलितुं तत्र न शेकुस्तेऽरयो भृशम् । शस्त्राणि कुण्ठतां जग्मुः सर्वेषां हतचेतसाम् । दीना बभूवुस्ते सर्वे ये वै हन्तुं समागताः । एतस्मिन्नेव काले तु तस्य राज्ञः शरीरतः । निःसृता प्रमदा ह्येका सर्वाभरणभूषिता । दिव्यमालाधरा नारी कुङ्कु-

हुत्वा ...टिलानना। सा च स्फुलिङ्गान्नेत्राभ्यां वमन्ती पावकं मुहुः। चक्रोद्यतकरा चैव कालरात्रिरिवापरा। अभ्यधावत संक्रुद्धा म्लेच्छानत्यन्तदुःखिना। निहताश्च तदा दैत्यास्तया कर्मरतास्तथा। ततो राजा विबुद्धः सन्ददर्श महदद्भुतम्। हतान्म्लेच्छांस्ततो दृष्ट्वा राजा चिन्तामवाप सः। इह केन हता म्लेच्छा अत्यन्तं वैरिणो मम। केनेदं च महत्कर्म कृतमस्मद्धितार्थिना। एतस्मिन्नेव काले तु वागुवाचाशरीरिणी। त्वद्भक्तिवशतो राजन्नेकादश्या हता मया। ततः सेनापतिवृतः समायातोऽथ भूमिभुक्। राज्यं चकार धर्मात्मा धरायां देवतेशवत्।' वसिष्ठ उवाच—'आमर्दकीव्रतं राजन्ये कुर्वन्ति नरोत्तमाः। ते यान्ति वैष्णवं लोकं नात्र कार्या विचारणा।' इति ब्रह्माण्डपुराणे आमर्दक्याः फाल्गुनशुक्लैकादश्या माहात्म्यं समाप्तम्।

इयमेव गोविन्दद्वादशीत्युच्यते। तथा हरिभक्तिविलासे—फाल्गुने द्वादशी शुक्ला या पुष्यर्क्षेण संयुता। गोविन्दद्वादशी नाम सा स्याद्गोविन्दभक्तिदा। तस्यामुपोष्य विधिना भगवन्तं प्रपूजयेत्। लिखितः पापनाशिन्या विधिर्योऽपि हि स स्मृतः।' तन्माहात्म्यं ब्रह्मपुराणे—'फाल्गुनामलपक्षे तु पुष्यर्क्षे द्वादशी यदि। गोविन्दद्वादशी नाम महापातकनाशिनी। तस्यामुपोष्य विधिवन्नरः संक्षीणकल्मषः। आप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभाम्।' इति। टीकायाम्, द्वादशी चेति द्वादश्येकादश्योरभेदाभिप्रायेण। किं वा द्वादश्यां पुष्यनक्षत्रे सति तस्यामेवोपवासापेक्षयेति। अथैकादश्यां कर्तव्यं भविष्ये—'फाल्गुने मासि शुक्लायामेकादश्यां जनार्दनः। वसत्यामलकीवृक्षे लक्ष्म्या सह जगत्पतिः। तत्र संपूज्य देवेशं शक्त्या कुर्यात्प्रदक्षिणम्। उपोष्य विधिवत्कल्पं विष्णुलोके महीयते।' इति। अथ नृसिंहपरिचर्योक्तमामर्दक्येकादशीकृत्यम्।

इयमेव पापनाशिनी द्वादशी। तत्र व्रतग्रहणमन्त्रः। 'द्वादश्यां तु निराहारः स्थित्वाहमपरेऽहनि। भोक्ष्यामि जामदग्न्येश शरणं मे भवाच्युत।' इति। तत आमलकीमूले पूर्वोक्तप्रकारेण स्थापिते कलशे ताम्रे वैणवे वा लाजान्विते पात्रे माषतदर्धनिर्मितं सौवर्णं परशुरामं 'क्षत्रान्तकरणं घोरमुद्वहन्परशुं करे। जामदग्न्यः प्रकर्तव्यो रामो रोषारुणेक्षणः।' इति ध्यात्वा पञ्चामृतस्नातमुपवेश्य वस्त्रयुगच्छत्रोपानहं समर्प्य श्वेतचन्दनेनानुलिप्य तुलसीपुष्पैरभ्यर्च्यावयवपूजां कुर्यात्। पादयोर्विशोकाय नमः। जान्वोः सर्वरूपिणे नमः। नासिकायां शोकनाशाय नमः। ललाटे वामनाय नमः। भ्रुवो रामाय नमः। शिरसि सर्वात्मने नमः। स्वनाम्ना आयुधानि संपूज्य धूपदी... दद्यं

दद्यात् । तत्रार्घ्यमन्त्रः । 'नमस्ते देवदेवेश जामदग्न्य नमोऽस्तु ते । गृहाणार्घ्यं मयैतच्च मालत्या सहितो हरे ।' ततः परशुरामं प्रार्थयेत् तत्र मन्त्रः । 'जामदग्न्य नमस्तेऽस्तु क्षत्रियान्तकराय च । सर्वाणि यानि पापानि सप्तजन्मकृतान्यपि । क्षयं यान्तु ममैवाद्य त्वत्प्रसादाच्च भार्गव । वाचिकं मानसं पापं ज्ञानतोऽज्ञानतोऽपि वा । आयुर्यशस्तथारोग्यं धनं धान्यं च संपदः । सौभाग्यं तव भक्तस्य संतानं विपुलं भवेत् । सर्वान्कामानवाप्नोतु दिवि सौख्यं निरन्तरम् । अन्ते चास्तु ममेशान भक्तिस्त्वच्चरणे प्रभो । जनार्दन हृषीकेश लक्ष्मीनाथ सुरार्चित । राम राम महाबाहो कार्तवीर्यविनाशकृत् । एतत्सर्वं मया दत्तं दानं ज्ञेयं तवाच्युत । मामुद्धर जगन्नाथ दयां कृत्वा ममोपरि ।' इति । अथ धात्रीमभिषिञ्चेत् तत्र मन्त्रः । 'माता पितामहश्चान्ये अपुत्रा ये च गोत्रिणः।वृक्षयोनिगता ये च ये च ब्रह्माण्डमध्यगाः।पिशाचत्वं गता ये च ये च प्रेतत्वमागताः । ते पिबन्तु मया दत्तं धात्रीमूले सदा पयः । ते सर्वे तृप्तिमायान्तु धात्रीमूलनिषेचनात् ।' इति । ततोऽष्टोत्तरशतकृत्वोऽष्टाविंशतिकृत्वोष्टकृत्वो वामलकीं प्रदक्षिणीकृत्य हरिं नीराज्य जागरणं कृत्वा नित्यकर्म निर्वर्त्य गुरवे देवं सपरिकरं निवेद्य ब्राह्मणान् संभोज्य स्वयं बन्धुभिः सममश्नीयात् । इति ब्रह्माण्डपुराणे आमर्दकीपापनाशिनीव्रतम् ।

अथैकादशीव्रतोद्यापनम् । तदुक्तं हेमाद्रौ भविष्योत्तरे—नारद उवाच—'भगवन्देव देवेश पुराण पुरुषोत्तम । किंचित्पृच्छामि संदेहं कारुण्यात्कथय प्रभो । अखण्डद्वादशी याऽसौ पुराणे कथिता त्वया । सा सर्वव्रतखण्डानां पूरणाय किमुच्यते।यथा सर्वव्रतानां तु वैकल्यं पूर्यते प्रभो।तस्या उद्यापनविधिर्न सम्यक्कथितस्त्वया। न तद्व्रतस्य वक्तास्ति श्रोता चापि सुदुर्लभः ।' विष्णुरुवाच—' मार्गशीर्षे शुभे मासि शुक्लपक्षे शुचिर्व्रती । दशम्यां केशवं पूज्य हविष्यान्नकृताशनः।निर्वर्त्य पश्चिमां संध्यां गृह्णीयाद्दन्तधावनम् । उपस्पृश्य यथान्यायं मन्त्रमेतमुदीरयेत् । कृष्ण विष्णो हृषीकेश केशव क्लेशनाशन । करिष्येऽहं व्रतारम्भं भवेद्यावद्दिनत्रयम् । इति संप्रार्थ्य गोविन्दं मन्त्रेणादौ ततः स्वपेत् ।' व्रतग्रहणमन्त्रः । ' ततः प्रभाते चोत्थाय यथोक्तं व्रतमाचरेत् । चतुर्भिः पारणं मासैः कथितं यद्द्विजोत्तम । तत्पात्रदानविधिना भिद्यते न हि पारणम् । एवं द्वादश निर्वर्त्य द्वादशीः पद्मजोद्भव । उद्यापनं ततः कुर्याद्विधिमन्त्रपुरस्कृतम् । एकादश्यां शुचिः स्नातः शुद्धाम्बरधरो व्रती । सर्वतीर्थेषु यत्पुण्यं

ततो हुत्वा यवैर्व्रीहिघृतादिभिः । आदित्यादीन्ग्रहान्सर्वाञ्छक्त्यैवाराधयेदिह । ततो धौतैरतिश्वेतैर्वस्त्रैराभरणैः शुभैः । कर्णाङ्गुलीभूषणैश्च रूप्यं कृत्वा पवित्रकम् । अर्घ्यपुष्पप्रदानेन आचार्यं तत्प्रपूजयेत् ।आचार्यं पूजयित्वा च वस्त्रैर्नानाविधैः शुभैः । वस्त्रं छत्रं सहेमं च रत्नादिभिरलंकृतम् । सकंकणं हारयुक्तं सपत्नीकानथापि च । मुद्रिकाकर्णभूषैश्च तथा वस्त्रैः प्रपूजयेत् । दद्यात्सदक्षिणां धेनुं सवत्सां च पयस्विनीम् । स्वर्णशृङ्गीं रौप्यखुरां कांस्यदोहनसंयुताम् । ताम्रपृष्ठां स्वर्णघण्टां नासिका मौक्तिकान्विताम् । रत्नपुच्छां वस्त्रयुतां निष्कत्रयसमन्विताम् । भक्त्या समर्पयेत्सर्वं यथाविभवसारतः । सुरभी वैष्णवी माता नित्यं विष्णुपदे स्थिता । गोग्रासं तु मया दत्तं सुरभि प्रतिगृह्यताम् । गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः । गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् । धेनुं स्पृष्ट्वा नमस्कुर्यात्कुर्याच्चैव प्रदक्षिणम् । प्रदक्षिणीकृताऽनेन सप्तद्वीपा वसुंधरा । नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ।' नमस्कारः । 'गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश । यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ।' गोप्रार्थना । 'यस्मात्त्वं पृथिवीरूपा धेनुरूपेण संस्थिता।त्वदर्चनाद्धरा प्रीता ममपापं व्यपोहतु।मन्त्रैरेतैस्तु संपूज्य आचार्याय निवेदयेत् । पदं चैव प्रदातव्यं वस्त्राद्यष्टकसंयुतम्।पादुकोपानहच्छत्रं मुद्रिकाष्टभिरङ्कितम् । नामाङ्कितजलं कुम्भं तण्डुलैः पूरितं तथा । सोपस्करां च प्रतिमामाचार्याय निवेदयेत् । कृष्णायानन्तरूपाय दास्यामि प्रतिमामिमाम् । द्रव्यं विष्णुसमुद्भूतमतः शान्तिं प्रयच्छ मे।'प्रतिमादानमन्त्रः।'मण्डलं फलसंयुक्तं ब्राह्मणाय निवेदयेत्।अन्येभ्यो ब्राह्मणेभ्यश्च भक्त्या दद्याच्च दक्षिणाम् । अभिषेकं ततः कुर्याद्यजमानस्य मन्त्रतः । समुद्रमिति मन्त्रेण सुरास्त्वेति च मन्त्रतः।कोटितीर्थसमं पुण्यमाचार्यं तु क्षमापयेत् । मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन । संपूजितो मया देव परिपूर्णं तदस्तु मे ।' क्षमापणमन्त्रः । ' इष्टमित्रादिसंयुक्तो गृहमागत्य संयतः । ब्राह्मणान्भोजयेत्पश्चाद्यथाविभवविस्तरैः । मिष्टान्नपायसैर्भुक्त्वा पश्चाद्दद्याच्च दक्षिणाम्।दीनानाथांश्च संपूज्य ब्राह्मणांश्च विशेषतः । भुञ्जीत वाग्यतो भूत्वा मिष्टान्नं च स्वयं नरः । भुक्त्वा चैव शुचिर्भूत्वा चिन्तयेत्तद्दिने हरिम् । एवं कृते धर्मराज कर्मणाऽसौ जनार्दनः । स कृष्णरूपी भगवान्प्रियो भवति सर्वदा । सगरेण पुरा चीर्णं राजभिर्जनकादिभिः । मनुना च दिलीपेन रघुणा भरतेन च । नृपैरन्यैश्च चरितं राज्यं भुक्त्वा दिवं गताः । यः करोति नृपश्रेष्ठ व्रतस्योद्यापनं मुदा । व्रतस्य फलमाप्नोति विष्णुलोके महीयते । ' इति जन्माष्टम्युद्यापनविधिः ।

अथास्यामेव रोहिणीयुक्तायामग्निपुराणोक्तं जयन्तीव्रतम्। वसिष्ठ उवाच—'कृष्णाष्टम्यां भवेदत्र कलैका रोहिणी नृप। जयन्ती नाम सा ज्ञेया उपोष्या सा प्रयत्नतः। सप्तजन्मकृतं राजन्यत्पापं त्रिविधं नृणाम्। तत्क्षालयति गोविन्दस्तिथौ तस्यां सुभावितः। उपवासश्च तत्रोक्तो महापातकनाशनः। जयन्त्यां जगतीपाल विधिना नात्र संशयः। त्रेतायां द्वापरे चैव राजन्कृतयुगे पुरा। रोहिणीसहिता चेयं विद्वद्भिः समुपोषिता। वियोगे पारणं चक्रुर्मुनयो ब्रह्मवादिनः। सांयोगिके व्रते प्राप्ते यत्रैकोऽपि वियुज्यते। तत्र पारणकं कुर्यादेवं वेदविदो विदुः। अतः परं महाभाग संप्राप्ते तामसे कलौ। जन्मना वासुदेवस्य भविता व्रतमुत्तमम्। आराधितः स देवक्या विष्णुः सर्वेश्वरः पुरा। समायोगे तु रोहिण्या निशीथे राजसत्तम। समजायत गोविन्दो बालरूपी चतुर्भुजः। तं दृष्ट्वा जगतां नाथं प्रणम्य गरुडध्वजम्। देवकी प्राञ्जलिर्भूत्वा इदं वचनमब्रवीत्।' देवक्युवाच—'नाहं वियोगं संसोढुं हार्दं प्रस्रुतलोचना। तवेदं रूपमालोक्य शक्नोमि मधुसूदन।' वासुदेव उवाच—'त्वं मां द्रक्षस्यसंदिग्धं दिनेऽस्मिन्नेव तामसे। तव दर्शनमेष्यामि बालरूपेण देवकि। ये त्वां पुष्पादिभिर्देवि पूजयिष्यन्ति मानवाः। दिने तस्मिन्महाभागास्तवोत्सङ्गे व्यवस्थितम्। दास्यन्ति ये निशीथेऽर्घ्यं रोहिणीसहिते विधौ। सुवर्णेन कृते पात्रे राजते वा नरोत्तमाः। सर्वान्कामानवाप्स्यन्ति इह लोके परत्र च। सप्तमीसंयुताष्टम्यां निशीथे रोहिणी यदि। भविता साऽष्टमी पुण्या यावच्चन्द्रदिवाकरौ। प्रतिमासं च मे पूजामष्टम्यां यः करिष्यति। मम चैवाखिलान्कामान्स संप्राप्स्यत्यसंशयम्।' वसिष्ठ उवाच-'अनेन विधिना यस्तु प्रतिमासं नरेश्वर। करोति वत्सरं पूर्णं यावदागमनं हरेः। दद्याच्छय्यां सुसंपूर्णां गोभी रत्नैरलंकृताम्। ब्राह्मणाय नृपश्रेष्ठ तस्य पुण्यफलं शृणु। यत्पुण्यं सम्यगिष्टेन राजसूयेन पार्थिव। तत्पुण्यं सकलं लब्ध्वा विष्णोः सालोक्यतां व्रजेत्। नापुत्रीत्यथ नो दुःखी न वियोगी कुरूपवान्। भवेन्नाकालतो मृत्युर्न च जन्मशतं भयम्। शंखे तोयं समादाय सपुष्पफलकाञ्चनम्। जानुभ्यां च धरां गत्वा चन्द्रायार्घ्यं निवेदयेत्। क्षीरोदार्णवसंभूत अत्रिनेत्रसमुद्भव। अर्घ्यं गृह्ण शशांकेमं रोहिण्या सहितो मम।' 'रोहिणीसहितं चन्द्रं कृत्वा रौप्यमयं बुधः। द्वादशाङ्गुलविस्तारं तत्रार्घ्यं संनिवेदयेत्। ततोऽनुपूजयेत्तां तु सकृष्णां देवकीं नृप। गन्धपुष्पैः सनैवेद्यैर्वस्त्रालंकारभूषणैः। प्रणमेद्देवजननीं त्वत्तो जातस्तु वामनः। वसुदेवात्तथा कृष्णो नमस्तुभ्यं नमो नमः। सुपुत्रार्थे प्रदत्तं मे गृहाणेमं नमोऽस्तु ते। अदितिर्देवमाता त्वं वसुदेवस्तु कश्यपः। अजीजन-

स्तमीडेऽहं वासुदेवं सनातनम्। इत्येवं पूजयित्वा तं पुनः सूक्तैस्तु वैष्णवैः। स्तुत्वावा दित्रनिर्घोषैर्गीतवाद्यैः सुमङ्गलैः। सुकथाभिर्विचित्राभिस्तथा प्रेक्षणिकैरपि। पूर्वेतिहासैः पौराणैः क्षपेत्तां शर्वरीं नृप। दद्यात्स्वशक्तितो राजन्प्रभात उदिते रवौ। ब्राह्मणेभ्यो यथाशक्त्या धेनुं वस्त्रादि काञ्चनम्। दक्षिणां च द्विजेभ्यस्तु सर्वं तदक्षयं भवेत्। भांते कुर्यात्तिथेर्वापि शस्तं भारत पारणम्। तेन पुण्येन पूतात्मा राजसूयफलं लभेत्। यः कुर्याद्व्रतराजं तु पुण्यवाञ्छ्राक्तितः सदा। इहामुत्र सुखी विद्वान्फलात्फलतरं व्रजेत्।' आदित्यपुराणे तमेतमेव विधिमभिधायैतावान्विशेष उक्तः—'गन्धैर्माल्यै-स्तथा पेयैर्यवगोधूमसंभवैः। सगोरसैर्भक्ष्यभोज्यैः फलैश्च विविधैरपि। रात्रौ प्रजागरः कार्यो नृत्यगीतसमाकुलैः। अरुणोदयवेलायां नवम्यां च ततः स्त्रियः। रक्तवस्त्रा-न्विताः सर्वाः पुष्पमाल्यैरलंकृताः। नयन्ति प्रतिमां ह्येता नानाविभवसंभवाः। नदी-तीरं शुभं रम्यं विविक्तं वा महत्सरः। तत्र स्नानं प्रकुर्वीत स्नापयन्ति च तास्ततः। ततः प्रविश्य च गृहं यवान्नं भुञ्जते च ताः। युक्तमिक्षुविकारैश्च मध्वाज्यमरिचैः सह।' इति कृष्णजयन्तीव्रतम्।

भाद्रपदकृष्णाष्टम्यामुमामहेश्वरव्रतं तत्पूजनं च हेमाद्रौ—'नभस्ये मासि चाष्ट-म्यां यदार्द्रा जायते तदा। व्रतमेतद्विधातव्यमुमामाहेश्वरं भुवि।' इत्यादि।

भाद्रपदकृष्णाष्टमी कालाष्टमी। तदुक्तं हेमाद्रौ वामनपुराणे—'नभस्ये मासि च तथा या स्यात्कृष्णाष्टमी शुभा। युक्ता मृगशिरेणैव सा तु कालाष्टमी स्मृता।' तस्यां शिवपूजनं कर्तव्यम्। इति कालाष्टमी॥ इयं मन्वादिरपि।

अथ भाद्रपदशुक्लाष्टम्यां भविष्यत्पुराणोक्तं दूर्वाष्टमीव्रतम्। श्रीविष्णुरुवाच। 'ब्रह्मन्भाद्रपदे मासि शुक्लाष्टम्यामुपोषितः। पूजयेच्छंकरं भक्त्या यो नरः श्रद्धयाऽ-न्वितः। स याति परमं स्थानं यत्र देवस्त्रिलोचनः। गणेशं पूजयेद्यस्तु दूर्वया सहितं मुने। फलानां सकलैर्दिव्यैर्गन्धपुष्पविलेपनैः। दूर्वां पूज्य तथेशानं मुच्यते सर्वपात-कैः। शुचौ देशे प्रजातायां दूर्वायां ब्राह्मणोत्तमः। स्थाप्य लिङ्गं ततो गन्धैः पुष्पै-र्धूपैः समर्चयेत्। खर्जूरैर्नारिकेलैश्च मातुलिङ्गफलैस्तथा। पूजयेच्छंकरं भक्त्या दूर्वया विधिवद्द्विज। दध्यक्षतैर्द्विजश्रेष्ठ अर्घ्यं दद्यात्त्रिलोचने। दूर्वाशमीभ्यां संपूज्य मानवः श्रद्धयान्वितः। स वै सुकृतजन्मभ्यां सर्वदेवैस्तु वन्दितः। विद्यां प्राप्नोति विद्यार्थी पुत्रार्थी पुत्रमाप्नुयात्। धनार्थी धनमाप्नोति भार्यार्थी लभते च ताम्। मनसा यद्यदि

१–गणेशो महेश्वर.।

च्छेत्तु तत्तदाप्नोति मानवः । य एवं पूजयेद्दूर्वां भूतेशं मानवः फलैः । स सप्तजन्मपापौघैर्मुच्यते नात्र संशयः । कृतोपवासः सप्तम्यामष्टम्यां पूजयेच्छिवम् । दूर्वासमेतं विप्रेन्द्र दध्यक्षतफलैः शुभैः । त्वं दूर्वेऽमृतजन्मासि वन्दितासि सुरासुरैः । सौभाग्यं संततिं देहि सर्वकार्यकरी भव । यथा शाखाप्रशाखाभिर्विस्तृतासि महीतले । तथा ममापि संतानं देहित्वमजरामरम् ।' दूर्वापूजामन्त्रः । 'स्वलिङ्गमन्त्रैरीशानमर्चयेत्प्रयतः शुचिः । दत्त्वा पिष्टानि विप्रेभ्यः फलं च विविधं प्रभो । तिलपिष्टकगोधूम धान्यपिण्डानि पाण्डव । भोजयित्वा सुहृन्मित्रसंबन्धिस्वजनांस्तथा । ततो भुञ्जीत तच्छेषं स्वयं श्रद्धासमन्वितः ।' इति । एतच्च पिष्टादिकमनग्निपक्वमेव भक्षणीयम् । 'अनग्निपक्वमश्नीयादन्नं दधिफलं तथा । अक्षारलवणं ब्रह्मन्नश्नीयान्मधुनाऽन्वितम् ।' इति भविष्यत्पुराणवचनात् । 'पक्षे भाद्रपदस्यैव शुक्लाष्टम्यां युधिष्ठिर । दुर्वाष्टमीव्रतं पुण्यं यः करोति महाधनः । न तस्य क्षयमाप्नोति संतानं सप्तपौरुषम् । नन्दते वर्धते नित्यं यथा दूर्वा तथा कुलम् । इति दूर्वाष्टमीव्रतम् । इदं दूर्वाव्रतं पूर्वविद्धायां कर्तव्यम् । 'श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी । पूर्वविद्धा तु कर्तव्या शिवरात्रिर्बलेर्दिनम् ।' इति बृहद्यमवचनात् । 'शुक्लाष्टमी तिथिर्या तु मासि भाद्रपदे भवेत् । दूर्वाष्टमी तु सा ज्ञेया नोत्तरा सा विधीयते ।' इति पुराणसमुच्चयवचनाच्च । 'मुहूर्ते रौहिणेऽष्टम्यां पूर्वा वा यदि वा परा । दूर्वाष्टमी तु सा कार्या ज्येष्ठां मूलं च वर्जयेत्' इत्यत्र यत्परविद्धाया अपि विधानं तत्पूर्वविद्धायाः कर्मकालव्याप्त्यभावे, सत्यामुभयत्र कर्मकालव्याप्तौ पूर्वविद्धायां ज्येष्ठामूलादियोगदुष्टायां च द्रष्टव्यम् । ज्येष्ठामूलयोगे अगस्त्योदये कन्यास्थे सूर्ये च तन्न कर्तव्यम् । तथा च पुराणसमुच्चये-'दूर्वाष्टमी सदा त्याज्या ज्येष्ठामूलर्क्षसंयुता।परविद्धा तथा कृष्णा मुनिः शातातपोऽब्रवीत् ।'तथा 'प्राप्ते भाद्रपदे मासि शुक्लाष्टम्यां च भारत । दूर्वामभ्यर्चयेद्भक्त्या ज्येष्ठां मूलं च वर्जयेत्। ऐन्द्रर्क्षे पूजिता दूर्वा हन्त्यपत्यानि नान्यथा । भर्तुरायुर्हरा मूले तस्मात्तां परिवर्जयेत् ।' इति । स्कन्दपुराणे—'शुक्ले भाद्रपदे मासि दूर्वासंज्ञा तथाष्टमी । सिंहार्क एव कर्तव्या न कन्यार्के कदाचन । सिंहस्थे सोत्तमा सूर्येऽनुदिते मुनिसत्तम ।' तथातत्रैव— अगस्त्य उदिते तात पूजयेदमृतोद्भवाम् । वैधव्यं पुत्रशोकं च दश जन्मानि पञ्च च । ' इति । हेमाद्रौ लौगाक्षिरपि--'उद्यानिकाशिवपवित्रकमेघपूजा दूर्वाष्टमीफल विरूढकजागराणि । स्त्रीणां व्रतानि निखिलान्यपि वार्षिकाणि कुर्यादगस्त्य उदिते न शुभानि लिप्सुः ।' इति । हेमाद्रौ—शुक्लाष्टम्यामगस्त्योदये भाविनि सति पूर्वकृष्णा-

१—स्वलिंगमन्त्रैः रौद्रमन्त्रैः ।

ष्टम्यामेव कुर्यादिति । दीपिकायामप्येवम् । यदा भाद्रपदोऽधिमासस्तदा तत्रैव कार्यं नोत्कर्षः । तदुक्तं निर्णयदीपे स्कान्दे—'अधिमासे तु संप्राप्ते नभस्य उदिते मुनेः । अर्वाग्दूर्वाव्रतं कार्यं परतो नैव कुत्रचित् ।' इति । एतच्च व्रतं स्त्रीणां नित्यम् । 'या न पूजयते दूर्वां मोहादिह यथाविधि । त्रीणि जन्मानि वैधव्यं लभते नात्र संशयः । तस्मात्संपूजनीया सा प्रतिवर्षं वधूजनैः । सुखसंतानजननी भर्तुः सौख्यकरी सदा ।' इति पुराणसमुच्चयवचने अकरणे दोषश्रवणाद्वीप्साश्रुतेश्च । अत एव ज्येष्ठायोगादिनिषिद्धकालेऽपि व्रतानुकल्पः स्मर्यते । 'कर्तव्या चैकभुक्तेन ज्येष्ठामूलं यदा भवेत् । दूर्वामभ्यर्चयेद्भक्त्या न वन्ध्यं दिवसं नयेत् ।' इति । अत्र ज्येष्ठामूलग्रहणं सकलनिषिद्धकालोपलक्षणम् । अत्र चैवं व्यवस्था । पूर्वोक्तनिषिद्धज्येष्ठायोगाद्यभावे स्त्रीभिः पूर्वोक्तप्रकारेण दूर्वा स्वयं संपूज्य पिष्टादिकं दत्त्वा अनग्निपक्वं भक्षणीयम् । निषिद्धज्येष्ठादियोगे तु ब्राह्मणद्वारा पूजां कृत्वैकभुक्तं कर्तव्यमिति ।

अस्यामेव ज्येष्ठायुक्तायां ज्येष्ठापूजा कर्तव्या ।'कन्यास्थार्काष्टमी शुक्ला ज्येष्ठर्क्षे महती स्मृता।अलक्ष्मीपरिहाराय ज्येष्ठां तत्र प्रपूजयेत्।'इति लिङ्गपुराणात्।अत्र कन्यास्थार्कयोगेन प्राशस्त्यमात्रम्।मासस्तु भाद्रपदश्चान्द्र एव।कालादर्शेऽपि-'भाद्रे शुक्लाष्टमी ज्येष्ठानक्षत्रेण समन्विता । महती कीर्तिता तस्यां ज्येष्ठां देवीं प्रपूजयेत् ।' इति । यत्तु ज्येष्ठानक्षत्रमात्रापेक्षं तिथिव्रताद्भिन्नं ज्येष्ठारूपं व्रतं तद्यस्यां तिथौ ज्येष्ठानक्षत्रं भवति तस्यां तिथौ कर्तव्यम् । तदुक्तं माधवीये स्कान्दे—'मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठर्क्षसंयुते । यस्मिन्कस्मिन्दिने कुर्याज्ज्येष्ठायाः परिपूजनम् ।' इति । अष्टम्याः खण्डत्वे ज्येष्ठायोगवशेन पूर्वा परा वा ग्राह्या दिनद्वययोगे तदभावेऽपि वा परा । पूर्वेऽह्नि रात्रियोगे पूर्वैव । 'नवम्या सह कार्या स्यादष्टमी नात्र संशयः । मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठर्क्षसंयुता। रात्रिर्यस्मिन्दिने तत्र ज्येष्ठायाः परिपूजनम्।' इति तत्रैवोक्तेः। अस्यापवादः।'यस्मिन्दिने भवेज्ज्येष्ठा मध्याह्नादूर्ध्वमप्यणुः । तस्मिन्हविष्यं पूजा च न्यूना चेत्पूर्ववासरे।' इति । ज्येष्ठानक्षत्रव्रते तस्य खण्डत्वेऽष्टमी भानुवारयुगन्यतरयुग्वा ज्येष्ठानक्षत्रं ग्राह्यम् । 'तत्राष्टम्यां यदा वारो भानोर्ज्येष्ठर्क्षमेव वा । नीलज्येष्ठेति सा प्रोक्ता दुर्लभा बहुकालिकी ।' इति स्कान्दात् । अन्यतरयोगस्याप्यभावे मध्याह्नादूर्ध्वमनुवर्तमानं ग्राह्यम् । पूर्वोक्तस्कान्दात् । तथा।'मैत्रेणावाहयेद्देवीं ज्येष्ठायां तु प्रपूजयेत्। मूले विसर्जयेद्देवीं त्रिदिनं व्रतमुत्तमम् ।' इति । विशाखायोगे सति ज्येष्ठानयनमनुरा-

धायां न कार्यम्। तद्योगरहितायां कार्यमसंभवे पादमात्रं हित्वा स्थापयेदिति निर्णयोद्धारे उक्तम्। अत्र भद्रादि वर्जयित्वा ज्येष्ठां निमन्त्रयेत्। अपरिहारे योगे तु भद्रामुखमात्रं त्यजेत्। संपूर्णा वैधृतिश्चेत्तदा घटिकाः षोडश द्वादश वा त्यक्त्वामन्त्रयेत्। इदं व्रतं महाराष्ट्रेषु प्रसिद्धम्। निर्णयसिन्धौ इदं च केवलतिथौ केवलनक्षत्रे चोक्तम्। मात्स्ये—'प्रत्याब्दिकं तिथावुक्तं यज्ज्येष्ठादैवतं व्रतम्। प्रतिज्येष्ठाव्रतं यच्च वि[1]हितं केवले शुभे। तिथावेवाचरेदाद्यं द्वितीयं केवलर्क्षके।' इति। दाक्षिणात्यास्तु-ऋक्ष एव कुर्वन्ति। अत एव मदनरत्ने भविष्ये नक्षत्रमात्र उक्तम्। 'मासि भाद्रपदे पक्षे शुक्ले ज्येष्ठा यदा भवेत्। रात्रौ जागरणं कृत्वा एभिर्मन्त्रैश्च पूजयेत्।' इति। पूजामन्त्रो भविष्योत्तरे—'पुत्रदारसमृद्ध्यर्थं लक्ष्म्याश्चैव विवृद्धये। अलक्ष्म्याश्च विनाशाय ज्येष्ठे त्वामर्चयाम्यहम्।' इति। अनेन षोडशोपचारैः संपूज्य प्रार्थनां कृत्वा नमस्कारं कुर्यात्। तत्र मन्त्रः। 'ज्येष्ठायै ते नमस्तुभ्यं ज्येष्ठायै ते नमो नमः। शर्वायै ते नमस्तुभ्यं शांकर्यै ते नमो नमः।' इति ज्येष्ठाव्रतम्। अस्यां महालक्ष्मीयात्रोक्ता काशीखण्डे—'महालक्ष्म्यष्टमीं प्राप्य तत्र यात्रा कृता नृणाम्। संपूजिता हि विधिवत्पद्मा सद्म न मुञ्चति।' इति। शिष्टा अपि षोडशदिनपर्यन्तं प्रत्यहं सति संभवे यात्रां कुर्वन्ति।

अस्यामेवाष्टम्यां महालक्ष्मीव्रतारम्भः कार्यः। तदुक्तं मदनरत्ने स्कान्दे—'मासि भाद्रपदे शुक्लपक्षे ज्येष्ठायुताऽष्टमी। प्रारब्धव्यं व्रतं तत्र महालक्ष्म्या यतात्मभिः।' इति। पुराणसमुच्चये—'श्रियोऽर्चनं भाद्रपदे सिताष्टमीं प्रारभ्य कन्यामगते च सूर्ये। समापयेत्तत्र तिथौ च यावत्सूर्यस्तु पूर्वार्धगतो युवत्या।' इति। सिंहसंक्रान्तौ भाद्रपदसिताष्टमीमारभ्य लक्ष्म्यर्चनमारम्भणीयम्। तत्कन्यासंक्रान्तिपूर्वार्धे आश्विनकृष्णाष्टम्यां समापनीयमित्यर्थः। तत्रैव निर्णयामृते—'कन्यागतार्कमारभ्य कर्तव्यं न श्रियोऽर्चनम्। हस्तप्रान्तदलस्थेऽर्के तद्व्रतं न समापयेत्।' इति। इदं च व्रतं षोडशदिनात्मकं तच्च ज्येष्ठायुक्तायामष्टम्यामारम्भणीयम् तदसंभवे केवलायामपि यथा षोडशदिनात्मकं व्रतं संपद्यते तथा कार्यम्। कौस्तुभे तु अष्टम्या द्वैधे यत्र ज्येष्ठायोगस्तत्रारब्धव्यम्, तदसंभवे केवलायामपि नवमीयुक्तायाम्। शुक्लपक्षेऽष्टमी चैवेति शास्त्राज्ज्येष्ठायोगस्य प्राशस्त्यकरत्वाच्च। आश्विनकृष्णाष्टमी तु चन्द्रोदयव्यापिनी ग्राह्या तत्रैवार्घ्यविधानात्। 'चन्द्रोदयव्रते चैव तिथिस्तात्कालिकी स्मृता।' इति वच-

---

१ 'केवलोडुनि' इति वा पाठः।

नादुभयत्र चन्द्रोदयसत्त्वेऽसत्त्वे वा कृष्णपक्षेऽष्टमी चैवेति वचनात्पूर्वा । यद्युत्तरदिने चन्द्रोदयोत्तरं त्रिमुहूर्ता तदा त्युत्तरैव ।'पूर्वा वा परविद्धा वा ग्राह्या चन्द्रोदये सदा । त्रिमुहूर्तापि सा पूज्या परतश्चोर्ध्वगामिनी ।' इति वचनाच्चन्द्रोदयादूर्ध्वं त्रिमुहूर्ताष्टमी चेत्तदा परैव ग्राह्या न चेत्पूर्वेत्यर्थः । तदुक्तं चन्द्रप्रकाशे स्मृत्यन्तरे—'अर्धरात्रमतिक्रम्य वर्तते योत्तरा तिथिः । तदा तस्यां तिथौ कार्यं महालक्ष्मीव्रतं शुभम् ।'इति । इदं च व्रतं दोषचतुष्टयरहितायां तिथौ कर्तव्यम् । तदुक्तं पुराणसमुच्चये—' पूजनीया गृहस्थेन अष्टमी प्रावृषि श्रियः । दोषैश्चतुर्भिः संत्यक्ता सर्वसंपत्करी शुभा ।' इति । दोषाश्च तत्रोक्ताः—'पुत्रसौभाग्यराज्यायुर्नाशिनी सा प्रकीर्तिता । तस्मात्सर्वप्रयत्नेन त्याज्या कन्यागते रवौ । विशेषेण परित्याज्या नवमीदूषिताष्टमी ।' अत्र कन्यागते रवौ निषेधो व्रतप्रारम्भविषयः । तथा-'त्रिदिने चावमे चैव अष्टमीं नोपवासयेत् । पुत्रहा नवमीविद्धा स्वघ्नी हस्तार्धगे रवौ । धर्मघ्नी त्रिदिने प्रोक्ता त्याज्या चैवावमे सति ।' इति । स्वं द्रव्यं हन्तीति स्वघ्नी । नवमीवेधो, रवेर्हस्तोत्तरदलगतत्वं, त्रिदिनत्वम्, अवमदिनत्वं चेति दोषचतुष्टयम् । त्रिदिनावमदिनयोर्लक्षणं रत्नमालायामुक्तम्—'यत्रैकः स्पृशति तिथिद्वयावसानं वारश्चेदवमदिनं तदुक्तमाद्यैः । यः स्पर्शाद्वचति तिथित्रयस्य चाह्नां त्रिद्युस्पृक्स पुनरिदं द्वयं नचेष्टम् । ' एतद्दोषवर्जनमुपक्रम्योद्यापनयोरेव प्रायेण ज्ञेयम् । व्रतस्याषोडशाष्टसाध्यत्वेन मध्ये त्यागायोगादिति । इति महालक्ष्मीव्रतनिर्णयः ।

अथ व्रतविधिः । भाद्रपदशुक्लाष्टम्यां प्रातरुत्थाय प्रातःषोडशकृत्वोऽघ्री करौ मुखं च प्रक्षाल्य स्नानादिकं नित्यं विधाय संकल्पं कृत्वा पूजनं कुर्यात् । महालक्ष्म्याश्चन्दनादिना प्रतिमां विधाय तदग्रे तन्तुषोडशसंसिद्धं ग्रन्थिषोडशसंयुक्तं 'लक्ष्म्यै नम' इति मन्त्रेण प्रतिग्रन्थ्यभिमन्त्रितं संस्थाप्य पूजनं दोरकपूजनं च कृत्वा हस्ते दोरकबन्धनं कुर्यात् । तत्र मन्त्रः । ' धनं धान्यं धरां हर्म्यं कीर्तिमायुर्यशः श्रियम् । तुरगान्दन्तिनः पुत्रान्महालक्ष्मि प्रयच्छ मे । मन्त्रेणानेन बद्ध्वाऽथ दोरकं दक्षिणे करे । काण्डानि षोडशादाय दूर्वायाश्चाक्षतानि च । एकचित्तः कथां श्रुत्वा पूजयेत्तैश्च दोरकम् । ततस्तु प्रातरारभ्य यावत्स्यादसिताष्टमी। तावत्प्रक्षाल्य तद्वत्तु पादादीनि कथां तथा । शृणुयात्प्रत्यहं तावत्तत्संख्यैरक्षतादिभिः।' इति । अथ लक्ष्मीपूजनविधिः । तत्राष्टदलंकमलं विधाय पञ्चोपचारैर्लक्ष्मीं पूजयेत् । तदुक्तं सारसंग्रहे—' आवाहनं चासनं स्याद्दर्घ्यपाद्याचमानि च । मधुपर्काभिषेकौ च

वस्त्रालंकारचन्दनम् । पुष्पं धूपं दीपभोज्ये प्रोद्वासनमथापि च । एतानि मन्त्रवित्कुर्याद्दकपञ्चदशकेन हि ।' अथ प्रयोगः । प्रणवेन श्रीबीजेन वा प्राणायामत्रयं कृत्वा शिरसि आनन्दकर्दमचिक्लीतपुत्रेभ्यः ऋषिभ्यो नमः, मुखे अनुष्टुब्बृहतीत्रिष्टुम्प्रस्तारपङ्क्तिच्छन्दोभ्यः , हृदि श्रीविभावसुदेवताभ्याम् , इति न्यस्य विध्यनुसारेण विनियोगमुक्त्वा , हिरण्मयायै नमः हृदयाय नमः, चन्द्रायै नमः शिरसे स्वाहा, रजतस्रजायै नमः शिखायै वषट्, सुवर्णस्रजायै नमः कवचाय हुम्, हिरण्यस्रजायै नमःनेत्रत्रयाय वौषट्, हिरण्यवर्णायै नमः अस्त्राय फट्, इति षडङ्गमन्त्रान्हृदयादिपदस्थानेऽङ्गुष्ठादिपदं प्रक्षिप्याङ्गुष्ठादिकरतलान्तं करयोर्यथास्थितान्हृदादिषडङ्गेषु विन्यस्य हिरण्यवर्णामिति पञ्चदशभिर्न्यासान्कुर्यात् । शिरसि हिरण्यवर्णामित्यादि,नेत्रयोःताम्म आवह इति, कर्णयोः अश्वपूर्णामिति, नासायां कां सोस्मितामिति, मुखे चन्द्रामिति, गले आदित्यवर्ण इति बाह्वोः उपैतु मामिति, हृदि क्षुत्पिपासेति, नाभौ गन्धद्वारामिति, गुह्ये मनस इति, गुदे कर्दमेनेति, ऊर्वोः आपः सृजमिति, जान्वोः आर्द्रामिति, जङ्घयोः आर्द्रामिति, पादयोः ताम्म इति । एवमेताः प्रणवादिनमोन्ता विन्यस्य सरसिजनिलये इति ध्यात्वा मानसपूजान्ते चतुर्द्वारचतुरस्रत्रयावृतम् अष्टदलं कमलं पूजाचक्रं स्वपुरतो निधायार्घ्यस्थापनादिपीठार्चनान्ते पीठशक्तीः पूजयेत् । ॐ विभूत्यै नमः,उन्नत्यै नमः, कान्त्यै० सृष्ट्यै० कीर्त्यै० संनत्यै० पुष्ट्यै० उत्कृष्टयै० मध्ये ऋद्ध्यै० । ततः प्रतिमादिष्वावाहनादि । अथवा योगपीठन्यासं कृत्वा मूलमन्त्रन्यासं कुर्यात् । अस्या विद्याया भृगुर्ऋषिः निवृच्छन्दः श्रीर्देवता न्यासे विनियोगः । भृगवे ऋषये नमः शिरसि, निवृच्छन्दसे नमो मुखे, श्रीलक्ष्मीदेवतायै नमो हृदये, शंबीजाय नमः गुह्ये, ईंशक्तये नमः पादयोः, रंकीलकाय नमः नाभौ, श्रांअङ्गुष्ठाभ्यां नमः, श्रीं तर्जनीभ्य। नमः श्रूं मध्यमाभ्यां नमः, श्रैंअनामिकाभ्यां नमः, श्रौं कनिष्ठिकाभ्यां नमः, श्रः करतलकरपृष्ठाभ्यां नमः, श्रां हृदयाय नमः, श्रीं शिरसे स्वाहा, श्रूं शिखायै वषट्, श्रैं कवचायहुम्, श्रौं नेत्रत्रयाय वौषट्, श्रः अस्त्राय फट् । मूलेन व्यापकं कृत्वा ध्यायेत् । 'कान्त्या काञ्चनसंनिभां हिमगिरिप्रख्यैश्चतुर्भिर्गजैर्हस्तोत्क्षिप्तहिरण्मयामृतघटैरासिच्यमानां श्रियम् । बिभ्राणां वरमब्जयुग्ममभयं हस्तैः किरीटोज्ज्वलां क्षौमाबद्धनितम्बबिम्बललितां वन्देऽरविन्दस्थिताम् ।' इति ध्यात्वा मानसोपचारैः संपूज्य मूलमन्त्रं जपित्वा गुह्येति मन्त्रेण समर्प्य अर्घ्यस्थापनादि कृत्वा बाह्यपूजां समारभेत् । तत्र तान्त्रिकं वैदिकं वा ध्यानं कृत्वा प्रतिमादिष्वावाह-

नादि कुर्यात्। तद्यथा 'हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह।' 'महालक्ष्मि समागच्छ पद्मनाभपदादिह। यथोपचारपूजेयं त्वदर्थे देवि निर्मिता।' इति मूलेनावाहनं कुर्यात्। तवेयं महिमेति, आलयस्ते हि कथित इति च मूलेन संस्थापनम्। सर्वान्तर्यामिणीमित्यासनम्। अस्मिन्वरासने इति प्रतिष्ठापनम्। अनन्या तवेति संनिरोधनम्। अज्ञानाद्दुर्मदत्वादिति संमुखीकरणम्। दशा पीयूषेति स्थिरीकरणम्। अप्रक्कवाङ्मनइत्यवगुण्ठनम्। ततः षडङ्गेन सकलीकरणम्। धेनुमुद्रया अमृतीकरणम्। महामुद्रया परमीकरणम्। ततः प्राणप्रतिष्ठां कृत्वा आसनं दद्यात्। ताम्म आवह जा० श्रीलक्ष्म्यै नमः आसनम्। अथ अर्घ्यं संस्थाप्य तापत्रयहरमिति। 'अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम्। श्रियं देवीमुपह्वये श्रीर्मा देवीर्जुषताम्।' श्रीरेष तेऽर्घ्यः स्वाहा। ततः पाद्यम्। यद्भक्तिलेशेति। 'कांसोऽस्मि तां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्। पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम्।' श्रीरेतत्ते पाद्यम्। अथाचमनीयम्। वेदानामपि। 'चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम्। तां पद्मनीमीं शरणमहं प्रपद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणोमि।' मूलेन श्रीरेतत्ते आचमनीयं स्वधा। अथ मधुपर्कः। सर्वकालहीनेति पठित्वा'आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः। तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः।' श्रीरेषः मधुपर्कः स्वधा। पुनराचमनीयं दत्त्वा स्नानम्। परमानन्दबोधाब्धि इति। 'उपैतु मां देवसखः कीर्तिश्च मणिना सह। प्रादुर्भूतोऽसुराष्ट्रेऽस्मिन्कीर्तिमृद्धिं ददातु मे।' श्रीरेतत्ते स्नानं नमः। ततः पुनराचमनीयम्। ततः वस्त्रम्। मया चित्रेति। तन्तुसंतानमिति। 'क्षुत्पिपासामला ज्येष्ठा अलक्ष्मीर्नाशयाम्यहम्।अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात्।' श्रीरेते ते वाससी नमः। ततः भूषणानि। स्वभावसुन्दराङ्गेति। 'गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्।' श्रीरेतत्ते भूषणं नमः। ततश्चन्दनम्। 'मनसः काममाकूतिं वाचः सत्यमशीमहि। पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः।'मलयाचलसंभूतं नानापन्नगसेवितम्। शीतलं बहुलामोदं चन्दनं प्रतिगृह्यताम्।' श्रीरेष ते गन्धः। ततोऽक्षताः। 'अक्षताश्च सुरश्रेष्ठे कुङ्कुमाक्ताः सुशोभनाः। गृहाण देवदेवेशि मया दत्ता हि भक्तितः।' ततः पुष्पाणि। 'मिलत्परिमलामोदमत्तालिकुलसंकुलम्। आनन्दिनन्दनोद्यानं पद्मायै कुसुमं नमः।' 'कर्दमेन प्रजा भूता मयि संभ्रमकर्दमा। श्रियं वासय मे कुले मातरं ' श्रीरेतानि ते [illegible] णि वौषट्। तत

पञ्च पुष्पाञ्जलीन्दत्वा आवरणपूजां कुर्यात्कर्णिकायां षडङ्गानि संपूज्य अष्टदलेषु वासुदेवाय, संकर्षणाय, प्रद्युम्नाय,अनिरुद्धाय,पुरुषोत्तमाय,'हिमपीततमालैन्द्रनीलाभान्पीतवाससः। चक्रशंखगदापद्मधारिणश्च चतुर्भुजान्।' पूजयेत्। ततः विदिग्दलेषु सनकाय॰सलिलाय॰गुग्गुलवे॰करण्टाय॰इति संपूज्य देव्याः दक्षिणे शंखनिधये वसुधारासहितायदेव्या वामे वसुमतीसहिताय पद्मनिधये'यजेच्छंखनिधिं देव्या दक्षिणे दयितान्वितम्।मुक्तामाणिक्यसंकाशौ किंचित्स्मितमुखाम्बुजौ।अन्योन्यालिङ्गनपरौ शंखपंकजधारिणौ।वामतःपंकजनिधिं प्रियया सहितं यजेत्।सिन्दूराभौ भुजाश्लिष्टौ रक्तपद्मदलान्वितौ। निःसरद्रत्नवर्षाभ्यां पद्माभ्यां मूर्ध्नि लाञ्छितौ। तुन्दिलं पंकजनिधिं नत्वा वसुमतीमपि।' इति संपूज्य अभीष्टेति संप्रार्थ्य हस्तौ प्रक्षाल्य ततस्तृतीयावरणपूजां कुर्यात्। वालक्यै नमः, विमलायै नमः, कमलायै नमः, वनमालिकायै नमः, विभीषणायनमः,मालिकायै नमः,शांकर्यै नमः,वसुमालिकायै नमः,'पङ्कजद्वयधारिण्यो मुक्ताहारसमप्रभाः।'एताःसंपूज्य मूलेन स्वेष्टदैवतं संपूज्य मूलेन पुष्पाञ्जलिं दत्वा इन्द्रादिपूजनं वज्रादिपूजनं च कृत्वा पुष्पाञ्जलिं दद्यात्। 'गन्धसंभारसंनद्धं पृथग्वस्तुसमुद्भवम्। सुरासुरनरानन्दि धूपं देवि गृहाण मे।' 'आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे। नि च देवीं मातरं श्रियं वासय मे कुले।' लक्ष्म्यै नमः धूपं समर्पयामि। इति धूपः। 'मार्तण्डमण्डलाखण्ड इति विम्बाश्रितैजसम्।निधानं देवि दीपोऽयं निर्मितस्तव भक्तितः।' 'आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम्। सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो ममावह।' इति दीपः। 'देवतालयपातालभूतलाधारधान्यजम्। षोडशाकारसंभारनैवेद्यं ते नमः श्रियै।' 'आर्द्रां यः करिणीं यष्टिं पिङ्गलां पद्ममालिनीम्।चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह।'इति नैवेद्यम्।' स्नानादिकं विधायाथ यतः शुद्धिरवाप्यते। एतदाचमनीयं मे महालक्ष्मि विधीयताम्।'इत्युत्तरापोशनम्। इदं फलमिति फलम्। 'पातालतलसंभूतं वदनाम्भोजभूषणम्। नानागुणसमाकीर्णं ताम्बूलं देवि ते नमः।' इति ताम्बूलम्। हिरण्यगर्भगर्भस्थमिति दक्षिणाम्। श्रिये जात इति नीराजनम्।यानि कानि चेति प्रदक्षिणा। ततो नमस्कारः। ततः श्रीसूक्तं पठित्वा प्रार्थनां कुर्यात्। एवं प्रत्यहं पूजनं विधाय समाप्तिदिने कृष्णाष्टम्यां महापूजां कुर्यात्।

अथ कृष्णाष्टमीप्रयोगः। नक्तं स्नानं विधाय शुक्लाम्बरधरः पूजां गृहीत्वा आसनोपरि पूर्वाभिमुख उपविश्य श्वेतवस्त्रेऽष्टदलं विलिख्य तत्कर्णिकायां गजयुग्मकरस्थकुम्भासिच्यमानां लक्ष्मीं संलिख्य पुष्पाञ्जलिदानान्तमुक्तं पूजनं कृत्वा 'विष्णोर्वक्षसि

पद्मे च शंखचक्रे तथाम्बरे । लक्ष्मीर्नित्या यथासि त्वं मयि नित्या तथा भव ॥' इति संप्रार्थ्य । 'उत्तार्य दोरकं बाहोर्लक्ष्मीपार्श्वे निवेदयेत् । लक्ष्मि देवि गृहाण त्वं यन्मया दोरकं धृतम् । व्रतं संपूर्णतां यातु कृपा कार्या मयि त्वया ।' इति । ततो वाणकदानम् षोडश पिण्डान्षोडश दीपांश्च दद्यात् । तत्र मन्त्रः । 'इन्दिरा प्रतिगृह्णाति इन्दिरा वै ददाति च । इन्दिरा तारिकोभाभ्यामिन्दिरायै नमो नमः ।' इति मूलेनार्घ्यं दत्त्वा तत्संख्याकान्गोधूमचूर्णदीपानन्नपिण्डांश्च भुक्त्वा रात्रौ जागरणं कृत्वा चन्द्रोदये फलादियुक्तेन शंखेन अर्घ्यं दद्यात् । 'नमोऽस्तु ते निशानाथ लक्ष्मीभ्रातर्नमोऽस्तु ते । व्रतं संपूर्णतां यातु गृहाणार्घ्यं विधो नमः ।' इति । ततो नमस्कारं कृत्वा जानुभ्यामवनिं गत्वा प्रार्थयेत् । 'क्षीरोदार्णवसंभूते कमले कमलालये । प्रयच्छ सर्वकामान्मे विष्णुवक्षःस्थलालये । पुत्रान्देहि यशो देहि सौख्यं सौभाग्यमेव च । कालि कालि महाकालि विकरालि नमोऽस्तु ते । त्रैलोक्यजननि त्राहि वरदे भक्तवत्सले । एकनाथे जगन्नाथे जमदग्निप्रियेऽव्यये । रेणुके त्राहि मां देवि राममातः प्रियं कुरु । भूतनाथे जगन्नाथे प्रसीद पुरुषोत्तमे । कपालकर्त्रिकाशूलडमरुव्यग्रहस्तके । श्रियं कुरु महालक्ष्मि अश्रियं त्वाशु नाशय ।' इति । 'वन्दारुवीरसुरवृन्दकिरीटकोटिरोचिश्छटाग्निकरकल्पितरत्नदीपम् । देवि त्वदीयचरणं शरणं जनानां सेवामहे सकलमङ्गलवर्धनाय । उत्फुल्लकैरवदलायतलोचनायै गण्डोल्लसच्चटुलकुण्डलमण्डितायै । राकाशशिप्रतिभटाननलोचनायै तस्यै नमः कमललोचनवल्लभायै । सद्भक्तिकल्पलतिकां हरिकण्ठभूषां केयूरहेमकटकोज्ज्वलकङ्कणाङ्काम् । संसारसागरमुखे पततो ममाद्य देहि त्वदीयकरयष्टिमनङ्गमातः । दृष्टा देवि जना यदपि विविधा ब्रह्माधिपत्यं गता विष्णोर्वक्षसि या चकार तरला लीलाब्जमालाभ्रमम् । क्लेशाग्निप्रहतं त्वदीयचरणद्वन्द्वाब्जसेवारतं कारुण्यामृतसारपूरितदृशा मामद्य पश्येश्वरि । मल्लीविफुल्लकुसुमोज्ज्वलमध्यभागधम्मिल्लभारजिततारकचित्रिताभ्रा । उत्तुङ्गहेमनिकषोज्ज्वलकायकीर्तिर्लक्ष्मीः स्वयं प्रणमतां श्रियमातनोतु ।' इति महालक्ष्मीं स्तुत्वा प्रातर्विसर्जनमन्त्रस्तु । 'ताम्म आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान्विन्देयं पुरुषानहम् ।' 'पङ्कजं देवि संत्यज्य मम वेश्मनि संविश । यथा सुपुत्रभृत्योऽहं सुखी स्यां त्वत्प्रसादतः ।' इति देवीविसर्जनम् । एतदुद्यापनं त्वितिहासे द्रष्टव्यम् । अथ महालक्ष्मीव्रतकथा । स्कन्द उवाच । 'सौभाग्यजननं स्त्रीणां दौर्भाग्यपरिकृन्तनम् । परमैश्वर्यजननं यद्व्रतं ब्रूहि शंकर ।' श्रीशंकर उवाच—'साधु

साधु महाबाहो यत्पृष्टोऽहं त्वयाऽनघ । तत्तेऽहं संप्रवक्ष्यामि व्रतानामुत्तमं व्रतम् । येन चीर्णेन न नरो दुर्गतिं याति कर्हिचित् । सुभगा दुर्भगा वापि नारी वा पुरुषोऽपि वा । अस्ति देव्या व्रतं पुण्यं महालक्ष्म्याः षडानन। नारीणां च नराणां च सर्वदुःखापहं तथा ।' स्कन्द उवाच—'देव्याश्चरितमाहात्म्यं मर्त्ये केन प्रकाशितम् । विधानं कीदृशं ब्रूहि व्रतस्यास्य महाविभो ।' शंकर उवाच— 'देवासुरमभूद्युद्धं पूर्णमब्दशतं पुरा । वृत्रेऽसुराणामधिपे देवानां च पुरंदरे । तत्र देवैर्महावीर्यैर्नारायणबलाश्रयात् । असुरा निर्जिताः सर्वे पातालतलमाययुः । केचिल्लंकां गताः केचित्प्रविष्टा वरुणालयम् । गिरिदुर्गं समाश्रित्य केचित्तस्थुर्महाबलाः । तत्र कोलासुरो नाम महावीर्यो महाबलः । गोमन्तं दुर्गमं दुर्गं गिरिमाश्रित्य निर्भयः । या राजकन्यका लोके रूपवत्यो महागुणाः । आनीय गिरिदुर्गस्थो रमयामास सर्वशः । रमित्वा व्यक्षिपत्तत्र कामरूपी विहंगमः । एतस्मिन्नेव काले तु आगतौ मुनिसत्तमौ । श्रुतप्रभावसंपन्नौ पुलस्त्यो गौतमः सह । तीर्थयात्राप्रसङ्गेन श्रुत्वा वार्तां जनस्य ताम् । कोलासुरेण जनिता कन्याहेतोः शिखिध्वजा । तावूचतुर्जनं सर्वमगस्त्योऽस्ति महामुनिः । येन तोयनिधिः पीतो विन्ध्याद्रिश्च निवारितः । वातापील्वलनामानौ दैत्यौ येन विनाशितौ । तं गच्छामो वयं सर्वे कोलासुरवधाप्तये । इत्यामन्त्र्य जनाः सर्वे गत्वा तं मुनिसत्तमम् । ऊचुः सर्वे यथावृत्तं कोलासुरविचेष्टितम् । तच्छ्रुत्वा भगवानाह मैत्रावरुणिरग्र्यधीः । सृष्टिस्थितिविनाशानां कारणं भक्तवत्सलः । रामस्याद्रौ तपस्यन्ति ब्रह्मविष्णुमहेश्वराः । तिस्रः संध्या मूर्तिमत्यस्तेषां शुश्रूषणे रताः । तत्रैव च महालक्ष्मीः शक्तिरूपेण संस्थिता । सर्वशक्तियुता देवी लोकानां हितकाम्यया । इत्युक्तास्त्वरितं गत्वा कोलासुरवधाप्तये । निवेद्य निखिलं तेभ्यस्तस्थुः प्राञ्जलयो जनाः । तच्छ्रुत्वा निखिलं तेभ्यो ब्रह्मविष्णुमहेश्वराः ।संध्यात्रयं समाहूय वाचं प्रोचुर्जनेश्वराः । वन्दारुसुरवृन्देन्दुमौलिमाणिक्यमण्डला । हनिष्यति महालक्ष्मीर्युद्धे कोलासुरं रिपुम् । भगवत्यो मूर्तिमत्यो दण्डशूलादिभिर्वरैः । आयुधैर्विविधैः कृत्वा जयमाप्स्यथ संयुगे । युष्माकं च सहायोऽसौ युष्मत्क्रोधसमुद्भवः । भूतनाथो भूतमन्युर्वः सहायो भविष्यति । इत्युक्तास्त्वरितं गत्वा रुरुधुः कोलराक्षसम् । निरुध्य च पुरं देव्यो जगर्जुर्जलदस्वनाः । भिन्दन्त्यश्च दिशां वृन्दं वर्धयन्त्यश्च तत्क्रुधम् । कोलासुरोऽपि तच्छ्रुत्वा प्रोत्पपात महासनात् । रोषणः क्रोधताम्राक्षो मेरोरिव गजान्तकः । हस्त्यश्वरथपादातिचतुरङ्गबलान्वितः । निर्ययौ पृतनां योद्धुं कालिकाया इवाशनिः ।

सकुण्डलशिरस्त्राणः कवची धृतबाणधिः । बद्धगोधाङ्गुलित्राणः क्रुद्धो वृत्र इवापरः । ततो राक्षससैन्यं तद्भूतनाथेन संगतम् । देवनारीमनोऽह्लादि युद्धं चक्रेऽतिभीषणम् । घनरावैर्महाघोषैर्बाणकेङ्कारनिःस्वनैः । निःस्वाननिनदैश्चैव लोकः शब्दमयोऽभवत् । जहि भिन्धीति वदतां धावतामितरेतरम् । ववृधे समरो घोरो मुष्टीमुष्टि कचाकचि । युध्यते राक्षसबले भूतनाथो महाबलः । ममर्द राक्षसानीकं शरैरतिविदारणैः । हतं दृष्ट्वाऽसुरबलं क्रुद्धः कोलासुरो रणे । अभिद्रुत्य गदापाणिस्ताडयामास भैरवम् । ययौ मूर्च्छां महावीर्यस्तेनाभिहतमस्तकः । ततो देव्योऽतिवेगन ह्यभिदुद्रुवुरुद्धतम् । त्रिशूलैरभिजघ्नुस्तं पट्टिशैश्च व्यदारयन् । मुष्टिभिस्ताडयामासुर्नखरैश्च व्यदारयन् । पादाघातैः समाजघ्नुः सिंहः करिवरं यथा । सकुण्डलशिरस्त्राणो दष्टोष्ठो रक्तलोचनः । कृतभ्रुकुटिवक्रोऽसौ राक्षसस्ता मुहुर्मुहुः । गदया ताडयामास शिरःकण्ठांसकुक्षिषु । बभञ्जुस्तां गदां तास्तु हसन्त्यः समदाकुलाः । ततो धनुर्धरो भूत्वा बाणजालमवाकिरत् । तासां शरीरमर्माणि भिन्दञ्छरपुरोगमैः । ननाद बद्धवैरोऽसौ हृदयेऽभिहनञ्छरैः । ततः क्रुद्धतरास्तास्तु तं पादे जगृहुर्भृशम् । आकाशे भ्रामयित्वा तं चिक्षिपुर्गगने क्रुधा । कोलासुरो निपतितो यावदुत्थानमिच्छति । तावन्निर्गत्य लक्ष्मीस्तं पादाभ्यां प्रत्यपीडयत् । तत्पादपीडितोरस्को विवृत्तवदनो भृशम् । मुक्तकण्ठस्वनं कृत्वा ततो मोहमुपेयिवान् । ततो देवाः सगन्धर्वा मनुष्या ऋषयस्तथा । अस्तुवन्देवनार्यश्च ननृतुः समदाकुलाः । देवदुन्दुभयो नेदुः पुष्पवृष्टिः पपात ह । दिशः प्रसेदुर्मरुतो ववुर्मन्दं स्थिरं जगत् । सुरासुरशिरोरत्नचर्चितपादा महाबलाः । देव्यो दिव्येन यानेन यान्ति कोलासुरं प्रति । आयान्तीं पद्मजां वीक्ष्य मुक्तपादाग्रशृङ्खलाम् । तुष्टाव परया भक्त्या राजकन्यागणो मुदा ।' राजकन्या ऊचुः—'वन्दारुवीरसुरवृन्दकिरीटकोटिरोचिश्छटानिकरकल्पितरत्नदीपम् । देवि त्वदीयचरणं शरणं जनानां सेवामहे सकलमङ्गलवर्धनाय । उत्फुल्लकैरवदलायतलोचनायै गण्डोल्लसच्चटुलकुण्डलमण्डलायै । राकाशशिप्रतिभटाननकोमलायै तस्यै नमः कमललोचनवल्लभायै । सद्भक्तिकल्पलतिकां हरकण्ठभूषां केयूरहेमकटकोज्ज्वलकङ्कणाङ्काम् । संसारसागरमुखे पततो ममाद्य देहि त्वदीयकरयष्टिमनङ्गमातः । दृष्टा देवि जनास्त्वयापि त्रिविधा ब्रह्माधिपत्यं गता विष्णोर्वक्षसि या चकार तरला लीलाब्जमालाभ्रमम् । क्लेशाग्निप्रहतं त्वदीयचरणद्वन्द्वाब्जसेवारतं कारुण्यामृतसारपूरितदृशा मामद्य पश्येश्वरि । मल्लीविफुल्लकुसुमोज्ज्वलमध्यभागधम्मिल्लभारजिततारकचित्रिताभ्रा । उत्तप्तहेमनिकषोज्ज्वलकायकान्तिर्लक्ष्मीः स्वयं

प्रणमतां श्रियमातनोतु । इति स्तुता महालक्ष्मीर्भक्तानामिष्टदायिनी । योगिन्योऽप्य भविष्यध्वमिति तासां वरं ददौ । दृष्ट्वा तास्तु मुदा देवी सारूप्यं च प्रदापयत् । ताभिर्निषेविता देवी वरं वर्यं ददौ मुदा । राजकन्यास्तु ताः सर्वा मुक्ताः स्वपुरमाययुः। ततः प्रभृति लोकेषु पूज्यास्ताः सर्वकामदाः । ताश्चतुःषष्टियोगिन्यो महालक्ष्मीपरिग्रहात् । नृत्यन्ति निवहैस्तत्र गीतवादित्रनिःस्वनैः । पुरो देव्या महालक्ष्म्याः करहाटपुरे निशि । एवंप्रभावा सा देवी विष्णुरामा षडानन । व्रतस्यास्य विधानं च शृणु मत्तोऽवधानतः । मासि भाद्रपदे शुक्लपक्षे ज्येष्ठायुताष्टमी । प्रारब्धव्यं व्रतं तत्र महालक्ष्म्या यतात्मभिः । करिष्यामि व्रतं देवि त्वद्भक्तस्त्वत्परायणः । तदविघ्नेन मे यातु समाप्तिं त्वत्प्रसादतः । इत्युच्चार्य ततो बद्ध्वा दोरकं दक्षिणे करे । षोडशग्रन्थिसहितं गुणैः षोडशभिर्युतम् । ततोऽन्वहं महालक्ष्मीं पूजयेन्नियतात्मवान् । गन्धपुष्पैः सनैवेद्यैर्यावत्कृष्णाष्टमीदिनम् । तस्मिन्दिने तु संप्राप्ते कुर्यादुद्यापनं व्रती । वस्त्रमण्डपिकां कृत्वा माल्यरत्नोपशोभिताम् । त्रिभूमिकां च सुश्लक्ष्णां नानादीपैरलंकृताम् । चतस्रः प्रतिमाः कृत्वा सौवर्णीस्तत्स्वरूपिणीः । स्नपनं कारयेत्तासां पञ्चामृतविधानतः । षोडशैरुपचारैश्च धूपदीपादिभिस्तथा । जागरं तत्र कर्तव्यं गीतवादित्रनिःस्वनैः । ततो निशीथे संप्राप्तेऽभ्युदितेऽमृतदीधितौ । कृत्वा तु स्थण्डिले पद्मं षडङ्गं तु प्रपूजयेत् । दद्यादर्घ्यं च चरणे व्रती तस्मै समाहितः । क्षीरोदार्णवसंभूत चन्द्र लक्ष्मीसहोदर । पीयूषधाम रोहिण्या सहितोऽर्घ्यं गृहाण मे । जानुभ्यामवनिं गत्वा मन्त्रेण प्रार्थयेत्ततः । क्षीरोदार्णवसंभूते कमले कमलालये । प्रयच्छ सर्वकामान्मे विष्णुवक्षःस्थलालये । पुत्रान्देहि यशो देहि सौख्यं सौभाग्यमेव च । कालि कालि महाकालि विकरालि नमोऽस्तु ते । त्रैलोक्यजननि त्राहि वरदे भक्तवत्सले । एकनाथे जगन्नाथे जमदग्निप्रियेऽव्यये । रेणुके त्राहि मां देवि राममातः शिवं कुरु । भूतनाथे जगन्नाथे प्रसीद पुरुषोत्तमे । कपालिकर्त्रिकाशूलडमरुव्यग्रहस्तके । श्रियं कुरु महालक्ष्मि ह्यश्रियं त्वाशु नाशय । मन्त्रैरेतैर्महालक्ष्मीं प्रार्थ्य श्रोत्रिययोषिते । चन्दनं तालपत्रं च पुष्पमालादिकं तथा । नवे शूर्पेऽथ भक्ष्याणि क्षिप्त्वा बहुविधानि तु । प्रत्येकं षोडशैतानि पूगपर्णानि चैव हि । तान्यन्येन समाच्छाद्य व्रती दद्यात्समन्त्रकम् । क्षीरोदार्णवसंभूता लक्ष्मीश्चन्द्रसहोदरा । व्रतेनानेन संतुष्टा प्रीयतां विष्णुवल्लभा । इन्दिरा प्रतिगृह्णाति इन्दिरा वै ददाति च । इन्दिरा तारिकोभाभ्यामिन्दिरायै नमो नमः । दत्त्वाऽर्घ्यं वायनादींश्च श्रोत्रियाणां च योषिताम् ।

चतस्रः प्रतिमास्तास्तु ब्राह्मणाय निवेदयेत् । एवं कृत्यं सुनिर्वर्त्य व्रती भोजनमाचरेत् ।' स्कन्द उवाच।' केनेदं स्वीकृतं पूर्वं कथमस्मिन्प्रकाशितम् । ब्रूहि मे तत्त्वतो देव यद्यहं तव वल्लभः।'शंकर उवाच-'आसीद्राजा सार्वभौमो मङ्गलार्ण इति श्रुतः।कुण्डन्ये नगरे रम्ये तस्य पद्मावती प्रिया।तमागतः कश्चिदेकः सेवको ब्राह्मणोत्तमः।अज्ञातनामा तस्यासौ नाम चक्रे नृपस्तदा । तवल्लक इति ख्यातो बभूव द्विजसत्तमः । कदाचिन्मृगयासक्तो भूपालो वनमाविशत् । तत्र विद्ध्वा वराहादीन्मृगान्हत्वा सहस्रशः । क्षुत्तृट्परिवृतः श्रान्तो वृक्षमूलमुपाश्रितः । उदकान्वेषणे चारान्प्रेषयामास सर्वतः । वने जलं ते नापश्यंश्चिरं भ्रान्त्वा प्रयत्नतः । ते गत्वा नृपतिं प्रोचुर्नात्राम्भ इति दुःखिताः । तवल्लकोऽपि बभ्राम विपिनं तदतन्द्रितः । भ्रममाणस्तदाऽपश्यत्कस्मिंश्चिद्वनदुर्गमे । रम्यं सरोवरं दिव्यं कुसुमोत्पलमण्डितम् । तत्रापश्यद्देवकन्या दिव्यरूपा मनोरमाः । चार्वङ्गीश्चारुतपनाः पीनोन्नतपयोधराः । हारकङ्कणकेयूरनूपुरालंकृताः शुभाः । पूजयन्तीर्महालक्ष्मीं व्रतरूपेण सादराः । तवल्लकोऽपि पप्रच्छ किमिदं कथ्यतामिति।' स्त्रिय ऊचुः—'महालक्ष्मीव्रतमिदं सर्वकामफलप्रदम् । क्रियतेऽस्माभिरेकाग्रमनोभिस्तत्र भक्तितः । तवल्लकोऽपि तच्छ्रुत्वा व्रतं जग्राह भक्तिमान् । तदनुज्ञां गृहीत्वाऽस्य जलमादाय सत्वरः । आजगाम जलं तस्मै ददौ प्राञ्जलिना सह । जलं पीत्वा नृपस्तत्र दृष्टवान्दोरकं करे । किमिदं दोरकं विद्वन्किं व्रतं कृतवानसि । राज्ञा पृष्टस्तवल्लोऽपि कथयामास तद्व्रतम् । तच्छ्रुत्वा राजशार्दूलो व्रतं जग्राह भक्तिमान् । तवल्लकेन सहितो राजा स्वपुरमाययौ । पद्मावतीगृहं गत्वा तया रन्तुमनाः सह । रममाणाऽथ सा देवी तेन राज्ञा प्रियेण वै । तं दृष्ट्वा दोरकं हस्ते कुपिताऽत्यन्तकोपना । कया त्वं वञ्चितो ब्रूहि कया बद्धं सुदोरकम् । मा वादीरन्यथा ह्येतल्लक्ष्मीव्रतमनुत्तमम् । इत्युक्ता तु प्रियेणासौ हस्ते चिच्छेद दोरकम् । ज्वालामालाकुले वह्नौ क्षिप्तवत्यातिकोपना । हाहा कष्टमिदं पापे कृतं मूढतया त्वया । इति निर्भर्त्स्य तां राजा तत्याज वनगह्वरे । सा च हानिं ययौ पापा न च हानिं ययौ नृपः । महालक्ष्म्यपचारेण सारण्ये जलवर्जिते । भ्रममाणा वने तस्मिन्न क्वचिद्रतिमाप्नुयात् । विचरन्ती वने तत्र ऋषेः कस्यचिदाश्रमम् । ददर्श मृगसंकीर्णं शान्तकृष्णमृगाञ्चितम्। तत्रापश्यद्वने रम्ये वसिष्ठं मुनिपुङ्गवम् । ववन्दे चरणौ तस्य विसंज्ञा दुःखकर्षिता । चिरं ध्यात्वा मुनिस्तस्या ज्ञातवान्दुःखकारणम् । महालक्ष्म्यपचारेण ज्ञातं विज्ञानचक्षुषा । तद्व्रतं कारयामास तस्या दुःखोपशान्तये । तद्दुःखं तत्क्षणादेव विन-

ष्टमभवत्तदा । पुनश्च मृगयासक्तो भूपालो वनमाविशत् । वरं मुनिं ददर्शाग्रे वसिष्ठं वीतकल्मषम् । कृतातिथ्यक्रियो दृष्ट्वा चरन्तीं बहिरन्तिकात् । हावभावविलासाद्यै-र्हरन्तीं हरिणेक्षणाम् । मन्दं निर्गत्य नृपतिः प्रोवाच मधुरं वचः । वामोरु कासि कल्याणि किमर्थं चरसे वने । किंनरी मानुषी वा त्वं यक्षिणी चारुहासिनी । किमत्र बहुनोक्तेन भजमानं भजस्व माम् । नृपेणानेन भर्त्रोक्ता सस्मिता वाक्यमब्रवीत् । पुनर्भजामि नाहं त्वामवेहि महिषीं तव । महालक्ष्म्यपचारेण त्वया हीना वसाम्यहम् । मुनीन्द्रस्याश्रमे रम्ये तरुगुल्मोपशोभिते । ममोपरि कृपाविष्टो महालक्ष्मीव्रतोत्तमम् । कारयामास विधिवत्सर्वदुःखोपशान्तये । तयोक्तं वचनं श्रुत्वा हर्षादुत्फुल्ललोचनः । ऋषेरनुज्ञामादाय प्रियामादाय सत्वरः । हृष्टपुष्टजनैः सार्धं पताकाध्वजशोभितम् । पुरं स्वलंकृतं दिव्यं हेमप्राकारशोभितम् । प्रविवेश तया सार्धं स पौरैरभिवन्दितः । महालक्ष्मीव्रतं भूयस्तया सह चकार ह । भुक्त्वेह भोगान्विपुलान्पुत्रपौत्रैः समावृतः । भूपालः सार्वभौमोऽभूत्तवल्कोऽमात्यतां ययौ । महालक्ष्मीप्रसादेन स निधिः सर्वसंपदाम् । एवंप्रभावा सा देवी नराणामिष्टदायिनी । सर्वपापहरा देवी सर्वदुःखापहारिणी । एवं षोडशवर्षं तु कर्तव्यं व्रतमुत्तमम् । यः करिष्यति तं भक्त्या स्वयं सिद्धिः प्रसेवते । लोकपालाश्च पुष्णन्ति दासा इव मनोरथान् । नारी वा पुरुषः करिष्यति मुदा भक्त्या व्रतं यत्नतः सेवन्ते हरिरुद्रपद्मजसुराः पुष्णन्ति तस्य प्रिये । तत्पादं परिरञ्जयन्ति मनुजा मौलिप्रभामण्डलैस्तस्मिन्नेव कुटुम्बिनी वसति सा लक्ष्मीः स्वयं विष्णुना। सद्भक्त्या वाप्यभक्त्या वा कुर्वन्तं व्रतमुत्तमम्।अन्तकाले स्वयं विष्णुः संसारात्परिरक्षति । य इदं शृणुयान्नित्यं श्रावयेद्वा समाहितः । न संत्यजति तं लक्ष्मीरलक्ष्मीर्न च संस्पृशेत् । सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते॥' इति महालक्ष्मीव्रतम् ।

अथ महालक्ष्मीव्रतं लोकप्रसिद्धं भविष्योत्तरपुराणोक्तम् । युधिष्ठिर उवाच-'स्वस्थानलाभपुत्रायुःसर्वैश्वर्यसुखप्रदम् । व्रतमेकं समाचक्ष्व विचार्य पुरुषोत्तम।' श्रीकृष्ण उवाच—'दुर्वारवृत्तदैतेयपरिव्याप्ते त्रिविष्टपे । एतदेव कृतस्यादौ देवेन्द्रं प्राह नारदः ।' इन्द्र उवाच—' गता स्वाराज्यलक्ष्मीर्मे कथमायाति सत्वरम् । दानं व्रतं पुण्यकर्म तदर्थं वद सांप्रतम् । तस्य श्रुत्वा ततो वाक्यं स मुनिः प्रत्यभाषत ।' नारद उवाच—'पुरंदर पुराऽपूर्वं पुरमासीच्छुभान्वितम् । रत्नगर्भोऽभवद्भूमिर्यत्र रत्नाढ्यभूधरैः।यत्राङ्गभाजनापाङ्गभङ्गालोकनसायकैः । त्रैलोक्यं स्ववशं चक्रे देवः कुसुमसायकः । चतुर्वर्गजनिर्यत्र यच्च विश्वविभूषणम् । विश्वकर्मापि यद्वीक्ष्य कम्पयत्यनिशं शिरः ।

तत्राभवन्महीपालो मङ्गलो मङ्गलालयः । चिल्लदेवी प्रिया तस्य दुर्भगैका बभूव ह । अन्या तु चोलदेवी या महिषी सा यशस्विनी । कदाचिन्मङ्गलो राजा चोलदेवीसहायवान् । प्रासादशिखरारूढः स्थलीमेकामपश्यत । तामालोक्य महीपालः स्मरस्मेरमुखाम्बुजः । चोलदेवीं प्रति प्राह दन्तद्योतितदिङ्मुखः । चञ्चलाक्षि तवोद्यानं कान्तिनिन्दितनन्दनम् । कारयामि तवोद्दिष्टं तत्रोद्यानमकारयत् । संपन्नं च तदुद्यानं नानाद्रुमलताकुलम् । नानारक्षकसंयुक्तं नानापक्षिसमावृतम् । तत्रागत्य महाकोलःस्तनन्यास्तनभस्तलः । पङ्कप्रावृड्घनाकारश्चक्षुषाक्षिप्तचञ्चलः । दंष्ट्रावकृष्टचन्द्रार्कः प्रलयाम्भोधरध्वनिः । उद्यानं भञ्जयामास नानाद्रुमलतान्वितम् । कांश्चिद्दन्तप्रहारेण कांश्चिदङ्गप्रपेषणैः । तद्भनक्तीति विज्ञाय समेत्योद्यानपालकाः । सभयास्तस्य वृत्तान्तमूचुस्ते नृपतेः पुरः । तदाकर्ण्य ततो राजा क्रोधारुणितलोचनः । वधाय दंष्ट्रिणस्तस्य संदिदेशाखिलं बलम् । ततश्चचाल भूपालस्त्रिगण्डगलितैर्गजैः । आप्लावयन्महीं सर्वा वाजिवृन्दवृताम्बराम् । चालयन्नखिलाञ्छैलान्स्यन्दनौघमरुद्भरैः।पत्तिव्रातमहाध्वानैः पूरयन्नखिला दिशः । ततो गाढं समावृत्य तदुद्यानं नरेश्वरः । उवाचोच्चैः प्रतिध्वानैर्दिशो मुखरयन्दश । पथि यस्य वराहोऽयं प्रयात्युपवनान्तिकम् । तस्यावश्यं शिरश्छेदं विदधामि रिपोरिव । तस्य भूपस्य तद्वाक्यं समाकर्ण्य स शूकरः । जगामास्यैव मार्गेण प्राणिनश्चेष्टितं यथा । ततः क्रुद्धो धराशक्रः कशयाश्वं प्रताड्य च । व्रीडाकलङ्कितास्येन्दुर्मार्गे तस्यैव सोऽगमत् । गत्वाऽथ विपिनं घोरं सिंहशार्दूलसंकुलम् । तमालतालहिन्तालशालार्जुनलतान्वितम् । झिल्लीझङ्कारसंभारवाचालितदिगन्तरम् । तत्रैकचेतास्तं पश्यन्बहु बभ्राम भूपतिः । कोलो वेलामवाप्यैव सोऽभवद्राजसंमुखः । भल्लेन सोऽवधीत्कोलं वज्रेणाद्रिं यथा भवान् । अथ व्योम्नि विमानस्थः स्मरसुन्दरविग्रहः । कोलरूपं परित्यज्य सोऽब्रवीन्मङ्गलं नृपम् ।' गन्धर्व उवाच—'स्वस्त्यस्तु ते महीपाल त्वया मुक्तिः कृता मम । तदाकर्णय वृत्तान्तं येनाहं जात ईदृशः । एकदा देवतावृन्दैः संवृतः कमलासनः । चञ्चत्पुटादिभिस्तालैःषड्जाद्यैःसप्तभिः स्वरैः । मन्द्रादिभिस्त्रिभिर्मानैर्गीयमानं मया नृप । नानास्थानगुणोपेतमश्रौपीद्गीतमुत्तमम् । गीयमानश्च तत्तालैस्ततोऽहं कर्मपाकतः । शप्तश्चित्ररथस्तेन सृष्टिकर्त्रा हि वेधसा ।' ब्रह्मोवाच—'कोलो भवेति मेदिन्यां मुक्तिस्ते तु यदा तदा । निर्जिताशेषभूपालो मङ्गलस्त्वां हनिष्यति । तदद्य घटितं सर्वं त्वत्प्रसादान्महीपते । तद्गृहाण वरं भूयो यद्देवस्यापि दुर्लभम् । महालक्ष्मीव्रतं दिव्यं चतुर्वर्गफलप्रदम् ।'

नारद उवाच—'चित्ररथोऽथ गन्धर्व उक्त्वेत्थं भूपतिं प्रति । अन्तर्धानं गतस्तुष्टः शरत्काल इवाम्बुदः । अथ मङ्गलभूपालः पार्श्वस्थं द्विजमागतम् । विलोक्य बटुकं कंचित्कक्षानिक्षिप्तशंबलम् । उवाच मधुरां वाचं स्मितपूर्वां शुचिस्मिताम् । देवस्त्वं दानवस्त्वं वा गन्धर्वो वाऽथ राक्षसः । तथ्यं वद बटो कस्मात्किमर्थं त्वमिहागतः । श्रुत्वेत्याशिष्य तं विप्रः प्राह त्वद्देशसंभवः ।' बटुरुवाच—'अहं सार्धं त्वया यातस्तदादिश यथोचितम् । राजाऽथ तमुवाचेदं त्वं बटो कतमाख्यकः । अपल्याणं दिशयाश्वं तूर्णं तोयं च पायय । अथ विश्राम्य भूपालं बटुको वटपादपे।तथाकृतं तुरङ्गं च समारुह्य महामतिः । जगाम पक्षिघोषेण यत्रास्ते सुन्दरं सरः।कमलैकविलासेन रथाङ्गाभरणेन च ।वनमालालयत्वेन दधन्नारायणीं तनुम् । भग्नवायुसुतोद्योगमक्षारं विषवर्जितम् । नाशितागस्त्यतृष्णार्तिं प्रसन्नं सागराधिकम् । पंके मग्नोऽथ तत्राश्वः पृष्ठादुत्तीर्य तस्य सः।चतुर्दिक्षु निरीक्ष्याथ तटे च सरसस्तदा । दिव्यवस्त्रपरीधानं दिव्याभरणभूषितम् । कथयन्तं कथां दिव्यां स्त्रीणां सार्थमपश्यत।उपसृत्याथ तत्सार्थे तद्वृत्तान्तं निवेद्य च। कृताञ्जलिरिति प्राह बटुर्मधुरया गिरा ।' बटुरुवाच—'किं क्रियते तडागे हि भवतीभिर्विशेषतः । कस्यात्र पूजनं वापि वदध्वं देवमातृकाः ।' सार्थ उवाच—'शृणु विप्रैकचित्तस्त्वं श्रद्धाभक्तिसमन्वितः । या माया प्रकृतिः शक्तिस्त्रैलोक्ये सचराचरे । व्रतमेतन्महालक्ष्म्यास्तस्याः सर्वफलप्रदम् । आकर्णय विधिं चास्य कथ्यमानं मया बटो । भाद्रे मासि सिताष्टम्यां प्रारम्भोऽस्य विधीयते ।प्रातः षोडशकृत्वस्तु प्रक्षाल्याङ्घ्री करौ मुखम् । तन्तुषोडशसंयुक्तं ग्रन्थिषोडशसंयुतम् । मालतीपुष्पकर्पूरचन्दनागुरुधूपितम् । लक्ष्म्यै नमोऽथ मन्त्रेण प्रतिग्रन्थ्यभिमन्त्रितम् । धनं धान्यं धरां हर्म्यं कीर्तिमायुर्यशः श्रियम्।तुरगान्दन्तिनः पुत्रान्महालक्ष्मि प्रयच्छ मे।मन्त्रेणानेन बद्ध्वाऽथ दोरकं दक्षिणे करे । काण्डानि षोडशादाय दूर्वायाश्चाक्षतांस्तथा । एकचित्तः कथां श्रुत्वा पूजयेत्तैश्च दोरकम् । ततस्तु प्रातरारभ्य यावत्स्यादसिताष्टमी । तावत्प्रक्षाल्य तद्वत्तु पादादीनि कथां तथा । शृणुयात्प्रत्यहं विप्र तत्संख्यैरक्षतादिभिः । अथ कृष्णाष्टमीं प्राप्य नक्तकाले जितेन्द्रियः । स्नातः शुक्लाम्बरधरो व्रती पूजागृहं विशेत् । तत्रोपविश्य पूर्वास्यश्चारुधौतासनोपरि । श्वेतवस्त्रे लिखेदष्टदलं कमलमुत्तमम् । ऐन्द्र्यादिशक्तिसंयुक्तं पार्श्वपत्रं सकेसरम् । कर्णिकायां ततो लक्ष्मीं कर्पूरक्षोदपाण्डुराम् । शुभ्रवस्त्रपरीधानां मुक्तामणिविभूषिताम् । पंकजासनसंस्थानां स्मेराननसरोरुहाम् । शारदेन्दुकलाकान्ति स्निग्धनेत्रां चतुर्भुजाम् । पद्मयुग्मामभयदां वरव्यग्रकरा-

म्बुजाम्। अभितो गजयुग्मेन सिच्यमानां घटाम्बुभिः। संचिन्त्यैवं लिखेद्देवीं कर्पूरागुरुचन्दनैः। ततस्त्वावाहनं कुर्यान्मन्त्रेणानेन सुव्रते। 'महालक्ष्मि समागच्छ पद्मनाभपदादिह। पञ्चोपचारपूजेयं त्वदर्थं देवि संभृता।' आवाहनमंत्रः। 'आलयस्ते हि कथितः कमलं कमलालये। कमले कमले चास्मिन्स्थितिं मे कृपया कुरु।' स्थापनमन्त्रः। 'गङ्गादिसरिदाधारं तीर्थमन्त्राभिमन्त्रितम्। दूरयात्राश्रमहरं पानीयं प्रतिगृह्यताम्। स्नानं तव महालक्ष्म्याः कर्पूरागुरुवासितम। सुतीर्थेभ्यः समानीतं स्नानं तत्प्रतिगृह्यताम्।' स्नानीयमन्त्रः। 'मलयाचलसंभूतं नानापन्नगसेवितम्। शीतलं बहुलामोदं चन्दनं प्रतिगृह्यताम्।' चन्दनमन्त्रः। 'मिलत्परिमलामोदमत्तालिकुलसंकुलम्। आनन्दिनन्दनोद्यानं पद्मायै कुसुमं नमः।' पुष्पमन्त्रः। 'गन्धसंभारसंनद्धं पृथुवस्तुसमुद्भवम्। सुरासुरनरानन्दि धूपं देवि गृहाण मे।' धूपमन्त्रः 'मार्तण्डमण्डलाखण्डचन्द्रबिम्बाग्नितेजसाम्। निधानं देवि दीपोऽयं निर्मितस्तव भक्तितः।' दीपमन्त्रः। 'देवतालयपातालभूतलाधारधान्यजम्। षोडशाकारसंभारं नैवेद्यं ते नमः श्रियै।' नैवेद्यमन्त्रः। स्नानादिकं विधायाथ यतःशुद्धिरवाप्यते। एतदाचमनीयं मे महालक्ष्मि विधीयताम्।' आचमनमंत्रः। 'पातालतलसंभूतं वदनाम्भोजभूषणम्। नानागुणसमाकीर्णं ताम्बूलं देवि ते नमः।' ताम्बूलमन्त्रः। 'तन्तुसंतानसंसिद्धं कलाकौशलकल्पितम्। सर्वाङ्गाभरणं श्रेष्ठं वसनं परिधीयताम्।' वस्त्रमन्त्रः। 'विष्णोर्वक्षसि पद्मे च शंखे चक्रे तथाम्बरे। लक्ष्मि नित्या यथाऽसि त्वं मयि नित्या तथा भव।' प्रार्थनामन्त्रः। 'उत्तार्य दोरकं बाहोर्लक्ष्म्याः पार्श्वे निवेदयेत्। लक्ष्मि देवि गृहाण त्वं दोरकं यन्मया धृतम्। व्रतं संपूर्णतां यातु कृपा कार्या मयि त्वया।' दोरकोत्तारणमन्त्रः। 'नानाप्रकारपूजा च कार्या तौर्यत्रिकादिकम्। कथां श्रुत्वा सुवर्णं च आचार्याय च दक्षिणाम्। एवं निर्वर्त्य विधिवत्पूजनं बटुक श्रियः। चातुर्वर्ण्याय देयोऽयं दत्त्वाचार्याय दक्षिणाम्। दद्यात्षोडश दीपांश्च गोधूमस्य द्विजातये। दत्त्वा तत्संख्यकान्मुक्त्वा रात्रौ जागरणं चरेत्। चन्द्रोदयेऽथ संजाते दद्यादर्घ्यं ततो व्रती। मन्त्रेणानेन राजेन्द्र शंखेनाम्बुफलादिना। नमोऽस्तु ते निशानाथ लक्ष्मीभ्रातर्नमोऽस्तु ते। व्रतं संपूर्णतां यातु गृहाणार्घ्यं विधो मम।' चन्द्रार्घ्यदानमन्त्रः। 'प्रातर्विसर्जयेद्देवीं मन्त्रेणानेन सुव्रत। पङ्कजं देवि संत्यज्य मम वेश्मनि संविश। यथा सुपुत्रभृत्योऽहं सुखी स्यां त्वत्प्रसादतः।' देवीविसर्जनमन्त्रः। 'षोडशाब्दे तु संपूर्णे तत उद्यापनं चरेत्। अनेन विधिना विप्र कुरु श्रद्धासमन्वितः। दातव्या धेनुरेकैव स्वर्णशृङ्गादिसंयुता। आचा-

र्याय सुवर्णं च दद्याद्गां वसनानि च। यथाशक्त्या सुवर्णं च दत्वा पूर्णं भवेद्व्रतम्॥ एतत्ते कथितं विप्र व्रतानामुत्तमं व्रतम्। यद्विधानादनायासाल्लभते वाञ्छितं फलम्। कृत्वा त्वं सत्वरं विप्र राजानं तं च कारय। व्रतमेतत्त्वया विप्र देयं श्रद्धावते परम्। नास्तिकानां पुरस्तात्तु न प्रकाश्यं कदाचन। तदक्षतं च नैवेद्यं बटो गृह्णीष्व सत्वरम्। नमस्कृत्य तु तं सार्थं पङ्कादुत्थाप्य वाजिनम्। प्रपीयाम्भः समादाय पद्मिनीपत्रयन्त्रितम्। आरुह्य तुरगं विप्रो राजान्तिकमुपागमत्। सद्योऽथ तं बटुं तत्र राजाऽपश्यन्मुदान्वितम्। उपनीतं जलं तेन तृषार्ताय महीभुजे। पीत्वा तदुदकं राजा पृच्छति स्म बटुं तदा। किं नु जातो विलम्बस्ते कस्मात्ते हर्षसंभवः। इति पृष्टो यथा वृत्तं सर्वं राज्ञे न्यवेदयत्। निवेद्य तद्व्रतं विप्रो राजानं समकारयत्॥ नानाप्रकारसंभारं शंबलं बटुकस्य च। व्रतानुभावादभवद्बुभुजे भूभुजां पतिः। आरुह्य तं महीपालो बटुपल्याणितं हयम्। तद्व्रतस्य प्रभावेण तूर्णं स्वपुरमागतः। तमायान्तं समालोक्य मङ्गलं भूपुरंदरम्। उत्सवं चक्रिरे पौरास्तौर्यत्रिकपुरःसरम्। चलत्पताकादोर्मालं राजत्कलशमौक्तिकम्। पुरं नृत्यदिवाभाति क्षुद्रघण्टौघघर्घरैः। अथोत्कलिह्वया काचिद्धावति स्म वराङ्गना। स्खलन्मुक्तालताजालैश्चतुर्थमिव कुर्वती॥ काचिद्विमुक्तकेशा च परैकनयनाञ्जना। काचिन्नितम्बभारार्ता काचित्पीनपयोधरा॥ अथाविशन्महीपालः सहितो बटुनालयम्। पौरनारीजनोत्क्षिप्तलाजैः पूरितविग्रहः॥ अथोत्तीर्य हयात्तस्माद्बटुबाह्ववलम्बितः। जगाम मङ्गलो राजा चोलदेवी स्थिता यतः। दृष्ट्वाऽथ चोलदेवी सा दोरकं राजबाहुके। विमृश्य मनसा क्रुद्धा शङ्कां चक्रे ततस्त्विमाम्। आखेटकस्य व्याजेन गतोऽन्यां वल्लभां प्रति। सौभाग्याय तया बद्धो दोरको दक्षिणे करे। तया लसत्करश्चायं द्रष्टुं मां प्रेषितो ध्रुवम्। ततो दुर्दैवदुष्टा सा कोपादाच्छिद्य दोरकम्। निचिक्षेप महीपृष्ठे स्वसौभाग्यसुखैः सह। न बुबोध च तां राजा निक्षिपन्तीं तु दोरकम्। सामन्तमन्त्रिभृत्याद्यैः कुर्वन्क्रीडां वनोद्भवाम्॥ चिल्लदेव्यास्ततः काचिद्दासी द्रष्टुं समागता। तदा दोरकमादाय बटुमापृच्छ्य तद्व्रतम्॥ तद्व्रतस्य विधानं च स्वस्वामिन्यै न्यवेदयत्। ततस्तु बटुमाहूय चिल्लदेव्यकरोद्व्रतम्। अथ संवत्सरेऽतीते लक्ष्मीपूजादिने नृपः। तौर्यत्रिकस्य निःस्वानं चिल्लदेवीगृहेऽशृणोत्। तमाकर्ण्य महीपालो नूतनं बटुमब्रवीत्। अहहाद्य दिने लक्ष्म्याः क्व गतं मम दोरकम्। इति श्रुत्वा नृपं प्राह दोरकत्रोटनक्रमम्। तच्छ्रुत्वा मङ्गलो राजा चोलदेव्यै प्रकुप्य च। मयापि पूजनं कार्यं चिल्लदेवीगृहं प्रति। अथ मङ्गलभूपालो बटु-

बाहुवलम्बितः । जगाम कमलार्चायै चिल्लदेवीगृहं प्रति । अत्रान्तरे महालक्ष्मीर्वृद्धारूपं विधाय च । जिज्ञासार्थं गृहे तस्याश्चोलदेव्या जगाम सा । गच्छ गच्छाथ दुष्टे किमिहागत्य करोषि मे । तया दुराशयाऽत्यर्थं लक्ष्मीः साऽप्यवमानिता । शशापाथ महालक्ष्मीश्चोलदेवीमिति क्रुधा । कोलास्या भव दुष्टे त्वं त्वयाऽहमपमानिता। चोलदेवी श्रियः शापात्कोलास्या तत्क्षणादभूत् । कोलापुरमिति ख्यातं क्षितौ तन्मङ्गलं पुरम् । अथागता महालक्ष्मीश्चिल्लदेवीनिकेतनम् । बहुधा चिल्लदेव्या सा लक्ष्मीःसंमानिताऽर्चिता।वृद्धारूपं परित्यज्य प्रत्यक्षा साऽभवत्तदा । पञ्चोपचारपूजाभिःश्रियं राज्ञी ततोऽर्चयत् । परितुष्टा ततो लक्ष्मीश्चिल्लदेवीमुवाच ह।'श्रीरुवाच-'संपन्नाऽस्म्यर्चनैरेभिश्चिल्लदेवि वरं वृणु। वरं वव्रे ततो राज्ञी चिल्लदेवी शुभाशया ।'चिल्लदेव्युवाच।'ये करिष्यन्ति ते देवि व्रतमेतत्सुरेश्वरि । न तद्वेश्म त्वया त्याज्यं यावच्चन्द्रदिवाकरौ । अद्यारभ्य कथा ह्येषा भूपसंबन्धिनी तु या । ख्यातिं यातु क्षितौ देवि भक्तिर्भवतु मे त्वयि।सद्भावेन कथामेतां ये शृण्वन्ति पठन्ति च।तेषां हि वाञ्छितं सर्वं त्वया कार्यं सदैव हि । तथेत्युक्त्वा महालक्ष्मीस्तत्रैवान्तरधीयत । अथ मङ्गलभूपालस्तत्रागत्य श्रियोर्चनम् । चक्रे परमया भक्त्या चिल्लदेवीसमन्वितः-। अथेर्ष्यया दुराचारा चिल्लदेवीगृहं प्रति । चोलदेवी समायाता द्वारस्थैर्वारिता जनैः । जगाम विपिनं घोरं यत्रासीदङ्गिरा मुनिः । अथालोक्याद्भुताकारां ज्ञानदृष्ट्या विचिन्त्य च । स मुनिः श्रीव्रतं दिव्यं चोलदेवीमकारयत् । व्रते कृतेऽथ संजाता चोलदेवी शुभानना । दाक्षिण्यकेलिलीलाभिर्लावण्यैकनिकेतना । ततः कदाचिदागत्य वनमाखेटकं नृपः । मुनेर्वेश्मनि तां राजा ददर्शोत्पललोचनाम् । अथ राजा मुनिं प्राह केयं नाम्नेति कथ्यताम् । तद्वृत्तान्तं समाख्याय राज्ञे तामददान्मुनिः । अथागत्य नृपो राज्यं चोलदेवीसमन्वितः । चिल्लदेव्या च सहितो बुभुजे मङ्गलो नृपः।चिल्लदेवी वरं वव्रे चोलदेवीसमागमे।चिल्लदेवी सुखापन्ना चोलदेवीसमागमे । समुद्रस्य यथा गङ्गायमुने वल्लभे सदा । तथा मङ्गलभूपस्य जाते ते वामलोचने।परस्पराधिके प्रीते तस्य राज्ञो बभूवतुः।चिल्लदेव्या समं राज्यंचो लदेव्या समन्वितम् । सप्तद्वीपवतीं पृथ्वीं बुभुजे मङ्गलो नृपः । व्रतस्यास्य प्रभावेण बटुकः सोऽपि नूतनः । अभून्मङ्गलभूपस्य मन्त्री तव यथा गुरुः । भुक्त्वाऽथ सकलान्भोगान्मंगलो भूभृता वरः । स पुनः स्वर्गमेत्याभून्नक्षत्रं विष्णुदैवतम् ।एतत्ते कथितं शक्र व्रतानामुत्तमं व्रतम् । यत्कथाश्रवणेनापि लभते वाञ्छितं फलम् । प्रयाग इव तीर्थेषु

देवेषु मघवानिव । नदीषु च यथा गङ्गा व्रतेष्वेतत्तथा व्रतम् । धर्मं चार्थं च कामं च मोक्षं च यदि वाञ्छसि । तदेतत्ते व्रतं शक्र कुरु श्रद्धासमन्वितः । व्रतमिदमथ चक्रे नारदेनोपदिष्टं सुरपतिरपि यस्माद्वाञ्छितार्थं स लेभे । त्वमपि कुरु तदेतद्धर्मसूनो यथा स्यादभिमतफलसिद्धिः पुत्रपौत्रादिवृद्धिः ।' इति श्रीभविष्योत्तरपुराणे इन्द्रनारदसंवादान्तर्गतकृष्णयुधिष्ठिरसंवादे महालक्ष्मीव्रतकथा समाप्ता ।

अथाश्विनकृष्णाष्टमी । अस्यां महालक्ष्मीव्रतसमाप्तिः । सा च सनिर्णया पूर्वमेवोपपादिता । अस्यामेवाश्वलायनेन माघ्यावर्षं श्राद्धमुक्तम् । एतेन माघ्यावर्षं प्रौष्ठपद्या अपरपक्षे इति । इदं च सप्तम्यादिषु त्रिष्वहःसु अष्टकावत्कार्यम् । एतेनेति कृत्स्नातिदेशादिति नारायणवृत्तिः । हरदत्तस्तु माघावर्षमिति पाठमङ्गीकृत्य मघायुक्तवर्षाभवं त्रयोदशीश्राद्धमिति व्याचख्यौ । अस्यामेवाष्टम्यां श्राद्धस्य गयाश्राद्धतुल्यं फलम् । तथा च पृथ्वीचन्द्रोदये ब्राह्मे—'आषाढ्याः पञ्चमे पक्षे गयामाघ्याऽष्टमी स्मृता । त्रयोदशी गजच्छाया गयातुल्या तु पैतृके ।' हेमाद्रौ पाद्मेऽपि—'वसुनामा पितॄं कन्या शशापानुग्रहाय च । प्रौष्ठपद्यष्टका भूयः पितृलोके भविष्यसि । आयुरारोग्यदा नित्यं सर्वकामफलप्रदा ।' इति । एतस्याः पद्मसंज्ञा । तथा च जातूकर्ण्यः—'शंखं प्राहुरमावास्यां क्षीणसोमां द्विजोत्तमाः । अष्टकाष्टं भवेत्पद्मं तत्र दत्तं तथाक्षयम् ।' इति ।

अस्यामेवाष्टम्यां विष्णुधर्मोत्तरोक्तं पुत्रीयव्रतम् । हेमाद्रौ—'प्रौष्ठपद्यामतीतायां कृष्णपक्षाष्टमी तु या । सोपवासो नरस्तस्यां योषिद्वा तनयार्थिनी ।' अत्र वासुदेवपूजनं कृत्वा पुरुषसूक्तेन पायसघृतादि हुत्वा पुत्रार्थी पुंनामभिः फलैः कन्यार्थी स्त्रीनामभिः प्राश्य संवत्सरं व्रतं कुर्यादिति पुत्रीयं व्रतम् । इत्याश्विनकृष्णाष्टमी ।

अथाश्विनशुक्लाष्टमी महाष्टमी । सा च शुक्लपक्षस्थत्वादुपवासादौ परयुता ग्राह्येत्युक्तम् । शुक्लपक्षेऽष्टमी चैवेति ब्रह्मवैवर्तात् । वसुरन्ध्रयोरिति युग्मवाक्याच्च । षष्ठ्येकादश्यमावास्येति पूर्वविद्धानिषेधाच्च । तथा—'नाष्टमी सप्तमीयुक्ता सप्तमी नाष्टमीयुता । नवम्या सह कार्या स्यादष्टमी सर्वदा बुधैः ।' इति । 'अष्टमीनवमीयुग्मे महोत्साहे महोत्सवः ।' इति । दुर्गोत्सवे-'प्रतिपद्याहरेत्खड्गं द्वितीयायां धृतं धनुः । तृतीयायां करे चक्रं चतुर्थ्यां चर्म निर्मलम् । पञ्चम्यामाददे शूलं षष्ठ्यां च परशुं तथा । गदां च बिभ्रत्सप्तम्यामष्टम्यां शक्तिमुत्तमाम् । नवमी च सदा देव्या मूर्तिर्दैत्यविनाशिनी । अत

एव हि पूज्या स्यादष्टमी नवमीयुता।' इति। पद्मपुराणेऽपि—'अष्टमी नवमीविद्धा नवम्या चाष्टमी युता। अर्धनारीश्वरप्राया उमामाहेश्वरी तिथिः।' इति। सप्तमीयुक्ता तु सा सति संभवे सर्वथा वर्जनीया। तत्र महादोषश्रवणात्। 'पुत्रान्हन्ति पशून्हन्ति हन्ति राष्ट्रं सराजकम्। हन्ति जातानजातांश्च सप्तमीसहिताष्टमी। तस्मात्सर्वप्रयत्नेन सप्तमीवेधसंयुता। वर्जनीयाऽष्टमी चाथ भुवो राज्यमभीप्सुभिः।' इति। तथा मदनरत्ने स्मृतिसमुच्चये—'शरन्महाष्टमी पूज्या नवमीसंयुता सदा। सप्तमीसंयुता नित्यं शोकसंतापकारिणी।' तथा-'जम्भेन सप्तमीयुक्ता पूजिता तु महाष्टमी। इन्द्रेण निहतो जम्भस्तदा दानवपुङ्गवः। तस्मात्सर्वप्रयत्नेन सप्तमीमिश्रिताऽष्टमी। वर्जनीया प्रयत्नेन मनुजैः शुभकाङ्क्षिभिः। सप्तमीशल्यसंविद्धां मोहादज्ञानतोऽपि वा। महाष्टमीं प्रकुर्वाणो नरकं प्रतिपद्यते। सप्तमी कलया यत्र परतश्चाष्टमी भवेत्। तेन शल्यमिदं प्रोक्तं पुत्रपौत्रधनक्षयः।' इति निर्णयामृते। भोजराजीये भीमपराक्रमेऽपि—'न दिवा न निशापि च विष्टिहता न च सप्तमिशल्यसमोपहता। यदि वाष्टमिशेषयुता नवमी अमरैरपि पुण्यतमा कथिता।' इति। निर्णयसिन्धावपि—'घटिकामात्राप्यौदयिकी ग्राह्ये त्युक्तम्। गौडा अप्येवम्। 'व्रतोपवासनियमे घटिकैकापि या भवेत्।' इति देवलोक्तेः। 'अष्टमी नवमीयुक्ता नवमी चाष्टमीयुता।' इति पाद्मवचनाच्च। रूपनारायणधृतदेवीपुराणे—'सप्तमीवेधसंयुक्ता यैः कृता तु महाष्टमी। पुत्रदारधनैर्हीना भ्रमन्तीह पिशाचवत्।' अत्र वेधो न त्रिमुहूर्तात्मकः किं तु कलामात्रात्मकोऽपि। तथा—'सप्तमीशल्यसंविद्धा वर्जनीया सदाष्टमी। स्तोकापि सा तिथिः पुण्या यस्यां सूर्योदयो भवेत्।' इति। इयमष्टमी नवम्या भूवारेण च युक्ता प्रशस्ता। तदुक्तम्—'अष्टम्यामुदिते सूर्ये दिनान्ते नवमी भवेत्। कुजवारो भवेत्तत्र पूजनीया प्रयत्नतः।' इति। इयं मूलनक्षत्रेण पूर्वाषाढानक्षत्रेण वा युक्ता महानवमीत्युच्यते। तदुक्तम्—'अश्वयुक्छुक्लपक्षे तु याऽष्टमी मूलसंयुता। पूर्वयाषाढया वापि ऋक्षद्वययुताऽथ वा। सा महानवमी नाम त्रैलोक्येऽपि सुदुर्लभा।' इति हेमाद्रौ स्कान्दात्। निर्णयामृते भविष्ये—'कन्यागते सवितरि शुक्लपक्षेऽष्टमी तु या। मूलनक्षत्रसंयुक्ता सा महानवमी स्मृता।' कालतत्त्वविवेचने देवीपुराणे—'प्रावृट्काले विशेषेण आश्विने ह्यष्टमीषु च। महाशब्दो नवम्यां च लोके ख्य [illegible] ग [illegible] ।' इति। मूलन [illegible] युक्तापि सप्तमीलेशसहिता दुष्टैव। तदुक्तं दुर्गोत्सवे—'मूले [illegible] हि संयुक्ता सदा [illegible] ज्याऽष्टमी बुधैः। लेशमात्रेण सप्तम्या अपि स्य [illegible] ।' इति। तथा मूल [illegible] र्वाषाऽ-

द्वयोरेव पूजा प्रशस्ता । उत्तराषाढायां तु निषिद्धा । तदुक्तं निर्णयामृते रूपनारायणीये—'मूलेन पूजयेद्देवीं तथा सलिलदैवतैः । वैश्वदेवे तु नक्षत्रे पूजिता दुःखदा भवेत् ।' उत्तराषाढनिषेधस्तु सति संभवे ज्ञेयः । तदुक्तं दुर्गोत्सवे—'मूलाभावे तु कर्तव्या अष्टमी तोयसंयुता । विश्वयुक्तापि कर्तव्या अष्टमी नवमीयुता ।' इति । अत्र पूर्वोक्तैर्विशेषवचनैर्गौरीतृतीयादिवत्कर्मकालव्याप्तिशास्त्रं बाधित्वा नवमीयुतायामेव रात्रावसत्याष्टम्या नवमीपूजायां सहतन्त्रेणाष्टमीपूजोचिता । अत एव कामरूपीयादिनिबन्धेषु वचनम्—'अष्टम्याः शेषदण्डश्च नवम्याः पूर्व एव च । तत्र या क्रियते पूजा विज्ञेया सा महाफला ।' इति । 'अष्टमीनवमीसंधौ तृतीया खलु कथ्यते । तत्र पूज्या त्वहं पुत्रि योगिनीगणसंयुता ।' इति कालिकापुराणोक्ता तृतीयासंधिपूजाऽप्यष्टमीनवमीपूजाभ्यां तन्त्रेणैव सिद्ध्यति । 'उपोषितो द्वितीयेऽह्नि पूजयेत्पुनरेव ताम् ।' इत्यष्टम्युपवासपरादिनविहिता तु नवमीपूजा प्रातर्वर्तमानायां नवम्यां कर्तुं शक्यैव विसर्जनात्पूर्वमिति तदनुरोधेनापि सप्तमीयुतायामष्टम्यामुपवासादि । मदनरत्ने यानि तु 'महालक्ष्म्याश्विने मासि शुक्ला कल्याणकारिणी । सप्तम्याऽपि युता कार्या मूलेन तु विशेषतः । तथा 'अहं भद्रा च भद्राऽहं नावयोरन्तरं क्वचित् । सर्वसिद्धिं प्रदास्यामि भद्रायां पूजिता ह्यहम् । भद्राया भद्रकाल्याश्च मध्ये स्यादर्चनक्रिया । तस्माद्वै सप्तमीविद्धा कार्या दुर्गाष्टमी बुधैः ।' इत्येवमादीनि पूर्वविद्धाविधायकानि । तानि परदिनेऽष्टम्यभावविषयाणि । पूर्वोदाहृतवचनविरोधात् । यच्च निर्णयामृते—'महाष्टम्यां भगवती भद्रायामपि पूजिता । ददाति चायुरारोग्यं यतो भद्रास्वरूपिणी ।' इति वचनम् । अत्र भद्राशब्दो न सप्तमीवचनः किं तु विष्टिकरणवचनः । यानि च 'सप्तम्यामुदिते सूर्ये परतश्चाष्टमी भवेत् । तत्र दुर्गोत्सवं कुर्यान्न कुर्यादपरेऽहनि ।' तथा 'यदाऽष्टमीं तु संप्राप्य अस्तं याति दिवाकरः । तत्र दुर्गोत्सवं कुर्यादपरेऽहनि वर्जयेत् । दुर्भिक्षं तत्र जानीयान्नवम्यां यत्र पूज्यते ।' इत्यादीनि परदिनेऽष्टमीलाभेऽपि सप्तमीविद्धाविधायकानि । तानि सूर्योदयकाले नवम्यभावविषयाणि । तदुक्तं स्मृतिसंग्रहे—'यदा सूर्योदये न स्यान्नवमी चापरेऽहनि । तदाऽष्टमीं प्रकुर्वीत सप्तम्या सहितां नृप ।' इति । दुर्गोत्सवेऽपि—'उत्तरास्तिथयो यत्र क्षयं यान्ति नराधिप । पूर्वाष्टमी तदा कुर्यादन्यथा त्वशुभं भवेत् ।' इति । निर्णयामृते हेमाद्रिस्तु—'सप्तम्यामुदिते सूर्ये' इत्यादिवचनमाश्विनकृष्णाष्टमीविषयम् । कृष्णपक्षेऽष्टमी चैवेति पूर्वविद्धायाः कृष्णपक्षे एव प्राशस्त्यात् । कृष्णाष्टम्यां पूजनं च कृष्णपक्षनवम्यां क्रियमाणदेवीप्रबोधना-

ङ्गम्। 'कन्यायां कृष्णपक्षे च पूजयित्वाऽष्टमीदिने। नवम्यां बोधयेद्देवीं गीतवादित्रनिःस्वनैः।' इति देवीपुराणात्। महाष्टमी पूर्वेद्युः पूर्वाह्णव्यापित्वे पूर्वा। अन्यथा परैवेति निर्णयदीपमतमिति निर्णयसिन्धौ। अत्र च कृत्यमुक्तम् 'कन्यासंस्थे रवावीषे शुक्लाष्टम्यां प्रपूजयेत्। सोपवासो निशार्धे तु महाविभवविस्तरैः।' देवीपुराणे—'कन्यासंस्थे रवावीषे शुक्लाष्टम्यां प्रपूजयेत्।द्रोणपुष्पैश्च बिल्वैश्च जातीपुंनागचम्पकैः।' इति। अत्र विशेष उक्तो मदनरत्ने विष्णुधर्मोत्तरे—'आश्विने शुक्लपक्षस्य अष्टम्यां प्रयतः शुचिः। तत्रैवायुधचर्माद्यं छत्रं वस्त्रं च पूजयेत्। राजलिङ्गानि सर्वाणि तथा शस्त्राणि पूजयेत्। रात्रौ जागरणं कुर्यात्तत्रैव वसुधाधिप। उपोषितो द्वितीयेऽह्नि पूजयेत्पुनरेव ताम्। आयुधाद्यं च सकलं पूजयेद्वसुधाधिप।' इति। विस्तरेणाष्टमीकृत्यं च नवरात्रप्रकरणे एवोक्तमिति नेह प्रतन्यते। इत्याश्विनशुक्लाष्टमीनिर्णयः।

अथ प्रसङ्गात्प्रतिपदादिषु नवम्यन्तासु तिथिषु भविष्योत्तरोक्तो दुर्गोत्सवो लिख्यते। श्रीकृष्ण उवाच। 'पुण्या महानवम्येषा तिथीनामुत्तमा तिथिः। अनुष्ठेया नरैः सर्वैः प्रजापालैर्विशेषतः। भवानीतुष्टये पार्थ संवत्सरसुखाय च। भूतप्रेतपिशाचानां प्रीत्यर्थं चोत्सवाय च।' युधिष्ठिर उवाच—'कस्मात्कालात्प्रवृत्तेयं नवमी महशब्दिता। किमादावपि कृत्स्नासीद्भगवत्याः प्रिया तिथिः। यशोदागर्भसंभूतेरुत यात्राप्रवर्तने। उताहो पूर्वमेवासीत्कृतत्रेतायुगादिषु। ये चान्ये प्राणिनः केचिद्वध्यन्ते घातयन्ति च। हतानां प्राणिनां तेषां का गतिः पारलौकिकी। स्वयं घ्नतां घातयतामनुमोदयतां तथा। एतन्मे संशयं सर्वं वक्तुमर्हसि केशव।' श्रीकृष्ण उवाच—'पार्थ या परमा शक्तिरनन्ता लोकपूजिता। आद्या सर्वगता शुद्धा भावगम्या मनोहरा। अर्धाष्टमी कालकाली सुषुम्णा सर्वमङ्गला। माया कात्यायनी दुर्गा चामुण्डा शंकरप्रिया। ध्यायन्ति यां योगरताः सा देवी परमेश्वरी। रूपभेदैर्नामभेदैर्भवानी पूज्यते शिवा। अष्टम्यां तु नवम्यां तु देवदानवराक्षसैः। गन्धर्वैरुरगैर्यक्षैः पूज्यते किंनरैर्नरैः। अन्यैरपि युगादौ तु सृष्टेः पूर्वं प्रवर्तिता। पूजितेयं पुरा देवैस्तेभ्यः पूर्वतरैः शुभैः। अश्वयुक्छुक्लपक्षे तु अष्टमीमूलसंयुता। सा महानवमी नाम त्रैलोक्येऽपि सुदुर्लभा। कन्यागते सवितरि शुक्लपक्षे तु अष्टमी। मूलनक्षत्रसंयुक्ता सा महानवमी स्मृता। अष्टम्यां च नवम्यां च जन्ममोक्षप्रदाम्बिकाम्। पूजयित्वाश्विने मासि विशोको जायते नरः। संतर्जयन्ती हुंकारैर्विघ्नौघान्घातुकान्परान्। नवम्यां पूजिता देवी ददात्यनुपमं फलम्।सा पुण्या सा पवित्रा च सा धर्मसुखदायिनी।तस्यां सदा

पूजनीया चामुण्डा मुण्डमालिनी । तस्यां ये ह्युपयुज्यन्ते प्राणिनो महिषादयः । सर्वे ते स्वर्गतिं यान्ति घ्नतां पापं न विद्यते । न तथा बलिदानेन पुष्पधूपविलेपनैः । यथा संतुष्यते मेषैर्विन्ध्याचलनिवासिनी । उद्दिश्य दुर्गां हन्यन्ते विविधा यत्र जन्तवः । स्वर्गे ते यान्ति कौन्तेय घातयन्तो यशस्विनः । भवानीप्राङ्गणे प्राणा येषां यान्ति युधिष्ठिर । तेषां स्वर्गेऽतुलो वासो वीरास्तेऽप्सरसां प्रियाः । मन्वन्तरेषु सर्वेषु कल्पेषु कुरुनन्दन । तेषु सर्वेषु पूज्यासीन्नवमीयं सुरार्चिता । प्रसिद्धाऽनादिनिधना वर्षे वर्षे युधिष्ठिर । भूयो भूयोऽवतारैश्च भवानी पूज्यते सुरैः । अवतीर्णाऽवतीर्णा च भुवि दैत्यनिबर्हिणी । स्वर्गपातालमर्त्येषु करोति स्थितिपालने । सैव काली महादेवी यशोदागर्भसंभवा । कंसासुरस्योत्तमाङ्गे पदं दत्त्वा गता वियत् । ततः प्रभृति दैत्यघ्नी यशोदानन्दिनी मया । विन्ध्याचले स्थापयित्वा पुनः पूजा प्रवर्तिता । पूर्वप्रसिद्धोऽपि पुनर्भगिन्या महिमा कृतः । भुवि सत्त्वोपकाराय सर्वोपद्रवशान्तये । एवं च विन्ध्यवासिन्यां नवरात्रोपवासितः । एकभक्तेन नक्तेन स्वशक्त्यायाचितेन वा । पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे । गृहे गृहे शक्तिपरैर्ग्रामे ग्रामे वने वने । स्नातैः प्रमुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियैर्नृप । वैश्यैः शूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्च मानवैः । स्त्रीभिश्च कुरुशार्दूल तद्विधानमिदं शृणु ।' एतदनन्तरं जयाभिलाषीत्यादि सुखावह इत्यन्तो ग्रन्थो नवरात्रप्रकरणे द्रष्टव्यः ।'इत्येवं भ्रामयेद्राष्ट्रे दुर्गां देवीं रथोत्थिताम् । नरयानेन वा पार्थ ततोऽविघ्नं समापयेत् । अथोत्पन्नेषु विघ्नेषु भूतशान्तिं समाचरेत् । येन विघ्ना न जायन्ते यात्रा संपूर्णतां व्रजेत् । एवं ये कुर्वते यात्रा राजानोऽन्येऽपि मानवाः । महानवम्यां नन्दायां पुत्रिका हृष्टमानसाः । ते सर्वे पापनिर्मुक्ता यान्ति भागवतीं पुरीम् । न तेषां शत्रवो नाग्निर्न चौरा न विनायकाः । विघ्नं कुर्वन्ति राजेन्द्र येषां तुष्टा महेश्वरी । इत्येतत्ते समाख्यातो दुर्गादेव्या महोत्सवः । पठतां शृण्वतां चैव सर्वाशुभविनाशनः । शूलाग्रभिन्नमहिषासुरपृष्ठमध्यमध्यास्य तत्सुरुचिराङ्गदबाहुदण्डाम् । अभ्यर्च्य पञ्चवदनानुगतां नवम्यां दुर्गां तु दुर्गगहनानि तरन्ति मर्त्याः ।'

इति दुर्गोत्सवः ।

अथ कार्तिककृष्णाष्टमी करकाभिधा महाराष्ट्रेष्वन्येषु च प्रसिद्धा । सा चन्द्रोदयव्यापिनी कार्या । कार्तिककृष्णाष्टम्यां भविष्यपुराणोक्तं दाम्पत्याष्टमीव्रतम् । हेमाद्रौ—'कार्तिके मासि विप्रेन्द्र पुत्रकामो नरो मुने । अष्टम्यां कृष्णपक्षस्य पूजयेद्विधिवद्द्विजः । उमया सहितं देवं कृत्वा दर्भमयं विभुम् ।' इत्यादि । इति दाम्पत्या-

ष्टमीव्रतम्। अत्रैव मथुरावासिभी राधाकुण्डेऽरुणोदये सूर्योदये वा स्नानं विधेयम्। तद्विधिश्च मधुसेतौ द्रष्टव्यः।

कार्तिकशुक्लाष्टमी गोष्ठाष्टमी तत्र गोपूजा कार्या। तदुक्तं निर्णयामृते कूर्मपुराणे—'शुक्लाष्टमी कार्तिके तु स्मृता गोष्ठाष्टमी बुधैः। तत्र कुर्याद्गवां पूजां गोग्रासं गोप्रदक्षिणाः। गवानुगमनं कार्यं सर्वान्कामानभीप्सता।' इति। इयमेव कन्दर्पकल्पादिः।

मार्गशीर्षकृष्णाष्टम्यामनघाव्रतम्। तदुक्तं हेमाद्रौ भविष्योत्तरे—'कृष्णाष्टम्या मार्गशीर्षे दाम्पत्यं दर्भनिर्मितम्। अनघं चानघां चैव बहुपुत्रैः समन्वितम्। स्थापयित्वा शुभे देशे गोमयेनानुलेपिते।' पूजयेदिति शेषः। इदं व्रतं वर्षमात्रं कर्तव्यम्। इत्यनघाष्टमीव्रतम्। इमामेवाष्टमीमारभ्य वर्षपर्यन्तं शिवव्रतं कर्तव्यम्।

अस्यामेव भैरवजयन्तीव्रतमुक्तं शिवरहस्ये। 'कालाष्टमी तु विज्ञेया कार्तिकस्यासिताष्टमी। तस्यामुपोषणं कार्यं तथा जागरणं निशि।' इति। 'भैरवस्य तु कर्तव्या पूजा यामचतुष्टये। कार्यं शिवकथालापैर्निशि जागरणं सदा। जागरं चोपवासं च कृत्वा कालाष्टमीदिने। प्रयतः पापनिर्मुक्तः शैवो भवति शोभनः।' इति। यामचतुष्टयं रात्रिसंबन्धि विवक्षितम्। प्रकरणात्। काशीवासिनां नित्यं चैतत्। तदधिकारे—'यो देवि भैरवाष्टम्यामुपवासं प्रयत्नतः। न करिष्यति मोहेन यास्यत्येवेह यातनाम्।' इति तत्रैव वचनात्। काशीखण्डेऽपि—'मार्गशीर्षसिताष्टम्यां कालभैरवसंनिधौ। उपोष्य जागरं कुर्यान्महापापैः प्रमुच्यते। यत्किंचिदशुभं कर्म कृतं मानुषजन्मनि। तत्सर्वं विलयं याति कालभैरवदर्शनात्। अनेकजन्मनियुतैर्यत्कृतं जन्तुभिस्त्वघम्। तत्सर्वं विलयत्याशु कालभैरवजागरात्।' तच्च दर्शनं स्नात्वा कर्तव्यमित्युक्तं तत्रैव—'तीर्थे कालोदके स्नात्वा कृत्वा तर्पणमत्वरः। विलोक्य कालराजानं निरयादुद्धरेत्पितॄन्। कृत्वा च विविधां पूजां महासंभारविस्तरैः। नरो मार्गसिताष्टम्यां वार्षिकं विघ्नमुत्सृजेत्।' इति। 'उपोष्य जागरं कुर्वन्सर्वपापैः प्रमुच्यते।' इति। उपोषणाङ्गत्वेनार्घ्यदानं कार्यमित्युक्तं शिवरहस्ये। 'उपोषणस्याङ्गभूतमर्घ्यदानमिदं स्मृतम्।' मन्त्रा अपि तत्रैव। भैरवार्घ्यं गृहाणेश भीमरूपाव्ययानघ। अनेनार्घ्यप्रदानेन तुष्टो भव शिवप्रिय। सहस्राक्षिशिरोबाहो सहस्रचरणाजर। गृहाणार्घ्यं भैरवेदं सपुष्पं परमेश्वर। पुष्पाञ्जलिं गृहाणेश वरदो भव भैरव।

१—अस्यामेव काशीखण्डे काशीवासनिर्विघ्नतार्थं कालभैरवपूजोक्ता स्पुस्तके पाठः।

पुनरर्घ्यं गृहाणेदं सपुष्पं यातनापह ।' इति । अत्र पूजोपवासजागरणानि प्रधानानि फलसंबन्धात् । अस्मिन्व्रते उपवासजागरणयोः प्रधानयोरहोरात्रसाध्यत्वेनाहोरात्रयुताष्टमी ग्राह्या । अहोरात्रव्रतं यच्चेति स्मृतेः । यदा तु पूर्वदिने सायाह्न उत्तरस्मिन्नपि प्रदोषे तुल्या तदापि पूर्वैव कृष्णपक्षगतत्वात्कालव्याप्तिलाभाच्च-'रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः ।' इति ब्रह्मवैवर्त्ताच्च । दिनद्वयेऽशतो रात्रिव्याप्तावुत्तरैव भैरवोत्पत्तेः प्रदोषकालीनत्वादिति केचित् । तन्न । शिवरहस्ये मध्याह्ने भैरवोत्पत्तेः श्रवणात् । तथा च तत्रैव-'नित्ययात्रादिकं कृत्वा मध्याह्ने संस्थिते रवौ ।' इत्युपक्रम्य ब्रह्मणा रुद्रे जाते इत्युक्तम् । 'तदोग्ररूपादनघान्मत्तः श्रीकालभैरवः । आविरासीत्तदा लोकान्भीषयन्नखिलानपि।' तस्मान्मध्याह्नव्यापिनी ग्राह्येत्यपरे । अन्ये त्वेतदपि नाद्रियन्ते । आविर्भावकालव्यापिन्याः कर्तव्यत्वेनाभिधानात् । आविर्भावोऽपि मध्याह्न एव शिवरहस्ये 'मध्याह्नोत्तरं कृत्तिवासेश्वरं प्रापुर्देवा बिल्वादिसाधनाः ।' इत्यादिना मध्ये बहुकृत्याभिधानात् । अन्ते सूर्योऽप्यस्तमुपागमत् इत्यभिधानात् । तिथ्यर्के तु सिन्धुकारज्येष्ठैरुक्तं भैरवसंनिधावित्युक्तेर्जागरणोपवासादिकं काश्यामेव कर्तव्यमिति तत्प्रमाणाभावादुपेक्ष्यमिति, तदेवोपेक्ष्यम्।मार्गशीर्षसिताष्टम्यामित्युत्पत्तिवाक्ये कालभैरवसंनिधावित्यस्योपात्तत्वेनाविवक्षितत्वे प्रमाणाभावात् । यत्तु निर्णयसिन्धौ-मार्गशीर्षकृष्णाष्टमी कालाष्टमीत्युक्तं, तद्भ्रमसात् । कालाष्टमी भाद्रकृष्णाष्टमीति हेमाद्र्युक्तेः । तल्लक्षणमपि तत्रैव भाद्रपदाष्टमीप्रकरणे द्रष्टव्यम् । इयमष्टमी लक्ष्मीकल्पादिः ।

पौषकृष्णाष्टम्यामष्टकाश्राद्धमुक्तमाश्वलायनेन । हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका इति हेमन्तशिशिर इति ऋतुनिरूपणप्रस्तावउक्तम् । तथा च चतुर्ष्वसितपक्षेष्वष्टम्यश्चतस्रोऽप्यष्टकाः एकैकस्यामप्यष्टम्यां चैकैका कार्येति हरदत्तः । क्वचित्पञ्चम्यप्युक्ता । 'प्रौष्ठपद्यष्टका भूयः पितृलोके भविष्यसि ।' इति पाद्मवचनात् । तत्पूर्वदिने सप्तमीषु पूर्वेद्युः श्राद्धम् उत्तरदिने चान्वष्टक्यम् । पूर्वेद्युः पितृभ्यो दद्यात् अपरेद्युरन्वष्टक्यमित्याश्वलायनसूत्रात् । कालादर्शेऽपि-'मार्गशीर्षे च पौषे च माघे प्रौष्ठे च फाल्गुने । कृष्णपक्षे च पूर्वेद्युरान्वष्टक्यं तथाष्टकाः ।' इति । यत्तु विष्णुः-अमावास्यास्तिस्रोऽन्वष्टकाः इति । कौर्मेऽपि-'अमावास्याष्टकास्तिस्रः पौषमासादिषु त्रिषु।' इति । तच्चतुर्थ्या अप्युपलक्षणम्।'या चाप्यन्या चतुर्थी स्यात्तां च कुर्यात्प्रयत्नतः।' इति ब्रह्माण्डपुराणात् । शाखाभेदाद्व्यवस्थेति तु तत्त्वम् । काल

तत्त्वविवेचने-केषांचिद्दर्शान्तफाल्गुनाष्टमीत्यागेन तादृशभाद्रपदाष्टमीसंग्रहेण चतस्रः । तथा च ब्रह्मपुराणे—'ऐन्द्र्यां तु प्रथमायां च शाकैः संतर्पयेत्पितॄन् । प्राजापत्यं द्वितीयायां मांसैः शुद्धैश्च संत्यजेत् । वैश्वदेव्यां तृतीयायामपूपैश्च यथाक्रमम् । वर्षासु मेध्यशाकैश्च चतुर्थ्यामेव सर्वदा।' इति । आसु श्राद्धं नित्यम् । 'अष्टकान्वष्टकास्तिस्रस्तथैव च नृपोत्तम । एतास्तु श्राद्धकालान्वै नित्यानाह प्रजापतिः । श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते।' इति हेमाद्रौ विष्णुधर्मोत्तरात् । अत्राष्टम्यपराह्णव्यापिनी ग्राह्या । 'अथाच्छादनपर्यन्तं श्राद्धं पार्वणवद्भवेत्।' इत्याश्वलायनकारिकोक्तेरपराह्णकालत्वात्पार्वणस्य । पूर्वेद्युः श्राद्धस्यान्वष्टक्यस्य चाष्टम्यनुरोधेन निर्णयः । पूर्वेद्युः पितृभ्यो दद्यादपरेद्युरन्वष्टक्यमिति सूत्रात् । अत्र कामकालसंज्ञकौ विश्वेदेवौ इष्टिश्राद्धे क्रतुदक्षावष्टम्यां कामकालाविति सायनीये शंखोक्तेः। अत्राशक्तविषय आश्वलायनः "अप्यनडुहो यवसमाहरेदग्निना वा कक्षमुपोषेदेषा मेऽष्टकेति न त्वेवानष्टकः स्यात्।" इति। विष्णुपुराणे—'अन्नेन वा यथाशक्ति कालेऽस्मिन्भक्तिनम्रधीः । भोजयिष्यति विप्राग्र्यान्।' इत्यादि । तत्रैव । 'असमर्थोऽन्नदानस्य धान्यमानं स्वशक्तितः। प्रदास्यति द्विजाग्र्येभ्यः स्वल्पामपि च दक्षिणाम् । अत्राप्यसामर्थ्ययुक्तः कराग्रावस्थितांस्तिलान् । प्रणिपत्य द्विजाग्र्याय कस्मैचित्संप्रदास्यति । तिलैः सप्ताष्टभिर्वापि समवेताञ्जलाञ्जलीन्। भक्तिनम्रः समुद्दिश्य भुव्यस्माकं प्रदास्यति । यतः कुतश्चित्संप्राप्य गोभ्यो वापि गवाह्निकम् । अभावे प्रीणयन्नस्माञ्छ्रद्धायुक्तः प्रदास्यति ।' इति । एतासु श्राद्धाकरणे दोषोऽभिहितो वायुपुराणे—'यस्यैते प्रतिगच्छेयुरष्टकाभिरपूजिताः। मोघस्तस्य भवेल्लोको लब्धं चास्य विनश्यति। देवांस्तु दायिनो यान्ति तिर्यग्गच्छन्त्यदायिनः ।' इति । अत्र श्राद्धाकरणे प्रायश्चित्तमुक्तमृग्विधाने—'एभिर्द्युभिर्जपेन्मन्त्रं शतवारं तु तद्दिने। अन्वष्टक्यं यदा शून्यं संपूर्णं याति सर्वथा।' इति । अन्वष्टक्यग्रहणमष्टकोपलक्षणम् । मार्गादिषु मलमासपाते तत्राष्टका न कार्या । चतुर्णामिति ग्रहणादिति नारायणवृत्तौ । काठकगृह्येपि— 'महालयाष्टकाश्राद्धोपाकर्माद्यपि कर्म यत् । स्पष्टमासं विशेषाख्याविहितं वर्जयेन्मले ।' इति ।

अस्यामेव रुक्मिण्यष्टमीव्रतम् । तत्र कृष्णं रुक्मिणीं प्रद्युम्नं च पूजयेदित्युक्तम् । इति रुक्मिण्यष्टमीव्रतम् । इति पौषकृष्णाष्टमीकृत्यम् ।

अथ पौषशुक्लाष्टमीकृत्यम् । सा बुधवारेण युता महाभद्रेत्युच्यते । तदुक्तं कृत्यकल्पतरौ निर्णयामृते भविष्ये । 'पौषमासि तदा देवि शुक्लाष्टम्यां बुधोऽभवत् ।

तदा तु सा महापुण्या महाभद्रेति कीर्तिता । तस्यां स्नानं जपो होमस्तर्पणं विप्रभोजनम् । मत्प्रीतये महादेवि पूज्योऽहं विधिवद्बुधैः ।' इति । इयमेव भरणीयुक्ता जयन्तीत्युक्तं तत्रैव । 'पौषे मासि यदा देवि अष्टम्यां शुक्लपक्षके । नक्षत्रं जायते पुण्यं यल्लोके रौद्र-मुच्यते । तदा तु सा महापुण्या जयन्ती ह्यष्टमी शुभा । तस्यां स्नानं तथा दानं जपो होमश्च तर्पणम् । सर्वं कोटिगुणं देवि कृतं भवति कृत्स्नशः ।' इति । रौद्रं भरणी । इति पौषशुक्लाष्टमीकृत्यम् ।

अथ माघशुक्लाष्टमी । सा च भीष्माष्टमीत्युच्यते । तत्र भीष्मतर्पणं श्राद्धं च कार्यमित्युक्तं हेमाद्रौ पाद्मे–'माघे मासि सिताष्टम्यां सतिलं भीष्मतर्पणम् । श्राद्धं चैव तु ये कुर्युः कुरोः संततिभागिनः ।' इति निर्णयसिन्धौ धवलनिबन्धे स्मृतिः । 'अष्टम्यां तु सिते पक्षे भीष्माय च तिलोदकम् । अन्नं च विधिना दद्युः सर्वे वर्णा द्विजा-तयः ।' इति सर्ववर्णोक्तेर्द्विजातय इति संबोधनम् । मदनरत्ने–अत्र श्राद्धं काम्यं तर्पणं नित्यमपि । 'ब्राह्मणाद्याश्च ये वर्णा दद्युर्भीष्माय नो जलम् । संवत्सरकृतं तेषां पुण्यं नश्यति सत्तम ।' इत्यकरणे प्रत्यवायश्रवणात् । एतच्च जीवत्पितृकेणापि कार्यम् । 'जीवत्पि-तापि कुर्वीत तर्पणं यमभीष्मयोः ।' इति पाद्मवचनात् । यस्तु 'सपितुः पितृकृत्येषु नाधिकारः कथंचन' इति निषेधः स पित्र्यकर्मपरः । एतच्चापसव्येन कार्यमिति दिवो-दासीये इति निर्णयसिन्धौ । तर्पणमन्त्रस्तु महाभारते–'भीष्मः शान्तनवो वीरः सत्य-वादी जितेन्द्रियः । आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम् । वैयाघ्रपादगोत्राय सांकृत्यप्रवराय च । अपुत्राय ददाम्येतज्जलं भीष्माय वर्मणे ' इति । हेमाद्रौ तु वैया-घ्रेत्येक एव श्लोकःपठितः । मदनरत्ने तु श्लोकद्वयमेकमन्त्रत्वेन पठितम् तेन श्लोकद्वय मपिपठित्वा अपसव्येन त्रिरञ्जलिदानं कार्यम् । भीष्मतर्पणमाचारात्पूजनं च कृत्वाऽर्घ्यं दद्यात् । तत्र मन्त्रः–'वसूनामवताराय शंतनोरात्मजाय च । अर्घ्यं ददामि भीष्माय आबालब्रह्मचारिणे ।' इति माघशुक्लाष्टमी ।

अथ फाल्गुनकृष्णाष्टम्यां विशेषो निर्णयसिन्धौ–' फाल्गुनस्य च मासस्य कृष्णाष्टम्यां महीपते ।' इत्युपक्रम्य 'जाता दाशरथेः पत्नी तस्मिन्नहनि जानकी । उपोषितो रघुपतिः समुद्रस्य तटे तदा । सर्वसस्यैश्चरुस्तस्मात्तत्तत्कर्तव्य एव हि । सापूपैस्तैश्च संपूज्या विप्रसंबन्धिबान्धवाः । रामपत्नीं च संपूज्य सीतां जनकनन्दिनीम् ।' इति । इयमप्यष्टकेति प्रागुक्तम् ।

फाल्गुनशुक्लाष्टम्यां लक्ष्मीःसीता च पूज्या । यदेवान्नादिकं ब्राह्मणे दत्तं तदेव

भोज्यं नान्यत् । तदुक्तं वीरमित्रोदये ब्रह्मपुराणे—'अष्टम्यां च द्विजश्रेष्ठैः सुस्नातैश्च स्वलंकृतैः । लक्ष्मीः सीता च संपूज्या गन्धमाल्यादिभिः सदा । ततः प्रदोषसमये दीपा देयाः सहस्रशः । दत्तमिष्टं तदा भोज्यं भक्षितव्यं च बन्धुभिः ।' इति । इयं प्रदोषव्यापिनी ग्राह्या । तत्रैव दीपदानादेरुक्तत्वात् । दिनद्वये तद्व्याप्तावव्याप्तौ वा परैव । शुक्लपक्षेऽष्टमी चैवेति नैगमात् ।

अष्टम्यां पूर्णायां यदा बुधवारो भवति तदा कल्पोक्तविधिनैकभक्तव्रतं कार्यम् । तदुक्तं निर्णयामृते भविष्योत्तरे—'यदा यदा सिताष्टम्यां बुधवारो भवेत्किल । तदा तदा हि संग्राह्या एकभक्ताशनैर्नृप । बुधाष्टमी तु संपूर्णा ग्रथोक्तफलदायिनी । संध्याकाले तथा चैव प्रसुप्ते च जनार्दने । बुधाष्टमी न कर्तव्या हन्ति पुण्यं पुरा कृतम् ।' इति ।

अथ बुधाष्टमीव्रतं भविष्ये—श्रीकृष्ण उवाच—' बुधाष्टमीव्रतं पार्थ शृणुष्वै-काग्रमानसः । आसीद्राजा विदेहानां मिथिर्नाम स वैरिभिः । संग्रामे निहतो वीरैस्तस्य भार्या दरिद्रिणी । ऊर्मिला नाम बभ्राम महाबालकसंयुता । परेषां कर्म कुर्वाणा तद्गोधूमानचूचुरत् । उपयेमे कुलीनत्वात्तत्कन्यां श्यामलां यमः । स सप्तपञ्जरान्हित्वा विहरस्वेति तां पतिः । उवाच सा च तानेव निषिद्धापि व्यलोकयत् । ददर्श मातरं तेषु पच्यमानां महाभटैः । तां विषण्णां यमः प्राह चौर्यपापफलं त्विदम् । माता तवानुभवतीत्यत्रोपायस्त्वया पुरा । बुधाष्टमीव्रतं चीर्णं तच्छ्रेयोऽस्यै समर्पय । तथा कृते श्यामलया निःपापा स्वर्गतोर्मिला । सा तु भर्तुः समीपे च दृश्यतेऽद्यापि भारत । बुधस्य पार्श्वे नभसि मिथिराजसमीपगा । विस्फुरन्ती महाराज बुधाष्टम्याः प्रभावतः । अथातः संप्रवक्ष्यामि बुधाष्टम्या विधिं नृप । यदा यदा सिताष्टम्यां बुधवारो भवेत्क-चित् । तदा तदा हि सा ग्राह्या एकभक्ताशनैर्नृभिः । स्नात्वा नद्यां तु मध्याह्ने गृहीत्वा करकं नवम् । जलपूर्णं सहेमानं कृत्वा खाद्यैः समन्वितम् । दद्याद्विप्राय तं गत्वा गृहं चैव क्रमेण तु । अष्टम्योऽष्ट विधातव्या विचित्रान्नैः पृथक्पृथक् । प्रथमं मोद-कैर्भक्ष्यैर्द्वितीयां गुणकैस्तथा । तृतीयां घृतपूरैश्च चतुर्थीं वटकैर्नृप । पञ्चमीं शुभ्रका-सारैः षष्ठीं सोहालकैः शुभैः । अशोकवर्तिभिः शुभ्रैः सप्तमीं चातिवाहयेत् । अष्टमीं फाणितापूर्णैः खण्डवेष्टैर्युधिष्ठिर । एवं क्रमेण कर्तव्याः सुहृत्स्वजनबान्धवैः । सहैकत्र स्थितैर्भोज्यं भोक्तव्यं प्रीतिपूर्वकम् । उपाख्यानमिदं पार्थ कथयद्भिः शनैः शनैः । आख्यानोपरमे पार्थ भोजनं सहसा त्यजेत् । तावदेव हि भोक्तव्यं यावत्सा कथ्यते

कथा । ततो भुक्त्वा बुधस्याग्रे आचम्य च समाहितः । विप्राय वेदविदुषे वाचकाय प्रदापयेत् । साक्षतं सहिरण्यं च जातरूपमयं शुभम् । शोभितं चर्चितं गन्धैः पुष्पैर्धूपैः सुगन्धिभिः । पीतवस्त्रैः समाच्छन्नं बुधं सोमात्मजाकृतिम् । माषकेन सुवर्णस्य तदर्धार्धेन वा कृताम् ।' बुधरूपमुक्तं मत्स्यपुराणे—' पीतमाल्याम्बरधरः कर्णिकारसमद्युतिः । खड्गचर्मगदापाणिः सिंहस्थो वरदो बुधः । ' ' भक्तियुक्तस्तु कौन्तेय दद्यादेवं समुच्चरन् । ' ॐ बुधाय नमः, ॐ सोमात्मजाय नमः, ॐ दुर्बुद्धिनाशाय नमः, ॐ सुबुद्धिप्रदाय नमः, ॐ ताराजाताय नमः, ॐ सौम्यविग्रहाय नमः, ॐ सर्वसौख्यप्रदाय नमः । इमे पूजामन्त्राः । ' ॐ बुधोऽयं प्रतिगृह्णाति द्रव्यस्थस्तु बुधः स्वयम् । दीयते बुधरूपेण तुष्यतां मे बुधोत्तमः ।' दानमन्त्रः—'ॐ दुर्बुद्धिबोधदुरितं नाशयित्वावयोर्बुधः । सौख्यं सौमनसं नित्यं करोति शशिनन्दनः ।'इत्युच्चार्य गृहीत्वा तु दत्त्वा मन्त्रपुरस्कृतम् । सप्तजन्मानि राजेन्द्र भवेज्जातिस्मरो भुवि । धनधान्यसमायुक्तः पुत्रपौत्रसमृद्धिमान् । दीर्घायुर्विपुलान्भोगान्बहून्भुक्त्वा महीतले । ततः सुतीर्थमरणं ध्यात्वा नारायणं लभेत् । मृतोऽसौ स्वर्गमाप्नोति पुरंदरपुरीं नृप । तत्रास्ते यावदासृष्टेर्यावदाभूतसंभवम् । एवमेषा समाख्याता गुह्या पार्थ बुधाष्टमी । यां श्रुत्वा ब्रह्महा गोघ्नः सर्वपापैः प्रमुच्यते । यो ह्यष्टमीं बुधयुतां समवाप्य भक्त्या संपूजयेच्छशिसुतं करकोपरिस्थम् । पक्वान्नपानसहितं सहिरण्यवस्त्रं पश्यत्यसौ यमपुरं न कदाचिदेव ।'

इति भविष्योत्तरोक्तं बुधाष्टमीव्रतम् ।

अथ भविष्योत्तरोक्तं सोमाष्टमीव्रतम् । हेमाद्रौ—' वारे सोमस्य चाष्टम्यां पक्षयोरुभयोरपि । विधिवच्चन्द्रचूडाख्यं सोमं संपूजयेन्निशि ।' सोममुमासहितं पूजयेदिति शेषः । इति सोमाष्टमीव्रतम् ।

अथार्काष्टमी हेमाद्रौ भविष्योत्तरे—' यदाष्टम्यां शुक्लपक्षे रविवारोऽभिजायते । उपोष्या सा प्रयत्नेन तेनैव विधिना नृप । अर्चयेद्देवदेवेशं सह देव्या महेश्वरम् । विशेष एष एवात्र शिवस्य नयने स्थितम् । भानुं संपूजयेद्भक्त्या गन्धपुष्पाक्षतैः शुभैः । शिवं वा सितपुष्पैस्तु रक्तपुष्पैस्तथाम्बिकाम् । ' पूजयेदिति शेषः । इत्यर्काष्टमीव्रतम् ।

हेमाद्रौ—' शुक्रश्रवणयोगस्तु यदाऽष्टम्यां प्रजायते । चतुर्दश्यामथो वत्स तदा व्रतं समाचरेत् । उपोषितस्तु विधिना महास्नानं समाचरेत् ।' इत्यादि । अत्र शिवपूजनं कृत्वा रात्रौ जागरणं कृत्वा परेद्युः पारणं कुर्यादिति । इति कालोत्तरोक्तं महाव्रतम् ।

अथ विश्वरूपव्रतं हेमाद्रौ—'रेवतीशनियोगस्तु सिताष्टम्यां यदा भवेत् । भूताया वा महासेन तदा व्रतमिदं शृणु ।' इत्युक्त्वा शिवपूजनं कुर्यादित्युक्तम् । 'कुशोदकं तु प्राश्नीयाद्रात्रौ जागरणं तथा ।' इति । इति विश्वरूपव्रतम् ।

अथाशोकाष्टमीव्रतम् । भानुरुवाच—'अष्टमीषु च सर्वासु पूजनीयाऽप्यशोकिका[1] । गन्धमाल्यनमस्कारदीपधूपान्नसंपदा । तस्मिन्नहनि या भुङ्क्ते नक्तमिन्दुविवर्जिते[2] । भवत्यर्थविशोका सा यत्र यत्राऽभिजायते । अष्टमीषु च सर्वासु न चेच्छक्नोति वै मुने । प्रौष्ठपद्यामतीतायां यस्यां कृष्णाष्टमी द्विज । तस्यामवश्यं कर्तव्या देव्याः पूजा यथाविधि ।' इत्यादित्यपुराणोक्तमशोकाष्टमीव्रतम् ।

'नक्ताशी त्वष्टमीषु स्याद्वत्सरान्तेषु गोप्रदः । पौरंदरपुरं याति सुगतिव्रतमुत्तमम् ।' अत्र पुरंदरो देवता । इति पद्मपुराणोक्तं सुमतिव्रतम् ।

'अष्टम्यां च नवम्यां च पक्षयोरुभयोरपि । योऽब्दमेकं न भुञ्जीत चण्डिकाराधने रतः।स याति परमं स्थानं यत्र सा चण्डिका स्थिता ।' इति । इति भविष्योत्तरोक्तं चण्डिकाव्रतम् ।

अथाष्टमीव्रतोद्यापनविधिः।तत्र कर्ता अष्टम्यां प्रातः प्रातःस्नानादि नित्यनैमित्तिके विधाय गणपतिपूजनादिकलशस्थापनान्तं कृत्वा तदुपरि ताम्रपात्रे रक्तवस्त्रोपरि मण्डूकादिपरतत्त्वान्तं संपूज्य सौवर्णां स्वेष्टदेवतां साङ्गां नीराजनान्तोपचारैः संपूज्य रात्रौ जागरणं कृत्वा नवम्यां पुनः पूजयित्वा आज्येनैव वैदिकेन मूलमन्त्रेण चाष्टोत्तरशतसंख्यया होमं विधाय गोसुवर्णादि दत्त्वा आचार्याय मूर्तिं समर्प्य दम्पतीन्कुमारीश्च संभोज्य स्वयमपि भोजनं कुर्यादित्यष्टम्युद्यापनविधिः ।

अथ सिद्धविरुद्धादिकं लिख्यते । अष्टमी भौमेन सिद्धा 'भौमे षष्ठी तृतीया स्यादष्टमी च त्रयोदशी ।' इति । गुरुवारेण विरुद्धा । 'यथा जीवेऽष्टमी चतुर्थी ।' इति । अत्र संग्रामबलोपयोगीनि कार्याणि कुर्यात् । यथा—'जयासु विद्धीताजिबलकार्याणि निर्वृतः ।' इति । अत्र तैलस्नानं मांसभक्षणं नारिकेलभक्षणं च निषिद्धम् । यथा 'नार्कारवारे न च संक्रमे च न वैधृतौ न व्यतिपातयोगे । न पक्षमध्येऽपि न विष्टिषष्ठ्योरभ्यङ्ग इष्टो न च पर्वसूक्तः ।' पक्षमध्येऽष्टम्याम् । तथा पलमष्टमीषु इति । 'अष्टम्यादिषु नाद्यादूर्ध्वगतीच्छुः कदाचिदपि विद्वान् । शीर्षकपालान्त्राणि नखचर्मतिलानि क्रमशः ।' अयमर्थः । अष्टम्यां शीर्षं नारिकेलं

---

१—अशोकिका अशोकलतिका । २—इन्दुविवर्जिते कृष्णपक्षे ।

नाद्यात्। नवम्यां कपालम् अलाबुफलम्। दशम्याम् आन्त्रम् नीलीशाकमिति निर्णयामृते। पटोलमिति हेमाद्रिः। एकादश्यां नखान् शणपुष्पाणि इति निर्णयामृते। निष्पावानिति हेमाद्रौ। निष्पावशब्देन वल्लाः भाषायाम् "वाल" इति प्रसिद्धाः। शिम्बीफलानि वा। द्वादश्यां चर्मबिल्वफलं पोती वा पोतीत्यपि पत्रशाकविशेषसंज्ञा। त्रयोदश्यां तिलं वृन्ताकमित्यर्थः। एतेषां भक्षणं प्राण्यङ्गशीर्षादिभक्षणतुल्यमिति भावः। तथाऽष्टम्यां दिने न भोक्तव्यम्। तदुक्तम्—'भूताष्टम्योर्दिवा भुक्त्वा रात्रौ भुक्त्वा तु पर्वणि। एकादश्यां दिवा रात्रौ भुक्त्वा चान्द्रायणं चरेत्।' तत्र पर्वाणि। 'चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा। पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च।' अत्राष्टमीद्वयमष्टमीत्वेन चतुर्दशीद्वयं चतुर्दशीत्वेनैकीकृतम्। अमावास्या पूर्णिमा संक्रान्तिश्चेति त्रीणि। एवं पञ्च पर्वाण्येतानि। अत्र सर्वेषां पर्वत्वेनोक्तत्वात् भूताष्टम्योरपि पर्वत्वे तयोः पूर्ववाक्ये पृथगुपादानं गोबलीवर्दन्यायेन। यद्वा—'शुक्लाष्टमी कृष्णचतुर्दशी च दर्शोऽथ राका रविसंक्रमश्च।' इति। ग्रन्थान्तरे शुक्लाष्टमीकृष्णचतुर्दश्योरेव पर्वत्वाभिधानात्। कृष्णाष्टमीशुक्लचतुर्दश्योरपि दिवाभोजननिषेधप्राप्त्यर्थे पर्वणीत्युक्त्वा भूताष्टम्योः पुनर्वचनम्। अथ पर्वसु निषिद्धानि। स्त्रीसंभोगतैलाभ्यङ्गमांसभक्षणक्षौरदन्तकाष्ठवीरुच्छेदनकुशच्छेदानि वर्ज्यानीति हेमाद्रिः। पक्षद्वयगतासु सर्वास्वष्टमीषु तिथिपत्वाच्छिवः पूज्यः। अष्टम्यां च चतुर्दश्यामित्याद्युक्तमेव। अष्टमी नवमी च क्रूरग्रहे तुलास्थिते सति शुभकार्येषु वर्ज्या। मिथुनकन्यागते रवावष्टमी दग्धा भवति। अष्टम्यामीशान्यां दिशि यात्रा न कर्तव्या। इत्यष्टमीनिर्णयः।

श्रीमद्दिल्लीशसेनोद्भटविकटभटश्रेणिमत्तेभसिंह-
श्चण्डोन्माद्यत्तुरुष्कक्षुभितवसुमतीपालने धर्मराजः।
पौत्रः श्रीकृष्णसिंहक्षितिपकुलमणेर्विष्णुसिंहस्य पुत्रः
श्रीमान्राजाधिराजो जयहरिरमराधीशवत्कौ सुखी स्तात् ॥ १ ॥

श्रीमत्पण्डितदेवभट्टतनयः श्रीराघवाङ्घ्रिद्वय-
ध्यानावाप्तसमस्तकामनिवहः सम्राट् स रत्नाकरः।
तुष्ट्यै श्रीजयसिंहवर्मनृपतेः कल्पद्रुमे कामदं
सद्गुच्छं दशमं शिवं समकरोत्पुण्याष्टमीनिर्णयम् ॥ २ ॥

इति श्रीदेवभट्टात्मजपौण्डरीकयाजिरत्नाकरविरचिते जयसिंहकल्पद्रुमे
अष्टमीनिर्णयो नाम दशमः स्तबकः समाप्तः ॥ १ ॥

---

## अथ नवमीनिर्णयः ।

**अथ नवमी निर्णीयते।** तत्रादौ कृष्णनवमीध्यानम् । नवमी सिंहगा शुभ्रा पाशपात्रधरा शुभा ।' अथ शुक्लनवमीध्यानम् । 'अक्षं खड्गं तथा खेटं पात्रं धत्ते चतुर्भुजा । सर्पगा नवमी नीला दंष्ट्रिणी पात्रतर्जनी ।' इयं च सर्वमते उपवासादिष्वष्टमीयुतैव ग्राह्या । वसुरन्ध्रयोरिति युग्मवाक्यात् । 'अष्टम्या नवमी विद्धा कर्तव्या फलकाङ्क्षिभिः । न कुर्यान्नवमीं तात दशम्या तु कदाचन।'इति ब्रह्मवैवर्तवचनाच्च । 'नवम्येकादशी चैव दशाविद्धा यदा भवेत् । तदा वर्ज्या विशेषेण गङ्गाम्भः सुरया यथा ।'इति यमपुराणाच्च । इति नवमीसामान्यनिर्णयः ।

**चैत्रशुक्लनवमी । रामनवमी । तदुक्तमगस्त्यसंहितायाम् ।** अगस्त्य उवाच । 'सर्वानुष्ठानसारं ते सर्वदानोत्तमोत्तमम् । रहस्यं कथयिष्यामि सुतीक्ष्ण शृणु सत्तम । चैत्रे नवम्यां प्राक्पक्षे दिवा पुण्ये पुनर्वसौ । उदये गुरुगौरांशोः स्वोच्चस्थे ग्रहपञ्चके । मेषं पूषणि संप्राप्ते लग्ने च कर्कटाह्वये । आविरासीत्स कलया कौशल्यायां परः पुमान्।' **रामार्चनचन्द्रिकायाम्**—'उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि।निर्दग्धुं सकलाः पलाशसमिधो मध्यादयोध्यारणेराविर्भूतमभूतपूर्वविभवं यत्किंचिदेकं महः ।चैत्रे मासि नवम्यां तु शुक्लपक्षे रघूत्तमः । प्रादुरासीत्पुरा ब्रह्मन्परब्रह्मैव केवलम् । तस्मिन्दिने तु कर्तव्यमुपवासव्रतं सदा । तत्र जागरणं कुर्याद्रघुनाथपरो भुवि ।' इति । अत्रापि—'तस्मिन्दिने महापुण्ये राममुद्दिश्य भक्तितः । यत्किंचित्क्रियते कर्म तद्भवक्षयकारकम्।उपोषणं जागरणं पितॄनुद्दिश्य तर्पणम् । तस्मिन्दिने तु कर्तव्यं ब्रह्मप्राप्तिमभीप्सुभिः । राम एव परब्रह्म तद्दिनं रामतोषकम् ।' इत्यादि । अथैतद्व्रतस्य नित्यत्वं प्रतिपाद्यते **रामार्चनचन्द्रिकायाम्**—'नित्यं नैमित्तिकं काम्यं व्रतं वेति विचार्यते । निष्कामानां विधानात्तन्न काम्यं तावदिष्यते । मुमुक्षवोऽपि हि सदा श्रीरामनवमीव्रतम् । न त्यजन्ति सुरश्रेष्ठो देवेन्द्रोऽपि विशेषतः ।' अत्र सदापदश्रवणाद्यावज्जीवं कर्तव्यमिति तात्पर्यम् ।'न हि नैमित्तिकं चैव सदेति श्रूयते ततः । नित्यमेव भवेत्तस्माच्छ्रीरामनवमीव्रतम्।' इति ।'नन्वस्य न नित्यत्वं प्रत्यक्षत्वात्फलश्रुतेः । सूर्यग्रहे कुरुक्षेत्रे महादानैः कृतैर्मुहुः । यत्फलं समवाप्नोति श्रीरामनवमीव्रतात्।' इति । 'मैवं फलश्रुतेर्नित्यलक्षणाभावतोऽथ वा । न नित्यता तत्र नाद्योऽग्निहोत्रादौ विरोधतः । नान्त्योऽप्यकरणे तस्य महादोषश्रुतेः स्फुटम् । प्राप्ते श्रीरामनवमीदिने मर्त्यो विमूढधीः । उपोषणं न

कुरुते कुम्भीपाकेषु पच्यते । अकृत्वा रामनवमीव्रतं सर्वव्रतोत्तमम् । व्रतान्यन्यानि कुरुते न तेषां फलभाग्भवेत् । यस्तु रामनवम्यां तु भुङ्क्ते मोहाद्विमूढधीः । कुम्भीपाकेषु घोरेषु पच्यते नात्र संशयः।' इति। 'अतः स्वीकरणे दोषविध्वंसान्नित्यता स्थिता। कुर्याद्रामनवम्यां य उपोषणमतन्द्रितः । न मातुर्गर्भमाप्नोति स वै रामो भवेत्स्वयम् । तस्मात्सर्वात्मना सर्वे कृत्वैव नवमीव्रतम् । मुच्यन्ते सर्वपापेभ्यो यान्ति ब्रह्म सनातनम्।' इत्यादिवचनैः पापक्षयद्वारा मोक्षार्थत्वमवगम्यते। संयोगपृथक्त्वाच्च न फलनित्यत्वयोर्विरोधः। अत्र केचित्—तदुपासकानामेवेदं न त्वन्येषामित्याहुः । अन्ये तु अकरणे दोषश्रवणात् 'तस्मात्सर्वात्मना सर्वैः कार्यं वै नवमीव्रतम्।' इति पूर्वोक्तवचनाच्च जन्माष्टम्यादिवदिदमपि सर्वेषां नित्यम्, अन्यथा जन्माष्टम्यादावपि तदुपासकानामेव नित्यतां वक्तुः को वारयितेत्याहुः। इति नित्यत्वकथनम्। 'शुद्धा विद्धेति भेदेन नवमी सा द्विधा स्मृता। समा न्यूनाऽधिका चेति शुद्धापि नवमी त्रिधा। पुनर्नक्षत्रसंयोगविभागाभ्यां तु षड्विधा। समादिसर्क्षभेदादिभेदैर्विद्धापि षड्विधा । एवं द्वादशधा भिन्ना नवमी तत्र निर्णयः। महाफलप्रदा शुद्धा पुनर्वस्वृक्षयोगतः। चैत्रे मासि नवम्यां तु जातो रामः स्वयं हरिः। पुनर्वस्वृक्षसंयुक्ता सा तिथिः सर्वकामदा । श्रीरामनवमी प्रोक्ता कोटिसूर्यग्रहाधिका। चैत्रे शुद्धा तु नवमी पुनर्वसुयुता यदि । सैव मध्याह्नयोगेन महापुण्यतमा भवेत्। केवलापि सदोपोष्या नवमीशब्दसंग्रहात् । तस्मात्सर्वात्मना सर्वैः कर्तव्यं नवमीव्रतम्। सर्वैरिति सर्वेषामधिकारः प्रकाश्यते । विद्धैव चेदृक्षयुता व्रतं तत्र कथं भवेत्। विद्धानिषेधश्रवणान्नवमी चेति वाक्यतः। नवमी चाष्टमी विद्धा त्याज्या विष्णुपरायणैः। उपोषणं नवम्यां तु दशम्यामेव पारणम्।' इति। 'वैष्णवानां विशेषात्तु तत्र विष्णुपरैरिति। दशम्यादिषु वृद्धिश्चेद्विद्धा त्याज्यैव वैष्णवैः। तदन्येषां तु सर्वेषां व्रतं तत्रैव निश्चितम्। दशम्यामेवशब्देन दशमीं नैव लङ्घयेत्। निश्चित्यैवं विचारेण नवमीव्रतमाचरेत्।' इति। अत्र विष्णुपरायणैरिति वदता प्रातस्त्रिमुहूर्ता नवमी दशमी च तस्मिन्नेव दिने समाप्यते तदा स्मार्तानामुत्तरदिवसे एकादशीनिमित्तोपवासेन नवमी व्रताङ्गपारणालोपो मा भूदिति तत्र स्मार्तैरष्टमीविद्धैव ग्राह्या। वैष्णवानां त्वरुणोदयविद्धैकादश्या हेयत्वान्न पारणालोपप्रसङ्ग इति द्वितीयैव तैः कार्येति सूचितम्। दशमीवृद्ध्यभावेऽष्टमीविद्धायाः क्षये च वैष्णवैरपि विद्धैवोपोष्येत्यर्थसिद्धम्। तदेवं द्वितीयदिवसे नवम्या मध्याह्नव्याप्त्यभावेऽप्यष्टमीविद्धायाः सर्वथात्याज्यत्वाद्वैष्णवैर्द्वितीयैवोपोष्येति रामार्चनचन्द्रिकाया

मतम् । हरिभक्तिविलासे—'दशम्यां पारणायाश्च निश्चयान्नवमीक्षये । विद्धाऽपि नवमी ग्राह्या वैष्णवैरप्यसंशयम् ।' इति । मदनरत्नादौ तु—इयं तिथिद्वैधे या मध्याह्नव्यापिनी सैव ग्राह्या । लग्ने कर्कटकाद्वये इत्यगस्त्यसंहितावाक्येन मध्याह्नस्य जन्मकालत्वाभिधानात् । 'सैव मध्याह्नयोगेन महापुण्यतमा भवेत् ।' इति वचनाच्च । उभयत्र मध्याह्नव्यापित्वे मध्याह्नव्याप्त्यभावे वा या पुनर्वसुयुता सैव ग्राह्या । 'पुनर्वस्वृक्षसंयोगः स्वल्पोऽपि यदि दृश्यते । चैत्रशुद्धनवम्यां तु सा पुण्या सर्वकामदा ।' इत्यगस्त्यसंहितावचनात् । यदा दिनद्वयेऽपि पुनर्वसुयोगः एकत्र मध्याह्नेऽपरत्र मध्याह्नं विहाय तदा मध्याह्ने पुनर्वसुयुक्ता ग्राह्या । मुख्ये श्रीरामजन्मकाले योगस्य लाभात् । यदा तु परदिने मध्याह्ने नवमीपुनर्वसुयोगः, यदा वा दिनद्वयेऽपि मध्याह्नं विहाय पुनर्वसुयोगः यदा वा दिनद्वयेऽपि पुनर्वस्वभावः तदोत्तरैव ग्राह्या । नवमी चाष्टमीविद्धेति वचनादित्युक्तम् । निर्णयसिन्धौ दिनद्वये मध्याह्नव्याप्तौ तदभावे वा पूर्वदिने पुनर्वस्वृक्षयुक्तामपि त्यक्त्वा परैव कार्येत्युक्तम् । यत्तु नव्यैः पुनर्वसुयुतामपि नवमीं त्यक्त्वा नवमी चाष्टमीति वाक्यबलात्परैव कार्येति सिन्धुकारमतमसमंजसम् । नवमीचाष्टमीविद्धेति वाक्ये ऋक्षपदाभावात् । एष एव मातामहचरणानामप्याशय इत्युक्तम् । तदेवासमंजसम् । अत्र ऋक्षपदाभावेऽपि नवमी चाष्टमीविद्धेत्यस्याष्टमीविद्धानिषेधकस्य संकोचे मानाभावात् पुनर्वस्वृक्षसंयोग इत्यगस्त्यसंहितावचनस्य पुनर्वसुयोगे प्राशस्त्यबोधकत्वेन न संकोचत्वमिति दिक् । इति नवमीनिर्णयः ।

अत्र प्रसङ्गाद्वैष्णवलक्षणमुच्यते । 'साङ्गं समुद्रं संन्यासं सऋषिच्छन्ददैवतम् । सदीक्षाविधि सध्यानं सयन्त्रं द्वादशाक्षरम् । अष्टाक्षरमथान्यं वा ये मन्त्रं समुपासते । ज्ञेयास्ते वैष्णवा लोके विष्णवर्चनरताः सदा । सदीक्षाविधि साङ्गं वा मन्त्रराजं सयन्त्रकम् । सहस्राक्षरसंयुक्तं मूलव्यूहादिभेदतः । पञ्चायतनरूपं च ये विप्राः समुपासते । महावैष्णवसंज्ञास्ते महाविष्णोरतिप्रियाः ।' इति विष्णुपुराणे । 'न चलति निजधर्मवर्णतो यः सममतिरात्मसुहृद्विपक्षपक्षे । न हरति न च हन्ति कंचिदुच्चैः सितमनसं तमवेहि विष्णुभक्तम् ।' श्रीभागवतेऽपि—'त्रिभुवनभवनहेतवेऽथकुण्ठस्मृतिरजितात्मसुरादिभिर्विमृग्यात् । न चलति भगवत्पदारविन्दाल्लवनिमिषार्धमपीह वैष्णवाग्र्यः ।' इत्यादि । इति वैष्णवलक्षणम् ।

असक्तविषये प्रतिनिध्यादिकं तु परिभाषायां द्रष्टव्यम् । रामार्चनचन्द्रिकायाम्—'सुतीक्ष्णमाह चागस्त्यः प्रकारः सोऽभिधीयते । क्रमेण योजयेत्सर्वं सौक-

यर्थे व्रतार्थिनाम् । षडक्षरादिकै राममन्त्रैः स्यात्पूजनं यथा । सर्वेषा राममन्त्राणा मन्त्रराजः षडक्षरः । तारकं ब्रह्म चेत्युक्तं तेन पूजा प्रशस्यते । यद्वा पुरुषसूक्तेन दीक्षाविधिमजानतः । वैदिकस्याप्यभावे तु नाममन्त्रैर्भवेद्ध्रुवम् । अष्टम्यां चैत्रमासस्य शुक्लपक्षे जितेन्द्रियः । दन्तधावनपूर्वं तु प्रातः स्नायाद्यथाविधि । नद्यां तटागे कूपे वा ह्रदे प्रस्रवणे तथा । ततः संध्यादिकं कुर्यात्संस्मरन्राघवं हृदि । गृहमागत्य विप्रोऽसौ कुर्यादौपासनादिकम् । दातुं कुटुम्बिनं देवि वेदशास्त्ररतः सदा । श्रीरामपूजा निरतं सुशीलं दम्भविवर्जितम् । विधिज्ञं राममन्त्राणां राममन्त्रैकसाधनम् । आहूय भक्त्यान्संपूज्य वृणुयात्प्रार्थयन्निति । श्रीरामप्रतिमादानं करिष्येहं द्विजोत्तम । तत्राचार्यो भव प्रीतः श्रीरामोऽपि त्वमेव च । इत्युक्त्वाज्येन तं विप्रं स्नापयित्वा ततः स्वयम् । तैलेनाभ्यज्य च स्नायाच्चिन्तयन्राघवं हृदि । श्वेताम्बरधरः श्वेतगन्धमाल्यानि धारयेत । अर्चितो भूषितश्चैव कृतमाध्याह्निकक्रियः । आचार्यं भोजयेत्पश्चात्सा त्त्विकान्नैः सुविस्तरम् । भुञ्जीत स्वयमप्येवं हृदि राममनुस्मरन् । नवम्या एकभक्तेन अङ्गभूतेन राघव । इक्ष्वाकुवंशतिलक प्रीतो भव रघूद्वह ।' इत्येकभक्त-निवेदनमन्त्रः । एकभक्तं तु नवममुहूर्तात्मकमध्याह्नोत्तरं सार्धमुहूर्तमध्ये कर्तव्यम् । 'एकभक्तव्रती तत्र सहाचार्यो जितेन्द्रियः । शृण्वन्रामकथां दिव्यामहःशेषं नयेन्मुने । सायंसंध्यादिकाः कुर्यात्क्रिया राममनुस्मरन् । आचार्यसहितो रात्रावधःशायी जितेन्द्रियः। स्वपेत्स्वयं तथैकान्ते श्रीरामार्पितमानसः।आचार्यकरणेऽशक्तः स्वयं भुक्त्वा स्वपेत्सुखम्।'इत्यष्टमीकृत्यम्।अथ नवमीकृत्यं तत्रैव—'ततः प्रातःसमुत्थाय स्नात्वा संध्यां विधाय च।प्रातःसर्वाणि कर्माणि शीघ्रमेव समापयेत्।उपोष्य नवमीं त्वद्य यामेष्व ष्टसु राघव।तेन प्रीतो भव त्वं भो संसारात्त्राहि मां हरे ।' इत्युपवासनिवेदनमन्त्रः । 'ततः स्वस्थमना भूत्वा विद्वद्भिः सहितोऽनघ । स्वगृहे चोत्तरे भागे योगमण्डपमारभेत् । चतु र्द्वारं पताकाढ्यं सुवितानं सुशोभनम् । मनोरमं महोत्सेधं पुष्पाद्यैः समलंकृतम्।शंखच-क्रहनूमद्भिः प्राग्द्वारे समलंकृतम् । गरुत्मच्छार्ङ्गपाशैश्च दक्षिणे समलंकृतम् । गदाखड्गाङ्कैश्चैव पश्चिमे समलंकृतम् । पद्मस्वस्तिकमानैश्च कौबेरे समलंकृतम् । मध्ये हस्तचतुष्कायं वेदिकायुक्तमायतम् । विचित्रनृत्यगीतैश्च वाद्यैश्चैव सुसंयुतम् । पुण्याहं वाचयेत्तत्र विद्वद्भिः प्रीतमानसैः । तत्र संकल्पयेच्चैवं राममेवमनुस्मरन् । अस्यां रामनवम्यां तु रामाराधनतत्परः । उपोष्याष्टसु यामेषु पूजयित्वा यथाविधि । इमां स्वर्णमयीं रामप्रतिमां सुप्रयत्नतः । श्रीरामप्रीतये दास्ये रामभक्ताय धीमते । प्रीतो रामो हरत्वाशु पापानि सुबहूनि मे । अनेकजन्मसंसिद्धान्यभ्यस्तानि महान्ति

च ।' इति त्रिभिः प्रतिमादानसंकल्पः । 'शक्ताशक्तात्यशक्तस्य मूर्तिनिर्माणमुच्यते । ततः स्वर्णमयीं रामप्रतिमा यत्नमानतः । निर्मितां द्विभुजां दिव्यां वामाङ्कस्थितजानकीम् । बिभ्रतीं दक्षिणकरे ज्ञानमुद्रां महामते । वामेनात्मकरेणाराद्देवीमालिङ्ग्य संस्थिताम् । सिंहासने राजतेऽत्र पलद्वयविनिर्मिते । अशक्तो यो महाभाग तस्य वित्तानुसारतः । पलेनार्धतदर्धेन तदर्धार्धेन वा मुने । ततोऽप्यशक्तो रौप्येण कारयेद्रघुनन्दनम् । लोहेन निर्मितं कुर्याच्छिलाया दारुणापि च । यद्वा लेख्यं विलेख्यं वा मातुरंकगतं हरिम् । कोमलांगं विशालाक्षमिन्द्रनीलमणिप्रभम् । दक्षिणांगं दशरथं पुत्रान्वेषणतत्परम् । पृच्छतो लक्ष्मणं देवं सहच्छत्रं सचामरम् । पार्श्वे भरतशत्रुघ्नौ तालवृन्तकरावुभौ । अग्रे व्यग्रं हनूमन्तं रामानुग्रहकांक्षिणम् । वित्तशाठ्यमकृत्वैव मूर्तिं कुर्यात्प्रयत्नतः ।' प्रतिमाविशेषः कौस्तुभे लैङ्गे—'सद्यः प्रसूतां कौसल्यां पितरं भ्रातृभिः सह । सुवर्णेन पृथक्कृत्वा श्रीरामं सीतया सह । लक्षणोक्ताः सरूपास्ताः पूजयित्वा यथाविधि ।' इति । सहेत्यनेन श्रीरामं वामाङ्कस्थितं ज्ञायते । अत एव चन्द्रिकायाम् । ततः स्वर्णमयीमित्यादिना प्रतिमानिर्माणमित्थमुक्तमिति । भविष्ये—'विभवे सति यो मोहान्न कुर्याद्विधिविस्तराम् । न तत्फलमवाप्नोति देवद्रोही स उच्यते ।'इति मूर्तिलक्षणम् ।'आसनोपरि संविश्य न्यासजालं विधाय च । शंखं प्रपूजयेदग्रे गन्धपुष्पाक्षतादिभिः । कलशं वामभागस्थं पूजाद्रव्याणि चादरात् । पात्रं च प्रोक्षयेद्दत्त्या चात्मानं मन्त्रमुच्चरन् । विलिखेत्सर्वतोभद्रं वेदिकोपरि सुन्दरम् । तिर्यगूर्ध्वगता रेखाः कुर्यादेकोनविंशतिः । खण्डेन्दुस्त्रिपदाः कोणे शृङ्खला पञ्चकोष्ठके । एकादशपदा वल्ली भद्रं तु नवभिः पदैः । चतुर्विंशत्पदा वापी परिधिर्विंशतिः पदैः । मध्ये षोडशभिः कोष्ठैः पद्ममष्टदलं स्मृतम् । सितेन्दुः शृङ्खला कृष्णा वल्ल्यो नीलेन पूरिताः । भद्रारुणासिता वाप्यः परिधिः पीतवर्णकः । बाह्यान्तरदले श्वेता कर्णिका पीतवर्णिका । खण्डेन्दुः शृङ्खला वापी वल्ली भद्रं तु पञ्चमम् । परिध्यावेष्टितं पद्मं बाह्ये सत्त्वरजस्तमैः । सर्वव्रते समुद्दिष्टं सर्वतोभद्रमण्डलम् । मध्ये ब्रह्माऽष्टासु दिक्षु सोमाद्या देवताः स्मृताः । वायुसोमद्वयोर्मध्ये वसूनष्ट तु कारयेत् । सोमईशानयोर्मध्ये रुद्रानेकादशैव तु । इन्द्र ईशानयोर्मध्य आदित्यान्द्वादशैव तु । इन्द्राग्निमध्ये च तथा अश्विनौ पूजयेत्तथा । आग्नेययमयोर्मध्ये विश्वान्देवान्सपैतृकान् । याम्यनैर्ऋत्ययोर्मध्ये सप्तयक्षांश्च कारयेत् । नैर्ऋत्यजलयोर्मध्ये नागभूतांश्च कारयेत् । आप्यवायव्ययोर्मध्ये गन्धर्वा-

प्सरसः कुरु । ब्रह्मसोमद्वयोर्मध्ये रुद्रानेव च कारयेत् । स्कन्दं नंदीश्वरं शूलं महादेवं च कारयेत् । ब्रह्मेशानद्वयोर्मध्ये दक्षादीन्सप्त पूजयेत् । ब्रह्मेन्द्रयोस्तथा मध्ये दुर्गां विष्णुं तथैव च । ब्रह्माग्निमध्ये च तथा स्वधां चैव प्रपूजयेत् । ब्राह्मया-मद्वयोर्मध्ये मृत्युरोगान्प्रपूजयेत् । ब्रह्मणो निर्ऋतेर्मध्ये गणपं तु प्रपूजयेत् । वरुण-ब्रह्मणोर्मध्ये अपः संपूजयेत्तथा । मध्ये वायोर्ब्रह्मणश्च मरुतः संप्रपूजयेत् । ब्रह्मणः पादमूले तु मेदिनीं तत्र कारयेत् । कावेरी नर्मदा चैव यमुना च सरस्वती । गङ्गा कृष्णा तथा गोदा पूज्याः सप्त च सागराः । क्षारक्षीरमधुःसर्पिर्मैरेक्षुदधिसंभवाः । ब्रह्मजज्ञानमित्याद्यैर्मन्त्रैस्तास्तास्तु देवताः।गन्धपुष्पादिभिः पूज्या दीपान्दद्याच्च सर्वतः। सर्वत्र भद्रं यस्मात्तत्सर्वतोभद्रमुच्यते।' इति सर्वतोभद्रम् । अथ मण्डले तत्तन्मन्त्रेण तत्तद्देवतास्थापनपूजनप्रयोगः । एवमग्रेऽपि । ब्रह्मजज्ञानामुदीचीमारभ्य वायवीयपर्यन्तं सोमादयो वाय्वन्ता अष्टौ लोकपालाः स्थापनीयाः । तत्र आप्यायस्व० गौतमः सोमो गायत्री । ॐआप्यायस्व सः० । अभित्वाधीर्गतिः शुनः शेप ईशानो जगती। अभित्वा देव सवितः०।इन्द्रो वा मधुच्छन्दा इन्द्रो गायत्री । ॐ इन्द्रं वो विश्वतः०। अग्निं काण्वो मेधातिथिरग्निर्गायत्री । अग्निदूतं०।यमाय सोमं यमो यमोनुष्टुप्० । यमाय सोमं०।मोषुणो घोरः काण्वो निर्ऋतिर्गायत्री।ॐ मोषुणः०।तत्त्वायामि शुनः शेपो वरु-णास्त्रिष्टुप्।ॐतत्त्वायामि० । वायो शतं गौतमो वायुरनुष्टुप् । वायो शतम्० । वायुसो-ममध्ये अष्टौ वसून् । ज्मया अत्र मैत्रावरुणो वसिष्ठो वसवस्त्रिष्टुप्।ज्मया०।अत्र सोमे-शानमध्ये एकादश रुद्रान्।ॐरुद्रासः श्यावाश्व एकादश रुद्रा जगती, ॐ रुद्रायसः० ईशान्येन्द्रमध्ये द्वादशादित्यान्। त्यान्नुसांमन्दो मत्स्या मैत्रावरुणिर्मान्यो बहवो वा मत्स्या ऋषयो द्वादशादित्या गायत्री।ॐत्यानु०।क्षत्रियान् इन्द्राग्निमध्ये।अश्विना राहु-गणो गौतमोऽश्विना उष्णिक्।ॐअश्विनावर्तिः०।अग्नियममध्ये विश्वान्देवान् सपैतृकान्, ओमासो मधुच्छंदा विश्वेदेवा गायत्री,ॐओमासः.।यमनिर्ऋतिमध्ये सप्त यज्ञान्।अभित्यं देवं वामदेवाः सप्तयक्षाः प्रकृतिः।अभित्यं देवं सवितारमोण्योः कविक्रतुमर्चामि सत्यसवं रत्नधामभिप्रियम् । मतिं कविमूर्ध्वायस्या मतिर्मा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमी स क्रतुं कृपास्वः।निर्ऋतिवरुणमध्ये भूतनागान्।आयंगौः सर्पराज्ञी सर्पा गायत्री । ॐआ-यंगौः०।वरुणवायुमध्ये गन्धर्वाप्सरसः । अप्सरसां वातरशनतशो गन्धर्वोऽप्सरसोऽनुष्टु-प्।ॐअप्सरसां गन्धर्वाणाम्०।यत्तु अन्यग्रन्थे अप्सरसामैतश ऋस्यश्रृङ्ग इत्युक्तम्।त-सा वानुक्रमविरोधादुपेक्ष्यम्।ब्रह्मसोममध्ये स्कन्दनन्दीश्वरशूलमहाकालान्।कुमारं कु-

मारस्कन्दस्त्रिष्टुप्। ॐकुमारं मा० ऋषभम् ऋषभो वै राजा ऋषभोऽनुष्टुप्।ॐऋषभं मा० ब्रह्मेशानमध्ये दक्षादीन् सप्त।अदितिर्लौक्यो बृहस्पतिर्दक्षोऽनुष्टुप् अदितिर्ह्यजनिष्ट ०ब्रह्मे-न्द्रमध्ये दुर्गां विष्णुं च। तामग्निवर्णां सौभरिः दुर्गा त्रिष्टुप् तामग्निवर्णाम्०।इदं विष्णुः काण्वो मेधातिथिर्विष्णुर्गायत्री। ॐ इदं विष्णु० ब्रह्माग्निमध्ये स्वधाम् उदीरतां शंखः स्वधा त्रिष्टुप्। ॐ उदीरतामवर उत्० ब्रह्मयममध्ये मृत्युरोगान्। परंमृत्योः संकुशुको मृत्युस्त्रिष्टुप्। ॐ परं मृत्योअनुपरेहि० ब्रह्मनिर्ऋतिमध्ये गणेशम्। गणानां त्वा गृत्समदो गणपतिर्जगती। ॐ गणानां त्वा० ब्रह्मवरुणमध्ये अपः। शन्नो देवी-राम्बरीषः सिन्धुद्वीप आपो गायत्री, ॐशन्नो देवी० ब्रह्मवायुमध्ये मरुतः। मरुतो यस्य राहुगणो गौतमो मरुतो गायत्री।ॐ मरुतो यस्य० ब्रह्मणः पादमूले कर्णिकायां पृथ्वी। स्योना० मेधातिथिर्भूमिर्गायत्री। ॐस्योनापृथिवि० तत्रैव गङ्गादिनद्यः इमं मे सिन्धुक्षित्प्रैय्यमेधो दशो नद्यो जगती इमं मे गङ्गे यमुने०। तत्रैव सप्त सागराः। धाम्नो धाम्नो राजन्नितो वरुण नो मुञ्च। यदापो अघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्च। मैवापो मौषधीर्हिंसीरतो विश्वव्यचा भूरत्वेतो वरुण नो मुञ्च॥तदुपरि मेरवे नम इति नाम्ना मेरुम्। ततो मण्डलाद्बहिः सोमादिसमीपे तत्क्रमेणायुधानि। गदां, शूलं, वज्रं, शक्तिं, दण्डं, खड्गम्, पाशं, अङ्कुशम्। तद्बाह्ये पुनरपि तेनैव क्रमेण गौतमं, भरद्वाजं, विश्वामित्रं, कश्यपं,जमदग्निं, वसिष्ठम्, अत्रिम्,अरुन्धतीम्। तद्बाह्ये पूर्वादौ ऐन्द्रीं, कौमारीं, वाराहीं, चामुण्डां, वैष्णवीं, माहेश्वरीं, विनायकीम् इत्यष्टौ शक्तीः प्रतिष्ठाप्य प्रत्येकं सह वा पूजयेत्। इति मण्डपदेवतास्थापनपूजन-प्रयोगः। इदं तु अगस्त्यसंहितायां श्रीरामपूजने नोक्तम्। रामार्चनचन्द्रिकायां सर्वसाधारणतयोक्तम्। तस्याभावे वेदिकोपरि अष्टदलकमलं कृत्वा तदुपरि कलश-स्थापनं कार्यम्। तदुक्तं तन्त्रसारे—'अनुक्ते कल्पयेद्यन्त्रं लिखेत्पद्मदलाष्टकम्। षट्कोणान्तर्गतं तत्र वेदद्वारोपशोभितम्।' कमलरचनाप्रकारस्तु—'आद्या तृतीयं तत एव भूतं भूताद्द्वितीयं च ततश्चतुर्थम्।चतुर्थमाद्यं पुनरेवमेव योगो भवेदष्टदलं च पद्मम्।' इति। 'मध्ये तीर्थोदकैः पूर्णं कुम्भरेखोदरं शुभम्। चूतपल्लवपुष्पैश्च युक्तं संस्थाप्य चार्चितम्। सौवर्णे राजते ताम्रे पात्रे षट्कोणमालिखेत्। अलाभे बिल्वपीठे वा कलशोपरि संस्थिते। स्थाप्योपरि वस्त्रयुग्ममच्छिन्नं सदशं शुभम्। दिव्यसिंहासनं तत्र स्थापयित्वाऽर्चयेत्सुधीः।' 'ॐ नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोगयोगपद्मपीठात्मने नमः।' 'इति मन्त्रेण तन्मध्ये कुर्यात्पुष्पाञ्जलिं पुनः।'

इति पीठार्चा। 'अर्घ्यपाद्यादिकं दद्यात्स्नानं पञ्चामृतेन च। लेख्यादौ नाभिषेकःस्याद्दद्याद्वस्त्रोपवीतकम्। ततःसंस्थाप्य पीठे तं पूजां कुर्याद्यथाविधि। आवाहनं स्थापनं च संनिधापनमेव च।संनिरोधनमेव स्यादवरोधनमञ्जसा।तत्तन्मुद्राभिरेव स्यादेवं संप्रार्थ्य भक्तितः।नानारत्नविचित्राणिदद्यादाभरणानिच।हिमाद्यष्टकरुचिरघनसारसमन्वितम्।गन्धंदद्यात्प्रयत्नेन सागुरुं च सकुङ्कुमम्।कह्लारकेतकीजातीपुन्नागाद्यैःप्रपूजयेत्।चम्पकैः शतपत्रैश्च चन्दनैः सुमनोहरैः। चूतपल्लवपुष्पैश्च दूर्वाभिस्तुलसीदलैः। कोमलैर्बिल्वपत्रैश्चअशोककुसुमैस्तथा। रामस्य जननी सा च रामात्मकमिदं जगत्। अतस्त्वां पूजयिष्यामि लोकमातर्नमोऽस्तु ते।' इति कौशल्या कार्या । 'नमो दशरथायेति पूजयेत्पितरं तथा।' इति पितृपूजनम्। 'ततोऽनुज्ञाप्य देवेशं परिवारान्समर्चयेत्।पूर्वं षट्कोणकोणेषु हृदयादीनि षट् क्रमात्।'प्रथमावरणम्।'हनूमन्तं च सुग्रीवं भरतं सविभीषणम्। लक्ष्मणाङ्गदशत्रुघ्नं जाम्बवन्तं दलेष्विमान्।'(द्वितीयम्) 'धृष्टिं जयन्तं विजयं सुराष्ट्रं राष्ट्रवर्धनम्। अकोपं धर्मपालं च सुमन्तं दलमध्यतः।' (तृतियम्)। 'दलाग्रे लोकपालांश्च चतुर्थम्) तदस्त्राणि ततो बहिः (पञ्चमम्)। नाममन्त्रैर्नमस्कारचतुर्थीभ्यां प्रपूजयेत् । घण्टां च वादयेद्धूपं दीपं चास्मै निवेदयेत्। भक्ष्यभोज्यादिना भक्त्या नैवेद्यं विधिनार्पयेत्।आचमनं सताम्बूलं महानीराजनं ततः।नमस्कुर्यात्ततः स्तोत्रैः स्तुत्वा च प्रजपेन्मनुम्।शृण्वञ्जयन्तीमाहात्म्यं दिव्यां रामकथां तथा।रामभक्तैः समं यामं नयेद्राममनुस्मरन्। शंखार्चां चासनानां च कुर्याद्यामेष्वतन्द्रितः।रामो द्वितीयः संपूज्यो मध्याह्ने जन्म भावयेत्। 'उच्चस्थे ग्रहपञ्चके सुरगुरौ ।' इत्यादि। 'मत्वैवं वादयेद्वाद्यान्यर्घ्यं दद्याज्जगत्पते। फलपुष्पाम्बुसंपूर्णं गृहीत्वा शंखमुज्ज्वलम्। अशोकचूतकुसुमैर्युक्तं च तुलसीदलैः। दशाननवधार्थाय धर्मसंस्थापनाय च । परित्राणाय साधूनां जातो रामः स्वयं हरिः। गृहाणार्घ्यं मया दत्तं भ्रातृभिः सहितोऽनघ।' इत्यर्घ्यमन्त्रः। 'पुनः पुष्पाञ्जलिं दत्त्वा यामे यामे ह्यतन्द्रितः। पूजयेद्विधिवद्भक्त्या दिवारात्रं नयेद्बुधः।' इति। इति रामनवमीविधायकसंग्रहः। अथ व्रतपद्धतिः। तत्रादावष्टम्यां दन्तधावनपूर्वकं नद्यादौ स्नात्वा नित्यं निर्वर्त्याचार्यवरणं कुर्यात् । तत्र मन्त्रः। 'श्रीरामार्चनं दानं करिष्येऽहं द्विजोत्तम। तत्राचार्यो भव प्रीतः श्रीरामोऽपि त्वमेव च।' इति। आज्येन तं स्नापयित्वा भुञ्जीत। ततः।'नवम्यामेकभक्तेन अङ्गभूतेन राघव। इक्ष्वाकुवंशतिलक प्रीतो भव रघूद्वह।' इत्येकभक्तं निवेद्य सायं संध्यां कृत्वा आचार्यसहितो रात्रावधः शयनं कुर्यात्। इत्यष्टमीकृत्यपद्धतिः। ततो

नवम्यां प्रातः समुत्थाय पर्णादिभिर्गण्डूषैश्च मुखं संशोध्य नद्यादिषु स्नात्वा संध्यां विधाय नित्यपूजनादि शीघ्रमेव निर्वर्त्य ततः 'सूर्यः सोमो यमः कालः संध्ये भूतान्यहः क्रमात् । पवनो दिक्पतिर्भूमिराकाशं खचरा नराः । ब्राह्मं शासनमास्थाय कल्पध्वमिह संनिधिम् ।' इति मन्त्रेण सूर्यादिदेवताभ्यो व्रतं निवेद्य 'अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ।' इति मन्त्रेण भूतान्युत्सार्योपवाससंकल्पं कुर्यात् । फलपुष्पाक्षतसहितं जलपूर्णं ताम्रपात्रं गृहीत्वा सर्वपापक्षयपूर्वकं श्रीरामप्रीतये श्रीरामनवमीव्रतमहं करिष्ये ।'उपोष्ये नवमीं त्वद्य यामेष्वष्टसु राघव । तेन प्रीतो भव त्वं भोः संसारात्त्राहि मां हरे ।' इत्युक्त्वा पात्रस्थं जलं क्षिपेत् । ततः चतुर्द्वारं पताकाढ्यमित्यादिना पूर्वमुक्तं शंखचक्रादिभिरलंकृतं चतुर्हस्तवेदिकायुक्तं हस्तमात्रवेदिकायुक्तं वा मण्डपं विधाय सर्वतोभद्रकमलं वालिख्य तत्र कुम्भस्थापनं कुर्यात् । तत्र क्रमः । आदौ गणपतिपूजनं पुण्याहवाचनं च कृत्वा, महीद्यौरिति भूमिं स्पृष्ट्वा, ओषधय इति पञ्चधान्यानि निक्षिप्य, तत्र आकलशेष्विति कलशं संस्थाप्य, इमंमे गङ्गे इति जलेनापूर्य,गन्धद्वारामिति गन्धम्, या ओषधीरिति सर्वौषधीः, काण्डादिति दूर्वाः, अश्वत्थे व इति पञ्चपल्लवान्, स्योना पृथिवीति सप्तमृदः, याः फलिनीरिति फलं, स हि रत्नानीति पञ्च रत्नानि, हिरण्यरूप इति हिरण्यं च निक्षिप्य, युवा सुवासा इति वस्त्रेणावेष्ट्य, पूर्णा दर्वीति पूर्णपात्रं निधाय, तत्र तत्त्वायामीति वरुणं संपूज्य, कलशस्य मुखे इति पठेत् । इति कलशस्थापनविधिः । ततः कलशोपरि सौवर्णादिपात्रे षट्कोणमालिख्य तदुपरि सदशमहतं वस्त्रयुग्मं ससिंहासनं स्थापयेत् । ततः श्रीरामस्मरणं कृत्वा 'अस्यां श्रीरामनवम्यां तु रामाराधनतत्परः । उपोष्याष्टसु यामेषु पूजयित्वा यथाविधि । इमां स्वर्णमयीं रामप्रतिमां सुप्रयत्नतः । श्रीरामप्रीतये दास्ये रामभक्ताय धीमते । प्रीतो रामो हरत्वाशु पापानि सुबहूनि मे । अनेकजन्मसंसिद्धान्यभ्यस्तानि महान्ति च ।'इति त्रिभिर्व्रतसंकल्पं कुर्यात् । अशक्तस्तु इमां धातुमयीमिति पठेत् । स्वर्णादिमय्यामग्न्युत्तारणं, लेख्यादौ तु नास्ति । तत आसने पृथिवीति मन्त्रेण उपविश्य तस्याधः कूर्माय नमः आधारशक्तये दुष्टविद्रावणाय नृसिंहाय नम इति पूजयेत् । अपक्रामन्त्विति पठित्वा पार्ष्णिघातत्रयं कृत्वा भूतसंघानुत्सार्य, ॐ रः अस्त्राय फडित्युक्त्वा करास्फालनेन छोटिकाभिश्च सर्वदिग्बन्धनं कृत्वा, स्ववामे गुरुभ्यो नमः, दक्षिणे गणपतये नमः, मध्ये स्वेष्टदेवतायै नमः इति नत्वा तालत्रयं कृत्वा, पुनः ॐ रः अस्त्राय फडित्युच्चार्य

दक्षिणहस्ते जलं गृहीत्वा स्वात्मानं परितो भ्रामयन् अग्निप्राकारमुद्रया अग्निप्राकारं भावयेत् । ततः भूतशुद्धिं प्राणप्रतिष्ठां केवलमातृकान्यासं च कृत्वा केशवादिमातृकान्यासं कुर्यात् । ॐ केशवादिमातृकान्यासस्य साध्यनारायणऋषिर्गायत्रीच्छन्दः लक्ष्मीनारायणो देवता हलो बीजानि स्वराः शक्तिः राममन्त्राङ्गत्वेन न्यासे विनियोगः । ॐ श्रीं ॐ नमो नारायणाय हं सः सोहं अं कं खं गं घं ङं आं ह्रीं हं सः सोहं ॐ नमो नारायणाय क्रुद्धोल्काय स्वाहा श्रीदेव्यै नमो हृदयाय नमः। ॐश्रींॐ नमो नारायणाय हं सः सो हं इं चं छं जं झं ञं ॐ ह्रीं हंसः सोहं ॐ नमो नारायणाय महोल्काय स्वाहा पद्मिन्यै नमः शिरसे स्वाहा । ॐ श्रीं नमो नारायणाय हं सः सोहं ॐ टं ठं डं ढं णं हुं ॐ ह्रीं हंसः सोहं ॐ नमो नारायणाय वरोल्काय स्वाहा श्रूं विष्णुपत्न्यै नमः शिखायै वषट् । ॐ श्रीं ॐ नमो नारायणाय हंसः सोहं ऐं तं थं दं धं नं ऐं ॐ ह्रीं हं सः सोहं ॐ नमो नारायणाग्रुल्काय स्वाहा श्रैं वरदायै नमः कवचाय हुम् । ॐ श्रीं ॐ नमो नारायणाय हंसः सोऽहं ॐ पं फं बं भं मं ॐ ह्रीं हंसः सोहं ॐ नमो नारायणाय सहस्रोल्काय स्वाहा श्रौं कमलरूपायै नम इति नेत्रत्रयाय वौषट् । ॐ श्रीं नमो नारायणाय हं सः सोहं अं यं रं लं वं शं षं सं हं ळं क्षं अः ॐ ह्रीं हंसः सोहं ॐ नमो नारायणाय अनन्तोल्काय स्वाहा श्रः शूलिन्यै नम इत्यस्त्राय फट् । इति केशवादिमातृकान्यासषडङ्गम् । ध्यानम् । " विद्यारविन्दमुकुरामृतकुम्भपद्मकौमोदकीदरसुदर्शनशोभिहस्तम् । सौदामिनीमकरकान्ति विभाति लक्ष्मीनारायणात्मकमखण्डितमादिमूर्ति ।" वपुरिति शेषः । वामाधःकरमारभ्य दक्षिणाधःकरपर्यन्तमायुधक्रमोऽत्र बोद्धव्यः।ॐ ह्रीं श्रीं क्लीं अं क्लींश्रीं ह्रीं ॐ केशवाय कीर्त्यै नमः शिरसि । ॐ ह्रीं श्रीं क्लीं आं क्लीं श्रीं ह्रीं ॐ नारायणाय कान्त्यै नमः मुखवृत्ते। ॐ ह्रीं श्रीं क्लीं इं क्लीं श्रीं ह्रीं ॐ माधवाय तुष्ट्यै नमः दक्षनेत्रे । ॐ ह्रींश्रीं क्लीं ईं क्लीं श्रीं ह्रीं ॐ गोविन्दाय तुष्ट्यै नमः वामनेत्रे । ॐ ह्रीं श्रीं क्लीं उं क्लीं श्रीं ह्रीं ॐ विष्णवे धृत्यै नमः दक्षकर्णे । ॐ ह्रीं श्रीं क्लीं ऊं क्लीं श्रीं ह्रीं ॐ मधुसूदनाय क्षान्त्यै नमः वामकर्णे । ॐ ह्रीं श्रीं क्लीं ऋं क्लीं श्रीं ह्रीं ॐ त्रिविक्रमाय नमः दक्षनासापुटे । ॐ ह्रीं श्रीं क्लीं ॠं क्लीं श्रीं ह्रीं ॐ वामनाय दयायै नमः वामनासापुटे । ॐ श्रीं ह्रीं क्लीं ऌं क्लीं श्रीं ह्रीं ॐ श्रीधराय मेधायै नमः दक्षगण्डे । ॐ ह्रीं श्रीं क्लीं ॡं क्लीं श्रीं ह्रीं हृषीकेशाय हर्षायै नमः वामगण्डे । ॐ ह्रीं श्रीं क्लीं एं क्लीं श्रीं ह्रीं ॐ पद्मनाभाय श्रद्धायै नमः ऊर्ध्वोष्ठे । ॐ ह्रींश्रीं क्लीं ऐं क्लीं श्रीं ह्रीं ॐ

दामोदराय लज्जायै नमः अधरोष्ठे । ॐ ह्रीं श्रीं क्लीं ओं क्लीं श्रीं ह्रीं ॐ वसुदेवाय लक्ष्म्यै नमः ऊर्ध्वदन्तपंक्तौ । ॐ ह्रीं श्रीं क्लीं औं क्लीं श्रीं ह्रीं ॐ संकर्षणाय सरस्वत्यै नमः अधोदन्तपङ्क्तौ । ॐ ह्रीं श्रीं क्लीं अं क्लीं श्रीं ह्रीं ॐ प्रद्युम्नाय प्रीत्यै नमः मूर्ध्नि । ॐ ह्रीं श्रीं क्लीं अः क्लीं श्रीं ह्रीं ॐ अनिरुद्धाय रत्यै नमः मुखे । ॐ ह्रीं श्रीं क्लीं कं ह्रीं श्रीं ह्रीं ॐ चक्रिणे जयायै नमः दक्षबाहुमूले । ॐ ह्रीं श्रीं क्लीं खं क्लीं श्रीं ह्रीं ॐ गदिने दुर्गायै नमः दक्षकूर्परे । ॐ ह्रीं श्रीं क्लीं गं क्लीं श्रीं ह्रीं ॐ शार्ङ्गिणे प्रभायै नमः दक्षमणिबन्धे । ॐ ह्रीं श्रीं क्लीं घं क्लीं श्रीं ह्रीं ॐ खड्गिने सत्यायै नमः दक्षाङ्गुलिमूले । ॐ ह्रीं श्रीं क्लीं ङं क्लीं श्रीं ह्रीं ॐ शंखिने चण्डायै नमः दक्षाङ्गुल्यग्रेषु । ॐ ह्रीं श्रीं क्लीं चं क्लीं श्रीं ह्रीं ॐ हलिने वाण्यै नमः वामबाहुमूले । ॐ ह्रीं श्रीं क्लीं छं क्लीं श्रीं ह्रीं ॐ मुसलिने नमः वामकूर्परे । ॐ ह्रीं श्रीं क्लीं जं क्लीं श्रीं ह्रीं ॐ शूलिने विजयायै नमः वाममणिबन्धे । ॐ ह्रीं श्रीं क्लीं झं क्लीं श्रीं ह्रीं पाशिने विजयायै नमः वामाङ्गुलिमूले । ॐ ह्रीं श्रीं क्लीं ञं क्लीं श्रीं ह्रीं ॐ अङ्कुशिने विश्वायै नमः वामाङ्गुल्यग्रेषु । ॐ ह्रीं श्रीं क्लीं टं क्लीं श्रीं ह्रीं ॐ मुकुन्दाय विमदायै नमः दक्षोरुमूले ॐ ह्रीं श्रीं क्लीं ठं क्लीं श्रीं ह्रीं ॐ नन्दजाय सुनन्दायै नमः दक्षजानुनि। ॐ ह्रीं श्रीं क्लीं डं क्लीं श्रीं ह्रीं नन्दिने स्मृत्यै नमः दक्षगुल्फे। ॐ ह्रीं श्रीं क्लीं ढं क्लीं श्रीं ह्रीं ॐ नराय ऋद्ध्यै नमः दक्षपादाङ्गुलिमूले । ॐ ह्रीं श्रीं क्लीं णं क्लीं श्रीं ह्रीं नरकजिते समृद्ध्यै नमः दक्षाङ्गुल्यग्रेषु। ॐ ह्रीं श्रीं क्लीं तं क्लीं श्रीं ह्रीं ॐ हरये शुद्ध्यै नमः वामोरुमूले । ॐ ह्रीं श्रीं क्लीं थं क्लीं श्रीं ह्रीं ॐ कृष्णाय बुद्ध्यै नमः वामजानुनि । ॐ ह्रीं श्रीं क्लीं दं श्रीं ह्रीं ॐ सत्याय भुक्त्यै नमः वामगुल्फे । ॐ ह्रीं श्रीं क्लीं धं क्लीं श्रीं ह्रीं ॐ सात्वताय मत्यैनमःवामपादाङ्गुलिमूले।ॐ ह्रीं श्रीं क्लींनंक्लींश्रीं ह्रीं ॐ शौरिणे क्षमायै नमः वामाङ्गुल्यग्रेषु । ॐ ह्रीं श्रीं क्लीं पं क्लीं श्रीं ह्रीं ॐ शूराय रमायै नमः दक्षपार्श्वे । ॐ ह्रीं श्रीं क्लींफं क्लीं श्रीं ह्रीं ॐ जनार्दनाय उमायै नमः वामपार्श्वे।ॐ ह्रींश्रीं क्लीं बं क्लीं श्रीं ह्रीं ॐ भूधराय क्लेदिन्यै नमः पृष्ठे । ॐ ह्रीं श्रीं क्लीं भं क्लीं श्रीं ह्रीं ॐ विश्वमूर्तये क्लिन्नायै नमः नाभौ । ॐ ह्रीं श्रीं क्लीं मं क्लीं श्रीं ह्रीं ॐ वैकुण्ठाय वसुदायै नमः जठरे । ॐ ह्रीं श्रीं क्लीं यं क्लीं श्रीं ह्रीं त्वगात्मने पुरुषोत्तमाय वसुधायै नमः हृदये । ॐ ह्रीं श्रीं क्लीं रं क्लीं श्रीं ह्रीं ॐ असृगात्मने बलिने परायै नमः दक्षांसे ॐ ह्रीं श्रीं क्लीं लं क्लीं श्रीं ह्रीं मांसात्मने बलानुजाय परायणायै नमः ककुदि । ॐ ह्रीं श्रीं क्लीं वं क्लीं श्रीं ह्रीं ॐ मेदआत्मने बलाय सूक्ष्मायै नमः वामांसे । ॐ ह्रीं श्रीं

क्लीं शं क्लीं श्रीं ह्रीं ॐ अध्यात्मने वृषघ्नाय संध्यायै नमः हृदादिदक्षकराग्रपर्यन्तम् । ॐ ह्रीं श्रीं क्लीं षं क्लीं श्रीं ह्रीं ॐ मज्जात्मने वृषाय प्रज्ञायै नमः हृदादिवामकराग्रपर्यन्तम् । ॐ ह्रीं श्रीं क्लीं सं क्लीं श्रीं ह्रीं ॐ शुक्रात्मने हंसाय प्रभायै नमः हृदादिदक्षपादाग्रपर्यन्तम् । ॐ ह्रीं श्रीं क्लीं हं क्लीं श्रीं ह्रीं ॐ प्राणात्मने वराहाय निशायै नमः हृदादिवामपादाग्रपर्यन्तम् । ॐ ह्रीं श्रीं क्लीं लं क्लीं श्रीं ह्रीं ॐ शक्त्यात्मने विमलाय अमोघायै नमः हृदादिनाभ्यन्तम् । ॐ ह्रीं श्रीं क्लीं क्षं क्लीं श्रीं ह्रीं ॐ परमात्मने नृसिंहाय विद्युतायै नमः हृदादिमूर्धान्तम् । यद्वा प्रणवादि कामबीजपूर्वकमातृकाक्षरादीन्कामबीजपूर्वकमातृकाक्षरादीन्वा केशवादिकीर्त्यादीन्नमोन्तान्न्यसेत् इति केशवादिन्यासः । अन्ये च वैष्णवमन्त्रन्यासाः अस्मत्कृतरामार्चनरत्नाकरे ज्ञेयाः । अथ शंखस्थापनम् । तत्रातिसूक्ष्मप्रकारो गौतमीये । 'अस्त्रेण शंखं प्रक्षाल्य हृन्मन्त्रेण प्रपूरयेत् । पूजयेत्प्रणवेनैव सामान्यार्घ्यमिदं स्मृतम् ।' अथ विस्तरेण शंखप्रतिष्ठा । सामान्यार्घ्योदकेन स्वपुरतः त्रिकोणषट्कोणचतुरस्रं मण्डलं कृत्वा आधारशक्तये कूर्माय अनन्ताय पृथिव्यै नम इति संपूज्य शंखमुद्रां प्रदर्श्य गन्धपुष्पाक्षतैः आग्नेये हृदयाय नमः, नैर्ऋते शिरसे स्वाहा, वायव्ये शिखायै वषट्, ईशान्ये कवचाय हुम्, मध्ये नेत्राभ्यां वौषट्, पूर्वादिदिक्षु अस्त्राय फट् । इति मण्डलं संपूज्य । मूलेन त्रिपादिकां प्रक्षाल्य रं अग्निमण्डलाय दशकलात्मने श्रीरामार्घ्यपात्रासनाय नम इति मण्डलोपरि आरं प्रतिष्ठाप्य ततः पूर्वाद्यष्टदिक्षु उपर्यधश्च अग्नेर्दश कलाः पूजयेत् पूर्वे यं धूम्रार्चिषे नमः, आग्नेये रं ऊष्मायै नमः, दक्षिणे लं ज्वालिन्यै नमः, नैर्ऋत्ये वं ज्वालिन्यै नमः, पश्चिमे शं विस्फुलिङ्गिन्यै नमः, वायव्ये षं सुश्रियै नमः, उत्तरे सं सुरूपायै नमः, ईशान्ये हं कपिलायै नमः, पूर्वेशानयोर्मध्ये लं हव्यवाहायै नमः, पश्चिमनैर्ऋत्यमध्ये क्षं कव्यवाहायै नम इति । ततोऽस्त्रेण शंखं प्रक्षाल्य सं सूर्यमण्डलाय द्वादशकलात्मने श्रीरामार्घपात्राय नमः । इति पात्रमाधारे निधाय शंखोपरि वृत्ताकारेण सूर्यस्य द्वादश कलाः पूजयेत् । पूर्वादिप्रादक्षिण्येन कं भं तपिन्यै नमः, खं वं तापिन्यै नमः, गं फं धूम्रायै नमः, घं पं मरीच्यै नम, ङं नं ज्वालिन्यै नमः, चं धं रुच्यै नमः, छं दं सुषुम्णायै नमः,जं थं भोगदायै नमः ; झं तं विश्वायै नमः, ञं णं बोधिन्यै नमः, टं ठं धारिण्यै नमः, ढं डं क्षमायै नम इति । ततस्तीर्थोदकेन क्षं लं हं सं षं शं वं लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं ॡं ऌं ॠं ऋं ऊं उं ईं इं आं अं; मूल-

मन्त्रं च जप्त्वा शंखमापूर्य ॐ सोममण्डलाय षोडशकलात्मने श्रीरामार्घामृताय नम इति संपूज्य ततश्चन्द्रकलाः पूजयेत् । अं अमृतायै नमः, आं मानदायै०,इं पूषायै०, ईं तुष्ट्यै०, उं पुष्ट्यै० ऊं रत्यै० ऋं धृत्यै०, ॠंशशिन्यै०, ऌंचन्द्रिकायै०, ॡं कान्त्यै०, एं ज्योत्स्नायै०, ऐं श्रियै०, ओं प्रीत्यै०, औं अङ्गदायै०, अं पूर्णायै०, अः पूर्णामृतायै नम इति । ततः । 'ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवेः । तेन सत्येन मे देव तीर्थं देहि दिवाकर । गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धु कावेरि जलेऽस्मिन्सांनिधिं कुरु ।' इति सूर्यमण्डलात्तीर्थमङ्कुशमुद्रया आवाह्य शंखे संयोज्य गन्धपुष्पाद्यैः शंखजलं समभ्यर्च्य शंखे पाणितलं दत्त्वा मूलमन्त्रमष्टधा जपेत् । तज्जलं चिन्मयं संचिन्त्य अस्त्रमन्त्रेण संरक्ष्य धेनुमुद्रयाऽमृतीकृत्य शंखमुद्रां गरुडमुद्रां च प्रदर्श्य परमीकृत्य गन्धपुष्पाभ्यां शंखं संपूज्य तेन जलेन देवमात्मानं पूजाद्रव्याणि च प्रोक्षयेत्।इति शंखप्रतिष्ठा।ततःशंखात्पूर्वादिप्रादक्षिण्येन अर्घ्यपाद्याचमनीयमधुपर्कादिसामान्यार्घ्यविधिना स्थापयेत् । ततो वामभागस्थं कलशं पूजाद्रव्याणि च प्रोक्षयेत् ।अथान्तर्योगः । स्वदेहे मण्डूकादिन्यासं कृत्वा स्वहृदये 'धर्मकन्दसमुद्भूतं ज्ञाननालं सुशोभनम् । ऐश्वर्याष्टदलं पद्मं परं वैराग्यकर्णिकम् । तस्मिन्पीठे चिदात्मानं राघवं स्वस्वरूपिणम् । ध्यात्वा मानसैर्धूपदीपाद्यैः संपूज्य नैवेद्यावसरे किंचिज्जपं कृत्वा गुह्येति मन्त्रेण जपं समर्पयेत् । ततः स्वाधिष्ठानगते त्रिकोणकुण्डे प्रज्वलितं ध्यात्वा चिद्रूपप्रणवेनाहंतादिकं हुत्वा ततः 'पूजाहोमादिकं देव कृतं यत्त्वदनुग्रहात्।तेन प्रीतो भव त्वं भोः शुद्धं मे मानसं कुरु ।' इति मन्त्रेण श्वासमार्गगतं तेज इत्युक्त्वात्मानं समर्पयेत् । ततस्तन्मयः सच्चिदानन्दमयो भूत्वा क्षणं तिष्ठेत् । इत्यन्तर्योगः । अथ पीठपूजा । स्ववामभागे श्रीगुरुभ्यो नमः, दक्षिणे गणपतये० मध्ये श्रेष्ठदेवतायै० पीठमध्ये ॐमण्डूकाय नमः, कालाग्निरुद्राय०कूर्माय०आधारशक्त्यै०अनन्ताय० पृथिव्यै० क्षीरसागराय० रत्नद्वीपाय० रत्नमण्डपाय० कल्पवृक्षेभ्यो नमः० रत्नवेदिकायै० रत्नसिंहासनाय नम इत्युपर्युपरि संपूज्य धर्माय० आग्नेये ज्ञानाय० नैर्ऋत्ये वैराग्याय० वायव्ये ऐश्वर्याय० ईशान्ये अधर्माय० पूर्वे अज्ञानाय० दक्षिणे अवैराग्याय० पश्चिमे अनैश्वर्याय० उत्तरे पूजयेत् । ततो मध्ये आनन्दकन्दाय० संविन्नालाय० सर्वतत्त्वकमलासनाय० प्रकृतिमयपत्रेभ्यो० विकारमयकेसरेभ्यो० पञ्चाशद्वर्णाढ्यकर्णिकायै० अं अर्कमण्डलाय० द्वादशकलात्मने० उं सोममण्डलाय० षोडशकलात्मने० मं वह्निमण्डलाय दशकलात्मने, सं सत्त्वाय०रं रजसे० तं तमसे०

आं आत्मने, अं अन्तरात्मने, पंपरमात्मने, ह्रीं ज्ञानात्मने मायातत्त्वाय, कलातत्त्वाय विद्यातत्त्वाय, परतत्त्वाय, ॐ नमो भद्राय योगपीठाय एकैकोपरि पूजयेत् । ततः पूर्वादिप्रादक्षिण्येन नवशक्तीःपूजयेत् । विमलायै० पूर्वे, उत्कर्षिण्यै० आग्नेये, ज्ञानायै० दक्षिणे, क्रियायै नैर्ऋत्ये, योगायै पश्चिमे, प्रह्व्यै वायव्ये, सत्यायै उत्तरे, ईशानायै ऐशान्ये, अनुग्रहायै मध्ये । ततः पुष्पाञ्जलिं गृहीत्वा पीठमन्त्रेण पुष्पाञ्जलिं दद्यात् । ॐनमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोगयोगपद्मपीठात्मने नमः ततो मध्याह्ने जन्म भावयेत् । 'उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि । निर्दग्धुं निखिलाः पलाशसमिधो मध्यादयोध्यारणेराविर्भूतमभूतपूर्वविभवं यत्किंचिदेकं महः ।' ततः पूर्वोक्तमूर्तौ 'अयोध्यानगरे रम्ये रत्नमण्डलमध्यगे । स्मरेत्कल्पतरोर्मूले रत्नसिंहासनं शुभम् । तन्मध्येऽष्टदलं पद्मं नानारत्नप्रतिष्ठितम् । मातुरङ्कगतं राममिन्द्रनीलमणिप्रभम् । कोमलाङ्गं विशालाक्षं विद्युद्वर्णाम्बरावृतम् । भानुकोटिप्रतीकाशं किरीटेन विराजितम् । रत्नग्रैवेयकेयूररत्नकुण्डलमण्डितम् । रत्नकङ्कणमञ्जीरकटिसूत्रैरलंकृतम् । श्रीवत्सकौस्तुभोरस्कं मुक्ताहारोपशोभितम् । दक्षिणाङ्के दशरथं पुत्रान्वेषणतत्परम् । पार्श्वे भरतशत्रुघ्नौ तालवृन्तकरावुभौ । अग्रे व्यग्रं हनूमन्तं रामानुग्रहकाङ्क्षिणम् ।' इति । एवंविधं ससीतं रामं ध्यात्वा मूलमुच्चार्य 'आत्मसंस्थमजं शुद्धं त्वामहं परमेश्वर।अरण्यामिव हव्यांशं मूर्तावावाहयाम्यहम्।'इति मन्त्रं पठन्सहस्रशीर्षेत्यावाह्यावाहनीं मुद्रां प्रदर्शयेत् । ततः 'तवेयं महिमा मूर्तिस्तस्यां त्वां सर्वगं प्रभो। भक्तिस्नेहसमाकृष्टं दीपवत्स्थापयाम्यहम् ।' इति पठित्वा स्थापनीं मुद्रां प्रदर्शयेत् । 'सर्वान्तर्यामिणं देवं सर्वबीजमयं शुभम् । स्वात्मस्थाय परं शुद्धमासनं कल्पयाम्यहम् ।' इत्युक्त्वा पुरुष एवेत्यासनम् । 'अस्मिन्वरासने देव सुखासीनोऽक्षरात्मकः।प्रतिष्ठितो भवेश त्वं प्रसीद परमेश्वर।' इत्युक्त्वोपवेशनम् ।अथ संनिधापनम् 'अनन्या तव देवेश मूर्तिशक्तिरियं प्रभो। सांनिध्यं कुरु तस्यां त्वं भक्तानुग्रहतत्पर।' इत्युक्त्वा मूलान्ते सन्निधापनं संनिधापनीं मुद्रां प्रदर्शयेत् । अथ संनिरोधनम् । 'आज्ञया तव देवेश कृपाम्भोधे गुणाम्बुधे । आत्मानन्दैकतृप्तं त्वां निरुणध्मि पितर्गुरो ।' इत्युक्त्वा मूलान्ते संनिरोधिनीं मुद्रां प्रदर्शयेत् । 'अज्ञानाद्दुर्मनस्त्वाद्वा वैकल्यात्साधनस्य च । यदपूर्णं भवेत्कृत्यं तथाप्यभिमुखो भव ।' इत्युक्त्वाऽभिमुखीमुद्रया संमुखीकरणम् । 'दृशा पीयूषवर्षिण्या पूरयन्यज्ञविष्टरम् । मूर्तौवायज्ञसंपूर्तेः स्थितो भव महेश्वर ।'

इति प्रार्थनामुद्रया प्रार्थना। 'अभक्तवाङ्मनश्चक्षुःश्रोत्रदूरामितद्युते । स्वतेजःपञ्जरेणाशु वेष्टितो भव सर्वतः ।' इत्यवगुण्ठनमुद्रया अवगुण्ठनम् । ततो देवदेहे षडङ्गेन सकलीकरणं धेनुमुद्रया अमृतीकरणम् । महामुद्रया परमीकरणम्।ततो दीपिन्या मुद्रया दीपनं सा च यथा मूलमन्त्रं पठित्वा ऐं वद वद वाग्वादिनि ऐं क्लीं क्लिन्ने क्लेदिनि क्लेदय महाक्षोभं कुरु कुरु क्लीं सौः क्षौं कुरु कुरु सौः ह्सौं इत्यकारादिक्षकारान्तां मातृकामुच्चार्य अर्घ्योदकेन देवं त्रिःप्रोक्ष्य देवस्य हृदयं स्पृशन्प्राणप्रतिष्ठां कुर्यात् । स यथा । ॐ आं ह्रीं क्रौं यं रं लं वं शं षं हं हंसः सोहं श्रीभगवतः प्राणा इह प्राणाः । ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं हंसः सोऽहं भगवतो जीव इह स्थितः। ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हंसः सोहं भगवतो वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुचिरं तिष्ठन्तु स्वाहा ।'यस्य दर्शनमिच्छन्तो देवाः स्वाभीष्टसिद्धये । तस्मै ते परमेशाय स्वागतं स्वागतं नमः।' मूलान्ते श्रीराम स्वागतो भव । ततः । शंख, चक्र, गदा, पद्म, धेनु, कौस्तुभ, गरुड, श्रीवत्स, वनमाला, योनिमुद्राः प्रदर्श्य पुष्पाञ्जलिं गृहीत्वा मूलान्ते श्रीरामाय सायुधाय सवाहनाय सपरिवाराय स्वशक्तियुताय पुष्पाञ्जलिं परिकल्पयामि नम इति समर्पयेत् । 'यद्भक्तिलेशसंपर्कात्परमानन्दसंभवः । तस्मै ते चरणाब्जाय पाद्यं शुद्धाय कल्पये ।' एतावानस्येति मूलान्ते श्रीरामाय पाद्यं परिकल्पयामि नमः । पाद्यं पादपद्मयोर्दद्यात् । 'तापत्रयहरं दिव्यं परमानन्दलक्षणम् । तापत्रयविनिर्मुक्तं तवार्घ्यं कल्पयाम्यहम् ।' त्रिपादूर्ध्वः मूलान्ते श्रीरामाय इदमर्घ्यं स्वाहा । इत्यर्घ्यं शिरसि दद्यात् । 'वेदानामपि वेदाय देवानां देवतात्मने । आचामं कल्पयामीश शुद्धानां शुद्धिहेतवे।' तस्माद्विराट् मूलान्ते श्रीरामाय इदमाचमनीयं स्वधा।आचमनं मुखे दद्यात्। 'सर्वकालुष्यहीनाय परिपूर्णसुखात्मने। मधुपर्कमिमं देव कल्पयामि प्रसीद मे।'मूलान्ते श्रीरामाय मधुपर्कं स्वधा।मधुपर्कं मुखे दद्यात्।'उच्छिष्टोऽप्यशुचिर्वापि यस्य स्मरणमात्रतः । शुद्धिमाप्नोति तस्मै ते पुनराचमनीयकम् ।' इति पुनराचमनं दद्यात्।'स्नेहं गृहाण स्नेहेन लोकनाथ महाशय । सर्वलोकेषु शुद्धात्मन्ददामि स्नेहमुत्तमम्।' इति स्नेहसमर्पणम् । ततः सुगन्धद्रव्यादिना उद्वर्तनं कारयित्वा उष्णोदकेषु शुद्धान्स्नापयेत् । अथ पञ्चामृतस्नानम् । आप्यायस्वेति पयः, दधिक्राव्ण इति दधि, घृतं मिमिक्ष इति घृतं, मधुवाता इति मधु, स्वादुः पवस्वेति शर्करा।ततः 'परमानन्दबोधाब्धिनिमग्ननिजमूर्तये। साङ्गोपाङ्गमिदं स्नानं कल्पयाम्यहमीश ते ।' इत्यनेन शुद्धोदकस्नानम् । ततः मूलेन शंखोदकेन अभिषिच्य पुनराचमनीयम् । 'यस्य

शक्तित्रयेणेदं संप्रोचत्यखिलं जगत् । यज्ञसूत्राय तस्मै ते यज्ञसूत्रं प्रकल्पयेत् ।' तस्माद्यज्ञात्सर्वहुतः संभृतमित्युपवीतम् । 'मायाचित्रपटच्छन्ननिजगुह्योरुतेजसे । निरावरणविज्ञानं वासस्ते कल्पयाम्यहम् ।' तं यज्ञमिति वस्त्रम् । 'यमाश्रित्य महामाया जगत्संमोहिनी सदा । तस्मै ते परमेशाय कल्पयाम्युत्तरीयकम् ।' इत्युत्तरीयकम् । 'स्वभावसुन्दराङ्गाय नानाशक्त्याश्रयाय ते । भूषणानि विचित्राणि कल्पयाम्यमरार्चिते ।' इति भूषणानि । हिमाम्बुघनसारागरुकुङ्कुमघृष्टं गन्धं कनिष्ठया दापयेत् । 'परमानन्दसौभाग्यपरिपूर्णदिगन्तरम् । गृहाण परमं गन्धं कृपया परमेश्वर ।' तस्माद्यज्ञात्सर्वहुतः संभृतमिति दत्त्वा 'तुरीयवनसंभूतं नानागुणमनोहरम् । अमन्दसौरभं पुष्पं गृह्यतामिदमुत्तमम् ।' इति पठित्वा तस्मादश्वा इति पुष्पं दत्त्वा पुष्पाञ्जलित्रयं दद्यात् । ततश्चन्दनपुष्पादिभिः सीतां सकौशल्यां पूजयेत् ।'रामस्य जननी सा च रामात्मकमिदं जगत् । अतस्त्वां पूजयिष्यामि लोकमातर्नमोऽस्तु ते ।' ततः नमो दशरथायेति दशरथं संपूज्य लक्ष्मणं भरतशत्रुघ्नौ च संपूज्य हनूमन्तं पूजयेत् । तत आवरणपूजार्थमनुज्ञाप्य षडङ्गपूजनं कुर्यात् । इति प्रथमावरणम् । 'हनूमन्तं च सुग्रीवं भरतं सविभीषणम् ।लक्ष्मणाङ्गदशत्रुघ्नजाम्बवन्तं दलेष्विमान् ।'इति (द्वितीयम्) 'धृष्टिं जयन्तं विजयं सुराष्ट्रं राष्ट्रवर्धनम् । अकोपं धर्मपालं च सुमन्तं दलमध्यतः।'(तृतीयम्)'दलाग्रे लोकपालाश्च (चतुर्थम्) तदस्त्राणि ततो बहिः।'(पञ्चमम्) ततः पुष्पाञ्जलिं दत्त्वा 'वनस्पतिरसोपेतो गन्धाढ्यः सुमनोहरः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ।' यत्पुरुषं व्यदधुरिति धूपं दद्यात् । 'सुप्रकाशो महान्दीपः सर्वतस्तिमिरापहः।सबाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ।'ब्राह्मणोऽस्येति दीपम् । अथ नैवेद्यम् । मूलेनास्त्राय फडिति च संप्रोक्ष्य चक्रमुद्रयाऽभिरक्ष्य मूलेनाष्टधाभिमन्त्र्य धेनुमुद्रां च प्रदर्श्य मूलेनाभिमन्त्र्य दक्षहस्त उदकमादाय 'शालीभक्तं सुभक्तं शशिकररसितं पायसं पूपसूपं लेह्यं पेयं सुचोष्यं सितममृतफलं घारिकाद्यं सखाद्यम् । आज्यं प्राज्यं समिज्यं नयनरुचिकरं राजिकैलामरीचस्वादीयःशाकराजीपरिकरममृताहारजोषं जुषस्व। हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम् । पञ्चधा षड्रसोपेतं गृहाण परमेश्वर ।' चन्द्रमा मनस इति नैवेद्यं निवेद्य, अमृतोपस्तरणमसीति जलं दत्त्वा प्राणायेत्यादिपञ्चग्रासान्विकचोत्पलमुद्रया ग्रासमुद्राभिः ग्राहयित्वा नमस्ते देवदेवेशेति मध्ये पानीयं दत्त्वा मध्ये जवनिका कृत्वा 'ब्रह्मेशाद्यैः परित उरुभिः सूपविष्टैः समेतो लक्ष्म्या सिञ्जद्वलयकरया सादरं वीज्यमानः।नर्मक्रीडाप्रहसनपरो हासयन्पङ्क्तिभोक्तृन्भुङ्क्ते पात्रे कनकघ-

टिते षड्रसं श्रीरमेशः ।' इति पठित्वा 'यश्चिन्तारत्नकामद्रुमविभवभुवां मण्डनं मण्डनानां सर्वासां संपदां यस्त्रिजगति जगतां मङ्गलं मङ्गलानाम् । हैमामत्रस्थदूर्वादधिमधुलवणैर्दृष्टमुत्तार्य चार्यैर्नीराज्यो रामचन्द्रो दिनकरकरजिद्रत्नदीपावलीभिः ।'इति ध्यात्वा यथाशक्ति जपं कृत्वा अमृतापिधानमसीत्युत्तरापोशनं दत्त्वा विष्वक्सेनाय नम इत्युच्छिष्टशेषं दत्त्वा हस्तौ प्रक्षाल्य करोद्वर्तनं दद्यात् । इदं फलमिति फलम् । पूगीफलमिति ताम्बूलम् । हिरण्यगर्भेति दक्षिणाम् । मुकुटाद्याभूषणानि च्छत्रचामरादीनि परिकल्प्य महानीराजनं कुर्यात् । नाभ्या आसीदिति नमस्कारान् । सप्तास्यासन्निति प्रदक्षिणां, यज्ञेनेति पुष्पाञ्जलिं च दत्त्वा भगवन्प्रसीदेति नमस्कृत्य स्तुवीत—' ध्येयं सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरञ्चिनुतं शरण्यम् । भृत्यार्तिहं प्रणतपालभवाब्धिपोतं वन्दे महापुरुष ते चरणारविन्दम् । त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं धर्मिष्ठ आर्यवचसा यदगादरण्यम् । मायामृगं दयितयेप्सितमन्वधावद्वन्दे महापुरुष ते चरणारविन्दम् । श्रीरामचन्द्र रघुपुङ्गव राजवर्य राजेन्द्र राम रघुनायक राघवेश । राजाधिराज रघुनन्दन रामभद्र दासोऽहमद्य भवतः शरणागतोऽस्मि । यस्यामलं नृपसदःसु यशोधनार्तिं गायन्त्यजस्रमृषयो दिगिभेन्द्रपत्न्यः । तन्नाकपालवसुपालकिरीटजुष्टं पादाम्बुजं रघुपतेः शरणं प्रपद्ये । नमो ब्रह्मण्यदेवाय रामायाकुण्ठमेधसे । उत्तमश्लोकधुर्याय न्यस्तदण्डार्पितांघ्रये । इन्दीवरदलश्यामो रामो राजीवलोचनः । वर्तते मानसे यस्यास्तां सीतां प्रणमाम्यहम् ।' ततः पुष्पाञ्जलिं दत्त्वा कपिमुद्रां बद्ध्वा प्रार्थयेत् । ' यद्यात्रया सर्वगता हता ते ध्यानेन चेतःपरता हता ते । स्तुत्यानया वाक्परता हता ते क्षमस्व सर्वं मम देवदेव । अज्ञानादथ वा ज्ञानादशुभं यन्मया कृतम् । क्षन्तुमर्हसि तत्सर्वं दास्येन च गृहाण माम् । श्रीगोविन्द मुकुन्द केशव शिव श्रीवल्लभ श्रीनिधे श्रीवैकुण्ठ सुकुण्ठ कुण्ठितखल स्वामिन्नकुण्ठोदय । शुद्धध्येयविधूतधूर्तधवल श्रीमाधवाधोक्षज श्रद्धाबद्ध विधेहि नस्त्वयि धियं धीरां धरित्रीधर । त्वय्येव भक्तिं जनय त्वमेव मामुद्धरास्मात्कृपया भवाब्धेः । क्लिष्टं कृपालो न दयास्ति चित्ते चेत्तर्हि हा कर्मवशो हतोऽस्मि । गजास्यादित्यपञ्चास्यशक्तिसिंहास्यरूपवान् । समस्तकृत्ये सर्वात्मा रामः प्रीणातु चिद्वपुः ।' तत उत्तरार्घ्यं दद्यात् । 'फलपुष्पाम्बुसंपूर्णं गृहीत्वा शंखमुज्ज्वलम् । अशोकचूतकुसुमैर्युक्ता च तुलसीदलैः ।' अर्घ्यमन्त्रस्तु—' दशाननवधार्थाय धर्मसंस्थापनाय च । परित्राणाय साधूनां जातो रामः स्वयं हरिः । गृहाणार्घ्यं मया दत्तं भ्रातृभिः सहितोऽनघ ।' ततो यामे यामे पुष्पाञ्जलिं दत्त्वा यथा-

शक्ति पूजयित्वा रात्रौ जागरणं कुर्यात् । इति रामनवमीपूजाविधिः ।

अथ दशमीकृत्यम् ।'ततः प्रातः समुत्थाय स्नानसंध्यादिकाः क्रियाः । समाप्य विधिवद्रामं पूजयेत्पूर्ववन्मुने । ततो होमं प्रकुर्वीत मूलमन्त्रेण मन्त्रवित् । पूर्वोक्तपद्मे कुण्डे वा स्थण्डिले वा समाहितः । लौकिकाग्नौ विधानेन शतमष्टोत्तरं ततः । साज्येन पायसेनैव स्मरन्नाममनन्यधीः ।' अथ विस्तरेण होमविधिः । तत्र यजमानः कृतनित्यक्रियः शुचिः परिहितवासा दर्भपाणिः पीठोपविष्टः प्राङ्मुखो वाग्यतो द्विराचम्य प्राणानायम्य देशकालौ संकीर्त्य रामनवमीव्रताङ्गं साज्यपायसहोमं करिष्ये इति संकल्प्य तदङ्गं स्थण्डिलादि करिष्ये इति च संकल्प्य शुद्धदेशे शुद्धमृदा ऐशान्यां चतुरङ्गुलोन्नतमष्टादशाङ्गुलविस्तृतं होमानुसारेण तदधिकं वा मध्योन्नतं स्थण्डिलं कुर्यात् । स्थण्डिलं गोमयेनोपलिप्य यज्ञियकलशे उदगायतां पश्चात्प्रागायते नानान्तयोस्तिस्रो मध्ये उदक्संस्थाः प्रागायताः प्रादेशसंमितास्तिस्रः इति षड्रेखा उल्लिख्य तास्तु तच्छकलमुदगग्रं निधाय स्थण्डिलमद्भिरभ्युक्ष्य शकलमाग्नेय्यां निरस्याप उपस्पृश्य ततस्तैजसेन मृन्मयेन वा पात्रयुग्मेन संपुटीकृत्य सुवासिन्यां श्रोत्रियागारात्स्वगृहाद्वा समृद्धं निर्धूममग्निमाहृत्य स्थण्डिलाद्बहिराग्नेय्यां निधाय, जुष्टोदमना आत्रेयो वसुश्रुतोऽग्निस्त्रिष्टुप् एह्यग्ने राहुगणो गौतमोऽग्निस्त्रिष्टुप्, अग्न्यावाहने विनियोगः । 'जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुपयाहि विद्वान् ।विश्वा अग्ने अभियुजो विहत्या शत्रूयतामाभरा भोजनानि । एह्यग्न इह होता निषीदादब्धः सुपुर एता भवानः । अवतां त्वा रोदसी विश्वमिन्वे यजामहे सौमनसाय देवान् । इत्यक्षतैरावाह्य आच्छादनं दूरीकृत्य समस्तव्याहृतीनां परमेष्ठी प्रजापतिः प्रजापतिर्बृहती अग्निप्रतिष्ठापने विनियोगः । ॐ भूर्भुवः स्वरित्यात्माभिमुखं पाणिभ्यां षट्सु लेखासु तत्तत्कर्मसु तत्तन्नामकमग्निं प्रतिष्ठापयामीत्यग्निं प्रतिष्ठाप्य प्रोक्षितेन्धनानि प्रक्षिप्य वेणुधमन्या प्रबोध्य ध्यायेदेवम् । चत्वारि शृङ्गा वामदेवोऽग्निस्त्रिष्टुप् । अग्निमूर्तिध्याने विनियोगः ।ॐ चत्वारि शृङ्गा त्रयोऽअस्य पादा द्वे शीर्षे सप्त हस्तासोऽअस्य त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश ।' 'सप्तहस्तश्चतुःशृङ्गः सप्तजिह्वो द्विशीर्षकः । त्रिपात्प्रसन्नवदनः सुखासीनः शुचिस्मितः । स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां तथा । बिभ्रद्दक्षिणहस्तैस्तु शक्तिमन्नं स्रुचं स्रुवम् । तोमरं व्यजनं वामे घृतपात्रं च धारयन् । आत्माभिमुखमासीन एवंरूपो हुताशनः ।' एष हि देवः प्रदिशो नु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः । स विजायमानः स

सर्ववेदेषु यत्फलम् । त्वत्पादपद्मतोयेन सर्वं मे भवतु प्रभो ।' इति स्नानमन्त्रः । 'स्नानं कृत्वा ततो देवं पूजयेद्गरुडध्वजम् । एकत्र मूर्तिसंपन्नं लक्ष्मीनारायणं प्रभुम् । यथाशक्त्याथ कुर्वीत सौवर्णं रत्नभूषितम् । सहस्रशीर्षामन्त्रेण स्नापयेद्गन्धवारिणा । मधुवातादिभिर्मन्त्रैर्मधुना स्नापयेद्धरिम् । आप्यायस्वेतिमन्त्रेण क्षीरेण स्नापयेत्ततः । दधिक्राव्णेति मन्त्रेण दध्ना तु स्नापयेत्ततः । तेजोसीति च मन्त्रेण स्नापयेत्सर्पिषा प्रभुम् । एकीकृत्य ततः सर्वैः शर्कराखण्डसंयुतैः । स्नापयेत्परया भक्त्या जयशब्दादिमङ्गलैः । माषचूर्णादिभिश्चूर्णैर्निर्मृष्टां प्रतिमां ततः । चन्दनागरुकर्पूरैरन्यैः संस्नापयेत्ततः । एवं स्नाने कृते पश्चात्पूजां कर्तुं समारभेत् । चन्दनोशीरकर्पूरकुङ्कुमादिभिरर्चयेत् । तैर्विलिप्य हरिं भक्त्या ततो मन्त्रमुदीरयेत् । यथाशक्त्या मया देव स्नापितश्चानुलेपितः । न्यूनातिरिक्तं तत्सर्वं लक्ष्मीनारायणः क्षमेत् ।' इत्यनुलेपनमन्त्रः । ततो वस्त्रयुगं श्रेष्ठमानीय परिधापयेत् । पीतं वा लोहितं वापि श्वेतं नानाविचित्रितम् । परिधानं यथाशक्त्या तव देव समर्पितम् । न्यूनातिरिक्तं तत्सर्वं लक्ष्मीनारायणः क्षमेत् ।' इति परिधानमन्त्रः । 'परिधाप्य ततो देवं पुष्पैर्नानाविधैः शुभैः । संछाद्य पुष्पमालाभिर्मन्त्रमेनमुदीरयेत् । पुष्पैरपि यथाशक्त्यापूजितोऽसि जनार्दन । न्यूनातिरिक्तं तत्सर्वं लक्ष्मीनारायणः क्षमेत् ।' इति पुष्पार्चनमन्त्रः । 'एवं कृत्वा विधानेन शय्यां च विनिवेदयेत् । तूलीपर्यङ्कयुक्तां तु श्वेतप्रच्छदगेन्दुकैः । प्रतिपादसमारूढैश्चतुष्पादप्रतिष्ठितः । निवेश्य तत्र देवेशं लक्ष्मीनारायणं प्रभुम् । नैवेद्यानि निवेद्यानि नानाभक्ष्ययुतानि च । लेह्यान्यभ्यवहार्याणि चोष्याणि चर्वणानि च । यानि कानि च वै यत्नादस्मिन्देशे यथा तथा । तानि सर्वाण्युपादाय देवाय विनिवेदयेत् । फलानि च सुगन्धीनि पक्वानि च निवेदयेत् । एवं निवेद्य तत्सर्वं भक्त्या मन्त्रमुदीरयेत् । यथावित्तोपसंयुक्तं मया तव समर्पितम् । लक्ष्मीनारायण विभो भक्त्या तत्प्रतिगृह्यताम् ।' इति नैवेद्यमन्त्रः । 'देवस्य तु शिरः पूर्वं पादौ पश्चात्प्रकल्पयेत् । शिरःस्थाने ततः कुम्भं ततो मन्त्रमुदीरयेत् । यावत्पूजा समारब्धा चाञ्चल्यं वर्जयेत्तदा । भुक्त्वा पीत्वा तथाचम्य तोयेनानेन केशव । मद्भक्त्या पूजितो देव सुतृप्तः सुसुखी स्वयम् ।' इति स्वपनमन्त्रः । 'शय्योपचारं[1] यत्किञ्चित्तत्सर्वं वै निवेदयेत् । यावत्पूजा समारब्धा स्नानादिशयनान्तिका । सघृतं गुग्गुलुं तावद्दहेद्देवाग्रतो निशि । ततो विप्रं समानीय भार्यया सहितं शुभम् । सर्वदुर्लक्षणैर्हीनं साङ्गोपाङ्गसमन्वितम् । वेदविद्याव्रतस्नातं पूजितं

१—शय्योपचार स्रग्गन्धादि ।

स्वकुलोद्भवैः । देवस्यान्ते ततो विप्रं भार्यया सहितं न्यसेत् । प्राङ्मुखं विमलं शुद्धं भक्त्या तं पूजयेत्ततः । बहुना किं प्रलापेन कथितेनेह नारद । देवः संपूजितो सद्भ-क्त्या द्विजं प्रपूजयेत् । विष्णुब्राह्मणयोर्भेदं न कदाचिद्विकल्पयेत् । इति येषां हृदि सदा ते पूज्याश्च यतीश्वराः । द्वादशान्यान्नवान्कुम्भान्पूर्णाञ्छुद्धेन वारिणा । स्थापयेद्देव-पर्यङ्के परितः शुद्धचेतसः । द्वादशैव तथा गावः सवत्साः कांस्यदोहनाः । क्षीरवत्यः सुशीलाश्च स्थापयेद्देवसंनिधौ । अथ वा वित्तवैकल्ये कुर्याद्गोत्रितयं नरः । दद्यात्तु सम्यग्भक्ताय तत्राशक्तिमतः सतः । एकाप्यनुत्तमगुणा तस्य सा द्वादशाधिका । स्ववित्तशक्त्या यत्किंचिद्दातुमुत्सहते नरः । तत्सर्वं द्विजदेवाभ्यां संनिधौ संप्रकल्पयेत् । उपस्कराणि देयानि छत्रोपानत्प्रपादुकाः । गोसंख्यादिकृतं सर्वं दानं तस्मिन्प्रकल्पयेत् । यदा दाने तु गौरेका कल्प्या शक्तिप्रपूर्वकम् । सा संपूर्णा तु कर्तव्या वत्सेन सह पूजिता । स्वर्णशृङ्गीं रौप्यखुरां घण्टाभरणभूषिताम् । तद्वर्णवस्त्रसंवीतां वत्सेन सह पूजयेत् । एवं निर्वर्त्य विधिना स्नानपूजादिना समम् । देवब्राह्मणयोर्भक्त्या ततो विप्रान्क्षमापयेत् । एतद्गृहाण मे विप्र भार्यया सहितः प्रभो । एतेनावाह्य तं विप्रं तस्मिन् सर्वं निवेदयेत् । प्रतिग्रहीता दाता च व्रती विष्णुर्यथा तथा । मया दत्तमिदं सर्वं गृहाण त्वं द्विजोत्तम । दाता च विष्णुर्भगवाननन्तः,प्रतिग्रहीता च स एव विष्णुः । तस्मात्त्वया दत्तमिदं च सर्वं प्रतिगृहीतं च मया शुभाय । ' ब्राह्मणप्रतिग्रहमन्त्रः । ' अन्येभ्योऽपि यथाशक्त्या तस्मिन्काले प्रदीयते । दीनान्धकृपणादिभ्यस्तदक्षयफलं स्मृतम् । वित्तशाठ्यं न कुर्वीत समग्रं फलमाप्नुयात् । इत्यखण्डव्रतस्यैष उद्यापनविधिः स्मृतः । कथितस्ते मया वत्स तस्य पुण्यफलं शृणु । यावज्जगज्जलधिशैलधरादि ताव-त्तत्संततिर्भवति पुण्यफलोपभोक्त्री । तावन्न विष्णुभवनात्परिवर्ततेऽसौ, अन्ते लयं स परमात्मनि याति विष्णौ ।' इति भविष्योत्तरोक्ताखण्डद्वादश्या उद्यापनविधिः ।

अथ सिद्धविरुद्धादिकं लिख्यते । एकादशी शुक्रवारे सिद्धा यदुक्तं शुक्रेण प्रतिपत्षष्ठी एकादश्यःइत्यादि।'चन्द्रचित्रोत्तराषाढा पूर्वाषाढा विशाखिका।एकादशी-त्रयोदश्योर्नष्टयोगाः प्रकीर्तिताः ।' इति । एकादश्यां नर्तनादि कर्म कार्यम् । नन्दासु नर्तनं क्षमामित्युक्तमेव । एकादश्यां शणपुष्पं न खादेत् । तच्चोक्तमेव । नखचर्म तिला-नीति । सर्वास्वेकादशीषु तिथिपत्वेन शिवः पूज्यः । तदुक्तम्—'एकादश्यां शिवस्य च' इति । एकादश्यामाग्नेय्यां दिशि योगिनीसांमुख्यात् यात्रा न कार्येति ।

श्रीमद्दिल्लीशसेनोद्भटविकटभटोद्दण्डमत्तेभसिंह-
श्चण्डोन्मादप्रचण्डस्फुरितवसुमतीपालने धर्मराजः ।
पौत्रः श्रीकृष्णसिंहक्षितिपकुलमणेर्विष्णुसिंहस्य पुत्रः
श्रीमान्राजाधिराजो जयहरिरमराधिशिवत्को सुखी स्तात् ॥ १ ॥
श्रीमत्पण्डितदेवभट्टतनयः श्रीराघवाङ्घ्रिद्वय-
ध्यानावाप्तसमस्तकामनिवहः सम्राट् स रत्नाकरः ।
तुष्ट्यै श्रीजयसिंहवर्मनृपतेः कल्पद्रुमे कामदं
गुच्छं विश्वतिथेस्त्रयोदशममुं शास्त्रार्थगर्भं व्यधात् ॥ २ ॥

इति श्रीपौण्डरीकयाजिरत्नाकरविरचिते जयसिंहकल्पद्रुमोद्द्योते
एकादशीनिर्णयः ।

---

## अथ द्वादशीनिर्णयः ।

अथ द्वादशी निर्णीयते । तत्रादौ कृष्णशुक्लद्वादशीध्यानम् । 'द्वादशी गरुडारूढा मेघवर्णारिपात्रिणी । द्वादशी शुभ्रदेहेयं नीलकुन्तलभूषिता ।' द्वादशी तूपवासादिषु पक्षद्वयेऽप्येकादशीयुतैव ग्राह्या ' रुद्रेण द्वादशी युक्ता ' इति युग्मवाक्यात् । 'द्वादशी तु प्रकर्तव्या एकादश्या युता प्रभो । सदा कार्या तु विद्वद्भिर्विष्णुभक्तैश्च मानवैः ।' इति स्कन्दपुराणवचनात् । इति द्वादशीसामान्यनिर्णयः ।

अथ चैत्रशुक्लद्वादश्यां मत्स्यपुराणोक्तं मदनद्वादशीव्रतम् । सूत उवाच । ' पुरा देवासुरे युद्धे हतेषु हरिणा सुरैः । पुत्रपौत्रेषु शोकार्ता गत्वा भूलोकमुत्तमम् । स्यमन्तपञ्चके तीर्थे सरस्वत्यास्तटे शुभे । भर्तुराराधनपरा तप उग्रं चकार ह । तदा दितिर्दैत्यमाता ऋषिरूपेण सुव्रता । फलाहारा तपस्तेपे कृच्छ्रचान्द्रायणान्बहून् । यावद्वर्षशतं साग्रं जराशोकसमाकुला । ततः सा तपसा तप्ता वसिष्ठादीनपृच्छत । कथयन्तु भवन्तो मे पुत्रशोकविनाशनम् । व्रतं सौभाग्यफलदमिह लोके परत्र च । ऊचुर्वसिष्ठप्रमुखा मदनद्वादशीव्रतम् । यस्य प्रसादादभवन्सुताः शोकविवर्जिताः ।' ऋषय ऊचुः । 'श्रोतुमिच्छामहे त्वत्तो मदनद्वादशीव्रतम् । सुतानेकोनपञ्चाशयेन लेभे दितिः पुरा ।' सूत उवाच । ' यद्वसिष्ठादिभिः पूर्वं दितेः कथितमुत्तमम् । विस्तरेण तदेवेदं मत्सकाशान्निबोधत । चैत्रे मासि सिते पक्षे द्वादश्यां नियतव्रतः । स्थापयेदव्रणं कुम्भं सिततन्दुलपूरितम् । नानाफलयुतं तद्वदिक्षुदण्डसम-

---

१-'कल्पद्रुमे द्वादश मत्स्यम स्तबक शिद समकरोऽकादशीन्यापकम् ' इति खपुस्तके पाठः ।
२ आर्द्र चक्रम ।

न्वितम् । सितवस्त्रयुगच्छन्नं सितचन्दनचर्चितम् । नानाभक्ष्यसमोपेतं सहिरण्यं स्वशक्तितः । ताम्रपात्रं गुडोपेतं तस्योपरि निवेशयेत् । तदभावे कथाः कुर्यात्कामकेशवयोर्नरः । कामनाम्ना हरेरर्चां[1] स्नापयेद्गुडवारिणा । शुक्लपुष्पाक्षततिलैरर्चयेन्मधुसूदनम् । कामाय पादौ संपूज्य जङ्घे सौभाग्यदाय च । ऊरू स्मरायेति पुनर्मन्मथायेति वै कटिम् । स्वच्छोदरायेत्युदरमनङ्गायेत्युरो हरेः । मुखं पद्ममुखायेति बाहू पञ्चशराय वै । नमः सर्वात्मने मौलिमर्चयेदिति केशवम् । एवं जागरणं कृत्वा शुक्लमाल्याम्बरो व्रती । ततः प्रभाते तं कुम्भं ब्राह्मणाय निवेदयेत् । ब्राह्मणान्भोजयेद्भक्त्या स्वयं भुञ्जीत बन्धुभिः । भुक्त्वा तु दक्षिणां दद्यादिमं मन्त्रमुदीरयेत् । प्रीयतामत्र भगवान्कामरूपी जनार्दनः । हृदये सर्वभूतानां य आनन्दोऽभिधीयते । अनेन विधिना सर्वं मासि मासि समाचरेत् । उपवासी त्रयोदश्यामर्चयेद्विष्णुमव्ययम् । फलमेकं च संप्राश्य द्वादश्यां भूतले स्वपेत् । ततस्त्रयोदशे मासि घृतधेनुसमन्वितम् । शय्यां दद्याद्द्विजेन्द्राय सर्वोपस्करसंयुताम् । काञ्चनं कामदेवं च शुक्लां गां च पयस्विनीम् । वासोभिर्द्विजदाम्पत्यं पूज्य शक्त्या विभूषणैः । सर्वं शय्यादिकं दत्त्वा प्रीयतामित्युदीरयेत् । होमं शुक्लतिलैः कुर्यात्कामनामानि कीर्तयेत् । गव्येन सर्पिषा तद्वत्पायसेन च धर्मवित् । विप्रेभ्यो भोजनं दद्याद्वित्तशाठ्यं विवर्जयेत् । इक्षुदण्डांश्च यो दद्यात्पुष्पमालां स्वशक्तितः । यः कुर्याद्विधिनानेन मदनद्वादशीमिमाम् । सर्वपापविनिर्मुक्तः प्राप्नोति हरिसाम्यताम् । इह लोके वरान्पुत्रान्सौभाग्यं सुखमश्नुते । यः स्मरः स स्मृतो विष्णुरानन्दात्मा महेश्वरः । सुखार्थी कामरूपेण यजेत्तं जगदीश्वरम् । तच्छ्रुत्वा च चचारासौ दितिः सर्वमशेषतः । कश्यपो व्रतमाहात्म्यादागत्य परया मुदा । वरैराच्छादयामास सा तु वव्रे सुतं वरम् । ततः सा व्रतमाहात्म्याल्लेभे गर्भमनुत्तमम् । कदाचिल्लब्धसंचारः शत्रुत्वाज्जठरे दितेः । प्रविश्यैकोनपञ्चाशत्कृत्वा क्रोधाज्जघान तम् । तावन्तो बालका भूता रुरुदुर्न मृतिं गताः । ततो वै चिन्तयामास किमेतदिति वृत्रहा । धर्मस्य कस्य माहात्म्यात्पुनः संजीवितास्त्वमी । कदाचिदनया नूनं मदनद्वादशी कृता । तत्प्रभावेण जीवन्ति तनया निहता अपि । नूनमेतत्परिणतमधुना तत्तु पूजनम् । वज्रेणाभिहताः सन्तो न विनाशमवाप्नुयुः । एकोऽप्यनेकतामाप यद्गर्भो निहतोऽप्यलम् । अहो माहात्म्यमेतस्मिन्मदनद्वादशीव्रते । जीवत्पुत्रा बहुसुता येन नारी प्रजायते ।' इति मत्स्यपुराणोक्तं मदनद्वादशीव्रतम् । दमनकारोपणकृत्यं तु एकादश्यामधिवासनस्य कर्तव्यतया चैत्रशुक्लैकादशीप्रकरण एवोक्तम् ।

१—अर्चां प्रतिमाम् ।

अस्यामेव भर्तृद्वादशीव्रतम् । नारदाप्सरःसंवादमधिकृत्योक्तं वराहपुराणे- 'वसन्ते शुक्लपक्षस्य द्वादशी या भवेच्छुभा । तस्यामुपोष्य विधिवत्सश्रीकं हरिमर्चयेत् । पर्यङ्कास्तरणं कृत्वा नानास्तरणसंयुतम् । तत्र लक्ष्म्या युतं देवं रौप्यं कृत्वा निवेश-येत् । तस्योपरि ततः पुष्पैर्मण्डपं कारयेद्बुधः । नृत्यवादित्रघोषैश्च जागरं तत्र कार-येत् । मनोभवायेति शिरस्त्वनङ्गायेति वै कटिम् । कामाय बाहुमूले च कुसुमास्त्राय चोदरम् । मन्मथायेति पादौ तु हरये इति सर्वतः । पुष्पैः संपूज्य देवेशं मल्लिकाजा-तिभिस्तथा । पश्चाच्चतुर आदाय इक्षुदण्डान्सुशोभनान् । चतुर्दिक्षु न्यसेत्तस्य देवस्य प्रणतो नृप । एवं कृत्वा प्रभाते तु दापयेद्ब्राह्मणाय तम् । वेदवेदाङ्गयुक्ताय संपूर्णाङ्गाय धीमते । ब्राह्मणांश्च तथा भोज्य व्रतमेतत्समापयेत् । एतस्यान्ते तथा विष्णुर्भर्ता वो भविता ध्रुवम् । अकृत्वा मत्प्रणामांस्तु पृष्टं गर्वेण शोभना । व्रतेनानेन देवेशं पतिं लब्ध्वाभिमानतः । अवसानेऽपहरणं गोपालैर्वो भविष्यति । परिहृत्याथ कन्यां त्वां देवो भर्ता भविष्यति । एवमुक्त्वा स देवर्षिः प्रययौ नारदः क्षणात् । ता अप्येतद्व्रतं चक्रुस्तुष्टश्चाप्सरसां हरिः ।' इति भर्तृद्वादशीव्रतम् । इति चैत्रशु-क्लद्वादशीकृत्यम् ।

वैशाखशुक्लद्वादश्यां कृत्यविशेषमाह भारते दानधर्मेषु—' वैशाखमासे द्वादश्यां पूजयेन्मधुसूदनम् । अग्निष्टोममवाप्नोति सोमलोकं च गच्छति ।' अस्या-मेव योगविशेषो हेमाद्रौ—' पञ्चाननस्थौ गुरुभूमिपुत्रौ मेषे रविः स्याद्यदि शुक्लपक्षे । पाशाभिधाना करभेण युक्ता तिथिर्व्यतीपात इतीह योगः । अस्मिंस्तु गोभूमिहिर-ण्यवस्त्रदानेन सर्वं परिहाय पापम् । सुरत्वमिन्द्रत्वमनामयत्वं मर्त्याधिपत्यं लभते मनुष्यः ।' इति । पञ्चाननः सिंहः । पाशाभिधा तिथिर्द्वादशी । करभं हस्तः । इति वैशाखशुक्लद्वादशीकृत्यम् ।

अथ ज्येष्ठशुक्लद्वादशीकृत्यम् । महाभारते दानधर्मेषु—' अहोरात्रेण द्वादश्यां ज्येष्ठे मासि त्रिविक्रमम्[1] । गवामयनमाप्नोति अप्सरोभिश्च मोदते ।' इति ।

आषाढशुक्लद्वादश्यां महाभारते दानधर्मेषु—'आषाढे मासि द्वादश्यां वामनेति च पूजयेत् । नरमेधमवाप्नोति पुण्यं च लभते महत् ।' इति । इत्याषा-ढशुक्लद्वादशी ।

श्रावणशुक्लद्वादश्यां दधिव्रतारम्भः । तक्रादीनां तु तत्र निषेधो दधिव्य-

१—पूजयेदिति शेष ।

व्हाराभावादिति निर्णयसिन्धौ । अस्यामेव महाभारते दानधर्मेषु—'अहोरात्रेण द्वादश्यां श्रावणे मासि श्रीधरम् । पञ्चयज्ञमवाप्नोति विमानस्थश्च मोदते ।' इति ।

अथ भाद्रशुक्लद्वादशी । तत्र श्रवणयोगरहितायां पारणं कुर्यात् । 'आषाकासितपक्षेषु मैत्रश्रवणरेवती । संगमे नैव भोक्तव्यं द्वादश द्वादशीहरेत् ।' इति दिवोदासोदाहृतवचनात् । उपोष्यैकादशीं मोहात्पारणं श्रवणे यदि । करोति हन्ति तत्पुण्यं द्वादशद्वादशीभवम्' । इति तत्रैव स्कान्दाच्च । अस्य तत्रैव प्रतिप्रसवः । मार्कण्डेयः—'विशेषेण महीपाल श्रवणं वर्धते यदि । तिथिक्षये न भोक्तव्यं द्वादशीं लङ्घयेन्न हि ।' इति । इह च यदा योगबाहुल्यं तदा श्रवणर्क्षं त्रेधा विभज्य मध्यविंशतिघटिकायोगं त्यक्त्वा पारणं कार्यम् । तदुक्तं विष्णुधर्मे—'श्रुतेश्च मध्ये परिवर्तमेति सुप्तिप्रबोधपरिवर्तनमेव वर्ज्यम्' इति । केचित्तु—चतुर्धा विभज्य मध्यमपादद्वयं वर्ज्यमित्याहुः । अत्रैव शक्रध्वजोत्थापनमुक्तमपरार्के गर्गेण—' द्वादश्यां तु सिते पक्षे मासि प्रौष्ठपदे तथा । शक्रमुत्थापयेद्राजा विश्वश्रवणवासरे ।' इयमेव श्रवणद्वादशी । अत्रोपवासादिकमुक्तं हेमाद्रौ भविष्योत्तरे—'मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता । सर्वकामप्रदा पुण्या उपवासे महाफला ।' इति । शुक्लद्वादश्यां श्रवणाभावे कृष्णद्वादश्यां सत्त्वे सैव ग्राह्या । तदुक्तं माधवीये—'शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणान्विता । द्वादश्यां तु पारणम्' इति । एतच्च वचनं श्रवणयोगे तस्यामेवोपवासश्च त्रयोदशीद्वादशीसामान्याभिप्रायकम् । भाद्रपदशुक्लद्वादश्यां नियमेन श्रवणयोगस्य संभवात् । तत्रैकादश्यां द्वादशीश्रवणयोगे सैवोपोष्या । 'एकादशी द्वादशी च वैष्णव्यमपि तत्र चेत् । तत्र विष्णुशृङ्खलं नाम विष्णुसायुज्यकृद्भवेत् ।' इति विष्णुधर्मोक्तेः । यदा दिनद्वयेऽपि श्रवणद्वादशीयोगस्तदापि एकादशीयोगस्य प्रशस्तत्वात्तद्युक्तायामुपवासादि कर्तव्यम् । तदुक्तं मदनरत्ने मात्स्ये—'द्वादशी श्रवणं स्पृष्ट्वा स्पृशेदेकादशीं यदि । स एष वैष्णवो योगो विष्णुशृङ्खलसंज्ञितः । तस्मिन्नुपोष्य विधिवन्नरः संक्षीणकल्मषः । प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभाम् ।' इति । यदा त्वेकस्मिन्नहोरात्रे श्रवणमेकादशीं स्पृष्ट्वा द्वादशीं स्पृशति तदा फलाधिक्यमुक्तं नारदीये—'संस्पृश्यैकादशीं राजन्द्वादशीं यदि संस्पृशेत् । श्रवणं ज्योतिषां श्रेष्ठं ब्रह्महत्यां व्यपोहति ।' इति । अस्मिंश्च विष्णुशृङ्खलयोगे एकादश्युपवासः द्वादश्युपवासश्च तन्त्रेणैवानुष्ठेयः एकदैवेत्युक्तत्वाद्विरोधाभावाच्च । अत्र चैकादश्याः श्रवणयोगाभावेऽपि तद्दिनावच्छेदेन श्रवणद्वादशीयोगादेव विष्णुशृङ्खलमिति हेमाद्रिमतम् । निर्णयामृते तु श्रवणस्यैका

दशीद्वादशीभ्यां योग एव विष्णुशृङ्खलं नान्यथेति। अत्रोदयादुदयपर्यन्तो वा नक्षत्रयोग इतरद्वादशीवन्नावश्यमपेक्षितः मासि भाद्रपदे इति भविष्योत्तरवाक्यात् । तथा च मदनरत्नादिषु स्वल्पश्रवणयोगेऽपि कृत्वा पुण्यतमा भवतीत्युक्तम् । 'द्वादशी श्रवण-स्पृष्टा कृत्स्ना पुण्यतमा तिथिः । न तु सा तेन संयुक्ता तावत्येव प्रशस्यते ।' इति मत्स्य-पुराणात् । निर्णयसिन्धौ दीक्षितीये च यदा निशीथानन्तरं सूर्योदयावधि द्विकला-मात्रमपि श्रवणर्क्षं भवति तदा पूर्वैवेत्युक्तम् । इमां प्रक्रम्य 'तिथिनक्षत्रयोर्योगो योगश्चैव नराधिप । द्विकलो यदि लभ्येत स ज्ञेयो ह्यष्टयामिकः ।' इति नारदीयवचनात् । दिवोदासीये तु रात्रेः प्रथमयामे श्रवणयोगे पूर्वा अन्यथोत्तरा। 'रात्रेः प्रथमपादे चेच्छ्रवणं हरिवासरे । तदा पूर्वामुपवसेत्प्रातर्भान्ते च पारणम् । इत्युक्तेरिति। इदं तु निर्मूलत्वात्पूर्वविरोधादुपेक्ष्यमिति निर्णयसिन्धौ। दीक्षितस्मृतिकौस्तुभयोर्मते समूलमेव। मदनरत्ने निर्णयसिन्धौ प्रतापमार्तण्डे च—यत्तु यस्मिन्दिने उदय-कालीनः श्रवणद्वादशीयोगस्तस्मिन्दिने श्रवणद्वादशीव्रतस्य विधायकम् । 'उदयव्यापिनी ग्राह्या श्रवणद्वादशी व्रते' इति बृहन्नारदीयवचनम्। यच्च स्मृत्यर्थसारे उदयव्यापिनी ग्राह्येत्युक्तम् । तद्यदा शुद्धाधिका द्वादशी परदिन एवोदयकालिकश्रवणयोगवती पूर्वदिने उदयकालव्यतिरिक्तकालिकश्रवणयोगवती तदोत्तरा ग्राह्येत्येवंपरमित्युक्तम् । यदा तूभयत्रोदयकालीनः श्रवणयोगस्तदा पूर्वा ग्राह्या, बहुतरकर्मकालव्यापित्वात् । यदा तु श्रवणनक्षत्रमेकादश्यां भवति न तु द्वादश्यां तदा श्रवणद्वादशीव्रतमेकादश्यामपि कर्तव्यम् । तदुक्तं नारदीये—'यदा न प्राप्यते ऋक्षं द्वादश्यां वैष्णवं क्वचित् । एकादशी तदोपोष्या पापघ्नी श्रवणान्विता । उभयोर्देवता विष्णुः पुराणः पुरुषोत्तमः । विभेदो नैव कर्तव्यो विभेदात्पतते नरः ।' इति । विष्णुपुराणेऽपि—'याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः । तास्वेव तद्व्रतं कुर्याच्छ्रवणे द्वादशीं विना ।' इति । एतावांस्तु विशेषः । श्रवणैकादश्यां वामनावतारः कृष्णपूजा च । श्रवणद्वादश्यां जनार्दनपूजा । विधिस्त्वेक एव । हरिभक्तिविलासेऽयं विशेषः । तथा च कारिका—'एकादश्युपवासे च द्वादश्यां कृष्णमर्चयेत् । प्रादुर्भूतो हि भगवान्द्वादश्यामेव वामनः ।' तथा च मत्स्यपुराणे—'उपोष्यैकादशीं तत्र द्वादश्यामर्चयेद्धरिम्।' इति ।'अतो यदि न लभ्येत मध्याह्ने द्वादशी यदा । द्वादशीमध्य एवार्च्यो वामनस्तर्हि सूरिभिः ।' इति। श्रवणद्वादशीव्रतं श्रवणान्वितायामेकादश्यामपि कर्तव्यं न तु श्रवणरहितायां द्वादश्यामेवेति नियम इत्यर्थः । श्रवणयुतशुद्धैकादश्या अलाभे तु दशमीविद्धापि श्रवणयुता

ग्राह्या । तथा च वह्निपुराणे—'दशम्यैकादशी यत्र सा नोपोष्या भवेत्तिथिः । श्रवणेन तु संयुक्ता सोपोष्या सर्वकामदा' इति। यदा तु एकादशी शुद्धा द्वादशी श्रवणान्विता तदा समर्थेनोपवासद्वयं विधाय त्रयोदश्यां पारणं कर्तव्यम् । तदुक्तं भविष्योत्तरे—एकादशीमुपोष्यैव द्वादशीमप्युपोषयेत् । न चात्र विधिलोपः स्यादुभयोर्दैवतं हरिः ।' इति । पारणमन्तरेणैकादशीव्रतसमाप्तिरूपविधिलोपो न स्यादित्यर्थः । यत्तु विष्णुधर्मे 'पारणान्तं व्रतं ज्ञेयं व्रतान्ते विप्रभोजनम् । असमाप्ते व्रते पूर्वे नैव कुर्याद्व्रतान्तरम्।' इति तदेतदन्यविषयम् । नारदीयपुराणे—'द्वादश्यामुपवासोऽत्र त्रयोदश्यां तु पारणम् । निषिद्धमपिकर्तव्यमित्याज्ञा पारमेश्वरी ।' इति । मार्कण्डेयोऽप्येवम् । निर्णयसिन्धौ—अत्र गौडाः—'शृणु राजन्परं काम्यं श्रवणद्वादशीव्रतम् ।' इति स्थूलशीर्षवचनात्काम्यमेवेदम् । तेनाशक्तस्य नित्यैकादशीव्रतमेवेति मन्यन्ते । 'द्वादश्यामुपवासेन शुद्धात्मा नृप सर्वशः । चक्रवर्तित्वमतुलं संप्राप्नोत्यतुलां श्रियम् ।' इति गौडनिबन्धे मार्कण्डेयोक्तेश्चेति । कालतत्त्वविवेचने—एताश्चाष्टौ द्वादश्यः काम्या एव, नित्यत्वे प्रमाणाभावात्फलश्रवणाच्च । 'न करिष्यन्ति ये लोके द्वादश्योऽष्टौ ममाज्ञया । तेषां यमपुरे वासो यावदाभूतसंप्लवम् ।' इत्यादीनि पद्मपुराणादिनाम्ना केनचिल्लिखितान्यप्यतिप्राचीनवैष्णवग्रन्थेष्वप्यदर्शनादनाकराण्येवेति । कौस्तुभे तु—इदं व्रतं नित्यं काम्यं 'उपवासमकृत्वा तु नरो नरकमृच्छति' इति श्रवणद्वादशीप्रकरणे वामनपुराणादिति । तत्र मूलं मृग्यम् । कृत्यरत्नावल्यां तु— अत्र व्रतं काम्यम् । नित्यमिति केचित् । इत्युक्तम् । यस्तूपवासद्वयासमर्थः यावज्जीवं स्वीकृतैकादशीव्रतश्च, स त्वेकादश्यामुपोष्य श्रवणद्वादश्यां विष्णुपूजां दध्योदनदानादिकं कृत्वा पारणं कुर्यात् । तदुक्तं मत्स्यपुराणे—'द्वादश्यां शुक्लपक्षे तु नक्षत्रं श्रवणं यदि । उपोष्यैकादशीं तत्र द्वादश्यां पूजयेद्धरिम् ।' अस्यार्थः कालतत्त्वविवेचने—हरिपूजामेव कुर्यान्न तूपवासमित्यर्थः । उपवासकरणे तदङ्गहरिपूजायाः प्राप्तत्वादेव तद्विधिवैयर्थ्यादिति । उपवासद्वयासमर्थेन स्वीकृतैकादशीव्रतेन, "काम्यं नित्यस्य बाधकम्" इति न्यायेन श्रवणद्वादश्यामेवोपवासः कर्तव्यः । तदुक्तं नारदीयपुराणे—'उपोष्य द्वादशीं पुण्यां श्रवणर्क्षेण संयुताम् । एकादश्युद्भवं पुण्यं नरः प्राप्नोत्यसंशयम् । वाजपेये यथा यज्ञे कर्महीनोऽपि दीक्षितः । सर्वं फलमवाप्नोति अस्नातोऽप्यहुतोऽपि सन्' इति ।'एवमेकादशीं भुक्त्वा द्वादशीसमुपोषणात् । पूर्ववासरजं पुण्यं सर्वमाप्नोत्यसंशयम् ।' इति । निर्णयसिन्धावपि वामनपुराणे—'एकादश्यां नरो भुक्त्वा द्वादश्यां समुपोषणात् ।व्रतद्वय-

कृतं पुण्यं सर्वमाप्नोत्यसंशयम् ।' इति । दिवोदासीये भविष्यत्पुराणे—'उपवासद्वयं कर्तुं न शक्नोति नरो यदि । प्रथमेऽह्नि फलाहारी निराहारोऽपरेऽहनि ।' इति । उभयदिने श्रवणाभावे तु एकादश्यामुपोष्य द्वादश्यां वामनोत्सवं कुर्यात् । श्रवणयोगाभावे केवलद्वादश्यां व्रतविधानाभावात् । तथा च हरिभक्तिविलासीये कारिका-'दिनद्वयेऽपि श्रवणाभावे तद्योगहानितः । एकादश्यामुपोष्यैव द्वादश्यां वामनं यजेत् ।' पारणे तु उभयान्तो मुख्यः । तदुक्तं स्कन्दपुराणे—'तिथिनक्षत्रनियमे तिथिभान्ते च पारणम् । अतोऽन्यथा पारणायां व्रतभङ्गमवाप्नुयात् ।' उभयान्तालाभे एकतरान्ते वा पारणं कुर्यात् । तदुक्तं हेमाद्रौ मदनरत्ने च नारदीयपुराणे—'तिथिनक्षत्रसंयोगे उपवासो यदा भवेत् । पारणं तु न कर्तव्यं यावदेकस्य संक्षयः ।' इति । इयं बुधवारेऽतिप्रशस्ता । 'श्रवणद्वादशीयोगे बुधवारो यदा भवेत् । अत्यन्तमहती नाम द्वादशी सा प्रकीर्तिता ।' इति विष्णुधर्मोत्तरवचनात् । भाद्रपदे साऽत्यन्तफलदा । तथा च स्कन्दपुराणे—'मासि भाद्रपदे शुक्ले द्वादशी श्रवणान्विता । महती द्वादशी ज्ञेया उपवासे महाफला । बुधश्रवणसंयुक्ता या चैव द्वादशी भवेत् । अत्यन्तमहती तस्यां दत्तं भवति चाक्षयम् ।' इति । अत्र कृत्यं कृत्यरत्नावल्यां ब्रह्मवैवर्तपुराणे । 'बुधश्रवणसंयुक्ता संगमे विजया स्मृता । वारिधानीं प्रदायास्यां दध्योदनसमायुताम् । प्रेतयोनौ न जायेत पूजयित्वाऽत्र वामनम् । वंशः समुद्धृतस्तेन मुक्तः पितृऋणादसौ ।' इति । अत्र तीर्थस्नानादिकमनन्तफलं भवति । तदुक्तं विष्णुधर्मोत्तरे—'भाद्रस्य शुक्लद्वादश्यां नक्षत्रं श्रवणं यदि । तस्यां तीर्थेषु यत्स्नानं तदनन्तफलं भवेत् । देवतापूजनं विप्रभोजनं हवनं तथा । एकजप्यात्सहस्रस्य जपस्य फलमश्नुते । दानं च महदल्पं वा सहस्रगुणितं भवेत् ।' इति । अस्यां बुधसंयोगे संगमस्नानमुक्तं लैङ्गे—'अतः परं तु संसेव्यो गङ्गावरुणसंगमः । श्रवणद्वादशीयोगे बुधवारो यदा भवेत् । तदा तस्मिन्नरः स्नात्वा संनिहत्याफलं लभेत् ।' इति । 'श्राद्धं करोति यस्तत्र तस्मिन्काले यशस्विनि । तारयित्वा पितॄन्सर्वान्विष्णुलोके स गच्छति ।' अथ श्रवणद्वादशीकथा । राम उवाच । 'उपवासासमर्थानां किंचिदेकमुपोषितम् । महाफलं महादेव तन्ममाचक्ष्व पृच्छतः ।' शंकर उवाच । 'श्रीराम श्रवणोपेता द्वादशी महती तु या । तस्यामुपोषितः स्नातः पूजयित्वा जनार्दनम् । प्राप्नोत्ययत्नाद्धर्मज्ञ द्वादशद्वादशीफलम् । दध्योदनयुतं तस्यां जलपूर्णं घटं द्विजे । वस्त्रसंवेष्टितं दत्त्वा छत्रोपानहमेव च । न दुर्गतिमवाप्नोति गतिमग्र्यां च विन्दति । अक्षयं स्थानमाप्नोति नात्र कार्या विचारणा । श्रवणद्वादशीयोगे बुधवारो

भवेद्यदि । अत्यन्तमहती नाम्ना द्वादशी सा प्रकीर्तिता । स्नानं जप्यं तथा दानं होमः श्राद्धं सुरार्चनम् । सर्वमक्षयमाप्नोति तस्यां भृगुकुलोद्वह । तस्मिन्दिने तथा स्नातो यत्र क्वचन संगमे । स गङ्गास्नानजं राम फलं प्राप्नोत्यसंशयम् । श्रवणे संगमाः सर्वे परं पुष्टिप्रदाः सदा । विशेषाद्द्वादशीयुक्ते बुधयुक्ते विशेषतः । तथैव द्वादशी प्रोक्ता बुध श्रवणसंयुता । तृतीया च तथा प्रोक्ता सर्वकामफलप्रदा ।' इति विष्णुधर्मोत्तरोक्तश्रवणद्वादशीव्रतम् ।

अथ भविष्योत्तरोक्तं श्रवणद्वादशीव्रतम् । 'उपवासासमर्थानां सदैव पुरुषोत्तम । एका या द्वादशी पुण्या तां वदस्व ममानघ ।' श्रीकृष्ण उवाच । 'मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता । सर्वकामप्रदा पुण्या उपवासे महाफला । संगमे सरितां स्नात्वा द्वादशीं समुपोषितः । समग्रं समवाप्नोति द्वादशद्वादशीफलम् । बुधश्रवणसंयुक्ता सैव चेद्द्वादशी भवेत् । अतीव महती तस्यां सर्वं व्रतमिहाक्षयम् । द्वादशी श्रवणोपेता यदा भवति भारत । संगमे सरितां स्नात्वा गङ्गादिस्नानजं फलम् । सोपवासः समाप्नोति नात्र कार्या विचारणा। जलपूर्णं तथा कुम्भं स्थापयित्वा विचक्षणः । पञ्चरत्नसमोपेतं सोपवीतं सुपूजितम् । तस्य स्कन्धे सुघटितं स्थापयित्वा जनार्दनम् । यथाशक्त्या स्वर्णमयं शंखशार्ङ्गासिभूषितम् । स्नापयित्वा विधानेन सितचन्दनचर्चितम्। सितवस्त्रयुगच्छन्नं छत्रोपानद्युगान्वितम् । ॐ नमो वासुदेवाय शिरः संपूजयेत्ततः । श्रीधराय मुखं तद्वद्वैकुण्ठाय दृशो नमः । नमः श्रीपतये वक्त्रं भुजौ सर्वास्त्रधारिणे । व्यापकाय नमः कुक्षौ केशवायोदरं नमः । त्रैलोक्यजनकायेति मेढ्रं संपूजयेद्धरेः । सर्वाधिपतये जङ्घे पादौ सर्वात्मने नमः । अनेन विधिना राजन्पुष्पधूपैः समर्चयेत् । ततस्तस्याग्रतो देयं नैवेद्यं घृतपाचितम् । सोदकांश्च नवान्कुम्भाञ्छक्त्या दद्याद्विचक्षणः । एवं संपूज्य गोविन्दं जागरं तत्र कारयेत् । प्रभाते विमले स्नात्वा संपूज्य गरुडध्वजम् । पुष्पधूपादिनैवेद्यैः फलैर्वस्त्रैः सुशोभनैः । पुष्पाञ्जलिं ततो दत्त्वा मन्त्रमेतमुदीरयेत् । नमो नमस्ते गोविन्द बुधश्रवणसंज्ञक । अघौघसंक्षयं कृत्वा सर्वसौख्यप्रदो भव । अनन्तरं ब्राह्मणे तं वेदवेदाङ्गपारगे । पुराणज्ञे विशेषेण विधिवत्संप्रदापयेत् । प्रीयतां देवदेवेशो मम संकष्टनाशनः।अनेनैव विधानेन नद्यास्तीरे नरोत्तम । सर्वं निर्वर्तयेत्सम्यगेकभक्तरतोऽपि सन् ।' अर्घ्यदानं भक्तिचन्द्रोदये— 'शंखचक्रगदापद्मशरशार्ङ्गविभूषित । गृहाणार्घ्यं मया दत्तं शार्ङ्गपाणे नमोऽस्तु ते ।' इति भविष्योत्तरपुराणोक्तं श्रवणद्वादशीव्रतम् ।

अथ वामनपुराणोक्तं श्रवणद्वादशीव्रतम् । अगस्त्य उवाच । 'श्रूयतां कथयिष्यामि कथां पापप्रणाशिनीम् । पुरा त्रेतायुगस्यादौ यथावृत्तं तपोधन । मरुदेश इति ख्यातो देशो वै ब्राह्मणः सुन । शाकलंनामनगरं ख्यातं स्थानीयमुत्तमम् । तस्मिन्विपणिवृत्तिस्थः सुधर्माख्योऽभवद्वणिक । धनाढ्यो गुणवान्भोगी नानाशास्त्रविशारदः । स चैकदा निजाद्राष्ट्रात्सुराष्ट्रं गन्तुमुद्यतः । सार्थेन महता युक्तो नानाविपणपण्यवान् । गच्छतः पथि तस्याथ मरुभूमौ कलिप्रियः । अभवद्दैस्युतोत्पन्नः अवस्कन्दोऽतिदुःसहः । ततः स हृतसर्वस्वो वणिग्दुःखसमन्वितः । असहायो मरौ तस्मिंश्चचारोन्मत्तवद्वशी । चरता तदरण्यं वै दुःखाक्रान्तेन नारद । आत्मा इव शमी वृक्षो मरावासादितः शुभः । तं मृगैः पक्षिभिश्चैव हीनं दृष्ट्वा शमीतरुम् । श्रान्तः क्षुत्तृट्परीतात्मा तस्याधः समुपाविशत् । सुनश्चापि सुविश्रान्तो मध्याह्ने पुनरुत्थितः । समपश्यत्तथायान्तं प्रेतं प्रेतशतैर्वृतम् । उह्यमानं तमथान्येन प्रेतेन प्रेतनायकम् । पिण्डाशिभिश्च पुरतो धावद्भी रूक्षविग्रहैः । अथाजगाम प्रेतोऽसौ पर्यटित्वा वनानि च । उपगम्य शमीमूले वणिक्पुत्रं ददर्श सः । स्वागतेनाभिवाद्यैनं समाभाष्य परस्परम् । उपोपविष्टश्छायायां पृष्ट्वा कुशलमात्मवत् । ततः प्रेताधिपतिना पृष्टः स तु वणिक्सखे । कुत आगम्यते ब्रूहि क्व साधो वा गमिष्यसि । कथं चेदं महारण्यं मृगपक्षिविवर्जितम् । समापन्नोऽसि भद्रं ते सर्वमाख्यातुमर्हसि । एवं प्रेताधिपतिना वणिक्पृष्टः समाहितः । सर्वमाख्यातवान्ब्रह्मन्स्वदेशधनविच्युतिम् । तं च श्रुत्वा स वृत्तान्तं तस्य दुःखेन दुःखितः । वणिक्पुत्रं वचः प्राह प्रेतपालः स वल्गितः । एवं गतेऽपि मा शोकं कर्तुमर्हसि सुव्रत । भूयोऽप्यर्था भविष्यन्ति यदा भाग्यफलं तव । भाग्यक्षयेऽथ क्षीयन्ते भवन्त्यभ्युदये पुनः । क्षीणस्यास्य शरीरस्य चिन्तया नो भयं भवेत् । इत्युच्चार्य समाहूय स्वान्भृत्यान्वाक्यमब्रवीत् । अद्यातिथिरयं पूज्यः सह देश्यजनैर्मम । अस्मिन्दृष्टे वणिक्पुत्रे यथा स्वजनदर्शनम् । अस्मिन्समागते प्रेताः प्रीतिर्जाता ममातुला । एवं हि वदतस्तस्य मृत्पात्रं सुनवं दृष्टम् । दध्योदनेन संपूर्णमाजगाम यथेप्सितम् । तथा न वा च सुदृढा संपूर्णा परमाम्भसा । वारिधानी च संप्राप्ता प्रेतानामग्रतः स्थिता । तदागतं ससलिलमन्नं वीक्ष्य महामतिः । प्राहोत्तिष्ठ वणिक्पुत्र स्वमाह्निकमुपाचर । ततस्तौ वारिवाहिन्यां सलिलेन विधानतः । कृताह्निकावुभौ जातौ वणिक्प्रेतपतिस्तदा । ततो वणिक्सुत आदौ

---

१—स्थानीयं स्थित्यै हितम । २—विपणिः पण्यवीथिका तस्या वृत्तिर्विक्रयरूपा तत्र स्थित । ३—संधिरार्षः ।

दध्योदनमथेच्छया । दत्त्वा तेभ्यश्च सर्वेभ्यः प्रेतेभ्योऽप्यददात्ततः । भुक्तवत्सु च सर्वेषु कामतोऽम्भसि सेविते । अनन्तरं च बुभुजे प्रेतपालो वराशनम् । प्रकामतृप्ते प्रेते तु वारिधान्योदनस्ततः । अन्तर्धानमगाद्ब्रह्मन्वणिक्पुत्रस्य पश्यतः । ततस्तदद्भुततमं दृष्ट्वाऽसौ मतिमान्वणिक् । पप्रच्छ तं प्रेतपालं कौतूहलमना वशी । अरण्ये निर्जले देशे कुतोऽन्नस्य समुद्भवः । कुतस्तु वारिधानीयं संपूर्णा परमाम्भसा । तथा वीतभया भृत्यास्ते ध्वस्ता वर्णतः कृशाः । भवानपि च तेजस्वी किंचित्पुष्टवपुः शुभः । शुक्लवस्त्रपरीधानो बहूनां परिपालकः । सर्वमेतन्ममाचक्ष्व को भवान्का शमी त्वियम् । इत्थं वणिक्सुतवचः श्रुत्वाऽसौ प्रेतनायकः । शशंस सर्वं तस्याथ यद्वृत्तं च पुरातनम् । अहमासं पुरा विप्र शाकले नगरोत्तमे । सोमशर्मेति विख्यातो बहुलागर्भसंभवः । ममास्ति च वणिक्छ्रीमान्प्रीतिवश्यो महाधनः । स तु सोमश्रवा नाम विष्णुभक्तो महायशाः । सोऽहं कदर्यो मूढात्मा धनेऽपि सति दुर्मतिः । न ददामि द्विजातिभ्यो न चाश्नाम्यन्नमुत्तमम् । प्रमोदाद्यदि भुञ्जेऽहं दधिक्षीरघृतान्वितम् । ततो रात्रौ नृभिर्घोरैस्ताड्यते मम विग्रहः । प्रातर्भवति मे घोरा मृत्युतुल्या विषूचिका । न च कश्चिन्ममाभ्याशे तत्र तिष्ठति बान्धवः । कथं कथमपि प्राणा मया संप्रतिधारिताः । एवमेतादृशः पापो निवसाम्यतिनिर्घृणः । [१]सौवीरतिलपिण्याकसक्तुशाकादिभोजनैः । क्षपयामि कदन्नाद्यैरात्मनः कालयापनम् । एवं तत्र सतो मह्यं महान्कालोऽभ्यगादथ । श्रवणद्वादशी नाम मासि भाद्रपदेऽभवत् । तत्रनागरिकोलोको गतः स्नातुं च संगमे । ऐरावत्या नड्वलाया ब्रह्मक्षत्रपुरःसरः । प्रातिवेश्यप्रसङ्गेन तत्र स्नातुं गतोऽस्म्यहम् । कृतोपवासः शुचिमानेकादश्यां यतव्रतः । ततः संगमतोयेन वारिधानीं नवां दृढाम् । संपूर्णां वस्त्रसंवीतां छत्रोपानहसंयुताम् । मृत्पात्रमभिमृष्टस्य पूर्णं दध्योदनस्य वै । प्रदत्तं ब्राह्मणेन्द्राय शुचये ज्ञानधर्मिणे । तदेकं जीवता दत्तं मया दानं वणिक्सुत । वर्षाणां सप्ततीनां वै नान्यद्दत्तं हि किंचन । मृतः प्रेतत्वमापन्नो दत्त्वा प्रेतानिमानपि । अमी चानन्नदा नित्यं ममान्नाद्योपजीविनः । एतत्ते कारणं प्रोक्तं यद्दत्तं तु सहाम्भसा । दत्तं तदिदमायाति मध्याह्नेऽपि दिने दिने । यावच्चान्नं न भुञ्जेऽहं न तावत्क्षयमेति वै । मयि भुक्ते च पीते च सर्वमन्तर्हितं भवेत् । यच्चातपत्रमददां सोऽयं जातः शमीतरुः । उपानद्युगले दत्ते प्रेतो मे वाहनोऽभवत् । इदं तवोक्तं सर्वं हि मया ज्ञानवतात्मनः । श्रवणद्वादशी पुण्या तवोक्ता पुण्यवर्धिनी । इत्येवमुक्ते वचने वणिक्पुत्रोऽब्रवीद्वचः । यन्मया तव कर्तव्यं तदनुज्ञातुमर्हसि । ततस्तस्य वचनं श्रुत्वा वणिक्पुत्रस्य नारद । प्रेतपालो वचः प्राह स्वार्थसिद्धिकरं ततः ।

१—सौवीरं काञ्जिकम् । २—जातानिति शेषः ।

यत्त्वया तात कर्तव्यं मद्धितार्थं महामते । कथयिष्यामि तत्सम्यक्तव श्रेयस्करं मम । गयायां तीर्थजुष्टायां स्नात्वा शौचसमन्वितः । मम नाम समुद्दिश्य पिण्डनिर्वापणं कुरु । तत्र पिण्डप्रदानेन प्रेतभावादहं सखे । मुक्तः सन्सर्वदातॄणां यास्यामि सहलोकताम् । या चेयं द्वादशी पुण्या मासि प्रौष्ठपदे सिता । मधुश्रवणसंयुक्ता सा ते श्रेयस्करी स्मृता । इत्येवमुक्त्वा तु वचः प्रेतराजोऽनुगैः सह । स्वनामानि यथान्यायं सम्यगाख्यातवाञ्छुचिः । प्रेतस्कन्धं समारोप्य त्याजितो मरुधन्वकम् । रम्येऽथ शूरसेनाख्ये देशे प्राप्तः स वै वणिक् । स कर्मधर्मयोगेन धनमुच्चावचं बहु । उपार्जयित्वा प्रययौ गयातीर्थमनुत्तमम् । पिण्डनिर्वापणं तत्र प्रेतानामनुपूर्वशः । चकारस्वपितॄणांच दायादानामनन्तरम् । आत्मनश्च महाबुद्धिर्महाबोधस्तिलैर्विना। पिण्डनिर्वापणं चक्रे तथान्येषां सगोत्रिणाम् । एवं प्रदत्तेष्वथ वै पिण्डेषु प्रेतभावनः । विमुक्तास्ते द्विज प्रेता ब्रह्मलोकं ततो गताः । स चापि हि वणिक्पुत्रो निजमालयमाव्रजत् । श्रवणद्वादशीं कृत्वा कालधर्ममुपेयिवान् ।गन्धर्वलोके सुचिरं भोगान्भुक्त्वा सुदुर्लभान् । मानुषं जन्म चासाद्य स बभौ शाकले विराट् । स्वकर्मधर्मवृत्तिस्थः श्रवणद्वादशीरतः । कालधर्ममवाप्यासौ गुह्यकावासमाश्रयत् । तत्रोष्य सुचिरं कालं भोगान्भुक्त्वाथ कामतः । मर्त्यलोकमथ प्राप्य राजन्यतनयोऽभवत् । तत्रापि क्षत्रवृत्तिस्थो दानभोगरतो वशी । गोग्रहेऽरिगणाञ्जित्वा कालधर्ममुपेयिवान् । शक्रलोकं च दुःप्रापं देवैःसर्वैः सुपूजितम् । पुण्यक्षयात्परिभ्रष्टः शाकले चाभवद्द्विजः। ततो विकटरूपोऽसौ सर्वशास्त्रार्थपारगः । व्यवाहयद्द्विजसुतां रूपेणानुपमां द्विज । सा तु एनं च भर्तारं सुशीलमपि भामिनी। विरूपमिति मन्वाना ततः सोऽभूत्सुदुःखितः । ततो निर्वेदसंयुक्तो गत्वाश्रमपदं महत् । ऐरावत्यास्तटे धीमांश्चक्रधारिणमासदत् । तमाराध्य जगन्नाथं नक्षत्रपुरुषेण[1] हि । सुरूपतामवाप्याग्र्यामस्मिन्नेव च जन्मनि । ततः प्रियोऽभूद्भार्याया भोग्येऽतीवाभवद्वशी । श्रवणद्वादशीयुक्तः पूर्वाभ्यासादजायत । एवं पुराऽसौ द्विजपुङ्गवस्तु कुरूपरूपो भगवत्प्रसादात् । अनङ्गरूपप्रतिमो बभूव मृतश्च राजा स पुरूरवाभवत् ।' इति वीरमित्रोदये वामनपुराणोक्तं श्रवणद्वादशीव्रतम् ।

अथोद्यापनम् । 'उपोषितो नरो भक्त्या स्थापयेत्प्रतिमाग्रतः । कृत्वा सौवर्णिकं देवं वामनं तमथाव्ययम् । गन्धैः पुष्पैस्तथा धूपैर्नैवेद्यैर्विविधैरपि । ततस्तस्य

---

१—नक्षत्रपुरुषेण व्रतविशेषेण ।

समीपे तु दधिभक्तघटं न्यसेत् । करकः पुरतः स्थाप्यो गन्धो दधिसमन्वितः । छत्रं च साक्षसूत्रं च सुयष्टिं कुण्डिकां तथा । न्यसेत्तस्य समीपे तु शुचिः शुद्धेन चेतसा । नैवेद्यैर्विविधैर्भक्ष्यैः सर्वतस्तं प्रपूजयेत् । पुष्पमण्डपिकां कृत्वा जागरं तत्र कारयेत् । शंखतूर्यरवैर्घोषैर्ब्रह्मघोषादिमिश्रितैः । एवं जागरणं कृत्वा प्रभाते विमले जले । स्नानादिकं विधायाथ होमं कुर्यात्तिलैः सह । पूजां च पूर्ववत्कृत्वा वामनस्य समीपतः । दद्यात्तद्द्विजवर्याय वामनं तिलसंस्थितम् । वामनो बुद्धिदो दाता द्रव्यस्थो वामनः स्वयम् । वामनोऽस्य प्रतिग्राही तेन वामन ते नमः । वामनः प्रतिगृह्णाति वामनो वै ददाति च । वामनस्तारकोभाभ्यां तेन वामन ते नमः ।' इति दान प्रतिग्रहमन्त्रौ। अत्र प्रतिमाग्रत इत्युपवासदिने श्रवणद्वादशीव्रतान्तत्वेन प्रतिमान्तरस्थापनं, यस्याः प्रतिमायाः पूजनं कृतं तदग्रे उपवासदिन एवोद्यापनाङ्गत्वेन प्रतिमान्तरस्थापनं, यस्याः प्रतिमायाः पूजनं कृतं तदग्रे उपवासदिन एवोद्यापनाङ्गत्वेन प्रतिमान्तरस्थापनं रात्रौ पूजान्तरं विधातुमुच्यते । उपोषित इति चाशक्तस्यापि दिवाहारवर्जनं रात्रिपूजाङ्गत्वेन कथ्यते इति द्रष्टव्यम् । एवं जागरणं कृत्वेति श्लोके पूर्वकृतनित्यस्नानादिभिन्नं वक्ष्यमाणहोमाङ्गत्वेन स्नानवासःपरिधानादि विधीयते । उद्यापनाङ्गत्वेन जागरणतुल्यतां दर्शयितुं तदनुवादः । तिलैः सहेति पायसस्याक्षतानां चेति शेषः । पौरुषेण तु सूक्तेन पायसं होमयेत्सुधीः । पश्चात्तिलाक्षतांश्चैव पूर्णाहुत्यां समन्वितः । दद्यात्तु द्विजवर्याय वामनं विमलं स्थितम् ।' इति शास्त्रान्तरसंप्रवादात् । अथ प्रयोगः । भाद्रपदशुक्लद्वादश्यां संगमे स्नात्वा गृहमागत्य श्रवणद्वादशीप्रयुक्तं विष्णुपूजनं कृत्वाश्रवणद्वादशीव्रताङ्गत्वेनोद्यापनं करिष्ये इति संकल्प्य तदङ्गत्वेन गणेशपूजनाद्याचार्यवरणान्तं कुर्यात् । यथाविभवं तत्पूजनं च । आचार्यो हेमवामनप्रतिमायामग्न्युत्तारणं कुर्यात् । यथाविभवं तत्पूजनं च । सायं संध्योत्तरपूर्वपूजितप्रतिमाग्रे पुष्पमण्डपिकायां सर्वतोभद्रादिमण्डलस्थकलशोपरि वामनप्रतिमायाम् ॐ वामनायनम इति मन्त्रेण सहस्रशीर्षेत्यादिमन्त्रसहितेन षोडशोपचारैः संपूजयेत् । तत्र नैवेद्यं बहुविधं प्रदर्शयेत् । पूजान्ते देवस्य पुरतः दधिघटगन्धोदकपूर्णकरकं छत्रादि च सादयेत् । ततो नानावाद्यघोषैश्च जागरणं कुर्यात् । सर्वप्रहरेषु नानाविधभक्ष्यैर्नैवेद्यसमर्पणं कुर्यात् । प्रातर्नित्यस्नानहोमौ विधाय पुनः स्नात्वा धौतवासास्तिलकधारणं कृत्वा उद्यापनाङ्गहोमं संकल्पयेत् । आचार्यो यदत्र संस्थितमिति सर्षपविकिरणप्रोक्षणादिदेशशुद्धिं विधाय होमाङ्गत्वेन स्थण्डिलेऽग्निं प्रतिष्ठाप्यैशान्यां देशे वरुणपूजना-

१—शिक्यं कुण्डिकापदार्थः ।

न्तग्रहपूजनं कृत्वाऽग्नेः पश्चिमदेशे उपविश्य ग्रहोद्देशेनान्वाधानेऽर्कादिसमिच्चर्वाज्यानि संकीर्त्य पुरुषं नारायणं षोडशपायसाहुतिभिः षोडशतिलाक्षताहुतिभिः शेषेण स्विष्ट-कृतमित्यादि अत्र पात्रासादनं प्रणीतानिधानान्ते आज्यनिर्वापः गृहसिद्धपायसेन सह तिलैर्यवतण्डुलैश्च आज्यपर्यग्निकरणं संमार्गान्ते पायसमग्नावधिश्रित्याभिधार्योदगुद्वास्या ज्यदक्षिणे आसाद्याग्र्यर्चनादिआज्यभागान्ते यथान्वाधानं त्यागः प्रायश्चित्तान्ते बलि-दानपूर्णाहुतीः, ततः पूर्णपात्रनिनयनं संस्थाप्य परिस्तरणविसर्जनाग्न्यर्चना । ततो वरुण-कलशोदकेन यजमानाभिषेकः । आचार्याय धेनुदानम् । ततो वामनस्य ग्रहाणां चोत्तर-पूजनम् । अन्ते ताः प्रतिमा आचार्यहस्ते प्रतिपाद्य ब्राह्मणभोजनसंकल्पेश्व-रार्पणं कुर्यात् इति श्रवणद्वादशीव्रतोद्यापनम् । श्रवणद्वादश्यां जनार्दनो नाम विष्णुः पूजनीय इत्यनन्तभट्टोक्तनिर्णयसिन्धौ । कटिपरिवर्तनोत्सवस्तु एकादश्यां कर्तव्याधिवासप्रसङ्गादेकादशीप्रकरणे एवोक्तः । वामनपूजनमपि तत्रैव ज्ञेयम् । अस्यामेव दुग्धव्रतसंकल्पः । तदुक्तम्—'दुग्धमाश्वयुजे मासि' इति । दुग्धव्रते पायसादिकं वर्ज्यम् । दधिघृतादयस्तु ग्राह्या एव । नन्वेवम् 'संधि-न्यनिर्दशावत्सागोपयः परिवर्जयेत् । इति संधिन्यादिक्षीरनिषेधेऽपि दध्यादि ग्राह्यं स्यादिति चेत् । तत्र वाचनिकनिषेधसत्त्वात् । तदाहापरार्के शंखः—'क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः । सप्तरात्रव्रतं कुर्यात्प्रयत्नेन समाहितः ।' इति । 'व्रतं गोमूत्रयावकम्' इति निर्णयसिन्धौ दीक्षितीये च । इति भाद्रपदशुक्लद्वादशी ।

अथाश्विनकृष्णद्वादश्यां संन्यासिनां महालयश्राद्धं कर्तव्यम् । तदुक्तं मदन-पारिजाते वायुपुराणे—'संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद्यथाविधि । महालये तु यच्छ्राद्धं द्वादश्यां पार्वणेन तु ।' इति । पृथ्वीचन्द्रोदये संग्रहेऽपि—'यतीनां च वनस्थानां वैष्णवानां विशेषतः । द्वादश्यां विहितं श्राद्धं कृष्णपक्षे विशेषतः ।' इति ।

आश्विनशुक्लद्वादश्यां पद्मपूजोक्ता निर्णयामृते वराहपुराणे—'सम्यगाश्वयुजे मासि द्वादश्यां शुक्लपक्षके । संकल्प्याभ्यर्चयेद्देवं पद्मनाभं सनातनम् ।' इति । आ-श्विनशुक्लद्वादशीमारभ्यारुणोदये जागरं कुर्यात् । तदुक्तं रामार्चनचन्द्रिकायाम् । 'आरभ्यैकादशीं शुक्लामाश्विनस्य तु जागरम् । प्रबोध्य देवं कुर्वीत स्कन्दवाक्याद्द्विजोत्तमः । जागरं कार्तिके मासि यः करोत्यरुणोदये । दामोदराग्रे विप्रेन्द्र गोसहस्रफलं लभेत ।' इत्याश्विनशुक्लद्वादशीकृत्यम् ।

**अथ कार्तिककृष्णद्वादश्यां गोवत्सद्वादशीव्रतम्।** तत्प्रदोषव्यापिन्यां कार्यम्। 'नरो वा यदि वा नारी नक्तं संकल्प्य चेतसि' इत्युपक्रम्य 'माषान्नंकामतोऽश्नीयाद्रात्रौ विगतमत्सरः' इत्यन्ते च भोजनपरामर्शात्। 'प्रतीक्षेतागमं भक्त्या गवां गोध्यानतत्परः' इति गोष्ठागतासु संध्यायां गोपूजाविधानाच्च दिनद्वयं प्रदोषसत्त्वे च पूर्वा कार्या। 'वत्सपूजा वटश्चैव कर्तव्या प्रथमेऽहनि' इति स्मृत्यन्तरात्। 'वत्सस्य पूजा शिवरात्रिरेषा परा विनिघ्नंति नृपं सराष्ट्रम्' इति वचनेनोत्तरविद्धानिषेधागमवाक्याच्च। तत्र कृत्यं मदनरत्ने— **भविष्योत्तरे**—'सवत्सां तुल्यवर्णां च शालिनीं गां यशस्विनीम्। चन्दनादिभिरालिप्य पुष्पमालाभिरर्चयेत्। अर्घ्यं ताम्रमये पात्रे कृत्वा पुष्पाक्षतैस्तिलैः। चन्दनैः कुङ्कुमैर्गन्धैः पुष्पैः कालोद्भवैस्तथा। पादमूले तु दद्याद्वै मन्त्रेणानेन पाण्डव। माता रुद्राणामित्येष मन्त्रः प्रोक्तो द्विजन्मनाम्।' ( माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः। प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ) 'स्त्रीशूद्राणां महाबाहो मन्त्रोऽयं परिकीर्तितः। क्षीरोदार्णवसंभूते सरासुरनमस्कृते। सर्वदेवमये मातर्गृहाणार्घ्यं नमोऽस्तु ते। ततो माषादिसंसिद्धान्वटकांश्च निवेदयेत्। पञ्च सप्त दशकं वा यथाविभवमात्मनः।' तत्र मन्त्रः—'सुरभिस्त्वं जगन्मातर्नित्यं विष्णुपदे स्थिता। सर्वदेवमये ग्रासं मया दत्तमिदं ग्रस।' प्रार्थनामन्त्रः—'सर्वदेवमये देवि सर्वदेवैरलंकृते। मातर्ममाभिलषितं सफलं कुरु नन्दिनि। तद्दिने तैलपक्वं च स्थालीपाकं युधिष्ठिर। गोक्षीरं गोघृतं चैव दधि तक्रं च वर्जयेत्।' इति गोवत्सद्वादशीव्रतम्।

**अथ भविष्योत्तरोक्ता गोवत्सद्वादशीकथा।** युधिष्ठिर उवाच। 'अक्षौहिण्यो दशाष्टौ च मम ह्यर्थे क्षयं गताः। तेन पापेन मे चित्ते जुगुप्साऽतीव जायते। तत्र ब्राह्मणराजन्या वैश्याः शूद्रादयो हताः। भीष्मद्रोणकलिङ्गादिकर्णशल्यसुयोधनाः। तेषां वधेन यत्पापं तन्मे मर्माणि कृन्तति। पापप्रक्षालनं किंचिद्व्रतं ब्रूहि जनार्दन।' श्रीकृष्ण उवाच। 'महापुण्यव्रतं स्त्रीणां गोवत्सद्वादशी व्रतम्। अस्त्यत्र भुवने पार्थ महापातकनाशनम्। गोरूपिणी पुरा देवी पूजिता ब्रह्मवादिभिः। सवत्सा कार्तिके मासिकृष्णपक्षेयुधिष्ठिर। द्वादश्यांभक्तियुक्तैस्तैर्नन्दिनीनाम नामतः। ततःप्रभृति राजेन्द्र प्रथिता पृथिवीतले। उत्तानपादेन तदा व्रतं चीर्णं महाफलम्। उत्तानपादनामासीत्क्षत्रियःक्षितिभूषणम्। तस्य भार्याद्वयं चासीद्रुचिःशुद्धीति विश्रुतम्। शुद्ध्यां जातो ध्रुवः पुत्रो बालः पादचरो यदा। रुच्या समर्पितः शुद्ध्या बालोऽयं रक्षतामिति। अहं करिष्ये शुश्रूषां शुचिस्तद्गतमानसा। रुचिः सौभाग्यमासाद्य सुखमास्ते गृहे सदा।

करोति भर्तृशुश्रूषां सा तु नित्यं पतिव्रता । कदाचित्क्रोधमासाद्य सापत्न्यं जनितं तया । स्वयं रुच्या निहत्यासौ पार्थः खण्डदलीकृतः । पक्वः सुसंस्कृतः स्थाल्यामाहारार्थं नृशंसया। ततो भोजनवेलायां दत्तोऽसौ नृपतेः स्वयम् । तस्याथ भोक्तुकामस्य ध्रुवो जीवनमाप्तवान् । तथैवापहतो राजन्मातुरुत्सङ्गगोऽभवत् । तद्दृष्ट्वा महदाश्चर्यं शुग्व्रीं पप्रच्छ सस्मिता । किमेतद्ब्रूहि वृत्तान्तं यस्येयं व्युष्टिरुत्तमा । किं त्वया चरितं भद्रे व्रतं दानं तपस्तथा । सत्यं मे कथयाद्य त्वं येन ते जीवितः सुतः । मयाऽयं सप्तवारांस्तु निहत्य शकलीकृतः । पक्वः सुसंस्कृतः स्थाल्यां व्यञ्जनैः सह भोजने । पात्रे दत्तः पुनश्चैष जीवत्येव हि ते सुतः।किं ते सिद्धा महाविद्या मृतसंजीविनी तु या। मणिमन्त्रं महायन्त्रमथवाञ्जनमौषधम्। कथयस्व महाभागे वेपथुर्हृदये मम।' श्रीकृष्ण उवाच— 'एवमुक्ता तु सा शुग्व्री तामुवाच यशस्विनीम् । भद्रे न दत्तं न हुतं तपस्तप्तं मय तथा।सिद्धा न काचिद्विद्या मे न मन्त्रौषधिवेदिनी। किं तु चीर्णं मया भद्रे गोवत्स-द्वादशीव्रतम् । व्रतस्यास्य प्रभावेण पुनर्जीवति मे सुतः। वत्सो मे वत्सवेलायामतोऽर्थे क्रियते सदा। समागमश्च भवति पुत्रैर्मृतशतैरपि। यथावत्ते समाख्यातं त्वमप्येतत्समाचर । तवापि रुचिरः पुत्रो भविष्यति यथा मम । एवमुक्ते व्रतं चीर्णं रुच्या पुत्रधनेच्छया । अवाप सोत्तमं पुत्रं मनुवंशविवर्धनम् ।' युधिष्ठिर उवाच—'विधानं सम्यगाख्याहि गोद्वादश्या ममानघ । यत्कृतं शुग्व्रीवचसा रुच्या यदुकुलोद्भव ।' श्रीकृष्ण उवाच— 'संप्राप्ते कार्तिके मासि कृष्णपक्षे कुरूत्तम । द्वादश्यां कृतसंकल्पः स्नात्वा पुण्यजलाशये।' नरो वा यदि वा नारी नक्तं संकल्प्य चेतसि । ततो मध्याह्नसमये कृत्वा देवार्चनादिकम् । प्रतीक्षेतागमं भक्त्या गवां गोध्यानतत्परः । सवत्सां तुल्यवर्णां च शालिनीं चन्दनादिभिः । आलभ्य पुष्पमालाभिरर्चयेद्गां पयस्विनीम् । कुङ्कुमालक्तकैर्दीपैर्धूपगन्धैः सुगन्धिभिः । अर्घ्यं ताम्रमये पात्रे कृत्वा पुष्पाक्षतैस्तिलैः । चन्दनैः कुङ्कुमैर्गन्धैः पुष्पैः कालोद्भवैस्तथा । पादमूले तु दातव्यो मन्त्रेणानेन पाण्डव । माता रुद्राणामित्येष मन्त्रः प्रोक्तो द्विजन्मनाम् । स्त्रीशूद्राणां महाबाहो मन्त्रोऽयं परिकीर्तितः । क्षीरोदार्णवसंभूते सुरासुरनमस्कृते । सर्वदेवमये मातर्गृहाणार्घ्यं नमो नमः। दत्त्वार्घ्यं तज्जलं पुण्यं साक्षतं मूर्ध्नि निक्षिपेत्। ततो माषादिसंसिद्धान्वटकांश्च निवेदयेत्। पञ्च सप्त दशैकं वा यथाविभवमात्मनः। सुरभिस्त्वं जगन्मातर्देवि विष्णुपदे स्थिता । सर्वदेवमये ग्रासं मया दत्तमिमं ग्रस। दत्तार्घ्यो दत्तनैवेद्यः

कृतपूजः सुसंयतः। प्रार्थयेदाशिषं प्राज्ञो बद्ध्वाग्रे करसंपुटम्। सर्वदेवमये देवि सर्वदेवैरलंकृते। मातर्ममाभिलषितं सफलं कुरु नन्दिनि। एवमभ्यर्च्य विधिवत्स्तुत्वा दत्त्वा गवाह्निकम्। पर्युक्ष्य वारिणा भक्त्या प्रणम्याथ पुनः पुनः। तद्दिने तैलपक्कं च स्थालीपक्कं च वर्जयेत्। गोक्षीरं गोघृतं चैव दधि तक्रं च वर्जयेत्। माषान्नं कामतोऽश्नीयाद्रात्रौ विगतमत्सरः। भूमौ स्वपेद्ब्रह्मचारी शृणुयात्पुण्यमाप्नुयात्। यावन्ति काये रोमाणि गवां कौरवनन्दन। तावद्दिनानि गोलोके मोदते पूजितोऽमरैः। नारी वा कुरुते या तु व्रतमेतद्युधिष्ठिर। ऊर्जस्थिते द्विदशमेऽह्नि च गां सवत्सां याः पूजयन्ति वटकैः कुसुमैश्च हृद्यैः। ताः सर्वकामसुखभोगविभूतिभाजो मर्त्ये वसन्ति सुचिरं नृप जीववत्साः।' इति भविष्योत्तरोक्तं गोवत्सद्वादशीव्रतम्।

अथ कार्तिककृष्णद्वादश्यां भविष्योत्तरोक्तं नीराजनद्वादशीकृत्यम्। हेमाद्रावाग्नेये—'कार्तिकः खलु मासो वै सर्वदेवमयो महान्। कृष्णपक्षे विशेषेण तत्र पञ्च दिनानि तु। पुण्यानि तेषु यद्दत्तमक्षयं सर्वकामिकम्।' नारद उवाच—'आश्विने कृष्णपक्षे तु द्वादश्यादिषु पञ्चसु। तिथिषूक्तः सर्वरात्रौ नृणां नीराजनाविधिः। निराजयेयुर्देवांश्च विप्रांश्चैव तुरङ्गमान्। ज्येष्ठाज्येष्ठांस्तदन्यांश्च मातृमुख्याश्च योषितः।' आश्विनग्रहणं मुख्यचान्द्राभिप्रायेण।

अथ कार्तिकशुक्लद्वादश्यां कर्तव्यं नीराजनद्वादशीव्रतम्। युधिष्ठिर उवाच—'कस्मिन्काले प्रकर्तव्यं यत्कृतं रावणेन वै। नीराजनं समाख्याहि सविधानं समन्त्रकम्।' कृष्ण उवाच—'कार्तिके शुक्लपक्षस्य द्वादश्यां रजनीमुखे। सुतोत्थिते जगन्नाथे स्नात्वा शुक्लाम्बरः शुचिः। जनयित्वा नवं वह्निं हुत्वा मन्त्रैर्द्विजोत्तमैः। वर्धमानतरूत्थाभिर्दीपिकाभिर्हुताशनम्। कृत्वा महाजनः सर्वो हरिं नीराजयेच्छनैः। पुष्पैरभ्यर्चयेद्देवं समालिप्य च चन्दनैः। बदरैः कर्बरैश्चैव त्रपुसैरिक्षुभिस्तथा। गन्धैर्धूपैरलंकारैर्वस्त्रै रत्नैश्च पूजितैः। तस्यैवानुगतां लक्ष्मीं ब्रह्माणं च चण्डिकां तथा। आदित्यं शंकरं गौरीं यक्षं गणपतिं ग्रहान्। मातरं पितरं नागान्सर्वान्नीराजयेत्क्रमात्। गवां नीराजनं कुर्यान्महिष्यादेश्च मण्डनम्। भ्रामयेज्जयशब्दैश्च घण्टाभाजनवादनैः। ता गावः प्रसृता यान्ति सापीडस्तबकाङ्गदाः। सिन्दूरकृतशृङ्गाग्रा हंभारावसवत्सकाः। अनुयान्ति च गोपालाः कालयन्तो धनानि ते। स्वेदानुलिप्तसर्वाङ्गा रक्तपीतसितताम्बराः एवं। कोलाहले

१—वर्धमान एरण्ड. । 'वर्धमानः प्रसूभेदे शरावेरण्डविष्णुषु' इति मेदिनीकोशात्। २—कर्बरैरामलकैः। ३—धनं गोधनं 'गोः स्याद्धनं वित्तम्' इति मेदिनीकोशात्।

वृत्ते गवां नीराजनोत्सवे । तुरङ्गाँल्लक्षणोपेतान्द्विरदांश्च सुपूजितान् । राज-चिह्नानि सर्वाणि उद्धृत्य स्वगृहाङ्गणे । राजा पुरोहितैः सार्धं मन्त्रिभृत्यपुरः-सरः । सिंहासनोपविष्टश्च शंखतूर्यादिनिस्वनैः । पूजयेद्गन्धकुसुमैर्वस्त्रधूपवि-लेपनैः । ततः स्त्रीलक्षणैर्युक्ता वेश्या वाथ कुलाङ्गना । शीर्षोपरि नरेन्द्रस्य भ्रामये-त्त्रिरारात्रिकम् । शान्तिं समुच्चरद्भिश्च द्विजैर्वेदस्वनेन च । ततो नीराजयेत्सैन्यं गजा-श्वरथसंकुलम् । एवमेषा महाशान्तिः ख्याता नीराजना जने । येषां राष्ट्रे पुरे ग्रामे क्रियते पाण्डुनन्दन । तेषां रोगाः क्षयं यान्ति सुभिक्षं वर्धते सदा । शान्तिर्नीराजना लोके सर्वान्रोगान्व्यपोहति । लोकानां वर्धते चायुः पुत्रपौत्रफलानि च । एषा रोगादि-पीडासु जन्तूनां हितमिच्छता । प्रतिवर्षं प्रकर्तव्या शान्तिर्नीराजना इति । नीराजयन्ति नवमेघनिभं हरिं ये गोब्राह्मणानथ गजांश्च नरेन्द्रचिह्नम् । ते सर्वरोगरहिताः सहि-तांश्च भृत्यैर्दीर्घायुषो भुवि भवन्त्यजपालवाक्यात् ।' इति नीराजनद्वादशीव्रतम् । प्रबोधोत्सवं तु एकादश्यां प्रबोधोत्सवस्य पक्षे विहितत्वात्तत्रैवोक्तम् । इयं मन्वादिः । 'कार्तिके द्वादशी तथा' इति पूर्वोक्तवाक्यात् ।

अथ मार्गशीर्षशुक्लद्वादश्यां विष्णुधर्मोत्तरोक्तं साध्यव्रतम् । मार्क-ण्डेय उवाच—'मनो मन्तस्तथा प्राणो नरः पातश्च वीर्यवान् । चितिर्हयो नयश्चैव हंसो नारायणस्तथा । विभुश्चापि प्रभुश्चैव साध्या द्वादश कीर्तिताः । पूजयेच्छुक्लपक्षे तान्द्वादश्यां मार्गशीर्षतः । कृत्वा व्रतं वत्सरमेतदिष्टं प्राप्नोति तेषां तु स लोक-मेव । तत्रोष्य कालं सुचिरं मनुष्यो राजा भवेद्वा द्विजपुङ्गवो वा ।' इति विष्णु-धर्मोत्तरोक्तं साध्यव्रतम् ।

अस्यामेव द्वादश्यां विष्णुधर्मोत्तरोक्तं द्वादशादित्यव्रतम् । मार्कण्डेय उवाच—'धाता मित्रोऽर्यमा पूषा शक्रोंऽशो वरुणो भगः । त्वष्टा विवस्वान्सविता विष्णुर्द्वादशकस्तथा । पूजयेद्द्वादशादित्याञ्छुक्लपक्षे उपोषितः । मार्गशीर्षादथारभ्य द्वादश्यां नियतव्रतः । दत्त्वा व्रते वै पुरुषः सुवर्णं प्राप्नोति लोकान्सवितुर्नृवीर । मानुष्यमासाद्य भवत्यरोगो जितेन्द्रियश्चैव धनान्वितश्च ।' इति विष्णुधर्मोत्तरोक्तं द्वादशादित्यव्रतम् ।

अस्यामेव द्वादश्यां कृत्यरत्नावल्यां जनार्दनपूजोक्ता स्कान्दे—'मार्गशीर्षे सिते पक्षे द्वादश्यां नियतः शुचिः । कृतोपवासो देवेशं समभ्यर्च्य जनार्दनम् । पञ्चगव्येन

सुस्नातः पञ्चगव्यकृताशनः । यवव्रीहिकृतंपात्रंदद्याद्विप्रायभक्तितः । इदंचोच्चारयेद्भक्त्या देवस्य पुरतो हरेः । सप्तजन्मसु यत्किंचिन्मया खण्डव्रतं कृतम् । भगवंस्त्वत्प्रसादेन तदखण्डमिहास्तु मे । यथाखिलं जगत्सर्वं त्वमेव पुरुषोत्तम । तथाखिलान्यखण्डानि व्रतानि मम सन्तु वै ।' इति । इति मार्गशीर्षद्वादशीव्रतानि ।

अथ पौषकृष्णद्वादश्यां सुरूपद्वादशीव्रतं तच्च गुर्जरप्रसिद्धम् । ईश्वर उवाच—'पौषे मासि तु संप्राप्ते पुष्यर्क्षं तु यदा भवेत् । तस्यां रात्रौ संयतात्मा ध्यात्वा विष्णुं सनातनम् । श्वेता गौरेकवर्णा या तस्या ग्राह्यं तु गोमयम् । अन्तरिक्षात्तु पतितं शुचिर्मौनमवस्थितः । तस्य कृत्वाहुतीनां तु शतमष्टोत्तरं तिलैः । प्रतीक्ष्य द्वादशीं कृष्णामुपवासपरायणः । स्नात्वा नद्यां तडागे वा विष्णुमेवाथ चिन्तयन् । सौवर्णं तु हरिं कृत्वा रूप्यं वा भक्तिशक्तितः ।तिलपात्रोपरि स्थाप्य ततो विष्णुं प्रपूजयेत्। इति संपूज्य विहितैः पुष्पैर्धूपैस्तु धूपितैः । नैवेद्यं तिलमिश्रं तु फलानि विविधानि च । नमः परमशान्ताय विरूपाक्ष नमोऽस्तु ते ।' अर्घ्यमन्त्रः । 'एवं संपूज्य देवेशं कुर्याद्धोमं समाहितः । आवाह्य देवं लक्ष्मीशं होमयेद्धोमयाहुतीः । शतमष्टाधिकं चैव तिलान्व्याहृतिसंयुतान् । सहस्रशीर्षामन्त्रेण हृदि ध्यात्वा जनार्दनम् । लक्ष्मीयुक्तं च मेघाभं शंखचक्रगदाधरम् । होमान्ते कारयेच्छ्राद्धं वैष्णवं द्विजसत्तमैः । दत्त्वा च भोजनं तेभ्यो घृतकुण्डं च दक्षिणाम् । धर्मश्रवणसंयुक्तं जागृयात्तु ततो निशाम् । कृत्वा तु वैष्णवीं मूर्त्तिं विप्राय प्रतिपादयेत् ।' इति व्रतार्के धृतं सुरूपद्वादशीव्रतम् ।

अथ विष्णुधर्मोत्तरोक्तं सुजन्मद्वादशीव्रतं हेमाद्रौ वीरमित्रोदये च । पुलस्त्य उवाच—'पौषे मासि सिते पक्षे द्वादश्यां शक्रदेवता । नक्षत्रयोगगे विष्णुं प्रथमं तु समर्चयेत् । ततः प्रभृति विप्रेन्द्र मासि मासि जनार्दनम् । उपोषितः पूजयेत यावत्संवत्सरं गतम् । मासे च मासे विधिनोदितेन तस्यां तिथौ दानमिति ब्रवीमि । प्राश्यं यथावद्विधिवत्क्रमेण तदुच्यमानं निखिलं निबोध । घृतं यथा व्रीहियवं हिरण्यं यवान्नमम्भः कनकान्नपानम् । छत्रं पयोऽन्नं गुडफाणिताढ्यं सुचन्दनं वस्त्रमनुक्रमेण ।' एकैकपदोक्तमेकैकं दानमेकैकस्मिन्मासे क्रमेण देयम् । 'गोमूत्रमम्भो घृतमामशाकं दूर्वादधिव्रीहियवास्तिलाश्च । सूर्यांशुतप्तं जलमम्बु दार्भं क्षीरं च मासक्रमशः प्रयुक्तम् ।

१—आमशाकमपक्वशाकम् । सूर्यांशुतप्तमिति जलविशेषणम् । दार्भमम्बु कुशाम्बु ।

कुले प्रधाने धनधान्यपूर्णे विवेकवत्यस्तसमस्तदुःखे । प्राप्नोति जन्माविफलेन्द्रियश्च भवत्यरोगो मतिमान्सुखी च ।' इति सुजन्मद्वादशीव्रतम् ।

अथ माघशुक्लद्वादश्यां तिलद्वादशीव्रतम् । तस्यां तिलैः स्नात्वा तिलैर्विष्णुमभ्यर्च्य तिलतैलेन दीपं दत्त्वा तिलनैवेद्यं तिलहोमं तिलदानं च कृत्वा तिलान्भक्षयेत् । तदुक्तं ब्रह्मपुराणे—'माघे तु शुक्लद्वादश्यां यमो हि भगवान्पुरा । तिलानुत्पादयामास तपः कृत्वा सुदारुणम् । राजा दशरथो भूमौ तस्यां तानवतारयन् । तिलानामाधिपत्ये तु विष्णुस्तत्र कृतः सुरैः । तस्यामुपोषितः स्नातस्तिलैस्तस्यां यजेद्धरिम् । तिलतैलेन दीपाश्च देया देवगृहेषु च । निवेदयेत्तिलानेव भोक्तव्याश्च तथा तिलाः । तिलान्दत्त्वा च विप्रेभ्यो भक्षयेच्च तथा तिलान् ।' इति । इति तिलद्वादशीव्रतम् । इयमेव भीमद्वादशी । तदुक्तं निर्णयसिन्धौ हेमाद्रौ पाद्मे—'त्वया कृतमिदं वीर तव नाम्ना भविष्यति । श्रीभीमद्वादशी ह्येषा सर्वपापहरा शुभा ।' इति । सर्वासु द्वादशीषु व्रतसमर्पणं कृत्वा ब्राह्मणान्भोजयित्वा पारणं कुर्यात् । तदुक्तं कात्यायनेन 'प्रातः स्नात्वा हरिं पूज्य' इत्यादि । एतच्च विस्तरेणैकादशीव्रतानुष्ठानपद्धतिप्रकरणे प्रपञ्चितमिति नेह प्रतन्यते । द्वादशीव्रतोद्यापनं त्वेकादशीव्रतवत्कार्यम्, एकादशीद्वादश्योर्दैवतैक्यात् पार्थक्येनानुक्तत्वाच्च । अत्र वर्ज्यानि पूर्वमेवोक्तानि ।

अथ सिद्धविरुद्धादिकं लिख्यते। द्वादशी बुधवारेण युक्ता सिद्धा । तच्चोक्तम्—'बुधवारे द्वितीया च द्वादशी' इति । रविवारेण क्रकचाख्यो विरुद्धयोगो भवति । तदुक्तम्—'सूर्ये विशाखा भरणी द्वादशी च चतुर्दशी । मघाऽनुराधा ज्येष्ठा च वर्जनीयाः प्रयत्नतः ।' इति । द्वादश्यां व्रतपौष्टिकादि कार्यम् । तच्चोक्तम्—'व्रतपौष्टिके द्वितीयाद्वादश्योः ।' इति । अत्र बिल्वफलं न भक्षयेत् । तच्च नखचर्मतिलानि चेति पूर्वमेवोक्तत्वात् । तुलामकररवौ द्वादशी दग्धा भवति । तच्चोक्तं 'तुलामकरयोर्भवन्ति दग्धाः' इति । द्वादश्यां योगिनीसांमुख्याद्याम्ये यात्रा न कार्या । सर्वद्वादशीषु तिथिपो विष्णुः पूज्यः ।

श्रीमद्दिल्लीशसेनोद्भटविकटभटोद्दण्डमत्तेभसिंह-
श्चण्डोन्माथतुरुष्कक्षुभितवसुमतीपालने धर्मराजः ।
पौत्रः श्रीकृष्णसिंहक्षितिपकुलमणेर्विष्णुसिंहस्य पुत्रः
श्रीमान्राजाधिराजो जयहरिरमराधीशवत्कौ सुखी स्तात् ॥ १ ॥

श्रीमत्पण्डितदेवभट्टतनयः श्रीराघवाङ्घ्रिद्वय-
ध्यानावाप्तसमस्तकामनिवहः सम्राट् स रत्नाकरः ।
तुष्ट्यै श्रीजयसिंहवर्मनृपतेः कल्पद्रुमे कामदं
विश्वाख्यं स्तबकं शिवं समकरोत्सद्द्वादशीख्यापकम् ॥ २ ॥

इति श्रीदेवभट्टात्मजपौण्डरीकयाजिरत्नाकरविरचिते जयसिंहकल्पद्रुमोद्द्योते द्वादशीप्रकरणं समाप्तिं प्रफाण ।

---

## अथ त्रयोदशीनिर्णयः ।

**अथ त्रयोदशी निर्णीयते** । तत्र कृष्णशुक्लत्रयोदशीध्यानम् । 'चापबाणधरा गौरी मकरस्था त्रयोदशी । अशोककलिकाबाणचापपात्रा त्रयोदशी ।' 'मञ्चकाब्जासना श्यामा हरिद्वस्त्रा मदालसा । गदापात्रधरा गौरी निधिस्था वा त्रयोदशी ।' इति । शुक्लत्रयोदशी सर्वमते पूर्वा ग्राह्या । 'त्रयोदशी प्रकर्तव्या द्वादशीसहिता मुने । भूतविद्धा न कर्तव्या दर्शपूर्णा कदाचन । वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम् ।' इति ब्रह्मवैवर्ते पूर्वविद्धाविधानादुत्तरविद्धानिषेधात् । 'त्रयोदशी प्रकर्तव्या या भवेदापराह्णिकी ।' इति स्कान्दाच्च । आपराह्णिकी पूर्वविद्धेत्यर्थः । 'एवमेकादशी कार्या द्वादशी च त्रयोदशी' इति पद्मपुराणाच्च । 'पञ्चमीसप्तमी चैव दशमी च त्रयोदशी । प्रतिपन्नवमी चैव कर्तव्या संमुखी तिथिः ।' इति पैठीनसिवचनाच्च । एतानि शुक्लपक्षत्रयोदशीमात्रविषयाणि । यद्यप्यत्र शुक्लपक्षशब्दो नास्ति तथापि कृष्णत्रयोदश्याः परविद्धताया वाचनिकत्वात्पूर्वविद्धायाः शुक्लपक्षविषयत्वं परिशिष्यते । कृष्णत्रयोदश्याः परविद्धत्वमुक्तं निगमे—'षष्ठ्यष्टमी अमावास्या कृष्णपक्षे त्रयोदशी । एताः परयुताः पूज्याः पराः पूर्वयुतास्तथा ।' इति । तस्माच्छुक्लत्रयोदशी पूर्वयुता कृष्णत्रयोदशी परयुतेति सिद्धम् । 'शुक्लत्रयोदशी पूर्वा परा कृष्णा त्रयोदशी' इति माधवोक्तेश्च । 'त्रयोदशी तिथिः पूर्वा सिते थाऽसिते पश्चात्' इति दीपिकोक्तेश्च । यदा तु कृष्णपक्षे परविद्धा न लभ्यते तदा पूर्वविद्धा ग्राह्या । तदाह वसिष्ठः—'एकादशी तृतीया च षष्ठी चैव त्रयोदशी । पूर्वविद्धा तु कर्तव्या यदि न स्यात्परेऽहनि ।' इति । उपवासेऽप्ययमेव निर्णयः । 'एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी । त्रयोदशी अमावास्या उपोष्याः स्युः परान्विताः । द्वितीयापञ्चमीवेधाद्दशमी च त्रयोदशी । चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी ।' इति वृद्धवसिष्ठवचनयोर्मिथो विरोधे पूर्वोक्त-

निगमवचनेन क्रमेण कृष्णशुक्लत्रयोदशीविषयत्वेन व्यवस्थापनात् । इति सामान्य-त्रयोदशीनिर्णयः ।

चैत्रकृष्णत्रयोदश्यां महावारुणीसंज्ञको योगः । तदुक्तं वाचस्पतिनिबन्धे- 'शनिवारसमायुक्ता सा महावारुणी स्मृता । गङ्गायां यदि लभ्येत कोटिसूर्यग्रहाधिका । शुभयोगसमायुक्ता शनौ शतभिषा यदि । महामहेति विख्याता त्रिकोटिकुलमुद्धरेत् । चैत्रासिते वारुणऋक्षयुक्ता त्रयोदशी सूर्यसुतस्य वारे । योगे शुभे सा महती महत्या गङ्गाजलेऽर्कग्रहकोटितुल्या ।' इति त्रिस्थलीसेतौ ब्रह्माण्डपुराणे । 'वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी । गङ्गायां यदि लभ्येत कोटिसूर्यग्रहैः समा ।' इति ।

चैत्रशुक्लत्रयोदश्यां कूर्मपुराणोक्ता मदनपूजा कार्या । तदुक्तं मदनरत्ने-'मधौ शुक्लत्रयोदश्यां मदनं चन्दनात्मकम् । कृत्वा संपूज्य यत्नेन वीजयेद्व्यजनेन च । ततः संपूजितः कामः पुत्रपौत्रसमृद्धिदः ।' इति । हेमाद्रौ भविष्येऽपि-' चैत्रोत्सवे सकललोकमनोनिवासे कामं त्रयोदशदिने च वसन्तयुक्तम् । पत्न्या सहार्च्य पुरुषःप्रवरोऽथ योषित्सौभाग्यरूपसुतसौख्ययुतः सदा स्यात् ।' इति । अत्र त्रयोदशी शुक्लपक्षस्य विहितत्वात्पूर्वैव । इयमेवानङ्गत्रयोदशीति निर्णयामृते भविष्योत्तरे चैत्र-शुक्लत्रयोदशीं प्रक्रम्य-' अस्यां स्नात्वा त्रयोदश्यामनङ्गाख्यं स्मरं लिखेत् । सिन्दूर-रजनीरागै रतिप्रीतिसमन्वितम् । कामदेवं वसन्तं च वाजिचक्रं वृषध्वजम् । मध्याह्ने पूजयेद्भक्त्या भक्ष्यैर्गन्धैः स्रगम्बरैः । मन्त्रेणानेन कौन्तेय जननारीसमन्वितः ।' मन्त्रश्च । 'नमो रामाय कामाय कामदेवस्य मूर्तये । ब्रह्मविष्णुशिवेन्द्राणां नमः क्षेमकराय वै ।' इति । ' ततस्तस्याग्रतो देया मोदका घृतपाचिताः । नानाप्रकारभक्ष्याश्च कामो मे प्रीयतामिति । स्वपतिं पूजयेन्नारी वस्त्रमाल्यविभूषणैः । कामोऽयमिति संचिन्त्य प्रहृष्टेनान्तरात्मना । रात्रौ जागरणं कुर्यात्सुखरात्रिर्यथा भवेत् । पूजयेद्द्विजदाम्पत्यं वस्त्रालंकारभूषणैः । एवंयः कुरु पार्थैतवर्षे वर्षे महोत्सवम् । वसन्तसमये प्राप्ते हृष्टः पुष्टः सदा भवेत् । ' इति । अत्र त्रयोदशी मध्याह्नव्यापिनी ग्राह्या । मध्याह्ने पूजयेदिति मध्याह्नस्य पूजाकालत्वाभिधानात् । दिनद्वये मध्याह्नव्यापित्वे दिनद्वये तदव्यापित्वे वा पूर्वा कार्या । ' कृष्णाष्टमी बृहत्तपा सावित्री वटपैतृकी । अनङ्गत्रयोदशी रम्भा उपोष्याः पूर्वसंयुताः ।' इति संवर्तेन पूर्वयुताया उपोष्यत्वाभिधानात् । अस्यामेव हेमाद्रौ कालोत्तरोक्तमनङ्गव्रतम् । ' चैत्रशुक्लत्रयोदश्यामनङ्गं तु पटे

लिखेत् । नीलदूर्वाङ्कुरश्यामं हस्तमात्रं प्रमाणतः । रतिप्रीत्युभयोपेतं पौष्पसायकचापधृक् । पटेषु संस्थितः कार्यः सर्वैस्त्वप्सरसां गणैः । नानापुष्पैस्तु संपूज्य वस्त्रनैवेद्यदीपकैः । धूपैर्नानाविधैर्हृद्यैर्नानातोद्यरवेण तु । पुष्पमण्डपमध्ये तु रम्योद्याने तु पूजयेत् । आचार्यो विविधैर्भक्त्या पूजितव्यः प्रयत्नतः । वस्त्रहेमान्नदानैश्च यथाशक्त्या तु भक्तितः । पुमान्कामत्वमाप्नोति सर्वस्यैव प्रियो भवेत् । सौभाग्यमाप्नुयान्नारी इह लोके परत्र च । मासि मासि यजेद्वाथ यथानुक्रमयोगतः । एकस्मिन्वा दिने वत्स वत्सरे वा समर्चयेत् । मदनं ह्रद्भुवं कामं मन्मथं तु रतिप्रियम् । अनङ्गं चैव कंदर्पं संपूज्य मकरध्वजम् । कुसुमायुधसंज्ञं च तथा पूज्य मनोभवम् । तथा विषमबाणं च द्वादश्यां मालतीप्रियम् । मासि भाद्रपदे यत्नादनङ्गं पूजयेत्सदा । इत्येतान्नियमेनैव कामव्रतं समाचरेत् ।' इति कालोत्तरोक्तमनङ्गव्रतम् । इयमुदानकल्पादिः । चैत्रकृष्णत्रयोदश्यां शुक्लत्रयोदश्यां वा अजादानव्रताङ्गत्वेन नक्तव्रतारम्भः कार्यः । तदुक्तं भविष्योत्तरे-' चैत्रे त्रिरात्रं नक्ताशी नद्यां स्नात्वा ददाति यः । अजास्त्वत्र पयस्विन्यो दारिद्राय कुटुम्बिने । न जायते पुनरसौ जीवलोके कदाचन । ' इति । अत्रामायां पौर्णमास्यां वा ददातीत्यर्थः । न च विशेषतिथिनिर्देशाभावाद्यस्यां कस्यां तिथावारम्भणीयमिति वाच्यम् । ' अमावास्यामजादीनां पौर्णमास्यां च शस्यते । ' इति दानमयूखे सुमन्तुना अमावास्यापौर्णमास्योर्दानकालत्वोक्तेः । इति चैत्रशुक्लत्रयोदशी ।

अथ वैशाखशुक्लत्रयोदश्यामारभ्यं विष्णुधर्मोत्तरोक्तं कामदेवव्रतम् मदनरत्ने मार्कण्डेय उवाच-' शुक्लपक्षे महाराज त्रयोदश्यामुपोषितः । पूजयेत्कामदेवं तु वैशाखात्प्रभृति प्रभो । गन्धमाल्याम्बरधरो धूपदीपान्नसंपदा । दद्याद्व्रतान्ते विप्राय गन्धवस्त्रयुगं तथा । कृत्वा व्रतं वत्सरमेतदिष्टमासाद्य नाकं सुचिरं मनुष्यः । मानुष्यमासाद्य भवत्यरोगः सुखान्वितो रूपसमन्वितश्च ।' इति । इति वैशाखकृष्णत्रयोदशी ।

ज्येष्ठकृष्णत्रयोदश्यां शुक्लत्रयोदश्यां वा वटसावित्रीव्रतारम्भः कार्यः । अत्र पूर्णिमामावास्यानुरोधेन यथा त्रिरात्रसंपत्तिर्भवति तथा त्रयोदशी ग्राह्येति कृत्यरत्नावल्याम् । तयोः प्राधान्यात् ।

अथ ज्येष्ठशुक्लत्रयोदश्यां भविष्योत्तरोक्तं दुर्गन्धिदौर्भाग्यनाशनव्रतम् । युधिष्ठिर उवाच- 'ब्रूहि मे यदुशार्दूल व्रतं गन्धविनाशनम् । विक्रोशं हन्ति देहस्य दौर्भाग्यशमनं तथा ।' श्रीकृष्ण उवाच-' इमं प्रश्नं पुरा पार्थ

जातूकर्ण्यो महामुनिः । पृष्टो राज्ञ्या महामत्या स ऋषिः कालनन्दया । कथयामास तं प्रश्नमुपविष्टा शृणोति सा । देवीं कृताञ्जलिपुटां जातूकर्ण्योऽवदद्भुतम् । ज्येष्ठे मासि सिते पक्षे त्रयोदश्यां युधिष्ठिर । गत्वा पुण्यनदीतोये पूजयेच्छुभदेशजम् । श्वेतमन्दारमर्कं वा करवीरं च रक्तकम् । निम्बं च सूर्यदेवस्य वल्लभं दुर्लभं तथा । दीपनैवेद्यपुष्पाद्यैर्मन्त्रेणानेन पाण्डव । निरीक्ष्य गगने सूर्यं स्नात्वा हृदि समुच्चरेत् । सूर्य त्वं श्वेतमन्दार श्वेतार्कार्कस्य संभव । करवीर नमस्तुभ्यं निम्बवृक्ष नमोऽस्तु ते । इत्थं योऽर्चयते भक्त्या वर्षे वर्षे पृथङ्नरः । द्रुमत्रयं नृपश्रेष्ठ नारी वा भक्तिसंयुता । तस्याः शरीरे दुर्गन्धं दौर्भाग्यं च न जायते । न सापत्न्यभयं लोके न वन्ध्यात्वं ध्रुवं भवेत् । जायतेऽतीव सौभाग्यमन्यस्त्रीदुर्लभं नृप । कथितं याश्चरिष्यन्ति गन्धदौर्भाग्यनाशनम् । सर्वदोषैर्विनिर्मुक्ताः सुखं वत्स्यन्ति भारत । निम्बं सितार्ककरवीरलताः सुपुण्या याः पूजयन्ति कुसुमाक्षतदीपदानैः । ताः सर्वकामसुखबुद्धिसमृद्धिभाजो दौर्भाग्यदोषरहिताः सुभगा भवन्ति।' इति भविष्योत्तरोक्तं दुर्गन्धिदौर्भाग्यनाशनव्रतम् ।

आश्विनकृष्णत्रयोदश्यां श्राद्धमुक्तं हेमाद्रौ मनुस्मृतौ— 'यत्किंचिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम् । तदप्यक्षयमेव स्याद्वर्षासु च मघासु च ।' यमस्मृतावपि—' गाथाश्च पितृभिर्गीताः कीर्तयन्ति पुराविदः । अपि नः स कुले भूयाद्यो नो दद्यात्त्रयोदशीम् ।' महाभारते— 'अपि नः स कुले भूयाद्यो नो दद्यात्त्रयोदशीम् । मघासु सर्पिषा युक्तं पायसं दक्षिणामुखः ।' चन्द्रिकायां स्मृत्यन्तरे— ' त्रयोदशी भाद्रपदी कृष्णा मुख्या पितृप्रिया । तृप्यन्ति पितरस्तस्यां स्वयं पञ्चशतं समाः ।'इति । भाद्रोऽत्रामान्तो ज्ञेयः । इदं श्राद्धं नित्यम् । ' प्रौष्ठपद्यामतीतायां तथा कृष्णत्रयोदशीम् ।' इत्युपक्रम्य ' श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते ।' इति विष्णुधर्मोत्तरे प्रत्यवायस्मरणात् । मघायुक्तायां त्वतीव प्रशस्तम् । ' मघायुक्ताऽथ तत्रापि शस्ता राजंस्त्रयोदशी ।' इति वचनात् । एतच्च विभक्तैरपि पृथक्कार्यम् । तदुक्तं हेमाद्रौ— 'अविभक्ता विभक्ता वा कुर्युः श्राद्धं पृथक्सुताः । मघासु च ततोऽन्यत्र नाधिकारः पृथग्विना ।' इति । एतच्च पुत्रवता पिण्डरहितं कार्यम् । ' कृष्णपक्षे त्रयोदश्यां यः श्राद्धं कुरुते नरः । पञ्चत्वं तस्य जानीयाज्ज्येष्ठपुत्रस्य निश्चितम् ।' इति वचनात् । अत एव 'यो वाञ्छति नरो मुक्तिं पितृभिः सह चात्मनः। असंतानश्च यस्तस्य श्राद्धे प्रोक्ता त्रयोदशी । इति नागरखण्डम् ।' अत्र केवलं मधुघृतप्लुतपायसादिना ब्राह्मणभो-

जनं कार्यम् । 'अतः श्राद्धं विना देयं तद्दिने मधु पायसम् ।' इत्यादिवचनात् । एतच्च त्रयोदशीमात्रप्रयुक्तश्राद्धविषयम् । तेनापरपक्षेऽन्वहं श्राद्धकर्तुस्तद्दिने पिण्डदानादिसहितसकलेतिकर्तव्यताकश्राद्धकरणेऽपि न दोषः । इदमेकपार्वणकं न कार्यम् । तदाह कार्ष्णाजिनिः—' श्राद्धं न त्वेकवर्गस्य त्रयोदश्यामुपक्रमेत् । अतृप्तास्तत्र ये यस्य प्रजां हिंसन्ति तस्य ते ।' इति । इदं मलमासेऽपि कार्यम् । 'मघात्रयोदशीश्राद्धं प्रत्युपस्थितिहेतुकम् । अनन्यगतिकत्वेन कर्तव्यं स्यान्मलिम्लुचे ।' इति काठकगृह्यात् । इयमेव त्रयोदशी युगादिः । अतश्च युगादिनिमित्तमपि पिण्डरहितमेव कुर्यात् । पिण्डनिषेधश्च युगादिनिर्णये पूर्वमेवोक्तः । अत्र मघात्रयोदशीयुगादिश्राद्धानां तन्त्रेण प्रयोगः । अधिकं च महालयप्रसङ्गे विवेचयिष्यते. इयमेव योगविशेषेण गजच्छाया । तदुक्तं ब्राह्मे—'योगो मघात्रयोदश्याः कुञ्जरच्छायसंज्ञकः । भवेन्मघायां संस्थे च शशिन्यर्के करे स्थिते।' इति । अस्यामेव विष्णुरहस्योक्तं युगावतारव्रतम् । ब्रह्मोवाच ।'मासि प्रौष्ठपदे या तु कृष्णपक्षे त्रयोदशी । अवतीर्णं युगं तस्यां त्रेतायां तु तपोधन।'त्रेतायां तु निवृत्तायामेतस्यां तिथौ युगप्रवतीर्णमिति संबन्धः।तेन द्वापरमपि लभ्यते।'गोमूत्रं गोमयं दूर्वां समालभ्य च मृत्तिकाम्।स्नायान्नद्यां तडागे वा तिथौ तस्यां समाहितः । स्नात्वा च तर्पयेद्देवान्पितॄन्यवतिलोदकैः । श्राद्धस्य तर्पणेनैव फलं युगयुतं भवेत् । यः करोति नरः श्राद्धं तिलैस्तस्यां समाहितः। कृतं तेन भवेच्छ्राद्धं गयायां तु न संशयः । युगादौ यस्त्रिलोकेशं स्नापयेद्गरुडध्वजम् । घृतक्षीरजलैः पुष्पैः स गच्छेद्वैष्णवीं पुरीम् । स्नापितोऽथ विलिप्तस्तु पूजितोऽथ नमस्कृतः । युगादौ युगकर्ता च नृणां मुक्तिप्रदो हरिः । व्रते वै सर्वयत्नेन युगादौ जगतां पतिः । पूजनीयो जनैर्भक्त्या सर्वदुःखहरो हरिः।' इति विष्णुरहस्योक्तं युगावतारव्रतम् । इत्याश्विनकृष्णत्रयोदशीकृत्यम् ।

अथ कार्तिके कृष्णत्रयोदश्यां स्कन्दपुराणोक्तं यमदीपदानम् ।'कार्तिकस्यासिते पक्षे त्रयोदश्यां निशामुखे । यमदीपं बहिर्दद्यादपमृत्युर्विनश्यति।' मन्त्रश्च।'मृत्युना दण्डपाशाभ्यां कालेन श्यामया सह । त्रयोदश्यां दीपदानात्सूर्यजः प्रीयतां नमः ।' इति । अत्र यमदैवतत्वाद्दक्षिणामुखेन दीपदानं कार्यम् । आचाराद्दीपपूजनमपि । क्वचित्तु आश्वयुक्कृष्णपक्षेतिपाठः । तत्राश्विनः शुक्लादिर्ग्राह्यः । अत्र त्रयोदशी प्रदोषव्यापिनी ग्राह्या निशामुखे इत्यनेन प्रदोषे दीपदानविधानात् । दिनद्वये तद्व्याप्तावव्याप्तौ वा परा कृष्णत्वात् । अस्यामेव गोत्रिरात्रव्रतम् । अत्र त्रयोदश्यौद-

यिकी ग्राह्या कृष्णपक्षत्वात् । दिनद्वयेऽप्युदयव्यापित्वे पूर्वा, पूर्णत्वात् । अथ गोत्रिरात्रव्रतकथा । स्कन्द उवाच—'देवदेव महादेव परब्रह्म महेश्वर । आयुर्यशोर्थपुत्रश्रीधर्मसत्कुलकारकम् । व्रतं ब्रूहि महेशान सर्वशोकप्रणाशनम् । जाताः पुत्राश्च जायन्ते अरोगाः सुखिनस्तथा । तेषां पुत्राश्च वध्वश्च दृश्यन्ते च सुशोभनाः । सौभाग्यं चातुलं प्राप्यं सपत्नी नैव जायते । येन सर्वसुखं भुक्त्वा वैकुण्ठभवनं व्रजेत् ।' ईश्वर उवाच—'व्रतानामुत्तमं स्कन्द तव वक्ष्ये सनातनम् । नारी वाथ नरो वाथ त्रिरात्रव्रतमाचरेत् । कृष्णपक्षे त्रयोदश्यां मासि चाश्वयुजे तथा । दीपोत्सवसमीपे तु व्रतमेतत्समाचरेत् । प्रातः स्नात्वा त्रयोदश्यां कृत्वा वै दन्तधावनम् । त्रिरात्रं नियमं कुर्याद्गोविन्दे भक्तिभावतः । गोविन्द जगतीनाथ गोवर्धनधरानघ । गोत्रिरात्रं करिष्यामि शरणं मे भवाच्युत ।' नियममन्त्रः । 'गोष्ठे वा गोपथे वाथ कृत्वा भूमिगृहं शुभम् । अष्टहस्तं चतुर्हस्तं चतुरस्रं सुशोभनम् । वितानं पुष्पमालाभिः फलैर्नानाविधैरपि । मध्ये वेदिं ततः कृत्वा मण्डलं तत्र कारयेत् । सर्वतोभद्रनामार्थं नवनागमथापि वा । तन्मध्ये विन्यसेद्देवं गोवर्धनधरं हरिम् । रुक्मिणी मित्रविन्दा च शैब्या जाम्बवती तथा । वामभागे सुदेवास्य पूज्या वै भक्तिभावतः । सत्यभामा लक्ष्मणा च सुदेवा नाग्नजित्यपि । दक्षिणे चैव पूज्यास्तु नन्दं च पुरतो यजेत् । बलभद्रं यशोदां च पृष्ठतः पूजयेच्छुभाम् । सुरभी च सुनन्दा च सुभद्रा कामधेनवः । एताश्चैतस्रो देव्यश्च कृष्णस्य पुरतो न्यसेत् । सुवर्णमाषकैः कार्याः षोडश प्रतिमाः शुभाः । गोवर्धनश्च कर्तव्यो राजतः पलसंमितः । छत्राकारो महावृक्षैः शोभितः पक्षिभिः शुभः । गोपीगोपसमाकीर्णो महावृक्षसमन्वितः । एवं संस्थाप्य यत्नेन ततः पूजां समाचरेत् । आगच्छ भगवन्कृष्ण गोपगोपीसमन्वितः । रुक्मिण्यादिभी राज्ञीभिर्मम पूजां गृहाण च ।' आह्वानमन्त्रः । 'ॐ नमः कृष्णाय पादौ च हरये जानुनी नमः । उदरं बलदेवाय मुकुन्दाय नमः कटिम् । चक्रिणे च भुजौ पूज्यौ कण्ठं श्रीवत्सधारिणे । मुखं पद्ममुखायेति गोविन्दाय नमः शिरः । प्रणवादिनमोन्तैश्च अष्टाङ्गं पूजयेद्धरेः । रुक्मिण्यै नमः । मित्रविन्दायै नमः । शैब्यायै नमः । जांबवत्यै नमः । सत्यभामायै नमः । लक्ष्मणायै नमः । सुदेवायै नमः । नाग्नजित्यै नमः । यशोदायै नमः । बलभद्राय नमः । नन्दाय नमः । सुरभ्यै नमः सुनन्दायै नमः । सुभद्रायै नमः । कामधेनवे नमः । 'गोवर्धनधराधार गोकुलत्राणकारक । विष्णुबाहुकृतोद्धार पूजयामि नमो नमः । एवं संपूज्य विधिवत्पश्चादर्घं प्रदापयेत् । गवामाधार गोविन्द रुक्मिणीव-

लभ प्रभो । गोपगोपीसमोपेत अर्घ्यं गृह्ण नमोऽस्तु ते । एवं पूजां समाप्यैव भक्तिभावपुरःसरम् । गवामर्घः प्रदातव्यः सायाह्ने तु दिनत्रयम् । मन्त्रेणानेन विधिवद्विशन्तीनां स्वशक्तितः । रुद्राणां चैव या माता वसूनां दुहिता च या । आदित्यानां च भगिनी सा नः शान्तिंप्रयच्छतु ।' अर्घमन्त्रः । 'नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च । नमो धर्मसुताभ्यश्च पवित्राभ्यो नमो नमः ।' पूजामन्त्रः । 'सुरभी वैष्णवी माता नित्यंविष्णुपदे स्थिता । प्रतिगृह्णातु मे ग्रासं सुरभी मे प्रसीदतु ।' गोग्रासमन्त्रः । 'गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः।गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम्। न वियोगोऽस्तु मे पुत्रैर्भर्त्रा च सह बान्धवैः । त्वत्प्रसादेन मे भक्तिर्निश्चला गौः सदा त्वयि ।' इति प्रार्थनामन्त्रः । 'एवं संपूज्य गाश्चैव गोविन्दं च विशेषतः । पुष्पैर्गन्धैश्च दीपैश्च धूपैर्नानाविधैरपि । नैवेद्यैर्घृतपक्वैश्च फलैर्नानाविधैरपि । सप्तधान्यैर्विरूढैश्च वंशपात्रस्थितैः शुभैः । सुवासिन्यस्तथा पूज्या नित्यं ताम्बूलकुङ्कुमैः । कण्ठसूत्रैस्तथा पुष्पैस्तथा वायनकादिभिः । एवं संपूज्य विधिवद्गोविन्दं तु दिनत्रयम् । उपवासत्रयं चैव चतुर्थे दिवसे पुनः । प्रातः शुचिः समुत्थाय कृत्वा स्नानं प्रयत्नतः । प्रणम्याचार्यमुख्येन होमं तत्र च कारयेत् । तिलैरष्टोत्तरशतंगायत्र्याहोममाचरेत्।ततो विसृज्य देवेशं गुरवे प्रतिपाद्य च । गावः पुच्छे समालभ्य पुरस्कृत्य द्विजर्षभान् । हृष्टेन मनसा स्कन्दं गृहागत्य प्रयत्नतः । मिथुनानि द्वादशाष्टौ धनभूच्छादनादिभिः । संपूज्य भोजनं दत्त्वा गोदानानि च दापयेत् । गुरोर्दाम्पत्यमर्चित्वा वासोभूषणसंयुतम् । भक्त्या गोवर्धनं कृष्णं गोपीगोपसमन्वितम् । गृहोपकरणैर्युक्तं यथा शक्त्या च भक्तितः । गुरोः संपादयेद्धीमान्दक्षिणासहितं हरिम् । क्षमाप्य च गुरुं तत्र भुञ्जीत शुचि सत्कृतम् । इष्टैः शिष्टैः समासीनो वाग्यतो विष्णुतत्परः । दीपोत्सवे व्रतमिदं शुचिनानशेन कृत्वा नरः सकलसंततिऋद्धिकारि । भुक्त्वा स भोगनिचयं सुखसंप्रयुक्तमन्ते प्रयाति भवनं मनुजो मुरारेः ।' इति स्कन्दपुराणे गोत्रिरात्रिव्रतम् ।

अथ मार्गशीर्षशुक्लत्रयोदश्यामारभ्यं भविष्यत्पुराणोक्तमनङ्गत्रयोदशीव्रतम् । युधिष्ठिर उवाच —'भगवन्भूतभव्येश संसारार्णवतारक । व्रतं कथय किंचिन्मे रूपसौभाग्यदायकम् । अनङ्गः प्रीयते येन प्रीतो यच्छति केशव । आत्मवद्रूपसौभाग्यं तन्मे विस्तरतो वद ।' कृष्ण उवाच—'अनङ्गो भूपते देवः शूलपाणिः पिनाकधृक् । तस्मिन्संपूजिते पार्थ किं नाप्नोति नरो भुवि । तेन ते कथयि-

ष्यामि शूलपाणिव्रतं त्विदम्। यन्न कस्यचिदाख्यातं व्रतानामुत्तमं व्रतम्। चीर्त्वा भक्त्या नरो मर्त्यो यद्यदिच्छति पाण्डव। तत्तदाप्नोति संदिग्धमनङ्गाख्यत्रयोदशीम्। किं व्रतैर्बहुभिः पार्थ उक्तमात्रफलप्रदैः। त्रयोदशी त्वियं पुण्या सर्वव्रतफलप्रदा। तस्मात्कार्या प्रयत्नेन बहुपुण्यमभीप्सता। त्रयोदशी ह्यनङ्गाख्या सर्वाघौघविनाशिनी। सर्वदुष्टोपशमनी सर्वमाङ्गल्यवर्धिनी। अतुल्यसुखसौभाग्यरूपलावण्यदायिनी। पुरा दग्धेनकामेन त्रिनेत्रनयनाग्निना। भस्मीभूतेन लोकेऽस्मिन्संकल्पस्थेन पाण्डव। अनङ्गेन कृता ह्येषा तेनानङ्गत्रयोदशी। प्रसिद्धिं समनुप्राप्ता नित्यं सर्वफलप्रदा। मार्गशीर्षेऽमले पक्षे त्रयोदश्यां समाहितः। स्नानं नद्यां तडागे वा गृहे वा कूपतोऽपि वा। कृत्वाऽभ्यर्च्य महादेवं विधानाच्छशिभूषणम्। लिङ्गं स्वयं च संभूतमभावे यत्प्रतिष्ठितम्। तदनङ्गमिति प्रोक्तं पूजयेद्भक्तितो व्रती। दधिदुग्धघृतक्षौद्रशर्करादयमृतैः शुभैः। स्नाप्य पञ्चामृतैः पश्चात्स्नापयेद्गन्धवारिणा। धूपदीपादिनैवेद्यैः पुष्पैस्तत्कालसंभवैः। फलैर्नानाविधैर्भक्ष्यैर्गीतवादित्रनिःस्वनैः। शंभुनामान्यथोच्चार्य होमः कार्यस्तिलाक्षतैः। अश्वत्थजातीनारङ्गपायसैर्मधुनापि च।' अश्वत्थादीनि क्रमाद्दन्तकाष्ठपुष्पफलनैवेद्यप्राशनानि। एवमुत्तरेऽपि। 'अनङ्गं पूजयेदादौ[3] मधुमत्या समन्वितम्। अनङ्गनाम्ना संपूज्य मधु प्राश्य स्वपेन्निशि। मधुप्राशनयोगेन जायते मधुरध्वनिः। अश्वमेधस्य यज्ञस्य फलं प्राप्नोति भक्तिमान्। पुष्पैर्वौदुम्बरकरवीरदाडिममोदकैः। चन्दनेन च योगीशं मदयन्त्या युतं यजेत्। स्नाप्य क्षीरादिभिः पार्थ पूजयित्वा विधानतः। योगेश्वरेति संस्मृत्य चन्दनं प्राशयेन्निशि। सौम्यः शीतः सुगन्धश्च चन्दनप्राशनाद्भवेत्। राजसूयस्य यज्ञस्य तद्भक्तः फलमाप्नुयात्। माघे न्यग्रोधसत्कुन्दमातुलुङ्गसुहालिकैः। मुक्ताम्भोभिश्च नाथेशं सुन्दर्या सहितं यजेत्। नाथेश्वरेति संस्मृत्य प्राशयेन्मौक्तिकोदकम्। प्राशनस्य प्रभावेण निर्मला धीः प्रजायते। रूपाढ्यं च वपुः स्त्रीणां मनोनयननन्दनम्। मुक्ताचूर्णोपमे नेत्रे पद्मपत्रायते शुभे। बहुस्वर्णस्य यज्ञस्य प्राप्नोत्यविकलं फलम्। फाल्गुने बदरीकां च नारजम्बीरगोलकैः। कङ्कोलेन च देवेशं ससीतं निशि पूजयेत्। वीरनाम जपेद्रात्रौ कङ्कोलं प्राशयेन्निशि। तेनास्य सुरभिर्गन्धो जायते कायवक्त्रयोः। तथा गुणगणावासो द्रुतकाञ्चनसंनिभः। गोमेधस्य फलं प्राप्य शक्रलोके महीयते। चैत्रे करञ्जमदनद्राक्षावटकशीतलैः[4]। देवं सुरूपनामानं यजेत्सुभगया सह। पूर्वोक्तविधिना पार्थ कर्पूरं प्राशयेन्निशि। कर्पू-

१—पूजयेदिति शेषः। २—अक्षता यवाः। ३—आदौ आदिमासे। ४—शीतलः कर्पूरः।

स्वत्प्रियो लोके गन्धगौरवसंयुतः । चन्द्रवत्सर्वलोकानां लोचनाह्लादकारकः । जायते स नरः पार्थ यः करोतीह भक्तितः । नरमेधफलावाप्तिर्जायते नात्र संशयः । वैशाखे सहकारार्कपुष्पाम्रफलसन्निभिः । जातीफलैर्महारूपमिन्द्राण्या सहितं यजेत् । प्राशयेद्रात्रिसमये जातीफलमनुत्तमम् । अस्य प्राशनयोगाच्च जातिमाप्नोत्यनुत्तमाम् । सफलास्तस्य सर्वाशा भवन्ति भुवि भारत । गोसहस्रफलं प्राप्य रुद्रलोके महीयते । ज्येष्ठे जम्बूबिल्वपत्रैः श्रीफलैः पूपकैस्तथा । लवङ्गेनाथ संपूज्य प्रद्युम्नं ललितान्वितम् । लवङ्गं प्राशयेद्रात्रौ लावण्यं तेन चाप्नुयात् । वाजपेयफलं लब्ध्वा मोदते दिवि भारत । आषाढेऽपामार्गनीपनालिकेरकदम्बकैः । तिलैरुमापतिं रात्रौ पूजयेच्च तिलोत्तमाम् । उमापतिं यजेत्प्राज्ञः प्राशयेच्च तिलोदकम् । तिलोत्तमावद्भवति रूपसंपदनुत्तमा । प्राप्नोति पुण्डरीकस्य फलं कुरुकुलोद्वह । श्रावणे सुमनाम्भोजकदलीफलमण्डितैः । गन्धतोयैः शूलपाणिं शुक्रं वाण्यन्वितं यजेत् । गन्धोदकं प्राश्य स्वपेद्रात्रौ विगतमत्सरः । सुगन्धः सर्वसौख्याढ्यश्चिरायुश्चोपजायते । अग्निष्टोमस्य यज्ञस्य तस्य स्यात्फलमुत्तमम् । भाद्रे पलाशचारुपेयकर्कट्याप्यपूरैस्तथा । यजेतागुरुणा सद्योजातं गौर्या समन्वितम् । अगरुं प्राशयित्वा तु गुरुर्भवति भूतले । तुलापुरुषदानस्य हैमस्य फलमश्नुते । आश्विने कुब्जापामार्गकर्कन्धुगुडपूपकैः । स्वर्णाम्भोभिः सुवर्णां च त्रिदशाधिपतिं यजेत् । हेमोदकं च संप्राश्य हेमवर्णः प्रजायते । नरमेधस्य यज्ञस्य फलं प्राप्नोति निश्चितम् । ऊर्जे कदम्बकद्रोणकूष्माण्डलवणेन तु । फलैश्च विद्याधिपतिं यजेन्मदनया सह । लवणं प्राशयेत्तत्र श्रद्धया परयान्वितः । रूपलावण्यसंयुक्तः प्राशनादस्य जायते । वाजपेयस्य यज्ञस्य सकलं फलमश्नुते । आद्यमाद्यं दन्तकाष्ठं कुसुमं तत्परं फलम् । नैवेद्यप्राशनं नाम क्रमान्मासेषु कीर्तितम् । अलाभे दन्तकाष्ठानां खदिरं स्याच्छिवं यजेत् । पुष्पाणामप्यलाभे तु तत्पत्रैर्वाथ मुद्गरैः । अलाभे तत्फलानां च बीजपूरं प्रशस्यते । नैवेद्यानामप्यलाभे हविष्यान्नं प्रकल्पयेत् । इह प्रतिश्लोकं दन्तधावनम् । कुसुमनैवेद्यप्राशनानां यथाक्रममभिहितानां तस्य तस्याभावेऽयमनुकल्प उक्तः । सर्वेषु पारणेष्वत्र भोजयित्वा द्विजोत्तमान् । सदक्षिणं ततोऽश्नीयाद्बन्धुभिः सहितो वशी । व्रतविघ्नं यदा च स्यादशक्त्या सूतकेऽथवा । उपोष्य चैवोपविशेत्तदह्नि अपरे पुनः । एवं संवत्सरस्यान्ते

१–नीपः कदम्बः । कदम्बको वृक्षविशेषः । २–सुमना जाती । ३–आप्यपूरो घृतपूरः । ४–फलैरमृतफलाख्यैर्भक्ष्यैर्लवणमन्तेऽज्ञेयम् । ५–तदह्नि उपोष्य तद्दिनकृत्यमग्रिममासान्तर्गततद्दिने भवतीत्यर्थः ।

शक्त्या रत्नाद्यलंकृतम्। उमामहेश्वरं हैममधिवास्य ततो निशि॥ पुष्पैर्धूपैस्तथा गन्धैर्नैवेद्यैर्विविधैः फलैः। तत्र प्रभातसमये कृतहोमबलिक्रियः॥ वक्ष्यमाणमिदं सर्वं प्रदद्यात्तद्द्विजातये। लिङ्गाकारमनङ्गं च सौवर्णं कारयेच्छिवम्॥ ताम्रपात्रे तु संस्थाप्य कलशोपरि विन्यसेत्। शुक्लवस्त्रेण संछाद्य नैवेद्यं पुष्पपूजितम्॥ ब्राह्मणाय प्रदातव्यं शिवभक्ताय सुव्रतम्। शक्तिमान् शयनं दद्यात्सवत्सां गां पयस्विनीम्॥ छत्रोपानत्प्रदानं च कलशाः सोदकाः सिताः॥ द्वादशात्र प्रकर्तव्याः स्रक्चन्दनविभूषिताः। सितपक्वान्नसंछन्ना ब्राह्मणेभ्यो निवेदयेत्॥ देवस्यैव प्रदातव्याः कुम्भा द्वादशलड्डुकाः। वितानं पञ्चवर्णं च ध्वजकिंकिणिनादितम्॥ घण्टां च मुखरां भद्रां बध्नीयाच्छिवमन्दिरे। तस्मिन्नेव दिने पार्थ संपाद्यात्मानमर्चयेत्[1]॥ देवदेवं त्रिशूलेशं पुष्पनैवेद्यदीपकैः। गीतवादित्रनृत्यादिप्रेक्षणैर्विविधैरपि॥ दानान्यत्र प्रदेयानि स्ववित्तस्यानुसारतः। सूर्योपरागसदृशो यतः स दिवसो मतः। भोजनं च यथा शक्त्या षड्रसं मधुरोत्तरम्। प्रदद्याच्छिवभक्तानां देयानि च विशेषतः। अर्थिनो नावमन्येत नाक्षिपेन्न रुषा वदेत्। यथाशक्त्या प्रदद्याच्च बहुधा मधुरं वदेत्॥ एवं तदुत्सवं कृत्वा शिवयज्ञमनुत्तमम्। द्विजेभ्यो भोजनं दत्त्वा शिवभक्तान्प्रपूज्य च। ततः स्वयं तु भुञ्जीयाद्भृत्यवर्गसमन्वितः। शान्ताचारैः कनिष्ठस्तु हृदि देवं निवेश्य च। एवं निर्वर्त्य विधिवत्कृतकृत्यः पुमान्भवेत्। नारी वा नृपशार्दूल कृत्वैतद्व्रतमुत्तमम्। फलं ह्येतदवाप्नोति नात्र कार्या विचारणा। एवं कृत्वा नरः सम्यग्भक्तिभावेन भावितः। मुच्यते सर्वपापौघैर्ब्रह्महत्यादिकैरपि। इह कीर्तिमवाप्योच्चैर्मृतः स्वर्गे महीयते। पुण्यशेषादिहागत्य सार्वभौमो नृपो भवेत्। व्रतस्यास्य प्रभावेण मूर्तिमान्मदनो भवेत्। सौभाग्यधनसौख्याढ्यः शान्तचित्तो जितेन्द्रियः। पुत्रपौत्रैः सुसंपूर्णो जीवेच्च शरदां शतम्। शिवभक्तः परो भूत्वा शिवैकगतमानसः। अन्तकाले शिवं स्मृत्वा शिवसायुज्यतां व्रजेत्। कामेन या किल पुरा समुपोषितासीच्छुक्ला तिथिस्त्रिदशदेहपराप्तिहेतोः। तां प्राशनैरुदितनामयुतैरुपोष्य दिव्यं प्रयाति परमं पदमिन्दुमौलेः।' इति भविष्योत्तरोक्तमनङ्गत्रयोदशीव्रतं समाप्तम्।

अत्र त्रयोदशी पूर्वा ग्राह्या, कृष्णाष्टमीति पूर्वोदाहृतवचनात्। शुक्लपक्षावर्तित्वाच्च

अस्यामेव भविष्योत्तरोक्तं यमादर्शनव्रतम्। यम उवाच—'पूर्वाह्णे मार्गशीर्षादौ वर्षमेकं निरन्तरम्। त्रयोदश्यां सौम्यदिने आर्क्यर्काङ्गारवर्जिते। मम नाम्ना द्विजानष्टौ

1—आत्मानं परमात्मानम्।

पञ्च चैवमथाह्वयेत् । पुराणवेदतत्त्वज्ञान्स्वाचारांस्तत्वदर्शनान् । सूर्यैकशरणान्साधून्सर्वभूतहिते रतान् । शुचौ देशे शुभे पद्मे प्राङ्मुखानुपवेशयेत् । अन्तर्वासोयुतान्भक्त्या यत्नेनाभ्यञ्जयेच्च तान् । आरभ्य उत्तमाङ्गं तु तिलतैलेन मर्दयेत् । स्नापयेद्गन्धकाषायैः सुखोष्णेन च वारिणा । पृथक्पृथक्स्नापयित्वा सर्वानेव द्विजोत्तमान् । सुखस्नातांस्तथाऽऽचान्तान्व्रती भक्तिपरायणः । सपुत्रभृत्यः शुश्रूषां तेषां कुर्यात्समाहितः । प्राङ्मुखानुपविष्टांश्च त्रयोदश पृथक्पृथक् । संस्थापयेच्चाभिमुखान्गुडपूपान्सुपाचितान् । सव्यञ्जनं सुपक्वान्नं भूयो भूयो निवेदयेत् । यथासुखं यथातृप्ति यथाकाममयाचितम् । देयं भावं समालक्ष्य इच्छद्भिः श्रेय आत्मनः । शुचिर्भूत्वा तथा दान्तानर्चयेत्तिलतण्डुलैः । प्रस्थमात्रैरथैकैकं ताम्रपात्रसमन्वितम् । सदक्षिणैः सच्छत्रैश्च जलकुम्भैः पवित्रकैः । वर्मप्रावरणैः श्रेष्ठैर्वस्त्रपुष्पैश्च दूतकाः । मन्त्रेणानेन विप्रेन्द्रानर्चयेत्तान्पृथक्पृथक् । ब्राह्मणान्समभूषांस्तान्पङ्क्तिभेदं न कारयेत् । यमः शनैश्चरो मृत्युर्दण्डहस्तो विनायकः । अभावः प्रलयः शान्तिर्दुःखप्रशमनोऽन्तकः । लोकपालोऽघिनां[1] क्रूरो रौद्रो घोराननः शिवः । मम प्रसादात्सुमुखो ददात्वभयदक्षिणाम् । इत्युक्त्वा संप्रयच्छेत देयं दत्त्वा व्रती पुनः । द्विजांश्चानुव्रजेत्प्रातान्स्वगृहाद्विधिनार्चितान् । एवं यः कुरुते कश्चित्सत्क्व्रतमिदं चरेत् । स मृतोऽपि नरो दूता न याति मम मन्दिरम् । अदृष्टोऽसौ ममायाति विमानेनार्कमण्डलम् । तस्माद्याति पुरीं विष्णोस्ततः शिवपुरं व्रजेत् ।' इति भविष्योत्तरोक्तं यमादर्शनव्रतम् । इति मार्गशीर्षत्रयोदशीव्रतानि ।

अथ पौषत्रयोदशीकृत्यम् । अस्यामच्युतपूजनपूर्वकं घृतदानमुक्तं कृत्यतत्त्वार्णवे—'पौषे मासि त्रयोदश्यां घृतं विप्राय पार्थिव । समभ्यर्च्याच्युतं दद्यात्सर्वकामानवाप्नुयात् ।' इति ।

माघशुक्लत्रयोदश्यादिदिनत्रयं माघस्नानं कार्यम् । 'महामाघीं पुरस्कृत्य स्नानं तत्र दिनत्रयम् ।' इति पाद्मोक्तेः । इदं संपूर्णमाघस्नानाशक्तौ ज्ञेयम् । 'अस्मिन्योगे त्वशक्तोऽपि स्नायादपि दिनत्रयम् । प्रयागे माघमासे तु त्र्यहं स्नातस्य यत्फलम् । नाश्वमेधसहस्रेण तत्फलं लभते भुवि ।' इति तत्रैवोक्तेः ।

अथ फाल्गुनशुक्लत्रयोदश्यां विष्णुधर्मोत्तरोक्तं धनदव्रतम् । तदुक्तं हेमाद्रौ— मार्कण्डेय उवाच—'शुक्लपक्षे महाराज[2] त्रयोदश्यामुपोषितः । फाल्गुनात्तु समारभ्य नित्यं संपूजयेन्नरः । गन्धमाल्यनमस्कारदीपधूपान्नसंपदा । सुवर्णं ब्राह्मणे-

---

१ अघिनां पापिनाम् । २ महाराजं धनदम् ।

न्द्राय व्रतान्ते प्रतिपादयेत् । कृत्वा व्रतं वत्सरमेतदिष्टं पक्षेषु राजन्सुचिरं यथोष्य । आनुष्यमासाद्य धनान्वितः स्यात्सौभाग्ययुक्तश्च तथा विरोगः ।' इति विष्णुधर्मोक्तं धनदव्रतम् ।

अथ पक्षद्वयगतासु त्रयोदशीषु प्रदोषव्रतम् । तत्रादौ प्रदोषमहिमा स्कान्दे ब्रह्मोत्तरखण्डे—'सत्यं ब्रवीमि परलोकहितं ब्रवीमि सारं ब्रवीम्युपनिषद्धृदयं ब्रवीमि । संसारमुल्बणमसारमवाप्य जन्तोः सारोऽयमीश्वरपदाब्जयुगस्य सेवा । ये नार्चयन्ति गिरिशं महितं प्रदोषे येऽभ्यर्चितं शिवपदं प्रणमन्ति नान्यैः । ये तत्कथां श्रुतिपुटैर्न पिबन्ति मूर्खास्ते जन्मजन्मसु भवन्ति नरा दरिद्राः । ये वै प्रदोषसमये परमेश्वरस्य कुर्वन्त्यनन्यमनसोऽङ्घ्रिसरोजसेवाम् । नित्यं प्रवृद्धधनधान्यकलत्रपुत्रसौभाग्यसंपदधिकास्त इहैव लोकाः । कैलासशैलभुवने त्रिजगज्जनित्रीं गौरीं निवेश्य कनकाचितपीठमध्ये । नृत्यं विधातुमभिवाञ्छति शूलपाणौ देवाः प्रदोषसमयेऽनुभजन्ति सर्वे । वाग्देवी धृतवल्लकी शतमुखो वेणुं क्वणन्पद्मजस्तालोन्निद्रकरो रमा भगवती गेयप्रयोगान्विता । विष्णुः सान्द्रमृदङ्गवादनपटुर्देवाः समन्तात्स्थिताः सेवन्ते तमनुप्रदोषसमये देवं मृडानीपतिम् । गन्धर्वयक्षपतगोरगसिद्धसाध्यविद्याधरामरवराप्सरसां गणाश्च । येऽन्ये त्रिलोकनिलयाः सह भूतवर्गाः प्राप्ते प्रदोषसमये हरपार्श्वसंस्थाः । तस्मात्प्रदोषे शिव एक एव पूज्योऽथ नान्ये हरिपद्मजाद्याः । तस्मिन्महेशे विधिनेज्यमाने सर्वे प्रसीदन्ति सुराधिनाथाः ।' इति प्रदोषमहिमा । अथ प्रदोषस्वरूपनिर्णयः । हेमाद्रौ विश्वादर्शे—'प्रदोषोऽस्तमयादूर्ध्वं घटिकात्रयमुच्यते ।' इति गौडग्रन्थे तु दण्डद्वयात्मक एव प्रदोष उक्तः । 'प्रदोषोऽस्तमयादूर्ध्वं घटिकाद्वयमिष्यते ।' इति । वत्सोक्तेः । यत्तु-'त्रिमुहूर्तः प्रदोषः स्याद्भवावस्तं गते सति ।' इति स्कन्दपुराणवचनं तद्गौणप्रदोषकालपरम् । विश्वादर्शोक्तवाक्योपात्तघटिकात्रयात्मकमुख्यकालाधिककालबोधकत्वात् । अत एव माधवाचार्या अपि नक्तप्रकरणे रात्रिभोजने, घटिकात्रयमुत्तमः कालः । घटीषट्कं मध्यमः कालः । एतदेवाभिप्रेत्य वचनं स्मर्यते प्रदोषोऽस्तमयादूर्ध्वमिति त्रिमुहूर्तः प्रदोषः स्यादिति च । निशीथपर्यन्तो जघन्यः कालः नक्तं प्रकुर्वीत रात्राविति सामान्येनाभिधानात् इति । शिवपूजानक्तभोजनात्मकं प्रदोषव्रतम् । अत्र प्रदोषव्यापिनी त्रयोदशी ग्राह्या । तथा च स्कन्दपुराणे—'एकवत्सरपर्यंतं प्रतिपक्षे त्रयोदशीम् । प्रदोषे शिवमभ्यर्च्य नक्तं भोक्ष्यामि शंकर ।' इति ।

पूजारम्भकालोऽपि तत्रैव—'ततस्तु लोहिते भानौ स्नात्वा सनियमो व्रती । पूजास्थानं ततो गत्वा प्रदोषे शिवमर्चयेत् ।' ब्रह्मोत्तरखण्डे तु घटिकात्रयमस्तमयात्पूर्वः कालः उक्तः । 'पक्षद्वयत्रयोदश्यां निराहारो भवेद्दिवा । घटिकात्रयादस्तमयात्पूर्वं स्नानं समाचरेत् ।' इति । मुख्यमुपक्रमः । पूजाकालस्तु सूर्यास्तादिनक्षत्रोदयान्तः । 'प्रदोषो रजनीमुखम्' इति कोषबलात् । केचित्तु त्रिमुहूर्तात्मक एव मुख्यः प्रदोषकालः स्वीकृतः । तेषां मते माधवोक्त उत्तममध्यमविभागोऽनुपपन्नः, द्वयोरपि मुख्यकालत्वस्वीकारात् । तत्रान्यतरदिने व्याप्त्यैतत्स्पर्शे वा सैव ग्राह्या । दिनद्वये साम्येन प्रदोषव्याप्तौ तदेकदेशस्पर्शे वा उत्तरा । 'प्रातःसंकल्पयेद्विद्वानुपवासव्रतादिकम् ।' इति संकल्पकालमारभ्य सत्त्वात् । दिनद्वये प्रदोषव्याप्त्यभावे तु पूजोपक्रमकालव्यापिनी ग्राह्या । 'कर्मोपक्रमकालगा तु कृतिभिर्ग्राह्या न युग्मादरः ।' इति वचनात् । यत्तु केश्चिदुक्तम् । दिनद्वये प्रदोषाव्याप्तौ पूर्वैव ग्राह्या । त्रयोदशी तु कर्तव्या द्वादशीसहिता मुने ।' इति सुमन्तुवचनादिति तत्तुच्छम् । 'अस्य सामान्यवचनत्वेनाहोरात्रसाध्योपवासादिषु सावकाशत्वेन कालविशेषसाध्यप्रदोषव्रतेऽनिर्णायकत्वात् । अधिकं च नक्तप्रकरणे द्रष्टव्यम् । अथ पक्षप्रदोषविधिः । ब्रह्मोत्तरखण्डे—शाण्डिल्य उवाच—'पक्षद्वये त्रयोदश्यां निराहारो भवेद्दिवा । घटीत्रयादस्तमयात्पूर्वं स्नानं समाचरेत् । शुक्लाम्बरधरो भूत्वा वाग्यतो नियमान्वितः । कृतसंध्याजपविधिः शिवपूजां समाचरेत् । देवस्य पुरतः सम्यगुपलिप्य नवाम्भसा । विधाय मण्डपं रम्यं धौतवस्त्रादिभिर्बुधः । वितानाद्यैरलंकृत्य फलपुष्पनवाङ्कुरैः । विचित्रं पद्ममुद्धृत्य वर्णपञ्चकरञ्जितम् । तत्रोपविष्टः सुशुभे सूपविष्टः स्थिरासने । सम्यक्संपादिताशेषपूजोपकरणः शुचिः । आगमोक्तेन मन्त्रेण नैगमेन च मन्त्रवित् । ततः कृत्वात्मशुद्धिं च भूतशुद्धिमनुक्रमात् । प्राणायामत्रयं कुर्याद्बीजमन्त्रैः समन्त्रकैः । मातृकान्यासविधिवद्ध्यात्वा तां देवतां पराम् । समाप्य मातृकां भूयो ध्यात्वा चैव परं शिवम् । वामभागे गुरुं नत्वा दक्षिणे गणपं यजेत् । अंसयोर्युगधर्मांश्च न्यसेन्नाभौ च पार्श्वयोः । अधर्मादीननन्तादीन्हृदि पीठमनुन्यसेत् । आधारशक्तिमारभ्य ज्ञानात्मान्तमनुक्रमात् । उपक्रमेण विन्यस्य हृत्पद्मे साधुभाविते । नवशक्तिमये रम्ये ध्यायेद्देवमुमापतिम् । चन्द्रकोटिप्रतीकाशं त्रिनेत्रं चन्द्रभूषणम् । आपिङ्गलजटाजूटरत्नमौलिविराजितम् । नीलग्रीवमुदाराङ्गं नागहारोपशोभितम् । वरदाभयहस्तं च हरिणं च परश्वधम् ।

दधानं नागवलयं केयूराङ्गदमुद्रिकाम्।व्याघ्रचर्मपरीधानं रत्नसिंहासने स्थितम्।ध्यात्वा तद्वामभागे च चिन्तयेद्गिरिकन्यकाम् । भास्वज्जपाप्रसूनाभामुदयार्कसमप्रभाम् । विद्युत्पुञ्जप्रभां तन्वीं मनोनयननन्दिनीम्। बालेन्दुशेखरां स्निग्धनीलकुञ्चितकुन्तलाम् । भृङ्गसंघातरुचिरनीलालकविराजिताम् । मणिकुण्डलविद्योतन्मुखमण्डलविभ्रमाम् । नवकुङ्कुमपङ्काङ्ककपोलतलदर्पणाम्।मधुरस्मितविभ्राजदरुणाधरपल्लवाम् । कम्बुकण्ठीं शिवामुद्यत्कुचपङ्कजकुड्मलाम् । पाशाङ्कुशाभयवरैर्विलसन्तीं चतुर्भुजाम्। अनेकरत्नविलसत्कङ्कणाङ्गदमुद्रिकाम् । त्रिवलीवलयाढ्यां हेमकाञ्चीगुणान्विताम् । दिव्यमाल्याम्बरधरां दिव्यचन्दनचर्चिताम् । दिक्पालवनितामौलिसंनताङ्घ्रिसरोरुहाम्। रत्नसिंहासनारूढां सर्पराजपरिच्छदाम् । एवं ध्यात्वा महादेवं देवीं च गिरिकन्यकाम् । न्यासक्रमेण संपूज्य देहे गन्धादिभिः क्रमात्। पञ्चभिर्ब्रह्मभिः कुर्यात्प्रोक्तस्थानेषु वा हृदि । पृथक्पुष्पाञ्जलिं दद्यान्मूलेन च हृदि त्रिधा ।पुनः स्वयं शिवो भूत्वा मूलमन्त्रेण साधकः।ततःसंपूजयेद्देवं बाह्यपीठे पुनःक्रमात । संकल्प्य पूजयेत्तत्र पूजारम्भे समाहितः ।कृताञ्जलिपुटो भूत्वा चिन्तयेद्धृदि शंकरम् । ऋणपातकदौर्भाग्यदारिद्र्यविनिवृत्तये । अशेषाघविनाशाय प्रसीद मम शंकर । दुःखशोकाग्निसंतप्तं संसारभयपीडितम् । बहुरोगाकुलं दीनं पाहि मां वृषवाहन । आगच्छ देवदेवेश महादेवाभयंकर । गृहाण सह पार्वत्या तव पूजां मया कृताम् । इति संकल्प्य विधिवद्बाह्यपूजां समारभेत् । गुरुं गणपतिं चैव यजेत्सव्यापसव्ययोः । क्षेत्रेशमीशकोणे च वह्नौ कात्यायनीं यजेत्। धर्मं ज्ञानं च वैराग्यमैश्वर्यं च नमोन्तकैः । स्वैरग्न्यादिकोणेषु पीठपादानुक्रमात् । अन्यान्बिन्दुविसर्गाभ्यामधर्मादीन्प्रपूजयेत् । गात्ररूपांश्चतुर्दिक्षु मध्येऽनन्तं सतां करम् । सत्त्वादींस्त्रिगुणांस्तत्र पूजापीठे प्रविन्यसेत् । अत ऊर्ध्वच्छदे मायाविद्यालक्ष्म्या शिवेन च । तदन्ते चाम्बुजं भूयः सकलं मण्डलप्रियम् । पत्रकेसरिकिंजल्कव्याप्तं ताराक्षरैः क्रमात् । आत्मत्रयं समभ्यर्च्य मध्ये मण्डलमादरात् । ज्येष्ठां लक्ष्मीं च रौद्रीं च भगाद्यैर्दिक्षु पूजयेत् । वामाद्या नव शक्तीश्च नवस्वरयुता यजेत् । हृदि बीजत्रयाढ्येन पीठयन्त्रेण चार्चयेत् । आवृत्तिः प्रथमाङ्गैस्तु पञ्चभिर्मूर्तिशक्तिभिः । त्रिशक्तिर्मूर्तिभिश्चान्या निधिद्वयसमन्वितैः । अनन्ताद्यैः परा ह्यन्या मातृभिश्च वृषादिभिः । सिद्धिभिश्चाणिमाद्याभिरिन्द्राद्यैश्च तथा बुधैः । वृषभक्षेत्रचण्डीशौ दुर्गा च स्कन्दनन्दिनौ । गणेशः सैन्यपश्चैव स्वस्वलक्षणलक्षितः । अणिमा महिमा चैव गरिमा लघिमा तथा।ईशित्वं च वशित्वं च प्राप्तिः प्राकाम्यमेवच।अष्टैश्वर्या-

णि चोक्तानि तेजोरूपाणि केवलम् । पञ्चभिर्मलाभिः पूर्वं हृल्लेखाद्याभिरप्यनु । अङ्गैरूमाषैरिन्द्राद्यैः पूर्वोक्तमनुभिस्तु तैः । उमामहेश्वरादींश्च पूजयेदुत्तरादितः । यथामार्णवकैर्युक्तं तेजोरूपं सदा शिवम् । उमया सहितं दिव्यमुपचारैः प्रपूजयेत् । सुप्रतिष्ठितशंखस्य तीर्थैः पञ्चामृतैरपि । अभिषिच्य महादेवं रुद्रसूक्तैः समाहितः । कल्पयेद्विविधैर्मन्त्रैरासनाद्युपचारकान् । तेनैवाचमनं दद्यान्मधुपर्कं मधूत्तरम् । पुनराचमनं दद्यात्स्नानमन्त्रैः प्रकल्पयेत् । आसनं कल्पयेद्धैमं स्वागतं विहिताञ्जलिः । अर्घ्यमष्टगुणोपेतं पाद्यं शुद्धोदकेन तु । उपवीतं तथा वासो भूषणानि निवेदयेत् । गन्धमष्टाङ्गसंयुक्तं सुपूतं विनिवेदयेत् । ततश्च बिल्वमन्दारकह्लारसरसीरुहम् । धत्तूरं कर्णिकारं च द्रोणपुष्पं च मल्लिकाम् । कुशापामार्गतुलसी माधवी च कुलान्विता । बृहती करवीराणि यथालब्धानि साधकः । निवेदयेत्सुगन्धीनि माल्यानि विविधानि च । धूपं कालागरुयुतं दीपं वै विविधं शुभम् । अथ पायसनैवेद्यं सघृतं सोपदंशकम् । मोदकापूपसंयुक्तं शर्करागुडसंयुतम् । मधुनाक्तं दधियुतं जलपानसमन्वितम् । तेनैव हविषा वह्नौ जुहुयान्मत्रभावितः । आगमोक्तेन विधिना गुरुवाक्यनियन्त्रितः । नैवेद्यं शंभवे भूयो दत्त्वा ताम्बूलमुत्तमम् । धूपं नीराजनं रम्यं छत्रं दर्पणमुत्तमम् । समर्पयित्वा विधिवन्मन्त्रैर्वैदिकतान्त्रिकैः । यथाशक्त्या स्वयं निःस्वो यथाविधि समर्चयेत् । भक्त्या दत्तेन गौरीशः पुष्पमात्रेण तुष्यति । अथाङ्गभूतान्सकलान्गणेशादीन्प्रपूजयेत् । सर्वैर्नामगुणैः स्तुत्वा साष्टाङ्गं प्रणमेद्बुधः । ततः प्रदक्षिणीकृत्य वृषचण्डेश्वरादिकान् । पूजां समाप्य विधिवत्प्रार्थयेद्गिरिजापतिम् ।' इति ।

अथैतदनुसारेण पद्धतिक्रमः । संध्यासमये स्नानं कृत्वा भूतशुद्धिप्राणप्रतिष्ठामातृकान्यासादींश्च कृत्वा हृदयकमले शिवं ध्यात्वा मानसोपचारैः संपूज्य यथाशक्ति जपित्वा जपं समर्प्य मूलेन स्वदेहं पुष्पाञ्जलिं दत्त्वा स्वात्मानं शिवरूपं ध्यात्वा 'ऋणपातकदौर्भाग्यदारिद्र्यविनिवृत्तये । अशेषाघविनाशाय प्रसीद मम शंकर । दुःखशोकाग्निसंतप्तं संसारभयपीडितम् । बहुरोगाकुलं दीनं पाहि मां वृषवाहन । आगच्छ देवदेवेश महादेवाभयंकर । गृहाण सह पार्वत्या तव पूजां मया कृताम् । इति संकल्प्य विधिवद्बाह्यपूजां समारभेत् ।' शंखादिस्थापनं कृत्वा योगपीठादिपद्मासनान्तं संपूज्य 'नवशक्तिमये रम्ये' इत्यादिपूर्वोक्तप्रकारेण महादेवं देवीं च ध्यात्वा 'न्यासक्रमेण संपूज्य देहे गन्धादिभिः क्रमात् ।' ततो वहन्नासापुटेन करस्थपुष्पेषु स्वाभीष्टां देवतामागतां विभाव्य पुरःस्थिते लिङ्गे मूर्तौ वा प्रक्षिपेत् । ततः—'देवेश भक्तसुलभ

सर्वावरणसंयुत । यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरो भव ।' इत्यादि प्राणप्रतिष्ठापनं कृत्वा, 'भवानीशंकराभ्यां नमः ।' इत्यक्षतचन्दनपुष्पादिभिः संपूज्य आवरणपूजां कुर्यात् । तत्र अङ्गैः प्रथमम्, पञ्चमूर्तिशक्तिभिर्द्वितीयम्, त्रिशक्तिमूर्तिभिर्निधिभ्यां च तृतीयम्, अनन्ताद्यैश्चतुर्थम्, मातृभिः पञ्चमम्, वृषादिभिः षष्ठम्, अणिमादिभिः सप्तमम्, इन्द्राद्यैरष्टमम्, वज्राद्यैर्नवमम्, ततो नीराजनान्तानुपचारान्कृत्वा, प्रदक्षिणीकृत्य पूजां समाप्य विधिवत्प्रार्थयेद्गिरिजापतिम् 'जय देव जयाजेय जय शंकर शाश्वत । जय सर्वसुराध्यक्ष जय सर्वसुरार्चित । जय सर्वगुणातीत जय सर्ववरप्रद । जय नित्य निराधार जय विश्वंभराव्यय । जय विश्वैकवन्द्येश जय नागेन्द्रभूषण । जय गौरीपते शंभो जय चन्द्रार्धशेखर । जय कूर्परसंकाश जयानन्तगुणाकर । जय रुद्र विरूपाक्ष जयाचिन्त्य निरञ्जन । जय नाथ कृपासिन्धो जय भक्तार्तिभञ्जन । जय दुस्तरसंसारसागरोत्तारण प्रभो । प्रसीद मे महाभाग संसारार्तस्य खिद्यतः । सर्वपापक्षयं कृत्वा रक्ष मां परमेश्वर । महादारिद्र्यमग्नस्य महापापहतौजसः । महाशोकविनष्टस्य महारोगातुरस्य च । ऋणभारपरीतस्य दह्यमानस्य कर्मभिः । ग्रहैः प्रपीड्यमानस्य प्रसीद मम शंकर । दरिद्रः प्रार्थयेदेवं पूजान्ते गिरिजापतिम् । अथाढ्यो वापि राजा वा प्रार्थयेदेवमीश्वरम् । दीर्घमायुः सदारोग्यं कोशवृद्धिर्बलोन्नतिः । ममास्तु नित्यमानन्दः प्रसादात्तव शंकर । शत्रवः संक्षयं यान्तु प्रसीदन्तु मम ग्रहाः । वश्यन्तुदस्यवोराष्ट्रे जनाः सन्तु निरापदः । दुर्भिक्षमारीसंतापाःशमं यान्तुमहीतले । सर्वसस्यसमृद्धिश्च भूयात्सुखमया दिशः । एवमाराधयेद्देवं प्रदोषे गिरिजापतिम् । ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणाभिश्चपूजयेत् । सर्वपापक्षयकरीसर्वदारिद्र्यनाशिनी । शिवपूजेयमाख्याता सर्वाभीष्टफलप्रदा ।' इति । इति ब्रह्मोत्तरखण्डोक्तं प्रदोषव्रतम् ।

ब्रह्माण्डपुराणे तु त्रयोदश्यामतिसौबुद्ध्यकरसारस्वतस्तोत्रपाठविधिरुक्तः । 'ब्रह्मचारी व्रती मौनी त्रयोदश्यां निरामिषः । पक्षद्वयेऽपि यो भक्त्या त्रयोदश्येकविंशतिम् । अविच्छेदं पठेद्धीमान्ध्यात्वा देवीं सरस्वतीम् । सर्वपापविनिर्मुक्तः सुभगो लोकवर्धनः । वाञ्छितं फलमाप्नोति लोके च विजयी भवेत् ।' इति । त्रयोदशी उदये त्रिमुहूर्तव्यापिनी ग्राह्या । 'सारस्वतो जनः पाठात्स स्यादिष्टार्थलाभवान् ।' इत्यध्ययनस्यैव तत्र फलसंबन्धावगमात् । यत्तु—'यां तिथिं समनुप्राप्य उदयं याति भास्करः । सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु ।' इति वचनं तत्त्रिमुहूर्तस्यैव स्तावकम् ।

अथ केदारखण्डोक्तं शनिप्रदोषव्रतम् । देवा ऊचुः— 'गुरो केन विधानेन कीदृशेन व्रतेन च । आराधनीयो गौरीशो ह्यस्माभिर्जयकामुकैः । तद्वदस्व सुराचार्य त्वं हि नः परमा गतिः ।' गुरुरुवाच—'कार्तिके शुक्लपक्षे तु मन्दवारे त्रयोदशी । समग्रा यदि लभ्येत सर्वभाग्यै न संशयः । तस्यां प्रदोषसमये लिङ्गरूपी सदाशिवः ।पूजनीयो हि देवेन्द्र सर्वकामसमृद्धये । स्नात्वा मध्याह्नसमये तिलामलकसंयुतम् । शिवस्य चार्चनं कुर्याद्गन्धपुष्पफलादिभिः । पश्चात्प्रदोषवेलायां स्थावरं लिङ्गमर्चयेत् ।स्वयंभु स्थापितं वापि पौरुषेयमपौरुषम् । जने वा विजने वापि अरण्ये वा तपोवने ।तं लिङ्गमर्चयेद्भक्त्या विधिदृष्टेन कर्मणा । ग्राममध्ये तु यल्लिङ्गं स्वयंभूमपि वाऽनघ । तल्लिङ्गमर्चयेद्भक्त्या प्रदोषे तु विशेषतः । ग्रामाद्बहिः स्थितं लिङ्गं ग्रामाच्छतगुणं फलम् । वाह्याच्छतगुणं पुण्यमारण्यं लिङ्गमद्भुतम् । वन्याच्छतगुणं पुण्यमर्चितं पार्वतं तथा । पार्वताच्चैव लिङ्गाच्च फलं चायुतसंज्ञितम् । तपोवनाश्रितं लिङ्गं पूजितं वा महाफलम् । काश्या-दिसंस्थितं लिङ्गं पूजितं स्यादनन्तकम् । तस्मादेतद्विभागेन शिवपूजार्चनं बुधैः । कर्तव्यं निपुणत्वेन तीर्थस्नानादिकं तथा । पञ्चपिंडाननुद्धृत्य नस्नायात्परवारिणि ।कूप-स्नानं न कुर्वीत उद्धृतेन विशेषतः । तडागे दश पिण्डांश्च उद्धृत्य स्नानमाचरेत् । नदीस्नानं विशिष्टं च महानद्यां विशेषतः । सर्वेषामपि तीर्थानां गङ्गास्नानं विशिष्यते । देव-खाते च तत्तुल्यं प्रशस्तं स्नानमाचरेत् । ततः प्रदोषसमये स्नात्वा मौनं समाचरेत् । प्रदीपानां सहस्रेण दीपनीयः सदाशिवः । तथा दीपशतेनापि द्वात्रिंशद्दीपमालया । घृतेन दीपयेद्दीपाञ्छिवस्य परितुष्टये । तथा फलैश्च दीपैश्च नैवेद्यैर्गन्धधूपकैः । उपचारैः षोडशभिर्लिङ्गरूपी सदाशिवः । पूज्यः प्रदोषवेलायां नृभिः सर्वार्थसिद्धये । प्रदक्षिणं प्रकुर्वीत शतमष्टोत्तरं तथा । नमस्कारान्प्रकुर्वीत तावत्संख्यान्प्रयत्नतः । प्रद-क्षिणनमस्कारैः पूजनीयःसदाशिवः । नाम्नांशतेनरुद्रोऽसौ स्तवनीयोयथाविधि । नमो रु-द्राय भीमायनीलकण्ठायवेधसे । कपर्दिने सुरेशाय व्योमकेशाय वै नमः । वृषध्वजाय सोमाय सोमनाथाय वै नमः । दिगम्बराय भर्गाय उमाकान्तकपर्दिने । तपोमयाय व्याप्ताय शिपिविष्टाय वै नमः । व्यालप्रियाय व्यालाय व्यालानां पतये नमः । मही-धराय व्याघ्राय पशूनां पतये नमः । त्रिपुरान्तकाय सिंहाय शार्दूलायर्षभाय च । मिताय मितनाथाय सिद्धाय परमेष्ठिने । कामान्तकाय बुद्धाय बुद्धीनां पतये नमः । कल्याणायविशिष्टाय शिष्टाय परमात्मने । वेदायवेदबीजायवेदगुह्याय वै नमः । दीर्घाय दीर्घरूपाय दीर्घार्थाय महाय च । नमो जगत्प्रतिष्ठाय व्योमरूपाय वै नमः । गर्वक-

त्सुमहादैत्यांधकासुरभेदिने। नीललोहितशुक्लाय चण्डमुण्डप्रियाय च। भक्तिप्रियाय देवाय ज्ञातृज्ञानाव्ययाय च। महेशाय नमस्तुभ्यं महादेवहराय च। त्रिनेत्राय त्रिवेदाय वेदाङ्गाय नमोनमः। अर्थायचार्थरूपायपरमार्थाय वै नमः। विश्वरूपाय विश्वाय विश्वनाथाय वै नमः। शंकराय च कालाय कालावयवरूपिणे। अरूपाय च सूक्ष्माय सूक्ष्मसूक्ष्माय वै नमः। श्मशानवासिने तुभ्यं नमस्ते कृत्तिवाससे। शशाङ्कशेखरायैव रुद्रभूमिश्रयाय च। दुर्गाय दुर्गसाराय दुर्गावयवसाक्षिणे। लिङ्गरूपाय लिङ्गाय लिङ्गानां पतये नमः। नमः प्रणवरूपाय प्रणवार्थाय वै नमः। नमो नमः कारणकारणाय ते मृत्युंजयायात्मभवस्वरूपिणे। त्रियम्बकायासितकण्ठभर्गगौरीपते मङ्गलहेतवे नमः।' बृहस्पतिरुवाच—'नाम्नां शतं महेशस्य उच्चार्य व्रतिना तदा। प्रदक्षिणनमस्कारैरेतत्संख्यैः प्रयत्नतः। कार्यं प्रदोषसमये तुष्टयर्थं शंकरस्य च। एवं व्रतं समुद्दिष्टं तव शक्र महामते। शीघ्रं कुरु महाभाग पश्चाद्युद्धं कुरु प्रभो। शंभोः प्रसादात्सर्वं ते भविष्यति जयादिकम्।' शतक्रतुरुवाच। 'वृत्रः पुरा महेशानं समाराधयदादरात्। कथं प्राप वरं ब्रह्मन्पुरा कश्चाभवद्द्विजः।' गुरुरुवाच—'वृत्रो ह्ययं महातेजा उग्रेण तपसा पुरा। शिवं प्रसादयामास पर्वते गन्धमादने। नाम्ना चित्ररथो राजा वनं चित्ररथस्य तत्। एतज्जानीहि भो इन्द्र तव पुर्याः समीपतः। यस्मिन्वने महाभाग न सन्ति महद्रूमयः। तस्माच्चैत्ररथं नाम वनं परममङ्गलम्। तस्य राज्ञः शिवेनैव यानं च परमाद्भुतम्। कामगं किंकिणीयुक्तं सिद्धचारणसेवितम्। गन्धर्वैरप्सरोयक्षैः किंनरैरुपशोभितम्। ततस्तेनैव यानेन पृथिवीं पर्यटन्पुरा। तथा गिरीशमुख्यांश्च द्वीपांश्च विविधांस्तथा। एकदा पर्यटन्राजा नाम्ना चित्ररथो महान्। कैलासमागतस्तत्र स ददर्श पराद्भुतम्। तथा सभा महेशस्य गणैश्चैव विराजिता। अर्धाङ्गलग्नया देव्या शोभितं च महेश्वरम्। निरीक्ष्य देव्या सहितं सदाशिवं न्यायान्वितं वाक्यमिदं स्म भाषते। वयं च शंभो विषयान्विताश्च मर्त्यादयः स्त्रीजिताश्चापि चान्ये। ते लोकमध्ये वयमेव चाज्ञाः स्त्रीसेवनं लज्जया नैव कुर्मः। एतद्वाक्यं निशम्याह महेशः प्रहसन्निव। उवाच न्यायसंयुक्तं सर्वेषामपि शृण्वताम्। भयं लोकापवादाच्च सर्वेषामपि नान्यथा। ग्रसितं कालकूटं च सर्वेषामपि दुर्जरम्। लोकातीतं च मे वृत्तं तथाप्युपहसत्यसौ। ततश्चित्ररथं देवी गिरिजा वाक्यमब्रवीत्।' गिरिजोवाच—'रे दुरात्मन्कथं ह्यद्य शंकरश्चोपहासितः। मया सहैव मन्दात्मन् ईक्ष्यसे कर्मणः फलम्। साधूनां समचित्तानामुपहासं करोति यः। देवो वाप्यथवा मर्त्यः स

विज्ञेयोऽधमाधमः । एते मुनीन्द्राश्च महानुभावास्तथा ह्यमी ऋषयो वेदगर्भाः । तथैव सर्वे सनकादयो ह्यमी अज्ञाश्च सर्वे शिवमर्चयन्ते । रे मूढ सर्वेषु जनेष्वभिज्ञस्त्वमेक एवाद्य न चापरे जनाः । तस्मादभिज्ञं हि करोमि दैत्यं देवैर्द्विजैश्चापिबहिष्कृतंत्वाम् । एवं शप्तस्तया देव्या भवान्या राजसत्तमः । राजा चित्ररथः सद्यः पपात सहसा दिवः। आसुरीं योनिमासाद्य वृत्रो नाम्नाऽभवत्तदा । तपसा परमेणैव त्वष्ट्रा संयोजितः क्रमात् । तपसा तेन महता अजेयो वृत्र उच्यते । तस्माच्छम्भुं समभ्यर्च्य प्रदोषे विधिनाऽधुना । जहि वृत्रं महादैत्यं देवानां कार्यसिद्धये । गुरोस्तद्वचनं श्रुत्वा उवाचाथ शतक्रतुः । सोद्यापनं विधिं ब्रूहि प्रदोषस्य च मेऽधुना ।' बृहस्पतिरुवाच—'कार्तिके मासि संप्राप्ते मन्दवारे त्रयोदशी । संपूर्णा या भवेत्सा हि संपूर्णव्रतसिद्धये । वृषभो राजतः कार्यः पृष्ठे तस्य सुपीठकम् । तस्योपरि न्यसेद्देवमुमाकान्तं त्रिलोचनम् । पञ्चवक्त्रं दशभुजमर्धाङ्गे गिरिजा सती । सौवर्णप्रतिमां कृत्वा ताम्रकुम्भे जलावृते । पञ्चरत्नकलोपेतं पञ्चपल्लवचर्चितम् । चन्दनेन सुगन्धेन मिश्रिते शोभिते तथा । रूप्यपात्रं ततः कृत्वा कुम्भस्योपरि विन्यसेत् । अशक्तौ मृन्मये कुम्भे वंशपात्रमथापि वा । पर्णं शरावं चास्थाय सौवर्णीं प्रतिमां तथा । प्राप्त्या कृतां परिस्थाप्य वस्त्रमाल्यविभूषणैः । पूजयित्वा विधानेन रात्रौ जागरणं चरेत् । पुष्पमण्डपिकामादौ कृत्वा श्रद्धासमन्वितः । एह्येहि त्वमुमाकान्त सुखस्पर्शे सुनिर्मले । उपविश्य मृडेदानीं सर्वशान्तिप्रदो भव ।' आसनम् ।' पाद्यं च ते मया दत्तं पुष्पगन्धसमन्वितम् । गृहाण देवदेवेश प्रसन्नो वरदो भव ।' पाद्यम् । 'ताम्रपात्रस्थितं तोयं फलगन्धादिसंयुतम् । अर्घ्यं गृहाण देवेश मया दत्तं हि भक्तितः ।' अर्घ्यम् ।'शीतं च निर्मलं तोयं कर्पूरेण सुवासितम् । आचम्यतां सुरश्रेष्ठ मया दत्तं हि भक्तितः ।' आचमनम् । 'पञ्चामृतेन स्नपनं कार्यमादौ प्रयत्नतः । गोक्षीरधाम देवेश गोक्षीरेण मया कृतम् । स्नपनं देवदेवेश गृहाण परमेश्वर । दध्ना चैव स्नपनं क्रियते हि तवाधुना । गृहाण त्वं मया दत्तं सुप्रसन्नो भवाव्यय । सर्पिषा च मया देव स्नपनं क्रियतेऽधुना । गृहाण श्रद्धया दत्तं तव प्रीत्यर्थमेव च । इदं मधु मया दत्तं तव प्रीत्यर्थमेव च । गृहाण त्वं हि देवेश मम शान्तिप्रदो भव । सितया देवदेवेश स्नपनं क्रियतेऽधुना । गृहाण श्रद्धया दत्तं सुप्रसन्नो भव प्रभो । एवं पञ्चामृतेनैव स्नापनीयो वृषध्वजः । कावेरी नर्मदा वेणी तुङ्गभद्रा सरस्वती । गङ्गा च यमुना चैव ताभ्यः स्नानार्थमाहृतम् । गृहाण त्वमुमाकान्त स्नानाय श्रद्धया जलम् ।' स्नानम् । 'एतद्वासो

मया दत्तं सोत्तरीयं सुशोभनम् । गृहाण त्वं सुरश्रेष्ठ मम चायुःप्रदो भव ।' वस्त्रम् । 'यज्ञोपवीतं सौवर्णं मया दत्तं तव प्रभो । गृहाण परया तुष्टचा तुष्टिं मे कुरु सर्वदा । सुगन्धं चन्दनं देव मया दत्तं च वै प्रभो।भक्त्या परमया शंभो सुगन्धं कुरु मां भव । मालतीचम्पकादीनि कुमुदान्यमलानि च । बिल्वपत्राणि पूजार्थं स्वीकुरु त्वमुमापते ।' पुष्पम् । 'धूपं विशिष्टं परमं सर्वौषधिविजृम्भितम् । गृहाण परमेशान मम शान्त्यर्थमेव च।' धूपम् ।'दीपं हि परमं शंभो घृतप्रज्वलितं मया । दत्तं गृहाण देवेश मम ज्ञानप्रदो भव । दीपावलिं मया दत्तां गृहाण परमेश्वर । आरात्रिकप्रदानेन मम तेजः प्रदो भव । शाल्योदनं घृतापूपपायसादिसमन्वितम् । नैवेद्यं विविधं दत्तं भक्त्या मे प्रतिगृह्यताम् । कर्पूरैलालवङ्गादिपूगीफलसमन्वितम् । ताम्बूलं कल्पितं भक्त्या गृहाण गिरिजाप्रिये ।'इदं फलमिति फलम् । हिरण्यगर्भेति दक्षिणा ।'निपत्य दण्डवद्भूमौ प्रणम्य च पुनः पुनः । पश्चाज्जागरणं कार्यं गृहे वा देवतालये । वितानमण्डपं कृत्वा नानावर्णैः समन्वितम् । गीतवादित्रनृत्येन अर्चनीयः सदाशिवः । प्रभातायां तु शर्वर्यामुदिते रविमण्डले । स्नात्वा पुनः समभ्यर्च्य जुहुयात्पायसेन च । आचार्यं च सपत्नीकं वस्त्रालंकारचन्दनैः । तोषयित्वा शुचिं दान्तं गां दद्याच्च पयस्विनीम् । ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणाभिः प्रतोषयेत् । दीनानाथांश्च संतर्प्य अच्छिद्रं वाचयेत्ततः। लब्ध्वाऽनुज्ञां ब्राह्मणेभ्यो बन्धुभिः सहितः शुचिः । हृदि स्मरञ्छिवं भक्त्या भुञ्जीत नियतो व्रती।अनेनैव विधानेन प्रदोषोद्यापनविधिः । कार्यो विधिवता शक्र सर्वकार्यार्थसिद्धये। गुरुणा कथितं सर्वं तच्चकार शतक्रतुः । तेनैव च सहायेन इन्द्रो युद्धपरायणः। वृत्रं प्रतिसुरैः सार्धं युयुधे च शतक्रतुः । हते वृत्रासुरे देवा हर्षेण च समन्विताः ।' इति केदारखण्डोक्तं शनिप्रदोषव्रतम् । अथ मदनरत्ननिर्णयामृतस्थं स्कन्दपुराणोक्तं शनिवारादियुक्तत्रयोदश्यां कर्तव्यं प्रदोषव्रतम् । देव्युवाच— 'देव केन विधानेन प्रदोषव्रतमुत्तमम् । विधातव्यं जनैः स्त्रीभिः संतानफलसिद्धये ।' ईश्वर उवाच—' यदा त्रयोदशी शुक्ला मन्दवारेण संयुता । आरब्धव्यं व्रतं तत्र संतानफलसिद्धये । ऋणप्रमोचनार्थं तु भौमवारेण संयुता । सौभाग्यस्त्रीसमृद्धयर्थं शुक्रवारेण संयुता । आयुरारोग्यसिद्धयर्थं भानुवारेण संयुता ।' इति । अस्यां प्रातः स्नात्वा पुत्रादिकामदं व्रतं करिष्ये इति संकल्प्येमं मन्त्रमुदीरयेत् । 'एकवत्सरपर्यन्तं प्रतिपक्षत्रयोदशीम् । प्रदोषे शिवमभ्यर्च्य नक्तं भोक्ष्यामि शंकर ।' इति । 'ततस्तु लोहिते भानौ स्नात्वा सुनियतो व्रती । पूजास्थानं

ततो गत्वा प्रदोषे शिवमर्चयेत् । ' पूजां च गुरूपदिष्टविधिना आगममन्त्रैर्वैदिकमन्त्रैः षोडशोपचारैर्यथाविभवं कुर्यात् । ततः 'ॐ भवाय भवनाशाय नमः' इत्यादिप्रयोगक्रमेण प्रतिनाम शिवाय पुष्पाणि समर्पयेत् । तानि च 'भवाय भवनाशाय महादेवाय धीमते । रुद्राय नीलकण्ठाय शर्वाय शशिमौलिने । उग्रायोग्राघनाशाय भीमाय भयहारिणे । ईशानाय नमस्तुभ्यं पशूनां पतये नमः ।' इति । एवं संपूज्यानेन मन्त्रेण प्रार्थयेत् । 'यथा भवान्समस्तानां पशूनां पाशमोचक । तथा व्रतेन संतुष्टः पुत्रं देहि सुलक्षणम् ।' इति । 'सांयावकं च नैवेद्यं साज्यं सफलशर्करम् । दत्त्वातो मुखवासं च ताम्बूलक्रमुकादिकम् । समर्प्याष्टसु दिक्ष्वष्टदीपानाज्यपरिप्लुतान् । भवाद्यैर्नामभिर्दत्त्वा तैरेवाष्टप्रदक्षिणाः । नमस्काराष्टकं कृत्वा जप्त्वा पूजां समर्प्य च । वृषराजं समभ्यर्च्य वृषमन्त्रेण मन्त्रवित् ।' मन्त्रश्च–'धर्मस्त्वं वृषरूपेण जगदानन्दकारक । अष्टमूर्तेरधिष्ठानमतः पाहि सनातन ।' इति । 'वृषाय दूर्वां चषकं पानीयं च निवेद्य च । वृषस्य वृषणं स्पृष्ट्वा शृङ्गयोर्मध्यतः शिवम् । विलोक्य सहितं देव्या पूजितं प्रार्थयेच्छिवम् ।' प्रार्थनामन्त्रश्च । 'ऋणरोगादिदारिद्र्यपापक्षुदपमृत्यवः । भयशोकमनस्तापा नश्यन्तु मम सर्वदा।' इति । 'पृथिव्यां यानि तीर्थानि सागरान्तानि यानि च । अण्डमाश्रित्य तिष्ठंति प्रदोषे गोवृषस्य तु । स्पृष्ट्वा तु वृषणौ तस्य शृङ्गमध्ये विलोक्य च । पुच्छं च ककुदं चैव सर्वपापैः प्रमुच्यते ।' इति । 'निवेद्य कर्मजातं तु दद्याद्वित्तानुसारतः । दक्षिणां ब्राह्मणेभ्यश्च ततो मौनं विसर्जयेत् । एवं संवत्सरं कुर्यात्त्रयोदश्यामिदं व्रतम् । अथवा मन्दवारेण युक्तामेव त्रयोदशीम् । चतुर्विंशति कुर्वीत सोऽभीष्टफलमाप्नुयात् ।' इति । इति स्कन्दपुराणोक्तं शनित्रयोदशीव्रतम् । ब्रह्मोत्तरखण्डे सोमवारयुक्तायामपि त्रयोदश्यां विशेषेण शिवपूजोक्ता ।' सोमवारे विशेषेण प्रदोषादिगुणैर्युते । केवले वापि ये कुर्युः सोमवारे शिवार्चनम् ।' इति ।

अथ नृसिंहपुराणोक्तं नृसिंहत्रयोदशीव्रतम् । हेमाद्रौ–'गुरुवारे त्रयोदश्यामपराह्णे जलाप्लुतः । तर्पयित्वा देवपितॄनृषींश्च तिलतण्डुलैः । नरसिंहं समभ्यर्च्य यः करोत्युपवासकम् । सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ।' इति । इति नृसिंहत्रयोदशीव्रतम् ।

अथ कूर्मपुराणोक्तं प्रदोषव्रतम् । हेमाद्रौ–' त्रयोदश्यां तथा रात्रौ सोपवासस्त्रिलोचनम् । दृष्ट्वा तु प्रथमे यामे मुच्यते सर्वपातकैः ।' इति । अथ वराहपु-

राणोक्तं त्रयोदशीव्रतम् । सनत्कुमार उवाच—'अथ स्वस्त्ययनं पुंसां शृण्वतामघनाशनम्। त्रयोदश्यां महाबुद्धे व्रतमेतन्निशामय । नवनीतं नवं गव्यं रजतांशसमप्रभम्।' कपित्थफलमात्रं तत्समादाय ताम्रादिपात्रे प्राङ्मुखो निक्षिप्य अष्टदलपद्मकर्णिकायां लक्ष्मीनारायणं दलेष्वष्टशक्तीः दिक्ष्विन्द्रादीन् संपूज्य देवाग्रे तन्नवनीतं द्विधा कृत्वा प्रत्येकमभिमन्त्रयेत् । तत्र मन्त्रः—'पुरुषः पूर्णकामश्च हरिर्भद्रं करोतु नः । योषिद्वरा सदा लक्ष्मीर्मङ्गलं दिशतु स्वयम्।' इति वारद्वयं पत्न्यै प्राश्य तामभिमन्त्रयेत् । 'यस्त्वन्तरात्मभूतानामनादिनिधनोऽच्युतः । स परः परया शक्त्या कुक्षिं रक्षतु ते सदा । सर्वपुष्टिप्रजननी सर्वार्तिशमनी तव । लक्ष्मीः कुक्षिगतं गर्भं रक्षतादक्षतप्रिया। सर्वातिक्षयदक्षाणि दिव्यशक्तियुतान्यपि । त्वां रक्षन्तु सदा विष्णोः सर्वप्रहरणान्यपि । तथा दिक्पतयः सर्वे रक्षन्तु गृहदेवताः । पान्तु संसारसंयुक्ताः सर्वे रक्षन्तु सर्वदा ।' इति पत्नीमभिमन्त्र्य ब्राह्मणान् भोजयित्वा वध्वा सह तां रात्रिमतिवाह्य चतुर्दश्यां पुनर्द्विजान् भोजयित्वा स्वयं भुञ्जीतेति । तत्फलम्—'मङ्गल्यं परमं प्राप्य दीर्घमायुश्च विन्दति ।' इत्यनेन तत्रैवोक्तम् । अथ सौरपुराणोक्तं शिवव्रतम् । व्यास उवाच—'मन्दवारयुता पुण्या शुक्लपक्षे त्रयोदशी । तस्यामुपोष्य विधिना संपूज्य गिरिजापतिम् । ब्रह्महत्यादिभिः पापैर्मुक्तो भवति मानवः ।' इति । अथ भविष्यत्पुराणोक्तं कामत्रयोदशीव्रतम् । हेमाद्रौ—ब्रह्मोवाच—'कामं पूज्य त्रयोदश्यां सुरूपो जायते ध्रुवम् । इष्टां रूपवतीं भार्यां लभेत्कामांश्च पुष्कलान् ।' मूलमन्त्राः स्वसंज्ञाभिरङ्गमन्त्राश्च कीर्तिताः । पूर्ववत्पद्मपत्रस्थः कर्तव्यश्च तिथीश्वरः। गन्धपुष्पोपहारैश्च यथाशक्ति विधीयते । पूजाऽशाठ्येन शाठ्येन कृतापि तु फलप्रदा । आज्यधारासमिद्भिश्च दधिक्षीरान्नमाषिकैः । पूर्वोक्तफलदो होमः कृतः शान्तेन चेतसा ।' इति भविष्यपुराणोक्तं कामत्रयोदशीव्रतम् । अथ पुण्या त्रयोदशी। स्कन्दपुराणे—'चैत्रत्रयोदशी पुण्या तस्यां दानं महाफलम् ।' इति ।

अथ सिद्धविरुद्धादिकं लिख्यते। त्रयोदशी भौमवारेण सिद्धिदा । तदुक्तम्—'भौमे षष्ठी तृतीया स्यादष्टमी च त्रयोदशी ।' सोमेन तु विरुद्धा त्रयोदश्यां क्षत्रियादिभिर्मलापहस्नानं न कार्यम् । स्नातुर्जनस्य दशमीतनया त्रयोदशीत्यादिमलापहस्नाननिषेध इत्याद्युक्तमेव । त्रयोदश्यां दक्षिणदिशि योगिनीसांमुख्याद्यात्रा न कार्या । करग्रहे कुम्भस्थिते त्रयोदशी शुभकार्येषु वर्ज्या । त्रयोदश्यां वृन्ताकानि न भक्षयेत् ।

श्रीमद्दिल्लीशसेनोद्भटविकटभटोद्दण्डमत्तेभसिंह-
श्चण्डोन्माथतुरुष्कक्षुभितवसुमतीपालको धर्मराजः।
पौत्रः श्रीकृष्णसिंहक्षितिपकुलमणेर्विष्णुसिंहस्य पुत्रः
श्रीमान्राजाधिराजो जयहरिरमरावीशवत्को सुखी स्यात् ॥ १॥
श्रीमत्पण्डितदेवभट्टतनयः श्रीराघवाङ्घ्रिद्वय-
ध्यानावाप्तसमस्तकामनिवहः सम्राट् स रत्नाकरः।
तुष्ट्यै श्रीजयसिंहवर्मनृपतेः कल्पद्रुमे कामदं
प्रत्यग्रं मनुभिर्मितं समकरोत्सत्कामतिथ्यात्मकम् ॥ २ ॥

इति देवभट्टात्मजपौण्डरीकयाजिश्रीरत्नाकरविरचिते जयसिंहकल्पद्रुमोद्द्योते त्रयोदशीप्रकरणं समाप्तिमगमत् ।

---

## अथ चतुर्दशीनिर्णयः ।

अथ चतुर्दशी निर्णीयते । तत्रादौ कृष्णशुक्लचतुर्दशीध्यानम् । 'अब्जस्था पाटला भासा पलपात्रसुरामृता । नीलकण्ठेन्द्रगोपाभलोचनेयं चतुर्दशी ।' 'द्विभुजा तुरगारूढा कृष्णवर्णा चतुर्दशी । खड्गमल्लधरा नीलकुण्डला शुभ्रभूषणा ।' इति । चतुर्दशी तु शुक्ला परा ग्राह्या'चतुर्दश्या च पूर्णिमा इति युग्मवाक्यात्।'एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी । अमावास्या तृतीया च उपोष्याः स्युः परान्विताः ।' इति बृहस्पतिवाक्याच्च । 'शुक्ला चतुर्दशी ग्राह्या परविद्धा सदा व्रते।'इति व्यासवाक्याच्च । कृष्णचतुर्दशी तु पूर्वविद्धा ग्राह्या । 'कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी । पूर्वविद्धैव कर्तव्या परविद्धा न कुत्रचित्।उपवासादिकार्येषु एष धर्मः सनातनः।'इत्यापस्तम्बवचनात्।मदनरत्नादिषु-उपवासे तु शुक्ला कृष्णा परे एव ग्राह्ये।तदाह वृद्धवसिष्ठः—'एकादश्यष्टमी षष्ठी उभे पक्षे चतुर्दशी । अमावास्या तृतीया च उपोष्याः स्युः परान्विताः ।' इत्युक्तम् । हेमाद्रौ—यदा तु शुक्लकृष्णचतुर्दश्यौ पूर्वदिनापराह्णं व्याप्नुतस्तदा त्रयोदशीयुते एव ग्राह्ये । तथा च स्कन्दपुराणे— 'चतुर्दशी तु कर्तव्या त्रयोदश्या युता विभो । मम भक्तैर्महाबाहो भवेद्या चापराह्णिकी । दर्शविद्धा न कर्तव्या राकाविद्धा कदाचन ।' इति । मदनरत्नकालतत्त्वविवेचनयोस्तु शैवव्रते पक्षद्वयगताया अपि चतुर्दश्या आपराह्णिक्याः पूर्वविद्धात्वविधायकमिदं वाक्यमुपन्यस्तम् । मम भक्तैरितीश्वरोक्तिलि-

अष्टम्येकादशी षष्ठी कृष्णपक्षे
ज्ञेयं । यदा चापराह्णं न स्यान्मुनस्तदा परयुते ग्राह्ये । इति ब्रह्मवैवर्तवचनात् । चतु-
चतुर्दशी । अमावास्या तृतीया न कर्तव्या परसंयुता । इति ब्रह्मवैवर्तवचनात् । पूर्वविद्धाभिधानं
उपवासादिकार्येष्विव्यथापुरस्तम्ब्ववचनात् । उपवासे कृष्णचतुर्दश्याः । तत्र सर्वासु चतुर्दशीषु
तद्वद्दोषपवासविषयमिति । इति सामान्यचतुर्दशीनिर्णयः । तत्र सर्वासु चतुर्दशीषु
वीरेश्वरपूजोक्ता । स्कान्दे—विधायैव जागरणं नरो वीरेशमर्चयेत् । भूतायामेव
गृह्णाति शरीरं पाञ्चभौतिकम् । इति । चैत्रकृष्णचतुर्दश्यामुपवासं
चैत्रकृष्णचतुर्दश्यां केदारकुण्डोदपानमुक्तं तत्रैव । चैत्रकृष्णचतुर्दश्यां
विधाय च । केदारोदकपानेन यथा तत्र फलं लभेत् । इति । अथ चैत्रकृष्णचतुर्द-
शीकृत्यम् । पृथ्वीचन्द्रोदये पुलस्त्यः—चैत्रशुक्लचतुर्दश्यां यः स्नायाच्छिवसंनिधौ ।
न प्रेतत्वमवाप्नोति गङ्गायां तु विशेषतः । इति । चैत्रकृष्णचतुर्दश्यामङ्गारकदिने
यदि । पिशाचत्वं पुनर्न स्याद्गङ्गायां स्नानभोजनात् । अत्र पूर्वा ग्राह्या कृष्णपक्ष-
स्थत्वात् । गौडैस्त्वेतदेव शुक्लचतुर्दश्यामित्येवं देवलीयत्वेन पठितम् । इति
चैत्रकृष्णचतुर्दशी ।

अथ चैत्रशुक्लचतुर्दशी । सा दमनकारोपणे त्रियोगिनी पूर्वा ग्राह्या ।
मधोः श्रावणमासस्य शुक्ला या तु चतुर्दशी । सा रात्रिव्यापिनी ग्राह्या नान्या शुक्ला
कदाचन । इति हेमाद्रौ बौधायनोक्तेः । परा पूर्वाह्णगामिनी इति वा पाठः । निशि
भ्रमन्ति भूतानि इति ब्रह्मवैवर्तोक्तेश्च । निर्णयसिन्धौ तु पूर्वदिने मुहूर्तत्रयवेधे पूर्वा
अन्यथा उत्तरेति संप्रदायविन्मते स्थितम् । मयूखे तु—रात्रिव्यापिन्नीत्यत्रापूर्व-
विद्धापरामिति स्थितम् । अस्यां कर्पूरकुङ्कुमागरुचन्दनादिभिर्दमनेन च
शिवपूजा कार्या । तदुक्तं देवीपुराणे—चतुर्दश्यां तु कर्पूरकुङ्कुमाग-
रुचन्दनैः । वस्त्रादिमणिभिः पूजा कर्तव्या महती शिवे । वितानध्वजछत्र
च देयं पूज्याश्च मातरः । महत्पुण्यमवाप्नोति अश्वमेधफलादिकम् । इति । अत्र
लिङ्गपुराणे विशेष उक्तः—मदनेन तु त्रयोदश्यां तालवृन्तानिलेन तु । हंसयानसमारूढः
कामो मन्त्रप्रबाधितः । नारीभिर्वा जितश्चैव त्रैलोक्योन्मादमाचरेत् । तन्निर्वापण-
कामेन चतुर्दश्यां महामुने । ततोऽत्यर्थं मया प्रोक्ता नार्यश्चाथ नरास्तथा । कुर्वन्ति
कर्दमेनैव आत्मनस्तनुलेपनम् । निर्वापितानङ्गपीडा भवत्येव ममाज्ञया । एतदर्थं सदा
कार्यं क्रीडनं कर्दमेन च । प्रातः प्रहरमात्रं तु कर्तव्यं क्रीडनं नरैः । प्रक्षाल्याङ्गं ततः
स्नात्वा गन्धमाल्यानुलेपनम् । वस्त्रताम्बूलगीतादि रथ्याहट्टेषु वा चरेत् । झर्झरीघोषितं चैव

कृत्वा नित्यं शिवाग्रतः । सर्वकामसमृद्धस्तु वसेच्छिवपुरे नरः । स्वयं तु लिङ्गमेकं तु दृष्ट्वा तस्मिन्दिने नरः । ज्ञानलब्धशिवः सम्यग्भवेदेव न संशयः ।' इति । तथा 'मधुमासे तु संप्राप्ते शुक्लपक्षे चतुर्दशी । प्रोक्ता मदनपूजाऽत्र सिद्धिदा तु महोत्सवे ।' इति । अथ दमनकोत्सवविधिः । स्कन्दपुराणे—'चतुर्दशीं दमनकां वक्ष्यामि हितकाम्यया । लोकानापुण्यजनिकां सर्वसौख्यप्रदायिनीम् । यस्माद्दमनकैः पूजा चतुर्दश्यां विधानतः । क्रियते शंकरे तस्माद्दमनस्य चतुर्दशी । चैत्रशुक्लचतुर्दश्यां यथावत्पूजयेच्छिवम् । प्रासादशोभां कृत्वैव सम्यक्संमार्जनादिभिः । संस्नाप्य विधिवद्देवं क्षीराज्येक्षुरसादिभिः । श्रीखण्डागरकर्पूरैः कुङ्कुमैश्चानुलेपयेत् । ततो दमनकैर्बिल्वपत्रैर्मरुबकैः शुभैः । आलिङ्गपीठपर्यन्तं पूजयेद्ग्रथितैस्तथा । तगरं देवदारुं च श्रीफलान्यसिसिह्लकम् । अगरुं महिषाक्षं च धूपं वा निर्दहेत्ततः । शालिपिष्टोद्भवैर्दीपैः पञ्चभिर्नवभिस्तथा । कुर्यादारात्रिकं शंभोः कांस्यपात्रैसमुज्ज्वलैः । विचित्रवस्त्रपूजा च कर्तव्या महती शिवे । पुष्पमण्डपिकां चित्रां सवितानोज्ज्वलां शुभाम् । महोत्सवेन विधिवद्वाद्यतूर्यरवेण च । विविधैर्भक्ष्यभोज्यैश्च नैवेद्यं चोपकल्पयेत् । संभवे सति कार्या स्याद्रथयात्रा पिनाकिनः । प्रेक्षणीयैस्तथा नृत्यैर्वाद्ययन्त्रैश्च शोभनैः । पूजयेच्छिवभक्तांश्च विप्रानन्यांश्च शक्तितः । प्रीयतां शिव इत्युक्त्वा नक्तं भुञ्जीत च स्वयम् । वर्षे वर्षे प्रकर्तव्यमेतच्चैत्रोत्सवं महत् । शिवभक्तस्तथान्यैश्च कीर्तिश्रेयोभिवृद्धये ।' इति चैत्रशुक्लचतुर्दश्यां दमनकमहोत्सवविधिः । अस्यामेव चतुर्दश्यां काशिवासिभिः पशुपतीश्वरपूजा कार्या । तदुक्तं काशीखण्डे—'चैत्रशुक्लचतुर्दश्यामुपोषणपरायणः । पूजयित्वा पशुपतिं रात्रौ जागरणं चरेत् ।' इति । हेमाद्रौ—'चैत्रशुक्लचतुर्दश्यां शिवं पूज्य विधानतः । रोचनापलमात्रेण ततो लिङ्गं विलेपयेत् । नैवेद्यं पायसं प्रस्थं खण्डलड्डुकसंयुतम् । सघृतं गुग्गुलुं दद्यात्पलानां तु शतं पुनः । निवेदयेत्पिष्टलिङ्गं तिलप्रस्थं सहेमयुक् । शिवं दक्षिणदिग्भागे स्थापितव्यं प्रयत्नतः । भवरुद्राय निर्वर्त्य आचार्यं पूजयेत्ततः । एवं कार्यं प्रयत्नेन मोक्षमक्षयमिच्छता ।' इति । अस्यामेव चतुर्दश्यां नृसिंहोत्सवः कार्यः । तदुक्तं गारुडे—'मधौ शुक्लचतुर्दश्यां नृसिंहं जगतः प्रभुम् । राजोपचारैः संपूज्य मासमान्दोलयेत्कलौ । दक्षिणाभिमुखं देवं दोलमानं सुरेश्वरम् । संपूजितं सकृद्दृष्ट्वा सर्वपापैः प्रमुच्यते ।' इति । इति चैत्रशुक्लचतुर्दशी ।

वैशाखशुक्लचतुर्दशी नृसिंहजयन्ती । तदुक्तं वाराहे—'वैशाखस्य सिते पक्षे

चतुर्दश्यां महातिथौ । जयन्ती तत्र कर्तव्या नृसिंहस्य द्विजोत्तमैः ।' इति । गोविन्दार्णवे ब्राह्मे—'शुक्लपक्षे चतुर्दश्यां मासि माधवसंज्ञिके। प्रादुर्भूतो नृपश्चास्यस्तस्मात्तां समुपोषयेत् ।' इति । इयं प्रदोषव्यापिनी ग्राह्या । तदुक्तं मदनरत्ने हेमाद्रौ नृसिंहपुराणे—'वैशाखशुक्लपक्षे च चतुर्दश्यां निशामुखे । मज्जन्मसंभवं पुण्यं व्रतं पापप्रणाशनम् । वर्षे वर्षे तु कर्तव्यं मम संतुष्टिकारणम् ।' इति । तथा टोडरानन्दे स्कान्दे—'वैशाखस्य चतुर्दश्यां सोमवारेऽनिलर्क्षके । अवतारो नृसिंहस्य प्रदोषसमये द्विजाः ।' इति । तथा नृसिंहप्रासादोदाहृतनृसिंहपुराणे—'वैशाखशुक्लपक्षस्य चतुर्दश्यां विवस्वति । अस्तं गामिनि सर्वेषां पुरतः स्तम्भमध्यतः । प्रबभूव महाविष्णुर्नरसिंहाकृतिर्नृप । तस्माद्व्रतं नरैः कार्यं महाविष्णोरतिप्रियम् ।' इति । 'कूर्मः सिंहो बौद्धकल्की च सायम् ।' इति पुराणसमुच्चयवचनाच्च । दिनद्वये प्रदोषव्याप्तावव्याप्तावेकदेशसमव्याप्तौ वा परा ।सकलव्रतोपक्रमकाले सत्त्वात् । शुक्लपक्षगत्वात् 'चतुर्दश्या च पूर्णिमा ।' इति युग्मवाक्याच्च । वैषम्येणैकदेशयोगे आधिक्यवती ग्राह्या । कृत्यरत्नावल्यामपौर्वदीक्षितीये तु—दिनद्वयेऽप्यव्याप्तौ पूर्वा पूर्वदिने गौणकालव्याप्तेः सत्त्वात् । परदिने च तदभावादित्युक्तम् । यत्तु कैश्चिदुक्तम्—पूर्वदिने प्रदोषकालव्यापिचतुर्दशीसद्भावे उत्तरदिने प्रदोषकालास्पर्शेऽपि उत्तरविद्धा ग्राह्या । अनङ्गेन समायुक्ता न सोपोष्या चतुर्दशी । धनापत्यैर्वियुज्येत तस्मात्तां परिवर्जयेत् ।' इति वचनेन पूर्वविद्धानिषेधात् इति । तन्न । एतद्वचनस्य हेमाद्रिमदनरत्नादिसकलग्रन्थेष्वलिखितत्वेनानाकरत्वात् । अस्या एव योगविशेषेण प्राशस्त्यं नृसिंहपुराणे उक्तम्—'स्वातीनक्षत्रसंयोगे शनिवारे मद्व्रतम् । सिद्धियोगस्य संयोगे वणिजे करणे तथा । पुंसां सौभाग्ययोगेन लभ्यते दैवयोगतः । सर्वैरेतैस्तु संयुक्तं हत्याकोटिविनाशनम् । एभिर्योगैर्विनापि स्यान्मद्दिनं पापनाशनम् ।' इति । अस्मिन्व्रते सर्वेषामप्यधिकारः । 'सर्वेषामपि वर्णानामधिकारोऽस्ति मद्व्रते । मद्भक्तैस्तु विशेषेण कर्तव्यं मत्परायणैः ।' इति तत्रैवोक्तेः । इदं च संयोगपृथक्त्वन्यायेन नित्यं काम्यं च । वर्षे वर्षे तु कर्तव्यमिति वीप्साश्रवणात् । तथा 'विज्ञाय मद्दिनं यस्तु लङ्घयेत्पापकृन्नरः । स याति नरकं घोरं यावच्चन्द्रदिवाकरौ ।' इत्यकरणे दोषश्रवणात् । 'अपुत्रो लभते पुत्रान् ।' इति फलश्रवणाच्च । इति ग्राह्यतिथिनिर्णयः । अथात्र कृत्यमुच्यते कृत्यरत्नावल्याम् । अस्यां प्रातः कृत्यं विधाय सूर्यादिदेवताभ्यो व्रतं निवेद्याचम्य प्राणानायम्योदङ्मुखो वारिपूर्णं ताम्रपात्रं गृहीत्वा संकल्पं कुर्यात् । तदुक्तं हेमाद्रौ नृसिंह-

पुराणे—'नियमं च प्रकुर्वीत दन्तधावनपूर्वकम् ।' इति । दन्तधावनग्रहणं प्रातःकृत्योपलक्षणम् । दन्तधावनं च तृणपर्णादिना द्वादशगण्डूषैर्वा कार्यम् । उपवासदिने काष्ठनिषेधात् । निर्णयसिन्धौ दीक्षितीये च—संकल्परूपो व्रतोपक्रमो मध्याह्न एव कर्तव्यः । 'ततो मध्याह्नवेलायां नद्यादौ विमले जले ।' इत्युपक्रम्य 'परिधाय ततो वासो व्रतकर्म समारभेत् ।' इति नृसिंहपुराणोक्तेरिति । मदनरत्नेऽप्येवमेव । वस्तुतस्तु संकल्पः प्रातरेव कर्तुमुचितः । 'प्रातः संकल्पयेद्विद्वानुपवासव्रतादिकम् ।' इत्यादिवचनात् । व्रतकर्म समारभेदिति नृसिंहपुराणोक्तिस्तु व्रतस्य पूजादिरूपस्योपयोगि मण्डपादिसामग्रीसंपादनं तत्परत्वात् । नित्यकर्म समारभेदिति पाठस्यैव बहुशो दृष्टत्वेन तत्र व्रतप्रारम्भानुक्तेश्च । संकल्पमन्त्रस्तत्रैव—'श्रीनृसिंह महोग्रस्त्वं दयां कृत्वा ममोपरि । अद्याहं च विधास्यामि व्रतं निर्विघ्नतां नय ।' इति । निर्णयसिन्धौ तु—'नृसिंह देवदेवेश तव जन्मदिने शुभे । उपवासं करिष्यामि सर्वभोगविवर्जितः ।' इति संकल्पमन्त्र उक्तः । ततो व्रतस्थेन मिथ्यालापपाखण्ड्यादिसंभाषणवर्जनं कार्यम् । ततो मध्याह्ने नद्यादौ मृद्गोमयतिलामलकैः स्नात्वा नित्यकर्म कृत्वा गृहं गच्छेत् । ततः सायंकाले गोमयोपलिप्ते अष्टदलं कृत्वा तत्र कुम्भं संस्थाप्य तदुपरि सुवर्णसिंहं हैमीं पलतदर्धतदर्धार्धमितां नृसिंहप्रतिमां लक्ष्मीप्रतिमां च संस्थाप्य प्राणप्रतिष्ठां कृत्वा मूलमन्त्रेण वैदिकेन नाम्ना वा षोडशोपचारैः पूजयेत् । अत्र पूजोपयोगित्वेन नृसिंहमन्त्रन्यासादिकमुच्यते । 'उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् । नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ।' अस्य मन्त्रस्य, ब्रह्मा ऋषिः, अनुष्टुप् छन्दः, श्रीनृसिंहो देवता, हं बीजम्, ईं शक्तिः, न्यासे विनियोगः । ब्रह्मणे ऋषये नमः शिरसि, अनुष्टुप्छन्दसे नमो मुखे, श्रीनृसिंहदेवतायै नमो मुखे, नृसिंहदेवतायै नमो हृदये, हं बीजाय गुह्ये, ईं शक्तये पादयोः । उग्रं वीरम् अङ्गुष्ठाभ्यां नमः, महाविष्णुं तर्जनीभ्यां नमः, ज्वलन्तं सर्वतोमुखं मध्यमाभ्यां नमः, नृसिंहं भीषणम् अनामिकाभ्यां नमः, भद्रं मृत्युमृत्युं कनिष्ठिकाभ्यां नमः, नमाम्यहं करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासं कुर्यात् । ततो ध्यानम् । 'माणिक्याद्रिसमप्रभं निजरुचा संत्रस्तरक्षोगणं जानुन्यस्तकराम्बुजं त्रिनयनं रत्नोल्लसद्भूषणम् । बाहुभ्यां धृतचक्रशंखमनिशं दंष्ट्रोग्रवक्त्रोल्लसज्ज्वालाजिह्वमुदग्रकेशनिचयं वन्दे नृसिंहं विभुम् ।' एवं ध्यात्वा मानसोपचारैः संपूज्य शंखस्थापनं विधाय पूजां कुर्यात् । 'आगच्छ

देवदेवेशप्रह्लादवरदायक । यावत्पूजांकरोम्यत्रतावत्त्वंसुस्थिरो भव ।' सहस्रशीर्षेत्यावाहनम् । नानारत्नसमायुक्तं कार्तस्वरविभूषितम् । नृसिंह देवदेवेश आसनं परिगृह्यताम् ।' पुरुष एवेदमित्यासनम् । गङ्गादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतम् ।तोयमेतत्सुखस्पर्शं पाद्यार्थं परिगृह्यताम् ।' एतावानस्येति पाद्यम् । 'नृसिंहाच्युत देवेश लक्ष्मीकान्त जगत्पते । अर्घ्यं गृहाण देवेश लोकानां वरदायक ।' त्रिपादूर्ध्वेत्यर्घ्यम् ।' कर्पूरवासितं तोयं मन्दाकिन्याःसमाहृतम् । आचम्यतां त्वया देव मया दत्तं हि भक्तितः ।' तस्माद्विराडजायतेत्याचमनम् । 'पञ्चामृतेन स्नपनं करिष्ये सर्वसिद्धिदम् ।पयोदधिघृतं गव्यं माक्षिकं शर्करा तथा । पञ्चामृतेन स्नपनं गृहाण सुरसत्तम । आप्यायस्वेति पयःस्नानं, दधिक्राव्णइति दधिस्नानम् । घृतं मिमिक्ष इति घृतं, मधुवातेति मधु, स्वादुःपवस्वेतिशर्करा ।' गङ्गा च यमुना चैव नर्मदा च सरस्वती । तापी पयोष्णी कृष्णा च ताभ्यः स्नानार्थमाहृतम् । तोयमेतत्सुखस्पर्शं स्नानार्थं प्रतिगृह्यताम् । यत्पुरुषेणेति स्नानम्, स्नानानन्तरमाचमनीयम् । 'पीताम्बरयुगं देव सर्वकार्यार्थसिद्धये । मया निवेदितं भक्त्या नृसिंह वरदायक ।' तं यज्ञमिति वस्त्रम् । 'लक्ष्मीकान्त नमस्तेऽस्तु त्राहि मां भक्तवत्सल । ब्रह्मसूत्रं सोत्तरीयं गृहाणासुरनाशक।' तस्माद्यज्ञादिति यज्ञोपवीतम् । 'चन्दनं शीतलं दिव्यं चन्द्रकुङ्कुममिश्रितम् । ददामि तव तुष्ट्यर्थं नृसिंह परमेश्वर ।' तस्माद्यज्ञात्सर्वहुत ऋच इति गन्धम् । 'अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभनाः । नृसिंह देवदेवेश प्रीत्या त्वं स्वीकुरु प्रभो ।' अक्षताः । 'कालोद्भवानि पुष्पाणि तुलस्यादीनि वै प्रभो । पूजयामि नृसिंह त्वां लक्ष्म्या सह नमोऽस्तु ते।' तस्मादश्वा इति पुष्पाणि ।'कालागरुमयं दिव्यं सर्वदेवसुवल्लभम् । धूपं गृहाण देवेश सर्वकामसमृद्धये ।' यत्पुरुषमिति धूपम् । 'दीपः पापहरः प्रोक्तस्तमोराशिविनाशनः । दीपेन लभ्यते तेजस्तस्माद्दीपं ददामि ते।' ब्राह्मणोऽस्येति दीपम् । 'नैवेद्यं सुखदं चारु भक्ष्यभोज्यसमन्वितम् । ददामि ते रमाकान्त सर्वपापक्षयं कुरु ।' चन्द्रमा मनस इति नैवेद्यम् । इदं फलमिति फलम् । पूगीफलमिति ताम्बूलम् । हिरण्यगर्भगर्भस्थमिति दक्षिणा । पञ्चवर्तिसमायुक्तं सर्वमङ्गलदायकम् ।नीराजनं निरीक्षस्व रमाकान्त नमोऽस्तु ते।' इति नीराजनम् ।'मालतीमल्लिकापुष्पैर्नागचम्पकसंयुतैः। पुष्पाञ्जलिं गृहाणेमं पादाम्बुजयुगार्पितम् ।' पुष्पाञ्जलिं समर्पयेत् । 'नृसिंह देवदेवेश सर्वकामफलप्रद । लक्ष्मीकान्त नमस्तुभ्यं पुत्रपौत्रादिवृद्धये । नमस्ते देवदेवेश

नमस्ते सुरनायक । नमस्ते कमलाकान्त नमस्ते भक्तवत्सल । नमस्ते सर्वभूतेश वासुदेव नमोऽस्तु ते।' नाभ्या आसीदिति प्रार्थना । नमस्कारान् कुर्यात् । सप्तास्यासन्निति प्रदक्षिणां च कृत्वा उत्तरार्घ्यं दद्यात् । तत्र मन्त्रः– 'नृसिंहाच्युत देवेश लक्ष्मीकान्त जगत्पते । अनेनार्घ्यप्रदानेन सफलाः स्युर्मनोरथाः ।' ततो यज्ञेनेति पुष्पाञ्जलिं दत्त्वा रात्रौ गीतवाद्यपुराणादिभिर्जागरणं कृत्वा प्रभाते पुनः पूजयित्वा नृसिंहोद्देशेन ब्राह्मणान्भोजयित्वा स्वर्णमयं सिंहं गोभूहिरण्यतिलशय्यादि च दत्त्वा प्रार्थयेत् । 'मद्वंशे ये नरा जाता जनिष्यन्ते च ये पराः । तान्समुद्धर देवेश दुस्तराद्भवसागरात् । पातकार्णवमग्नस्य व्याधिदुःखाम्बुवारिभिः । जीवैस्तु परिभूतस्य महादुःखगतस्य मे । करावलम्बनं देहि शेषशायिञ्जगत्पते ।श्रीनृसिंह रमाकान्त भक्तानां भवनाशन । क्षीराम्बुधिनिवासेश चक्रपाणे जनार्दन । व्रतेनानेन देवेश भुक्तिमुक्तिप्रदो भव ।' इति । एवं संप्रार्थ्य नृसिंहप्रतिमां सोपस्करामाचार्याय दद्यात् । तत्र मन्त्रः–'पीताम्बर महाबाहो प्रह्लादभयनाशकृत् । अनेनार्चाप्रदानेन यथोक्तफलदो भव ।' दक्षिणाभिर्ब्राह्मणान्संतोष्य मध्याह्ने बन्धुभिः सह स्वयं भुञ्जीतेति । इति पूजा । अथ नृसिंहचतुर्दशीकथा हेमाद्रौ नृसिंहपुराणे–' हिरण्यकशिपुं हत्वा देवदेवं जगद्गुरुम् । सुखासीनं तदुत्सङ्गे शान्तकोपं रमापतिम् । प्रह्लादो ज्ञानिनां श्रेष्ठः प्रियं वचनमब्रवीत् ।' प्रह्लाद उवाच–' नमस्ते भगवन्विष्णो नृसिंहरूपिणे नमः । त्वद्भक्तोऽहं सुरेशैकं त्वां पृच्छामि च तत्त्वतः । स्वामिंस्त्वयि ममाभिन्ना भक्तिर्जाता त्वनेकधा । कथं चातिप्रियो जातः कारणं वद मे प्रभो ।' नृसिंह उवाच–' कथयामि महाप्राज्ञ शृणुष्वैकाग्रमानसः । भक्तेर्यत्कारणं वत्स प्रियत्वस्य च कारणम् । पुरा काले ह्यभूर्विप्रः किं तु त्वं नाप्यधीतवान् । नाम्ना त्वं वासुदेवो हि वेश्यास्वासक्तमानसः । तस्मिञ्जन्मनि नैव त्वं चकर्थ सुकृतं कियत् । मुक्त्वा तु मद्व्रतं चैकं वेश्यासंगतिलालसः । मद्व्रतस्य प्रभावेण भक्तिर्जाता तवानघ । पुराऽवन्तिपुरे ह्यासीद्ब्राह्मणो वेदपारगः । तस्य नाम सुशर्मेति बहुलोकेषु विश्रुतः । ब्रह्मक्रियासु नियतः सर्वासु किल तत्परः । अग्निष्टोमादिभिर्यज्ञैरिष्टाः सर्वे सुरोत्तमाः। तेनापि विद्यमानेन कृतं नो दुष्कृतं कियत् । तस्य भार्या सुशीला च विख्याता भुवनत्रये । पतिव्रता सदाचारा पतिभक्तिपरायणा । जज्ञिरेऽस्याः सुताः पञ्च तस्माद्द्विजवरात्तथा । सदाचाराः सुविद्वांसः पितृभक्तिपरायणाः ।तेषां मध्ये कनिष्ठस्त्वं वेश्यासंगतितत्परः । तथा निषेध्यमानेन सुरापानं त्वया कृतम् । सुवर्णं चाप्यपहृतं समं चीर्णं–

मद्यं बहु । विलासिन्या गृहे नित्यमवात्सीरपि वारितः । एकदा तद्गृहे ह्यासीत्त्वया सह महाकलिः । ततः कलिप्रभावेण भोजनं न त्वया कृतम् । अज्ञानान्मद्व्रतं चक्रे व्रतानामुत्तमं व्रतम् । तस्या विरहयोगेन रात्रौ जागरणं कृतम् । वेश्याया वल्लभं किंचित्प्रज्ञातं न त्वया समम् । रात्रौ जागरणं चीर्णं त्यक्तं भोजनमेकशः । व्रतेनानेन चीर्णेन मोदन्ते दिवि देवताः । सृष्ट्यर्थं हि पुरा ब्रह्मा चक्रे ह्येतदनुत्तमम् । मद्व्रतस्य प्रभावेण निर्मितं सचराचरम् । ईश्वरेण पुरा चीर्णं त्रिपुरस्य वधार्थिना । माहात्म्येन व्रतस्याशु त्रिपुरस्तु निपातितः । अन्यैस्तु बहुभिर्देवैर्ऋषिभिश्च पुरानघ । राजभिश्च महाप्राज्ञ विहितं व्रतमुत्तमम् । एतद्व्रतप्रभावेण सर्वे सिद्धिमुपागताः । वेश्यापि मत्प्रिया जाता त्रैलोक्ये सुखचारिणी । ईदृशं मद्व्रतं वत्स त्रैलोक्येषु च विश्रुतम् । धूर्तया च विलासिन्या ज्ञात्वा व्रतदिनं मम । कलहश्च कृतोऽनेन मद्व्रतं च कृतं भवेत् । सा वेश्या त्वप्सरा जाता भुक्त्वा भोगाननेकशः । मुक्ता कर्मविलीना तु त्वं प्रह्लादाविशस्त्विमाम् । कार्यार्थं च भवानास्ते मच्छरीरपृथक्तया । विहाय सर्वकार्याणि शीघ्रं मां च गमिष्यसि । य इदं व्रतमावश्यं प्रकरिष्यन्ति मानवाः । न तेषां पुनरावृत्तिर्मत्तः कल्पशतैरपि । अपुत्रो लभते पुत्रान्मद्भक्तांश्च सुवर्चसः । दरिद्रो लभते लक्ष्मीं धनदस्य च यादृशी । तेजस्कामो लभेत्तेजो राज्येप्सू राज्यमुत्तमम् । आयुष्कामो लभेदायुर्यादृशं च शिवस्य वै । स्त्रीणां व्रतमिदंसाधुपुत्रदंभाग्यदंतथा । अवैधव्यकरंतासां पुत्रशोकविनाशनम् । धनधान्यकरं चैव ज्ञातिश्रैष्ठ्यकरं शुभम् । स्त्रियो वा पुरुषा वापि कुर्वन्ति व्रतमुत्तमम् । तेभ्यो ददाम्यहं सौख्यं भुक्तिमुक्तिसमन्वितम् । बहुनोक्तेन किं वत्स व्रतस्यास्य फलं महत् । मद्व्रतस्य फलं वक्तुं नाहं शक्तो न शंकरः । ब्रह्मा चतुर्भिर्वक्त्रैश्च न लभेन्महिमावधिम्।' प्रह्लाद उवाच—' भगवंस्त्वत्प्रसादेन श्रुतं व्रतमनुत्तमम् । व्रतस्यास्य फलं साधु त्वयि मे भक्तिकारणम् । स्वामिञ्जातिविशेषेण त्वत्तः पापनिकृन्तनम् । अधुना श्रोतुमिच्छामि व्रतस्यास्य विधिं परम् । कस्मिन्मासे भवेदेतत्कस्मिन्वा वासरे प्रभो । एतद्विस्तरतो देव वक्तुमर्हसि सांप्रतम् । विधिना येन वै स्वामिन्समग्रफलभुग्भवेत् । ममोपरि कृपां कृत्वा ब्रूहि त्वं सकलं प्रभो ।' नृसिंह उवाच—' साधु साधु महाभाग व्रतस्यास्य विधिं परम्। सर्वं कथयतो मेऽद्य त्वमेकाग्रमनाः शृणु । वैशाखशुक्लपक्षे तु चतुर्दश्यां समाचरेत् । मज्जन्मसंभवं पुण्यं व्रतं पापप्रणाशनम् । वर्षे वर्षे च कर्तव्यं मम संतुष्टिकारणम् । महागुह्यमिदं श्रेष्ठं मानुषैर्भवभीरुभिः । तेनैव क्रियमाणेन सहस्र-

द्वादशीफलम् । जायते मत्सखो वच्मि मानुषाणां महात्मनाम् । स्वातीनक्षत्रयोगे च शनिवारेण संयुते । सिद्धियोगस्य संयोगे वणिजे करणे तथा । पुंसां सौभाग्ययोगेन लभ्यते दैवयोगतः । सर्वैरेतैस्तु संयुक्तं हत्याकोटिविनाशनम् । एतदन्यतरे योगे तद्दिनं पापनाशनम् । केवलेऽपि प्रकर्तव्यं मद्दिने व्रतमुत्तमम्।अन्यथा नरकं यांति यावच्चन्द्र-दिवाकरौ । यथा यथा प्रवृत्तिः स्यात्पातकस्य कलौ युगे।तथा तथा प्रणश्यन्ति मद्व्र-तस्य प्रवृत्तयः । मद्व्रतस्य प्रभावेण मतिर्न स्याद्दुरात्मनाम् । विचार्येत्थं प्रकर्तव्यं माधवे मासि मद्व्रतम् । नियमश्च प्रकर्तव्यो दन्तधावनपूर्वकम् । श्रीनृसिंह महोग्रस्त्वं दयां कृत्वा ममोपरि। अद्याहं च विधास्यामि व्रतं निर्विघ्नतां नय ।' इति व्रतग्रहणमन्त्रः । 'व्रतस्थेन न कर्तव्या संनतिः पापिभिः सह । मिथ्यालापो न कर्तव्यःसमग्रफलका-ङ्क्षिभिः । स्त्रीभिर्दुष्टैश्च आलापान्व्रतस्थो नैव कारयेत् । स्मर्तव्यं मे महारूपं मद्दिने सकलेप्युभे । ततो मध्याह्नवेलायां नद्यादौ विमले जले। गृहे वा देवखाते वा तडागे विमले शुभे । वैदिकेन च मन्त्रेण स्नानं कृत्वा विचक्षणः । मृत्तिकागोमयेनैव तथाधात्रीफलेन च । तिलैश्चसर्वपापघ्नैः स्नानंकृत्वा महामतिः। परिधाय शुचिर्वासो नित्यं कर्म समाचरेत् । ततो गृहं समागत्य स्मरन्मां भक्तियोगतः। गोमयेन प्रलिप्याथ कुर्यादष्टदलं शुभम्। कलशं तत्र संस्थाप्य ताम्ररत्नसमन्वितम् । तस्योपरि न्यसेत्पात्रं तन्दुलैः परिपूरितम् । हैमी तत्र च मन्मूर्तिः स्थाप्या लक्ष्म्यास्तथैव च। पलेन च त-दर्धेन तदर्धार्धेन वा पुनः । यथा शक्तिस्तथा कार्या वित्तशाठ्यविवर्जितैः। पञ्चामृतेन संस्नाप्य पूजनं च समाचरेत् । ततो ब्राह्मणमाहूय तमाचार्यमलोलुपम् ।सदाचारसमा-युक्तं शान्तं दान्तं जितेन्द्रियम् । तेनैव कारयेत्पूजां दृष्ट्वा शास्त्रानुसारतः । आचार्य-वचनाद्धीमान्पूजां कुर्याद्यथाविधि । मण्डपं कारयेत्तत्र पुष्पस्तवकशोभितम् । ऋतु-कालोद्भवैः पुष्पैः पूजयेद्यतमानसः । उपचारैः षोडशभिर्मन्मन्त्रैर्नामभिस्तथा । ततः पौराणिकैर्मन्त्रैः पूजनीयो यथाविधि । चन्दनं शीतलं दिव्यं चन्द्रकुङ्कुममिश्रितम् । ददामि तव तुष्ट्यर्थं नृसिंह परमेश्वर ।' इति चन्दनमन्त्रः । 'कालोद्भवानि पुष्पाणि तुलस्यादीनि वै प्रभो । पूजयामि नृसिंह त्वां लक्ष्म्या सह नमोऽस्तु ते ।' पुष्पमन्त्रः । कालागरुमयं धूपं सर्वदेवसुवल्लभम् । करोमि ते महाविष्णो सर्वकामसमृद्धये ।' धूप-मन्त्रः । 'दीपः पापहरः प्रोक्तस्तमोराशिविनाशनः । दीपेन लभ्यते तेजस्तस्माद्दीपं ददामि ते।' दीपमन्त्रः । 'नैवेद्यं सौख्यदं चारुभक्ष्यभोज्यसमन्वितम् । ददामि ते रमा-कान्त सर्वपापक्षयं कुरु।' इति नैवेद्यम् । 'नृसिंहाच्युत देवेश लक्ष्मीकान्त जगत्पते ।

अनेनार्घ्यप्रदानेन सफलाः स्युर्मनोरथाः।' इत्यर्घ्यम्। 'पीताम्बर महाबाहो प्रह्लादभयनाशकृत् । यथाभूतेनार्चनेन यथोक्तफलदो भव ।' प्रार्थनम् । 'रात्रौ जागरणं कार्यं गीतवादित्रनिःस्वनैः । पुराणपठनैर्नृत्यैः श्रोतव्या च कथा शुभा । ततः प्रभातसमये स्नानं कृत्वा ह्यतन्द्रितः । पूर्वोक्तेन विधानेन पूजयेन्मां प्रयत्नतः । वैष्णवं तु चरेच्छ्राद्धं मदग्रे स्वच्छमानसः । ततो दानानि देयानि वक्ष्यमाणानि चानघ । पात्रेभ्यस्तु द्विजेभ्यो हि लोकद्वयजिगीषया । सिंहः स्वर्णमयो देयो मम संतोषकारकः । गोभूतिलहिरण्यानि देयानि च फलेप्सुभिः । शय्या सतूलिका देया सप्तधान्यैसमान्विता । अन्यानि च यथाशक्ति देयानि मम तुष्टये । वित्तशाठ्यं न कुर्वीत यथोक्तफलकाङ्क्षया । ब्राह्मणान्भोजयेद्भक्त्या तेभ्यो देया च दक्षिणा । निर्धनैरपि कर्तव्यं देयं शक्त्यनुसारतः । सर्वेषामेववर्णानामधिकारोऽस्तिमद्व्रते । मद्भक्तैस्तुविशेषेण कर्तव्यं मत्परायणैः । मद्वंशे ये नरा जाता ये जनिष्यन्ति तत्पराः । तान्समुद्धर देवेश दुस्तराद्भवसागरात् । पातकार्णवमग्नस्य व्याधिदुःखाम्बुवारिभिः । जीवैस्तु परिभूतस्य महादुःखगतस्य मे । करावलम्बनं देहि शेषशायिञ्जगत्पते । श्रीनृसिंह रमाकान्त भक्तानां भवनाशन । क्षीराम्बुधिनिवासस्त्वं चक्रपाणे जनार्दन । व्रतेनानेन देवेश भुक्तिमुक्तिप्रदो भव । एवं प्रार्थ्य ततो देवं विसृज्य च यथाविधि । उपहारादिकं सर्वमाचार्याय निवेदयेत् । दक्षिणाभिः सुसंतोष्य ब्राह्मणांस्तु विसर्जयेत् । मध्याह्ने तु समायुक्तो भुञ्जीत बन्धुभिर्नरः । यइदंशृणुयाद्भक्त्या व्रतं पापप्रणाशनम् । तस्य श्रवणमात्रेण ब्रह्महत्या व्यपोहति । पवित्रं परमं गुह्यं कीर्तयेद्यस्तु मानवः । सर्वान्कामानवाप्नोति व्रतस्यास्य फलं लभेत् ।' इति नृसिंहचतुर्दशीकथा समाप्ता ।

अस्यामेव चतुर्दश्याम् ॐकारेश्वरयात्रायुक्तं काशीखण्डे—'राधशुक्लचतुर्दश्यामद्यापि क्षेत्रवासिनः । तत्र यात्रां प्रकुर्वंति महोत्सवपुरःसराः । तत्र जागरणं कृत्वा चतुर्दश्यामुपोषिताः । प्राप्नुवन्ति परं ज्ञानं यत्र कुत्रापि ते मृताः । ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सर्वतः । तानि वैशाखभूतायामागत्योंकृतिदर्शने ।' इति । अस्यामेव कालोत्तरलिङ्गव्रतम् । तदुक्तं हेमाद्रौ—'चतुर्दश्यां शुक्लपक्षे वैशाखस्य प्रयत्नतः । शिवं पूज्य विधानेन महास्नपनपूर्वकम् । विलिप्य कुङ्कुमेनैव चन्दनैश्चार्चयेच्छिवम् । लिङ्गं पिष्टमयं कृत्वा हेमपुष्पविलेपनम् ।' तिलप्रस्थसुवर्णयुतं शिवं

---

१—सप्तधान्यानि परिभाषायां दर्शितानि । २—व्रतं व्रतोपाख्यानम् । ३—वैशाखभूताया वैशाखचतुर्दश्याम् ।

गुग्गुलागरुसिह्लकधूपदमनपुष्पैश्च संपूज्य भवरुद्रायेति नाम्ना दद्यात् व्रतकर्तुस्तत्पितॄणां च शिवलोकप्राप्तिर्भवति इति वैशाखचतुर्दशीकृत्यानि ।

ज्येष्ठशुक्लचतुर्दश्यां सर्वदिने पञ्चतपाः सायं शिवप्रीतये हेमधेनुं दद्यात् । तदुक्तं मत्स्यपुराणे—'ज्येष्ठे पञ्चतपाः सायं हेमधेनुप्रदो दिवम् । यात्यष्टमीचतुर्दश्यो रुद्रव्रतमिदं स्मृतम् ।' इति ज्येष्ठचतुर्दशी ।

आषाढशुक्लचतुर्दश्यां हेमाद्रौ ब्राह्मे—'आषाढे मासि भूतायां शिवं संपूज्य मानवः । सर्वपापविनिर्मुक्तः सर्वसंपदमाप्नुयात् ।' इत्याषाढशुक्लचतुर्दशीकृत्यम् ।

अथ श्रावणशुक्लचतुर्दशी । सा च पवित्रारोपणे पूर्वविद्धा ग्राह्या चैत्रचतुर्दशीवत् । मदनरत्नेऽपि—इमौ पवित्रारोपदमनारोपौ रात्रियोगिन्यां चतुर्दश्यां कार्याविति । अथ देवीपुराणोक्तः पवित्रारोपणविधिः । ब्रह्मोवाच—'पवित्रं कारयेद्यस्तु तस्य पुण्यफलं शृणु । सर्वयज्ञव्रतं दानं सर्वतीर्थाभिषेचनम् । प्राप्नुयान्नात्र संदेहो यस्मात्सर्वगता शिवा । नाधयो न च दुःखानि न पीडा व्याधयोऽपि च । नश्यन्ति शत्रवस्तस्य न ग्रहैः पीड्यते क्वचित् । सिध्यन्ति सर्वकार्याणि अपि यानि महान्त्यपि । नातः परतरं वत्स अन्यत्पुण्यविवृद्धये । नराणां च नृपाणां च स्त्रीणां चापि विशेषतः । सौभाग्यजननं शक्र तव स्नेहात्प्रकाशितम् । सप्तम्यां वा त्रयोदश्यामधिवासं सुराधिप । सर्वोपहारसंपन्नो नन्दायां भक्तिमास्थितः । सर्वाणि पूजाद्रव्याणि पुष्पधूपफलानि च । नैवेद्यानि विचित्राणि वस्त्राण्याभरणानि च । दन्तधावनपूर्वं तु पञ्चगव्ये चरुं श्रपेत् । दत्त्वा दिशाबलिं वत्स कार्यं चैवाधिवासनम् । सदर्भैर्वस्त्रपत्रैर्वाछादयेत्तत्पवित्रकम् । शताभिमन्त्रितं कृत्वा ततो देव्यै निवेदयेत् । रात्रौ जागरणं कुर्यात्सर्वशोभासमन्वितः । नटनर्तकवेश्यानां संघानि विविधानि च । तिष्ठन्ति वाद्यगेयेषु निरतानि पुरंदर । प्रभातसमये वत्स प्राप्ते दद्यात्सुराबलिम् । प्रत्यूषे विधिवत्स्नात्वा तथा देवीं हुताशनम् । इष्ट्वा कुर्याद्यथान्यायं स्त्रियो भोज्यास्तथा द्विजाः । पवित्रारोपणाद्यन्ते दक्षिणामुपपादयेत् ।[1] यथापंक्त्यां भवेच्छक्र नियमः कार्यकारिणः । राजानं त्रिविधान्मन्त्री रक्षेत्क्रीडामृगावधात् । द्विजाचार्यैश्च स्वाध्यायो न कार्यं कर्षणं कृषेः । वणिग्भिर्न च वाणिज्यं दिनानि सप्त पञ्च च । अथ वा त्रीणि एकं वा दिनं यामार्धं एव वा । देव्या व्यापार आसक्तिः कर्तव्या सततं हरेः ।' इति । अधिवासने सप्तमीत्रयोदश्योर्विकल्पनिर्देशेन प्रधानेऽपि पवित्रारोपणे अष्टमीचतुर्दश्योर्विकल्पो ज्ञायते इति पवित्रारोपणम् । इति श्रावणशुक्लचतुर्दशी ।

---

१—परदिनकर्तव्यनिवेदनानुवादः ।

अथ भाद्रपदशुक्लचतुर्दश्यां सोद्यापनमनन्तव्रतम् । तत्र चतुर्दश्यौदयिकी ग्राह्या ।'उदये त्रिमुहूर्तापि ग्राह्यानन्तव्रते तिथिः ।' इत्युक्तेः। दैवकर्मत्वाच्च ।'चतुर्दश्या च पूर्णिमा' इति युग्मवाक्यात्।'तथा भाद्रपदस्यान्ते चतुर्दश्यां द्विजोत्तम।पौर्णमास्याः समायोगे व्रतं चानन्तकं चरेत् ।' इति भविष्योक्तेश्च ।'मुहूर्तमपि चेद्भाद्रे पूर्णिमायां चतुर्दशी । संपूर्णां तां विदुस्तस्यां पूजयेद्विष्णुमव्ययम् ।' इति स्कान्दाच्च । द्व्यहे औदयिकत्वे संपूर्णत्वात्पूर्वैव । कालतत्त्वविवेचनकृत्यरत्नावलीनिर्णयसिन्धुमयूखादिष्वप्येवम् । माधवीये उदयव्यापिन्यपि तिथ्यन्तरवत्त्रिमुहूर्तेति मुख्यः कालः । द्विमुहूर्तेत्यनुकल्पः । इत्युक्तम् । निर्णयामृते तु—स्वल्पायामप्युदयकालव्यापिन्यां चतुर्दश्यामुपक्रम्य पूर्णिमाभागेऽपि पूजादिकं कार्यम् । उदयव्यापिन्यास्तिथेर्दैवकृत्ये संपूर्णत्वविधानात् । तदुक्तं कण्वेन—'उपवासव्रतादीनां घटिकैकापि या भवेत् । उदये सा तिथिर्ज्ञेया विपरीता तु पैतृके ।' इत्यादि । वस्तुतस्तु—'मुहूर्तमपि चेद्भाद्रे' इति स्कान्दवाक्येन संपूर्णत्वाभिधानात् 'मध्याह्ने भोज्यवेलायाम्' इति कथावाक्याच्च पूजनं मध्याह्न एव कर्तव्यम् महाष्टम्यादिवत् । दिवोदासप्रतापमार्तण्डयोस्तु—मध्याह्ने भोज्यवेलायामिति कथाश्रवणान्मध्याह्नव्यापिनी ग्राह्येत्युक्तम् । अथानन्तपूजाविधिः । तत्र मासपक्षाद्युल्लिख्य मनोभिलषितकामनासिद्ध्यर्थमनन्तव्रतमहं करिष्ये इति संकल्प्य 'मण्डलं सर्वतोभद्रं कृत्वा कुम्भं तु विन्यसेत् । तत्र[1] चाष्टदले पद्मे पूजयेद्विष्णुमव्ययम् । कृत्वा दर्भमयं देवं फणासप्तकमण्डितम् । तस्याग्रतो दृढं सूत्रं कुङ्कुमाक्तं सुशोभनम् । चतुर्दशग्रन्थियुतमुपस्थाप्य प्रपूजयेत् । ततस्तु मूलमन्त्रेण नमस्कृत्य चतुर्भुजम् । नवाम्रपल्लवाभासपिङ्गभ्रूश्मश्रुलोचनम् । पीताम्बरधरं देवं शंखचक्रगदाधरम् । प्रसन्नवदनं विष्णुं विश्वरूपं विचिन्तयेत् ।' ध्यानम् । 'आगच्छानन्त देवेश तेजोराशे जगत्पते । क्रियमाणां मया पूजां गृहाण सुरसत्तम ।' सहस्रशीर्षेत्यावाहनम् । 'नानारत्नसमायुक्तं कार्तस्वरविभूषितम् । स्वासनं देवदेवेश गृहाण पुरुषोत्तम ।' पुरुष एवेत्यासनम् । 'गङ्गादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतम् । तोयमेतत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यताम् ।' एतावानस्येति पाद्यम् ।'अनन्तानन्तदेवेश अनन्तगुणसागर । अनन्तानन्तरूपोऽसि गृहाणार्घ्यं नमोऽस्तु ते ।' त्रिपादित्यर्घ्यम् । ' गङ्गाजलं समानीतं सुवर्णकलशे स्थितम् । आचम्यतां हृषीकेश त्रैलोक्य-

१—तत्र कुम्भोपरि पात्रं विन्यस्य तदुपर्यष्टदलं कृत्वा तत्र पूजयेदित्यर्थः ।

व्याधिनाशन ।' तस्माद्विराडित्याचमनम् । 'वाञ्छितं कुरु मे देव दुष्कृतं च निवारय । कुरुष्व मे दयां देव त्रैलोक्यार्तिभयापह ।' इति मधुपर्कम् । तत आचमनम् । 'शर्करामधुसंमिश्रं पयोदधिघृतं तथा । पञ्चामृतेन स्नपनं गृहाण जगतः पते ।' आप्यायस्व दुग्धम् । दधिक्राव्ण दधि । घृतं मिमिक्षेति घृतम् । मधुवाता मधु । स्वादुः पवस्व शर्करा । इति पञ्चामृतस्नानम् । 'गङ्गा च गोमती चैव यमुना च सरस्वती । नदीनदसहस्राणि स्नानार्थं तोयमाहृतम् । अनन्तगुणरत्नाय विश्वरूपधराय च । नमो माहात्म्यदेवाय अनन्ताय नमो नमः ।' यत्पुरुषेण स्नानम् । 'पीताम्बरयुगं देव सर्वकामार्थसिद्धये । मया निवेदितं भक्त्या गृहाण सुरसत्तम ।' तं यज्ञमिति वस्त्रम् । 'दामोदर नमस्तेऽस्तु त्राहि मां भवसागरात् । ब्रह्मसूत्रं सोत्तरीयं गृहाण पुरुषोत्तम ।' तस्माद्यज्ञात्सर्वहुत इति यज्ञोपवीतम् । 'श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् । विलेपनं सुरश्रेष्ठ प्रीत्यर्थं प्रतिगृह्यताम् ।' तस्माद्यज्ञात्सर्वहुत ऋच इति गन्धम्। 'नमः सर्वहितार्थाय जगदाधारहेतवे । सर्वसंस्थितिरूपाय अनन्ताय नमो नमः । अक्षतांश्च सुरश्रेष्ठ कुङ्कुमाक्तान्सुशोभनान् । वासुदेव जगन्नाथ प्रीत्या मे स्वीकुरु प्रभो ।' इत्यक्षतान् । 'माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो । मयाहृतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम्।' तस्मादश्वा इति पुष्पाणि । अथाङ्गपूजा । अनन्ताय नमः पादौ पूजयामि।संकर्षणाय नमः गुल्फौ पूजयामि।कालात्मने नमो जानुनी पूजयामि । विश्वरूपिणे नमः जघनं पूजयामि । विश्वरूपाय नमः कटिं पूजयामि । विश्वसाक्षिणे नमः मेढ्रं पूजयामि । पद्मनाभाय नमः नाभिं पूजयामि । परमात्मने नमः हृदयं पूजयामि । श्रीकण्ठाय नमः कण्ठं पूजयामि । सर्वास्त्रधारिणे नमः बाहून्पूजयामि । वाचस्पतये नमः मुखं पूजयामि । केशवाय नमः ललाटं पूजयामि । सर्वात्मने नमः शिरः पूजयामि । वनस्पतिरसो० यत्पुरुषमिति धूपम्।साज्यंत्रिवर्तिसंयुक्त० ब्राह्मणोऽस्येति दीपम्। नैवेद्यं गृह्यतां देव० चन्द्रमा इति नैवेद्यम् । 'कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतम् । आचम्यतां जगन्नाथ मया दत्तं हि भक्तितः ।' आचमनम् । उत्तरापोशनम् । 'गन्धकर्पूरसंयुक्तं कस्तूर्यादिसमन्वितम् । करोद्वर्तनकं देव गृहाण परमेश्वर ।' करोद्वर्तनकम् । इदं फलं० याः फलिनीरिति फलम्।'पूगीफलसमायुक्तं सकर्पूरं मनोहरम्। भक्त्या दत्तं मया देव ताम्बूलं प्रतिगृह्यताम् ।' ताम्बूलम् । 'हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ।' इति दक्षिणाम् । ततः पुष्पाञ्जलिं दत्त्वा नीराजनम् । 'चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च । त्वमेव

सर्वज्योतींषि आर्तिक्यं प्रतिगृह्यताम्।' अथ ग्रन्थिपूजा। श्रियै नमः १ मोहिन्यै नमः २ पद्मिन्यै नमः ३ महाबलायै नमः ४ देव्यै नमः ५ मङ्गलायै नमः ६ जयायै नमः ७ कामदायै नमः ८ शुभायै नमः ९ भद्रायै नमः १० सुभद्रायै नमः ११ वरदायै नमः १२ सर्वाङ्गायै नमः १३ लक्ष्म्यै नमः १४। अथ ग्रन्थिदेवताः। 'विष्णुरग्निस्तथा सूर्यः सहस्राक्षः पितामहः। इन्द्रः पिनाकी विघ्नेशः स्कन्दः सोमस्तथैव च। वरुणः पवनः पृथ्वी वसवो ग्रन्थिदेवताः।' चन्दनादिभिरर्चयेत्। ततो धूपः। नाभ्या आसीदिति नमस्कारः। 'साष्टाङ्गोऽयं प्रणामस्तु प्रयत्नेन मया कृतः। दासोऽहमिति मां मत्वा प्रसीद पुरुषोत्तम। अनन्त कामान्मे देहि सर्वकामफलप्रद। अनन्ताय नमस्तुभ्यं पुत्रपौत्रप्रवर्धन। प्रसीद देवदेवेश तुष्टोऽनन्त भवाच्युत। नमस्ते देवदेवेश नमस्ते गरुडध्वज। नमस्ते पुण्डरीकाक्ष नमस्ते ह्यमरप्रिय। नमस्ते कमलाकान्त वासुदेव नमोऽस्तु ते। द्वौ हस्तौ संपुटीकृत्य जानु भूमौ निधाय च।' इति वा नतिः। सप्तास्यासन्निति यानि कानि चेति प्रदक्षिणा। 'मालतीमल्लिकापुष्पैर्नागचम्पकसंयुतैः। पुष्पाञ्जलिं गृहाणेमं पादाम्बुजयुगार्पितम्।' यज्ञेन यज्ञमिति पुष्पाञ्जलिम्। 'नमः सर्वहितार्थाय जगदाधारवक्षसे। सर्वस्थित्यन्तरूपाय गृहाणार्घ्यं नमोऽस्तु ते।' पुनरर्घ्यम्। अथ प्रार्थना 'अनन्त कामान्मे देहि सर्वकामफलप्रद। अनन्ताय नमस्तुभ्यं पुत्रपौत्रविवर्धन। अनन्तः सर्वकामानामधिपः सर्वकामदः। व्रतेनानेन सुप्रीतो भवत्विह सदा मम।' इति 'अनन्ताय नमस्तुभ्यं सहस्रशिरसे नमः। नमोऽस्तु पद्मनाभाय नागाधिपतये नमः। अनन्त संसारमहासमुद्रे मग्नं समभ्युद्धर वासुदेव। अनन्तरूपे विनियोजयस्व अनन्तसूत्राय नमो नमस्ते।' सूत्रनमस्कारः। 'दुःखदारिद्र्यनाशाय पुत्रपौत्राभिवृद्धये। अनन्तबुद्ध्येदं सूत्रं धारयाम्यहमच्युत। अनन्तकामदं देव सर्वकामफलप्रदम्। अनन्तदोररूपेण पुत्रपौत्रप्रवर्धन। नमस्ते देवदेवेश नमस्ते धरणीधर। सूत्रग्रन्थिषु संस्थाय अनन्ताय नमो नमः।' इति सूत्रग्रहणम्। संसारगह्वरगुहासु सुखं विहर्तुमिति सूत्रबन्धनम्। अथ जीर्णदोरके 'संवत्सरकृतां पूजां संपाद्य विधिवन्मम। व्रजेदानीं सुरश्रेष्ठ अनन्तफलदायक।' इति तस्य षोडशोपचारपूजा कार्या। 'नमस्ते देव देवेश नमस्ते धरणीधर। नमस्ते सर्वनागेन्द्र नमस्ते पुरुषोत्तम।' इति प्रार्थनानमस्कारौ। ततो विसर्जनम्। 'न्यूनातिरिक्तानि परिस्फुटानि यानीह कर्माणि मया कृतानि। सर्वाणि चैतानि मम क्षमस्व प्रयाहि तुष्टः पुनरागमाय।' इति। अथ वायनदानम्। 'दाता च विष्णुर्भगवाननन्तः प्रतिग्रहीता च स एव विष्णुः

तस्मात्त्वया सर्वमिदं ततं च प्रसीद देवेश वरान्ददस्व । प्रतिगृह्ण द्विजश्रेष्ठ अनन्तफलदायक । त्वत्प्रसादादहंविप्रमुच्ये वै कर्मबन्धनात् । पक्वान्नं फलसंयुक्तं सघृतं दक्षिणान्वितम् । द्विजवर्याय दास्यामि व्रतसंपूर्तिहेतवे । अनन्तः प्रतिगृह्णाति अनन्तो वै ददाति च । अनन्तस्तारकोभाभ्यामनन्ताय नमो नमः ।' इति ।

अथ कथा । 'अरण्ये वर्तमानास्ते पाण्डवा दुःखकर्षिताः । कृष्णं दृष्ट्वा महात्मानं प्रणिपत्येदमब्रुवन् ।' युधिष्ठिर उवाच—'अहं दुःखीह संजातो भ्रातृभिः परिवारितः । कथं मुक्तिर्भवेदस्माकमनन्ताद्दुःखसागरात् ।' श्रीकृष्ण उवाच । 'अनन्तव्रतमस्त्येकं सर्वपापहरं शुभम् । सर्वकामप्रदं नृणां स्त्रीणां चैव विशेषतः । शुक्लपक्षे चतुर्दश्यां मासि भाद्रपदे भवेत् । तस्यानुष्ठानमात्रेण सर्वपापैः प्रमुच्यते ।' युधिष्ठिर उवाच—'कृष्ण कोऽयं त्वयाख्यातो योऽनन्त इति कीर्तितः । किं शेषनाग आहोस्विदनन्तस्तक्षकः स्मृतः । परमात्माऽथ वानन्त उताहो ब्रह्म उच्यते । एष कोऽनन्तसंज्ञो वै तथ्यं मे ब्रूहि केशव ।' श्रीकृष्ण उवाच । 'अनन्त इत्यहं पार्थ मम रूपं निबोधय । आदित्येन्द्वादिचारेण यः काल उपपद्यते । कलाकाष्ठामुहूर्तादिदिनरात्रिशरीरवान् । पक्षमासर्तुवर्षादियुगकल्पव्यवस्थया । योऽयं कालो मयाख्यातः सोऽनन्त इति कीर्तितः । सोऽहं कालोऽवतीर्णोऽत्र भुवो भारापनुत्तये । दानवानां विनाशाय वसुदेवकुलोद्भवः । पार्थ मां विद्ध्यनन्तं त्वं कृष्णं विष्णुं हरिं शिवम् । ब्रह्माणं भास्करं शेषं सर्वव्यापकमीश्वरम् । अनादिमध्यनिधनं त्रिगुणातीतमव्ययम् । विश्वरूपं महाकायं सृष्टिसंहारकारकम् । विश्वरूपमनन्तं च यस्मिन्निन्द्राश्चतुर्दश । वसवो द्वादशादित्या रुद्रा एकादशापि च । सप्तर्षयः समुद्राश्च पर्वताः सरितो द्रुमाः । नक्षत्राणि दिशो भूमिः पातालं भूर्भुवादिकम् । मा कुरुष्वात्र संदेहं सोऽहं पार्थ न संशयः । प्रत्ययार्थं मया पार्थ भ्रातुस्तव च दर्शितम् ।' युधिष्ठिर उवाच—'अनन्तव्रतमाहात्म्यविधिं वेदविदां वर । किं पुण्यं किं फलं तस्मादनुष्ठानवतां नृणाम् । केन चादौ पुरा चीर्णं मर्त्ये केन प्रकाशितम् । एतत्सविस्तरं कृष्ण ब्रूह्यनन्तव्रतं विभो ।' श्रीकृष्ण उवाच—'आसीत्पुरा कृतयुगे सुमन्तुर्नाम वै द्विजः । वसिष्ठगोत्रे चोत्पन्नः सुरूपां च भृगोः सुताम् । दीक्षानाम्नीं चोपयेमे गृह्योक्तविधिना ततः । तस्याःकालेन संजाता दुहितानन्तलक्षणा । शीला नाम सुशीला सा वर्धते पितृवेश्मनि । माता च तस्याः कालेन ज्वरदाहेन पीडिता । विननाश नदीतीरे मृता स्वर्गपुरं ययौ । सुमन्तुरपि सोऽन्यां वै धर्मपुंसः सुतां पुनः । उपयेमे विधानेन कर्कशां

नाम चार्थतः । दुःशीलां कर्कशां चण्डीं नित्यं कलहकारिणीम् । सापि शीला पितुर्गेहे गृहार्चनरताऽभवत् । कुड्यस्तम्भगृहद्वारदेहलीतोरणादिषु । चतुरङ्गकवर्णैश्च नीलपीतसितासितैः । स्वस्तिकैः शंखपद्मैश्च अर्चयन्ती पुनः पुनः ।ततः काले बहुतिथे कौमारवशवर्तिनी । पित्रा दृष्टा तदा तेन स्त्रीचिह्ना यौवने स्थिता । कस्मै देया मया कन्या विचार्यैव सुदुःखितः । एतस्मिन्नेव काले तु मुनिर्वेदविदां वरः । कन्यार्थी चागतः श्रीमान्कौण्डिन्यो मुनिसत्तमः । उवाच रूपसंपन्नां त्वदीयां तनया वृणे । पितादद्दौमुनीन्द्रायकौण्डिन्याय शुभे दिने । गृह्योक्तविधिना पार्थ विवाहमकरोत्तदा । निर्वर्त्यौद्वाहिकं कर्म प्रोक्तवान्कर्कशां द्विजः । किंचिद्दायादिकं देयं जामातुः परितोषकम् । तच्छ्रुत्वा कर्कशा क्रुद्धा प्रोत्सार्य गृहमण्डनम् । पेटायां सुस्थिरं बद्ध्वा प्राह भो गृह्यतामिति । भोज्यावशिष्टचूर्णेन पाथेयं च चकार सा । कौण्डिन्योऽपि विवाह्यैनां पथि गच्छञ्शनैः शनैः । शीलां सुशीलामादाय नवोढां गोरथेन हि । मध्याह्ने भोज्यवेलायां समुत्तीर्य सरित्तटे । ददर्श शीला सा स्त्रीणां समूहं रक्तवाससाम् । चतुर्दश्यामर्चयन्तं भक्त्या देवं पृथक्पृथक् । उपगम्य शनैस्तत्र पप्रच्छ स्त्रीकदम्बकम् । आर्याः किमेतन्मे ब्रूत किंनाम व्रतमीदृशम् । ता ऊचुर्योषितः सर्वाः शीलां शीलविभूषणाम् । अनन्तव्रतमेतद्धि व्रतेऽनन्तः सुपूज्यते । साऽब्रवीदहमप्येतत्करिष्ये व्रतमुत्तमम् । विधानं कीदृशं चात्र किं दानं कस्य पूजनम् । ' स्त्रिय ऊचुः— ' कुर्यात्पूजां सरित्तीरे सदानन्तस्य चोत्तमाम्।गोचर्ममात्रं संलिप्य गोमयेन विचक्षणैः। मण्डलं कारयेत्तत्र सर्वतोभद्रसंज्ञितम् । चित्रं तण्डुलमिश्रेण पञ्चवर्णं च कारयेत् । शोभादीपोपसंयुक्तमत्याह्लादकरं परम् । तन्मध्ये स्थापयेत्कुम्भमव्रणं धातुमृन्मयम् । चर्चितं चन्दनाद्यैस्तु वस्त्रयुग्मेन वेष्टितम् । न्यसेत्तस्मिन्स्वर्णपात्रं राजतं ताम्रकं तु वा । कृत्वा दर्भमयं देवं फणासप्तकमण्डितम्।पूजयेत्तत्र देवेशं सदानन्दफलप्रदम् । तस्याग्रतो दृढं सूत्रं कुङ्कुमाक्तं सुरोदकम्।चतुर्दशग्रन्थिभिस्तु सव्यवृत्तैः सुनिर्मितम् । अनन्तपूजनं शीले कुरुष्व सरसीतटे । अक्षताः कुंकुमं दूर्वा कर्पूरागरुचन्दनम् । माल्यसंघं वस्त्रयुग्ममुपवीतं ह्युपानयेत् । देवमण्डपिकायां तु यथास्थानं प्रसाद्य च । गङ्गाम्भसा च पर्युक्ष्य प्राणायामान्तरात्मवान् । शीले सदन्नप्रस्थस्य पुन्नाम्ना संस्कृतस्य च । अर्धं विप्राय दातव्यमर्धमात्मनि भोजनम् । ततस्तद्दक्षिणे पुंसां स्त्रीणां वामे करे न्यसेत् । अनन्तसंसारमहासमुद्रे मग्नं च मामुद्धर वासुदेव । अनन्त सूत्रे विनियोजयस्व अनन्त सूत्राय नमोनमस्ते । अनेन दोरकं बद्ध्वा कथां श्रुत्वा हरेरिमाम् । भुक्त्वा चान्ते व्रजे

द्देश्म शीले प्रोक्तं व्रतं तव ।' श्रीकृष्ण उवाच—'एतच्छ्रुत्वा व्रतं शीला करे बद्ध्वा सुदोरकम् । पाथेयशेषं विप्राय दत्त्वा भुक्त्वा तथैव च । हृष्टा स्त्रीभिरनुज्ञाता ताः प्रणम्य पतिं ययौ । अनन्तार्पितपाथेयं भुक्त्वा स्वपतिना सह । ततो जगाम सा हृष्टा गोरथेन स्वमाश्रमम् । भर्त्रा सहैव शनकैरुपविष्टा स्वके गृहे । सुस्था सुखोपविष्टा सा सह भर्त्रा सुमध्यमा । तेनानन्तप्रभावेण बहुगोधूमसंकुलम् । इतस्ततः श्रिया युक्तं धनधान्यसमाकुलम् । आकुलं व्याकुलं चैव सर्वत्रातिथिभोजनैः । पेटामुद्घाट्य तद्दृष्ट्वा महत्कौतूहलं गता । मम मात्रा क्रूरया च नित्यं वै क्रोधशीलया । भर्तुर्नियोगात्क्रोधेन प्रोत्खाय गृहचित्रकम् । स्वस्तिकं पद्मशंखादि पेटायां निहितं रुषा । तच्च सर्वं यथावर्णं रत्नानि कनकानि च । अनन्तकृपया तस्याः प्रत्ययस्तत्क्षणादभूत् । ततोऽनन्तव्रतेनापि गृहे लक्ष्मीर्व्यवस्थिता । धनं धान्यं पुष्कलं च गृहे स्वजनसंकुलम् । महर्षिभिः समायुक्तं ब्राह्मणातिथिपूजनैः । सापि माणिक्यकाञ्चीभिर्मुक्ताभरणभूषिता । दिव्यवस्त्रसमायुक्ता सावित्रीप्रतिमाऽभवत् । कदाचिदुपविष्टेन भर्त्राऽनन्तात्मकं तु तत् । दृष्टं तु दोरकं बद्धं हास्यंकृत्वाविकुत्सितम् । शीलाया हस्तमूलात्तु आक्षेपात्त्रोटितं रुषा । कोऽनन्तइतिजल्पेनब्रुवतातेन पाण्डव । तया निवारितेनापि साहसं दुष्कृतं कृतम् । क्षिप्तोऽनन्तो ज्वलद्वह्नौ हाहा कृत्वा प्रधाविता । शीला गृहीत्वा तत्सूत्रं क्षीरमध्ये समाक्षिपत् । तेन कर्मविपाकेन तस्य लक्ष्मीः क्षयं गता । गोधनं तस्करैर्नीतं गृहं दग्धं गतं वसु । यद्यथैवागतं गेहे तत्तथैव गतं गृहात् । स्वजनैः कलहो नित्यं मित्रैः सह विरोधनम् । न कश्चिद्वदते लोके तेन सार्धं युधिष्ठिर ।' कौण्डिन्य उवाच—'शीले जानासि किं पापं यस्मादेतद्गतं मम । धनधान्यादिकं सर्वं यदि जानासि तद्वद ॥ शीलोवाच । 'प्रायोऽनन्तकृतो दोषो जातो भर्तर्न संशयः'। अनन्ताक्षेपदोषेण दारिद्र्यं पतितं गृहे ।' कृष्ण उवाच— 'ततो जगाम कौण्डिन्यो निर्वेदाद्गहनं वनम् । ध्यायंस्तु मनसानन्तं क्व द्रक्ष्यामीति केशवम् । व्रतं निरशनं कृत्वा ब्रह्मचारी हरिं जपन् । विलोकयन्ययौ पार्थ सोऽरण्यं जनवर्जितम् । तत्रापश्यन्महाचूतं पुष्पितं फलितं द्रुमम् । वर्जितं पक्षिसंघातैः कृमिकोटिसमाकुलम् । तमपृच्छद्द्विजोऽनन्तः क्वचिद्दृष्टो महाद्रुम । तमूचे चूतवृक्षोऽथ नानन्तो वीक्षितो द्विज । एवं निराकृतस्तेन गां ददर्श सवत्सकाम् । वनमध्ये प्रधावन्तीमितश्चेतश्च पाण्डव । सोऽब्रवीद्धेनुके ब्रूहि यद्यनन्तस्त्वयेक्षितः । गौरुवाचाथ कौण्डिन्यं नानन्तं वेद्म्यहं द्विज । ततो व्रजन्ददर्शाग्रे वृषभं शाद्वले स्थितम् । तमपृच्छत्स गोस्वामिन्दृष्टोऽनन्तः क्वचित्त्वया । वृषभस्तमुवाचेदं नानन्तो

वीक्षितो द्विज । ततो व्रजन्ददर्शाग्रे रम्य पुष्करिणीद्वयम् । अन्योन्यजलकल्लोलैर्वीचिपर्यन्तसं कुलम् । छन्नं कमलकह्लारैः कुमुदोत्पलमण्डितम् । सेवितं भ्रमरैर्हंसैश्चक्रवाकैर्बकैस्तथा । ऊचे ब्रूतं द्विजोऽनन्तो भवतीभ्यां यदीक्षितः । ते ऊचतुः पुष्करिण्यौ नानन्तो वीक्षितो द्विज । ततो व्रजन्ददर्शाग्रे गर्दभं कुंजरं तथा । तावपृच्छाद्द्विजोऽनन्तो भवद्भ्यां नोपलक्षितः । तावूचतुर्नेक्षितोऽसावनन्तो ब्राह्मणोत्तम । तस्मिन्क्षणेऽथ विप्रोऽसौ निर्विण्णः समजायत । एवं संपृच्छ्य नष्टाशस्तत्रैव निषसाद ह । कौण्डिन्यो विह्वलीभूतोनिराशोजीविते नृप । दीर्घमुष्णं च निःश्वस्य पपातभुविभारत । प्राप्य संज्ञामनन्तेति जल्पन्नुत्थाय स द्विजः । ननु त्यक्ष्याम्यहं प्राणानिति संकल्प्य चेतसि । उत्थायोद्बध्य वृक्षेऽस्मिंस्तावद्भरतसत्तम । तस्मिन्क्षणे सुनिर्विष्टे कौण्डिन्ये ब्राह्मणोत्तमे । कृपयाऽनन्तदेवोऽपि प्रत्यक्षः समजायत । वृद्धब्राह्मणरूपेण इत एहीत्युवाच तम् । प्रवेशयामास गुहां गृहीत्वा दक्षिणे करे । स्वां पुरीं दर्शयामास दिव्यनारीनरैर्युताम् । तस्यां निविष्टमात्मानं वरे सिंहासने शुभे । पार्श्वस्थशंखचक्राब्जगदागरुडशोभितम् । दर्शयामास विप्राय पूर्वोक्तं विश्वरूपिणम् । कौस्तुभेन विराजन्तं वनमालाविभूषितम् । तं दृष्ट्वा देवदेवेशमुवाच परया मुदा । पापोऽहं पापकर्माऽहं पापात्मा पापसंभवः । त्राहि मां कृपया देव शरणागतवत्सल । अद्य मे सफलं जन्म जीवितं च सुजीवितम् । यत्तवाङ्घ्रियगाम्भोजे यन्मूर्धा भ्रमरायते । तच्छ्रुत्वानन्तदेवोऽपि ददौ तस्मै वरत्रयम् । दारिद्र्यनाशनं धर्मं विष्णुलोकं सनातनम् । प्रतिगृह्य वरान्विप्रः प्रहृष्टः प्रत्युवाच तम् ।' कौण्डिन्य उवाच—'कश्चूतः का च गौर्दृष्टा किं च पुष्करिणीद्वयम् । कः खरः कुञ्जरः कोऽसौ कोऽसौ वृद्धो द्विजोत्तमः ।' अनन्त उवाच—'स चूतवृक्षो विप्रोऽसौ वेदान्वेदविशारदः । प्रार्थितोऽपि न च प्रादाच्छिष्येभ्यस्तरुतां गतः । सा गौर्वसुंधरा दृष्टा पूर्वा या बीजहारिणी । वृषो धर्मस्त्वया दृष्टः शाद्वलं सत्यमास्थितः । धर्माधर्मव्यवस्थानं तच्च पुष्करिणीद्वयम् । ब्राह्मण्यौ केचिदप्यास्तां भगिन्यौ ते परस्परम् । धर्माधर्मादि यत्किंचित्तं निवेदयतो मिथः । न विप्राय कचिद्दत्तमतिथौ दुर्बलेऽपि वा । भिक्षा दत्ता न चार्थिभ्यस्तेन पापेन कर्मणा । वीचिकल्लोलमालाभिर्गच्छतस्ते परस्परम् । खरः क्रोधस्त्वया दृष्टः कुञ्जरो मद उच्यते । ब्राह्मणोऽसावनन्तोऽहं गुहा संसारगह्वरम् । इत्युक्तं ते मया सर्वं विप्र गच्छ पुनर्गृहम् । चरानन्तव्रतं तत्र नव वर्षाणि पञ्च च । ततस्तुष्टः प्रदास्यामि नाक्षत्रं स्थानमुत्तमम् ।

भार्यया सह धर्मात्मा भुक्त्वा भोगान्मनोरमान्। पुत्रपौत्रसमायुक्तस्ततो मोक्षमवाप्स्यसि।' श्रीकृष्ण उवाच—'इति दत्त्वा वरान्देवस्तत्रैवान्तरधीयत। स्वप्नप्रायं स तद्दृष्ट्वा ततः स्वगृहमागतः। कृत्वानन्तव्रतं सम्यङ्नव वर्षाणि पञ्च च। भुक्त्वा सर्वमनन्तेन यथोक्तं पाण्डुनन्दन। अन्ते च स्मरणं प्राप्य गतोऽनन्तपुरं द्विजः। तथा त्वमपि राजर्षे कथां शृण्वन्व्रतं कुरु। प्राप्स्यसे चिन्तितं सर्वमनन्तस्य वचो यथा। यद्वच्चतुर्दशे वर्षे फलं प्राप्तं द्विजन्मना। वर्षैकेन तदाप्नोति कृत्वा सांख्यानकव्रतम्। एतत्ते कथितं भूप व्रतानामुत्तमं व्रतम्। यत्कृत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः। येऽपि शृण्वन्ति सततं पठन्ति च नरोत्तमाः। तेऽपि पापविनिर्मुक्ताः प्राप्स्यन्ति च हरेः पुरम्। संसार-गह्वरगुहासु सुखं विहर्तुं वाञ्छन्ति ये कुरुकुलोद्भव शुद्धसत्त्वाः। संपूज्य च त्रिभुव-नेशमनन्तदेवं बध्नन्ति दक्षिणकरे वरदोरकं ते।' इति भविष्योत्तरपुराणे अनन्त-व्रतकथा। ❀।

अथोद्यापनम्। युधिष्ठिर उवाच—'देवदेव समासेन व्रतस्य परमाद्भुतम्। उद्यापनविधिं ब्रूहि अनुग्राह्योऽस्मि केशव। उद्यापनविधिं हित्वा न व्रतस्य फलं लभेत्। तस्माद्यथा तथा कुर्याद्वित्तशाठ्यं विवर्जयेत्।' श्रीकृष्ण उवाच—'मासि भाद्रपदे प्राप्ते परिपूर्णव्रते ततः। शुक्लायां च चतुर्दश्यां ब्रह्मचारी व्रती ततः। एक-भुक्तेन नियमं कृत्वा भक्तिसमन्वितः। स्नात्वा नद्यां देवखाते तीर्थे प्रस्रवणे तथा। सर्वौषधैः सर्वगन्धैस्तिलकल्कैरथामलैः। वेदोक्तविधिना सम्यक्तर्पयेत्पितृदेवताः। ततो गृहं समागत्य वेदिं कृत्वा सुशोभनाम्। तत्रालिखेन्मण्डलकं पञ्चवर्णैः सुपेशलैः। नवनाभं सुसंपूर्णं सर्वतोभद्रमेव च। तस्योपरि न्यसेत्कुम्भमव्रणं सुनवं दृढम्। ताम्र-पात्रसमायुक्तं पञ्चरत्नसमन्वितम्। माषकेण सुवर्णस्य दरिद्रोऽपि हि पार्थिव। कृत्वानन्तं प्रयत्नेन ताम्रपात्रोपरि न्यसेत्। शय्यां सविस्तरां कृत्वा तत्रानन्तं न्यसे-द्व्रती। लक्ष्म्या युक्तं वासुदेवं मुसलेन हलेन च। आचार्यं पूजयित्वा च वस्त्रैराभरणैस्तथा। कर्णाङ्गुलीपवित्रैश्च भक्त्या च सुसमाहितः। ततस्तु पूजयेद्देवमनन्तं विश्वरूपिणम्। वस्त्रयुग्मसमाच्छन्नं पीतयज्ञोपवीतिनम्। 'चन्दनेन सुगन्धेन कर्पूरागरुमिश्रिणा। लेपयेऽ-हं तवाङ्गानि प्रीयतां मधुसूदन।' अनुलेपनमन्त्रः। 'ततः पुष्पाणि संगृह्य पूजयेन्नामभिः पृथक्। अनन्ताय नमः पादौ गुल्फौ संकर्षणाय च। कालात्मने जानुनी तु जघने विश्वरू-पिणे। कटिं वै विश्वरूपाय मेढ्रं वै विश्वसाक्षिणे। नाभिं तु पद्मनाभाय हृदयं परमात्मने। कण्ठं श्रीकण्ठनाथाय बाहू सर्वास्त्रधारिणे। वाचस्पते नमस्तुभ्यं मुखे संपूजयेद्धरिम्।

ललाटं केशवायेति शिरः सर्वात्मने नमः । लोकात्मा सर्वभूतात्मा निमिषत्रुटिसंभवः । जन्ममृत्युजराव्याधिसंसारभयनाशनः । वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ।' धूपमन्त्रः । 'त्वं ज्योतिः सर्वदेवानां तेजसां तेज उत्तमम् । आत्मज्योतिः परं धाम दीपोऽयं प्रतिगृह्यताम् ।' दीपमन्त्रः । 'अन्नं चतुर्विधं स्वादु भूतानां जीवनं परम् । नैवेद्यं ते मया दत्तं देव प्रीत्या प्रगृह्यताम् ।' नैवेद्यमन्त्रः— 'पूगीफलं सकर्पूरं सातपत्रं मनोहरम् । पवित्रीकृतमत्यन्तं ताम्बूलं प्रतिगृह्यताम् । वस्त्रयुग्मं शुचेर्यस्माद्वासुदेवस्य वल्लभम् । अनन्तः प्रीयतां तेन पीत-वस्त्रेण सर्वदा । एवं पूजां ततः कृत्वा गच्छेत्कुण्डसमीपतः । गृह्योक्तविधिनानेन कृत्वाऽग्निस्थापनं ततः । प्रारभेत ततो होममश्वत्थसमिधातिलैः । व्रीहिभिश्च यवैश्चैव घृतेन तु विधानतः।पुरुषसूक्तेन जुहुयादतो देवेति वा पुनः ।इदं विष्णुर्विचक्रमे त्रेधा निदधे इति । शतमष्टोत्तरं यावत्प्रत्येकं जुहुयाच्चरुम् । चरुहोमस्ततः कार्यो मन्त्रैरेतै-र्विचक्षणैः । अनन्ताय च कालाय अहोरात्राय वै पुनः । अर्धमासाय मासाय ऋतुभ्यश्च तथा पुनः । संवत्सराय स्वाहेति जुहुयाद्व्याहृतीस्ततः । स्विष्टकृत्प्रभृतीर्हुत्वा ग्रहादीनर्चयेत्पुनः । ततो वै लोकपालांश्च ग्रहान्पूज्य यथाक्रमम् । गीतवादित्रनिनदैर्हु-त्वा पूर्णाहुतिं व्रती । पुराणश्रवणैस्तद्वद्रात्रिशेषं नयेद्व्रती।ततः प्रभातसमये स्नात्वा शुद्धः कृताह्निकः।पूर्वोक्तेन विधानेन पूजयेद्विश्वरूपिणम् । पूजयित्वा हरिं देवमाचार्यं पूजये-त्ततः । परिधाय सपत्नीकं वस्त्रालंकारभूषणैः।मन्त्रैः प्रपूज्य विधिवद्धेनुं दद्यात्प्रयत्नतः । सुरभी वैष्णवी माता नित्यं विष्णुपदे स्थिता । ग्रासं गृह्ण मया दत्तं गोमातस्त्रातुम-र्हसि । गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः । गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् । मन्त्रेणानेन संपूज्य आचार्याय निवेदयेत् । तत आमन्त्रितान्विप्रान्पूर्वे-द्युश्च चतुर्दश । वस्त्रोपवीतैः संपूज्य भोजयेदन्नविस्तरैः । ततस्तु दक्षिणां तेभ्यो वित्त-शाठ्यविवर्जितः । स्वशक्त्या दक्षिणां दद्यादाचार्याय क्षमापयेत् । क्रियाहीनं भक्ति-हीनं द्रव्यहीनं तथैव च । मन्त्रहीनं पठेत्पश्चाद्व्रतसंपूर्तिहेतवे । अनन्तसंसारमहासमुद्रे मग्नं समभ्युद्धर वासुदेव । अनन्तरूपे विनियोजयस्व अनन्तरूपाय नमो नमस्ते । इत्यनन्तं विसर्ज्याथ ब्राह्मणांश्च तथैव च । दीनान्धकृपणेभ्यश्च दद्याच्चैव तथा धनम् । तत इष्टैः समस्तश्च पुत्रसंबन्धिबान्धवैः । यथोपपन्नं भोक्तव्यं कृत्वा मानसमव्ययम् । आचम्य च शुचिर्भूत्वा चिन्त्यो विष्णुश्च तद्दिने । एवं कृते नृपश्रेष्ठ कर्मणा च जनार्दनः । अनन्तरूपी भगवांस्तुष्टो भवति सर्वदा ।

व्रतस्य फलमाप्नोति विष्णुलोके महीयते ।' इति सोद्यापनमनन्तव्रतम् । अथानन्त-व्रतोद्यापनप्रयोगः। व्रतग्रहणदिनावधिकचतुर्दशवर्षसमाप्तिदिनत्रयोदश्यां कृतैकभक्त-स्तदुत्तरं शुक्लचतुर्दश्यां व्रतचर्योपवासनियमयुतो यथासंभवं पुण्यतीर्थादौ सर्वौषधिस-र्वगन्धतिलकल्कामलैः स्नात्वा स्नानाङ्गतर्पणं कृत्वा गृहमागत्य मृदा वेदिं कृत्वा तत्र नवनाभं सर्वतोभद्रं वा आलिख्य पञ्चवर्णैर्यथावत्परिपूर्य पवित्रपाणिराचम्य मासपक्षाद्युल्लिख्य चरितानन्तव्रतपरिपूर्णतायै उत्तराङ्गमुद्यापनमहं करिष्य इति संकल्प्य निर्विघ्नतार्थं गणपतिं पूजयेत् । तत आचार्यं वृत्वाऽऽसनकुण्डलादिभिः पूजयेत् । तत आचार्यः यदत्र संस्थितमिति सर्षपादि विकीर्य शुचीवोहव्येति प्रोक्ष्य सर्वतोभद्रकरणपक्षे सर्वतोभद्रे देवता आवाह्य पूजयेत् । सर्वतोभद्रनिर्माणप्रकारस्तद्दे-वतास्तासां पूजादिप्रकारश्च रामनवमीप्रकरणे द्रष्टव्यः । ततो मण्डलमध्ये महीद्यौ-रित्यादिप्रकारेणाव्रणं दृढं ताम्रं पूर्णपात्रयुक्तं कलशं स्थापयेत् । तत्र माषादिमि-तस्वर्णनिर्मितं चतुर्दशग्रन्थियुतमनन्तं स्थापयेत् । तदुत्तरतः सुविस्तृतां शय्यामासाद्य तत्रापि स्वर्णदोरकप्रतिमायां श्रीमदनन्ताय नम इति मन्त्रेणावाहनादिस्नपनान्तं वार्षि-कपूजावत्कुर्यात् । ततः 'वस्त्रयुग्मं शुचिर्यस्माद्वासुदेवस्य वल्लभम् । अनन्तः प्रीयतां तेन वस्त्रयुग्मेन सर्वदा।' इति मन्त्रेण वस्त्रयुग्मं समर्प्य यज्ञोपवीतं च समर्प्य 'चन्दनेन सुग-न्धेन कर्पूरागुरुमिश्रिणा । लेपयेऽहं तवाङ्गानि प्रीयतां मधुसूदन।' इति चन्दनं समर्प्य माल्यादीनीति पुष्पाणि समर्प्य, ततः पुष्पाणि संगृह्याङ्गपूजां कुर्यात् ।अनन्ताय नमः पादौ पूजयामि, संकर्षणाय नमः गुल्फौ पूजयामि, कालात्मने नमः जानुनी पूजयामि, विश्वरूपिणे नमः जघनं पूजयामि, विश्वरूपाय नमः कटिं पूजयामि, विश्वसाक्षिणे नमः मेढ्रं पूजयामि, पद्मनाभाय नमः नाभिं पूजयामि, परमात्मने नमः हृदयं पूजयामि, श्रीकण्ठाय नमः कण्ठं पूजयामि, सर्वास्त्रधारिणे नमः बाहू पूजयामि, वाचस्पतये नमः मुखं पूजयामि, केशवायनमःललाटं पूजयामि, सर्वात्मने नमः शिरः पूजयामि । ततः 'एकात्मा सर्वभूतानां निमेषत्रुटिसंभवः । जन्म-मृत्युजराव्याधिसंसारभयनाशनः ।' इति मन्त्रेण पुष्पाणि समर्प्य धूपादि दद्यात् । ततः पूजासाद्गुण्यार्थं दक्षिणां दत्त्वा नीराजनं कुर्यात् । ततः कुम्भात्पश्चिमभागे कुण्डं स्थण्डिलं वा निर्माय उद्यापनाङ्गभूतं होमं करिष्ये इति संकल्प्य स्थ-ण्डिलोपलेपनाद्यग्निप्रतिष्ठान्तं कृत्वाऽन्वादध्यात् । तच्चैवम् । अस्मिन्नन्वाहितेऽग्नौ जातवेदसमग्निमिध्मेन प्रजापतिं प्रजापतिं चाघारदेवते आज्येन अग्नीषोमौ चक्षुषी

आज्येन प्रधानदेवमनन्तमश्वत्थं समित्तिलव्रीहियवघृतद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः पुनरनन्तं कालमहोरात्रमर्धमासं मासमृतुं संवत्सरमग्निं वायुं सूर्यं प्रजापतिं च चरुणा एकैकयाहुत्या ग्रहान्समिदाज्यचरुद्रव्येण प्रत्येकमष्टोत्तरशताष्टाविंशत्यष्टान्यतमसंख्यया सर्वतोभद्रपीठदेवता आज्येनैकैकयाहुत्या स्विष्टकृतं प्रजापतिं चाज्यप्लुततिलैः इध्मसंनहनेन रुद्रमित्यादि सर्वमाज्यभागान्तं कृत्वोक्तद्रव्यैः पुरुषसूक्तेन अतो देवा इत्यनेन वा इदं विष्णुरित्यनेन वा अन्वाधानक्रमेण जुहुयात्। ततः प्रायश्चित्तहोमशेषं समाप्य लोकपालान्ग्रहांश्च पञ्चोपचारैः संपूज्य बलिदानं च कृत्वा गीतवादित्रनिनदैः पूर्णाहुतिं जुहुयात्। पुराणश्रवणादिना रात्रिं जागरणेनातिवाहयेत्। ततोऽपरेऽह्नि कृताह्निको यजमानः स्थापितानन्तं पूर्ववत्पूजयित्वा आचार्यं पूजयेत्। ततो 'गावो ममाग्रतः सन्तु' इत्यनेन धेनुं संपूज्य 'सुरभी वैष्णवी माता नित्यं विष्णुपदे स्थिता। ग्रासं गृह्ण मया दत्तं गोमातस्त्रातुमर्हसि।' इति मन्त्रेण गोग्रासं दत्त्वा तामाचार्याय दद्यात्। ततः प्रतिमां कलशशय्यादियुतामाचार्याय प्रतिपादयेत्। पूर्वेद्युर्निमन्त्रितांश्चतुर्दश ब्राह्मणान्वस्त्रयज्ञोपवीतैः संपूज्य नानाविधान्नेनाचार्यसहितान्भोजयित्वा यथाशक्ति तेभ्यो दक्षिणां दत्त्वा आचार्याय च दक्षिणां दत्त्वा क्षमापयेत्। तत्र मन्त्रः। 'क्रियाहीनं द्रव्यहीनं भक्तिहीनं तथैव च। मन्त्रहीनं कृतं यच्च परिपूर्णं तदस्तु मे।' एवं क्षमाप्य स्वयं भुञ्जीतेत्यादि। इत्यनन्तव्रतोद्यापनप्रयोगः॥

अथ नष्टदोरप्रायश्चित्तम्। युधिष्ठिर उवाच। 'अनन्तव्रतमाहात्म्यं कृत्स्नं कृष्ण त्वयोदितम्। भगवन्दोररूपेण भाग्यदोऽसि महात्मनाम्। दोरं प्र[illegible]ता नष्टं यदि स्याद्वेदितं जनैः। तदा किं करणीयं स्याद्व्रतं त्रैलोक्यपावनम्।' श्रीकृष्ण उवाच। 'साधु पृष्टं त्वया राजन्वक्ष्यामि व्रतनिष्कृतिम्। फलं लोकस्य सर्वस्य रक्षार्थं शृणु तत्क्रमात्। दोरे नष्टे महान्दोषः प्रभवेद्व्रतिनामिह। तस्मात्तद्दोषनाशार्थं प्रायश्चित्तं विधीयते। गुरुं प्रदक्षिणीकृत्य नमस्कृत्य समाहितः। विज्ञाप्य दोरनाशं च कृत्वा दोरं व्रती ततः। हव्यवाहं प्रतिष्ठाप्य तस्मिन्ध्यात्वा हरिं परम्। आज्यमग्नावभिश्रित्य दद्याद्विप्राय चासनम्। अष्टोत्तरशतं हुत्वा मूलमन्त्रेण वैष्णवः। नाममन्त्रेण जुहुयाद्द्वादशार्णयुतेन वा। केशवादि सकृद्धुत्वा प्रायश्चित्तं तु शक्तितः। पूर्णाहुतिं ततो हुत्वा होमशेषं समापयेत्। व्रतच्छिद्रं जपच्छिद्रं यच्छिद्रं यज्ञकर्मणि। वचनाद्भूमिदेवानां सर्वं संपूर्णतां व्रजेत्। मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन।

यत्पूजितं मया देव परिपूर्णं तदस्तु मे। आचार्यपूजनं कृत्वा दक्षिणाद्यैर्नृपोत्तम। एवं शान्तिविधिं कृत्वा पूर्ववद्व्रतमादिशेत्। प्रायश्चित्तमकृत्वा तु पुण्यं न स्याच्छुभं क्वचित्। व्याधिना ग्रसते देहः श्रिया संत्यज्यते गृहम् । तस्मात्सर्वप्रयत्नेन प्रायश्चित्तं चरेत्सुधीः । दोरस्यातिक्रमे चैव वदेत्सर्वमिदं बुधः । य इदं कुरुते पार्थ आयुः पुत्रांश्च संपदः[1] ।' इत्यनन्तदोरप्रायश्चित्तम् । अथापरमनन्तव्रतोद्यापनम् । युधिष्ठिर उवाच । 'त्वत्प्रसादाच्छ्रुतं कृष्ण मयाऽनन्तव्रतं शुभम् । इदानीं ब्रूहि मेऽनन्तव्रतोद्यापनमुत्तमम् ।' श्रीकृष्ण उवाच ।' शृणु पाण्डव वक्ष्यामि व्रतोद्यापनमुत्तमम् । कृतेन येन सफलं व्रतं भवति निश्चितम् । आदौ मध्ये तथा चान्ते व्रतस्योद्यापनं भवेत् । यदा वित्तस्य चित्तस्य संपत्तिः शुभकालता । तदा चोद्यापनं कुर्याच्छुभे लग्ने शुभे दिने । चतुर्दशसु वर्षेषु मुख्यं तूद्यापनं मतम् । कायशुद्धिं त्रयोदश्यामेकभक्तादिना चरेत् । ततः प्रातश्चतुर्दश्यां स्नात्वा देशे शुचौ शुचिः । संकल्पयेदुपवासं देशकालावनुस्मरन् । ततो नदीं तडागं वा गत्वा सर्वौषधैस्तथा । तिलकल्केनामलकैः स्नायान्मज्जनपूर्वकम् । तीरे मण्डपिकां कुर्याद्गृहे वापि सुशोभिताम् । तन्मध्ये उपविश्याथ देशकालौ स्मरेत्ततः । गणेशं पूजयित्वाऽथ पुण्याहं वाचयेद्द्विजैः । आचार्यं वरयेद्भार्यायुतं वेदाङ्गपारगम् । ब्रह्माणमृत्विजश्चाथ चतुर्दशफलादिना । सर्वान्वस्त्रालंकरणजलपात्रादिनाऽर्चयेत् । विरच्य सर्वतोभद्रं मण्डपान्तस्तु मध्यगम् । ब्रह्मादिदेवतास्त्वस्मिन्नावाह्यापि च पूजयेत् । तन्मध्यपङ्कजे धान्यं यथाशक्ति क्षिपेत्ततः । सौवर्णं राजतं वापि ताम्रजं वापि मृण्मयम् । कुम्भं न्यसेत्तदुपरि सुधाचन्दनचर्चितम् । तस्मिञ्जलं गन्धपुष्पफलपल्लवमृत्तिकाः । क्षिप्त्वा रत्नहिरण्ये च वाससा वेष्टयेत्ततः । सौवर्णं राजतं ताम्रजातं वंशजमेव वा । पात्रं तदुपरि न्यस्य पट्टकूलादिकं शुभम् । प्रसार्य तदुपर्यत्राष्टदलं चन्दनादिना । पद्मं विरच्य तन्मध्येऽनन्तमूर्तिं निधाय च । पलेन वा तदर्धेन तदर्धार्धेन वा कृताम् । सौवर्णीं रमया युक्तां शंखचक्रगदाब्जभाम् । आवाहनाद्युपचारैः पूजयेत्सुसमाहितः । पञ्चामृतेन स्नपयेत्ततश्च वसनद्वयम् । पट्टकूलादिकं पीतमर्पयित्वाऽर्चयेद्व्रती । गन्धपुष्पादिभिर्नानाभक्ष्यैर्नानाफलैस्तथा। एवं संपूज्य विधिवद्विधिना वार्षिकेण तु पुष्पैः संपूजयेदङ्गान्यनन्तस्य च नामभिः । अनन्ताय नमः पादौ गुल्फौ संकर्षणाय च । कालात्मने जानुनी च जघनं विश्वरूपिणे । कटिं च विश्वनेत्राय मेढ्रं वै विश्वसाक्षिणे । नाभिं च पद्मनाभाय हृदयं परमात्मने । कण्ठं श्रीकण्ठनाथाय बाहू सर्वा

१ प्राप्नुयादिति शेषः ।

स्रग्धारिणे । मुखं च वाचस्पतये चक्षुषी कपिलाय च । ललाटं केशवायेति शिरः सर्वात्मने तथा । नमः पादौ पूजयामीत्येवमादि प्रपूजयेत् । एवं पूजां विधायैव रात्रौ जागरणं चरेत् । गीतवादित्रनृत्यादिपुराणश्रवणान्विताम् । प्रतिमायां प्रकुर्वीत पूजां गन्धादिना हरेः । नानाफलानि भक्ष्याणि चोपवासी निवेदयेत् । ततः प्रभातसमये स्नात्वाचार्यादिभिः सह । अनन्तं पूजयेत्प्राग्वज्जुहुयात्पश्चिमे ततः । कुण्डे वा स्थण्डिले कुर्यादग्निस्थापनपूर्वकम् । आज्यभागान्तमाचार्यः स्वगृह्योक्तविधानतः । ततोऽश्वत्थसमिद्भिश्च तदलाभेऽन्यथापि वा । दधिमध्वाज्यदिग्धाभिस्तिलैर्वा पायसेन च।आज्येन च प्रतिद्रव्यमष्टोत्तरसहस्रकम् । अष्टोत्तरशतं वाष्टाविंशतिर्जुहुयात्क्रमात् । अतोदेवेति मन्त्रेण स्त्रीणां वै नाममन्त्रतः । प्रणवादिचतुर्थ्यन्तनमोन्तानन्तनामतः । नाममन्त्रैश्च जुहुयाच्चतुर्दशभिरादरात् ।' ॐ अनन्ताय स्वाहा । ॐ कपिलाय स्वाहा । ॐ शेषाय स्वाहा । ॐ कालात्मने स्वाहा । ॐ अहोरात्राय स्वाहा । ॐ मासाय स्वाहा । ॐ अर्धमासाय स्वाहा । ॐ षड्ऋतुभ्यः स्वाहा । ॐ संवत्सराय स्वाहा । ॐ परिवत्सराय स्वाहा । ॐ उषसे स्वाहा । ॐ कलायै स्वाहा । ॐ काष्ठायै स्वाहा । ॐ मुहूर्ताय स्वाहा । ' समिदादिभिरेवं च प्रत्येकं जुहुयात्क्रमात् । ततः स्विष्टकृदादिभ्यः पूर्णपात्रान्तमाचरेत् । जपेत्पुरुषसूक्तं तु स्मृत्वाऽनन्तं सुरोत्तमम् । पूर्णाहुतिं च जुहुयाद्धामं ते विश्वमित्यृचा । होमशेषं समाप्याथ कृत्वा त्र्यायुषमप्यथ। पूजयित्वा हरिं देवमाचार्यं पूजयेत्ततः । वस्त्रालंकारभूषाद्यैस्ततो धेनुं समर्चयेत् । पयस्विनीं सुशीलां च वस्त्रालंकारभूषिताम् । स्वर्णशृङ्गीं रौप्यखुरां ताम्रपृष्ठां सुवाससम् । कांस्यदोहां रत्नपुच्छां निष्ककण्ठीं सवत्सिकाम् । गवां मन्त्रेण संपूज्य चचार्याय समर्पयेत् ।' मन्त्रस्तु । गवामङ्गेष्विति । ' गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः । गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ।''मन्त्रेमेनं समुच्चार्य वस्त्रालंकरणादिभिः । तत्पत्नीं पूजयित्वाथ ब्रह्माणं परितोषयेत् । ऋत्विजः पूजयित्वाथ तेभ्यो दद्याच्च दक्षिणाम् । चतुर्दशैव कुम्भांश्च पक्वान्नपरिपूरितान् । वस्त्रोपवीते दद्याच्चाप्यनन्तः प्रीयतामिति । आचार्यादीन्भोजयित्वा पूर्णतां वाचयेत्ततः । अथानन्तं विसृज्यापि गृह्णीयादाशिषस्ततः । भक्तियुक्तो नमस्कृत्य ब्राह्मणांस्तान्विसर्जयेत् । ततो हृष्टो बन्धुयुतो भुञ्जीत सुसमाहितः । एवं कृतेऽनन्तफलदातानन्तो भवेन्नृणाम् ।' इति भविष्यपुराणेऽनन्तव्रतोद्यापनं समाप्तम् । ❋

अस्यामेव चतुर्दश्यां भविष्यपुराणोक्तं पालीव्रतम् । हेमाद्रौ—युधिष्ठिर

उवाच ।'अम्बुपूर्णतडागेषु महातोयाश्रयेषु च । कस्यार्घ्यं संप्रयच्छन्ति कृष्णैताः कुलयोषितः ।' श्रीकृष्ण उवाच—'मासि भाद्रपदे प्राप्ते शुक्लभूततिथौ नृप । तदा भक्त्या प्रदातव्यं वरुणायार्घ्यमुत्तमम् । ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैः स्त्रीभिस्तथैव च । फलैः पुष्पैः' इत्यादि । मण्डले वरुणं विलिख्य संपूज्य अर्घ्यं दद्यात् । तत्र मन्त्रः । 'वरुणाय नमस्तुभ्यं नमस्ते यादसा पते । अपां पते नमस्तुभ्यं रसानां पतये नमः ।' इति ।'मा क्लेदं मा च दौर्गन्ध्यं वैरस्यं मा मुखेऽस्तु मे । वरुणो वारुणीभर्ता वरदोऽस्तु सदा मम ।' इति प्रार्थ्य ब्राह्मणान्संभोज्य मध्याह्ने स्वयमग्निपक्वं प्राश्नीयात् । इति **भविष्योत्तरोक्तं पालीचतुर्दशीव्रतम् ।** ❀

**अस्यामेव भविष्योत्तरोक्तं कदलीव्रतम् ।** श्रीकृष्ण उवाच—'अस्मिन्नेव दिने पार्थ शृणु ब्रह्मसभातले । देवदेव पुरा गीतं देवर्षिगणसंनिधौ । कृपया पार्थ कदलीव्रतानामुत्तमोत्तमम् । तच्चाहं संप्रवक्ष्यामि लोकानुग्रहकारकम् । नाकपृष्ठे पुरा देवैर्गन्धर्वैर्यक्षकिंनरैः । अप्सरोमरकन्याभिर्नागकन्याभिरर्चिता । संसारासारतां ज्ञात्वा कदली नन्दनस्थिता । शुक्लपक्षे चतुर्दश्यां मासि भाद्रपदे नृप । देयमर्घ्यं वरस्त्रीभिः फलैर्नानाविधैस्तथा । विरूढैः सप्तधान्यैश्च दीपालीरक्तचन्दनैः । दधिदूर्वाक्षतैर्वस्त्रैर्नैवेद्यैर्घृतपाचितैः । जातीफलैः पूगफलैः पूजयेद्गतमत्सरा । तस्मिन्नहनि दातव्यं स्त्रीभिरन्याभिरेव च । मन्त्रेणानेन चैवार्घ्यं तं शृणुष्व नराधिप । चिन्तयेत्कदलीं नित्यं कदलैः कामदीपितैः । शरीरारोग्यलावण्यं देहि देवि नमोऽस्तु ते । एवं यः पूजयेद्रम्भां पुरुषो भक्तिमान्नृप । नारी वानग्निपक्वान्नांस्त्रीन्मासांश्चतुरोऽपि वा । तस्मिन्कुले न हि भवेत्काचिन्नारी कुलाटिनी । दुर्गता दुर्भगा व्यङ्गा स्वैरिणी पापचारिणी । भवेत्सौभाग्यसौख्याढ्या पुत्रपौत्रश्रिया युता । आयुष्मती जीववत्सा जीवेद्वर्षशतं भुवि।' इति **हेमाद्रौ कदलीव्रतम् ।**

**अथ गुर्जराचारप्राप्तं कार्तिक्यां माघ्यां वैशाख्यां वा कदलीव्रतम् ।** तत्र कदलीपूजनम् ।'आगच्छ कदलीदेवि सौभाग्यफलदायिनि । रूपं देहि जयं देहि यशो देहि सुनिश्चितम् । आगच्छागच्छ वरदे शंकरेण महेश्वरि।करिष्यमाणां पूजां मे गृहाणानुग्रहं कुरु ।' आवाहनम् । 'कार्तस्वरमयं दिव्यं नानामणिगणान्वितम् । अधितिष्ठ महादेवि शिवेन सह पार्वति।'आसनम् ।'दूर्वाक्षतादिभिर्युक्तं स्वर्णपात्रे स्थितं शुभम् । पाद्यार्थं कल्पितं भक्त्या गृहाण परमेश्वरि ।' पाद्यम् ।'अर्घ्यपात्रस्थितं तोयं फलपुष्पसमन्वितम् । अर्घ्यं गृहाण मे देवि भक्त्या दत्तं शिवप्रिये ।' अर्घ्यम् । 'कर्पूरो-

क्षीरसुरभि शीतलं विमलं जलम् । गङ्गायास्तु समानीतं गृहाणाचमनीयकम् ।' आचमनीयम् ।'गङ्गादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतम् । स्नानार्थं ते मया देवि गृहाणेदं सुरेश्वरि ।' स्नानम् । 'यथा रम्भे विवृद्धिस्ते शाखादीनां सदा भवेत् । तथा वर्धय मां देवि सेचनात्पार्वतीप्रिये ।' सेचनमन्त्रः ।'वस्त्रं शुभमिदं दिव्यं कुङ्कुमाक्तं सुशोभनम् । गृहाणाच्छादनं देवि तथाच्छादय मां सदा ।' वस्त्रमाचमनीयम् । 'श्रीखण्डं चन्दनं दिव्यं घनसारं मनोहरम् । विलेपनं गृहाणेदं रुद्राणि प्रियवल्लभे ।' चन्दनम् ।' मालतीचम्पकादीनि शतपत्रादिकानि च । सुगन्धीनि गृहाण त्वं पूजार्थं सुमनांसि नः।' पुष्पाणि । 'अगरुं गुग्गुलुं धूपं दशाङ्गं सुमनोहरम् । गृहाणेदं तृप्तिकरं घ्राणस्य दयितं परम्।' धूपम् ।'चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणम् । आर्तिक्यं कल्पितं भक्त्या गृहाण परमेश्वरि।' दीपम्।'नानापक्वान्नसंयुक्तं रसैःषड्भिः समन्वितम्। नैवेद्यं विविधं भक्त्या कल्पितं त्वं गृहाण मे।' नैवेद्यम्।'कर्पूरैलालवङ्गादिनागवल्लीदलान्वितम्।पूगीफलसमायुक्तं तांबूलं प्रतिगृह्यताम् ।' ताम्बूलम्।'इदं फलं मया देवि स्थापितं पुरतस्तव। तेन मे सुफलावाप्तिर्भवेज्जन्मनि जन्मनि।' फलम् । 'हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः। अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे।' हिरण्यम् । नीराजनम् । 'त्वमिन्द्राणीप्रिया नित्यं पार्वत्याश्चातिवल्लभा । सतीनां कामदा पूज्या कामान्मे परिपूरय।' प्रार्थना । 'आश्रयो देवपत्नीनां जितानां च श्रिया स्वयम् । सौभाग्यारोग्यसायुज्यं देहि रम्भे नमोऽस्तु ते ।' नमस्कारः । 'कदल्यै कामदायिन्यै मेधायै ते नमोनमः । रम्भायै भूमिसारायै सर्वसौख्यप्रदे नमः । यथा यथा ते प्रसवो वर्धते कदलि ध्रुवम् । तथा मनोरथानां मे प्रभवो वर्धतां स्वयम् ।' कदलीदानमन्त्रः । अथ कथा । युधिष्ठिर उवाच—'कृष्ण कृष्ण महाबाहो सर्वविद्याविशारद । अनाथनाथ विश्वात्मन्दीनदैन्यनिकृन्तन । त्वमस्माकं परं बन्धुस्त्वमस्माकं परं सखा । त्वयाऽभिरक्षिता नित्यं विचरामोऽत्र निर्भयाः । किंचित्पृच्छामि देवेश धनधान्याभिवृद्धिदम् । अन्नाच्छादनपुत्रादिवर्धनं श्रीनिकेतनम् । तन्ममाचक्ष्व भगवँल्लोकानामुपकारकम् ।' श्रीकृष्ण उवाच । 'शृणु राजन्प्रवक्ष्यामि व्रतानामुत्तमं व्रतम् । यत्कृत्वा सर्वदुःखेभ्यो नारी मुच्येत संकटात् । वस्त्रान्नपापविच्छित्तिर्न भवेत्तु कदाचन । पुरा मामेत्य चैकान्ते रुक्मिणी प्राणवल्लभा । प्रणिपत्याब्रवीद्दीना सर्वकामाप्तये शुभा । सौभाग्यं मे कथं देव भवेज्जन्मनि जन्मनि । सपत्नीनां श्रियं वीक्ष्य स्पृहा मे जायते प्रभो । इति प्रियाया वचनं श्रुत्वाहं तां समब्रुवम् । रम्भाव्रतं कुरुष्वाशु सौभाग्यावा-

मये शुभम् । कृते यस्मिन्व्रते देवि परं सौभाग्यमाप्स्यसि । इति श्रुत्वा वचो देवी रुक्मिणी मामभाषत । रम्भाव्रतं भवेत्कीदृक्को विधिः किं च पूजनम् । केन चादौ पुरा चीर्णं मर्त्ये केन प्रकाशितम् । रुक्मिणीभाषितं श्रुत्वा पुनरेवाहमब्रुवम् । रम्भाव्रत-विधिं वक्ष्ये शृणु देवि यथोदितम् । गोचर्ममात्रं संलिप्य सर्वतोभद्रमण्डलम् । लिखेत्सम्यक्कथा वर्णैर्नीलपीतैः सितासितैः । ब्रह्माद्या देवतास्तत्र स्थापयित्वा प्रपूज-येत् । कलशोपरि संस्थाप्य वैणवे पटले शुभे । उमामहेश्वरौ तत्र मूलमन्त्रेण पूज-येत् । अथवा स्वस्तिकं कुर्यात्पद्ममष्टदलं तु वै । तत्र साग्रां सपर्णालिं रम्यवृत्तां सुशो-भनाम् । समूलां कदलीं स्थाप्य पूजयेत्तां यथाविधि । उत्तमोदकमानीय सेचयेत्तां समाहिताम् । यथा रम्भे विवृद्धिस्ते शाखादीनां सदा भवेत् । तथा वर्धय मां देवि सेचनात्पार्वतीप्रिये । यथा यथा ते प्रसवो वर्धते कदली सदा । तथा मनो-रथानां मे प्रभवो भवतु स्वयम् । एवं संपूज्य विधिवद्भक्तियुक्तेन चेतसा । रात्रौ जागरणं कुर्याद्गीतवादित्रनिस्वनैः । एवं या कुरुते नारी व्रतानामुत्तमं व्रतम् । भुक्त्वा तु विविधान्भोगान्सौभाग्यं विन्दते ध्रुवम् । तस्मात्कुरु विधानेन यथोक्तं फलमाप्स्यसि । इति श्रुत्वा विधानेन चकार व्रतमुत्तमम् । अवाप सकलं कामं मनसा यदभीप्सितम् । अन्यच्च शृणु राजेन्द्र व्रतस्य फलमुत्तमम् । अत्याश्चर्यकरं पुंसां शृणुष्वावहितो भवान् । द्यूते पतिव्रता पूर्वं कृष्णा नीता सभां प्रति । दुःशासनेन दुष्टेन द्रौपदी मुक्तमूर्धजा । आकृष्यमाणे वस्त्रे तु चित्ते मामस्मरत्तदा । तूर्णं तत्र गतो राज-न्द्रौपद्यास्त्राणनाय च । अदृश्यमानः कृष्णायै व्रतं समुपदिष्टवान् । तदा कर्तुमशक्ये तु व्रतेऽस्मिन्राजसत्तम । रुक्मिण्याचरितं पूर्वं यदेतद्व्रतमुत्तमम् । तस्य पुण्यफलं दत्तं कृष्णायै राजसत्तम । तत्कालमेव वस्त्राणां समृद्धिरभवत्पुरा । दुःशासनेन दुष्टेन आक्षिप्तेष्वंशुकेषु च । प्रादुर्भूतानि वस्त्राणि नानावर्णानि भारत । खिन्नो दुःशासनः पापो विररामांशुकग्रहात् । तावद्बभूवुर्वस्त्राणि कदलीगर्भवन्नृप । इत्थं व्रतप्रभावोऽयं गुह्योऽपि कथितो मया । कारयस्व विधानेन पूर्णःकामो भविष्यति।' इति कदलीव्रतकथा समाप्ता।अथोद्यापनम्।युधिष्ठिर उवाच—'कस्मिन्मासे तिथौ कस्यामाचरेद्व्रतमुत्तमम्। कथं भावेन किं कार्यं तन्ममाचक्ष्व केशव।' श्रीकृष्ण उवाच—'कार्तिके माघमासे वा वैशाखे श्रावणे तथा । पुण्ये मासि प्रकुर्वीत पौर्णमास्यां शुभे दिने । तिथिक्षयं वर्जयीत शुभायां सुसमाहितः । यस्मिन्देशे न लभ्येत कदली राजसत्तम । सुवर्णस्य शुभां तत्र कृत्वा पूजां समाचरेत् । यदि लभ्येत कदलीमारोप्यादौ प्रपूजयेत् । 'याव-

तस्यां फलं तावत्सिञ्चेन्नीरेण भूपते । फलेषु पञ्चमेष्वस्याः पश्चाद्विप्रान्समाह्वयेत् । प्रभाते विमले नद्याः कूपादौ विमले जले । अहते वाससी गृह्य कृत्वा संध्यादिकर्म च । अरत्निमात्रं कृत्वा तु स्थण्डिलं वाग्यतः शुचिः । अग्निं संस्थाप्य विधिवत्तत्र होमं समाचरेत् । शतमष्टोत्तरं विद्वांस्तिलाज्याहुतिभिस्तथा । एकाग्रचित्तः संहृष्टः कृती व्याहृतिभिः पृथक् । ब्रह्मादिभ्यो देवताभ्यो नाममन्त्रैः पृथक्पृथक् । आचार्यं च सपत्नीकं वस्त्राद्यैः पूजयेत्ततः । धेनुं पयस्विनीं वत्सयुतां रत्नैः स्वलंकृताम् । स्वर्णशृङ्गीं रौप्यखुरां कांस्यदोहनिकायुताम् । ताम्रपृष्ठीं रत्नपुच्छां क्षुद्रघण्टासमन्विताम् । अभ्यर्च्य वेदविदुषे आचार्याय निवेदयेत् । पादुकोपानहौ यत्र अलंकाराननेकशः । यथाशक्ति प्रदेयानि व्रतस्य परिपूर्तये । चतुर्विंशत्षोडश वा युग्मान्याहूय संयतः । वस्त्रालंकारगन्धाद्यैः पूजयित्वा तु भोजयेत् । वायनानि च देयानि वंशपात्रैस्तु शक्तितः । दद्याच्च दक्षिणां सम्यग्यथाविभवसारतः । अन्येभ्योऽपि यथाशक्ति दद्यादन्नं सुसंस्कृतम् । क्षमापयित्वा तान्देवि व्रतस्य परिपूर्तये । वाचयित्वा यथान्यायमच्छिद्रं च क्षमापयेत् । दीनानाथान्संतर्प्याशु स्वयं भुञ्जीत वाग्यतः । एवं यः कुरुते देवि कदलीव्रतमुत्तमम् । भुक्त्वा तु विविधान्भोगान्सौभाग्यं विन्दते ध्रुवम् । तस्मात्कुरु विधानेन यथोक्तं फलमाप्स्यसि । एवं नारी नरो वापि यः कुर्यात्कदलीव्रतम् । सर्वान्कामानवाप्नोति स्वर्गलोके महीयते ।' इति भविष्योत्तरोक्तः कदलीव्रतोद्यापनविधिः एतच्च कदलीव्रतं पौर्णमास्यां विहितमपि हेमाद्रिलिखितचतुर्दश्यनुष्ठय कदलीव्रतप्रसङ्गादत्र लिखितम् । इति भाद्रपदशुक्लचतुर्दशी ।

अथाश्विनकृष्णचतुर्दशी । तत्र दुर्मरणमृतानां श्राद्धं कार्यम् । तथा च मरीचिः—'विषसर्पश्वापदादितिर्यग्ब्राह्मणघातिनाम् । चतुर्दश्यां क्रिया कार्या अन्येषां तु विगर्हिता ।' इति ।

कार्तिककृष्णचतुर्दश्यां प्रभाते चन्द्रोदये अभ्यङ्गस्नानं कार्यम् । तदुक्तं हेमाद्रौ भविष्योत्तरे—'कार्तिके कृष्णपक्षे तु चतुर्दश्यामिनोदये । अवश्यमेव कर्तव्यं स्नानं तस्करभीरुभिः ।' इति मदनरत्ने कालादर्शे विधूदये इति पाठः । निर्णयामृते दिनोदये इति पाठः । मयूखे तु इनः सूर्यः इति व्याख्यातम् । अत्र च यथाचारं व्यवस्थेति केचित् । दिनेनपदयोश्चन्द्रे लक्षणेत्यन्ये । तत्र मयूखतिथ्यर्कयोर्भ्रान्तिः । मानाभावात् बोद्धावनन्तदेवभ्रान्तिविजृम्भितम् । 'इनः सूर्ये प्रभौ राज्ञि मृगाङ्के'[1] । ब्रह्म-

१—इनश्चन्द्र. ।

पुराणेऽपि—'तैले लक्ष्मीर्जले गङ्गा दीपावल्याश्चतुर्दशीम् । प्रातः स्नानं तु यः कुर्याद्यमलोकं न पश्यति।' इति । 'अपामार्गमथो तुम्बीं प्रपुन्नाटमथापरम् । भ्रामयेत्स्नानमध्ये तु नरकस्य क्षयाय वै ।' प्रपुन्नाटश्चक्रमर्दकः । तथा 'अपामार्गस्य पत्राणि भ्रामयेन्मस्तकोपरि । ततश्च तर्पणं कार्यं धर्मराजस्य नामभिः ।' नारदसंहितायामपि । 'इषासितचतुर्दश्यामिन्दुक्षयतिथावपि । ऊर्जादौ स्वातिसंयुक्ते तदा दीपावली भवेत् । तैले लक्ष्मीर्जले गङ्गा दीपावलीतिथौ वसेत् । अलक्ष्मीपरिहारार्थमभ्यङ्गस्नानमाचरेत् । कुर्यात्संलग्नमेतच्च दीपोत्सवदिनत्रयम्।' इति। 'इन्दुक्षयेऽपि संक्रान्तावारे पातदिनक्षये।तत्राभ्यङ्गं न दोषाय प्रातः पापापनुत्तये।' इति अत्र इषः अमान्तमासेन ग्राह्यः।यत्तु—'अरुणोदयतोऽन्यत्र रिक्तायां स्नाति यो नरः।' तस्याब्दिकभवो धर्मो नश्यत्येव न संशयः ।' इति दिवोदासीयं भविष्यवचनं तन्मुख्यकाले चतुर्दश्यभावेऽपि तत्रैव स्नातव्यमित्येवंपरम् । यद्यपि कार्तिकव्रतिनाम् 'तैलाभ्यङ्गं तथा शय्या परान्नं कांस्यभोजनम् । कार्तिके वर्जयेद्यस्तु परिपूर्णव्रती भवेत् ।' इति पाद्मेऽभ्यङ्गस्नानं निषिद्धं तथाप्यत्र तैलाभ्यङ्गं स्नानं तैरपि कार्यम् । 'नरकस्य चतुर्दश्यां तैलाभ्यङ्गं च कारयेत् । अन्यत्र कार्तिकस्नायी तैलाभ्यङ्गं विवर्जयेत् । ' इति तत्रैव प्रतिप्रसवश्रुतेः । इयं चतुर्दशी चन्द्रोदयव्यापिनी ग्राह्या, 'विधूदये' इति पूर्वोक्तत्वात् । कृत्यरत्नावल्यां तु—दिनोदयप्रातःशब्दयोः समानार्थत्वात् प्रातःकालव्यापिनी ग्राह्येत्युक्तम् । दिनद्वये चन्द्रोदयव्याप्तौ वा पूर्वविद्धा ग्राह्या । 'पूर्वविद्धचतुर्दश्यां कार्तिकस्य सितेतरे । पक्षे प्रत्यूषसमये स्नानं कुर्यात्प्रयत्नतः ।' इति निर्णयामृतधृतवचनात् । दीक्षितीये तु— दिनद्वये चन्द्रोदये चतुर्दश्यभावे चतुर्दश्यां तुर्ययामे स्नानमिति । निर्णयसिन्धौ गयादासीयेऽपि चतुर्थयामगामिनी ग्राह्येत्युक्तम् । अत एव सर्वज्ञनारायणः—' तथा कृष्णचतुर्दश्यामाश्विनेऽर्कोदयात्पुरा । यामिन्याः पश्चिमे यामे तैलाभ्यङ्गो विशिष्यते । 'कालादर्शेऽपि—' मृगाङ्कोदयवेलायां त्रयोदश्यां यदा भवेत् । दर्शे वा मङ्गलस्नानं दुःखशोकभयप्रदम् ।' इति त्रयोदर्शानिषेधः । मयूखे तु दिनद्वये चन्द्रोदयव्याप्त्यभावे पूर्वैव । गौणकाले सत्त्वात् । अत्र चन्द्रोदयो मुख्यः सूर्योदयो गौणः, उत्तरभावित्वात् । 'स्वकालादुत्तरं गौणकालः सर्वस्य कर्मणः ' इति वचनात् । अत एव पूर्वोक्तो द्विविधोऽपि पाठः संगच्छते । 'तिथ्यादौ तु भवेद्यावान्ह्रासो वृद्धिः परेऽहनि ' इति वाक्येन त्रयोदश्यन्ते चतुर्दशी-

१—माप्नोति शेषः ।

ह्रासप्रक्षेपेण चन्द्रोदये पारिभाषिकचतुर्थीसद्भावात् । अत एव च प्रकाशे—' त्रयोदशी यदा प्रातः क्षयं याति चतुर्दशी । रात्रिशेषे त्वमावास्या तदाऽभ्यङ्गे त्रयोदशी ।' इति । एवं दिवोदासीयेऽपि । अत्र विभूतिकामैः सुगन्धितैलेन स्नानं कार्यम् । तदुक्तं स्मृतिदर्पणे—' चतुर्दशी याश्वयुजस्य कृष्णा स्वात्यृक्षयुक्ता च भवेत्प्रभाते । स्नानं समभ्यर्च्य नरैश्च कार्यं सुगन्धितैलेन विभूतिकामैः ।' इति । इदं स्नानं चतुर्दशीमारभ्य दिनचतुष्टयपर्यन्तं कार्यम् । तदुक्तं पृथ्वीचन्द्रोदये ब्राह्मे—' इषे भूते च दर्शे च कार्तिके प्रथमे दिने । यदा स्वाती तदाऽभ्यङ्गस्नानं कुर्याद्दिनोदये । ऊर्जे शुक्लद्वितीयायां तिथौ यस्तु शुभे दिने । मानवो मङ्गलस्नायी नैव लक्ष्म्या वियुज्यते । दीपैर्नीराजनादत्र सैषा दीपावली स्मृता ।' इति । अथ स्नानविधिः । तत्रादौ दन्तधावनादि कृत्वा यमलोकदर्शनाभावकामोऽभ्यङ्गस्नानं करिष्ये इति संकल्प्य तैलाभ्यङ्गं कृत्वोदकेन स्नायात् । ततः स्नानमध्ये सीतालोष्ठसहितानि अपामार्गपत्राणि सतुम्बीकानि प्रपुन्नाटं च मस्तकोपरि वक्ष्यमाणमन्त्रेण भ्रामयेत् । मन्त्रस्तु ' सीतालोष्ठसमायुक्त सकण्टकदलान्वित । हर पापमपामार्ग भ्राम्यमाणः पुनः पुनः ।' इति । ततो यमतर्पणम् । तत्प्रकारस्तु मदनरत्ने स्कन्दपुराणे—' दक्षिणाभिमुखो भूत्वा तिलैः सव्यं समाहितः । देवतीर्थेन देवत्वात्त्रिभिर्वक्ष्यमाणैश्च नामभिः । यमाय धर्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्वभूतक्षयाय च । औदुम्बराय दध्नाय नीलाय परमेष्ठिने । वृकोदराय चित्राय चित्रगुप्ताय वै नमः ।' इति । यथा ' यज्ञोपवीतिना कार्यं प्राचीनावीतिना तथा । देवत्वं च पितृत्वं च यमस्यास्ति द्विरूपता ।' इति । अत्र च हेतूक्तिबलाच्छुक्लकृष्णतिलसकृत्त्रिरावृत्त्यादिरूपे देवपित्र्यधर्मे विकल्पो द्रष्टव्यः । इदं यमतर्पणं यमुनायामतिप्रशस्तम् । तदुक्तं कृत्यतत्त्वार्णवे—'यां कांचित्सरितं प्राप्य कृष्णपक्षे चतुर्दशी । यमुनायां विशेषेण नियतस्तर्पयेद्यमम् ।' इति । इदं च तर्पणं जीवत्पितृकेणापि कार्यम् । 'जीवत्पितापि कुर्वीत तर्पणं यमभीष्मयोः ।' इति पाद्मोक्तेः । अस्यामेव प्रदोषे दीपदानं कार्यम् । तदुक्तं दिवोदासीये ब्राह्मे—' अमावास्याचतुर्दश्योः प्रदोषे दीपदानतः । यममार्गान्धकारेभ्यो मुच्यते कार्तिके नरः ।' इति । तथा ' ततः प्रदोषसमये दीपान्दत्त्वा मनोरमान् । ब्रह्मविष्णुशिवादीनां भवनेषु मठेषु च।प्राकारोद्यानवापीषु प्रतोलीनिष्कुटेषु च । मन्दुरासु विविक्तासु हस्तिशालासु चैव हि ।' इति । लैङ्गे—' ततः प्रेतचतुर्दश्यां भोजयित्वा तपोधनान् । शैवं विप्रांस्त्वथ परान् शिवलोके महीयते । दानं दत्त्वा तु तेभ्यस्तु यमलोकं न गच्छति ।

माषपत्रस्य शाकेन भुक्त्वा तत्र दिने नरः । प्रेतचतुर्दशीकाले सर्वपापैः प्रमुच्यते ।' इति। अत्र नरकोद्देशेन चतुर्वर्तियुक्तदीपदानं कार्यम् । तत्र पूर्वाभिमुखो भूत्वा दीपं संपूज्य दीपदानं कुर्यात् । तत्र मन्त्रः 'दत्तो दीपश्चतुर्दश्यां नरकप्रीतये मया । चतुर्वर्तिसमायुक्तः सर्वपापापनुत्तये ।' इति । पश्चादन्यानपि दीपान्दद्यात् । ज्योतिर्ग्रन्थे—'तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः । उल्काहस्ता नराः कुर्युः पितॄणां मार्गदर्शनम् ।' तत्रोल्काग्रहणे मन्त्रः 'शस्त्रसंघहतानां च भूतानां भूतदर्शयोः । उज्ज्वलाज्ज्योतिषा देहं दहेयं व्योमवह्निना ।' इति । तद्दाने मन्त्रः 'अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम । उज्ज्वलाज्ज्योतिषा दग्धास्ते यान्तु परमां गतिम् ।' इति।तद्विसर्जने मन्त्रः। 'यमलोकं परित्यज्य आगता ये महालये । उज्ज्वलज्ज्योतिषा वर्त्म प्रपश्यन्तो व्रजन्तु ते ।' इति । अस्यामेव नक्तभोजनमुक्तं लैङ्गे—'नक्तं प्रेतचतुर्दश्यां यः कुर्याच्छिवतुष्टये । न तत्क्रतुशतेनापि प्राप्यते पुण्यमीदृशम् ।' इति । यदा पूर्वदिने प्रदोषे चतुर्दशी स्नानयोग्या चोत्तरदिने तदा पूर्वदिने प्रदोषे दीपदानादि कृत्वा परेद्युः स्नानं कार्यम् । क्रमानुरोधेन कालबाधस्यान्याय्यत्वात् । कृत्यतत्त्वार्णवे भविष्ये—'कार्तिके भौमवारे तु चित्रा कृष्णा चतुर्दशी । तस्यामाराधितः स्थाणुर्नयेच्छिवपुरं ध्रुवम् ।' भौमवारचित्रानक्षत्रयोगे महाफलेति तत्रैव व्याख्यातम् । निर्णयामृते तु—इयं भौमवारयुक्ता चित्राख्या इत्युक्त्वा पुष्करपुराणत्वेनेदमेव वचनं किंचित्पाठान्तरेण लिखितम् । तत्र पूर्वार्धं तु पूर्ववत् । उत्तरार्धं तु 'तस्यां भूतेशमभ्यर्च्य गच्छेच्छिवपुरं नरः ।' इति । इति कार्तिककृष्णचतुर्दशी ।

अथ कार्तिकशुक्लचतुर्दश्यां ब्रह्मकूर्चव्रतं लिख्यते । तदुक्तं हेमाद्रौ भविष्योत्तरे—'कार्तिकस्य सिते पक्षे चतुर्दश्यां नराधिप । सोपवासः पञ्चगव्यं पिबेद्रात्रौ जितेंद्रियः । कपिलायास्तु गोमूत्रं कृष्णाया गोमयं तथा । श्वेतधेनोस्तथा क्षीरं रक्तायाश्च ततो दधि । गृहीत्वा कर्बुरायाश्च घृतमेकत्र मेलयेत् । वेदोक्तमन्त्रै राजेन्द्र कुशोदकसमन्वितम् । ततः प्रभातसमये स्नात्वा संतर्प्य देवताः । ब्राह्मणांस्तोषयित्वा तु भुञ्जीयाद्वाग्यतः शुचिः । ब्रह्मकूर्चव्रतं ह्येतत्सर्वपापप्रणाशनम् । यच्च बाल्येऽथ कौमारे वार्धके वापि यत्कृतम् । ब्रह्मकूर्चोपवासेन तत्पापं नश्यति क्षणात् ।' इति भविष्योत्तरोक्तं ब्रह्मकूर्चव्रतम् । अस्यामेव पाषाणचतुर्दशीव्रतम् । तदुक्तं निर्णयामृते देवीपुराणे—'कार्तिके शुक्लपक्षे तु या पाषाणचतुर्दशी । तस्यामाराधयेद्गौरीं नक्तं पाषाणभक्षकः । ऐश्वर्यसौख्यसौभाग्यरूपाणि प्राप्नुयान्नरः ।' इति । हेमाद्रौ

पाषाणभक्षणैरिति पाठः । पाषाणाकारपिष्टकैरिति व्याख्यातम् । इयमेव वैकुण्ठचतुर्दशी । सा विश्वेश्वरपूजादौ अरुणोदयव्यापिनी ग्राह्या । सनत्कुमारसंहितायां शिवपूजोक्तेः ।'वर्षे वै हेमलम्बाख्ये मासि श्रीमति कार्तिके । शुक्लपक्षे चतुर्दश्यामरुणाभ्युदयं प्रति । महादेवतिथौ ब्राह्मे मुहूर्ते मणिकर्णिके । स्नात्वा विश्वेश्वरो देव्यां विश्वेश्वरमपूजयत् । संक्षेपं ज्योतिषस्तस्य प्रतिष्ठाख्यं तदाऽकरोत्।स्वयमेव स्वमात्मानं चरन्पाशुपतव्रतम् ।' इति । पूजा च कृतोपवासेन कार्या ।'ततः प्रभाते विमले कृत्वा पूजां महाद्भुताम् । दण्डपाणेर्महाधाम्नि वनेऽस्मिन्कृतपारणः ।' इति तत्रैवोक्तेः । अत्र परकृतिरूपेणार्थवादेन कृतोपवासेन स्नात्वा विश्वेश्वरः पूज्य इति विधिः कल्प्यते । इयं खण्डत्वे यदि पूर्वदिनेऽपराह्णे वर्तते तदोपवासे पूर्वा ग्राह्या'रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः ।'इति वचनात्।पूजादावरुणोदयव्यापिनी ग्राह्या'कर्मणो यस्य यः कालः'इति। केचित्तु खण्डतिथौ वाऽखण्डतिथौ वा पूर्वदिने कृतोपवासाः परदिनेऽरुणोदये पूजादि कुर्वन्ति।अस्यां विश्वेश्वरयात्रोक्ता काशीखण्डे—'कार्तिकस्य चतुर्दश्यां विश्वेशं यो विलोकयेत् । स्नात्वा चोत्तरवाहिन्यां न तस्य पुनरागतिः ।' इति । शिवरहस्येऽपि 'पुरात्र कार्तिके मासि चतुर्दश्यां सुराः शिवे । सायंकाले समागत्य पूजां कृत्वा स्थिता मुदा ।' इत्याद्युक्त्वा 'ततः परे ऋषिगणाः सर्वेऽपि मदनुग्रहात् । संपूज्य निशि यत्नेन चक्रुर्जागरणं शिवे । कार्तिकस्य चतुर्दश्यां बिल्वैश्च कनकाह्वयैः । द्रोणपुष्पैश्च पूजां च चक्रुर्मयि महेश्वरे । रात्रिं नीत्वा प्रयत्नेन मत्कथाश्रवणादिभिः । ततोऽरुणोदये जाते स्नात्वा स्नात्वा च भस्मना । त्रिपुण्ड्रधारणं कृत्वा कृत्वा रुद्राक्षधारणम् । संध्यां समाप्य विश्वेशं समभ्यर्च्य यथाविधि । मद्भक्तान्भोजयामासुॠषयो बुभुजुस्तथा । यः शुक्लोर्जचतुर्दश्यामुपोष्य प्रयतः शिवे । मामर्चयति विश्वेशं स मुक्तो भवति ध्रुवम् । मल्लिङ्गपूजनं पुण्यं सर्वदा सर्वकामदम् । ऊर्जशुक्लचतुर्दश्यामार्चितं बहुपुण्यदम् ।' इति । तथा 'ऊर्जशुक्लचतुर्दश्यां काश्यां विश्वेश्वरं प्रभुम् । समर्चयितुमिन्द्राद्यैर्गम्यतेऽस्माभिरादरात् ।' इत्यादि । अस्यामेव रात्रौ विष्णुपूजा कार्या । तदुक्तं हेमाद्रौ भविष्ये—'कार्तिकस्य सिते पक्षे चतुर्दश्यां नराधिप । सोपवासस्तु संपूज्य हरिं रात्रौ जितेन्द्रियः ।' इति । अत्र चतुर्दशी रात्रिव्यापिनी ग्राह्या । रात्रौ पूजाविधानात् । दिनद्वये तद्व्याप्तौ निशीथप्रदोषोभयव्यापिनी ग्राह्या । इति वैकुण्ठचतुर्दशीनिर्णयः समाप्तः ।

अथ मार्गशीर्षशुक्लचतुर्दश्यामारभ्यं मत्स्यपुराणोक्तं शिवचतुर्दशीव्रतम् । नन्दिकेश्वर उवाच—'श्रृणुष्वावहितो ब्रह्मन्वक्ष्ये माहेश्वरं व्रतम् । त्रिषु लोकेषु

विख्यातं नाम्ना शिवचतुर्दशी । मार्गशीर्षे त्रयोदश्यां सितायामेकभोजनः । प्रार्थयेद्-देवदेवेशं त्वामहं शरणं गतः । चतुर्दश्यां निराहारः समभ्यर्च्य च शंकरम् । पूजयेत्कमलैः शुक्लैर्गन्धधूपानुलेपनैः । पादौ नमः शिवायेति शिरः सर्वात्मने नमः । ललाटं तु त्रिनेत्राय नेत्राणि हरये नमः । मुखमिन्दुसखायेति श्रीकण्ठायेति कंधराम् । सद्योजाताय कर्णौ तु वामदेवाय वै भुजौ। अघोरहृदयायेति हृदयं चापि पूजयेत् । स्तनौ तत्पुरुषायेति ईशानाय तथोदरम् । पार्श्वे चानन्तधर्माय ज्ञानभूताय वै कटिम् । ऊरू चानन्तवैराग्यसिंहायेति प्रपूजयेत् । अनन्तैश्वर्यनाथाय जानुनी चार्चयेद्बुधः । प्रधानाय नमो जङ्घे गुल्फौ व्योमात्मने नमः । व्युप्तकेशात्मरूपाय पृष्ठमभ्यर्चयेन्नरः । नमः पुष्ट्यै नमस्तुष्ट्यै पार्वतीं चापि पूजयेत् । ततस्तु वृषभं हैममुदकुम्भसमन्वितम् । शुक्लमाल्याम्बरधरं पञ्चरत्नसमन्वितम् । भक्ष्यैर्नानाविधैर्युक्तं ब्राह्मणाय निवेदयेत् । प्रीयतां देवदेवोत्र सद्योजातः पिनाकधृक् । ततस्तु विप्रानन्नेन तर्पयेच्छक्तितः शुभान् । पृषदाज्यं तु संप्राश्य स्वपेद्भूमावुदङ्मुखः । पञ्चदश्यां ततः पूज्य विप्रान्भुञ्जीत वाग्यतः । तद्वत्कृष्णचतुर्दश्यामेतत्सर्वं समाचरेत् । चतुर्दशीषु सर्वासु कुर्यात्पूर्ववदर्चनम् । ये तु मासविशेषाः स्युस्तान्निबोध क्रमादिह । मार्गशीर्षादिमासेषु क्रमादेतदुदीरयेत् । शंकराय नमस्तुभ्यं नमस्ते करवीरक । त्र्यम्बकाय नमस्तेऽस्तु महेश्वर ततः परम् । नमस्तेऽस्तु महादेव स्थाणवे च ततः परम् । नमः पशुपते नाथ नमस्ते शंभवे पुनः । नमस्ते परमानन्द नमः सोमार्धधारिणे । नमो भीमाय इत्येवं त्वामहं शरणं गतः । गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । पञ्चगव्यं तथा बिल्वं यवान्गोशृङ्गवारि च । तिलाश्च कृष्णा विधिवत्प्राशनं क्रमशः स्मृतम् । प्रतिमासं चतुर्दश्योरेकैकप्राशनं स्मृतम् । मन्दारैर्मालतीभिश्च तथा धत्तूरकैरपि । सिन्दुवारैरशोकैश्च मल्लिकाभिः सपाटलैः । अर्कपुष्पैः कदम्बैश्च शतपत्र्या तथोत्पलैः । एकैकेन चतुर्दश्योरर्चयेत्पार्वतीपतिम् ।' मार्गशीर्षादिमासेष्वित्यतद्गुणसंविज्ञानो बहुव्रीहिः । तेन मार्गशीर्षे सद्योजातः प्रीयतामिति सद्योजातस्योदीरणात्पौषादिष्वेकादशसु शंकरादीनुदीरयेत् । पृषदाज्यस्य मार्गशीर्षे प्राशनम्।गोमूत्रादयः पौषादिषु प्राशनीयाः । मार्गशीर्षे श्वेतकमलैः पूजाविधानान्मन्दाराद्यैः पौषादिषु पूजा कार्येत्यर्थः'पुनश्च कार्तिके मासि संप्राप्ते तर्पयेद्द्विजान्।अन्नैर्नानाविधैर्भक्ष्यैर्वस्त्रमाल्यवि-

---

१—मार्गशीर्षश्चात्र प्रतिपदादिरमावास्यान्तश्चान्द्रो मासः ।

भूषणैः। कृत्वा नीलवृषोत्सर्गं श्रुत्युक्तविधिना नरः।उमामहेश्वरं हैमं वृषभं च गवा सह।मुक्ताफलाष्टकयुतं सितनेत्रपटान्वितम् । ताम्रपात्रोपरि पुनः शालितन्दुलसंयुतम् । स्थाप्य विप्राय शान्ताय वेदव्रतपराय वै।ज्येष्ठसामविदे देयं न च कुव्रतिने कचित्।गुणज्ञे श्रोत्रिये दद्यादाचार्ये तत्त्ववेदिनि । अव्यग्राङ्गाय सौम्याय सदा कल्याणकारिणे । सपत्नीकाय संपूज्य माल्यवस्त्रविभूषणैः। गुरौ सति गुरौ देयं तदभावे द्विजातये। न वित्तशाठ्यं कुर्वीत कुर्वन्दोषात्पतत्यधः । सर्वोपस्करसंयुक्तां शय्यां दद्यात्सकुम्भिकाम् । अनेन विधिना यस्तु कुर्याच्छिवचतुर्दशीम् । सोऽश्वमेधसहस्रस्य फलमाप्नोति मानवः । ब्रह्महत्यादिकं किंचिदत्र वाऽमुत्र वा कृतम् । पितृभिर्भ्रातृभिर्वापि तत्सर्वं नाशमाप्नुयात् । दीर्घायुरारोग्यकुलान्नवृद्धिरत्राक्षयाऽमुत्र चतुर्भुजत्वम् । गणाधिपत्यं दिवि कल्पकोटिशतं वसित्वा पदमेति शंभोः । न बृहस्पतिरप्यनन्तमस्याः फलमिन्द्रो न पितामहोऽपि वक्तुम् । न च सिद्धगणोप्यलं न चाहं यदि जिह्वायुतकोटयोऽपि वक्त्रे । भवत्यमरवल्लभः पठति यः स्मरेद्वा यदा शृणोत्यपि विमत्सरः सकलपापनिर्मोचिनीम् । इमां शिवचतुर्दशीममरकामिनीकोटयः स्तुवन्ति तमनिन्दितं किमु समाचरेद्यः सदा । या चाथ नारी कुरुते च भक्त्या भर्तारमापृच्छ्य गुरुं सुतं वा । सापि प्रसादात्परमेश्वरस्य परं पदं याति पिनाकपाणेः ।' इति शिवचतुर्दशीव्रतम् । अस्यामेव चतुर्दश्यां काश्यां पिशाचमोचनयात्रा कार्या । तदुक्तं काशीखण्डे—' मार्गशीर्षचतुर्दश्यां कपर्दीश्वरसंनिधौ । स्नात्वाऽन्यत्रापि मरणान्न पैशाच्यमवाप्नुयुः । इमां सांवत्सरीं यात्रां ये करिष्यन्ति मानवाः । तीर्थप्रतिग्रहात्पापान्निस्तरिष्यन्ति ते नराः ।' इति।

पौषशुक्लचतुर्दश्यां विरूपाक्षव्रतम् । तदुक्तं हेमाद्रौ विष्णुधर्मोत्तरे— मार्कण्डेय उवाच ।' शुक्लपक्षे चतुर्दश्यां विरूपाक्षं तु पूजयेत् । पौषमासादथारभ्य यावत्संवत्सरं भवेत् । गन्धमाल्यनमस्कारधूपदीपान्नसंपदा । तत्स्थं द्विजातये दद्याद्व्रतान्ते तु परंतप । कृत्वा व्रतं वत्सरमेतदिष्टं भयं न चाप्नोति स राक्षसेभ्यः । कामानवाप्नोति भवत्यरोगो भयं च राजन्न च तस्य किंचित्।' इति विष्णुधर्मोक्तं विरूपाक्षव्रतम् ।

माघशुक्लचतुर्दश्यां यमतर्पणं कार्यम् । तदाह हेमाद्रौ यमः—' अनर्काभ्यु-

---

१–नेत्रपटः "नेत" इति प्रसिद्धः । २–तत्स्थं तदुपकरणं महोत्साहिकम् ।

दिते काले माघशुक्लचतुर्दशीम् । स्नातः संतर्प्य तु यमं सर्वपापैः प्रमुच्यते ।' इति । तर्पणप्रकारस्तु कार्तिककृष्णचतुर्दश्यामुक्तः । इयमेवारटन्त्याख्या चतुर्दशी । तत्रारुणोदये स्नात्वा यमं संपूज्य तस्मै सप्तभिर्नामभिः सप्ततिलोदकाञ्जलीन्दत्त्वा तिलहोमादिकं कृत्वा पितृभ्यः श्राद्धं दत्त्वा ब्राह्मणेभ्यः कृशरान्नभोजनं दत्त्वा स्वयमपि कृशरान्नं भुञ्जीत । तदुक्तं निर्णयामृते ब्रह्मपुराणे—' माघकृष्णचतुर्दश्यां विष्णोर्देहान्मरीचयः ।' इत्यादिना ' ततो विभज्य बन्धुभ्यः कृशरं भोजयेत्स्वयम् ।' इत्यन्तेन ।

अथ फाल्गुनकृष्णचतुर्दशी । इयमेव शिवरात्रिः । अस्याः स्वरूपमुक्तं मदनरत्ने शिवरहस्ये— ' तत्प्रभृत्यथ देवर्षे माघकृष्णचतुर्दशी । शिवरात्रिः समाख्याता प्रिया त्रिपुरविद्विषः ।' इति । स्कान्देऽपि— ' माघफाल्गुनयोर्मध्ये असिता या चतुर्दशी । शिवरात्रिस्तु सा ख्याता सर्वयज्ञोत्तमोत्तमा ।'इति। अत्र माघग्रहणममान्तमासाभिप्रायेण । यत्तु ' चतुर्दश्यां तु कृष्णायां फाल्गुने शिवपूजनम् । तामुपोष्य प्रयत्नेन विषयान्परिवर्जयेत् ।' इति शिवरात्रिप्रकरणे भविष्यत्पुराणवचनं तत्पूर्णिमान्तफाल्गुनाभिप्रायेण । अत्र योगरूढोऽयं शिवरात्रिशब्द इति माधवः । तथाहि । तत्र शिवस्य रात्रिरिति तत्पुरुषसमासेन योगेन प्रवर्तमानः शब्दो रूढ्या माघकृष्णचतुर्दशीरूपे कालविशेषे नियम्यते । शिवस्य रात्रिर्यास्मिन्व्रते इति बहुव्रीहिसमासेन योगेन प्रवृत्तः शब्दो रूढ्या व्रतविशेषे नियम्यते इति । कालतत्त्वविवेचने तु— रात्रिशब्दस्य तिथिपरत्वाद्योगेन शिवव्रतयोग्यतिथिलाभात् रूढ्या च तद्विशेषलाभात् अत्र योगरूढोऽयं शिवरात्रिशब्दः । यस्तु क्वचिद्व्रते केवलशिवरात्रिशब्दप्रयोगः स लक्षणया नवरात्रादिशब्दवत् । न च मुख्ये संभवति लक्षणाश्रयणमनुचितमिति वाच्यम् । लक्षणाया अभावे व्रतविषयत्वप्रसङ्गाभावात् । अत एव प्राचुर्येण शिवरात्रिव्रतशब्द एव व्रते प्रयुज्यते । तिथिविशेषसंज्ञाकरणप्रयोजनं चशब्देन तां निर्दिश्य तत्रोपवासपूजादिविधानमिति । तत्र शिवरात्रिव्रतमेकादशीजयन्तीव्रतवत्संयोगपृथक्त्वन्यायेन नित्यं काम्यं चेत्युभयविधम् । तत्र नित्यत्वप्रकरणे प्रत्यवायवीप्सानित्यनिश्चलशब्दैरवगन्तव्यम् । तत्राकरणे प्रत्यवायः स्कन्दपुराणे पठ्यते । 'परात्परतरं नास्ति शिवरात्रिः परात्परम् । न पूजयति भक्त्येशं रुद्रं त्रिभुवनेश्वरम् । जन्तुर्जन्मसहस्रेण भ्रमते नात्र संशयः।'इति। वीप्सापि तत्रैव पठिता।'वर्षे वर्षे महादेवि नरो नारी पतिव्रता । शिवरात्रौ महादेवं कामं भक्त्या प्रपूजयेत् ।' इति । नित्यनिश्चलशब्दौ च

तत्रैव।'माघकृष्णचतुर्दश्यां यः शिवं शंसितव्रतः। मुमुक्षुः पूजयेन्नित्यं स लभेदीप्सितं पदम्।' इति।'सागरो यदि शुष्येत क्षीयेत हिमवानपि। मेरुमन्दरशैलाश्च श्रीशैलो विन्ध्य एव च। चलन्त्येते कदाचिद्वै निश्चलं हि शिवव्रतम्।' इति। काम्यत्वं च फलश्रवणादवगन्तव्यम्। तथा च स्कन्दपुराणे—'शिवं च पूजयित्वा यो जागर्ति च चतुर्दशीम्। मातुः पयोधररसं न पिबेत्स कदाचन। यदीच्छेद्वाञ्छितान्भोगान्दिवि देवमनोरमान्। आगमोक्तविधिं कृत्वा प्राप्नोति परमं पदम्। मम भक्तस्तु भो देवि शिवरात्रिमुपोष्य च। गणत्वमक्षयं दिव्यमक्षयं शिवशासनम्।' इति 'सर्वान्भुक्त्वा महाभोगान्मृतो भूयो न जायते।' इति। काम्यव्रतस्येशानसंहितायां वर्षसंख्या पठ्यते।'एवमेतद्व्रतं कुर्यात्प्रतिसंवत्सरं व्रती। द्वादशाब्दिकमेतत्स्याच्चतुर्विंशाब्दिकं तथा। सर्वान्कामानवाप्नोति प्रेत्य चेह च मानवः।'इति।अत्रोपवासशिवपूजाजागरणानि त्रीण्यपि समुदितानि प्रधानकर्माणि। अधिकारबोधकेषु नागरखण्डादिवाक्येषु त्रयाणामपि फलसंबन्धश्रवणात्। तथा च नागरखण्डे—'उपवासप्रभावेण बलादपि च जागरात्। शिवरात्रेस्तथा तस्यां लिङ्गस्यापि प्रपूजया। अक्षयाँल्लभते भोगाञ्छिवसायुज्यमाप्नुयात्।' इति। सह्यखण्डेऽपि—'स्वयं च लिङ्गमभ्यर्च्य सोपवासः सजागरः। अजानन्नपि निष्पापो निषादो गणतां गतः।' इति। तस्मादुपवासादित्रयाणां समुदायस्यैव व्रतरूपत्वम्। अस्यैवोपोद्बलकं लिङ्गमभिधीयते। लुब्धकस्य भद्राश्वजन्म प्राप्तवतो दुर्वाससा सह संवादे पठ्यते।'कृष्णपक्षे चतुर्दश्यां न कंचिन्मृगमाप्तवान्।अण्वपि प्राणरक्षार्थं क्षुधा संपीडितो वसेत्।'इत्युपक्रम्य'धनुःकोट्या हतान्येव बिल्वपत्राणि मानद। पतितानि महाराज शंभोः शिरसि भूतले। तत्रैव तस्थौ राजेन्द्र सर्वरात्रमतन्द्रितः। रात्रिशेषं स्थितो व्याधः स्तब्धदृष्टिरनामिषः। प्रभाते विमले जाते दृष्ट्वा तत्रैव शंकरम्। बिल्वपत्रैर्नरश्रेष्ठ कन्दमूलैश्च पारितः।' इति। ननु क्वचिदुपवासादित्रयं विधाय पुनः पक्षान्तररूपेणोपवासव्यतिरिक्तं द्वयं पठ्यते। 'अथवा शिवरात्रिं च पूजाजागरणैर्नयेत्।' इति। नायं दोषः। अथ वेत्युपक्रमेणाशक्तविषयत्वोपपत्तेः। यान्यपि 'अखण्डितप्रभावो हि शिवरात्रिमुपोषयेत्। सर्वान्कामानवाप्नोति शिवेन सह मोदते।' तथा 'कश्चित्पुण्यविशेषेण व्रतहीनोऽपि यः पुमान्। जागरं कुरुते तत्र स रुद्रसमतां व्रजेत्।' तथा 'यः पूजयति भक्त्येशमनेकफलतां व्रजेत्।' इत्यादीनि केवलोपवासजागरणपूजाविधायकानि तान्यप्यनुकूलत्वादशक्तविषयाणि हेमाद्रिमाधवीयमदनरत्नादावप्येवम्।नित्य-

काम्यरूपस्यास्य व्रतस्य सर्वाधिकारिकत्वमीशानसंहितायामुक्तम् । 'शिवरात्रिव्रतं नाम सर्वपापप्रणाशनम् । आचाण्डालमनुष्याणां भुक्तिमुक्तिप्रदायकम् ।' इति । नृसिंहपरिचर्यायां वैष्णवैरप्येतद्व्रतं कार्यमित्युक्तम् । 'सौरो वा वैष्णवो वान्यो देवतान्तरपूजकः । न पूजाफलमाप्नोति शिवरात्रिबहिर्मुखः ।' इति पाद्मवचनात् । 'न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम् ।' इति शिवद्वेषिणो वैष्णवपदप्राप्तिनिषेधाच्च । अधिकारिनियमाः स्कन्दपुराणे दर्शिताः । 'माघमासे तु कृष्णा या फाल्गुनादौ चतुर्दशी । सा च पुण्या तिथिर्ज्ञेया सर्वपातकनाशिनी । अहिंसा सत्यमक्रोधो ब्रह्मचर्यं दया क्षमा । शान्तात्मा क्रोधहीनश्च तपस्वी ह्यनसूयकः । तस्मै देयमिदं देवि गुरुपादानुगो यदि । अन्यथा यो ददातीदं स तदा नरकं व्रजेत् ।' इति । इति व्रतस्वरूपतदुपयोगिनिर्णयः । अथ तिथिर्निर्णीयते । सा च द्विविधा शुद्धा विद्धा च । तत्र सूर्योदयमारभ्य पुनः सूर्योदयपर्यन्ता शुद्धा । तदन्या विद्धा । तत्र शुद्धायां नास्ति संदेहः । विद्धा तु प्रदोषनिशीथोभयव्यापिनी ग्राह्या । प्रदोषवेधो वायुपुराणे दर्शितः । 'त्रयोदश्यस्तगे सूर्ये चतसृष्वेव नाडिषु । भूतविद्धा तु या तत्र शिवरात्रिव्रतं चरेत् ।' स्मृत्यन्तरेऽपि—'प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी । रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत् ।' इति । 'त्रयोदशीदिनास्तान्ते प्रदोषे च चतुर्दशी । त्रिवर्गप्राप्तये कार्या गृहस्थैः शिवतोषिणी । माघे चतुर्दशी कृष्णा या भवेद्रजनीमुखे । तद्दिने ह्युपवासः स्यात्तिथ्यन्ते पारणं भवेत् । त्रयोदशीयुता कार्या शिवरात्रिचतुर्दशी । पारणाहे चतुर्दश्यां यद्यस्तं याति नो रविः । शिवरात्रिः परा कार्या यदि रात्रित्रयोदशी । अन्यथा तु भवेत्पूर्वा परे मा चेद्भुजिक्षमा ।' इति । निशीथवेधस्तु ईशानसंहितायाम्—'माघकृष्णचतुर्दश्यामादिदेवो महानिशि । शिवलिङ्गतयोद्भूतः कोटिसूर्यसमप्रभः । तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः । अर्धरात्रादधश्चोर्ध्वयुक्ता यत्र चतुर्दशी । तत्तिथावेव कुर्वीत शिवरात्रिव्रतं व्रती । अर्धरात्रादधश्चोर्ध्वं मुक्ता यत्र चतुर्दशी । नैव तत्र व्रतं कुर्यादायुरैश्वर्यहानितः ।' इति । 'व्याप्यार्धरात्रं यस्यां तु लभ्यते या चतुर्दशी । तस्यामेव व्रतं कार्यं मत्प्रसादार्थिभिर्नरैः । पूर्वेद्युरपरेद्युर्वा महानिशि चतुर्दशी । व्याप्ता सा दृश्यते यस्यां तस्यां कुर्याद्व्रतं नरः । लिङ्गाविर्भावकाले तु व्याप्ता ग्राह्या चतुर्दशी । तदूर्ध्वाधोन्विता भूता सा कार्या व्रतिभिः सदा । मम प्रियकरी ह्येषा माघकृष्णचतुर्दशी । महानिशान्वितायां तु तत्र कुर्यादिदं व्रतम् ।' इति । अत एवास्य व्रतस्य रात्रिप्राधान्यमुक्तं स्कन्द-

पुराणे—'निशि भ्रमन्ति भूतानि शक्तयः शूलभृयतः । अतस्तस्यां चतुर्दश्यां सत्यां तत्पूजनं भवेत् ।' निशि भ्रमन्ति विचरन्ति भूतानि पिशाचादयः शक्तयो देव्यः शूलभृच्छंकरः यतोऽतस्तस्यां चतुर्दश्यां तेषां भूतशक्तिशिवानां पूजनम् । नागरखण्डे-'माघमासस्य कृष्णायां चतुर्दश्यां सुरेश्वर । अहं यास्यामि भूपृष्ठे रात्रौ नैव दिवा कलौ । लिङ्गेषु च समस्तेषु चलेषु स्थावरेषु च । संक्रमिष्याम्यसंदिग्धं वर्षपापविशुद्धये । तस्माद्रात्रौ हि मे पूजां यः करिष्यति मानवः । मन्त्रैरेतैः सुरश्रेष्ठ विपाप्मा स भविष्यति ।' इति । एवं सति पूर्वद्युरेव परेद्युरेव यत्र प्रदोषनिशीथोभयव्याप्तिस्तत्र व्रतमाचरणीयम्। पूर्वेद्युरेवोभयव्याप्तौ स्कन्दपुराणे पठ्यते । 'निशाद्वये चतुर्दश्यां पूर्वा त्याज्या परा शुभा ।' इति । तथा तत्रैव 'आदित्यास्तमये काले अस्ति चेद्या चतुर्दशी । तद्रात्रिः शिवरात्रिः स्यात्सा भवेदुत्तमोत्तमा ।' इति । दिनद्वयेऽप्युभयव्याप्तिश्च न संभाव्यते यामद्वयवृद्धेः यामद्वयक्षयस्य चाभावात् । यदा पूर्वेद्युर्निशीथव्याप्तिः परेद्युः प्रदोषव्याप्तिः तदा पूर्वद्युरेवोपवासः कार्यः 'कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्दशी । एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् । जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च । पूर्वविद्धैव कर्तव्या तिथिभान्ते च पारणम् । श्रावणे दुर्गनवमी तथा दूर्वाष्टमी च या । पूर्वविद्धा च कर्तव्या शिवरात्रिर्बलेर्दिनम् ।' इति 'जयन्ती शिवरात्रिश्च कार्ये भद्राजयान्विते ।' इत्यादिस्कन्दपुराणादिवचनैर्जयायोगस्याद्दतत्वेनैतस्याः प्राशस्त्यावगतेः । 'माघफाल्गुनयोर्मध्ये या स्याच्छिवचतुर्दशी । अनङ्गेन[1] समायुक्ता कर्तव्या सा सदा तिथिः ।' इति नागरखण्डवचनाच्च । 'महतामपि पापानां दृष्टा वै निष्कृतिः पुरा । न दृष्टा कुर्वतां पुंसां कुहूयुक्तां तथा शिवाम् ।' इति तत्रैव दर्शनाद्युक्ताया निन्दाश्रवणाच्च । यदा तु पूर्वेद्युर्निशीथादूर्ध्वं प्रवृत्ता चतुर्दशी परेद्युः क्षयवशान्निशीथादर्वागेव समाप्ता तदा परेद्युरेवोपवासः प्रदोषव्याप्तेरेकस्याः सद्भावात्। एतदेवाभिप्रेत्य माधवीये स्मर्यते—'माघासिते भूतदिनं कदाचिदुपैति योगं यदि पञ्चदश्या । जयाप्रयुक्तां न तु जातु कुर्याच्छिवस्य रात्रिं प्रियकृच्छिवस्य ।' इति । अत्र जयया त्रयोदश्या प्रकर्षेण युतामित्युक्तत्वात्पूर्वेद्युस्त्रयोदश्या बहुरात्रिव्याप्तिप्रतीतिः । एतन्माधवमतानुसारेणोक्तम् । हेमाद्रिमदनरत्नादौ तु निशीथव्याप्त्यां निर्णयः कार्य इत्युक्तम् । निर्णयामृते तु

[1]—अनङ्गेन त्रयोदश्या ।

प्रदोषव्यापिनी ग्राह्येत्युक्तम् । मयूखे—यदा चतुर्दशी पूर्वेद्युर्निशीथे परेद्युश्च प्रदोषे तदा पूर्वेद्युरेव । 'अर्धरात्रात्पुरस्ताच्चेज्जयायोगो यदा भवेत् । पूर्वविद्धैव कर्तव्या शिवरात्रिः शिवप्रिया ।' इति पाद्मोक्तेरिति । यत्तु मयूखेऽभिहितम् । यत्तु एतस्मादेव वचनाद्दिनद्वयेऽपि निशीथव्याप्तौ पूर्वेति हेमाद्रिमदनौ । तन्न । एतस्य वचस उत्तरदिने निशीथव्याप्त्यभावेऽप्युपपत्तेः । उत्तरदिनगतप्रदोषनिशीथव्याप्त्योर्दिवारात्रिव्रतमिति पूर्वोक्तवचसः संकल्पकालस्य च बाधायोगादिति । तच्चिन्त्यम् । तत्रैतादृशग्रन्थानुपलम्भात् । उत्तरदिने प्रदोषनिशीथोभयव्याप्तिसत्त्वेऽपि ग्राह्यतिथिनिर्णायकजयायोगसंग्राहकामायोगनिषेधकवचननिचयसत्त्वेन पूर्वविद्धाया एव ग्रहीतुं युक्तत्वाच्च। दिवारात्रिव्रतमित्यस्य व्रतान्ते चारितार्थत्वेन विशेषवचनविषयकृतव्रते निर्णायकत्वाच्च । संकल्पस्य चाङ्गत्वेन तत्कालव्याप्तेरुद्भावनानर्हत्वाच्च । नृसिंहपरिचर्यायां तु दर्शविद्धैवोपोष्येत्युक्तम् । इयं त्रिस्पृशा चेदतिप्रशस्ता । तदुक्तं माधवीये पुराणे—'त्रयोदशी कला ह्येका मध्ये चैव चतुर्दशी । अन्ते चैव सिनीवाली त्रिस्पृशां शिवमर्चयेत् ।' इति । यथा त्रिस्पृशा प्रशस्ता तथा वारविशेषेण योगविशेषेणापि प्रशस्ता भवति । तथा च स्कन्दपुराणे पठ्यते—'माघकृष्णचतुर्दश्यां रविवारो यदा भवेत् । भौमो वाथ भवेद्देवि कर्तव्यं व्रतमुत्तमम् । शिवयोगस्य योगे वै तद्भवेदुत्तमोत्तमम् ।' इति ग्राह्यतिथिनिर्णयः । अथ पारणानिर्णयः । यदोत्तरदिने दिवैव चतुर्दशी समाप्यते तदा तिथ्यन्ते पारणं कार्यम् । तथा च स्कन्दपुराणे—कृत्वाष्टमीत्याद्युक्त्वा 'एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् ।' इति पठितम् । यदा तु दिवा न समाप्यते तदा चतुर्दशीमध्ये पूर्वाह्णे कार्यम् । तदप्युक्तं तत्रैव—'उपोषणं चतुर्दश्यां चतुर्दश्यां तु पारणम् । कृतैः सुकृतलक्षैश्च लभ्यते वाऽथवा न वा । ब्रह्मा स्वयं चतुर्वक्त्रैः पञ्चवक्त्रैस्तथाप्यहम् । सिक्थे सिक्थे फलं तस्य शक्तो वक्तुं न पार्वति । ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै । संस्थितानि भवन्तीह भूतायां पारणे कृते । तिथीनामेव सर्वासामुपवासव्रतादिषु । तिथ्यन्ते पारणं कुर्याद्विना शिवचतुर्दशीम् ।' इति । मदनरत्ने कालादर्शेऽपि—'सा त्वस्तसमयपर्यन्तं व्यापिनी चेत्परेऽहनि । दिवैव पारणं कुर्यात्पारणा नैव दोषभाक् ।' इति । केचित्तु शक्तस्तिथ्यन्ते अशक्तस्तिथिमध्ये इत्यूचुः । मयूखे तु तिथिमध्यकालो मुख्यस्तदन्तकालो गौण इत्युक्तम् । यत्तु निर्णयसिन्धौ—यामत्रयादर्वाक्चतुर्दशीसमाप्तौ तदन्ते तदूर्ध्वगामिन्यां तु प्रातस्तिथिमध्ये एवेति हेमाद्रिमाधवादयो व्यवस्थामाहुस्तन्न । 'तिथ्यन्ते तिथिभान्ते वा पारणं यत्र चोदि-

तम्। यामत्रयोर्ध्वगामिन्या प्रातरेव हि पारणा।' इत्यादिसामान्यवचनैरेव व्यवस्था-सिद्धेरुभयविधवाक्यवैयर्थ्यस्य दुष्परिहरत्वादिति। तच्चिन्त्यम्। तिथिमध्ये पारणाविधायकवचनानामेकमूलकल्पनालाघवानुरोधेन एतद्वचनसिद्धार्थानुवादत्व-स्यैव युक्तत्वात्। यदप्युक्तम्—वयं तु 'तिथ्यन्ते पारणं भवेत्' इति कृष्णाष्टम्या-दिविषयमिति ब्रूम इति। तदपि चिन्त्यम्। तिथ्यन्ते पारणं भवेदित्यत्र तिथिशब्देन प्रक्रा-न्तसर्वतिथिपरामर्शस्य स्वरससिद्धत्वेन संकोचस्यान्याय्यत्वात्। यदपि 'यत्सा ह्यस्तमपर्यन्तं व्यापिनी चेत्परेऽहनि।' इति मदनरत्नकालादर्शधृतवचनं शिवरात्रिव्रत-भिन्नव्रतपरमिति। तदपि न। प्रकरणबाधापत्तेः। तच्छब्दस्य प्रक्रान्तशिवरात्रिपरा-मर्शकत्वेन तद्भिन्नव्रतपरामर्शकत्वानुपपत्तेश्चेति। इति पारणानिर्णयः। अथ शिवरात्रा-ववश्यकर्तव्यशिवपूजोपयोगित्वेन प्रासङ्गिकं किंचिन्निरूप्यते। तत्रादौ शिवलिङ्गम-हिमा। नन्दिभविष्ययोः— 'आयुष्मान्बलवाञ्छ्रीमान्पुत्रवान्धनवान्सुखी। वरमिष्टं लभेल्लिङ्गं पार्थिवं यः समर्चयेत्। मृद्भस्मगोशकृत्पिण्डताम्रकांस्यमयं तथा। कृत्वा लिङ्गं सकृत्पूज्य वसेत्कल्पायुतं दिवि।' देवीपुराणे— 'वार्क्ष वित्तप्रदं लिङ्गं स्फा-टिकं सर्वकामदम्। नर्मदागिरिजं श्रेष्ठमन्यत्रापि हि लिङ्गवत्। कृत्वा पूजय विप्रेन्द्र लप्स्यसे चेप्सितं फलम्।' अथ लिङ्गविशेषप्रयुक्तः फलविशेषो हेमाद्रौ लक्षण-समुच्चये—'आयुष्यं हीरजं ज्ञेयं रोगहृन्मौक्तिकोद्भवम्। सुखकृत्पुष्परागोत्थं वैदूर्यं शत्रुपापहृत्। पद्मरागं च लक्ष्मीदमैन्द्रनीलं यशःप्रदम्। लिङ्गं मारकतं पुष्ट्यै स्फाटिकं सर्वकामदम्।' इति। शिवनारदसंवादे— 'पितॄणां मुक्तये पूज्यं लिङ्गं रजतसंभवम्। हेमजं सत्यलोकस्य प्राप्तये पूजयेत्पुमान्। पूजयेत्ताम्रजं लिङ्गं पुष्टि-कामो हि मानवः। तुष्टिकामस्तु सततं लिङ्गं पित्तलसंभवम्। कीर्तिकामोऽर्चयेन्नित्यं लिङ्गं कांस्यसमुद्भवम्। शत्रुमारणकामस्तु लिङ्गं लोहमयं सदा। तथा शीसमयं लिङ्गमायुःकामोऽर्चयेत्सदा।' इति। तथा 'ब्रह्मस्वपरिहारार्थं सौवर्णं लिङ्गमर्चयेत्।' लक्षणसमुच्चये— 'स्थिरलक्ष्मीप्रदं हैमं राजतं चैव राज्यकृत्। प्रजावृद्धिकरं राङ्गं ताम्रमायुःप्रवर्धनम्।' इति। लैङ्गे—'श्रीप्रदं शार्वजं लिङ्गं शिलाजं सर्वसिद्धिदम्।' इति। कालोत्तरे— 'गन्धपुष्पमयं लिङ्गं तथान्नादिविनिर्मितम्। भस्मगोमयजं चाथ गुडान्नादिविनिर्मितम्। सर्वकामप्रदं पुंसो लिङ्गं तात्कालिकं स्मृतम्।' इति। लक्षणसमुच्चये— 'गान्धं सौभाग्यदं पौष्पं भुक्तिमुक्तिप्रदायकम्। प्रभुमानप्रदं शार्ङ्गं सैन्यदं नागदन्तजम्। शालिपिष्टोद्भवं पुष्ट्यै पाष्टिकं पुष्टिवर्धनम्। गोधूमं वातरोगघ्नं

यवजं बलसौख्यदम् । रिपुभेदकरं मौद्गं स्त्रीदं स्यान्माषसंभवम् । तैलपिष्टं करोत्यग्निं सैद्धार्थं भयनाशनम् । सुखकृन्नावनीतं च गोमयं रोगनाशनम् । आन्नमायुःप्रदं ज्ञेयं गौडं प्रीतिविवर्धनम् । नानाफलोद्भवं लिङ्गं नानाकामप्रदायकम् । गुणदं सैकतं भूरि सौभाग्याय च लावणम् । उच्चाटने तु पांशव्यं मौलं शत्रुक्षयावहम् । वंशाङ्कुरसमुद्भूतं वंशवृद्धिप्रदं भवेत् । पुरक्षोभकरं पौरं रामठं चाग्निकारकम् ।' ज्ञानरत्नावल्याम् 'पूज्यं गन्धमयं लिङ्गं त्रिकालं स्वसुखावधि । चन्द्रेण चन्दनेनाथ कुङ्कुमेन सुगन्धिना । चतुःसमेन वा कार्यं लघुना केवलेन वा ।' चन्द्रः कर्पूरः । लघुरगरुः । चतुःसमलक्षणं गारुडे— 'कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दनस्य च । कुङ्कुमस्य त्रयश्चैव शशिनश्च चतुःसमः ।' इति । शिवनारदसंवादे— 'तत्रापि पार्थिवं लिङ्गं क्षिप्रसिद्धिप्रदं भवेत् । पार्थिवेन तु लिङ्गेन बहवः सिद्धिमागताः । कृते रत्नमयं लिङ्गं त्रेतायां हेमसंभवम् । द्वापरे पारदं श्रेष्ठं पार्थिवं तु कलौ युगे ।' श्रेष्ठमित्यनुषङ्गः । ततश्च कलावपि लिङ्गान्तरनिषेधः । अथ पार्थिवलिङ्गेषु संख्याभेदेन फलविशेषः । 'मृल्लिङ्गं पार्थिवं लक्षं भुक्तिमुक्तिकरं परम् । देशकालफलं ज्ञात्वा कुर्याल्लिङ्गं फलप्रदम् । विद्यार्थी लिङ्गसाहस्रं धनार्थी च तदर्धकम् । पुत्रार्थी सार्धसाहस्रं कन्यार्थी च शतत्रयम् । विद्वाँल्लिङ्गायुतं कुर्यात्सर्वपापहरं परम् । राज्यार्थी शतसाहस्रं कान्तार्थी शतपञ्चकम् । मोक्षार्थी कोटिगुणितं भूतिकामः सहस्रकम् । रूपार्थी त्रिसहस्रं तु तीर्थार्थी द्विसहस्रकम् । सुहृत्कामः सहस्रं तु वस्त्रार्थी शतमष्टकम् । मारणार्थी सप्तशतं मोहनार्थी शताष्टकम् । उच्चाटनपरश्चैव सहस्रं च यथोक्ततः । स्तम्भने च सहस्रं च जागरणे च तदर्धकम् । निगडान्मुक्तिकामस्य सहस्रं सार्धमीरितम् । महाराजभये पञ्चशतं चौरादिसंकटे । शतद्वयं च डाकिन्या भये पञ्चशतं परम् । दारिद्र्ये पञ्चसाहस्रमयुतं सर्वकामदम् ।' इति । पूर्वोक्तमहासंख्यापूर्त्यर्थं प्रत्यहं कियल्लिङ्गपूजा विधेयेत्यपेक्षायामाह—'एकं पापहरं प्रोक्तं द्विलिङ्गं चार्थसिद्धिदम् । त्रिलिङ्गं सर्वकामानां कारणं परमीरितम् । उत्तरोत्तरमेवं स्यात्पूर्वोक्तगणनावधि ।' इति । अन्यत्रापि— 'लिङ्गानामयुतं कृत्वा महाराजभयं हरेत् । सहस्रमेकं लिङ्गानां व्याधीनां तु भयं हरेत् । सहस्राणि तथा पञ्च निगडान्मुक्तये नृणाम् । कारागृहविमुक्त्यर्थमयुतं कारयेद्बुधः । डाकिन्यादिभये सप्तसहस्रं कारयेत्तथा । सहस्राणां तु पञ्चाशदपुत्रो हि

१—तैलमिश्रितपिष्टोद्भवं लिङ्गं क्षुधां करोतीत्यर्थः । २— पौरं गौग्गुलम् । रामठं हिङ्गुमयम् ।

प्रकारयेत् । लिङ्गानामयुतेनैव कन्यकां संततिं लभेत् । एकलिङ्गार्चनेनैव अतुलां श्रियमाप्नुयात् । लक्षमेकं तु लिङ्गानां यः करोति नरो भुवि । शिव एव भवेत्सोऽपि नात्र कार्या विचारणा ।' इति । क्रियासारे—' लिङ्गस्य शिवनाभेस्तु न हि पीठप्रकल्पनम् । तदाधारशिलैव स्यात्तस्य पीठमिति स्मृतम् । उत्तमं मध्यमं चाथ इति लिङ्गं त्रिधोच्यते । एष्वेकैकं त्रिधा तद्वदुत्तमाङ्गुलिमानतः । नवाष्टसप्ताङ्गुलिकं लिङ्गं श्रेष्ठं तथा स्मृतम् । षट्पञ्चकचतुर्मानं मध्यमं त्रिविधं स्मृतम् । त्रिद्व्येकाङ्गुलिकं चैव त्रिविधं तु कनीयसम् । उत्तमं बुद्बुदाकारं मध्यमं कुक्कुटाण्डवत् । अधमं गोककुद्वच्च इति लिङ्गं त्रिधा स्मृतम् । अक्षादल्पपरीमाणं न लिङ्गं कुत्रचिन्नरः । कुर्वीताङ्गुष्ठतो ह्रस्वं न कदाचित्समाहरेत् ।' ( अक्षो अशीतिगुञ्जा गुञ्जाः पञ्चाल्पमाषकः । ते षोडशाक्षः कर्षोऽस्त्री ) इत्यमरकोशात् । तस्मादशीतिगुञ्जापरिमितादधिकपरिमाणया मृदा पार्थिवलिङ्गं कर्तव्यम् । ' रुद्राक्षं शिवलिङ्गं च स्थूलं स्थूलं प्रशस्यते ।' इति वचनात् । सिद्धान्तशेखरे—' अङ्गुलादिवितस्त्यन्तं लिङ्गं गेहे प्रपूजयेत् । प्रासादे तु तदूर्ध्वं स्यात्पूजनीयं प्रयत्नतः ।' पाद्मे—' शालग्रामशिलालिङ्गे यः करोति ममार्चनम् । तेनार्चितः कार्तिकेय युगानामेकसप्ततिम् ।' प्रागादिदिगाभिमुख्यनियमः सारसमुच्चये—' प्रागाननो धनददिग्वदनोऽथवा ।' इति । अन्यत्रापि-तथा च स्मृतिः—' रात्रावुदङ्मुखः कुर्याद्देवं कार्यं सदैव हि । शिवार्चनं सदाप्येवं शुचिः कुर्यादुदङ्मुखः ।' इति । वाचस्पतिमिश्रास्तु—' प्राक्पश्चिमोदक्कास्यस्तु प्रातः सायं निशासु वा ।' इति वचनात्कालभेदेन व्यवस्थामाहुः । पारिजाते गृह्यपरिशिष्टे—'प्रतिमाः प्राङ्मुखैरुदङ्मुखो यजेत ।' एतच्च स्थिरप्रतिमाविषयम् । अन्यत्र प्राङ्मुखः । अन्यत्र चलार्चादाविति निर्णयसिन्धौ । अन्यत्र तु—' चरलिङ्गेऽर्चयेद्देवं पूर्वाभिवदनं बुधः । स्थिरलिङ्गे यथाकृतासनमेव प्रपूजयेत् ।' इति । ' गोभूहिरण्यवस्त्रादिवलिपुष्पादिनिवेदने । ज्ञेयो नमः शिवायेति मन्त्रः सर्वार्थसाधकः । सर्वमन्त्राधिकश्चायमोंकाराद्यः षडक्षरः ।' इति नन्दिपुराणात्पञ्चाक्षरेण षडक्षरेण वा पूजनं कार्यम् । ' लिङ्गे वा स्थण्डिले वापि शंकरं विधिपूर्वकम्[१] । युगदोषं विनिर्जित्य रुद्रलोके प्रमोदते ।' पार्थिवं लिङ्गमधिकृत्य ब्राह्मे—' हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् । पशुपतिः शिवश्चेति महादेवेति कीर्तयेत् । मृत्तिकाग्रहणे चैव घटने च प्रतिष्ठितौ । आवाहने च स्नपने पूजने च विसर्जने ।' इति । अथ मन्त्रमहोदधिस्थं पार्थि-

१—संपूज्येति शेषः ।

वविधानम् । 'अथ पार्थिवलिङ्गस्य विधानमभिधीयते। स्नातो नित्यं विधायादौ गर्भ-शुद्धां भुवं सुधीः । उपरिस्थामपाकृत्य षडर्णेनाभिमन्त्रयेत् । आकाशः पृथिवीशेष-स्थितो बिंदुसमन्वितः ।पृथिवी च चतुर्थ्यन्ता नमोन्तः स्यात्षडक्षरः । ततो मृदमुपा-दाय कृत्वा निःशर्करां ततः । पात्रे निदध्यात्संशुद्धे प्रत्यहं पूजनाय ताम् । सद्दिने सद्गुरो-र्मन्त्रौ गणेश्वरकुमारयोः । रुद्राद्यांश्च मनून्सप्त गृह्णीयाद्यागसिद्धये । अथार्चनं शुभे घस्रे आरभेतेष्टसिद्धये। कृतनित्यक्रियः शुद्धः प्रदायार्घ्यं विवस्वते।मृदमादाय तोयेन सुधया मन्त्रितेन च । आसिच्य पिण्डयेत्स्वेष्टमानां पात्रे निधापयेत् । ततः कालमनुस्मृत्य कामनामपि हृद्गताम् । लिङ्गानि पार्थिवानीह पूजयेऽमुकसंख्यया । संकल्प्यैवं मृदः पिण्डादादायाल्पां मृदं सुधीः । एकादशार्णमन्त्रेण कुर्याद्बालगणेश्वरम् । मायागणेशभूबीजैर्ङेन्तो गणपतिः पुटः । एकादशार्णमन्त्रोऽयं स्मृतो बालगणे-शितुः । वराभयलसत्पाणिपद्मं बालगणेश्वरम् । निर्माय स्थापयेत्पीठे लिङ्गानि रच-येत्ततः । हरमन्त्रेण गृह्णीयादक्षमानाधिकां मृदम् । महेश्वरस्य मन्त्रेण लिङ्गं कुर्या-त्तथा शुभम् । अङ्गुष्ठमानादधिकं वितस्त्यवधि सुन्दरम् । पार्थिवं रचयेल्लिङ्गं न न्यूनं नाधिकं ततः॥ शूलपाणेस्तु मन्त्रेण लिङ्गपीठे निधापयेत् । एवमन्यानि कुर्वीत यथासंकल्पमादरात् । अवशिष्टमृदा कुर्यात्कुमारं तस्य मन्त्रतः । स्थापयेल्लिङ्गपंक्त्यन्ते स्वमन्त्रेणार्चयेच्च तम् । वाग्वर्मकर्णबिन्द्वाढ्यश्वरमो मीनके-तनः । कुमाराय नमोन्तोयं गुहमन्त्रो दशाक्षरः । मन्त्रेणावाहयेद्देवं प्रतिलिङ्गं पिना-किनः । ततो लिङ्गस्थितं ध्यायेत्सुप्रसन्नं महेश्वरम् । दक्षाङ्कस्थं गजपतिमुखं प्रामृश-न्दक्षदोष्णा वामोरुस्थं नगपतनयाङ्के गुहं चापरेण।इष्टाभीती परकरयुगे धारयन्निन्दु-कान्तिरव्यादस्मांस्त्रिभुवननतो नीलकण्ठस्त्रिनेत्रः । एवं ध्यात्वा पशुपतेर्मन्त्रेण स्नापये-च्छिवम् । शिवमन्त्रेण गन्धादीनर्पयेद्वह्नितेजसे । प्रागादिवामावर्तेन दिक्ष्वष्टौ परि-पूजयेत् । शर्वं भवं रुद्रमुग्रं भीमं पशुपतिं तथा । महादेवमथेशानं क्रमात्क्षित्यादिमूर्ति-कान् । क्षित्यतेजोनिलाकाशयजमानेन्दुभास्कराः । क्षित्यादयः स्युः शर्वाद्यास्तत इन्द्रादिकान्यजेत् । धूपदीपनिवेद्यादिनमस्कारप्रदक्षिणाः ।जपं च कृत्वा विसृजेन्महा-देवस्य मन्त्रतः । तारनत्यादिका ङेन्ता हराद्या मनवोऽद्रयः। प्रतिलिङ्गं यजेद्देवमखि-लानि सहैव वा । पूजितौ निजमन्त्राभ्यां विसृजेद्गणभृद्गुहौ । धनपुत्रादिकामैस्तु शिवोऽर्च्यः प्रोक्तलक्षणः । विद्याकामैश्चिन्तनीयः परशुं हरिणं वरम् । ज्ञानमुद्रां दध-द्धस्तैर्वटमूलमुपाश्रितः। पुंस्रोर्विरुद्धयोः सन्धौ कुर्याल्लिङ्गानि साधकः । नदीतीरद्वया-

नीतमृदा तानि च पूजयेत् । तत्र ध्येयो हरिहरः शंखपद्माहिशूलभृत् । इन्द्रनील-शरच्चन्द्रनिभो भूषणपुञ्जवान् । दम्पत्योरविरोधार्थमर्धनारीश्वरः स्मृतः । पीयूष-पूर्णकलशं दधत्पाशाङ्कुशावपि । उच्चाटे मारणे द्वेषे ध्यातव्यः पुनरीदृशः । कालीह-स्ताम्बुजालम्बशूलप्रोतद्विषच्चयः । मुण्डमालालसत्कण्ठो रोषवित्रासिताखिलः । इत्थं तु कामनाभेदाद्ध्यानभेदाःप्रकीर्तिताः । पूजयेत्कार्यवशतो लक्षावधि सहस्र-शः । लक्षपार्थिवलिङ्गानां पूजनाद्भुक्तिमुक्तिभाक् । लक्षं तु गुडलिङ्गानां पूजना-त्पार्थिवो भवेत् । या नारी गुडलिङ्गानि सहस्रं पूजयेत्सती । भर्तुः सुखमखण्डं सा प्राप्यान्ते पार्वती भवेत् । नवनीतस्य लिङ्गानि संपूज्येष्टमवाप्नुयात् । भस्मनो गोम-यस्यापि वालुकायास्तथा फलम् । क्रीडन्तः पृथुका भूमौ लिङ्गं कृत्वा रजोमयम् । पूजयन्ति विनोदेन तेऽपि स्युः क्षितिनायकाः । प्रातर्गोमयलिङ्गानि नित्यं यस्त्रीणि पूजयेत् । बृहतीबिल्वयोः पत्रैर्नैवेद्यं गुडमर्चयेत् । एवं मासत्रयं कुर्वन्ननल्पं लभते धनम् । एकादशैव लिङ्गानि गोमयोत्थानि योऽर्चयेत् । प्रातर्मध्याह्नयोः सायं निशीथे प्रतिवासरम् । स सर्वाः संपदो यायात्षण्मासेनैवमादरात् । एकादश यजेन्नित्यं शालि-पिष्टकृतानि यः । लिङ्गानि मासमात्रेण स कल्मषचयं दहेत् । स्फाटिकं पूजितं लिङ्ग-मेनोनिकरनाशनम् । सर्वकामप्रदं पुंसामुदुम्बरसमुद्भवम् । रेवाश्मजं सर्वसिद्धिप्रदं दुःखविनाशनम् । यथा कथंचिल्लिङ्गस्य पूजा नित्यं कृतेष्टदा । योऽर्चयेत्पिचुमन्दोत्थैः पत्रैर्गोमयजं शिवम् । क्रुद्धं महेश्वरं ध्यायन्स पराजयते रिपून् । यो लिङ्गं पूजये-न्नित्यं शिवभक्तिपरायणः । मेरुतुल्योऽपि तस्याशु पापराशिर्लयं व्रजेत् । चतुर्दश्यां तथाऽष्टम्यां पौर्णमास्यां विधुक्षये । पयसा स्नापिते शंभौ धरादानफलं लभेत् । दोग्ध्रीणां तु गवां लक्षं यो दद्याद्वेदपाठिने । पार्थिवं योऽर्चयेल्लिङ्गं तयोर्लिङ्गा-र्चको वरः । लिङ्गपूजां विधायाग्रे स्तोत्रं वा शतरुद्रियम् । प्रजपेत्तन्मना भूत्वा शिवे स्वं विनिवेदयेत् । यत्संख्याकं यजेल्लिङ्गं तन्मितं होममाचरेत् । आज्यान्वितैस्तिलैरग्नौ घृतैर्वा पायसेन वा । शिवमन्त्रेण तस्यान्ते ब्राह्म-णान्भोजयेच्छतम् । एवं कृते समस्तेष्टसिद्धिर्भवति निश्चितम् ।' इति । इति मन्त्रमहोदधिस्थपार्थिवविधानम् । अथ पञ्चसूत्रीविधानम् । 'लिङ्गवृत्तसमं मध्यमूर्ध्वं विस्तीर्णमेव च । तदर्धं गोमुखं प्राहुः पञ्चसूत्रमिदं मतम् ।' कालोत्तरे— 'लिङ्गमस्तकविस्तारो लिङ्गोच्छ्रायसमो भवेत् । त्रिगुणः परिणाहः स्यात्ततः पिण्डी प्रतिष्ठिता । लिङ्गतुल्यं प्रणालं स्यात्पञ्चसूत्रस्य लक्षणम् । पञ्चसूत्रसमायुक्तं शिव-

लिङ्गे समर्चयेत् । भुक्तिदं मुक्तिदं देवि धनारोग्यसुखप्रदम्।' गौतमीतन्त्रे-'लिङ्गमस्तकविस्तारो लिङ्गोच्छ्रायसमो मतः। परिधिस्तत्रिगुणितस्तद्वत्पीठं व्यवस्थितम्। प्रणालिका तथैव स्यात्पञ्चसूत्रविनिर्णयः । लिङ्गमस्तकविस्तारं पूजाभागसमं नयेत् । नाहं तत्रिगुणं कुर्यान्नाहवत्पीठविस्तृतिः । पूजांशाद्द्विगुणं कुर्यादुन्नतं पीठमुत्तमम् । वृत्तं वा चतुरस्रं वा मध्ये कण्ठसमन्वितम् । द्विगुणं लिङ्गनाहाच्च कण्ठनाहं समाचरेत् । त्रिमेखलमधश्चोर्ध्वं समं वाथ द्विमेखलम् । लिङ्गमस्तकविस्तारं षड्भागं विभजेत्ततः । मेखलामेकभागेन कुर्यात्खातं च तत्समम् । लिङ्गदैर्घ्यसमं कुर्यात्प्रणालं पीठबाह्यतः । विस्तारं तत्समं मूले तदर्धं च तदग्रतः। जलमार्गः प्रकर्तव्यस्तस्य मध्ये त्रिभागतः।कुर्यात्पीठार्धदीर्घं वा प्रणालं च तथोदितम् । सर्वेषां तत्र लिङ्गानां सपीठानां विशेषतः । लौहादीनां च लिङ्गानामेवं लक्षणमाचरेत् । लिङ्गनाहसमपीठविस्तृतं विस्तृतस्य शरवेदतुङ्गकम्। तुङ्गकार्धसमगोमुखातकं गोमुखातसमकण्ठनाहकम्'। शिल्पशास्त्रेऽपि-'लिङ्गमस्तकमध्यात्तु सूत्रं स्यादाप्रणालिकम्। लिङ्गप्रणालिपुष्टत्वं तावदेव प्रकीर्तितम्। उच्चत्वेऽपि तथा पीठे पञ्चसूत्रं प्रचक्षते।' इति। अत्रेदं तत्त्वम्।लिङ्गमस्तकविस्तारं लिङ्गोच्चतासमं कृत्वा तत्रिगुणसूत्रवेष्टनार्दुलिस्थौल्यं कृत्वा तत्समं वृत्तं चतुरस्रं वा पीठविस्तारमध ऊर्ध्वं च कुर्यात् । पीठोच्चता तु लिङ्गोच्चताद्द्विगुणा । पीठमध्ये लिङ्गाद्द्विगुणस्थूलं पीठोच्चतातृतीयांशेन कण्ठं कृत्वा तस्योर्ध्वमधश्च समं वप्रद्वयं त्रयं वा कृत्वा लिङ्गविस्तारषष्ठांशेन पीठोपरि बाह्यमेखलां कृत्वा तदन्तः संलग्नं तत्समं खातं कृत्वा पीठाद्बहिर्लिङ्गसमदीर्घां पीठार्धदीर्घां वा मूले दैर्घ्यं समविस्तारामग्रे तदर्धविस्तारात्तृतीयांशेन मध्ये खातां पीठवत्समेखलां प्रणालिकां कुर्यादिति।इति पञ्चसूत्रीविधानम् । पञ्चसूत्रीविधानं पार्थिवे न कुर्यात् । तदुक्तं पार्थिवेश्वरचिन्तामणौ-'पञ्चसूत्रविधानं च पार्थिवे न च कारयेत् । यथा कथंचिद्विधिना रमणीयं प्रकल्पयेत् ।' रत्नादिलिङ्गेष्वप्येवम्। तदुक्तं हयशीर्षपञ्चरात्रे-'न कुर्याल्लक्षणोद्धारं रत्नजानां चलात्मनाम् । सुप्रभा लक्षणं तेषां स्वर्णजानामपि ध्रुवम् । तस्मान्न लक्षणोद्धारं कुर्यात्पाषाणलिङ्गवत् । अचलानां तैजसानां क्वचिदिष्येत लक्षणम्।लक्षणं कल्पनीयं तु स्थाप्यलिङ्गे यथाविधि। चललिङ्गे कुशाग्रेण लक्षणं कल्पयेद्गुरुः । मनसा चिन्तयेद्वापि लक्षणं लिङ्गसंस्थितम् ।' इति। सोमशंभावपि-'रत्नजे लक्षणोद्धारो न लौहे न सारिद्भवे । लिङ्गेषु चललौहेषु न दृष्टं क्वचिदागमे। सुरूपलक्षणं तेषां प्रभा रत्नेषु निर्मला।' इति। अन्यत्र तु विशेषः-गृहे लिङ्गद्वयं गणे-

शद्वयं शक्तित्रयं शंखद्वयं शालग्रामद्वयं द्वारकाचक्रद्वयं नार्च्यम् । अथ शिवमधिकृत्य कालिकापुराणे-'कपिलापञ्चगव्येन कुशवारियुतेन च । स्नापयेन्मन्त्रपूतेन ब्राह्मं स्नानं तदुच्यते । एकाहमपि यो लिङ्गे ब्राह्मं स्नानं समाचरेत् । विधूय सर्वपापानि रुद्रलोके महीयते।कपिलापञ्चगव्येन दधिक्षीरयुतेन च । स्नानं शतगुणं पुण्यमितरेभ्यो न संशयः । वर्षकोटिसहस्रेण यत्पापं समुपार्जितम् । घृतस्नानेन तत्सर्वं दहत्यग्निरिवेन्धनम् । कृष्णाष्टम्यां घृतस्नानं कृत्वा लिङ्गे सकृन्नरः । कुलैकविंशमुत्तार्य शिवलोके महीयते । स्नाप्य दध्ना सकृल्लिङ्गं शिवलोके महीयते ।' ब्रह्मपुराणे—'देवानां प्रतिमा यत्र घृताभ्यङ्गक्षमा भवेत् । पलानि तस्यै देयानि श्रद्धया पञ्चविंशतिः । अष्टोत्तरं पलशतं स्नाने देयं च सर्वदा । द्विसहस्रे पलानां च महास्नानं तु संख्यया । दातव्यं येन सर्वासु दिक्षु निर्याति तद्धृतम् । पञ्चविंशपलं लिङ्गे अभ्यङ्गं कारयेदथ । शिवस्य सर्पिषा स्नानं प्रोक्तं पलशतेन च । तावता मधुना चैव दध्ना चैव ततः पुनः । तावतैव च क्षीरेण गव्येनैव भवेत्ततः । भूयः सार्धसहस्रेण पलानामैक्षवेण च । रसेन कारयेत्स्नानं भक्त्या चोष्णाम्बुना ततः । पुनः शीताम्बुना दत्त्वा वस्त्रपूतेन मन्त्रवित् । स्नापयेद्भक्तितो भूयो गन्धपात्रस्थितेन तु ।' महास्नपनोत्तरं कौस्तुभे विशेषः—'महादीपद्वयं देयं शतमष्टोत्तरं पुनः ।' इति । पूजारम्भप्रभृति संततमेको दीपः । परो धूपानन्तरं । शतमष्टोत्तरं दीपास्तु पूजान्ते समर्पणीया इति बोध्यम् । तीर्थादौ तु स्कान्दे—'क्षीराद्दशगुणं दध्ना घृतेनैव दशोत्तरम् । घृताद्दशगुणं क्षौद्रं क्षौद्राच्चैवेक्षुजं तथा ।' वस्त्रं यामले—'पीतं कौशेयवसनं विष्णुप्रीत्यै प्रकीर्तितम् । रक्तं शक्त्यर्कविघ्नानां शिवस्य च सितं प्रियम् । मलहीनं तथाऽच्छिद्रं क्षौद्रं कार्पासमेव च' इति । अथ चन्दनम् ।'चन्दनागुरुकर्पूरैः श्लक्ष्णपिष्टैःसकुङ्कुमैः । शिवस्यार्चां समालिप्य कल्पकोटिं वसेद्दिवि ।' हेमाद्रौ तु विशेषः ।'विधिना स्नाप्य चानेन गोरोचनया लिपेत् । कृष्णाकुङ्कुमकर्पूरचन्दनागुरुयुक्तया । लेपयित्वा ततो लिङ्गमापीडजघनं शुभम् ।' अनुलेपनपरिमाणं लैङ्गे—'अनुलिप्येच्च नं सर्वं पञ्चविंशत्पलेन वा।' इति । अथ पुष्पाणि—'धत्तूरकैस्तु यो लिङ्गं सकृत्पूजयते नरः । स गोलक्षफलं प्राप्य शिवलोके महीयते । नीलोत्पलसहस्रस्य मालां बद्ध्वा प्रपूजयेत् । अलाभे तु सहस्राणामर्धार्धेनैव पूजयेत् । उत्पलानामलाभे तु पत्रैश्च श्रीतरोर्यजेत्[1] । बिल्वपत्रैरखण्डैश्च यो लिङ्गं पूजयेत्सकृत् । सर्वपापविनिर्मुक्तः शिवलोके महीयते ।

१—श्रीतरोर्बिल्वस्य ।

सर्वकामप्रदं बिल्वं दारिद्र्यस्य विनाशनम् । बिल्वपत्रात्परन्नास्ति येन तुष्यति शंकरः । शुष्काण्यपि च पत्राणि श्रीवृक्षस्य सदैव हि ।' इति । पारिजाते क्रियासारे—'मध्यमानामिकामध्ये पुष्पं संगृह्य पूजयेत् । अङ्गुष्ठतर्जन्यग्राभ्यां निर्माल्यमपनोदयेत् । अपनीतं तु निर्माल्यं चण्डेशाय निवेदयेत् । अशून्यमस्तकं लिङ्गं सदा कुर्वीत पूजकः ।' अथ शिवे वर्ज्यपुष्पाणि भविष्यपुराणे—'केतकी जातिमुक्तं च कुन्दो यूथी मदन्तिका। शिरीषसर्जबन्धूकं कुसुमानि विवर्जयेत् । निर्गन्धान्युग्रगन्धीनि कुसुमानि विवर्जयेत् । गन्धहीनमपि ग्राह्यं पवित्रं यत्कुशादिकम् ।' प्रसाददीपिकायाम्—'जपाबन्धूकसिन्दूरं तथा त्रैसंधिकी ह्युभे । मन्दकीकेतकीपुष्पमालतीपुरजानि च । घुसृणं चाश्वमारं च प्रमादेनापि नार्पयेत् ।' अथ धूपः शिवपुराणे—'गुग्गुलुं घृतसंयुक्तं शिवे यश्च निवेदयेत् । रुद्रलोकमवाप्नोति गाणपत्यं च विन्दति ।' अथ दीपो भविष्यपुराणे—'घृतप्रदीपदानेन शिवाय शतयोजनम् । विमानं लभते दिव्यं सूर्यकोटिसमप्रभम् ।' अथ नैवेद्यं भविष्यपुराणे तत्परिमाणं हेमाद्रौ—'दशद्रोणैस्तु नैवेद्यमष्टद्रोणैरथापि वा । शतद्रोणसमं पुण्यमाढकेन विधीयते । वित्तहीनस्य मर्त्यस्य नात्र कार्या विचारणा ।' इति । 'खण्डाखण्डघृताक्तानां भक्ष्याणां च निवेदनैः । घृतेन पाचितानां च तेषां शतगुणं फलम् ।' तथा—'मातुलुङ्गफलाद्यानि सुपक्वानि निवेदयेत् । शिवाय सत्फलं तस्य तद्भक्ष्याणां निवेदयेत् ।' अथ प्रदक्षिणाः । तत्र विशेष उक्तो गृह्यपरिशिष्टे—'एकां विनायके कुर्यात् द्वे सूर्ये त्रीणि शंकरे । चत्वारि केशवे दद्यात्सप्ताश्वत्थे प्रदक्षिणाः ।' आदित्यपुराणे—'प्रदक्षिणत्रयं कुर्याच्छिवस्यायतने नरः । अश्वमेधसहस्रस्य फलं प्राप्नोति मानवः ।' बृहन्नारदीये तु—' एकां चण्ड्यां रवौ सप्त तिस्रो दद्याद्विनायके । चतस्रः केशवे दद्याच्छिवे त्वर्धप्रदक्षिणाम् ।' तत्रैव—'पदान्तरे पदं न्यस्य करौ चलनवर्जितौ । स्तुतिर्वाचि हृदि ध्यानं चतुरङ्गं प्रदक्षिणम् ।' शिवलिङ्गे विशेषो लिङ्गपुराणे-'सव्यं व्रजेत्ततोऽसव्यं प्रणालं नैव लङ्घयेत् ।' बृहन्नारदीये 'शिवप्रदक्षिणे मर्त्यः सोमसूत्रं न लङ्घयेत् । वृषं चण्डं वृषं चैव सोमसूत्रं पुनर्वृषम् । चण्डं च सोमसूत्रं च पुनश्चण्डं पुनर्वृषम् ।' हेमाद्रौ प्रतिष्ठाकाण्डे—'प्राच्यां नन्दिमहाकालौ याम्ये भृङ्गिविनायकौ । वारुणे वृषभस्कन्दौ देवीचण्डौ तथोत्तरे । त्रैविक्रम्या तु ऐशान्यां चण्डस्थापनमुत्तमम् ।' तथा 'अपसव्यं यतिः कुर्यात्सव्यं तु ब्रह्मचारिणः । सव्यापसव्यं गृहिणो नित्यं शंभोः प्रदक्षिणम् । तृणैः काष्ठैस्तथा पर्णैः पाषाणैर्वेष्टकादिभिः । अन्तर्धानं पुरः कृत्वा सोमसूत्रं तु लङ्घयेत् ।' सोमसूत्रप्रमाणमपि तत्रैव—

'प्रासादविस्तारसमानसूत्रं भवेदुदीच्यां दिशि सोमसूत्रम्। सूत्राद्बहिर्लङ्घनतो न दोषः स्याद्दोष आभ्यन्तरलङ्घनेन।' सोमस्य दिशि मण्डपादुदीच्यां दिशि प्रासादविस्तार-समानसूत्रं परित्यज्य बहिः प्रदक्षिणकरणे नास्ति दोष इत्यर्थः। विशेषान्तरमुक्तं तत्रैव-'सोमसूत्रद्वयं यत्र यत्र वा विष्णुमन्दिरम्। अपसव्यं न चार्चीत कुर्वीतैव प्रदक्षि-णम्।' इति। अथ नमस्कारः। 'जानुभ्यां चैव पाणिभ्यां शिरसा च विचक्षणः। कृत्वा प्रणामं सर्वेशे सर्वान्कामानवाप्नुयात्।' अश्वमेधादि सर्वं क्रतुफलं भवतीति भविष्योत्तरे। अथ शिवाद्यगारे निषिद्धं वाद्यं कथितं योगिनीतन्त्रे- 'शिवागारे झल्लकं च सूर्यागारे च शंखकम्। दुर्गागारे वंशवाद्यं मधुरीं च न वादयेत्।' अथ निर्माल्यलङ्घननिषेधो नृसिंहपुराणे शान्तरथं प्रति नारदः-'अद्यप्रभृति निर्माल्यं लङ्घयन्ति महामते। नरसिंहस्य देवस्य तथान्येषां दिवौकसाम्। पच्यन्ते नरके घोरे' इत्यादि। भविष्यपुराणेऽपि-निर्माल्यलङ्घनकर्ता तामिस्रं गच्छतीति। अथ निर्माल्यप्रतिपत्तिः। 'रुद्राङ्गलग्नमग्नौ तु दहेत्सर्वं च तत्क्षणात्। वैष्णवं सात्वतेभ्यश्च भस्माङ्गेभ्यश्च शांभवम्।' इति। यानि तु स्कान्दे-'शिवनिर्माल्य-भोक्तारः शिवनिर्माल्यलङ्घकाः। शिवनिर्माल्यदातारः स्पर्शस्तेषामपुण्यकृत्। स्पृष्ट्वा रुद्रस्य निर्माल्यं सवासा आप्लुतः शुचिः।' इति। 'नैवेद्यं मे नरो भुक्त्वा शुद्ध्यै चान्द्रायणं चरेत्।' इति। कालिकापुराणे- 'अग्राह्यं शिवनै-वेद्यं पत्रं पुष्पं फलं जलम्। शालग्रामशिलास्पर्शात्सर्वं याति पवित्रताम्।' इति परिशिष्टे। 'दत्त्वा नैवेद्यवस्त्रादि नाददीत कदाचन। त्यक्तं यच्छिवमुद्दिश्य तदा-दाने न तत्फलम्।' इति। भविष्ये च शिवनिर्माल्यधारणनिषेधवचनानि तानि 'निर्माल्यं यो हि मद्भक्त्या शिरसा धारयिष्यति। अशुचिर्भिन्नमर्यादो नरः पापसमन्वितः। नरके पच्यते घोरे तिर्यग्योनौ च संवसेत्। ब्रह्महापि शुचिर्भूत्वा निर्माल्यं यस्तु धारयेत्। तस्य पापं महच्छीघ्रं नाशयिष्ये महाव्रते' इति स्कन्दपुराणवचनादशुचिना तन्न ग्राह्यं किंतु स्नानादिना शुचिनेत्येवंपराणीति स्मार्तः। अपनीतं तन्न ग्राह्यमिति श्रीदत्तः। शिवदीक्षारहितैर्ज्योतिर्लिङ्गातिरिक्तस्य वा न ग्राह्यमिति शैवाः। स्कान्दे-'अनर्हं मम नैवेद्यं पत्रं पुष्पं फलं जलम्। शालग्रामशिलासङ्गात्सर्वं याति पवित्रताम्।' इत्युक्तत्वात् पदार्थानुसमयेन पञ्चायतनपूजायां शालग्रामस्यापि तत्र सत्त्वान्नैवेद्या-दावदोष इति सूचितम्। तथा 'नैवेद्यं मे नरो भुक्त्वा शुद्ध्यै चान्द्रायणं चरेत्।' इति। एतदपवादः शिवनारदसंवादे-'बाणलिङ्गे स्वयंभूते चन्द्रकान्ते हृदि स्थिते। चान्द्रा-

गुणसमं ज्ञेयं शंभोर्नैवेद्यभक्षणम्।' इति। तथा काशीखण्डे-'जलस्य धारणं मूर्ध्नि विश्वेशस्नानजन्मनः।' इत्युपक्रम्य 'स्नापयित्वा विधानेन यो लिङ्गस्नपनोदकम्। त्रिः पिबेत्त्रिविधं पापं तस्येहाशु विनश्यति। लिङ्गस्नपनवार्भिर्यः कुर्यान्मूर्धाभिषेचनम्। गङ्गास्नानफलं तस्य जायतेऽत्र विपाप्मनः।' इति। अत्र च भक्षणप्रतिप्रसवः शिवदीक्षावद्विषयः। 'ज्योतिर्लिङ्गं विना लिङ्गं यः पूजयति सत्तमः। तस्य नैवेद्यनिर्माल्यभक्षणात्सप्तकृच्छ्रकम्। शालग्रामोद्भवे लिङ्गे बाणलिङ्गे स्वयंभुवि। रसलिङ्गे तथार्षे च सुरसिद्धप्रतिष्ठिते। हृदये चन्द्रकान्ते च स्वर्णरूप्यादिनिर्मिते। शिवदीक्षावता भक्ते नेदं भक्ष्यमितीर्यते'। इति भविष्योक्तेः। ज्योतिर्लिङ्गनैवेद्यादिस्वीकारस्तु दीक्षारहितैरपि कार्यः। ज्योतिर्लिङ्गं विनेत्युक्तत्वात्। तथा—'पादोदकं च निर्माल्यं भक्तैर्धार्यं प्रयत्नतः।' इत्यग्निपुराणे च। आदित्यपुराणे—'निर्माल्यं धारयेद्भक्त्या शिरसा पार्वतीपतेः। राजसूयस्य यज्ञस्य फलं प्राप्नोति निश्चितम्।' लोभादिना तु न धार्यम्। 'लोभान्न धारयेच्छंभोर्निर्माल्यं न च भक्षयेत्। न स्पृशेदपि पादेन लङ्घयेन्नापि नारद।' इति लिङ्गान्तरेषु तीर्थोदकवन्दनमात्रं च श्रद्धावच्छिवभक्तमात्राधिकारिकम्। 'श्रद्धावतां स्वभक्तानामुपसर्गे महत्यपि। नोपायान्तरमस्त्येव विनेशचरणोदकम्। ये व्याधयो हि दुःसाध्या बहिरन्तः शरीरिणाम्। श्रद्धयेशोदकस्पर्शात्ते नश्यन्त्येव नान्यथा।' इति रत्नेश्वरोपाख्याने स्कान्दवचनात्। सर्वैरपि चण्डांशं दत्त्वैव धार्यम्। क्वचित्तु 'बाणरावणचण्डीशनन्दिभृङ्गिरिटादयः। सदाशिवप्रसादोऽयं सर्वे गृह्णन्तु शांभवाः' इति क्वचिच्चण्डाभावोऽप्युक्तोऽग्निपुराणे—'बाणलिङ्गे चले लौहे सिद्धलिङ्गे स्वयंभुवि। प्रतिमासु च सर्वासु न चण्डोऽधिकृतो भवेत्।' आदित्यपुराणे—'लिङ्गे स्वायंभुवे बाणे रत्नतैजसनिर्मिते। सिद्धप्रतिष्ठिते लिङ्गे न चण्डोऽधिकृतो भवेत्।' येषु चण्डाधिकारो नास्ति तन्निर्माल्यधारणे न दोष इत्याहुः। अथ रुद्राक्षधारणं तन्महिमा च। 'शिखायां हस्तयोः कण्ठे कर्णयोश्चापि यो नरः। रुद्राक्षं धारयेद्भक्त्या स शैवं लोकमाप्नुयात्। नववक्त्रं तु रुद्राक्षं धारयेद्वामबाहुना। चतुर्दशमुखं चैव शिखायां धारयेद्बुधः।' तत्र विशेषः। शिवरहस्ये—'एकवक्त्रः शिवः साक्षाद्ब्रह्महत्यां व्यपोहति। अवध्यत्वं प्रतिस्रोतो वह्निस्तम्भं करोति च। द्विवक्त्रो हरगौरी स्याद्गोवधाद्यघनाशकृत्। त्रिवक्त्रो ह्यग्निजन्मा(थ) पापराशिं प्रणाशयेत्। चतुर्वक्त्रः स्वयं ब्रह्मा

ब्रह्महत्यां व्यपोहति । पञ्चवक्त्रस्तु कालाग्निरगम्याभक्ष्यपापनुत् । षड्वक्त्रस्तु
गुहो ज्ञेयो भ्रूणहत्यां विनाशयेत् । सप्तवक्त्रस्त्वनन्तः स्यात्स्वर्णस्तेयादिपापहृत् ।
विनायकोऽष्टवक्त्रः स्यात्सर्वानृतविनाशकृत् । भैरवो नववक्त्रस्तु शिवसायुज्यकारकः ।
दशवक्त्रः स्मृतो विष्णुर्भूतप्रेतभयापहः । एकादशमुखो रुद्रो नानायज्ञफलप्रदः ।
द्वादशास्यस्तथादित्यः सर्वरोगनिबर्हणः । त्रयोदशमुखः कामः सर्वकामफलप्रदः ।
चतुर्दशास्यः श्रीकण्ठो वंशोद्धारकरः परः ।' इति । 'निश्छिद्राश्च सुपक्वाश्च रुद्राक्षा
धारणे मताः । पञ्चामृतं पञ्चगव्यं स्नानकाले प्रयोजयेत् । रुद्राक्षस्य प्रतिष्ठायां मन्त्रं
पञ्चाक्षरं तथा । त्र्यम्बकादिकमन्त्रं तु यथा तत्र प्रयोजयेत् ।' "त्र्यम्बकं यजामहे
सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ।" यद्वा "ॐ
अघोर ॐ ह्रैं अघोरतर ॐ ह्रौं ह्रां नमस्ते रुद्ररूप ह्रैं स्वाहा ।" 'अनेनापि च मन्त्रेण
रुद्राक्षस्य द्विजोत्तमः । प्रतिष्ठां विधिवत्कुर्यात्ततोऽधिकफलं लभेत् । ततो यथा
स्वमन्त्रेण धारयेद्भक्तिसंयुतः ।' तत्र क्रमेण मन्त्राः ॐ ॐ भृशं नमः १, ॐ ॐ
नमः २, ॐ ह्रीं नमः ३, ॐ ह्रूं नमः ४, ॐ ह्रूं नमः ५, ॐ ह्रूं ह्रूं नमः ६, ॐ सः
ह्रं नमः ७, ॐ ह्रं नमः ८, ॐ ह्रीं नमः ९, ॐ श्रीं नमः १०, ॐ ह्रं ह्रीं नमः ११,
ॐ श्रीं नमः १२, ॐ क्षां क्षौं नमः १३, ॐ नमो नमः । 'रुद्राक्षे देहसंस्थे तु
कुक्कुटो म्रियते यदि । सोऽपि रुद्रपदं याति किं पुनर्मानवा गुह ।' क्वचिन्मा-
लायां संख्याविशेष उक्तः । 'अष्टोत्तरशतैः कार्या चतुःपञ्चाशतापि
वा । सप्तविंशतिमाना वा ततो हीनाऽधमा स्मृता ।' प्रजापतिः—'मोक्षार्थी
पञ्चविंशत्या धनार्थी त्रिंशता जपेत् । पुष्ट्यर्थी पञ्चविंशत्या पञ्चदश्याभिचारिके ।
सप्तविंशतिरुद्राक्षमालया देहसंस्थया । यः करोति नरः पुण्यं सर्वं कोटिगुणं भवेत् ।
यो ददाति द्विजातिभ्यो रुद्राक्षं शृणु षण्मुख । तस्य प्रीतो भवेद्रुद्रः स्वपदं च प्रय-
च्छति ।' पदार्थादर्शे वोपदेवः—'रुद्राक्षान्कण्ठदेशे दशनपरिमितान्मस्तके विंशती
द्वे षट् षट् कर्णप्रदेशे करयुगलकृते द्वादश द्वादशैव । बाह्वोरिन्दोः कलाभिर्नयनयु-
गकृते एकमेकं शिखायां वक्षस्यष्टाधिकं यः कलयति शतकं स स्वयं नीलकण्ठः ।' इति
रुद्राक्षधारणम् । अथ शिवरात्रिकृत्यमुच्यते । प्रातः संध्यादि कृत्वा धृतत्रिपुण्ड्र-
रुद्राक्षस्ताम्रपात्रं गृहीत्वा तिथ्याद्युल्लिख्य 'शिवरात्रिव्रतं ह्येतत्करिष्येऽहं महाफलम् ।
निर्विघ्नमस्तु मे चात्र त्वत्प्रसादाज्जगत्पते । चतुर्दश्यां निराहारो भूत्वा शम्भो परेऽ-
हनि । भोक्ष्येऽहं भुक्तिमुक्त्यर्थं शरणं मे भवेश्वर ।' इति । इमौ पठित्वा जलमुत्सृजेत् ।

ततो नित्यकृत्यं विधाय शिवनामस्मरणेन दिनमतिवाह्य संध्याकालात्पूर्वं संध्यासमयोत्तरं वा स्नानं कृत्वा सायंसंध्यां निर्वर्त्य विभूतिरुद्राक्षमालाधारणं कुर्यात् । इदं च शिवपूजायां नित्यम् । 'विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया। पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः। तस्मान्मृदापि कर्तव्यं ललाटे तु त्रिपुण्ड्रकम्।' इति लिङ्गपुराणवचनात्। ततो रात्रौ प्रथमप्रहरे शिवायतनं गत्वा शुचिराचान्तः आसने प्राङ्मुख उदङ्मुखो वा उपविश्य शिवसंनिधौ पूजासंकल्पं कुर्यात्। तद्यथा। एवं गुणविशेषणविशिष्टायां पुण्यतिथौ एतद्वर्षकृतसमस्तपातकोपपातकप्रकीर्णकादिकायिकवाचिकमानसज्ञाताज्ञातप्रकाशरहस्यपापस्य क्षयार्थं पुत्रधनदीर्घायुःप्रभृतिसकलकामावाप्त्यर्थं शिवरात्र्यां शिवपूजनं करिष्ये इति संकल्प्य अपसर्पन्त्विति सर्षपान्विकीर्य सूर्यः सोमेति पठित्वा सामान्यार्घ्यं संस्थाप्य भूतशुद्धिप्राणप्रतिष्ठां मातृकान्यासं च कृत्वा श्रीकण्ठादिमातृकान्यासं कुर्यात् । स यथा । अस्य श्रीकण्ठादिन्यासस्य दक्षिणामूर्तिऋषिः गायत्रीच्छन्दः अर्धनारीश्वरो देवता स्वराः शक्तयः । ज्ञानविज्ञानार्थे विनियोगः । अंकं ४ आं ह्लां अङ्गुष्ठाभ्यां नमः । इं चं ४ ईं ह्लीं तर्जनी० । उं ठं ४ ऊं ह्लुं मध्यमा० । एं तं ४ ऐं ह्लैं अनामिका० ॐ पं ४ औं कनिष्ठिकाभ्यां० । ॐ अं यं १ अः ह्लः करतलकरपृष्ठा० । ॐ अं कं ४ आं ह्लां हृदयाय नमः । इं चं ४ ईं शिरसे स्वाहा ॐ टं ४ ॐ शिखायै वषट् । एं तं ४ ऐं ह्लैं कवचाय हुम् । ॐ पं ४ औं ह्लौं नेत्रत्रयाय वौषट् । अं यं १० अः ह्लः अस्त्राय फट् । ततो ध्यानम् । 'बन्धूककाञ्चननिभं रुचिराक्षमालां पाशाङ्कुशौ च वरदं निजबाहुदण्डैः । बिभ्राणमिन्दुशकलाभरणं त्रिनेत्रमर्धाम्बिकेशमनिशं वपुराश्रयामः ।' दक्षाधःकरमारभ्य वामाधःकरपर्यन्तमायुधध्यानम् । ततो न्यसेत् । ह्लौं अँ श्रीकण्ठेशपूर्णोदरीभ्यां नम इति मस्तके । ह्लौं आं अनन्तेश शिवराजाभ्यां नम इति आननवृत्ते। ह्लौं इं सूक्ष्मेशशाल्मलीभ्यां नमः इति दक्षिणनेत्रे । ह्लौं ईं त्रिमूर्तिलोलाक्षिभ्यां नमो वामनेत्रे । ह्लौं उं अमरेशवर्तुलाक्षीभ्यां नमो दक्षकर्णे। ह्लौं ऊँ अर्घीशदीर्घघोणाभ्यां नमो वामकर्णे। ह्लौं ऋं भारभूतीशदीर्घमुखीभ्यां नमः दक्षनासापुटे । ह्लौं ॠं अतिथीशगोमुखीभ्यां नमो वामनासापुटे । ऌं स्थाणवीशदीर्घजिह्वाभ्यां नमो दक्षगण्डे। ॡं हरेशकुण्डोदरीभ्यां वामगण्डे। एं झिण्टीशोर्ध्वकेशीभ्यां० ऊर्ध्वोष्ठे। ऐं भौतिकेशविकृतमुखीभ्यां० अधरोष्ठे । ओं सद्योजातेशज्वालामुखीभ्यां० ऊर्ध्वदन्तपङ्क्तौ। औं अनुग्रहेशोल्कामुखीभ्यां० अधोदन्तपङ्क्तौ। अं अक्रूरेशश्रीमुखीभ्यां० शिरसि। अः महासेनेशविद्यामुखीभ्यां० मुखमध्ये। कं

क्रोधीशमहाकालीभ्यां० दक्षस्कन्धे । खंचण्डेशसरस्वतीभ्यां० दक्षकूर्परे गं पञ्चान्तकेशगौरीभ्यां० दक्षमणिबन्धे । घंशिवोत्तमेशत्रैलोक्यविजयाभ्यां० दक्षाङ्गुलिमूले । ङं एकरुद्रेशमन्त्रशक्तिभ्यां० दक्षाङ्गुल्यग्रेषु । चं कूर्मेशात्मशक्तिभ्यां० वामस्कन्धे । छं एकाननेशभूतमातृकाभ्यां० वामकूर्परे।जं चतुराननेशलम्बोदरीभ्यां० वाममणिबन्धे । झं अजेशद्रविणीभ्यां० वामाङ्गुलिमूले । ञं सर्वेशनागरीभ्यां० वामाङ्गुल्यग्रेषु । टं सोमेशखेचरीभ्यां० दक्षमूले । ठं लाङ्गलीशमञ्जरीभ्यां० दक्षजानुनि।डं दारुकेशरूपिणीभ्यां० दक्षगुल्फे । ढं अर्धनारीश्वरेशवारिणीभ्यां० दक्षपादाङ्गुलिमूले। णं उमाकान्तेशवृकोदरीभ्यां० दक्षाङ्गुल्यग्रे।तं आषाढीशपूतनाभ्यां० वामोरुमूले । थं दण्डीशभद्रकालीभ्यां० वामजानुनि । दं अत्रीशयोगिनीभ्यां० वामगुल्फे । धं मीनेशशंखिनीभ्यां० वामाङ्गुलिमूले । नं मेषेशतर्जनीभ्यां० वामाङ्गुल्यग्रे। पं लोहितेशकालरात्रिभ्यां० दक्षकुक्षौ।फं शिखीशकुण्डलिनीभ्यां० वामकुक्षौ। बं छगलण्डेशकपर्दिनीभ्यां० पृष्ठे । भं द्विरण्डेशवज्राभ्यां० नाभौ । मं महाकालेशजयाभ्यां उदरे । यं त्वगात्मने बालीशसुमुखीभ्यां० हृदये । रं असृगात्मने भुजंगेशरेवतीभ्यां० दक्षांसे । लं मांसात्मने पिनाकीशमाधवीभ्यां०ककुदि। वं मेद-आत्मने खड्गीशवारुणीभ्यां० हृदयादि वामांसे ।शंअस्थ्यात्मने केशवायवीभ्यां० दक्षकराग्रान्तम् । षं मज्जात्मने श्वेतेशरक्षोवधारिणीभ्यां० हृदयादिवामकराग्रान्तम् । सं शुक्रात्मने भृग्वीशसहजाभ्यां हृदयादिवामपादाग्रान्तम् । हं प्राणात्मने लकुलीशमहालक्ष्मीभ्यां० हृदयादिदक्षपादाग्रान्तम् । ळं शक्त्यात्मने शिवेशव्यापिनीभ्यां हृदयादिनाभ्यन्तम् । क्षं परमात्मने संवर्तकेशमायाभ्यां हृदयादिशिरोन्तम् । इति मातृकास्थानेषु न्यसेत् 'अत्र रुद्राः स्मृता रक्ता धृतशूलकपालकाः । शक्तयो रुद्रपीठस्था सिन्दुरारुणविग्रहाः।रक्तोत्पलकपालाभ्यामलंकृतकराम्बुजाः।'इति मूर्तिशक्तीनां ध्यानम्। इति श्रीकण्ठादिन्यासः। ततः प्राणायामं कृत्वा स्वदेहे मण्डूकादिपरतत्त्वान्तदेवताभ्यो नम इत्युच्चार्य वामादिशक्तिपूजनं कृत्वा शिवषडक्षरन्यासं कुर्यात् । अस्य श्रीशिवपञ्चाक्षरमन्त्रस्य वामदेव ऋषिः पङ्क्तिश्छन्दः सदाशिवो देवता ॐ बीजं नमः शक्तिः शिवायेति कीलकं चतुर्विधपुरुषार्थसिद्ध्यर्थे न्यासे विनियोगः । शिरसि वामदेवऋषये नमः। मुखे पङ्क्तिच्छन्दसे नमः। हृदये श्रीसदाशिवाय देवतायै नमः । ॐ बीजाय नमो गुह्ये । नमः शक्तये नमः पादयोः। शिवाय कीलकाय नमः नाभौ । न्यासे विनियोगः । ॐ हृदयाय नमः । नं शिरसे स्वाहा । मः शिखायै वषट् । शिं कवचाय हुम् । वां नेत्रत्रयाय वौषट् । यं अस्त्राय फट् । ॐ नं तत्पुरु-

षाय नमस्तर्जन्योः । ॐ मं अघोराय नमो मध्यमयोः । ॐ शिं सद्योजाताय नमः कनिष्ठयोः । ॐ वां वामदेवाय नमः अनामिकयोः । ॐ यं ईशानाय नमः अङ्गुष्ठयो ॐ नं तत्पुरुषाय नमो मुखे । ॐ मं अघोराय नमो हृदये । ॐ शिं सद्योजाताय नमः पादयोः । ॐ वां वामदेवाय नमो गुह्ये । ॐ यं ईशानाय नमः मूर्ध्नि । ॐ नं तत्पुरुषाय प्राग्वक्त्राय नमो मुखे । ॐ मं अघोराय दक्षिणवक्त्रायनमः दक्षिणकर्णे । ॐ सद्योजाताय पश्चिमवक्त्राय चूडाधः । वामदेवायोत्तमवक्त्राय नमः वामकर्णे । ॐ यं ईशानायोर्ध्व-वक्त्राय नम ऊर्ध्वभागे । ॐ सर्वशक्तिधाम्ने हृदयाय नमः । नं नित्यतृप्तिशक्तिधाम्ने शिरसे स्वाहा । मं अनादिबोधशक्तिधाम्ने शिखायै वषट् । शिं स्वतन्त्रशक्तिधाम्ने कवचाय हूम् । वां नित्यमलुप्तशक्तिधाम्ने नेत्रत्रयाय वौषट् । यं अनन्त-शक्तिधाम्ने अस्त्राय फट् । मूलमन्त्रेण 'नमोऽस्तु स्थाणुभूताय ज्योतिर्लि-ङ्गामृतात्मने । चतुर्मूर्तिवपुश्छायाभासिताङ्गाय शंभवे ।' इत्यनेन च व्यापकं कृत्वा लिङ्गादिमुद्रादर्शनपूर्वकं स्वेष्टदेवं स्वाभेदेन ध्यात्वा शिरसि मूलमन्त्रेण पुष्पा-ञ्जलिं दत्त्वा पुनर्हृदयकमले देवं ध्यात्वा मानसपूजां करिष्ये इति संप्रार्थ्य 'कृताञ्जलिपुटो भूत्वा चिन्तयेद्धृदि शंकरम् । ऋणपातकदौर्भाग्यदारिद्र्यविनिवृत्तये । अशेषाघविनाशाय प्रसीद मम शंकर । दुःखशोकाग्निसंतप्तं संसारभयपीडितम् । बहु-रोगाकुलं दीनं पाहि मां वृषवाहन । आगच्छ देवदेवेश महादेवाभयंकर । गृहाण सह पार्वत्या तव पूजां मया कृताम् । स्वागतं देवदेवेश संनिधौ भव शंकर । गृहाण सह पार्वत्या यथार्थपरिभाविताम् ।' इत्युक्त्वा मानसैरुपचारैर्नैवेद्यान्तं संपूज्य यथाशक्ति जपित्वा तत्समर्पणं कृत्वा बाह्यपूजार्थमनुज्ञाप्य विशेषार्घ्यस्थापनं कुर्यात् । तद्यथा स्ववामाग्रे चतुरस्रवृत्तत्रिकोणात्मकं मण्डलं विलिख्य ॐ ह्रीं आधारशक्तये नमः । इति संपूज्य तत्र त्रिपादिकां संस्थाप्य मन्दशकलात्मने वह्निमण्डलाय नमः इति संपूज्य वृत्तान्तरेण ता वह्नेर्दश कलाः पूजयेत् । यं धूमार्चिषे नमः । रं ऊष्मायै नमः । लं ज्वलिन्यै नमः । वं ज्वालिन्यै नमः । शं विस्फुलिङ्गिन्यै नमः । षं सुश्रियै नमः । सं सुरूपायै नमः । हं कपिलायै नमः । ळं हव्यवाहनायै नमः । क्षं कव्यवाह-नायै नमः । इति । तदुपरि अस्त्रक्षालितपात्रं निधाय अं द्वादशकलात्मने सूर्यमण्ड-लाय नमः । इति संपूज्य वृत्ताकारेण तत्र सूर्यस्य द्वादश कलाः पूजयेत् । कं भं तपिन्यै नमः । खं बं तापिन्यै नमः । गं फं धूम्रायै नमः । घं पं मरीच्यै नमः । ङं नं ज्वालिन्यै नमः । चं धं रुच्यै नमः । छं दं सुषुम्णायै नमः । जं थं भोगदायै नमः ।

झं तं विश्वायै नमः । ञं णं बोधिन्यै नमः । टं ठं ज्वालिन्यै नमः । टं ठं धारिण्यै नमः । ठं डं क्षमायै नमः । इति । क्षं ळं हं सं षं शं वं लं रं यं मं भं बं फं पं नं धं दं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं ॡं ऌं ॠं ऋं ऊं उं ईं इं आं अं इति विलोममातृका जपन्मूलेन सुधाबुद्ध्या जलेनापूर्य जलमध्ये ॐ षोडशकलात्मने सोममण्डलाय नम इति संपूज्य वृत्ताकारेण चन्द्रस्य षोडश कलाः पूजयेत् । अं अमृतायैनमः । आं मानदायैनमः । इं पूषायै नमः । ईं तुष्ट्यै नमः । उं पुष्ट्यैनमः । ऊं धृत्यैनमः । ऋं रत्यैनमः । ॠं शशिन्यैनमः । ऌं चन्द्रिकायैनमः । ॡं कान्त्यैनमः । एं ज्योत्स्नायैनमः । ऐं श्रियैनमः । ओं प्रीत्यै नमः । औं गदायै नमः । अं पूर्णायै नमः । अः पूर्णामृतायै नमः । अत्र अमृतादिकलानां प्राणप्रतिष्ठां विधाय सूर्यमण्डलात्तीर्थमावाह्य मूलमन्त्रेणार्घ्यं जले संयोज्य तीर्थं संपूज्य मूलमन्त्रेण लिङ्गमुद्रां प्रदर्श्य वमिति धेनुमुद्रयाऽमृतीकृत्य तत्र देवं ध्यात्वा देवस्य देहे षडंगं विधाय कवचेनावगुण्ठ्य नेत्रमन्त्रेण वीक्ष्य अस्त्रेण संरक्ष्य शंखमुद्रया तत्पात्रमवष्टभ्य योनिमुद्रया तज्जलं स्पृष्ट्वा मूलेनगन्धादिभिर्देवं संपूज्य प्राग्वत्षडङ्गानि संपूज्य मूलमन्त्रेणाष्टवारमभिमन्त्र्य मत्स्यमुद्रयाच्छादयेत् । तत्पात्रस्योत्तरतः पङ्क्त्याकारेण त्रिकोणमण्डलत्रयं कृत्वा तेषु मण्डलद्वये साधारं सजलं पात्रद्वयं तृतीयमण्डले घृतमधुदधियुक्तं कांस्यपात्रं चेति पात्रत्रयं संस्थाप्य मूलमन्त्रेण गन्धादिभिः पृथक् पृथगभ्यर्च्य तेषु पात्रान्तरेणोद्धृत्यार्घ जलं किंचित्किंचिद्दत्त्वा मूलमन्त्रेण पृथक् पृथगष्टवारमभिमन्त्र्य मत्स्यमुद्रयाच्छादयेत् । ततोऽर्घ्यपात्रे श्यामाकदूर्वाब्जविष्णुक्रान्तानि निक्षिप्याचमनीयपात्रे जातीफललवङ्गकङ्कोलचूर्णानि निक्षिपेत् । अत्रार्घादिद्रव्यालाभे प्रक्षालितांस्तन्दुलान्पुष्पाणि दद्यात् । ततः पूजाचक्रस्य दक्षिणे त्रिकोणमण्डले साधारं सजलं पुनराचमनपात्रं निधाय तत्रार्घपात्रजलं किंचित्पात्रान्तरेणोद्धृत्य दत्त्वा मूलमन्त्रेणाष्टवारमभिमन्त्र्य तथैव तत्समीपे प्रोक्षणार्थं पात्रान्तरं संस्थाप्य तज्जलं किंचित्पात्रान्तरेणोद्धृत्य जलेन स्वात्मानं पूजाचक्रं पूजाद्रव्याणि च मूलमन्त्रेण संप्रोक्ष्य स्वदेहं गन्धपुष्पैरलंकृत्य स्वेष्टदेवतारूपं संचिन्त्य पीठे मण्डूकादिपरतत्त्वान्तं संपूज्य ॐ नमो भगवते सकलगुणात्मशक्तियुक्ताय अनन्ताय योगपीठाय कमलासनाय नमः ततःतत्केसरेषु स्वाग्रादिप्रादक्षिण्येन । वामायै नमः । ज्येष्ठायै नमः । रौद्र्यै नमः । काल्यै नमः । कलविकारिण्यै नमः । बलविकरिण्यै नमः । बलप्रमथिन्यै नमः । सर्वभूतदमन्यै

नमः । मध्ये मनोन्मन्यै नमः । ॐ नमो भगवते सकलगुणात्मशक्तियुक्तायानन्ताय योगपद्मपीठाय नम इति पीठपूजा । अथ पार्थिवविधिः । 'सर्वाधारवरारूपे त्वद्रूपां मृत्तिकामिमाम् । ग्रहीष्यामि प्रसन्ना त्वं लिङ्गार्थं भव सुप्रभे ।' इति भूमिं संप्रार्थ्य उपरितनीं मृदमपाकृत्य ततः ह्रां पृथिव्यै नम इति पृथिवीं नमस्कृत्य ततो निःशर्करामक्षाधिकां हराय नम इति हस्ते मृदं गृहीत्वा सद्योजातमिति मन्त्रं पठित्वा वामदेवेति मन्त्रेण जलं प्रक्षिप्य महेश्वरेति संघट्टनं कुर्यात् । अघोरेभ्य इति लिङ्गकरणं तत्पुरुषायेति बाणं कृत्वा ईशान इति वेदिकायां बाणं संयोज्य मूलेन शूलपाणये नम इति वेद्यां शिवं संस्थाप्य हस्ते पुष्पाक्षतादि गृहीत्वा मूलाधारात्कुण्डलिनीमुत्थाप्य षट्चक्रभेदक्रमेण हृदयकमलात्स्वेष्टदेवतां तेजोरूपां ब्रह्मरन्ध्रं नीत्वा परमामृताम्बुधौ परमात्मनि संयोज्य शिवशक्त्यात्मकं तत्तेजः वहनसाधनाकरस्थपुष्पाञ्जलौ निःसार्य पुरःस्थितमूर्तेः शिरसि पुष्पाञ्जलिं निक्षिपेत् । 'आत्मसंस्थमजं शुद्धं त्वामहं परमेश्वर । अरण्यामिव हव्याशं मूर्तावावाहयाम्यहम् । आयाहि भगवञ्छम्भो शर्व त्वं गिरिजापते । प्रसन्नो भव देवेश नमस्तुभ्यं हि शंकर ।' ततो मूलमुच्चार्य पिनाकधृषे नमः । आवाहनम् । 'तवेयं महिमा मूर्तिस्तस्यां त्वां सर्वगं शिव । भक्तिस्नेहसमाकृष्टं दीपवत्स्थापयाम्यहम् । देवेश भक्तिसुलभ सर्वावरणसंयुत । यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरो भव।' ततो मूलं पठित्वा शिव इह तिष्ठ इति संस्थाप्य संनिधापनं कुर्यात् । 'अनन्या तव देवेश मूर्तिशक्तिरियं प्रभो । सांनिध्यं कुरु तस्यां त्वं भक्तानुग्रहतत्पर।' ततो मूलमुच्चार्य शिव इह संनिधेहि २ संनिधापनं कृत्वा संनिरोधनं कुर्यात् । 'आज्ञया तव देवेश कृपाम्भोधे गुणाम्बुधे । आत्मानन्दैकतृप्तं त्वां निरुणध्मि पितर्गुरो ।' मूलान्ते श्रीशिव इह संनिरुध्यस्व २ । ततः संमुखीकरणम् । 'अज्ञानाद्दुर्मनस्त्वाद्वा वैकल्यात्साधनस्य च । यदपूर्णं भवेत्कृत्यं तदाप्यभिमुखो भव ।' शिव इह संमुखो भव २ । ततोऽवगुण्ठनम् । 'अभक्तवाङ्मनश्चक्षुःश्रोत्रदूरातिगद्युते । स्वतेजःपञ्जरेणाशु वेष्टितो भव सर्वतः ।' मूलान्ते श्रीशिव अवगुण्ठितो भव २ । ततः षडङ्गेन सकलीकरणम् । मूलेन धेनुमुद्रया अमृतीकरणम् । मूलेन महामुद्रया परमीकरणम् । ततो मूलमन्त्रमुच्चार्य ऐं वद वद वाग्वादिनि ऐं क्लीं क्लिन्ने क्लेदिनि क्लेदय महाक्षोभं कुरु २क्लीं सौः मोक्षं कुरु२ सौः ह्सौमिति दीपिनीमकारादिक्षकारान्तां मातृकां चोच्चार्य अर्घोदकेन देवं त्रिः प्रोक्ष्य देवस्य हृदयं स्पृशन् प्राणप्रतिष्ठां कुर्यात् । सा यथा । आं ह्रीं क्रों हं सः शिवस्य प्राणा इह प्राणाः।आं ह्रीं क्रों हं

सः शिवस्य जीव इह स्थितः । आं ह्रीं क्रों हं सः शिवस्य सर्वेन्द्रियाणि । आं ह्रीं क्रों हं सः शिवस्य वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य स्वस्तये सुखं चिरं तिष्ठन्तु स्वाहा । इति 'विश्वेश्वर महाराज प्रियेश्वर प्रजापते । आसनं दिव्यमीशान दास्येऽहं परमेश्वर ।' मूलेनासनम् । 'महानन्द महेशान महदानन्ददायक । पाद्यं गृहाण देवेश पार्वतीपरमेश्वर ।' मूलेनासनम् । 'त्रियम्बक सदाधार वियदादिविधानक । अर्घ्यं गृहाण देवेश शंभो सर्वार्थसाधक ।' मूलेनार्घ्यः । 'त्रिपुरान्तक दीनार्तिनाशिञ्छ्रीकण्ठ शूलधृक् । गृहाणाचमनं चारु पवित्रोदककल्पितम् ।' मूलेनाचमनम् । ततो घृतदधिमध्वाज्ययुक्तं मधुपर्कं मूलेन 'सर्वकालुष्यहीनाय परिपूर्णसुखात्मने । मधुपर्कमिदं देव कल्पयामि। प्रसीद मे।' इति दत्त्वाचमनं दद्यात् । ततः पञ्चामृतस्नानम् । 'त्रिकालकाशिकालश्रीस्थितिसंहारकारक । स्नानं तीर्थाद्धतैस्तोयैर्गृहाण परमेश्वर।' शिवायनमः स्नानंसमर्पयामि मूलेन स्नानम्।पुनर्मूलेनाचमनम् ।ततः श्वेतवस्त्रम् ।'कालाग्निरुद्र वरद वरदाभयदायक।वस्त्रं गृहाण देवेश दिव्यगन्धोपपादितम्।मूलेन वस्त्रम्।पशुपतये नमः पुनराचमनम्।'यज्ञोपवीतं परमं पवित्रं विधिनिर्मितम् । नीलकण्ठोपवीतं च मया दत्तं गृहाण भोः।' मूलं पशुपतये नमः यज्ञोपवीतम् । ततो भूषणानि । 'स्वभावसुन्दराङ्गाय नानाशक्त्याश्रयाय ते । भूषणानि विचित्राणि कल्पयाम्यमरार्चित ।' पशुपतये नमः भूषणानि समर्पयामि । ततः कनिष्ठाङ्गुष्ठयोगेन गन्धमुद्रया पशुपतये नमः इति गन्धं दद्यात् । 'चन्दनागुरुकर्पूरतमालजलकुङ्कुमम् । कुशीतकुष्ठसंयुक्तं चैतद्गन्धाष्टकं विदुः । सदाशिव शिवानन्द अक्षतान्परमेश्वर । गृहाण त्वमुमाकान्त दयां कृत्वा ममोपरि ।' मूलं पशुपतये नमः अक्षतान् । 'पुष्पाणि च विचित्राणि मालत्यादीनि वै प्रभो । हृद्यानि च सुगन्धीनि बिल्वपत्रं गृहाण मे।'मूलं पशुपतये नमः पुष्पाणि समर्पयामि। तर्जन्यङ्गुष्ठयोगेन पुष्पमुद्रया मूलेन पशुपतये वौषडित्यन्तेन पञ्च पुष्पाञ्जलीन्दत्त्वा आवरणपूजार्थमनुज्ञाप्य आवरणपूजां कुर्यात्।प्रथमेष्टदले दिग्दलेषु पूर्वदलमारभ्य ॐ नं तत्पुरुषाय नमः । ॐ मं अघोराय नमः । ॐ शिं सद्योजाताय नमः ।ॐ वां वामदेवाय नमः । मध्ये ॐ यं ईशानाय नम इति देवताग्रादिप्रादक्षिण्येन संपूज्याग्नेयादिदलेषु प्रादक्षिण्येन ॐ नैर्ऋत्यै नमः, प्रतिष्ठायै नमः, विद्यायै नमः, उपशान्त्यै नमः, मध्ये शान्त्यतीतायै नमः इति प्रथमावरणम् । 'अभीष्टसिद्धिं मे देहि शरणागतवत्सल।भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ।' इति प्रार्थयेत् । एवमग्रेऽपि । द्वितीयाष्टदलान्तःकेसरेषु देवस्य दक्षाग्रकेसरे । ॐ हृदयाय नमः । वामाग्रे नं शिरसे

नमः । पृष्ठदक्षिणे मं शिखायै नमः । वामे शिं कवचाय नमः । अग्रे वां नेत्राय नमः । अग्न्यादिचतुर्दिक्षु यं अस्त्राय नमः इति । 'अभीष्टसिद्धिं मे देव शरणागतवत्सल । भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ।' इति द्वितीयः । द्वितीयेष्टदले देवाग्रदलमारभ्य प्रादक्षिण्येन ॐ अनन्ताय नमः सूक्ष्माय शिवोत्तमाय एकनेत्राय एकरुद्राय त्रिमूर्तये श्रीकण्ठाय शिखण्डिने नम इति संपूज्य । अभीष्टसिद्धिं० । तृतीयाष्टदले शिवस्य वामदलमारभ्य प्रादक्षिण्येन उमायै नमः, चण्डेश्वराय नमः, नन्दिने नमः, महाकालाय नमः, गणेश्वराय नमः, वृषभाय नमः, भृङ्गिणे नमः, स्कन्दाय नमः । अभीष्टसिद्धिं ० चतुर्थावरणार्चनम् इति । चतुरस्ररेखात्रयान्तरालगतवीथ्यां यथास्थितपूर्वादिशमारभ्य, लं इन्द्राय नमः, रं अग्नये नमः, क्षं निर्ऋतये नमः, वरुणाय नमः कुबेराय नमः, हं ईशानाय नमः इति संपूज्य पूर्वेशानयोर्मध्ये आं ब्रह्मणे नमः । निर्ऋतिवरुणयोर्मध्ये ह्रीं अनन्ताय नमः इति संपूज्य अभीष्टेति पञ्चमावरणम् । द्वितीयवीथ्यां ॐ वज्राय नमः, शक्तये नमः, दण्डाय नमः, खड्गाय नमः, पाशाय नमः, अङ्कुशाय नमः, गदायै नमः, त्रिशूलाय नम, पद्माय नमः, चक्राय नमः इति लोकपालायुधानि तत्समीपस्थानेषु संपूज्य अभीष्टेति प्रार्थयेत् । षष्ठावरणम् । ततो मूलमुच्चार्य साङ्गाय सपरिवाराय सशक्तिकाय सायुधाय पुष्पाञ्जलिं समर्पयामि नमः इति पुष्पाञ्जलिं समर्प्य धूपादिना पूजयेत् ।'महादेव मृडानीशजगदीशनिरञ्जन । धूपं गृहाण देवेश साज्यं गुग्गुलुकल्पितम् ।' वनस्पतिरसेति पठित्वा मूलेन धूपमुद्रया धूपं दद्यात् । तर्जन्यङ्गुष्ठयोगेन धूपमुद्रा । 'हिरण्यबाहो सेनान्य ईशानाशापते प्रभो । दीपं गृहाण कर्पूरकपिलाज्यत्रिवर्तिकम् ।'आज्यं त्रिवर्तिसंयुक्तमिति दीपम् । मध्यमाङ्गुष्ठयोगेन दीपमुद्रा । 'अन्नानामपि सर्वेषां पते दीनार्तिनाशक । षड्रसैश्च समायुक्तं गृहाणान्नं निवेदितम् । नैवेद्यं गृह्यतां देवेति पठित्वाऽमृतोपस्तरणमसि प्राणाय स्वाहेत्युक्त्वा 'नमस्ते देवदेवेश सर्वतृप्तिकरं वरम् । अन्यानिवेदितं शुद्धं प्रकृतिस्थं सुशीतलम् । परमानन्दसंपूर्णं गृहाण जलमुत्तमम् ।' इत्यनेन मध्ये पानीयं दत्त्वा ब्रह्मेन्द्राद्यैरिति च पठित्वा यथाशक्ति जपित्वोत्तरापोशनं दत्त्वा नैवेद्यशेषं निर्माल्यभोजिने चण्डेश्वराय समर्प्य सुगन्धिचन्दनेन करोद्वर्तनं कारयित्वा मूलेनाचमनं च दत्त्वा 'राजाधिराज देवेश निराकार निरास्पद । फलं गृहाण देवेश नारिकेलादिकं शुचि ।' इत्यनेन फलं दद्यात् । इदं फलमिति मूलेन च । 'शाश्वत श्रीमयानन्द मदनान्तक धूर्जटे । गृहाण पूगताम्बूलदलचूर्णं सखादिरम् ।' पूगीफलमिति मूलेन ताम्बूलं

दद्यात्। ताम्बूलमुखवासाविति कौस्तुभे। तल्लक्षणं हेमाद्रौ रत्नकोशे—'महापिप्पलपत्राणि क्रमुकस्य फलानि च। शुक्तिक्षारेण संयुक्तं ताम्बूलमिति संज्ञितम्। श्वेतपत्रं च चूर्णं च क्रमुकस्य फलानि च। नारिकेलफलोपेतं मातुलुङ्गसमायुतम्। एलाकर्पूरकङ्कोलैर्मुखवासं प्रचक्षते। एतेषामप्यलाभे तु तत्तद्द्रव्यं स्मरेद्बुधः।' इति। हिरण्यगर्भगर्भस्थमिति दक्षिणां दद्यात्। ततः पुष्पाञ्जलिं दद्यात्। 'हर विश्वाखिलाधार निराधार निराश्रय। पुष्पाञ्जलिमिमं शंभो गृहाण वरदायक।' इति पुष्पाञ्जलिं दत्त्वा नीराजनं कुर्यात्। तत्र विशेषो हेमाद्रौ—'चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च। त्वमेव सर्वज्योतिष्य आर्तिक्यं प्रतिगृह्यताम्। शालिपिष्टोद्भवैःशुद्धैर्घृतपूर्णैः समुज्ज्वलैः। ततो नीराजनं दीपैः षड्विंशत्या तु कारयेत्। सर्षपैर्दधियुक्तैश्च दूर्वागोरोचनाक्षतैः। शातकुम्भं ततः पद्ममष्टपत्रं सकर्णिकम्। ध्यात्वा निवेदयेन्मूर्ध्नि लिङ्गस्य कुङ्कुमैः सह।' ततो वस्त्रयुगचामरदर्पणादीन्समर्पयेत्। ततः प्रदक्षिणां कृत्वा साष्टाङ्गं प्रणमेत्। 'मृडानीनाथ मे सर्वानपराधाननेकधा। क्षमस्वाभिप्रणामं ते करोम्यष्टाङ्गसंभवम्।' इति नमस्कारं कृत्वा ईश्वरवेद्यामष्टदिक्षु आग्नेय्यन्तमष्टमूर्तिपूजनं कुर्यात्। तथा च भविष्ये—'मूर्तयोऽष्टौ शिवस्यैताः पूर्वादिक्रमयोगतः। आग्नेय्यन्ताः प्रपूज्यास्तु वेद्यां लिङ्गे शिवं यजेत्।' इति। अष्टमूर्तिपूजनं तु न प्राचीप्रभृतः शंभोरिति रुद्रयामले निषेधात्'देवाग्रे स्वस्य चाप्यग्रे प्राची प्रोक्ता गुरूत्तमैः।' इत्यागमिकीं प्राचीमनादृत्य प्राच्यैशान्यादिक्रमेणाग्नेयीपर्यन्तमावर्तेनकुर्यात्तच्चिन्त्यम्। नमः शिवायेति मन्त्रेण पूर्वलिङ्गे शिवं संपूज्य ततो वामावर्तेन अष्टौ मूर्तीः पूजयेदिति कालतत्त्वविवेचनप्रभृतयः। वस्तुतस्तु रुद्रयामलीयं पदार्थादर्शादिमहानिबन्धेष्वदर्शनान्निर्मूलमेव। मन्त्रमहोदधौ तु मुख्ये पुष्पाञ्जलिदानोत्तरमावरणपूजनादर्वागष्टमूर्तिपूजनं कर्तव्यमिति स्थितम्। शर्वाय क्षितिमूर्तये नमः। भवाय जलमूर्तये नमः। रुद्राय अग्निमूर्तये नमः। उग्राय वायुमूर्तये नमः। भीमायाकाशमूर्तये नमः। पशुपतये यजमानमूर्तये नमः। महादेवाय सोममूर्तये नमः। ईशानाय सूर्यमूर्तये नमः। मध्ये शिवाय नम इति चन्दनादिपञ्चोपचारैः संपूज्य यथाशक्ति जप्त्वा स्तोत्रैःस्तुत्वा नमस्कृत्य प्रथमप्रहरार्घ्यं दद्यात्। 'शिवरात्रिव्रतं देव पूजाजपपरायणः। करोमि विधिवद्दत्तं गृहाणार्घ्यं महेश्वर।' इति। अथ प्रार्थना। 'नमो यज्ञ जगन्नाथ नमस्त्रिभुवनेश्वर। पूजां गृहाण मद्दत्तां महेश प्रथमे पदे।' इति। ततः पुष्पाञ्जलिं दत्त्वा तन्मन्त्रजपेन तत्कथाश्रवणादिभिर्वा जागरणं कुर्यात्। ततो द्वितीयप्रहरपूजनं

कृत्वा द्वितीयप्रहरार्घ्यं दद्यात् । ‘नमः शिवाय शान्ताय सर्वपापहराय च । शिवरात्रौ ददाम्यर्घ्यं प्रसीद उमया सह ।’ इति । ततः प्रार्थनां कुर्यात् । ‘नमोऽव्यक्ताय सूक्ष्माय नमस्ते त्रिपुरान्तक । पूजां गृहाण देवेश यथाशक्त्योपपादिताम् ।’ इति । ततस्तृतीयप्रहरपूजनं कृत्वा तृतीयप्रहरार्घ्यं दद्यात् । ‘दुःखदारिद्र्यशोकेन दग्धोऽहं पार्वतीपते । शिवरात्रौ ददाम्यर्घ्यमुमाकान्त गृहाण मे ।’ इति । ततः प्रार्थयेत् । ‘बद्धोऽहं विविधैः पाशैः संसारभयबन्धनैः । पतितं मोहजाले मां त्वं समुद्धर शंकर ।’ ततश्चतुर्थप्रहरपूजनं कृत्वा चतुर्थप्रहरार्घ्यं दद्यात् । ‘मया कृतान्यनेकानि पापानि हर शंकर । शिवरात्रौ ददाम्यर्घ्यमुमाकान्त गृहाण मे ।’ इति । ‘किं न जानासि देवेश तावद्भक्तिं प्रयच्छ मे । स्वपादाग्रतले देव दास्यं देहि जगत्पते ।’ इति चतुर्थप्रहरपूजनं समर्प्य प्रार्थयेत् । ‘अविघ्नेन व्रतं देव त्वत्प्रसादात्समर्थितम् । प्रसन्नो भव मे श्रीमन्सद्गतिः प्रतिपाद्यताम् । त्वदालोकनमात्रेण पवित्रोऽस्मि न संशयः ।’ इति प्रसादपत्रपुष्पादि गृहीत्वा व्रतसाद्गुण्यार्थं गोदानं कृत्वा परदिने यथाशक्ति ब्राह्मणान्भोजयित्वा ‘संसारक्लेशदग्धस्य व्रतेनानेन शंकर । प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव ।’ इति संप्रार्थ्य बन्धुभिः सह पारणं कुर्यादिति । कालतत्त्वविवेचने तु ॐ ह्रौं ईशानाय नम इति प्रथमप्रहरे दुग्धेन स्नपनं पूजनं च । अर्घ्यादिकं च पूर्ववदेव । द्वितीयप्रहरे ॐ ह्रौं अघोराय नम इति दध्ना स्नपनम् । तृतीये ह्रौं वामदेवाय नम इति घृतेन स्नपनम् । चतुर्थे ॐ ह्रौं सद्योजाताय नम इति मधुना स्नपनमित्युक्तम् । नृसिंहपरिचर्यायां तु शतरुद्रियेण पञ्चाक्षर्या वा पयसा सर्पिषा मधुराम्ररसेनेक्षुरसेनोदकेन वा संततधारया शिवं संस्नाप्य आद्ये शिवाय नम इति गन्धपुष्पतण्डुलतिलमाषगोधूमादिभिर्महापूजां कृत्वा पञ्चब्रह्ममन्त्रैः ॐ सद्योजाताय नमः पश्चिमे, उत्तरे वामदेवाय, पूर्वे तत्पुरुषाय, दक्षिणे अघोराय ऊर्ध्वमुखे ईशानायेति पञ्चवक्त्राणि पुष्पादिभिः संपूज्य ताम्बूलान्तं निवेद्य अर्घ्यं दद्यात् । तत्र मन्त्रः । ‘गौरीवल्लभ देवेश सर्वाद्य शशिशेखर । वर्षपापविशुद्ध्यर्थमर्घो मे प्रतिगृह्यताम् ।’ इति अर्घ्यं दत्त्वा जागरणं कुर्यात् । द्वितीयप्रहरे शंकराय नमः तृतीये महेश्वराय नमः चतुर्थे रुद्राय नमः । एवं संपूज्य प्रभाते नित्यं कृत्वा शिवमभ्यर्च्य शिवभक्तान्द्विजान्संभोज्य पारणं कुर्यादिति । इति वार्षिकं शिवरात्रिपूजनम् ।

अथ वार्षिकशिवयोगोक्तशिवरात्रिकथा । शिव उवाच । ‘आसीद्राजा

विदेहायां प्रजापालनतत्परः । सुधर्मा नाम विख्यातः सदा परमधार्मिकः । पृथिव्यां सर्वराजानो वर्तन्ते वशवर्तिनः । तस्य राज्ये न वै कश्चिद्व्याधितो दुःखितोऽभवत् । साधून्पालयते राजा पुत्रवत्सुरसुन्दरि । एवंगुणविशिष्टस्य तस्य राज्ञः प्रिया शुभा । भार्या तिलोत्तमा नाम सर्वैः समुदिता गुणैः । रूपलावण्यसंयुक्ता स्थिरयौवनसंस्थिता। हंसकोकिलसंभाषा मत्तमातङ्गगामिनी । यथारूपा यथाशीला तस्य भार्या महीपतेः । भर्तुः प्रियहिते युक्ता भर्तुश्चैव हि वल्लभा। याश्च तस्यावराभार्याः शतसाहस्रसंमिताः । सर्वास्ता गुणसंयुक्ता दास्य एव व्यवस्थिताः । एवं गच्छति काले तु कस्मिंश्चित्सुर-सुन्दरि । अन्तःपुरं स धर्मात्मा जगाम रिपुमर्दनः । दृष्टं तिलोत्तमा देवी सर्वैः समुदिता गुणैः । आगच्छन्तं ततो दृष्ट्वा राजानं रिपुमर्दनम् । ततश्च स्वयमुत्थाय ददौ राज्यासनं तदा । वदन्त्येव ततो राज्ञी शिवेति च पुनः पुनः । उपविष्टा तदा राज्ञः समीपे वशवर्तिनी । स च राजा तदा राज्ञ्या शिवेति समुदीरितम् । सस्मार प्राक्तनं कर्म अन्यजन्मनि यत्कृतम् । तत्याजासौ तदा स्मृत्वा ताम्बूलं करसंस्थितम् । चकार मनसा राजा संकल्पं शिवपूजने । ततः पप्रच्छ सा देवी किमिदं त्यागकारणम् । यदि वक्ष्यसि मे न त्वं मरिष्यामि तवाग्रतः । सोऽपि राजा ततो देवीं मरणे कृतनिश्चयाम् । विज्ञाय कथयामास पूर्वजन्मविचेष्टितम् । शृणुष्वावहिता श्रुत्वा वचनं सुरसुन्दरि । श्रुत्वा त्वयेरितं वाक्यं शिवनामसमन्वितम् । स्मृतं मे सर्वचरितं पूर्वजन्मनि यत्कृतम् । श्रूयतामभिधास्यामि सावधाना भव प्रिये । अहमासं पुरा वैश्यः स्वधर्मेषु रतः शुचिः । कालेन गच्छता देवि पूर्वकर्मवशेन च । स्वकर्म-निरतस्यापि चौर्ये मतिरजायत । निशि निष्क्रमणं कृत्वा चौर्यं कर्तुमहं गतः । तस्मिन्काले शुभे देवि माघमासोऽभवत्तदा । ततश्चैवासिते पक्षे शिवयोगोऽभवत्तदा । चतुर्दशी तिथिश्चासीच्छिवरात्रिस्तु सा स्मृता [१] । मम वै भ्रममाणस्य अर्ध-रात्रमभूत्तदा । भ्रमता हि मया दृष्टः समवायो जनस्य च । जागरं तु प्रकुर्वाणः शिवस्यायतने शुभे । अतस्तु तं समासाद्य उपविष्टस्ततः क्षणम् । कस्याश्चि-द्गृहमेधिन्याः कर्णसंस्थं च कुण्डलम् । हृत्वा पलायमानस्तु दृष्टोऽहं रक्षपालकैः । ततस्ते सहिताः सर्वे खड्गपाणिधनुर्धराः । तद्भयाच्च मया तत्र मुखे क्षिप्तं तु कुण्डलम्। ततः क्रुद्धेन चैकेन शिरश्छिन्नं महासिना । ततश्च कर्मणा तेन रात्रौ जागरणेन च । चौर्येण च कृतेनापि राजाऽहं संबभूव ह । ततश्च जातिस्मरणं जातं मम तिलोत्तमे ।

---

१ श्रुत्वेति शेषः ।

शिवयोगस्तु चाद्यैव माघमासश्च शोभने । चतुर्दशी तिथिश्चाद्य ताम्बूलं तन्मयोज्झितम् । एतच्छ्रुत्वा च सा देवी आश्चर्यं परमं महत् । उवाचैनं तदा राज्ञी विस्मयं परमं गता । यदि मे प्रत्ययं कंचिदुत्पादयसि भूमिप । तदा जीवामि नृपते नान्यथैवं प्रतारणा । एतच्छ्रुत्वा तदा राजा उवाच सुरसुन्दरि । एतदेव शिरो मेध्य पश्यैतत्कूपसंस्थितम् । कालेन कूपः पूर्णोऽयं लोष्ठैश्च तृणसंचयैः । उत्थाय च गतौ तत्र दम्पती विस्मयान्वितौ । खानयित्वा ततो देव्यै दर्शयामास तच्छिरः । कुण्डलं च मुखे दृष्ट्वा विस्मयं परमं गतौ । ततस्तु दम्पती तत्र चक्रतुर्नियमं परम् । उपवासस्य नियमं तथा जागरणस्य च । कालेन गच्छता तौ तु पुत्रपौत्रसमन्वितौ । संपूर्णे च तयोः काले मरणं समुपागतौ । शिवरात्रिप्रभावेण दम्पती शिवसंनिधौ । शिवरात्रिमिमां देवि यः करोति नरो भुवि । सर्वपापविनिर्मुक्तः शिवलोके महीयते । य इमां शृणुयान्नित्यं शिवरात्रिकथां नरः । कृता तेन महादेवि शिवरात्रिर्न संशयः ।' इति शिवयोगयुक्तशिवरात्रिमाहात्म्यम् ।

हेमाद्रौ लिङ्गपुराणे-सूत उवाच-'शंकराणामशेषस्य जगतः सर्वदा शिवम् । गोब्राह्मणनृपाणां च शिवं भवतु सर्वदा । कैलासशिखरासीनं देवदेवं जगद्गुरुम् । पञ्चवक्त्रं दशभुजं त्रिनेत्रं शूलपाणिनम् । कपालखट्वाङ्गधरं खड्गखेटकधारिणम् । कपालधारिणं देवं वरदं चाभयप्रदम् । भस्माङ्गव्यालशोभाढ्यं शशाङ्ककृतशेखरम् । नीलजीमूतसंकाशं सूर्यकोटिसमप्रभम् । गौरी प्रोवाच भर्तारं विस्मयोत्फुल्ललोचना ।' पार्वत्युवाच । ' कथयस्व प्रसादेन यद्गोप्यं व्रतमुत्तमम् । यत्कृत्वा देवदेवेश पापहानिः प्रजायते-श्रुतास्त्वयोक्ता देवेश व्रतानां निर्णयाः शुभाः । तथा वै दानधर्माश्च तीर्थधर्मास्त्वयोदिताः । नास्ति मे निश्चयो देव भ्रान्ताऽहं च पुनः पुनः । तस्माद्वदस्व देवेश एकं निःसंशयं प्रभो । व्रतानामुत्तमं देव भुक्तिमुक्तिप्रदायकम् । तदहं श्रोतुमिच्छामि कथयस्व महाप्रभो ।' ईश्वर उवाच । ' शृणु देवि परं गुह्यं व्रतानामुत्तमं व्रतम् । यन्न कस्यचिदाख्यातं रहस्यं मुक्तिदायकम् । येनैव क्रियमाणेन यमो विलयतां व्रजेत् । तदहं कीर्तयिष्यामि शृणुष्वैकमनाः प्रिये । माघान्ते कृष्णपक्षे तु अविद्धा या चतुर्दशी । शिवरात्रिस्तु सा ज्ञेया सर्वयज्ञोत्तमोत्तमा । दानैर्यज्ञैस्तपोभिश्च व्रतैश्च विविधैरपि । न तीर्थैस्तद्भवेत्पुण्यं यत्पुण्यं शिवरात्रितः । शिवरात्रिसमं नास्ति व्रतानामुत्तमं व्रतम् । अज्ञानाज्ज्ञानतो वापि कृत्वा मोक्षमवाप्नुयात् । मृतास्ते निरयं यान्ति

१-एतदेवोवाचेत्यन्वयः ।

थैरियं न कृता कलौ । सर्वमङ्गलशीला च सर्वाशुभविनाशिनी । भुक्तिमुक्तिप्रदा चैषा सत्यं सत्यं वरानने । श्रीदेव्युवाच–' कथं यामपुरं मार्गं त्यक्त्वैवं व्रजेन्नरः । एतन्मे महदाश्चर्यं प्रत्ययं कुरु शंकर ।' श्रीशंकर उवाच– 'शृणु देवि यथा वृत्तां कथां पौराणिकीं शुभाम् । यमशासनहंत्रीं च शिवशासनदायिकाम् । कश्चिदासीत्पुरा कल्पे निषादस्त्वामिषप्रियः । प्रत्यन्तदेशवासी च भूधरासन्नभूचरः । सीमान्ते स सदा तिष्ठेत्कुटुम्बपरिपालकः । तन्वा पीनो धनुर्धारी श्यामाङ्गः कृष्णकञ्चुकः । बद्धगोधाङ्गुलित्राणः सदैव मृगयारतः । एवंविधो निषादोऽसौ चतुर्दश्यां दिनोदये । स्वद्रव्यार्थे वणिग्भिश्च देवागारे निरोधितः । तेनापि देवता दृष्टा जनानां वचनं श्रुतम् । उपवासरतानां च जल्पतां हे शिवेति च । दिनान्ते स तदा मुक्तः प्रातर्द्रव्यं प्रदीयताम् । ततोऽसौ धनुरादाय दक्षिणेन गतः स्वयम् । जगाम स वनोद्देशं जनहासं चकार सः । शिवः शिवः किमेतद्वै वदन्ति नगरे जनाः । वनेचरान्निरीक्षन्स चतुर्दिक्षु इतस्ततः । पदं च पदमार्गं च मृगशूकरचित्तलान् । धावतस्तस्य सर्वासु दिक्षु वै लुब्धचेतसः । वनं सपर्वतं सर्वं भ्रमतस्तु दिनं गतम् । अमाता एव गच्छन्ति सकला मृगजातयः । संप्राप्तमपि नापश्यं न मृगं न च चित्तलम् । निराशो लुब्धको यावत्तावदस्तंगतो रविः । चिन्तयित्वा जलोपान्ते जागरं मृगघातनम् । संविधास्याम्यहं रात्रौ निश्चितं मम जीवनम् । तडागसंनिधौ गत्वा तत्तीरे जालिमध्यतः । निलयं कर्तुमारब्धमात्मार्थे गुप्तिकारणम् । जालिमध्ये महालिङ्गमस्ति स्वायंभुवं शुभम् । ततो बिल्वस्य पत्राणि त्रोटित्वा मार्गशोधने । क्षिप्तानि दक्षिणे भागे लिङ्गमूर्तिगतानि वै । न दिवा भोजनं जातं संरोधस्य प्रभावतः । मृगान्निरीक्षतस्तस्य निद्रानाशोऽप्यजायत । जालिमध्यगतस्यापि प्रथमः प्रहरो गतः । ततो जलार्थमायाता हरिणी गर्भसंयुता । यौवनस्था सुरूपा च स्तनपीनाङ्गशोभिता । निरीक्षन्ती दिशः सर्वा उत्फुल्लनयना भृशम् । लुब्धकेनाथ सा दृष्टा बाणगोचरतां गता । कृतं च बाणसंधानं तेनैकाग्रेण चेतसा । त्रोटित्वा बिल्वपत्राणि प्रक्षिप्तानि शिवोपरि । स्मरञ्छिवेति वादं च शीतेन परिपीडितः । बिल्वमध्ये स्थितो दृष्टो हरिण्या लुब्धकस्तदा । लुब्धकः स स्वरूपेण कृतान्त इव तिष्ठति । दृष्ट्वा च तस्य संधानं यमदंष्ट्रासमप्रभम् । सा मृगी दिव्यया वाचा लुब्धकं वाक्यमब्रवीत् ।' मृग्युवाच । ' स्थिरो भव महाव्याध सर्वजीवनिकृन्तन । किमर्थं मां हनिष्यसि कथयस्व मम प्रभो । तस्यास्तद्वचनं श्रुत्वा लुब्धकः प्राह तां मृगीम् । समातृकं कुटुम्बं मे क्षुधयापीड्यतेभृशम् । धनं च मद्गृहेनास्ति

ततस्त्वां हन्मि शोभने ।' सूत उवाच—'जातपूजाप्रभावेण जागरोपोषणेन च । चतुर्थांशेन पापानां विमुक्तो लुब्धकस्तदा । विस्मयोत्फुल्लनयनो मृगीवाक्येन पार्वति । उवाच वचनं तां वै धर्मयुक्तमसंशयम् । मया हि घातिता देवि उत्तमाधममध्यमाः । न श्रुता त्वीदृशी वाणी श्वापदानां कदाचन । कस्मिन्देशे त्वमुत्पन्ना कस्मात्स्थानादिहागता । कथय त्वं प्रयत्नेन परं कौतूहलं हि मे ।' मृग्युवाच—'शृणु त्वं लुब्धकश्रेष्ठ कथयामि तवाखिलम् । आसं पूर्वमहं रम्भा स्वर्गे शक्रस्य चाप्सराः । अनन्तरूपलावण्यसौभाग्येन च गर्विता । सौभाग्यमदसंयुक्तो दानवो मदगर्वितः । मयैव स कृतो भर्ता हिरण्याक्षो महासुरः । तेन सार्धं चिरं कालं मया भुक्तं यथेप्सितम् । अन्यस्मिन्दिवसे व्याध क्रीडन्त्या मेऽसुरेण च । गतो बहुतिथः कालो महादेवस्य कोपकृत् । प्रत्यहं प्रेक्षणं नृत्यं शंकरस्याग्रतश्च मे । यावद्गच्छाम्यहं तत्र तावद्रुद्रोऽब्रवीत्क्रुधा । हे रम्भे क्व गतासि त्वं केन वा संगता शुभे । सौभाग्यमदगर्वेण नागता मम मन्दिरम् । सत्यं कथय शीघ्रं त्वं नो चेच्छापं ददामि ते । शापभीत्या मया तत्र सत्यमुक्तं शिवाग्रतः । शृणु देव प्रवक्ष्यामि शापानुग्रहकारक । मम भर्ता समः प्राणैर्दानवो बलदर्पितः । तेन सार्धं मया देव क्रीडितं निजमन्दिरे । तस्य भोगेन लुब्धाऽहं शयनादेव नोत्थिता । तेनाहं नागता शीघ्रं सृष्टिसंहारकारक । रुद्रस्तद्वचनं श्रुत्वा सकोपो वाक्यमब्रवीत् । मृगः कामातुरो नित्यं हिरण्याक्षो भविष्यति । त्वं मृगी तस्य भार्या वै भविष्यसि न संशयः । यस्मात्त्यक्त्वा स्वर्गदेवान्दानवं भोक्तुमिच्छसि । तस्मात्तु निर्जले देशे तृणाहारा भविष्यसि । द्वादशाब्दानि भद्रं ते भविता शाप एष वाम् । परस्य च हि शोकेन शापान्तो हि भविष्यति । कृतस्त्वनुग्रहो व्याध शंकरेण यदृच्छया । यदा कश्चिद्व्याधवरो मम सांनिध्यमाश्रितः । बाणाग्रे तस्य संप्राप्ता पूर्वजन्म स्मरिष्यसि । शंकरस्य तदा रूपं दृष्ट्वा मोक्षमवाप्स्यसि । शंकरो न मया दृष्टो वसन्त्यास्मिन्महावने । तेन दुःखमनुप्राप्ता मेदोमांसविवर्जिता । गर्भाक्रान्ता विशेषेण अवध्या चेति निश्चितम् । सकुटुम्बस्य ते नूनं भोजनं न भविष्यति । आयास्यति मृगी त्वन्या बहुमांसमदोद्धता । भोजनं सकुटुम्बस्य तया नूनं भविष्यति । अथ वान्यो मृगो व्याध तव बाणस्य गोचरे । प्रभातेऽतिक्षुधार्तस्य निश्चयादागमिष्यति । मुक्त्वाऽथ व्याध गर्भं वा बालानादिश्य बन्धुषु । शपथैरागमिष्यामि संदिश्य च सखीजनम् । तस्यास्तद्वचनं श्रुत्वा व्याधो विस्मितमानसः । कष्टमेवं तदा ध्यात्वा तां प्रोवाच मृगाङ्गनाम् ।

नागमिष्यति यद्यन्यो मृगस्त्वमपि गच्छसि । क्षुधया पीडितोऽहं वै कुटुम्बं च भविष्यति । प्रातस्त्वया मम गृहमागन्तव्यं यथा भवेत् । व्रज त्वं शपथान्कृत्वा यथा मे निश्चयो भवेत् । पृथिवीवायुरादित्यः सत्येतिष्ठन्तिदेवताः । पालनीयं यथा सत्यं लोकद्वयमभीप्सुभिः । तस्य तद्वचनं श्रुत्वा सा गर्भार्ता तदा मृगी । चक्रे सत्यप्रतिज्ञां वै व्याधस्याग्रे पुनः पुनः ।' मृग्युवाच—'द्विजो भूत्वा तु यो व्याध वेदभ्रष्टोऽभिजायते । स्वाध्यायसंध्यारहितःसत्यशौचविवर्जितः । अविक्रेयस्य विक्रेता अयाज्यानां च याजकः। तेन पापेन लिम्पामि नागच्छामि पुनर्यदि। धूर्ते दुष्टे शठे यच्च यत्पापं मानकूटके । वेदविक्रयके चापि शवसूतकभोजने । वञ्चके च विशीले च परदाररते तथा । मृतशय्याग्राहके च मातापित्रोरपोषके । दानं दातुं प्रसक्तस्य योऽन्तरायकरो नरः । तेन पापेन लिम्पामि नागच्छामि पुनर्यदि । स्वदत्तां परदत्तां वा यो हरेत्सागराम्बराम् । देवद्रव्यं गुरुद्रव्यं ब्रह्मद्रव्यं तथा हरेत् । तेन पापेन लिम्पामि नागच्छामि पुनर्यदि । देवतां स्वामिनं मित्रमात्मानं बालमेव च । गां च विप्रं गुरुं नारीं व्यापादयति दुर्मतिः । तेन पापेन लिम्पामि नागच्छामि पुनर्यदि । दानस्य कीर्तने पापं यत्पापं दाम्भिके तथा । असंयतेन्द्रिये नित्यं परदोषानुकीर्तने । कृतघ्ने च कदर्ये च नास्तिके वेदनिन्दके।सदाचारविहीने च परपीडाप्रदायके । परपैशुन्ययुक्तेऽपि कन्याविक्रयकारके । परापवादसंतुष्टे सर्वधर्मबहिष्कृते । वृषलीपतौ च यत्पापं पित्रोश्च गरदायिनि । हैतुके बकवृत्तौ च श्राद्धतीर्थविवर्जिते । एतेषां पातकं मह्यं नागच्छामि पुनर्यदि । यत्पापं ब्रह्महत्यायां पितृमातृवधे तथा । यत्पापं लुब्धकानां च गोचोरविषघातिनाम् । तेन पापेन लिम्पामि नागच्छामि पुनर्यदि । द्विभार्यः पुरुषो यस्तु समदृष्ट्या न पश्यति । यश्चान्हले बलीवर्दान्विषमान्वाहयेन्नरः । तेनपापेन लिम्पामि नागच्छामि पुनर्यदि। सकृद्दत्त्वा तु यः कन्यां द्वितीये दातुमिच्छति । यस्य व्यभिचारिणी भार्या ब्राह्मणी च विशेषतः । एकाकी मिष्टमश्नाति भार्यापुत्रविवर्जितः । आत्मजां गुणसंपन्नां समाने सदृशे वरे । न ददाति च यः कन्यां नरो वै ज्ञानदुर्बलः । तेन पापेन लिम्पामि नागच्छामि पुनर्यदि । मृगीवाक्यं ततः श्रुत्वा लुब्धको हृष्टमानसः । मुमोच हरिणीं सद्यो मुक्तबाणं धनुस्ततः । तस्या मुक्तिप्रभावेण लिङ्गार्चनकरेण च । स पातकचतुर्थांशान्मुक्तोऽसौ तत्क्षणादपि । द्वितीये प्रहरे प्राप्ते ह्यर्धरात्रे वरानने । स्मरंश्छिवंशिववाक्यं न निद्रां लब्धवांस्तदा । द्वितीयाथ ततः प्राप्ता कामार्ता मृगसुन्दरी । संत्रस्ता भयसंविग्ना पतिमन्वेषती तदा । जालिमध्ये

स्थितेनाथ दृष्टा सा लुब्धकेन च । पुनर्बिल्वस्थपत्राणि त्रोटितानि करेण तु । क्षिप्तानि दक्षिणे भागे लिङ्गस्योपरि पार्वति । तस्या वधार्थं व्याधो हि बाणं धनुषि संदधे । हर्षपूर्णेन मनसा कुटुम्बार्थं भृशं प्रिये । निरीक्ष्य लुब्धको यावत्तस्यां बाणं विमुञ्चति। तावन्मृगी सुसंत्रस्ता व्याधं वचनमब्रवीत् । धनुर्धर शृणु व्याध सर्वसत्वभयंकर । देहि मे वचनं ह्येकं पश्चान्मां विनिपातय। आगता हरिणी चैका मार्गणानेन लुब्धक । समायाताथ वा नैव सत्यं कथय सुव्रत। तद्वचो लुब्धकः श्रुत्वा विस्मितस्तत्क्षणादभूत्। तस्यास्तु यादृशी वाणी अमुष्या अपि तादृशी । सैवेयमागता नूनं प्रतिज्ञापालनाय वै । अथ वाऽन्या समायाता तया या कथिता पुरा । एवं संचिन्त्य मनसा लुब्धको वाक्यमब्रवीत् । शृणु त्वं मृगि मे वाक्यं गता सा निजमन्दिरम्। त्वं दत्ता मम नूनं हि सा भवेत्सत्यवागपि । अहोरात्रंकृतंकष्टं कुटुम्बार्थं मृगाङ्गने। अधुना त्वां हनिष्यामि देवतास्मरणं कुरु। व्याधोक्तं वचनं श्रुत्वा हरिणी दुःखिता भृशम् । व्याधं प्राह रुदित्वा सा मा मां व्याधनिपातय। नास्तिमांसं तथा मेदः शरीरेरुधिरंमम। तेजो बलं मे सकलं निर्दग्धंविरहाग्निना। अहंप्राणैर्वियोक्ष्यामि भोजनं ते न जायते। बलवान्सुमहातेजा मेदोमांसपरिप्लुतः । अत्यन्तपृथुपीनाङ्गोमृगोह्यत्रागमिष्यति।तं हत्वासुखभागी त्वं तृप्तश्चैव भविष्यसि । तयोक्तेः लुब्धकः श्रुत्वा किं करोमीत्यचिन्तयत् । मृगी ब्रूते ह्यसंदिग्धं निश्चयोऽयं परं मम। चिन्तयित्वेति संप्राह मृगीं कामातुरां तदा । कुरु प्रतिज्ञां सत्यां त्वं निश्चयो मे यथा भवेत् । तद्व्याधवचनं श्रुत्वा मृगी शोकसमाकुला । सत्यां प्रतिज्ञां विदधे व्याधस्याग्रे पुनः पुनः ।'मृग्युवाच—'क्षत्रियस्तुरणंदृष्ट्वा संग्रामाद्यो-निवर्तते।तेन पापेन लिम्पामि यद्येतदनृतं वदे।परद्रव्यरता नित्यं मायावन्तोऽप्यसूयकाः। भेदयन्ति तडागानि वापीनां च गवामपि। मार्गस्थानं च ये घ्नन्ति सर्वसत्त्वभयंकराः । परित्यजन्ति सन्मार्गान्पशून्भृत्यांस्तथैव च। ब्राह्मणान्निन्दते यश्च तथैवाश्रमनिन्दकः । तेन पापेन लिम्पामि यद्येतदनृतं वदे । आकर्ण्येत्थं वचस्तेन मुक्ता सा तत्क्षणात्प्रिये । जलं पीत्वा गता सापि अदृष्टः सोऽभवत्तदा । जालिमध्ये स्थितस्यापि द्वितीयः प्रहरो गतः । पीडितस्तीव्रशीतेन क्षुधया परिपीडितः । शिवं शिवं प्रजल्पन्वै न निद्रामुपलब्धवान् । कृतं शिवार्चनं तेन तृतीये प्रहरेऽपि च । वीक्षते स दिशः सर्वा जीवनार्थं वरानने । सौभाग्यबलदर्पाढ्यो मृगस्तावत्समागतः । बाणं गृहीत्वा तं दृष्ट्वा मौर्व्यामाशु न्ययोजयत् । आकर्णान्तं धनुर्नम्य हृष्टस्तुष्टेन चेतसा । यावन्मुञ्चति बाणं स तावद्दृष्टो मृगेण वै । कालरूपं तु तं दृष्ट्वा मृगश्चिन्तां

परां ययौ । निश्चितं भविता मृत्युर्यदि पादो विचाल्यते । भार्या प्राणसमा चैव व्याधेनैव निपातिता । तया विरहितस्यापि मम मृत्युर्भविष्यति । हा कालविकृतं पापं यद्भार्यादुःखमागतम् । न हि भार्यासमं सौख्यं विपिनेऽपि गृहेऽपि वा । तया विना न धर्मो हि नार्थः कामो विशेषतः । वृक्षमूलेऽपि दयिता यत्र तिष्ठति तद्गृहम् । प्रासादोऽपि तया हीनः कान्तारादतिरिच्यते । धर्मार्थकामकार्येषु पुंसां भार्या सहायिनी । विदेशगमनेनैव सैव विश्वासकारिणी । नास्ति भार्यासमो बन्धुर्नास्ति भार्यासमं सुखम् । नास्ति भार्यासमं लोके नरस्यार्तस्य भेषजम् । यस्य भार्या गृहे नास्ति साध्वी च प्रियवादिनी । अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् । तया विना जीवतोऽपि निष्फलं मम जीवितम् । एका प्राणसमा मेऽभूद्द्वितीया प्राणदा मम । ताभ्यां विरहितस्याद्य निष्फलं जीवितं मम । एवं संचिन्त्य शनकैर्लुब्धकं वाक्यमब्रवीत्। शृणुव्याधमहासत्त्व आमिषाहारनिश्चय । त्वां हि पृच्छामि किंचिद्वै सत्यं कथय मे स्फुटम् । आयातंहरिणीयुग्मं केनमार्गेणतद्गतम् । त्वया विनाशितं नैव सत्यं कथय मेऽग्रतः । तस्य तद्वचनं श्रुत्वा लुब्धकोऽपि व्यचिन्तयत् । असावपि न सामान्यो देवता कापि विद्यते । ध्यात्वेति सत्यं तस्याग्रे लुब्धको वाक्यमब्रवीत् । ते गतेऽनेन मार्गेण प्रतिज्ञाय ममाग्रतः । ताभ्यां दत्तो भोजनार्थं मम त्वं नात्र संशयः । अधुना त्वां हनिष्यामि न हि मोक्ष्यामि कर्हिचित् । व्याधोक्तं हि वचः श्रुत्वा हरिणः प्राह सत्वरम् । तत्सत्यं कीदृशं व्याध ताभ्यामुक्तं तवाग्रतः । येन ते प्रत्ययो जातस्तन्मुक्तं हरिणीद्वयम् । व्याधेन कथिताः सर्वे ये कृताः शपथाः पुरा । तस्य तद्वचनं श्रुत्वा हरिणो हृष्टमानसः । व्याधं प्राह ततः शीघ्रं वचनं धर्मसंहितम् ।' मृग उवाच— ' ताभ्यां यदुक्तं भो व्याध तत्सत्यं हि भवेन्मम । प्रभाते त्वद्गृहं नूनमागमिष्यामि हिंसक । भार्या ऋतुमती मेऽद्य कामार्तोऽपि च सांप्रतम् । गत्वा गृहेऽद्य तां भुक्त्वा अनुज्ञाप्य सुहृज्जनम् । शपथैरागमिष्यामि त्वद्गृहं नात्र संशयः । न मे देहेऽस्त्यसृङ्मांसं यत्त्वं भोक्तुमभीप्ससि । तद्वृथा मरणं मे स्याद्यदि मां त्वं हनिष्यसि । तन्मृगस्य वचः श्रुत्वा व्याधो वचनमब्रवीत् । ' व्याध उवाच—' असत्यं भाषसे धूर्त मतारयसि मामिह । ज्ञातो मृत्युः स्फुटं यत्र तत्र गच्छति कोल्पधीः । व्याधस्य वचनं श्रुत्वा वाक्यं प्राह वरं मृगः । शपथान्वै करिष्यामि यथा ते प्रत्ययो हृदि । ' व्याध उवाच—' मम त्वं शपथान्ब्रूहि विश्वासो येन जायते । यथा हि प्रेषयामि त्वां स्वगृहं प्रति कामुकम् । ' मृग उवाच— 'भर्तारं

वञ्चयेद्या स्त्री स्वामिनं वञ्चयेन्नरः । मित्रं वञ्चयते यस्तु गुरुद्रोहं करोति यः । तेन पापेन लिम्पामि यद्येतदनृतं वदे । भेदयेद्यस्तु मित्राणि प्रासादं पातयेत्तु यः । विषमं तु रसं दद्यादेकपङ्क्त्यां हि भुञ्जताम् । तेन पापेन लिम्पामि यद्येतदनृतं वदे । प्रवासशीला ये विप्राः क्रयविक्रयकारिणः । संध्यास्नानविहीनाश्च वेदशास्त्रविवर्जिताः । मद्यपस्त्रीसमासक्ताः परनिन्दारतास्तथा । परस्त्रीसेवका नित्यं परपैशुन्यसूचकाः । शूद्रान्नभोजकाश्चैव रसविक्रयकारकाः । तेन पापेन लिम्पामि नायामि यदि ते गृहम् । मद्याद्यं विक्रयेद्यस्तु शूद्रो लोभविमोहितः । सर्वाशी सर्वविक्रेता विप्राणामपि निन्दकः । विप्रवाक्यं परित्यज्य पाखण्डाभिरतस्तथा । तेन पापेन लिम्पामि नायामि यदि ते गृहम् । गां यः स्पृशति पादेन उदितेऽर्के प्रबुध्यते । एकाकी मिष्टमश्नाति विकर्मणि तथा रतः । मातापित्रोरभक्तश्च क्रियामुद्दिश्य याचकः । कन्याशुल्कोपजीवी च देवब्राह्मणनिन्दकः । एतेषा पातकं मह्यं यदि नायामि ते गृहम् । यः पठेत्स्वरहीनं च लक्षणेन विवर्जितम् । रथ्यां पर्यटमानस्तु वेदमुद्गिरते यदि । पठमानस्य विप्रस्य चाण्डालः शृणुते यदि । तेन पापेन लिम्पामि नायामि यदि ते गृहम् । वेश्यारताः सदा ये च देवदायनिवारकाः । तेषां पापेन लिम्पामि नायामि यदि ते गृहम् । शूद्रान्नेषु सदा सक्ताः शूद्रसंपर्कदूषिताः । संध्याभ्रष्टाश्च ये विप्रा दातुर्दाननिवारकाः । तेषां पापेन लिम्पामि यदि नायामि ते गृहम् । भर्तारमर्थहीनं च कुरूपं व्याधिपीडितम् । या न पूजयते नारी रूपयौवनगर्विता । तस्याः पापेन लिम्पामि यदि नायामि ते गृहम् । एकादशी च या माघे या सा शिवचतुर्दशी । पूर्वविद्धां प्रकुर्वीत तस्य पापस्य भाग्यहम् । अथ किं बहुनोक्तेन भो लुब्धक तवाग्रतः । यदि नायामि ते गेहं मम सत्यं भवेत्तव । तेन वाक्येन संतुष्टो व्याधो वै गतकल्मषः । जहार बाणं धनुषो मृगो मुक्तो वनं प्रति । जगाम प्रीतमनसा युक्तः सोऽपि वरानने । जलं पीत्वाथ हरिणः प्रविष्टो गहनं वनम् । गतोऽसौ तेन मार्गेण येन यातं मृगीद्वयम् । लुब्धकेन तदा तत्र जालिमध्ये स्थितेन हि । छित्त्वा बिल्वस्य पत्राणि निक्षिप्तानि शिवोपरि । अज्ञानाच्छिवपूजा तु कृता तेन तथा व्रतम् । ब्रुवञ्छिवं शिवं सोऽथ निःसृतो जालिमध्यतः । पापान्मुक्तोऽभवद्व्याधः शिवरात्रिप्रभावतः । यावन्निरीक्षते दिक्षु निशान्ते भोजनं प्रति । तावच्छिशुवृता चान्या मृगी तत्र समागता । दृष्ट्वा मृगीं तदा व्याधो बाणं धनुषि संदधे । यावन्मुञ्चति बाणं

१—प्रासादं देवगृहम् । २—दायो दानम् । 'दायस्तु वृत्ती तथा हरिणदानयोः' इति मेदिनीकोशात् ।
३—सत्यं सत्यफलम् ।

स तावत्प्रोवाच तं मृगी ।' मृग्युवाच— ' मा बाणं मुञ्च धर्मात्मन्धर्मं पालय सुव्रत । अहं त्ववध्या सर्वेषां सर्वशास्त्रनिदर्शनम् । शयानं मैथुनासक्तं मदनव्याधिपीडितम् । न हि हन्ति मृगं राजा मृगीं च शिशुना वृताम् । अथ त्वं धर्ममुत्सृज्य मां हनिष्यसि मानद । बालकांस्तु गृहे त्यक्त्वा आगमिष्याम्यहं पुनः । या भर्तारं परित्यज्य परपुंसि रता भवेत् । तस्याः पापेन लिम्पामि यदि नायामि ते गृहम् । ये कृताः शपथाः पूर्वं तवाग्रे व्याधसत्तम । ते सर्वे मम सन्त्वत्र यदि नायाम्यहं पुनः । व्याधेन सा तदा मुक्ता प्रस्थिता निजमन्दिरम् । व्याधोऽपि तत्सरस्त्यक्त्वा जगाम स्वगृहं प्रति । सर्वेषां वचनं ध्यायन्मृगाणां सत्यवादिनाम् । एतेषां घातको नित्यमहं यास्यामि कां गतिम् । एवं संचिन्तयन्गेहे दृष्टः क्षुधितबालकैः । निरामिषं तु तं दृष्ट्वा जग्मुस्तेऽपि निराशताम् । नान्नं मांसं गृहे तस्य भोजनं येन जायते । व्याधोऽपि स तदा तत्र तेषां वाक्यानि संस्मरन् । न भोजनं च निद्रां च लभते विस्मयान्वितः । आगमिष्यन्ति ते नूनं शपथैरतियन्त्रिताः । तानहं न हनिष्यामि सतां व्रतमनुस्मरन् । लुब्धकेन तदा मुक्तो मृगोऽसौ शपथैः कृतैः । स्वाश्रमं चाशु संप्राप्तो यत्र तद्धरणीद्वयम् । सद्यः प्रसूता तत्रैका द्वितीया रतिलालसा । तृतीयापि समायाता बालकैः परिवारिता । सर्वाः समेता एकत्र मरणे कृतनिश्चयाः । परस्परेण जल्पन्ति लुब्धकस्य विचेष्टितम् । ततो मृगीमृतुमतीं भुक्त्वा वाक्यं मृगोऽब्रवीत् । स्थातव्यमत्र युष्माभिः कर्तव्यं प्राणरक्षणम् । व्याघ्रद्वीपलुब्धकेभ्यो बालकानां च रक्षणम् । अहमत्र समायातः शपथैरतियन्त्रितः । अस्या ऋतुप्रदानाय पुनः संतानहेतवे । ऋतुमतीं तु यो भार्यां नैव सेवेत मोहितः । भ्रूणहत्या भवेत्तस्य धर्मश्चैव निरर्थकः । संतानात्स्वर्गमाप्नोति इह कीर्तिश्च शाश्वती । संततिर्यत्नतः पाल्या स्वर्गसौख्यप्रदायिका । अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च । येन केनाप्युपायेन पुत्रमुत्पादयेत्सुधीः । मया तत्रैव गंतव्यं यत्र व्याधस्य मन्दिरम् । सत्यं तु पालनीयं स्यात्सत्ये धर्मः प्रतिष्ठितः । तास्तद्भर्तृवचः श्रुत्वा प्रोचुर्धर्मयुतं वचः । अस्माकं मरणं श्लाघ्यं भर्त्रा सह मृगप्रभो । वयमप्यागमिष्यामस्त्वया सार्धं मृगोत्तम। यथा ते विप्रियं कान्त न स्मरामः कदाचन । पुष्पितेषु वनान्तेषु नदीनां संगमेषु च । कंदरेषु च शैलानां भवता रमिता वयम् । न कार्यमप्यतः कान्त जीवितेन त्वया विना । दीनानां प्रतिहीनानां जीवितं निष्प्रयोजनम् । मितं ददाति हि पिता मितं भ्राता मितं सुतः । अमितस्य हि दातारं भर्तारं का न पूजयेत् । अपि द्रव्ययुता नारी बहुपुत्रसुहृद्वृता ।

शोच्या सा बन्धुवर्गस्य पतिहीना कुरंगम । वैधव्यसदृशं दुःखं स्त्रीणामन्यन्न विद्यते । धन्यास्ता योषितो यास्तु म्रियन्ते भर्तुरग्रतः । नातन्त्री वाद्यते वीणा नाचक्रो वाह्यते रथः । नापतिः पूज्यते नारी अपि पुत्रशतैर्वृता । निर्धनो व्यसनी वृद्धो व्याधितो विकलस्तथा । पतितः कृपणो वापि भर्ता स्त्रीणां सदा गतिः । नास्ति भर्त्रा समो धर्मो नास्ति भर्त्रा समः सुहृत् । नास्ति भर्त्रा समो नाथः स्त्रीणां भर्ता गतिः परा । एवं विलप्य ताः सर्वा मरणे कृतनिश्चयाः । बालकैस्ताः समायुक्ता भर्तृशोकेन पीडिताः । तासां वाक्यं मृगः श्रुत्वा हृदि चिन्तापरोऽभवत् । सर्वथापि हि गन्तव्यं मया व्याधस्य संनिधौ । एकतः सत्यसंरक्षा कुटुम्बस्य क्षयोऽन्यतः । यदि गच्छामि तत्राहं कुटुम्बस्य क्षयो भवेत् । न वा प्रयामि तत्राहं मम सत्यं व्रजेत्पुनः । वरं पुत्रस्य मरणं भार्याया आत्मनस्तथा । सत्यलोपान्नरो नूनं सृष्ट्यन्ते नरकं व्रजेत् । तस्मात्सत्यं पालनीयं नरैः श्रेयोर्थिभिः सदा । सत्येन धार्यते पृथ्वी सत्येन तपते रविः । सत्येन वायवो वान्ति सर्वं सत्ये प्रतिष्ठितम् । एवं संचिन्त्य स मृगो धर्मान्हृदि मनोहरान् । ताभिः सह कुरंगीभिराश्रमात्तत्क्षणं ययौ । तस्मिन्सरसि संस्नात्वा कर्मन्यासं चकार ह । तच्च लिङ्गं नमस्कृत्य हृदि ध्यायन्सदाशिवम् । भक्ष्यं पानं परित्यज्य मैथुनं भोगमेव च । कामं क्रोधं तथा लोभं मायां मोक्षविनाशिनीम् । खाद्यपेयादिकं चैव लुब्धकाभिमुखो ययौ । तस्य भार्यास्तथा पुत्राः पृष्ठलग्ना व्रजन्ति वै । अनाशकव्रतं गृह्य मरणे कृतनिश्चयाः । भार्यापुत्रैः परिवृतो मृगस्तद्देशमागतः । क्षुधितो बालकैर्युक्तो लुब्धको यत्र तिष्ठति । मृगस्तं देशमागत्य कुटुम्बेन समन्वितः । पालयन्सत्यवाक्यानि लुब्धकं वाक्यमब्रवीत् ।' मृग उवाच— 'जहि मां प्रथमं व्याध पश्चाद्भार्याः क्रमेण तु । बालकांश्च ततः पश्चाद्वध्यतां मा विलम्बय । मृगाणां भक्षणाद्व्याध न ते दोषोऽस्ति कश्चन । सर्वे स्वर्गं तु यास्यामः शस्त्रपूता न संशयः । तवापि सकुटुम्बस्य प्राणयात्रा भविष्यति । एतच्छ्रुत्वा तु वचनं मृगोक्तं लुब्धकस्तदा । आत्मानं निन्दयित्वा तु हरिणं वाक्यमब्रवीत् ।' व्याध उवाच—'अहो मृग महासत्त्व गच्छ गच्छ स्वमालयम् । आमिषेण न मे कार्यं यद्भाव्यं तद्भविष्यति । सत्त्वानां हि वधात्पापं तर्जने बन्धने तथा । नैव पापं करिष्यामि कुटुम्बार्थं कथंचन । धर्माणां च दया मूलं सत्यं शाखा फलं दमः । त्वं गुरुर्मम धर्माणामुपदेष्टा हि सांप्रतम् । गच्छगच्छकुरङ्ग त्वं कुटुम्बेनसमन्वितः । न्यस्तानि तु मयाऽस्त्राणि सत्यं धर्मः समाश्रितः । तद्व्याधवचनं श्रुत्वा हरिणः प्राह तं पुनः ।

कर्मन्यासमहं कृत्वा त्वत्सकाशमिहागतः। हन्यतां हन्यतां शीघ्रं न ते पापं भविष्यति। मया दत्ता पुरा वाचा तया बद्धो न याम्यहम्। मया मम कुटुम्बेन त्यक्तो लोभः स्वजीवने। एतच्छ्रुत्वा तु वचनं लुब्धको वाक्यमब्रवीत्। त्वं गुरुस्त्वं पिता माता त्वं बन्धुश्च सखा सुहृत्। मया त्यक्तानि शस्त्राणि त्यक्तं मायादिकं बलम्। कस्य भार्या सुतः कस्य कुटुम्बं कस्य हे मृग। तैस्तैः स्वकर्म भोक्तव्यं मृग गच्छ यथासुखम्। इत्युक्त्वा लुब्धकस्तूर्णं भङ्क्त्वा चापं शरैः सह। मृगान्प्रदक्षिणीकृत्य नमस्कृत्याक्षमापयत्। प्रोचुर्व्याधं मृगास्तत्र वचः पीयूषसंनिभम्। एतस्मिन्नन्तरे नेदुर्देवदुन्दुभयो नभसि। आकाशात्पुष्पवृष्टिश्च बभूव सुमनोहरा। देवदूतः समायातो विमानं गृह्य शोभनम्।' देवदूत उवाच— 'अहो व्याध महासत्व सर्वसत्त्वभयंकर। विमानवरमारुह्य सदेहस्त्रिदिवं व्रज। शिवरात्रिप्रभावेण पातकं ते क्षयं गतम्। उपवासश्च संजातस्तथा वै निशि जागरः। यामे यामे कृता पूजा अज्ञानात्तु शिवस्य च। सर्वपापविनिर्मुक्तो गच्छ त्वं रुद्रमन्दिरे। मृगराज महासत्व सर्वापत्यसमन्वितः। भार्याभित्रयसंयुक्तो नाक्षत्रं पदमाप्नुहि। तव नाम्ना त्रयमृक्षं लोके ख्यातिं गमिष्यति। एतच्छ्रुत्वा तु वचनं लुब्धकोऽथ मृगास्तथा। विमानानि समारुह्य नाक्षत्रं पदमागताः। हरिणीद्वयमिश्रं तु दृश्यतेऽद्यापि पार्वति। तत्पृष्ठलग्नताराणामेकं तु मणिसंनिभम्। ऋक्षं लुब्धकनाम्ना तु दृश्यते द्योतनं शुभम्। तारात्रितयसंयुक्तं मृगशीर्षं तदुच्यते। बालकद्वितयं चाग्रे तृतीया पृष्ठतो मृगी। दृश्यन्ते तत्र संभ्रान्ता मृगशीर्षस्य संनिधौ। मृगराड् दृश्यतेऽद्यापि ऋक्षं व्योमगमुत्तमम्। अकामाज्जागरं रात्रौ तथोपोषणपूजनम्। जातं लुब्धकराजस्य तत्फलं परिवर्णितम्। ये नरा भक्तिभावेन शिवरात्रिव्रतं शुभम्। सोपवासं करिष्यन्ति जागरेण समन्वितम्। तेषां फलं तु वै वक्तुं ब्रह्मापि च जडायते। शिवरात्रिसमं नास्ति व्रतं पापभयापहम्। यत्कृत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः। यत्फलं माघमासे वै प्रयागे मज्जतां नृणाम्। वैशाखे द्वारकायां तु तपस्याषाढसेवनात्। गयायां पिण्डदानेन कार्तिके माधवाग्रतः। तत्फलं जागते नूनं श्रवणादेव पार्वति। अश्वमेधसहस्राणि वाजपेयशतानि च। कथाश्रवणमात्रेण तत्फलं प्राप्यते नरैः।' इति।

इति लिङ्गपुराणे शिवरात्रिमाहात्म्यम् ❀।

हेमाद्रौ स्कन्दपुराणे नागरखण्डे—अश्विनेय उवाच। 'कलिकालकृते किंचि-

---

१—तव नाम्ना मृगनाम्ना त्रय—इत्यत्र. म. मु।

व्रतं मे वद सन्मुने । स्वल्पायासं महापुण्यं सर्वपापप्रणाशनम् । बह्वायुषः सदा मर्त्या ब्रह्मन्कृतयुगे पुरा । त्रेतायां द्वापरे चैव न तु प्राप्ते कलौ युगे । तस्माद्वर्षव्रतं त्यक्त्वा किंचिदैकाहिकं वद । श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् । न हि प्रतीक्षते मृत्युः कृतं वाऽस्य न वा कृतम् । तस्य तद्वचनं श्रुत्वा भर्तृयज्ञ उदारधीः । अब्रवीत्सुचिरं ध्यात्वा ज्ञात्वा दिव्येन चक्षुषा । अस्ति राजन्व्रतं पुण्यं शिवरात्रीति संज्ञितम् । एकाहिकं महाराज सर्वपापप्रणाशकम् । तस्यां च दीयते दानं [illegible] जप्तं तथैव च । सर्वमक्षयतां याति रात्रिजागरणे कृते । अपुत्रो लभते पु[illegible] निर्धनो धनमाप्नुयात् । स्वल्पायुर्दीर्घमायुश्च शत्रूणां चैव संक्षयम् । यं [illegible] क्षयोऽमभिध्यायन्व्रतमेतत्समाचरेत् । तं तं समाप्नुयान्मर्त्यो निष्कामो मुक्तिम[illegible]म सत्यं तथा वर्षकृतात्पापान्मुच्यते नात्र संशयः । कपटेनापि चित्तेन यदि कुर्यात्प्र[illegible]ति नरकं यानि कान्यत्र लिङ्गानि चराणि स्थावराणि च । तत्र संक्रमते देवस्तस[illegible]। सत्येन यतो हरः । शिवरात्रिस्ततः ख्याता तेन सा हरवल्लभा । प्रार्थितः स सुरैः [illegible]स मृगो नुग्रहकाम्यया । भगवन्कलिकालेऽस्मिन्सर्वपापसमन्विते । वर्षपापविशुद्ध्यर्थं [illegible]स्मिन्स-क्षितौ व्रज । येन त्वत्पूजया पूता मर्त्याः शुद्धिमवाप्नुयुः । त[illegible]सदाशि-हुतं चैषामस्माकमुपतिष्ठते । तैरुच्छिष्टैश्च यद्दत्तं तद्रक्षांस्यदतेऽखिलम् । [illegible]यां मोक्ष-न चास्माकं किंचिदेवोपतिष्ठते । श्रद्धया मानवैर्दत्तं प्रभूतमपि शंकर ।' भग[illegible]तु पुत्राः 'माघमासस्य कृष्णायां चतुर्दश्यां सुरेश्वराः । अहं यास्यामि भूपृष्ठं रात्रौ नैव [illegible] परि-कलौ । लिङ्गेषु च समस्तेषु चरेषु स्थावरेषु च । संवसिष्याम्यसंदिग्धं सर्व[illegible]क्लेश-शुद्धये । तस्यां रात्रौ हि मे पूजां यः करिष्यति मानवः । मन्त्रैरेतैः सुरश्रेष्ठ विपा[illegible] स भविष्यति ।' मन्त्राश्च । ह्रां सद्योजाताय नमः । ह्रीं वामदेवाय नमः । ह्रूं अघोराय नमः । ह्रैं तत्पुरुषाय नमः । ह्रौं ईशानाय नमः । 'पञ्च वक्त्राणि संपूज्य गन्धपुष्पानुलेपनैः । वस्त्रैर्दीपैश्च नैवेद्यैस्ततोऽर्घ्यं संप्रदापयेत् । मन्त्रेणानेन मद्भक्तो ध्यात्वा मनसि मां स्थितम् । गौरीवल्लभ देवेश सर्पाढ्य शशिशेखर । वर्षपापविशुद्ध्यर्थमर्घ्यो मे प्रतिगृह्यताम् । ततः संपूजयेद्विप्रं भोजनाच्छादनादिभिः । दत्त्वा च दक्षिणां तस्मै वित्तशाठ्यविवर्जितः । ततो जागरणं कुर्याद्गीतवादित्रनिःस्वनैः । धर्माख्यानकथाभिश्च सद्धास्यैस्ताण्डवैस्तथा[1] । एवं करिष्यते योऽत्र व्रतमेतत्सुरेश्वराः । सर्वपापविशुद्ध्यर्थं प्रायश्चित्तं भविष्यति । तच्छ्रुत्वा त्रिदशाः सर्वे प्रणम्य शशिशेखरम् । संप्रहृष्टा

१–ताण्डवैरुद्धतनृत्यैः । 'ताण्डवोऽस्त्री नृणां तारे भवेदुद्धतनृत्ये च' इति मेदिनीकोशात् ।

नृपश्रेष्ठ स्वानि स्थानानि भेजिरे । प्रेषयामासुरुद्बोध्य नारदं मुनिसत्तमम् । प्रबोधनाय लोकानां शिवरात्रिकृते तदा । सोऽपि गत्वा धरापृष्ठं श्रावयामास सर्वतः । शिवरात्रेस्तु माहात्म्यं यदुक्तं शूलपाणिना । ततःप्रभृति संजाता शिवरात्रिर्धरातले।सर्वकामप्रदा पुण्या सर्वपातकनाशिनी । तत्र ते कीर्तयिष्यामि पुरावृत्तं कथावरम् । यादृशं नैमिषारण्ये लुब्धकस्यात्र कर्हिचित् । तत्रासील्लुब्धकः कश्चिज्जातिमात्रान्न कर्मतः । सुमनेनाभिभूतात्मा परवित्तापहारकः । न कदाचिद्धुतं तेन न दत्तं न जपः कृतः । क्षमां तु हृतं वित्तं लोकानां छलसंश्रयात् । कस्याचित्त्वथ कालस्य शिवरात्रिः समाभयो ।माघमासे सिते पक्षे सर्वपातकनाशिनी । तत्रास्त्यायतनं पुण्यं देवदेवस्य शूलिनः। गृह्य जागरणं रात्रौ प्रारब्धं बहुभिर्जनैः।नारीभिर्नरशार्दूल भूषिताभिः सुभूषणैः।अथासौ वरमारुह्यास चौर्यचित्तोऽत्र जागरम् । गच्छामि यदि काचित्स्त्री भूषणैः परिभूजातस्तथाक्रान्ता बाह्यतश्चास्माद्प्रासादन्यत्र यास्यति । ततो हत्वा समादाय भूषनिर्मुक्तो गाम्यहम् । एवं निश्चित्य मनसा गतस्तस्य समीपतः । कर्णिकारं समारुह्य युक्तो नाक्स्ततो हि सः । वीक्ष्यमाणो दिशः सर्वा नारीनिष्क्रमणोद्भवाः । चौर्यकर्मवचनं लुब्धीतार्तस्य विशेषतः । स्वल्पापि निद्रा नो जाता न च नारी विनिर्गता । मिश्रं तु हृत्ततो लिङ्गमनुद्भूतमवास्थितम् ।एतस्मिन्नेव काले तु प्रोद्गतस्तीक्ष्णदीधितिः । कनाम्ना तु चोराणां कामिनामसुखावहः । ततो नराश्च नार्यश्च जग्मुः स्वं स्वं निवेतयं नाउपवासपरिश्रान्ताः प्रणिपत्य महेश्वरम् । सोऽपि चोरो निराशश्च क्षुत्क्षामः तेऽप्याविलः । अवतीर्य द्रुमात्तस्माद्धर्मामि कंचिदाश्रितः । कालेन महता सोऽपि कत्वं समपद्यत । जातो जातिस्मरो भूत्वा दशार्णाधिपतेर्गृहे । उपवासप्रभावेण जागरस्य बलादपि । शिवरात्रौ तथा तस्य लिङ्गस्यापि प्रपूजनात् । ततो राज्यं समासाद्य पितृपैतामहं महत् । कारयामास लिङ्गस्य प्रसादं तस्य शोभनम् । वर्षे वर्षे समागत्य शिवरात्र्यामजागरत् । उपवासपरो भूत्वा गीतवादित्रनिःस्वनैः ।धर्माख्यानकथाभिश्च सामध्वनिभिरेव च । पूर्वोक्तमन्त्रैः संपूज्य अर्घ्यं दत्त्वा विधानतः । संतर्प्य ब्राह्मणान्कामैर्जगाम विषयं निजम् । कस्यचित्त्वथ कालस्य शिवरात्रिः समागता । प्रासादे तत्र मुनयः प्राप्ताः शाण्डिल्यपूर्वकाः । शाण्डिल्योऽथ भरद्वाजो यवक्रीतश्च गालवः । पुलस्त्यः पुलहो गार्ग्यस्तथाऽन्ये बहवो नृपाः । सोऽपि राजा बृहत्सेनो दशार्णाधिपतेः सुतः । संप्राप्तो जागरं कर्तुं तस्य लिङ्गस्य चाग्रतः। पूजयित्वा ततो देवं प्रणिपत्य ऋषींश्च तान् । उपविष्टस्तु तस्याग्रे अनुज्ञातो द्विजो-

त्तमैः । ते तु तस्याग्रतश्चक्रुः कथां बहुविधां नृप । राजर्षीणामतीतां च ब्रह्मर्षीणां विशेषतः । अथ तस्मिन्कथान्ते स तैः पृष्टो ब्रह्मवादिभिः । कौतुकाविष्टचित्तैश्च विस्मयोत्फुल्ललोचनैः । राजन् पृच्छामहे सर्वे वयं कौतूहलान्विताः । यदि ब्रवीषि नः सत्यं देवतायतने स्थितः ।' राजोवाच । 'यदि जानामि विप्रेन्द्राः कथयिष्याम्य-संशयम् । देवस्याग्रे तु संपूज्य सत्येनात्मानमालभे ।' ऋषय ऊचुः—'सुलभानि परित्यज्य कस्माद्दानान्यनेकशः । जागरं कर्तुकामोऽत्र स्वदेशादुपतिष्ठसि । वर्षे वर्षे सदा प्राप्ते नूनं त्वं वेत्सि कारणम् । रहस्यं यदि ते न स्यात्तद्ब्रूहि त्वं नराधिप । स-विलक्षस्मितं कृत्वा ततः प्राह सुदुर्मनाः । रहस्यं परमं ह्येतदवाच्यं हि द्विजोत्तमाः ॥ तथापि कथयिष्यामि मम देवो मतो यतः । ततः स कथयामास पूर्वदेहसमुद्भवम् ॥ मलिम्लुचत्वतो नूनं वृत्तान्तं हि नराधिप । चौर्यभावेन देवस्य पूजनं जागरस्तथा । उपवासो विनाऽन्नेन शिवरात्रौ पुराऽभवत् । जातिस्मरणसंयुक्तस्तेषां सर्वं यथातथम् । कथयामास भूपालो वृत्तान्तं पूर्वजन्मनः । ततस्ते मुनयः सर्वे साधुवादान्पृथग्विधान् । नृपोत्तमस्य राजर्षेः सदाशीर्भिः समन्वितान् । रात्रौ जागरणं कृत्वा प्रजग्मुः स्वांस्त-थाश्रमान् । सोऽपि राजा समभ्यर्च्य तं देवं तान्द्विजोत्तमान् । जगाम स्वपुरं पश्चात्कृत्वा रात्रिप्रजागरम् ।' भर्तृयज्ञ उवाच—'शिवरात्रिः समुत्पन्ना एवं भूमि-तले नृप । एवंविधं च माहात्म्यं तस्यास्ते परिजल्पितम् । तस्मात्सर्वप्रयत्नेन कार्या सा नृपसत्तम । कलिकाले विशेषेण यदीच्छेद्भूतिमात्मनः । यश्चैनां शृणुयाद्वापि पठेद्वा शिवसंनिधौ । दिनजात्पातकात्सोऽपि मुच्यते नात्र संशयः । नास्ति गङ्गासमं तीर्थं नास्ति देवो हरोपमः । शिवरात्रिसमं नास्ति व्रतं सत्यं मयोदितम् । सर्वरत्न-मयो मेरुः सर्वाश्चर्यमयं नभः । सर्वधर्ममयी राजञ्छिवरात्रिः प्रकीर्तिता । गरुडः पक्षिणां यद्वन्नदीनां सागरो यथा । प्रधानं सर्वधर्माणां शिवरात्रिस्तथोत्तमा ।' इति स्कन्दपुराणे नागरखण्डे शिवरात्रिव्रतमाहात्म्यं समाप्तम् । ❀

अथ वार्षिकशिवरात्रिव्रतोद्यापनम् । स्कन्द उवाच—'व्रतस्योद्यापनं धर्म कर्तव्यं किं च मानवैः । को [illegible] द्रव्या[illegible] कथं कार्यं वद प्रभो । [illegible]नर

भासंयुक्ते दीपैः सर्वत्र चोज्ज्वलम् । आचार्यं वरयेत्तत्र ऋत्विग्भिः सहितं शुचिम् । शिवरूपाश्च ते विप्राः पूज्याश्चन्दनपुष्पकैः । अनुज्ञातश्च तैर्विप्रैः शिवपूजां समाचरेत् । रुद्रनाम्ना नमोन्तेन ब्राह्मणानपि पूजयेत् । अव्रणं सजलं कुम्भं तस्योपरि तु विन्यसेत् । सौवर्णं राजतं ताम्रं मृण्मयं वापि कारयेत् । कुम्भोपरि न्यसेद्देवमुमया सहितं शिवम् । सौवर्णेप्यथ वा रौप्ये वृषभे संस्थितं शुभे । रत्नालंकरणैर्हैमैरलंकृत्य प्रपूजयेत् । वस्त्रयुग्मेन संवेष्ट्य बिल्वपत्रैः प्रपूजयेत् । पलेन वा तदर्धेन तदर्धेनाथ वा पुनः । उमामहेश्वरमूर्तिं पूजयेद्वृषभे स्थिताम् । हृदि संचिन्तयेद्देवं शुद्धस्फटिकसंनिभम् । व्याघ्रचर्मपरीधानंचिन्तयेदव्ययंहृदि ।' इति ध्यानम् । 'आगच्छदेवदेवेशमर्त्यलोकहितेच्छया । पूजयामिविधानेन प्रसन्नः संमुखो भव ।' इत्यावाहनम् । 'प्राज्यासनं कुरु प्राज्ञ निर्मलं स्वर्णनिर्मितम् । भूषितं विविधै रत्नैः कुरु त्वं पादुकासनम् ।' इत्यासनम् । 'गङ्गादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतम् । तोयमेतत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यताम् ।' इति पाद्यम् । 'गन्धोदकेन पुण्येन चन्दनेन सुगन्धिना । अर्घ्यंगृहाण देवेश भक्तिं मे ह्यचलां कुरु ।' इत्यर्घ्यम् । 'गङ्गाजलं समानीतं सुवर्णकलशे स्थितम् । आचम्यतां महादेव त्रैलोक्यव्याधिनाशन ।' आचमनम् । 'वस्त्रं सूक्ष्मं दुकूलं च देवानामपि दुर्लभम् । गृहाण त्वमुमाकान्त प्रसन्नस्त्वं सदा भव।' इति वस्त्रम् । 'श्रीखण्डं चन्दनं दिव्यं मलयाचलसंभवम् । विलेपनं सुरश्रेष्ठ गृहाण परमेश्वर।' इति गन्धम् । 'यज्ञोपवीतं सहजं ब्रह्मणा निर्मितं पुरा । आयुष्यं शुभवर्चस्यमुपवीतं गृहाण मे।' इति यज्ञोपवीतम् । 'माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो । मयाहृतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम् ।' इति पुष्पम् । 'वनस्पतिरसोद्भूतो गन्धाढ्यः सुमनोहरः ।'आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्।' इति धूपम् । 'आज्यं च वर्तिसंयुक्तं वह्निना योजितं च यत् । दीपं गृहाण देवेश त्रैलोक्यतिमिरापह ।' इति दीपम् । 'नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु । ईप्सितं मे वरं देहि परत्र च परां गतिम्।' इति नैवेद्यम् । 'इदं फलं मया देव स्थापितं पुरतस्तव । तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ।' इति फलम् । 'पूगीफलं महादिव्यं नागवल्लीदलैर्युतम् । कर्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम् ।' इति ताम्बूलम् । 'हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ।' दक्षिणाम् । 'सोमं च सगणं चैव पूजयित्वा महेश्वरम् ।' ततो रात्रौ प्रतियाममर्घ्यचतुष्टयादि दद्यात् । ततः 'पारायणस्तोत्रपाठै रात्रिशेषं नयेद्बुधः । पुनः प्रभातसमये कृत्वा

संध्यादिकाः क्रियाः । पुनः पूजां प्रकुर्वीत ततो होमं समारभेत् । तिलव्रीहियवैश्चैव पायसान्नेन भक्तितः । त्र्यम्बकमिति मन्त्रेण नमः शंभवे चेति च । गौरीर्मिमेति मन्त्रेण शतमष्टोत्तरं द्वयम् । होमं कुर्याच्च मतिमान्बिल्वपत्रैस्तु नामभिः । पूर्णाहुतिं ततो हुत्वा होमशेषं समापयेत् । ब्राह्मणान्भोजयेद्भक्त्या पूजयेच्च चतुर्दश । आचार्यं च सपत्नीकं वस्त्रालंकारभूषणैः । यज्ञोपवीतवस्त्रादि दद्यात्तेभ्यः पृथक्पृथक् । गां सवत्सां सवसनां नानालंकारभूषिताम् । दद्यादाचार्यवर्याय शिवो मे प्रीयतामिति । ततः सकुम्भां तां मूर्तिं सवस्त्रां वृषभस्थिताम् । सर्वालंकारसहितामाचार्याय निवेदयेत् । शंभो प्रसीद देवेश सर्वलोकेश्वर प्रभो । तव देव प्रदानेन मम सन्तु मनोरथाः। व्रतमेतत्कृतं यन्मे पूर्णं वापूर्णमेव च । सर्वं संपूर्णतां यातु प्रसादाद्भवतो मम । इति संप्रार्थ्य तान्विप्रान्प्रणम्य च पुनः पुनः । अजैकपादादिभिस्तेभ्यो दद्यात्कुम्भान्पृथक्पृथक् । अजैकपादहिर्बुध्न्यो भवः शर्व उमापतिः । रुद्रः पशुपतिः शंभुर्वरदः शिव ईश्वरः । महादेवो हरो भीमो नामान्येवं चतुर्दश । अथ प्रयोगः । संकल्पपूर्वकं नान्दीश्राद्धान्तं कृत्वाचार्यस्य चतुर्दशर्त्विजां च वरणं कुर्यात् । ततो मण्डपमध्ये लिङ्गतोभद्रे सर्वतोभद्रे वा एकं पूर्वादिदिक्षु प्रत्येकं त्रींस्त्रीन्मध्यकलशदक्षिणोत्तरयोर्द्वावित्येवं चतुर्दश महीद्यौरित्यादिकलशस्थापनविधिना साङ्गवरुणपूजां कुर्यात् । ततो मध्यमकलशे नन्दिनं तस्मिन्नुमामहेश्वरौ च स्थापयित्वा चतुर्दशकलशेषु लिङ्गानि स्थापयेत् । मध्यकलशस्थप्रतिमायामुक्तैः पौराणमन्त्रैः पूजां कुर्यात् । पात्रसंभव आवृत्तिः पुष्पनिवेदनान्ते आह्निकप्रकरणस्थशिवपूजायामुक्तावरणगणः पूज्यः । पञ्चामृतादिगता विशेषाः शिवरात्रिप्रकरणस्था यथासंभवं द्रष्टव्याः । ततो जागरणम् । प्रातर्नित्यक्रियान्ते आचार्यो होमसंकल्पान्ते यदत्र संस्थितमित्यादिना सर्षपादिविकरणं पञ्चगव्यप्रोक्षणादिना भुवं संशोध्याग्निं प्रतिष्ठाप्य तद्ध्यानान्ते तदैशान्यां लोकपालान्तदेवतासहितग्रहपूजां विधाय तदैशान्यां विधिना स्थापितकलशे वरुणं संपूज्य कलशस्य मुखे० देवदानवसंवादे० इति प्रार्थ्याग्नेः पश्चादुपविश्यान्वादध्यात् । चक्षुषी आज्येनेत्यन्ते आदित्यादीनुद्दिश्यार्कादिसमिच्चर्वाज्याहुतिषु अङ्गदेवतोद्देश्यकतदाहुतिषु चाष्टोत्तरशतादिचिकीर्षितसंख्यासंकीर्तनं कार्यम् । प्रधानदेवतां रुद्रमष्टोत्तरशतसंख्याकाभिर्बिल्वसमिदाहुतिभिस्तावतीभिः पायसाहुतिभिस्तावतीभिराज्याहुतिभिः उमां नन्दिनमजमेकपादमहिर्बुध्न्यं भवं शिवमुमापतिं रुद्रं पशुपतिं शंभुं वरदं शिवमीश्वरं महादेवं हरं भीमम् एताः षोडश देवता एकैकया पायसाहुत्या

शेषेण स्विष्टकृतमित्यादि । ततः स्थालीपाकविधिना पायसं श्रपयित्वा गृहसिद्धं वाऽऽज्यभागं यथान्वाधानं यजमानेन त्यागे कृते यथात्यागं ग्रहतदङ्गोद्देश्यकहोममृत्विजः कुर्युः ।प्रधानदेवताहोममाचार्यः कुर्यात् । कद्रुद्रायेति त्रिभिरेकैकमष्टोत्तरशतं कुर्यात् । एकैकं वा षट्त्रिंशदाहुतय इत्येवमष्टोत्तरशतासिद्धिः । उमायै० नन्दिने० अजाय० एकपदे० इत्यादिषोडशदेवताभ्यः एकैकपायसाहुतिं हुत्वा स्विष्टकृदादिप्रायश्चित्तहोमान्ते बलिदानपूर्णाहुती । ततः प्रणीतानिनयनसंस्थापनजपपरिस्तरणविसर्जनाग्न्यर्चनानि । ततो वरुणकलशोदकेन यजमानाभिषेकः । आचार्याय धेनुदानम् । ततोऽजैकपादादिसहितस्योमायुतश्रीरुद्रस्य ग्रहाणां चोत्तरपूजान्ते सोपस्करां श्रीरुद्रप्रतिमामाचार्यहस्ते प्रतिपाद्य सोपस्कराश्चतुर्दश प्रतिमा अजैकपादादिनाममन्त्रैः पूर्ववृतेभ्यश्चतुर्दशभ्यः प्रतिपाद्य 'व्रतमेतत्कृतं यन्मे पूर्णं वाऽपूर्णमेव वा । सर्वं संपूर्णतां यातु प्रसादाद्भवतां मम ।' इति तान्संप्रार्थ्य पूर्ववृतांश्चतुर्दश विप्रान्वस्त्रोपवीतकुण्डलादिभिः संपूज्य साचार्यांस्तान् भोजयित्वा चतुर्दशभ्यो यथाशक्ति दक्षिणां दत्त्वेश्वरार्पणं कुर्यात् । इति शिवरात्रिव्रतोद्यापनविधिः । अथाशक्तविषये उक्तमन्यत्र—'कुर्वन्ति ये वत्सरकं शिवस्य पूजां सुभक्त्या तु यथाकथंचित् । कृत्वा प्रयान्त्येव शिवस्य लोकं व्याधोऽपि यातोऽघकृदीशमस्मात् ।' इति ।

अथ मासशिवरात्रिनिर्णयः । तदारम्भस्तु मार्गशीर्षकार्तिकमाघकृष्णचतुर्दशीषु अन्यतमचतुर्दश्यां कार्यः । तदुक्तं मदनरत्ने स्कन्दपुराणे— 'आदौ मार्गशिरे मासि दीपोत्सवदिनेऽपि वा । गृह्णीयान्माघमासे वा द्वादशैवमुपोषयेत् ।' तथा 'दीपोत्सवमथासाद्य कृष्णायां या चतुर्दशी । द्वादशस्वपि मासेषु प्रकुर्यादिह जागरम् ।' तथा कृष्णपक्षे शिवरात्रिं प्रक्रम्य 'यतः प्रतिचतुर्दश्यां पूजा यत्नेन मे कृता । तथा जागरणं तत्र संनिधौ मे कृतं तथा।' इति । अस्य व्रतस्य वर्षसंख्योक्ता तत्रैव । 'एवं द्वादशवर्षान्ते द्वादशैव तपोधनान् । ' इति । हेमाद्रौ कालोत्तरखण्डे तु—'चतुर्दशाब्दं कर्तव्यं शिवरात्रिव्रतं शुभम्' इत्युक्तम् । अत्र चतुर्दशी बहुरात्रिव्यापिनी ग्राह्या । तस्यां रात्रौ प्रतियामं पूजाया जागरणस्य च विधानात् । तयोः सकलरात्रिसाध्यत्वात् । दिनद्वये रात्रौ सत्त्वेऽधिकरात्रिव्यापिनी ग्राह्या । तत्रैकदेशव्याप्तौ पूर्वा । 'रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः ।' इति ब्रह्मवैवर्तात् जयायोगस्य प्राशस्त्याच्च । हेमाद्रिकृत्यरत्नावलीकालतत्त्वविवेचनदीक्षितीयादावप्येवम् । मदनरत्ननिर्णयसिन्धुमयूखादौ तु वार्षिकशिवरात्रिवन्निर्णय इत्युक्तम् । यत्तु प्रदोषव्यापिनी ग्राह्येति तत्संन्यस्तविषयमिति दीक्षिताः ।

'मोक्षमार्गरतानां च मुनीनामूर्ध्वरेतसाम् । तेषामेव तु सा प्रोक्ता सामावास्या चतुर्दशी ।' इति विश्वरूपनिबन्धे नन्दिकेश्वरवचनात् । अथान्यापि वार्षिकमासशिवरात्रिव्रतकथा । सूत उवाच । 'कैलासशिखरासीनो देवदेवो जगद्गुरुः । पञ्चवक्त्रो दशभुजस्त्रिनेत्रः शूलपाशधृक् । भस्माङ्गव्यालभोगाढ्यः शशाङ्ककृतशेखरः । नीलजीमूतसंकाशः सूर्यकोटिसमप्रभः । क्रीडते भगवांस्तत्र गणैः स परिवारितः । विसृज्य देवताः सर्वास्तिष्ठते उमया सह । दृष्ट्वा तं देवदेवेशं प्रहस्योत्फुल्ललोचना । एकाकिनं सुरश्रेष्ठमपृच्छत्तत्र पार्वती ।' श्रीदेव्युवाच । 'कथयस्व महाभाग यद्गोप्यं व्रतमुत्तमम् । श्रुताश्च देवदेवेश व्रतानां विषयाश्रयाः । दानधर्माण्यनेकानि तपस्तीर्थान्यनेकशः । नास्ति मे निश्चयो देव भ्रामिताऽहं त्वया पुनः । व्रतानामुत्तमं देव भुक्तिमुक्तिप्रदायकम् । तदहं श्रोतुमिच्छामि प्रसीद कथयस्व मे । ईश्वर उवाच— 'शृणु देवि परं गुह्यं व्रतानामुत्तमं व्रतम् । यन्न कस्यचिदाख्यातं रहस्यं मुक्तिदायकम् । येनैव कथ्यमानेन यमोऽपि विलयं व्रजेत् । कथयामि व्रतं गोप्यं शृणुष्वैकाग्रमानसा । माघफाल्गुनयोर्मध्ये असिता या चतुर्दशी । शिवरात्रिस्तु सा ज्ञेया सर्वयज्ञोत्तमोत्तमा।दानधर्मैस्तपोयज्ञैः किं वा यज्ञशतैरपि । शिवरात्रिसमं नास्ति कृत्वा यज्ञसहस्रकम् । कृष्णा सा कलिहन्त्री च यममार्गविनाशिनी । न ते यमपुरं यान्ति यैः कृता सा चतुर्दशी।' देव्युवाच । 'कथं यमपुरं त्यक्त्वा नरः शिवपुरं व्रजेत्। एतन्मे कौतुकं देव कथयस्व मम प्रभो।' ईश्वर उवाच । 'शृणु देवेशि या वृत्ता कथा पौराणिकी पुरा । यमशासनसंहन्त्री शिवस्थानप्रदायिनी।कश्चिदासीत्पुरा काले निषादस्त्वामिषप्रियः । प्रत्यन्तदेशवासी च अचिकित्सोऽतिनिर्घृणः । मांसाशनं सदा तत्र कुटुम्बपरिपालकः । तनुपीनो धनुर्धारी श्यामाङ्गः कृष्णकंचुकः । बद्धगोधाङ्गुलित्राणो वामबाहौ सवर्मकः । धनुर्वामे गृहीत्वा तु दक्षिणे शरमुत्तमम् । निर्गतोऽसौ वनं दुर्गं निषादश्चामिषप्रियः । जीवघातेन तेनैव कुटुम्बपरिपालकः । वनं गत्वा निरीक्ष्यै वदिक्षुमार्गमितस्ततः । पदं च पदमार्गं च आश्रमेमृगशूकरान् । इतश्चेतश्च धावन्स आमिषे लुब्धमानसः । वनं च पर्वतं चैव भ्रममाणो निशां गतः । संप्राप्तं तेन नो किंचिन्मृगसूकरचित्तलम् । निराशो लुब्धको भूत्वा तदा ह्यस्तं गते रवौ । चिन्तयञ्जलमासाद्य तडागे जीवघातकः । निशामत्र करिष्यामि निश्चितं जीवमारणम् । गतोऽसौ जलमासीनस्तत्तीरे जालिमध्यतः । न्युब्जं करंकमादाय आत्मार्थे जलहेतवे । जालिमध्ये महालिङ्गं तिष्ठतेऽनादिसंज्ञकम् । बिल्व-

वृक्षो महादिव्यो जालिमध्येन हि स्थितः। गृहीत्वा तत्र पर्णानि मार्गशुद्ध्यर्थमाक्षिपत्। क्षिप्तानि तानि पर्णानि वायुनाभ्याहतानि वै। दक्षिणाशास्थितान्येव पल्लवैर्जालिजैः सह। प्लुतानि दैवादनिलो लिङ्गमूर्धनि चाक्षिपत्। लुब्धकेन कृतं पापं यातं तत्तत्क्षणात्क्षयम्। न दिवा भोजनं तस्य ह्यामिषे लुब्धचेतसः। सञ्चिन्तयमानस्य न निद्रा समजायत। तस्य गन्धं समासाद्य लुब्धकस्य वरानने। न तिष्ठन्ति मृगाः सर्वे शरघातभयार्दिताः। ततः सा शर्वरी क्षीणा उदिते सूर्यमण्डले। निराशः स्वगृहं शीघ्रं गतोऽसौ विधुराननः। तावद्डिम्भास्तु ते सर्वे निरीक्ष्य पितृमार्गगाः। निषादमपि ते दृष्ट्वा करान्ते समुपस्थिताः। नानीतमामिषं तेन निराशाः शिशवो गताः। रुदन्ति करुणैः शब्दैर्भोजनं दीयतां च नः। ततस्तूर्ष्णीं पिता भूत्वा ह्यधोवदनदुःखितः। भोजनं कुरु हे स्वामिंस्तस्य भार्या वचोऽब्रवीत्। उपोषितस्त्वहोरात्रं कष्टं तुभ्यं प्रवर्तते। भोजनं च कृतं तेन यथा दत्तं तु भार्यया। धर्महीनो निषादस्तु धर्मवार्तापराङ्मुखः। अकामाज्जागरं रात्रौ शिवरात्र्यां वरानने। कृत्वाऽसौ कालपर्यन्ते गृहीतो यमकिंकरैः। यमं नेतुं समारब्धः शूलपट्टिशधारिभिः। शिवेन प्रेषितास्तावद्विमानगणकोटयः। शीघ्रमानीयतां गत्वा शिवरात्रेरुपोषकः। यः पूर्वं लुब्धको भूत्वा करोति प्राणिनां वधम्। इति श्रुत्वा वचो दिव्यं गणास्ते गन्तुमुद्यताः। स्तूयमानाः परं देवं शिवं शान्तं निरामयम्। यावद्गच्छन्ति ते सर्वे तावत्पश्यन्ति लुब्धकम्। हन्यमानं लोहदण्डैर्बहुभिर्मुष्टिभिस्तथा। सर्वे कोलाहलं चक्रुरस्माकमिति ते गणाः। परस्परं युध्यमाना ऊचुस्ते यमकिंकराः।' यमकिंकरा ऊचुः—'न मुञ्चामो ह्यमुं दुष्टं पापिष्ठं जीवघातकम्। यमं यावन्न पश्येम शुद्धिश्च न चेतः।' शिवकिंकरा ऊचुः—'लुब्धकोऽयं पूर्वमासीत्पापिष्ठो यमकिंकराः। अनेन शिवरात्रिस्तु कृताकामेन कानने। तस्माच्छिवाज्ञया सर्वे विमानैः परमागताः। यावच्छिवं न पश्येम न मुञ्चामो ह्यमुं वयम्। ततो हन्तुं समारब्धं खड्गमुद्गरपट्टिशैः। प्रवृत्तं महद्युद्धमन्योन्यजयकाङ्क्षिणाम्। भग्नाङ्गसंधयः केचित्केचिन्मूर्छां समाश्रिता जर्जरीकृतदेहास्तु क्रन्दमानाः सुदारुणम्। त्राहि त्राहीति नो राजन्गणास्ते यममार्गम्। निषादोऽपि गणैर्नीतो यत्र देवो महेश्वरः। दृष्टमात्रस्तु देवेन निषादो गणतां गतः। स्थितोऽसौ देवदेवस्य कुण्डलाभरणोज्ज्वलः। तस्य दत्तं महेशेन विमानं सार्वकामिकम्। रुद्रकन्याशताकीर्णं पुष्पमालाकुलं वरम्। नानातूर्यसमायुक्तं सर्वरत्नोपशोभितम्। क्रीडते स चिरं कालं यावदाभूतसंप्लवम्। एवं स लुब्धको भूत्वा

क्रीडते शिवशासने । अथ दूता वदन्त्यग्रे धर्मराजानमन्तिके । रुधिरारुणवर्णाभा भिन्नगात्राः समंततः । पृष्टास्ते धर्मराजेन क्वासौ कालेन योजितः ।' दूता ऊचुः । 'शृणु राजन्यदाऽस्माकं युद्धं शिवगणैः सह । नीतोऽसौ पापकर्मा च निषादो जीवघातकः । अस्माभिर्गृह्यमाणस्तु गणैः शैवैः कथं हृतः । कथं शिवपुरं यातश्चित्रगुप्त विचारय । निरीक्ष्य पुस्तकं तेन न किंचित्सुकृतं कृतम् । धर्मबुद्धिर्नैतस्यास्ति धर्माधर्मं न विन्दति । एतन्मे लिखितं ज्ञानं सत्यं वेद वदाम्यहम् । इति श्रुत्वा निषादस्य चित्रगुप्ताच्छुभाशुभम् । नाहं चिन्तां करोमीह जन्तूनां पापकर्मणाम् । गत्वा निवेदयिष्यामि नियोगं तु शिवाग्रतः । एवमुक्त्वा गतः शीघ्रं यत्रास्ति शंकरः स्वयम् । तं दृष्ट्वा देवदेवेशमेतत्स्तोत्रमुदाहरत् । नमस्त्रैलोक्यनाथाय सृष्टिसंहारकारक । कालकूटविनाशाय कामनिर्दह ते नमः । अशुद्धो देवदेवासौ निषादः पापकर्मकृत् । मेरुमन्दरतुल्यानि दुष्कृतानि बहून्यपि ।' ईश्वर उवाच—'केनापराधितो धर्मः केन मानस्तु मर्दितः । किमर्थं दण्डमुद्रा तु त्यक्ता ते हि ममाग्रतः ।' धर्म उवाच—'त्वद्गणैर्देवदेवेश गत्वा पापस्य कारणात् । मदीयाः किंकरा देव घातिताः शक्तिमुद्गरैः । जीवघाती निषादोऽसौ सर्वधर्मबहिष्कृतः । कर्मणोपार्जितं येन निश्चितं मम शासनम् । अयोग्यस्तव देवेश गणेषु विनियोजने । तेनाहमागतो देव त्यक्त्वा मुद्रां वदाम्यहम् ।' शंकर उवाच ।'निषादः पापकर्मा च जीवन्प्राणिवधेन च । कदाचित्स वनं गत्वा न किंचित्प्राप्तवांस्तदा । दिनान्ते च निराशोऽसौ तृट्क्षुद्युक्तो जलान्तिके । आरोदाश्रमं मध्ये महाजाल्यां तदा निशि । स तु बिल्वस्य पत्राणि गृहीत्वा मार्गतोक्षिपत् । कथंचिद्दैवसंयोगाद्वायुना लिङ्गमूर्धनि । निक्षिप्तानि प्रेतराज कोमलान्यपि काः । शिवरात्रिः कृता तेन जाग्रता मृगहेतुना । शिवरात्रिप्रभावेण स गतो मम शासनम् । गृह्ण गृह्ण महाधर्म मुद्रां दण्डं यथेच्छया । पालनाय स्वधर्मस्य याहि सत्यं मयोदितम् । स्वगृहं गम्यतां शीघ्रं दण्डं गृह्य समुद्रकम् । ताडयन्पापकर्माणं पालयन्वै धर्मिणम् । एवमुक्तो धर्मराजो गतोऽसौ स्वगृहं शुभम् । एवं देवि मयाख्यातं शिवरात्रिमहाव्रतम् ।' देव्युवाच ।'अकामो लुब्धको देव कृत्वा ह्यमरतां गतः । अर्यमेतद्देवेश ममाद्भुततमं महत् । कामतः शास्त्रदृष्टेन यत्कर्तव्यं शिवव्रतम् । हं श्रोतुमिच्छामि प्रसादाद्वक्तुमर्हसि ।' शिव उवाच—'शृणु देवि महाभागे सुतचारुहासिनि । शिवरात्रिप्रभावश्च न कथ्यः पापकर्मणाम् । माघस्य तु या कृष्णा फाल्गुनादौ चतुर्दशी । सा तु पुण्या तिथिर्ज्ञेया सर्वपापविनाशिनी शान्तात्मा

क्रोधहीनस्तु तपस्वी ह्यनसूयकः । तस्मै देयमिदं देवि गुरुपादानुगे सदा । अन्यथा यो ददातीदं स दाता नरकं व्रजेत् । वर्षे वर्षे महादेवि नरो नारी पतिव्रता । वीक्षयामि जगत्सर्वं को मां भक्त्या प्रपूजयेत् । शिवमन्त्रैर्जपं कृत्वा होममर्चनदीपकम् । जागरं शिवरात्र्यां तु शिवं पश्येत्समाहितः । मम भक्तो जनो देवि शिवरात्र्यामुपोषकः । गणत्वमक्षयं दिव्यमक्षयं शिवशासनम् । सर्वं कृत्वा तु बुभुजे भोगानमृतसंभवान् । एवं द्वादश वर्षाणि शिवरात्र्यामुपोषकः । यो मां जागरते रात्रिं मनुजः स्वर्गमारुहेत् । अकृत्वा मां न जानाति व्रतमेतदुदाहृतम् । शिवं च पूजयित्वा यो जागर्ति च चतुर्दशीम् । मातुः पयोधररसं न पिबेत्स कदाचन । यदीच्छेच्चाक्षयान्भोगान्दिवि देवसमोपमान् । आगमोक्तविधिं कृत्वा प्राप्नोति सकलं फलम् । आदौ मार्गशिरे मासि दीपोत्सवदिनेपि वा । गृह्णीयान्माघमासे वा द्वादशैवमुपोषयेत् । निशि जागरणं कृत्वा दीपोद्द्योतितदिङ्मुखः । गीतवाद्यविनोदेन पूजाजाप्यैः शिवे रतः । एवं द्वादशवर्षान्ते द्वादशैव तपोधनान् । आचार्यं शिवशास्त्रज्ञं ब्राह्मणांश्च विशेषतः । आमन्त्र्य परया भक्त्या गृहं गत्वा तपोधनान् । आचार्यं भक्तियुक्तश्च गृहीत्वा चरणद्वये । आगच्छ मे गृहं तात कृतकृत्यं गृहं कुरु । आमंत्र्य निशि तानेवं प्रभाते विमले पुनः । गृहीत्वोभयलिङ्गं तु स्थावरं जङ्गमं पुनः । घृतेनाभ्यज्य यत्नेन सुगन्धैर्मल्लिकादिभिः । पञ्चामृतेन दिव्येन स्नाप्य चोद्वर्तनादिभिः । स्नापयेद्वारिकुम्भानां सहस्रेण शतेन वा । पञ्चाशता तदर्धेन स्नापयेच्छीतलेन तु । चन्दनेन विलिप्याथ स्थावरं जङ्गमं तथा । शतपत्रैर्जातिपुष्पैरर्चयेद्बिल्वपत्रकैः । दीपान्दिक्षु च सर्वासु प्रज्वाल्य सर्वनांस्तदा । नैवेद्यमपि भक्ष्यांश्च क्षीरखण्डसमण्डकान् । गुडाढ्यलड्डुकांश्चैव अन्नं च रुचिरं बहु । निवेदयेत्तथैतानि गुरुदेवतपस्विनाम् । देवाग्रे तु गुरुं पूज्य कृत्वा मण्डलकं शुभम् । सुसूक्ष्माणि च वस्त्राणि शय्यां सोपस्करामपि । द्वादशैव तु गा दद्यात्परिधानादिकं तथा । अश्वं वा दक्षिणामेव प्रदद्याज्जुहुयात्तिलान् । दत्त्वा तु भोजयेत्सर्वान्गुरूंश्चैव तपस्विनः । पश्चात्क्षमापयेद्देवं प्रीयतां मे महेश्वरः । सर्वं चैव तथाचार्ये शिवव्रतपरायणे । गन्धादिभिर्विविधैः सर्वानन्यांस्तत्र समागतान् । दक्षिणाभिश्च कुम्भैश्च नवान्नैश्च प्रपूजयेत् । तस्मान्न च्यवते स्थानात्कल्पकोटिशतैरपि । अथातः कालपर्याये द्रष्टुं याति स्वयम्भुवम् । सहितो लोकपालैश्च विमानैः सर्वकामिकैः । ततः पश्येन्महादेवं नानागणसमावृतम् । तं दृष्ट्वा स्तौति देवेशं शिवं त्रिभुवनेश्वरम् । नमस्तुभ्यं जगन्नाथ चन्द्रार्धकृतशेखर । नमस्ते उमया युक्त भुक्तिमुक्तिप्रदायक । नमस्ते कामद-

१–सघनान्सकर्पूरान् । २–दद्यादिति शेषः ।

हन त्रैलोक्यव्यापिने नमः। नमस्ते कालकालोग्रकालभीतोऽस्मि शंकर। ' शिव उवाच–' तुष्टोऽहं तव भक्तस्य शिवरात्रेरुपोषक। वरं ददामि तं तुभ्यं देवदानवदुर्लभम्। एताः कन्या महादेव्यास्त्रिनेत्राश्च चतुर्भुजाः। रूपयौवनसंपन्नाः पीनोन्नतपयोधराः। हेमगौर्यो महातेजःसंयुक्ताः सूर्यसंनिभाः। देवाङ्गवस्त्रसंछन्नाश्चन्दनागुरुचर्चिताः। सर्वलक्षणसंपन्नाः कुण्डलैर्द्योतिताननाः। एवंविधा मया दत्ता मनस्विन्यः सुमध्यमाः। विमानकोटिसंयुक्ताः सर्वाभरणभूषिताः। क्रीडस्व च महाभाग गणस्त्वं मम पुत्रक। सर्वगामी भवाद्येह लोकालोकं चराचरम्। तुष्टोऽहं तव भक्तस्य शिवव्रतरतस्य च। रुद्रलोकेषु याः कन्यास्त्रिनेत्राश्च चतुर्भुजाः। अतीव भर्तृभक्ताश्च यथाहमुमया सह। ताभिः सार्धं महाभाग भुंक्ष्व भोगान्यथेप्सितान्। कल्पकोटिसहस्राणि कल्पकोटिशतानि च। तदन्ते ब्रह्मभावेन शिवसायुज्यतां व्रज। सर्वव्यापी भव त्वं च लीयसे परमे पदे। परात्परतरं नास्ति शिवरात्रिः परात्परम्। न पूजयति भूतेशं रुद्रं त्रिभुवनेश्वरम्। जन्तुर्जन्मसहस्रेषु भ्रमते नात्र संशयः। यदा तद्भावसंयुक्तः स रुद्रगणतां व्रजेत्। तत्र दत्तं हुतं जप्तमर्चनं गुरुपूजनम्। जागरः शिवरात्र्यान्तु सर्वं तच्चाक्षयं भवेत्। कश्चित्पुण्यविशेषेण व्रतहीनोऽपि यः पुमान्। जागरं कुरुते तत्र स रुद्रमयतां व्रजेत्। सूर्यग्रहे कुरुक्षेत्रे हिमवत्कुरुजाङ्गले। शिवरात्र्यां तथा भक्त्या दत्तं भवति चाक्षयम्। अखण्डितव्रतो यो हि शिवरात्रिमुपोषयेत्। स सर्वकाममाप्नोति रुद्रेण सह मोदते। अर्णवा यदि शुष्यन्ति क्षीयते हिमवानपि। मेरुमन्दरलङ्काश्च श्रीशैलो विन्ध्य एव च। चलन्ते चैकदा सर्वे निश्चलं हि शिवव्रतम्। अतस्तस्यां त्रयोदश्यां कृष्णायामेकभुक्परः। मन्त्रेणानेन गृह्णीयान्नियमं भक्तिमान्नरः। शिवरात्रिव्रतं ह्येतत्करिष्येऽहं महाफलम्। निर्विघ्नमस्तु मे चात्र त्वत्प्रसादाज्जगत्पते। रात्रिं प्रपद्ये जननीमृग्भ्यां चैव समाहितः। गृह्णीयाद्ब्राह्मणांश्चैव नियमं वेदविद्विभो। शिवमिष्ट्वा गुरुं दृष्ट्वा स्वाचान्तः शुचिरात्मवान्। संकल्प्यैवं व्रतं कुर्यात्पूर्वेद्युः प्रातरेव च। ततोऽह्नश्चरमे भागे स्वगायत्र्या ह्यतन्द्रितः स्नानं कृष्णतिलैः कुर्याद्गृहे वाथ जलाशये। रम्यं निशामुखे गच्छेच्छिवस्यायतनं व्रती। दिनान्ते स्नपनं कुर्याच्छिवनाम्ना प्रपूजयेत्। धूपनैवेद्यगन्धैश्च नृत्यगीतैः सदीपकैः। शंखचक्रनिनादैश्च कुर्यात्पुस्तकवाचनम्। द्वितीये प्रहरे चैव नाम्ना शंकरमर्चयेत्। पूर्वोक्तेन विधानेन पूजयेत्परमेश्वरम्। तृतीये प्रहरे देवं नाम्ना माहेश्वरं तथा। यामे चतुर्थे

१ ऋग्वेदे प्रसिद्धाविमौ मन्त्रौ।

संप्राप्ते रुद्रं नाम्ना तु पूजयेत् । य एवं भक्तियुक्तश्च जागरं कारयेन्निशि । सकलं फलमाप्नोति सत्यमेतद्वरानने । उषःस्नानं जपो होमोऽर्चयेच्छ्रीशिववत्सलान् । श्वेतान्कुम्भान्प्रदद्याच्च यथाशक्त्या सदक्षिणान् । पूजयेद्ब्राह्मणान्भक्त्या व्रते माहेश्वरे स्थितान् । वाचयेच्छिवशास्त्रं च स गच्छेच्छिवमन्दिरम् । उभौ तौ पुण्यकर्माणौ नियतौ स्वर्गगामिनौ । शिवव्रती सदाख्यानं यः पठेच्छिवसंनिधौ । शिवलोकमवाप्नोति शिवेन सह मोदते ।' इति स्कन्दपुराणोक्ताऽन्या शिवरात्रिव्रतकथा । इति फाल्गुनकृष्णचतुर्दशी ।

अथ फाल्गुनशुक्लचतुर्दशी । मार्कण्डेय उवाच—'शुक्लपक्षादथारभ्य फाल्गुनस्य नराधिप । पूजयेत्तु चतुर्दश्यां सोपवासो महेश्वरम् । गन्धमाल्यनमस्कारधूपदीपान्नसंपदा । व्रतान्ते गां तथा दत्त्वा ह्यग्निष्टोमफलं लभेत् । एतदेव व्रतं कृत्वा शुक्लपक्षे तु वत्सरम् । पौण्डरीकमवाप्नोति कुलमुद्धरति स्वकम् । चतुर्दशीद्वयं चैतत्कृत्वा संवत्सरं नरः । मासि मासि तथा भक्त्या सर्वान्कामानवाप्नुयात् । आसाद्य कामान्स महेश्वरस्य तत्रोष्य कालं सुचिरं च राजन् । सायुज्यमायाति परात्परस्य महेश्वरस्याप्रतिमस्य तस्य ।' इति विष्णुधर्मोक्तं महेश्वरव्रतम् । अस्यामेव शिवं संपूज्य वृषदानं कुर्यात् । तदुक्तं वीरमित्रोदये अग्निपुराणे—'यश्चरेदब्दमेकं तु भक्तः शिवपरो नरः । पूजयंश्च चतुर्दश्यां फाल्गुनस्य यत्नवतः । संपूज्य विधिवद्भक्त्या वृषं सर्वगुणान्वितम् । दद्याद्विप्राय राजेन्द्र शिवो मे प्रीयतामिति । एतच्छिवव्रतं नाम महापातकनाशनम् । शिवरूपधरो नित्यं शिवलोके महीयते ।' इति । इति फाल्गुनशुक्लचतुर्दशी ।

सनत्कुमार उवाच— 'यथाक्तरं परं ब्रह्मन्नपरं शृणु भद्रदम् । चतुर्दश्यां महाभाग सर्वरोगार्तिशान्तये । ज्वरगुल्मप्लीहशूलकुष्ठातीसारसंयुतैः । मर्त्यैर्नित्यमिदं कार्यं तदार्तिव्यपनुत्तये । स्नातुं च कृतसंकल्पः सर्वकामविवर्जितः । आदित्यमुपतिष्ठेत गायत्रीं च जपन्मुहुः । उदयात्पूर्वमारभ्य यावदस्तं गतो रविः । निराहारो जितक्रोधस्तावत्तिष्ठेत्समाहितः । रवावस्तं गते देवमर्चयेत्पुरुषोत्तमम् । उपोष्य विधिवत्स्नात्वा तथा पर्वणि सुव्रत ।' एतच्छुक्लचतुर्दशीव्रतम् । हेमाद्रौ देवीपुराणे—'तथा कृष्णचतुर्दश्यां भौमाहे पितृन्तर्पणे । संवत्सरकृतं पापं तत्क्षणादेव नश्यति ।' इति भौमवारयुक्तकृष्णचतुर्दश्याः

पुण्यत्वमुक्तम् । 'अङ्गारकदिने प्राप्ते चतुर्थी वा चतुर्दशी ।' इति च पूर्वमेवोक्तम् ।

अथ सिद्धविरुद्धादिकं लिख्यते । चतुर्दशी शनिवारेण सिद्धा रविवारेण विरुद्धा। सूर्ये विशाखाभरणीत्युक्तमेव । अत्र च शत्रुवधादिकं कार्यम् । तदुक्तम्- 'चतुर्दश्यां चतुर्थ्यां च नवम्यां चारिमर्दनम् 'इति । अत्र क्षौरं यात्रां च वर्जयेत् । विशेषतो योगिनीसांमुख्याद्वायव्ये यात्रा न कार्या । अत्र पर्वत्वाद्दन्तधावनं वर्ज्यम् । सर्वचतुर्दशीषु तिथीशत्वाच्छिवः पूज्यः ।

श्रीमद्दिल्लीशसेनोद्भटविकटभटोद्दण्डमत्तेभसिंह-
श्चण्डोन्माद्यत्तुरुष्कक्षुभितवसुमतीपालने धर्मराजः ।
पौत्रः श्रीकृष्णसिंहक्षितिपकुलमणेर्विष्णुसिंहस्य पुत्रः
श्रीमान् राजाधिराजो जयहरिरमराधीशवत्कौ सुखी स्तात् ॥ १ ॥
श्रीमत्पण्डितदेवभट्टतनयः श्रीराघवाङ्घ्रिद्वय-
ध्यानावाप्तसमस्तकामनिवहः सम्राट् स रत्नाकरः ।
तुष्ट्यै श्रीजयसिंहवर्मनृपतेः कल्पद्रुमे कामदं
गुच्छं षोडशकाभिधं मनुतिथेर्निर्णायकं व्यातनोत् ॥ २ ॥

इति देवभट्टात्मजपौण्डरीकयाजिश्रीरत्नाकरविरचिते जयसिंहकल्पद्रुमोद्द्योते चतुर्दशीनिर्णयः समाप्तः ॥ १६ ॥

---

## अथ पौर्णमासीनिर्णयः ।

अथ पौर्णमासी निर्णीयते। तत्रादौ पौर्णमासीध्यानम् 'शशगा पूर्णिमा शुभ्रा मौक्तिकाभरणान्विता । सुधापूर्णघटाधारवामदक्षिणबाहुका ।' इति।पौर्णमासी तु वटसावित्रीव्रतव्यतिरिक्तसर्वव्रतेषु परा ग्राह्या । ' भूतविद्धा न कर्तव्या दर्शपूर्णा कदाचन । वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम् ।' इति ब्रह्मवैवर्तात् । 'पूर्वविद्धा तु कर्तव्या सर्वाभिर्व्रतिभिर्नरैः । पौर्णमासी महीपाल परैव नियमे गता।'इति माधवीये पद्मपुराणवचनाच्च । 'सावित्रीव्रतमन्तरेण भवतोऽमापौर्णमास्यौ परे'इति दीपिकोक्तेश्च उपवासे परैव 'एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी।अमावस्या तृतीया च ता उपोष्याः परान्विताः।'इति निर्णयामृतधृतमाधववचनात्। यत्तु-'षष्ठ्येकादश्यमावस्या पूर्वविद्धा तथाऽष्टमी । पूर्णिमा परविद्धा च नोपोष्यं तिथिपञ्चकम् । ' इति ब्रह्मवैवर्तवचनम् । यत् ' चतुर्दश्या च पूर्णिमा '-इति युग्मवाक्यम् । तत्सावित्री-

व्रतविषयम्। पूर्वोदाहृतएकादश्यष्टमीषष्ठी इति वचनविरोधात्। सावित्रीव्रते तु पूर्वैव ग्राह्या। 'प्रतिपत्पञ्चमी भूता सावित्री वटपूर्णिमा। नवमी दशमी चैव नोपोष्याः परसंयुताः।' इति ब्रह्मवैवर्ते परविद्धायां निषेधात्। यदा चतुर्दश्यष्टादशनाडिका भवति तदा सावित्रीव्रतमपि। तत्र परित्याज्यम्। 'भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम्।' इति स्मृतेः इति माधवः। अन्यस्मिन्नेव विषयेऽष्टादशनाडीवचनस्य वर्जयित्वेति विशेषवचनेन बाधाद्भूतविद्धैव ग्राह्येति निर्णयसिन्धौ। सावित्रीव्रतं ज्येष्ठपूर्णिमायां वक्ष्यते। सर्वासु पूर्णिमासु अमावास्यावच्छ्राद्धं नित्यम्। 'अमावास्याव्यतीपातपौर्णमास्यष्टकासु च। विद्वाञ्छ्राद्धं प्रकुर्वाणो नरकं नोपपद्यते।' इति पितामहेन अकरणे प्रत्यवायोक्तेः। तच्चापिण्डं कार्यम्। तदुक्तं निर्णयदीपे गर्गेण—'पौर्णमासीषु सर्वासु निषिद्धं पिण्डपातनम्। वर्जयित्वा प्रौष्ठपदीं यथा दर्शस्तथैव सा।' इति। इति सामान्यपौर्णमासीनिर्णयः।

अथ पौर्णमासीकृत्यानि। तत्र चैत्रपौर्णमास्यां दमनेन शिवपूजोक्ता वायवीये—'संवत्सरकृतार्चायाः साफल्यायाखिलान्सुरान्। दमनेनार्चयेद्देवं विशेषेण सदाशिवम्।' इति। दमनार्पणविधिस्त्वेकादशीप्रकरणेऽभिहितः। मेषस्थे रवौ याऽमावास्या तदन्ते चान्द्रे या पौर्णमासी सावित्री एतत्क्रमेणान्या अपि। तदुक्तं हरदत्तेन—'मेषादिस्थे सवितरि यो यो दर्शः प्रवर्तते। चान्द्रमासास्तत्तदन्ताश्चैत्राद्या द्वादश स्मृताः। तेषु या या पौर्णमासी सा सा चैत्र्यादिका स्मृता। कदाचित्केन योगेन नक्षत्रस्थेति निर्णयः।' इति। अस्यामेव चन्द्रपूजा कार्या। तदुक्तं निर्णयामृते देवीपुराणे [illegible] प्रक्रमे-'पौर्णमास्यां तथा कार्या सर्वकार्यसमृद्धये।' पूजेति प्रकृतम्। 'कार्तिकीं [illegible] ध्याय क्रामिकं लभते फलम्' इति। इयं मन्दरविगुरुवारेण युक्ता [illegible] त्युक्तं ब्रह्मपुराणे—'मन्दे वाऽर्के गुरौ वापि वारेष्वेतेषु चैत्रिकी। तत्राश्वमेधिकं पुण्यं दानेन लभते नरः। दानमक्षयतां याति पितॄणां तर्पणं तथा।' इति। चित्रानक्षत्रयुक्तायामस्यां चित्रवस्त्रप्रदानेन सौभाग्यमवाप्नोतीति। अस्यामेव निकुम्भपूजा कार्या। तदुक्तं हेमाद्रौ आदित्यपुराणे-सनत्कुमार उवाच—'उपोष्य च चतुर्दश्यां पौर्णमास्यां हरिं यजेत्। चैत्रे मासि निकुम्भश्च पिशाचैः सहितो बली। याति योद्धुं पिशाचाश्च सिकताद्वीपवासिनः।' इत्यादि। अत्र मृण्मयं तृणमयं वा पिशाचं कृत्वा गन्धमाल्यादिभिरपूपादिभिश्च मध्याह्ने संपूज्य पुनश्चन्द्रोदये पूजयित्वा स्वस्तिवाचनं कृत्वा ब्राह्मणान्विसृज्य द्वितीयदिवसे समीपस्थं पर्वतमारुह्य तत्र सोपस्करपिशाचं विसृज्य गृहमागत्य गीतवादित्रनिर्घो-

षैर्जनकोलाहलैर्महोत्सवं कृत्वा दृढैः काष्ठैः सुवेष्टितं तृणमयं सर्पं कृत्वा तेन दिनचतुष्टयं क्रीडित्वा खण्डशः कृत्वा । 'सर्पोपसर्पशमनं तच्च खण्डं गृहे गृहे । पूजितव्यं सुगुप्तेन रक्षितव्यं च वत्सरम् ।' इत्यन्तेन ग्रन्थेन । महाचैत्र्यादीनां लक्षणमुक्तं गार्ग्येण—'माससंज्ञे यदा ऋक्षे चन्द्रः संपूर्णमण्डलः । गुरुणा याति संयोगं सा तिथिर्महती स्मृता ।' इति । शंकरगीतायाम्—'एकराशिगतौ काले यदा गुरुनिशाकरौ । सा पौर्णमासी महती सर्वपापहरा स्मृता ।' तथा 'पौर्णमासीषु सर्वासु मासर्क्षसहितासु च । दत्तानामिह दानानां मूलं दशगुणं भवेत् ।' इति ॥

इति चैत्रीकृत्यम् ।

अथ वैशाखीकृत्यम् । अस्यां शृतान्नं सोदकुम्भं धर्मराजप्रीतये देयमित्युक्तं जाबालिना—'शृतान्नमुदकुम्भं च वैशाख्यां च विशेषतः । निर्दिश्य धर्मराजाय गोदानफलमाप्नुयात् ।' इति । शृतं पक्वम् । भविष्ये पाद्मे च—'वैशाख्यां विधिवत्स्नात्वा भोजयेद्ब्राह्मणान्दश । कृशरं सर्वपापेभ्यो मुच्यते नात्र संशयः ।' इति । अस्यामेव सप्तभ्यः पञ्चभ्यो वा ब्राह्मणेभ्यः क्षौद्रयुक्तांस्तिलान्दत्त्वा तैः स्वस्ति वाचयीत । तदुक्तं विष्णुधर्मोत्तरे—'वैशाख्यां पौर्णमास्यां तु ब्राह्मणान्सप्त पञ्च वा । क्षौद्रयुक्तैस्तिलैः[1] कृष्णैर्वाचयेद्यदि चेन्नरः । प्रीयतां धर्मराजेति यद्वा मनसि वर्तते । यावज्जीवकृतात्पापात्तत्क्षणादेव मुच्यते' इति । अस्यां कृष्णाजिनदानं कार्यम् । निर्णयामृते पुराणसमुच्चये—'वैशाख्यां पौर्णमास्यां तु विशाखासु विशेषतः । यस्तु कृष्णाजिनं दद्यात्सखुरं [illegible] तिलैः प्रच्छाद्य वासोभिः सर्ववस्त्रैरलंकृतम् । ससमुद्रगुहा तेन सशैलवनकानन[illegible]वता दत्ता पृथिवी नात्र संशयः ।' इति । तत्रैव विष्णुः—'कृष्णाजिने तिलान्कृत्वा [illegible] सर्पिषा । ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ।' इति । अस्यामेवोदकुम्भदानमुक्तं हेमाद्रौ भविष्ये—'कुम्भान्स्वच्छजलैः पूर्णान्हिरण्यान्नसमन्वितान् । वैशाख्यां ब्राह्मणे दत्त्वा न शोचति कृतान्ततः ।' इति । अस्यामेव तिलैः स्नानं हवनं तिलपात्रदानं तिलतैलेन दीपाः पितृतर्पणं मधुयुक्तं तिलयुक्तं ब्राह्मणतर्पणं च कार्यम् । तदुक्तं मदनरत्ने आदित्यपुराणे—सूत उवाच—'वैशाख्यां पौर्णमास्यां तु सृष्टाः कमलयोनिना । तिलाः कृष्णाश्च गावश्च तृप्तये सर्वदेहिनाम् । तस्मात्कार्यं तिलैः स्नानं तत्राग्नौ जुहुयात्तिलान् । निवेदितव्यं विधिवत्तिलपात्रं तु विष्णवे । तिलतैलेन दीपाश्च देया

[1] —तिलैर्[illegible]ति शेष । [illegible]यतम्[illegible] स्वस्ति [illegible] यद्वा [illegible] वर्तते य[illegible] स्यादित्यर्थ ।

देवांश्च एव च । सोदकैश्च तिलैः सार्धं कर्तव्यं पितृतर्पणम् । मतिलै-र्मधुमिर्युक्तं ब्राह्मणेभ्यश्च तर्पणम् । दातव्या दक्षिणाश्चापि तिलैर्मधुयुतैरपि ।' इति । 'मन्त्रं जपेत्तु पौराणं पारम्पर्यक्रमागतम् ।' 'ॐ तिला वै सोमदैवत्याः सुरैः सृष्टास्तु गोसवे । स्वर्गप्रदाः स्वतन्त्राश्च ते मां रक्षन्तु नित्यशः ।' 'दद्यादनेन मन्त्रेण तिलपात्राणि तत्र च । समायस्त्वथ पञ्चभ्यो ब्राह्मणेभ्यस्तु कीर्तयेत् । प्रीयतां धर्मराजश्च देवाश्चान्ये तथापि वा । एवं कृते स मुक्तः स्यात्पापैर्जन्मशतार्जितैः ।' इति वैशाखीविधिः ।

अस्यामेव विशेषो विष्णुधर्मोत्तरे—'वैशाखे पौर्णमास्यां वै जलस्थं जगदी-श्वरम् । पूजयेद्वैष्णवो भक्त्या कृत्वोत्साहं मुदान्वितः । गीतवाद्यपताकाद्यैः कृत्वा पुण्ये महोत्सवे । ज्येष्ठस्यैकादशीं शुक्लां यजेत्तावत्प्रहर्षितः ।' इति । अस्यां सोमव्रतं कार्यम् । तदुक्तं हेमाद्रौ भविष्यत्पुराणे—सुमन्तुरुवाच 'सोमव्रतं तथा चान्यच्छं-करप्रीतये शृणु । ताम्रपात्रं पयःपूर्णं कृत्वा तत्स्थं च शंकरम् । प्रच्छाद्योपरि वस्त्रेण गन्धपुष्पार्चितं महत् । शिवभक्ते द्विजे दद्याद्भोजयित्वा विधानतः । प्राच्यां समुद्गते सोमे प्रतीच्यां च रवौ गते । पौर्णमास्यां तु वैशाख्यां गृह्य पात्रं शिवाग्रतः । प्रीयतां मे महादेवः सोममूर्तिर्जगत्पतिः । तस्मै विप्राय तत्पात्रमर्पयेद्भक्तितः शनैः । एतत्सोम-व्रतं नाम कृत्वा सोमान्तिकं व्रजेत् ।' इति सोमव्रतम् । अथ वैशाखीकार्तिकी-माघीविधिः । युधिष्ठिर उवाच—'संवत्सरेऽपि याः काश्चित्तिथयः पुण्यलक्षणा मे वद यदुश्रेष्ठ स्नानदाने महाफलाः ।' श्रीकृष्ण उवाच—'वैशाखी कार्तिकी माघी तिथयोऽतीव पूजिताः । स्नानदानविहीनास्ता न नेयाः पाण्डुनन्दन । तीर्थस्नानं तथा शस्तं दानं वित्तानुसारतः । वैशाख्यां पाण्डवश्रेष्ठ श्रेष्ठा चोज्जयिनी मता । कार्तिक्यां पुष्करं श्रेष्ठं माघ्यां वाराणसी मता । स्नानेनोदकदानेन तारयत्यखिलान्पितॄन् । कुम्भा-न्स्वच्छजलैः पूर्णान्हिरण्यान्नसमन्वितान् । वैशाख्यां ब्राह्मणे दत्त्वा न शोचति कृता-कृते । मधुरान्नरसैः पूर्णं भाजनं कनकोज्ज्वलम् । बहूनि धनधान्यानि भक्त्या परमया युतः । गोभूहिरण्यवासांसि विप्राय विधिना नृप । माघ्यां स्नात्वा तथा सम्यक्

१—वाशब्दान्तो मन्त्रः । २—महत्ताम्रपात्रमित्यन्वयः महच्च 'षट्त्रिंशदङ्गुलं पात्रमुत्तमं परिकीर्तितम्' इत्या-दिना प्रतिपादितम् । ३—उरस्कोति कोषः ।

संतर्प्य पितृदेवताः । तिलपात्राणि देयानि तिलाः सफलसोदनाः । कार्पासदानमत्रैव धेनुदानं प्रशस्यते । कम्बलाजिनरत्नानि मोचकौ पापमोचकौ । उपानद्दानमत्रैव तुल्य-मश्वरथेन तु । यत्र वा तत्र वा स्नानं दानं वित्तानुसारतः । काले कालोद्भवं सर्वं शस्यते पाण्डुनन्दन । कार्तिक्यां तु वृषोत्सर्गं विवाहं पुण्यलक्षणम् । कुर्यात्कुरुकुलश्रेष्ठ हरे-र्नीराजनं तथा । गजाश्वरथदानानि घृतधेन्वादिकानि च । प्रदेयानि द्विजातिभ्यस्तास्ताः संस्मृत्य देवताः । फलानि यानि विद्यन्ते सुगन्धीन्यगदानि च । कङ्कोलकं फलं जातीलवङ्गीलवलीफलम् । खर्जूरं नारिकेलं च कदलीफलमेव च । दाडिमं मातुलिङ्गं च कर्कोटं त्रपुसं तथा । वृन्ताकं कारवेल्लं च चिर्भटं कूष्माण्डमेव च । फलानाम-प्रदानेन येषां तु तिथियो गताः । ते व्याधिता दरिद्राश्च जायन्ते भुवि मानवाः । न केवलं ब्राह्मणानां दानमत्र प्रशस्यते । भगिनीभागिनेयानां मातुलानां पितृष्वसुः । दरिद्राणां वधूनां च दानं कोटिगुणोत्तरम् । मित्रं कुलीनश्चापन्नो बन्धुर्दारिद्र्यदुःखितः । आशयाभ्यागतो दूरात्सोऽतिथिः स्वर्गसंक्रमः । वनं प्रस्थापिते रामे ससीते सहलक्ष्मणे । मातामहकुलादेत्य विशुद्धेनान्तरात्मना । शपथैः श्राविताऽनेकैः कौशल्या भरतेन वै । यदा न प्रत्ययं याति कथंचित्कोशलात्मजा । तदा विशुद्धभावेन तिथयः श्राविताः पुनः । वैशाखी कार्तिकी माघी तिथयोऽमरपूजिताः । अप्रदानवतो यां तु यस्या योऽनुत्तमे गतः । एतच्छ्रुत्वा तु कौशल्या सहसा प्रत्ययं गता । अङ्कमानीय भरतं सान्त्वयामास दुःखितम् । एतत्तिथीनां माहात्म्यमाख्यातं बहुविस्तरम् । भूयस्तु संप्रवक्ष्यामि तव भारतसत्तम । वैशाखकार्तिकमघासहिता नरेन्द्र, या पूर्णिमा भवति पूर्णशशाङ्कचिह्ना । तस्यां जलान्नकरकान्वरमातपत्रं दत्त्वा प्रयाति पुरुषः पुरुहूत-लोकम्' इति भविष्योत्तरोक्तो वैशाखीकार्तिकीमाघीविधिः समाप्तः । अथ गोदान-विधिः । देशकालौ संकीर्त्य आत्मना सह एकविंशतिपुरुषतारणार्थं सर्वपृथिवीदानफ-लप्राप्त्यर्थं च गोदानमहं करिष्ये इति संकल्प्य गणपतिपूजनपूर्वकं पात्रं वृणुयात् । तद्यथा । आत्मनो गोत्रप्रवरादिकमुच्चार्य ब्राह्मणस्य द्वितीयान्तमुच्चार्य अस्मिन्कर्मणि संप्रदानत्वेन त्वामहं वृणे । वृत्वा यथामिलितोपचारैः संपूज्य 'गवे नमः' इति मन्त्रेण गां सवत्सां संपूज्य तद्देहे देवानावाहयेत् । शृङ्गमूलयोर्ब्रह्मविष्णू । शृङ्गाग्रे सर्वतीर्थानि । शिरोमध्ये महादेवम् । ललाटाग्रे गौरीम् । नासावंशे षण्मुखम् । नासा-पुटयोः कम्बलाश्वतरौ । कर्णयोरश्विनौ । नेत्रयोः शशिभास्करौ । दन्तेषु वायून् ।

जिह्वायां वरुणम् । हुंकारे सरस्वतीम् । गण्डयोर्मासपक्षौ।ओष्ठयोः संध्याद्वयम्।ग्रीवायामिन्द्रम् । कुक्षौ रक्षांसि । उरसि साध्यान्।जङ्घयोर्धर्मम् । खुरमध्ये गन्धर्वान् । खुराग्रे पन्नगान् । खुरपश्चिमाग्रेषु अप्सरोगणान् । पृष्ठे एकादश रुद्रान् । सर्वसंधिषु वसून् । श्रोणीतटे पितॄन् । लाङ्गूले सोमम् । वालसमूहे आदित्यरश्मीन् । गोमूत्रे गङ्गाम् । गोमये यमुनाम् । क्षीरे सरस्वतीम्।दध्नि नर्मदाम्।सर्पिंषि हुताशनम् । रोमकोटीषु देवकोटीः । उदरे पृथिवीम्। स्तनेषु चतुरः सागरानावाह्य संपूज्य 'आच्छादनं मया दत्तं शुद्धं देवि सुनिर्मितम् । सुरभिर्वस्त्रदानेन प्रीयतां परमेश्वरी 'इति मन्त्रेण वस्त्रं निवेदयेत् । स्वर्णशृङ्गरौप्यखुरताम्रपृष्ठमुक्तालाङ्गूलानि यथास्थानं निवेश्य नैवेद्यं दत्त्वा कांस्यदोहनं निधाय प्राङ्मुखो दाता पुष्पाञ्जलिं गृहीत्वा त्रिःप्रदक्षिणीकृत्य ' या लक्ष्मीः सर्वदेवेषु साक्षाद्रूपेण संस्थिता । धेनुरूपेण सा देवी मम पापं व्यपोहतु । देहस्था या च रुद्राणी शंकरस्य सदा प्रिया । धेनुरूपेण सा देवी मम शान्तिं प्रयच्छतु । विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च विभावसोः । चन्द्रार्कशक्रशक्तिर्या धेनुरूपाऽस्तु सा श्रिये । चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च। लक्ष्मीर्या लोकपालानां सा धेनुर्वरदाऽस्तु मे । स्वधा या पितृमुख्यानां स्वाहा यज्ञभुजां तथा। सर्वपापहरा धेनुस्तस्माच्छान्तिं प्रयच्छ मे ।' इति पुष्पाञ्जलिं दत्त्वा गोपुच्छोदकेन देवर्षिपितृतर्पणं कुर्यादिति केचित् । तत्र मूलं चिन्त्यम्।ततस्ताम्रमये कांस्यमये वा आज्यपात्रे घृतदधितिलकुशोदकयुतं गोपुच्छमुदङ्मुखविप्रकरे दत्त्वा देशकालौ संकीर्त्य पूर्वोक्तफलं संकीर्त्य भुक्तिमुक्तिसर्वयज्ञजन्यफलप्राप्तिसर्वपापक्षयकाम इति मात्स्योक्तफलकीर्तनान्ते इमां गां रुद्रदैवत्यां सवत्सां वस्त्रस्वर्णशृङ्गादियुताममुकगोत्रान्तर्गतामुकशाखाध्यायिनेऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे न मम इत्युक्त्वा विप्रकरे सजलं पुच्छं दत्त्वा ' यज्ञसाधनभूता या विश्वस्याघौघनाशिनी । विश्वरूपधरो देवः प्रीयतामनया गवा ।' इति पठित्वा 'घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः । घृतनद्यो घृतावर्तास्ता मे सन्तु सदा गृहे ।' गवामङ्गेषु० । गावो ममाग्रतः० विप्रस्तु देवस्य त्वेत्यादि राजा त्वेत्यादि रुद्राय त्वा० क इदं० प्रतिगृह्णात्वित्यन्तं पठित्वा ॐ स्वस्तीति वदेत्।ततो गोप्रतिष्ठासिद्ध्यर्थमिदं हिरण्यं दशमाषमितं तुभ्यमहं संप्रददे इत्युक्त्वा दद्यात् विप्रः प्रतिगृह्य गोमतीं जपेत् । 'गावो मामुपतिष्ठन्तु हेमशृङ्ग्यः पयोमुचः । सुरभ्यः सौरभेय्यश्च सरितः सागरास्तथा । गावः पश्याम्यहं नित्यं गावः पश्यन्तु मां सदा । गावोऽस्माकं वयं तासां यतो गावस्ततो वयम् । गावः सुरभयो नित्यं गावो गुग्गुलुसं-

निभाः । गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् । अन्नमेव परं गावो देवाना हविरुत्तमम् । पावनं सर्वभूतानां रक्षन्ति च वहन्ति च । सर्वेषामेव भूतानां गावः शरणमुत्तमम् । गावः पवित्रं परमं गावो मङ्गलमुत्तमम् । गावः सर्वस्य लोकस्य गावो धन्याः स्ववाहिनीः । नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः । ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् । एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति ।' ततो ब्राह्मणभोजनं भूयसीं च संकल्पयेत् । इति गोदानविधिः ।

अथ कृष्णाजिनदानप्रयोगः । देशकालौ संकीर्त्य मम पुत्रभार्याद्यवियोगबहुधनत्वस्वदेशापरित्यागसमग्रभूमिदानफलसर्वलोकजयकामचारित्वाभूतसंप्लवस्वर्गवाससकलाभीष्टप्राप्तिकामोऽहं कृष्णाजिनदानं करिष्ये इति संकल्प्य गोमयोपलिप्तभूमौ शुचौ देशे कुशोपरि कम्बलमास्तीर्य तत्र सखुरं सशृङ्गं कृष्णाजिनमास्तीर्य तत्र शृङ्गयो रुक्मं दन्तेषु रौप्यं लाङ्गूले मुक्ताः संनिवेश्यात्मसंमिततिलैरापूर्य वासोयुगलेनाच्छाद्य सुवर्णं नाभौ निवेश्य यथाशक्ति रत्नैर्गन्धैश्चालंकृत्य चतुर्दिक्षु पूर्वादिक्रमेण रत्नपूर्णानि चत्वारि कांस्यपात्राणि घृतक्षीरदधिमधुपूर्णानि चत्वारि मृत्पात्राणि च संस्थापयेत् । दानप्रदेशाद्बहिर्गोमयविरचितमण्डले चम्पकशाखायुक्तं जीर्णपीतवस्त्रसहितं जलपूर्णं कुम्भं स्थापयेत् । ततस्तिलपूर्णं लोहपात्रं पश्चिमवामभागे मधुपूर्णं कांस्यपात्रं दक्षिणपादे मधुपूर्णं ताम्रपात्रमग्रिमदक्षिणपादे तिलपूर्णं रजतपात्रमग्रिमवामपादे अक्षतपूर्णं सुवर्णपात्रं नाभिदेशे वक्ष्यमाणपञ्चमन्त्रैः प्रत्येकं न्यसेत् । ते च मन्त्राः । 'यानि कान्यपि पापानि मया लोभात्कृतानि वै । लोहपात्रप्रदानेन प्रणश्यन्तु ममाशु वै । यानि पापान्यकामानि कामोत्थानि कृतानि च । कांस्यपात्रप्रदानेन तानि नश्यन्तु मे सदा । परापवादपैशुन्याद्दुष्टमांसस्य भक्षणात् । तत्रोत्थितं च मे पापं ताम्रपात्रात्प्रणश्यतु । कन्यानृतं गवां चैव परदारप्रधर्षणम् । रौप्यपात्रप्रदानेन क्षिप्रं नाशं प्रयातु मे । जन्मजन्मसहस्रेषु कृतं पापं कुबुद्धिना । सुवर्णपात्रदानात्तन्नाशयाशु जनार्दन ।"
ततो हेममुक्ताविद्रुमदाडिमीबीजपूरसर्वशाकसर्वफलानि निकटे संस्थाप्य श्रवणयोः प्रशस्तपत्रे खुरयोः शृङ्गाटकानि संस्थाप्य समस्तगुणोपेतं स्नातमाहिताग्निं पात्रं वृत्त्वा वस्त्रयुग्मेन यथाशक्त्यलंकारैश्च संपूज्य पूर्वोक्तफलसंकीर्तनान्ते इदं कृष्णाजिनं कुशोपरिगतकंबलोपरि स्थितं सुवर्णशृङ्गं रौप्यदन्तं मुक्तालाङ्गूलं वस्त्रयुगच्छन्नं तिलपूर्णं चतुर्दिक्षु रत्नपूर्णकांस्यपात्रचतुष्टयं घृतक्षीरदधिमधुपूर्णमृत्पात्रचतुष्टययुतं चतुर्षु पादेषु

तिलमधुघृतशर्करापूर्णं लोहकांस्यताम्रपात्ररजतयुतं नाभिदेशेऽक्षतपूर्णसुवर्णपात्रयुतं हेमगुह्रा विद्रुमदाडिमबीजपूरसर्वशाकसर्वफलयुतं कर्णयोः प्रशस्तपादयुतं खुरयोः शृङ्गाष्टकयुतं सुवर्णनाभिं यथाशक्ति रत्नगन्धादिभूषितममुकगोत्रायामुकशर्मणेऽमुकगोत्रोऽमुकशर्माहं तुभ्यं संप्रददे न ममेत्युक्त्वा सजलं पुच्छं निक्षिपेत् । तत्र मन्त्रः । 'कर्ता कृष्ण विभो देव कृष्णाजिनधरस्तथा । त्वद्दानहतपापः स्यां प्रीयतां मे नमो नमः । त्रयस्त्रिंशत्सुराणां त्वमाधारत्वे व्यवस्थितः । कृष्णोऽसि मूर्तिमान्साक्षात्कृष्णाजिन नमोस्तु ते ।' वृषध्वजः प्रीयतामित्युक्त्वा दानसाद्गुण्यसिद्ध्यर्थं शतनिष्कादिदक्षिणां दद्यात् । विप्रो यथाशाखं कामस्तुतिं पठित्वा देवस्य त्वेति यजुषा प्रतिगृह्णीयात् । ततो विप्रं स्वगृहात्प्रेष्य गोमयादिरचिते मण्डले यजमानः पूर्वस्थापितचम्पकशाखायुक्तकुम्भस्थाभिरद्भिराप्यायस्वेत्यष्टाभिर्ऋग्भिः समुद्रज्येष्ठेत्यष्टभिर्ऋग्भिश्चाभिमन्त्रिताद्भिश्चम्पकशाखया अभिषिक्तः स्नायात् । ततः पूर्वावस्थापितजीर्णपीतवस्त्रेण अङ्गप्रोञ्छनं कृत्वा अहते वाससी परिधाय आचान्तश्चन्दनादिलंकृत्य शुद्धोऽहमिति भावयेत् । अङ्गप्रोञ्छनवस्त्रं कुम्भसहितं चतुष्पथे प्रक्षिपेत् । ततोऽन्येभ्यो ब्राह्मणेभ्यो यथाशक्ति दक्षिणां दत्त्वा अच्छिद्रमस्त्विति वाचयेत् । ततो ब्राह्मणभोजनं संकल्प्य कर्म ईश्वरार्पणं कुर्यात् । इति कृष्णाजिनदानप्रयोगः ।

अस्यां वैशाखव्रतोद्यापनस्योक्तत्वात्तत्प्रसङ्गादादौ वैशाखस्नानविधिरुच्यते।तत्र पृथ्वीचन्द्रोदये-'तुलामकरमेषेषु प्रातः स्नानं विधीयते।हविष्यं ब्रह्मचर्यं च महापातकनाशनम् ।' इति सौरमास उक्तः। अन्यत्पक्षद्वयमुक्तं तत्रैव पाद्मे-'मधुमासस्य शुक्लायामेकादश्यामुपोषितः । पञ्चदश्यां च भो वीर मेषसंक्रमणे तु वा । वैशाखस्नाननियमं ब्राह्मणानामनुज्ञया । मधुसूदनमभ्यर्च्य कुर्यात्संकल्पपूर्वकम् ।' तत्र मन्त्रः । 'वैशाखं सकलं मासं मेषसंक्रमणे रवेः । प्रातः सनियमं स्नास्ये प्रीयतां मधुसूदनः । मधुहन्तुः प्रसादेन ब्राह्मणानामनुग्रहात् । निर्विघ्नमस्तु मे पुण्यं वैशाखस्नानमन्वहम् । माधवे मेषगे भानौ मुरारे मधुसूदन । प्रातःस्नानेन मे नाथ फलदो भव पापहन् ।' इति । तीर्थविशेषोऽपि तत्रैवोक्तः ।'मेषसंक्रमणे भानोर्माधवे मासि यत्नतः । महानद्यां महातीर्थे नदे सरसि निर्झरे । देवखाते तथा स्नायाद्यथाप्राप्ते जलाशये । दीर्घिकाकूपवापीषु नियतात्मा हरिं स्मरन् ।' इति संकल्पे च तत्तीर्थनाम ग्राह्यम् । अज्ञाने तु विष्णुतीर्थमिति वदेत् ।'यदि न ज्ञायते नाम तस्य तीर्थस्य भो द्विजाः । तत्र ह्युच्चारणं कार्यं विष्णुतीर्थमिदं त्विति । तीर्थस्य देवता विष्णुः सर्वत्रापि न संशयः ।' इति

तत्रैवोक्तेः। तथान्योऽपि विशेषस्तत्रैव। 'तुलसी कृष्णगौराख्या तयाऽभ्यर्च्य मधुद्विषम्। विशेषेण तु वैशाखे नरो नारायणो भवेत्। माधवं सकलं मासं तुलस्या योऽर्चयेन्नरः। त्रिसंध्यं मधुहन्तारं नास्ति तस्य पुनर्भवः। प्रातः स्नात्वा विधानेन माधवे माधवप्रियम्। योऽश्वत्थमूलमासिञ्चेत्तोयेन बहुना सदा। कुर्यात्प्रदक्षिणं तं तु सर्वदेवमयं ततः। पितृदेवमनुष्यांश्च तर्पयेत्सचराचरम्। योऽश्वत्थकमयं देवमुदकेन समंततः। कुलानामयुतं तेन तारितं नात्र संशयः। कण्डूय्य पृष्ठतो गां तु स्नात्वा पिप्पलतर्पणम्। कृत्वा गोविन्दमभ्यर्च्य न दुर्गतिमवाप्नुयात्।' इति तथा 'एकभक्तमथो नक्तमयाचितमतन्द्रितः। माधवे मासि यः कुर्याल्लभते सर्वमीप्सितम्। वैशाखे विधिना स्नानं देवनद्यादिके बहिः। हविष्यं ब्रह्मचर्यं च भूशय्या नियमस्थितिः। व्रतं दानं दमो देवि मधुसूदनपूजनम्। अपि जन्मसहस्रोत्थं पापं दहति दारुणम्।' मदनरत्ने स्कान्दे–'प्रपा कार्या च वैशाखे देवे देया गलन्तिका। उपानद्व्यजनच्छत्रसूक्ष्मवासांसि चन्दनम्। जलपात्राणि देयानि तथा पुष्पगृहाणि च। पानकानि विचित्राणि द्राक्षारम्भाफलानि च।' तथा–'वैशाखे यो घटं पूर्णं सभोज्यं वै द्विजन्मने। ददाति सुरराजेन्द्र स याति परमां गतिम्।' एवं संपूर्णस्नानाशक्तौ त्र्यहं वा स्नायात्। तदुक्तं तत्रैव पाद्मे–'त्रयोदश्यां चतुर्दश्यां वैशाख्यां वा दिनत्रयम्। अपि सम्यग्विधानेन नारी वा पुरुषोऽपि वा। प्रातः स्नातः सनियमः सर्वपापैः प्रमुच्यते।' एवं स्नाने कृते तस्योद्यापनं कार्यम्। तदुक्तं तत्रैव–'मासमेकं बहिः स्नात्वा नद्यादौ विमले जले। एकादश्यां च द्वादश्यां पौर्णमास्यामथापि वा। उपोष्य नियतो भूत्वा कुर्यादुद्यापनं बुधः। मण्डपं कारयेदादौ कलशं तत्र विन्यसेत्। निष्केण वा तदर्धेन तदर्धार्धेन वा पुनः। शक्त्या वा कारयेद्देवं सौवर्णं लक्षणान्वितम्। लक्ष्मीयुतं जगन्नाथं पूजयेदासने बुधः। भूषणैश्चन्दनैः पुष्पैर्दीपनैवेद्यसंचयैः। एवं संपूज्य विधिवद्रात्रौ जागरणं चरेत्। श्वोभूते कृतमैत्रोऽथ ग्रहवेद्यां ग्रहान्यजेत्। होमं कुर्यात्प्रयत्नेन पायसेन विचक्षणः। तिलाज्येन यवैर्वापि सर्वैर्वापि स्वशक्तितः। अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा। प्रतद्विष्णुरनेनैव इदंविष्णुरनेन वा। व्रतसंपूर्तिसिद्ध्यर्थं धेनुमेकां पयस्विनीम्। पादुकोपानहौ छत्रं गुरवे व्यजनं तथा। शय्यां सोपस्करां दद्याद्दीपिकां तर्पणं तथा। ब्राह्मणान्भोजयेत्त्रिंशत्तेभ्यो दद्याच्च दक्षिणाम्। कलशाञ्जलसंपूर्णांस्तेभ्यो दद्याद्यवांस्तथा। एवं कृते माधवस्य चोद्यापनविधौ शुभे। फलमाप्नोति सकलं विष्णुसायुज्यमाप्नुयात्।' एतावत्यशक्तौ तत्रैवोक्तम्–'वैशाखं विधिना स्नात्वा

भोजयेद्ब्राह्मणान्दश । कृशरं सर्वपापेभ्यो मुच्यते नात्र संशयः ।' इति । भट्टोजिदीक्षितीये निर्णयसिन्धौ च यदा तु वैशाखो मलमासो भवति तदा काम्यानां तत्र समाप्तिनिषेधान्मासद्वयं स्नानं तन्नियमाश्च कर्तव्याः । मासोपवासचान्द्रायणादि तु मलमास एव समापयेत् । तदुक्तं दीपिकायाम्—नियतत्रिंशद्दिनत्वाच्छुभे मास्यारभ्य समापयेत् मलिने मासोपवासादिकम् इति। एवं कार्तिकस्नानादावपि । केचित्तु यत्तु मयूखे—वैशाखस्य मलत्वे तत्रैव स्नानादि समाप्यमिति हेमाद्रिमदनरत्नौ । तथा च काठकगृह्ये—'आरब्धं मलमासात्प्राग्यत्काम्यमसमापितम् । संप्राप्ते मलमासेऽपि तत्समाप्यमसंशयम् ।' इति । तच्चिन्त्यम् । हेमाद्रिमदनरत्नयोस्तादृशग्रन्थानुपलम्भात् एतद्वचनस्य नियतकालसमाप्यसावनदिनसाध्ये कृच्छ्रचान्द्रायणादिविषत्वेन व्याख्यातत्वाच्चेति दिक् । इति वैशाखीकृत्यम् ।

अथ ज्येष्ठीकृत्यम् । अस्यां सावित्रीव्रतं कार्यम् । तदुक्तं स्कन्दपुराणे—'ज्येष्ठे मासे तु संप्राप्ते पौर्णमास्यां पतिव्रता । स्नात्वा चैव शुचिर्भूत्वा वटं सिञ्च्य बहूदकैः ।' इत्यादि । अस्मिन्व्रते पौर्णमासी पूर्वैव ग्राह्येत्युक्तम् । इदं च त्रयोदशीमारभ्य पूर्णिमान्तं कर्तव्यम् । तदुक्तं स्कन्दभविष्ययोः—'ज्येष्ठे मासि सिते पक्षे द्वादश्यां रजनीमुखे । व्रतं त्रिरात्रमुद्दिश्येत्काम्यान्ते उपसंहृतम् । ज्येष्ठे मासि सिते पक्षे पूर्णिमायां तथा व्रतम् ।' इति । अत्र पूर्णिमानुरोधेन यथा त्रिरात्रसंपत्तिः तथा त्रयोदश्यादि ग्राह्यमित्युक्तं प्राक् । इदं व्रतमविशेषात्सर्वाभिः कार्यम् । 'नारी वा विधवा वापि सपुत्रा पुत्रवर्जिता । सभर्तृका सपुत्रीका कुर्याद्व्रतमिदं शुभम् ।' इति वचनात् । इदं च दाक्षिणात्याचारानुसारेणोक्तम् । पाश्चात्त्यादयस्तु अमायांमाचरन्ति। उक्तं च निर्णयामृते भविष्ये—'अमायां च तथा ज्येष्ठे वटमूले महासती । त्रिरात्रोपोषिता नारी विधिनानेन पूजयेत् । अशक्तौ तु त्रयोदश्यां नक्तं कुर्याज्जितेन्द्रिया । अयाचितं चतुर्दश्याममायां समुपोषणम् ।' इति । 'मेषे वा वृषभे वापि सावित्रीं तां विनिर्दिशेत् । ज्येष्ठकृष्णचतुर्दश्यां सावित्रीमर्चयन्ति याः । वटमूले सोपवासा न ता वैधव्यमाप्नुयुः ।' इति पराशरोक्तेश्चतुर्दश्यां प्रदोषे व्रतमाचरन्ति तन्निर्मूलमिति निर्णयसिन्धौ । अथ व्रतपद्धतिः । तत्र त्रयोदश्यामद्येत्याद्युच्चार्य वैधव्यादिसकलदोषपरिहारार्थं ब्रह्मसावित्रीप्रीत्यर्थं सत्यवत्सावित्रीप्रीत्यर्थं च वटसावित्रीव्रतमहं करिष्ये इति संकल्प्य तदादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं स्वस्तिपुण्याहवाचनं च कृत्वा नियमं कुर्यात् । तत्र नियममन्त्रः । 'त्रिदिनं लङ्घयि-

त्वा तु चतुर्थे दिवसे शुभे । चन्द्रायार्घ्यं प्रदत्त्वा तु पूजयित्वा सुवासिनीम् । सावित्रीं च प्रसावित्रीं गन्धधूपनिवेदनैः । मिथुनानि यथाशक्त्या भोजयित्वा यथासुखम् । भोक्ष्येऽहं तु जगद्धात्रि निर्विघ्नं कुरु मे व्रतम् ।' इति । ततो वालुकाप्रस्थपूरिते वंशपात्रे प्रस्थमात्रसप्तधान्यसंभृते वस्त्रयुग्मसंवेष्टिते द्वितीये वंशपात्रे च स्वर्णादिरचिताम् 'पद्मपत्रासनश्चैव ब्रह्मा कार्यश्चतुर्मुखः । पुस्तकं च स्रुवं तद्वदक्षमालां कमण्डलुम् । सावित्री तस्य कर्तव्या वामोत्सङ्गगता तथा । आदित्यवर्णा धर्मज्ञा साक्षसूत्रकरा तथा ।' इति लक्षणलक्षितां ब्रह्मसावित्रीप्रतिमां सत्यसावित्रीप्रतिमां च स्थापयेत् । 'आदित्यवर्णां धर्मज्ञां साक्षसूत्रकमण्डलुम् । आवाहयामि सावित्रीं सततं ब्रह्मणः प्रियाम् ।' इत्यावाह्य सर्वेषां प्राणप्रतिष्ठादि कुर्यात् । ततः 'पतिव्रते महाभागे वह्निजाते शुचिस्मिते । आसनं ते मया दत्तं सावित्रि प्रतिगृह्यताम् ।' आसनम् । 'मन्दाकिन्याः समानीतं सुगन्धिजलमुत्तमम् । भक्त्या दत्तं धर्मरते सावित्रि प्रतिगृह्यताम् ।' पाद्यम् । 'भक्त्या समाहृतं तोयं फलपुष्पसमन्वितम् । अर्घ्यं गृहाण सावित्रि ममात्र व्रतसिद्धये ।' अर्घ्यम् । 'सुगन्धि सहकर्पूरं सुरभि स्वादु शीतलम् । स्वपत्या सह सावित्रि कुरुष्वाचमनीयकम् ।' आचमनीयम् । अथ पञ्चामृतस्नानम् । 'पञ्चामृतं मयानीतं पयो दधि घृतं च वै । शर्करामधुसंयुक्तं स्नानार्थं प्रतिगृह्यताम् ।' पञ्चामृतस्नानम् । 'मन्दाकिन्याः समानीतं हेमाम्भोरुहवासितम् । स्नानार्थं ते मया भक्त्या गाङ्गं स्वीक्रियतां जलम् ।' शुद्धोदकस्नानम् । 'पाटलोशीरकर्पूरसुरभि स्वादु शीतलम् । तोयमाचमनीयार्थं सावित्रि प्रतिगृह्यताम् ।' आचमनीयम् । 'स्वच्छं तन्तुमयं वस्त्रं कार्पासेन विनिर्मितम् । सावित्रि सत्यवत्कान्ते उपवीतं प्रगृह्यताम् ।' इत्युपवीतम् । 'कुङ्कुमागरुकस्तूरीरोचनायुतचन्दनम् । हृदयानन्दनं चारु सावित्रि प्रतिगृह्यताम् ।' चन्दनम् । 'अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभनाः । मया निवेदिता भक्त्या गृहाण परमेश्वरि ।' अक्षतान् । माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो । मयाहृतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम् ।' पुष्पाणि। अथाङ्गपूजा । सावित्र्यै नमः पादौ पूजयामि । प्रसावित्र्यै नमः जानुनी पूजयामि । कमलायताक्ष्यै नमः कटिं पूजयामि। भूतधारिण्यै नमः उदरं पूजयामि । गायत्र्यै नमः कण्ठं पूजयामि । ब्रह्मणः प्रियायै नमः शिरः पूजयामि । अथ ब्रह्मसत्यवतोरङ्गपूजा । धात्रे नमः पादौ पूजयामि । ज्येष्ठाय नमः ऊरू पूजयामि । परमेष्ठिने नमः मेढ्रं पूजयामि । अग्निरूपाय नमः कटिं पूजयामि । वेधसे नमः उदरं पूज-

यामि । पद्मनाभाय नमः हृदयं पूजयामि । विश्वये नमः कण्ठं पूजयामि । हिरण्यगर्भाय नमः मुखं पूजयामि । ब्रह्मणे नमः शिरः पूजयामि । विष्णवे नमः सर्वाङ्गं पूजयामि । 'देवद्रुमरसोद्भूतः कालागरुसमन्वितः । आघ्राणार्थमयं धूपः सावित्रि प्रतिगृह्यताम्' धूपम् । 'चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणम् । आर्तिक्यं कल्पितं भक्त्या गृहाण परमेश्वरि ।' दीपम् । 'मोदकापूपलड्डुकवटकोदुम्बरादिभिः । सघृतं पायसेनान्नं नैवेद्यं प्रतिगृह्यताम् ।' नैवेद्यम् । आचमनम् । 'मलयाचलसंभूतं कर्पूरेण समन्वितम् । करोद्वर्तनकं चारु गृहाण परमेश्वरि ।' करोद्वर्तनम् । 'कर्पूरैलालवङ्गादिताम्बूलदलसंयुतम् । क्रमुकेण समायुक्तं ताम्बूलं प्रतिगृह्यताम् ।' ताम्बूलम् । इदं फलमिति फलम् । हिरण्यगर्भेति दक्षिणा । श्रिये जात इति नीराजनम् । वक्ष्यमाणमन्त्रैः पुष्पाञ्जलिं च दत्त्वा वटं पूजयेत् । तत्र मन्त्रः 'वट सिञ्चामि ते मूलं सलिलैरमृतोपमैः । यथा शाखाप्रशाखाभिर्वृद्धोऽसि त्वं महीतले । तथा पुत्रैश्च पौत्रैश्च संपन्नं कुरु मां सदा ।' इति । वटं सूत्रेण संवेष्ट्य गन्धपुष्पाक्षतैः संपूज्य प्रदक्षिणं कुर्यात् । 'सावित्री च प्रसावित्री सततं ब्रह्मणः प्रिये । जगत्पूज्ये ज्येष्ठमातर्विधातृवरदे नमः । सावित्रि त्वं यथा देवि चतुर्वर्षशतायुषम् । पतिं प्राप्तासि गुणिनं मम देवि तथा कुरु । सावित्रि च प्रसावित्रि सततं ब्रह्मणः प्रिये।पूजितासि द्विजैः सर्वैः स्त्रीभिर्मुनिगणैस्तथा।त्रिसंध्यं देवि भूतानां वन्दनीयासि सुव्रते।मया दत्ता च पूजेयं त्वं गृहाण नमोऽस्तु ते ।' इति पुष्पाञ्जलिं दत्त्वा अर्घ्यदानं कुर्यात् । तत्र मन्त्राः।'ॐ कार पूर्विके देवि सर्वदुःखनिवारिणि । देविमातर्नमस्तुभ्यमवैधव्यंप्रयच्छ मे । पतिव्रतेमहाभागे वह्निजाते शुचिस्मिते । दृढव्रते दृढमये भर्तुश्च प्रियवादिनि । अवैधव्यं च सौभाग्यं देहि त्वं मम सुव्रते । पुत्रान्पौत्रांश्च सौख्यं च गृहाणार्घ्यं नमोऽस्तु ते ।' इत्यर्घ्यं दत्त्वा ब्रह्मसत्यवतोरर्घ्यं दद्यात् । तत्र मन्त्रः । 'त्वया सृष्टं जगत्सर्वं सदेवासुरमानुषम् । सत्यव्रतधरो देव धर्मराज नमोऽस्तु ते' इत्यर्घ्यं दत्त्वा सावित्रीप्रार्थनां कुर्यात् । 'सावित्री प्रसवित्री त्वं द्विधा भूतासि शोभने । जगत्त्रयस्थिते देवि त्रिसंध्ये च तथानघे । त्रिते देवि त्रिलोके च त्रेता गौरस्त्वं महेश्वरि । व्यापितं सकलं लोकमतो मां पाहि सर्वदा । रूपं देहि जयं देहि सौभाग्यं देहि मे शुभे । पुत्रान्देहि धनं देवि सर्वजन्मसु सर्वदा । यथा ते न वियोगोऽस्ति भर्त्रा सह सुरेश्वरि । तथा मे सुमहाभागे कुरु त्वं जन्मजन्मनि ।' इति पूजनम् । अथ सावित्रीकथा । सनत्कुमार उवाच । 'कुलस्त्रीणां व्रतं देव महाभाग्यं तथैव च । अवैधव्यकरं स्त्रीणां पुत्रपौत्रप्रदायकम् ।' ईश्वर उवाच ।

'आसीन्मद्रेषु धर्मात्मा राजा परमधार्मिकः। नाम्ना चाश्वपतिर्वीरो वेदवेदाङ्गपारगः। अनपत्यो महाबाहुः सर्वैश्वर्यसमन्वितः। सपत्नीकस्तपस्तेपे समाराधयते नृप। सावित्रीं प्रसवित्रीं च जपन्नास्ते महामनाः। जुहोति चैवं सावित्रीं भक्त्या परमया युतः। ततस्तुष्टातु सा देवी सावित्री द्विजसत्तम। सा विग्रहवती देवी तस्य दर्शनमागता। तां तु दृष्ट्वा जगद्वन्द्यां सावित्रीं च नृपोत्तमः। प्रणिपत्य नृपो भक्त्या प्रहृष्टेनान्तरात्मना। तं दृष्ट्वा पतितं भूमौ तुष्टा देवी जगाद ह। तुष्टाहं तव राजेन्द्र वरं वरय सुव्रत। एवमुक्तस्तया राजा प्रसन्नां तामुवाच ह। अनपत्यो ह्यहं देवि पुत्रमिच्छामि शोभनम्। नान्यं वृणोमि सावित्रि पुत्रमेव जगन्मये। अन्यदस्ति समग्रं मे क्षितौ यच्चाऽपि दुर्लभम्। प्रसादात्तव देवेशि तत्सर्वं विद्यते गृहे। एवमुक्ता तु सा देवी प्रत्युवाच नराधिपम्। पुत्रस्ते नास्ति राजेन्द्र कन्यैका ते भविष्यति। कुलद्वयं तु सा राजन्नुद्धारिष्यति भामिनी। मन्नाम्ना राजशार्दूल तस्या नाम भविष्यति। इत्युक्त्वा तु मुनिश्रेष्ठ राजानं ब्रह्मणः प्रिया। अन्तर्धानं गता देवी संतुष्टोऽसौ महीपतिः। ततः कतिपयाहोभिस्तस्य राज्ञी महीभुजः। ससत्त्वा समजायेत पूर्णे काले सुषाव च। सावित्र्या तुष्टया दत्ता सावित्र्या जप्तया तथा। सावित्रीत्येव नामास्याश्चक्रुर्विप्रास्तथा पिता। सा राज्ञो देवगर्भाभा कन्या कमललोचना। ववृधे सा मुनिश्रेष्ठ चन्द्रलेखेव चाम्बरे। सावित्री ब्रह्मणो वै सा श्रीरिवायतलोचना। तां दृष्ट्वा हेमगर्भाभां राजा चिन्तामुपेयिवान्। आयाच्यमानां च वरै रूपेणाप्रतिमां भुवि। तस्या रूपेण ते सर्वे संनिरुद्धा महीभुजः। ततः स राजा चाहूय उवाच कमलेक्षणाम्। पुत्रि प्रदानकालस्ते न च याचति कश्चन। स्वयं वरय हृद्यं ते पतिं गुणसमन्वितम्। मनःप्रह्लादनकरं शीलेनाभिजनेन च। इत्युक्त्वा तां स राजेन्द्रो वृद्धामात्यैः सहैव ताम्। वस्त्रालंकारसहितां धनरत्नैः समन्विताम्। विसर्ज्य च क्षणं तत्र यावत्तिष्ठति भूमिपः। तावत्तत्र समागच्छन्नारदो भगवानृषिः। संपूज्य च ततो राजा अर्घ्यपाद्येन तं मुनिम्। आसने तु सुखासीनं प्रोवाचेदं द्विजोत्तमम्। पावितोऽहं त्वया विप्र दर्शनेनाद्य नारद। यावदेवं वदेद्राजा तावत्सा कमलेक्षणा। आश्रमादागता देवी वृद्धामात्यैः समन्विता। अभिवाद्य पितुः पादौ ववन्दे सा मुनिं ततः। नारदेन तु दृष्टा सा दृष्ट्वा प्रोवाच भूमिपम्। कन्येयं देवगर्भाभा किमर्थं न प्रयच्छसि। वराय त्वं महाबाहो वरयोग्याऽस्ति सुन्दरी। एवमुक्तस्तदा तेन मुनिना नृपसत्तमः। उवाच तं मुनिं वाक्यमानेतुं प्रेषिता च सा। आगतेयं विशा-

लाक्षी मया संप्रेषिता सती । अनया को वृतो भर्ता पृच्छ त्वं मुनिसत्तम । सा पृष्टा तेन मुनिना तस्मै चाचष्ट भामिनी । आश्रमे सत्यवान्नाम द्युमत्सेनसुतो मुने । भर्तृत्वे मनसा विप्र वृतोऽसौ राजनन्दनः ।' नारद उवाच–'कष्टं कृतं महाराज दुहित्रा तव सुव्रत । अजानन्त्या वृतो भर्ता गुणवान्सत्यवादकः । सत्यं वदत्यस्य पिता सत्यं माता प्रभाषते।स्वयं सत्यं प्रभाषेत सत्यवानिति मे मतिः । तथा चाश्वाः प्रियास्तस्य ह्यश्वैः क्रीडति मृण्मयैः । चित्रेस विलिखत्यश्वांश्चित्राश्वस्तेन चोच्यते । रूपवान्गुणवांश्चैव सर्वशास्त्रविशारदः । न तस्य सदृशो लोके विद्यते चेह मानवः । सर्वैर्गुणैः स्वयं पूर्णो रत्नैरिव महोदधिः । एको दोषो महांस्तस्य गुणानावृत्य तिष्ठति । संवत्सरेण क्षीणायुर्देहत्यागं करिष्यति ।' अश्वपतिरुवाच–' अन्यं वरय भद्रं ते वरं सावित्रि गम्यताम् । विवाहस्य तु कालोऽयं वर्तते शुभलोचने ।' सावित्र्युवाच–'नान्यमिच्छाम्यहं तात मनसापि वरं प्रभो । यो मया च वृतो भर्ता स मे नान्यो भविष्यति । विचिन्त्य मनसा पूर्वं वाचं पश्चात्समुच्चरेत् । क्रियते च ततः पश्चाच्छुभं वा यदि वाऽशुभम् । तस्मान्मनः पुमांसं मे कथमन्यं वृणीत वै । सकृज्जल्पन्ति राजानः सकृज्जल्पन्ति पण्डिताः । सकृत्कन्याः प्रदीयन्ते त्रीण्येतानि सकृत्सकृत् । इति मत्वा न मे बुद्धिर्विचलेत कथंचन । सगुणो निर्गुणो वापि मूर्खः पण्डित एव वा । दीर्घायुरथ वाल्पायुः स वै भर्ता मम प्रभो । नान्यं वृणोमि भर्तारं यदि साक्षाच्छचीपतिः । इति मत्वा त्वया तात यत्कर्तव्यं वदस्व तत् ।' नारद उवाच–'स्थिरा बुद्धिश्च राजेन्द्र सावित्र्याः सत्यवान्प्रति । त्वरयस्व विवाहाय भर्त्रा सह करोत्विमाम् ।' ईश्वर उवाच–'निश्चये तु मतिं ज्ञात्वा स्थिरां बुद्धिं च निश्चलाम् । सावित्र्याश्च महाराजः प्रतस्थेऽसौ वनं प्रति । तां गृहीत्वा ततो राजा द्युमत्सेनस्य संनिधौ । स्वल्पानुगो महाराजो वृद्धामात्यैः समन्वितः । नारदस्तु ततश्चैव तत्रैवान्तरधीयत । स गत्वा राजशार्दूलो द्युमत्सेनवशं गतः । वृद्धश्चान्धश्च राजासौ वृक्षमूलमुपाश्रितः । स च त्वश्वपती राजा पादौ जग्राह वीर्यवान् । स्वनाम च समुच्चार्य तस्थौ तस्य समीपतः । उवाच राजा तं भूपं किमागमनकारणम् । पूजयित्वाऽर्घ्यदानेन वन्यमूलफलैश्च सः । ततः पप्रच्छ कुशलं स राजा मुनिसत्तम।' अश्वपतिरुवाच–'कुशलं दर्शनेनाद्य तव राजन्पतिं च वै । दुहिता मम सावित्री तव पुत्रमभीप्सति । भर्तारं राजशार्दूल प्राप्नोत्वियमनिन्दिता । मनसाकाङ्क्षितं पूर्वं भर्ताऽसावनया प्रभो । आवयोस्तु सुसंबन्धो भवत्वद्य ममेप्सितः । द्युमत्सेनउवाच–'वृद्धश्चान्धश्च राजेन्द्र फलमूलाशनो

नृप । राज्यच्युतश्च पुत्रो मे वने वन्येन जीवति । सा कथं सहते दुःखं दुहिता तव कानने । अनभिज्ञा च दुःखानामित्यहं नाभिकाङ्क्षये ।' अश्वपतिरुवाच--'अनया च वृतो भर्ता जानन्त्या राजसत्तम । अनेन सह संवासस्तव पुत्रेण मानद । स्वर्गतुल्यो महाराज भविष्यति न संशयः । एवमुक्तस्तदा तेन राज्ञा राजर्षिसत्तमः । तथेति स प्रतिज्ञाय चकारोद्वाहमुत्तमम् । कृत्वा विवाहं राजेन्द्र संपूज्य विविधैर्धनैः । अभिवाद्य द्युमत्सेनं जगाम नगरं प्रति । सावित्री तु पतिं लब्ध्वा शक्रं प्राप्य यथा शची । सत्यवानपि राजर्षिस्तया पत्न्याभिनन्दितः । क्रीडते तद्वनोद्देशे पौलोम्या मघवानिव । नारदस्य तदा वाक्यं हृदयेन मनस्विनी । वहन्तीनीयमं चक्रे व्रतस्यास्य च भामिनी । गणयन्ती दिनान्येव न लेभे सौख्यमुत्तमम् । ज्ञात्वा तं दिवसं विप्र भर्तुर्मरणकारणम् । अत्रान्तरे च नियमं त्रिदिनस्य मनस्विनी । अस्मिन्दिने च मर्तव्यं तदा सत्यवता मुने । कुठारं संगृहीत्वा च पिटकं चैव सुव्रता । तं प्रस्थितं वनं चैव सावित्री वाक्यमब्रवीत् । न गन्तव्यं वनं त्वद्य मम वाक्येन मानद । अथवा गम्यते साधो मया सह वनं व्रज । संवत्सरश्च संपूर्ण आश्रमेऽस्मिन्मम प्रभो । तद्वनं द्रष्टुमिच्छामि प्रसादं कुरु सुव्रत ।' सत्यवानुवाच । 'नाहं स्वतन्त्रः सुश्रोणि पृच्छस्व पितरौ मम । ताभ्यां प्रस्थापितागच्छ मया सह शुचिस्मिते । एवमुक्ता तदा तेन भर्त्रा सा कमलेक्षणा । श्वश्रूश्वशुरयोः पादावभिवाद्येदमब्रवीत् । वनं द्रष्टुमभीप्सेऽहमाज्ञा मह्यं प्रदीयताम् । उवाच वाक्यं वाक्यज्ञा वरमेकं प्रयच्छतम् । तच्छ्रुत्वा भाषितं वाक्यं सावित्र्या द्विजसत्तम । वरं वृणीष्व भद्रं ते यं त्वमिच्छसि भामिनि । ततः सा वचनं श्रुत्वा श्वश्रूश्वशुरयोस्तदा । उवाच वचनं साध्वी वरमेकं प्रयच्छतम् । भर्त्रा सह वनं गन्तुमेवं मे त्वरते मनः । तस्यास्तद्वचनं श्रुत्वा द्युमत्सेनोऽब्रवीदिदम् । व्रतं कृतं त्वया भद्रे पारणं कुरु सुव्रते । पारणान्ते ततो भीरु वनं गन्तुं त्वमर्हसि ।' सावित्र्युवाच । 'नियमश्च कृतोऽस्माकं रात्रौ चन्द्रोदये सति । जाते मया प्रकर्तव्यं तात मे शृणु भोजनम् । वनदर्शनकामोस्ति भर्त्रा सह ममाद्य वै । न मे तत्र भवेद्ग्लानिर्भत्रा सह नराधिप । इत्युक्त्वा तु तदा राजा द्युमत्सेनो महीपतिः । यत्तेऽभिलषितं पुत्रि तत्कुरुष्व सुमध्यमे । नमस्कृत्वा तु सावित्री श्वश्रूं च श्वशुरं तथा । सहिता मुनिशार्दूल गता सत्यवता सह । विलोकयन्ती भर्तारं तं च कालं मनस्विनी । वनं च फलितं दृष्ट्वा पुष्पितं द्रुमसंकुलम् । द्रुमाणां चैव नामानि मृगाणां चैव भामिनी । पश्यन्ती मृगयूथानि हृदयेन प्रवेपती । तत्र गत्वा सत्यवान्वै फलान्यादाय सत्वरम् ।

काष्ठानि च समादाय बबन्धे भारकं तदा । कठिनं पूरयामास कृत्वा चैवावलोकनम् ॥ वटवृक्षस्य सा साध्वी उपविष्टा महासती । काष्ठान्पाटयतस्तस्य जाता शिरसि वेदना । ग्लानिश्च महती जाता गात्राणां वेपथुस्तदा । आगत्य वृक्षसामीप्यं सावित्रीमिदमब्रवीत् । ग्लानिश्च महती जाता शिरसश्चापि वेदना । कण्टकैर्भिद्यते भद्रे शिरो मे शूलसंस्थितैः। उत्सङ्गे तव सुश्रोणि स्वप्तुमिच्छामि सुव्रते । अभिज्ञाता विशालाक्षी तस्य मृत्योर्मनस्विनी । प्राप्तं कालं मन्यमाना तस्मै[2] तत्रैव भामिनी । सत्यवानपि सुप्तस्तु कृत्वोत्सङ्गे शिरस्तदा । तावत्तत्र समागच्छत्पुरुषः कृष्णपिङ्गलः । जाज्वल्यमानो वपुषा ददर्शामुं च भामिनी । उवाच वाक्यं वाक्यज्ञा कस्त्वं लोकभयंकरः । नाहं धर्षयितुं शक्या पुरुषेणापि केनचित् । इत्युक्तः प्रत्युवाचेदं यमो लोकभयंकरः । क्षीणायुस्तु वरारोहे भर्ता तव मनस्विनि । केनापि न महादेवि नेतुं शक्यस्त्वदङ्कतः । अन्यैर्दुर्विषहं तेजः सोढुं शक्यं न ते शुभे । इति मत्वा वरारोहे स्वयमागमनं मम ।इत्युक्त्वा तां वरारोहां तस्य देहान्महात्मनः । अङ्गुष्ठमात्रं पुरुषं बद्ध्वा पाशेन दुस्तरम् । निचकर्ष ततो वेगाद्गृहीत्वा प्रस्थितः पुरीम् । सावित्री तु ततः पश्चादनुयाति स्म तं पतिम् ।' यम उवाच— 'निवर्तस्व महाभागे त्वं दूरं समुपागता । गत्वा स्वभवनं शीघ्रं कुरु चैवोर्ध्वदैहिकम् । एवमुक्ता तु सा तेन प्रत्युवाच यमं तदा । न श्रमो नैव च ग्लानिः सकाशे तव मानद । विशेषतश्च भर्तुर्मे कुतो ग्लानिः सुरेश्वर । धर्मेण त्वं पालयसे धर्मेण त्वं विवर्धसे । नाफलं दर्शनं देव सतामुक्तं कदाचन । आहुः सप्तपदं मैत्रमिति नीतिविदो विदुः ।' ईश्वर उवाच— 'संतुष्टस्तेन वाक्येन धर्मराजः स्वयं तदा । वराणामीश्वरो दाता वरं तस्यै दिदेश ह । सा वव्रे चात्मनः पुत्रान्पितुः पुत्रशतं तथा । चक्षुःप्राप्तिं च सा वव्रे श्वश्रूश्वशुरयोस्तदा । राज्यप्राप्तिं तथा ब्रह्मञ्जीवितं च तथा विभो । भर्तुः कमलपत्राक्षी निवृत्ता सा सुमध्यमा । प्रदक्षिणां ततः कृत्वा धर्मराजाय सुव्रता । पुनः सा प्रार्थयामास धर्मं लोकहितेच्छया । मदीयं तु व्रतं देव भक्त्या नारी करिष्यति । भर्तुः सापि हिता साध्वी समस्तफलभाग्भवेत् । तथेत्युक्त्वा धर्मराजो जगाम स्वीयमालयम् । सा गत्वा वटसामीप्यं कृत्वोत्सङ्गे शिरस्ततः । प्रबुद्धस्तु ततो ब्रह्मन्सत्यवानिदमब्रवीत् । मया स्वप्नं दुरारोहे दृष्टमद्यैव भामिनि । तत्तस्यै कथितं सर्वं यद्वृत्तं सर्वमेव तत् । तया च कथितः सर्वः संवादो हि यमेन हि ।' ईश्वर उवाच— 'अस्तं गते ततः सूर्ये

२—अनुज्ञा ददाविति शेषः ।

द्युमत्सेनो महीपतिः । पुत्रस्यागमनाकाङ्क्षी इतश्चेतश्च धावति । आश्रमादाश्रमं गच्छन्पुत्रदर्शनलालसः । आवयोरन्धयोर्यष्टिः क गतोऽसि विनावयोः । एवं स विविधं क्रोशन्सपत्नीको महीपतिः । चकार दुःखसंतप्तः पुत्रपुत्रेति चासकृत् । अकस्मादेव राजेन्द्रो लब्धचक्षुर्बभूव ह । तद्दृष्ट्वा परमाश्चर्यं चक्षुःप्राप्तिं द्विजोत्तम । सांत्वपूर्वं तदा वाक्यमूचुस्ते तापसा नृपम् । चक्षुःप्राप्त्या महाराज सूचितं ते महामते । उपस्थितं महाराज्यं न शोकं कर्तुमर्हसि । पुत्रेण च समायोगं प्राप्स्यसे नृपसत्तम । ईश्वर उवाच—'यावदेव वदन्त्येते तापसा द्विजसत्तम । सावित्रीसहितः प्राप्तः सत्यवान्द्विजसत्तम । नमस्कृत्य द्विजान्सर्वान्मातरं पितरं तथा । सावित्री च ततो ब्रह्मन्ववन्दे चरणाविति । श्वश्रूश्वशुरयोर्ब्रह्मन्सावित्री कमलेक्षणा ।' मुनय ऊचुः—' किंचित्सावित्रि जानासि कारणं वरवर्णिनि । वृद्धस्य चक्षुषः प्राप्तेः श्वशुरस्य वरानने ।' सावित्र्युवाच ।'न जानामि मुनिश्रेष्ठाश्चक्षुषः प्राप्तिकारणम् । तत्सर्वं विद्यते विप्राः सावित्र्यास्तपसः फलम् । व्रतस्यैव तु माहात्म्यं दृष्टमेतन्मयाऽधुना ।' ईश्वर उवाच—'एवं तु वदतस्तस्य तदा सत्यवतः प्रभो । पौराः समागतास्तस्य ह्याचख्युर्नृपतिं हितम् । येन राज्यं बलाद्राजन्हृतं क्रूरेण मन्त्रिणा । अमात्येन हतः सोऽपि त्विति पौराः समागताः ।' पौरा ऊचुः—' उत्तिष्ठ राजशार्दूल स्वराज्यं पालय प्रभो । अभिषिञ्चस्व राजेन्द्र पुरं मन्त्रिपुरोहितैः ।' ईश्वर उवाच—'स गत्वा राजशार्दूलः स्वपुरं जनसंवृतः । पितृपैतामहं राज्यं संप्राप्तं च महामनाः । सावित्री सत्यवांश्चैव परां मुदमवापतुः । जनयामास पुत्राणां शतं वै बाहुशालिनाम् । व्रतस्यैव तु माहात्म्यात्तस्याः पितुरजायत । पुत्राणां च शतं ब्रह्मन्प्रसन्नाच्च यमात्तथा । एतत्ते कथितं सर्वं व्रतमाहात्म्यमुत्तमम् । क्षीणायुर्जीवितो भर्ता व्रतस्यास्य प्रभावतः । कर्तव्यं सर्वनारीभिरवैधव्यफलप्रदम् ।' सनत्कुमार उवाच—'विधानं ब्रूहि देवेश व्रतस्यास्य च त्र्यम्बक । क्रियते विधिना येन स्त्रीणां पुरनिषूदन ।' ईश्वर उवाच—'वर्षैकं नियमं कृत्वा एकभक्तेन मानद । नक्ताहारेण वा विप्र भुक्तं प्राश्य द्विजर्षभ । त्रिदिनं लङ्घयित्वा तु चतुर्थे दिवसे शुभे । चन्द्रायार्घ्यं प्रदत्त्वा च पूजयित्वा सुवासिनीः । सावित्रीं च प्रसावित्रीं गन्धधूपनिवेदनैः । मिथुनानि यथाशक्त्या भोजयित्वा यथासुखम् । भोक्ष्येऽहं तु जगद्धात्रि निर्विघ्नं कुरु मे व्रतम् । दिनं प्रतिदिनं श्रेष्ठं कुर्यान्न्यग्रोधसेवनम् । कृत्वा वंशमये पात्रे वालुकाप्रस्थमेव च । सप्तधान्यभृतं पात्रं प्रस्थैकेन द्विजोत्तम । कारयेन्मुनिशार्दूल वस्त्रयुग्मेन वेष्टयेत् । तस्योपरि न्यसेद्देवं सावित्रीं ब्रह्मणा सह । सा-

वित्री सत्यवांश्चैव कार्यौ रौप्यमयावुभौ । पिठकं च कुठारं च कृत्वा रौप्यमयं द्विज । 'फलैः कालोद्भवैर्देवीं पूजयेद्ब्रह्मणः प्रियाम् । हरिद्रारञ्जितैश्चैव कण्ठसूत्रैः समर्चयेत् । सखीनां कण्ठसूत्राणि त्रिदिनं प्रतिपादयेत् । पक्वान्नानि च देयानि नित्यमेव द्विजोत्तम । माहात्म्यं चैव सावित्र्याः श्रोतव्यं मुनिसत्तम । पुराणश्रवणं कार्यं सतीनां चरितं विभो । पूजयेन्नित्यमेवेह मन्त्रेणानेन सुव्रत । सावित्री च प्रसावित्री सततं ब्रह्मणः प्रिया । पूज्यसे हूयसे देवि द्विजैर्मुनिगणैः सदा । त्रिसंध्यं देवि भूतानां वन्दिता त्वं जगन्मये । मया दत्ता च पूजेयं प्रतिगृह्ण नमोऽस्तु ते । नमः सावित्र्यै पादौ तु इति पूर्वोक्तपूजनम् । सावित्री च प्रसावित्री द्विधा भूतासि शोभने । जगत्रयस्थिते देवि त्रिसंध्ये च तथाऽनघे । त्रिते देवि त्रिलोके च त्रेता गौस्त्वं महेश्वरि । व्यापितं सकलं लोकमतो मां पाहि सर्वदा । रूपं देहि यशो देहि सौभाग्यं देहि मे शुभे । पुत्रान्देहि धनं देहि सर्वजन्मसु सर्वदा । यथा ते न वियोगोऽस्ति भर्त्रा सह सुरेश्वरि । तथा मे सुमहाभागे कुरु त्वं जन्मजन्मनि । एवं संपूजयेद्देवं कमलासनसंस्थितम् । एवं दिनत्रयं नीत्वा चतुर्थेऽहनि सत्तम । मिथुनानि च संभोज्य षोडशैव द्विजोत्तम । पूजयेद्वस्त्रगोदानैर्भूषणाच्छादनासनैः । अर्चयित्वा तथाचार्यं सपत्नीकं सुसंमतम् । तस्मै संकल्पितं सर्वं हेमसावित्रिसंयुतम् । मन्त्रेणानेन दातव्यं द्विजमुख्याय सर्वतः । सावित्रीकल्पविदुषे प्रणिपत्य तथा मुने । सावित्री जगतां माता सावित्री जगतः पिता । मया दत्ता च सावित्री ब्राह्मणः प्रतिगृह्यताम् । अवैधव्यं च मे नित्यं यावज्जन्मनि जन्मनि । मृता च वसते लोके ब्रह्मणा पतिना सह । तत्रैव च चिरं कालं भुञ्जाना भोगमुत्तमम् । अनेनैव विधानेन कर्तव्यं व्रतमुत्तमम् । सर्वान्मनोरथान्प्राप्य अन्ते रुद्रोऽभिजायते ।' इति । इति स्कान्दे सावित्रीव्रतं समाप्तम् ।

अथाब्दसाध्यं सोद्यापनं सावित्रीव्रतम् । स्कान्दे—धर्मराजवरप्रदानानन्तरम् ॥ सावित्र्युवाच—'मदीयं तु व्रतं देव भक्त्या नारी करिष्यति । भर्तुः सापि हिता साध्वी समस्तफलभाजनम् ।' धर्म उवाच—'नारी वा विधवा वापि पुत्रीपुत्रविवर्जिता । सभर्तृका सपुत्रा वा कुर्याद्व्रतमिदं शुभम् । ज्येष्ठे मासि तु संप्राप्ते पौर्णमास्यां पतिव्रता । स्नात्वा चैव शुचिर्भूत्वा वटं सिञ्च्य बहूदकैः । सूत्रेण वेष्टयेद्भक्त्या गन्धपुष्पाक्षतैः शुभैः । ॐनमो वै वटायेति भ्रामयन्ती प्रदक्षिणम् । रात्रौ कुर्वीत नक्तं च

अब्दमेकं समाहिता । तथैव वटवृक्षं च पक्षे पक्षे च पूजयेत् । संप्राप्ते च पुनर्ज्येष्ठे लघुभुग्द्वादशीं नयेत् । दन्तानां धावनं कृत्वा नियमं कारयेत्ततः । त्रिरात्रं लङ्घयित्वा च चतुर्थे दिवसे ह्यहम् । चन्द्रायार्घ्यं प्रदत्त्वा च पूजयित्वा च तां सतीम् । मिष्टान्नानि यथाशक्त्या भोजयित्वा द्विजोत्तमान् । भोक्ष्येऽहं तु जगद्धात्रि निर्विघ्नं कुरु मे शुभे ।' नियममन्त्रः । 'कृत्वा वंशमये पात्रे वालुकाप्रस्थमेव च । सप्तधान्यभृतं पात्रं प्रस्थैकेन द्विजोत्तमाः । वस्त्रद्वयोपरि स्थाप्य सावित्रीं ब्रह्मणा सह । हैमीं कृत्वा तयोः प्रीत्यै त्रिरात्रमुपवासयेत् । न्यग्रोधस्य तले तिष्ठन्यावच्चैव दिनत्रयम् । सौवर्णीं चैव सावित्रीं सत्येन सह कारयेत् । रौप्यपर्यङ्कमारोप्य रथोपरि निवेशयेत् । पलादूर्ध्वं यथाशक्त्या रथं रौप्यमयं शुभम् । काष्ठभारं च सुदृढं वटं चैव सुविस्तरम् । एवं च मिथुनं कृत्वा पूजयेद्गतमत्सरा । वर्तुलं मण्डलं कार्यं गोमयेन तपोधने।पञ्चामृतेन स्नपनं गन्धपुष्पोदकेन च।चन्दनागरुकर्पूरैर्माल्यवस्त्रविभूषणैः । संपूज्य चात्र सावित्रीं मण्डले स्थापयेद्बुधः। पीतपिष्टेन पद्मं च अथवा चन्दनेन च । न्यसेच्चैव ततो देवीं कमले कमलासनाम्।अनेन विधिना स्थाप्य पूजयेद्गतमत्सरा।'अथ सावित्रीपूजामन्त्रः—'नमःसावित्र्यै पादौ तु प्रसावित्र्यै च जानुनी । कटिं कमलपत्राक्ष्यै उदरं भूतधारिणी ।' ॐगायत्र्यै नमः कण्ठे शिरसि । अथ ब्रह्मसत्यवतोः पूजामन्त्रः । 'पादौ धात्रे नमः पूज्य ऊरू ज्येष्ठाय वै नमः । परमेष्ठी च मेढ्रं च अग्निरूपाय वै कटिम् । वेधसे चोदरं पूज्य पद्मनाभाय वै हृदि । कण्ठं च विधये पूज्य हिरण्यगर्भाय वै मुखम् । ब्रह्मणे वै शिरः पूज्य सर्वाङ्गं विष्णवे नमः । अभ्यर्च्यैवं क्रमेणैव शास्त्रोक्तविधिना शुभे । ततो रजतपात्रेण अर्घ्यं दद्याद्द्वयोरपि ।' सावित्र्यर्घ्यमन्त्रः । 'ॐकारपूर्वके देवि वीणापुस्तकधारिणि । वेदमातर्नमस्तुभ्यमवैधव्यं प्रयच्छ मे । पतिव्रते महाभागे वह्निजाते शुचिस्मिते । दृढव्रते दृढमते भर्तुश्च प्रियवादिनि । अवैधव्यं तु सौभाग्यं देहि त्वं मम सुव्रते । पुत्रान्पौत्रांश्च सौख्यं च गृहाणार्घ्यं नमो नमः ।' अथ ब्रह्मसत्यवतोरर्घ्यदानमन्त्रः । 'त्वया सृष्टं जगत्सर्वं सदेवासुरमानुषम् । सत्यव्रतधरो देव ब्रह्मरूप नमोऽस्तु ते ।' अथ यमस्यार्घ्यमन्त्रः । 'त्वं कर्मसाक्षी लोकानां शुभाशुभविवेचकः । वैवस्वत गृहाणार्घ्यं धर्मराज नमोऽस्तु ते ।' धर्मराजः पितृपते साक्षिभूतेषु जन्तुषु । कालरूप गृहाणार्घ्यमवैधव्यं च देहि मे । गन्धपुष्पैः सनैवेद्यैः फलैः कुङ्कुमदीपकैः । रक्तवस्त्रैरलंकारैः पूजयेद्गतविस्मया ।' अथ सावित्रीप्रार्थनामन्त्रः । 'सावित्री ब्रह्मगायत्री सर्वदा प्रियभाषिणी । तेन सत्येन मां पाहि दुःखसंसा

रसागरात् । त्वं गौरी त्वं शची लक्ष्मीस्त्वं प्रभा चन्द्रमण्डले । त्वमेव च जगन्माता त्वमुद्धर वरानने । सौभाग्यं कुलवृद्धिं च देहि त्वं मम सुव्रते । यन्मया दुष्कृतं सर्वं कृतं जन्मशतैरपि । भस्मीभवतु तत्सर्वमवैधव्यं च देहि मे ।' अथ ब्रह्मसत्यव्रतोः प्रार्थनामन्त्रः।'अवियोगो यथा देव सावित्र्या सहितस्तव।अवियोगस्तथाऽस्माकं भूयाज्जन्मनि जन्मनि ।' यमप्रार्थनामन्त्रः । 'कर्मसाक्षी जगत्पूज्यः सर्ववन्द्य प्रसीद मे । सावित्रि त्वं यथा देवि चतुर्वर्षशतायुषम् । पतिं प्राप्तासि गुणिनं मम देवि तथा कुरु । सावित्री प्रसवित्री च सततं ब्रह्मणः प्रिया । पूजिता सद्द्विजैः सर्वैः स्त्रीभिर्मुनिगणैस्तथा । त्रिसंध्यं देवि भूतानां वन्दनीयासि सुव्रते । मया दत्ता च पूजेयं त्वं गृहाण नमोऽस्तु ते। जागरं तत्र कुर्वीत गीतनृत्यादिमङ्गलैः । सुवासिन्यस्तथा पूज्या दिवसे दिवसे गते। सिन्दूरं कुङ्कुमं चैव ताम्बूलं सपवित्रकम् । तथा दद्याच्च शूर्पाणि भक्ष्यं सौभाग्यमष्टकम् । संतिष्ठेत दिवारात्रौ कामक्रोधविवर्जिता । दिनत्रयेऽपि कर्तव्यमेवमर्घ्यादिपूजनम् । ततश्चतुर्थदिवसे यत्कार्यं तच्छृणुष्व मे । मिथुनानि चतुर्विंशत्षोडश द्वादशाष्ट वा । पूजयेद्वस्त्रगोदानैर्भूषणाच्छादनासनैः । अथवा गुरुमेकं च व्रतस्य विधिकारकम् । सर्वलक्षणसंपन्नं सर्वशास्त्रार्थपारगम् । वेदविद्याव्रतस्नातं शतं च विजितेन्द्रियम् । सपत्नीकं समभ्यर्च्य वस्त्रालंकारभूषणैः । शय्यां सोपस्करां दद्याद्गृहं चैवातिशोभनम् । अशक्तस्तु यथाशक्त्या स्तोकं स्तोकं च कल्पयेत् । सौवर्णीं प्रतिमां चैव पतिना सह दापयेत् ।' प्रतिमादानमन्त्रः । 'सावित्री जगतो माता सावित्री जगतः पिता । मया दत्ता च सावित्री ब्राह्मण प्रतिगृह्यताम् ।' अथ प्रतिग्रहमन्त्रः । 'मया गृहीता सावित्री त्वया दत्ता सुशोभना । यावच्चन्द्रश्च सूर्यश्च सह भर्त्रा सुखी भव । गुरुं च गुरुपत्नीं च ततो भक्त्या क्षमापयेत् । यन्मया कृतवैकल्यं व्रतेऽस्मिन्दुराधिष्ठितम् । तत्सर्वं पूर्णतां यातु युवयोर्वचनेन तु ।' प्रतिमासं वटसेचनमन्त्रः । 'धर्मराजो यमो धाता नीलः कालान्तकोऽव्ययः । वैवस्वतश्चित्रगुप्तो दध्नो मृत्युः क्षयो वटः । मासि मासि तथा ह्येतैर्नामभिः सेचयेद्वटम् । न्यग्रोधेऽहं वसे पुत्रि तस्माद्यत्नेन सेचयेत् । ततो गुरुं सपत्नीकं सेचयेद्व्रतविस्मयम् । भूषणैश्च सवस्त्रैश्च कुङ्कुमैश्च मनोहरैः । न्यग्रोधस्य समीपे तु गृहे वा स्थण्डिले शुभे । सावित्र्याश्चैव मन्त्रेण घृतहोमं च कारयेत् । पायसं जुहुयाद्भक्त्या घृतेन सह भामिनि । व्याहृत्या चैव मन्त्रेण तिलव्रीहियवं तथा । होमान्ते दक्षिणां दद्याद्वित्तशाठ्यविवर्जितः । क्षमापयेत्ततो विप्रं वन्द्य पादौ प्रयत्नतः । भुञ्जीत वांस-

रान्ते तु नक्तं शान्ता यशस्विनी । अर्घ्यं दत्त्वा त्वरुन्धत्यै दृष्ट्वा चैव प्रणम्य च ॥ अरुन्धति नमस्तेऽस्तु वसिष्ठस्य प्रिये शुभे । सर्वदेवनमस्कार्ये पतिव्रते नमोऽस्तु ते ॥ सर्वं गृह्ण मया दत्तं फलपुष्पसमन्वितम् । पुत्रान्देहि सुखं देहि गृहाणार्घ्यं नमोऽस्तु ते ॥ सर्वैर्विप्रैर्ब्राह्मणैः सार्धं भुञ्जीत विजितेन्द्रिया । एवं करोति या नारी व्रतमेतदनुत्तमम् । भ्रातरः पितरः पुत्राः श्वशुराः स्वजनास्तथा । चिरायुषस्तथाऽरोगाः स्युश्च जन्मशतत्रयम् । भर्त्रा च सहिता साध्वी ब्रह्मलोके महीयते ।' इति स्कान्दे सोद्यापनं वटसावित्रीव्रतम् ।

अन्यच्च महाभारते—युधिष्ठिर उवाच । 'नात्मानमनुशोचामि नेमान्भ्रातॄन्महामुने । हरणं वापि राज्यस्य यथेमां द्रुपदात्मजाम् ॥ द्यूते दुरात्मभिः क्लिष्टा कृष्णया तारिता वयम् ॥ जयद्रथेन च पुनर्वनाच्चापि हृता बलात् । अस्ति सीमन्तिनी काचिद्दृष्टपूर्वापि वा श्रुता । पतिव्रता महाभागा यथेयं द्रुपदात्मजा ।' मार्कण्डेय उवाच—'शृणु राजन्कुलस्त्रीणां महाभाग्यं युधिष्ठिर । सर्वमेतद्यथा प्राप्तं सावित्र्या राजकन्यया । आसीन्मद्रेषु धर्मात्मा राजा परमधार्मिकः । ब्रह्मण्यश्च महात्मा च सत्यसंधो जितेन्द्रियः । यज्वा दानपतिर्दक्षः पौरजानपदप्रियः । पार्थिवोऽश्वपतिर्नाम सर्वभूतहिते रतः । क्षमावाननपत्यश्च सत्यवाग्विजितेन्द्रियः । अतिक्रान्तेन वयसा संतापमुपजग्मिवान् । अपत्योत्पादनार्थं च तीव्रं नियममास्थितः । काले परिमिताहारो ब्रह्मचारी जितेन्द्रियः । हुत्वा शतसहस्रं स सावित्र्या राजसत्तम । षष्ठे षष्ठे तदा काले बभूव मितभोजनः । एतेन नियमेनासीद्वर्षाण्यष्टादशैव तु । पूर्णे त्वष्टादशे वर्षे सावित्री तुष्टिमभ्यगात् । रूपिणी तु तदा राजन्दर्शयामास तं नृपम् । अग्निहोत्रात्समुत्थाय हर्षेण महताऽन्विता । उवाच चैनं वरदा वचनं पार्थिवं तदा ।' सावित्र्युवाच । 'ब्रह्मचर्येण शुद्धेन दमेन नियमेन च । सर्वात्मना च भक्त्या च तुष्टाऽस्मि तव पार्थिव । वरं वृणीष्वाश्वपते मद्रराज यदीप्सितम् । न प्रमादश्च धर्मेषु कर्तव्येषु कथञ्चन ।' अश्वपतिरुवाच । 'अपत्यार्थं समारम्भः कृतो धर्मेप्सया मया । पुत्रा मे बहवो देवि भवेयुः कुलभावनाः । तुष्टासि यदि मे देवि वरमेकं वृणोम्यहम् ॥ संतानं परमो धर्म इत्याहुर्मां द्विजातयः ।' सावित्र्युवाच । 'पूर्वमेव मया राजन्नभिप्रायमिमं तव । ज्ञात्वा पुत्रार्थमुक्तो वै भगवांस्ते पितामहः । प्रसादाच्चैव तस्मात्ते स्वयंभूविहिता भुवि । कन्या तेजस्विनी सौम्या क्षिप्रमेव भविष्यति । उत्तरं च न ते किंचिद्व्याहर्तव्यं कथंचन । पितामहनिसर्गेण तुष्टा ह्येतद्ब्रवीमि ते ।' मार्कण्डेय उवाच । 'स तथेति प्रतिज्ञाय सावित्र्या वचनं नृपम् ।

प्रसादयामास पुनः क्षिप्रमेतद्भवत्विति । अन्तर्हितायां सावित्र्यां जगाम स्वपुरं नृपः । स्वराज्ये चावसद्वीरः प्रजा धर्मेण पालयन् । कस्मिंश्चित्तु गते काले स राजा नियतव्रतः । ज्येष्ठायां धर्मचारिण्यां महिष्यां गर्भमादधे । राजपुत्र्यास्तु गर्भः स मालव्या भरतर्षभ । व्यवर्धयेत्तदा मुक्तस्तारापतिरिवाम्बरे । प्राप्ते काले तु सुषुवे कन्यां राजीवलोचनाम् । क्रियाश्च तस्या मुदितश्चक्रे च नृपसत्तमः । सावित्र्या प्रीतया दत्ता सावित्र्या हुतया ह्यपि । सावित्रीत्येव नामास्याश्चक्रुर्विप्रास्तथा पिता । सा विग्रहवतीव श्रीर्व्यवर्धत नृपात्मजा । कालेन चापि सा कन्या यौवनस्था बभूव ह । तां सुमध्यां पृथुश्रोणीं प्रतिमां काञ्चनीमिव । प्राप्तेयं देवकन्येति दृष्ट्वा संमेनिरे जनाः । तां तु पद्मपलाशाक्षीं ज्वलन्तीमिव तेजसा । न कश्चिद्वरयामास तेजसा प्रतिवाधितः । अथोपोष्य शिरःस्नाता देवतामभिगम्य सा । हुत्वाऽग्निं विधिवद्विप्रान्वाचयामास पर्वणि । ततः सुमनसः शेषात्प्रतिगृह्य महात्मनः । पितुः समीपमगमद्देवी श्रीरिव रूपिणी । साऽभिवाद्य पितुः पादौ शेषाः पूर्वं नियम्य च । कृताञ्जलिर्वरारोहा नृपतेः पार्श्वमास्थिता । यौवनस्थां तु तां दृष्ट्वा स्वां सुतां देवरूपिणीम् । अयाच्यमानां च वरैर्नृपतिर्दुःखितोऽभवत् ।' राजोवाच ।'पुत्रि प्रदानकालस्ते न च कश्चिद्वृणोति त्वाम् । स्वयमन्विच्छ भर्तारं गुणैः सदृशमात्मनः । प्रार्थितः पुरुषो यश्च स निवेद्यस्त्वया मम । विमृश्याहं प्रदास्यामि वरय त्वं यथेप्सितम् । श्रुतं हि धर्मशास्त्रेषु पठ्यमानं द्विजातिभिः । तथा त्वमपि कल्याणि गदतो मे वचः शृणु । अप्रदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः । मृते भर्तरि पुत्रश्च वाच्यो मातुररक्षिता । इदं मे वचनं श्रुत्वा भर्तुरन्वेषणत्वरा । देवतानां यथा वाच्यो न भवेयं तथा कुरु ।' मार्कण्डेय उवाच । 'एवमुक्त्वा बहुतरं तथा वृद्धांश्च मन्त्रिणः । व्यादिदेशानुयात्रं च गम्यतां चेत्यचोदयत् । साऽभिवाद्य पितुः पादौ व्रीडितेव तपस्विनी । पितुर्वचनमाज्ञाय निर्जगामाविचारितम् । सा हैमं रथमास्थाय स्थविरैः सचिवैर्वृता । तपोवनानि रम्याणि राजर्षीणां जगाम ह । मान्यानां तत्र वृद्धानां कृत्वा पादाभिवन्दनम् । वनानि क्रमशस्तात सर्वाण्येवाभ्यगच्छत । एवं तीर्थेषु सर्वेषु धनोत्सर्गं नृपात्मजा । कुर्वती द्विजमुख्यानां तं तं देशं जगाम ह ।' आरण्यके सावित्र्युपाख्याने—मार्कण्डेय उवाच ।' अथ मद्राधिपो राजा नारदेन समागतः । उपविष्टः सभामध्ये कथायोगेन भारत । ततोऽभिगम्य तीर्थानि सर्वाण्येवाश्रमांस्तथा । आजगाम पितुर्वेश्म सावित्री सह मन्त्रिभिः । नारदेन समासीनं सा दृष्ट्वा पितरं शुभा । उभयोरेव शिरसा चक्रे पादाभिवन्दनम् ।' नारद उवाच । 'क्व गता-

ऽभूत्सुतेयं ते कुतश्चैवागता नृप। किमर्थं युवतीं भर्त्रे न चैनां संप्रयच्छसि।' अश्वपतिरुवाच। 'कार्येण खल्वनेनैव प्रेषिताऽद्यैवमागता। एतस्याः शृणु देवर्षे भर्तारं योऽनया वृतः।' मार्कण्डेय उवाच। 'सा ब्रूहि विस्तरेणेति पित्रा संचोदिता शुभा। दैवतस्येव वचनं प्रतिगृह्येदमब्रवीत्।' सावित्र्युवाच। 'आसीत्साल्वेषु धर्मात्मा क्षत्रियः पृथिवीपतिः। द्युमत्सेन इति ख्यातः पश्चाच्चान्धो बभूव ह। विनष्टचक्षुषस्तस्य बालपुत्रस्य धीमतः। सामन्तेन हृतं राज्यं छिद्रेऽस्मिन्पूर्ववैरिणि। स बालवत्सया सार्धं भार्यया प्रस्थितो वनम्। महारण्यगतश्चापि तपस्तेपे महाव्रतः। तस्य पुत्रः पुरे जातः संवृद्धश्च तपोवने। सत्यवाननुरूपो मे भर्तेति मनसा वृतः।' नारद उवाच। 'अहो बत महत्पापं सावित्र्या नृपते कृतम्। अजानन्त्या यदनया गुणवान्सत्यवान्वृतः। सत्यं वदत्यस्य पिता सत्यं माता प्रभाषते। तथाऽस्य ब्राह्मणाश्चक्रुर्नामैतत्सत्यवानिति। बालस्याश्वाः प्रियाश्चास्य करोत्यश्वांश्च मृन्मयान्। चित्रेऽपि विलिखत्यश्वांश्चित्राश्व इति चोच्यते।' राजोवाच। 'अपीदानीं स तेजस्वी बुद्धिमान्वा नृपात्मजः। क्षमावानपि वा शूरः सत्यवान्पितृवत्सलः।' नारद उवाच। 'विवस्वानिव तेजस्वी बृहस्पतिसमो मतौ। महेन्द्र इव वीरश्च वसुधेव क्षमान्वितः।' अश्वपतिरुवाच। 'अपि राजात्मजो दाता ब्रह्मण्यश्चापि सत्यवान्। रूपवानप्युदारो वाऽप्यथ वा प्रियदर्शनः।' नारद उवाच। 'सांकृतेरन्तिदेवस्य सदृशो दानतस्तथा। ब्रह्मण्यः सत्यवादी च शिबिरौशीनरो यथा। ययातिरिव चोदारः सोमवत्प्रियदर्शनः। रूपेणाप्रतिमः श्रीमान्द्युमत्सेनसुतो बली। स दान्तः स मृदुः शूरः स सत्यः संयतेन्द्रियः। स मैत्रः सोऽनसूयश्च स ह्रीमान्द्युतिमांश्च सः। नित्यशश्चार्जवं तस्मिन्स्थितिस्तस्यैव च ध्रुवा। संक्षेपतस्तपोवृद्धैः शीलवृद्धैश्च कथ्यते।' अश्वपतिरुवाच। 'गुणैरुपेतं सर्वैस्तं भगवन्प्रब्रवीषि मे। दोषानप्यस्य मे ब्रूहि यदि सन्तीह केचन।' नारद उवाच। 'एक एवास्य दोषोऽस्ति गुणानाक्रम्य तिष्ठति। स च दोषः प्रयत्नेन न शक्यो ह्यतिवर्तितुम्। एको दोषोऽस्ति नान्योऽस्य सोऽद्यप्रभृति सत्यवान्। संवत्सरेण क्षीणायुर्देहन्यासं करिष्यति।' सावित्र्युवाच। 'सकृदंशो निपतति सकृत्कन्या प्रदीयते। सकृदाह ददानीति त्रीण्येतानि सकृत्सकृत्। दीर्घायुरथ वाऽल्पायुः सगुणो निर्गुणोऽपि वा। सकृद्वृतो मया भर्ता न द्वितीयं वृणोम्यहम्। मनसा निश्चयं कृत्वा ततो वाचा विधीयते। क्रियते कर्मणा पश्चात्प्रमाणं मे मनस्ततः।' नारद उवाच। 'स्थिरा बुद्धिर्नृपश्रेष्ठ सावित्र्या दुहितुस्तव। नैषा वारयितुं शक्या धर्मादस्मात्कथं

चन । नान्यस्मिन्पुरुषे सन्ति ये तस्मिन्सन्ति वै गुणाः । प्रदानमेव तस्मान्मे रोचते दुहितुस्तव । ' राजोवाच । ' अपि चाल्पमेतदुक्तं तथ्यं च भवता वचः । करिष्याम्येतदेवं च गुरुर्हि भगवान्मम ।' नारद उवाच । ' अविघ्नमस्तु सावित्र्याः प्रदाने दुहितुस्तव ।' मार्कण्डेय उवाच । ' एवमुक्त्वा खमुत्पत्य नारदस्त्रिदिवं गतः । राजापि दुहितुः सर्वं वैवाहिकमकारयत् । ' आरण्यके सावित्र्युपाख्याने--मार्कण्डेय उवाच । ' अथ कन्याप्रदाने स तमेवार्थं विचिन्तयन् । समानिन्ये च तत्सर्वं भाण्डं वैवाहिकं नृप । ततो वृद्धान्द्विजान्सर्वानृत्विजः सपुरोहितान् । समाहूय दिने पुण्ये प्रययौ सह कन्यया । मेध्यारण्यं स गत्वा च द्युमत्सेनाश्रमं नृपः । पद्भ्यामेव द्विजैः सार्धं राजर्षिस्तमुपागमत् । तत्रापश्यन्महाभागं सालवृक्षमुपाश्रितम् । कौश्यां बृस्यां समासीनं चक्षुर्हीनं नृपं तदा । स राजा तस्य राजर्षेः कृत्वा पूजां यथार्हतः । वाचा सुनियतो भूत्वा चकारात्मनिवेदनम् । तस्यार्घ्यमासनं चैव गां च वेद्य स धर्मवित् । कामागमनमित्येवं सर्वमेव न्यवेदयत् । सावित्री नाम राजर्षे कन्येयं मम शोभना । तां स धर्मेण धर्मज्ञ स्नुषार्थं त्वं गृहाण मे । ' द्युमत्सेन उवाच । ' च्युताः स्म राज्याद्वनवासमाश्रितावराम धर्मं नियतास्तपस्विनः । कथं त्वनर्हा वनवासमाश्रमे निवत्स्यते क्लेशमिमं सुता तव । ' अश्वपतिरुवाच । 'सुखं च दुःखं च भवाभवात्मकं यदा विजानाति सुताऽहमेव च । न मद्विधे युज्यति वाक्यमीदृशं विनिश्चयेनाभिगतोऽस्मि ते नृप । आशां नार्हसि मे हन्तुं सौहृदात्प्रणतस्य च । अभितश्च गतं प्रेम्णा प्रत्याख्यातुं न मेऽर्हसि । अनसूयो हि युक्तश्च त्वं ममाहं तवापि च ।स्नुषां प्रतीक्ष मे कन्यां भार्यां सत्यवतः सतः ।' द्युमत्सेन उवाच । "पूर्वमेवाभिलषितः संबन्धो मे त्वया सह । भ्रष्टराज्यस्त्वहमिति तत एतद्विचारितम् । अभिप्रायस्त्वयं यो मे पूर्वमेवाभिकाङ्क्षितः । संनिवर्ततु मेऽद्यैव कांक्षितोऽद्यासि मेऽतिथिः ।' मार्कण्डेय उवाच । 'ततः सर्वान्समानाय्य द्विजानाश्रमवासिनः । यथाविधि समुद्वाहं कारयामासतुर्नृपौ । दत्त्वा सोऽश्वपतिः कन्यां यथार्हं सपरिच्छदम् । ययौ स्वमेव भवनं युक्तः परमया मुदा । सत्यवानपि तां भार्यां लब्ध्वा सर्वगुणान्विताम् । मुमुदे सा च तं लब्ध्वा भर्तारं मनसेप्सितम् । गते पितरि सर्वाणि संन्यस्याभरणानि सा । जगृहे वल्कलान्येव वस्त्रं काषायमेव च । परिचारैर्गुणैश्चैव प्रश्रयेण दमेन च । सर्वकामक्रियाभिश्च सर्वेषां तुष्टिमादधे । श्वश्रूं शरीरसत्कारैः सर्वैराच्छादनादिभिः । श्वशुरं देवसत्कारैर्वाचः संयमनेन च । तथैव प्रियवादेन नैपुण्येन शमेन च ।

रहश्चैवोपचारेण भर्तारं पर्यतोषयत् । एवं तत्राश्रमे तेषां तदा निवसतां सताम् ॥ कालस्तपस्यतां कश्चिदपक्रामत भारत । सावित्र्या ग्लायमानायास्तिष्ठन्त्यास्तु दिवा-निशम् । नारदेन यदुक्तं तद्वाक्यं मनसि वर्तते ।' सावित्र्युपाख्याने—मार्कण्डेय उवाच । 'ततः काले बहुतिथे व्यतिक्रान्ते कदाचन।प्राप्तः स कालो मर्तव्यं यत्र सत्य-वता नृप । गणयन्त्याश्च सावित्र्या दिवसे दिवसे गते ।यद्वाक्यं नारदेनोक्तं वर्तते हृदि-नित्यशः । चतुर्थेऽहनि मर्तव्यमिति संचिन्त्य भामिनी । व्रतं त्रिरात्रमुद्दिश्य दिवा रात्रं स्थिताऽभवत् । तं श्रुत्वा नियमं तस्या भृशं दुःखातुरो भृशम् । उत्थाय वाक्यं सावित्रीमब्रवीत्परिसान्त्वयन् ।' द्युमत्सेन उवाच । 'अतितीव्रोऽयमारम्भस्त्वयारब्धो नृपात्मजे । तिसृणां वसतीनां हि स्थानं परमदुश्चरम् ।' सावित्र्युवाच । 'न कार्यस्तात संतापः पारयिष्याम्यहं व्रतम् । व्यवसायकृतं हीदं व्यवसायश्च कारणम् ।' द्युमत्सेन उवाच । 'व्रतं भिन्धीति वक्तुं त्वां नास्ति शक्तः कथंचन । पारयस्वेति वचनं युक्तम-स्मद्विधो वदेत् ।' मार्कण्डेय उवाच । 'एवमुक्त्वा द्युमत्सेनो विरराम महामनाः । तिष्ठन्ती चैव सावित्री काष्ठभूतेव लक्ष्यते । श्वोभूते भर्तृमरणे सावित्र्या भरतर्षभ । दुःखान्वितायास्तिष्ठन्त्याः सा रात्रिर्व्यत्यवर्तत । अथ तद्दिवसं चेति हुत्वा दीप्त-हुताशनम् । युग्ममात्रोदिते सूर्ये कृत्वा पौर्वाह्णिकीः क्रियाः । ततः सर्वान्द्विजान्वृद्धा-ञ्श्वश्रूंश्वशुरमेव च । अभिवाद्य तु पूर्वेण प्राञ्जलिर्नियता स्थिता । अवैधव्याशिषस्तेतु सावित्र्यर्थं हिताः शुभाः । ऊचुस्तपस्विनः सर्वे तपोवननिवासिनः । एवमस्त्विति सावि-त्री ध्यानयोगपरायणा । मनसा ता गिरः सर्वाः प्रत्यगृह्णात्तपस्विनाम् । तं कालं तं मुहूर्तं च प्रतीच्छन्ती नृपात्मजा । यथोक्तं नारदवचश्चिन्तयन्ती सुदुःखिता । ततस्तु श्वश्रूश्वशुरावूचतुस्तां नृपात्मजाम् । एकान्तमास्थिता वाक्यं प्रीत्या भरतसत्तम ।' श्वशुरावूचतुः । 'व्रतं यथोपदिष्टं यत्तथातत्पारितं त्वया । आहारकालः संप्राप्तः क्रियतां यदनन्तरम् ।' सावित्र्युवाच । 'अस्तं गते मयादित्ये भोक्तव्यं कृतकामया । एष मे हृदि संकल्पः समयश्च कृतो मया ।' मार्कण्डेय उवाच । एवं संभाष्य-माणायाः सावित्र्या भोजनं प्रति । स्कन्धे परशुमादाय सत्यवान्प्रस्थितो वनम् । सावित्री त्वाह भर्तारं नैव त्वं गन्तुमर्हसि।सह त्वयागमिष्यामि न हि त्वां हातुमुत्सहे ।' सत्यवानुवाच । 'वनं न गतपूर्वं ते दुःखं पन्थाश्च भामिनि । व्रतोपवासक्षामा च कथं पद्भ्यांगमिष्यसि ।'सावित्र्युवाच।'उपवासान्न मे ग्लानिर्नास्तिचापिपरिश्रमः । गमने च कृतोत्साहां प्रतिषेद्धुं न मार्हसि ।' सत्यवानुवाच । यदि ते गमनोत्साहः करिष्यामि तव

प्रियम् । ममत्वामन्त्रयगुरुं न मां दोषः स्पृशेदयम् ।' मार्कण्डेयउवाच । 'साऽभिवाद्या-ब्रवीच्छ्वश्रूं श्वशुरं च महाव्रता । अयं गच्छति मे भर्ता फलाहारो महावनम् । इच्छेयमभ्यनुज्ञाता आर्यया श्वशुरेण ह।अनेन सह निर्गन्तुं न मेऽद्य विरहः क्षमः । गुर्व-ग्निहोत्रार्थकृते प्रस्थितश्च सुतस्तव । न निवार्योऽनिवार्यः स्यादन्यथा प्रस्थितो वनम् । संवत्सरः किञ्चिदूनो न निष्क्रान्ताऽहमाश्रमात् । वनं कुसुमितं द्रष्टुं परं कौतू-हलं हि मे ।' द्युमत्सेन उवाच । 'यतः प्रभृति सावित्री पित्रा दत्ता स्नुषा मम । नान-याभ्यर्थनायुक्तमुक्तपूर्वं स्मराम्यहम् । तदेषा लभतां कामं यथाभिलषितं वधूः । अप्रमादश्च कर्तव्यः पुत्रि सत्यवतः पथि । मार्कण्डेय उवाच । 'उभाभ्यामभ्यनुज्ञाता सा जगाम यशस्विनी । सह भर्त्रा हसन्तीव हृदयेन विदूषता । सा वनानि विचि-त्राणि रमणीयानि सर्वशः।मयूरगणघुष्टानि ददर्श विपुलेक्षणा।नदान्पुण्यवहांश्चैव पुष्पि-तांश्च नगोत्तमान् । सत्यवानाह पश्येति सावित्रीं मधुरं वचः । निरीक्षमाणा भर्तारं सर्वावस्थमनिन्दिता । मृतमेव हि भर्तारं काले मुनिवचः स्मृतेः । अनुव्रजन्ती भर्तारं जगाम मृदुगामिनी । द्विधेव हृदयं कृत्वा तं च कालमवेक्षती । मार्कण्डेय उवाच । 'अथ भार्यासहायः स फलान्यादाय वीर्यवान् । कठिनं पूरयामास ततः काष्ठान्य-पाटयत् । तस्य पाटयतः काष्ठं खेदो वै समजायत । व्यायामेन च तेनास्य जज्ञे शिरसि वेदना । सोऽभिगम्य प्रियां भार्यामुवाच श्रमपीडितः ।' सत्यवानुवाच । 'व्यायामेन ममानेन जाता शिरसि वेदना । अङ्गानि चैव सावित्रि हृदयं दूयते वचः । अस्वस्थ-मिव चात्मानं लक्षये मितभाषिणि । शूलैरिव शिरो विद्धमिदं संलक्षयाम्यहम् । तत्स्व-प्तुमिच्छे कल्याणि न स्थातुं शक्तिरस्ति मे । सा समासाद्य सावित्री भर्तारमुपगम्य च । उत्सङ्गेऽस्य शिरः कृत्वा निषसाद महीतले । ततः सा नारदवचो विमृश्यन्ती तप-स्विनी। तं मुहूर्तक्षणं वेलां दिवसं च युयोज यत् । मुहूर्तादेव चापश्यत्पुरुषं रक्तवाससम् । बद्धमौलिं वपुष्मन्तमादित्यसमतेजसम् । श्यामावदातं रक्ताक्षं पाशहस्तं भयावहम् । स्थितं सत्यवतः पार्श्वे निरीक्षन्तं तमेव च । तं दृष्ट्वा सहसोत्थाय भर्तुर्न्यस्य शनैः शिरः। कृताञ्जलिरुवाचार्ता हृदयेन प्रवेपती ।' सावित्र्युवाच । 'दैवतं त्वाभिजानामि वपुरे-तद्ध्यमानुषम् । कामये ब्रूहि देवेश कस्त्वं किं च चिकीर्षसि ।' यम उवाच । 'पति-व्रताऽसि सावित्रि तथैव च तपोन्विता । अतस्त्वामभिभाषामि विद्धि मां त्वं शुभे यमम् । अयं ते सत्यवान्भर्ता क्षीणायुः पार्थिवात्मजः । नेष्यामि तमहं बद्ध्वा विद्ध्येत-तन्मे चिकीर्षितम् ।' सावित्र्युवाच । 'श्रूयते भगवन्दूतास्तवागच्छन्ति मानुषान् ।

नेतुं किं तु भवान्कस्मादागतोऽसि स्वयं प्रभो ।' मार्कण्डेय उवाच । 'इत्युक्तः पितृराजस्तां भगवान्स्वचिकीर्षितम् । यथावत्सर्वमाख्यातुं तत्प्रियार्थं प्रचक्रमे ।' यम उवाच । 'अयं तु धर्मसंयुक्तो रूपवान्गुणसागरः । नार्हो मत्पुरुषैर्नेतुमतोऽस्मि स्वयमागतः । ततः सत्यवतः कायात्पाशबद्धं वशं गतम् । अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् । ततः सा तु सुदुःखार्ता यममेवान्वगच्छत । नियमव्रतसंसिद्धा महाभागा यतव्रता ।' यम उवाच । 'निवर्त गच्छ सावित्रि कुरुष्वास्यौर्ध्वदैहिकम् ।' सावित्र्युवाच । 'यत्र मे नीयते भर्ता स्वयं वा यत्र गच्छति । मया च तत्र गन्तव्यमेष धर्मः सनातनः । मित्रतां च पुरस्कृत्य किंचिद्वक्ष्यामि तच्छृणु । नानात्मवन्तस्तु वने चरन्ति धर्मं च वासं च परिश्रमं च । विज्ञानतो धर्ममुदाहरन्ति तस्मात्सन्तो धर्ममाहुः प्रधानम् । एकेन धर्मेण सतां मतेन सर्वे स्म तन्मार्गमनुप्रपन्नाः । मा वै द्वितीयं मा तृतीयं च वाञ्छेत्तस्मात्सन्तो धर्ममाहुः प्रधानम् ।' यम उवाच । 'निवर्त तुष्टोऽस्मि तवानया गिरा स्वराक्षरव्यञ्जनहेतुयुक्तया । वरं वृणीष्वेह विनाऽस्य जीवितं ददामि ते सर्वमनिन्दिते वरम् ।' सावित्र्युवाच । 'च्युतः स राष्ट्राद्वनवासमाश्रितो विनष्टचक्षुः श्वशुरो ममाश्रमे । स नष्टचक्षुर्बलवान्भवेन्नृपस्तव प्रसादाज्ज्वलनार्कसंनिभः ।' यम उवाच । 'ददामि हन्ताहमनिन्दिते वरं यथा त्वयोक्तं भविता च तत्तथा । तवाध्वनो ग्लानिमिवोपलक्षये निवर्त गच्छस्व न ते श्रमो भवेत् ।' सावित्र्युवाच । 'श्रमः कुतो भर्तृसमीपतो हि मे यतो हि भर्ता मम सा गतिर्ध्रुवा । यतः पतिं नेष्यसि तत्र मे गतिः सुरेश भूयश्च वचो निबोध मे । सतां सकृत्संगतमीप्सितं परं ततः परं मित्रमिति प्रचक्षते । न चाफलं सत्पुरुषेण संगतं ततः सतां संनिवसेत्समागमे ।' यम उवाच । 'मनोनुकूलं बुधबुद्धिवर्धनं त्वया यदुक्तं वचनं हिताश्रयम् । विना पुनः सत्यवतोऽस्य जीवितं वरं द्वितीयं वरयस्व भामिनि ।' सावित्र्युवाच । 'हृतं पुरा मे श्वशुरस्य धीमतः स्वमेव राज्यं लभतां स पार्थिवः । जह्यात्स्वधर्मं न च मे गुरुर्यथा द्वितीयमेतद्वरयामि ते वरम् ।' यम उवाच । 'स्वमेव राज्यं प्रतिपत्स्यते चिरान्न च स्वधर्मान्परिहास्यते नृपः । कृतेन कामेन मया नृपात्मजे निवर्त गच्छस्व न ते श्रमो भवेत् ।' सावित्र्युवाच । प्रजास्त्वयैता नियमेन संयता नियम्य चैता नयसे न काम्यया । ततो यम त्वं तव देव विश्रुतं निबोध चेमां गिरमीरितां मया । अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा । अनुग्रहश्च दानं च सत्यं धर्मः सनातनः । एवं प्रायश्च लोकोऽयं मनुष्याः शक्तिपेशलाः । सन्त-

स्त्वेवाथ मित्रेषु दयां प्रसेषु कर्वते ।' यम उवाच ।'पिपासितस्येव भवेद्यथा पयस्तथा त्वया वाक्यमिदं समीरितम् । विना पुनः सत्यवतोऽस्य जीवितं वरं वृणीष्वेह शुभे यदिच्छसि । ' साविच्युवाच । ' स मेऽनपत्यः पृथिवीपतिः पिता भवेत्पितुः पुत्रशतं तथौरसम् । कुलस्य संतानकरं च यद्भवेत्तृतीयमेतद्वरयामि ते वरम् । ' यम उवाच। ' उदाहृतं ते वचनं यदङ्गने शुभे न तादृक्कदते श्रुतं मया । अनेन तुष्टोऽस्मि विनाऽस्य जीवितं वरं चतुर्थं वरयस्व गच्छ च । ' साविच्युवाच । 'ममात्मजं सत्यवतस्तथौरसं भवेदुभाभ्यामिह यत्कुलोद्वहम् । शतं सुतानां बलवीर्यशालिनामिदं चतुर्थं वरयामि ते वरम् ।' यम उवाच ।'शतं सुतानां बलवीर्यशालिनां भविष्यति प्रीतिकरं तवाबले । परिश्रमस्ते न भवेन्नृपात्मजे निवर्त दूरं हि पथस्त्वमागता ।' साविच्युवाच । 'सतां सदा शाश्वतधर्मवृत्तिः सन्तो न सीदन्ति न च व्यथन्ति । सतां स भिन्नः फलसंगमोऽस्ति सद्भ्यो भयं नानुवर्तन्ति सन्तः । सन्तो हि सत्येन नयन्ति सूर्यं सन्तो भूमिं तपसा धारयंति।सन्तो गतिर्भूतभवस्य राजन्सतां मध्ये नावसीदन्ति सन्तः।आर्यजुष्ट मिदं वृत्तमिति विज्ञाय शाश्वतम्।सन्तः परार्थं कुर्वाणा नावेक्षन्ते परस्परम्।न च प्रसादः सत्पुरुषेण मोघ्यो न चाप्यर्थो नश्यति चापि मानः।यस्मादेतन्नियतं सत्सु नित्यं तस्मात्सन्तो रक्षितारो भवन्ति।'यम उवाच।'यथा यथा भाषसि धर्मसंहितं मनोनुकूलं सुपदं महार्थवत्।तथा तथा मे त्वयि भक्तिरुत्तमा वरं वृणीष्वाप्रतिमं पतिव्रते।'साविच्युवाच-'न तेऽपवर्गः सुकृताद्विना कृतस्तथा यथाऽन्येषु जनेषु मानद । वरं वृणे जीवतु सत्यवानयं यथा मृता ह्येवमहं पतिं विना।न कामये भर्तृविनाकृता सुखं न कामये भर्तृविनाकृता दिवम् । न कामये भर्तृविनाकृताश्रयं न भर्तृहीना व्यवसामि जीवितुम् । वरोतिसर्गः शतपुत्रता मम त्वयैव दत्तो ह्रियते च मे पतिः । वरं वृणे जीवतु सत्यवानयं त्वयैव सत्यं वचनं भविष्यति ।' मार्कण्डेय उवाच । 'तथेत्युक्त्वा तु तं पाशं मुक्त्वा वैवस्वतो यमः । धर्मराजः प्रहृष्टात्मा सावित्रीमिदमब्रवीत् ।' यम उवाच । 'एष भद्रे मया मुक्तो भर्ता ते कुलनन्दिनि । अरोगस्तव नेयश्च सिद्धार्थः स भविष्यति । चतुर्वर्षशतायुश्च त्वया सार्धमवाप्स्यति । इष्ट्वा यज्ञैश्च धर्मेण ख्यातिं लोके गमिष्यति । त्वयि पुत्रशतं चैव सत्यवाञ्जनयिष्यति । ते चापि सर्वे राजानः क्षत्रियाः पुत्रपौत्रिणः । ख्यातास्त्वन्नामधेयाश्च भविष्यन्तीह शाश्वताः । पितुश्च ते पुत्रशतं भविता तव मातरि । मालव्यां मालवा नाम शाश्वताः पुत्रपौत्रिणः । भ्रातरस्ते भविष्यन्ति क्षत्रियाः पुत्रपौत्रिणः । भ्रातरस्ते भविष्यन्ति क्षत्रियास्त्रिदशोपमाः ।

एवं तस्यै वरं दत्त्वा धर्मराजः प्रतापवान् । तोषयित्वा स सावित्रीं स्वमेव भवनं ययौ । सावित्र्यपि यमे याते भर्तारं प्रतिलभ्य च । जगाम तत्र यत्रास्य भर्तुः शावं कलेवरम् । सा भूमौ प्रेक्ष्य भर्तारमुपसृत्योपगृह्य च । उत्सङ्गे शिर आरोप्य भूमावुपविवेश ह । संज्ञां च स पुनर्लब्ध्वा सावित्रीमभ्यभाषत । प्रोष्यागत इव प्रेम्णा पुनः पुनरुदीक्ष्य वै ।' सत्यवानुवाच ।' सुचिरं बत सुप्तोऽस्मि किमर्थं नावबोधितः । क्व चासौ पुरुषः श्यामो योऽसौ मां संचकर्ष ह ।' सावित्र्युवाच । 'सुचिरं त्वं प्रसुप्तोऽसि ममाङ्के पुरुषर्षभ । गतः स भगवान्देवः प्रजासंयमनो यमः । विश्रान्तोऽसि महाभाग विनिद्रश्च नृपात्मज । यदि शक्यं समुत्तिष्ठ विगाढां पश्य शर्वरीम् ।' मार्कण्डेय उवाच उपलभ्य ततः संज्ञां सुखसुप्त इवोत्थितः । दिशः सर्वा वनान्तांश्च निरीक्ष्योवाच सत्यवान् । फलाहारोऽस्मि निष्क्रान्तस्त्वया सह सुमध्यमे । ततः पाटयतः काष्ठं शिरसो मे रुजाऽभवत् । शिरोभितापसंतप्तः स्थातुं चिरमशक्नुवम् । तवोत्सङ्गे प्रसुप्तोऽस्मि इति सर्वं स्मरे शुभे । त्वयोपगूढस्य च मे निद्रयापहृतं मनः । ततोऽपश्यंस्तमो घोरं पुरुषं च महौजसम् । तद्यदि त्वं विजानासि किं तद्ब्रूहि सुमध्यमे । स्वप्नोत्र यदि वादिष्टो मयि वा सत्यमेव तत् । तमुवाचाथ सावित्री रजनी व्यवगाहते । श्वस्ते सर्वं यथावृत्तमाख्यास्यामि नृपात्मज । उत्तिष्ठोत्तिष्ठ भद्रं ते पितरौ पश्य सर्वतः । विगाय रजनी चेयं निवृत्तश्च दिवाकरः । नक्तंचराश्चरन्त्येते हृष्टाः क्रूराभिलाषिणः । श्रूयन्ते पर्णशब्दाश्च मृगाणां चरतां वने । एतान्घोराञ्शिवान्नादान्दिशं दक्षिणपश्चिमाम् । अस्यायं विरुवन्त्युग्राः कम्पयन्त्यो मनो मम ।' सत्यवानुवाच । 'वनं प्रति भयाकारं घनेन तमसावृतम् । न विज्ञास्यसि पन्थानं गन्तुं चैव न शक्ष्यसि ।' सावित्र्युवाच । 'अस्मिन्नद्य वने दग्धे शुष्कवृक्षस्थितो ज्वलन् । वायुना धमायमानोऽत्र दृश्यतेऽग्निः क्वचित्क्वचित् । ततोऽग्निमानपि त्वेह ज्वालयिष्यामि सर्वतः । काष्ठानीमानि सन्तीह जहि संतापमात्मनः । यदि नोत्सहते गन्तुं सरुजं त्वां हि लक्षये । न च ज्ञास्यसि पन्थानं तमसा संवृते वने । श्वः प्रभाते वने दृश्ये यास्यावोऽनुमते तव । वसावहे क्षपामेकामुचितं यदि तेऽनघ ।' सत्यवानुवाच । 'शिरोरुजा निवृत्ता मे स्वस्थान्यङ्गानि लक्षये । मातापितृभ्यामिच्छामि संगमं त्वत्प्रसादजम् । न कदाचिद्धि काले हि गतपूर्वोऽहमाश्रमात् । अनागतायां संध्यायां माता मे प्ररुणद्धि माम् । दिवापि मयि निष्क्रान्ते संतप्येते गुरू मम । विचिनोति हि मां तातः सहैवाश्रमवासिभिः । मातापितृभ्यां सुभृशं दुःखिताभ्यामहं पुरा । उपालब्धश्च बहु-

शश्चिरेणागच्छसीति हि। का त्ववस्था तयोरद्य मदर्थमिति चिन्तये । तयोरदृश्ये मयि च महद्दुःखं भविष्यति। पुरा मामूचतुश्चैव रात्रावस्तापमाणकौ। भृशं सुदुःखितौ वृद्धौ बहुशः प्रीतिसंयुतौ। त्वया हीनौ न जीवावो मुहूर्तमपि पुत्रक। यावद्धरिष्यसे पुत्र तावन्नौ जीवितं ध्रुवम्। वृद्धयोरन्धयोर्दृष्टिस्त्वयि वंशः प्रतिष्ठितः। त्वयि पिण्डश्च कीर्तिश्च संतानमावयोरिति। माता वृद्धा पिता वृद्धस्तयोर्यष्टिरहं किल। तौ रात्रौ मामपश्यन्तौ कामवस्थां गमिष्यतः। निद्रायाश्चाभ्यसूयामि यस्या हेतोः पिता मम। माता च संशयं प्राप मत्कृते तपकारिणी। अहं च संशयं प्राप्तः कृच्छ्रामापदमास्थितः। मातापितृभ्यां हि विना नाहं जीवितुमुत्सहे। व्यक्तमाकुलया बुद्ध्या प्रज्ञाचक्षुः पिता मम। एकैकमस्यां वेलायां पृच्छत्याश्रमवासिनम्। नात्मानमनुशोचामि यथाहं पितरं शुभे। भर्तारं चाप्यनुगतां मातरं परिदुर्बलाम्। मत्कृतेन हि तावद्य संतापं परमेष्यतः। जीवितावनुजीवामि भर्तव्यौ तौ मयेति च। तयोः प्रियं मे कर्तव्यमिति जानामि चाप्यहम्।' मार्कण्डेय उवाच। 'एवमुक्त्वा स धर्मात्मा गुरुभक्तो गुरुप्रियः। उच्छ्रित्य बाहुं दुःखार्तः सस्वरं प्ररुरोद ह। ततोऽब्रवीत्तथा दृष्ट्वा भर्तारं शोककर्षितम्। प्रमृज्याश्रूणि नेत्राभ्यां सावित्री धर्मचारिणी। यदि मेऽस्ति तपस्तप्तं यदि दत्तं हुतं यदि। श्वश्रूश्वशुरभर्तॄणां मम पुण्याऽस्तु शर्वरी। न स्मराम्युक्तपूर्वां वै स्वैरिष्वप्यनृतां गिरम्। तेन सत्येन तावद्य जीवेतां श्वशुरौ मम।' सत्यवानुवाच। 'कामये दर्शनं पित्रोर्याहि सावित्रि मा चिरम्। पुरा मातुः पितुर्वापि यदि पश्यामि विप्रियम्। न जीविष्ये वरारोहे सत्येनात्मानमालभे। यदि धर्मे च ते बुद्धिर्मां त्वं जीवन्तमिच्छसि। मम प्रियं वा कर्तव्यं गच्छावाश्रममन्तिकात्।' मार्कण्डेय उवाच। 'सावित्री तत उत्थाय केशान्संयम्य भामिनी। पतिमुत्थापयामास बाहुभ्यां परिगृह्य वै। उत्थाय सत्यवांश्चापि प्रमृज्याङ्गानि पाणिना। सर्वा दिशः समालोक्य कठिने दृष्टिमादधे। तमुवाचाथ सावित्री श्वः फलानि हरिष्यसि। योगक्षेमार्थमेतत्ते नेष्यामि परशुं त्वहम्। कृत्वा कठिनभारं सा वृक्षशाखावलम्बिनम्। गृहीत्वा परशुं भर्तुः सकाशे पुनरागमत्। वामे स्कन्धे तु वामोरूर्भर्तुर्बाहुं निवेश्य च। दक्षिणेन परिष्वज्य जगाम गजगामिनी।' सत्यवानुवाच– 'अभ्याशगमनाद्भीरु पन्थानो विदिता मम। वृक्षान्तरालोकितया ज्योत्स्नया चापि लक्षये। आगतौ स्वः पथा येन फलस्य वञ्चितानि च। यथागतं शुभे गच्छ पन्थानं

मा विचारय । पालाशखण्डे चैतस्मिन्पन्था व्यावर्तते द्विधा । तस्योत्तरेण यः पन्थास्तेन गच्छ त्वरस्व च । स्वस्थोऽस्मि बलवानस्मि दिदृक्षुः पितरावुभौ । ब्रुवन्नेवं त्वरायुक्तः संप्रायादाश्रमं प्रति ।' मार्कण्डेय उवाच । 'एतस्मिन्नेव काले तु द्युमत्सेनो महाबलः । लब्धचक्षुः प्रसन्नायां दृष्ट्वा सर्वं ददर्श ह । स सर्वानाश्रमान्गत्वा शैब्यया सह भार्यया । पुत्रहेतोः परामार्तिं जगाम भरतर्षभ । तावाश्रमान्नदीश्चैव वनानि च सरांसि च । तस्यां निशि विचिन्वन्तौ दम्पती परिजग्मतुः । श्रुत्वा शब्दं तु यं कंचिदुन्मुखौ सुतशङ्कया । सावित्रीसहितोऽभ्येति सत्यवानित्यभाषताम् । भिन्नैश्च परुषैः पादैः सव्रणैः शोणितोक्षितैः । कुशकण्टकविद्धाङ्गावुन्मत्तावधिधावताम् । ततोऽभिसृत्य तैर्विप्रैः सर्वैराश्रमवासिभिः । परिवार्य समाश्वास्य तावानीतौ स्वमाश्रमम् । तत्र भार्यासहायः स वृतो वृद्धैस्तपोधनैः । आश्वासितो विचित्रार्थैः पूर्वराज्ञां कथाश्रयैः । ततस्तौ पुनराश्वस्तौ वृद्धौ पुत्रदिदृक्षया । बाल्ये वृत्तानि पुत्रस्य स्मरन्तौ भृशदुःखितौ । पुनरुक्त्वा च करुणां वाचं तौ शोककर्षितौ । हा पुत्र हा साध्वि वधूः क्वासि क्वासीत्यरोदताम् । सुवर्चा ब्राह्मणः क्लेशादुवाचेदं तयोर्वचः ।' सुवर्चा उवाच । 'यथा स्वभार्या सावित्री तपसा च दमेन च । आचारेण च संयुक्ता तथा जीवति सत्यवान् ।' गौतम उवाच– 'वेदाः साङ्गा मयाऽधीतास्तपो मे संचितं महत् । कौमारं ब्रह्मचर्यं च गुरवोऽग्निश्च तोषितः । समाहितेन चीर्णानि सर्वाण्येव व्रतानि मे । वायुभक्षोपवासश्च कृतो मे विधिवत्सदा । अनेन तपसा वेद्मि सर्वं परिचिकीर्षितम् । सत्यमेतन्निबोधध्वं ध्रियते सत्यवानिति ।' शिष्य उवाच– 'उपाध्यायस्य मे वक्त्राद्यथा वाक्यं विनिःसृतम् । नैव जातु भवेन्मिथ्या तथा जीवति सत्यवान् ।' ऋषिरुवाच– 'यथाऽस्य भार्या सावित्री सर्वैरेव सुलक्षणैः । अवैधव्यकरैर्युक्ता तथा जीवति सत्यवान् ।' भरद्वाज उवाच–यथाऽस्य भार्या सावित्री तपसा च दमेन च । आचारेण च संयुक्ता तथा जीवति सत्यवान् ।' दाल्भ्य उवाच–'यथा दृष्टिः प्रवृत्ता ते सावित्र्याश्च यथा व्रतम् । गताहारमकृत्वा च तथा जीवति सत्यवान् ।' आपस्तम्ब उवाच– 'यथा वदन्ति शान्तायां दिशि वै मृगपक्षिणः । पार्थिवी च प्रवृत्तिस्ते तथा जीवति सत्यवान् ।' धौम्य उवाच–'सर्वैर्गुणैरुपेतस्ते यथा पुत्रो जनप्रियः । दीर्घायुर्लक्षणोपेतस्तथा जीवति सत्यवान् ।'

---

चन्द्रप्रकाशे इत्यर्थः ।

मार्कण्डेय उवाच– 'एवमाश्वासितस्तैस्तु सत्यवाग्भिस्तपस्विभिः । तांस्तांश्च गणयन्त्सर्वास्ततः स्थिर इवाभवत् । ततो मुहूर्तात्सावित्री भर्त्रा सत्यवता सह । आजगामाश्रमं रात्रौ प्रहृष्टा प्रविवेश ह ।' ब्राह्मणा ऊचुः– 'पुत्रेण संगतं त्वां तु चक्षुष्मन्तं निरीक्ष्य च । सर्वे वयं वै पृच्छामो वृद्धिं वै पृथिवीपते । समागमेन पुत्रस्य सावित्र्या दर्शनेन च । चक्षुषश्चात्मनो लाभात्त्रिभिर्दिष्ट्या विवर्धसे । सर्वैरस्माभिरुक्तं यत्तथा तन्नात्र संशयः । भूयो भूयो समृद्धिस्ते क्षिप्रमेव भविष्यति । ततोऽग्निं तत्र संज्वाल्य द्विजास्ते सर्व एव हि । उपासांचक्रिरे पार्थ द्युमत्सेनं महीपतिम् । शैब्या च सत्यवांश्चैव सावित्री चैकतः स्थिता । सर्वैस्तैरभ्यनुज्ञाता विशोकाःसमुपाविशन् । ततो राज्ञा सहासीनाः सर्वे ते वनवासिनः । जातकौतूहलाः पार्थ पप्रच्छुर्नृपतेः सुतम् ।' ऋषय ऊचुः । 'प्रागेव नागतं कस्मात्सभार्येण त्वया विभो । चिरात्ते चागतं कस्मात्कोऽनुबन्धस्तवाभवत् । संतापिताः पिता माता वयं चैव नृपात्मज । कस्मादिति न जानीमस्तत्सर्वं वक्तुमर्हसि ।' सत्यवानुवाच– 'पित्रा चाहमनुज्ञातः सावित्रीसहितो गतः । अथ मेऽभूच्छिरोदुःखं वने काष्ठादि भिन्दतः । सुप्तश्चाहं वेदनया चिरमित्युपलक्षये । तावत्कालं न च मया सुप्तं पूर्वं कदाचन । सर्वेषामेव भवतां संतापो मा भवेदिति । अतोऽचिरान्नागमनं नान्यदस्तीह कारणम् ।' गौतम उवाच– 'अकस्माच्चक्षुषः प्राप्तिर्द्युमत्सेनस्य ते पितुः । नास्य त्वं कारणं वेत्सि सावित्री वक्तुमर्हति । श्रोतुमिच्छामि सावित्रि त्वं हि वेत्थ परापरम् । त्वां हि जानामि सावित्रि सावित्रीमिव तेजसा । त्वमत्र हेतुं जानीषे तस्मात्सत्यं निरुच्यताम् । रहस्यं यदि ते नास्ति किंचिदत्र वदस्व नः ।' सावित्र्युवाच– 'एवमेतद्यथा वेत्थ संकल्पो नान्यथा हि वः । न हि किंचिद्रहस्यं मे श्रूयतां तथ्यमेव यत् । मृत्युर्मे यत्पुरा ख्यातो नारदेन महात्मना । स चाय दिवसः प्राप्तस्ततो नैनं जहाम्यहम् । सुप्तं चैनं यमः साक्षादुपागच्छदकिंकरः । स एनमनयद्बद्ध्वा दिशं पितृनिषेविताम् । अस्तौषं तमहं देवं सत्येन वचसा विभुम् । पञ्चैव तेन मे दत्ता वराः शृणुत तन्मम । चक्षुषी च स्वराज्यं च द्वौ वरौ श्वशुरस्य मे । लब्धं पितुः पुत्रशतं पुत्राणां चात्मनः शतम् । चतुर्वर्षशतायुर्मे भर्ता लब्धश्च सत्यवान् । भर्तुर्हि जीवितार्थं तु मया चीर्णं त्विदं व्रतम् । एतत्सत्यं मया ख्यातं कारणं विस्तरेण वः।यथावृत्तं सुखोदर्कमिदं दुःखं महन्मम ।' ऋषय ऊचुः– 'निमज्जमानं व्यसनैरभिद्रुतं कुलं नरेन्द्रस्य तमोमये ह्रदि । त्वया सुशीलव्रतपुण्यया ततः समुद्धृतं साध्वि पुनः कुलीनया ।'

मार्कण्डेय उवाच— 'तथा प्रशंस्य ह्यभिपूज्य चैव वरस्त्रियं तामृषयः समागताः। नरेन्द्रमामन्त्र्य सपुत्रमञ्जसा शिवेन जग्मुर्मुदिताः स्वमालयम्।' मार्कण्डेय उवाच। 'तस्यां रात्र्यां व्यतीतायामुदिते सूर्यमण्डले। कृतपूर्वाह्णिकाः सर्वे समीयुस्ते तपोधनाः। तदेव सर्वं सावित्र्या महाभागं महर्षयः। द्युमत्सेनाय नातृप्यन्कथयन्तः पुनः पुनः। ततः प्रकृतयः सर्वाः शाल्वेभ्योऽभ्यागता नृप। आचख्युर्निहतं चैव स्वेनामात्येन तं द्विषम्। तं मन्त्रिणा हतं श्रुत्वा ससहायं सबान्धवम्। एकमन्यं च सर्वस्य जनस्याथो नृपं प्रति। सचक्षुर्वाप्यचक्षुर्वा स नो राजा भवत्विति। अनेन निश्चयेनेह वयं प्रस्थापिता नृप। प्राप्तानीमानि यानानि चतुरङ्गं च ते बलम्। प्रयाहि राजन्भद्रं ते दृश्यते नगरे जयः। अध्यास्व चिरराज्याय पितृपैतामहं पदम्। चक्षुष्मन्तं च ते दृष्ट्वा राजानं वपुषान्वितम्। मूर्ध्ना निपतिताः सर्वे विस्मयोत्फुल्ललोचनाः। ततोऽभिवाद्य तान्वृद्धान्द्विजानाश्रमवासिनः। तैश्चाभिपूजितः सर्वैः प्रययौ नगरं प्रति। शैब्या च सह सावित्र्या स्वास्तीर्णेन सुवर्चसा। नरयुक्तेन यानेन प्रययौ सेनया वृतः। ततोऽभिषिषिचुः प्रीत्या द्युमत्सेनं पुरोहिताः। पुत्रं चास्य महात्मानं यौवराज्येऽभ्यषेचयन्। ततः कालेन महता सावित्र्याः कीर्तिवर्धनम्। तद्वै पुत्रशतं जज्ञे शूराणामनिवर्तिनाम्। भ्रातॄणां सोदराणां च तथास्या अभवच्छतम्। मद्राधिपस्याश्वपतेर्मालव्याश्च महद्बलम्। एवमात्मपिता माता श्वश्रूः श्वशुर एव च। भर्तुः कुलं च सावित्र्या सर्वं कृच्छ्रात्समुद्धृतम्। तथैवैषापि कल्याणी द्रौपदी शीलसंमिता। तारयिष्यति वः सर्वान्सावित्रीव कुलाङ्गना।' वैशम्पायन उवाच— 'एवं स पाण्डवस्तेन ह्यनुनीतो महात्मना। विशोको विज्वरो राजन्काम्यके न्यवसत्तदा। यश्चेदं शृणुयाद्भक्त्या सावित्र्याख्यानमुत्तमम्। स सुखी सर्वसिद्धार्थो न दुःखं प्राप्नुयान्नरः।' इत्यारण्यके पर्वणि सावित्र्युपाख्यानं संपूर्णम्।

अस्यामेव पौर्णमास्यां हेमाद्रौ स्कान्दे बिल्वत्रिरात्रिव्रतम्। ब्रह्मोवाच— 'ज्येष्ठे मासि तु संप्राप्ते पौर्णमास्यां द्विजोत्तम। ज्येष्ठाकुजदिने कुर्यात्सिद्धार्थैः स्नानमुत्तमम्। श्रीवृक्षं चिन्तयेत्पश्चाद्गन्धपुष्पैश्च पूजयेत्। वत्सरं त्वेकभक्तं तु हविष्यान्नेन कारयेत्। श्वशूकरखरादीनां दर्शने भोजनं त्यजेत्। अनेन विधिना सम्यङ्मासि मासि समाचरेत्। ततः संवत्सरे पूर्णे गत्वा बिल्वसमीपतः। गृहीत्वा वालुकापात्रे प्रस्थमात्रां महामुने। अथवा धान्यमादाय यवशालितिलादिकम्। ततो वंशमये पात्रे वस्त्रयुग्मेन वेष्टयेत्। उमामहेश्वरं हैमं शक्त्या कुर्यात्सुभूषितम्। रक्तवस्त्रयुगं दद्यान्नैवेद्यं फलसंयुतम्। पुष्पैर्बहुविधैश्चापि

फलैर्नानाविधैस्तथा । गुडेक्षुजीरकैर्धान्यैर्लवणेन विरूढकैः । सप्तधान्यैस्तथा दीपैर्वंशपात्रप्रकल्पितैः । रजनीकण्ठसूत्रैश्च शुभैः कुङ्कुमकेसरैः । अवतारं करोत्येषा उमा देवी हरप्रिया । श्रीनिकेत नमस्तुभ्यं हरप्रिय नमोऽस्तु ते । अवैधव्यं च मे देहि श्रियं जन्मनि जन्मनि । श्रियं धनं पतिं पुत्रानारोग्यं कुलसंततिम् । सौभाग्यं रूपसंपत्तिं पूजितस्त्वं प्रयच्छ मे । सहस्रं बिल्वपत्राणां होमयेत्तु यथाविधि । पायसं तत्र जुहुयाद्विप्रः शान्तोऽथ मन्त्रवित् । राजतं श्रीतरुं कृत्वा सुवर्णफलशोभितम् । अष्टोत्तरशतं यावत्पीतवस्त्रेण वेष्टयेत् । त्रयोदश्यां समारभ्य यावत्पूर्णा भवेत्तिथिः । त्रिरात्रं जागरं कृत्वा उपवासाज्जितेन्द्रियः । उमापते पशुपते त्रैलोक्याधिपते प्रभो । गृहाणार्घ्यं मया दत्तं गौर्या सह महेश्वर । ततः प्रभाते संयाते स्नात्वा च तिलसर्षपैः । वस्त्रालंकारपुष्पैश्च गुरोर्दाम्पत्यमर्चयेत् । पादुकोपानहच्छत्रशय्यां गां च सुभूषिताम् । गुरुं प्रपूज्य भक्त्या तु दद्यादेतत्प्रयत्नतः । षोडशाष्टौ चतस्रो वा द्विजान्दाम्पत्यभूषितान् । वस्त्रालंकारगोदानैस्तस्मिन्नहनि पूजयेत् । मिष्टान्नं भोजनं दद्यादात्मनः श्रेय इच्छता ।' या नारी कुरुते चैतद्व्रतं पापप्रणाशनम् । सर्वसिद्धिकरं पुण्यं शिवलोके महीयते । कल्पकोटिशतं यावदास्थाय शिवसंनिधौ । ततो राज्ञी भवेन्मर्त्ये पुत्रपौत्रसमन्विता ।' इति स्कन्दपुराणोक्तं बिल्वत्रिरात्रिव्रतम् ❋ ।

अस्यामेव पूर्णिमायां तिलदानं छत्रोपानहादिदानं च कुर्यात् । तदुक्तं णिर्णयामृते—'ज्येष्ठे मासि तिलान्दद्यात्पौर्णमास्यां विशेषतः । अश्वमेधस्य यत्पुण्यं तत्प्राप्नोति न संशयः ।' इति । विष्णुधर्मोत्तरे—'सोपवासस्तथा ज्येष्ठे पूर्णे तु शशलक्षणे । उपानहौ तथा छत्रं दत्त्वाऽत्यन्तं सुखी भवेत् । तत्र मन्त्रः—' उपानहौ प्रदास्यामि कण्टकादिनिवारणे । सर्वस्थानेषु सुखदे अतः शान्तिं प्रयच्छ मे ।' छत्रदानमन्त्रः—'इहामुत्रातपत्राणां कुरु मे केशव प्रभो । छत्रं त्वत्प्रीतये दत्तं ब्राह्मणाय मया[1] सह ।' इति । विष्णुस्मृतौ—' ज्येष्ठी ज्येष्ठायुता चेत्स्याच्छत्रोपानत्प्रदानेन नरो नराधिपत्यमाप्नोति' इति । तथा वामनपुराणे—'उदकुम्भाम्बुदानं च तालवृन्तं सचन्दनम् । त्रिविक्रमस्य प्रीत्यर्थं दातव्यं ज्येष्ठमासि तु ।' इति । इयं च रौच्यमन्वादिः कौर्मकल्पादिश्च ।

अस्यामेवारभ्यं पुत्रकाव्रतम् । हेमाद्रौ पद्मपुराणे-'ज्येष्ठे मासि सिते पक्षे पूर्णमास्यां धृतव्रतः । स्थापयेदव्रणं कुम्भं सिततन्दुलपूरितम् । नानाफलयुतं तद्वदिक्षुदण्डसमन्वितम् । सितवस्त्रयुगच्छन्नं सितचन्दनचर्चितम् । नानाभक्ष्यसमोपेतं सहिरण्यं च शक्तितः ।

---

१ मया लक्ष्म्या ।

ताम्रपात्रं गुडोपेतं तस्योपरि निवेशयेत् । तस्योपरि न्यसेद्ब्रह्म सौवर्णं पद्मकोदरे। कृत्वा शर्करयोपेतं सावित्रीं तस्य वामतः।' इत्यादि। ततो गन्धधूपादि दत्त्वा गीतवाद्यादि संपाद्य ब्रह्मप्रतिमां सूत्रमयीं कृत्वा शुक्लपुष्पाक्षततिलैरभ्यर्च्य ब्रह्मणे नमः इत्यादिनाङ्गपूजां कृत्वा प्रभाते पुनः संपूज्य तं कुम्भं ब्राह्मणाय दत्त्वा ब्राह्मणान्संभोज्य स्वयमलवणं भुक्त्वा यथाशक्ति दक्षिणां दत्त्वा इमं मन्त्रमुदीरयेत् । 'प्रीयतामत्र भगवान्सर्वलोकपितामहः । हृदये सर्वलोकानां यस्त्वानन्दोऽभिधीयते ।' इति । एवं द्वादशमासपर्यंतं प्रतिपौर्णमासि संपाद्य एकं फलं संप्राश्य भूतले रात्रौ स्वप्यात् । त्रयोदशे मासि ब्रह्मोद्देशेन घृतधेनुं सोपस्करां शय्यां च दत्त्वाचार्यं सपत्नीकं वस्त्रादिभिः संपूज्य तस्मै सौवर्णं ब्रह्माणं राजतीं सावित्रीं च दत्त्वा शक्त्या गवाह्निकं दत्त्वा विधिः प्रीयतामित्युदीरयेत् । ततः शुक्लतिलैर्गव्येन सर्पिषा पायसेन च होमं ब्रह्मोद्देशेन कृत्वा ब्राह्मणान् भोजयित्वा 'इक्षुदण्डांस्ततो दद्यात्पुष्पमालाश्च शक्तितः । यो ब्रह्माऽसौ स्मृतो विष्णुरानन्दात्मा महेश्वरः । सुखार्थी कामरूपेण स्मरेद्देवं पितामहम् । कुर्याच्चैवं विधानेन पौर्णमासीं स्त्रियोऽपि वा । सर्वपापविनिर्मुक्ताः प्राप्नुयुर्ब्रह्मशाश्वतम् । इह लोके वरान्पुत्रान्सौभाग्यं ध्रुवमश्नुते ।' इति पद्मपुराणोक्तं पुत्रकामव्रतं समाप्तम् । ❀

इयमेव योगविशेषेण महाज्येष्ठी । गार्ग्यः—'ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा । पूर्णिमा ज्येष्ठमासस्य महाज्येष्ठा प्रकीर्तिता ।' ऐन्द्रं ज्येष्ठा प्राजापत्यं रोहिणी । प्रकारान्तरेणापि महाज्येष्ठीमाह स एव—'वृषे वा मिथुने भानौ जीवचन्द्रौ तथोदभे । पौर्णमासी गुरोर्वारे महाज्येष्ठी प्रकीर्तिता ।' उदभं पूर्वाषाढा ।

अथाषाढीकृत्यम् । आषाढशुक्लचतुर्दश्यामुपोष्य पूर्णिमायां हरिपूजा कार्या । तदुक्तं निर्णयामृते ब्रह्मपुराणे—'चतुर्दश्यामुपोष्याथ पौर्णमास्यां यजेद्धरिम् ।' इति । अस्यामेव च पूर्वाषाढायुक्तायामन्नदानं कुर्यात् । तथा च विष्णुः—'आषाढ्यामाषाढायुक्तायामन्नपानादिदानेन तदेवाक्षयमाप्नोति' इति ।

आषाढपौर्णमास्यामारभ्यं कोकिलाव्रतम् । तदुक्तं हेमाद्रौ भविष्ये—'आषाढपूर्णमास्यां तु संध्याकाले उपस्थिते । संकल्पयेन्मासमेकं श्रावणे प्रत्यहं ह्यहम् । स्नानं करिष्ये नियता ब्रह्मचर्यस्थिता सती । भोक्ष्यामि नक्तं भूशय्यां करिष्ये प्राणिनां दयाम् ।' इति । अस्य नक्तव्रतत्वात्सायाह्नव्यापिनी ग्राह्या । प्रदोषव्यापिनी ग्राह्येति कृत्यरत्नावल्याम् । अथ कथा । युधिष्ठिर उवाच । 'स्वभर्त्रा रतिसंबन्धे महास्नेहो यथा भवेत् । कुलस्त्रीणां तथाचक्ष्व व्रतं मम जगद्गुरो ।' श्रीकृष्ण

उवाच—'यमुनायास्तटेऽपूर्वे मथुरास्ति पुरी शुभा । तस्यां शत्रुघ्ननामाभूद्राजा राघवनन्दनः । तस्य भार्या कीर्तिमाला नामासीत्प्रथिता भुवि । तया प्रणम्य भगवान्वसिष्ठो मुनिसत्तमः । पृष्टः कथं मुनिश्रेष्ठ सौभाग्यमतुलं भवेत् । ब्रूहि मेऽतुलसंबन्धकारकं व्रतमुत्तमम् ।' वसिष्ठ उवाच—'आषाढे पौर्णमास्यां तु संध्याकाले ह्युपस्थिते । संकल्पयेन्मासमेकं श्रावणप्रभृति ह्यहम् । स्नानं करिष्ये नियता ब्रह्मचर्ये स्थिता सती । भोक्ष्यामि नक्तं भूशय्यां करिष्ये प्राणिनां दयाम् । सौभाग्यधनधान्यादिप्राप्तये शिवतुष्टये । इति संकल्प्य पुरुषो नारी वा ब्राह्मणान्तिके । प्राप्यानुज्ञां ततः प्राह्णे सर्वसामग्रिसंयुतः । पुरुषः प्रतिपत्काले दन्तधावनपूर्वकम् । नद्यां गत्वाऽथ वाप्यां वा तडागे गिरिनिर्झरे । स्नानं करोमि देवेशि कोकिले प्रीतये तव । जलेऽस्मिन्पावने पुण्ये सर्वदेवजलाश्रये । स्नानं कुर्याद्व्रती पार्थ सुगन्धामलकैस्तिलैः । दिनाष्टकं ततः पश्चात्सर्वौषध्या पुनः पुनः । वचया पिष्टया चाष्टौ दिनानि स्नानमाचरेत् । तिलामलकपिष्टेन सर्वौषधियुतेन च । षड्दिनानि ततः स्नानं संपूर्णफललिप्सया । स्नात्वा ध्यात्वा रविं संध्यां तर्पयित्वा पितॄंस्तथा । तर्पयित्वा लिखेत्पिष्टैः कोकिलां पिष्टरूपिणीम् । कलकण्ठां शुभैः पुष्पैः पूजयेच्चम्पकोद्भवैः । पत्रैर्वा धूपनैवेद्यैर्दीपालक्तकचन्दनैः । तिलतण्डुलदूर्वाग्रैः पूजयेत्तां क्षमापयेत् । [१]त्वं तिलव्रती भक्त्या मन्त्रेणानेन पाण्डव । तिलस्नेहे तिलसौख्ये तिलवर्णे तिलप्रिये । सौभाग्यधनपुत्रांश्च देहि मे कोकिले नमः । इत्युच्चार्य ततः पश्चाद्गृहमभ्येत्य संयतः । कृताहारः स्वपेत्पार्थ यावन्मासः समाप्यते । मासान्ते ताम्रपात्र्यां तु कोकिलां तिलपिष्टजाम् । रत्ननेत्रां स्वर्णपक्षां ब्राह्मणाय निवेदयेत् । वस्त्रैः रत्नैर्गुडैर्युक्तां श्रावण्यां कुण्डले तथा । श्वश्रूश्वशुरवर्गे वा दैवज्ञे वा पुरोहिते । व्यासे वा सा प्रदातव्या व्रतिभिः शुभकाङ्क्षया । एवं या कुरुते नारी कोकिलाव्रतमादरात् । सप्त जन्मानि सौभाग्यं संप्राप्नोति सविस्तरम् । निःसपत्नं पतिं भव्यं सस्नेहं प्राप्य भूतले । मृता गौरीपुरीं याति विमानेनार्कवर्चसा । एतद्व्रतं वसिष्ठेन मुनिना गदितं पुरा । तया चानुष्ठितं पार्थ समग्रं कीर्तिमालया । तस्याश्च सर्वं संपन्नं वसिष्ठवचनादिह । पुत्रसौभाग्यसत्कारं शत्रुघ्नस्य प्रसीदतः । एवमन्यापि कौन्तेय कोकिलाव्रतमादरात् । चरिष्यति ध्रुवं तस्याः सौभाग्यं च भविष्यति । ये कोकिलां कलरवाकुलकण्ठपीठां

१—'प्रत्यूषे च प्रतिदिनम्' इत्यपि पाठः । २—सर्वौषधी मुरा मांसी वचा कुष्ठेत्यादिना परिभाषिता ।

यच्छन्ति साज्यतिलपिष्टमयीं द्विजेभ्यः। ते नन्दनादिषु वनेषु विहृत्य कामं मर्त्यै समेत्य मधुरध्वनयो भवन्ति।' इति भविष्योत्तरोक्तं कोकिलाव्रतम्।

अथापरमाषाढाधिमासे गुर्जराचारप्राप्तं कोकिलाव्रतम्। युधिष्ठिर उवाच— 'स्वभर्त्रा सह संयोगः स्नेहः सौभाग्यमेव च। भवेद्यथा कुलस्त्रीणां तद्व्रतं ब्रूहि केशव।' श्रीकृष्ण उवाच—'यमुनायास्तटे रम्ये मथुरा नगरी शुभा। तस्यां शत्रुघ्ननामाऽभूद्राजा राघवनन्दनः। तस्य भार्या कीर्तिमाला नाम्नासीत्प्रथिता भुवि। प्रणम्य भगवान्पृष्टो वसिष्ठो मुनिसत्तमः।' कीर्तिमालोवाच—'वद मे त्वं मुनिश्रेष्ठ सौभाग्यप्राप्तिदं व्रतम्। पूज्यः कथं च भगवान् शिवः केन व्रतेन च।' वसिष्ठ उवाच—'यदि पृच्छसि मे त्वं हि व्रतानामुत्तमं व्रतम्। तारणं सर्वपापानां कथयामि निबोध तत्। दक्षप्रजापतेर्यज्ञे पुरा देवाः समागताः। ऋषयश्च तथा सर्वे विद्याधरगणास्तथा। ब्रह्मा विष्णुश्च वायुश्च देवराजस्तथैव च। वरुणोऽग्निर्ग्रहाः सर्वे ये चान्ये च दिवौकसः। वसिष्ठो वाल्मिको गार्ग्यो विश्वामित्रो महानृषिः। एते चान्ये च ऋषयः सर्वे यज्ञार्थमागताः। अपश्यन्नारदस्तत्र सन्ति केऽत्रागता इति। ईश्वरेण विना सम्यग्वृथा सर्वान्समागतान्। शिखां संस्पृश्य पाणिभ्यां ननर्त कलहप्रियः। ज्ञात्वा कलहमूलं च ततः कैलासमाययौ। सर्वाघनाशनं स्थानं कैलासशिखरं शुभम्। तत्र दृष्ट्वा समासीनं गौरीसहितशंकरम्। कृताञ्जलिपुटो भूत्वा प्रणिपत्य मुनिः स्थितः। ईश्वरस्तमुवाचाथ निःश्वसन्तमनेकधा। किमागमनकृत्यं ते मदीयं सदनं प्रति। श्वासोच्छ्वासेन संयुक्तस्तन्मे ब्रूहि द्विजोत्तम। ईश्वरस्य वचः श्रुत्वा शिखां संस्पृश्य पाणिना। दुःखयुक्त इवोवाच नारदः कलहप्रियः।' नारद उवाच—'यन्निमित्तं महादेव मर्त्यलोकात्समागतः। त्वदन्तिकं दुःखयुक्तस्तच्छृणुष्व जगत्पते। दक्षयज्ञमहं द्रष्टुमद्य दैवात्समागतः। तत्र यज्ञे स्थिताः सर्वे दक्षजामातरः प्रभो। दृष्टास्ते च न तन्मध्ये दृष्टस्त्रिभुवनेश्वरः। तवावज्ञा कृता तेन दक्षेणापुण्यकर्मणा। तेन निःश्वाससंयुक्त आगतोऽस्मि त्वदन्तिके। ईश्वरेण विना किंचिद्धर्मकार्यं न सिध्यति। अतोऽस्य विफलः सर्वः प्रयासः स्वमखं प्रति। तस्य तद्भाषितं श्रुत्वा न तन्मिथ्येति चिन्तयन्। सक्रोधस्तु तदा जात ईश्वरो जगदीश्वरः। गौर्या च प्रार्थितो देवः श्रुत्वा तन्नारदेरितम्। तस्य यज्ञस्य घातार्थं देवदेव व्रजाम्यहम्। इत्युक्त्वा चलिता रोषादीश्वरेण निवारिता। जगदीश नमस्तुभ्यं व्रजामि पितृवेश्मनि। नारदेनाथ सहिता गणेशेनाथ संयुता। यज्ञार्थमागता चैव दक्षद्वारे शिवप्रिया। वह्नौ दृष्ट्वा वसोर्धारां लज्जिता च शिवप्रिया। तिष्ठन्तीं

द्वारि तां दक्षो न ददर्श महासतीम्। क्षणमेकं च तिष्ठन्तीं यदा दक्षो न पश्यति। तदैव चिन्तितं गौर्या जीवितव्यं मया कथम्। धाविता कुण्डनिकटे हाहा कृत्वा च सा ततः। क्षिप्तं वह्नौ वपुर्गौर्या शापं दत्त्वा सुदारुणम्। दृष्ट्वा तत्र गणेशेन पाशः परशुरुद्यतः। क्षुब्धो ह्यसौ तदात्यर्थं गौर्या अर्थे गणाधिपः। पाशेन बद्ध्वा कतिचित्कोपाग्निहतवान्सुरान्। दक्षेण नोदिता देवाः सर्वे युद्धाय निर्ययुः। महद्युद्धमभूत्तत्र सह देवैर्गणेशितुः। तद्दृष्ट्वा नारदः शीघ्रं पुनः कैलासमाययौ। निवेदयामास च तमुदन्तं सर्वमीश्वरम्। तच्छ्रुत्वा स्फालयामास जटां कोपादुमापतिः। ततो जातोऽतिविकटः पुरुषो रक्तलोचनः। स बभाषे महादेवं स्वामिन्नाज्ञां च देहि मे। वीरभद्रेतिं नामास्य कृत्वा चाज्ञां समर्थयन्। दक्षयज्ञविघातार्थं गच्छ वीरेति सत्वरम्। श्रुत्वा तदीश्वरवचः सर्वप्रमथसंवृतः। आययौ यज्ञसदनमसृग्वह्निं पुनः क्षिपन्। तत इन्द्रादयो देवास्तद्वधाय विनिर्ययुः। क्षणात्पराजितास्तेन विद्रुताश्च दिशो दश। अनुद्रुतश्च तान्सोऽपि पूष्णो दन्तानपातयत्। भगस्य नेत्रे नासां च सरस्वत्या न्यकृन्तत। एवं विद्राव्य तान्सर्वान् शिरो दक्षस्य चिच्छिदे। कृत्वैवं यज्ञघातं स आजगाम शिवान्तिकम्। नमस्कृत्य पुरस्तस्थौ कृतं कार्यमिति ब्रुवन्। तथाप्यशान्तिः कोपस्य ज्ञात्वेति ज्ञानचक्षुषा। प्रसादयितुमीशानं ब्रह्मविष्णू समीयतुः। नमस्कृत्य स्तुतस्ताभ्यां प्रसन्नोऽभूत्सदाशिवः। नारदस्तुम्बरुश्चैव गीतैः शिवमतोषयन्। प्रसन्नं वीक्ष्य तं विप्र शिखां संस्पृश्य पाणिना। ननर्द नारदस्तत्र तोषयन्नधिकं शिवम्। एतस्मिन्नन्तरे ब्रह्मा विष्णुश्च प्रमथाधिपम्। व्यज्ञापयत्तं दक्षादीन्कृपादृष्ट्या विलोकय। कृताङ्गान्कुरु पूर्णाङ्गान्प्रेतान्संजीवय प्रभो। विलोकितास्ते देवेन कृपादृष्ट्या किलोज्झिताः। यथापूर्वं सुराः सर्वे अभूवंस्तत्प्रसादतः। उत्थितः पादयोर्मूलं ययौ दक्षः पिनाकिनः। अपराधं क्षमस्वेति पुनः पुनरुवाच ह। उत्थापितः करेणासौ दक्षस्तेन पिनाकिना। उक्तश्च मा पुनः कार्षीरेवमीशानमारजम्। विचरस्व सुखेनेति भूयस्तं कोप आविशत्। शशापं च तदा गौरीं यज्ञविघ्नकरीं शिवः। मखे विघ्नं कृतवती दक्षस्यैषा ततश्चिरात्। तिर्यग्योनिं समापन्ना विचरिष्यति भूतले। ततो गौरी बभाषैनं प्रणिपत्य सदाशिवम्। कथं यास्यामि तिर्यक्त्वं भूतलेऽवस्थितिः कथम्। अन्यथा च न भविता शाप एष त्वयोदितः। कोकिला मधुरालापा भवेयं नन्दने यतः। कोकिलानां स्वरो रूपं नारीरूपं पतिव्रता। विद्या रूपं कुरूपाणां क्षमा रूपं तपस्विनाम्। अचिरादेव च पुनः कुले महति जन्म मे। भूयास्त्वमेव भर्ता च न वियो-

गश्च मे यतः । वरयेत्कुलजां प्राज्ञः कुरूपामपि कन्यकाम् । दुष्कुले च समुत्पन्ना भर्तुः पातयते कुलम् । नदी पातयते कूलं नारी पातयते कुलम् । नदीनां चैव नारीणां स्वच्छन्दं ललिता गतिः । ततस्तुष्टो महादेवश्चक्रे शापविमोचनम् । दशवर्षसहस्राणि कोकिलारूपधारिणी । नन्दने देवविपिने चारिष्यसि ततः परम् । हिमालयसुता भूत्वा मत्प्रियात्वमुपेष्यसि । देवानां तु यथा विष्णुः सहकारो महीरुहाम् । गङ्गा च सर्वतीर्थानां तथा तिर्यक्षु कोकिला । आषाढौ द्वौ यदा स्यातां कोकिलायास्तदाऽर्चनम् । सदा या कुरुते नारी न सा वैधव्यमाप्नुयात् ।' वसिष्ठ उवाच--' एतद्वाक्यावसाने तु गौरी सा कोकिलाऽभवत् । कुरु त्वमेतत्कल्याणि कीर्तिमाले व्रतोत्तमम् ।' कीर्तिमालोवाच--' कथमाराध्यते गौरी कोकिलारूपधारिणी । विधानं ब्रूहि तद्विप्र त्वत्प्रसादात्करोम्यहम् ।' वसिष्ठ उवाच--' कोकिलाव्रतमाहात्म्यं विधानं च वदामि ते । श्रृणु देवि प्रयत्नेन मन्त्रैः पौराणिकैर्यदा । मलमासे त्वतिक्रान्ते शुद्धाषाढे समागते । आषाढ्यां पौर्णमास्यां तु संध्याकाले ह्युपस्थिते । संकल्पयेन्मासमेकं श्रावणप्रभृति ह्यहम् । स्नानं करिष्ये नित्यं च ब्रह्मचर्यस्थिता सती । भोक्ष्ये नक्तं च भूशय्यां करिष्ये प्राणिनां दयाम् । सौभाग्यधनधान्यादिप्राप्तये शिवतुष्टये । इति संकल्प्य विप्राग्रे नारी विप्रेभ्य एव च । प्राप्यानुज्ञां तु संपाद्य सामग्रीं सकलामपि । प्रत्यूषे च प्रतिदिनं दन्तधावनपूर्वकम् । नद्यां गत्वाऽथ वा वाप्यां तडागे गिरिनिर्झरे । स्नानं करोमि देवेशि कोकिले प्रीतये तव । जलेऽस्मिन्पावने पुण्ये सर्वदेवजलाश्रये । स्नानं कुर्याद्व्रती देवि सुगन्धामलकैस्तिलैः । दिनाष्टकं ततः पश्चात्सर्वौषध्या पुनः पृथक् । वचापिष्टेन च स्नानं संपूर्णफललिप्सया । स्नात्वा ध्यात्वा रविं तस्मै दद्यादर्घ्यं प्रयत्नतः । आदित्य भास्कर रवे ह्यर्क सूर्य दिवाकर । प्रभाकर नमस्तुभ्यं गृहाणार्घ्यं नमोऽस्तु ते ।' सूर्यार्घ्यमन्त्रः ।'कारयेत्कोकिलां देवीं सौवर्णीं सर्वकामदाम् । रौप्यं चरणयोश्चैव नेत्रयोश्चापि मौक्तिकम् । रत्नानि पञ्च पृष्ठे तु चूतवृक्षसमाश्रिता । अथ वा तिलपिष्टेन कोकिलां पक्षिरूपिणीम् । निधाय ताम्रपात्रे तां पूजयेत्सुसमाहितः । उपचारैः षोडशभिर्यथावत्तं निबोध मे । आवाहयामि तां देवीं कोकिलारूपधारिणीम् । अवतारं कुरुष्वात्र प्रसादं कुरु सुव्रते ।' आवाहनम् ।'आगच्छ कोकिले देवि देहि मेऽखिलवाञ्छितम् । चूतवृक्षं समारुह्य रमसे नन्दने वने ।' आसनम् । ' तिर्यग्योनिसमुद्भूते कोकिले मधुरस्वने । शंकरस्य प्रिये देवि पाद्यं संप्रेति गृह्यताम् । कलकण्ठि महादेवि भक्तभुक्तिप्रदे शिवे ॥

तिलपुष्पाक्षतैरर्घ्यं गृहाण त्वं नमोऽस्तु ते ।' अर्घ्यम् । 'आषाढस्यासिते पक्षे मेघवर्णस्वरूपिणि । कोकिले नाम त्वं देवि स्नानीयं प्रतिगृह्यताम् ।' स्नानम् । 'कोकिले कलकण्ठे च माधवे मधुरस्वरे । वसन्ते वससे देवि वस्त्रं च प्रतिगृह्यताम् ।' वस्त्रम् । 'श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् । विलेपनं मया दत्तं प्रीत्यर्थं प्रतिगृह्यताम् ।' गन्धम् । 'हरिद्राकुङ्कुमद्रव्यैः कोकिले कामसंभवे। कुङ्कुमेनार्चितासि त्वमतः शान्तिं प्रयच्छ मे ।' हरिद्रा । 'कृष्णशुक्लं च रक्तं च वासांसि विविधानि च । पीतसूत्रप्रदानेन प्रीताः स्युः सर्वदेवताः ।' वस्त्रयुग्मम् । माल्यादीनीति पुष्पम् । वनस्पतिरसोद्भूत इति धूपम् । साज्यं च वर्तिसंयुक्तमिति दीपम् । 'सर्वभक्ष्यसमायुक्तं रसैः सर्वैः समन्वितम् । सर्वदेवसमाहारं नैवेद्यं प्रतिगृह्यताम् ।' इति नैवेद्यम् । 'कूष्माण्डैर्नारिकेलैश्च खर्जूरैर्दाडिमीफलैः । चूतजम्बीरजम्बूश्रीफलैरामलकैस्तथा । द्राक्षानारिङ्गबदरैर्मातुलिङ्गैः सशर्करैः ।' फलानि । नागवल्लीदलं दिव्यमिति ताम्बूलम् । हिरण्येति दक्षिणा । प्रार्थना । 'भिन्नानि कण्ठसूत्राणि दद्याद्यापि दिने दिने । कुङ्कुमं पुष्पताम्बूलमक्षतांश्च दिने दिने । कुर्यादेवं विधां पूजां श्रावण्यन्तं च सुव्रते । विसर्जयेच्च पश्चात्तां सौवर्णीं कोकिलां यदि । यदा तु तिलपिष्टस्य कोकिला क्रियते तदा । कुर्यात्प्रत्यहमाह्वानं मित्रायास्तु विसर्जनम् । रम्यं वनं समागत्य श्रुत्वा कोकिलकूजितम् । यदि न श्रूयते शब्द उपवासस्तु तद्दिने । कोकिले कृष्णवर्णे च सदा वासो वनेषु ते । सौभाग्यमतुलं देहि गृहाणार्घ्यं नमोऽस्तु ते ।' विसर्जनमन्त्रः । 'चैत्ररथवनोत्पन्ने विन्ध्यपर्वतवासिनि । गच्छ गच्छ महादुर्गे स्वस्थाने नन्दने वने।'विसर्जनम् । 'रूपं देहि धनं देहि सर्वसौख्यं च देहि मे । पुत्रान्देहि यशो देहि सौभाग्यं देहि संपदः । इत्युक्त्वा च ततः पश्चाद्धविष्यान्नेन सुव्रती । नक्तभोजी भवेत्पार्थ यावन्मासः समाप्यते । मासान्ते ताम्रपात्रे तु कोकिलां स्वर्णनिर्मिताम् । सदा ध्यानैर्गुडैर्युक्तां श्रावण्यां कुण्डले तथा।दद्यात्सदक्षिणां चापि दैवज्ञे वा पुरोहिते।एवमाषाढमासस्य द्वैविध्ये समुपस्थिते । सधवा विधवा वापि या नारी कोकिलाव्रतम् । करोति सप्तजन्मानि सौभाग्यं लभते तु सा।मृता गौरीपुरं याति विमानेनार्कतेजसा।'भगवानुवाच-'एतद्व्रतं वसिष्ठेन मुनिना कथितं पुरा । तथा कृतं तु तत्पार्थ समस्तं कीर्तिमालया । तस्याश्च सर्वं निष्पन्नं वसिष्ठवचनं यथा । एवं याऽन्यापि कौन्तेय कोकिलाव्रतमुत्तमम् । करिष्यति ततस्तस्याः सौभाग्यं च भविष्यति । आषाढौ द्वौ यदा स्यातां कोकिलाव्रतमाचरेत् । न करोति यदा नारी व्याली भवति कानने । एकतः सर्वदानादि कोकिलाव्रतमेकतः । कृतं वराप्सरो-

भिश्च ऋषिपत्नीभिरादरात् । अहल्यया च सा स्नात्वा अर्चिता शापमुक्तये । अरुन्धत्या सह स्नात्वा पूजिता कोकिला नृप । सीतया पूजिता सापि सर्वकामार्थसिद्धये । गौतम्या दण्डकारण्ये स्नानं कृत्वा यथाविधि । नलान्वेषणकामेन दमयन्त्या च पूजिता । रुक्मिण्या च ततः स्नात्वा पूजिता कोकिला शिवा । विष्णोः पत्युरवाप्त्यर्थं तच्च जातं न संशयः । कुचैला मलिना दीना परकर्मरता तथा । एवं वन्ध्या काकवन्ध्या विवत्सा मृतवत्सका । सर्वास्ताः फलभाजः स्युर्व्रतस्यास्य प्रभावतः । आयुरारोग्यमैश्वर्यं सुखं वृद्धिं यशः प्रजाम् । सौभाग्यं सुन्दरं रूपं नारी प्राप्नोति नान्यथा । एतद्व्रतं मयाख्यातं कार्यं वारत्रयं नृप । तृतीयान्ते च विधिवत्कार्यमुद्यापनं शुभम् । एकस्माज्जायते द्रव्यं द्वितीयाल्लभते सुतान् । तृतीयाच्चापि सौभाग्यं प्राप्नुयान्नात्र संशयः ।' इति वाराहे कोकिलाव्रतम् ।

अथोद्यापनम् । 'उद्यापनविधिं ब्रूहि व्रतस्यास्य मम प्रभो । येन विज्ञातमात्रेण सौभाग्यं च भविष्यति। श्रावण्यां पौर्णमास्यां तु शुक्लपक्षे विशेषतः। द्वितीयायामेकभक्तं दन्तधावनपूर्वकम् । उपवासस्य नियमं कर्तुं व्रतपरायणम् । तृतीया पुण्यफलदा मध्याह्ने समुपोषिता । उपलिप्य शुचौ देशे मण्डलं तत्र कारयेत् । अष्टदलं लिखेत्पद्मं चतुष्कोणोपशोभितम् । कलशं वारिपूर्णं च पञ्चरत्नसमन्वितम् । तस्योपरि न्यसेत्पात्रं शूर्पबन्धैकविंशति । सप्तधान्यभृतं पात्रं प्रस्थेनैकेन पूरयेत् । तदभावे तदर्धं वा कुडवेनाथ नारद। ऊर्णपट्टं कृष्णवर्णं युग्मं दद्याच्च शक्तितः। तस्योपरि न्यसेद्देवीं कोकिलां पूर्ववत्तदा। अत्र गन्धप्रदानेन धूपदीपप्रदानकम् । नैवेद्यं मोदकाद्यं च पक्वान्नं सघृतं बहु । अर्घ्यं चैव प्रदातव्यं ताम्बूलं फलमुत्तमम् । रात्रौ जागरणं कार्यं वाद्यनृत्यसमन्वितम् । पूजयित्वैकचित्तेन फलं प्राप्नोति चाक्षयम् । प्रभाते विमले जाते स्नानं कृत्वा विधानतः । नित्यं निर्वर्त्य विधिवत्पूजयेद्विधिवद्द्विजः । बिल्वचम्पकपुष्पैश्च तण्डुलैर्घृतपायसैः । अष्टोत्तरशतं हुत्वा दुर्गामन्त्रेण वैदिकैः । कोकिलाप्रीतये ब्रह्मन्व्याहृतीनां शतत्रयम् । ब्राह्मणान्भोजयेत्पश्चात्सपत्नीकांश्च पञ्च च। अशक्तौ ह्येकयुग्मं च भोजयेच्च यथारुचि । स्त्रीभ्यश्चैव प्रदातव्या घारिकाः पञ्च चैव तु । मोदकाश्च ससूत्राश्च वंशपात्रसमन्विताः । कृष्णवर्णसमायुक्ताः पक्वान्नं च प्रपूरयेत् । सर्वोपस्करसंयुक्तं स्त्रीभ्यश्चैव प्रदापयेत् । आचार्यं पूजयेद्भक्त्या गां कृष्णां च सवत्सकाम्। उपानहौ तथा शय्यां चामरं छत्रमेव च । मुद्रिको कर्णवेष्टं च चन्दनं कुसुमान्वितम्। सर्वं दद्याद्द्विजेन्द्राय सपत्नीकाय नारद । दापयेद्विधि-

वत्सर्वं ब्राह्मणाय कुटुम्बिने। व्रतोपदेष्ट्रे दानं च भोजनं च सदक्षिणम् । एवं या कुरुते राजन्कोकिलाव्रतमुत्तमम् । सर्वं प्राप्नोति सौभाग्यं पुत्रधान्यधनानि च । मर्त्यो भुञ्जीत नैवेद्यं पुत्रपौत्रैः समन्वितम् । कोकिले पूजिता गच्छ विधिवत्सर्वकामदम् । कारये-त्कोकिलां देवीं सौवर्णीं सर्वकामदाम् । रौप्यं चरणयोश्चैवं नेत्रयोश्चापि मौक्तिकम् । पञ्चरत्नानि पृष्ठे च चूतवृक्षसमाश्रिता । एवं त्वेव यथा पूज्या यथोक्ता च शनैः शनैः। विप्रे करार्पिता लक्ष्मीः सस्वभावमिदं शृणु । महाक्रममवाप्नोति महामायाप्रसादतः।' इति नारदीये कोकिलाव्रतोद्यापनम् । ❀

अस्यामेवाम्बिकाव्रतम् । 'पौर्णमास्यामषाढस्य योऽर्चयेदम्बिकां नरः । सोपवासो महाभाग स याति परमां गतिम् ।' सोपवासश्चतुर्दश्यां कृतोपवासः । तथा— 'पौर्णमास्यामषाढस्य विधिवत्पूजयेच्छिवाम् । सोऽश्वमेधमवाप्नोति विष्णुलोके मही-यते ।' ब्रह्मपुराणे—'आषाढान्ते वैश्वदेवे नक्षत्रे सति शोभने । दश तान्पूजयेत्तत्र विश्वेदेवान्महाबलान् ।' आषाढपौर्णमास्यां वैश्वदेवमुत्तराषाढा । दश 'क्रतुर्दक्षो वसुः सत्यः कालः कामस्तथैव च । धूरिश्च लोचनश्चैव तथा चैव पुरूरवाः । आर्द्रवश्च दशैवैते विश्वेदेवाःप्रकीर्तिताः ।' इति बृहस्पत्युक्ताः । 'आषाढ्यांस्नानपूजे च श्रावण्यां संततं तथा।आषाढ्यामथ कार्तिक्यां माघ्यां त्रीन्पञ्च वा द्विजान् । पूजयेत्पितृपूर्वं तु तदस्याक्षयमुच्यते ।' इति भविष्यत्पुराणे अम्बिकाव्रतम् । ❀

अस्यां शिवशयनमुक्तं हेमाद्रौ वामनपुराणे—'पौर्णमास्यामुमानाथः स्वपते चर्मसंस्तरे । वैय्याघ्रे च जटाभारं समुद्ग्रथ्याहिवर्ष्मणा ।' इति । इयं रुद्रव्रतत्वा-त्पूर्वविद्धा ग्राह्या । अत्र विष्णुशयनमप्युक्तं प्रागेवैकादशीप्रकरणे । अत्रैवाषाढी-श्वरयात्रा पूजा चोक्ता काशीखण्डे—'उदीच्यां भारभूतेशमाषाढीशं समर्चयेत् । आषाढ्यां पञ्चदश्यां वै न पापैः परितप्यते । कृत्वा सांवत्सरीं पूजामनेना जायते नरः।' इति । अस्यां किंचिद्दानं कार्यम् । तदुक्तमाषाढीकार्तिकीत्यादिना वैशाखीप्रकरणे । अस्यामेव शिवपवित्रारोपणमुक्तं शिवधर्मपुराणभविष्यपुराणयोः—'पौर्णमास्यां तथाषाढ्यां शिवं संपूज्य यत्नतः । उपवीतं शिवे दद्याच्छिवभक्तांश्च पूजयेत् । पुनरेव च कार्तिक्यां पूज्य शंभुं क्षमापयेत् । यतिभ्यो दक्षिणां दद्यात्सूत्रवस्त्रादिपूर्वि-काम् । यः कुर्यात्सकृदप्येवं चातुर्मास्ये पवित्रकम् । कल्पकोटिशतं दिव्यं रुद्रलोके महीयते ।' इति । अत्रैव कालान्तरविधिपूर्वकं नित्यत्वमुक्तं कालोत्तरे—'आषाढान्ते चतुर्दश्यां नभस्यनभसोस्तथा । अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोःसमम् । पवित्रा-

रोपणं कार्यं न तु कालान्तरे स्थितम् । एवं काले ह्यतिक्रान्ते प्रायश्चित्तं समाचरेत् ।' इति । अत्र चतुर्दश्यामष्टम्यां वा पवित्रारोपणपक्षे त्रयोदश्यां सप्तम्यां वाऽधिवासनपूर्वकं गन्धपवित्रारोपणं शिवे कार्यम् । पौर्णमास्यामनुष्ठानपक्षे चतुर्दश्यामष्टम्यां वाऽधिवासनं कार्यम् ।'सप्तम्यां वा त्रयोदश्यां तत्र गन्धपवित्रकम् ।' इति हेमाद्रौ वचनात् । 'पवित्रारोपणं शंभोः कुर्यान्नभसि वा शुचौ । चतुर्दश्यामथाष्टम्यामधिवास्य विधानतः । श्रावणप्रौष्ठपद्यां च पवित्रारोपणं तु यः । कुरुते नापवित्रः स्यात्स तु संवत्सरान्तरे ।' इति शिवरहस्यवचनाच्च । शुचौ आषाढे। आषाढस्याधिमासत्वे तत्रेदं न कार्यम् । 'आषाढे तु न कर्तव्यमसुप्ते तु जनार्दने ।' इति वचसा तदभिप्रायेण निबन्धाभिव्याख्यानात् । उक्तमासत्रये तदकरणे कन्यागतेऽपि सूर्ये तत्कार्यम् ।'उक्तमासत्रये यस्तु न कुर्यात्सूत्ररोहणम् । असौ कन्यागते भानौ यथा दक्षाणुना युतम् । कुर्यात्पवित्रं शंभोस्तु तुलायां न कथंचन ।' इति वचनात् । दक्षाणुना अघोरमन्त्रेणेति व्याख्यातं हेमाद्रिणा । व्यहकालासंभवे सद्योपि तत्कार्यम् ।'यद्वा तदैव कर्तव्यं यदि व्यग्रतया तदा । गोदोहान्तरितं कृत्वा साधिवासं पवित्रकम् ।'इति वचनान्तरात् । मन्त्रातिरिक्तविधिस्तु विष्णुपवित्रारोपणाद्बोध्यः।अस्यामेव पौर्णमास्यां संन्यासिनामौत्सर्गिकसंचरणे चातुर्मास्यगतापवादस्य परिपालनसकल्पाङ्गत्वेन क्षौरं व्यासपूजादिकं विहितम् । उत्सर्गशास्त्रंतावद्विश्वेश्वरीये-'एकरात्रंवसेद्ग्रामेपत्तनेतुदिनत्रयम् । पुरेदिनद्वयं भिक्षुर्नगरे पञ्चरात्रकम् । वर्षास्वेकत्र तिष्ठेत स्थाने पुण्यजनावृते । आत्मवत्सर्वभूतानि पश्यन्भिक्षुश्चरेन्महीम् ।' इति । आरुणस्मृतौ–' वर्षासु ध्रुवशीलस्तु माःस्वेकाकी यतिश्चरेत् । द्वावेव वा चरेत् ' इति । अत्र वर्षासु माःस्विति कार्तिकान्ताश्चत्वारो मासा उच्यंते । द्वाविति द्वयोर्वा श्रावणभाद्रपदयोरित्यर्थः । ध्रुवशीलः एकस्थिरः चरेदिति भिक्षाटनाद्यनुवादः । मेधातिथिः–' आषाढ्यां पौर्णमास्यां च कारयेद्वपनं यतिः । चातुर्मास्यस्य मध्ये तु वर्जयेद्वपनं यतिः ।', इति । तथा ' वपनान्ते पुनः स्नानमद्भिर्द्वादशभिर्यतिः । द्वादशैव प्रकुर्वीत क्षौरान्ते प्राणसंयमान् ।' इति । अत्रिः– ' वपनानन्तरं स्नात्वा पूजयेत्पुरुषोत्तमम् ।' इति । यतिधर्मसमुच्चये–' देवं कृष्णं मुनिं व्यासं भाष्यकारं गुरोर्गुरुम् । गुरुं देवगणाध्यक्षौ दुर्गां देवीं सरस्वतीम् । ' गणं गणेशम् । अध्यक्षं क्षेत्रपालम् । अत्र क्षौरादिसंकल्पकर्मणि औदयिकी त्रिमुहूर्ता पौर्णमासी ग्राह्या । ' त्रिमुहूर्ताधिकं ग्राह्यं पर्वक्षौरम्-

१ आत्राषाढः कृष्णादिः ।

माणयोः ।' इत्यभियुक्ताः । कृत्यरत्नावल्यादौ तु मध्याह्नव्यापिनी ग्राह्या । दिनद्वये तादृशी चेत्परैवेत्युक्तम् । केनापि प्रतिबन्धनेन पौर्णमास्यामस्य संकल्पविधेरसंभवे द्वादश्यामेवानुष्ठेयः । 'द्वादश्यां पौर्णमास्यां वै कुर्यात्संकल्पमात्मवत्' इत्यत्रिवचनादिति । अथ व्यासपूजाविधिरुच्यते । आषाढ्यां पौर्णमास्यां यतिभिः प्रातरुत्थाय मृच्छौचादि कृत्वा अष्टोत्तरशतस्नानपूर्वकक्षौरस्नानसंध्यादिपर्वतर्पणान्तं कार्यम् । ततो व्यासपूजास्थापनाङ्गत्वेन हस्तौ पादौ प्रक्षाल्य प्राणायामं कृत्वा ब्राह्मणैः सह तिथ्यादि संकीर्त्य व्यासपूजां करिष्ये इति संकल्प्य श्रीपर्णीवृक्षपीठं निधाय तदुपरि सदृशं धौतवस्त्रं प्रसार्य तत्र व्यासपीठं गन्धादिना लिखेत् । तत्रायं क्रमः । प्रागायता द्वादश रेखा उदगायतां उदक्संस्था द्वादश रेखा लिखेत् । ततः पृथिव्या मेरुः ऋषिः कूर्मो देवता सुतलं छन्दः आसनोपवेशने विनियोगः । पृथ्वि त्वयेति पठित्वा आधारशक्त्यै नमः, वेदव्यासाय नमः, अनन्ताय नमः इत्यासनमावाह्य 'पूर्वे रक्षतु गोविन्दो ह्याग्नेय्यां गरुडध्वजः । याम्यां रक्षतु वाराहो नारसिंहस्तु नैर्ऋतौ । केशवो वारुणीं रक्षेद्वायव्यां मधुसूदनः । उत्तरे श्रीधरो रक्षेदीशान्यां तु गदाधरः । ऊर्ध्वं गोवर्धनो रक्षेदधस्तात्तु महीधरः । इति दिग्बन्धः । प्राणायामत्रयं कृत्वा करन्यासाङ्गन्यासौ कृत्वा प्रणवस्य ऋष्यादिस्मरणपूर्वकं पादादिन्यासं कृत्वा ध्यानं कृत्वा सलिलं स्पृशेत् । आधारशक्तिमारभ्य अक्षतपुष्पैः पीठदेवता आवाहयेत् । तद्यथा आधारशक्त्यै नमः, कूर्माय नमः, वैराग्याय नमः, ऐश्वर्याय नमः, वेदव्यासाय नमः, अनन्ताय नमः । वाराहाय नमः, पृथिव्यै नमः, रत्नद्वीपाय नमः, रत्नवेदिकायै नमः, दिव्यसिंहासनाय नमः, धर्माय नमः, ज्ञानाय नमः, वैराग्याय नमः, ऐश्वर्याय नमः, अधर्माय नमः, अज्ञानाय नमः, अवैराग्याय नमः, अनैश्वर्याय नमः, सं सत्वप्रबोधात्मने नमः, रं रजसे प्रकृत्यात्मने नमः, तं तमसे सोमात्मने नमः, ॐ मूलाय नमः, कन्दाय नमः, ॐ नालाय नमः, पद्माय नमः, पत्रेभ्यो नमः, केसरेभ्यो नमः, कर्णिकायै नमः, द्वादशकलात्मने सूर्यमण्डलाय नमः, षोडशकलात्मने सोममण्डलाय नमः, दशकलात्मने अग्निमण्डलाय नमः, आत्मने नमः, अन्तरात्मने नमः । इति पीठदेवता आवाह्य । ततो मुख्यदेवतावाहनम् । तत्रायं क्रमः ॐ गं गणपतये नमः । दुं दुर्गायै नमः, क्षं क्षेत्रपालाय नमः, इं ईशानाय नमः सं सरस्वत्यै नमः, ॐ निं निर्ऋतये नमः, इत्याग्नेयवायव्येशान्यनैर्ऋत्यकोणेषु स्थापयेत् । मध्ये श्रीकृष्णाय

नमः। कृष्णस्य पूर्वे वासुदेवाय नमः। तद्दक्षिणे संकर्षणाय नमः। पश्चिमे प्रद्युम्नाय नमः। उत्तरे अनिरुद्धाय नमः। इति कृष्णपञ्चकम्। कृष्णदक्षिणभागे व्यासपञ्चकं स्थापयेत्। मध्ये वेदव्यासाय नमः। व्यासपूर्वे सुमन्तवे नमः। व्यासदक्षिणे जैमिनये नमः। व्यासपश्चिमे वैशंपायनाय नमः। व्यासोत्तरे पैलाय नमः। इति व्यासपञ्चकम्। कृष्णवामभागे शंकराचार्यपञ्चकम्। मध्ये शंकराचार्येभ्यो नमः। पूर्वे विश्वरूपाचार्येभ्यो नमः। दक्षिणे पद्मपादाचार्येभ्यो नमः। पश्चिमे हस्तामलकाचार्येभ्यो नमः। उत्तरे त्रोटकाचार्येभ्यो नमः। इति शंकराचार्यपञ्चकं चावाह्य। कृष्णपार्श्वयोर्ब्रह्मरुद्रौ, पश्चिमादौ सनकादीन्स्थापयेत्। ॐ सनकाय नमः, सनन्दनाय नमः, सनातनाय नमः, संनत्कुमाराय नमः, सनत्सुजाताय नमः, शुकाय नमः, नारदाय नमः इति। कृष्णपूर्वदिग्भागे गुर्वादीन् स्थापयेत् गुं गुरुभ्योनमः। पं परमगुरुभ्योनमः। पं परमेष्ठिगुरुभ्यो नमः। पं परात्परगुरुभ्यो नमः। अन्यांश्च ब्रह्मविदाचार्यान् पूजयेत्। ते च—'ब्रह्म ब्रह्मा वसिष्ठश्च शक्तिश्चैव परापरः। व्यासः शुको गौडपादो गोविन्दस्वामिशंकराः।' इति। द्रविडाचार्येभ्यो नमः। विवरणाचार्येभ्योनमः। समस्तविद्यासंप्रदायप्रवर्तकाचार्येभ्योनमः। तत इन्द्रादिदिक्पालान् स्वे स्वे स्थाने स्थापयेत्। तत्रायं क्रमः। पूर्वे इन्द्रायनमः, आग्नेये यमाय०, नैर्ऋत्ये वरुणाय०। वायव्ये सोमायन०। ऐशान्ये ब्रह्मणे०। अनन्ताय०, आत्मने० अन्तरात्मने० परमात्मने०। इति दिक्पालानावाह्य। ब्रह्म वै प्रतिष्ठा० तदस्तु मित्रावरुणा०। ततः षोडशोपचारैर्वेदोक्तमन्त्रैः पूजयेत्। सहस्रशीर्षेति षोडशर्चस्य नारायण ऋषिः पुरुषो देवता अनुष्टुप्छन्दः अन्त्या त्रिष्टुप् षोडशोपचारपूजायां विनियोगः। सहस्रशीर्षेत्यावाहनम्। पुरुष एवेदमित्यासनम्। एतावानस्येति पाद्यम्। त्रिपादूर्ध्व उदैदित्यर्घ्यम्। तस्माद्विराडित्याचमनम्। आप्यायस्वेति पञ्चामृतमन्त्रैः पञ्चामृतम्। यत्पुरुषेणेति स्नानम्। तं यज्ञमिति वस्त्रम्। तस्माद्यज्ञात्सर्वहुतः संभृतमिति यज्ञोपवीतम्। हिरण्यरूप इत्यलंकारान्। तस्माद्यज्ञात्सर्वहुत इति गन्धम्। अक्षताश्चेत्यक्षताः। तस्मादश्वेति पुष्पाणि। परिमलद्रव्यम्। यत्पुरुषं व्यदधुरिति धूपम्। चन्द्रमा मनस इति नैवेद्यम्। मध्ये पानीयम्। उत्तरापोशनम्। करोद्वर्तनम्। नाभ्या आसीदिति फलम्। ताम्बूलम्। सप्तास्यासन्निति दक्षिणा। नीराजनम्। यज्ञेन यज्ञमिति मन्त्रपुष्पम्। अथवा सर्वांस्तत्तन्नाम्नाऽर्चयेद्यतिः। पश्चाद्दन्तकाष्ठवस्त्रचन्दनोदकं दद्यात्। व्यासयुक्तान्सर्वान्पूजयेच्च यथाक्रमम्। अथ पुष्पाञ्जलिः। 'लक्ष्मीकलत्रं ललिताब्जनेत्रं पूर्णेन्दुवक्त्रं

पुरुहूतमित्रम्।कारुण्यपात्रं कमनीयगात्रं वन्दे पवित्रं वसुदेवपुत्रम्।ॐ नमो भगवते वासुदेवाय शुद्धिबुद्धिस्वरूपिणे । हिरण्यरेतसे तुभ्यं प्राधान्यवत्स्वरूपिणे ।' नमोऽस्त्वनन्ताय सह० । नीलोत्पलदलश्यामं पीताम्बरधरं हरिम् । शंखचक्रगदापद्मधारिणं प्रणमाम्यहम्।' इति कृष्णपुष्पाञ्जलिः। 'वेदव्यासं स्वात्मरूपं सत्यसिन्धुं परायणम् । शान्तेन्द्रियं जितक्रोधं सशिष्यं प्रणमाम्यहम् ।' इति व्यासपुष्पाञ्जलिः। 'महाभारतवक्तारं परीक्षितसुतं प्रति। जितेन्द्रियं मुनिं वैशंपायनं प्रणमाम्यहम्।' इति वैशम्पायनपुष्पाञ्जलिः। 'सर्वशास्त्रार्थतत्त्वज्ञं परमानन्दरूपिणम् । ब्रह्माणं शंकराचार्यं प्रणमामि विवेकिनम् । परात्परतरं शान्तं योगीन्द्रं योगसेवितम् ।' शान्तेन्द्रियं जितक्रोधं सशिष्यं प्रणमाम्यहम्।' इति शंकराचार्यपुष्पाञ्जलिः। 'पदे पदे महापापं संघान्हन्त्यसकृत्कृतान्। प्रदक्षिणां तां मद्भक्त्या गृहाणजगदीश्वर।' इति प्रदक्षिणा। ततःपूर्वासनोपरि स्थित्वा नमस्कारं कुर्यात् । 'व्यक्ताव्यक्तं स्थूलसूक्ष्मं निर्गुणं सगुणं शुभम् । विश्वव्यापिनमीशानं वन्दे देवं रमापतिम्।' इति नमस्कारः । 'उद्भिज्जैरण्डजैर्वापि प्राणिभिर्व्याप्यते मही । सूक्ष्माव्यक्तैर्व्यक्तियुक्तैर्नानारूपैः समन्ततः। एतेषां रक्षणार्थाय आषाढ्या दिवसाद्यतः । असति प्रतिबन्धे तु मासान्वै वार्षिकानिह । निवसामीति संकल्प्य मनसा विधिपूर्वकम्।' वाचिकं संकल्प्य संन्यासिवक्तव्यान्मन्त्रानाहात्रिः । 'माधवश्चतुरो मासान्सर्वभूतहिताय वै । निद्रां यास्यति शेषाङ्के लक्ष्म्या सह जगत्पतिः। सुप्तश्चैवोत्थितो यावन्न भवेत्स सनातनः । अहं तावन्निवत्स्यामि सर्वभूतहिताय वै । इदं व्रतं मया देव गृहीतं पुरतस्तव । निर्विघ्नं सिद्धिमाप्नोतु प्रसादात्ते रमापते । प्रावृट्काले तु प्रायेण प्राणिभिर्व्याप्यते मही । स्थास्यामि चतुरो मासानतस्तेषां हिताय वै । स्थापयिष्यामि शेषांके लक्ष्म्या सह जगत्पतिम् । शेषपर्यंकवर्येऽस्मिन्फणामणिगणान्विते। श्वेतद्वीपान्तरे चैव कुरु निद्रां जगत्पते । सुप्ते त्वयि जगन्नाथे जगत्सुप्तं भवेद्भुवि । विबुद्धे च विबुध्येत प्रसन्नो मे भवाव्यय । सप्तद्वीपे योगनाथे भोगिनाथे स्थिते त्वयि । चातुर्मास्यव्रतेऽनुज्ञां देहि लक्ष्मीपते मम । चतुरो वार्षिकान्मासान्देवस्योत्थापनावधि।' इति चातुर्मास्यसंकल्पः। ततः 'उक्तवन्तं यतिं ब्रूयात्पार्श्वस्थाये द्विजातयः। निवसन्तु सुखेनात्र गमिष्यामः कृतार्थताम्। दर्शनात्सहवासाच्च भाषणादभिवन्दनात्। भिक्षादानाद्वस्त्रदानाद्गमिष्यामः कृतार्थताम्। त्वयि भुक्ते जगन्नाथो भुक्तो भवति सर्वदा। त्वयि सुप्ते देवगणाः संतोषं यान्ति सर्वदा । अतो भवद्भिः स्थातव्यं चातुर्मास्यव्रतावधि । यथाशक्त्या शुश्रूषां वः करिष्यामो ह्यहर्निशम्।'

गृहस्थैः प्रार्थितो भिक्षुरत्रैव स्थास्यामीति वदेत् । ततो यतिर्यस्य स्मृत्या०अनेन परमेश्वरः प्रीयतामिति वदेत् । ततो गृहस्थैरासनकौपीनान्तर्वासोबहिर्वासःप्रावरणीयवस्त्रोर्णावस्त्रगन्धाक्षतपुष्पधूपदीपखाद्यनैवेद्यफलनीराजनमन्त्रपुष्पप्रदक्षिणानमस्कारैर्यतिस्तोषणीयः । पूजानिवेदनं कृत्वा ब्राह्मणान् संपूज्य यथाशक्ति दक्षिणां दत्त्वा श्रीपरमेश्वरः प्रीयतामिति यथाशक्ति ब्राह्मणान्भोजयेत् । इति गृहस्थधर्माः वृद्धयाज्ञवल्क्योक्ताः । 'प्राग्वृष्टेर्मृदमादाय शुभ्रां कंचिदपीडयन् ।' प्राक् वृष्टेर्ज्येष्ठमासाषाढमासयोः । एवं मृत्तिकासंग्रहो दन्तकाष्ठदण्डोदकपात्रादिकसंग्रहप्रदर्शनार्थः । तस्य सर्वस्य समानत्वात् । 'स्मरन्यज्ञेश्वरं विष्णुं वामनं क्रोडरूपिणम् । येनोद्धृतासि देवि त्वं क्रोडरूपेण दंष्ट्रया । त्वया सह समायातु केशवो धरणीधरः ।' इति मृद्ग्रहणम्।

इति शंकराचार्यविरचिता व्यासपूजा समाप्ता ।

अस्यामेव गजपूजोक्ता व्रतहेमाद्रौ—'एवमस्त्विति देवेशस्तमुवाच मतङ्गजम् । आषाढ्यां च सचन्द्रायां मामभ्यर्च्य गजाधिप।तव पूजां करिष्यन्ति दत्तो ह्येष वरस्तव।' इति तत्रैवद्रष्टव्यः । विस्तरभयान्नेहप्रतन्यते । इयं मन्वादिः । अस्यामेवदिग्विशेषे वायुसंचारे फलविशेष उक्तो ज्योतिःशास्त्रे—'आषाढ्यां भास्करास्ते सुरपतिनिलये वाति वाते सुवृष्टिः सस्यार्धं संप्रकुर्याद्यदि दहनदिशो मन्दवृष्टिर्यमेन । नैर्ऋत्यामन्ननाशो वरुणदिशि जलं वायुकोणे प्रवायुः कौबेर्यां सस्यपूर्णा सकलवसुमती तद्वदीशानवायौ ।'

इत्याषाढीकृत्यम् ।

अथ श्रावणीकृत्यम् । अत्र रक्षाबन्धनं कार्यम् । तदुक्तं मदनरत्ने भविष्योत्तरे—युधिष्ठिर उवाच—'सर्वरोगोपशमनं सर्वाशुभविनाशनम् । सकृत्कृतेनाब्दमेकं येन रक्षाव्रतो भवेत् ।' कृष्ण उवाच—'शृणु पाण्डवशार्दूल इतिहासं पुरातनम् । इन्द्राण्या यत्कृतं पूर्वं शक्रस्य जयवृद्धये । देवासुरमभूद्युद्धं पुरा द्वादशवार्षिकम् । तत्रासुरैर्जितः शक्रः सह सर्वैः सुरोत्तमैः । बृहस्पतिमुपामन्त्र्य इदं वचनमब्रवीत् । न स्थातुं चैव शक्नोमि न गन्तुं तैरभिद्रुतः । सर्वथा योद्धुमिच्छामि गुरुस्तं च न्यवारयत् । तयोः संवदतोरेवं शची प्राह सुरेश्वरम् । अद्य भूतादिनं देव प्रातः सर्वं भविष्यति । अहं रक्षां विधास्यामि येनाजेयो भविष्यसि । इत्युक्त्वा पौर्णमास्यां सा पौलोमी कृतमङ्गला । बबन्ध दक्षिणे पाणौ रक्षापोटलिकां ततः । बद्धरक्षस्ततः शक्रः कृतस्वस्त्ययनो द्विजैः । जघान दानवानीकं क्षणात्काल इव प्रजाः । शक्रश्च विजयी भूत्वा पुनरेव जगत्रयीम्[1] । एष प्रभावो रक्षायाः कथितस्ते युधिष्ठिर । जयदः सुखदश्चैव पुत्रा-

१—प्राप्येति शेषः ।

रोग्यधनप्रदः ।' युधिष्ठिर उवाच—'क्रियते केन विधिना रक्षाबन्धः सुरोत्तम । कस्मिं-स्तिथौ कदा देव एतन्मे वक्तुमर्हसि । यथा यथा हि भगवान्विचित्राणि प्रभाषसे । तथा तथा न मे तृप्तिर्बह्वर्थाः शृण्वतः कथाः ।' कृष्ण उवाच—'संप्राप्ते श्रावण-स्यान्ते पौर्णमास्यां दिनोदये । स्नानं कुर्वीत मतिमाञ्छ्रुतिस्मृतिविधानतः । ततो देवान्पितॄंश्चैव तर्पयेत्परमाम्भसा । उपाकर्मादिकं प्रोक्तमृषीणां चैव तर्पणम् । कुर्वीत ब्राह्मणैः सार्धं वेदानुद्दिश्य शक्तितः । शूद्राणां मन्त्ररहितं स्नानं दानं च शस्यते । ततोऽपराह्णसमये कुर्यात्पोटलिकां शुभाम् । कारयेच्चाक्षतैस्तद्वत्सिद्धार्थैर्हेम-चर्चिताम् । वस्त्रैर्विचित्रैः कार्पासैः क्षौमैर्वा मलवर्जितैः । विचित्रतन्तुग्रन्थितां स्थाप-येद्भाजनोपरि । कार्या गृहस्य रक्षा गोमयरचितैः सुवृत्तकुण्डलकैः । दूर्वावर्णकसहितै-र्भित्तौ दुरितोपशमनाय । उपलिप्ते गृहमध्ये दत्तचतुष्कं न्यसेत्कुम्भम् । पीठं दत्त्वो-पविशेद्राजामात्यैर्युतश्च सुमुहूर्ते । वेश्याजनेन सहितो मङ्गलसहितैः समुत्थितैश्चिह्नैः । रक्षाबन्धः कार्यः प्रशान्तिदः सर्वविघ्नानाम् । देवद्विजातिशस्तान्वस्त्रे रक्षाभिरर्चयेत्प्र-थमम् । तदनु पुरोधा नृपते रक्षां बध्नीत मन्त्रेण । येन बद्धो बली राजा दानवेन्द्रो महाबलः । तेन त्वामभिबध्नामि रक्षे मा चल मा चल । ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च मानवैः । कर्तव्यो रक्षिकाबन्धो द्विजान्संपूज्य भक्तितः । अनेन विधिना यस्तु रक्षाबन्धनमाचरेत् । स सर्वदोषरहितः सुखी संवत्सरं भवेत् । यः श्रावणे विमलमासि विधानविज्ञो रक्षाविधानमिदमाचरते मनुष्यः । आस्ते सुखेन परमेण स वर्षमेकं पुत्रप्रपौत्रसहितः ससुहृज्जनः स्यात् ।' इति । अत्र पूर्णिमा अपराह्णव्या-पिनी ग्राह्या । 'ततोऽपराह्णसमये रक्षापोटलिकां शुभाम् ।' इत्युक्तेः । दिनद्वये तद्व्याप्तौ अव्याप्तौ च पूर्वा ग्राह्या । 'श्रावणी दौर्गनवमी ।' इति बृहद्यमवचनात् । स्मृतिकौस्तुभे तु—अस्मिन्कर्मण्यौदयिकी तिथिर्ग्राह्या । पौर्णमास्यां दिनोदये इत्युपक्रमात् । उपाकर्मोपलक्षितोत्तरकालताप्रतीतेश्चेति । पूर्वस्यां भद्रा-सत्त्वे तूत्तरा ग्राह्या । 'भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा । श्रावणी नृपतिं हन्ति ग्रामं दहति फाल्गुनी ।' इति वचनाच्च । अत्र सर्वेषामप्यधिकारः । 'ब्राह्मणैः क्षत्रियैर्वैश्यैः' इति भविष्यवचनात् । इति रक्षाबन्धनविधिः ॥

अथोपाकर्मकालनिर्णयः । तत्र बह्वृचानामुपाकर्मकालमाहाश्वलायनः । "अथातोऽध्यायोपाकरणमोषधीनां प्रादुर्भावे श्रवणेन श्रावणस्य पञ्चम्यां

१—उद्दिश्य संकीर्त्य ।

हस्तेन वा ।" इति औषधीनां प्रादुर्भावे अङ्कुरोदये इति यावत् । श्रवणसंबन्धिश्रावणे श्रावणसंबन्धिन्यां हस्तयुक्तपञ्चम्यां केवलं पञ्चम्यां हस्ते वा कर्तव्यमिति व्याख्यातारः । यजुर्वेदविषये पारस्करः—"अथातोऽध्यायोपाकर्म श्रवणेन श्रावण्यां पौर्णमास्यां श्रावणस्य पञ्चम्यां हस्तेन वा ।" इति । बौधायनः—"श्रावण्यां पौर्णमास्यां वोपाकृत्य छन्दांस्यधीयीत" इति । एवमन्यान्यपि यजुर्वैदिकानां गृह्यसूत्राण्युदाहार्याणि । छन्दोगविषये गार्ग्यः—' सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद्बहिः । छन्दोगा मिलिताः कुर्युरुत्सर्गं सर्वछन्दसाम् । शुक्लपक्षे तु हस्तेन उपाकर्म पराह्णिकम् ।' इति । अथर्ववेदिनां तूपाकर्मकाल उक्तः कौशिकगृह्ये—"अथर्ववेदस्याध्ययनविधिं वक्ष्यामः । श्रावण्यां प्रौष्ठपद्यां वोपाकृत्यार्धपञ्चमासानधीयीरन् । अर्धमासं वोपाकृत्य क्षपेरन् । त्र्यहमुत्सृज्य आरम्भः श्रावण्यामुक्तः पौष्यामुत्सर्गः" इति । गोभिलः—'पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयकाः । बह्वृचाः श्रवणर्क्षे तु हस्तर्क्षे सामवेदिनः ।' इति । मनुः—'श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि । युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान् ।' इति । अर्धेन न्यूनः पञ्चमो येषां तेऽर्धपञ्चमाः । शाकपार्थिवादित्वादुत्तरपदलोपी समासः । सार्धांश्चतुरो मासानित्यर्थः । बृहत्प्रचेताः—' भवेदुपाकृतिः पौर्णमास्यां पूर्वाह्ण एव तु । ब्राह्मणान्भोजयेत्तत्र पितॄनुद्दिश्य देवताः ।' इति । याज्ञवल्क्यः—'अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा । हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ।' इति । औषधीनां प्रादुर्भावे श्रावणस्येति च सर्वत्र संबध्यते । हस्तेन युक्तायां पञ्चम्यामिति स्मृतिचन्द्रिकायाम् । दिनान्तरेऽपि हस्तेन युक्त इति हेमाद्रिः । एवमेव स्मृत्यर्थसारेऽपि । अत्रैवं व्यवस्था । बह्वृचैरौषधीप्रादुर्भावे सति शुक्लप्रतिपदादिश्रावणमासस्य श्रवणनक्षत्रे वैदिककर्मत्वात् पूर्वाह्णे उपाकर्म कर्तव्यम् । यजुर्वेदिभिस्तु श्रावण्यां पूर्वाह्णे कर्तव्यम् । छन्दोगैस्तु सिंहस्थे सूर्ये हस्तनक्षत्रे अपराह्णे कर्तव्यम् । एषां ग्रहसंक्रान्तिदुष्टत्वे बह्वृचैः हस्तयुक्तायां श्रावणशुक्लपञ्चम्यां केवलपञ्चम्यां वा हस्तयुक्ते श्रावणशुक्लतिथ्यन्तरे वा कार्यम् । यजुर्वेदिभिर्भाद्रपद्यां येषां गृह्ये आषाढ्युक्ता तैराषाढ्यां कार्यम् । वाजसनेयिभिस्तु पञ्चम्याम् । तदुक्तं स्मृत्यन्तरे—'उपाकर्म प्रकुर्वन्ति क्रमात्सामर्ग्यजुर्विदः । ग्रहसंक्रान्त्यदुष्टेषु हस्तश्रवणपर्वसु ।' तथा—'संक्रान्तौ ग्रहणे चैव सूतके मृतके तथा । गणस्नानं न कुर्वीत नारदस्य वचो यथा । अथ चेद्दोषसंयुक्ते पर्वणि स्यादुपक्रमः । दुःखशोकामयग्रस्ता राष्ट्रे तस्मिन्द्विजातयः ।' तथा—'यदि स्याच्छ्रावणं पर्व ग्रहसंक्रान्तिदूषितम् । स्यादुपाकरणं शुक्लपञ्चम्यां श्रवणस्य तु ।'

स्मृतिमहार्णवे—'संक्रान्तिर्ग्रहणं वापि यदि पर्वणि जायते । तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते ।' इति । तथा तत्रैव—'संक्रान्तिर्ग्रहणं वापि पौर्णमास्यां यदा भवेत् । उपाकृतिस्तु पञ्चम्यां कार्या वाजसनेयिभिः ।' इति । अत्र पञ्चमी तन्मासगतैव गृह्यते नान्यमासगता अप्रकृतत्वात् । वाजसनेयिग्रहणं येषां गृह्ये पञ्चम्युक्ता तेषामुपलक्षणम् । येषां गृह्यसूत्रे पञ्चमी नोक्ता तेषामौषधीप्रादुर्भाव इव श्रवणगतकालस्य ग्रहादिदुष्टत्वेऽपि भाद्रपद एवोचितश्रवणादिकालेषूपाकर्मोचितम् । एतद्वार्षिकमित्याचक्षत इत्यादिवाक्यानामौषध्यप्रादुर्भाव इव संक्रान्तिदोषोऽपि भाद्रपदप्रापकतायास्तुल्यत्वात् । बौधायनीयानां तु श्रावण्याः पौर्णमास्या ग्रहादिदुष्टत्वे आषाढ्यां तदनुष्ठानमुचितम् । 'श्रावण्यां पौर्णमास्यामाषाढ्यां चोपाकृत्य छन्दांस्यधीयीत।'इति बौधायनवचनात् ग्रहसंक्रान्तियोगश्च उपाकर्मसंबन्धिन्यहोरात्रे भाव्यार्धरात्रात्पूर्वं नक्षत्रपर्वणोर्विद्यमान एव दूषको नान्यथा तथा अतीतादर्धरात्रात्परतो विद्यमानो दूषको न तत्पूर्वः । नाप्युपाकर्माङ्गभूततिथिनक्षत्रयोः पूर्वोत्तरकालीने तिथ्यन्तरे नक्षत्रान्तरे वा विद्यमानः । 'अर्धरात्रादधस्ताच्चेत्संक्रान्तिर्ग्रहणं तथा । उपाकर्म न कुर्वीत परतश्चेन्न दोषकृत् ।' इति मदनरत्नधृतगार्ग्यवचनात् । 'यद्यर्धरात्रादर्वाक्तु ग्रहसंक्रान्तिरेव तु । नोपाकर्म तदा कुर्याच्छ्रावण्यां श्रवणेऽपि च।' इति शास्त्रान्तराच्च । 'बह्वृचाः श्रावणे कुर्युर्ग्रहसंक्रान्तिवर्जिते ' इत्यादौ श्रावणादिसामानाधिकरण्येन ग्रहणादिपर्युदासश्रवणाच्च । यानि तु—'त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवम् । माङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्ययोः । ' तथा 'द्वादश्यादितृतीयान्तो वेध इन्दुग्रहे स्मृतः । एकादश्यादिकः सौरश्चतुर्थ्यन्तः प्रकीर्तितः।खण्डग्रहे तयोः प्रोक्त उभयत्र दिनत्रयम् ।' इत्यादीनि पौर्णमासीव्यतिरिक्तदिनानामपि दोषत्वप्रतिपादकानि वचनानि तान्युपाकर्मादिव्यतिरिक्तकर्मविषयाणि । 'नित्ये नैमित्तिके जप्ये होमयज्ञक्रियासु च । उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते।' इति वाक्येन उपाकर्मणि वेधदोषाभावस्योक्तत्वात् । पर्वणि ग्रहणे सति पूर्वं त्रिरात्रादिवेधाभावं वक्तुमिदम् । तेन पर्वणि ग्रहणेऽपि चतुर्दश्यां श्रवणे कार्यमिति हेमाद्रिः । यदापि गौणकालेऽपि औषधिप्रादुर्भावाभावः ग्रहसंक्रान्तियोगो वा निमित्तान्तरेण केनचिदतिपत्तिर्वा भवति तदा वर्षर्तुमध्ये यदा कदाचित्कार्यम्, न तु श्रावणसंबन्धनियमः । तदुक्तं शौनकेन—तद्वार्षिकमित्याचक्षते इति । वर्षासु भवं वार्षिकमित्यर्थः । अत एव बह्वृचकारिकायाम्—'अवृष्ट्यौषधयस्तस्मिन्मासे तु न भवन्ति चेत् । तदा

भाद्रपदे मासि श्रवणेन तदिष्यते ।' इति । गोभिलः—प्रौष्ठपदीं हस्तेनोपकरणमिति । प्रौष्ठपदीं प्राप्येति शेषः । वसिष्ठोऽपि—' स्थिते रवौ उपाकर्म कर्तव्यं सिंहयुक्कके ।' इति वचनं तन्नर्मदोत्तरभागविषयम् । ' नर्मदोत्तरभागे तु कर्तव्यं सिंहयुक्तके ।' कर्कटे संस्थिते भानावुपाकुर्यात्तु दक्षिणे ।' इति वचनात् । कथं तर्हि नर्मदोत्तरभागगतानां शिष्टानां कर्कस्थे रवावुपाकर्मानुष्ठानम् । अत्र केचित्—अस्य वचनस्य सामगविषयत्वात्तद्व्यतिरिक्तानां कर्कस्थेऽपि सूर्ये न दोष इत्याहुः । अन्ये तु सामगविषयत्वस्यायुक्तत्वादेतस्य वचनस्य प्राच्यग्रन्थेषु दाक्षिणात्यप्राचीननिबन्धेषु चादृष्टत्वादनाकरत्वमाहुः । एतच्च शुक्रास्तादावपि कार्यम् । 'उपाकर्मोत्सर्जनं च पवित्रदमनार्पणम् ।' इति दमनारोपे लिखितवचनात् । 'यज्ञोपवीतं कर्तव्यं श्रावणे गुरुशुक्रयोः । मौढ्येऽपि वार्धके बाल्ये नित्यवत्कर्म नोदितम् ।' इति स्मृतिसारसमुच्चयाच्च । प्रथमारम्भस्तु न भवति । 'गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्धकेऽपि वा । तथाधिमाससंसर्पमलमासादिषु द्विजाः । प्रथमोपाकृतिर्न स्यात्कृतंकर्मविनाशकृत् ।'इति संग्रहवचनात् । अत्रादिशब्देन सिंहस्थगुर्वादिग्रहणम् । द्वितीयादिप्रयोगोऽपि । 'अधिमासे तु न कार्यः । उपाकर्म तथोत्सर्गःप्रसवाहोत्सवाष्टकाः । मासवृद्धौ परे कार्या वर्जयित्वा तु पैतृकम् ।' इति ज्योतिःपराशरोक्तेः । ' उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणि । अभिषेकादिवृद्धीनां न तूत्कर्षो युगादिषु ।' इति कात्यायनोक्तेश्च । यत्तु— 'दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु । उपाकर्मणि चोत्सर्गे ह्येतदिष्टं वृषादितः ।' इति ऋष्यशृङ्गवचनं तत्सामगविषयम् । तेषां सिंहार्कोपजीवनेन विहितस्योपाकर्मणोऽग्रिममासे संभवात् । एतानि हस्तश्रवणपर्वाणि दिनद्वयेऽपि कर्मकालव्याप्त्यभावव्याप्तौ चौदयिकानि ग्राह्याणि ।तदुक्तं गृह्यपरिशिष्टे—' धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितम् । श्रावणं कर्म कुर्वीरन्नृग्यजुः सामपाठकाः ।' इति । व्यासः— 'श्रवणेन तु यत्कर्म उत्तराषाढसंगतम् । संवत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यति । धनिष्ठासंयुतं कुर्याच्छ्रावणं कर्म यद्भवेत् । तत्कर्म सफलं विद्यादुपाकरणसंज्ञितम् ।' निगमः— 'ग्रहयोगो गुरुं हन्ति संक्रान्तिः शिष्यघातिनी । तयोर्हन्त्युत्तराषाढा उपाकर्मणि वैष्णवैः । धनिष्ठामिश्रिते कार्यमुपाकरणसंज्ञितम् ।' कालिकापुराणे—'चतुर्दश्यां समुत्पन्नावसुरौ मधुकैटभौ । वेदान्स्वीकुर्वतः पद्मयोनेस्तौ जहतुः श्रुतीः । हत्वा तावसुरौ देवः पातालतलवासिनौ । आहृत्य ताः श्रुतीस्तस्मै ददौ लोकगुरुः स्वयम् । अभूल्लब्धश्रुतिर्ब्रह्मा पर्वण्यौदयिके पुनः । अतो भूतयुते तस्मिन्नोपाकरणमिष्यते । आसुरं वर्जयेत्कालं वेदाहरणशङ्कया ।' इति ।

औदयिकानि च पर्वादीनि प्रातसङ्गवात्मकषण्मुहूर्तव्यापीनि ग्राह्याणि । 'श्रावण्यां प्रौष्ठपद्यां वा प्रतिपत्षण्मुहूर्तकैः । विद्धा स्याच्छन्दसां तत्रोपाकर्मोत्सर्जनं भवेत्।' इति निगमवचनात् । पर्वग्रहणं हस्तश्रवणयोरप्युपलक्षणम् । अत एव पृथ्वीचन्द्रोदये— श्रावणी पौर्णमासी तु संगवात्परतो यदि।तत्रैवौदयिकी ग्राह्या नान्यदौदयिकी भवेत्।' इति गार्ग्यवचनं लिखित्वा 'उदये संगवस्पर्शे श्रुतौ पर्वणि चार्कभे । कुर्युर्नभस्युपाकर्म ऋग्जुःसामगाः क्रमात् ।' इति वचनान्तरमपि लिखितम् । स्मृतिकौस्तुभे तु पृथ्वीचन्द्रोदयोदाहृतवचने संगवस्पर्श इति स्पर्शग्रहणात्संगवैकदेशव्याप्तिः प्रतीयते । निगमवाक्ये तु षण्मुहूर्तक इति पूर्णभागद्वयव्याप्तिः तदधिकव्याप्ति- रपि गार्ग्यवचनात्प्रतीयते । एषां वचसां यथाश्रुतार्थपरत्वे संभवति नान्यतरस्य विहितानुवादत्वं वक्तुमुचितम् । नापि विकल्पपरत्वम् । तस्याष्टदोषदुष्टत्वात् अनेक- श्रुतिकल्पनाप्रसङ्गाच्च।किं तु येषां शाखिनां षण्मुहूर्तसाध्यमेवोपाकर्म तान्प्रति षण्मुहू- र्तव्याप्तिरेव ग्राह्यत्वनियामिका । एवमितरे अपि व्याप्ती तत्तच्छाखिनां प्रतिग्राह्यत्व- नियामके बोध्ये । अत एव च स्फुटा स्मृत्यर्थसारोक्तिः—तिथिखण्डे सत्युदयव्या- पिनी प्रयोगपर्याप्तितिथिरुपाकरणे ग्राह्येति । एवं च नोक्तवचनेषु क्वचिदपि स्वार्थ- त्यागः । नाप्यनेकश्रुतिकल्पनाप्रसक्तिः । सर्वेषां कर्मकालव्यापिशाखप्रपञ्चकरूपत्वा- दिति । सिंहाभट्टीये—'श्रावणः श्रवणं पर्व संगवस्पृग्यदा भवेत् । तदैवौदयिकं कार्यं नान्यदौदयिकं भवेत् ।' इति । निर्णयसिन्धौ तु—'उदयव्यापिनीत्येव विष्णवृक्षे घटि- काद्वयम् । तत्कर्म सफलं ज्ञेयं तस्य पुण्यं त्वनन्तकम् ।' इति गार्ग्यवचनविरोधादे- तानि वचनानि प्राशस्त्यमात्रपराणीत्युक्तम् । परमार्थतस्तु—बहूनां वचनानां प्राशस्त्य- परत्वस्यानुचितत्वादेकस्योदयव्यापिनीति गार्ग्यवचनस्यैव वैश्वानराधिकरणन्यायेन षण्मुहूर्तात्मककालावयवमुहूर्तात्मककालस्तुतिद्वारा षण्मुहूर्तात्मकपूर्वोक्तकालस्ता- वकत्वं युक्तमिति प्रतिभाति । हेमाद्रिमदनपारिजातादयस्तु—'पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयिकाः । बह्वृचाः श्रवणे कुर्युर्ग्रहसंक्रान्तिवर्जिते।' इति वाक्ये तैत्तिरी- यकग्रहणात्तैरेवौदयिके कार्यम् । धनिष्ठाप्रतिपद्युक्तमिति गृह्यपरिशिष्टवाक्ये सामान्येन श्रुतोऽपि यजुःशब्द एतद्वचनानुरोधेन तैत्तिरीयकपरः । अतो वाजसनेयिभिः 'श्रावणी दुर्गनवमीतथादुर्गाष्टमी च या। पूर्वविद्धा तु कर्तव्याशिवरात्रिर्बलेर्दिनम्।' इति वचना- त्पूर्वविद्धपौर्णमास्यामिदं कार्यमित्याहुः।मदनरत्नस्तु पर्वण्यौदयिकेइति वचनस्य बह्वृच-

गृह्यपरिशिष्टीयत्वेन तान्प्रत्येव कर्म विधातुं प्रवृत्तत्वात् बह्वृचाः श्रावणे कुर्युः इत्यनेन बह्वृचकर्तृके उपाकर्मणि श्रवणान्विते विहिते कालिकापुराणादौ प्राशस्त्यपूर्वकं यजुर्वेद्यादिविशेषमनुपादाय सामान्येन विहितं यदौदयिकं पर्व तद्बह्वृचैः कर्मानुष्ठानयोग्यौदयिकपर्वलाभे प्राशस्त्यबुद्ध्या श्रवणपरित्यागेन मा ग्राहीत्येतदर्थं धनिष्ठाप्रतिपद्युक्तमित्यादिवाक्यप्राप्तमौदयिकपर्वणो यजुर्वेदिसंबन्धम् । 'पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयकाः' इति वाक्यं प्रतिपादयतीत्येतदनुवादकम् । अनुवादस्य च प्राप्त्यधीनत्वादौदयिकपर्वप्राप्तेश्च यजुर्वेदिमात्रसाधारण्यात्तदनुवादवाक्यगततैत्तिरीयपदस्य यजुर्वेदिमात्रोपलक्षकत्वात् । श्रावणी दुर्गनवमीति वाक्यस्य पवित्रारोपणादौ चरितार्थत्वाच्च सर्वैरपि यजुर्वेदिभिरौदयिके पर्वण्युपाकर्म कर्तव्यमित्याह । स्मृतिकौस्तुभे तु तैत्तिरीयशब्दप्रसिद्धार्थबाधप्रसङ्गाद्गोभिलवाक्यस्य बह्वृचान्प्रति श्रवणं विधानपरत्वेन नेतुमशक्यत्वाच्च । अथ तदपि सामगान्प्रति हस्तमात्रविधिपरमिति चेत् । न । होलाधिकरणे स्मृतीनां गृह्यग्रंथानां चाध्यायनव्यवस्थया प्रामाण्यव्यवस्थां प्राप्तां दूरीकृत्य सर्वान्प्रति प्रामाण्यस्य स्थापितत्वेन तत्तत्परिशिष्टे तत्तच्छाखीयपुरस्कारेण प्रवृत्तविधेर्विवक्षामङ्गीकृत्येतरशाखीयान्प्रति प्रतीयमानविध्यविवक्षाङ्गीकारस्य निर्हेतुकत्वादिति । इदं ब्रह्मचारिगृहस्थवनस्थैस्त्रिभिरपि कार्यम् । अत एव नारायणवृत्तौ "अथातोऽध्यायोपाकरणमिति" सूत्रव्याख्याने यस्माद्ब्रह्मयज्ञाध्ययनं नित्यम् अत उपाकर्मावश्यकमित्यादिना ब्रह्मयज्ञाङ्गताऽप्युक्ता । अत एव जीर्णप्रयोगरत्ने गोभिलः—'उपाकर्मोत्सर्जनं च वनस्थानामपीष्यते । धारणाध्ययनाङ्गत्वाद्गृहिणां ब्रह्मचारिणाम् ।' इति । ननु गृहस्थस्य समावर्तनोत्तरं ग्रहणाध्ययनाङ्गतया धारणाध्ययनाङ्गतया वा एतस्य कर्मणः अनुष्ठानं कथं युक्तमिति चेत् । उच्यते । समो वृत्तो ब्रह्मचारिकल्पेन यथान्यायमितरे जायोपेयीत्येके इत्याश्वलायनसूत्रे गृहस्थानामपि ग्रहणाध्ययनविधानात् । व्याख्यातं ह्येतदित्थं वृत्तिकारेण ब्रह्मचारिकल्पेन ब्रह्मचारिधर्मैरित्यर्थः । स्वाध्यायकाले ये विहिता ये धर्माः मधुमांसस्त्रीगमनखट्वादिवाशयनादिवर्जनादयः तैर्युक्तोऽधीयीत समावृत्तः । मेखलादयस्तु न भवन्ति अस्वाध्यायधर्मत्वात् । इतरे ब्रह्मचारिण इत्यर्थः । अत्राध्ययने ब्रह्मचारिणामपि प्रवृत्त्यर्थमिदम् । अन्यथा समावृत्तानामेवेति शङ्का स्यात् । 'समावृत्तो जायां गच्छेदिति एके आहुः । ऋतावेव गच्छेन्नानृताविति । वेदव्रतानि वा पारं नीत्वा ह्युभयमेव वा ।' इति श्रुतिरपि, वेदसमाप्त्य-

भावेऽपि समावर्तनविधानेन गृहस्थानामपि वेदाध्ययनसूचनाच्च । अत्र च सायुज्यकामयो राजपुरोहितयोः कुलाय यज्ञ इवाध्येष्यमाणोऽध्याप्यैरन्वारब्ध इत्याश्वलायनसूत्राच्चतुरवत्तपञ्चावत्ताख्यभिन्नकल्पानामप्यधिकारः । अत्रापि समानकल्पयोरेवाधिकारोऽस्त्विति चेत् । न । एतदधिकरणस्य तुल्यकल्पाधिकाराधिकरणापवादताया भाष्यादौ प्रतिपादितत्वात् । स्मृतिकौतुभे तु प्रधानभूतोऽप्याचार्यो बहुभिरपि चतुरवत्तिभिःसहोपाकर्म कुर्वन्नेकस्यापि जामदग्न्यस्यानुरोधेन पञ्चावत्तमेव कुर्यात् । आग्रयणे जघन्यैकद्यावापृथिव्यनुरोधेन मुख्यानेकेन्द्राग्न्यादीनां प्रसूयमनियमसाधकतया द्वादशाध्यायोक्तस्य कांस्यभोजिन्यायस्य प्रकृतेऽपि तुल्यत्वात् । उक्तं च चतुरवत्तिनं प्रत्यपि पाक्षिकपञ्चावत्तानुष्ठानं कात्यायनेन तस्य द्विरवद्यतित्रिर्जामदग्न्यानां सर्वेषां चोभयविरोधादिति । व्याख्यातं चैतत्कर्काचार्यैर्देवयाज्ञिकैश्च । शास्त्रान्तरे पञ्चावत्तं जमदग्नीनामित्युक्तेस्तेषां पञ्चावत्तमेव अन्येषां चतुरवत्तं पञ्चावत्तं वेति । सत्यप्यत्राव्यवस्थितविकल्पप्रसक्तौ जामदग्न्यानुज्ञयैव जामदग्न्यं चावत्तं कुर्यात् । अप्यजामदग्न्यो जामदग्न्यमामन्त्र्य पञ्चावत्तं कुर्वीतेत्यापस्तम्बोक्तेः । अत एव तनूनपान्नराशंसयोरिव चतुरवत्तपञ्चावत्तयोर्व्यवस्थाभावात् अजामदग्न्यानां जामदग्न्यैः सहानधिकारशङ्का । एतेन "राजपुरोहितौ सायुज्यकामौ यजेताम्" इति वचनात्, 'कुलाय यज्ञ इवोपाकर्मणि चोत्सर्गे' इति कार्ष्णाजिनिवचनादिहापि सहाधिकार इति तदुभयमप्यभुक्तवन्तमिवेत्युपेक्षणीयम् । न च कुलायदृष्टान्तेन समाधानमप्युचितम् । वसिष्ठशुनकादिगोत्रोत्पन्नेन पुरोहितेन सहैव राज्ञोऽधिकारं प्रतिपादयतो वचनस्योपपत्तौ सत्रवत्कुलायेपि प्रयाजगोचरभिन्नकल्पार्हाणां सहाधिकारकल्पनानुपपत्तेः । सोमचमसफलचमसार्हत्वेन भिन्नकल्पयोर्विप्रक्षत्रिययोःसहाधिकारप्रतिपादकाज्ञया चास्याधिकरणस्य तुल्यकल्पाधिकरणापवादत्वे संभवत्यालोचयितुमुचितं विद्वद्भिरिति । अथात्र कर्तव्यमुच्यते । कार्ष्णाजिनिः—'उपाकर्मणि चोत्सर्गे यथाकालं समेत्य तु । ऋषीन्दर्भमयान्कृत्वा पूजयेत्तर्पयेत्ततः ।' इति । व्यासः—'ऋषीणामर्चनं सर्वं कर्तव्यं च निवीतिना ।' इति । कार्ष्णाजिनिः—'वेदारम्भणतःपूर्वं सक्तुप्राशनतः परम् । नवयज्ञोपवीतानि दद्याद्वै धारयेत्ततः ।' इति । गालवः—'कृत्वा यज्ञोपवीतानि नवानि वसुधाधिप । हुत्वाऽग्नौ गुरवे दत्त्वा पितृभ्यो धारयेत्ततः ।' इति । पितृभ्य इत्यत्रापि दत्त्वेत्यनुषज्यते । वायवीये—'उपाकर्मणि विप्रेभ्यो दद्याद्यज्ञोपवीतकम् । आयुष्माञ्जायते तेन कर्मणा मानवो भुवि ।' ब्रह्मचारिणो विशेषः कालादर्शे—'मौञ्जी

यज्ञोपवीतं च नवं दंडं च धारयेत् । अजिनं कटिसूत्रं च नवं वस्त्रं तथैव च ।' अत्र विशेषः कारिकायाम्—'पश्चादग्नेस्तु दर्भेषु प्रागग्रेषूपविश्य च । आसिच्यापः शरावादौ दर्भास्तत्र निधाय च । प्रागग्रदर्भगर्भास्ते कुर्युर्ब्रह्माञ्जलिंतथा । सव्याहृतिं जपन्त्युच्चैः सावित्रीं ब्रह्मयज्ञवत् । त्रिरभ्यसेत्पुरोंकारं व्याहृतीश्चात्र कर्मणि ।' गोभिलः— 'उत्सर्जनं च वेदानामुपाकरणकर्म च । अकृत्वा वेदजप्येन फलं नाप्नोति मानवः ।अत एव चोपाकर्मोत्सर्जनयोर्नित्यत्वम् । इत्युपाकर्मकालनिर्णयः ।

अथोत्सर्जनप्रयोगः । आचार्य आचम्य प्राणानायम्य देशकालौ संकीर्त्य अधीतानां छन्दसामाप्यायनद्वारा श्रीपरमेश्वरप्रीत्यर्थमेभिर्ब्राह्मणैः सह अन्तरितमुत्सर्जनाख्यं कर्म करिष्ये । तदङ्गं होमं कर्तुं स्थण्डिलादि करिष्ये । स्थण्डिलमुपलिप्योल्लिख्याभ्युक्ष्य शकलमाग्नेय्यां निरस्य पाणिं प्रक्षाल्य एह्यग्ने राहुगणो गौतमोऽग्निस्त्रिष्टुप् जुष्टोदमूना आत्रेयो वसुश्रुतोऽग्निस्त्रिष्टुप् अग्न्यावाहने विनियोगः । 'ॐ एह्यग्न इह होता निषीदादब्धः सुपुर एता भवा नः । अवतां त्वा रोदसी विश्वमिन्वे यजामहे सौमनसाय देवान् ।' 'जुष्टो दमूना अतिथिर्दुरोण इमन्नो यज्ञमुपयाहि विद्वान । विश्वा अग्ने अभियुजो विहत्या शत्रूयतामाभरा भोजनानि ।' इत्यावाह्य व्याहृतीनां परमेष्ठी प्रजापतिः प्रजापतिर्बृहती अग्निप्रतिष्ठापने विनियोगः, ॐ भूर्भुवः स्वः अग्निं पावकनामानं प्रतिष्ठापयामीति प्रतिष्ठाप्य प्रोक्षितेन्धनानि निक्षिप्य वेणुधमन्या प्रबोध्य ध्यायेदेवम् । चत्वारि शृङ्गा वामदेवोऽग्निस्त्रिष्टुप् अग्निमूर्तिध्याने विनियोगः।'ॐ चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्यां आविवेश ।' 'सप्तहस्तश्चतुःशृङ्गः सप्तजिह्वो द्विशीर्षकः । त्रिपात्प्रसन्नवदनःसुखासीनःशुचिस्मितः । स्वाहां तु दाक्षिणे पार्श्वे देवींवामेस्वधां तथा । बिभ्रद्दक्षिणहस्तैस्तु शक्तिमन्नं स्रुचं स्रुवम् । तोमरं व्यजनं वामे घृतपात्रं च धारयन् । आत्माभिमुखमासीन एवंरूपो हुताशनः ।' एवं ध्यात्वा समिद्द्वयमादाय अस्मिन् क्रियमाणे उत्सर्जनहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये । अस्मिन्नन्वाहितेऽग्नौ जातवेदसमग्निमिध्मेन प्रजापतिं प्रजापतिं चाघारदेवते आज्येनाग्नीषोमौ चक्षुषी आज्येनात्र प्रधानं सावित्रीं ब्रह्माणं श्रद्धां मेधां प्रज्ञां धारणां सदसस्पतिम् अनुमतिं छन्दांसि ऋषीन्, एताः प्रधानदेवता आज्यद्रव्येण पुनरत्र प्रधानम् अग्निम् अतृणसूर्यान् अग्निं शकुन्तम् अग्निं मित्रावरुणौ अग्निम् अपः अग्निं मरुतः अग्निं प्रजापतिं देवब्रह्माणि अग्निम् इन्द्रासोमौ इन्द्रम् अग्नामरुतः पवमानं सोमम् पवमानसोमम्

अग्निं संज्ञानम् एताः प्रधानदेवता गृहसिद्धान्नद्रव्येण शेषेण स्विष्टकृतमग्निमिध्मसंनह-
नेन रुद्रमयासमग्निं देवान्विष्णुमग्निं वायुं सूर्यं प्रजापतिं चैताः प्रायश्चित्तदेवताआज्येन
ज्ञाताज्ञातदोषनिर्बर्हणार्थं त्रिवारमग्निं सकृन्मरुतश्चाज्येन सद्यो यक्ष्ये। व्याहृतीनां पर-
मेष्ठी प्रजापतिः प्रजापतिर्बृहती अन्वाधानसमिद्धोमे विनियोगः । ॐ भूर्भुवः स्वः
स्वाहा प्रजापतय इदं न मम। अग्निं परिसमुह्य परिस्तृणीयात् । अग्नेरष्टाङ्गुलपरि-
मिते देशे ऐशानीं दिशमारभ्य प्रदक्षिणं समन्तात्सोदकेन पाणिना त्रिःपरिमृज्य दर्भै-
र्दशाङ्गुलमिते देशे प्राच्यादिषु परिस्तृणीयात्।तत्र प्राच्यां प्रतीच्यां चोदगग्रा दर्भाः,अवा
च्यामुदीच्यां च प्रागग्राः, पूर्वपश्चात्परिस्तरणमूलयोरुपरि दक्षिणपरिस्तरणम् उत्तर-
परिस्तरणं तु तदग्रयोरधस्तात्। एकैकस्यां दिशि चत्वारः एवं षोडश । उत्तरतः
पात्रासादनार्थं कांश्चित्प्रागग्रान्दर्भानास्तृणीयात् । अग्नेरैशानीतस्त्रिरम्भसा परि-
षिच्य दक्षिणसव्यपाणिभ्यां क्रमेण चरुस्थालीप्रोक्षिण्यौ दर्वीस्रुवौ प्रणीताज्यपात्रे
इध्माबर्हिषी इति द्वे द्वे न्युब्जान्यासादयेत्। ततः प्रोक्षणीयपात्रमुत्तानं कृत्वा तत्रान-
न्तर्गर्भितसाग्रसमस्थूलप्रादेशमात्रकुशद्वयरूपे उत्तराग्रे पवित्रे निधाय शुद्धाभिरद्भि-
स्तत्पात्रं पूरयित्वा गन्धपुष्पादि क्षिप्त्वा अङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणि-
भ्यामुदगग्रे पृथक् पवित्रे धृत्वा अपस्त्रिरुत्पूय पात्राण्युत्तानानि कृत्वा इध्मग्रन्थिं
विस्रस्य सर्वाणि पात्राणि त्रिःप्रोक्षेत्। प्रणीतापात्रमग्नेः प्रत्यङ्निधाय तत्र पवित्रे निधा-
योत्पूताभिरद्भिः पूरयित्वा गन्धपुष्पादि निक्षिप्य पूर्णपात्रं पाणिभ्यामादायाग्नेः प्राद-
क्षिण्येन नासिकाग्रं नीत्वाऽग्नेरुत्तरतो दर्भेषु निधाय पवित्रे गृहीत्वाऽन्यैर्दर्भैराच्छादयेत्।
गृहसिद्धान्नद्रव्यं चरुस्थालीभ्यामादाय ते पवित्रे आज्यपात्रे निधाय तत्पवित्रं
पुरतः संस्थाप्य तस्मिन्नाज्यमासिच्याग्नेरुत्तरतः स्थिताङ्गारान्तभस्मना सहाग्नेरुद-
क्परिस्तरणाद्बहिर्निरुह्य तेष्वाज्यपात्रमधिश्रित्य ज्वलता दर्भोल्मुकेनावज्वल्याङ्गुष्ठ-
पर्वमात्रं प्रक्षालितं दर्भाग्रद्वयमाज्ये प्रक्षिप्य पुनर्ज्वलता तेनैव दर्भोल्मुकेन
गृहसिद्धान्नद्रव्येण सहाज्यं त्रिः पर्यग्नि कृत्वा तदुल्मुकमपास्यापः स्पृष्ट्वाज्यपात्रं
भुवि कर्षन्नुदगुद्वास्याङ्गारानग्नौ प्रत्यस्यापःस्पृष्ट्वा तत्रस्थमेवाज्यम् सवितुष्ट्वा हिरण्य-
स्तूपःसविता पुर उष्णिगाज्यस्योत्पवने विनियोगः। 'सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण
पवित्रेण वसोः सूर्यस्य रश्मिभिः।' इति मन्त्रेणैकश्रुत्योच्चारितेनैकं वारं द्विस्तूष्णी-
मुत्पूय पवित्रे अद्भिः प्रोक्ष्याग्नौ प्रहरेत्। अथाग्नेः पश्चात्परिस्तरणाद्बहिर्भुवं प्रोक्ष्य
तत्र बर्हिःसंनहनीं रज्जुमुदगग्रां प्रसार्य बर्हिः प्रागग्रमुदगपवर्गमविरलमास्तीर्य तस्मि-

आज्यपात्रं निधाय दक्षिणकरे स्रुक्स्रुवौ गृहीत्वा सव्येन दर्भानादाय सहैवाग्नौ प्रताप्य स्रुचं निधाय दक्षिणहस्तेन स्रुवस्य बिलमग्रैस्तु पृष्ठमभ्यात्ममग्रतः । आरभ्य पृष्ठतो यावदुपरिष्टाद्बिलं भवेत् । कुशानां मूलतो दण्डमेकैकं त्रिर्मृजेत वै । प्रोक्ष्य प्रताप्य चासाद्य बर्हिष्युत्तरतो घृतात् ।' एवमेव दर्वीमपि संमृज्य तान्कुशान्कृतसंमार्गान् प्रोक्ष्याग्नौ प्रहरेत् । ततो गृहसिद्धान्नमग्न्याज्ययोर्मध्येन नीत्वा आज्याद्दक्षिणतो बर्हिषि सान्तरमासाद्याभिघार्याग्निं गन्धादिभिरभ्यर्चयेत् । विश्वानिनं इति तिसृणामात्रेयो वसुश्रुतोऽग्निस्त्रिष्टुप् द्वाभ्यामर्चनेऽन्त्ययोपस्थाने विनियोगः । 'ॐ विश्वानि नो दुर्गहा जातवेदः सिंधुन्न नावा दुरितातिपर्षि । अग्ने अत्रिवन्नमसा गृणानोऽस्माकं बोध्यविता तनूनाम् । यस्त्वा हृदाकीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि । जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमस्याम् । यस्मै त्वं सुकृते जातवेद उ लोकमग्ने कृण्वस्योनम् । अश्विनं सपुत्रिणं वीरवन्तं गोमन्तं रयिन्नशते स्वस्ति ।' आद्यमन्त्राभ्यामष्टसु दिक्षु अर्चयेदष्टभिः पादैः । अन्त्ययोपस्थानम् । आत्मानं चालंकृत्य हस्तं प्रक्षाल्य इध्मबन्धनरज्जुमिध्मस्थाने निधाय पाणिनेध्ममादाय मूलमध्याग्रेषु स्रुवेण त्रिरभिघार्य, अयं ते वामदेवो जातवेदा अग्निस्त्रिष्टुप् इध्महवने विनियोगः । 'अयं त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्द्धस्व चेद्धवर्धय चास्मान्प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधयस्व स्वाहा ' जातवेदसेऽग्नय इदं न मम । ततः स्रुवेणाज्यं गृहीत्वा वायव्यादिशमारभ्याग्नेयीदिक्पर्यन्तमाज्यधारामृजुं हरेत् । तथैव नैर्ऋतीं दिशमारभ्यैशानीपर्यन्तं जुहुयात् । प्रजापतिं मनसा ध्यायन् स्वाहेति जुहुयात् । उभयत्र प्रजापतय इदं न मम । ततोऽग्नये स्वाहा अग्नय इदम् उत्तरतः । सोमाय स्वाहा सोमायेदं दक्षिणतः।ततः सावित्र्यादिनवभ्यः।सावित्र्यै स्वाहा सावित्र्यै इदम् । ॐ ब्रह्मणे स्वाहा ब्रह्मण इदम् । ॐ श्रद्धायै स्वाहा श्रद्धायै इदम् । ॐ मेधायै स्वाहा मेधायै इदम् ॐ प्रज्ञायै स्वाहा प्रज्ञायै इदम् । ॐ धारणायै स्वाहा धारणायै इदम् ॐ सदसस्पतये स्वाहा सदसस्पतय इदम्।ॐ अनुमतये स्वाहा अनुमतय इदम् । ॐ छन्दोभ्य ऋषिभ्यः स्वाहा छन्दोभ्य ऋषिभ्य इदम् । आज्याहुत्यन्ते चतुरवत्त्यप्याचार्यः पञ्चावत्तिनं शिष्यमामन्त्र्य विंशतिकृत्वः पञ्चावत्तं कुर्वीत शिष्टाचारश्चेत्थम् । पञ्चावत्तिन उत्थायाचार्यं स्वपञ्चावत्तित्वं प्रसूत इति मन्त्रेण निवेदयन्ति । 'प्रसूतो भक्षमकरं चरावपि स्तोमं चेमं प्रथमः सूरिरुन्मृजे । सुते सा तेन यद्यागमं वां प्रति विश्वामित्रजमदग्नीदमे ।' ततः स्रुवेण स्रुच्याज्यमुपस्तीर्य

गृहसिद्धान्नमध्यादङ्गुष्ठपर्वमात्रं तिरश्चीनाभिरङ्गुष्ठमध्यमानामिकाभिरुदगग्राभिर्नखसं-स्पर्शनमकुर्वन्नवदाय दर्व्यामोप्य ततोऽन्नपूर्वार्धात् प्रागग्राभिस्तथैवादाय दर्व्यामोप्य पात्रस्थमन्नमभिघार्य दर्वीस्थमक्तं चाभिघार्य, अग्निमीळे. विश्वामित्रो मधुच्छन्दा अग्निर्गायत्री उत्सर्जनप्रधानगृहसिद्धान्नहोमे विनियोगः। 'ॐ अग्निमीळे पुरोहितं यज्ञ-स्य देवमृत्विजम्। होतारं रत्नधातमं स्वाहा' अग्नय इदम्। सर्वत्र त्यागमाचार्य एव कुर्यात्। प्राक्संस्थान्युदक्संस्थानि चावत्तानि जुहुयादिति जयन्तः। कुषुम्भको मैत्रावरुणिरगस्त्योऽतृणसूर्या अनुष्टुप् उत्सर्जनप्रधानगृहसिद्धान्नहोमे विनियोगः। 'ॐ कुषुम्भकस्तदब्रवीद्गिरेः प्रवर्तमानकः। वृश्चिकस्यारसं विषमरसं वृश्चिक ते विषं स्वाहा' अतृणसूर्येभ्य इदम्। त्वमग्ने शौनको गृत्समदोऽग्निर्जगती उत्सर्ज-नप्रधानगृहसिद्धान्नहोमे विनियोगः। 'ॐ त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वम-श्मनस्परि। त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः स्वाहा।' अग्नय इदम्। ॐ आवदञ्छौनको गृत्समदः शकुन्तो जगती उत्सर्जनप्रधानगृहसिद्धा-न्नहोमे विनियोगः। 'आवदंस्त्वं शकुने भद्रमावद तूष्णीमासीनः सुमतिं चिकिद्धि नः। यदुत्पतन्वदसि कर्करिर्यथा बृहद्वदेम विदथे सुवीराः स्वाहा' शकुन्तायेदम्। सोमस्य मा गाथिनो विश्वामित्रोऽग्निस्त्रिष्टुप् उत्सर्जन०। 'ॐ सोमस्य मा तवसं वक्ष्यग्ने वह्निं चकर्थ विदथे यजध्यै। देवाँ अच्छादीद्यद्युञ्जे अद्रिं शमाये अग्ने तन्वं जुषस्व स्वाहा' अग्नय इदम्। गृणाना भार्गवो जमदग्निर्मित्रावरुणौ गायत्री उत्सर्जन०। 'ॐ गृणाना जमदग्निना योनावृतस्य सीदतम्। पातं सोममृतावृधा स्वाहा' मित्रावरुणाभ्यामिदम्। त्वां ह्यग्ने गौतमो वामदेवोऽग्निरष्टिः उत्सर्जन०। 'ॐ त्वां ह्यग्ने सदमित्समन्यवो देवासो देवमरतिं न्येरिर इति क्रत्वा न्येरिरे। अमर्त्यं यजत मर्त्येष्वादेवमादेवं जनत प्रचेतसं विश्वमादेवं जनत प्रचेतसं स्वाहा' अग्नय इदम्। धामं ते गौतमो वामदेव आपो जगती उत्सर्जन०। 'धामं ते विश्वं भुवनमधिश्रितमन्तः समुद्रे हृद्यन्तरा-युषि। अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिं स्वाहा। अद्भ्य इदम्। अबोध्यात्रेयो बुधगविष्ठिरावग्निस्त्रिष्टुप् उत्सर्जन०। 'ॐ अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम्। यह्वा इव प्रवयामुज्जिहानाः प्रभानवः सिस्रते नाकमच्छ स्वाहा' अग्नय इदम्। गन्तान आत्रेय एवया मरुन्मरुतोऽतिजगती उत्सर्जन०। 'ॐ गन्तानो यज्ञं यज्ञियाः सुशमि श्रोता हवमरक्ष एवयामरुत्। ज्येष्ठासो न पर्वतासो व्योमनि यूयं तस्य प्रचेतसः स्यात दुर्धर्तवो निदः स्वाहा' मरुद्भ्य इदम्। त्वं ह्यग्ने बार्ह-

स्पत्यो भरद्वाजोऽग्निस्त्रिष्टुप् उत्सर्जन०। 'ॐ त्वं ह्यग्ने प्रथमो मनोतास्याधियो अभवो दस्म होता। त्वं सीं वृषन्नकृणोर्दुष्टरीतुसहो विश्वस्मै सहसे सहध्यै स्वाहा' अग्नय इदम्। यो नस्वो भरद्वाजः पायुर्देवब्रह्माण्यनुष्टुप् उत्सर्जन०। 'ॐ या नस्वो अरणो यश्च निष्ट्यो जिघांसति। देवास्तं सर्वे धूर्वन्तु ब्रह्मवर्ममान्तरं स्वाहा' देवब्रह्मभ्य इदम्। अग्निन्नरो मैत्रावरुणिर्वसिष्ठोऽग्निर्विराट् उत्सर्जन०। 'ॐ अग्निन्नरो दीधितिभिररण्यो हस्तच्युती जनयन्तप्रशस्तम्। दूरे दृशं गृहपतिमथर्युं स्वाहा' अग्नय इदम्। प्रतिचक्ष्व मैत्रावरुणिर्वसिष्ठ इन्द्रासोमावनुष्टुप् उत्सर्जन०। ॐ प्रतिचक्ष्व विचक्ष्वेन्द्रश्च सोम जाग्रतम्। रक्षोभ्यो वधमस्य तमशनिं यातुमद्भ्यः स्वाहा' इन्द्रासोमाभ्यामिदम्। माचित्काण्वः प्रगाथ इन्द्रो बृहती उत्सर्जन०। 'ॐ माचिदन्यद्विशंसतसखायो मारिषण्यत। इन्द्रमित्स्तोता वृषणं स चासुते मुहुरुक्था च शंसत स्वाहा' इन्द्रायेदम्। आग्नेयाहि काण्वः सौभरिरग्निमरुतोऽनुष्टुप् उत्सर्जन०। 'आग्ने याहि मरुत्सखा रुद्रेभिः सोमपीतये। सोभर्या उपसुष्टुतिं मादयस्व स्वर्णरे स्वाहा।' अग्नामरुद्भ्य इदम्। स्वादिष्ठया विश्वामित्रो मधुच्छन्दाः पवमानः सोमो गायत्री उत्सर्जन०। ॐ स्वादिष्ठया मदिष्ठया पवस्व सोमधारया। इन्द्राय पातवे सुतः स्वाहा' पवमानाय सोमायेदम्। यत्ते राजन्मारीचः कश्यपः पवमानः सोमः पङ्क्तिः उत्सर्जन०। ॐ यत्ते राजञ्छृतं हविस्तेन सोमाभिरक्ष नः। अरातीवामानस्तारीन्मोच्नः किं च नाम मदिन्द्रायेन्दो परिस्रव स्वाहा' पवमानाय सोमायेदम्। अग्ने बृहन्वात्यस्त्रितोऽग्निस्त्रिष्टुप् उत्सर्जन०। 'ॐ अग्ने बृहन्नुषसामूर्ध्वो अस्थान्निर्जगन्वान्तमसोज्योतिषागात्। अग्निर्भानुना रुशतास्वङ्ग आजातो विश्वासद्मान्यप्राः स्वाहा' अग्नय इदम्। समानीव आङ्गिरसः संवननः संज्ञानमनुष्टुप् उत्सर्जन०। 'ॐ समानीव आकूतिः समाना हृदयानि वः। समानमस्तु वो मनो यथा वः सुसहासति स्वाहा' संज्ञानायेदम्। स्रुवेणाज्यं दर्व्यामुपस्तीर्य गृहासिद्धान्नमुत्तरभागतो भूयोऽनूचानाभिरेवाङ्गुलीभिरवदाय दर्व्यामोप्य पात्रस्थं हविरभिघार्यावत्तं तु द्विरभिघार्य यदस्य कर्मणो हिरण्यगर्भोऽग्निरतिधृतिः स्विष्टकृद्धोमे विनियोगः। 'ॐ यदस्य कर्मणोत्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टत्स्विष्टकृद्विद्वान्त्सर्वं स्विष्टं सुहुतं करोतु मे। अग्नये स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्धयित्रेसर्वान्नः कामान्त्समर्धय स्वाहा' अग्नये स्विष्टकृते इदम्। रुद्राय पशुपतये स्वाहा पशुपतये रुद्रायेदम्। ततः प्राणायामं कृत्वा पृथ्वीत्यस्य मन्त्रस्य मेरुपृष्ठ ऋषिः कूर्मो देवता सुतलं छन्दः

आसने विनियोगः।'पृथिव्त्वया धृता लोका देवि त्वं विष्णुना धृता। त्वं च धारय मां देवि पवित्रं कुरु चासनम् ।'अपसर्पन्तु वामदेवो भूतान्यनुष्टुप् भूतोत्सादने विनियोगः । 'अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ।' अनेन भूतानुत्साद्य शरावे जलं कुशांश्चाधाय 'विद्युदसि विद्यमे पाप्मानमृतात्सत्यमुपैति' तज्जलमभिमृश्योपस्थे कृते दर्भगर्भब्रह्माञ्जलिं विधाय प्रणवादि स्वदमुच्चार यन्नन्यानप्येवमेवमुपविष्टान्वाचयेत् । प्रणवस्य परब्रह्म ऋषिः परमात्मा देवता देवी गायत्रीछन्दः।व्याहृतीनां परमेष्ठी प्रजापतिःप्रजापतिर्बृहती गायत्र्यागाथिनो विश्वामित्रः सविता गायत्री अग्निमीळ इत्यादीनां छन्दसां विश्वामित्रमधुच्छन्दआदय ऋषयः अग्न्यादयो देवताः गायत्र्यादीनि च्छन्दांसि सर्वेषामुत्सर्जने विनियोगः ।'ॐ भूर्भुवः स्वः,तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। ॐ भूर्भुवः स्वः, तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात् । अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् । अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत । स देवां एह वक्षति । अग्निनारयिमश्नवत्पोषमेव दिवे दिवे । यशसं वीरवत्तमम् । अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि। स इद्देवेषु गच्छति । अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः। देवो देवेभिरागमत् । यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि । तवेत्तत्सत्यमङ्गिरः। उपत्वाग्ने दिवे दिवे।दोषावस्तर्धिया वयम्। नमो भरंत एमसि । राजन्तमध्वराणां गोपामृतस्यदीदिविम् । वर्धमानं स्वेदमे।सनः पितेव सूनवेऽग्ने सूपायनो भव। सचस्वानः स्वस्तये । इषे त्वोर्जे त्वा । अग्न आयाहि वीतये । शन्नो देवीरभिष्टये। अग्निर्वै देवानामवमो विष्णुः परमः।अथ महाव्रतम्।एष पन्था एतत्कर्म। अथातः संहिताया उपनिषत्। विदामघवन्विदा । महाव्रतस्य पञ्चविंशतिं सामिधेन्यः।मयरसतजभनलगसंमितम्।अथैतस्य समाम्नायस्य।पञ्चसंवत्सरमयम् गौःग्मा।समाम्नायः समाम्नातः। अथ शिक्षां प्रवक्ष्यामि।वृद्धिरादैच।यदिन्द्रादोदाशराज्ञे मानुषं व्यगाहथाः।इदं जना उपश्रुता योगीश्वरं याज्ञवल्क्यम्० । नारायणं नमस्कृत्य० ।अथातो धर्मं व्याख्यास्यामः । अथातो धर्मजिज्ञासा । अथातो ब्रह्मजिज्ञासा । तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः ऊर्ध्वं जिगातु भेषजं शन्नो अस्तु द्विपदे शं चतुष्पदे । नमो ब्रह्मणे, नमोऽस्त्वग्नये, नमः पृथिव्यै, नम ओषधीभ्यः, नमो वाचे, नमो वाचस्पतये, नमो विष्णवे महते करोमि । इमामृचं त्रिः पठेत् ।

अङ्गंनोअपिवातयमन्नः । ॐ शान्तिःशान्तिःशान्तिः।वृष्टिरसि वृश्चमे पाप्मानमृतात्सत्य-मुपागाम् ।' ततः सर्वे उत्सृष्टा वै वेदाः इत्युक्त्वा अञ्जलिस्थान्कुशानाचार्याय दद्युः । आचार्यः स्रुवेण प्रायश्चित्ताज्याहुतीर्जुहुयात् । तत्र मन्त्राः । अयाश्चविमदोऽग्या अग्निः पङ्क्तिः प्रायश्चित्ताज्यहोमे विनियोगः । ' ॐ अयाश्चाग्नेस्यनभिशस्तीश्च सत्य-मित्त्वमया असि । अयासा वयसा कृतोयासन्हव्यमूहिषेया नो धेहि भेषजं स्वाहा अयसेऽग्नये इदम् । अतो देवा इति द्वयोः काण्वो मेधातिथिः ऋषिः पूर्वा दैव्युत्तरा वैष्णवी गायत्री छन्दः प्रायश्चित्ताज्यहोमे विनियोगः ।' ॐ अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्तधामभिः स्वाहा' देवेभ्य इदम् । 'ॐ इदं विष्णुर्वि-चक्रमे त्रेधा निदधे पदम् । समूळ्हमस्यपांसुरे स्वाहा' विष्णव इदम्।व्यस्तसमस्तव्या-हृतीनां जमदग्निभरद्वाजभृगुप्रजापतय ऋषयः अग्निवायुसूर्यप्रजापतयो देवताः दैवी-गायत्रीदैव्युष्णिग्दैवीबृहत्यश्छन्दांसि प्रायश्चित्ता० ॐ भूः स्वाहा अग्नय इदम्।ॐभुवः स्वाहा वायव इदम् ॐ स्वः स्वाहा सूर्यायेदम् ॐ भूर्भुवः स्वः स्वाहा प्रजापतय इदम् । यद्वो देवा अभितपा मरुतस्त्रिष्टुप् मन्त्रतन्त्रविपर्यासादिनिमित्तकप्रायश्चित्ता०।'यद्वो देवा अतिपातयानि वाचा च प्रयुतीदेवहेळनम् । अरायो अस्मां अभिदुच्छुनायतेन्यत्रास्म न्मरुतस्तन्निधेतनस्वाहा।' मरुद्भ्य इदम् । अनाज्ञातमिति द्वयोर्हिरण्यगर्भोऽग्निस्त्रिष्टुप् ज्ञाताज्ञातदोषनिवर्हणार्थे प्रायश्चित्ता० ।'ॐअनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु। अग्ने तदस्य कल्पय त्वꣳहि वेत्थ यथातथम् स्वाहा' अग्नयेइदम् । यत्पाकत्रास्यत्रि-तोग्निस्त्रिष्टुप् प्राय० । 'ॐ यत्पाकत्रामनसादीनदक्षा न यज्ञस्य मन्वते मर्त्ताः। अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवाँ ऋतुशो यजाति स्वाहा' अग्नय इदम् । तत आचार्यः प्रणीतापात्रमास्तीर्णबर्हिषि दक्षिणपाणिना निधाय तत्र गङ्गादिपुण्यनदीः स्मृत्वा दक्षिणपाणिना स्पृशन् 'ॐ पूर्णमासि पूर्णं मे भूयाः सुपूर्णमसि सुपूर्णं मे भूयाः सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः, अक्षितिरसि मा मेक्षेष्ठाः' इति जपित्वा कुशाग्रैः प्राच्यादिपञ्चदिक्षु प्रादक्षिण्यक्रमेण उदकमुदुक्षेत् । प्राच्यां दिशि देवा ऋत्वि-जो मार्जयन्तां, दक्षिणस्यां दिशि मासाः पितरो मार्जयन्तां, प्रतीच्यां दिशि ग्रहाः पशवो मार्जयन्ताम्, उदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्ताम्, ऊर्ध्वायां दिशि यज्ञः संवत्सरः प्रजापतिर्मार्जयतां मार्जयन्तामिति वा । स्वशिरसि कुशाग्रैरभि-षिञ्चेदेतैर्मन्त्रैः।आपोअस्मान्देवश्रवा आपस्त्रिष्टुप् मार्जने विनियोगः।'आपो अस्मान्मा-तरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु । विश्वं हिरिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचि-

रापूत एमि ।' इदमापः सिन्धुद्वीप आपोऽनुष्टुप् मार्जने विनियोगः । 'इदमापः प्रवहत यत्किंचिद्दुरितं मयि । यद्वाहमभिदुद्रोह यद्वाशेप उतानृतम् । सुमित्र्या न आप ओषधयःसन्तु । दुर्मित्र्यास्तस्मैसन्तु योऽस्मान्द्वेष्टि यं च वयंद्विष्मः' इति । तत आचार्यः स्ववामकरे प्रणीतापात्रं 'माहंप्रजांपरासिचं या नः स यावरी स्थ न : समुद्रे वो निनयानि स्वं पाथो अपीथा' इत्येकश्रुत्या पठन्प्रत्यङ्कुसमवाङ्निनीय तज्जलेनाध्याप्यान्मार्जयेत् । विश्वानिन इति त्र्यृचेनाग्नेरुत्तरपूजनोत्थाने कुर्यात् । मा नःस्तोक आङ्गिरसः कुत्सो रुद्रो जगती विभूतिग्रहणे विनियोगः । 'ॐमा नः स्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्रभामितो वधीर्हविष्मन्तः सदमित्त्वा हवामहे' इति स्रुवबिलपृष्ठेन विभूतिं गृहीत्वाॐ त्र्यायुषं जमदग्नेरिति ललाटे कश्यपस्य त्र्यायुषं कण्ठे, अगस्त्यस्य त्र्यायुषं नाभौ, यद्देवानां त्र्यायुषं दक्षिणांसे तन्मे अस्तु त्र्यायुषं वामांसे शतायुषं शिरसि धारयेत् । तत आचार्योऽग्नेर्वायव्यदेशे स्थितः 'ॐ च मे स्वरश्च मे यज्ञोपचते नमः । यत्ते न्यूनं तस्मै न उप यत्तेतिरिक्तं तस्मै ते नमः ।' 'स्वस्ति श्रद्धां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम् । आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन' इति पूर्ववत्परिसमुह्य पर्युक्षेत । 'गच्छ गच्छ सुरश्रेष्ठ स्वस्थानं परमेश्वर । यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन । इत्यग्निं विसृज्य 'यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम् । इष्टकामसमृद्ध्यर्थं पुनरागमनाय च ।' तत उदकतीरं गत्वा शरीरशुद्ध्यर्थमुत्सर्जनाङ्गत्वेन सर्वैः सह स्नानानि कुर्यात् । तद्यथा । प्राणानायम्य देशकालौ स्मृत्वा उत्सर्जनाङ्गत्वेन गणस्नानमहं करिष्ये, इति संकल्प्य स्नात्वाचम्य उत्सर्जनाङ्गत्वेनभस्मगोमयमृत्स्नानानिकरिष्ये । भस्मादाय । ईशानाय नम इति शिरसि । तत्पुरुषाय नम इतिमुखे । अघोराय नमइति हृदये । वामदेवायनमइतिगुह्ये । सद्योजाताय नम इति पादयोः । प्रणवेन सर्वाङ्गे । यद्वा अग्निरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वं हवा इदं भस्म मानस्तोके इति सर्वाङ्गे विलिप्य स्नात्वाचम्य 'गन्धद्वारां दुराधर्षांनित्यपुष्टांकरीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् । अनेन गोमयमादाय । 'अग्रमग्रं चरन्तीनामोषधीनां वने वने । तासामृषभपत्नीनां पवित्रं कायशोधनम् । तन्मे रोगांश्च शोकांश्च नुद गोमय सर्वदा ।' इति शिरःप्रभृत्यङ्गानि विलिप्य स्नात्वाचम्य बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि । प्रयाभूमिं प्रवत्वतिमह्नाजिनोषि महिनि' इति भूमिं प्रार्थ्य 'मावोरिषत्खनिता यस्मै चाहं खनामि वः । द्विपच्चतुष्पदस्माकं सर्वमस्त्वनातुरम् ।' इति खनित्वा । 'स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छानः

शर्म सप्रथः' इति मृदमादाय। 'आयनेतेपरायणे दूर्वारोहन्तु पुष्पिणीः। ह्रदाश्च पुण्डरीकाणि समुद्रस्य गृहा इमे' इति दूर्वामादाय, गायत्र्या सर्वां मृदमभ्युक्ष्य भूमौ निधाय 'त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सुहवं शूरमिन्द्रम्। ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः' इति पूर्वतः। 'यमाय मधुमत्तमं राज्ञे हव्यं जुहोत न। इदं नम ऋषिभ्य पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः' इति दक्षिणतः। 'तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेळमानो वरुणेह बोध्युरुशंसमान आयुः प्रमोषीः' पश्चिमतः। 'वयं सोम व्रते तव मनस्तनूषुबिभ्रतः। प्रजावन्तः स चेमहि।' इत्युत्तरतः। 'तत्सूर्यं रोदसी उभे दोषावस्तोरुपब्रुवे। भोजेष्वस्माँ अभ्युच्चरा सदा' इत्युपरिष्टात्। 'अधःपश्यस्व मो परि संतरां पादकौ हर। मा ते कशप्लकौ दृशन्स्त्री हि ब्रह्मा बभूविथ।' इत्यधो मृदं क्षिप्त्वाङ्गेषु मृदं लिम्पेत् 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम्।' इति शिरसि। 'अक्षिभ्यां ते नासिकाभ्यां कर्णाभ्यां चुबुकादधि। यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वा या विवृहामि ते' इति मुखे। 'ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात्। यक्ष्मं दोषण्यश्मंसाभ्यां बाहुभ्यां विवृहामि ते' इति ग्रीवायाम्। 'आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोर्हृदयादधि। यक्ष्मं मतस्नाभ्यां यक्नःप्लाशिभ्यो विवृहामि ते' इति हृदये। 'नाभानाभिं न आददे चक्षुश्चित्सूर्ये स चा। कवेरपत्यमादुहे' इति नाभौ। 'त्वमिन्द्र सजोषसमर्कं बिभर्षि बाह्वोः। वज्रं शिशान ओजसा।' इति बाह्वोः। 'सोमानं स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तं यं औशिजः' इति कक्षयोः। 'यः कुक्षिः सोमपातमः समुद्र इव चिन्वते। उर्वीरापो न काकुदः' इति कुक्ष्योः। 'बह्वीनां पिताबहुरस्यपुत्रश्चिश्चा कृणोति समनावगत्या। इषुधिः सङ्काःपृतनाश्चसर्वाः पृष्ठे निनद्धो जयति प्रसूतः' इति पृष्ठे। 'ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम्। यक्ष्मं श्रोणिभ्यां भासदाद्भंससो विवृहामि ते' इत्यूर्वोः। 'मेहनाद्वलं करणाल्लोमभ्यस्ते नखेभ्यः। यक्ष्मं सर्वस्मादात्मनस्तमिदं विवृहामि ते' इति जान्वोः। 'एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः। पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि' इति पादयोः। 'अङ्गादङ्गाल्लोम्नो लोम्नो जातं पर्वणि पर्वणि। यक्ष्मं सर्वस्मादात्मनस्तमिदं विवृहामि ते' इति पुरुषसूक्तेन च सर्वाङ्गे। 'अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुंधरे। शिरसा धारयिष्यामि रक्षस्व मां पदे पदे।' इति तिलदूर्वामृदं शिरसि निधाय मृत्तिकास्थानं प्रक्षाल्य ' हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः। यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः। यन्मे मनसा वाचा कर्मणा वा

दुष्कृतं कृतम् । तन्न इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तु पुनः पुनः । इमं मे गङ्गे यमुने सरस्वति शुतुद्रिस्तोमं सचतापरुष्ण्या । असिक्न्या मरुद्वृधे वितस्तयार्जिकीये शृणु ह्यासुषोमया । इदं तेन्याङ्गिरसमानमद्भिर्याः काश्च सिन्धुं प्रवहन्ति नद्यः। सर्पा जीर्णामिव त्वचं जहाति शापं सशिरस्कोऽभ्युपेत्य ।' 'गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति' । 'सुमित्र्या न आप ओषधयः सन्तु दुर्मित्र्यास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः । समुद्रज्येष्ठाः सलिलस्य मध्यात्पुनाना यन्त्यनिविशमानाः । इन्द्रो या वज्री वृषभो रराद ता आपो देवीरिह मामवन्तु । या आपो दिव्या उत वा स्रवन्ति खनित्रिमा उत वा याः स्वयं जाः । समुद्रार्था याः शुचयः पावकास्ता आपो देवीरिह मामवन्तु । यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यं जनानाम् । मधुश्चुतः शुचयो याः पावकास्ता० । यासु राजा वरुणो यासु सोमो विश्वेदेवा यासूर्जं मदन्ति । वैश्वानरो यास्वग्निः प्रविष्टस्ता० । एतो न्विन्द्रंस्तवाम शुद्धं शुद्धेन साम्ना । शुद्धैरुक्थैर्वावृध्वांसः शुद्ध आशीर्वान्ममत्तु । इन्द्रः शुद्धो न आगहि शुद्धः शुद्धाभिरूतिभिः । शुद्धो रयिं निधारय शुद्धो ममद्धि सोम्यः । इन्द्र शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुषे । शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजं सिषासति । तरत्समंदीधावति धारासुतस्यान्धसः । तरत्समंदीधावति । उस्रा वेदवसूनां मर्त्तस्य देव्यवसः । तरत्० । ध्वस्रयोः पुरुषन्त्योरासहस्राणि दद्महे । तरत्० । आययोस्त्रिंशतं तनासहस्राणि च दद्महे । तरत्० । त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोमधामभिः । अग्ने दक्षैः पुनीहि नः । पुनन्तुमांदेवजनाः पुनन्तु वसवो धिया । विश्वे देवाः पुनीत मा जातवेदः पुनीहि मा । प्रप्यायस्व प्रस्यन्दस्व सोमविश्वेभिरंशुभिः।देवेभ्य उत्तमं हविः । उपप्रियं पनिमतं युवानमाहुतीवृधम् । अगन्म बिभ्रतो नमः । अलाय्यस्य परशुर्ननाश तं मा पवस्व देव सोम । आखुंचिदेव देव सोम । यः पावमानीरध्येत्यृषिभिः संभृतं रसम् । सर्वं सपूतमश्नाति स्वदितं मातरिश्वना । पावमानीर्यो अध्येत्यृषिभिः संभृतं रसम् । तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकम् । पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतः। ऋषिभिः सम्भृतो रसो ब्राह्मणेष्वमृतं हितम् । पावमानीर्दिशन्तु न इमं लोकमथो अमुम् । कामान् समर्धयन्तु नो देवीर्देवैः समाहिताः । येन देवाः पवित्रेणात्मानं पुनते सदा । तेन सहस्रधारेण पावमान्यः पुनन्तु मा । प्राजापत्यं पवित्रं शतोद्यामं हिरण्मयम् । तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे । इन्द्रः सुनीति सह मा पुनातु सोमः स्वस्त्या वरुणः समीच्या । यमो राजा प्रमृणाभिः पुनातु मा जातवेदा मूर्जयन्त्या

पुनातु ।' आपो हिष्ठेति तिसृभिर्मार्जयित्वा इमं मे गङ्गे इत्युदकमालोड्य ऋतं चेति त्र्यृचेनाघमर्षणं कृत्वा प्रवाहाभिमुखस्त्रिर्मार्जयित्वाचम्य स्नानाङ्ग-तर्पणं कुर्यात् । तद्यथा । ब्रह्मादयो देवास्तान्देवांस्तर्पयामि । भूर्देवांस्तर्पयामि, भुवर्देवांस्तर्पयामि, स्वर्देवांस्तर्पयामि, भूर्भुवः स्वर्देवांस्तर्पयामि । कृष्णद्वैपायना-दयो ये ऋषयस्तानृषींस्तर्पयामि, भूर्ऋषींस्तर्पयामि, भुवर्ऋषींस्तर्पयामि, स्वर्ऋषींस्तर्प-यामि। भूर्भुवःस्वर्ऋषींस्तर्पयामि। सोमःपितृमान्यमोऽङ्गिरस्वानग्निष्वात्ताः कव्यवाहनादयो ये पितरस्तान्पितॄंस्तर्पयामि, भूःपितॄंस्तर्पयामि, भुवः पितॄंस्तर्पयामि, स्वःपितॄंस्त-र्पयामि, भूर्भुवः स्वःपितॄंस्तर्पयामि । 'अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम । भूमौ दत्तेन तोयेन तृप्ता यान्तु परां गतिम् ।' इति जलाञ्जलिं तटे निक्षिप्य 'यन्मया दूषितं तोयं शारीरमलसंचयात् । तद्दोषपरिहारार्थं यक्ष्मणं तर्पयाम्यहम् ' यक्ष्म-तर्पणं कृत्वा ऋषीन्पूजयेत् । तच्चेत्थम् । आचम्य प्राणानायम्य देशकालौ संकीर्त्य ऋषीन्पूजयिष्ये इति संकल्प्य ' कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः । जमदग्निर्वसिष्ठश्च सप्तैते ऋषयः स्मृताः ।' अरुन्धतीसहितान्सप्त ऋषीनावाहयामि । तदस्तु मित्रावरुणा० । गृहा वै प्रतिष्ठा० । अरुन्धतीसहितेभ्यः सप्तऋषिभ्यो नमः । आवाहनं, आसनं, पाद्यम्, अर्घ्यम्, आचमनीयं, स्नानीयं, पुनराचमनं, वस्त्रं, आचमनं, यज्ञोपवीतम्, आचमनं, गन्धं, पुष्पाणि, धूपं, दीपं, नैवेद्यं, आचमनं, फलं, ताम्बूलं, दक्षिणाम् । अरुन्धतीसहितेभ्यः सप्तऋषिभ्यो नमः मन्त्रपुष्पा-ञ्जलिं समर्पयामि । मन्त्रहीनं क्रियाहीनं० आवाहनं न जानामीति च क्षमाप्य ततः सावित्र्यादींस्तर्पयेत् । सावित्रीं तर्पयामि, ब्रह्माणं तर्पयामि, श्रद्धां तर्पयामि, मेधां तर्पयामि, धारणां तर्पयामि, सदसस्पतिं तर्पयामि, अनुमतिं तर्पयामि, छन्दांस्यृषींस्तर्पयामि, अग्निं तर्पयामि, अघ्रणसूर्यांस्तर्पयामि, अग्निं तर्पयामि, शकुन्तं तर्पयामि, अग्निं तर्पयामि, मित्रावरुणौ तर्पयामि, अग्निं तर्पयामि, अपस्तर्पयामि, अग्निं तर्पयामि, मरुतस्तर्पयामि, अग्निं तर्पयामि, देवब्रह्माणि तर्पयामि, अग्निं तर्पयामि, इन्द्रासोमौ तर्पयामि, इन्द्रं तर्पयामि, अग्नामरुतस्तर्पयामि, पवमानं सोमं तर्पयामि, सोमं तर्पयामि, अग्निं तर्पयामि, संज्ञानं तर्पयामि । 'ब्रह्मयज्ञाङ्गमुक्तं यत्तर्पणं स्या-दिहापि तत्' इति कारिकोक्तेः । प्रजापतिस्तृप्यतु, ब्रह्मा तृप्यतु, देवास्तृप्यन्तु, ऋष-यस्तृप्यन्तु, सर्वाणि च्छन्दांसि तृप्यन्तु, ओंकारस्तृप्यतु, वषट्कारस्तृप्यतु, व्याहृत-यस्तृप्यन्तु, सावित्री तृप्यतु, यज्ञास्तृप्यन्तु, द्यावापृथिवी तृप्यताम्, अन्तरिक्षं तृप्यतु

अहोरात्राणि तृप्यन्तु, सांख्यास्तृप्यन्तु, सिद्धास्तृप्यन्तु, समुद्रास्तृप्यन्तु, नद्यस्तृप्यन्तु, गिरयस्तृप्यन्तु क्षेत्रौषधिवनस्पतिगन्धर्वाप्सरसस्तृप्यन्तु, नागास्तृप्यन्तु, वयांसि तृप्यन्तु,गावस्तृप्यन्तु, साध्यास्तृप्यन्तु,विप्रास्तृप्यन्तु, यक्षास्तृप्यन्तु, रक्षांसि तृप्यन्तु, भूतानि तृप्यन्तु,एवमन्तानि तृप्यन्तु। अथ ऋषयः । निवीती। शतर्चिनस्तृप्यन्तु,माध्यमास्तृप्यन्तु,गृत्समदस्तृप्यतु, विश्वामित्रस्तृप्यतु,वामदेवस्तृप्यतु, भरद्वाजस्तृप्यतु,वसिष्ठस्तृप्यतु, प्रगाथास्तृप्यंतु,पावमान्यस्तृप्यन्तु, क्षुद्रसूक्तास्तृप्यन्तु, महासूक्तास्तृप्यन्तु । प्राचीनावीती । अत्र जीवत्पितृकस्यापसव्ये विशेषमाह— 'अपसव्यं द्विजाग्र्याणां पित्र्ये सर्वत्र कीर्तितम्। आप्रकोष्ठात्प्रकर्तव्यं मातापित्रोस्तु जीवतोः' इति शिष्टाचारात् । सुमन्तुजैमिनिवैशम्पायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्यास्तृप्यन्तु, जानन्तिबाहविगार्ग्यगौतमशाकल्यबाभ्रव्यमाण्डव्यमाण्डूकेयास्तृप्यन्तु, गार्गीवाचक्नवी तृप्यतु, वडवाप्रातीथेयीतृ० सुलभामैत्रेयी तृ०कहोळं तर्पयामि, कौषीतकं तर्पयामि, महाकौषीतकं तर्पयामि, पैङ्ग्यं तर्पयामि, महापैङ्ग्यं तर्पयामि, सुयज्ञं तर्पयामि, सांख्यायनं तर्पयामि, ऐतरेयं तर्पयामि, महैतरेयं तर्पयामि, शाकलं तर्पयामि, बाष्कलं तर्पयामि, सुजातवक्त्रं तर्प०औदवाहिं तर्पयामि, महौदवाहिं तर्पयामि, सौजामिं तर्पयामि, शौनकं तर्पया० आश्वलायनं तर्पयामि, ये चान्ये आचार्यास्ते सर्वे तृप्यन्त्विति । अत्र कारिका । 'त्रिंशद्भिरेकेनोनैस्तु द्वादशैश्च तथा भवेत् । त्रयोविंशतिवाक्यैस्तु देवर्षींश्च पितॄन्क्रमात् ।' अस्मत्पितरममुकगोत्रममुकशर्माणं वसुरूपं स्वधा नमस्तर्पयामि । एवं पितामहं प्रपितामहम् । मात्रादीन् पितामहादीन् सपत्नीकान् सपत्नीसुतादीन् पितृव्यं मातुलं भ्रातरं पितृष्वसारं मातृष्वसारमात्मस्वसारं यथायोग्यं सपत्नीकान्सधवाःसतनयांश्च श्वशुरगुरूंश्च तर्पयेत्।'आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः।तृप्यन्तु पितरः सर्वे मातृमातामहादयः। अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् । आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् । ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः।ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम्।' इत्युत्तरीयं तटे निष्पीड्य सव्येन वा यमादींस्तर्पयेत् । यमं तर्पयामि, धर्मराजं तर्पयामि, मृत्युं तर्पयामि, अंतकं त०, वैवस्वतं त०, कालं त०, सर्वभूतक्षयं त०, औदुम्बरं त०, दध्नं त०, नीलं त०, परमेष्ठिनं त०, वृकोदरं त०, चित्रं त०, चित्रगुप्तं त० । ततः 'यमो निहन्ता पितृधर्मराजो वैवस्वतो दण्डधरश्च कालः । भूताधिपो दत्तकृतानुसारी कृतान्तमेतद्दशभिर्जपन्ति' इति दशवारं जपेत् । ततःशान्त्यर्थम्

आनो भद्रा० १० शन्न इन्द्राग्नी०१५ त्यमूषुवा० ३ महित्रीणां ३ सुवृष्टयर्थं तिस्रो वाचः पर्जन्यायप्र० ३ अच्छावद० १० बळित्था पर्वतानां० ३ प्रदेवत्राब्राह्मणे० १५ बृहस्पते प्रतिमे० १२ एतानि पर्जन्यस्तुतिसूक्तानि ऋषयो वै सरस्वत्यां सत्र-मासतेति ब्राह्मणखण्डद्वयं च वैदिकाः पठन्ति। ततो वेदप्रीत्यर्थं ब्राह्मणान्भोजयेत्। 'विश्वेत्ताते सवनेषु प्रवाच्या या चकर्थ मघवन्निन्द्र सुन्वते । परावतं यत्पुरुसंभृतं वस्वपावृणोः शरभाय ऋषिबन्धवे' इति ऋषीञ्जले उद्वासयेत्। इत्युत्सर्जनप्रयोगः।

अथोपाकर्मप्रयोगः। सर्वोत्सर्जनवज्ज्ञेयः। विशेषो लिख्यते। नूतनब्रह्मचारिणा उपाकर्मार्थतया नूतनकटिसूत्राद्युपकल्पनम्। स्वस्तिपुण्याहवाचनं नान्दीश्राद्धं च कार्यम्। तादृशब्रह्मचार्यभावे तूपकल्पनमात्रं कृत्वा आचम्य प्राणानायम्य देशकालौ संकीर्त्य अधीतानामध्येष्यमाणानां छन्दसां यातयामनिरासेनाप्यायनद्वारा श्रीपरमेश्वरप्रीत्यर्थमेभिर्ब्राह्मणैः सहोपाकर्म करिष्ये।अन्वाधाने क्रियमाणे उपाकर्महोमे दे० गृहसिद्धान्नस्थाने दधिसक्तुद्रव्येण शेषेण स्विष्टकृतमग्निमिध्मसन्नहनेन रुद्रं यज्ञोपवीतेन परमात्मानमयासः० इध्मसंनहनहोमानन्तरं दधिसक्तुप्राशनं यज्ञोपवीतहोमदानधारणानि च, दधिक्राव्णो वामदेवो दधिक्रावानुष्टुप् दधिसक्तुप्राशने विनियोगः 'ॐ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभि नो मुखाकरत्प्रण आयूंषि तारिषत्' इति मन्त्रेण प्राङ्मुखाः प्रत्येकं दधिसक्तून्प्राश्याचामेयुः। अग्नेः पश्चादङ्ग-धारणया एकैकः प्राङ्मुख उपविश्य मार्जनं च कुर्यात्। 'कृत्वा यज्ञोपवीतानि नवानि वसुधाधिप। हुत्वाऽग्नौ गुरवे दत्त्वा पितृभ्यो धारयेत्ततः' इति गालववचनात्। वेदारम्भे ऋष्यादिस्मरणान्ते सर्वेषामुपाकरणे विनियोगः। अन्ते उपाकृता वै वेदा इत्युक्त्वा अञ्जलिस्थान्कुशान्दक्षिणकटौ निवेश्याप उपस्पृशेयुः। 'वेदारम्भणतः पूर्वं सक्तुप्राशनतः परम्। नवयज्ञोपवीतानि दद्याद्वै धारयेत्ततः' इति कार्ष्णाजिनिवचनात्। पितृभ्य इत्यस्यापि दत्त्वेत्यनेनान्वयः। होमधारणे च यज्ञोपवीतमिति मन्त्रेण यज्ञोपवीतं परब्रह्मपरमात्मा त्रिष्टुप् यज्ञोपवीतहोमे विनियोगः।'यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्। आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः स्वाहा परमात्मन इदम्। ब्रह्मचारी नूतनमेखलादि धारयेत्। 'अजिनं कटिसूत्र च नववस्त्रं तथैव च' इति कालादर्शोदाहृतवचनात्। एषां धारणे क्रमो मन्त्रप्रकारश्चोपनयनवद्बोध्यः। अन्यदुत्सर्जनेन समानम्। इत्युपाकर्मप्रयोगः।

अथात्र कश्चनोपयुक्तः शास्त्रार्थो लिख्यते।वृत्तिकृन्मते उत्सर्जनप्रकरणस्य देवताग्रहणेना-

ग्न्यादीनां सावित्र्यादिभिः सह तेनोक्तत्वात्। जयन्तमते सावित्र्यादीनां प्रधानदेवतात्वेन न संकल्पः। अत्राज्यशेषास्विष्टकृतेनावदधाति सावित्र्यादिनामंगत्वादिति तदुक्तेः। अत्र कारिकाः--'आज्यसंस्कारपर्यन्तमुपलेपादि पूर्ववत्। आज्येन दधिसक्तूनां त्रिःपर्यग्निकरणं भवेत्। उत्पूतमात्रमाज्यं चेत्तेषां त्रिःप्रोक्षणं भवेत्। इध्माभिधारणान्तं स्यादाज्यस्योद्वासनादिकम्। अन्वारम्भोऽधुना शिष्यैः स्वयमेव न सन्ति चेत्। प्रकुर्वीताज्यभागान्तमिध्माधानादि पूर्ववत्। इहाज्यभागौ नित्यौ स्तस्तथैवोत्सर्जनेऽपि तौ। हुत्वाज्यं नवभिर्मन्त्रैः सावित्र्याद्यैरतः परम्। हुत्वा च दानधर्मेण तान्सक्तून्दधिसंयुतान्। हुत्वाग्निमीळ इत्याद्यैर्मन्त्रैर्विंशतिभिः क्रमात्। शाकलानां समानीव इत्यृचान्त्याहुतिर्भवेत्। बाष्कलानां तु तच्छंयोरित्यृचान्त्याहुतिर्भवेत्।' यो नः स्व इति मन्त्रे देवब्रह्म देवता इति संप्रदायः। देवानां ब्रह्मणश्च देवतात्वमिति तु युक्तम्। अस्या ऋचो देवा ब्रह्म च देवतेति भाष्यकृताभिधानात्। ब्रह्ममन्त्रः। स मे आन्तरं शराणां निवारकं कर्म विद्यत इति व्याख्यानदशायामपि भाष्यकृतैव कर्मणो ब्रह्मगतगुणाभिधेयित्वेन स्वातन्त्र्यनिराकरणाच्च। एवं च ऋष्यादिस्मरणकालेऽपि देवब्रह्माण्यनुष्टुबित्येव पठितुमुचितम्। त्यागश्च देवब्रह्मभ्य इदमिति। पञ्चावत्तिसत्त्वे द्विरवदाय तथैव दधिसक्तून्सकृद्द्विर्वावदाय द्विरभिधारयेद्वृत्तिकृन्मते। जयन्तमते तु नाज्यावदानम्। ततो विशेषः कारिकायाम्--'अथ स्विष्टकृतं हुत्वा दधिसक्तुभिरेव च। दधिसक्तून्स्वयं शिष्याः प्राश्याचम्य ततः परम्। परिस्तरणदर्भैस्तैरन्तर्दधति चाञ्जलीन्। अन्येन सेचयित्वापस्ताभिः कुर्वीत मार्जनम्।' इति। वेदारम्भे कारिकाः--'पश्चादग्रेषु दर्भेषु प्रागग्रेषूपविश्य च। आसिच्यापः शरावादौ दर्भांस्तत्र निधाय च। प्रागग्रदर्भगर्भास्ते कुर्युर्ब्रह्माञ्जलीनथ। सव्याहृतिं वदन्त्युच्चैः सावित्रीं ब्रह्मयज्ञवत्। त्रिरभ्यसेत्पुरोंकारं व्याहृतीश्चात्र कर्मणि। अग्निमीळे इदं सूक्तमनुवाकं यथाविधि। प्रारम्भैरनृचं वापि त्वध्यायाद्वाचयेद्गुरुः। प्रायश्चित्तादिसकलं होमशेषं समापयेत्।' उत्सर्जनस्नानीयाः कारिकाः--'उपतीरमपां गत्वाऽन्तेऽवगाह्य ततो जलम्। सावित्र्याद्यास्तथाऽन्याश्च देवतास्तर्पयन्ति च। सावित्रीं तर्पयाम्यग्निं तर्पयामीति तर्पयेत्। जयन्तस्त्वग्निमीळादिमन्त्रैस्तर्पणमब्रवीत्। ब्रह्मयज्ञाङ्गमुक्तं यत्तर्पणं स्यादिहापि च।' इति। अवगाह्येत्यनेन भस्मगोमयमृत्स्नानानि शास्त्रान्तरसिद्धानि विहितानीति शिष्टव्यवहारः। अत एव विवाहादूर्ध्वकाले प्रसिद्धस्य 'पिण्डनं च मृदास्नानं न

कुर्यात्तिलतर्पणम्' इत्यादिनिषेधस्य नात्र प्रवृत्तिः। न चात्र नदीनां रजोदोषप्रसक्तिः 'उपाकर्मणि चोत्सर्गे रजोदोषो न विद्यते' इति गार्ग्यवचनात्। 'वेदाश्छन्दांसि सर्वाणि ब्रह्माद्याश्च दिवौकसः। जलार्थिनोऽथ पितरो मरीच्याद्या महर्षयः। उपाकर्मणि चोत्सर्गे स्नानार्थं ब्रह्मवादिनः। पिपासूननुगच्छन्ति संहृष्टाः स्वशरीरिणः। समागमस्तु यत्रैषां तत्र हन्यादपां मलान्। नूनं सर्वे क्षयं यान्ति किमुतैकं नदीरजः' इति छन्दोगपरिशिष्टाच्च। स्नानानन्तरं च ऋषिपूजातर्पणे कार्ये। 'उपाकर्मणि चोत्सर्गे यथाकालं समेत्य च। ऋषीन्दर्भमयान्कृत्वा पूजयेत्तर्पयेत्ततः।' इति स्मृतिचन्द्रिकोदाहृतवचनात्। तत्रत्यजलोपस्पर्शनपानाभ्यामुदयप्राप्तिः। 'ऋषीणां सिच्यमानानामन्तरालं समाश्रितः। संपिबेद्यः शरीरेण स्पृशन्मुक्तजलच्छटाः। विद्यादीन्ब्राह्मणः कामान्वरादीन्कन्यकास्तथा। आमुष्मिकान्यपि सुखान्याप्नुयात्स न संशयः।' इति छन्दोगपरिशिष्टात्। ततः प्रकृतदेवतातर्पणं यज्ञाङ्गतर्पणं स्वपित्रादितर्पणं च कार्यम्। ततो यमतर्पणं कुर्यादिति शिष्टाः। बाष्कलानां तु तच्छंयोःशंयुर्विश्वेदेवाः शक्करी उ०। ॐ तच्छंयो० चतुष्पदे स्वाहा विश्वेभ्यो देवेभ्य इदम्। इत्युपाकर्मोत्सर्जनप्रयोगः।

अत्रैव प्रसङ्गादुत्सर्जनकालो निर्णीयते। तत्र याज्ञवल्क्यः– 'पौषमासस्य रोहिण्यामष्टकायामथापि वा। जलान्ते छन्दसां कुर्यादुत्सर्गं नगराद्बहिः।' पौषमासस्य रोहिण्यां कृष्णाष्टम्यां वा जलसंनिधौ ग्रामाद्बहिर्वेदानामुत्सर्जनं कुर्यादित्यर्थः। अनयोः पक्षयोः स्वस्वगृह्यानुसारेण व्यवस्था। मनुः–'पुष्ये तु छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः। माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि।' व्यवस्थितश्चायं विकल्पः। 'श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि। युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान्।' इति तेनैवोक्तत्वात्। तेन श्रावण्यां यदोपाकर्म तदा पौषशुक्लप्रतिपदि उत्सर्जनं कार्यम्। यदा प्रौष्ठपद्यां तदा माघशुक्लप्रतिपदि कार्यमित्यर्थः। यत्तु हारीतः–अर्धपञ्चममासानधीत्योर्ध्वमुत्सृजेत्पञ्चार्धषष्ठान्वेति, तदाषाढ्युपाकर्मविषयम्। यत्तु कात्यायनः–'उपाकृत्योदगयने ततोऽधीयीत धर्मवित्। उत्सर्गश्चैक एवैषां तैष्यां प्रौष्ठपदेऽपि वा।' इति। तत्सामगविषयम्। 'अत्र प्रौष्ठपदपदं सिंहोपलक्षकम्। सिंहे रवाविति गार्ग्यवचनात्। बौधायनीयास्तु पौष्यां माघ्यां वा कुर्युः, 'श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य पौष्यां माघ्यां वोत्सृजेत्' इति तत्सूत्रात्। तैत्तिरीयैस्तु तैष्यां कार्यम्। 'पौष्यां पौर्णमास्यां रोहिण्यां वा विरमेत्।' इति तत्सूत्रात्। बह्वृचैस्तु माघ्यां कार्य्यम्। 'अध्यायोत्सर्जनं माघ्यां पौर्णमास्यां विधीयते' इति

कारिकोक्तेः— मध्यमाष्टकायामिताभ्यो देवताभ्योऽन्नेन हुत्वाऽपोऽभ्यर्चयन्ति एता एव देवतास्तर्पयन्ति आचार्यानृषीन् पितॄंश्चैतदुत्सर्जनमित्याश्वलायनसूत्राच्च । व्याख्यातं चैतद्वृत्तिकारेण । मध्यमाष्टकाग्रहणं षण्मासान्तलक्षणार्थं, तेन तस्याः समीपे माघ्यां पौर्णमास्यामित्यर्थ इति । कातीयास्तु भाद्रपदे कुर्युः । 'उत्सर्गश्चेत्तदा तिष्यतिथ्यन्ते प्रौष्ठपदे वा' इति कात्यायनोक्तेः । अत्र कातीयसूत्रम् 'अर्धषष्ठान्मासानधीत्योत्सृजेयुरर्धसप्तमान्वा' इति । तथा पौषस्य रोहिण्यां मध्यमायां वाऽष्टकायामध्यायानुत्सृजेयुरिति । तत्र हरिहरः पौषे उत्सर्जनकर्तव्यतामभिधायाह— ततस्त्रिरात्रानन्तरं शुक्लपक्षेषु छन्दांस्यधीयीरन्, कृष्णपक्षेष्वङ्गानि, ततः पुनरर्धषष्ठानर्धसप्तमान्वा मासानधीत्यैवमेवोत्सर्गं विधाय त्रिरात्रमेकरात्रं वाऽवस्थाय यथेष्टं विप्रतिष्ठेरन्, "ततःपुनरुपाकृत्य अध्ययनं यावदुत्सर्गम्" इति । अनेनोत्सर्गद्वयं कातीयानां कर्तव्यमिति प्रतीयते । अपरे तु—एकस्यैवोत्सर्गस्य कालचतुष्टयं मन्यन्ते नोत्सर्गद्वयमिति । अत्र द्वितीयमतमेव सूत्रस्वरसानुसारीति प्रतीयते । सामगास्तु सिंहार्के पुष्ये कुर्युः । सिंहे रवौ त्विति पूर्वोक्तगार्ग्यवचनात् । सर्वैरुपाकर्मदिने वा कार्यम् । 'पुष्ये तूत्सर्जनं कुर्यादुपाकर्मदिनेऽथ वा' इति हेमाद्रौ खादिरगृह्योक्तेः । "स्वाध्यायमधीतेऽब्दम्" इति श्रुतेश्च । यत्तु तिथ्यर्के, इदानींतनैराश्वलायनैरप्ययमेवोत्सर्जनकाल आद्रियते तत्र मूलं न जाने इत्युक्तम् । तद्भ्राति विजृम्भितम् । 'पुष्ये तूत्सर्जनं कुर्यादुपाकर्मदिनेऽथ वा' इति स्वयमेव खादिरगृह्यस्य मूलत्वेनोक्तत्वात् । न च गृह्यसूत्राणां तत्तच्छाखीयान्प्रत्येव व्यवस्थितप्रामाण्यकत्वमिति वाच्यम् । अविरोधिनोऽनुकल्पत्वेन परशाखीयस्यापि ग्राह्यत्वात् । यदा सिंहस्थे सूर्ये सति तन्मध्यस्थहस्तनक्षत्रात्प्राक्पुष्यः कर्कस्थो भवति तदा तस्मिन्पुष्ये उत्सर्गं कृत्वा तदुत्तरहस्ते उपाकर्म सामगाः कुर्युः । 'मासे प्रौष्ठपदे हस्तात्पुष्यः पूर्वो भवेद्यदा । तदा च श्रावणे कुर्यादुत्सर्गं छन्दसां द्विजः ।' इति परिशिष्टोक्तेः । अत्र प्रौष्ठपदश्रावणशब्दौ मीनादिसौरमासाभिप्रायेण । छन्दोगानामुत्सर्जनोपाकर्मणोः सौरमास एव विधानात् । एतच्च कर्मद्वयं प्रत्यब्दं कार्यम् । तदुक्तं हेमाद्रौ कात्यायनेन— 'प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद्द्विजैः । क्रियते छन्दसां तेन पुनराप्यायनं भवेत् । अयातयामैश्छन्दोभिर्यत्कर्म क्रियते द्विजैः । क्रीडमानैरपि सदा तत्तेषां सिद्धिकारकम् ।' इति । अत्र द्विजैरिति त्रयाणामाश्रमिणां त्रयाणामिव वर्णानामधिकारसिद्धिः । यत्तु मासान्विप्रोऽर्धपञ्चमानित्युदाहृतशास्त्रे विप्रग्रहणं, तद्ब्राह्मणस्यैव सतोऽधिकारः क्षत्रियवैश्ययोस्तद-

न्वारम्भमात्रमेवेति ज्ञापनार्थम् । 'अध्येष्यमाणोऽध्याप्यैरन्वारब्धः" इत्याश्वलायनसूत्रे अध्यापकपदेनाध्येष्यमाणपदेन अध्यापनाधिकृतब्राह्मणस्यैव स्वतन्त्राधिकारप्रतीतेरिति । उत्सर्जनोत्तरं कार्यं मनुराह— 'अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत् । वेदाङ्गानि तु सर्वाणि कृष्णपक्षेषु संपठेत् ।' कारिकायां तु विशेषः— 'अत आरभ्य षण्मासान्षडङ्गानि त्वधीयते।शुक्ले वेदमधीयीत कृष्णेऽङ्गानीति केचन।' इति । अत्र नदीनां दोषो नास्तीत्याह वसिष्ठः—'उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च । चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते।' इति । गार्ग्योऽपि—' उपाकर्मणि चोत्सर्गे रजोदोषो न विद्यते' इति । उपाकर्मोत्सर्जनानन्तरं त्रिरात्रं पक्षिणीमहोरात्रं वा अध्ययनं न कार्यम् । तदुक्तं निर्णयसिन्धौ मिताक्षरायाम्—उपाकर्मण्युत्सर्गे च त्रिरात्रं पक्षिणीमहोरात्रं वाऽनध्याय इति । एतच्च कर्म " अध्येष्यमाणोऽध्याप्यैरन्वारब्धः " इति सूत्रात्सशिष्यत्वे तदधिकारिकस्य कर्मण आचार्याग्नौ, नान्यस्याग्नावन्यो जुहुयादिति निषेधात् ' कर्मद्वयमिदं केचिल्लौकिकाग्नौ प्रकुर्वीत ' इति कारिकोक्तेश्च लौकिकाग्नावेव कर्तव्यम् । तदभावे तु ' अध्यायोपाकृतिं कुर्यात्तत्रौपासनवह्निना ' इति वचनात् । स्मार्त इति निगर्वः । इत्युत्सर्जनम् ।

अस्यामेवाश्वलायनैः श्रवणाकर्म कार्यम् । " श्रावण्यां पौर्णमास्यां श्रवणाकर्म " इति सूत्रात् । सामवेदिनामप्यत्रैव श्रवणाकर्म सर्पबलिश्च । ' अथातः श्रवणाकर्म पौर्णमास्याम् ' इत्यादिना श्रवणाकर्म विधाय " अहरहस्तूष्णीं बलिं हरेत्सायं प्राग्घोमादाग्रहायण्याः " इति तदीयगृह्यसूत्रात् । अत्र पौर्णमासीसामान्योक्तावपि गृह्यान्तरवशेन पौर्णमासीविशेषे तदुपसंहारसंभवः । कातीयसूत्रेऽपि—'अथातःश्रवणाकर्म श्रावण्यां पौर्णमास्यां श्रवणाकर्म।' इत्युक्त्वा तदन्ते सर्पबलिरप्युक्तः । अस्यामेव रात्रौ तैत्तिरीयैः सर्पबलिः कार्यः । "श्रावण्यां पौर्णमास्यां स्थालीपाकः" इति सूत्रात् । अस्मिन्कर्मद्वये प्रदोषव्यापिनी पौर्णमासी ग्राह्या । 'अस्तमये स्थालीपाकं श्रपयित्वा' इति अस्तमयकालविधानात् । 'कर्मणो यस्य यः कालः'इति वचनात् । याज्ञिकास्तु पौर्णमासीशब्दस्य पर्वान्त्यक्षणवचनत्वात्पर्वसंधिदिवसे रात्रौ श्रवणाकर्मानुष्ठानं वदन्ति।अस्यच श्रवणाकर्मणो मुख्यकाले दैवादकरणे लोपः । मुख्यकालेऽपि सकृदेव करणमिति केचित् । यथोक्तमेतत्तुल्यन्यायाष्टकाप्रकरणे कर्केण सकृत्करणं चाभ्यासस्य श्रवणादिति । अन्ये त्वीदृशपाकयज्ञानां प्रत्यब्दमावृत्तिं मन्यन्ते । उक्तं हि रेणुकाकारिकायाम्— 'अथातः श्रवणाकर्म शास्त्रदृष्ट्या मयोच्यते। श्रावण्यामेव तत्कार्यमभावाद्गौणकालतः । वचना-

त्सूत्रकारस्य सकृदस्य क्रिया भवेत् । एवमेवेतरेषां स्यादावृत्तिर्वा स्मृतेर्बलात् । सकृत्करणमिच्छन्ति पाकयज्ञेषु केचन । आवृत्तिं केचिदिच्छन्ति तत्रावृत्तिः सतां मता ।' इति।अस्यामेव हयग्रीवपूजोक्ता कल्पतरौ ब्राह्मे—'श्रावण्यां श्रवणे जातः पूर्वं हयशिरा हरिः । जगाद सामवेदं तु सर्वकल्मषनाशनम् । सिन्धुर्नन्दावितस्तायां प्रविष्टा तत्रैव हि । अतोऽत्र श्रवणे तत्र स्नानं सर्वार्थसिद्धिदम् । कृत्वा संपूजयेद्विष्णुं शंखचक्रगदाधरम् । श्रोतव्यान्यथ चास्त्राणि पूज्या विप्राश्च सर्वदा । क्रीडितव्यं च भोक्तव्यं तत्रैव स्वजनैः सह । जलक्रीडा तु कर्तव्या नारीभिर्भर्तृलब्धये ।' इति । अत्र सर्वदेवानां पवित्रारोपणमुक्तं निर्णयामृते मत्स्यपुराणे—'आषाढ्यामथ वाऽष्टम्यां चतुर्दश्यामुमापतिम् । पवित्रैरर्चयेद्भाभ्यां श्रावण्यां चेतरान्सुरान् ।' इति । अस्यामेव पौर्णमास्यां देवीपुराणोक्तं जयाव्रतम् । हेमाद्रौ—अगस्त्य उवाच—'ब्रह्मणा यो विधिः शक्रे कथितो विजयावहः । जयेति पूर्णिमा तात श्रावणस्य शुभावहा ।' इत्यादि । अत्र यवाङ्कुरादियुक्तायां वेद्यां देवीं संस्थाप्य रोचनाचन्दनचन्द्रैरुपलिप्य पुष्पादिभिः संपूज्य यवगोधूममुद्गशालिषाष्टिकाढकीतिलमाषादीन्बिल्वदाडिमादीनि फलानि च निवेदयेत् । इति जयापूर्णिमाव्रतम् । इति श्रावणीकृत्यानि ।

अथ भाद्रपदीकृत्यानि । अस्यां सुवासिन्या नार्या भर्तुरायुरभिवृद्धये सावित्रीव्रतं कार्यम् । वीरमित्रोदये भविष्ये—युधिष्ठिर उवाच—'स्मरामि च हृषीकेश यच्चोक्तं भवता मम । तत्सावित्रीव्रतं ब्रूहि प्रसीद सुमुखो भव ।' कृष्ण उवाच—'कथयामि कुलस्त्रीणां महिम्नो वर्धनंपरम् । यथा चीर्णं व्रतं पूर्णं सावित्र्या राजकन्यया । आसीन्मद्रेषु धर्मात्मा सर्वभूतहिते रतः । पार्थिवोऽश्वपतिर्नाम पौरजानपदप्रियः । सर्वेश्वरोऽनपत्यश्च सत्यवाक्संयतेन्द्रियः । स सभार्यो व्रतमिदं चचारापत्यकाम्यया । सावित्रीति प्रसिद्धं यत्सर्वकामप्रदायकम् । तस्य तुष्टा तु सा देवी सावित्री ब्रह्मणः प्रिया । भूर्भुवः स्वरिति स्तुत्या साक्षान्मूर्तिरिह स्थिता । कमण्डलुकरा देवी वरदा स्मितभाषिणी । उवाच दुहिता ह्येका तव राजन्भविष्यति । तस्याः प्रसादादप्येतत्तव सर्वं समागतम् । मन्नाम्ना सा च वक्तव्या महाकीर्तिमती तु सा । भविष्यति महाराज मा शोकं कर्तुमर्हसि । एवमुक्त्वा तु सावित्री जगामादर्शनं तदा । कालेनागच्छता जाता दुहिता देवरूपिणी । सावित्र्या प्रीतया दत्ता सावित्र्या जपया तथा । आदिष्टा चैव सावित्र्या सावित्रीसदृशी यतः । सावित्रीत्येव नामास्याश्चक्रुर्विप्रा-

१—तत्र संगमे ।

स्तथा पिता । सा श्रीमद्विग्रहवती व्यवर्धत पितुर्गृहे । काले बहुतिथे याते यौवनस्था बभूव सा । तां सुमध्यां तु सुश्रोणीं प्रतिमां काञ्चनीमिव । प्राप्तेयं देवकन्येति दृष्ट्वा संमेनिरे जनाः । सा तु पद्मपलाशाक्षी प्रज्वलन्तीव तेजसा । चचार सापि सावित्री व्रतं यद्भृगुणोदितम् । अथोपोष्य शिरः स्नात्वा सम्यक्संपूज्य देवताः । हुत्वाग्निं विधिवद्विप्रान्वाचयित्वेन्दुपर्वणि । तेभ्यः सुमनसो मूर्ध्ना प्रतिगृह्य नृपात्मजा । सखीपरिवृताऽभ्येत्य देवी श्रीरिव रूपिणी । साऽभिवाद्य पितुः पादौ विनीता चारुहासिनी । कृताञ्जलिर्वरारोहा नृपतेः पार्श्वतः स्थिता । तां दृष्ट्वा यौवनप्राप्तां स्वां सुतां देवरूपिणीम् । उवाच राजा संमन्त्र्य स्मृत्यर्थं सह मन्त्रिभिः । पुत्रि प्रदानकालस्ते न च कश्चिद्वृणोति माम् । विचारयन्न पश्यामि वरं तुल्यमिहात्मनः । तथापि देयासि मया दोषः स्यादन्यथा मम । पठ्यमानं मया पुत्रि धर्मशास्त्रेषु च स्मृतम् । पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता । ब्रह्महत्या पितुस्तस्याः सा कन्या वृषली स्मृता । अतोऽर्थं प्रेषयामि त्वां कुरु पुत्रि स्वयंवरम् । वृद्धैरमात्यैः सहिता शीघ्रं गच्छस्व मा चिरम् । वेदादीनां यथा वाच्यो न भवेयं तथा कुरु । एवमस्त्विति सावित्री प्रोक्ता शीघ्रं विनिर्ययौ । स्यन्दनेन महार्हेण मन्त्रिभिः परिवारिता । तपोवनानि रम्याणि राजर्षीणां जगाम सा । मान्यानां तत्र वृद्धानां कृत्वा पादाभिवन्दनम् । ततो बभ्राम तीर्थानि पर्वतानां वनानि च । देशांश्च विविधान्रम्यानाश्रमान्सुमनोहरान् । एकस्मिन्नाश्रमपदे कृतकृत्या बभूव सा । वरयित्वा वरं सा तु आजगाम स्वमालयम् । सावित्री मन्त्रिसहिता परितुष्टेन चेतसा । तत्रापश्यत देवर्षिं नारदं पितुरन्तिके । आसीनमासनं विप्रं प्रणम्य स्मितभाषिणी । कथयामास तत्सर्वं प्रेम्णाऽरण्यं गता सती ।' सावित्र्युवाच—'आसीच्छाल्वेषु धर्मात्मा क्षत्रियः पृथिवीपतिः । द्युमत्सेन इति ख्यातो दैवादन्धो बभूव सः । तस्य चाप्यभवद्भार्या रुक्मिणी रूपशालिनी । तस्य प्रतिहतं राज्यं वैरिभिर्दैवयोगतः । स बालया तया सार्धं भार्यया प्रस्थितो वनम् । स तस्य वनसंवृद्धः पुत्रः परमधार्मिकः । सत्यवान्नाम रूपाढ्यो भर्तेति मनसा वृतः ।' नारद उवाच—'अहो कष्टमहो कष्टं सावित्रि किमिदं कृतम् । वृतस्ते बालभावाद्यद्गुणवान्सत्यवान्नृपः । सत्यं वदत्यसौ राजा सत्यवांस्तेन संस्मृतः । नित्यमश्वाः प्रियास्तस्य करोत्यश्वान्स मृण्मयान् । चित्रेऽपि च लिखत्यश्वांश्चित्राश्वस्तेन उच्यते । किं वर्ण्यो रन्तिदेवस्य शक्त्या दानगुणैः समः । ब्रह्मण्यः सत्यवाग्दक्षः शिबिरौशीनरो यथा । ययातिरिव चोदारः सोमवत्प्रियदर्शनः ।

अश्विनाविव रूपेण द्युमत्सेनसुतो बली । एको दोषोऽस्ति नान्योऽस्य अद्यप्रभृति सत्यवान् । संवत्सरेण क्षीणायुर्देहत्यागं करिष्यति ।' श्रीकृष्ण उवाच— 'नारदादेतदाकर्ण्य दुहितामाह पार्थिवः । पुत्रि सावित्रि गच्छान्यं वरं वरय सत्पतिम् । संवत्सरेण सोऽल्पायुर्देहत्यागं करिष्यति ।' सावित्र्युवाच— 'सकृज्जल्पन्ति राजानः सकृज्जल्पन्ति पण्डिताः । सकृत्प्रदीयते कन्या त्रीण्येतानि सकृत्सकृत् । दीर्घायुर्वाथ स्वल्पायुः सगुणो निर्गुणोऽपि वा । सकृद्वृतो मया भर्ता न द्वितीयं वृणोम्यहम् । मनसा निश्चयं कृत्वा ततो वाचाभिधीयते । क्रियते कर्मणा पश्चादेष धर्मः सनातनः ।' नारद उवाच— 'यद्येतदिष्टं दुहितुस्ततः शीघ्रं विधीयताम् । अविघ्नमस्तु सावित्रि दिष्टं भद्रं करिष्यति ।' श्रीकृष्ण उवाच । 'एवमुक्त्वा समुत्पत्य नारदस्त्रिदिवं ययौ । उत्पाद्य दुःखमतुलं तस्य राज्ञो युधिष्ठिर । राजापि दुःखसंविग्नश्चिरं ध्यानपरोऽभवत् । अहोतिकष्टमुत्पन्नमपारं मादृगात्मनाम् । एतद्दुःखमहो दृष्ट्वा वरमेवानपत्यता ।' सत्यमुक्तं पुराणज्ञैः कन्या दुःखैकभाजनम् । देव्या यदुक्तं तत्सर्वं व्यलीकं प्रतिभाति मे । एवं संशोच्य बहुधा दधारात्मानमात्मना । देवीं संस्मृत्य सावित्रीं यया दत्तो वरः पुरा । राजा स्वदुहितुः सर्वं वैवाहिकमथाकरोत् । स्वयं गत्वा तु सामग्र्या वनं मुनिनिषेवितम् । शुभे मुहूर्ते पार्श्वस्थैर्ब्राह्मणैर्वेदपारगैः । समर्पयित्वा कन्यां तां दत्त्वा दायांश्च पुष्कलान् । उवाचेदं महाभागं व्यवस्थेनान्तरात्मना । द्युमत्सेन महाभाग शृणु मे परमं वचः । इयं मे दुहिता तावद्वल्लभा जीवितादपि । भर्ता समुचितो ह्यस्याः सत्यवान्सत्यवल्लभः । त्वमप्यस्याः समुचितः श्वशुरो धर्मवत्सलः । अतोऽपराधाः क्षन्तव्या बालेयं राजबालिका । यदभीष्टं च जामातुर्युवयोर्यदभीप्सितम् । तत्तदास्थेयमस्माकं स्वस्ति तेऽस्तु व्रजाम्यहम् ।' श्रीकृष्ण उवाच— 'इत्यामन्त्र्य गतो राजा नारदोक्तेर्व्यथान्वितः । सावित्र्यपि च तं लब्ध्वा भर्तारं मनसेप्सितम् । मुमुदेऽतीव तन्वङ्गी दिवमाप्येव पुण्यकृत् । एवं तत्राश्रमे तेषां तदा निवसतां सताम् । कालस्तत्पश्यतां कश्चिदतिचक्राम भारत । सावित्र्यास्तु शयानायाश्चिन्तयित्वा दिवानिशम् । नारदेन यदुक्तं तद्धृदयान्नापसर्पति । ततः काले बहुतिथे व्यतिक्रान्ते कदाचन । प्रातःकाले हि मर्तव्यं यत्र सत्यवता नृप । प्रौष्ठपदे सिते पक्षे द्वादश्यां रजनीमुखे । गणयन्त्याश्च सावित्र्या नारदोक्तं वचो हृदि । चतुर्थेऽहनि मर्तव्यमिति संचिन्त्य भामिनी । व्रतं त्रिरात्रमुद्दिश्य सावित्र्याख्यं महाफलम् । उपोष्य संस्थिता साध्वी सावित्री सा पतिव्रता । ततस्त्रिरात्रं निर्वर्त्य स्नात्वा संतर्प्य देवताः । श्वश्रूश्व-

शुरयोः पादौ ववन्दे चारुहासिनी । अथप्रतस्थेपरशुं गृहीत्वा सत्यवान्वनम् । सावित्र्यपि च भर्तारं गच्छन्तं पृष्ठतोऽन्वगात् । वार्यमाणापि सा भर्त्रा वृद्धाभ्यां चापि भाषिता । उवाच श्वश्रूर्मा भद्रे गच्छ कण्टकितं वनम् । सुकुमारासि कल्याणि पालिता पृथिवीभृता । अपदार्हा पदैर्यातुं कथं शक्ष्यसि तद्वनम् । उपवासात्त्रयस्तेऽद्य तस्माद्भुंक्ष्व सुमध्यमे ।' सावित्र्युवाच— 'नैष धर्मो वरस्त्रीणां यद्भर्तरि बुभुक्षिते । स्वयमेव च भोक्तव्यमित्याहुर्धर्मदर्शिनः । अपरं कौतुकं मेऽस्ति वनस्याद्य प्रदर्शने । भर्त्रा सहाद्य यास्यामि सहायास्यामि नो चिरम् । युष्मत्पादप्रसादेन मा निषेधं करिष्यथ । ततो ज्ञात्वा च सा बाला जगामाथ पतिव्रता । सावित्र्यनुपदं भर्तुर्वने तस्मिन्मनोरमे । गत्वाऽसौ दूरमध्वानं जग्राहाथ फलादिकम् । समित्कुशं च कुसुमं भार्यया संवदन्प्रियम् । काष्ठं कुठारेण तथा पाटयामास लीलया । अथ पाटयतस्तस्य जाता शिरसि वेदना । ततः संवृत्य तत्सर्वं वटच्छायामुपाश्रितः । सत्यवान्वेदनाक्रान्तः किंचिद्घूर्णितमानसः । वटशाखामवष्टभ्य सत्यवान्प्राह गद्गदम् । सावित्रि पश्य शिरसि वेदना मां प्रबाधते । न च किंचित्प्रपश्यामि भ्रमतीव हि मे मनः । तवोत्सङ्गे क्षणंतावत्स्वप्तुमिच्छामि सुन्दरि । विश्रमस्व महाबाहो सावित्री प्राह दुःखिता । पश्चादपि गमिष्यामो ह्याश्रमं सुमुखोदयम् । यावदुत्सङ्गमं कृत्वा शिर आस्ते महीतले । तावत्करालवदनाः शतशोऽथ सहस्रशः । आजग्मुर्यमदूताश्च रौद्राश्चातिभयंकराः । न शेकुर्दृष्टिपातात्ते सावित्र्याः स्थातुमन्तिके । गत्वाचचक्षुस्तत्सर्वं सावित्र्यास्तु यमं द्रुतम् । दृष्टिपातेन नास्माभिः शक्यतेऽस्याः प्रबाधितुम् । दहतीव च नो देहं दृष्टिपातेन सा सती । तत्स्वयं याहि नाऽस्माभिः साध्यते सत्यवान्क्वचित् । इत्याकर्ण्य यमः कोपादुत्थायाथ वरासनात् । आरुह्य महिषं रौद्रं रौद्रः प्राणहरो बली । आजगाम त्वरायुक्तो यत्रास्ते सा पतिव्रता । सावित्र्यपि च संतप्ता वीक्ष्यमाणा इतस्ततः । सावधाना कथं कोऽयं भर्तारं मम नेष्यति । तावद्ददर्श सा बाला पुरुषं कृष्णपिङ्गलम् । किरीटिनं पीतवस्त्रं साक्षात्सूर्यमिवोदितम् । तमुवाचाथ सावित्री प्रणम्य मधुराक्षरम् । कस्त्वं देवोऽथ दैत्यो वा मां धर्षयितुमागतः । न चाहं केनचिच्छक्या स्वधर्मादेव रोचितुम् । द्रष्टुं वा पुरुषश्रेष्ठ दीप्तां वह्निशिखामिव ।' यम उवाच— 'यमः संयमनश्चाहं सर्वभूतभयंकरः । क्षीणायुरेष ते भर्ता संनिधौ ते पतिव्रते । न शक्यः किंकरैर्नेतुं ततोऽहं स्वयमागतः । शरीरात्पाशसंयुक्तं पृथग्भूतं महाद्युतिम् । अङ्गुष्ठमात्रं पुरुषं निचकर्ष यमो बलात् । अथ प्रयातुमारेभे पन्थानं पितृसेवितम् । सावित्र्यपि वरा-

रोहा कृत्वा पादेन मण्डलम् । रक्षार्थं भर्तृकायस्य ययावनुपदं ततः । पतिव्रता तदा श्रान्ता ध्यायमाना निजं पतिम् । तच्चित्ता तद्गतप्राणा तामुवाच यमस्तदा । निवर्त्य गच्छ सावित्रि सुदूरं त्वमिहागता । एष मार्गो विशालाक्षि न केनाप्यनुगम्यते।सावि-त्र्युवाच—'न श्रमो न च मे ग्लानिः कदाचिदपि जायते । भर्तारमनुगच्छन्त्या-स्तव शिष्टस्य संनिधौ । सतां सन्तो गतिर्नान्या स्त्रीणां भर्ता सदा गतिः । वेदो वर्णा-श्रमाणां च शिष्याणां च गतिर्गुरुः । सर्वेषामेव जन्तूनां स्थानमस्ति महीतले । मुक्त्वा भर्तारमेकं तु स्त्रीणांनान्यःसमाश्रयः । एभिरन्यैःसमुचितैर्वाक्यैर्धर्मार्थसंयुतैः । तोषितो धर्मराजस्तु सावित्रीमिदमब्रवीत् । तुष्टोऽस्मि तव भद्रेऽथ वरान्वरय सुव्रते ।' सा च वव्रे वरान्पञ्च विनयावनता सती । चक्षुःप्राप्तिं तथा राज्यं श्वशुरस्य महात्मनः । जीवितं च तथा भर्तुर्धर्मसिद्धिं च शाश्वतीम् । पितुः पुत्रशतं चैव तथा च शतमा-त्मनः । धर्मराजो वरान्दत्त्वा प्रेषयामास तां ततः । आजगामाथ सा तन्वी न्यग्रो-धविटपं तदा । कृत्वोत्सङ्गे शिरस्तस्य पूर्ववन्निषसाद सा । गात्रसंवाहनं चक्रे भर्तुः श्रान्तस्य भारत । उत्थितश्चेतनां प्राप्य नीरुक्प्राहेदमादरात् । कथं न बोधितो भद्रे कालोऽतीवगतोमम । किं मां वक्ष्यति मे तातः किं च माता सुदुःखिता । विरुद्धं ह्यद्य संजातं कालोऽतीव गतो वने । विहाय मातापितरौ कालो न क्वापि मेऽत्यगात् । इति मत्वा विरुद्धं ते कृतं नेह प्रबोधनम् ।' सावित्र्युवाच—'कथं त्वां बोधयाम्यत्र पीडितं तु शिरोरुजा । ममैवात्र विलम्बोऽभूदकार्येण तवानघ । प्रहस्योत्थाय सावित्री जग्राह शिरसेन्धनम् । समित्कुशादिकं सोऽथ जग्मतुस्तौ स्वमाश्रमम् । ततः पित्रा स्वनेत्राभ्यां दृष्टौ तौ परया मुदा । आलिङ्ग्य मूर्ध्न्युपाघ्राय पुत्रमेकं निवे-श्य सः । उवाच दिष्ट्या पश्यामि सभार्यं त्वां समागतम् । विलम्बकारणं पृष्टः समाचष्टे यथातथम् । विदितार्थोऽतिसंहृष्टः पूजयामास तां सतीम् । अथ वा पूर्वजै-र्भुक्तं राज्यं निहतकण्टकम् । द्युमत्सेनो महाभाग इयाज क्रतुभिस्तदा । ततोऽश्वप-तिरासाद्य पुत्रानात्मगुणाधिकान् । सावित्र्याश्चेष्टितं ज्ञात्वा जामातुर्जीवितं तथा । राज्यप्राप्तिं च विपुलां परां मुदमवाप सः । सावित्र्याख्यानकमिदं सर्वपापप्रणाशनम् । अवैधव्यप्रदं स्त्रीणां स्वर्गमोक्षप्रदायकम् । सुखसौभाग्यदं पार्थ प्रातर्जप्यमिदं सदा । भाद्रपदे पूर्णिमायामाशु चीर्णं व्रतं त्विदम् । माहात्म्यमस्य नृपते कथितं सकलं मया ।' युधिष्ठिर उवाच—'कीदृशं तद्व्रतं कृष्ण सावित्र्या यदनुष्ठितम् । तस्मि-न्भाद्रपदे मासि विधानं तस्य शंस मे । का देवता व्रते तस्मिन्को मन्त्रः किं फलं

विभो । एतदाख्याहि मे नाथ न हि तृप्यामि माधव ।' श्रीकृष्ण उवाच—'श्रूयतां पाण्डवश्रेष्ठ सावित्रीव्रतमादरात् । कथयामि यथा चीर्णं तया सत्यं युधिष्ठिर । त्रयोदश्यां भाद्रपदे दन्तधावनपूर्वकम् । त्रिरात्रनियमं कुर्यादुपवासस्य भक्तितः । अशक्ता च त्रयोदश्यां नक्तं कुर्याज्जितेन्द्रिया । अयाचितं चतुर्दश्यां पौर्णमास्यामुपोषणम् । नित्यं स्नात्वा महानद्यां तडागे निर्झरेऽपि वा । विशेषतः पौर्णमास्यां स्नानं सर्षपमृज्जलैः । गृहीत्वा वालुकां पात्रे प्रस्थमात्रां युधिष्ठिर । अथ वा धान्यमादाय यवशालितिलादिकम् । ततो वंशमये पात्रे वस्त्रयुग्मेन वेष्टिते । सावित्रीप्रतिमां कृत्वा ब्रह्मणश्चैव शोभनाम् । सौवर्णीं मृण्मयीं वापि स्वशक्त्या रौप्यनिर्मिताम् ।' ब्रह्मरूपनिर्माणं तु विष्णुधर्मोत्तरेऽभिहितम् । 'पद्मपत्रासनस्थश्च ब्रह्मा कार्यश्चतुर्मुखः । पुस्तकं च स्रुवं तद्वदक्षमालां कमण्डलुम् । सावित्री तस्य कर्तव्या वामोत्सङ्गगता तथा । आदित्यवर्णा धर्मज्ञा साक्षसूत्रकरा तथा । रक्तवस्त्रयुगं दद्यात्सावित्र्या ब्रह्मणः सितम् । सावित्रीं ब्रह्मणा सार्धमेवं भक्त्या प्रपूजयेत् । गन्धैः पुष्पैश्च नैवेद्यैर्दीपकैर्मोदकैः शुभैः । पूर्णकोशातकैः पक्वैः कूष्माण्डैः कर्कटीफलैः । नारिकेलैः सखर्जूरैः कपित्थैर्दाडिमैस्तथा । बीजपूरैःसनारिङ्गैः शाखोटैःपनसैस्तथा । धान्याकैर्जीरकैर्हृद्यैर्गुडेन लवणेन च । विरूढैः सप्तधान्यैश्च वंशपात्रप्रकल्पितैः । हारिद्रया कण्ठसूत्रैः शुभ्रैःकुङ्कुमकेसरैः । अवतारंकरोत्येवंसावित्रीब्रह्मणःप्रिया । तामर्चयीतमन्त्रेण सावित्रीं ब्राह्मणी स्वयम् । इतरासां तथा स्त्रीणां पुराणोक्तो विधिः स्मृतः । ॐकारपूर्विके देवि वीणापुस्तकधारिणि । वेदमातर्नमस्तुभ्यमवैधव्यं प्रयच्छ मे । रूपं देहि जयं देहि सौभाग्यं देहि देवि मे । यथा प्रसन्ना सावित्र्यास्तथा मां पाहि पावनि । एवं संपूज्य विधिवज्जागरं तत्र कारयेत् । गीतवादित्रनिर्घोषैर्हृष्टनारीकदम्बकैः । पुण्याख्यानैश्च विविधैस्तां रात्रिमतिवाहयेत् । उत्सवेन नयेद्रात्रिं सावित्र्याश्च कथानकैः । ततःप्रभातसमये रवावनुदिते सति । सावित्रीं ब्रह्मणः श्रेष्ठे[२] सनैवेद्यां निवेदयेत् । अथ सावित्रिकल्पज्ञे सावित्र्याख्यानवाचके । वेदज्ञे तु स्ववृत्तिस्थे दरिद्रे वा कुटुम्बिनि । मन्त्रेणानेन कौन्तेय प्रणम्य विधिपूर्वकम् । सावित्रीयं मया दत्ता सहिरण्या हिरण्मयी । ब्रह्मणः प्रीणनार्थाय ब्राह्मण प्रतिगृह्यताम् । एवं दत्त्वा द्विजेन्द्राय सावित्रीं तां युधिष्ठिर । नैवेद्यादि च तत्सर्वं ब्राह्मणस्य गृहे नयेत् । स्वयं दशपदं गच्छेत्स्ववेश्म तत आविशेत् । गौरिणीर्भोजयेद्भक्त्या हविष्यान्नेन शक्तितः । पुष्पैः कुङ्कुमसिन्दूरै-

---

१—अवतारमवस्थितिम् । २—ब्राह्मणोत्तमे इत्यर्थः ।

स्तालकैः कण्ठसूत्रकैः । वासोभिर्भूषणैः शक्त्या वित्तशाठ्यविवर्जिता । तथा भुक्त्वा हविष्यान्नं ब्राह्मणैर्बहुभिः सह । विसर्जयेत्ततस्तांश्च सावित्री प्रीयतामिति । वक्तव्यं ब्राह्मणैः सर्वैस्तुष्टैर्भुक्त्वोत्तरे भृशम् । सावित्रीवरदा तुभ्यं भवेच्च तव सुव्रते । पुत्रा अष्टौ तथा भर्ता परमायुरनामयः । पुत्रपौत्रैश्च संबद्धं वर्धतां तव सत्कुलम् । व्रतं च सुव्रतं तद्वद्विधिनाऽनेन निश्चितम् ।' इति भविष्योत्तरोक्तं ब्रह्मसावित्रीव्रतम् । अत्रैव लोकपालपूजां कुर्यात् । तदुक्तं निर्णयामृते ब्रह्मपुराणे--'पूर्वभाद्रपदायोगे पौर्णमास्यां पितामहः । शक्राग्नियमरमात्रम्भोवायुवित्तेशशंकरान् । लोकपालांस्तु रक्षार्थं त्रैलोक्यस्याभ्यषेचयत् । पृथिव्या धारणार्थाय तथाऽनन्तं च भोगिनम् । तस्मात्तत्र लिखेत्पद्ममष्टपत्रं सकर्णिकम् । कर्णिकायां लिखेत्तत्र सानन्तं कमलोद्भवम् । प्राच्यादिषु च पत्रेषु वासवाद्यांश्च सायुधान् । ततः क्रमेण तेनैव संस्थाप्य कलशाञ्छुभान् । पश्चात्संपूजनीयाश्च भक्त्या ब्रह्मादयः सुराः ।' इति । अस्यामेव प्रपितामहादींस्त्रीनुद्दिश्य श्राद्धं कार्यम् । तदुक्तं हेमाद्रौ ब्राह्मे--'नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ । पौर्णमास्यां तु कर्तव्यं वराहवचनं यथा ।' इति । नान्दीमुखत्वं चोक्तं ब्राह्मे--'पिता पितामहश्चैव तथैव प्रपितामहः । त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्तिताः । तेभ्यः परतरा ये च प्रजावन्तः सुखैधिताः । ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते ।' एतच्च प्रत्यब्दमित्युक्तेः पक्षश्राद्धं पक्षे सकृन्महालयपक्षे चावश्यं कार्यमिति । प्रयोगपारिजाते--नित्यत्वाच्च यस्मिन्वर्षे भाद्रपद्याः कन्यार्कयोगाभावस्तदाश्वयुज्यां कन्यार्कयुक्तायां कार्यम् । हेमाद्रिस्तूक्तस्य पौर्णमासीपदस्य भाद्रपद्युपलक्षणत्वस्यायुक्तत्वादिति कृत्यरत्नावल्याम् । इदं च श्राद्धमेकपार्वणकं देवतान्तराविधानादिति मयूखकारादयः । पार्वणद्वयं कार्यम् । 'पितरो यत्र पूज्यन्ते तत्र मातामहा अपि' इति धौम्यवाक्यात् । पितृशब्दस्य च जनकपरत्वे बहुवचनविरोधेन पितृभावापन्नपरत्वात् । इति दीक्षितनिर्णयसिन्धुकारादयः । न चास्मिन्पक्षे आब्दिकेऽपि पार्वणद्वयापत्तिरिति वाच्यम् । वचनान्तरेण निषेधोक्तेः । न च जीवत्पितृकस्यान्वष्टकायां मातृश्राद्धे तदापत्तिः । इष्टापत्तेः । अत एवोक्तश्राद्धेषु स्वमातृमातामह्योर्दद्यादिति मदनरत्ने कालादर्शे च । न चात्र नाम्ना नान्दीश्राद्धधर्मातिदेशः । वैष्णवादिशब्दस्येव देवताविधिपरस्य कर्मनामत्वाभावात् । नापि नान्दीमुखत्वं पितृविशेषणम् । पारिभाषिकत्वात् । इदं श्राद्धं सपिण्डकं कार्यम् । 'पौर्णमासीषु सर्वासु निषिद्धं पिण्डपातनम् । वर्जयित्वा प्रौष्ठपदीं यथा दर्शस्तथैव सा ।' इति निर्णयदीपधृतगार्ग्यवचनात् ।

अस्यामेव वरुणव्रतारम्भः कार्यः। तदुक्तं हेमाद्रौ विष्णुधर्मोत्तरे—मार्कण्डेय उवाच—'प्रौष्ठपद्यास्तथारभ्य संपूर्णशशलक्षणे। संपूज्य वरुणं देवं गन्धमाल्यान्नसंपदा। जलाशयजले देवं ध्यात्वा संवत्सरावधौ। दद्याद्व्रतावसाने तु जलधेनुं द्विजातये। छत्रोपानहसंयुक्तं वासोयुगविभूषितम्। प्राप्नोति लोकं वरुणस्य राजंस्तत्रोष्य कालं सुचिरं मनुष्यः। मानुष्यमासाद्य भवत्यरोगो रूपान्वितो वित्तयुतस्तथैव।' इति। अस्यां भागवतपुस्तकदानं कार्यम्। तदुक्तं मदनरत्ने मात्स्ये—'यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः। वृत्रासुरवधोपेतं तद्भागवतमुच्यते। अष्टादश सहस्राणि पुराणं तत्प्रकीर्तितम्। लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम्। पौर्णमास्यां प्रौष्ठपद्यां स याति परमं पदम्' इति। इति भाद्रपदीकृत्यम्।

अथाश्विनीकृत्यम्। अस्यां कोजागरव्रतं कार्यम्। तदुक्तं महार्णवे लैङ्गे—'आश्विने पौर्णमास्यां तु चरेज्जागरणं निशि। कौमुदी सा समाख्याता कार्या लोके विभूतये। कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रमैरावतस्थितम्। सुगन्धिर्निशि सद्वेष अक्षैर्जागरणं चरेत्। निशीथे वरदा लक्ष्मीः को जागर्तीति भाषिणी। तस्मै वित्तं प्रयच्छामि अक्षैः क्रीडां करोति यः। नारिकेलैश्च पिष्टकैः पितॄन्देवान्समर्चयेत्। बन्धूंश्च प्रीणयेत्तद्वत्स्वयं तदशनो भवेत्।' इति। मदनरत्ने—'नारिकेलोदकं पीत्वा अक्षैर्जागरणं निशि। तस्मै वित्तं प्रयच्छामि यः करोति महीतले।' इति। अथस्कन्दपुराणोक्तं कोजागरव्रतम्। नन्दिकेश्वर उवाच—'स्वामिन्नहं पराधीनः शम्भोः सेवापरायणः। नावकाशोऽस्ति मे कर्तुं व्रतानि नियमांस्तथा। तन्ममैकं समाचक्ष्व व्रतं व्रतविदां वर। येन चीर्णेन भगवन्प्राप्नोति सुमहत्फलम्।' स्कन्द उवाच— 'अस्ति कोजागरं नाम व्रतानामुत्तमं व्रतम्। यत्कृत्वा समवाप्नोति जन्तुर्लोकाननुत्तमान्। नित्यमाश्वयुजे मासि पूर्णिमायां गणेश्वर। ऐरावतसमारूढः शक्रो लोकानुकम्पया। परिभ्रमति लोकांस्त्रीन्पश्यन्भक्तवरप्रदः। कोजागरविधानेन मामाराधयतीत्यतः। नेन कोजागरं नाम व्रतं लोकेषु विश्रुतम्। विधानं तस्य वक्ष्यामि शृणुष्वैकाग्रमानसः। पूर्णिमाश्वयुजे मासि कौमुदी परिकीर्तिता। तत्राराध्य महालक्ष्मीमिन्द्रं चैरावते स्थितम्। उपवासं प्रकुर्वीत दीपान्दद्याच्च भक्तितः। लक्षं तदर्धमयुतं सहस्रं शतमेव च। घृतेन दीपयेद्दीपांस्तिलतैलेन वा व्रती। रात्रौ जागरणं कुर्यान्नृत्यगीतपुरःसरम्। यथाविभवतो देयाः पुरवीथीषु

1—नास्ति उत्तमो येभ्यस्तान्। सर्वोत्तमानित्यर्थः।

दीपकाः । चैत्येषु देवायतनेष्वारामेषु गृहेषु च । ततः प्रभाते सुस्नातः संपूज्य च शतक्रतुम् । ब्राह्मणान्भोजयेच्चान्नघृतशर्करपायसैः । वासोभिर्दक्षिणाभिश्च ततस्तान्पूजयेद्द्विजान् । यथाशक्त्या च दातव्या दीपाः स्वर्णविनिर्मिताः । एवं निर्वर्त्य विधिवत्ततः पारणमाचरेत् । व्रतस्यास्य विधानेन कल्पान्वै दीपसंख्यकान् । अप्सरोभिः परिवृतः सूर्यलोके महीयते । इह चायुष्यमारोग्यं पुत्रपौत्रादिसंपदः । भवन्ति व्रतमाहात्म्यात्कुलश्रैष्ठ्यं गणेश्वर ।' इति । इति कोजागरव्रतम् । अस्मिन्व्रते पूर्णिमा प्रदोषनिशीथोभयव्यापिनी ग्राह्या । निशि निशीथ इति चाभिधानात् । यदा तु पूर्वेद्युर्निशीथव्याप्तिः परेद्युः न प्रदोषव्याप्तिस्तदा पूर्वा । 'नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यते' इति स्मार्ताचार्यचूडामणिप्रभृतयः । तिथितत्त्वकृत्यरत्नावल्योरप्येवम् । अत्रैवाश्वयुजीकर्मोक्तमाश्वलायनेन—“आश्वयुज्यामाश्वयुजीकर्म” इति । तच्छेषपर्वणि कार्यम् । विकृतित्वादिति निर्णयसिन्धौ । आग्रयणस्य शरदि विहितत्वाद्यदा पौर्णमास्यां क्रियते तदाश्वयुजीकर्मणा सह मन्त्रेण कर्तव्यमिति वृत्तिकृत् । तन्त्रतायामङ्गभूतक्रमलोपेनोभयोरपि वैगुण्यप्रसङ्गादाग्रयणस्य कालान्तरसंभवेन तदङ्गीकारस्यानुचितत्वात्कालान्तर एव तत्कर्तव्यम् । पर्वान्तरे शुक्लपक्षे देवनक्षत्रेषु वा इति कृत्यरत्नावल्याम् । शेषपर्वणि दर्शपूर्णमासाभ्यां तन्त्रेणानुष्ठाने दर्शेष्ट्याः परं पौर्णमासेष्ट्याः प्रागनुष्ठेयमिति हेमाद्र्यादयः । तच्चाग्रयणं त्रेधा । व्रीह्याग्रयणं यवाग्रयणं श्यामाकाग्रयणमिति । तत्रापि शामाकाग्रयणमनित्यमितरे तु अनाहिताग्नेर्नित्ये । यवाग्रयणं च कार्यमिति स्मार्तवृत्तावुक्तत्वात् । सूत्रे व्रीहियवदेवतासंबद्धानामेव मन्त्राणामाम्नानाच्च । आहिताग्नेस्तु यवाग्रयणस्याप्यनित्यत्वम् । अपि वा क्रिया यवेष्विति सूत्रात् । यद्वा व्रीह्याग्रयणेन समानतन्त्रता । श्यामाकैस्तु प्रस्तरणं कुर्यान्नाग्रयणम् । यद्वा तदपि समानतन्त्रमित्यादिपारिश्रमवतां सुलभमित्यलम् । इदं चापदि मलेऽपि कार्यमन्यथा न कार्यमित्याद्यन्यत्र द्रष्टव्यम् । अस्याकरणे प्रायश्चित्तमुक्तं कारिकायाम्—' अकृताग्रयणोऽश्नीयान्नवान्नं यदि वै नरः । वैश्वानराय कर्तव्यश्चरुः पूर्णाहुतिस्तु वा ।' इति । स्मृतिचन्द्रिकायाम्—' नित्ययज्ञात्यये चैव वैश्वदेवद्वयस्य च । अनिष्ट्वा नवयज्ञेन नवान्नप्राशने तथा । भोजने पतितान्नस्य चरुर्वैश्वानरो भवेत् ।' इति । ऋग्विधाने तु—'समिन्द्ररायामन्त्रं च वर्षवर्षे जपेच्छतम् । आग्रयणं यदा न्यूनं तदा संपूर्णमिति तत् ।' इत्युक्तम् । एतच्च स्मार्ताग्रयणविषयम् । अस्यामेव दानविशेषो विष्णुधर्मोत्तरे—'आश्वयुज्यां कांस्यपात्रं घृतपूर्णं द्विजातये । ससु-

वर्णे तथा दत्त्वा दीप्तौजास्त्विह जायते ।' इति। अस्यां गजनीराजनं कार्यम् । तदुक्तं हेमाद्रौ आथर्वणगोपथब्राह्मणे—अथाश्वयुजे मासि पौर्णमास्यां पराह्णे हस्तिनां नीराजनं कुर्यादित्यादि । अन्यदपि कृत्यनिर्णयामृते वीरमित्रोदये च—'आश्वयुज्यां पौर्णमास्यां निकुम्भो वालुकार्णवात् । आयाति सेनया सार्धं कृत्वा युद्धं सुदारुणम् ॥ तस्मात्तत्र नरैर्मार्गाः स्वगेहस्य समीपतः । शोधितव्याः प्रयत्नेन भूषितव्याश्च मण्डनैः । पुष्पार्घफलधूपान्नसर्षपप्रकरैस्तथा । वेश्मानि भूषितव्यानि नानारङ्गैर्विशेषतः । सुस्नातैरनुलिप्तैश्च नरैर्भाव्यं सबालकैः । दिवा तत्र न भोक्तव्यं मनुष्यैश्च विवेकिभिः । स्त्रीवृद्धमूर्खबालैश्च भोक्तव्यं पूजितैः सुरैः । पूज्याश्च सफलैः[1] पत्रैस्तथा द्वारोर्ध्वभित्तयः । द्वारोपान्ते प्रदीप्तश्च संपूज्यो हव्यवाहनः । यवाक्षतघृतोपेतैस्तन्दुलैश्च सुतर्पितः । संपूजितव्यः पूर्णेन्दुः पयसा पायसेन च । रुद्रः सभार्यः स्कन्दश्च तथा नन्दीश्वरो मुनिः । गोमद्भिः सुरभिः पूज्या छागवद्भिर्हुताशनः । उरभ्रवद्भिर्वरुणो गजवद्भिर्विनायकः । पूज्यः साश्वैश्च रेवन्तो यथाविभवविस्तरैः । ततः पूज्यो निकुम्भश्च सामिषैस्तिलतन्दुलैः । सुगन्धिभिर्घृतोपेतैः कृशराद्यैश्च भूरिभिः । ब्राह्मणान्भोजयित्वा तु भोक्तव्यं मांसवर्जितम् ।' इत्यादि । इत्याश्विनीकृत्यम् ।

अथ कार्तिकीकृत्यम् । इयं मन्वादिः । सा पूर्वाह्णव्यापिनी ग्राह्या शुक्लपक्षस्थत्वात् । अत्र विशेषो हेमाद्रौ ब्राह्मे—' पूर्णा महाकार्तिकी स्याज्जीवेन्द्वोःकृत्तिकास्थयोः ।' पाद्मे— ' विशाखासु यदा भानुः कृत्तिकासु च चन्द्रमाः । स योगः पद्मको नाम पुष्करे त्वतिदुर्लभः । पद्मकं पुष्करे प्राप्य कपिलां यः प्रयच्छति । स हित्वा सर्वपापानि वैष्णवं लभते पदम्।' यमः—'कार्तिक्यां पुष्करे स्नातः सर्वपापैः प्रमुच्यते ।' अन्यत्रापि— ' आग्नेयं तु यदा ऋक्षं कार्तिक्यां भवति क्वचित् । महती सा तिथिर्ज्ञेया स्नानदानेषु चोत्तमा । यदा याम्यं तु भवति ऋक्षं तस्यां तिथौ क्वचित्। तिथिः सापि महापुण्या मुनिभिः परिकीर्तिता । प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप।सा महाकार्तिकी प्रोक्ता देवानामपि दुर्लभा।' इति। अस्यामेव सायंकाले मत्स्यावतारो जात इत्युक्तं पाद्मे कार्तिकमाहात्म्ये—'वरान्दत्त्वा यतो विष्णुर्मत्स्यरूपोऽभवत्ततः।तस्यां दत्तं हुतं जप्तं दशयज्ञफलं स्मृतम्।' इति। अत्रैव त्रिपुरोत्सव उक्तो भविष्ये— ' पौर्णमास्यां तु संध्यायां कर्तव्यस्त्रिपुरोत्सवः । दद्यादनेन मन्त्रेण सुदीपांश्च सुरालये । कीटाः पतङ्गा मशकाश्च वृक्षे जले स्थले ये विचरन्ति जीवाः । दृष्ट्वा प्रदीपं

१—सप्तम्यर्थे तृतीया । २—कासरक्षैरिति पाठो निर्णयामृते महिषाक्षोगुग्गुलुरिति व्याख्यातं च ।

नहि जन्मभागिनस्ते मुक्तरूपा हि भवन्ति तत्र।' इति। अत्र पौर्णमासी संध्याकालव्यापिनी ग्राह्या। पूर्वोक्तभविष्यवाक्ये संध्यायामित्युक्तेः। अत्र कार्तिकेयदर्शनं कार्यम्। तदुक्तं काशीखण्डे—'कार्तिक्यां कृत्तिकायोगे यः कुर्यात्स्वामिदर्शनम्। सप्तजन्म भवेद्विप्रो धनाढ्यो वेदपारगः।' इति। अस्यां क्षीरसागरदानमुक्तं निर्णयामृते ब्रह्मपुराणे—'पौर्णमास्यां तु संपूज्यो भक्त्या दामोदरः सदा। ततश्चन्द्रोदये पूज्यास्तापस्यः कृत्तिकास्तु षट्। शिवा संभूतिनामा च प्रीतिः संततिरेव च। अनसूया क्षमा चैव षडेताः कृत्तिका मताः। कार्तिकेयस्तथा खड्गी वरुणश्च हुताशनः। धान्यैः सशूकैर्द्वारोर्ध्वं भूषितव्यं निशागमे। माल्यैर्धूपैस्तथा दीपैर्भक्ष्यैरुच्चावचैस्तथा। परमान्नैः फलैः शाकैर्वह्निब्राह्मणतर्पणैः। एवं देवांस्तु संपूज्य दीपो देयो गृहाद्बहिः। दीपोपान्ते तथा गर्तश्चतुरस्रो मनोहरः। चतुर्विंशाङ्गुलः कार्यः सिक्तश्चन्दनवारिणा। गवक्षीरेण संपूर्णः सम्यक्कु परिरक्षितः। तत्र हेममयो मत्स्यो मुक्तानेत्रमनोहरः। प्रक्षेप्तव्यो विधानेन नमोऽस्तु हरये पठन्। ब्राह्मणायाथ योग्याय दद्यात्तं क्षीरसागरम्। इति। अत्र विधानेनेत्यस्य दद्यादित्यनेनान्वयः। अस्यां दामोदरं संपूज्य नक्तं कार्यम्। तदुक्तं कृत्यतत्त्वार्णवे ब्रह्मपुराणे—'पौर्णमास्यां तु संपूज्यो भक्त्या दामोदरः सदा। तस्मिन्नहनि यत्नेन कर्तव्यं नक्तभोजनम्।' तथा 'कार्तिके पौर्णमास्यां तु सोपवासोऽर्चयेद्धरिम्। अग्निष्टोमफलं विन्देत्सूर्यलोकं च विन्दति।' अस्यामेव वृषदानं कार्यम्। तदुक्तं मदनरत्ने विष्णुधर्मोत्तरे—'कार्तिक्यां चन्द्रवर्णाभमन्यवर्णमथापि वा। रत्नैर्गन्धैस्तथा धान्यैर्बीजैर्वस्त्रैस्तथैव च। कृत्वा चोक्तमथोक्षाणं दत्त्वा दीपं समन्ततः। चन्द्रोदये नरो दत्त्वा सर्वपापैः प्रमुच्यते। कान्तारे यममार्गे तु तेनासौ व्रजते सुखम्। प्राप्नोति पुत्रपौत्रांश्च सूर्यलोकं च गच्छति।' इति। अत्रैव काम्यवृषोत्सर्गः कार्यः। तदुक्तं निर्णयामृते भविष्योत्तरे—'कार्तिक्यां तु वृषोत्सर्गो विवाहः पुण्यलक्षणः। कार्यः कुरुकुलश्रेष्ठ हरेर्नीराजनं तथा। गजाश्वरथदानं च घृतधेन्वादयस्तथा। प्रदेयाः पुण्यकृद्भिस्तु तास्ताः संकल्पदेवताः।' इति। मात्स्येऽपि—'कार्तिक्यां तु वृषोत्सर्गं कृत्वा नक्तं समाचरेत्। शैवं पदमवाप्नोति शैवव्रतमिदं स्मृतम्।' इति। अत्रैव ब्रह्मपुराणे नीलवृषदानमुक्तम्। 'नीलं च वृषभं दद्याच्चतुर्वत्सतरीयुतम्। सर्वसस्यवरं रम्यं सर्वगन्धसमन्वितम्। सुवाससं ब्राह्मणाय महाकान्तारतारणम्। यावन्ति तस्य रोमाणि

१—एतैर्युक्तमिति शेषः।

शरीरे सन्ति संख्यया । तावद्युगसहस्राणि स्वर्गे वसति तत्प्रदः । पूजयित्वा ततो विष्णुं रक्तमाल्यानुलेपनैः । भोक्तव्यं गोरसप्रायं स्वप्तव्यं स्थण्डिले ततः ।' इति । नीलवृषलक्षणं त्वाह हरिहरः--'लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः । श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ।' तथाऽन्यत्र--'चरणांसमुखं पुच्छं यस्य श्वेतानि गोपतेः । लाक्षारससवर्णश्च तं नीलमिति निर्दिशेत् । भूमौ कर्षति लाङ्गूलं प्रलम्बं स्थूलवालधिः । पुरस्तादुन्नतो नीलो वृषभः स प्रशस्यते ।' अन्यत्रापि-'श्वेतोदरः कृष्णपृष्ठो ब्राह्मणस्य प्रशस्यते । स्निग्धवर्णेन रक्तेन क्षत्रियस्य प्रशस्यते । काञ्चनाभेन वैश्यस्य कृष्णः शूद्रस्य शस्यते । यस्य प्रागायते शृङ्गे भूमुखाभिमुखे सदा । सर्वेषामेव वर्णानां स च सर्वार्थसाधकः ।' इति । अस्यामेव भविष्योत्तरोक्तं संतानव्रतं कार्यम् । तदुक्तं हेमाद्रौ--श्रीकृष्ण उवाच--'कार्तिक्यामुपवासी यः कन्यां दद्यात्स्वलंकृताम् । स्वकीयां परकीयां वा नदीसंगमके शुभे । एतत्संतानकं नाम व्रतं सुगतिदायकम् ।' इति । अस्यामेव राशिव्रतम् । तदुक्तं हेमाद्रौ भविष्ये--'श्रीकृष्ण उवाच--'कार्तिक्यां नक्तभुग्दद्यान्मेषं हेमविनिर्मितम् । मार्गशीर्षे वृषं पुष्ये मिथुनं तद्वदेव हि । एवंक्रमेण यो दद्याद्राशीन्वस्त्रविभूषितान् । पौर्णमास्यां पौर्णमास्यां कौन्तेयबहुदक्षिणान् । एतद्राशिव्रतं नाम ग्रहोपद्रवनाशनम् । सर्वाशापूरकं तद्वत्सोमलोकप्रदायकम् ।' इति । अस्यामेव कृत्तिकाव्रतं कार्यम् । तदुक्तं हेमाद्रौ भविष्ये--श्रीकृष्ण उवाच--'अथातः शृणु भूपाल कृत्तिकाव्रतमुत्तमम् । राज्ञी च भद्रलिङ्गाख्या पुरा यस्य प्रभावतः । अतीव महतीं लब्ध्वा श्रियं जातिस्मराऽभवत् । योगेनान्ते तनुं त्यक्त्वा परे ब्रह्मण्यलीयत ।' युधिष्ठिर उवाच--'कीदृशं तद्व्रतं कृष्ण मन्त्र एव तु कीदृशः । विधानं कृत्तिकानां च तं च कालं वदस्व मे ।' श्रीकृष्ण उवाच--'कार्तिक्यां पौर्णमास्यां तु गृह्णीयात्कृत्तिकाव्रतम् । षट् समास्तद्व्रतं तावदिदं संचिन्त्य चेतसि ।' इत्यादि । 'सौवर्णरौप्यमणिगोनवनीतसिद्धाः षट्कृत्तिकाश्चणकपिष्टमयाश्च कृत्वा । पात्रे निधाय कुसुमाक्षतधूपदीपैः संपूज्य जन्मगहनं न विशन्ति मर्त्याः ।' इति । इति कृत्तिकाव्रतम् । अत्रैव मनोरथपूर्णिमाव्रतमारम्भणीयम् । तदुक्तं हेमाद्रौ भविष्योत्तरे--'कार्तिक्यां तु समारभ्य संपूर्णं शशलक्षणम् । पूजयेदुदये राजन्सदा नक्ताशनो भवेत् ।' इत्यादिना । 'जनाभिरामश्च शशाङ्कवत्स्याद्धनाधिपालश्च तथैव लक्ष्म्या । शक्रेण तुल्यश्च तथैव शक्त्या मानुष्यमासाद्य भवेत्स राजा ।' इत्यन्तेन । इति मनोरथपूर्णिमाव्रतम् । अत्रैव सौभाग्यव्रतं कार्यम् । तदुक्तं

हेमाद्रौ विष्णुधर्मे—'कार्तिके पौर्णमास्यां तु पूर्णं शिशिरदीधितिम् । पद्मे षोडशपत्रे तु कृत्तिकायां तु पूजयेत् ।' इत्यादि । 'सौभाग्यदं रूपविवर्धनं च लावण्यदं स्त्रीरतिभोगदं च । कार्यं प्रयत्नेन नरेन्द्र पुंसा कार्यं तथा स्त्रीभिरनिन्द्यसत्त्व ।' इत्यन्तेन । इति विष्णुधर्मोक्तं सौभाग्यव्रतम् । अस्यामेवानुष्ठेयकार्तिकव्रतोद्यापनप्रसङ्गात्कार्तिकस्नानविधिर्लिख्यते । तत्र पृथ्वीचन्द्रोदये विष्णुस्मृतिपाद्मयोः—'तुलामकरमेषेषु प्रातःस्नानं विधीयते। हविष्यं ब्रह्मचर्यं च महापातकनाशनम्।' इति सौरमास उक्तः। प्राच्याश्चैतदेवाद्रियन्ते। दाक्षिणात्यास्तु—'आश्विनस्य च मासस्य या शुक्लैकादशी भवेत्। कार्तिकस्य व्रतानीह तस्यां वै प्रारभेत्सुधीः' इति पाद्मोक्तेः । भार्गवार्चने च—'आरभ्यैकादशीं शुक्लामाश्विनस्य तु मानवः। प्रातः स्नानं प्रकुर्वीत यावत्कार्तिकभास्करः ।' इति विष्णुरहस्योक्तेः। हेमाद्रौ चादित्यपुराणे—'पूर्णे आश्वयुजे मासि पौर्णमास्यां समाहितः।' इत्युक्त्वा 'मासं समग्रं परया च भक्त्या समाप्यते कार्तिकपौर्णमास्याम्।' इत्यन्तेनाभिधानाच्चाश्विनशुक्लैकादश्यां पौर्णमास्यां वारभ्य कार्तिकशुक्लद्वादश्यां पौर्णमास्यां वा समापयेदित्याहुः । मदनपारिजाते विष्णुः—'कार्तिकं सकलं मासं नित्यस्नायी जितेन्द्रियः । जपन्हविष्यभुक्छान्तः सर्वपापैः प्रमुच्यते ।' अत्र देशविशेषः पाद्मे कार्तिकं प्रक्रम्य—'कुरुक्षेत्रे कोटिगुणो गङ्गायामपि तत्समः । ततोऽधिकः पुष्करे स्याद्द्वारावत्यां च भार्गव । पुण्याः पुर्यश्च सप्तैव मुनयो मथुरादिकाः । दुर्लभः कार्तिको विप्रा मथुरायां नृणामिह । यत्रार्चितः स्वकं रूपं भक्तेभ्यः संप्रयच्छति।' इति । इदं च स्नानं काशीस्थपञ्चनदेऽप्यतिप्रशस्तम् । 'शतं समास्तपस्तप्त्वा कृते यत्प्राप्यते फलम् । तत्कार्तिके पञ्चनदे सकृत्स्नानेन लभ्यते । कार्तिके बिन्दुतीर्थे यो ब्रह्मचर्यपरायणः । स्नास्यत्यनुदिते भानौ भानुजात्तस्य भीः कुतः।' इत्यादिकाशीखण्डोक्तेः । संपूर्णस्नानाशक्तौ ब्रह्मपुराणे कार्तिकमधिकृत्य—'एकादश्यादिषु तथा तत्र पञ्चसु रात्रिषु । दिने दिने च स्नातव्यं शीतलासु नदीषु च । वर्जितव्या तथा हिंसा मांसभक्षणमेव च।' इति। काशीखण्डे—'वाराणस्यां पञ्चनदे त्र्यहं स्नातास्तु कार्तिके। अमी ते पुण्यवपुषः पुण्यभाजोऽतिनिर्मलाः।' इति । मुहूर्तावशेषितायां रात्रौ तीर्थादौ गत्वा प्रत्यहं स्नानं कार्यम् ।'नाडीद्वयावशिष्टायां रात्र्यां गच्छेज्जलाशयम् ।' इत्यादिपाद्मवचनात् । अत्रैव प्रसङ्गात्संक्षेपेण नित्यनैमित्तिकस्नानविधिरुच्यते । अङ्गिराः—'विना दर्भैश्च यत्स्नानं यच्च दानं विनोदकम् । असंख्यातं च यज्जप्तं तत्सर्वं निष्फलं भवेत् ।' अन्यत्रापि—

'कुशहीनं तु यत्स्नानं मन्त्रहीना च या क्रिया । दानं च दक्षिणाहीनं त्रयं तन्निष्फलं भवेत्।' योगियाज्ञवल्क्यः—'अरुग्दिवा चरेत्स्नानं मध्याह्नात्प्राग्विशेषतः । प्रयतो मृदमादाय दूर्वामार्द्रं च गोमयम्।' अरुगनातुरः। विशेषत इति वचनात् । अपराह्णेऽप्यभ्यनुज्ञायते । 'स्नापयित्वा त्वथाचम्य ततः स्नानं समाचरेत् । प्रक्षाल्य हस्तौ पादौ च शिखाबन्धं समाचरेत्।' अत्र कुशदूर्वादिकं स्वयमेवानयेत् । न तु नद्यादौ कंचित्प्रार्थयीत । तदुक्तं स्मृतिसागरे—'जलान्ते तिलदर्भांस्तु योऽनुष्ठाय च याचते। नानुष्ठानफलं तस्य दातुरेव हि तत्फलम् ।' मनुः—'स्नानोपकरणं सर्वं तस्य दक्षिणभागतः । एवं यः कुरुते स्नानं श्रेयो महदवाप्नुयात्।' संग्रहे—'जलं देवगृहं चैव शयनं च द्विजालयम्। निर्णिक्तपादः प्रविशेन्नानिर्णिक्तः कथंचन।'इति।अत्र प्रातःस्नाने मललेपसंभवे शरीरमलक्षालनस्य जलमध्ये निषेधादुद्धृतोदकेन बहिरङ्गं प्रक्षाल्य नद्यादौ प्रविशेत् । शिखाबन्धनप्रकारमाह व्यासः—'स्मृत्वोंकारं च गायत्रीं निबध्नीयाच्छिखां ततः । पुनराचम्य हृदयं बाहुस्कन्धौ च संस्पृशेत् ।' कात्यायनसूत्रे च—"अथातो नित्यस्नानम्"इत्युपक्रम्य"प्रक्षाल्य पाणिपादं कुशोपग्रहो बद्धशिखो यज्ञोपवीत्याचम्य" इत्युक्तम् । कुशयुक्त उपग्रहोऽस्य । उपगृह्यतेऽनेनेत्युपग्रहो हस्तः । अत्र 'सदोपवीतिना भाव्यं सदा बद्धशिखेन च' इत्येवं नित्यतया शिखादिधारणे सिद्धेऽपि पुनर्विधानं कर्माङ्गत्वसंपत्त्यर्थम् । नित्यं हि तद्धारणं पुरुषार्थार्थम् । सदापदात् । तेन दैवाद्विनष्टेपि यज्ञोपवीते तदुत्पाद्य स्नानमिति सिद्ध्यतीति श्रीचण्डेश्वरादयः। तच्चिन्त्यम्।'विशिखो व्युपवीतश्च यत्करोति न तत्कृतम्।'इत्युत्तरार्धेन क्रत्वङ्गताया अपि बोधनात्। केवलपुरुषार्थत्वे हि शिखोपवीतयोः कर्मार्थितया नित्यप्राप्तत्वान्न तदर्थं विधानमुपपद्यते । यदपि पुरुषार्थविधिप्राप्ते यज्ञोपवीतित्वे यज्ञोपवीतीति द्वितीयवस्त्रवारणार्थमिति कात्यायनभाष्यं तदपि चिन्त्यम् । परिसंख्याप्रसङ्गात् तस्माद्दैवादुत्तरीयासंपत्तौ तदर्थमधिकमेकं यज्ञोपवीतं विधीयते। अत एवोक्तम्—'तृतीयमुत्तरीयार्थं वस्त्राभावे तदिष्यते ।' इति । एवमनियतकेशवेषा इति स्नाने केशमोक्षश्रवणाच्छिखामोक्षोऽपि शङ्क्येतेति तद्वारणार्थं पुनः शिखाबन्धवचनम् । यद्यपि मुक्तिशिखावर्जमिति तत्रास्ति तथापि प्रमादनिवृत्त्यर्थं दोषभूयस्त्वार्थं वा वचनमिति कथंचिद्व्याख्येयम् । वामनपुराणे—' निषिच्य तीरे कुशपिञ्जुलानि पूर्वोत्तराग्राणि मृदं न्यसेच्च । प्रक्षाल्य पादौ च मृदा च कण्ठे यज्ञोपवीतं च जलं पिबेत्त्रिः' । कण्ठे निवीतं कृत्वा प्रक्षालयेदित्यर्थः । यमः—'कराभ्यां धारये-

द्धर्गोग्भिछखावन्धं विधाय च । प्राणायामांस्तथा कुर्यात्कालज्ञानं यथाविधि।' कालज्ञानं तात्कालिकतिथिनक्षत्रादिस्मरणं विधायेत्यर्थः । मनुः—'प्रक्षाल्य पादौ हस्तौ च शुचिराचम्य वाग्यतः । तिथिवारादिकं ज्ञात्वा सुसंकल्पो यथा-विधि ।' अत्रादिपदेन वारयोगसंक्रान्त्यादेरपि संग्रहः । तत्र तत्र श्रवणात् । तत्र तिथिनक्षत्रादीनि तात्कालिकान्येव स्मर्तव्यानि । तदुक्तमाचारसारे—'जन्मान्ताभ्य-ङ्ग्यामात्रिस्नानदन्तमृदासु च । तिथिस्तात्कालिकी ज्ञेया पारणे लेखने तथा।' इति। वारेषु तु देशान्तरयोगविभागाभ्यां क्वचिदुदयात्प्रागूर्ध्वं वा प्रवृत्तिः । यदुक्तं रत्न-मालायाम्-'वारप्रवृत्तिं मुनयो वदन्ति सूर्योदयाद्रावणराजधान्याम् । ऊर्ध्वं तथाधो-प्यपरत्र तस्माच्चरार्धदेशान्तरनाडिकाभिः ।' लङ्कायां सूर्योदयादूर्ध्वमेव वारप्रवृत्तिः । अन्यदेशे देशान्तरचरवशेन तस्मात्सूर्योदयादूर्ध्वमधो वा वारप्रवृत्तिरित्यर्थः । इदमेव स्फुटीकृत्याह 'चरार्धदेशान्तरयोर्वियोगो योगोथवानीयपलैश्च सम्यक् । सूर्योदयादूर्ध्व-मृणे धनेऽधो वारप्रवृत्तिं मुनयो वदन्ति ।' अयमर्थः । स्फुटगणितद्वारा स्फुटचरमा-नीय देशान्तरमथानयेत् तत्रोभयोरंकयोर्धनत्वे ऋणत्वे च योगः कार्यः।वैजात्ये चाधिके न्यूनं भयातं शेषे ऋणांके सति तावद्घटिकाभिर्वारप्रवृत्तिः । धनांके तु प्रागिति एवं स्थिते उषसि स्नानविधानाद्रविवारादेरुदयोत्तरं प्रवृत्तौ तन्निमित्तकस्नादौ चोदयादर्वा क्छनिवासरः कीर्तनीयः । रविवारस्नानं तु सोमवासरे प्रागुदयात्कार्यम् । एवमु-त्तरेषामप्युत्कर्षः इति प्राप्तम् । न चैतन्न्याय्यम् । आचारविरोधात् । अत्राहुः।एतद्दे-शान्तरयोगवियोगाभ्यांवारप्रवृत्त्यभिधानं तत्तत्प्रयुक्तकार्येषु गुणदोषप्राबल्याप्राबल्यबो-धनपरम्।पातङ्गिवारस्य दिनाधिपत्यमित्याधिपत्याभिधानवत्।अत एकैकस्मिन्नपिवा-सरेऽनेकवारप्रवृत्त्यभिधानं यात्रादौ गुणदोषाभावप्रतिपादकमेव । एवं च नित्या वारप्रवृ-त्तिरर्धबिम्बदर्शनादेव सामान्यशास्त्रसिद्धत्वात् । एवं च नित्यस्नानादौ यद्यप्युषःकाले उपरितनो वारो नास्ति तथापि तस्य तिथिवत्तात्कालिकत्वस्मरणाद्भाविनोऽपि कीर्त-नम् । किं च 'अस्नातस्य क्रियाः सर्वा भवन्तीहाफला यतः । प्रातः समाचरेत्स्नानं तच्च नित्यमिति स्मृतम् ।' इति मार्कण्डेयवचनेन प्रातःस्नानस्याहःकर्तव्यकर्मार्थि-ताया बोधितत्वात्तदहःकर्तव्यकर्मा द्देश्यके स्नाने तदह्नस्तिथिवारादि च कीर्तयितुमु-चितं तिथौ तु वचनाद्बाधः न त्वेतद्वारेऽस्ति । अत एव संध्ययोर्भेदेनोपादानमित्यन्यत्र विस्तरः । एवं च तदहर्वर्तितरणिकिरणावच्छिन्नेऽपि काले स एव वार उत्कीर्तनीय इति सिद्धम् । यत्पुनर्वारयोगमपेक्ष्य नैमित्तिकमर्धोदयादि स्नानं तत्तदानीं न भवति

अर्कवारादेर्वस्तुनस्तदाऽभावात् । अहःकर्मानङ्गत्वाच्च न तदनुरोधेन तदुन्नयनमपीति । एवं मलापकर्षणस्नानेऽपि न तदाऽर्कवारादिप्रयुक्तो निषेधः । महाजनाचारोऽप्येवमेव । अत एव काम्यमपि सूर्यार्धबिम्बदर्शनादूर्ध्वमेव भवति काम्ये मुख्यकालस्यैवाङ्गत्वात् । यदि तु काम्ये पौषार्कस्नानादावनुदितकालविधिरस्ति, तत्र वचनादेव भाविनोऽप्यर्कवारादेः कीर्तनं कार्यमिति । वस्तुतस्तु—रविवासरनिमित्तकस्नानं शनिवासरान्वितायामस्यां तिथौ करिष्ये इत्येवं संकल्पयितुमुचितम् । कालविशेषस्य वासरस्य सप्तम्यधिकरणेनोत्कीर्तितस्य विद्यमानस्यैवाधिकरणत्वसंभवेनाविद्यमानस्याधिकरणत्वेनोत्कीर्तनासंभवात् । एवं व्यतीपातादियोगादेरपि विद्यमानस्यैव संकल्पादावुत्कीर्तनं बोध्यम् । न च तिथौ तात्कालिकीत्ववचनादविद्यमानस्यापि वारादेः संकल्पादावुत्कीर्तनासंभव इति वाच्यम् । तिथौ तात्कालिकीत्ववचनस्य त्रिदोषपरिसंख्याविधित्वप्रसङ्गेन यां तिथिमित्यादिसाकल्यबोधकवचनप्रसक्तसाकल्यापवादकत्वेन वारादौ तात्कालिकत्वव्यवच्छेदकत्वासंभवात् । यद्यपि निमित्तस्य स्वस्मिन्सत्यवश्यानुष्ठापकस्य विद्यमानस्यैवोल्लेखो युक्तः, तथापि भाविविघ्नस्यापि ग्रन्थादौ मङ्गलाचरणे निमित्तत्वस्य दृष्टत्वेन विद्यमानस्यापि रविवासरादेः अरुणोदयकाले विधायकवचनवशादरुणोदयकालेऽनुष्ठीयमाने रविवासरसंबन्धिक्रियाङ्गप्रातःस्नानं प्रति निमित्तत्वं युक्तम् । न चाचारविरोधः । गण्डूलिकाप्रवाहन्यायेन प्राप्ताचारानुरोधेन शास्त्रार्थस्य व्यवस्थापयितुमशक्यत्वादिति कृतबुद्धयो विदाङ्कुर्वन्त्वित्यलम् । इदं च प्रातःस्नानं संध्यां कृत्वा कार्यम् । तेन विनेतरकर्मानधिकारादिति वर्धमानः । यद्यपि प्रातःसंध्यायाः सूर्योदये समाप्तिस्तथापि वचनबलादनुदितहोमवद्भविष्यतीति निर्णयसिन्धौ । वस्तुतस्तु--प्रातःस्नानोत्तरं प्रातःसंध्यायाः पूर्वमेव कार्तिकादिस्नानं विधातुमुचितम् । प्रातःसंध्यायाः सूर्योदयोत्तरं समाप्यत्वेनानुदिते भानौ विहितस्य स्नानस्य प्रातःसंध्यातः पश्चादनुष्ठेयत्वानुपपत्तेः । उक्तं चैतदर्थकं काशीखण्डवचनं पूर्वम् । स्नास्यत्यनुदिते भानाविति । अनुदितहोमस्य च श्रौतत्वेन स्मार्तसंध्यासंकोचत्वं युज्यते । स्नानमन्त्रौ च तत्रैव--

'कार्तिकेऽहं करिष्यामि प्रातःस्नानं जनार्दन । प्रीत्यर्थं तव देवेश दामोदर मया सह । ध्यात्वाऽहं त्वां च देवेश जलेऽस्मिन्स्नातुमुद्यतः । तव प्रसादात्पापं मे दामोदर विनश्यतु । इति मन्त्रौ समुच्चार्य मौनी स्नायाद्व्रती नरः ।' इति । अर्घ्यमन्त्रावपि तत्रैव ।

'व्रतिनः कार्तिके मासि स्नातस्य विधिवन्मम । गृहाणार्घ्यं मया दत्तं दनुजेन्द्रनिषूदन ।

नित्यनैमित्तिके कृष्ण कार्तिके पापनाशने । गृहाणार्घ्यं मया दत्तं राधया सहितो हरे । इमौ मन्त्रौ समुच्चार्य योऽर्घ्यं मह्यं प्रयच्छति । सुवर्णरत्नपुष्पाम्बुपूर्णशंखेन पुण्यवान् । सुवर्णपूर्णपृथिवी तेन दत्ता न संशयः ।' इति । अन्योऽपि स्नानगतो विशेषः पाद्मे—'स्मृत्वा भागीरथीं विष्णुं शिवं सूर्यं जले विशेत् । नाभिमात्रे जले तिष्ठेद्व्रती स्नायाद्यथाविधि । तिलामलकचूर्णेन गृही स्नानं समाचरेत् । वनस्थानां यतीनां च तुलसीमूलमृत्तिका । सप्तमीदर्शनवमीद्वितीयादशमीषु च । त्रयोदश्यां च न स्नाया-द्धात्रीफलतिलैः सदा ।' इति । पाद्मे—'कार्तिके नार्चितो यैस्तु कमलैः कमलेक्षणः । जन्मकोटिषु विप्रेन्द्र न तेषां कमला गृहे ।' नारसिंहे—'विहाय सर्वपुष्पाणि मुनिपु-ष्पेण केशवम् । कार्तिके योऽर्चयेद्भक्त्या वाजपेयफलं लभेत् ।' कार्तिके तुलसीमाहा-त्म्यं पाद्मे—'तुलसीकाननं राजन्गृहे यस्यावतिष्ठते । तद्गृहं तीर्थरूपं तु न यान्ति यमकिंकराः । रोपणात्पालनात्स्पर्शान्नृणां पापहरा तथा । तुलसी हरते पापं वाङ्मनः-कायसंभवम् । तुलसीमञ्जरीभिर्यः कुर्याद्धरिहरार्चनम् । न स गर्भगृहं याति मुक्ति-भागी न संशयः । तुलसीविपिनच्छाया यत्र यत्र भवेन्नृप । तत्र श्राद्धं प्रकुर्वीत पितॄणां दत्तमक्षयम् ।' इति । 'तुलसीदललक्षेण कार्तिके योऽर्चयेद्धरिम् । पत्रे पत्रे मुनिश्रेष्ठ लभते मौक्तिकं फलम् । स्कान्दे कार्तिकमाहात्म्ये—'मालतीमालया विष्णुः केतक्या चैव पूजितः । समाः सहस्रं भवति सुप्रीतो मधुसूदनः ।' तथा—'कार्तिके केशवे पूजा येषां नाम शुभैः कृता । ते निर्भर्त्स्य रवेः पुत्रं वसन्ति त्रिदिवे सदा ।' तथा स्कान्दद्वारकामाहात्म्ये—'निवेद्य केशवे मालां तुलसीकाष्ठसंभवाम् । वहते यो नरो भक्त्या तस्य नास्तीह पातकम् । न जह्यात्तुलसीमालां धात्रीमालां विशेषतः । महापातकसंहर्त्री धर्मकामार्थदायिनी । स्पृशेत्तु यानि लोमानि धात्रीमाला कलौ नृणाम् । तावद्वर्षसहस्राणि वैकुण्ठवसतिर्भवेत् । मालां नित्यं नरो भक्त्या धात्रीतु-लसिसंभवाम् । वहते कण्ठदेशे तु कल्पकोटिं दिवं वसेत् । तुलसीकाष्ठसंभूते माले कृष्णप्रियंकरि । बिभर्मि त्वामहं कण्ठे कुरु मां कृष्णवल्लभम् । एवं संप्रार्थ्य विधि-वन्मालां कृष्णगलेऽर्पिताम् । धारयेत्कार्तिके यो वै स गच्छेद्वैष्णवं पदम् ।' इति । तथा स्कान्दे कार्तिकमाहात्म्ये—'धात्रीछायां तु यः कुर्यात्पिण्डदानं महामते । मुक्तिं प्रयान्ति पितरः प्रसादान्माधवस्य तु । धात्रीफलविलिप्ताङ्गो धात्रीफलविभूषितः । धात्रीफलकृताहारो नरो नारायणो भवेत् । धात्रीच्छायां समाश्रित्य योऽर्चयेच्चक्रपाणि-

१—स्नानसाधनमिति शेषः ।

नम् । पुष्पे पुष्पेऽश्वमेधस्य फलं प्राप्नोति मानवः । तीर्थानि मुनयो देवा यज्ञाः सर्वेऽपि कार्तिके । नित्यं धात्रीं समाश्रित्य तिष्ठत्यर्के तुलास्थिते ।' इति । अत्रैव धात्रीपूजनं कृत्वा प्रार्थयेत् ।'धात्रि देवि नमस्तुभ्यं सर्वपापक्षयंकरि । पुत्रान्देहि महाप्राज्ञे यशो देहि बलं च मे ।' इति । तथा स्कान्दे-'कार्तिके मासि विप्रेन्द्र धात्रीवृक्षोपशोभिते । वने दामोदरं विष्णुं चित्रान्नैस्तोषयेद्विभुम् । मूलेन पायसेनाथ होमं कुर्याद्विचक्षणः । ब्राह्मणान्भोजयेच्छक्त्या स्वयं भुञ्जीत बन्धुभिः ।' इति । अत्र जागरणविधिः पाद्मे-'जागरं कार्तिके मासि यः कुर्यादरुणोदये । दामोदराग्रे सेनानीर्गोसहस्रफलं लभेत् ।' इत्यादि । कार्तिके द्विदलव्रतं प्रागुक्तम् । "कार्तिके द्विदलं त्यजेत्" इति।पाद्मे कार्तिकमाहात्म्ये-'राजिकं मादकं चैव नैवेद्यात्कार्तिकव्रती।द्विदलं तिलतैलं च तथान्यन्मतिदूषितम्।'स्कान्देऽपि-'कार्तिके वर्जयेत्तद्वद्द्विदलं बहुबीजकम्। माषमुद्गमसूराश्च चणकाश्च कुलत्थकाः । निष्पावा राजमाषाश्च आढक्यो द्विदलं स्मृतम् । नूतनान्यपि जीर्णानि सर्वाण्येतानि वर्जयेत् ।' अत्र केचिदुत्पत्तिसमये दलद्वयं यस्य भवति तद्भूतपूर्वगत्या द्विदलमुच्यते इत्याहुः । उदाहरन्ति च 'बीजमेव समुद्भूतं द्विदलं चाङ्कुरं विना । दृश्यते यत्र सस्येषु द्विदलं तन्निगद्यते ।' अन्ये तु-लक्षणायां मानाभावाद्वचनस्य च निर्मूलत्वाद्द्विदलात्मकं यस्य स्वरूपं तदेव विवर्जयेदित्याहुः । अन्यान्यपि वर्ज्यान्युक्तानि पाद्मे-'पलाण्डुं लशुनं हिङ्गुं छत्राकं गृञ्जनं तथा । नालिकां मूलकं शिग्रुं वर्जयेत्कार्तिके व्रती।अलाबुं वापि वृन्ताकं कूष्माण्डं बृहतीफलम् । कलिङ्गं च कपित्थं च वर्जयेद्वैष्णवो व्रती । कार्तिके तु विशेषेण राजमाषान्न भक्षयेत् । निष्पावान्मुनिशार्दूल यावदाभूतनारकी।' इति । पटोलान्यपि न भक्षयेदित्यादि । लघुनारदीये-'कार्तिके वर्जयेत्तैलं कार्तिके वर्जयेन्मधु। कार्तिके वर्जयेत्कांस्यं कार्तिके शुक्तसंधितम् ।' कांस्यं तत्पात्रभोजनम् । कार्तिके यत्यादिर्मासोपवासं कुर्यान्न तु गृहस्थः । 'वानप्रस्थो यतिर्वापि नारी वा विधवा मुने । मासोपवासं कुर्वीत गुरोर्विप्राज्ञया यतः । आश्विनस्यामले पक्षे एकादश्यामुपोषितः । व्रतमेतत्तु गृह्णीयाद्यावत्त्रिंशद्दिनानि तु ।' इति प्रकृत्य न गृहस्थश्चरेद्व्रतमिति पाद्मोक्तेः । संधितं लवणशाकः । यत्स्वयमनम्लं केवलकालपरिवासेन द्रव्यान्तरसंसर्गकालपरिवासाभ्यां वा अम्लीभवति तच्छुक्तमिति मिताक्षरायाम् । तथा 'कार्तिके कृच्छ्रसेवी यः प्राजापत्यपरोऽथ वा । एकान्तरोपवासी वा त्रिरात्रोपोषितोऽपि वा । यद्वा द्वादशपक्षं वा मासं वा वरवर्णिनि । एकभक्तेन नक्तेन तथैवाया-

चितेन च । उपवासेन भैक्ष्येण व्रतमेतत्परं पदम्।' तथा कार्तिके आकाशदीप उक्तो निर्णयामृते पुष्करपुराणे—'तुलायां तिलतैलेन सायंकाले समागते । आकाशदीपं यो दद्यान्मासमेकं हरिं प्रति । महतीं श्रियमाप्नोति रूपसौभाग्यसंपदम्।' इति । तद्विधिश्च हेमाद्रौ आदित्यपुराणे—'दिवाकरेऽस्ताचलमौलिभूते गृहाददूरे पुरुषप्रमाणम् । यूपाकृतिं यज्ञियवृक्षदारुमारोप्य भूमावथ तस्य मूर्ध्नि । यवाङ्गुलच्छिद्रयुतास्तु मध्ये द्विहस्तदीर्घा अथ पट्टिकास्तु। कृत्वा चतस्रोऽष्टदलाकृतीस्तु याभिर्भवेदष्टदलानुसारी। तत्कर्णिकायां तु महाप्रकाशो दीपः प्रदेयो दलगास्तथाऽष्टौ । निवेद्य धर्माय हराय भूम्यै दामोदरायाथ च धर्मराज्ञे । प्रजापतिभ्यस्त्वथ सत्पितृभ्यः प्रेतेभ्य एवाथ तमःस्थितेभ्यः ।' इत्यादि विस्तरस्तत्रैव बोध्यः । अपरार्के भविष्योत्तरे तु—'विष्णोरायतने यस्तु सहस्रं यदि दीपकान् । प्रज्वालयत्यनुदिनं दिवारात्रमनिर्वृतः । तामिस्रमश्वयुक्पक्षं शुक्लपक्षं तु कार्तिकम् । स याति भवनं विष्णोस्तेजोमयवपुः पुमान् ।' दीपदाने मन्त्र उक्तो यथा—'दामोदराय तमसि तुलायां दोलया सह । प्रदीपं ते प्रयच्छामि नमोनन्ताय वेधसे ।' इति । अन्यदपि स्कान्दे—'व्रीहयो यवगोधूमाः प्रियङ्गुतिलशालयः । एते हि सात्त्विकाः प्रोक्ताः स्वर्गमोक्षफलप्रदाः ।' काशीखण्डे 'ऊर्जे यवान्नमश्नीयाद्देवान्नमथ वा पुनः । वृन्ताकं सूरणं चैव शूकशिम्बीश्च वर्जयेत् ।' पृथ्वीचन्द्रोदये पाद्मे—'नोर्जोवन्ध्यो विधातव्यो व्रतिना केनचित्क्वचित् । अव्रतेन क्षपेद्यस्तु मासं दामोदरप्रियम् । तिर्यग्योनिमवाप्नोति नात्र कार्या विचारणा ।' अन्यान्यपि ताम्बूलतैलकेशकर्तनादिवर्जनसंकल्पयुक्तानि प्रागुक्तानि । अत्रैव प्रसङ्गाद्भीष्मपञ्चकव्रतं लिख्यते । धर्मसिन्धुः—एकादश्यादिदिनपञ्चके भीष्मपञ्चकव्रतम् । तच्च शुद्धैकादश्यामारभ्य चतुर्दश्यविद्धौदयिकपौर्णमास्यां समापनीयम् । यदि शुद्धैकादश्यामारम्भे क्षयवशेन पौर्णमास्यां पञ्चदिनात्मकव्रतसमाप्तिर्न घटते तदा विद्धैकादश्यामप्यारम्भः । शुद्धैकादश्यामारम्भेऽपि दिनवृद्धिवशेन परविद्धपौर्णमास्यां समापने यदि षड्दिनापत्तिस्तदा चतुर्दशीविद्धपौर्णमास्यामपि समाप्तिः कार्या । व्रतप्रयोगः कौस्तुभादौ द्रष्टव्यः । नारदीयपुराणे—नारद उवाच—'यदेतदचलं पुण्यं व्रतानां परमं व्रतम् । कर्तव्यं कार्तिके मासि प्रयत्नाद्भीष्मपञ्चकम् । विधानं तस्य विस्पष्टं फलं च सुरसत्तम । कथयस्व प्रसादेन मुनीनां हितकाम्यया ।' ब्रह्मोवाच—"प्रवक्ष्यामि महापुण्यं व्रतं व्रतवतां वर । भीष्मेणैतद्यतः प्राप्तं व्रतं पञ्चदिनात्मकम् । सकाशाद्वासुदेवस्य तेनोक्तं भीष्मपञ्चकम् । व्रतस्यास्य गुणान्वक्तुं कः शक्तः केशवादृते ।

व्रतं चैतन्महापुण्यं महापातकनाशनम् । अतो नरैः प्रयत्नेन कर्तव्यं भीष्मपञ्चकम् । कार्तिकस्यामले पक्षे स्नात्वा सम्यग्यतव्रतः । एकादश्यां तु गृह्णीयाद्व्रतं पञ्चदिनात्मकम् । प्रातः स्नात्वा विधानेन मध्याह्ने च तथा व्रती । नद्यां निर्झरगर्ते वा समालभ्य च गोमयम् । यवव्रीहितिलैः सम्यक्पितॄन्संतर्पयेत्क्रमात् । स्नात्वा मौनं ततः कृत्वा धौतवासा दृढव्रतः । ततः संपूजयेद्देवं सर्वपापहरं हरिम् । स्नापयेच्चाच्युतं भक्त्या मधुक्षीरघृतेन च । तथैव पञ्चगव्येन गन्धचन्दनवारिणा । चन्दनेन सुगन्धेन कुङ्कुमेनाथ केशवम् । कर्पूरोशीरमिश्रेण लेपयेद्गरुडध्वजम् । अर्चयेदुचितैः पुष्पैर्गन्धधूपसमन्वितैः । गुग्गुलुं घृतसंयुक्तं दहेदक्षयभक्तिमान् । दीपकं तु दिवारात्रौ दद्यात्पञ्च दिनानि तु । नैवेद्यं देवदेवस्य परमान्नं निवेदयेत् । एवमभ्यर्च्य देवेशं स्तुत्वा चैव प्रणम्य च । ॐ नमो भगवते वासुदेवेति जपेदष्टोत्तरं शतम् । जुहुयाच्च घृताभ्यक्तं तिलव्रीहियवं व्रती। षडक्षरेण[1] मन्त्रेण स्वाहाकारान्वितेन च। उपास्य पश्चिमां संध्यां प्रणम्य गरुडध्वजम् । जपित्वा पूर्ववन्मन्त्रं क्षितिशायी भवेन्नरः । सर्वमेतद्विधानं तु कार्यं पञ्चदिनेष्वपि । विशेषोक्तं[2] व्रतं चास्मिन्यदन्यूनं शृणुष्व तत्। प्रथमेऽह्नि हरेः पादौ पूजयेत्कमलैर्नरः । द्वितीये बिल्वपत्रेण जानुदेशं समर्चयेत् । पूजयेच्च तृतीयेह्नि नाभिं भृङ्गारकेण तु । बाणबिल्वजपाभिश्च ततः स्कन्धौ समर्चयेत् । ततोऽनु पूजयेच्छीर्षं मालत्या चक्रपाणिनः । कार्तिक्यां देवदेवस्य भक्त्या तद्गतमानसः । पूजयेज्जपमन्त्रेण गन्धधूपं निवेदयेत् । अर्चयित्वा हृषीकेशमेकादश्यां समाहितः । त्रिःप्राश्य गोमयं सम्यगेकादश्यामुपावसेत् । गोमूत्रं मन्त्रवद्भूयो द्वादश्यां प्राशयेद्व्रती । क्षीरं चैव त्रयोदश्यां चतुर्दश्यां तथा दधि । संप्राश्य कायशुद्ध्यर्थं लङ्घनीयं चतुर्थकम् । प्राशनं होममन्त्रेण कर्तव्यं भूतिमिच्छता । पञ्चमे तु दिने स्नात्वा विधिवत्पूज्य केशवम् । भोजयेद्ब्राह्मणान्भक्त्या तेभ्यो दद्याच्च दक्षिणाम् । ततो नक्तं समश्नीयात्पञ्चगव्यपुरःसरम् । एवं सम्यक्समाप्यं स्याद्यथोक्तं व्रतमुत्तमम् । जन्मप्रभृति यन्मांसं त्यक्त्वा फलमवाप्नुयात् । तत्फलं समवाप्नोति तत्त्यक्त्वा भीष्मपञ्चके । मद्यपो यस्त्यजेन्मद्यं जन्मतो मरणान्तिकम् । तद्भीष्मपञ्चके त्यक्त्वा संप्राप्नोत्यधिकं फलम्।' भविष्योत्तरे—श्रीकृष्ण उवाच—'कार्तिके शुक्लपक्षस्य शृणु धर्मं पुरातनम् । एकादश्यां समारभ्य विज्ञेयं भीष्मपञ्चकम् । दुष्करं सत्त्वहीनानामशक्यं बालचेतसाम् । पापर्द्धिः परिहर्तव्या ब्रह्मचर्येण निष्ठया । मद्यं मांसमसत्यं च वर्जये-

---

१ 'ॐनमो भगवते' इति षडक्षरः । २—विशेषोक्तं दिनविशेषपुरस्कारेणोक्तम् ।

स्यापमाषणम् । शाकाहारेण मुन्यन्नैः कृष्णार्चनपरैर्नरैः । स्त्रीभिर्वाक्येन कर्तव्यं स्वपतेःपुण्यवर्धनम्।विधवाभिस्तु कर्तव्यं पुत्राणां शुभवृद्धये।सर्वकामसमृद्ध्यर्थं मोक्षार्थं चैव पाण्डव।नित्यं स्नानेन दानेन कार्तिकी यावदेव तु । वैश्वदेवैस्तु कर्तव्यो विष्णुध्यानपरायणैः । यमस्य प्रतिमा कार्या रौद्रवक्त्राऽतिभीषणा । खङ्गहस्ताऽतिविकृता लौही दंष्ट्राकरालिनी । तिलप्रस्थोपरि स्थाप्या कृष्णवस्त्रेण वेष्टिता । रक्तपुष्पकृतापीडा ज्वलत्काञ्चनकुण्डला । संपूज्य परया भक्त्या धर्मराजस्य नामभिः । इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः । यदन्यजन्मनि कृतमिह जन्मनि वा पुनः । पापं प्रशममायातु तव पादप्रसादतः । एवं संपूज्य विधिवत्प्रतिमा च सकाञ्चना । वाचकाय प्रदातव्या धर्मो मे प्रीयतामिति । तद्वच्च देवदेवस्य कृष्णस्याक्लिष्टकारिणः । कृत्वा पूजां यथाशक्त्या विप्राणां वेदवेदिनाम् । दद्याद्धिरण्य गां चैव कृष्णो मे प्रीयतामिति । कृतकृत्यः स्थिरो भूत्वा विरक्तः सयतो भवेत् । शान्तचेता निराबाधः परं पदमवाप्नुयात् । नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुजः । अष्टपादैकनयनः शङ्कुकर्णो महास्वनः। जटी द्विजिह्वस्ताम्रास्यो मृगराजतनुच्छदः । चिन्तनीयो महादेवो यस्य रूपं न विद्यते । ' व्रतदेवताया महाविष्णोरिदं रूपं चिन्त्यं पूज्यं देयं च । मृगराजतनुच्छदः प्राकृतसिंहत्वक्। पाद्मे तु—'स्नात्वा मौनं नरः कृत्वा धौतवासा दृढव्रतः । भीष्मायोदकदानं च अर्घ्यं चैव प्रयत्नतः । पूजा भीष्मस्य कर्तव्या दानं दद्यात्प्रयत्नतः । पञ्चरत्नं विशेषेण दद्याद्विप्राय यत्नतः ।' अर्घ्योदकदानमन्त्रौ भीष्माष्टमीप्रकरणे द्रष्टव्यौ । 'इदं भीष्मेण कथितं शरतल्पगतेन मे । तदेतत्ते मयाख्यातं दुष्करं भीष्मपञ्चकम् । धन्यं पुण्यं पापहरं युधिष्ठिर महाव्रतम् । यच्चीर्त्वा ब्रह्महा गोघ्नः सर्वपापैः प्रमुच्यते । यद्भीष्मपञ्चकमिति प्रथितं पृथिव्यामेकादशीप्रभृति पञ्चदशीनिरुद्धम् । मुन्यन्नभोजनपरस्य नरस्य तस्मिन्निष्टं फलं दिशति पाण्डव शार्ङ्गधन्वा।'इति भीष्मपञ्चकम् । अथ कार्तिकोद्यापनविधिः । 'अथोर्जव्रतिनः सम्यगुद्यापनविधिं नृप । तं शृणुष्व मयाख्यातं संविधानं विशेषतः । ऊर्जशुक्लचतुर्दश्यां कुर्यादुद्यापनं व्रती । व्रतसंपूर्णतार्थाय विष्णुप्रीत्यर्थमेव च । तुलस्या उपरिष्टात्तु कुर्यान्मण्डपिकां शुभाम्। द्वारेषु द्वारपालांश्च पूजयेन्मृन्मयान्पृथक् । पुण्यशीलं सुशीलं च जयं विजयमेव च।

---

१—वैश्वदेवै. सर्वदेवताहोम. ताश्च विष्णुविभूतित्वेनभावनीया. । २सकाञ्चना सुवर्णदक्षिणायुता । ३—तद्वदिति यमप्रतिमावदेव । ४—दद्यादिति शेषः ।

तुलसीमूलदेशे तु सर्वतोभद्रमेव च। पञ्चभिर्वर्णकैः सम्यक्छोभाढ्यं समलंकृतम्। सपिधानं चोपरिष्टात्पञ्चरत्नसमन्वितम् । महाफलेन संयुक्तं कुम्भं तत्र निधाय च । पूजयेत्तत्र देवेशं शंखचक्रगदाधरम् । कौशेयपीतवसनं युक्तं जलधिकन्यया । इन्द्रादिलोकपालांश्च मण्डले पूजयेद्व्रती।द्वादश्यांप्रतिबद्धोऽसौ त्रयोदश्यां यतःसुरैः।दृष्टोऽर्चितश्चतुर्दश्यां तस्मात्पूज्यस्तथा त्विह । तस्यामुपवसेद्भक्त्या शान्तः प्रयतमानसः । पूजयेद्देवदेवेशं सौवर्णं गुर्वनुज्ञया । उपचारैः षोडशभिर्नानाभक्ष्यसमन्वितैः । रात्रौ जागरणं कुर्याद्गीतवाद्यादिमङ्गलैः । ततस्तु पौर्णमास्यां च सपत्नीकान्द्विजोत्तमान्। त्रिंशन्मितांस्तथा चैकं स्वशक्त्या वा निमन्त्रयेत् । अतो देवा इति द्वाभ्यां जुहुयात्तिलपायसम् । प्रीत्यर्थं देवदेवस्य देवानां च पृथक् पृथक् । दक्षिणां च यथाशक्ति प्रदद्यात्प्रणमेच्च तान् । गुरुं व्रतोपदेष्टारं वस्त्रालंकरणादिभिः । सपत्नीकं समभ्यर्च्य तांश्च विप्रान्क्षमापयेत् । युष्मत्प्रसादाद्देवेशः प्रसन्नो मम सर्वदा। व्रतादस्माच्च यत्पापं सप्तजन्मकृतं मया । तत्सर्वं नाशमायातु स्थिरा मे चास्तु संततिः । मनोरथाश्च सफलाः सन्तु नित्यं तवार्चनात् । देहान्ते वैष्णवं स्थानं प्राप्नुयामतिदुर्लभम् । इति क्षमाप्य तान्विप्रान्प्रसाद्य च विसर्जयेत् । तामर्चां गुरवे दद्याद्वस्त्रयुक्तां तदा व्रती । ततो गां कपिलां दद्याच्छय्यां सोपस्करां तथा । ततः सुहृद्गुरुयुतः स्वयं भुञ्जीत भक्तितः । कार्तिके वाथ तपसि विधिरेवंविधो मतः ।' इति । कपिलाधेनुदानं मदनरत्ने व्यासः— 'रुक्मशृङ्गीं रौप्यखुरां सवस्त्रां कांस्यदोहनाम् । सवत्सां कपिलां दत्त्वा वंशान्सप्त समुद्धरेत् । यावन्ति चास्य रोमाणि सवत्साया भवन्ति हि । सुरभीलोकमासाद्य रमते तावतीः समाः ।' अस्या दानमन्त्रो मत्स्यपुराणे— 'कपिले सर्वभूतानां पूजनीयासि रोहिणी । तीर्थदेवमयी यस्मादतः शान्तिं प्रयच्छ मे ।' यमः— 'रुक्मशृङ्गीं रौप्यखुरां मुक्तालाङ्गलभूषिताम् । कांस्योपदोहनां धेनुं वस्त्रच्छन्नामलंकृताम् । दत्त्वा द्विजेन्द्राय नरः स्वर्गलोके महीयते । दशधेनुप्रदानेन तुल्यैका कपिला तथा ।' आदित्यपुराणे—सहस्रं यो गवां दद्यात्कपिलां वापि सुव्रत । सममेव पुरा प्राह ब्रह्मा ब्रह्मविदां वरः ।' कूर्मपुराणे—'दशसौवर्णिके शृङ्गे खुराः पञ्चपलान्विताः।पञ्चाशत्पलिकं ताम्रं कांस्यं वै तावदेव च । वस्त्रं तु त्रिगुणं धेन्वा दक्षिणा च चतुर्गुणा । एतैरलंकृतां धेनुं घण्टाभरणभूषिताम् । कपिलां विप्रमुख्याय दत्त्वा मोक्षमवाप्नुयात् । द्विगुणोपस्करोपेता महती परिकीर्तिता । दत्ता सा विप्रमुख्याय स्वर्गमोक्षफलप्रदा । सप्तजन्मकृतात्पापान्मुच्यते दशसंयुतः [१] । यान्यान्प्रार्थयते कामांस्तांस्तानाप्नोति मानवः । अन्ते

---

१—दशसंयुतः दशभिः पुत्रादिभि. पुरुषैः संयुतः ।

स्वर्गापवर्गौ च फलमाप्नोत्यसंशयम् ।' वस्त्रदक्षिणयोस्त्रैगुण्यादिकं गोदानसामान्योपकल्पवस्त्राद्यपेक्षयेति ज्ञातव्यम् । विधिस्तु गोदानप्रकरणे वक्ष्यते । इयमेव वर्णभेदेन दशधोक्ता वराहपुराणे—' सुवर्णकपिला पूर्वा द्वितीया गौरपिङ्गला । तृतीया चैव रक्ताक्षी चतुर्थी गुडपिङ्गला । (१) नवमी पाटला ज्ञेया दशमी पुच्छपिङ्गला । एता दश समाख्याताः कपिलास्ते वरानने । सर्वा ह्येता महाभागास्तारयन्ति न संशयः । संगमेषु प्रशस्ताश्च सर्वपापप्रणाशनाः ।' अतिदाननिरूपणं भविष्यत्पुराणे—'त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती । नरकादुद्धरन्त्येता जपवापनदोहनैः ।' तत्र गोदाननिरूपणं महाभारते—' दानानामिह सर्वेषां गवां दानं विशिष्यते । गावः श्रेष्ठाः पवित्राश्च पावना जगदुत्तमाः । ऋते दधिघृताभ्यां च नेह यज्ञं प्रवर्तते । तेन यज्ञमशेषं च गोमूलं संप्रचक्षते ।' लिङ्गपुराणे—'अग्न्यगाराणि विप्राणां देवतायतनानि च । पूयन्ते शकृता यासां किं देयमधिकं ततः ।' हारीतः—'बहुक्षीरां च यो गां वै ब्राह्मणायोपपादयेत् । उत्तारयेत्स आत्मानं सप्तसप्त कुलानि च ।' देवलः—' सुशीलां लक्षणवतीं युवतीं वत्ससंयुताम् । बहुदुग्धवतीं स्निग्धां धेनुं दद्याद्विचक्षणः ।' महाभारते—'प्रासादा यत्र सौवर्णाः शय्या रत्नोज्ज्वलास्तथा । वराश्चाप्सरसो यत्र तत्र गच्छन्ति गोप्रदाः ।' तथा—'यावन्ति रोमाणि भवन्ति धेन्वास्तावन्ति वर्षाणि महीयते स्वः । स्वर्गाच्च्युतस्यापि ततोऽत्र लोके कुले समुत्पत्स्यति गोमतां सः ।' जाबालिः—'होमार्थमग्निहोत्रस्य यो गां दद्यादयाचिताम् । त्रिर्वित्तपूर्णपृथिवी तेन दत्ता न संशयः ।' आत्रेयः—'अकुलीनाय मूर्खाय लुब्धाय पिशुनाय च । हव्यकव्यव्यपेताय गौर्न देया कथंचन ।' ब्रह्मपुराणे—'पीतोदकां जग्धतृणां दुग्धदोहां निरिन्द्रियाम् । उन्मत्तामङ्गहीनां च मृतवत्सां महाशनाम् । केशचेलपुरीषास्थिक्रव्यादां संधिनीं खलाम् । पुटधेनुं पलमूत्रां नित्यं प्रस्रवणस्तनीम् । न दद्याद्ब्राह्मणेभ्यश्च सदोषवृषभां तथा ।' पीतोदकां जग्धतृणामिति वृद्धोपलक्षणम् । दुग्धदोहा स्वकीयस्तनपायिनी । पुटधेनुर्बालवत्सैव या गर्भिणी । व्यासः—'न कृशां पापवत्सां वा वन्ध्यां रोगान्वितां तथा । न व्यङ्गां न परिश्रान्तां दद्याद्गां ब्राह्मणाय वै ।' विश्वामित्रः—'नैकशृङ्गां चलच्छृङ्गां स्फुटिताक्षीं चलत्खुराम् । न दद्यात्त्रिस्तनीं चैव गां शुभामेव दापयेत् ।' महाभारते—'अन्तर्जाताः शक्र या ज्ञानलब्धाः प्राणक्रीता निर्जिताः स्वौकजाश्च । कृच्छ्रोत्सृष्टाः पोषणाभ्यागताश्च द्वारैरेतैर्गोविशेषाः

१ इत पूर्वं किञ्चित्स्खलितं तद्ग्रन्थान्तरतो दृष्ट्वा त्रुटिरूपेणलेखणीयम् ।

प्रशस्ताः ।' अन्तर्जाता गर्भिण्यः । ज्ञानं विद्या । प्राणक्रीता भृतिलब्धाः । निर्जिता युद्धादिना । स्वौकजा गृहजाताः । कृच्छ्रोत्सृष्टाः इत्यादि । व्याध्याक्रान्ताः सत्यः स्थानात्त्यक्ताः स्वयं पोषणं कृत्वा लब्धाः । तत्रैव—'एकां गां दशगुर्दद्याद्दश दद्याच्च गोशती । शतं सहस्रगुर्दद्यात्सर्वे तुल्यफलान्विताः ।' नन्दिपुराणे—'विधिना तु यदा दत्ता पात्रे धेनुः सदक्षिणा । तदा तारयते जन्तून्कल्पानामयुतैः शतैः ।' अथ गोदान-विधिः । विश्वामित्रः—'प्राङ्मुखीं गामवस्थाप्य सवत्सां तां सुपूजिताम् । पुच्छदेशे तु दाता वै स्नातो बद्धशिखो भवेत् । उदङ्मुखस्तु विप्रः स्यात्पात्रलक्षणलक्षितः । आज्यपात्रं करे कृत्वा कनकेन समन्वितम् । निक्षिप्य पुच्छं तस्मिंस्तु घृतदिग्धं प्रगृह्य च । सतिलं विप्रपाणिं तु प्रागग्रं तु निधापयेत् । सतिलं सकुशं वापि गृहीत्वा दानमाचरेत् । अनेनैव तु मन्त्रेण पात्रहस्ते जलं क्षिपेत् । यज्ञसाधनभूता या विश्वस्याघप्रणाशिनी । विश्वरूपधरो देवः प्रीयतामनया गवा । अनुव्रज्य च तां धेनुं ब्राह्मणेन समन्विताम् । गोमतीं तु ततो विद्यां जपेत प्रयतः शुचिः । उद्दिश्य वासुदेवं च प्रीयतामिति चानघ । पात्रं मनसि संचिन्त्य तोयमप्सु विनिक्षिपेत् । जलशायी ब्रह्मपिता पद्मनाभः सनातनः । अनन्तभोगशयनः प्रीयतां परमः पिता ।' गोमती-विद्या महाभारते दर्शिता—'गावो मामुपतिष्ठन्तु हेमशृङ्ग्यः पयोमुचः । सुरभ्यःसौरभेय्यश्च सरितः सागरंयथा।गा वै पश्याम्यहं नित्यं गावः पश्यन्तु सर्वदा। गावोस्माकं वयं तासां यतो गावस्ततो वयम् ।'तथा यमेनाऽपि—'गावः सुरभयो नित्यं गावो गुग्गुल-संनिभाः । गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् । अन्नमेव परं गावो देवानां हविरुत्तमम् । पावनं सर्वभूतानां रक्षन्ति च वहन्ति च । हविष्यमन्त्रपूतेन तर्पय-न्त्यमरान्दिवि । ऋषीणामपि होतॄणां गावो होमे प्रतिष्ठिताः । सर्वेषामेव भूतानां गावः शरणमुत्तमम् । गावः पवित्रं परमं गावो मङ्गलमुत्तमम् । गावः सर्वस्य लोक-स्य गावो धन्याः सवाहनाः । नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च । नमो-ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः । ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् । एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति ।' इति । अथ दक्षिणामाह वसिष्ठः—'सुवर्णदक्षिणामाहुर्गोप्रदाने विशेषतः । सुवर्ण परमं ह्याहुर्दक्षिणार्थे न संशयः । गोप्रदानं तारयते सप्त पूर्वान्परांस्तथा । सुवर्णदक्षिणां दत्वा तावद्द्विगुणमश्नुते । सुवर्णं परमं दानं सुवर्णं दक्षिणा परा । सुवर्णं पावनं प्राहुः परिमाणं परं तथा '। अत्र परिमाणं परं तथेत्यत्रापि सुवर्णशब्दसंबन्धात्परिमाणविशेषावगतेरे-

च्छिक्यपरिमाणसुवर्णदक्षिणादानं व्यावर्त्यते । तच्च शक्तविषयम् । अशक्तस्य तु—' यजमानस्ततो दद्याद्यथाशक्त्या तु दक्षिणाम् ।' इति ब्रह्मवैवर्तवाक्येन ततोऽल्पाया अपि दक्षिणाया अभ्यनुज्ञानात् । गोदानमात्रप्रार्थनामन्त्रमाह वसिष्ठः—' घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः । घृतनद्यो घृतावर्तास्ता मे सन्तु सदा गृहे । घृतं मे हृदये नित्यं घृतं नाभ्यां प्रतिष्ठितम् । घृतं मे सर्वतश्चैव गवां मध्ये वसाम्यहम् ।' इति गोदानविधिः । इति कार्तिकोद्यापनविधिः । इति कार्तिकीकृत्यम् ।

अथ मार्गशीर्षीकृत्यम् । अस्यां चन्द्रपूजा कार्या । तदुक्तं निर्णयामृते ब्रह्मपुराणे मार्गशीर्षतिथिप्रक्रमे—' वामनेत्रं हि यद्विष्णोस्तदेव भुवनत्रयम् । अनसूया यतश्चन्द्रममृतेनाभ्यषेचयत् । पौर्णमास्यां च तस्मात्तं पूजयेत्तत्र सर्वदा । शुक्लैः पुष्पैश्च पयसा स्नापयेत्पयसा मुदा । रत्नैर्दीपैश्च बलिभिर्होमैर्ब्राह्मणतर्पणैः । गोभ्यश्च लवणं देयं तस्मिन्नहनि सर्वदा । यतश्च लवणं चन्द्राद्दक्षशापाद्विनिःसृतम् । माता स्वसा च दुहिता संपूज्याश्च कुलाङ्गनाः । कान्तिर्लक्ष्मीश्च कल्याणं पूर्णेन्दोः पूजनादिति ।' भवेदिति शेषः । अस्यां प्रत्यवरोहणं कार्यम् । तदुक्तमाश्वलायनेन—मार्गशीर्ष्यां प्रत्यवरोहणं चतुर्दश्यां पौर्णमास्यां वेति । अस्यामेव मृगशिरोनक्षत्रयुक्तायां ससुवर्णचूर्णितलवणं देयम् । तदुक्तं विष्णुना—' मार्गशीर्षशुक्लपञ्चदश्यां मृगशिरोयुक्तायां चूर्णितलवणस्य सुवर्णनाभं प्रस्थमेकं चन्द्रोदये ब्राह्मणाय प्रतिपादयेत् । अनेन कर्मणा सौभाग्यभागभिजायते इति । अस्यां दत्तात्रेयोत्पत्तिः । तदुक्तं स्कान्दे सह्यखण्डे—' मार्गशीर्षे तथा मासि दशमेऽह्नि सुनिर्मले । मृगशीर्षयुते पौर्णमास्यां जस्य च वासरे । जनयामास देदीप्यमानं पुत्रं सती शुभम् । तं विष्णुमागतं ज्ञात्वा अत्रिर्नामाकरोत्स्वयम् । दत्तवान्स्वस्य पुत्रत्वाद्दत्तात्रेयमितीश्वरम् ।' इति । दशमे मासीत्यन्वयः । इयं पूर्वविद्धा ग्राह्येति वदंति । प्रदोषव्यापिनीति निर्णयसिन्धौ । अस्यामेव चन्द्रव्रतारम्भः कार्यः । तदुक्तं हेमाद्रौ विष्णुधर्मोत्तरे—मार्कण्डेय उवाच—' मार्गशीर्षादथारभ्य चन्द्रमण्डलके नरः । सोपवासः पौर्णमास्यां पूज्ययज्ञफलं लभेत् । नक्ताशनस्तु संपूज्य चाग्निष्टोमफलं लभेत् । कृत्वा व्रतं वत्सरमेतदिष्टं प्राप्नोति लोकांश्च निशाकरस्य । तत्रोष्य लोके सुचिरं स कालं सायुज्यमायाति ततस्तु शंभोः ।' इति । इति मार्गशीर्षीकृत्यम् ।

अथ पौषीकृत्यम् । अस्यां पुष्यनक्षत्रयुक्तायामलक्ष्मीनाशनं स्नानादिकं कार्यम् । तदुक्तं निर्णयामृते भविष्यपुराणे— 'इदं जगत्पुरा लक्ष्म्या त्यक्तमासीत्ततो हरिः । पुरंदरश्च सोमश्च तथा पुष्यबृहस्पती । पञ्चैते पुष्ययोगेन पौर्णमास्यां तपोबलात् । लक्ष्मीयुक्तं पुनश्चक्रुः सौभाग्योत्सवकेलिभिः । तस्मान्नरैः पुष्ययोगे तत्र सौभाग्यवृद्धये । गौरसर्षपकल्केन समालभ्य स्वकां तनुम् । कृतस्नानैस्ततः कार्यमलक्ष्मीनाशनं परम् । उद्वर्त्य देवं च तथा सर्वौषधियुतैर्जलैः । स्नापयित्वा नवं वस्त्रं गृहीत्वाच्छादनं ततः । द्रष्टव्यं मङ्गलशतं धूपस्रङ्माल्यशोभितम् । ततो नारायणः शक्रश्चन्द्रः पुष्यबृहस्पती । संपूज्यः पुष्पधूपाद्यैर्नैवेद्यैश्च पृथक्पृथक् । प्रशस्तैर्वैदिकैर्मन्त्रैः कृत्वाग्निहवनं शुभम् । धनैर्विप्रांश्च संतर्प्य नवैर्वस्त्रैश्च शोभितान् । ततः पुष्टिकरं हृद्यं भोक्तव्यं घृतपायसम् । पुष्ययोगेन कर्तव्यं राज्ञः स्नानं तु सर्वदा ।' विष्णुस्मृतावपि— ' पौषी चेत्पुष्ययुक्ता स्यात्तस्यां गौरसर्षपकल्केनोत्सादितशरीरारोग्यगव्यघृतकुम्भेनाभिषिक्तः सर्वौषधिभिः सर्वगन्धैः सर्वबीजैश्च स्नातो घृतेन भगवन्तं वासुदेवं स्नापयित्वा पुष्पधूपदीपगन्धनैवेद्यादिभिरभ्यर्च्य वैष्णवैः सूक्तैर्बार्हस्पत्यैश्च मन्त्रैः पावकं हुत्वा ससुवर्णेन घृतेन ब्राह्मणं स्वस्ति वाचयेत् । वासोयुगं च कर्त्रे दद्यात् । अनेन कर्मणा पापान्मुच्यत इति । अन्यदपि—' ब्रह्मलोके तपस्तप्त्वा पितरो लेभिरेऽमृतम् । पौषे तु पुष्यनक्षत्रे पिष्टकैर्विविधैः पितॄन् । अभ्यर्चयेत्तथा देवान्द्विजानात्मानमेव च ' इति । अस्यामेव ईशानव्रतं कार्यम् । तदुक्तं हेमाद्रौ कालिकापुराणे—अनिलाद उवाच—अथोपोष्य चतुर्दश्यां पौर्णमास्यां गुरोर्दिने । पूजयेद्विधिनाऽनेन लिङ्गं शार्वं निबोध मे । ब्रह्माणं पश्चिमे भागे वामे लिङ्गस्य वै हरिम् । खखोल्कं[1] दक्षिणे रौद्रमीश्वरं प्राग्दिशि स्थितम् । ईशानं मध्यमे देशे पूर्वाह्णे चैव पूजयेत् । विलिप्यागुरुचन्द्रेण[2] कुसुमैश्च सुगन्धिभिः । गुग्गुलुं चाज्यसंयुक्तमगुरुं वासितं शुभम् । दद्यान्नीराजनं कुर्याद्दत्त्वा वै युग्मपञ्चकम्[3] । नैवेद्याद्यं बलिं चैव पूर्ववत्स्वगृहं व्रजेत् । पञ्चगव्यं ततः प्राश्य आचार्यं ब्राह्मणांस्तथा । व्रतिनो मिथुनान्येव भोजयेच्च स्वशक्तितः । हेमवस्त्रादिकं चैव यत्नात्कृत्वाऽथ कल्पयेत् । ततो देवः प्रपूज्यो वै नैवेद्याद्यं नियोज्य च । नत्वाग्निं पूजयित्वा तु पञ्चवक्त्रं शिवं स्मरेत् । प्राप्तेऽब्दे पञ्चमे गावः पञ्च पञ्च नियोजयेत् । तेषामुद्दिश्य तेष्वेव न्यूनं वापि ततोऽधिकम् ।' पञ्च पञ्चेति वचनाद्द्वितीये द्वे द्वे तृतीये तिस्रः तिस्रः

१—खखोल्कः सूर्यः । २—चन्द्रः कर्पूरः । ३—युग्मं गोमिथुनम् ।

चतुर्थे चतस्रश्चतस्रः। वृषभस्तु प्रथमाब्दवदेक एव। तेषां ब्रह्मादीनां पञ्चानां वक्रदेवानां पञ्चवर्गानुद्दिश्य व्रते यन्न्यूनाधिक्यं तत्तेष्वेव विनियोजयेत्। 'निखिलं प्राग्विशेषं च कर्तव्यं तत्पदेप्सुभिः। सुखकीर्तिश्रियोर्थे च इहैव विभवाय च। रहस्यमेतद्यथोक्तं न देयं यस्य कस्यचित्' इतीशानव्रतम्। इति पौषीकृत्यम्।

अथ माघपौर्णमासीकृत्यम्। अस्यां मघायुक्तायां तिलैः श्राद्धं तिलादिदानं च कुर्यात्। तदुक्तं विष्णुना माघी मघायुक्ता चेत्तस्यां तिलैः श्राद्धं कृत्वा पूतो भवेदिति। भविष्योत्तरेऽपि—'माघ्यां मघासु तु तिलैः संतर्प्य पितृदेवताः। तिलपात्राणि देयानि तिलाश्च सफलौदनाः। कार्पासदानमत्रैव तिलदानं च शस्यते। कम्बलाजिनरत्नानि मोचकौ पापमोचकौ। उपानद्दानमत्रैव कथितं सर्वकामदम्। यत्र वा तत्र वा स्नानं दानं वित्तानुसारतः।' एतच्च वैशाखीकृत्यप्रसङ्गेन विस्तरेण प्रागुक्तम्। कृत्यरत्नावल्यां तु अत्रान्यथा पाठः। 'उपानद्दानमत्रैव तुल्यमश्वरथेन तु। यत्र वा तत्र वा स्नानं दानमत्र प्रशस्यते। भगिनीभागिनेयानां मातुलानां पितृष्वसुः। दरिद्राणां च बन्धूनां दानं कोटिगुणोत्तरम्।' इति। तथा 'तिलपात्राणि देयानि कञ्चुकाः कम्बलास्तथा' इति। 'वासांसि विविधानि च' इत्यग्रे उक्तत्वाद्वस्त्रदानमप्यत्र बोध्यम्। 'पौर्णमास्यां तु यो माघे पूजयेद्विधिवच्छिवम्। सोऽश्वमेधमवाप्येह विष्णुलोके महीयते।' इति। तत्र तिलपात्रदानमन्त्रः—'देवदेव जगन्नाथ वाञ्छितार्थफलप्रद। तिलपात्रं प्रदास्यामि तवाङ्गे संस्थितेऽरहम्। तिलाः स्वर्णसमायुक्ता दुरितक्षयकारकाः। विष्णुप्रीतिकरा नित्यमतः शान्तिं प्रयच्छ मे।' ब्रह्मपुराणे—'ताम्रपात्रं तिलैः पूर्णं प्रस्थमात्रं द्विजाय तु। सहिरण्यं च यो दद्याच्छ्रद्धावित्तानुसारतः। सर्वपापविशुद्धात्मा लभते तु परां गतिम्।' इति तिलपात्रदानविधिः। विशेषमाह—'ताम्रपात्रे तिलान्कृत्वा पलषोडशकल्पिते। सहिरण्ये स्वशक्त्या वा विप्राय प्रतिपादयेत्। नाशयेत्त्रिविधं पापं वाङ्मनःकायसंभवम्।' कूर्मपुराणे—'तिलपूर्णं ताम्रपात्रं सहिरण्यं द्विजातये। प्रातर्दत्त्वा तु विधिवद्दुःस्वप्नं प्रतिहन्ति सः। तिलपात्रं त्रिधा प्रोक्तं कनिष्ठोत्तममध्यमम्। ताम्रपात्रं दशपलं जघन्यं परिकीर्तितम्। द्विगुणं मध्यमं प्रोक्तं त्रिगुणं चोत्तमं स्मृतम्। स्वर्णमेकं जघन्ये तु द्विगुणं मध्यमे क्षिपेत्। त्रिगुणं चोत्तमं तद्वत्सुवर्णं परिकीर्तितम्। सुवर्णदक्षिणां दत्त्वा सर्वपापक्षयो भवेत्।' इति महातिलपात्रदानविधिः। केवलतिलपात्रदानमन्त्रः—'तिलाः पापहरा नित्यं विष्णोर्देहसमुद्भवाः। तिलदानेन सर्वं मे पापं नाशय केशव।' इति। कम्बलदानमन्त्रः—'और्णपट्टमनुध्येयं स्वर्णबीजं तव प्रभो। दत्तं गृहा

देवेश पापं संहर सत्वरम्।' इति। मदनरत्ने तु--'जीर्णमेषसमुत्पन्ना शीतवातभयापहा। तस्मात्तुषारहारी स्यादतः शान्तिं प्रयच्छ मे।' वस्त्रस्य--'शरण्यं सर्वलोकानां लज्जाया रक्षणं परम्। सुवेषधारित्वं यस्माद्वासः शान्तिं प्रयच्छ मे।' रक्तवस्त्रस्य--'रक्तवस्त्रयुगं यस्मादादित्यस्य प्रियं सदा। प्रदानादस्य मे सूर्य अतः शान्तिं प्रयच्छ मे।' उपानद्दानमन्त्रः—'उपानहौ प्रदास्यामि कण्टकादिनिवारणे। सर्वस्थानेषु सुखदे अतः शान्तिं प्रयच्छमे।' रत्नस्य—'यथा रत्नेषु सर्वेषु सर्वे देवा व्यवस्थिताः। तथा शान्तिं प्रयच्छन्तु रत्नदानेन मे सुराः। तथान्यदपि यत्किंचिन्माघस्नाने प्रदीयते॥ तन्माघस्नायिनां देव विप्राणां भूतिमिच्छताम्। स्वल्पदानेऽपि दातव्यं माधवः प्रीयतामिति' इति। इयमेव योगविशेषेण महामाघी। तदुक्तं गार्ग्येण—'मेषराशौ यदा सौरिः सिंहे चन्द्रबृहस्पती। भास्करः श्रवणर्क्षे च महामाघीति सा स्मृता।' सौरिः शनैश्चरः। हेमाद्रौ ब्राह्मेऽपि—'मघास्थयोश्च जीवेन्द्वोर्महामाघीति कथ्यते।' इति। इयं प्रयागेऽतिप्रशस्ता। 'महामाघी प्रयागे' इति गार्ग्यवचनात्। अत्रैव प्रसङ्गान्माघस्नानविधिरुच्यते। तत्र कालमाह विष्णुः—'तुलामकरमेषेषु प्रातः स्नायी सदा भवेत्। हविष्यं ब्रह्मचर्यं च माघस्नाने महाफलम्।' इति। अत्र तुलामकरमेषेष्वित्यनेन सौरमास उक्तः। ब्राह्मे—'एकादश्यां शुक्लपक्षे पौषमासे समारभेत्। द्वादश्यां पौर्णमास्यां वा शुक्लपक्षे समापनम्।' इति पाद्मेऽपि—'पौषस्यैकादशीं शुक्लामारभ्य स्थण्डिलेशयः। मासमात्रं निराहारस्त्रिकालं स्नानमाचरेत्। त्रिकालमर्चयेद्विष्णुं त्यक्तभोगो जितेन्द्रियः। माघस्यैकादशी शुक्ला यावद्विद्याधरोत्तमा।' इति। त्रिकालस्नानं मासोपवासविषयम् निराहार इत्युक्तेः। पृथ्वीचन्द्रोदये पक्षान्तरमाह विष्णुः--'दर्शं वा पौर्णमासीं वा प्रारभ्य स्नानमाचरेत्। पुण्यान्यहानि त्रिंशत्तु मकरस्थे दिवाकरे।' इति। अत्र दर्शमिति शुक्लादिमुख्यचान्द्राभिप्रायेण। अयं तु पक्षो नेदानीं प्रचरति। अत्राधिकारिणो भविष्ये--'ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः। बालवृद्धयुवानश्च नरनारीनपुंसकाः। स्नात्वा माघे शुभे तीर्थे प्राप्नुवन्तीप्सितं फलम्।' पाद्मे—'सर्वेऽधिकारिणो ह्यत्र विष्णुभक्तौ यथा नृप।' ब्राह्मे--'उष्णोदकेन वा स्नानमशक्ये सति कुर्वते। दृढेषु सर्वगात्रेषु नोष्णोदकं विशिष्यते।' वैष्णवामृते गौडनिबन्धे च स्कान्दे--'पौष्यां तु समतीतायां यावद्भवति पूर्णिमा। माघमासस्य तावद्धि ज्ञा विष्णोर्विधीयते। पितॄणां देवतानां च मलकं नैव दापयेत्। ब्राह्मणो मूलकं

भुक्त्वा चरेच्चान्द्रायणं व्रतम् । अन्यथा याति नरकं क्षत्रं विट् शूद्र एव च । वर्जनीयं प्रयत्नेन मूलकं मदिरोपमम् ।' यदा तु माघो मलमासो भवति तदा काम्यानां तत्र समाप्तिनिषेधान्मासद्वयं प्रातः स्नानं तन्नियमाश्च कर्तव्याः । मासोपवासचान्द्रायणादि तु मलमास एव समापयेत् । तदुक्तं दीपिकायाम्—नियतत्रिंशत्रिंशद्दिनत्वाच्छुभे मास्यारभ्य समापयेन्मलिने वा सोपवासव्रतमिति । स्नानारम्भे च मन्त्रो विष्णुनोक्तः—'तत्र चोत्थाय नियमं गृह्णीयाद्विधिपूर्वकम् । माघमासमिमं पुण्यं स्नास्येऽहं देव माधव । तीर्थस्यास्य जले नित्यमिति संकल्प्य चेतसि ।' इति । 'ततः स्नात्वा शुभे तीर्थे दत्त्वा शिरसि वै मृदम् । वेदोक्तविधिना राजन्सूर्यायार्घ्यं निवेदयेत् । पितॄणां तर्पयित्वा तु अवतीर्य ततो जलात् ।' प्रत्यहं स्नानमन्त्रश्च पाद्मे—'दुःखदारिद्र्यनाशाय श्रीविष्णोस्तोषणाय च । प्रातः स्नानं करोम्यद्य माघे पापविनाशनम् । मकरस्थे रवौ माघे गोविन्दाच्युत माधव । स्नानेनानेन मे देव यथोक्तफलदो भव । इमं मन्त्रं समुच्चार्य स्नायान्मौनसमन्वितः ।' सेतौ—'ब्रह्मक्षत्रविशां चैव मन्त्रवत्स्नानमिष्यते । तूष्णीमेव तु शूद्राणां तथैव कुरुनन्दन । नमस्कारोऽथ वा कार्यः सर्वपापौघहानिदः ।' इति । प्रत्यहं सूर्यार्घ्यमन्त्रश्च पृथ्वीचन्द्रोदये पाद्मे—'सवित्रे प्रसवित्रे च परं धाम जले मम । त्वत्तेजसा परिभ्रष्टं पापं यातु सहस्रधा ।' इति । स्नानकालश्च सूर्योदयः । त्रिस्थलीसेतौ—'संप्राप्ते माघमासे तु तपस्विजनवल्लभे । क्रोशन्ति सर्ववारीणि समुद्गच्छति भास्करे । धुनीमः सर्वपापानि त्रिविधानि न संशयः ।' इति नारदोक्तेः । 'मकरस्थे रवौ यो हि न स्नात्यभ्युदिते रवौ ।' इति ।'माघमासे रटन्त्यापः किंचिदभ्युदिते रवौ ।' इति पाद्मवचनात् । 'यो माघमास्युषसि सूर्यकराभितप्ते स्नानं समाचरति चारुनदीप्रवाहे । उद्धृत्य सप्त पुरुषान्पितृमातृवंश्यान्स्वर्गं प्रयात्यमरदेहधरो नरोऽसौ ।' इति भविष्योत्तरवचनाच्च । ब्राह्मे त्वरुणोदय उक्तः 'अरुणोदये तु संप्राप्ते स्नानकाले विचक्षणः । माधवांघ्रियुगं ध्यायन्यः स्नाति सुरपूजितः ।' इति । तथा-'अरुणोदयमारभ्य प्रातःकालावधि प्रभो । माघस्नानभवं पुण्यं क्रमात्तत्र च धारणा । उत्तमं तु सनक्षत्रं लुप्ततारं तु मध्यमम् । सवितर्युदिते भूप ततो हीनं प्रकीर्तितम् ।' इति तेनात्र शक्ताशक्तापेक्षया व्यवस्थे । इदं च स्नानं प्रयागेऽतिप्रशस्तम् । 'काश्यां शतगुणं प्रोक्तं गङ्गायमुनसंगमे । सहस्रगुणिता सापि भवेत्पश्चिमवाहिनी । पश्चिमाभिमुखी गङ्गा कालिन्द्या सह संगता । हन्ति कल्पकृतं पापं सा माघे नृप दुर्लभा ।' इति पाद्मा-

दिवचनेभ्यः । प्रयागासंभवे काश्यां दशाश्वमेधोत्तरस्थप्रयागतीर्थस्नानमुक्तं काशीखण्डे—'काश्युद्भवे प्रयागे ये तपसि स्नान्ति मानवाः । दशाश्वमेधजनितं फलं तेषां भवेद्ध्रुवम् ।' इति । ब्राह्मे—'तडागेषु तु वा स्नायात्कूपभाण्डाश्रिते तथा । माघमासे वरारोहे शस्तं वै निम्नगाजलम् ।' भाण्डाश्रिते त्वयं विशेषः—'सरित्तोयं महावेगं नवकुम्भस्थितं तथा । वायुना ताडितं रात्रौ गङ्गास्नानसमं स्मृतम् । यत्र कुत्रापि वा माघे प्रयागस्मरणान्वितः । करोतु मज्जनं तीर्थे स लभेद्गाङ्गमज्जनम् ।' इदं च स्नानं नैरंतर्येण कार्यम् । तदुक्तं पृथ्वीचन्द्रोदये प्रभासखण्डे—'माघे मासि च यः स्नायान्नैरन्तर्येण भावतः । पौण्डरीकफलं तस्य दिवसे दिवसे भवेत् ।' माघस्नानं काम्यमेवेति केचित् । विष्ण्वादिवाक्येन सदावश्यशब्दान्नित्यत्वावगतेर्नित्यकाम्यमिति युक्तम् । मासपर्यन्तस्नानासंभवे तु त्र्यहमेकाहं वा स्नायात् । 'महामाघीं पुरस्कृत्य प्रातस्तत्र दिनत्रयम् ।' इति लिङ्गात् । 'अस्मिन्योगे त्वशक्तोऽपि स्नायादपि दिनत्रयम् । प्रयागे माघमासे तु त्र्यहं स्नातस्य यत्फलम् । नाश्वमेधसहस्रेण तत्फलं लभते भुवि ।' इत्यादिपाद्मादिवचनात् । अत्र मकरसंक्रमणं रथसप्तमी माघीति त्र्यहमित्येके । माघशुक्लदशम्यादीत्यन्ये । मकरादित्र्यह इत्येके माघस्याद्यत्र्यह इति केचित् । त्रयोदश्यादीति बहवः । यत्किंचिद्दिनत्रयमिति भट्टाः । अत्र त्रयोदश्यादिपक्ष एव ज्यायान् । अन्ये तु वचनाभावान्निर्मूलाः । माघस्नाने नियमस्तु नारदीये—'न वह्निं सेवयेत्स्नातो ह्यस्नातोपि वरानने । होमार्थं सेवयेद्वह्निं शीतार्थं न कदाचन । अहन्यहनि दातव्यास्तिलाः शर्करयान्विताः । त्रिभागस्तु तिलानां हि चतुर्थः शर्करान्वितः । अनभ्यङ्गी वरारोहे सर्वं मासं नयेद्व्रती ।' तथा—'अपावृत्तशरीरस्तु यः कुर्यात्स्नानमाचरेत् । पदे पदेऽश्वमेधस्य फलं प्राप्नोति मानवः ।' तथा । 'शंखचक्रधरं देवं माधवं नाम पूजयेत् । वह्निं हुत्वा विधानेन ततस्त्वेकाशनो भवेत् । भूशय्या ब्रह्मचर्येण शक्तः स्नानं समाचरेत् । अशक्तौ ब्रह्मचर्यादौ स्वेच्छा सर्वत्र कथ्यते ।' अशक्तस्य धनाढ्यस्येति पाठः, कृत्यरत्नावल्यां धनाढ्यस्य बहुधनदानं कुर्वत इति च व्याख्यातम् । 'तिलस्नायी तिलोद्वर्ती तिलहोमी तिलोदकी । तिलभुक्तिलदाता च षट्तिलाः पापनाशनाः ।' इति । स्नानोत्तरं कृत्यमाह मदनपारिजाते विष्णुः—'काष्ठमौनी नमस्कृत्य पूजयेत्पुरुषोत्तमम् । अवश्यमेव कर्तव्यं माघस्नानमिति श्रुतिः ।' भविष्ये—'तैलमामलकाश्चैव तीर्थे देयास्तु नित्यशः । ततः प्रज्वालयेद्वह्निं सेवनार्थं द्विजन्मनाम् । एवं स्नात्वाऽ-

वसाने तु भोज्यं देयमवारितम् । भोजयेद्द्विजदाम्पत्यं भूषयेद्वस्त्रभूषणैः । कम्ब लाजिनरत्नानि वासांसि विविधानि च । चोलकानि च देयानि प्रच्छादनपटास्तथा । उपानहौ तथा गुप्तमोचकौ पापमोचकौ । अनेन विधिना दद्यान्माधवः प्रीयतामिति ।' पाद्मे—'भूमौ शयीत होतव्यमाज्यं तिलसमन्वितम् ।' तथा—' अन्नं चैव यथाशक्त्या देयं माघे नराधिप । सुवर्णं रक्तिकामात्रं दद्याद्वेदविदे तथा ।' माघान्ते तु विशेषो नारदीये—' माघावसाने शुभगे षड्रसं भोजनं स्मृतम् । सूर्यो मे प्रीयतां देवो विष्णुमूर्तिर्निरञ्जनः । दम्पत्योर्वाससी सूक्ष्मे सप्तधान्यसमन्विते । त्रिंशत्तु मोदका देयाः शर्करातिलसंयुताः।'इति । अत्रैकादशीविधानेन व्रतस्योद्यापनं तथेति पाद्मवचनात् । पूर्वेऽह्नि उपवासं पूजनादि कृत्वा परेऽह्नि तिलाज्यैरष्टोत्तरशतहोमं कृत्वा सवित्रे प्रसवित्रे चेति पूर्वोक्तमन्त्रमुक्त्वा 'दिवाकर जगन्नाथ प्रभाकर नमोस्तु ते । परिपूर्णं कुरुष्वेह माघस्नानमुषःपते।'इति क्षमापयेदिति संक्षेपः इति निर्णयसिन्धावुक्तम् । युक्तं तु 'कार्तिके वाथ तपसि विधिरेवंविधो मतः' इति कार्तिकोद्यापने विशेषवचनात्कार्तिकोद्यापनविधिरेवात्र विधिरिति।अस्यामेव घृतकम्बलविधिः कार्यः।तदुक्तं हेमाद्रौ भविष्यत्पुराणे—'माघशुक्लचतुर्दश्यामुपोष्य नियमास्थितः । शिवाय पौर्णमास्यां तु कर्तव्यं घृतकम्बलम् । कृष्णगोमिथुनं पश्चात्स्वरूपं विनिवेदयेत् । दिव्यं वर्षशतं सार्धं शिवलोके महीयते । आलिङ्गं वेदिपर्यन्तं यो दद्याद्घृतकम्बलम् । तस्यानन्तं भवेत्पुण्यं माघपूर्णिमपर्वणि । जागरं गीतनृत्याद्यैः सकृत्कृत्वा तु पर्वणि । मन्वन्तरशतं सार्धं रुद्रलोके महीयते ।' इति माघीकृत्यम् ।

अथ फाल्गुनीकृत्यम् । अत्र होलिकोत्सवः कार्यः । तत्र पौर्णमासी पूर्वविद्धा ग्राह्या । श्रावणीदुर्गनवमीति बृहद्यमवचनात् । 'पूर्वविद्धा प्रकर्तव्या फाल्गुनी पूर्णिमा तथा।'इति शिवरहस्यवचनाच्च । चतुर्दश्या च पूर्णिमेति युग्मवाक्याच्च । होलिकादीपने च प्रदोषव्यापिनी ग्राह्या । 'निशागमे तु पूज्येत होलिका सर्वतोमुखैः।'इति पृथ्वीचन्द्रोदये दुर्वाससा प्रदोषे पूजनस्योक्तत्वात् । प्रदोषव्यापिनी ग्राह्या पूर्णिमा फाल्गुनी सदा । तस्यां भद्रामुखं त्यक्त्वा पूज्या होला निशामुखे' इति नारदवचनाच्च । निर्णयामृते सायाह्नव्यापिनी ग्राह्येत्युक्तम् ।'सायाह्ने होलिकां कुर्यात्पूर्वाह्णे क्रीडनं गवाम्' इति वचनात् । सायाह्नः प्रदोष इति मयूखे। 'तपस्य पूर्णिमास्यां तु रजन्यां होलिकोत्सवः'इति वचनात्।दिनद्वये प्रदोषव्याप्तौ परैव।'भद्रायां दीपिता होली राष्ट्रभङ्गं करोति वै । नगरस्य च नैवेष्टा तस्मात्तां परिवर्जयेत्'इति

पुराणसमुच्चये यमवचनात्। 'भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा।' इति स्मृत्यन्तरेवचनाच्च। प्रतिपद्भूतभद्रासु यार्चिता होलिका दिवा। संवत्सरं तु तद्राष्ट्रं पुरं दहति साद्भुतम्।' इति चन्द्रप्रकाशे नारदवचनाच्च। यदा तु प्रदोषे पूर्वदिने भद्रा भवति परदिने चास्तात्पूर्वमेव पञ्चदशी समाप्यते तदा सूर्योदयात्पूर्वं भद्रान्तं प्रतीक्ष्य होलिका दीपनीया। 'दिनार्धात्परतो या स्यात्फाल्गुनी पूर्णिमा यदि। रात्रौ भद्रावसाने तु होलिका तत्र पूजयेत्।' इति भविष्योत्तरात्। 'राकायामद्वयादूर्ध्वं चतुर्दश्यां यदा भवेत्। होलां भद्रावसाने च निशीथान्ते प्रदीपयेत्।' इति भविष्योत्तरवचनाच्च। यत्तु—'भद्रायां विहितं कार्यं होलिकायाः प्रपूजनम्।' इति। यच्च 'मध्यरात्रमतिक्रम्य विष्टेः पुच्छं यदा भवेत्। प्रदोषे ज्वालयेदग्निं सुखसौभाग्यदायकम्। प्रदोषान्मध्यरात्रान्तं होलिकापूजनं शुभम्।' इति तदनाकरम्। यदा तु पूर्वत्र प्रदोषव्याप्त्यभावः। तत्सत्त्वेपि वा भद्रारहितः कालः सूर्योदयात्पूर्वं न लभ्यते उत्तरदिने च सूर्यास्तात्पूर्वमेव पूर्णिमा समाप्ता तदा भद्रापुच्छे पूर्वदिन एव तत्कार्यम्। 'पृथिव्यां यानि कार्याणि शुभानि ह्यशुभानि च। तानि सर्वाणि सिध्यन्ति विष्टिपुच्छे न संशयः।' इति लल्लवचनात्। विष्टिपुच्छमुक्तं ज्योतिःशास्त्रे—'दशम्यामष्टम्यां प्रथमघटिकापञ्चकपरं हरिघ्नुः सप्तम्यां द्विदशघटिकान्ते त्रिघटिकम्। तृतीया राकायां खयमघटिकाभ्यः परभवं शुभं विष्टेः पुच्छं शिवातिथिचतुर्थ्योश्च विरमः।' इति। यदा त्वस्मिन्नेव दिनविषये उत्तरपौर्णमासी सार्धयामत्रयमिता ततोऽधिका वा प्रतिपच्चोत्तरदिने वृद्धिगामिनी तदा पौर्णमास्युत्तरप्रतिपत्प्रदोष एव होलिकादीपनं कार्यं न तु पूर्वरात्रौ विष्टिपुच्छे। 'सार्धयामत्रयं पूर्णा द्वितीये दिवसे यदा। प्रतिपद्वर्धमाना तु तदा सा होलिका स्मृता।' इति भविष्यवचनात्। यत्तु वह्नौ वह्निं विसर्जयेदिति भविष्यं तदुक्तभिन्नविषयम्। या तूत्तरदिने प्रदोषैकदेशेऽस्ति पूर्वरात्रौ च भद्रारहिता नैव लभ्यते सा सुतरामुत्तरैव, पूर्वरात्रौ भद्राव्याप्तत्वादुत्तरप्रदोषे लाभाच्च। पूर्वोक्तं पूर्वविद्धाग्राह्यत्वमुत्तरत्र प्रदोषास्पर्शे वृद्ध्यभावे च ज्ञेयम्। न चैवं कालव्याप्तिशास्त्रादेव सिद्धे व्यर्थं विशेषवचनमिति वाच्यम्। पूर्वदिनेऽपि प्रदोपस्पर्शे प्रतिपद्वृद्ध्यभावे च सार्थक्यात्। तत्र पूर्वरात्रौ भद्रारहितदीपनकालालाभात् प्रदोषकृत्येषु च नक्तभोजनादिषु तत्पूर्वभाविनः सायाह्नस्य गौणकालत्वदर्शनात्प्रतिपत्क्षयेऽप्युत्तरदिने तत्प्रसक्तेः सत्त्वात्। तत्र पूर्वरात्रावेव भद्रापुच्छे तदलाभेऽपि वा भद्रायामपि तत्कर्तव्यत्वार्थं पूर्वविद्धाग्राह्यत्ववचनम्, एतादृशमेव च ' दिवा

भद्रा यदो रात्रौ रात्रिभद्रा यदा दिवा । सा भद्रा भद्रदा यस्माद्भद्रा कल्याणकारिणी।' इति ज्यौतिषिकवचनमपि । एतत्पक्षे एव बृहद्यमवचनं शिवरहस्यवचनं व्याख्येयमिति कास्तुभे । यदा पूर्वदिने रात्रिः सर्वा भद्रायुक्ता उत्तरदिनप्रदोषश्च पौर्णमासीशेषयुक्तोऽपि चन्द्रग्रहणाक्रान्तः तदा सूर्यास्तोत्तरं भद्रासत्त्वेपि पूर्वदिन एव कार्यम् । दिवाभद्रा यदा रात्राविति पूर्वोक्तज्यौतिषिकवचनादिति कश्चित् । वस्तुतस्तु परदिने प्रदोपे पौर्णमासीसत्त्वे कर्मकालस्पर्शे गौणकालग्रहणे मानाभावाद्भद्राभावाच्च ग्रहणकाल एव स्नात्वा होला कार्या।'स्नात्वा कर्माणि कुर्वीत शृतमन्नं विसर्जयेत्।'इति वचनात् । फाल्गुनो मलमासश्चेत् शुद्धे मासि होलिका कार्या । 'स्पष्टमासविशेषाख्याविहितं वर्जयेन्मले ' इति वचनात् । होलिकापूजामन्त्रस्तु— 'असृक्पाभयसंत्रस्तैः कृता त्वं होलि बालिशैः। अतस्त्वां पूजयिष्यामि भूते भूतिप्रदा भव।'इति। अथास्यां कर्तव्यमुच्यते । युधिष्ठिर उवाच— 'किमर्थं फाल्गुनस्यान्ते पौर्णमास्यां जनार्दन । उत्सवो जायते लोके ग्रामे ग्रामे पुरे पुरे । किमर्थं शिशवस्तस्यां गेहे गेहेतिवादिनः । होलिका दीप्यते कस्मात्फाल्गुन्यां तु किमुच्यते । अडाडजेति का संज्ञा शीतोष्णेति किमुच्यते । को ह्यस्यां पूज्यते देवः केनेयमवतारिता। किमस्यां क्रियते कृष्ण एतद्विस्तरतो वद ।' श्रीकृष्ण उवाच—' आसीत्कृतयुगे पार्थ रघुनाम नराधिपः ।शूरः सर्वगुणोपेतः प्रियवादी बहुश्रुतः । स सर्वां पृथिवीं जित्वा वशीकृत्य नराधिपान् । धर्मतः पालयामास प्रजाः पुत्रानिवौरसान् । न दुर्भिक्षं न च व्याधिर्नाकालमरणं नृणाम्। नाधर्मरुचयः पापास्तस्मिञ्छासति पार्थिव।तस्यैवं शासतो राज्यं क्षत्रधर्मरतस्य च । सर्वे एव समागम्य त्राहि त्राहीति चाब्रुवन् । 'पौरा ऊचुः— ' अस्माकं तु गृहे कापि ढुण्ढा नामेति राक्षसी । दिवा रात्रौ समागत्य बालान्पीडयते बलात् । रक्षया चोदकेनापि भैषज्यैर्वा नराधिप । मन्त्रज्ञैःपरमाचार्यैः सा नियन्तुं न शक्यते । एतत्सर्वं समाख्यातं ढुण्ढायाश्चरितं नृप । इति पौरवचः श्रुत्वा राज्ञा पृष्टोऽथ नारदः।' नारद उवाच- 'सांप्रतं कथयिष्यामि येनोपायेन हन्यते । अद्य पञ्चदशी शुक्ला फाल्गुनस्य नराधिप । शीतकालो विनिष्क्रान्तः प्रातर्ग्रीष्मो भविष्यति।अभयं त्वद्य लोकानां दीयतां पुरुषोत्तम । यथा ह्यशंकिता लोका रमन्ति च हसन्ति च । दारुजानि च खङ्गानि गृहीत्वा समरोत्सुकाः । योद्धार इव निर्यान्तु शिशवः संप्रहर्षिताः । संचयं शुष्ककाष्ठानामुपलानां च कारयेत् । तत्राग्निं विधिवद्धुत्वा रक्षोघ्नैर्मन्त्रविस्तरैः । ततः किल-

१—आकारान्तोऽप्य राक्षसवाचीशब्दः । २—अश्लीलशब्दवक्तार ।

किलाशब्दैस्तालशब्दैर्मनोरमैः । तमग्निं त्रिः परिक्रम्य गायन्तु च हसन्तु च । जल्पन्तु स्वेच्छया लोका निःशङ्का यस्य यन्मतम् । भगं तु बहुधा शब्दैः कीर्तयेत्स्वस्वभाषया । विस्तारयंश्च गायंश्च सहस्रं नाम तस्य वै । तेन शब्देन सा पापा होमेन च निराकृता । अट्टाट्टहासैर्डिम्भानां राक्षसी क्षयमेष्यति । ततःप्रभृति लोकेऽस्मिन्होलिका ख्यातिमागता । सर्वदुष्टापहो होमः सर्वलोकोपशान्तिदः । क्रियतेऽस्यां द्विजैः पार्थ तेन सा होलिका स्मृता । सर्वसारस्तिथिश्चायं पौर्णमासी युधिष्ठिर । सारत्वात्फाल्गुनीत्येषा परमानन्ददायिनी । अस्यां निशागमे पार्थ संरक्ष्याः शिशवो गृहे । गोमयेनोपलिप्ते च सचतुष्के गृहाङ्गणे । आकारयेच्छिशुप्रायान्खड्गव्यग्रकरान्नरान् । ते काष्ठखड्गैः संस्पृश्य शब्दैर्हास्यकरैः शिशून् । रक्षन्तु तेषां दातव्यं गुडं पक्वान्नमेव च । एवं ढुण्ढेति सा तस्याः स दोषः प्रशमं व्रजेत् । बालानां रक्षणं कार्यं तस्मात्तस्मिन्निशागमे ।' इति । इति होलिकोत्सवः ।

इयं मन्वादिः । अत्रापि दोलोत्सवः उक्तः कृत्यचिन्तामणौ–ब्राह्मे– 'नरो दोलागतं दृष्ट्वा गोविन्दं पुरुषोत्तमम् । फाल्गुन्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेत् ।' इति । अस्यां कृत्यविशेषः कृत्यतत्त्वार्णवे–'फाल्गुन्यामर्यमा जातो अदितेः कश्यपादपि । अत्रेश्चाप्यनसूयाया जातः पूर्णकरः शशी । तौ तत्र विधिवत्पूज्यौ प्राप्ते चन्द्रोदये सति । नृत्यैर्गीतैस्तथा वाद्यैः कार्यस्तत्र प्रजागरः ।' इति । अत्रोपवासविधानाभावान्नक्तं कार्यम् । अत्र दानविशेषमाह विष्णुः–'फाल्गुनी फाल्गुनीयुक्ता चेत्स्यात्तस्यां ब्राह्मणाय संस्कृतं स्वास्तीर्णं शयनं निवेद्य भार्यां मनोज्ञां पक्षवर्तीं द्रविणवतीं चाप्नोति नार्यपि भर्तारम्' इति । 'यस्मादशून्यं शयनं केशवस्य शिवस्य च । शय्या ममाप्यशून्यास्तु तस्माज्जन्मनि जन्मनि । अशून्यं शयनं नित्यमनूनां श्रियमुन्नतिम् । सौभाग्यं देहि मे नित्यं शय्यादानेन केशव ।' इति शय्यादानमंत्रौ । अस्यामेव अशोकव्रतम् । तदुक्तं हेमाद्रौ विष्णुधर्मोत्तरे–'अशोकपूर्णिमामेतां शृणुष्व गदतो मम । उपोष्य न नरः शोकं प्राप्नोति स्त्री तथापि वा । फाल्गुनामलपक्षस्य पौर्णमास्यां नृपोत्तम । मृज्जलेन नरः स्नात्वा दत्त्वा शिरसि वै मृदम् । मृत्प्राशनं ततः कृत्वा कृत्वा च स्थण्डिलं मृदा । पुष्पैर्गन्धैः समभ्यर्च्य भूधरं नाम नामतः । धारणीं च तथा देवीमशोकेति च कीर्तयेत् । यथा विशोकां धरणि कृतवांस्त्वां जनार्दनः ।' इत्यादि । 'व्रतमेतत्समाश्रित्य पारणं च यथाविधि । सर्वव्याधिविनिर्मुक्तो दशजन्मान्तराण्यसौ ।

विशोकः सर्वकल्याणभाजनं स्यान्न संशयः। यथा त्वमेव वसुधे संप्राता निर्वृतेः पदम्। तथा स परमं लोके सुखं प्राप्स्यति मानवः। एवमेतन्महापुण्यं सर्वशान्तिप्रदायकम्। विशोकाख्यं व्रतवरं तत्कुरुष्व महाव्रतम्।' इति विष्णुधर्मोत्तरोक्तमशोकव्रतम्। अस्यामेव लक्ष्मीनारायणव्रतम्। तदुक्तं हेमाद्रौ विष्णुधर्मोत्तरे—पुलस्त्य उवाच—'पञ्चदश्यां शुक्लपक्षे फाल्गुनस्य नरोत्तम। पाषण्डपतितांश्चैव तथैवान्त्यावसायिनः। नास्तिकान्भिन्नवृत्तींश्च पापिनश्चापि नालपेत्। नारायणे गतमनाः पुरुषो नियतेन्द्रियः। तिष्ठन्व्रजन्प्रस्खलंश्च क्षुते वापि जनार्दनम्। कीर्तयेत्तत्क्रियाकाले सततकृत्वः पुनः पुनः। लक्ष्म्या समन्वितं देवमर्चयीत जनार्दनम्। संध्याव्युपरमे चेन्दुस्वरूपं हरिमीश्वरम्। रविं च लक्ष्मीं संचिन्त्य सम्यगर्घ्येण पूजयेत्। श्रीर्निशा चन्द्ररूपस्त्वं वासुदेव जगत्पते। मनोभिलषितं देव पूरयस्व नमो नमः। मन्त्रेणानेन दत्त्वार्घ्यं देवदेवस्य भक्तितः। नक्तं भुञ्जीत मौनेन तैलक्षारविवर्जितम्। तथैव चैत्रे वैशाखे ज्येष्ठे च मुनिसत्तम। अर्चयेच्च यथा प्रोक्तं मासि मासि च तद्दिने। निष्पादितं भवेदेकं पारणं दाल्भ्य भक्तितः। द्वितीयं तत्र वक्ष्यामि पारणं तन्निबोध मे। आषाढे श्रावणे मासि प्राप्ते भाद्रपदे तथा। तथैवाश्वयुजेऽभ्यर्च्य श्रीधरं च श्रिया सह। सम्यक् चन्द्रमसे दत्त्वा भुञ्जीतार्घ्यं यथाविधि। द्वितीयमेतदाख्यातं तृतीयमपि पारणम्। प्रतिपूज्य ततो दद्याद्ब्राह्मणेभ्यश्च दक्षिणाम्। प्रतिमासं प्रवक्ष्यामि प्राशनं कायशुद्धये। चतुरः प्रथमं मासान्पञ्चगव्यमुदाहृतम्। कुशोदकं तथैवान्यदुक्तमासचतुष्टयम्। सूर्यांशुतप्तं तद्वच्च जलं मासचतुष्टयम्। गीतवाद्यादिकं रात्रौ तथा कृष्णकथाः शुभाः। कारयेद्देवदेवस्य पारणे पारणे गते। जनार्दनं सलक्ष्मीकमर्चयेत्प्रथमं ततः। सश्रीकं श्रीधरं तद्वत्तृतीयं भूतिकेशवम्। एवं संपूज्य विधिवत्सपत्नीकं जनार्दनम्। नाप्नोतीष्टवियोगार्तिं पुमान् योषिदथापि वा। यावन्ति जन्मान्यसुखं नाप्नोतीष्टवियोगजम्। देवस्य तु प्रभावेण मरणे प्राप्नुते स्मृतिम्। कुले सतां स्फीतधने भुङ्क्ते भोगान्यथेप्सितान्।' इति विष्णुधर्मोत्तरोक्तं लक्ष्मीनारायणव्रतम्।

अत्रैव प्रसङ्गात्सकलपूर्णमासीसाधारणव्रतानि लिख्यन्ते। हेमाद्रौ गारुडे—'चतुर्दश्यां शुचिः स्नात्वा दन्तधावनपूर्वकम्। चरितब्रह्मचर्यश्च यतवाक्कायमानसः। पौर्णमास्यां तथा कृत्वा देवपूजां समारभेत्।' इत्यादि। इति गारुडोक्तमायुर्व्रतम्। 'पयोव्रतः पञ्चदश्यामब्दान्ते गोयुगप्रदः। लक्ष्मीलोकमवाप्नोति

देवीव्रतमुदाहृतम् ।' इति पद्मपुराणोक्तं देवीव्रतम् । 'उपोषितश्चतुर्दश्यां पौर्णमास्यां नराधिप । पञ्चगव्यं पिबेत्पश्चाद्धविष्याशी तथा भवेत् । शक्रव्रतमिदं कृत्वा मासपापात्प्रमुच्यते । तस्मात्सर्वप्रयत्नेन मासि मासि समाचरेत् । संवत्सरात्प्राप्य सुरेन्द्रलोकं तत्रोष्य राजा सुचिरं मनुष्यः । मानुष्यमासाद्य सुरेन्द्रपूज्यो राजा भवेद्वा द्विजपुङ्गवो वा ।' इति विष्णुधर्मोत्तरोक्तं कूर्चव्रतम् । एतासां पौर्णमासीनां स्थानयोगेन पुण्यतमत्वमुक्तं गार्ग्येण—' महामाघी प्रयागे तु नैमिषे फाल्गुनी तथा । शालिग्रामे महाचैत्री कृताः स्युः पुण्यहेतवः । गङ्गाद्वारे तु वैशाखी ज्येष्ठी च पुरुषोत्तमे । आषाढी वै कनखले केदारे श्रावणी तथा । बदर्यां च प्रौष्ठपदी कुब्जाद्रौ तु महाश्विनी । पुष्करे कार्तिकी कान्यकुब्जे मार्गशिरी तथा । अयोध्यायां महापौषी कृताः स्युस्ता महाफलाः ।' इति । शालग्रामादिव्यतिरिक्तस्थानेष्वपि महाचैत्र्यादिकमनन्तफलं भवति । तदाह गार्ग्यः—'आशु यत्क्रियते श्राद्धं यच्च दानं यथाविधि । उपवासादिकं यच्च तदनन्तफलं स्मृतम् ।' इति ।

अथ सिद्धविरुद्धादिकं लिख्यते । पूर्णिमा गुरुवारेण सिद्धा । गुरौ दशमीपञ्चम्यौ पौर्णमासीति । अत्र पञ्चमीवद्विवाहयात्रोत्सवं कार्यम् । अत्रापि तिथिपतित्वाच्चन्द्रः पूज्यः । तदुक्तम्—पर्वणीन्दोरिति। क्रूरग्रहे धनुरादिराशिचतुष्के पूर्णिमाऽशुभा भवति । योगिनीसांमुख्यादत्रैशान्यां यात्रा न कार्या ॥

श्रीमद्दिल्लीशसेनोद्भटविकटभटोद्दण्डमत्तेभसिंह—
श्चण्डोन्माद्यत्तुरुष्कक्षुभितवसुमतीपालने धर्मराजः ।
पौत्रः श्रीकृष्णसिंहक्षितिपकुलमणेर्विष्णुसिंहस्य पुत्रः
श्रीमान्राजाधिराजो जयहरिरमराधीशवत्कौ सुखी स्तात् ॥ १ ॥
श्रीमत्पण्डितदेवभट्टतनयःश्रीराघवाङ्घ्रिद्वय—
ध्यानावाप्तसमस्तकामनिवहः सम्राट् स रत्नाकरः ।
तुष्ट्यै श्रीजयसिंहवर्मनृपतेः कल्पद्रुमे कामदं
गुच्छं सप्तदशं शिवं समकरोद्राकातिथिख्यापकम् ॥ २ ॥

इति श्रीदेवभट्टात्मजपौण्डरीकयाजिरत्नाकरविरचिते जयसिंहकल्पद्रुमोद्द्योते पञ्चदशीप्रकरणं नामसप्तदशस्तबकः समाप्तः ॥ १७ ॥

## अथामातिथिव्रतनिर्णयः ।

अथ व्रतादिष्वमा निर्णीयते । तत्रादावमावास्याध्यानम् । 'खड्गभल्लधरा नीलकुन्तलांशुकभूषणा । अमावास्या विधातव्या द्विदोर्मरकतप्रभा । दर्भासनस्थिता चेयं दर्भपिण्डधरा कृशा ।' इति । उपवासादिष्वमावास्या प्रतिपद्युतैव ग्राह्या । प्रतिपद्यप्यमावास्येति युग्मवाक्यात् ।'अमावास्या तृतीया च ता उपोष्याः परान्विताः।' इति स्मृतेश्च । पद्मपुराणेऽपि—'षष्ठ्यष्टमी तथा दर्शः कृष्णपक्षे त्रयोदशी । भूतविद्धाप्यमावास्या न ग्राह्या मुनिपुङ्गव । उत्तरोत्तरविद्धास्ताः कर्तव्याः काठकश्रुतेः ।' इति । सावित्रीव्रते तु पूर्वविद्धा ग्राह्या । तथा च स्कन्दपुराणे—'भूतविद्धा सिनीवाली न तु तत्र व्रतं चरेत् । वर्जयित्वा तु सावित्रीव्रतं तु शिखिवाहन ।' इति । इत्थमेव हेमाद्रिमदनरत्ननिर्णयामृतप्रभृतयः । माधवे तु विशेषः—यदा चतुर्दश्यष्टादशनाडिका भवति तदा सावित्रीव्रतमपि तत्र परित्याज्यम् । भूतोऽष्टादशनाडीभिरिति वाक्यादिति । अत्र श्राद्धं नित्यम् । 'अमावास्याव्यतीपातपौर्णमास्यष्टकासु च । विद्वाञ्च्छ्राद्धमकुर्वाणो नरकं प्रतिपद्यते ।' इति पितामहोक्तेः । श्राद्धीयामावास्या निर्णयस्त्वग्रे वक्ष्यते ।

अथामावास्याव्रतानि। चैत्रकृष्णचतुर्दश्यामारभ्यं संवत्सरसाध्यं वह्निव्रतम् । तदुक्तं हेमाद्रौ—'कृष्णपक्षे चतुर्दश्यां चैत्रादारभ्य यादव । वह्निसंपूजनं कृत्वा गन्धमाल्यान्नसंपदा।'इत्यादि 'तिलहोमं तथा कुर्याद्वह्नेर्नाम्ना नराधिप । संवत्सरान्ते दद्याच्च सुवर्णं ब्राह्मणाय तु । कृत्वा व्रतं वत्सरमेतदिष्टं प्राप्नोति वित्तं सततं यशश्च । धर्मे रतिं रूपमनुत्तमं च कामान्यथेष्टान्पुरुषप्रधान' इति विष्णुधर्मोत्तरोक्तं वह्निव्रतम् । अस्यामेवारभ्यं संवत्सरसाध्यं पितृव्रतम् । मार्कण्डेय उवाच—'प्रभास्वरा बर्हिषदः अग्निष्वात्तास्तथैव च।क्रव्यादाश्चैव भूताश्च आज्यपाश्च सुकालिनः । पूज्याः।पितृगणा राजन्सोपवासेन तत्र तु । चैत्रकृष्णां समारभ्य पञ्चदश्यां नराधिप । श्राद्धं तदाह्नि कुर्वीत यावत्संवत्सरो भवेत्' इत्यादि । इति विष्णुधर्मोत्तरोक्तं पितृव्रतम् । इयं मन्वादिः । फाल्गुनस्य त्वमावस्येति मात्स्यात् । इति चैत्रामाकृत्यम् ।

ज्येष्ठामावास्यायां निर्णयामृतादौ वटसावित्रीव्रतमुक्तम् । तद्विधिस्तु ज्येष्ठपूर्णिमाप्रकरणे द्रष्टव्यः ।

भाद्रपदामावास्यायां कुशग्रहणमुक्तं मदनरत्ने मरीचिना—'मासे नभस्येऽमावास्यां तस्यां दर्भोच्चयो मतः । अयातयामास्ते ज्ञेया विनियोज्याः पुनः पुनः।' इति ।

नभस्यमावास्येति पाठोऽमान्तमासाभिप्रायेण । दर्भाश्च तत्रैव । 'कुशाः काशा यवा दूर्वा उशीराश्च सकुन्दकाः । गोधूमा ब्रीहयो मौञ्जा दश दर्भाः सबल्वजाः।' इति । 'विरञ्चिना सहोत्पन्न परमेष्ठिन्निसर्गज।नुद सर्वाणि पापानि दर्भ स्वस्तिकरो भव । एवं मन्त्रं समुच्चार्य ततः पूर्वोत्तरामुखः।हुंफट्कारेण मन्त्रेण सकृच्छित्त्वा समुद्धरेत्।अच्छिन्नाग्रा अशुष्काग्राः पित्र्ये तु हरिताः स्मृताः।अमूला देवकार्येषु प्रयोज्याश्चेज्जपादिषु । सप्तपत्राः कुशाः शस्ता दैवे पित्र्ये च कर्मणि' इति । अत्राश्विनामावास्या योगविशेषेण कुञ्जरच्छाया । तदुक्तं नृसिंहप्रासादे वायुपुराणे–'हंसे हंसस्थिते या तु अमावास्या करान्विता । सा ज्ञेया कुञ्जरच्छाया इति बौधायनोऽब्रवीत्।'हंसःसूर्यो हस्तनक्षत्रं च। अत्र श्राद्धं प्रशस्तम् । इत्याश्विनामावास्याकृत्यम् ।

अथ कार्तिकामावास्याकृत्यम् । अस्यां प्रातरभ्यङ्गं कुर्यात् । तदुक्तं कालादर्शे–'प्रत्यूष आश्वयुग्दर्शे कृत्वाऽभ्यङ्गादिमङ्गलम् । भक्त्या संपूजयेद्देवीमलक्ष्मीविनिवृत्तये ।' भविष्योत्तरेऽपि–'एवं प्रभातसमये त्वमावस्यां नराधिप । स्नात्वा देवान्पितॄन्भक्त्या संपूज्याथ प्रणम्य च।'इति।नारदेनापि तिथित्रये दीपावलित्वेनाभिधानात्तत्र तैले लक्ष्मीरित्यादिनाऽभ्यङ्गस्नानं विहितम् । पौष्करे तु–'स्वातिस्थिते रवाविन्दुर्यदि स्वातियुतो भवेत् । एवं प्रत्यगुदक्स्नायी कृताभ्यङ्गविधिर्नरः । नीराजितो महालक्ष्मीमर्चयञ्श्रियमश्नुते ।' इति स्वातियोगेऽभ्यङ्गस्नानमुक्तम् । निर्णयसिन्धौ कश्यपसंहितायां तु दीपावलिदर्शे प्रक्रम्य–'इन्दुक्षयेऽपि संक्रान्तौ रवौ पाते दिनक्षये । तत्राभ्यङ्गो न दोषाय प्रातः पापापनुत्तये।' इति । स्वातियोगं विनाप्यभ्यङ्ग उक्तः । मात्स्ये 'दीपैर्नीराजनादत्र सैषा दीपावली स्मृता' इति । अथादित्यपुराणोक्तममाकृत्यम् । सनत्कुमार उवाच–'अमावास्यां तु देवास्तु कार्तिके मासि केशवात् । अभयं प्राप्य सुप्तास्तु सुखं क्षीरोदसानुषु । लक्ष्मीर्दैत्यभयान्मुक्ता सुखसुप्ताम्बुजोदरे । अतोऽर्थं विधिवत्कार्या मनुष्यैः सुखसुप्तिका । दिवा रात्रौ न भोक्तव्यं ऋते बालातुराज्जनात् । प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमम् । दीपवृक्षास्तथा कार्याः शक्त्या देवगृहेषु च । चतुष्पथे श्मशाने च नदीपर्वतवेश्मसु । वृक्षमूलेषु गोष्ठेषु चत्वरेषु गृहेषु च । वस्त्रैः पुष्पैः शोभितव्याः क्रयविक्रयभूमयः । दीपमालापरिक्षिप्ते प्रदोषे तदनन्तरम् । ब्राह्मणान्भोजयित्वा तु संभोज्य च बुभुक्षितान् । अलंकृतेन भोक्तव्यं नववस्त्रोपशोभिना । स्निग्धैर्मुग्धैर्विदग्धैश्च बान्धवैर्निर्वृतैः सह ।' इति । भविष्योत्तरे तु–चतुर्दशीकृत्यमभिधायेत्थममावास्याकृत्यमभिहितम् । 'एवं प्रभात-

समये अमावास्यां नराधिप । स्नात्वा देवान्पितॄन्भक्त्या संपूज्याथ प्रणम्य च । कृत्वा तु पार्वणं श्राद्धं दधिक्षीरघृतादिभिः । भक्ष्यैर्नानाविधैः सम्यग्भोजयित्वा क्षमापयेत् । ततोपराह्णसमये घोषयेन्नगरे नृपः । अद्य राज्यं बलेर्लोको यथेष्टं चेष्टतामिति। लोकश्चापि पुरे हृष्टः सुधाधवलिताजिरे । वृक्षचन्दनमालाभिरर्चिते च गृहे गृहे । द्यूतपानरतोद्रिक्तनरनारीमनोहरे । नृत्यवादित्रसंघुष्टे संप्रज्वलितदीपके । अन्योन्यप्रीतिसंहृष्टे दत्ततालनके जने । ताम्बूलहृष्टवदने कुङ्कुमक्षोदचर्चिते । दुकूलपट्टनेपथ्यस्वर्णमाणिक्यभूषिते । अद्भुतोद्भटशृङ्गारप्रदर्शितकुतूहले । युवतीजनसंकीर्णे वस्त्रोज्ज्वलविहारिणि । दीपमालाकुले रम्ये विध्वस्तध्वान्तबन्धने । प्रदोषे दोषरहिते शस्ते बन्दिजनैर्युते । यात्राविहारसंचारे जय जीवेति वादिभिः । क्षुद्रोपसर्गरहिते राजचौरभयोज्झिते । मित्रस्वजनसंबन्धिसुहृत्प्रेमाभिरञ्जिते । ततोर्धरात्रसमये स्वयं राजा व्रजेत्पुरम् । अवलोकयितुं रम्यं पद्भ्यामेव शनैः शनैः । महता तूर्यघोषेण ज्वलद्भिर्हस्तदीपकैः । हट्टशोभां तु संपश्यन्कृतरक्षः स्वकैर्नरैः । तद्दृष्ट्वा महदाश्चर्यमृद्धिं चैवात्मनः शुभाम् । बलिराज्यप्रमोदं च ततः स्वगृहमाव्रजेत् । एवं गते निशीथे तु जने निद्रान्धलोचने । तावन्नगरनारीभिः शूर्पडिण्डिमवादनैः । निष्काम्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहाङ्गणात् ।' इति। कृत्यरत्नावल्यां तु तूर्यडिण्डिमेति पाठः । अस्यामेवामावास्यायां कौमुदीमहोत्सव इति निर्णयामृते । हेमाद्रौ चतुर्दशीमारभ्य प्रतिपदन्तं कर्तव्यं कौमुदीव्रतमुक्तम् । कौमुदीशब्दव्युत्पत्तिरपीत्थं कृता । 'कौ मुदंति जना यस्मान्नानाभावैः परस्परम् । हृष्टास्तुष्टाः सुखापन्नास्तेनैषा कौमुदी स्मृता ।' इति । तत्रैव वह्निपुराणे पञ्चदिनसाध्यमपि कौमुदीव्रतमुक्तम् । मैत्रेय उवाच—' कार्तिकः खलु मासो वै सर्वदेवमयो महान् । कृष्णपक्षे विशेषेण तत्र पञ्च दिनानि तु । पुण्यानि तेषु यद्दत्तमक्षयं सर्वकामदम् । एकादश्यां परैर्दत्तं दीपं प्रज्वाल्य मूषिका । मानुषं दुर्लभं प्राप्य परां गतिमवाप सा । लुब्धकोऽपि चतुर्दश्यां पूजयित्वा जनार्दनम् । निर्भक्तिः परसंगत्या विष्णुलोकं जगाम सः । श्वपाका हि त्रयोदश्यां दीपान्दत्त्वा परैः कृतान् । वेश्या लीलावती भूत्वा जगाम स्वर्गमक्षयम् । गोपः कश्चिदमावास्यां पूजां दृष्ट्वाऽथ शार्ङ्गिणः ।मुहुर्जातः प्रजापालो राजराजेश्वरोऽभवत्। तस्माद्दीपाः प्रदातव्या रात्रावस्तमिते रवौ । गृहेषु सर्वगोष्ठेषु चैत्येष्वायतनेषु च । देवानां चैव रथ्यासु श्मशानेषु सरःसु च । नक्ताशिना शुभार्थाय कार्यं पञ्च दिनानि तु । पापिनः पितरो ये च लुप्तपिण्डोदकक्रियाः । चतुर्दश्याममायां वा पिण्डदस्याप्नुवन्ति ते । तत्र श्रीः

पूजनीया तु मनुष्यैश्चाप्रयत्नतः । श्रीकामैस्तत्र ते शर्व क्रीडितव्यं प्रयत्नतः । बन्धुभिः सहितैः पत्न्या नृत्यगीतप्रजागरैः । यदि हर्षं प्रयातीह तस्य संवत्सरं जयः । द्यूते तु क्रीडतो हानौ हानिः स्याद्विजये ध्रुवम् । सुखं प्रीतिः सुलाभः स्याद्वत्सरं मनुजस्य तु । गौर्या जित्वा पुरा शंभुर्नग्नो द्यूते विसर्जितः । तेनासौ शंकरो दुःखी सर्वदोमा सुखान्विता । श्रिया सार्धं जगद्योनिः शेते विष्णुः सुखान्वितः । तस्यां रात्रौ जनानां तु अतोर्थं सुखसुप्तिका ।' इति सुखसुप्तिकाव्रतम् । दीपदानेऽमावास्या प्रदोषव्यापिनी ग्राह्या । तस्य कर्मकालत्वोक्तेः । दिनद्वये प्रदोषव्याप्तौ परैव । 'दण्डैकरजनीयोगो दर्शस्य स्यात्कदाचन । तदा विहाय पूर्वेद्युः परेह्नि सुखसुप्तिका ।' इति तिथितत्त्वे ज्योतिर्निबन्धवचनात् । उभयदिने प्रदोषव्याप्त्यभावेऽर्धरात्रव्यापिनी ग्राह्या । तस्या लक्ष्म्यागमनकालत्वाभिधानात् । दिवोदासीये तु प्रदोषस्य कर्मकालत्वात् 'अर्धरात्रे भ्रमत्येव लक्ष्मीराश्रयितुं गृहान् । अतः स्वलंकृता लिप्ता दीपैर्जाग्रज्जनोत्सवाः । सुधाधवलिताः कार्याः पुष्पमालोपशोभिताः ।' इति ब्राह्मोक्तेश्च । प्रदोषार्धरात्रव्यापिनी मुख्या । एकैकव्याप्तौ परैव । प्रदोषस्य मुख्यत्वादर्धरात्रेऽनुष्ठेयाभावाच्चेति । यदा पूर्वेद्युरेव प्रदोषव्यापिन्यमावास्या श्राद्धयोग्या च द्वितीयदिने तदा पूर्वेद्युरेव प्रदोषे लक्ष्मीं संपूज्य दीपदानं कार्यम् । श्राद्धं परदिने पराह्णे कार्यम् । यस्तु 'अपराह्णे प्रकर्तव्यं श्राद्धं पितृपरायणैः । प्रदोषसमये राजन्कर्तव्या दीपमालिका ।' इति क्रमः स संपूर्णतिथ्यभिप्रायेणानुवादो न विधिः । तत्तत्कर्मकालव्याप्तेर्बलवत्त्वात् । संपूर्णतिथौ प्राप्त्या खण्डतिथावप्राप्त्या विध्यनुवादविरोधाच्च । अत्र च रात्रिभोजननिषेधेऽपि रात्रिभोजनं कार्यम् । निषेधस्य रागप्राप्तविषयत्वात् । विधिस्पृष्टे निषेधानवकाशाच्च । अथ कृत्यम् । तत्र संध्यासमये लक्ष्मीपूजनम्—( लक्ष्म्यै नमः ) इति नाममन्त्रेण कार्यम् । 'महालक्ष्म्यां तु तुलसीं झिण्टिकां काञ्चनं तथा' वर्जयेदिति । पूजनानन्तरं लक्ष्मीसूक्तं पठित्वा लक्ष्मीं प्रार्थयेत् । 'नमस्ते सर्वदेवानां वरदासि हरेः प्रिया । या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्चनात् ।' इति । अत्रेन्द्रकुबेरयोः पूजनमप्युक्तम् । इन्द्रपूजनमन्त्रश्च 'ऐरावतसमारूढो वज्रहस्तो महाबलः । शतयज्ञाधिपो देवस्तस्मै इन्द्राय ते नमः ।' इति । कुबेरस्य पूजायां तु 'धनदाय नमस्तुभ्यं निधिपद्माधिपाय च । भवन्तु त्वत्प्रसादान्मे धनधान्यादिसंपदः ।' इति मन्त्रस्तूक्तो वीरमित्रोदये । ततो दीपश्राद्धं कुर्यात् । तद्यथा अद्येत्याद्युच्चार्य अस्मत्पितृपितामहप्रपितामहानाममुकामुकशर्मणां सपत्नीकानां तथा

मातामहादीनामपि नामान्युच्चार्य विश्वेदेवपूर्वकदीपश्राद्धमहं करिष्ये इति संकल्प्य अस्मत्पित्रादित्रयमातामहादित्रयश्राद्धसंबन्धिनो विश्वेदेवाः एते दीपा वो नमो नमः। अस्मत्पितृपितामहप्रपितामहा अमुकामुकशर्माणः वसुरुद्रादित्यस्वरूपाः एते दीपा वो नमो नमः। एवं मातामहाद्युद्देशेनापि दीपान् संकल्पयेत्। इति दीपश्राद्धम्। 'कार्तिके मास्यमावस्या तस्यां दीपप्रदीपनम्। शालायां ब्राह्मणः कुर्यात्स गच्छेत्परमं पदम्।' इति। तत्र मन्त्रः। 'अग्निर्ज्योतीरविर्ज्योतिश्चन्द्रोज्योतिस्तथैव च उत्तमः सर्वज्योतीनां दीपोऽयं प्रतिगृह्यताम्।' इति। दीक्षितीये त्वन्यथा पाठः 'त्वं ज्योतिः श्रीरविश्चन्द्रो विद्युत्सौवर्णतारकाः। सर्वेषां ज्योतिषां ज्योतिर्दीपज्योतिः स्थिते नमः।' इति। मन्त्रेणानेन कमलां दीपहस्ताः स्त्रियो द्विजाः। देवीं प्रबोधयेयुश्च ततः कुर्याच्च भोजनम्।' ततो गीतवादित्राद्युत्सवे रात्रिं नयेदित्यादि पूर्वोक्तमेवोक्तम्। अन्यदपि कृत्यं कृत्यरत्नावल्यां भविष्ये—'सुखरात्रेरुषःकाले प्रदीपो ज्वलितालये। सर्वान्बन्धूनबन्धूंश्च वाचा कुशलयाऽर्चयेत्। प्रदीपबोधनं कार्यं लक्ष्मीमङ्गलहेतवे। गोरोचनाक्षतं चैव दद्यादङ्गेषु सर्वतः। विश्वरूपस्य भार्यासि पद्मे पद्मालये शुभे। महालक्ष्मी नमस्तुभ्यं सुखरात्रिं कुरुष्व मे। वर्षाकाले महाघोरे यन्मया दुष्कृतं कृतम्। सुखरात्रिप्रभातेऽद्य तन्मे लक्ष्मीर्व्यपोहतु। या रात्रिः सर्वभूतानां पञ्चदेवेष्ववस्थिता। संवत्सरप्रिया सा च सामगास्तु सुमङ्गला। त्राता त्वं सर्वभूतानां देवानां सृष्टिसंभवः। आख्याता भूतले देवि सुखरात्रि नमोस्तुते।' इति। अस्यामेव दाक्षिणात्याः केदारगौरीव्रतमाचरन्ति। पूर्वोक्तैवंगुणविशेषणविशिष्टायां पुण्यतिथौ ममाविच्छिन्नसंपत्प्राप्त्यर्थं दारिद्र्यदुःखदुःस्वप्नशमनार्थं पुत्रपौत्राभिवृद्ध्यर्थम् आयुरारोग्याभिवृद्ध्यर्थं श्रीकेदारगौरीप्रीत्यर्थं यथाज्ञानेन यथामिलितोपचारैः पुरुषसूक्तपुराणोक्तमंत्रैः पूजनमहं करिष्ये। तत्रादौ प्रथमाब्दे निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं स्वस्तिपुण्याहवाचनं करिष्ये। इन्द्रं वो मधुच्छन्दाः इन्द्रो गायत्री इन्द्रावाहने विनियोगः। ॐ इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः। अस्माकमस्तु केवलः।' इन्द्रेहागच्छेतीन्द्रमावाहयेत्। अग्निकाण्वो मेधातिथिरग्निर्गायत्री अग्न्यावाहने विनियोगः। 'ॐ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम्। अस्य यज्ञस्य सुक्रतुम्।' अग्ने इहागच्छ मम पूजां गृहाण वरदो भव। यमाय सोमं यमोयमोऽनुष्टुप् यमावाहने विनियोगः। ॐ यमाय सोमं सुनुत यमाय जुहुताहविः यमंह यज्ञो गच्छ त्यग्निदूतो अरंकृतः।' यमयहआगच्छ मम पूजा गृहाण वरदो भव। मोषुणो घोरः

कण्वोनिर्ऋतिर्गायत्री निर्ऋत्यावाहने विनियोगः।'ॐ मोषुणःपरापरानिर्ऋतिर्दुर्हणावधीत् पदीष्टतृष्ण सह ।' भो निर्ऋते इहागच्छ वरदो भव।तत्त्वायामिशुनःशेपो वरुणास्त्रिष्टुप्। वरुणावाहने विनियोगः।'ॐ तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेळमानो वरुणेह बोध्युरुशंसमान आयुः प्रमोषीः।'भो वरुण इहागच्छ वरदो भव।तव वायोव्यश्व आङ्गिरसो वायुर्गायत्री वाय्वावाहने विनियोगः।'ॐ तव वाय ऋतस्पते त्वष्टुर्जामातरद्भुत।अवांस्यावृणीमहे।'भो वायो इहागच्छ वरदो भव । आप्यायस्व गौतमः सोमो गायत्री सोमावाहने विनियोगः।'ॐ आप्यायस्व समेतुतेविश्वतः सोमवृष्ण्यम्।भवावाजस्य संगथे।'भोः सोम इहागच्छ पूजां गृहाण वरदो भव।तमीशानं गौतम ईशानो जगती ईशानावाहने विनियोगः । 'तमीशानंजगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये।' भोईशान इहागच्छ मम पूजां गृहाण वरदो भव । एवं समस्तलोकपालनामासनादिपूजां कुर्यात् । नन्दिकेश गणेशपूजनं पञ्चोपचारैः कुर्यादिति प्रथमवर्षे । द्वितीयादौ तु तिथ्यादिकं संकीर्त्य मम सकलाभीष्टसिद्ध्यर्थं केदारगौरीव्रते तत्पूजनमहं करिष्ये । 'त्रिलोचनं चतुर्बाहुं चन्द्रार्धकृतशेखरम् । उमालिङ्गितबाहुभ्यांवृषोपरिसुसंस्थितम् ।' गौरीसहितकेदाराय नमः ध्यानपुष्पं समर्पयामि । सहस्रशीर्षेत्यावाहनम् ।'आगच्छ देव देवेश उमया सहित प्रभो । केदारनामक स्वामिन्सर्वकामफलप्रद।' आवाहनम् । पुरुष एवेदमित्यासनम् । 'सिंहासनमिदंदिव्यं तप्तकाञ्चनसंनिभम् । ददामि ते भवानीश संसारार्णवतारक।' गौरीसहितकेदाराय नमः आसनम् । एतावानस्य० । 'गङ्गाजलं समानीतं सुवर्णकलशाहृतम् । पाद्यं गृहाण देवेश सर्वैश्वर्यसमन्वित ।' पाद्यम् । त्रिपादूर्ध्व० । 'सर्वात्मन्सर्वलोकेश सर्वव्यापिन्महेश्वर । अर्घ्यं गृहाण भगवन्कालरूप नमोऽस्तुते।' अर्घ्यम्। तस्माद्विराट्०। 'अनेकसरिदुद्भूतं सर्वदेवनमस्कृतम् । मया दत्तमिदं देव गृहाण यमनायक।' आचमनीयम् । यत्पुरुषेण० । 'स्नानं पञ्चामृतैः सम्यग्विधाय सुसमन्वितम् । मया दत्तं गृहाणेश सर्वकामफलप्रदम् ।' पञ्चामृतस्नानम् । आप्यायस्वेत्यादिवेदोक्तमन्त्रैः 'पञ्चब्रह्मादिभिर्मन्त्रैरर्चितं जाह्नवीजलम् । ममोपरि दयां कृत्वा गृहाण परमेश्वर।' शुद्धोदकस्नानम् । तं यज्ञं०।' मृदुसूक्ष्माणि पत्राणि दुकूलानि मया प्रभो । आनीतानि त्वदर्थं तु गृहाण सुरसत्तम।' इति वस्त्रम् । तस्माद्यज्ञात्स० । 'कर्पासकृततन्तूनां संयुक्तं विधिना ततः । भक्त्या त्वदर्थमानीतं गृहाण सुरसत्तम।' यज्ञोपवीतम्। 'रत्नहेमसमायुक्तं मुक्तामणिविभूषितम् । अनर्घ्याभरणं दिव्यं गृहाण परमेश्वर ।'

आभरणम् । तस्माद्यज्ञात्सर्व० । 'श्रीगन्धागुरुकर्पूरकुङ्कुमेन समन्वितम् । कस्तूरीचन्दनाद्यैश्च अर्पितं तव शंकर । 'गौरीसहितकेदाराय नमः चन्दनम् । तस्मादश्वा० 'अक्षतान्धवलान्देव शालितन्दुलसंभवान् । गृहाण पार्वतीनाथ कृपया परया मुदा ।' अक्षतान् । 'कमलं सेवतीपुष्पं बिल्वपत्राणि शंकर । मयार्पितानि यानीह गृहाण सुरसत्तम।' पुष्पम् । अथाङ्गपूजा लिख्यते।शंभवे पादौ पूजयामि, शिवाय गुल्फौ पूजयामि, रुद्राय जानुनी पूजयामि, भीमाय जंघे पूजयामि, अभीष्टदायिने ऊरू पूजयामि, सर्वज्ञाय कटिं पूजयामि, पशुपतये नाभिं पूजयामि, उमापतये हृदयं पूजयामि, नीलकण्ठाय कण्ठं पूजयामि, सर्वास्त्रधारिणे बाहू पूजयामि, त्रिपुरान्तकाय मुखं पूजयामि, दिव्यचक्षुषे नेत्राणि पूजयामि, जगत्पतये ललाटं पूजयामि, सर्वेश्वराय मूर्धानं पूजयामि, शिवाय नमः शिरः पूजयामि, जगत्कर्त्रे सर्वाङ्गं पूजयामि । यत्पुरुषं० ।'दशाङ्गं गुग्गुलं धूपं कालागुरुसमन्वितम् । धूपं गृहाण देवेश मनःशोकविनाशन।' धूपम् । ब्राह्मणोऽस्य० ।'गोघृतेन समायुक्तं कार्पासकृतवर्तिकम्। दीपार्थं तु मया दत्तं वह्निना योजितं मया ।' दीपम् । चन्द्रमा० । 'शर्कराघृतसंयुक्तं कर्पूरैलासमन्वितम् । मया निवेदितं देव नैवेद्यं प्रतिगृह्यताम् ।' नैवेद्यम् । नाभ्या आसी०।'इदं फलं मया देव स्थापितं पुरतस्तव।तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि।' फलम् । सप्तास्यास० । 'दक्षिणार्थं तु यत्नेन सुवर्णजनवल्लभम् । मया निवेदितं तुभ्यं व्रतसाद्गुण्यहेतवे ।' दक्षिणाम् । 'नानारत्नसमायुक्तं नानाचित्रोपशोभितम् । मयार्पितं सदा भक्त्या आर्तिक्यं प्रतिगृह्यताम् ।' नीराजनम् । यज्ञेन यज्ञं० । यानि कानि च पापानि इति प्रदक्षिणाम् । 'नमः केदारदेवाय नमस्ते शूलपाणये । नमः सर्वात्मने तुभ्यं भक्तानां वाञ्छितप्रद ।' नमस्कारान् । 'ज्ञानतोऽज्ञानतो वापि यद्व्रतं तु मया कृतम् । न्यूनातिरिक्तं तत्सर्वं संपूर्णं कुरु शंकर ।' प्रार्थना । नन्दीश्वराय चणकान्दत्त्वा चण्डीश्वराय तण्डुलान्दद्यात् । 'व्रतं करोमि देवेश त्वद्भक्तस्त्वत्परायणः । गौरीकेदार भवतु समाप्तं त्वत्प्रसादतः ।' दोरकबन्धनम् आचार्यपूजनम् । वायनदानमन्त्रश्च-- 'घृतपूरिकयोपेतान्फलताम्बूलमिश्रितान् । उपायनं गृहाण त्वं केदार वरदो भव । नमस्ते देवदेवेश नमस्ते जगतां पते।गौरीपते नमस्तुभ्यं त्राहिमां परमेश्वर।'क्षमापनम्। इति गौरीकेदारव्रतपूजासमाप्तिः । अथ कथा । 'पुरा तु ऋषयः सर्वे नैमिषारण्यवासिनः । शौनकाद्या महात्मानः सर्वशास्त्रविशारदाः । तीर्थयात्राप्रसङ्गेन गङ्गाद्वारमुपागमन् । तत्र स्नाताः कृतजपा विधिवद्दक्षिणां ददुः । यावत्सुखोपविष्टास्ते

हर्षनिर्भरमानसाः । अदूरे ददृशुस्तत्र सूतं शास्त्रार्थकोविदम् । ददर्श सोऽपि तांस्तत्र ऋषीन्विगतकल्मषान् । ननाम दण्डवद्भक्त्या तैश्चापि प्रतिपूजितः । ते चक्रुःपरमातिथ्यं कुशलप्रश्नमेव च । सुखोपविष्टं तं सूतं पप्रच्छुरिदमादरात् ।' ऋषय ऊचुः—'सूत सूत महाप्राज्ञ चिरं दृष्टोऽसि सुव्रत । कस्मिंस्तीर्थेऽथ वा देशे कालोऽयं विहितस्त्वया । त्वद्दर्शनेनातिसौख्यं प्राप्तं हि परमाद्भुतम् । किंचिद्विज्ञप्तुमिच्छामि तच्छृणुष्व महामते।त्वयोक्ता विविधा धर्मास्तथा नानाविधाः कथाः । व्रतानि च विचित्राणि मनोरथकराणि च । इदानीं वद मे सूत व्रतं परमपावनम् । यत्कृत्वा सर्वसिद्धिः स्यान्नराणां वाञ्छितप्रद ।' सूत उवाच—'सम्यक्पृष्टं मुनिवरा व्रतं देव्या महाद्भुतम् । ममापि कथितुं हर्षो जायते नात्र संशयः । अस्ति केदारगौर्याख्यं व्रतं परमकामदम् । विष्णुना कथितं लक्ष्म्यै लक्ष्म्या प्राच्यै तथैव च ।'ऋषय ऊचुः—'केन प्रकाशितं मर्त्ये विधानं तस्य कीदृशम् । देवता काऽत्र पूज्या स्यात्सर्वं विस्तरतो वद ।' सूत उवाच—'आन्ध्रदेशे पुरा कश्चिद्विप्रोऽभूच्छास्त्रकोविदः । नाम्ना भास्करशर्मेति स्वकर्मपरिनिष्ठितः । अकिंचनोऽपि सद्वृत्तः कुटुम्बं परिपालयन् । सत्यव्रतेति तस्यासीद्भार्या परमशोभना।कन्याद्वयं सुतश्चैकश्चन्द्रशर्मेति विश्रुतः । कमला विमलाचेति नामनीति तयोः पृथक् । ते कदाचिद्वनं याते इन्धनार्थं तपोधनाः । भ्रमन्त्यौ च वने तस्मिन्क्रीडन्त्यौ च यथेप्सितम् । तावत्सौगन्धिको वायुस्तयोरान्तिकमागमत् । कुतोऽयं वायुरावाति चिन्तयन्त्यौ पुनः पुनः । प्रयाते तेन मार्गेण यत्रोत्पन्नः स चाभवत् । ददृशाते गणेशं वै पुरतो द्वाररक्षकम् । गणेशोऽपि तदा प्राह वचनं द्विजकन्यके । वनमेतद्दुर्विलङ्घ्यं सदेवासुरमानवैः । विशेषतो महेशेन देव्या चापि सुरक्षितम् । अतः परं न गन्तव्यमीश्वराज्ञा बलीयसी । स्थीयतां तावदत्रैव नियमाद्गम्यते मया । देव्यै देवाय च तथा युवाभ्यामागतं त्विति । गणेशोऽपि तदा गत्वा मात्रे सर्वं न्यवेदयत् । श्रुत्वा वाक्यं गणेशस्य देवी प्राह गिरेःसुता। गच्छानय द्विजसुते पश्येतां मम पूजनम् । इति श्रुत्वा गणेशेन गत्वा ते द्विजकन्यके । सहैवेन्धनभारेण कन्दमूलफलादिना । शरीराच्छादनं नैव तयोः किंचित्प्रदृश्यते।कौपीनमात्रमेवासीत्केवलं गुह्यगुप्तये । तथैव ते गृहीत्वा तु मातुरन्तिकमागमत् । देव्यापि दृष्ट्वा तद्युग्ममतिदीनं क्षुधातुरम् । एतस्मिन्नन्तरे चैव ते कन्ये शुभलक्षणे । चक्राते दण्डवद्भूमौ प्रमाणं चोचतुस्तथा ।' कन्ये ऊचतुः—'मातः कमलपत्राक्षि किमिदं क्रियते त्वया । कृपया वद देवेशि सर्वज्ञासि न संशयः । अद्य मे सफलं

जन्म जीवितं च सुजीवितम् । देवि त्वद्दर्शनेनाद्य धन्यौ तौ पितरौ मम । न स्तोतुं शक्तिरस्माकं न कदाचिज्जगन्मये ।' पार्वत्युवाच—' व्रतं केदारगौर्याख्यं सर्वसंपत्प्रदायकम् । तस्यानुष्ठानमात्रेण लभ्यन्ते सर्वसिद्धयः । इदं साक्षान्महेशेन कथितं कृपया मम । यस्मिन्कृते सर्वसिद्धिस्तदिदं क्रियते मया ।' कन्ये ऊचतुः—' वद मातः कथं कार्यं व्रतं परमपावनम् । कस्मिन्दिनेऽथ वा मासे देवतां कां प्रपूजयेत् ।' देव्युवाच— 'आश्विनस्यासिते पक्षे अमावास्या यदा भवेत् । तस्यां व्रतमिदं कार्यं यथोक्तं शंभुना पुरा । प्रथमेऽब्दे यथा कार्यं तद्वदामि तपोधन । कृष्णकार्पाससूत्राणि दशैव च प्रयत्नतः । कृतानि च कुमार्याथ प्रक्षाल्य विमलोदकैः । तत्संख्यया च पत्राणि क्रमुकस्य फलानि च । तत्संख्यया ह्यपूपाश्च कर्तव्याश्चैव यत्नतः । नानाविधानि पुष्पाणि ऋतुकालोद्भवान्यपि । शूर्पवंशमयं चैकं सौभाग्यद्रव्यसंयुतम् । श्लक्ष्णमेकं नारिकेलं नैवेद्यं खाद्यसंभवः । एवं संभृत्य संभारान् ततः पूजां समाचरेत् । सौवर्णी प्रतिमा कार्या महेशस्योमया सह । तस्याग्रे सूत्रदशकं विन्यसेच्च सुशोभनम् । पूजनं विधिवत्कार्यं धूपदीपादिभिः क्रमात् । दक्षिणां च यथाशक्त्या दद्याद्देवस्य तुष्टये । विप्रः पूरुषसूक्तेन पूजयेत्स्त्री पुराणजैः । एवं संपूज्य विधिवद्भोजयेद्विप्रदम्पती । सा पूजा नैव कस्यापि दद्याद्विप्राय दक्षिणाम् । नैवेद्यं स्वयमश्नीयात्ताम्बूलं च तथैव च । वर्षमध्ये कार्यसिद्धिर्भवत्येव न संशयः । वर्षे द्वितीये तत्सर्वं द्विगुणं कारयेद्द्विजाः । एकविंशतिसूत्राणि पर्णानि च फलानि च । अपूपाश्चैव कर्तव्या एकविंशतिसंख्यया । विधिनानेन कर्तव्यं व्रतं परमपावनम् ।' सूत उवाच—' इति श्रुत्वा वचो देव्यास्ते कन्ये शुभलक्षणे । ययाचाते व्रतं देव्या भक्त्या परमया मुदा । तथेत्युक्त्वा तदा देवी कारुण्याद्व्रतमुत्तमम् । ददौ तयोर्विधानेन यथोक्तं शूलपाणिना । न्यग्रोधसूक्ष्ममूलानि फलानि च दलानि च । आनीय सत्वरं तत्र प्रत्येकं दशसंख्यया । अपूपाश्च फलान्यत्र मृण्मयाः शुभलक्षणाः । माल्याभावे बृहत्याश्च कुसुमैः पूजनं कृतम् । कुसुमानां केसराणि तेषां चैवाक्षताः कृताः । एवं संपूज्य विधिवद्गौरी पुनरुवाच ह । बध्यतां स्वकरे सूत्रं नैव त्याज्यं कदाचन । इममिन्धनभारं च कन्दमूलफलानि च । गृहीत्वा गम्यतां सर्वे पश्चान्नैवावलोकयेत् । तथेत्युक्त्वाऽथ ते कन्ये संप्रयाते गृहं प्रति । तत्सर्वं व्रतसामर्थ्याद्दिव्यं समभवत्तदा । अपूपाश्चैवसंजाता दिव्याः षड्रससंयुताः । तानिवासांसि सर्वाणि क्षणात्कौशेयतां ययुः । स एवेन्धनभारस्तु स्वर्णभारस्तदाऽभवत् । मात्रा दृष्टं तु तत्सर्वं हर्षिता विस्मिताऽ-

भवत् । माता प्रोवाच ते कन्ये किमिदं भात्यपूर्ववत्।किं कृतं किं हुतं जप्तं युवाभ्यां किं तपः कृतम् । इति मातुर्वचः श्रुत्वा ते कन्ये प्रोचतुस्तदा । कन्ये ऊचतुः– 'न जप्तं न हुतं किंचिन्नैव किंचित्तपः कृतम् । भवानीशंकरौ विप्रो नान्यं देवं कदाचन । ताभ्यां दत्तं व्रतमिदं प्रसन्नाभ्यां मनोरमम्।तेनाभूत्सर्वसंपत्तिरियं मातर्न संशयः। त्वमप्यम्ब व्रतमिदं कुरु प्रयतमानसा । तदा सत्यव्रता चक्रे व्रतं कन्योपदेशितम् । तथैव तत्कुलं जातं धनधान्यसमाकुलम् । अथ ते कन्यके जाते विवाहार्थं यथोचिते। राजानौ द्वौ समायातौ पद्माकरसुधाकरौ।दक्षिणापतिरेकश्च उत्तरेशस्तथापरः।।द्वाभ्यां कन्याद्वयं दत्तं व्रतस्यास्य प्रभावतः । पद्माकरेण कमला नीता स्वसदनं प्रति । सुधाकरेण विमला प्राप्तातीव सुसंभ्रमात् । ताभ्यां तत्क्रियते नित्यं व्रतं परमभक्तितः। एकदा तूपविष्टा सा स्वगृहे स्त्रीगणैर्युता । स्त्रीभिस्ताभिस्तत्र दृष्टं तद्धस्ते तत्सुदोरकम् । ता ऊचुः किमिदं भद्रे दोरकस्य विभूषणम् । किं ते न सन्ति रौक्माणि भूषणानि शुचिस्मिते । नानाविधानि रत्नानि त्वद्गृहे किल सुन्दरि । आकर्ण्य सत्यव्रतया स्त्रीणामीरितमाशु तत् । निष्कास्य सूत्रं तदैवाज्ञाविनोऽर्थस्य गौरवात् । नैव यस्याफलं पुण्यं कदाचिद्दृश्यते पुरा । सत्यव्रतायास्तद्भाग्यं क्षणात्संक्षीणतामगात् । यथापूर्वमभूत्सर्वं भाग्ये विलयतां गते । शाकवल्ल्याः फलैर्नित्यं क्रियते भोजनादिकम् । अथ भोक्तुं यदा नैव किंचित्सा सुतमब्रवीत् । भगिन्यौ ते चन्द्रशर्मन्वर्तेते नृपते गृहे । तयोः समीपं गत्वा च किंचिद्भक्ष्यार्थमानय । मातुर्वचनमाकर्ण्य चन्द्रशर्मा द्विजोत्तमः । पद्माकरस्य नृपतेर्नगरं प्रथमं ययौ । भगिनी कमला यत्र वर्तते पतिदेवता । स तन्नगरमासाद्य नदीतीरे बहिःस्थितः । दास्यास्तुतस्या नीरार्थमागताः शतशस्तदा । तं च दासीगणं दृष्ट्वा प्रत्युवाच द्विजर्षभः । युष्माकं स्वामिनी यास्ति मम सा भगिनी शुभा । भ्राताहं चन्द्रशर्मेति तस्याश्चैव निवेद्यताम् । तास्तु तस्योपहासं च चक्रुर्नानाविधं तदा । भ्रातृत्वे नैव योग्योऽसि पश्य वैभवमात्मनः । तन्मध्ये चाभवत्त्वेका शुभाचारा सुलक्षणा । द्विजवर्य महाभाग तवादेशं ब्रवीम्यहम् । सा समागम्य तत्सर्वं कमलायै न्यवेदयत् । तत्समाकर्ण्य कमला तं समानीय सत्वरम् । अकिंचनाकृतिं दृष्ट्वा भ्रातरं कृशदुर्बलम् । तस्याश्च वैभवं दृष्ट्वा सोऽपि लज्जानताननः । नीत्वा तं गृहमध्येऽथ बहुसंमानपूर्वकम् । दिवसानपि सप्ताष्टौ समाश्वास्य प्रयत्नतः । ततः पञ्चदशाहे च कृत्वा पाथेयमुत्तमम् । हिरण्येन समायुक्तं दत्त्वा तस्मै व्यसर्जयत् । पाथेयं तद्गृहीत्वा स प्रतस्थे द्विजपुङ्गवः । गच्छ–

च्छनैस्तु मार्गेण तृषया परिपीडितः । तावद्ददर्श विमलो द्विजः पुष्करिणीं शुभाम् । तटे विन्यस्य पाथेयं स्वयं जलमथाग्रहीत् । तावत्तु जलवीचीभिर्हृतं भक्ष्यं क्षणेन हि । पुनः प्रायाच्चन्द्रशर्मा भगिनीसदनं प्रति । निवेदयामास तदा यद्वृत्तं पथि कौतुकम् । श्रुत्वा सा पुनरेवान्यद्धिरण्यं प्रददौ तदा । पादत्राणं हिरण्यं स धृत्वा तत्प्रययौ द्विजः । पादत्राणं च मार्गे तत्पङ्के मग्नं क्षणेन हि । पुनरेव समायातो भगिनीं प्रति स द्विजः । तद्वृत्तं सर्वमाचष्ट भगिन्यै ब्राह्मणर्षभः । तन्निशम्याथ विमला पुनरेव धनं ददौ । निक्षिप्य यष्टिमध्ये तद्धृत्वा यष्टिं प्रतस्थिवान् । यावन्मार्गे समागच्छद्यष्टिमादाय सत्वरः । तावत्कश्चित्समायातः पुनर्यष्टिमपाहरत् । पुनः प्रयातो भगिनीं चन्द्रशर्मा महामतिः । उवाच पथि यद्वृत्तं निशम्याथ सविस्मितम् । मात्रा तत्क्रियते भ्रातर्व्रतं परमपावनम् । नेति सोऽप्याह वचनं चन्द्रशर्मा पुनः पुनः ।' कमलोवाच— 'तावदत्रैव तिष्ठ त्वं भ्रातः पञ्चदिनावधि । पष्ठाहे आश्विनस्याथ अमावास्या भविष्यति । व्रतं केदारगौर्याख्यं तस्यां कृत्वा यथाविधि । ततो गच्छ स्वभवनं कृतकृत्यो भविष्यति । तथेत्युक्त्वा स्थितस्तत्र व्रतं कृत्वा यथाविधि । तां समामन्त्र्य भगिनीं प्रययौ स्वगृहं प्रति । आगतस्तेन मार्गेण यत्र पुष्करणी ह्यभूत् । पुनरेव तृषाक्रान्तस्तज्जलं जगृहे ततः । जलान्तर्गतपाथेयं द्विजहस्ते तदाऽभवत् । ततो जगाम पुरतः पादत्राणं च लब्धवान् । यष्टिं च पुरुषः प्रादात्पूर्वं याऽपहृता बलात् । एवं सर्वं पुनर्लब्धं व्रतस्यास्य प्रभावतः । गृहं समागत्य ततो मात्रे सर्वं न्यवेदयत् । श्रुतं पुत्रमुखात्सर्वं विस्मृतं व्रतमादरात् । तदेव सूत्रं संगृह्य यत्त्यक्तं पूर्वमेव च । यथोक्तेन विधानेन चकारातीव भक्तितः । पुनरेव यथापूर्वं धनधान्ययुताऽभवत् । तदारभ्य व्रतमिदं मर्त्यलोके प्रकाशितम् । सर्वाभिलषितार्थानां सद्यः प्रत्ययकारकम् । सूत उवाच—'इदं केनापि न ज्ञातं विना शंभुं मुनीश्वराः । शंभुना विष्णवे दत्तं रमायै विष्णुनार्पितम् । लक्ष्म्या च दत्तमिन्द्राण्यै इन्द्राण्या बहुलीकृतम् । तदारभ्य व्रतमिदं क्रियते मानवैर्भुवि । यस्याराधनमात्रेण प्राप्यन्ते सर्वसिद्धयः । भूमौ व्रतानि चान्यानि सन्ति नानाविधानि च । परमेतस्य सर्वाणि कलां नार्हन्ति षोडशीम् । इति पूर्वं मया दृष्टं पुराणे मुनिपुङ्गवाः । तदद्य कथितं पूर्वं किमन्यच्छ्रोतुमिच्छथ।' इति श्रीपातालखण्डे केदारगौरीव्रतं पद्मपुराणीयं समाप्तम् । इति कार्तिककृष्णामावास्याकृत्यम् ।

अथ मार्गशीर्षामायां गौरीतपोव्रतम् । सूत उवाच—'इन्द्राणी प्राञ्जलि-

भूत्वा स्वपतिं वाक्यमब्रवीत् । एवं व्रतं समाचक्ष्व पुत्रपौत्रसुखप्रदम् । इति वाक्यं तदा श्रुत्वा प्रोवाच वचनं शचि । शृणु चार्वङ्गि सकलं यन्मया सुकृतं कृतम् । बृहस्पतेस्तु जनकः पृष्टः प्राहाङ्गिराः सुधीः । विधानं कथयाम्यद्य सद्यः सुखकरं परम् । पतिपुत्रसुखावाप्तिर्जायते जगति स्थिरा । गौरीप्रीत्यर्थमेवादौ स्त्रीभिर्यत्क्रियते तपः । गौरीतप इति ख्यातं तस्माद्व्रतमनुत्तमम् । तस्मात्स्त्रिया तपोभिश्च तोषणीया शिवप्रिया । आदौ मार्गशिरे मासि ह्यमावास्यादिने शुभे । गृह्णीयान्नियमं तत्र दन्तधावनपूर्वकम् । उपवासस्य नक्तस्य गौरीशप्रीतये मुदा । 'ईशार्धाङ्गहरे देवि करिष्येऽहं व्रतं तव । पतिपुत्रसुखावाप्तिं देहि देवि नमोऽस्तु ते ।' नियममन्त्रः ।' ततो मध्याह्नसमये स्नात्वा नद्यादिषु व्रती । सूर्यायार्घ्यं ततो दत्त्वा ध्यात्वा गौरीश्वरं हरम् । अहं देव व्रतमिदं कर्तुमिच्छामि शाश्वतम् । तवाज्ञया महादेवि निर्विघ्नं कुरु तत्र वै । उक्त्वैवं नियमं गृह्य वर्षाण्येव तु षोडश । गृहमागत्य पूजार्थमुपवासं प्रकल्पयेत् । शिवालयं ततो गत्वा शिवं संपूजयेत्सुधीः । गौरीमभ्यर्चयेत्पश्चाद्विधिना येन तं शृणु । पार्वतीति नमः पादौ जान्वोर्हैमवतीति च । जङ्घयोरम्बिकेत्येव गुह्ये गिरिशवल्लभा । नाभौ गम्भीरनाभीति अपर्णेत्युदरे पुनः । महादेवीति हृदये कण्ठे श्रीकण्ठकामिनी । मुखे षण्मुखमातेति ललाटे लोकमोहिनी । मेनकाकुक्षिरत्नेति शिरस्यभ्यर्चयेत्ततः । दक्षिणे गणपः पूज्यो वामे स्कन्दः सवाहनः । धूपदीपादिनैवेद्यं कृत्वा नत्वा प्रदक्षिणम् । फलेनार्घ्यं ततो दत्त्वा ध्यात्वा देवीं महेश्वरीम् । कृत्वा ताम्रमयं पात्रं मृण्मयं वा शुभासने । अष्टतन्तुमयीं वर्तिं तस्मिन्पात्रे निवेशयेत् । घृतेनापूर्य गव्येन तत्पात्रं विमलेन च । दीपमुज्ज्वालयेत्पश्चाद्यावत्सूर्योदयः स्थितः । एवं संक्षिप्य तां रात्रिं जागरेण समन्विताम् । ब्राह्मे मुहूर्ते ह्युत्थाय पूजयेद्द्विजदम्पती । कुर्याद्दौर्भाग्यदलनीं पापाग्निशमनीं तदा । पक्वान्नेन गुडान्नाद्यैः पूर्णैः पूर्णफलप्रदाम् । ऋतूद्भवैः फलैश्चैव पूपिकातिलतन्दुलैः । सौभाग्याष्टकसंयुक्तं पात्रं कुर्यात्त्रिधातुकम् । तस्योपरि गतं दीपं भ्रामयेत्तिथिनामभिः । सुवासिनीवचो ग्राह्यं दीपं सूर्याय दर्शयेत् । यावत्कलकलाशब्दं कुर्वते बककाककाः । तावत्पुरस्तात्कर्तव्यमिदमेवादरात्प्रिये । उत्तिष्ठन्ते यदि नगाद्विहगाश्चारुलोचने । तदाकर्णनमात्रेण सौभाग्यं व्रजतिस्त्रिय । अत एव तदा नारी पश्चादुत्थापयेच्च ताम् । तिथिमेकां समाप्यैवं दम्पती भोज्य शक्तितः । परिधाय स्वलंकृत्य वासोभिर्भूषणाञ्जनैः । माल्यैः सुगन्धैर्विविधैः फलसिन्दूरकुङ्कुमैः । संतोष्य समनुप्राप्य स्वयं भुञ्जीत बन्धुभिः । एवं द्वितीये वर्षे च प्रतिपद्याचरेत्तथा ।

वर्षे वर्षे क्रमादेवं द्वितीयादिषु वाचरेत् । एवं षोडश वर्षाणि कृत्वा चैव तु वत्सरम् । पश्चादुद्यापनं कुर्याद्व्रतसंपूर्तिहेतवे । मार्गशीर्षेऽथसंप्राप्ते मासेगौरीश्वरप्रिये । पौर्णमास्यां दिने रम्ये निमन्त्र्य ह्यष्टदम्पतीन् । मध्याह्नेऽष्टदले पद्मे सोमं शंभुं समर्चयेत् । यथोक्तेन विधानेन पुष्पधूपादिभिस्तथा । लोहालिभिश्च कासारैः पूपापूपैश्च भामिनी । पायसेन घृतेनापि शर्करामोदकैस्तथा । पूरयित्वा ह्यष्टसंख्यान्धातुमृन्मयसंपुटान् । दम्पतीन् भोजयित्वा तु तेभ्यो दद्याद्यथाविधि । अलंकृत्य यथाशक्त्या गौरी मे प्रीयतामिति । गुरवे लक्षणोपेतां गौरीं कनकनिर्मिताम् । दद्याद्धेनुं सुपयसं सवत्सां स्वर्णदक्षिणाम् ।अन्यान्यपि यथाशक्त्या दद्याद्दानानि भामिनि । यद्यदिष्टतमं लोके तत्तद्देयं द्विजन्मने।चापल्यमायुषो ज्ञात्वा संपत्स्वपि च सुन्दरि।षोडशाब्दव्रतमिदं कुर्याद्धर्षेण भक्तितः।गौरीतपोव्रतमिदं या करोतीह भामिनी।बाल्ये वा यौवने वापि वार्धके वा हरिप्रिये । तस्याः सौभाग्यमतुलं धनधान्यसमन्वितम् । भवेदव्याहतैश्वर्यं भर्तृसौख्यं न संशयः । दुर्लभं मानवं जन्म तत्रापि द्विजजन्मता । तत्रापि मनसः स्थैर्यं धर्मे बुद्धिश्च निश्चला । वह्वयः सुसंपदः शुद्धाः पतिपुत्रसमन्विताः । इह भोगान्यथाकामं भुक्त्वा स्वर्गमवाप्नुयात् । इत्थं गिरो वचनमाप्य परम्परायं गौरीतपोव्रतमिदं रचयेद्यथावत् । तस्य प्रभाववशतः सुलभं महिम्ना स्वाराज्यसौख्यमतुलं पतिपुत्रयुक्तम्’इति गौरीतपोव्रतम् ।

अथ माघकृष्णामावास्या । तत्र सावित्रीसहितं ब्रह्माणं पूजयित्वा नवनीतधेनुं दद्यात् । तदुक्तं हेमाद्रौ भविष्योत्तरे–‘ अमायां माघमासस्य पूजयित्वा पितामहम् । गायत्र्या सहितं देवं वेदवेदाङ्गभूषितम् । नवनीतमयीं धेनुं फलैर्नानाविधैर्युताम् । सहिरण्यां सवस्त्रां च ब्राह्मणाय निवेदयेत् । कीर्तयेत्प्रीयतामत्र पद्मयोनिः सनातनः । स्थानं स्वर्गेऽथ पाताले यन्मर्त्ये किंचिदुत्तमम् । तदवाप्नोत्यसंदिग्धं पद्मयोनेः प्रसादतः । यानि चान्यानि दानानि दीयन्ते सुबहून्यपि । युगादिषु महाराज अक्षयाणि भवन्ति हि । वित्तहीनः स्वशक्त्या यो ददाति स्वल्पकं बहु । तदप्यक्षयतां याति नात्र कार्या विचारणा । वित्तानुसारं स्वं दद्याद्धनी वा निर्धनी ध्रुवम् । भूहिरण्यगृहं वासः शयनान्यासनानि च । छत्रोपानहयानानि देयानि शुभमिच्छता । एवं दत्त्वा यथाशक्त्या भोजयित्वा द्विजोत्तमान् । पश्चाद्भुञ्जीत सुमना वाग्यतो बन्धुभिः सह । यत्किंचिद्वाचिकं पापं मानसं कायिकं तथा । तत्सर्वं नाशमायाति युगादितिथिपूजनात् । गीयमानोऽथ गन्धर्वैः स्तूयमानः सुरासुरैः । रुद्रस्यानुचरो

भूत्वा रुद्रलोके वसेन्नरः। यद्दीयते किमपि कोटिगुणं तदाहुः स्नानं जपो नियममक्षयमेव सर्वम्। स्यादक्षयासु युगपूर्वतिथीषु राजन्व्यासादयो मुनिवरा इह नान्यथैव।' इति भविष्योत्तरोक्तं युगादिकृत्यम् । माघपुष्ययोरमावास्या रविवारादियुक्ता चेत्सा अर्धोदयाख्या । तदुक्तं निर्णयामृते महाभारते—'अमाऽर्कपातश्रवणैर्युक्ता चेत्पुष्यमाघयोः। अर्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः। दिवैव योगः शस्तोऽयं न तु रात्रौ कदाचन।' वीरमित्रोदये तु पौषेति पाठः । पुष्यमाघयोर्मध्यवर्तिनी अमा पौष्यनन्तरा अमावास्येत्यर्थ इति नारायणभट्टाः। अत एव हेमाद्रौ स्कान्दे-'माघामायां व्यतीपाते आदित्ये विष्णुदैवते । अर्धोदयं तदित्याहुः सहस्रार्कग्रहैः समः ।' इति । अत्र पूर्णिमान्तमासेन माघामावास्येति मदनरत्नः । कालादर्शे मदनरत्ने च पुष्यस्य माघस्य वेत्युक्तम्।अथ स्कन्दपुराणोक्तमर्धोदयकृत्यम्।'अर्धोदये तु संप्राप्ते सर्वं गङ्गासमं जलम्। शुद्धात्मानो द्विजाः सर्वे भवेयुर्ब्रह्मसन्निभाः। यत्किंचित्क्रियते दानं सर्वं मेरुसमं भवेत्।' इति। अत्र पात्रदानमुक्तं तत्रैव—'चतुःषष्टिपलं मुख्यममत्रं तत्र कारयेत्। चत्वारिंशत्पलं वाथ पञ्चविंशतिमेव वा ।' अमत्रं पात्रम् । तच्च सुवर्णरजतादिधातुघटितं यथाविभवं बोध्यमिति वीरमित्रोदये। निर्णयसिन्धौ कृत्यरत्नावल्यां तु कांस्यमयमित्युक्तम् । 'एवं सुघटितं कार्यं कांस्यभाजनमुत्तमम् ।' इति शास्त्रान्तरसंवादात् पञ्चविंशतिपलम् । 'निधाय पायसं तत्र पद्ममष्टदलं लिखेत्।' तत्र पात्रे। 'पद्मस्य कर्णिकायां तु कर्षमात्रं सुवर्णकम्। तदभावे तदर्धं वा तदर्धं वा तु कारयेत्। भूमौ तु तण्डुलैः शुद्धैः पद्ममष्टदलं शुभम्। अमत्रं स्थापयेत्तत्र ब्रह्मविष्णुशिवात्मकम्। ' तत्र पाद्मे—'तेषां पूजा ततः कार्या श्वेतमाल्यैः सुशोभनैः। वस्त्रादिभिरलंकृत्य ब्राह्मणाय निवेदयेत्।' तत्र मन्त्रः—'सुवर्णपयसामत्रं यस्मादेतत्त्रयीमयम्। आवयोस्तारकं यस्मात्तद्गृहाण द्विजोत्तम। समुद्रमेखलां पृथ्वीं सम्यग्दत्त्वा तु यत्फलम्। तत्फलं लभते मर्त्यः कृत्वा दानममत्रकम्।'इति।आवयोस्तारकमित्यनेन प्रतिग्रहदोषाभाव उक्तः। महोदयं चाह ब्रह्माण्डपुराणे—'पातस्यान्तःपूर्वभागस्त्वमायाः शोणामध्यं भास्करस्योदये च।भानोर्वारे पूण्यमर्धोदयं स्याच्चान्द्रे वारे तन्महत्पूर्वमाहुः।' इत्यर्धोदयविधिः। अन्यदपि स्कन्दपुराणोक्तमर्धोदयव्रतम् । अगस्त्य उवाच—भगवंस्त्वत्प्रसादेन श्रुतोऽयं व्रतविस्तरः। अर्धोदयं तु मे ब्रूहि दुर्लभः स चराचरे। जीवितं प्राणिनां पुण्यं यदि चेद्वदसि प्रभो। कथं कार्यं कृते किं स्यात्फलं कथय षण्मुख।' स्कन्द उवाच—'श्रूयतां पुण्ययो-

गोऽयं दुर्लभोऽर्धोदयाह्वयः । तिर्यङ्मनुष्यदेवानां दुष्प्रापः सर्वकामदः । माघामायां व्यतीपात आदित्ये विष्णुदैवते । अर्धोदयं तमित्याहुः सहस्रार्कग्रहैः समम् । पुरा कृतं वसिष्ठेन जामदग्न्येन सुव्रत । सनकाद्यैर्मनुष्यैश्च दृष्टं भवति कुम्भज । दानानां यज्ञतीर्थानां फलं येन कृतं भवेत् । ससागरा धरा तेन सप्तद्वीपसमन्विता । दत्ता स्यात्सर्वभावेन येनह्यर्धोदयं कृतम् । गङ्गागयाप्रयागेषु पुष्कराणां त्रये तथा । मानसादिषु तीर्थेषु यत्पुण्यं स्नानदानतः । तत्समं वा न वा विप्र व्रतेनानेन कुम्भज । अश्वमेधायुतं चेष्टमिष्टापूर्तं च तैः कृतम् । अर्धोदयं कृतं यैस्तु विधिदृष्टेन कर्मणा । वाचि सत्यं गृहे लक्ष्मीः संततिश्चानपायिनी । आयुर्यशो हि विपुलं व्रतकर्ता फलं लभेत् । इन्द्राग्नियमलोकेषु निर्ऋतेरप्यपां पतेः । वायोः कुबेरस्येशस्य लोकेषु सुकृती प्रभो । वसेच्चन्द्रार्कलोकेषु लोकपालैश्च सेवितः । गोकोटिदानाद्यत्पुण्यं क्षेत्रतीर्थनिवासिनाम् । अर्धोदयस्य पुण्यस्य कलां नार्हन्ति षोडशीम् । भूलोकाधिपतिश्चैव भुवर्लोकाधिपस्तु सः । स्वर्लोकेषु जनानां च तपोलोकस्य चेश्वरः । महर्लोके वसेन्नित्यं यावदिन्द्राश्चतुर्दश । ततो हिरण्यगर्भस्य पुरुषो व्रतकारकः । अर्धोदयप्रसादेन ब्रह्मलोके वसेत्तु सः । तथा मानेन चागस्त्य रुद्रमूर्तिधरो भवेत् । शिवलोके गणैः पूज्यो देवराजसमन्वितः । वसेच्छाक्रेण मानेन व्रतस्यास्य प्रभावतः । ततो विष्णुस्वरूपेण त्रैलोक्याधिपतिर्भवेत् ।' अगस्त्य उवाच—'स्कन्द केन विधानेन कर्तव्यं व्रतमुत्तमम् । अर्धोदये मनुष्याणां जीवितं दुर्लभं भुवि ।' स्कन्द उवाच—'कृते कृतं वसिष्ठेन त्रेतायां रघुणा कृतम् । द्वापरे धर्मराजेन कलौ पूर्णोदरेण च । अन्यैर्देवमनुष्यैश्च दैत्यैश्च द्विजसत्तम । कृतमर्धोदयं सम्यक्सर्वकामफलप्रदम् । माघमासे कृष्णपक्षे पञ्चदश्यां रवेर्दिने । वैष्णवेन तु ऋक्षेण व्यतीपाते सुदुर्लभे । पूर्वाह्णे संगमे स्नात्वा शुचिर्भूत्वा समाहितः । सर्वपापविशुद्ध्यर्थं नियमस्थो भवेन्नरः ।' तत्र मन्त्रः— 'त्रिदैवत्यं व्रतं देवाः करिष्ये भुक्तिमुक्तिदम् । भवन्तु संनिधौ मेऽद्य त्रयो देवास्त्रयोऽग्नयः । ब्रह्मविष्णुमहेशानां सौवर्णी पलसंख्यया । कर्तव्याऽर्चा[1] तदर्धेन तदर्धेनाथ वा द्विज । साग्रं शतत्रयं शंभो-र्द्रोणानां तिलपर्वतः । कर्तव्यो विष्णुरुद्राभ्यां गिरिः पूर्वोक्तसंख्यया । शय्यात्रयं ततः कुर्यादुपस्करसमन्वितम् । देवानां त्रयमुद्दिश्य कर्तव्यं भक्तिशक्तितः । ब्रह्मविष्णुशिवप्रीत्यै दातव्यं तु गवां त्रयम् । हिरण्यं भूमिधान्यादि दानं विभवसारतः । दातव्यं श्रद्धयोपेतं ब्राह्मणेभ्यः प्रयत्नतः । मध्याह्ने तु नरः स्नात्वा शुचिर्भूत्वा समाहितः ।

१—अर्चा प्रतिमा । २—शम्भुरत्र ब्रह्मा ।

तिलपर्वतमध्यस्थं पूजयेद्देवतात्रयम् ।' आदौ पूजा । 'नमो विश्वसृजे तुभ्यं सत्याय परमेष्ठिने । देवाय देवपतये ज्ञानानां पतये नमः ।' अथाङ्गपूजा । ॐ ब्रह्मणे नमः पादयोः, परमेष्ठिने नमः जङ्घयोः, धात्रे नमः जानुनोः, हिरण्यगर्भाय नमः ऊर्वोः, वेधसे नमो गुह्ये, पद्मोद्भवाय नमो बस्तौ, हंसवाहनाय नमः कटिदेशे, शतानन्दाय नमो वक्षसि, सावित्रीपतये नमो बाहुषु, ऋग्वेदाय नमः पूर्ववक्त्रे, यजुर्वेदाय नमः दक्षिणवक्त्रे, सामवेदाय नमः पश्चिमे, अथर्ववेदाय नम उत्तरे, चतुर्वक्त्राय नमः शिरसि, हंसाय नमः कपालाय नमः । 'ततः कार्या लोकपालपूजा विप्र स्वमन्त्रतः ।' इन्द्राय नम इत्यादि ।'हिरण्यगर्भपुरुषप्रधानाव्यक्तरूपवान् । प्रसादसुमुखो भूत्वा पूजां गृह्ण नमोऽस्तु ते ।' ब्रह्मप्रार्थनामन्त्रः । 'नारायण जगन्नाथ नमस्ते गरुडध्वज । पीताम्बर नमस्तुभ्यं जनार्दन नमोऽस्तु ते ।' अनन्ताय नमः पादयोः । गोविन्दाय नमः जङ्घयोः । मुकुन्दाय नमः जानुनोः । विश्वरूपाय नम ऊर्वोः । प्रद्युम्नाय नमो गुह्ये । पद्मनाभाय नमो नाभौ । भुवनोदराय नमः उदरे । कौस्तुभवक्षसे नमो वक्षसि । चतुर्भुजाय नमो बाहुषु । विश्वतोमुखाय नमो वदने । सहस्रशिरसे नमो मौलौ । 'आदित्यचन्द्रनयन दिग्बाहो दैत्यसूदन । पूजां दत्तां मया भक्त्या गृहाण करुणाकर ।' विष्णुप्रार्थनामन्त्रः— 'महेश्वर महेशान नमस्ते त्रिपुरान्तक । नमो जीमूतकेशाय नमस्ते वृषभध्वज ।' ईशानाय नमः पादयोः, चन्द्रेश्वराय नमः जङ्घयो , पशुपतये नमः जानुनोः , शंकराय नमः ऊर्वोः , उमाकान्ताय नमः गुह्ये, नीललोहिताय नमः नाभौ , कृत्तिवाससे नम उदरे, नागोपवीतिने नमः वक्षसि , भोगिरूपाय नमःबाह्वोः, नीलकण्ठाय नमः कण्ठे , पञ्चवक्त्राय नमः मुखे , कपर्दिने नमः मौलौ । 'अन्धकारेऽप्रमेयात्मन्नमो लोकान्तकाय च । पूजां दत्तां मया भक्त्या गृहाण वृषभध्वज ।' शिवप्रार्थनामन्त्रः । 'इति पूजाक्रमः प्रोक्तो मन्त्रैरेतैः प्रयत्नतः । आचार्यं पूजयेद्भक्त्या वस्त्रालंकारभूषणैः । हस्तमात्रा कर्णमात्रा पीठं छत्रं कमण्डलुः । श्वेतवस्त्रयुगं देयं ब्रह्मणे सर्वमूर्तये । पीतवस्त्रयुगं विष्णोर्लोहितं शंकरस्य च । पञ्चामृतेन स्नपनं पूजनं कुसुमैः स्वकैः । कमलैस्तुलसीपत्रैर्बिल्वपत्रैरखण्डितैः । तत्कालसंभवैर्दिव्यैः पूज्या देवा यथाक्रमम् । यथाशक्ति प्रकर्तव्यं व्रतमेतत्सुदुर्लभम् । जीवितं प्राणिनामेतदनित्यं निश्चितं यतः । अथ व्रताङ्गहोमस्य विधानं शृणु तत्त्वतः । देवतात्रयमुद्दिश्य शास्त्रदृष्टेन कर्मणा । ( प्रजापतये विश्वरूपाय रुद्राय नमः ) । इत्यनेनैव मन्त्रेण वह्निं संस्थाप्य भक्तितः । ततो होमं प्रकुर्वीत यथाविभवसंभवम् ।' अग्नये प्रजाप-

तये स्वाहा । अग्नये विष्णवे स्वाहा । अग्नये रुद्राय स्वाहा । एवंविधश्चरुहोमः । प्रजापते न त्वदेतान्यन्येति मन्त्रेण प्रजापतये स्वाहा । इदं विष्णुरिति विष्णवे० । त्र्यम्बकं महादेवाय० । इत्येतैर्मन्त्रैर्घृतहोमः । ब्रह्मणे विष्णवे महादेवाय स्वाहेति पूर्णाहुत्या सर्वान्कामानवाप्नोतीति व्रताङ्गो होमः । 'अथ होमावसाने च गां च दद्यात्पयस्विनीम् । स्वर्णशृङ्गीं रौप्यखुरां घण्टाभरणभूषिताम् । ताम्रपृष्ठीं कांस्यदोहां सर्वोपस्करसंयुताम् । सदक्षिणां सुशीलां च आचार्याय निवेदयेत् । तेन दत्तं हुतं जप्तमिष्टं यज्ञैः सहस्रधा । कृतकृत्यो भवेद्विप्र व्रतस्यास्य प्रभावतः।एतत्सर्वं मयाख्यातं दुर्लभं व्रतमुत्तमम्।अर्धोदयं यथादृष्टं किमन्यच्छ्रोतुमिच्छसि ।'इति स्कन्दपुराणोक्तमर्धोदयव्रतम् । इति माघामावास्याकृत्यम् ।

अथ फाल्गुनामावास्याकृत्यम् । सा च युगादिः । अमावास्या वेति माघस्येति मात्स्यात् । दर्शे तु माघमासस्येति स्कान्दाच्च । अत्र माघोऽमान्तमानेन ग्राह्यः । अत्र युगादित्वादपिण्डश्राद्धं कार्यम् । प्रकृतपार्वणेन सह तन्त्रेण प्रयोगोऽपीति कौस्तुभे । माघामावास्यायां शतभिषानक्षत्रयुक्तायां श्राद्धादिकं महातृप्तिप्रदं पितॄणां भवति । तदुक्तं हेमाद्रौ विष्णुपुराणे— ' माघासिते पञ्चदशी कदाचिदुपैति योगं यदि वारुणेन । ऋक्षेण कालः स परः पितॄणां न ह्यल्पपुण्यैरुपलभ्यतेऽसौ ।'इति । अस्यामेव पूर्वभाद्रपदायुक्तायां श्राद्धादिकं कार्यम् । तेन सहस्रयुगपर्यन्तं तृप्तिर्भवति । तदुक्तम्—' तत्रैव चेद्भाद्रपदस्तु पूर्वः काले तदा यत्क्रियते पितृभ्यः । श्राद्धे परां तृप्तिमवाप्नुवन्ति युगान्सहस्रं पितरश्च तेन ।' इति । इयं धनिष्ठायुक्ता वर्षायुतं तृप्तिप्रदा भवति । तदुक्तं भारते माघामावास्याप्रकरणे—' काले धनिष्ठा यदि नाम तस्मिन्भवेच्च भूपाल तदा पितृभ्यः । दत्तं तिलान्नं प्रददाति तृप्तिं वर्षायुतं तत्कुलजैर्मनुष्यैः'इति । इदं च कुम्भादित्ये ज्ञेयमिति हेमाद्रिः।इयं मन्वादिरपि।अस्यामेवामावास्यायां रुद्रादिपूजोक्ता लैङ्गे फाल्गुनप्रक्रमे । 'अस्याममायां पूज्याश्च रुद्रोऽग्निर्ब्राह्मणास्तथा । मांसौदनैः पोलिकाभिः पूज्यश्चात्मा सबान्धवः ।' इति । इति फाल्गुनामावास्याकृत्यानि ।

अथ योगविशेषेण अमायां कर्तव्यविशेषो हेमाद्रौ शातातपेनोक्तः । 'अमायां तु भवेद्वारो यदा भूमिसुतस्य वै । जाह्नवीस्नानमात्रेण गोसहस्रफलं लभेत् ।' महाभारते—'अमा सोमे तथा भौमे गुरुवारे यदा भवेत् । तत्पर्व पुष्करं नाम सूर्यपर्वशताधिकम्।'तथा शनिवारयोगेऽपि फलाधिक्यं स्कन्दपुराणे अवन्तीमाहात्म्ये—'शनियोगे यदामा वै जायते सर्वकामदा । तदा स्नानं च दानं च श्राद्धं चैव च कार-

येत् । तस्य हस्तगता लक्ष्मीर्जायते सर्वदा भुवि ।' इति । विष्णुपुराणे—'अमावास्या यदा मैत्रविशाखाऋक्षयोगिनी । श्राद्धे पितृगणस्तृप्तिं तदाप्नोत्यष्टवार्षिकीम् ।' क्वचित्तु विशाखा स्वातियोगिनीति पाठः । मैत्रमनुराधा । तथा 'अमावास्या यदा पुष्ये रौद्रर्क्षे वा पुनर्वसौ । द्वादशाब्दां तथा तृप्तिं प्रयान्ति पितरोऽर्चिताः । वासवाजैकपादर्क्षे पितॄणां तृप्तिमिच्छताम् । वारुणे चाप्यदैवत्ये देवानामपि दुर्लभा ।' ऐन्द्रर्क्षमार्द्रा । वासवं धनिष्ठा । अजैकपादं पूर्वाभाद्रपदा । वारुणं शतभिषा । आप्यं पूर्वाषाढा । यस्यां कस्याममायोगविशेषैः पारिभाषिको व्यतीपात उक्तो भारते—'श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तकैः । अमा चेद्रविवारेण व्यतीपातः स उच्यते । तत्र जप्तं हुतं दत्तं सर्वं कोटिगुणं भवेत् ।' नागदैवतमाश्लेषा मस्तकं मृगशीर्षकम् । सोमवारादियुता अमावास्या सूर्यग्रहैः समा । तदुक्तं शंखेन—'अमावास्या तु सोमेन सप्तमी भानुना तथा । चतुर्थी भूमिपुत्रेण सोमपुत्रेण चाष्टमी । चतस्रस्तिथयस्त्वेताः सूर्यग्रहणसंनिभाः । स्नानं दानं तथा श्राद्धं सर्वं तत्राक्षयं भवेत् ।' इति । इयं सोमवारयुता कपिलतीर्थे श्राद्धादावतिप्रशस्ता । तदुक्तं काशीखण्डे— 'अमासोमसमायोगे श्राद्धं यद्यत्र लभ्यते । तीर्थे कपिलधारेऽस्मिन्गयया पुष्करेण किम् । दिव्यान्तरिक्षभौमानि यानि तीर्थानि सर्वशः । तान्यत्र निवसिष्यन्ति दर्शे सोमादिनान्विते ।' इति । अयं च योगो दिवैव शस्त इति शिष्टाः ।

अथ सोमवत्यमाव्रतकथा । युधिष्ठिर उवाच— 'हतेषु कुरुमुख्येषु भीमसेनेन कोपिना । तथा परेषु भूपेषु हतेषु युधि जिष्णुना । दुर्योधनकुमित्रेण जातोऽस्माकं कुलक्षयः । न सन्ति भुवि पाताले बालवृद्धातुरादृते । अवशिष्टा वयं पञ्च वंशे भारतसंज्ञके । एकातपत्रमपि च राज्यं मह्यं न रोचते । जीवितेऽपि जुगुप्सा मे न चाङ्गेषु रतिः क्वचित् । दृष्ट्वा संततिविच्छेदं संतापो हृदयेऽनिशम् । अश्वत्थामास्त्रनिर्दग्ध उत्तरागर्भसंभवः । अतो मे द्विगुणं दुःखं पिण्डविच्छेददर्शनात् । किं करोमि क्व गच्छामि पितामह वदाधुना । येन संपद्यते सद्यः संततिश्चिरजीविनी ।' भीष्म उवाच-'शृणु राजन्प्रवक्ष्यामि व्रतानां व्रतमुत्तमम् । यस्याचरणमात्रेण संततिश्चिरजीविनी । अमावास्या यदा पार्थ सोमवारयुता भवेत् । तस्यामश्वत्थमागत्य पूजयित्वा जनार्दनम् । अष्टोत्तरशतं कुर्यात्तस्मिन्वृक्षे प्रदक्षिणाः । तावत्संख्यान्युपादाय रत्नधातुफलानि च । व्रतराजमिदं राजन्विष्णोः प्रीतिकरं परम् । उत्तरां[1] कारय प्राज्ञ गर्भो जीवमवाप्स्यति । भविष्यति गुणी पुत्रस्त्रिषु लोकेषु विश्रुतः ।

१—उत्तराम्—अभिमन्युपत्नीम् ।

श्रुत्वा पितामहवचः प्रत्युवाच युधिष्ठिरः ।' युधिष्ठिर उवाच—'तद्व्रतं व्रतराजाख्यं विस्तरेण प्रकाशय।केन प्रकाशितं मर्त्ये केनेदं विहितं विभो।'भीष्म उवाच—'आस्ते या सर्वविख्याता काञ्चीनाम महापुरी। ब्रह्मक्षत्रियाविट्शूद्रैः स्वकर्मनिरतैर्वृता।रजताचलसंकाशसौधसंघैर्विराजिता । सुवेषैर्नागरजनैर्नारीभिरुपशोभिता । रूपचातुर्यवर्याभिर्वेश्याभिः समलंकृता। अलकेव कुबेरस्य शक्रस्येवामरावती । तेजस्वतीव रत्नाढ्या पावकस्य महापुरी । तत्र राजा रत्नसेनो बभूवामितविक्रमः । तस्मिन्वसति भूचक्रमृद्धमासीदतीव हि । तस्य देशेऽवसद्विप्रो वेदवेदाङ्गपारगः । देवस्वामीति नाम्ना वै देवतातिथिपूजकः । तस्य भार्या तु विप्रस्य नाम्ना धनवती शुभा । यथार्थनामधेया सा लक्ष्मीरिव सविग्रहा । तस्यां स जनयामास सप्त पुत्रान् शुभान्वितान् । एकां दुहितरं रम्यां नाम्ना गुणवतीं नृप । कृतदाराश्च ते पुत्रा विहरन्ति यथासुखम् ।कन्या कुमारिका चासीदनुरूपप्रियार्थिनी । अत्रान्तरे द्विजः कश्चिद्भिक्षार्थी समुपागतः । दीप्यमानः स्वतेजोभिर्मूर्तिमानिव पावकः । द्वारदेशमुपागत्य प्रयुयोजाशिषं तदा । देवस्वामिस्नुषाः सप्त समुत्थाय ससंभ्रमम् । भिक्षां प्रत्येकमानिन्युर्ददुस्तस्मै द्विजन्मने। अवैधव्याशिषः प्रादात्ताभ्यः सौभाग्यसंपदाम् । ततो गुणवतीमात्रा प्रहिता सह भिक्षया । विप्राय भिक्षां प्रददौ कृत्वा पादाभिवन्दनम् । आशिषं च ददौ विप्रः शुभे धर्मवती भव । सवैलक्ष्यं गुणवती श्रुत्वा प्रत्याययौ गृहम् । मात्रे निवेदयामास आशिषं तेन योजिताम् । श्रुत्वा धनवतीं पुत्रीं करे धृत्वा समाययौ । प्रणतिं कारयामास पुनस्तस्मै द्विजन्मने । तथैवाशिषमुच्चार्य विप्रस्तामभ्यनन्दयत् । श्रुत्वाशिषं धनवती सचिन्ता प्रत्युवाच ह ।' धनवत्युवाच—' प्रसीद भगवन्विप्र वचनं मेऽवधारय । स्नुषाभ्यः प्रणताभ्यो मे त्वया दत्ता वराशिषः । अवैधव्यकराः पुत्रसुखसौभाग्यसाधकाः । सुतायां प्रणतायां मे विपरीतं त्वयोदितम् । भद्रे धर्मवती भूया इत्युदीर्य पुनः पुनः । आशीः प्रयुक्ता विप्रर्षे कारणं वद सत्वरम् ।' द्विज उवाच—' धन्यासि त्वं धनवति प्रख्याताचारिता भुवि । यथायोग्या प्रयुक्तेयं मयाशीर्दुहितुस्तव । इयं सप्तपदीमध्ये विधवात्वमवाप्स्यति । धर्माचरणमत्यर्थं कर्तव्यं परमेतया । यदागता भवेत्सोमा गृहे वै तव सुन्दरी।तस्याःपूजनमात्रेणभवेद्वैधव्यनाशनम्।अतो मयाशीर्दत्तेयं शुभे धर्मवती भव।श्रुत्वा धर्मवती जाता चिन्ताकुलितचेतना ।उवाच वचनं दीनं प्रणिपत्य पुनः पुनः । धनवत्युवाच—'सोमागमनमात्रेण भवेद्वैधव्यभञ्जनम् । का सा सोमा त्वया प्रोक्ता का जातिः कुत्र संस्थितिः । तस्या वद महाभाग न कालो

विस्तरस्य मे ।' द्विज उवाच—'सा सोमा रजकीजातिः स्थितिस्तस्याश्च सिंहले । सा चेदायाति ते वेश्म तदा वैधव्यभञ्जनम् । इत्युक्त्वा ब्राह्मणोऽन्यत्र गतो भिक्षाप्रतीक्षया । धनवत्यपि पुत्रेभ्यः प्रोवाच वचनं तदा ।' धनवत्युवाच—'इयं दुर्ललिता पुत्री स्वसा गुणवती शुभा । सोमानयनमात्रेण भवेद्वैधव्यभञ्जनम् । अस्ति यस्य पितुर्भक्तिर्मातुर्वचसि गौरवम् । स प्रयातु सह स्वस्रा सोमामानयितुं द्रुतम् ।' पुत्रा ऊचुः—'ज्ञातं मातस्तव स्वान्तं पुत्रीस्नेहवशंवदम् । यतो देशान्तरं पुत्रान्प्रस्थापयसि दुर्गमम् । अन्तरा दुस्तरः सिन्धुः शतयोजनविस्तरः । अशक्यं गमनं तत्र न क्षमा गमने वयम् ।' देवस्वाम्युवाच—'अपुत्रः सप्तभिः पुत्रैरहं यास्यामि सिंहलम् । आनयिष्यामि तां सोमां पुत्रीवैधव्यनाशिनीम् । एवं वादिनि सक्रोधे देवस्वामिनि तत्क्षणे । शिवस्वामी कनिष्ठश्च पुत्रः प्रोवाच संनतः । मैवं वद महाभाग रोषावेशवशंगतः । मयि तिष्ठति कः शक्तो गन्तुं द्वीपं हि सिंहलम् । इत्युक्त्वा सहसोत्थाय प्रणम्य शिरसा गुरुम् । प्रतस्थे सहितः स्वस्रा द्वीपं सिंहलसंज्ञितम् । स कियद्भिर्दिनैर्गत्वा तीरं प्राप सरित्पतेः । तं तर्तुमम्बुधिं तत्र प्रकारमकरोद्द्विजः । स ददर्श सुविस्तीर्णं न्यग्रोधद्रुममन्तिके । तत्कोटरे सुखासीना गृध्रराजसुतास्त्रयः । तत्पादपतले स्थित्वा ताभ्यां नीतं तु तद्दिनम् । शावकानां कृते गृध्रो गृहीत्वा शिशुभोजनम् । भोजनं दत्तमपि ते भुञ्जते स्म न शावकाः । पप्रच्छ चाग्रतो गृध्रः शावकांस्ताह्वि विह्वलान् । गृध्र उवाच—'कथं न भुञ्जते पुत्रा भवन्तः क्षुधिता अपि । आनीतं कोमलं मांसं भवद्योग्यमिदं मया ।' शावका ऊचुः—'एतद्वृक्षतले तात मानवावत्र तिष्ठतः । अस्वीकृते तयोस्तात कथं भुञ्जामहे वयम् । एतच्छ्रुत्वा स गृध्रस्तु करुणाहृतचेतनः । तयोरन्तिकमागत्य वचनं समभाषत ।' गृध्र उवाच—' जातस्तु युवयोः कामो भोजनं क्रियतामिदम् । पारमुत्तारयिष्यामि जलधेः प्रातरेव तु । ततो रात्र्यां व्यतीतायामुदिते तु दिवाकरे । पारमुत्तारितौ तौ तु गृध्रराजेन वेगिना । सिंहलद्वीपमागत्य स्थितौ सोमागृहान्तिके । ततः प्रत्यूषसमये संमृज्याङ्गणमण्डलम् । लेपनं चक्रतुस्तत्र तदावासे दिनं प्रति । एवं विदधतोस्तत्र पूर्णः संवत्सरो ययौ । स्नुषाः पुत्रान्समाहूय सोमा पप्रच्छ विस्मिता । मार्जनं लेपनं को वा करोति मम कथ्यताम् । एकदैवाथ जगदुः सर्वाः कार्यमिदं हि नः । एकदा रजकी सोमा निभृता संस्थिता निशि । ददर्श ब्राह्मणीं कन्यां मार्जयन्तीं गृहाङ्गणम् । लिम्पन्तमङ्गणं प्राप्तं भ्रातरं च सुदुर्गतम् । सोमा पप्रच्छ तौ गत्वा कौ युवां कथ्यतां मम । ऊचतुस्तौ तदा पृष्टावावां

ब्राह्मणपुत्रकौ ।' सोमोवाच—'दग्धास्मि बत नष्टास्मि ब्राह्मणौ गृहमार्जकौ । कां गतिं बत यास्यामि पापादस्मान्न संशयः । पापजातिरहंख्याता रजकी सर्वतो द्विज । कथं त्वं ब्राह्मणो भूत्वा विरुद्धं मे चिकीर्षसि ।' शिवस्वाम्युवाच—'एका गुणवती नाम स्वसा मम सुमध्यमा । अस्याः सप्तपदीमध्ये वैधव्यं संप्रपत्स्यते । तव सांनिध्यमात्रेण भवेद्वैधव्यभञ्जनम् । अतो हेतोः सह स्वस्रा दासकर्म करोमि ते ।' सोमोवाच—'अतः परं न कर्तव्यं यास्यामि तव शासनात् । इत्युक्त्वा गृहमागत्य स्नुषाभ्यः प्रत्युवाच ह । यः कश्चिन्मम राज्येऽस्मिन्म्रियते मानवः क्वचित् । तथैव रक्षणीयोऽसौ यावदागम्यते मया । कस्यचिद्वचनात्कोऽपि न दग्धव्यः कथंचन । तथेत्युक्ता स्नुषाभिः सा सोमायाता महाम्बुधिम् । पारमुत्तारयामास क्षणेन द्विजपुत्रकौ । स्वयमाकाशयानेन सा ततार महार्णवम् । प्रापुः काञ्चीं पुरीं सर्वे निमेषात्तत्प्रभावतः । सोमां दृष्ट्वा धनवती हृष्टा पूजामथाकरोत् । अत्रान्तरे शिवस्वामी तदा देशान्तरात्स्वसुः । सदृशं वरमानेतुं जगामोज्जयिनीं प्रति । आनीय च वरं तत्र देवशर्मसुतं सुधीः । ब्राह्मणं रुद्रशर्माणं गुणेन सदृशं स्वसुः । ततः सा रजकी सोमा वैवाहिकमकारयत् । सुलग्ने च सुनक्षत्रे देवस्वामी तु कन्यकाम् । ददौ तस्मै गुणवतीं गुणिने रुद्रशर्मणे । ततो वैवाहिकैर्मन्त्रैर्हूयमाने हुताशने । ततः सप्तपदीमध्ये रुद्रशर्मा मृतस्तदा । रुरुदुर्बान्धवाः सर्वे स्थिता सोमा निराकुला । आक्रन्दः सुमहानासील्लोकानां तत्र पश्यताम् । धनवत्यै च सा तूर्णं व्रतराजप्रभावजम् । पुण्यं संकल्प्य विधिवद्ददौ मृत्योर्विनाशनम् । रुद्रशर्मापि तस्माच्च व्रतराजप्रभावतः । आससाद तदा जीवं सुप्तवत्सहसोत्थितः । एवं विवाहं निर्वर्त्य व्रतराजं निवेद्य च । आमन्त्र्य तां धनवतीं सोमा प्रायाद्गृहं प्रति । एवं सा रजकी सोमा जीवयित्वा मृतं द्विजम् । चचाल हर्षसंपूर्णा पूर्णकामा स्वमन्दिरम् । अत्रान्तरे गृहे तस्याः प्रथमं तनयो मृतः । पुनः स्वामी मृतस्तस्या जामाता च ततो मृतः । आगच्छंत्यास्तदा तस्याः सोमवारान्विता तिथिः । अमावास्या बभूवाथ मृतसंजीविनी तिथिः । सा ददर्श ततो यान्ती वृद्धां कांचित्स्त्रियं तदा । तूलभारभराक्रान्तां क्रन्दमानां सुदुःखिताम् ।' वृद्धोवाच—'अवतारय मे पुत्रि तूलभारं शिरःस्थितम् । एतद्भारभराक्रान्तो बाधते स्कन्ध एष मे ।' सोमोवाच । 'अमावास्याऽद्य हे वृद्धे सोमवारयुता तिथिः । तूलकं न स्पृशाम्यद्य नियमोऽयं मया कृतः । पुनर्ददर्श यान्ती सा तूलभारवतीं स्त्रियम् । साप्युवाच ततः पुत्रि तूलभारो महानिति । अवतार्य क्षणं तिष्ठ सङ्के

यास्याम्यहं तव'। सोमोवाच—'अद्य तूलं तथा मूलं न स्पृशामि कथंचन। ततोऽश्वत्थतरुं प्राप्य नदीतीरभवं पथि। स्नात्वा विष्णुं समभ्यर्च्य शर्कराभिः प्रदक्षिणम्। सा चकार महाभागा तदैवाष्टोत्तरं शतम्।' भीष्मउवाच—'यदा प्रदक्षिणावर्तं कृतं शर्करहस्तया। तदा जीवितवन्तस्ते जामातृपितृपुत्रकाः।नगरं श्रीसमाकीर्णं तद्गृहं च विशेषतः। अथ याता महाभागा सोमा स्वभवनं प्रति। जीवितं वीक्ष्य भर्तारं पुत्रान् जामातरं तथा। अतुलांस्तान्समासाद्य जगाम कृतकृत्यताम्। प्रणिपत्य स्नुषाः सर्वाः पप्रच्छुस्तां तपस्विनीम्।' स्नुषा ऊचुः—'मृतास्ते तनया देवि पतिजामातृबान्धवाः। जीवितास्ते कथं देवि मृतास्ते च कथं वद।' सोमोवाच—'गुणवत्यै मया दत्तं व्रतराजस्य पुण्यकम्। मृतास्ते तद्वियोगेन पतिजामातृपुत्रकाः। तूलकं न मया स्पृष्टं मूलकं च तथा अपि। अश्वत्थे विष्णुमभ्यर्च्य तदा तत्र प्रदक्षिणम्। शर्कराहस्तया तत्र कृतमष्टोत्तरं शतम्। जीवितास्तत्प्रभावेण प्रतिजामातृपुत्रकाः। सर्वाभिः क्रियतामद्य व्रतराजो विधानतः। भविष्यति न वैधव्यं सौभाग्यं संभविष्यति। स्नुषास्ताः कारयामास तथा सोमा व्रतेश्वरम्। भुक्त्वा भोगान्बहूंस्तत्र पुत्रपौत्रादिभिः सह। तैश्च सर्वैः परिवृता विष्णुलोकमवाप सा। इत्येतत्कथितं पार्थ विस्तरेण मया तव।' युधिष्ठिर उवाच—'माहात्म्यं व्रतराजस्य को विधिर्वद विस्तरात्। कर्तव्यं केन भो भीष्म नारीभिः पुरुषेण वा।' भीष्म उवाच— अमावास्या तिथिः पार्थ सोमवारान्विता यदा। तदा पुण्यतमः कालो देवानामपि दुर्लभः। प्रातरुत्थाय विधिना स्नानं कार्यं जलाशये।स्नात्वा मौनेन कौशेयं परिधाय व्रती ततः।प्रायादश्वत्थवृक्षस्य समीपं कुरुनन्दन।अश्वत्थमूले कर्तव्या विष्णुपूजा समन्त्रकम्। व्यक्ताव्यक्तस्वरूपाय सृष्टिस्थित्यन्तकारिणे। आदिमध्यान्तहीनाय विष्टरश्रवसे नमः।' विष्णुपूजामन्त्रः—'एवं संपूज्य गोविन्दं पीतवस्त्राक्षतैः फलैः। कुसुमैर्विविधैश्चैव भक्ष्यभोज्यैस्तथाविधैः। अश्वत्थपूजनं कार्यं प्रोक्तमन्त्रेण पाण्डव।' 'अश्वत्थ हुतभुग्वासो गोविन्दस्य सदाश्रय। अशेषं हर मे शोकं वृक्षराज नमोऽस्तु ते।' अश्वत्थपूजामन्त्रः— 'मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे। अग्रतो रुद्ररूपाय वृक्षराजाय ते नमः।' प्रदक्षिणामन्त्रः।'एवं पूजाविधिं कृत्वा ततः कुर्यात्प्रदक्षिणाम्। मौक्तिकैः काञ्चनै रूप्यैर्हीरकैर्मणिभिस्तथा। कांस्यपात्रैस्ताम्रपात्रैर्भक्ष्यपूर्णैः पृथक्पृथक्। गृहीत्वा भ्रमणं कार्यं प्रादक्षिण्येन पिप्पले। तावत्प्रदक्षिणं कार्यं यावदष्टोत्तरं

शतम् । तद्वस्तुजातं विप्राय पुरंध्रीभ्यः प्रदापयेत् । ततो निरामिषाहारं कुर्यान्निजजनैः सह । एष ते कथितो विप्र व्रतराजविधिर्मया । द्रौपदीं च सुभद्रां च कारयस्व तथोत्तराम् । उत्तरागर्भसंस्थस्तु जीवितं लप्स्यतेऽचिरात् ।' युधिष्ठिर उवाच—'या स्वल्पविभवा नारी काञ्चनाद्यैर्विना कृता । सा कथं लप्स्यते पूर्णं व्रतराजफलं वद ।' भीष्म उवाच—'फलैः पुष्पैस्तथा भक्ष्यैर्वस्त्राद्यैरपि पाण्डव । कुर्यात्प्रदक्षिणावर्तं सापि पूर्णं लभेत्फलम् । व्रतमिदमखिलं नरेन्द्र विष्णोः श्रुतमनया हि यथा क्रमान्वयापि । पतिसुतधनलिप्सया पुरंध्री सपदि करोतु न चात्र चित्रमस्ति ।' भीष्म उवाच—'शृणु पार्थ प्रवक्ष्यामि उद्यापनविधिं शुभम् । यं विना पूर्णता न स्याद्व्रतस्य न फलं भवेत् । सर्वतोभद्रमध्ये तु स्थापयेत्कुम्भमुत्तमम् । तत्र वै प्रतिमां विप्र सौवर्णीं च चतुर्भुजाम् । लक्ष्म्यावाहनसंयुक्तामामाषाच्च पलावधि । उपचारैरनेकैश्च यथावित्तविस्तरैः । नैवेद्यैः पुष्पधूपैश्च दीपैश्च परितः स्थितैः । रात्रौ जागरणं कुर्यात्प्रभाते होममाचरेत् । समिद्भिः पिप्पलाभिश्च पायसेन तिलैस्तथा । पूर्णाहुतिं च जुहुयाद्गां च दद्यात्पयस्विनीम् । द्वादश ब्राह्मणा भोज्या घृतपायसतण्डुलैः । उपवीतानि वस्त्राणि तेभ्यो दद्याच्च दक्षिणाम् । प्रणम्य दण्डवद्भूमौ प्रार्थयित्वा विसर्जयेत् ।' इति भविष्ये सोद्यापनं सोमवत्यमावास्याव्रतम् ।

अथ सकलामावास्यासाधारणव्रतानि हेमाद्रौ—'अमायां तु निराहार अब्दमेकं सुयन्त्रितः । शूलं पिष्टमयं कृत्वा वर्षान्ते विनिवेदयेत् ।' अनेन भ्रूणहत्यादिपातकहानिररिनाशश्च शिवलोकप्राप्तिश्च भवतीति । इति शिवधर्मोक्तं शूलव्रतम् ।

अथ पितृव्रतं हेमाद्रौ—अगस्त्य उवाच—'सर्गादौ ब्रह्मणा सृष्टास्तमूचुः पितरस्तदा। वृत्तिं नो देहि भगवन्यथा वर्तामहे स्वयम्। 'ब्रह्मोवाच—'अमावास्या दिनं वोऽस्तु तस्यां कुशतिलोदकैः। तर्पिता मानुषैस्तृप्तिं परां गच्छत नान्यथा। तिला देयास्तथैतस्यामुपोष्य पितृभक्तितः । चिराय तस्य संतुष्टा वरं यच्छत मा चिरम् । तस्मादस्यां तिथौ विद्वानेतत्सर्वं समाचरेत्' । इति वराहपुराणोक्तं पितृव्रतम् ।

ब्रह्मोवाच—'पितरः स्वदिने पिण्डैरिष्टाः कुर्वन्ति सर्वदा। प्रजावृद्धिं धनं रक्षामायुष्यं बलमेव च । मूलमन्त्राः स्वसंज्ञाभिरङ्गमन्त्राश्च कीर्तिताः । गन्धपुष्पोपहारैश्च यथाशक्ति विधीयते । पूजाशाठ्येन शाठ्येन कृतापि तु फलप्रदा । आज्यधारासमिद्भिश्च दधिक्षीरान्नमाक्षिकैः । पूर्वोक्तफलदो होमस्ततः शान्तेन चेतसा ।' इति भविष्यत्पुराणोक्तं पितृव्रतम् ।

**अथ पयोव्रतम्** 'वर्षमेकं भवेद्यस्तु पञ्चदश्यां पयोव्रतः ।' पञ्चदश्याममावास्यायां वत्सरान्ते जलकुम्भयुतानि वासांसि पञ्च गाश्च दद्यादिति । तेन विष्णुलोकावाप्तिर्भवतीति । इति ब्रह्मपुराणोक्तं **पयोव्रतम्** । इति पौण्डरीकयाजिरत्नाकरविरचिते जयसिंहकल्पद्रुमे **अमावास्याव्रतानि** ।

**अथ श्राद्धीयामावास्या निर्णीयते** । सा च श्राद्धे अपराह्णव्यापिनी ग्राह्या। "अपराह्णं पितॄणाम्" इति श्रुतेः । **शातातपोऽपि**-'दर्शश्राद्धं तु यत्प्रोक्तं पार्वणे तत्प्रकीर्तितम्।अपराह्णे पितॄणां तु तत्प्रदानं प्रशस्यते।' **यमोप्याह**—' पक्षान्ते निर्वपेत्तेभ्यो ह्यपराह्णे तु पैतृकम्।' इति ।एवं चापराह्णस्य मुख्यकालत्वात्पूर्वेद्युरेवापरेद्युरेव वापराह्णव्यापिन्यमावास्या गृहीतव्या । तत्र पूर्वतिथिरपराह्णव्यापिनी ग्राह्या।तामाह **हारीतः** 'यस्यां संध्यागतः सोमो मृणालमिव दृश्यते । अपराह्णे तु या तस्यां पिण्डानां कारणं ध्रुवम्।' इति । यत्तु **कार्ष्णाजिनिवचनम्**—'भूतविद्धाममावास्यां मोहादज्ञानतोऽपि वा । श्राद्धे कर्मणि मे कुर्युस्तेषामायुः प्रहीयते । ' इति । तत्पूर्वदिनेऽपराह्णव्याप्त्यभावविषयम् । तथाभूताया उत्तरतिथेर्ग्राह्यतामाह **हारीतः**— 'अपराह्णे पितॄणां तु यापराह्णानुयायिनी।सा ग्राह्या पितृकार्ये तु न पूर्वास्तानुयायिनी।' इति । उभयत्र साम्येनैकदेशव्याप्तौ खर्वदर्पादिवाक्यान्निर्णयः । **स्मृत्यन्तरेऽपि**— 'तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूर्मता । साम्ये चैव कुहूर्ज्ञेया वेदवेदाङ्गवेदिभिः ।' इति । पूर्वा सिनीवाली उत्तरा कुहूः । तदुक्तं **व्यासेन**—'दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूर्मता।' इति । **शिवराघवसंवादेऽपि**—'अमावास्या तु या हि स्यादपराह्णद्वयेऽपि सा।क्षये पूर्वा परा वृद्धौ साम्येपि च परा स्मृता।'इति । वैषम्येणैकदेशव्याप्तौ **स्मृत्यन्तरे**—'अपराह्णद्वयव्यापिन्यमावास्या यदा भवेत् । तत्राल्पत्वमहत्त्वाभ्यां निर्णयः पितृकर्माणि ।' इति । याऽधिकव्यापिनी सा ग्राह्येत्यर्थः । यदा दिनद्वयेऽप्यपराह्णं न स्पृशति तदा साग्निकनिराग्निकभेदेन व्यवस्था द्रष्टव्या । तदुक्तं **जाबालिना**—'अपराह्णद्वयव्यापी यदि दर्शस्तिथिक्षये । आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मता।' इति। आदिपदेन स्त्रीशूद्रयोरपि संग्रहः । तदुक्तं **लौगाक्षिणा**—'सिनीवाली द्विजैः कार्या साग्निकैः पितृकर्मणि । स्त्रीभिः शूद्रैः कुहूर्ज्ञेया तथा वानग्निकैर्द्विजैः ।' इति । **हेमाद्रौ** तु—यदामा दिनद्वयेऽप्यपराह्णव्यापिनी न भवति तदा तिथिक्षये पूर्वदिनसंबन्धिनी सिनीवाल्येव ग्राह्या । तथा च **कात्यायनः**—'यदा चतुर्दशीयामं तुरीयमनुपूरयेत् । अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते ।' क्षीयमाणा परदिनेऽ-

पराह्णव्यापिनी नेत्यर्थः । दिनद्वयेप्यपराह्णव्यापिनी नेति फलितार्थ इति । स्थितम् । अत्र यद्यपि पूर्वाह्णो वै देवानां, मध्यंदिनो मनुष्याणाम् अपराह्णः पितृणाम्' इति श्रुत्यालोचनया त्रेधा विभक्तदिनान्त्यभाग एवापराह्णः प्रतीयते । पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते । वासरस्य तृतीयांशे नातिसंध्यासमीपतः ।' इति छन्दोगपरिशिष्टादपि। 'तथा पिण्डः पिण्डपितृयज्ञः तमन्वाह्रियते क्रियते तत्पिण्डान्वाहार्यकम् ।' पिण्डपितृयज्ञानन्तरभावीति यावत् । राजनि चन्द्रे तस्मिन्क्षीणे । अमावास्यायामित्यर्थ इति । चन्द्रक्षयकालश्च चतुर्दश्यष्टमप्रहरादिकोऽमावास्यासप्तमप्रहरपर्यन्तः । तदाह स एव—'अष्टमेंशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः । अमावास्याष्टमेंशे च पुनः किल भवेदणुः ।' इति । तथापि 'सायाह्नस्त्रिमुहूर्तः स्याच्छ्राद्धं तत्र न कारयेत् । राक्षसी नाम सा प्रोक्ता गर्हिता सर्वकर्मसु।' इति यमेन सायाह्नस्य श्राद्धकालत्वे प्रतिषिद्धेऽर्थादेकादशद्वादशमुहूर्तयोस्तत्कालत्वं सिध्यति । यस्तु दीपिकायां हेमाद्रिसिद्धान्त उक्तः—त्रिधांशितदिनस्यान्तेऽपराह्णे चरेदिति सोऽप्येतत्परतयैव कथंचिद्व्याख्येयः । माधवीयेऽपि—सायाह्नस्य प्रतिषेधे सत्यपराह्णः कर्मकालत्वेन परिशिष्यते इति।मदनरत्ने तु—साग्निकैः स्वस्वान्वाधानदिने अमावास्याश्राद्धं कर्तव्यम्।तथा च श्रुतिः—"तस्मात्पितृभ्य पूर्वेद्युः क्रियते उत्तरमहर्देवान्यजन्ते पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानः प्रतनुते।"इति।अत एव बौधायनः—'चतुर्दशीं चतुर्यामे अमा यत्र न दृश्यते । श्वो भूते प्रतिपद्यत्र भूते कव्यादिकी क्रिया।' इति । न दृश्यते इत्यत्र नञः अल्पार्थत्वादल्पा दृश्यते इत्यर्थः । निरग्निकैस्तु या पराह्णव्यापिनी सैव ग्राह्या । तदाह शातातपः—'दर्शश्राद्धं तु यत्प्रोक्तं पार्वणं तत्प्रकीर्तितम् । अपराह्णे पितॄणां तु तत्र दानं प्रशस्यते।' इति स्थितम् । हेमाद्रौ तु सकलापराह्णव्यापिन्यां सिनीवाल्याममावास्यायां श्राद्धविधानमग्निमद्विषयम्।अनग्निकानां तु कुतपकालव्यापिन्यां कुह्वाममावास्यायां श्राद्धविधानम्।तथा च हारीतः-'भूतविद्धाप्यमावास्या प्रतिपन्मिश्रितापि वा।पित्र्ये कर्मणि विद्वद्भिः कार्या कुतपकालकी ।' इति । कुतपलक्षणं तु मत्स्यपुराणे—'अह्नो मुहूर्ता विख्याता दश पञ्च च सर्वदा ।अत्राष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः । ' अन्यत्रापि—'मुहूर्तात्सप्तमादूर्ध्वं मुहूर्तान्नवमादधः । स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम्।'इति । एवं सति दिनद्वयसंबन्धिन्याममावास्यायां सत्यां या कुतपकालव्यापिनी सैवानग्निकैर्ग्राह्येत्युक्तं भवतीति।निर्णयामृते तु

नोभयत्रापराह्णव्यापिनी तु परैव कुतपादिकालव्यापिनी ग्राह्या।तदुक्तं हारीतेन-भूतविद्धाप्यमावास्येति।अत्र कुतपशब्देन नाष्टम मुहूर्तमात्रमुच्यते किं तु कुतपरौहिणविरञ्च्या मुहूर्ता उच्यन्ते।तदुक्तमापस्तम्बेन-'कुतपाद्यान्मुहूर्तांस्त्रीन्यदा चरति भास्करः। स कालः कुतपस्तत्र पितॄणां दत्तमक्षयम्।'इति।कालतत्त्वविवेचनेऽपि'उभयत्रापराह्णव्यापित्वाभावे स्वातन्त्र्येण कुतपकालव्यापिनी विधीयते' इति। माधवीये तु—एतदेकोद्दिष्टविषयम्। तस्यैकोद्दिष्टं तु मध्याह्ने इत्यादिवचनेन कुतपकालत्वाभिधानात्। यद्वा प्रतिपन्मिश्रिताया अपराह्णव्यापित्वाभावे निरग्निकैरपि हेयत्वाशङ्कायां ग्राह्यत्वं कुतपव्याप्तिरनुकल्पत्वेनाभिधीयते। अपराह्णव्याप्तिः पार्वणे मुख्यः कल्पः कुतपव्याप्तिरनुकल्पः। तथा च मुख्यासंभवेऽनुकल्पस्योपादेयत्वान्निरग्निकैः प्रतिपन्मिश्रिता गृहीतुं शक्यते इति। निर्णयसिन्धावप्येवम्। मयूखे यत्तु नारदवचनम्—'मध्याह्ने त्रिमुहूर्तं तु यदाचरति भास्करः। स कालः कुतपो नाम पितॄणां दत्तमक्षयम्।'इति।यदपि कुतपाद्यानिति पूर्वोक्तमापस्तम्बवचनं तत्कुतपरौहिणयोरष्टमनवममुहूर्तयोः'आरभ्य कुतपे श्राद्धं रौहिणं तु न लङ्घयेत्।'इत्यनेनैकोद्दिष्टारम्भसमाप्त्यधिकरणतया विनियोगेऽवशिष्टदशममुहूर्ते पार्वणारम्भपरमिति केचित्। युक्तं तु एकोद्दिष्टं मध्याह्ने इत्यादिना मुहूर्तत्रयात्मकमध्याह्नस्यैकोद्दिष्टकालतया विधाने अष्टमनवममुहूर्तयोस्तत्कालतया विनियोगेऽवशिष्टस्य दशमस्योपयोगाकांक्षायामुत्तरभावितया गौणकालतापरत्वमिति। यत्तु मात्स्ये—'अष्टमे भास्करो यस्मान्मन्दीभवति सर्वदा। तस्मादनन्तफलदस्तत्रारम्भो विशिष्यते। ऊर्ध्वं मुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयम्। मुहूर्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते।' इति। तदेतदेकोद्दिष्टपार्वणकालकोडीकाराभिप्रायम्। पार्वणे त्वेकादशद्वादशमुहूर्तयोरेव मुख्यकालत्वं न मुहूर्तत्रयस्य। तदेवं निर्णीतायां श्राद्धोपयोगिन्याममावास्यायां यान्युच्चावचानि बहूनि वाक्यानि तानि सर्वाणि निरूपितेष्वमाभेदेष्वन्यतमभेदविषयत्वेन यथायोगं योजनीयानि। तथा हि। 'मध्याह्नात्परतो यत्र चतुर्दश्यनुवर्तते। सिनीवाली तु सा ज्ञेया पितृकार्येषु निष्फला।' इति। 'मध्याह्नाद्या त्वमावास्या परस्तात्संप्रवर्तते। भूतविद्धा तु सा ज्ञेया न सा पञ्चदशी भवेत्।' इति बौधायनबृहस्पतिवचसी मध्याह्नात्परतोऽपराह्णं व्याप्य चतुर्दश्यनुवर्तते मध्याह्नादूर्ध्वमपराह्णमतिक्रम्य परस्तादमावास्या प्रवर्तते इति व्याख्येये परेद्युरेवापराह्णव्याप्तौ योजनीये च। यत्तु कात्यायनवचः। पिण्डान्वाहार्यकमित्यादि पूर्वमलेखि तेनापि पिण्डान्वाहार्यकं पिण्डपितृयज्ञोत्तरं

क्रियमाणं दर्शश्राद्धं तत्क्षीणे राजनि इन्दौ कर्तव्यम्। वासरस्य तृतीयांशे इति। अनेन किंचिन्न्यूनोऽपराह्णः सायाह्नसहितोऽभिधीयते। तत्र नातिसंध्यासमीपतः इति सायाह्नस्य प्रतिषेधे सत्यपराह्णः कर्मकालत्वेन परिशिष्यते। तथा च कर्मकालव्यापिनी ग्राह्येति भङ्ग्यन्तरेणोक्तं भवति। यदपि 'प्रतिपत्स्वप्यमावास्या पूर्वाह्णव्यापिनी यदि। भूतविद्धैव सा कार्या पित्र्ये कर्मणि सर्वदा।' इति जाबालिवचनं। तत्रापि पूर्वाह्णव्यापिनीति विशेषकथनाद्विशेषविधिनिषेधौ शेषनिषेधाभ्यनुज्ञाफलकौ इति न्यायेनापराह्णव्यापित्वं नास्तीत्यवगम्यते। तादृशी च द्विधा। पूर्वेद्युः पराह्णव्यापिनी तद्रहिता चेति। आद्यपक्षे सर्वैरपि भूतविद्धा कार्या द्वितीयपक्षे साग्निकैरेव भूतविद्धा कार्येति। यच्च—'पूर्वाह्णे चेदमावास्या अपराह्णे न चेत्तु सा। प्रतिपद्यपि कर्तव्यं श्राद्धं श्राद्धविदो विदुः।' इति जाबालिवचनं तद्दिवसद्वयेऽप्यपराह्णव्यापित्वाभावे सति निरग्निकविषयं द्रष्टव्यम्। यदपि बौधायनेनोक्तम्—'घटिकैकाप्यमावास्या प्रतिपत्सु न चेत्तदा। भूतविद्धैव सा ग्राह्या दैवे पित्र्ये च कर्मणि।' इति' तदपि प्रतिपत्सु घटिकैका कर्मकालसंबंधिनी यदि न स्यात्तदा भूतविद्धैव सा ग्राह्येत्येवं व्याख्येयम्। प्रतिपत्स्वप्यमावास्येति जाबालिवचनसमानार्थत्वलाभात्। हेमाद्रौ यत्तु वृद्धवसिष्ठवचनम्—'अरुणोदयवेलायाममावास्या यदा भवेत्। स कालः परमो ज्ञेयः पितॄणां दत्तमक्षयम्।' इति, तत्पितृतर्पणादिविषये। अत एव पद्मपुराणम्—'अमा या प्रतिपद्युक्ता सर्वपापहरा तिथिः। चन्द्रसूर्यग्रहैस्तुल्या स्नानदानजपादिषु।' इति। यदपि प्रचेतोवचनम्—'घटिकैकाप्यमावास्यां भवेद्यदि चतुर्दशी। तदा व्यर्थं मतं दैवे पित्र्ये कर्मणि चोदितम्।' इति' तदपि देवपितृप्रधानोपवासविषयम्। यत्तु हारीतवचनम्—'कन्यामकरमीनेषु तुलायां मिथुने तथा। भूतविद्धैव सर्वेषां पूज्या भवति यत्नतः।' इति, तद्व्रतविषयम्। तथा च जाबालिः—'तुलायां मिथुने मीने कन्यायां मकरे तथा। भूतविद्धा व्रते ग्राह्या शेषे तु प्रतिपद्युता।' इति। एवमन्यान्यपि वचनानि यथा योगं व्यवस्थया व्याख्येयानीत्यलम्। अमाश्राद्धातिक्रमे प्रायश्चित्तमुक्तमृग्विधाने—' न्यूषं वाचं जपेन्मन्त्रं शतवारं तु तद्दिने। अमाश्राद्धं यदा नास्ति तदा संपूर्णमेति तत्।' इति। इत्यमावास्या श्राद्धकालनिर्णयः। ❀

अथात्र प्रसङ्गात्क्षयाहश्राद्धकालनिर्णयो लिख्यते। तत्क्षयाहस्वरूपं स्मृतावुक्तम्। 'मासपक्षातिथिस्पृष्टे यो यस्मिन्म्रियतेऽहनि। प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य

तं विदुः ।' इति । मासश्चान्द्र एव ग्राह्यः । 'आब्दिके पितृकार्ये च मासश्चान्द्रमसः स्मृतः ।' इति व्यासवचनात् । यत्तु—'यस्मिन् राशौ गते सूर्ये विपत्तिं याति मानवः । तद्राशावेव कर्तव्यं पितृकार्यं मृतेऽहनि ।' इति वचनं, तदधिमासमृतविषयम् । अधिमासमृतानां तु सौरमासं समाश्रयेत् । स एव दिवसस्तस्य श्राद्धपिण्डोदकादिके ।' इति स्मृत्यन्तरवचनात् । एतच्च द्विविधम् । एकोद्दिष्टं पार्वणं च । आद्यमाह यमः—'सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः । मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेऽहनि ।' इति । अन्त्यमाह शातातपः—'सपिण्डीकरणं कृत्वा कुर्यात्पार्वणवत्सदा । प्रतिसंवत्सरं श्राद्धं छागलेयोदितो विधिः । यः सपिण्डीकृतं प्रेतं पृथक् पिण्डे नियोजयेत् । विधिघ्नस्तेन भवति पितृहा चोपजायते।' इति । अनयोः पक्षयोर्देशाचाराद्व्यवस्थेति सर्वनिबन्धसिद्धान्तः । तच्च क्षयाहश्राद्धमेकोद्दिष्टं चेत् क्रियते तदा तन्मध्याह्ने कार्यम् । पार्वणं चेत्तदाऽपराह्ने कार्यम् ।'मध्याह्नव्यापिनी या स्यात्सैकोद्दिष्टे तिथिर्भवेत् । अपराह्णव्यापिनी या पार्वणे सा तिथिर्भवेत् ।' इति गौतमवचनादेकोद्दिष्टस्य मध्याह्नकालत्वम् । शिवराघवसंवादेऽपि—'मध्याह्नव्यापिनी या स्यात्सैकोद्दिष्टे तिथिर्भवेत् ।' इति।अस्य च स्वरूपमुक्तं व्यासेन—'एकमुद्दिश्य यच्छ्राद्धं दैवहीनं विधीयते । एकोद्दिष्टं तु तत्प्रोक्तं मध्याह्ने तत्प्रकीर्तितम् ।' इति । मध्याह्नश्च सप्तमाष्टमनवममुहूर्तात्मकः । ते च मुहूर्ता गान्धर्वकुतपरौहिणसंज्ञकाः । अस्य च पूर्वोत्तरभागावेकोद्दिष्टोपक्रमे इच्छया विकल्पितौ व्यासेन—कुतपप्रथमे भागे एकोद्दिष्टमुपक्रमेत् । आवर्तनसमीपे वा तत्रैव नियतात्मवान् ।'इति। समाप्तिकालश्च श्लोकगौतमेनोक्तः—'आरभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः।विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घयेत्।'इति।कुतपशब्दनिरुक्तिश्च स्कन्दवायुपुराणयोः 'कुं यत्र गोपतिर्गोभिः कात्स्न्र्येन तपति क्षणे।स कालः कुतपो ज्ञेयस्तत्र दत्तं महाफलम्।' इति । तदेवं कुतपस्यैकोद्दिष्टश्राद्धकालत्वे निर्णीते तत्कालव्यापिनी तत्र तिथि र्ग्राह्या । तत्रान्यतरदिन एव तद्व्याप्तौ न कोऽपि संदेहः । उभयत्र साम्येन तद्व्याप्तौ तदव्याप्तौ वा पूर्वेद्युरेव तदनुष्ठेयम् । अमावास्याप्रकरणे उदाहृतानां पार्वणश्राद्धप्रकरणे उदाहरिष्यमाणानां चापराह्णसायाह्नास्तमयव्याप्तिविषयाणां वचनानामनुग्रहात् ।उभयत्र साम्येनैकदेशव्याप्तौ खर्वादिवाक्यान्निर्णयः । तच्च सामान्यतिथिनिर्णयप्रस्तावे दर्शितम् । वैषम्येणैकदेशव्याप्तावधिकव्याप्त्या निर्णय इति । तदेवं संक्षेपेणैकोद्दिष्टकालो निर्णीतः ❋।

अथ पार्वणश्राद्धकालो निर्णीयते । तत्र यद्यपि पर्वणि भवं पार्वणमिति

व्युत्पत्त्या ‘ दर्शश्राद्धं तु यत्प्रोक्तं पार्वणं तत्प्रकीर्तितम्। ’ इति शातातपवचनेन च त्रिपुरुषोद्देशेनामायां क्रियमाणं श्राद्धमेव पार्वणशब्देनाभिधातुं शक्यम्।,अथापि तद्विकृतिरूपतया ‘ त्रीनुद्दिश्य तु यत्तद्धि पार्वणं मुनयो विदुः। ’ इति काण्ववचनेन च त्रिपुरुषोद्देशेन कर्तव्याब्दिकादेरपि पार्वणत्वं व्यवहर्तुं शक्यम्। तच्च पार्वणश्राद्धमपराह्णव्यापिन्यां कर्तव्यम्। ‘ अपराह्णव्यापिनी या पार्वणे सा तिथिः स्मृता।पूर्वस्यां निर्वपेत्पिण्डमित्यादि ऋषिभाषितम्।’ इति वचनात्। ‘ दर्शं च पूर्णमासं च पितुः सांवत्सरं दिनम्। पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते।’ इति नारदीयपुराणाच्च। अन्यत्रापि— ‘ अपराह्णः पितॄणां तु याऽपराह्णानुयायिनी। सा कार्या पितृकृत्येषु न पूर्वाह्णानुयायिनी।’ इति। ननु ‘उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ। द्विमुहूर्तं त्रिरह्नश्च’ इति। ‘दिनान्ते पञ्चनाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः। उदये च तथा पित्र्ये दैवे चैव च कर्मणि।’ इति वचनैः सायाह्नस्यापि पित्र्यकालत्वमुक्तं तत्कथमपराह्णस्यैव पार्वणश्राद्धकालत्वमुच्यते इति चेत्। मैवम्। तस्य प्रतिषिद्धत्वात्। तथा हि। स्कन्दपुराणे— ‘ उपसंध्यं न कुर्वीत पितृपूजां कथंचन। स काल आसुरः प्रोक्तः श्राद्धं तत्र विवर्जयेत्।’ इति। मत्स्यपुराणे— ‘ सायाह्नस्त्रिमुहूर्तः स्याच्छ्राद्धं तत्र न कारयेत्। राक्षसी नाम सा वेला गर्हिता सर्वकर्मसु।’ इति। बौधायनहारीतावप्येवम्। तर्हि सायाह्नविधायकपूर्वोक्तवचनानां को विषय इति चेत्। शृणु। श्राद्धाङ्गत्वेन निषिद्धस्य सायाह्नगौणकालतयाऽभ्यनुज्ञानम्। अत एव व्यासः— ‘स्वकालातिक्रमे कुर्याद्रात्रेः पूर्वतया विधिः।’ इति। व्याघ्रपादोऽपि—‘विधिज्ञः श्रद्धयोपेतः सम्यक्पात्रनियोजकः। रात्रेरन्यत्र कुर्वाणः श्रेयः प्राप्नोत्यनुत्तमम्।’ पृथ्वीचन्द्रोदये तु—पूर्वोक्तवचनेषु यत्र सायाह्नसमययोगिनी तिथिरुक्ता तत्रापराह्णव्यापिनी ज्ञेया। सायाह्नस्त्रिमुहूर्तः स्यादिति मात्स्यादौ सायाह्ननिषेधाद्यत्र त्रिमुहूर्तादिग्रहणं तच्छ्राद्धार्हापराह्णरूपत्रिमुहूर्तपरमिति। कालतत्त्वविवेचने। यच्च वायुपुराणवचनम् ‘शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः। कृष्णपक्षेऽपराह्णे तु रौहिणं तु न लङ्घयेत्।’ इति। तद्द्वेधाविभक्तपूर्वाह्णान्तर्गतस्य कुतपपूर्वभागस्य तादृशापराह्णान्तर्गतस्य च तदुत्तरभागस्य पक्षभेदेनोपक्रमकालत्वव्यवस्थापनपरम्। एवं व्यवस्थायां न कस्यचिद्बाधोपेक्षितविधानं च लभ्यते। विष्णुनापि पूर्वाह्णापराह्णयोः पक्षभेदेनोपक्रमो दर्शितः। शुक्लपक्षस्य पूर्वाह्णे कृष्णपक्षस्यापराह्णे विप्रान्स्नातानाचान्तानुपवेशयेदिति। हेमाद्रौ तु वायुपुराणवचनस्यैकोद्दिष्टविषयत्वमप्युक्तम्। एकोद्दिष्टमपि

पक्षभेदेन कुतपपूर्वोत्तरभागयोरुपक्रमणीयमिति । ननु सायाह्नेऽपि यदा कथंचित्प्रत्यूहस्तदा श्राद्धस्य किं लोप एव किं वा रात्रावपि कर्तुं शक्यते । अत्र माधवः । न तावद्रात्रौ सर्वात्मना श्राद्धस्य निषेधो वक्तुं शक्यते । आपस्तम्बेन रात्रौ श्राद्धसमाप्त्यभ्युपगमात्—न च नक्तश्राद्धं कुर्वीतारब्धे च भोजनसमापनमिति । अत्र भोजनग्रहणं पिण्डदानोपलक्षणम् । नन्वेवमपि रात्रौ समाप्तिरेवाभ्यनुज्ञायते न त्वारम्भ इति चेत् । मैवम् । आरम्भस्यापि समाप्त्या उपलक्षणीयत्वात् । आब्दिकश्राद्धपरित्यागे प्रत्यवायबाहुल्यस्मरणात् । तानि प्रत्यवायबोधकानि वचनान्यग्रे वक्ष्यंते । कालतत्त्वविवेचने तु—प्रारब्धे श्राद्धे दैवमानुषप्रतिबन्धादसमाप्ते यदि रविरस्तमियात्तदा प्रारब्धत्वाद्रात्रावपि तत्समाप्तेः प्रसक्तेः न च नक्तश्राद्धं कुर्वीतेति निषेधः । तथा च सामिकृतमेव स्थापयित्वा परेद्युः कृतान्तात्समापनीयम् । यजमानेनापि तदुत्तरमेव भोक्तव्यं न तु पूर्वदिने इति । अत एवोत्तरसूत्रं 'प्रारब्धे चाभोजनमा समापनात्' इति इति हरदत्तः । प्रारम्भश्च पूर्वेद्युर्निवेदनमिति । नन्वेवं सति 'रात्रेरन्यत्र कुर्वाणः श्रेयः प्राप्नोत्यनुत्तमम् ।' इति स्मरणात् अपराह्णवन्मुख्यत्वेन सायाह्नवद्गौणत्वेन प्रातःसंगवावपि कालौ प्रसज्येयाताम् । नायं दोषः । शिवराघवसंवादे प्रातःकालस्य निषिद्धत्वात् ।'प्रातःकालेषु च श्राद्धं न कुर्वीत द्विजोत्तमः । नैमित्तिकेषु श्राद्धेषु न कालनियमः स्मृतः ।' इति । यद्यपि संगवो न साक्षान्निषिद्धस्तथापि कुतपमुहूर्ते मुख्योपक्रमस्य गान्धर्वमुहूर्ते गौणोपक्रमस्याभिधाने सति अर्थान्निषेधः परिशिष्यते । उपक्रमद्वयं शिवराघवसंवाद एव दर्शितम्।'ग्रहादिव्यतिरिक्तस्य प्रक्रमे कुतपः स्मृतः। कुतपादथ वाप्यर्वागासनं कुतपे भवेत् ।' इति । ग्रहो ग्रहणम् । आदिशब्देन संक्रान्त्यादिनिमित्तमुच्यते । तस्य निमित्ताधीनत्वात्कुतपो नियन्तुं न शक्यते । इतरस्य च सांवत्सरिकादेरस्ति कुतपनियमः । कदाचित्कार्यवशाच्छ्राद्धस्य सहसाकरणीयत्वे सति कुतपादर्वाचीनो गान्धर्वोऽप्युपक्रमकालतयाऽभ्यनुज्ञायते । कुतपस्य मुख्यत्वमनेकवचनविहितत्वादवगन्तव्यम् । तदेवं पार्वणश्राद्धस्यापराह्णः कर्मकालः, कुतपः प्रारम्भकाल इति तदुभयव्यापिनी तिथिर्ग्राह्या । यदा तु कुतपापराह्णोभयव्यापिनी न संभवति तदा केवलापराह्णव्यापिन्यपि तिथिर्गृहीतव्या । पित्रर्थे चापराह्णिकीति भविष्यत्पुराणाभिधानात् । यत्तु—'मध्याह्नव्यापिनी या स्यात्तिथिः पूर्वा परापि वा । तत्र कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ।' इति वचनं तदेकोद्दिष्टं तु मध्याह्ने इति वचनान्तरसंवादेनैकोद्दिष्टविषयम्। कालतत्त्वविवेचनेऽपि मुहूर्तपञ्चकं

सार्धमुहूर्तचतुष्टयं वा पार्वणप्रयोगकालः । यदि च तावत्कालव्यापिनी लभ्यते तदा उदारः कल्पः ।यदा च तादृशी न लभ्यते तदा प्रधानप्रयोगकालत्रिमुहूर्तात्मकापराह्ण-व्यापिन्यपि ग्राह्येति । तत्र यैकस्मिन्नेव दिने कात्स्न्र्येनैकदेशेन वोक्तकालव्यापिनी सैव ग्राह्या । दिनद्वये वैषम्येण तदेकदेशव्याप्तौ तदाधिक्यवती ग्राह्या।तदाह मरीचिः। 'द्व्यपराह्णव्यापिनी चेदाब्दिकस्य यदा तिथिः।महती यत्र तद्विद्धां प्रशंसन्ति महर्षयः।' इति । मदनरत्ने—यदि दिनद्वयेऽपि तुल्या पराह्णैकदेशव्याप्तिस्तदा तिथिक्षये पूर्वा कर्तव्या वृद्धौ तूत्तरा । तथा च क्षयाहप्रसङ्गे बौधायनः—'अपराह्णद्वयव्यापिन्यतीतस्य यदा तिथिः । क्षये पूर्वा तु कर्तव्या वृद्धौ कार्या तथोत्तरा ।' इति । तिथिसाम्ये तु पूर्वैव ग्राह्या । दर्शं च पौर्णमासं चेति पूर्वोदाहृतनारदीयपुराणवचनात् । यत्तु खर्वो दर्प इति वचनं तत्क्षयाहव्यतिरिक्तश्राद्धतिथिविषयम् ।'द्विरहव्यापिनी चेत्स्या-दाब्दिकस्य यदा तिथिः । पूर्वविद्धा प्रकर्तव्या त्रिमुहूर्ता भवेद्यदि।' इति स्मृत्यन्तर-वचनविरोधात् । कालतत्त्वविवेचने तु—दिनद्वये साम्येन तदेकदेशव्याप्तिस्तस्या एव तिथेः क्षयेन साम्येन वृद्ध्या च भवति तत्र खर्वो दर्पस्तथा हिंस्रेति वचनान्निर्णयः । खर्वः साम्यवांस्तिथिः । दर्पो वृद्धिमान् । हिंस्रा क्षयस्तद्वान् । नित्यगुणवचनस्यापि सांप्रतिकलक्षणया प्रयोगः। अत एव लिङ्गत्यागो गङ्गाशब्दवत् । तिथिलक्षणं तिथि-स्वरूपं भावपरत्वेन खर्वादिशब्दानां व्याख्यानं परौ पूर्वकालिकीत्यनेनानन्वयादुपेक्षितम्। अत्र च खर्वादीनां परपूर्वभागेन ग्राह्यत्वाभिधानात्स्पष्टमेव खर्वत्वादीनां ग्राह्यतिथिग-तत्वम् । 'अपराह्णद्वयव्यापिन्यतीतस्य यदा तिथिः ।' इति पूर्वोक्तबौधायनवचनं तु दिनद्वये संपूर्णकर्मकालव्याप्तिविषयमेव । द्व्यहे तु व्यापिनी चेत्स्यान्मृताहस्य तु या तिथिः । पूर्वस्यां निर्वपेत्पिण्डमित्याङ्गिरसभाषितम्।'इति सुमन्तुवचनमपि कात्स्न्र्येन दिनद्वये कर्मकालव्याप्तिविषयम् । अत्र च बौधायनवचने क्षयवृद्धिसाम्यानि दिनद्वये संपूर्णकर्मकालव्याप्तेर्वृद्ध्येकनियतत्वात्तत्र तिथावसंभवेन ग्राह्यतिथ्युत्तरतिथिगतानि ग्राह्याणि ।'दर्शं च पूर्णमासं च पितुः सांवत्सरं दिनम् । पूर्वविद्धमकुर्वाणो नरकं प्रति-पद्यते । ' इति नारदीयपुराणमपि पूर्ववचनसंवादि । अत एव तत्र तत्रोक्तं—यत्काल-व्याप्त्यनिर्णयं तत्र पूर्वोत्तरविद्धाग्राह्यत्ववचनानि प्रवर्तन्ते इति । 'पैत्रं मूलं तिथिः प्रोक्तं शास्त्रज्ञैः कालकोविदैः । यस्यामस्तं रविर्याति पितरस्तामुपासते' । सायाह्णव्यापिनी या तु पार्वणे सा उदाहृता।'इत्यादीनि वचनान्यप्यत्रोपोद्बलकानि । यदा तु दिनद्वयेऽ-प्यपराह्णसंबन्धाभावस्तदा पूर्वैव ग्राह्या।तदाह मनुः—'न द्व्यहव्यापिनी चेत्स्यान्मृता-

हस्य यदा तिथिः । पूर्वविद्धैव कर्तव्या त्रिमुहूर्तापि या भवेत्।' इति । यद्यपि व्याप्त्य-भाव एकदेशसत्त्वेऽपि संभवति । तथापि त्रिमुहूर्तापि या भवेदिति वाक्यशेषात्स्पर्शा-भाव एवात्र सः । श्राद्धं त्वेकभक्तादिवत्स्वकाल एव तत्र तत्तिथ्यभावेऽपि कर्तव्यम् । 'तिथ्यादौ च भवेद्यावान्ह्रासो वृद्धिः परेऽहनि। तावान् ग्राह्यः स पूर्वेद्युरदृष्टोऽपि स्वक र्मणि' इति वचनात्तिथिक्षयस्य पूर्वतिथौ प्रक्षेपेण यां तिथिं समनुप्राप्य अस्तं यातीति स्माकल्यवचनेन च तत्र तत्तिथेः सत्त्वात् । तिथ्यादावित्यादिपदेन नक्षत्रयोगौ गृह्येते। तदेतत्क्षयाहश्राद्धमवश्यं कर्तव्यमित्युक्तं ब्रह्मपुराणे श्राद्धप्रकरणे—' प्रतिसंवत्सरं कार्यं मातापित्रोर्मृतेऽहनि । पितृव्यस्याप्यपुत्रस्य भ्रातुर्ज्येष्ठस्य चैव हि । पितृव्यादि ग्रहणं मातामहादीनामप्युपलक्षणम् । भविष्यत्पुराणे—'सर्वेषामेव श्राद्धानां श्रेष्ठं सांवत्सरं मतम् । क्रियते तत्खगश्रेष्ठ मृताहनि बुधैः सदा । मृतेऽहनि पितुर्यस्तु न कुर्याच्छ्राद्धमादरात् । मातुश्च खगशार्दूल वत्सरान्ते मृतेऽहनि । नाहं तस्य खगश्रेष्ठ पूजां गृह्णामि नो हरिः । न ब्रह्मा न च वै रुद्रो न चान्ये देवतागणाः । तस्माद्यत्नेन कर्तव्यं वर्षे वर्षे मृतेऽहनि।प्रतिवर्णं खगश्रेष्ठ भोजकेन विशेषतः।भोजको यस्तु वै श्राद्धं न करोतिखगाधिप । मातापितृभ्यांसततं वर्षे वर्षे मृतेऽहनि। स याति नरकंघोरं तामिस्रं नाम नामतः । ततो भवति दुष्टात्मा नगरे सूकरः खग ।' इति । भोजको भोजयिता संपद्युक्त इत्यर्थः । एतत्क्षयाहश्राद्धं सूर्यग्रहणदिने भोक्तुर्ब्राह्मणस्यालाभे तद्दिने एवा-मान्नादिना कर्तव्यम्। तदुक्तं गोभिलेन-'दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितम् । अन्नेनासंभवे हेम्ना कुर्यादामेन वा सुतः।' इति दर्शे पित्रोः सुतः इति च सर्वमविवक्षि-तमुपलक्षणम् । आमपदेन च वितुषं तण्डुलादि गृह्यते न तु सतुषम् । ' सस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते । आमं तु वितुषं प्रोक्तं स्विन्नमन्नमुदाहृतम् । ' इति वसिष्ठ-वचनात् । प्रत्याब्दिकग्रहणं च अन्नेनैवाब्दिकं कुर्याद्धेम्ना वा आमेन न क्वचिदिति वार्षिके सर्वथा साधनत्वेन निषिद्धस्यामादेः प्रतिप्रसवार्थम्।एतच्च मासिकस्याप्युपलक्षण म् । यानि तु 'ग्रहणात्तु द्वितीयेऽह्नि रजोदोषात्तु पञ्चमे' । तथा 'ग्रस्तोदये यदा चन्द्रे प्रत्यब्दं समुपस्थितम् । तद्दिने चोपवासः स्यात्प्रत्यब्दं तु परेऽहनि' । तथा 'ग्रस्तावे-वास्तमानं तु रवीन्दू प्राप्नुतो यदि । प्रत्यब्दं तु तदा कार्यं परेऽहन्येव सर्वदा । चन्द्रसूर्यो परागे च तथा श्राद्धं परेऽहनि' । इत्यादीनि वचनानि ' तानि महानिबन्धेषु क्वाप्य नुपलम्भात्पूर्वोक्तवचनजातविरोधाच्च निर्मूलानि । अमावास्यादिश्राद्धं तु तत्रामेनैव भवति । ' श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् । अमावास्यादिनियतं माससं

वत्सरादतः' इति हारीतवचनात् । श्राद्धस्य पाकश्राद्धस्य । विघ्ने असंभवे । माससंव-त्सरशब्दाभ्यां मासिकसांवत्सरिकोपादानम् । 'सूतकेनाब्दिकश्राद्धेन्तरिते सूतकान-न्तरदिने तत्कुर्यात् । तदाह ऋष्यशृङ्गः—'आब्दिके चैव संप्राप्ते आशौचं जायते यदि । आशौचे च व्यतिक्रान्ते तत्र श्राद्धं विधीयते ।' इति । आशौचानन्तरदिनेऽपि करणासंभवे अमावास्यायां कुर्यात्। तदाह गोभिलः—'दैवात्प्रत्याब्दिके श्राद्धे त्वन्तरा मृतसूतके । आशौचानन्तरं कुर्यात्तन्मासेन्दुक्षयेऽपि च ।' इति। मरीचिः—'श्राद्धविघ्ने समुत्पन्नेऽप्यविज्ञाते मृतेऽहनि । एकादश्यां तु कर्तव्यं कृष्ण पक्षे विशेषतः ।' इति । अत्र विघ्नपदं सूतकतदितरविघ्नसामान्यपरम् । आशौचेतरविघ्ने एतदिति माधवे पृथ्वीचन्द्रोदये च ।केचित्त्वाशौचानन्तरं पुनः क्षयाहतिथावेव कार्यमित्याहुः-यथा—' तदहश्चेत्प्रमुच्येत केनाचित्सूतकादिना । सूतकानन्तरं कुर्यात्पुनस्तदहरेव च ।' इति । अत्र सूतकानन्तरमिति सूतकपदं विघ्ननिमित्तस्योपलक्षणम् । तदहरुत्तरसंगते तस्मिन्नेवेत्यर्थः । अत्राशौचान्त्य आद्यपक्षः । मुख्यकालप्रत्यासत्तेः। ततो दर्शः । ततः कृष्णैकादशी । ततः शुक्ला । ततः उत्तरमासे तदहरिति हेमाद्रि रिति मयूखे । एतन्मासिकविषयमित्यन्ये । यच्च देवलवचनम्—'एकोद्दिष्टे तु संप्राप्ते यदि विघ्नः प्रजायते । मासेऽन्यस्मिंस्तिथौ तस्मिच्छ्राद्धं कुर्यात्प्रयतनतः ' इति तदपि मासिकपरमिति मदनरत्ने हेमाद्रौ चेति निर्णयसिन्धौ। पत्न्यां रजस्वलायां तु क्षया-हश्राद्धं पक्वान्नेनैव कर्तव्यम् । ' पुष्पवत्स्वपि दारेषु विदेशस्थोऽप्यनग्निकः । अन्नेनैवा ब्दिकं कुर्याद्धेम्ना वामेन न क्वचित्।'इति लौगाक्षिवचनात् । अत्र आमस्य पृथगुपादा-नादन्नेनैवेत्यत्रान्नशब्दः सिद्धान्नपरः । तेन पत्न्यां रजस्वलायामपि तदहरेव पक्वेनैव सर्वस्यापि सांवत्सरिकश्राद्धानुष्ठानमुचितम् । मरीचिरपि—' अनग्निकः प्रवासी च यस्य भार्या रजस्वला । आमश्राद्धं द्विजः कुर्यान्न तत्कुर्यान्मृतेऽहनि' इति । कार्ष्णा-जिनिः—' आपन्नोऽप्याब्दिकं नैव कुर्यादामेन कुत्रचित् । अन्नेन तदमायां तु कृष्णे वा हरिवासरे ' । प्रयोग पारिजाते—'रजस्वलायां भार्यायां क्षयाहं यः परित्यजेत्।' स वै नरकमाप्नोति यावदाभूतसंप्लवम् ।' देवयाज्ञिकनिबन्धेऽपि— 'भर्तुः श्राद्धं पञ्चमेऽह्नि कुर्याद्भार्या रजस्वला । पुत्रः पित्रोः प्रकुर्वीत मृताहनि शुचिर्यतः ।' काला-दर्शेऽपि 'रजस्वलाङ्गनोऽनग्निर्विदेशस्थोऽथ वाब्दिके । दर्शादाविव नामेन त्वन्नेन श्राद्धमाचरेत्।'अन्यत्रापि-'विदेशगो वा विगताग्निको वा रजस्वलायामपि धर्मपत्न्याम्। श्राद्धं मृताहे विदधीत पातकैर्नामेन हेम्ना न तु पञ्चमेऽहनि ।' एवं मासिकेऽपि । यत्तु

'मृताहनि तु संप्राप्ते यस्य भार्या रजस्वला।श्राद्धं तदा न कर्त्तव्यं कर्तव्यं पञ्चमेऽहनि।' इति हेमाद्रिमाधवादिलिखितवचनं, तन्मृतस्य श्राद्धकर्त्री भार्या रजस्वलेति व्याख्येयम् । न तु यस्य श्राद्धकर्तुर्भार्या रजस्वलेति । पूर्वोक्तवचनजातविरोधात् । अत एव श्लोकगौतमः–'अपुत्रा तु यदाभार्या संप्राप्ते भर्तुराब्दिके । रजस्वलाभवेत्सा तु कुर्यात्तत्पञ्चमेऽहनि ।' इति । नन्वशुचित्वादेवाधिकारप्रतिबन्धे वचनं व्यर्थमिति चेत् । सत्यम् । ' गर्भिणी सूतिकादिश्च कुमारी वाऽथ रोगिणी । यदाऽशुद्धा तदाऽन्येन कारयेत्प्रयता स्वयम् ।' इति हेमाद्रिधृतभविष्यवचनेनाधिकारप्रसक्तेः सत्त्वात् । यत्तु–' आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मनि । आमश्राद्धं प्रकुर्वीत भार्यारजसि संक्रमे ।' इति कात्यायनवचनं, तन्मासिकाब्दिकव्यतिरिक्तविषयम् । श्राद्धविघ्ने द्विजातीनामिति पूर्वोक्तहारीतवचनात् हेमाद्रिस्तु पाणिग्रहणाद्धि सहत्वं कर्मस्विति वचनेन गृहस्थस्य श्राद्धेऽपि भार्यया सहैवाधिकारात्तस्याश्च रजस्वलादशायामशुचित्वेनानधिकारे व्यासज्यवृत्तेर्भर्तृगतस्याप्यधिकारस्य विघातात्तस्यास्तद्दशापगम एवैकभार्यस्य श्राद्धमुचितमिति यस्य श्राद्धकर्तुरित्यादिरेव मृताहनीति वचनार्थः । पुष्पवत्स्वपीति वचनं तु सहाधिकृतभार्यान्तरसद्भावविषयमित्याह । दीपिकायामपि–' भार्यर्तौ सति पञ्चमे च दिवसे स्याद्वार्षिकं मासिकं पक्वान्नैर्बहुभार्यकृत्स्वधिकृते पत्न्यन्तरे तिष्ठति । कुर्यात्तद्दितये स्वमुख्यदिवसे ' इति । पाणिग्रहणाद्धीति वचनस्य हि शब्दस्वरसादनुवादरूपत्वेन न्यायमूलकत्वादुभयसङ्गोत्पन्नाग्निसाध्यश्रौतस्मार्तकर्मविषयत्वेनानुभयसाध्यश्राद्धविषयत्वे प्रमाणाभावाच्चिन्त्यमेतदिति कालतत्त्वविवेचने । निर्णयसिन्धुमयूखादावप्येवम् । परमार्थतस्तु मीमांसकधुरीणस्य हेमाद्रेर्मतं युक्तमेव । ' यद्देवेभ्यो यच्च पित्रादिकेभ्यः कुर्याद्भर्ताऽभ्यर्चनं सत्क्रियां च । तस्यार्धं वै सा फलं नान्यचित्ता नारी भुङ्क्ते भर्तृशुश्रूषयैव ।' इति स्कान्दवचनेन अनग्निसाध्यदेवपित्रभ्यर्चनसत्क्रियादिसकलकर्मजन्यफलार्धभागित्वस्य प्रतीतेस्तदन्तर्गतश्राद्धेऽपि सहाधिकाराविघातात् । श्राद्धेऽपि पितृतृप्तिप्रत्यवायपरिहारातिरिक्तायुरादिफलानां श्रवणाच्च । " प्रजासहत्वकर्मभ्यः'इति श्रुतेःपूर्वोक्तस्कान्दवचनानुरोधेनाग्निसाध्यकर्मविषयत्वेन संकोचे प्रमाणाभावाच्च।आपस्तम्बीयं सूत्रमपि-'ब्राह्मे विवाहे बन्धुशीलश्रुतानिबुद्ध्वा प्रजासहत्वकर्मभ्यः प्रतिपादयेच्छक्तिविषयेणालंकृत्येति।' व्याख्यातं चैतद्धरदत्तेन– प्रजारोग्यार्थंसहत्वकर्मार्थं चेति । किं च मृतेऽहनीति वचनस्य अपुत्रा तु यदा भार्येति श्लोकगौतमीयवचनसमानार्थतया व्याख्याने

अधिकारिण्याः स्त्रिया अशुद्धौ तदन्ते श्राद्धानुष्ठानस्य जननमरणाशौचवचनाभ्यामेव सिद्धेरेतद्वचनवैयर्थ्यापत्तिः । न च गर्भिणीति पूर्वोक्तवचनेनाधिकारप्रसक्तिः । एतद्वचनस्यारब्धव्रतादिविषयत्वेन मृताहश्राद्धविषयत्वाभावात् । तस्मान्मृतेऽहनीति वचनस्य रजोदर्शनकाले श्राद्धाननुष्ठानबोधकस्य पुष्पवत्स्वपीति वचनस्य तदनुष्ठान बोधकस्य परस्परविरोधे एकभार्येण तस्यां रजस्वलायां श्राद्धं न कर्तव्यम् । अनेकभार्येण तु ज्येष्ठाया एव सहाधिकारप्रतिपादनादिति सर्वं सुस्थम् । माधवस्तु मतद्वयमिदं लिखितवान्--न तु किंचिन्निर्णीतवानिति । दर्शश्राद्धं तु भार्याया रजसि आमेन कार्यम् । श्राद्धविघ्ने द्विजातीनामिति हेमाद्रौ हारीतोक्तेः । अन्यत्रापि—' आर्तवे देशकालानां विप्लवे समुपस्थिते । आमश्राद्धं द्विजैः कार्यं शूद्रः कुर्यात्सदैव हि । दीपिकायामपि । दर्शे तु भार्यार्तवेऽप्यामश्राद्धविधिमित्यादि मयूखे । श्राद्धविघ्नोऽत्र पत्नीरजोदर्शनम् । ' अपत्नीकः प्रवासी च यस्य भार्या रजस्वला । सिद्धान्नेन न कुर्वीत आमं तस्य विधीयते।' इति उशनोवाक्यात् । आमाभावे तु व्यासः—' द्रव्याभावे द्विजाभावे प्रवासे पुत्रजन्मनि । हेमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वला।' इति। निर्णयसिन्धौ तु--इदं चामहेमविधानं पाकासंभवे । ' पाकाभावे द्विजातीनामामश्राद्धं विधीयते ।' इति सुमन्तूक्तेः ।' मासिकानि सपिण्डं च अमावास्या तथाब्दिकम्। अन्नेनैव तु कर्तव्यं यस्य भार्या रजस्वला । ' इति कालिकावचनाच्च । कालादर्शे तु स्त्रिया रजोदर्शने दर्शश्राद्धं पञ्चमेऽहनीति पक्षान्तरमुक्तम् । पारिजातेऽप्येवम् । एवं महालयेयुगादावपीति॥ यस्य तु क्षयाहो न ज्ञायते मासस्तु ज्ञायते तस्य तन्मासस्यामावास्यायामेकादश्यां वा क्षयाहश्राद्धं कर्तव्यम्।तदाह बृहस्पतिः-'न ज्ञायते मृताहश्चेत्प्रोषिते संस्थिते सति । मासश्चेत्प्रतिविज्ञातस्तद्दर्शे स्यादथाब्दिकम् ।' इति । मदनरत्ने तु—मृताहनीति पाठः । मृताहे यत्कर्तव्यं तद्दर्शे कर्तव्यमित्यर्थः । प्रोषित इति मृततिथ्यज्ञानकारणोपलक्षणम् । अत एव सामान्यतो भविष्यत्पुराणम्—'मृताहं यो न जानाति मानवो विनतात्मज । तेन कार्यममावास्यां श्राद्धं सांवत्सरं नृप ।' इति । श्राद्धविघ्ने समुत्पन्ने इति पूर्वोक्तमरीचिवचनमपि । यद्यपि चात्र कृष्णपक्षे विशेषत इत्युक्त्या शुक्लैकादश्यनुकल्पः । स्तथापि शुक्लपक्षे मृत इति ज्ञाने सैव ग्राह्या।पक्षस्याप्यज्ञाने तु साऽनुकल्प इति द्रष्टव्यम् । मरणदिनज्ञाने मासाज्ञाने मार्गशीर्षभाद्रपदमाघानामन्यतमे मासे तद्दिने कर्तव्यम् । तथा च भविष्यपुराणे—'दिनमेव विजानाति मासं नैव तु यो नरः । मार्गशीर्षेऽथ वा भाद्रे माघे वाऽथ समाचरेत् । ' इति ।

अत्रापि शुक्लपक्षज्ञाने तद्गता तत्तिथिः।नो चेत्कृष्णपक्षगतैव।तस्याः पित्र्ये प्रशस्तत्वात्। निर्णयामृते तु आषाढोऽप्युक्तः।'यदा मासो न विज्ञातो विज्ञातं दिनमेव तु। तदा त्वाषाढके मासि माघे वा तद्दिनं भवेत्।' इति बृहस्पत्युक्तेः। कालादर्शेऽपि मासाज्ञाने कार्यमाषाढमाघयोरित्युक्तम्॥ यदोभयमपि न ज्ञायते तदा प्रवासमासदिवसौ ग्राह्यौ। तदाह बृहस्पतिः—'दिनमासावविज्ञातौ मरणस्य यदा पुनः। प्रस्थानमासदिवसौ ग्राह्यौ पूर्वोक्तया दिशा।' इति।पूर्वोक्तया दिशेत्यस्यायमर्थः। प्रस्थानस्यापि मासज्ञाने दिनाज्ञाने तन्मासामावास्यादिषु। मासाज्ञाने दिनज्ञाने च मार्गशीर्षादिषु प्रस्थानतिथाविति। शुक्लपक्षतदज्ञानयोः पूर्ववत्॥ यदा मरणप्रस्थानमासादि न ज्ञात तदा मृतवार्ताश्रवणदिने॥ तत्राप्यसंभवे वार्ताश्रवणमासामावास्यायां कुर्यात्। तदुक्तं प्रचेतसा,—अपरिज्ञातेऽमावास्यायां श्रवणदिने वेति। भविष्यत्पुराणेऽपि—'मृतवार्ताश्रुतेर्ग्राह्यौ तौ पूर्वोक्तक्रमेण तु।'इति।पूर्वोक्तक्रमेण त्वित्यस्यायमर्थः-मरणवार्ताश्रवणसंबन्धिमासमात्रस्य स्मरणे तदमावास्यादिषु, तद्दिनमात्रस्मरणे मार्गशीर्षादिसंबन्धिनि तद्दिने। शुक्लपक्षतदज्ञानयोः पूर्ववत्। यस्य तु मरणतच्छ्रवणप्रस्थानानां सर्वेषामपि दिनमासयोरज्ञानं तदाब्दिकविषये प्रभासखण्डे--'मृतस्याहर्न जानाति मासं वापि कथंचन। तेन कार्यममावास्यां श्राद्धं माघेऽथ मार्गके।' इति। कथंचनेति। मरणादिरूपेण केनापि चिह्नेनेत्यर्थः। यस्य त्वज्ञातदेशगतस्य जीवन्मरणान्यतरानिर्धारणात्पञ्चदश वर्षाणि प्रतीक्ष्य पश्चात्प्रतिकृतिदाहाद्यौर्ध्वदेहिकं क्रियते तस्य दाहकालिकतिथावेवाब्दिकं कार्यम्। तथा च जातूकर्ण्यः—'पितरि प्रोषिते यस्य न वार्ता नैव चागतिः। ऊर्ध्वं पञ्चदशाद्वर्षात् कृत्वा तत्प्रतिरूपकम्। कुर्यात्तस्य च संस्कारं यथोक्तविधिना ततः।तदानीमिव सर्वाणि प्रेतकर्माणि संचरेत्।'इति। पितरीत्येतत्प्रोषितमात्रस्योपलक्षणमिति। मदनरत्ने। तदानीमिव तदानींमृतस्येव।अनेन सर्वत्र दाहदिनस्यावधित्वमुक्तम्।भविष्योत्तरे तु तदादीन्येवेति पाठः।कालतत्त्वविवेचने तु इयं पञ्चदशवर्षपरीक्षा पितृविषया।पितरीति वचनात्। यत्तु—'यस्य न श्रूयते वार्ता यावद्द्वादशवत्सरम्। कुशपुत्रकदाहेन तस्य स्यादवधारणम्।' इति बृहस्पतिवचनम्। 'प्रोषितस्य यदा कालो गतश्चेद्द्वादशाब्दिकः। प्राप्ते त्रयोदशे वर्षे प्रेतकार्याणि कारयेत्। जीवन्यदि स आगच्छेद्घृतकुम्भे नियोजयेत्। उद्धृत्य स्नापयित्वाऽस्य जातकर्मादि कारयेत्। द्वादशाहं व्रतचर्या त्रिरात्रमथ वाऽस्य तु। स्नात्वोद्वहेत तां भार्यामन्यां वा तदभावतः। अग्नीनाधाय विधिवद्व्रात्यस्तोमेन

वा यजेत् । अथैन्द्राग्नेन पशुना गिरिं गत्वा च तत्र तु । इष्टिमायुष्मतीं कुर्यादीप्सितांश्च क्रतूंस्ततः ।' इति वृद्धमनुवचनं' तत्पित्रतिरिक्तविषयम् । जीवन्नित्यादि तु पितर्यपि भवत्येव । व्रतचर्या ब्रह्मचर्यरूपा । पञ्चाशद्वर्षन्यूनवयस्कस्य पञ्चदशवर्षप्रतीक्षा तदधिकवयस्कस्य द्वादशवर्षाणीति केचित् । दर्शे च वा वार्षिकादिश्राद्धप्राप्तौ कालादर्शे विशेष उक्तः—'दर्शस्य चोदकुम्भस्य दर्शमासिकयोरति । नित्यस्य चाब्दिकस्यापि दर्शकाब्दिकयोरपि ।' इत्युक्त्वा 'संपाते देवताभेदाच्छ्राद्धयुग्मं समाचरेत् । निमित्तनियतिश्चात्र पूर्वानुष्ठानकारणम् ।' इति।अत्र क्रमो निर्णयदीपे उक्तः-'नष्टचन्द्रे यदा काले क्षयाहदिवसो भवेत् । वैश्वदेवं क्षयश्राद्धं कुर्यात्प्राक्दर्शकर्मणः।'इति।वैश्वदेवमिति क्षयाहश्राद्धविशेषणम्।तेन पार्वणमिति लभ्यते।एतच्चोपरञ्जकं न तु व्यावर्तकम्। अमावास्यायां क्रियमाणस्याब्दिकश्राद्धस्य नियतपार्वणरूपत्वात् । तदुक्तं शंखेन—'अमावास्यां क्षयो यस्य प्रेतपक्षोऽथ वा पुनः।पार्वणं तस्य कर्तव्यं नैकोद्दिष्टं कदाचन।' इति । आमश्राद्धं चानुपनीतोऽपि कुर्यात् । तदुक्तं श्राद्धशूलपाणौ मात्स्ये--'अमावास्याष्टकाकृष्णपक्षपञ्चदशीषु च ।' इत्युपक्रम्य ' एतच्चानुपनीतोऽपि कुर्यात्सर्वेषु पर्वसु । श्राद्धं साधारणं नाम सर्वकामफलप्रदम् । भार्याविरहितोप्येतत्प्रवासस्थोऽपि नित्यशः । शूद्रोऽप्यमन्त्रवत्कुर्यादनेन विधिना बुधः ।' स्मृत्यर्थसारे तु—अनुपनीताः स्त्रीशूद्राश्च श्राद्धमृत्विजा कारयेयुः । स्वयं वा मन्त्रवर्जं कुर्युरिति । आब्दिकादिदिने द्रव्याद्यभावात् श्राद्धकरणासंभवे पिण्डदानमात्रं कुर्यात् ॥ तस्याप्यसंभवेऽप्युपवासं कुर्यात् । तदुक्तम्-- ' पिण्डमात्रं प्रदातव्यमभावे द्रव्यविप्रयोः । श्राद्धाहनि तु संप्राप्ते भवेन्निरशनोऽपि वा ।' इति । पात्राभावे तु विशेषः स्मृत्यन्तरे प्रोक्तः--' पात्राभावे परं कृत्वा पितृयज्ञविधिं नरः । निर्दिश्याप्यन्नमुद्धृत्य यत्र पात्रं ततो नयेत् ।' इति । पितृयज्ञविधिं श्राद्धविधिम् । अन्यत्रापि—' सर्वाभावे क्षिपेदग्नौ गवे दद्यात्तथाप्सु वा। न तु प्राप्तस्य लोपोऽस्ति पैतृकस्य विशेषतः।'इति । सर्वस्योक्तस्य निषिद्धस्य च पात्रस्याभाव इत्यर्थः । अतिदरिद्रस्य तर्पणमात्रं पर्याप्तम् । तिलाभावे वृद्धवसिष्ठेन विशेष उक्तः--'अग्निना वा दहेत्कक्षं श्राद्धकाले समागते । तस्मिन्वोपवसेदाह्नि जपेद्वा श्राद्धसंहिताम् ।' इति । कक्षं तृणसमूहम् । विष्णुपुराणे तु ' सर्वाभावे वनं गत्वा कक्षमूलप्रदर्शकः । सूर्यादिलोकपालानामिदमुच्चैः पठेत्ततः । नमेऽस्ति वित्तं न धनं न चान्यच्छ्राद्धोपयोगि स्वपि तन्नतोऽस्मि । तृप्यन्तु भक्त्या पितरो मयैतौ भुजौ कृतौ वर्त्मनि

मारुतस्य । इत्येतत्पितृभिर्गीतं भावाभावप्रयोजकम्।यः करोति कृतं तेन श्राद्धं भवति पार्थिव ।' इत्याब्दिकश्राद्धतिथिनिर्णयः ।

अथेष्टिकालो निरूप्यते । यद्यपीष्टेः प्रतिपदि कर्तव्यतया प्रतिपत्प्रकरण एव अयमभिधातुमुचितः । तथापि पर्वचतुर्थांशस्यापि प्रतिपद इव इष्टिकालत्वेन "संधौ यजेत" इति श्रुत्या संधिकालसापेक्षत्वेन च पर्वनिर्णयानन्तरमस्य निर्णयस्यावसर इति पर्वनिर्णयानन्तरं निर्णीयते।यद्यपि'संधौ यजेत'इति श्रुतौ संधिकालमात्रस्य यागकालत्वं प्रतिभाति तथापि तस्यातिसूक्ष्मत्वेन तत्र साङ्गप्रयोगानुष्ठानानुपपत्तेः संधिशब्दो लक्षणया कर्मानुष्ठानयोग्यं संधिपार्श्वद्वयवर्तिकालविशेषं लक्षयतीति । अत एव श्रुतिः संधिमभितो यजेतेति । बौधायनोऽपि--'सूक्ष्मत्वात्संधिकालस्य संधेर्विषय उच्यते।सामीप्यं विषयं प्राहुः पूर्वेणाह्ना परेण वा ।' इति । वाशब्दश्चार्थे । तच्च पर्व द्विविधम् । पौर्णमास्यमावास्या चेति । तत्र शुक्लपञ्चदश्यां चन्द्रमण्डलं कलाभिः सर्वात्मना पूर्यते सेयं मण्डलपरिपूर्तिः पूर्णिमेत्यनेन नाम्ना ज्ञायते । तदुक्तं ब्रह्माण्डमत्स्यपुराणयोः—'कलाक्षये व्यतिक्रान्ते दिवा पूर्णे परस्परम्।चन्द्रादित्यौ पराह्णे तु पूर्णत्वात्पूर्णिमा स्मृता। इति।अह्नः परो भागः पराह्णःसूर्यास्तमयकाल इत्यर्थः ।तत्र यथादित्यः संपूर्णमण्डलः सन्नस्तमेति तथोत्तरक्षणे चन्द्रः संपूर्णमण्डलःसन्नुदेतीति दृष्टान्तदार्ष्टान्तिकभावस्य विवक्षितत्वाद्द्वयोरादित्यचन्द्रयोरुपन्यासः।यथा मण्डलपूर्णत्वविवक्षया पूर्णिमाशब्दः प्रयुज्यते तथा मासपूर्णत्वविवक्षया पूर्णमासीशब्दः प्रयुज्यते।तदुक्तं भविष्योत्तरे-'पूर्णमासी महाराज सोमस्य दयिता तिथिः।पूर्णो मासो भवेद्यस्मात्पौर्णमासी ततः स्मृता ।' इति। पूर्णिमामावास्ययोर्विकल्पेन मासान्तत्वं मासप्रस्तावे दर्शितम् । अमावास्येत्यनेन नाम्ना बहवोऽर्थाः कथ्यन्ते । तत्रामाशब्दस्य चत्वारोऽर्थाः । सूर्यरश्मिश्चन्द्रकला कन्या सहभावश्चेति । वसुशब्दस्यापि चत्वारोऽर्थाः पितृविशेषः निवासः चन्द्रः इन्द्रश्चेति । तत्रामाशब्दस्य सूर्यरश्मिवाचित्वे वसुशब्दस्य निवासवाचित्वे अमायां रविरश्मौ वसुर्वासो यस्यामिति निर्वचनम् । तथा च स्कान्दे नागरखण्डे-'अमा नाम रवेरश्मिः सहस्रप्रमुखः स्मृतः।यस्यात्र तेजसा सूर्यः प्रोक्तस्त्रैलोक्यदीपकः।तस्मिन्वसति येनेन्दुरमावास्या ततः स्मृता।'इति।अमाशब्दस्य सहभाववाचित्वे वसुशब्दस्य निवासवाचित्वे अमा सह वसु निर्वासो यस्यामिति निर्वचनम् ।तदुक्तं मत्स्यब्रह्माण्डपुराणादिषु 'अमा वसेतामृक्षे तु यदा चन्द्रदिवाकरौ । एषा पञ्चदशी रात्रिरमावास्या ततः स्मृता ।' इति । अमाशब्दस्य चन्द्रकलावाचित्वं स्कान्दे दर्शितम्--' अमाषोडशभागेन देवि

प्रोक्ता महाकला।' इति । तां कलामुपजीव्य निर्वचनं भगवतीपुराणे दर्शितम् । 'कलावशिष्टो निष्क्रान्तः प्रविष्टः सूर्यमण्डलम् । अमायां विशते यस्मादमावास्या ततः स्मृता ।' इति । अमाशब्दस्य कन्यावाचित्वेऽपि वसुशब्दस्य पितृवाचित्वे अमा वसुर्भेच्छदस्यां रात्रावित्यमावास्येति निर्वचनम्।तथा च पद्मपुराणे-'अग्निष्वात्ता इति ख्याता यज्वानो यज्ञसंस्थिताः । अच्छोदा नाम तेषां तु मानसी कन्यका नदी। तमथामा वसुं नाम पितरं वीक्ष्य संगता।' इत्यादि । वसुशब्दस्य चन्द्रवाचित्वेऽपि अमाशब्दस्य सहभाववाचित्वमङ्गीकृत्य अमा औषधीभिः सह चन्द्रो वसत्यस्यां रात्रावित्यमावास्येति निर्वचनम् । अयमर्थः शतपथब्राह्मणे श्रूयते । तद्यदेष एतां रात्रिमिहावस इति तस्मादमावास्या नामेति । बृहदारण्यकेऽप्येवम् । अमाशब्दस्य सहभाववाचित्वे वसुशब्दस्य इन्द्रवाचित्वे अमा सह वसुरिन्द्रोऽस्यास्तीत्यमावास्येति निर्वचनम् । अयमर्थः शतपथब्राह्मणे दर्शपूर्णमासप्रकरणे श्रूयते। ते देवा अब्रुवन् अमा वै नोद्य वसुर्वसति योनः प्रावात्सीदिति । तैत्तिरीयब्राह्मणेऽपि स्पष्टमयमेवार्थः श्रूयते । इन्द्रो हि देवानां वसुः तदमावास्याया अमावास्यत्वमिति । अमावास्याशब्द-पर्यायो दर्शशब्दोऽपि दृश्यते।स च द्विविधः।सूर्याचन्द्रमसौ परस्परं पश्यतोऽत्रेति दर्शः। 'आश्रित्य साममावस्यां पश्यतः सुसमागतौ।अन्योन्यं चन्द्रसूर्यौ तौ यदाऽसौ दर्श उच्यते'। इति मत्स्यवायुपुराणयोरभिधानात् । ते च पौर्णमास्यमावास्ये द्विविधे ।' राका चानुमतिश्चैव पौर्णमासी द्विधास्मृता। सिनीवाली कुहूश्चैव अमावास्या द्विधैव तु।' इति पुराणवचनात् । अत्रानुमतिः सिनीवाली च चतुर्दशीमिश्रे । अमावास्या कुहूश्च प्रतिपन्मिश्रे । तथा च काठकश्रुतिः--या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका या पूर्वाऽमावास्या सा सिनीवाली, योत्तरा सा कुहूः ' इति । वृद्धवसिष्ठः--' राका चानुमतिश्चैव पौर्णमासीद्वयं विदुः । राका संपूर्णचन्द्रा स्यात्कलोनानुमतिः स्मृता । पौर्णमासी दिवा दृष्टे शशिन्यनुमतिः स्मृता । रात्रिदृष्टे पुनस्तस्मिन्सैव राकेति कीर्तिता । ' भगवतीपुराणे--'यदा त्वस्तमियात्सूर्यः पूर्णश्चेन्दुरुपागमत् । युगपत्सोत्तरा राका तदा भवति पूर्णिमा ।' मत्स्यब्रह्माण्डपुराणयोः -'यस्मात्ताम-नुमन्यन्ते पितरो दैवतैः सह। तस्मादनुमतिर्नाम पूर्णिमा प्रथमा स्मृता। अत्यर्थं राजते यस्मात्पौर्णमास्यां निशाकरः । रञ्जनाच्चैव चन्द्रस्य राकेति कवयो विदुः । ' मत्स्यब्रह्माण्डपुराणयोः--' सिनीवालीप्रमाणस्तु क्षीणशेषो निशाकरः । अमा-वास्यां विशत्यर्कं सिनीवाली ततः स्मृता ।' सिनी सिता अवसितेति यावत् ।

अल्पो बालो बाली सिनी चासौ बाली चेति सिनीवाली सिनीबालीप्रमाणः बाला अमा इत्यर्थः । 'कुहिति कोकिलेनोक्ते यावत्कालः समाप्यते । तत्काल-संज्ञिता ह्येषा अमावास्या कुहूः स्मृता ।' तथा अनुमतिश्च राका च सिनीवाली कुहूस्तथा । एतासां द्विलवः कालः कुहूमात्रा कुहूः स्मृता । इत्येष पर्वसंधीनां कालो वै द्विलवः स्मृतः ।' ननु पौर्णमास्यां पौर्णमास्या यजेत अमावास्यायाममावास्यया यजेतेति वचनात् कृत्स्नेष्टिप्रयोगस्य पर्वकालत्वे प्राप्ते तत्कथं संधिकालसापेक्षत्वमिति चेत् । उच्यते । पूर्वेद्युरग्निं गृह्णाति उत्तरमहर्यजती-त्यादिश्रुत्यन्तरादन्वाधानाद्यनुष्ठानेनोपक्रममात्रं पर्वणि । इतरसकलाङ्गोपेतप्रधाना-नुष्ठानं तु प्रतिपदीति द्व्यहकालसाध्यत्वात्तत्सापेक्षत्वम् । अत एव गोभिलेनोक्तम्—पक्षान्ता उपवस्तव्याः पक्षादयोऽभियष्टव्याः इति । अत्रोपवासशब्देनाग्न्यन्वाधानादि विवक्षितम् । तस्मिन्क्रियमाणे यजमानसमीपे देवतानां निवासात् । तथा च तैत्तिरीय ब्राह्मणम्—उपास्मिञ्छ्वो यक्ष्यमाणे देवता वसन्ति य एवं विद्वानग्निमुपस्तृणातीति । एवं पौर्णमास्यमावास्ययोः प्रयोगैकदेशान्वयेन संकोचः । पौर्णमास्यां पौर्णमास्येत्यादि श्रुतेः पौर्णमास्यमावास्याशब्दयोस्तिथिविशेषे रूढत्वात् । एवं संधौ यजेतेति श्रुतिरपि संधिमभितो यजेतेति श्रुत्यन्तरैकवाक्यत्वात्पर्वप्रतिपत्समुदायलक्षणया कृत्स्नप्र-योगकालविधायिकैव । एवं च सति पौर्णमास्यमावास्याश्रुतिरप्यमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीत्यादौ वृत्तिकारादिभिः संधिवाचित्वेन व्याख्यानात्पौर्णमास्य-मावास्याशब्दनिर्वचनार्थवादोपदर्शितयोगाच्चपौर्णमास्यमावास्याशब्दयोरपि संधिवाचि-त्वादपराह्णादिशब्दसमभिव्याहारस्य वाऽहोरात्रलक्षणबीजस्यात्राभावात्पूर्वोक्तरीत्या पार्श्वद्वयवर्तितिथिद्वयलक्षणया संधौ यजेतेतिवत्कृत्स्नप्रयोगकालविधायिकेत्यपि वक्तुं शक्यम् । तत्र पूर्वस्मिन्पर्वदिने य आरम्भः स चान्वाधानमिध्माबर्हिःसंपादनमध्व-र्युणा गार्हपत्यादिषु ममाग्ने इत्यादिभिः समिदाधाने क्रियमाणे यजमानेनाग्निं गृह्णामीति मन्त्रपठनरूपोऽग्निपरिग्रह उपस्तरणं चेत्येवमादिः । तथा च तैत्तिरीयब्राह्मणे श्रूयते—पूर्वेद्युरिध्माबर्हिः करोति यज्ञमेवारभ्य गृहीत्वोपवसतीति । शतपथब्राह्मणेऽपि—पूर्वेद्युरग्निं गृह्णाति उत्तरमहर्यजतीति । प्रतिपद्दिने तु कर्मणे वां देवेभ्य इत्यादिभिर-ध्वर्युर्हस्तप्रक्षालनतण्डुलनिर्वापपुरोडाशप्रदानादिलक्षणं प्रयोगं करोति । तदिदं यजनम् । तत्रापि न संपूर्णपर्वान्वाधानकालः । नापि संपूर्णप्रतिपद्यागकालः । किं तु पर्वणोंशत्रयमन्वाधानस्य कालः । पर्वचतुर्थांशसहितं प्रतिपद आद्यमंशत्रयं च यागस्य

था च लौगाक्षिः—'त्रीनंशानौपवस्तस्य यागस्य चतुरो विदुः। द्वावंशावुत्सृजेदन्त्यौ यागे च व्रतकर्मणि' इति। औपवस्तस्योपवासस्याग्न्यन्वाधानादेस्त्रीनंशान्विदुः। यागस्य चतुरोंशान्विदुः। अन्त्यावंशौ पञ्चदशीप्रतिपत्संबन्धिनावुत्सृजेत्परित्यजेत्। अन्त्यमं शं पञ्चदश्या व्रतकर्मणि यागे च प्रतिपदश्चतुर्थमंशम्। अयं च प्रतिपत्पूर्वान्त्यचतुर्थांशभिन्नां स्त्रींश्चतुरश्चेति पर्युदासविधया पूर्वशेष एव न तु स्वतन्त्रस्त्यागविधिः। पर्वक्र मो यश्चतुर्थांश इत्यादिवाक्यान्तरवशाद्वाक्यभेदापत्तेश्च। अन्वाधाने पर्वचतुर्थांशवर्जनं च सद्यस्कालव्यतिरिक्तविषयम्। सद्यस्कालतायां तत्रैव तदनुष्ठानात्। कथं तर्हि यागे चतुर्थांश इत्यपेक्षिते यज्ञपार्श्वः—'पञ्चदश्याः परः पादः पक्षादेः प्रथमास्त्रयः। कालपर्वणि यागे स्यादन्यथा तु न विद्यते।' कात्यायनः—'न यष्टव्यं चतुर्थांशे यागैः प्रतिपदः क्वचित्। रक्षांसि तद्विलुम्पन्ति श्रुतिरेषा सनातनी।' तत्राप्यहनि यागः कर्तव्यः। पूर्वेद्युरग्निं गृह्णाति उत्तरमहर्देवता यजेतेत्यहर्विधानात्। तत्रापि पूर्वाह्ण एव। पूर्वाह्णो वै देवानामिति श्रुतेः। तत्रापि प्रातरेव। 'पर्वणो यश्चतुर्थांश आद्याःप्रतिपदस्त्रयः। यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः' इति वृद्धशातातपवचनात्। प्रातर्यजध्वमश्विनेति मन्त्रलिङ्गाच्च। प्रातःकालश्च पञ्चधा विभक्तदिनस्याद्यस्त्रिमुहूर्तभागः। 'लेखाप्रभृत्यथादित्ये त्रिमुहूर्तस्थिते तु वै। प्रातः काल इति ज्ञेयो भागश्चाह्नः स पञ्चमः। मुहूर्तत्रितयं तः' इत्यादिवचनाच्च। यस्तु चतुर्धा विभागपक्षे सार्धप्रहरात्मके आद्यभागे । एवाध्यर्धसंयुक्तः प्रातरित्यभिधीयते' इतीदानींतनानां प्रातःशब्दप्रयोगः। लक्षणया। अनेकार्थत्वस्याप्यन्याय्यत्वात्। पूर्वाह्णः प्रहरं सार्धमिति लेन तस्य पूर्वाह्णग्रहणयोगेनेदृशप्रातः परमेव। तदेवं पर्वण्यन्वाधानादिकं प्रतिपदि रिति संधिपार्श्वयोरारम्भसमाप्ती व्यवस्थिते। एवं यागान्वाधानकाले स्थिते यदा मास्यमावास्ययोस्तदुत्तरप्रतिपदोश्च सूर्योदयास्तमयस्पर्शित्वं तदा न कोऽपि संदेहः। : खण्डत्वे तु निर्णयोऽभिधीयते। तत्र गोभिलः—'आवर्तने यदा संधिः पर्वदोर्भवेत्। तदहर्याग इष्येत परतश्चेत्परेऽहनि। पर्वप्रतिपदोः संधिरर्वागावर्तदे। तस्मिन्नहनि यष्टव्यं पूर्वेद्युस्तदुपक्रमः। आवर्तनात्परः संधिर्यदि तस्मिनः। पुरेद्युरिष्टिरित्येष पर्वद्वयविनिश्चयः' इति। मदनरत्नेऽपि—यदा रात्रौ ह्णे वा संधिः तदा संधिदिनेऽन्वाधाय परेद्युर्यष्टव्यम्। तदाह लौगाक्षिः—'अपवा रात्रौ यदि पर्व समाप्यते। उपोष्य तस्मिन्नहनि श्वो भूते याग इष्यते। पूर्वाह्णे मध्याह्ने वा संधिस्तदा संधिदिने यागः पूर्वदिनेऽन्वाधानम्। तदाह

स एव—'पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते। उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते। इति। माधवीये—एषु वचनेषु मध्याह्नादिशब्दा यौगिकाः न तु पञ्चधा विभागमाश्रित्य प्रवृत्ताः। तथा सत्यह्नो मध्यो मध्याह्न इति व्युत्पत्तेरावर्तनं मध्याह्नशब्देनाभिधीयते। अत एव गोभिलेनावर्तनशब्दः प्रयुक्तः। शातातपेन मध्यमशब्दः प्रयुक्तः। 'पूर्वाह्णे मध्यमे वापि यदि पर्व समाप्यते। तदोपवासः पूर्वेद्युस्तदहर्याग इष्यते' इति। अह्नः पूर्वभागः पूर्वाह्णः। अह्नोऽपरो भागोऽपराह्णः। अतस्ताभ्यां शब्दाभ्यामावर्तनात्पूर्वोत्तरभागावभिधीयेते इति। मदनरत्नेऽपि—अत्र यागकालप्रकरणे पूर्वाह्णापराह्णशब्दौ द्वेधा विभक्तस्याह्नः पूर्वोत्तरभागवाचकौ। 'आवर्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परः। मध्याह्नस्तु तयोः संधिर्यदावर्तनमुच्यते' इत्येतत्प्रकरणपठितवचनात्। आवर्तनादिति आ आवर्तनात्। आङ् मर्यादायाम्। तेन सूर्योदयमारभ्यावर्तनं मर्यादीकृत्य पूर्वाह्ण इत्यर्थः। अस्मादेव वचनादेतत्प्रकरणे मध्याह्नशब्दः आवर्तनरूपदिनमध्यभागमात्रवचन इति। निर्णयसिन्धावपि—अत्र द्वेधा विभागः। आवर्तनात्तु पूर्वाह्ण इति पूर्वोक्तवचनादिति। माधवीये वाजसनेयिनां तु विशेषमाह भाष्यार्थसंग्रहकारः—'मध्यं दिनात्स्यादहनीह यस्मिन्प्राक् पर्वणः संधिरियं तृतीया। सा खर्विका वाजसनेऽथिमत्या तस्यामुपोष्याथ परेद्युरिष्टिः' इति। आवर्तनादूर्ध्वमस्तमयादर्वाग्यदा संधिर्भवति तदाहः संधिमती तिथिः प्रथमा, रात्रौ संधिश्चेत्सा तिथिर्द्वितीया। उभे अपेक्ष्य पूर्वाह्णे संधिमती पर्वतिथिस्तृतीया भवति। तस्यां तृतीयतिथौ पर्वकालस्याल्पत्वात्सा खर्विकेत्युच्यते। शाखान्तराध्यायिनामीदृशे विषये पूर्वेद्युरन्वाधानादिकं संधितिथाविष्टिः। वाजसनेयिनां तु संधितिथावन्वाधानमुत्तरतिथाविष्टिः। एवं सति वाजसनेयिनां न क्वापि संधिदिनात्पूर्वेद्युरन्वाधानादिकमस्ति सोऽयं विशेष इति। एतद्वचनं पौर्णमासीपरमिति मदनरत्ने। अपराह्णे पूर्णमासंधावुत्तरेद्युः प्रातः प्रतिपच्चतुर्थांशसंभवे तत्र यागकरणेऽपि न दोषः। तदाह वृद्धशातातपः—'संधिर्यद्यपराह्णे स्याद्यागं प्रातः परेऽहनि। कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न दुष्यति' इति। न यष्टव्यं चतुर्थेंशे इति कात्यायनवचनं तु पूर्वाह्णे पर्वसंधौ वेदितव्यम्। यदा संगवादूर्ध्वं मध्याह्नात्प्राक् पूर्णिमासंधिस्तदा तस्मिन्नेव दिनेऽन्वाधानादिकं कृत्वा यागः कर्तव्यः। तदाह कात्यायनः—'संधिश्चेत्संगवादूर्ध्वं प्राक् चेदावर्तनाद्रवेः। सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः' इति। आपस्तम्बोऽपि—पौर्णमास्यामन्वाधानपरिस्तरणोपवासाः सद्यो वा सद्यस्कालायां सर्वं क्रियते इति। संगवावर्त्तनयोर्मध्ये पौर्णमासीप्रतिपदोः संधौ सति पूर्वोदाहृतैर्वचनैः संधिदिनात्पूर्वेद्युरन्वाधानादिकं प्राप्तं तत्र सद्यस्कालवाक्यैः संधिदि-

त्कृष्यते । ननु तथापि 'पर्वप्रतिपदोः संधिरर्वागावर्तनाद्यदि । तस्मिन्नहनि यष्टव्यं र्वीद्युः स्यादुपक्रमः ।' इति गोभिलवचनेन विरोधो भविष्यतीति चेत् । न । संगवात्पूर्वेऽपि संधेरावर्तनादर्वाचीनत्वात्तद्विषयत्वं गोभिलवाक्यस्य । कात्यायनवाक्यस्य तु संगवोर्ध्वभाविमध्याह्नादर्वाचीनसंधिर्विषयः । यद्वा गोभिलवचनं पर्वद्वयसामान्यविषयं पूर्णिमामात्रविषयं कात्यायनवचनमिति विशेषवचनेन सामान्यवचनबाध इत्यविरोधः यदा चावर्तनतत्पूर्वसंध्योः पर्वचतुर्थांशे यागानुष्ठानं तदा न यागप्रयोगः पर्वमध्ये समापनीयः । किं तु प्रतिपदि प्रविष्टायाम् । 'प्रतिपद्यप्रविष्टायां यदि चेष्टिः समाप्यते । पुनः प्रणीय कृत्स्नेष्टिः कर्तव्या यागवित्तमैः ।' इति गार्ग्यवचनेऽन्यथा दोषस्मरणात् । प्रणीय अग्निमिति शेषः । अत्र च प्रातरारभ्य सर्वं कर्म निर्वर्त्य विष्णुक्रमादिकः समाप्तिपदार्थः प्रतिपदंशे कर्तव्य इति मदनरत्ने । प्रतिपदि प्रविष्टायां ब्राह्मणभोजनमन्त्यपदार्थः समाप्तिः कर्तव्येति हेमाद्रौ । परिशिष्टे तु पक्षादिचरोरुपक्रमोऽपि पक्षे प्रतिपदं प्रतीक्ष्यैव कर्तव्य इत्युक्तम् । 'पक्षादावेव कुर्वीत सदा पक्षादिकं चरुम् । पूर्वाह्ण एव कुर्वीत विद्धेऽप्यन्ये मनीषिणः' इति । विद्धे पर्वविद्धे । अमावास्यायां विशेषमाह वृद्धशातातपः—'द्वितीया त्रिमुहूर्ता चेत्प्रतिपद्यापराह्णिकी । अन्वाधानं चतुर्दश्यां परतःसोमदर्शनात् ।' इति । बौधायनेऽप्येवम् । वृद्धवसिष्ठोऽपि—इन्दौ निरुप्तेपयसि यद्वैगुण्यं हुते तस्मिन्पश्चादपि ह तद्भवेत् ।' इति । अयमर्थः । संपूर्णचतुर्दश्याममावास्याभ्रान्त्याऽन्वाधानं कृत्वा हविषि निरुप्ते उषसि पूर्वस्यां दिशि चन्द्रोदये सति यद्दर्शयागस्य वैगुण्यं तद्यागदिने पश्चिमायां दिशि चन्द्रोदयेऽपि भवतीति । श्रुतिरप्यमुमेवार्थं बोधयति । यस्मिन्नहनि पुरस्तात्पश्चाच्च सोमो न दृश्यते तदहर्यजेतेति । अयमर्थः । सिनीवाल्यां पुरस्ताच्चन्द्रो दृश्यते द्वितीयायुक्तायां प्रतिपदि पश्चाच्चन्द्रो दृश्यते । अनयोरुभयोरपि यागो न कर्तव्यः । किं तु चन्द्रदर्शनरहितायाममावास्यायां प्रतिपदि वा यागः कर्तव्यः । चन्द्रदर्शनोपेतायां शुक्लप्रतिपदि यागानुष्ठाने प्रायश्चित्तमाह कात्यायनः—'यजनीयेऽह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते । तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये ।' इति । दण्डं दक्षिणाम् । ब्रह्मदण्डमिति मदनरत्ने । अत्र चेच्छब्दीयजनितनिमित्तत्वप्रतीतेर्विशेषणे संक्रमादेव निमित्तवाक्याभिव्यक्तिः । वारुणीसोमदर्शनवदहो यदि यजनीयं यागसंबन्धि स्यात् । मोहाच्चेत्तत्र यजेत तदा व्याहृतिभिर्हुत्वा दण्डं दद्यादिति । हविरार्तिमार्च्छेदित्यस्य हविश्चेदार्तिप्राप्तिविशिष्टं स्यादितिवत् तेन यजनीयत्वोक्तिरप्युपपन्ना । स्मृत्यन्तरेऽपि—' अर्वागस्तमयाद्यत्र

द्वितीया तु प्रदृश्यते । तत्र यागं न कुर्वीत विश्वेदेवाः पराङ्मुखाः ।' इति । चन्द्रदर्शनदिने विश्वे देवाः सर्वे देवाः पराङ्मुखा यत इत्यर्थः । अत्र द्वितीया त्रिमुहूर्ता द्वितीया त्रिमुहूर्तेति द्रष्टव्यम् । त्रिमुहूर्ता द्वितीया चेदिति वाक्यान्तरात् । अयं च पर्युदासः चन्द्रदर्शनार्हप्रतिपद्भिन्नायां प्रतिपदीति सामान्यप्राप्त्युपजीविनिषेधो न यष्टव्यमितिवत् । ननु यथा चन्द्रदर्शनवतो दिनस्य यागे पर्युदासः श्रुतस्तथाऽन्वाधानेऽपि तस्माद्यदेवैनं न पुरस्तात्परस्तात्पश्येत्तर्ह्येवोपवसेदित्यादि । सत्यम् । द्वयोरपि चन्द्रदर्शनरहितं दिनं कालः । स संपूर्णायाममावास्यायां प्रतिपदि च दिनद्वयेऽपि चन्द्रदर्शनाभावादुभयत्राप्यनुगृह्यते । यदा त्वेकस्मिन्नेव दिने चन्द्रदर्शनं तदोभयोः स्वकालत्वासंभवे अङ्गगुणविरोधन्यायेन चन्द्रादर्शनदिने यागस्य पूर्वस्मिंश्च चन्द्रदर्शनवत्यप्यन्वाधानस्यानुष्ठानं युक्तम् । अत एव श्रुतिरपि तद्वैके दृष्ट्वोपवसन्तीति । गोभिलोप्याह—दृश्यमानेऽप्येकदेति । तैत्तिरीयब्राह्मणे तु चन्द्रदर्शनदिनेऽपि याग उक्तः— 'एषा वै सुमना नामेष्टिर्यजमानं पश्चाच्चन्द्रमा अभ्युदेत्यस्मिन्नेवास्मै लोकेऽर्धुकं भवति ।' अयमर्थः । येयमिष्टिश्चन्द्रदर्शनजदिने क्रियते सेयमिष्टिः सुमनःशब्दवाच्या । तादृशीमिष्टिं कृतवन्तं यजमानमभिलक्ष्य तस्मिन्नेव दिने पश्चाच्चन्द्रमा उदेति तस्मै यजमानाय अस्मिँल्लोके समृद्धिर्भवतीति । श्रुत्यन्तरेऽपि—यदहः पश्चाच्चन्द्रमा अभ्युदेति तदहो यजन्निमांल्लोकानभ्युदेतीति । आपस्तम्बसूत्रभाष्यार्थसंग्रहकारेणापि तत्रैव याग इत्युक्तम् । 'अपराह्णेऽथ वा रात्रौ यदि पर्व समाप्यते । उपोष्या तत्र राका स्यात्सा पूर्णोत्सर्पिलक्षणा । पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते । उपोष्याऽनुमतिस्तत्र साश्वः पूरितलक्षणा । अपराह्णे क्षयायां वा यदि पर्व समाप्यते । उपोष्या तु कुहूस्तत्र यदहर्नेति लक्षणा । पूर्वाह्णे वाथ मध्याह्ने पर्वसंधिर्यदा भवेत् । तत्रोपोष्या सिनीवाली श्वो न द्रष्टारलक्षणा ।'इति । अत्र पक्षद्वये स्वस्वसूत्रानुसारेण व्यवस्था ज्ञातव्येति मदनरत्ने । माधवीयेऽपि—सोऽयं विशेषो नाश्वलायनापस्तम्बविषय इति । हेमाद्रिस्त्वपराह्णसंधावपि परदिने प्रतिपच्चतुर्थांशे चन्द्रोदये च सति द्वितीयादिष्वन्तक्षये सति पूर्वेद्युर्यागः कर्तव्यः न चन्द्रदर्शनदिन इत्याह । पर्वणोंशे तुरीये तु यष्टव्यं तु द्विजातिभिः । द्वितीयासहितं यस्माद्दूषयन्त्याश्वलायनाः । इति वचनात् । द्वितीये त्विति पाठो मदनरत्ने । सोऽपि कैमुतिकन्यायेन चतुर्थांशपर एव । 'भूते पञ्चदशी पूर्णा द्वितीया क्षयगामिनी । तदा इष्टिरमायां स्याद्भूते कव्यादिकी क्रिया ।' इत्युक्तेश्च । इति एवमेव निर्णयामृतकालतत्त्वविवेचनयोः सिद्धान्ति-

तम्।बौधायनमतानुसारिणामन्वाधानवदर्शश्राद्धमपि स्वल्पामावास्योपेतायां चतुर्दश्या कर्तव्यम्। यदा चतुर्दश्यामित्यादिबौधायनवचनात्। एवं तेषां पितृयज्ञस्यापि तत्रैवानुष्ठानम्। चन्द्रक्षयवत्यपराह्णे तस्यापि विधानादपराह्णे ददातीति तस्मिन्क्षीणे ददातीति। कर्मप्रदीपे तु'पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः।पिण्डं यज्ञं ततःकुर्यात्ततोऽन्वाहार्यकं बुधः।'इत्यादिवचनैरन्वाधानपिण्डपितृयज्ञश्राद्धानामेकदिनसाध्यत्वात्पितृयज्ञश्राद्धयोश्चाहस्त्वेचन्द्रक्षये विधानादन्वाधानकालवाक्यगतमपि चन्द्रदर्शनं चन्द्रक्षयोपलक्षणमित्युक्तम्। 'यदुक्तंयदहस्त्वेव दर्शनं नैतिचन्द्रमाः। तत्क्षयापेक्षयाज्ञेयं क्षीणे राजनि चेत्यपि।' इति।एतच्च यच्छाखायां त्रयाणामेकदिनेऽनुष्ठेयत्वमुक्तं तद्विषयं द्रष्टव्यम्। संधिनिर्णयश्चेति। यदा तु महत्या वृद्ध्या षोडशदिनेऽमावास्या संपूर्णा सप्तदशदिने प्रतिपद्वर्धते तदा न प्रतिषिध्यते। 'यच्चोपवसथं कर्म यजनीयात्रयोदशम्। भवेत्सप्तदशं वापि तत्प्रयत्नेन वर्जयेत्' इति तत्र त्रयोदशीसप्तदशीनिषेधौ नित्यानुवादावेव। दिनद्वयवृद्धेर्दिनक्षयस्य वाऽभावात्। हेमाद्रिकालतत्त्वविवेचनयोस्तु—षोडशेह्न्यभीष्टेष्टिरिति वचनं प्रधानयागविषयतयावभासमानमपीत्युपक्रमादन्वाधानपरतया व्याख्यातम्। अस्य तिथिसाम्ये यथास्थित एव। वृद्धिक्षययोस्तु विशेषमाह लौगाक्षिः—'तिथेः परस्या घटिकास्तु याः स्युर्न्यूनास्तथैवाभ्यधिकाश्च तासाम्। अर्धं वियोज्यं च तथा प्रयोज्यं ह्रासे च वृद्धौ प्रथमे दिने तत्' इति। ततश्च यदा चतुस्त्रिंशन्नाडीरूपपरमदिनसमये पौर्णमासी षोडशघटिका सप्तदशघटिका वा षड्विंशति घटिकारूपपरमक्षीणदिनसमये च द्वादशघटिका त्रयोदशघटिका वा। एवं विषुवादावप्यूह्यम्। परदिने च प्रतिपत्त्रिमुहूर्तवृद्धा तदा यथास्थितसंध्यालोचने आवर्तने तत्पूर्व वा संधेः पर्वचतुर्थांशरूपयागकाललाभाच्च संधिदिने यागः प्राप्नोति। अर्धवृद्धिप्रक्षेपेण तु संधिनिर्णये परदिने। एवमन्यदाप्यूह्यम्। परदिने प्रतिपत्त्रिमुहूर्तन्यूना। तदाऽपराह्णसंधौ। 'संधिर्यद्यपराह्णे स्यात्' इति वचनात् प्रतिपच्चतुर्थांशस्यापि केषांचिन्मते यागकालत्वात्परदिने यागः प्राप्नोति। यथास्थितसंध्यालोचने अर्धप्रक्षेपेण तु संधिदिन एवेति विशेषः। अत्र केचित्। यदि चतुर्दशी दशदण्डा पर्व च पञ्चदशदण्डमितं प्रतिपत्तु एकोनविंशतिदण्डा तदा प्रतिपद्वृद्धेरर्धं दण्डद्वयं पर्वान्ते प्रक्षिपन्ति। एवं चतुर्दशी यदि पञ्चविंशतिदण्डा पर्वैकोनविंशति दण्डं प्रतिपच्चतुर्दशदण्डा तदा प्रतिपद्ध्रासार्धं घटिकाद्वयं पर्वान्ते प्रक्षिपन्ति। तदयुक्तम्। ईदृशे विषये पर्वापेक्षया प्रतिपदो ह्रासस्य वृद्धेर्वाऽभावात्। प्रत्युदाहरणे ह्रास एवास्ति ह्रासोदाहरणे

वृद्धिरिति । न हि घटिकान्यूनाधिक्यभावे ह्रासवृद्धी भवतः । किं तु चतुर्दश्युत्तरं यावत्यः पर्वघटिकास्तत आधिक्ये न्यूनत्वे प्रतिपदो ह्रासवृद्धी इति । एवमालोच्य संधिनिर्णयो मयूखे—यदा प्रतिपद्दिने पञ्चधा विभक्तदिनचतुर्थभागरूपापराह्णव्यापि-द्वितीयाप्रवेशे न चन्द्रदर्शनं तदा चतुर्दश्यामन्वाधानं संधिदिने च यागः । तथा च वृद्धवसिष्ठः—आदित्येऽस्तमिते चन्द्र इत्यादि ' कात्यायनः—यजनीयेऽह्नि सोऽनश्ये-दिति ' वृद्धशातातपः—त्रिमुहूर्ता द्वितीया चेदिति । यच्च तत्रोक्तम्—एतानि वचना-न्यपराह्णेऽमाप्रतिपत्संधिपराणीति हेमाद्रिः । तन्न । रात्रिसंधावपि तथापत्तेरिति । तच्चिन्त्यम् । तदा कैमुतिकन्यायेन आवर्तनात्परः संधिरित्यादिवाक्ये श्वापराह्ण संधितुल्यानुष्ठानसिद्धे रात्रिग्रहणस्य वैय्यर्थ्यापातेन तत्र संधौ तथापत्तिविरहात् । न चापराह्णशब्देन यागवृत्त्यहर्वर्त्यावर्तनोत्तरभागाभिधाने रात्रिसंधौ कैमुतिकन्यायात्प्रवृ-त्तिरिति वाच्यम् । दिनचतुर्थभागरूपापराह्णे काले संधौ यदि उत्तरदिने यागस्तर्हि रात्रौ पर्वप्रतिपदोः संधौ उत्तरदिने याग इति किमु वक्तव्यमित्येवं रूपकैमुतिकन्याय-प्रवृत्तौ बाधकाभावात् । तस्माद्विनिगमनाविरहादेतानि वचनानि आवर्तने ततः पूर्वमुत्तरं वाऽमाप्रतिपत्संधौ प्रवर्तन्ते नापराह्णसंधावेवेति युक्तमिति यदुक्तं तदेवायु-क्तम् । यदपि मयूखे— यत्तु केचिच्चन्द्रदर्शनमेव यागनिषेधकं न त्रिमुहूर्तद्वितीया-प्रवेश इति । तन्न । त्रिमुहूर्ताद्वितीया चेदित्यादिवाक्यस्य पाक्षिकानुवादत्वापत्तेरिति । तदप्यपेशलम् । परतः । सोमदर्शनादिति हेतूक्त्यैव त्रिमुहूर्तेत्यस्योपलक्षणत्वप्रतीतेः। ननु प्रकृतेर्यथोक्तकालात्कालान्तरं क्वचित्स्मर्यते 'षोडशेऽहन्यभीष्टेष्टिर्मध्या पञ्चदशेऽह-नि । चतुर्दशे जघन्येष्टिः पापा सप्तदशेऽहनि, इति । अयमर्थः । पूर्वप्रतिपद्दिनमारभ्य गणना-यामागामिप्रतिपद्दिनं षोडशं भवति । तत्रेष्टिरभीष्टोत्तमा । ततः पूर्वस्मिन्पञ्चदशे दिने मध्यमा। ततः पूर्वेऽहनि जघन्या । तदेवं कालत्रये विहिता उत्तमकालात्षोडशादिनादूर्ध्ववर्तिनिसप्तदश-दिने प्रतिषिद्धा । बाढम् । तत्रोत्तममध्यमपक्षौ शास्त्रीयौ । तिथीनां वृद्धिक्षयाभावे सत्युत्तमः पक्षः प्राप्नोति । एकस्मिन्दिने क्षीणे सति मध्यमपक्षः प्राप्नोति । जघन्यपक्षस्तु न शास्त्रीयः । दिनद्वयक्षयाभावात् । अतो जघन्यशब्दो निषेधविवक्षया प्रयुक्तः न तु पक्षान्तरविवक्षया । यदा षोडशदिनेऽमावास्या दशघटिका सप्तदशदिने प्रतिपद्वर्धते तदा भ्रान्त्या प्रतिपच्चतुर्थांशेऽनुष्ठानं प्रसक्तं पापा सप्तदशेति वचनेन निवार्यते । तच्च न्याय्यम् । पूर्वाह्णसंध्युपेतदिने इष्टेः कर्तव्यत्वेन निर्णीतत्वात् । यदा तु महत्या वृद्ध्या षोडशदिनेऽमावास्या संपूर्णा सप्तदशदिने प्रतिपद्वर्धते तदा प्रतिषिध्यते । ' यच्चौपव-

सर्थं कर्म यजनीया त्रयोदशम् । भवेत्सप्तदशं वापि तत्प्रयत्नेन वर्जयेत् ' इति तत्र त्रयोदशीचतुर्दशीनिषेधौ नित्यानुवादावेव । दिनद्वयवृद्धेर्दिनद्वयक्षयस्य वाभावात् । हेमाद्रिकालतत्त्वविवेचनयोस्तु षोडशेहन्यभीष्टेष्टिरिति वचनं प्रधानयागविषयतयाऽवभासमानमपि इत्युपक्रम्यान्वाधानपरतया व्याख्यातम् । अस्य वचनस्य पूर्वार्धममावास्याविषयम्, उत्तरार्धं पौर्णमासीविषयमित्यपि पक्षान्तरं हेमाद्रौ स्थितम् । यत्तु वचनीयतरम् । ' ऊने पञ्चदशी याज्या समे याज्या तु षोडशी । ऊने वाप्यधिके वापि नेज्या सप्तदशी क्वचित् ' इति सप्तदशीनिषेधपरं, तदन्वाधानविषयतया संभवत्प्रधानयागविषयतया कथंचिद्व्याख्येयमिति दिक् । निर्णयसिन्धौ—यत्तु माधवः—' यस्तु वाजसनेयी स्यात्तस्य संधिदिनात्पुरा । न क्वाप्यन्वाहतिः किंतु सदा संधिदिने हि सा ' इत्याह, यच्च कालादर्शेऽप्युक्तम् । ' आवर्तनादधः संधिर्यदान्वाधाय तद्दिने । परेद्युरिष्टिरित्याहुर्विप्रा वाजसनेयिनः' इति, यच्च मदनरत्ने—मध्यं दिनात्स्यादहनीह यस्मिन्नित्यादि, तत्कर्कभाष्यदेवजानिश्रीमदनन्तभाष्यादिसकलतच्छाखीयग्रन्थाविरोधाद्वृद्धानादराच्चोपेक्ष्यमित्युक्तम् । तदेतत्तत्तद्ग्रन्थपर्यालोचनया विधातव्यम् । योऽयमिष्टिकालनिर्णयः स स्मार्तस्थालीपाकेऽप्यवगन्तव्यः । तत्रेष्टिस्थालीपाकाबाधानगृहप्रवेशनीयहोमानन्तरभाविन्यां पौर्णमास्यामारम्भणीयौ न तु दर्शे । यद्यारम्भकाले मलमासपौषशुक्रास्तादि भवति तदाप्यारम्भः कार्यः । यानि तु ' उपरागोऽधिमासश्च यदि प्रथमपर्वणि । तिथौ मलिम्लुचे पौषे नान्वारम्भणमिष्यते । गुरुभार्गवयोर्मौढ्ये चन्द्रसूर्यग्रहे तथा ' इत्यादि वचनानि, तान्यादितोतिक्रान्तशुद्धकालप्रारम्भविषयाणि । ' नामकर्म च दर्शेष्टिं यथाकालं समाचरेत् । अतिपाते सति तयोः प्रशस्ते मासि पुण्यतमे, इत्यपरार्के गर्गवचनादिति प्रयोगपारिजाते । मयूखे तु—'आधानानन्तरा पौर्णमासी चेन्मलमासगा । तस्यामारम्भणीयादीन्न कुर्वीत कदाचन' इति त्रिकाण्ड मण्डनवचनादन्वारम्भणीया मलमासोत्तरं शुद्धे काले कार्या । तत्र कालातिक्रमनिमित्ता विभ्रष्टेष्टिरप्यादौ कार्येति केचित् । तन्न । पुरुषापराधकृतकालातिक्रमरूपविभ्रष्टेष्टिनिमित्ताभावादिति । याज्ञिकास्तु पूर्वोक्तत्रिकाण्डमण्डनवचनाच्छुद्धकाल एव विभ्रष्टेष्टिं कृत्वाऽन्वारम्भणीयां कुर्वन्ति । कालादर्शसंग्रहेऽपि 'आरम्भं दर्शपूर्णेष्ट्योरग्निहोत्रस्य चादिमम् । प्रतिष्ठाः पञ्च कूर्माद्या मलमासे विवर्जयेत्' इति । एवं प्रकृतिकालो निर्णीतः ।

अथ विकृतिकालो निर्णीयते । स च श्रुतौ अभिहितः "यदीष्ट्या यदि पशुना यदि सोमेनयजेत सोमावास्यायांपौर्णमास्यां च" इति । पौर्णमासीकालिकोपांशुयाज्यग्नीषोमी-

यादिविकाराणां पौर्णमास्यामेवामावास्याकालिकसान्नाय्यादिविकाराणां वाऽमावास्यायामेवेति व्यवस्थाप्राप्तावव्यवस्थार्थमिदं वचनम्। पौर्णमास्याममावास्यायामिति विधेयकालगतैकवचनस्य विवक्षितत्वेनैकस्यां पौर्णमास्यामेकस्याममावास्यायां साङ्गप्रयोगोपादानात्सद्यस्कालीनत्वार्थं चेति निर्णीतं तन्त्ररत्ने। न चेष्टिपशुसोमानामनेकेषामुद्देश्यत्वात्तन्निमित्तोऽमावास्यापौर्णमास्योर्द्वयोर्निमित्तत्वाद्वाक्याभेदः स्यादिति वाच्यम्। इष्टिपशुसोमेष्वनुगतस्य यावत्त्वस्यैकस्योद्देश्यतावच्छेदकस्यामावास्यापौर्णमास्यनुगतस्य च पर्वत्वस्य विधेयतावच्छेदकस्य सत्त्वात्तस्य परिहर्तुमशक्यत्वात्। अत्र पौर्णमास्यमावास्याशब्दाभ्यां तदन्त्यक्षणो गृह्यते। तेनतद्वत्यहोरात्र इत्यर्थमाह रामांडार इति निर्णयसिन्धौ। सोमस्य वै राज्ञोऽर्धमासस्य रात्रयः पत्न्य आसंस्तासाममावास्यां च पौर्णमासीं च नोपैदित्याद्यर्थवादगतवैदिकप्रसिद्धेश्च तयोस्तिथिवाचित्वमेवेति कालतत्त्वविवेचने। तत्र संपूर्णपर्वण्यपराह्णसंधौ तदा प्रकृतिप्रधानानुष्ठानाभावाद्विकृतिं कृत्वा प्रकृतिरुपक्रमितव्या। यदीष्ट्येति वाक्यविहितकाललाभादिति मीमांसकानां याज्ञिकानां च विप्रतिपन्नमेव। पूर्वाह्णसंधौ त्वौदयिकपर्वणः प्रकृत्यावरुद्धत्वात्पूर्वपर्वण्येवोपदिष्टपर्वकालत्वानुरोधेनातिदेशप्राप्तं प्रातःकालं व्यूहकालवद्बाधित्वा विकृत्यनुष्ठानं युक्तमिति मीमांसकाः। तदुक्तं तंत्ररत्ने— एवं च यद्धूर्तस्वाम्यादिभिरुच्यते । प्रागावर्तनात्प्रतिपत्पञ्चदशीसंधौ सति कृत्वा प्रकृतिं प्रतिपदि विकृतिः कर्तव्येति । तदन्याय्यमनभिमतं भगवतो भाष्यकारस्येति । न च पूर्वाह्णसंधिदिन एव विकृतिमनुष्ठाय प्रकृतिरनुष्ठीयतां तस्याः प्रतिपद्यप्यविरोधादिति वाच्यम्। प्रकृतावुपदिष्टस्य प्रातःकालस्य बाधितुमशक्यत्वात्। पूर्वेद्युरनुष्ठाने तूपदिष्टपर्वकालत्वानुरोधेन विकृतावातिदिष्टतद्बाधस्य न्याय्यत्वात् । निशीथ्यादिवदनन्यगतिकवचनाभावे पूर्वेद्युरन्वाधानेनोपक्रान्तस्य प्रकृतियागस्य मध्ये कर्मान्तरानुष्ठानस्यानुचितत्वाच्च । अत एव संपूर्णपर्वण्यपराह्णसंधौ च विकृत्यनुष्ठानानन्तरमेव प्रकृत्यन्वाधानं युक्तम्। अतिदिष्टविकृतिप्रधानाङ्गप्रातःकालानुरोधाच्च । प्रकृत्यन्वाधानस्य तूपदिष्टोऽपि प्रातःकालोऽङ्गकालत्वाद्बाध्य एवेति। याज्ञिकमतानुसारेण तूच्यते। यदा संपूर्णं पर्व तदा पर्वणि विकृतियागं कृत्वा तत्रैव पश्चादन्वाधाय प्रतिपदि प्रकृतीष्टिः कर्तव्या। खण्डपर्वणि तु आवर्तनसंध्योः प्रकृत्यनुष्ठानानन्तरं संधिदिन एव विकृत्यनुष्ठानं कर्तव्यम्। तदुक्तं कात्यायनत्रिकाण्डमण्डनाभ्याम्। 'आवर्तनात्प्राग्यदि पर्वसंधिः कृत्वा तु तस्मिन्प्रकृतिं विकृत्याः । तदैव यागः परतो यदि स्यात्तस्मिन्विकृत्याः प्रकृतेः परेद्युः' इति । आवर्तनात्प्राक् पर्वसंधौ प्रकृतिं

कृत्वा पश्चाद्विकृतिः कर्तव्येति। आपस्तम्बेनाप्युक्तं प्रकृतेः पूर्वत्वादपूर्वमन्ते स्यादिति। अपूर्वं विकृतिः प्रकृतेरन्ते प्रकृतेः समाप्तौ सत्यां पश्चात्स्यात्। प्रकृतेः पूर्वत्वाद्वेदे प्रथमतः सकलाङ्गोपेतत्वेनोपदिष्टत्वादित्यर्थ इति। एतच्च हेतुवादेन श्रुतिमूलत्वाभावादङ्गं वा समभिव्याहारादितिवदप्रमाणमिति निर्णयसिन्धौ। कालतत्त्वविवेचने तु श्रुतिमूलकं वचनमेव वैतदित्यङ्गीकृत्य याज्ञिकमते श्रद्धातव्यमित्युक्तम्। मयूखे तु—अत्र य इष्टचेत्यादिश्रुत्या साङ्गाया विकृतेः पर्वणि विधानादावर्तनपर्वसंधावपि पर्वणोऽधिकरणत्वश्रुतेः 'कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः' इति स्मृतेश्च प्रकृतिविकृतिपर्याप्तपर्वसत्त्वे तद्दिने एवोभयोः कर्तव्यत्वे प्राप्ते क्रमः पूर्वार्धे विधीयते। प्रकृतेः पूर्वत्वादपूर्वमेव स्यादिति वचनमप्येतत्परमेव। न च संधिमभितो यजेतेति वचनात्प्रकृतिसमाप्तेः प्रतिपदि कर्तव्यत्वेन न कर्माणि कर्मारम्भ इति निषेधेन तन्मध्ये विकृत्यनुष्ठानमनुचितमिति वाच्यम्। न कर्मणि कर्मारम्भ इत्यस्य प्रयोगप्रांशुभावभङ्गप्रसङ्गमूलकत्वेन श्रुतिमूलकत्वाभावात्।प्रयोगप्रांशुभावभङ्गस्य चात्र प्रति पत्प्रतीक्षया विकृत्यनुष्ठानेऽप्यावश्यकत्वादित्युक्तम्। अन्वारम्भणीया तु चतुर्दश्यां कार्येति हिरण्यकेशिवृत्तौ मातृदत्तीये। अन्येषां पर्वण्येव कालान्तरमाह बौधायनः अमावास्येन वा हविषेष्ट्वा नक्षत्रे वेति।शुक्लपक्षे कृत्तिकादिविशाखान्तेषु देवनक्षत्रेष्विति केशवस्वामी व्याचख्यौ।चातुर्मास्येष्वपि द्वादशाद्ययथाप्रयोगपक्षयोर्नक्षत्रेष्वप्यारम्भः। वर्षासु श्यामाकैर्यजेत शरदि व्रीहिभिर्वसन्ते यवैर्यथर्तुवेणुयवैरिति श्रुतिरपि। गृहमेधी व्रीहियवाभ्यां शरद्वसन्तयोर्यजेत श्यामाकैर्नीवारैर्वर्षास्वापत्काले चान्येन पुराणैर्वेति वार्तिककारोऽपि।'यजेत्पूर्वं पूर्णमासादूर्ध्वं दर्शान्नवेज्यया'।इति।नवेज्या आग्रयणेष्टिः।दर्शेष्ट्यापरमुक्तमाग्रयणकं प्राक्पौर्णमासैकहविष्कत्वानियमाद्दर्शस्य।यथा चाथ यदहश्चन्द्रमान दृश्येतताममावास्यामिति गोभिलगृह्यभाष्यम्।अथशब्दः पूर्वप्रकृतापेक्षः।यत्पौर्णमास्यां यागार्थं हविरुपकॢप्तं तदमावास्यायामप्युपलक्षणीयमित्यर्थः। दर्शान्तं पौर्णमासाद्येकं कर्मेति वचनात्। येन हविषा प्रक्रान्तं तेनैव समापनीयमिति न्यायाच्च। हेमाद्रिस्तु—पौर्णमास्यां पूर्वमाग्रायणानुष्ठानं सद्यस्कालप्रकृत्यनुष्ठानविषयमिति। पशौ कालनिर्णयमाह गोविन्दार्णवे कात्यायनः—'अर्धादह्नो भवति नियतः पर्वसंधिः पुरस्तात्कृत्वा तस्मिन्नहनि तु पशुः सद्य एव द्व्यहं वा। आरभ्याथ प्रकृतिरथ चेत्पर्वसंधिः पुरस्तात्कृत्वा तस्मिन्प्रकृतमथ तु स्यात्पशुः सद्य एव।' अधिकारपशुस्त्वग्नीषोमीयेण सवनीयेन वा समानतन्त्रः कार्य इति त्रिकाण्डमण्डनः। सोमे त्वाहा-

पस्तम्बः—अमावास्यायां दीक्षा यजनीये वाऽमावास्यायां यजनीये वा सुत्यमहः पौर्णमास्यां दीक्षा यजनीये वा पौर्णमास्यां यजनीये वा सुत्यमहरिति। कात्यायनसूत्रेऽपि पूर्वपक्षस्य प्रथमेऽहनि दीक्षात्रययोगे वेति । पूर्वपक्षः शुक्लपक्षः।नक्षत्रयोगे वेत्ययमर्थः चैत्रादिपूर्णिमायाश्चित्रादिनक्षत्रयोगे दीक्षेतेति कालतत्त्वविवेचने। खण्डपर्वणि तु पशौ सोमेऽपि मीमांसकमते तिथेरेवाङ्गत्वेनोपदेशात्तस्याश्च निष्कृष्टयोरावर्तनतत्पूर्वसंध्योः पूर्वेद्युर्भूयःप्रयोगैकदेशव्याप्तिलाभात् विकृतीष्ट्यादिवत् तयोस्तत्रैवानुष्ठानम्। याज्ञिकमते तु पौर्णमास्यमावास्याशब्दयोस्तिथिवचनबलादेवेष्ट्यादिवदेव पशुसोमयोरपि परेद्युरनुष्ठानं तयोः संध्योः (?)। तद्विषयमपि क्वचित्प्रामाणिकयाज्ञिकग्रन्थे। 'खण्डे पर्वणि सोमश्चेत्प्रतिपन्मिश्रपर्वणि। सोमसुत्यां प्रयोक्तव्येत्याह कौषीतकीश्रुतिः।' इति त्रिकाण्डवचनम्। एतेन सोमकालो व्याख्यातः इति दर्शपौर्णमासविकृतिकालनिर्णयप्रकारातिदेशकसंकर्षकाण्डसूत्रवचनं च लिखितम्। संधिवचनत्ववादिनां तु याज्ञिकानां तद्वदहोरात्रलक्षणयावश्यकत्वान्न्यायोऽप्येतद्वचनानुग्राहको लभ्यत इति सुतरां तथानुष्ठानं युक्तम्। याज्ञिकाचारोऽप्येवमेवेति।

आधानं तु पर्वणि नक्षत्रेषु चोक्तम्। तत्र पर्व नक्तं गार्हपत्यमादधाति, इत्यादिकर्मकालव्यापि ग्राह्यम्। दिनद्वये तत्त्वे परं ग्राह्यम्। संकल्पस्य पर्वणि लाभात्। पूर्वत्र नक्षत्रयोगे तदेव ग्राह्यम्। यत्र त्रीणि संनिपतितान्यृतुर्नक्षत्रं पर्व च, तत्समृद्धम्। विप्रतिषेधे ऋतुर्नक्षत्रं च बलीय इति हिरण्यकेशिसूत्रात्। ऋतुस्तु वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यादिः। रेणुकाकारिकायां—'माघादिपञ्चमासेषु श्रावणे चाश्विने तथा। मार्गशीर्षे शुक्लपक्षे आधानमथ कारयेत्।' इत्युक्तम्। अत्र मूलं मृग्यम्। आधाननक्षत्राणि त्वापस्तम्बसूत्रे—कृत्तिकारोहिणीमृगशीर्षपुनर्वसुपुष्यपूर्वोत्तरापूर्वाषाढोत्तराषाढाहस्ताचित्राविशाखानुराधाश्रवणोत्तराभाद्रपदा इति। ज्योतिःशास्त्रे तु—पुष्यरेवत्यावप्युक्ते। सोमपूर्वाधाने विशेषमाहापस्तम्बः—सोमेन यक्ष्यमाण आदधानो नर्तुं सूर्क्षेन्न नक्षत्रमिति। नर्तुं पृच्छेदित्याश्वलायनसूत्रे। अत्र प्रकरणादाधानकालबाधः। तेन सोमस्य वसन्तकालता न बाध्यत इति रुद्रदत्तवृत्तौ नारायणवृत्तौ चोक्तम्। धूर्तस्वामी तु सोमस्यापि नर्तुं सूर्क्षेदिति लिखनादुभयकालबाधं मन्यते। श्रीरामाण्डारस्तु कालान्तरविधानं वा सर्वकालानादरो वेति पक्षद्वयमुक्तवान्। तत्राद्ये कृत्तिकादिकालान्तरस्य यथाधाने वसन्ताद्यबाधेन विधानं तथा सोमेऽप्युदगयनपूर्वपक्षपुण्याहसंनिपाते यज्ञकालोऽनादेशे इति छन्दोगसूत्रोक्तोदगय-

नाबाधेन सोमाग्निसंधिरूपकालान्तरविधानादुदगयनं त्वपेक्ष्यत इत्युक्तम् । द्वितीयपक्षे तु यदेवैनं श्रद्धोपनमेदिति सर्वकाला नारदेन उक्ता इति भरद्वाजसूत्रात्सर्वशब्दस्य च विश्वजित्सर्वपृष्ठे इतिवद्द्वयोरप्रयोगात्सर्वकालबाध इति तेन दक्षिणायनेऽपि भवतीत्युक्तम् । षड्गुरुभाष्ये देवत्रातभाष्ये तन्त्ररत्ने च षट्स्वपि ऋतुषु भवतीत्युक्तमिति दिक् । पिण्डपितृयज्ञस्तु कात्यायनैर्योगादिनात्पूर्वेद्युः कार्यः । पूर्वो वाङ्गत्वात्पिण्डपितृयज्ञ इति तत्सूत्रात् । व्याख्यातं चैतत्कर्काचार्यैः । पूर्व एव दर्शात्पिण्डपितृयज्ञो न पश्चात् । कुतः । अङ्गत्वात् । तथा च स्मृतिः—तस्मात्पूर्वेद्युः पितृभ्यः क्रियत उत्तरमहर्देवान्यजत इति । तेन कर्कमते चतुर्दशीयुक्तदर्शे पिण्डपितृयज्ञ इति । श्रीअनन्तभाष्ये तु परेद्युरित्युक्तम् । तत्र द्वेधाप्याचारो दृश्यते । इत्थं कात्यायनानां पिण्डपितृयज्ञकालो निर्णीतः।आपस्तम्बादिभिस्त्वमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीति श्रुतेः संधिमदहोरात्रापराह्णे पिण्डपितृयज्ञोऽनुष्ठेयः । अत्र यः परमो विप्रकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी यः परमः संनिकर्षः सा अमावास्येति गोभिलोक्तेरमावास्यापदं यद्यपि सूर्याचन्द्रमसोः परमसंनिकर्षवत्यन्त्यक्षणे शक्तम् । तथापि तत्र कर्मानुष्ठानाशक्तेस्तद्वदहोरात्रं लक्षयति । अत एव यदहश्चन्द्रमसं न पश्यन्ति तदहः पिण्डपितृयज्ञेन चरन्तीत्यापस्तम्बसूत्रम् । अस्य चैवं रुद्रदत्तीया व्याख्या । पिण्डैर्युक्तः पितृयज्ञः पिण्डपितृयज्ञः।स च कर्मान्तरं—न तु दर्शशेषः । यथा वक्ष्यति, पितृयज्ञः स्वकालविधानादनङ्गं स्यादिति । तं च यदहश्चन्द्रमसं न पश्यन्ति पञ्चदश्यां प्रतिपदि वा तदहः कुरुत यदहस्तयोः संधिस्तदहरित्यर्थ इति।श्रीरामाण्डारोऽप्याह—पिण्डपितृयज्ञस्तु पर्वसंधिमदहोरात्रापराह्ण इति । अत एव यदैवैष न पुरस्तादृदृशे न पश्चादथ पितृभ्यो निर्वपतीति श्रुतिरपि । पर्वसंधिदिने पूर्वतः पश्चाद्वा चन्द्रो न दृश्यत एव । अतोऽमावास्यातिथेरपराह्णव्याप्त्यभावेऽपि अन्त्यक्षणावच्छिन्नाहोरात्र एव पितृयज्ञः । पूर्वदिनापराह्णव्याप्तेस्त्वनादर इत्याश्वलायनापस्तम्बसूत्रवृत्तिभाष्यकाराः । अत एव 'मुहूर्तस्पृगमावास्या प्रतिपद्यपि चेद्भवेत् । तद्दत्तमक्षयं ज्ञेयं पर्वशेषं तु पर्ववत्' इति हेमाद्रिवचनं पिण्डपितृयज्ञपरमुक्तं प्रयोगपारिजाते । मयूखे तु अमावास्याशब्दस्य प्रयोगस्तावत्तिथिविशेषे सार्वजनीनो निर्विवादः । तत्र चैकदेशवर्तिनोऽपि परमसंनिकर्षस्य संभवति प्रवृत्तिनिमित्तत्वम् । चक्रिपद इव चक्रस्य वैश्वदेवपद इव विश्वेषां देवानां यद्यपि तिथिविशेषे लक्षणाश्रयणात् । तथापि निरूढत्वात्सैव युक्ता।नाहोरात्रे आधुनिकी । चन्द्रादर्शनं

तु अमायुक्तापराह्णवत्यहोरात्रेऽप्यविशिष्टम् । ईदृगहोरात्रपूर्वभाव्युषःकालिकं तु चन्द्रदर्शनं पूर्वाहोरात्रवर्तित्वान्न विरुद्धम् । अथ पुरस्तात्पदसार्थक्यमेतदेव विरुद्धम् । तदा पुरस्तात्पदसार्थक्याय संध्युत्तराहोरात्रगतमपि तत्तथा- स्याद् । अतोऽपराह्णयुक्तैवामा ग्राह्या न तु संधेराग्रह इति । अपराह्णस्त्वत्र पञ्चधा विभक्तदिनोपान्त्यो भाग इति वृत्तिकारोक्त एव । दिनद्वयेऽपराह्णस्पर्शाभावे तु पूर्वदिन एव । तत्र स्मृत्यापादितचन्द्रक्षयस्योत्तरदिने च तादृश्याश्चन्द्रवृद्धेः सत्त्वात्। यथाह हारीतः—'चतुर्दश्यष्टमे भागे क्षीणो भवति चन्द्रमाः । अमावास्याष्टमे भागे पुनः किल भवेदणुः ।' इति । पूर्वाह्णो वै देवानां मध्यंदिनो मनुष्याणामपराह्णः पितॄणामित्यस्य पितृयज्ञप्रकरणपाठात्त्रेधा विभक्तदिनान्त्यभागस्तु युक्तः । हारीतवचस्तूपवासपरम् । यदहरेवैष न पुरस्तात्पश्चाद्ददृशे तदहरुपवसेदिति श्रुतेः । यायजूकास्तु वृत्तिभाष्याद्युक्तं संधिमदहोरात्रं प्रायः पञ्चधा विभागं चानुरुध्याचरंतीत्युक्तम् । अयं च स्मार्ताग्निमता संपूर्णे दर्शे श्राद्धव्यतिषङ्गेण कार्यः । व्यतिषङ्गो नामोभयोः सहानुष्ठानम् । एतच्च स्थालीपाकेन सह पिण्डार्थमुद्धृत्येति सूत्रे वृत्तिकृतोक्तम् । खण्डपर्वणि तु पूर्वदिने केवलं श्राद्धं, परदिने तु केवलः पितृयज्ञः। कालभेदेन तत्र न्यायाप्रवृत्तेः। अत एवोक्तं वृत्तिकृता, नात्रापूर्वः स्थालीपाकश्चोद्यते सर्वश्राद्धेषु प्रसङ्गादिति।पिण्डपितृयज्ञाकरणे प्रायश्चित्तमाह पराशरमाधवीये कात्यायनः—'पितृयज्ञात्यये चैव वैश्वदेवात्ययेऽपि च । भोजने पतितान्नस्य चरुर्वैश्वानरो भवेत्।' इत्यलम्। इति श्रीपौण्डरीकयाजिरत्नाकरविरचिते जयसिंह कल्पद्रुमे पर्वसन्ध्यादिनिर्णयः ।

अथ ग्रहणकालनिर्णयः । तत्र ग्रहणं नाम पर्वप्रतिपत्संधौ राहुणा सूर्याचन्द्रमसोर्ग्रसनम् । तदाह वृद्धगार्ग्यः—'पूर्णिमाप्रतिपत्संधौ राहुः संपूर्णमण्डलम् । ग्रसते चन्द्रमर्कं च दर्शप्रतिपदन्तरे ।' इति । तत्र पर्वणोऽन्तभागः स्पर्शकालः प्रतिपद आद्यभागो मोक्षकालः । तदुक्तं ब्रह्मसिद्धान्ते—'यावान्कालः पर्वणोऽन्ते तावान्प्रतिपदादिमः।रवीन्दुग्रहणानेहा स पुण्यो मिश्रणाद्भवेत् ।' ग्रहणानेहा राहुग्रहणकालः । तत्र कर्तव्यमुक्तं हेमाद्रिमाधवाद्युदाहृतायां स्मृतौ 'ग्रस्यमाने भवेत्स्नानं ग्रस्ते होमो विधीयते । मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते ।' इति । तथा ब्रह्मवैवर्ते—'स्नानं स्यादुपरागादौ मध्ये होमं सुरार्चनम् ।' इति । अन्यदपि कर्तव्यं महाभारते—'गङ्गास्नानं प्रकुर्वीत ग्रहणे चन्द्रसूर्ययोः । महानदीषु चान्यासु स्नानं कुर्याद्यथाविधि।' इति । अत्र च ग्रहणे यद्यपि 'स्नानं कूपतडागेषु गिरिप्रस्रवणेषु च। नद्यां नदे देवखाते

सरसीषूद्धृताम्बुनि । उष्णोदकेन वा स्नायाद्ग्रहणे चन्द्रसूर्ययोः, इति। शंखवचने सर्वत्रोक्तं साम्यं च सर्वजलानाम् ।'सर्वं भूमिसमं दानं सर्वे ब्रह्मसमा द्विजाः । सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे । स्वर्धुन्यम्भः समानि स्युः सर्वाण्यम्भांसि भूतले कूपस्थान्यपि सोमार्के ग्रहणे नात्र संशयः ' इति व्यासवचन उक्तम् । तथापि तत्प्रशंसामात्रम्। तारतम्यं त्वावश्यकम्। अत एव मार्कण्डेयेनोक्तम्--'भूमिष्ठमुद्धृतात्पुण्यं ततः प्रस्रवणोदकम् । ततोऽपि सारसं पुण्यं ततः पुण्यं नदीजलम् । तीर्थतोयं ततः पुण्यं महानद्यम्बु पावनम् । ततस्ततोऽपि गङ्गाम्बु स्याच्च पुण्यं ततोऽम्बुभिः । शीतमुष्णोदकात्पुण्यमपारक्यं परोदकात्।'इति।तत्रापि गङ्गा कुरुक्षेत्रं च सर्वदा ग्रहणे स्नानादौ श्रेष्ठम् । तदाह वृद्धवसिष्ठः—'इन्दोर्लक्षगुणं पुण्यं रवेर्दशगुणं ततः । गङ्गातोये तु संप्राप्ते इन्दोः कोटी रवेर्दश । गवां कोटिसहस्रस्य यत्फलं लभते नरः । तत्फलं जाह्नवीस्नाने राहुग्रस्ते निशाकरे । दिवाकरे पुनस्तत्र दशसंख्यमुदाहृतम् । चन्द्रसूर्यग्रहे चैव योऽवगाहेत जाह्नवीम् । स स्नातः सर्वतीर्थेषु किमर्थमटते महीम्।' इति । अन्यकालिके तत्तत्तीर्थस्नाने यत्पुण्यं तदिन्दोर्ग्रहणे तत्र स्नाने लक्षगुणं रवेर्ग्रहणे दशलक्षम् । एवं कोटिदशकोट्यः । स्कन्दपुराणे—'उपरागे कुरुक्षेत्रं पवित्रं मुनयो विदुः ।' इति। मत्स्यपुराणे 'दशजन्मकृतं पापं गङ्गासागरसंगमे। जन्मनां तु सहस्रेण यत्पापं समुपार्जितम् । तन्नश्येत्सांनिहत्यायां राहुग्रस्ते दिवाकरे । इति। संनिहत्या कुरुक्षेत्रम् । निर्णयामृते अत्र गङ्गाशब्देन कृष्णावेणीगोदावरीजाह्नव्य उच्यते । तदुक्तं ब्रह्मपुराणे 'तिस्रो नद्यो महापुण्या वेणी गोदा चजाह्नवी।गां हरीशाङ्घ्रिकप्राप्ता गङ्गा इति हि कीर्तिता' इति।हरिश्चेशश्च हरीशौ अङ्घ्रिः पादः। कं शिरः अङ्घ्रिश्च कंच अङ्घ्रिकं हरीशयोरङ्घ्रिकम्। हरेः पादादीश्वरस्य शिरसो गां भूमिं प्राप्ता गङ्गा। यद्यपि जाह्नव्येव तादृशी न तु वेणीगोदे। तथापि छत्रिन्यायेन जाह्नव्या सह निर्दिष्टयोरपि गङ्गात्वमविरुद्धम्। गङ्गायाः असन्निधाने अन्यमहानदीषु स्नानं कूर्यात् । ताश्च ब्रह्मपुराणे दर्शिताः । 'गोदावरी भीमरथी तुङ्गभद्रा च वेणिका । तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्तिताः।भागीरथी नर्मदा च यमुना च सरस्वती।विशोका च वितस्ताच विन्ध्यस्योत्तरतस्तथा । इति उष्णोदकस्यातुरविषयत्वं व्याघ्र आह 'आदित्यकिरणैः पूतं पुनः पूतं च वह्निना । अतो व्याध्यातुरः स्नायाद्ग्रहणेऽप्युष्णवारिणा।'इति।अत एव पूर्वं गङ्गातोयमारभ्योष्णोदकान्तेषु उत्तरोत्तरानुकल्पत्वमुक्तम्। अत एवानातुराभिप्रायेणैतन्निषेधः । मृते जन्मनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः ।

अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा।' इत्यादियमादिवचनेषु । पृथ्वीचन्द्रोदये प्रभासखण्डे—'गावो नागास्तिलाधान्यं रत्नानि कनकं महीम्। संप्रदाय कुरुक्षेत्रे-यत्फलं लभते नरः। तदिन्दुग्रहणेऽम्भोधौ स्नानाद्भवति षड्गुणम् ।' तत्रैव सौरपुराणेऽम्बुधिस्नानमुपक्रम्य'दानानीमानि लोकेषु विख्यातानि मनीषिभिः।तेषां फलमवाप्नोति ग्रहणे चन्द्र सूर्ययोः'।ग्रहणविशेषेनदी विशेषस्तत्रैवाभिहितः 'गोदावरी महापुण्या चन्द्रे राहुसमन्विते। सूर्ये च राहुणा ग्रस्ते तमोभूते महामने । नर्मदातोयसंस्पर्शे कृतकृत्या भवन्ति ते। ये सूर्ये सैंहिकेयेन ग्रस्ते रेवाजलं जनाः। स्पृशन्ति चावगाहन्ति न सा प्रकृतिमानवी, इति। देवीपुराणे 'गङ्गा कनखलं पुण्यं प्रयागं पुष्करं तथा। कुरुक्षेत्रं महापुण्यं राहुग्रस्ते दिवाकरे' इति। मासविशेषे ग्रहणे तन्निमित्तस्नानात्तीर्थविशेषसंबन्धे फलातिशय उक्तस्तत्रैव- 'कार्तिके ग्रहणं श्रेष्ठं गङ्गायमुनसंगमे । मार्गे तु ग्रहणं प्रोक्तं देविकायां महामुने । पौषे तु नर्मदा पुण्या माघे संनिहिता शुभा।फाल्गुने वरुणा पुण्या चैत्रे पुण्या सरस्वती । वैशाखे तु महापुण्या चन्द्रभागा सरिद्वरा । ज्येष्ठे तु कौशिकी पुण्या आषाढे तापिका नदी । श्रावणे सिन्धुनामा तु तथा भाद्रे तु चन्द्रिका ।' कालतत्त्वविवेचने—' आश्विने सरयूः श्रेष्ठा भूयः पुण्या तु नर्मदा' इति। ब्रह्मवैवर्ते—' मकरे वर्तमाने तु ग्रहणं चन्द्रसूर्ययोः । दुर्लभं त्रिषु लोकेषु गयायां पिण्डपातनम् ' इति । स्नानवत्स्मरणादिष्वपि पुण्यमाह मार्कण्डेयः-- ' स्मृत्वा शतक्रतुफलं दृष्ट्वा सर्वाघनाशनम् । स्पृष्ट्वा गोमेधपुण्यं तु पीत्वा सौत्रामणेर्लभेत् । स्नात्वा वाजिमखं पुण्यं प्राप्नुयादविचारतः । रविचन्द्रोपरागे च अयने चोत्तरे तथा । एवं गङ्गापि द्रष्टव्या तद्वदेव सरस्वती । ' इति । वारविशेषयोगेन च ग्रहणे फलविशेषो व्यासेनोक्तः--' सूर्यवारे रवेर्ग्रासः सोमे सोमग्रहस्तथा।चूडामणिरिति ख्यातस्तत्रानन्तफलं लभेत् । वारेष्वन्येषु यत्पुण्यं ग्रहणे चन्द्रसूर्ययोः । तत्पुण्यं कोटिगुणितं ग्रासे चूडामणौ स्मृतम् ' इति । अत्र स्नानमावश्यकम्।' ग्रहणे संक्रमे चैव न स्नायाद्यदि मानवः ' इति संक्रान्तिप्रकरणोदाहृतवृद्धवसिष्ठवचनेनाकरणे प्रत्यवायस्मरणात् । काम्यमपि । फलश्रवणात् । तथा च दक्षः— ' उषस्युषसि यत्स्नानं संध्यायामुदिते रवौ । चन्द्रसूर्योपरागे च प्राजापत्येन तत्समम्' इति ॥ तच्च स्नानमाद्यन्तयोः कार्यम् । ग्रस्यमाने जपस्तत्र मध्ये होमो विधीयते। मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते।' इति वचनात्। 'विमुक्ते यदि न स्नायाच्चन्द्रसूर्यग्रहे तथा। तस्य स्याच्चावदाशौचं यावदन्यःपरो ग्रहः'

इति तत्रैव मुक्त्यस्नाने दोषश्रवणाच्च । उभयमपि सचैलम् । 'ग्रहणे शावमाशौचं विमुक्तौ सौतिकं स्मृतम् । तयोः संपत्तिमात्रेण उपस्पृश्य क्रियाक्रमः ' इति ब्रह्माण्डपुराणवचने स्पर्शस्य सपिण्डमरणवदाशौचमिति तत्त्वोक्त्या विमुक्तेश्च प्रसववत्त्वदुक्त्या यथा जननमरणाशौचयोः सचैलस्नानादेव निवृत्तिस्तदुत्तरमेव च कर्माधिकारस्तथात्रापीत्यस्य प्रतिपादनात् । ' सर्वेषामेव वर्णानां सूतकं राहुदर्शने । सचैलं च भवेत्स्नानं सूतकान्नं च वर्जयेत् ।' इति वृद्धवसिष्ठोक्तेश्च । सूतकमाशौचम् । सचैलत्वमिति मुक्तिस्नानपरमिति मदनरत्ने उक्तम् । इदं च स्नानममन्त्रकं कार्यमिति स्मृतिरत्नावल्याम् । अत्र च वृद्धवसिष्ठवचने राहुसूतके इति पाठे पूर्वसूतकशब्देनास्पृश्यत्वमुच्यते । सूतकान्नं ग्रहणाशौचान्तरितं पूर्वं पक्वम् । अत एव षट्त्रिंशन्मते तस्यैव पूर्वार्धस्योत्तरार्धम्--'स्नात्वा कर्माणि कुर्वीत शृतमन्नं विवर्जयेत् । इति । शृतमिति तदन्तरितस्योपलक्षणम् । 'नवश्राद्धेषु यच्छिष्टं ग्रहपर्युषितं च यत्' इति मिताक्षरावचनाद् । केषुचित्प्रतिप्रसवः । 'आरनालं तथा क्षीरं किलाटं घृतसक्तवः । स्नेहपक्वं च तैलं च न कदाचित्प्रदुष्यति, इति । तत्र विशेषो वचनान्तरे--'आरनालं च नक्रं च ह्यादेयं घृतपाचितम् । उदकं च कुशच्छन्नं न दुष्येद्राहुदर्शने' इति । मणिकस्थोदकं चैवेति पाठान्तरम् । मन्त्रमुक्तावल्याम्--'अन्नं पक्वमिह त्याज्यं स्नानं सवसनं ग्रहे । वारितक्रारनालादि तिलदर्भैर्न दुष्यति' इति । जले त्वदोषो गङ्गाविषयः । 'ग्रहोषितं जलं पीत्वा पादकृच्छ्रं समाचरेत्' । इति तत्रैव चतुर्विंशतिमते जलस्य दोषोक्तेः । अत्र स्नानवच्छ्राद्धमपि नित्यम् । 'सर्वस्वेनापि कर्तव्यं श्राद्धं वै राहुदर्शने । अकुर्वाणस्तु नास्तिक्यात्पङ्के गौरिव सीदति, इति महाभारते, नैमित्तिकं तु कर्तव्यं ग्रहणे चन्द्रसूर्ययोः । बान्धवानां च मरणे नारकी स्यादतोऽन्यथा' इति, कूर्मपुराणे च प्रत्यवायश्रवणात् । यत्तु मार्कण्डेयवचनं 'विशिष्टे ब्राह्मणे प्राप्ते सूर्येन्दुग्रहणेऽहनि । जन्मर्क्षग्रहपीडासु श्राद्धं कुर्वीत स्वेच्छया, इति । तदपि इच्छया चेत्यन्वयेन श्राद्धं प्रति रुचिश्चेत्येतत्समानार्थतया व्याख्यातम् । काम्यमपीह श्राद्धम् । [1]तथा च विष्णुः--राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम् । गुणवत्सर्वकामीयं पितॄणामुपतिष्ठते, इति । ऋष्यशृङ्गोऽपि--'चन्द्रसूर्यग्रहे यस्तु श्राद्धं विधिवदाचरेत् । तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे, इति । शातातपोऽप्याह--'सैंहिकेयो यदा सूर्यं ग्रसते पर्वसंधिषु । गजच्छाया तु सा ज्ञेया पितॄणां दत्तमक्षयम्' इति । तथा

१--'भाद्रे पुण्या तु गण्डकी' इति पाठ' कालतत्त्वविवेचने ।

लिङ्गपुराणे-'व्यतीपातक्षणो यावांश्चन्द्रसूर्यग्रहे क्षणः । गजच्छाया तु सा ज्ञेया पितॄणां दत्तमक्षयत्' इति । चन्द्रग्रहणनिमित्तकं स्नानश्राद्धादि रात्रावपि भवति । तदाह शातातपः-' स्नानं पानं ततः श्राद्धमनन्तं राहुदर्शने । आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत्' इति । देवलोऽपि-' यथा स्नानं च दानं च सूर्यस्य ग्रहणे दिवा । सोमस्यापि तथा रात्रौ स्नानं दानं विधीयते' इति । विष्णुरपि-'संध्यारात्र्योर्न कर्तव्यं श्राद्धं खलु विचक्षणैः । द्वयोरपि च कर्तव्यं यदि स्याद्राहुदर्शनम् ।' इति । अपरार्के व्यासोऽपि-' ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च । दानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते' इति । इदं च श्राद्धमामेन हेम्ना वा कर्तव्यम् । तदुक्तं शातातपेन-' आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा । आमश्राद्धं प्रकुर्वीत हेमश्राद्धमथापि वा' इति । बौधायनोऽपि-' अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि । हेमश्राद्धं संग्रहे च कुर्याच्छूद्रः सदैव हि' इति । इत्थमेव निर्णीतवन्तो हेमाद्रिमाधवमदनरत्नादयो निखिलनिबन्धकाराः । निर्णयसिन्धौ तु अपरार्कसंमतं प्रकारान्तरमपि लिखितम् । ग्रहणे द्विजातीनामामश्राद्धं पाकासंभवे द्रष्टव्यं तीर्थश्राद्धवत् । 'पाकाभावे द्विजातीनामामश्राद्धं विधीयते' इति सुमन्तूक्तेः । सैंहिकेयो यदा सूर्यमित्युपक्रम्य ' घृतेन भोजयेद्विप्रान्घृतं भूमौ समुत्सृजेत्' इति वायवीयोक्तेश्च । विज्ञानेश्वरोऽप्याह-'ग्रहणश्राद्धे भोक्तुर्दोषो दातुस्त्वभ्युदयः' इति । 'सूतके मृतके भुक्तं गृहीते शशिभास्करे । छायायां हस्तिनश्चैव न यभुः पुरुषो भवेत्' इत्यापस्तम्बेन भोजननिषेधाच्च । अयं च श्राद्धनिषेधः श्राद्धभोक्तुः । हस्तिच्छायासाहचर्यात् । ननु ग्रहणे श्राद्धं सपिण्डमपिण्डं वा कर्तव्यमिति संशये निर्णयसिन्धौ स्मृतिरत्नावल्याम्-' पुत्रे जाते व्यतीपाते ग्रहणे चन्द्रसूर्ययोः । श्राद्धं कुर्यात्प्रयत्नेन पिण्डनिर्वापणादृते' इति । श्राद्धकाशिकायां तु मत्स्यपुराणम्-' ततः प्रभृतिसंक्रान्तावुपरागादिपर्वसु । त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टं मृताहनि ।' प्रजापतिरपि-'संक्रान्तावुपरागे च वर्षोत्सवमहालये । निर्वपेदत्र पिण्डाँस्त्रीनिति प्राह प्रजापतिः' इति । अत्र ग्रहणनिमित्तकश्राद्धेनैवामासंक्रान्त्यादिनिमित्तकानां सिद्धिः । दर्शकालभ्ययोरपीति कालादर्शोक्तेरिति । किंचिद्दानं चात्र नित्यम् । 'अनापदि सदा देयम्' इति शातातपीये सदाशब्दश्रवणात् । नित्यत्वादेव च मलमासेऽपि तद्भवतीत्युक्तं मात्स्ये-' चन्द्रसूर्यग्रहे चैव मरणे पुत्रजन्मनि । मलमासेऽपि देयं स्याद्दत्तमक्षयकारकम्' इति । काम्यमपि-' भूमिर्गावः सुवर्णं वा

धान्यं वा यद्यदीप्सितम्। तत्सर्वं ग्रहणे देयमात्मनः श्रेय इच्छता।' इति महाभारत-वचनात्। ग्रहणे यद्दानं तत्सत्पात्रे कर्तव्यम्। तदुक्तं तत्रैव—' अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः। पात्रभूताय विप्राय भूमिं दद्यात्सदक्षिणाम्।' इति। पात्रलक्षणं तूक्तं याज्ञवल्क्येन—' न विद्यया केवलया तपसा वापि पात्रता। यत्र वृत्तमिमे चोभे तत्र पात्रं प्रकीर्तितम्।' अनुकल्पमाह बौधायनः—' अश्रोत्रियः श्रोत्रियो वा पात्रं चापात्रमेव वा। विप्रब्रुवोऽपि वा विप्रो ग्रहणे दानमर्हति।' इति। यद्यपि पूर्वं 'सर्वे व्याससमा द्विजाः' इत्युक्तं, तथापि तद्ब्राह्मणस्तुत्यर्थं दानस्यावश्यकत्वात् न तु पात्र-त्यागेन यस्मै कस्मैचिद्दानप्रतिपादनार्थम्। अत एव पात्रतारतम्येन फलतारतम्य-मुक्तं दक्षस्मृतौ—' सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे। श्रोत्रिये शतसाहस्रं पात्रे त्वानन्त्यमश्नुते।' इति। ब्राह्मणो जातिमात्रब्राह्मणः। संस्कारादिरहितः। ब्राह्मण-ब्रुवस्तूक्तश्चतुर्विंशतिमते—'गर्भाधानादिसंस्कारवेदोपनयनैर्युतः। नाध्यापयति नाधीते स भवेद्ब्राह्मणब्रुवः।' इति। श्रोत्रियः सर्वसंस्कारपूर्वकवेदाध्ययनवशात्। तुलापुरुष-दानादिकालप्रक्रमे यच्चन्द्रसूर्यग्रहणं तन्न तेषां तन्निमित्तकत्वाय किं तु तत्काल-कत्वाय कालसंदंशात्। आदिमध्यावसानेषु यद्यद्विहितं तस्य फलातिशय उक्तो ब्रह्मपुराणे—'उपमर्दे लक्षगुणं ग्रहणे चन्द्रसूर्ययोः। पुण्यं कोटिगुणं मध्ये मुक्तिकाले त्वनन्तकम्।' इति। ग्रहणकाले जननमरणनिमित्ताशौचसत्त्वेऽपि स्नानादिभवत्येव। तदुक्तं लिङ्गपुराणे—' चन्द्रसूर्यग्रहे स्नायात्सूतके मृतकेऽपि च। अस्नायी मृत्युमाप्नोति स्नायी पापं न विन्दति।' वृद्धवसिष्ठेनाऽपि—'सूतके मृतके चैव न दोषो राहुदर्शने। तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते।' इति। राहुदर्शनयोग्य-राहुलक्षितचन्द्रसूर्योपरागनिमित्ते स्नानादौ हेमाद्रौ—दानश्राद्धादिविषयमेतन्न तु स्नान-मात्रविषयम्।'ग्रहणे शावमाशौचं विमुक्ते सूतकं स्मृतम्। तयोः संपातमात्रेण उपस्पृश्य क्रियाक्रमः।'इति ब्रह्माण्डपुराणवचनविरोधात्। स्नानहोमदेवपूजादानक्रियानुष्ठाने हि क्रम उपपद्यते।स्नानमात्रानुष्ठाने स्नानस्य पूर्ववाक्येनैव सिद्धेर्द्वितीयवाक्यवैयर्थ्यप्रसङ्गा-च्च।भवत्पक्षे द्वितीयवाक्येनैव स्नानसिद्धेः पूर्ववाक्यवैयर्थ्यप्रसङ्ग इति चेत्। न। अस्नात-स्यानिष्टविशेषसंबन्धप्रतिपादनार्थत्वात्। यावत्तावच्छब्दानुपपत्तिप्रसङ्गाच्च।तावत्काल-शुद्धावभिधातव्यायां हि तौ सार्थकौ, स्नानमात्रं तु न तादृशम्। अत एवाविशेषेणैव जननमरणनिमित्ताशौचप्रयुक्ताऽधिकाराभावो ग्रहणनिमित्तककर्मसु स्मर्यते। 'सूतके

मृतके चैव यदि स्याद्राहुसूतकम् । तावत्तत्सूतकं नास्ति यावद्राहुर्न मुञ्चति।' इति । स्कन्दपुराणे–'सूतके मृतके चैव यदि स्याद्राहुसूतकम् । तावदेव भवेत्तत्र यावन्मुक्तिर्न दृश्यते ।' कालादर्शे अङ्गिराः–'सर्वे वर्णाः सूतकेऽपि मृतके राहुदर्शने। स्नात्वा श्राद्धं प्रकुर्वीरन्दानं शाठ्यविवर्जितम्।' इति। षट्त्रिंशन्मतेऽपि–'स्मार्तकर्मपरित्यागोराहोरन्यत्र सूतके । श्रौतकर्मणि तत्कालस्नातः शुद्धिमवाप्नुयात् ।' इति । अशौचे राहोस्तदुपलक्षितोपरागादन्यनिमित्तकानां स्मार्तकर्मणां परित्यागो न तु तन्निमित्तकानामित्यर्थ इति हेमाद्रिः । सूतके यः स्मार्तकर्मपरित्यागः स राहुसूतकादन्यत्र, तत्र तु तत्कालप्राप्तानां तेषां न त्याग इत्यन्ये। तेन स्नानं श्राद्ध किंचिद्दानं चोपरागनिमित्तकमाशौचेऽप्यवश्यं भवति न स्नानमात्रम् । संवत्सरप्रदीपादिषु त्विदं स्मृतिवचनं लिखितम् 'सूतके मृतके चैव न दोषो राहुदर्शने । स्नानमात्रं तु कर्तव्यं दानं श्राद्धविवर्जितम्।' एतच्च पूर्वोदाहृतबहुस्मृतिविरोधान्निर्मूलम् । मदनपारिजातेऽप्येवम्।निर्णयासिन्धावपि–इयं च शुद्धिरविशेषान्मन्त्रदीक्षापुरश्चरणादिसर्वस्मार्तकर्मविषयेति । मदनरत्नेऽप्येवम्।रजस्वलायास्तु विशेषो भार्गवार्चनदीपिकायां सूर्योदयनिबन्धे–'न सूतकादिदोषोऽस्ति ग्रहे होमजपादिषु । ग्रस्ते स्नायादुदक्यापि तीर्थादुद्धृतवारिणा।' इति । अत्र च 'स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला । पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत्।'इत्यादिर्मिताक्षरोक्तो विधिर्ज्ञेयः ।यत्तु ग्रहणनिमित्तमाशौचं तत्स्नानेन निर्वर्त्यम् । तदुक्तं ब्रह्माण्डपुराणे–'अशौचं जायते नृणां ग्रहणे चन्द्रसूर्ययोः । राहुस्पर्शे तयोः स्नात्वा दानादौ कल्पते नरः।' इति । निर्णयामृते–ग्रहणकालस्य सर्वस्यापि पुण्यत्वे स्पर्शकालः स्नानादिकर्मसु श्रेष्ठः, मध्यकालो मध्यमः, मोक्षकालस्त्वधमः।तदाह व्यासः–'त्रिदशाः स्पर्शसमये तृप्यन्तु पितरस्तथा।मनुष्या मध्यमे काले मोक्षकाले तु राक्षसाः।' इति । एतच्च वचनं विशेषात्सर्वदेवपितृदैवत्यकर्म इति केचित्। 'स्नानं स्यादुपरागादौ मध्ये होमः सुरार्चनम्।' इत्यादिभिर्वचनैर्होमदेवार्चनयोः मध्ये विधानात्।परं ग्रस्यमाने भवेत्स्नानमिति पूर्वोदाहृतवचनाच्च । नैतद्युक्तम् । किं तु होमदेवपूजाव्यतिरिक्तविषयमेतदिति हेमाद्रौ। एतानि च ग्रहणनिमित्तकानि कर्माणि संक्रान्तिष्विव ततः पूर्वमुत्तरं वा भवन्ति । उत्तरग्रहणकाल एवेत्यपेक्षायां जाबालिः–'संक्रान्तौ पुण्यकालस्तु षोडशोभयतः कलाः । चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरः ।' इति । अत्रकल्पतरुकारप्रभृतयः–दर्शनशब्दश्चाक्षुषज्ञानवचनः । निमित्तस्य ज्ञातस्यैव नैमित्तिकप्रयोजकत्वेन निमि-

त्तत्वबोधकश्रुत्यैव तल्लाभेन दर्शनशब्दप्रयोगस्य वैयर्थ्यप्रसङ्गात्।तच्च दर्शनं स्वकीयमेव निमित्तम् । परकीयदर्शनस्य परकीयस्नानादिप्रयोजकत्वाभावात् । एवं च स्वयं ग्रहणे दृष्टे स्नानादि कर्तव्यं न मेघाद्यावृत इति पर्यवसन्नम् । वस्तुतस्तु—गोचरशब्दोऽत्र न फलोपधानपरः, तत्काले एकस्यापि कर्मणः कर्तुमशक्यत्वात्किमुत बहूनाम् । किं तु योग्यतापरः । सा च प्रयत्नापनेयचाक्षुषज्ञानप्रतिबन्धकराहित्यम् । तथा च योग्यताभावादपि न मेघच्छन्ने स्नानादीत्याहुः । निर्णयामृतेऽप्येवम् । तदेतत्तुच्छम् । चाक्षुषज्ञानविषयत्वविवक्षायाम् 'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन । नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ।' इति स्नातकप्रकरणपठितानुवाक्येन स्नातकानां ग्रस्तादित्यदर्शननिषेधात्स्नानाद्यभावप्रसङ्गात् । अन्धादीनां तदभावप्रसङ्गाच्च । न चेष्टापत्तिः । 'सूर्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा । तत्र स्नानं न कुर्वीत दद्याद्दानं च न क्वचित्।' इति निगमवचनस्य स्नानादिनिषेधकस्य वैयर्थ्यप्रसङ्गात् । चाक्षुषज्ञानाभावेन तत्प्राप्त्यभावान्निषेधस्य प्राप्तिपूर्वकत्वात् । तदप्येतद्वचनस्य ग्रस्तास्तपरत्वेन व्याख्यानं रविचन्द्रयोरस्तानन्तरं रात्रिदिवाग्रहत्वादिति । तदपि तुच्छम् । यावद्दर्शनगोचर इत्यनेनैवास्तोत्तरभागयोर्निमित्तत्वपर्युदासेन वैयर्थ्यपरिहारात् 'राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम् । स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने।' इत्यादिषु कर्मविशेषविषयवचनेष्वपि दर्शनपदोपादानेन ग्रस्तास्तोत्तरभागस्य दर्शनागोचरत्वेन निमित्तत्वाप्रसक्तेश्च । किं च दर्शनस्य निमित्तान्तर्भावे तदावृत्तौ स्नानाद्यावृत्तिप्रसङ्गः । प्रतिनिमित्तनैमित्तिकावृत्तिरिति न्यायात्, दृशिरहितेषु बहुषु वचनेषु तत्पदाध्याहारप्रसङ्गाच्च । किं च नैमित्तिकेषु निमित्तमत एवाधिकारादधिकारिणश्च तदकरणे प्रत्यवायाद्दर्शने सति स्नानाद्यकरणे प्रत्यवायप्रसङ्गात्तदभावे तु तदभावात्प्रत्यवायकष्टकर्मानुष्ठानान्यतरप्रयोजकं दर्शनं बुद्धिपूर्वकारी कोऽपि न कुर्यादेवेति तन्नियोजकः स्नानादिविधिर्दुःस्थितः स्यात् । नन्वेवमाधानाध्ययनाभ्यामग्निविद्यार्जनमपि कोऽपि न कुर्यात् । तस्मिन्सत्यग्निहोत्रादिकर्माकरणे प्रत्यवायस्य तत्परिहारार्थं वा कष्टकर्मकरणस्यापत्तेः । आधानाध्ययनयोः कर्मविध्यप्रयोज्यत्वेन सिद्धाग्निविद्यस्य कर्माधिकाराभ्युपगमात् । सत्यम् । व्रात्यानाहिताग्नितयोरुपपातकगणपाठादग्निविद्यावत्त्वरूपस्य नित्यकर्माधिकारस्यासंपादनेऽपि प्रत्यवायः कल्प्यते । न च तदत्र दर्शनस्यावश्यकर्तव्यताद्योतकं किंचिदस्ति । अथैतद्दोषपरिहाराय दर्शनस्य स्नानाद्यङ्गत्वेन विधेयतैव स्वीक्रियते विधेयत्वं च तस्य संवत्सरप्रदीपोदाहृतमार्कण्डेयवचन

उपवाससाहचर्यात्स्पष्टं प्रतीयते ।'एकरात्रमुपोष्यैव राहुं दृष्ट्वा क्षणं नरः । पुण्यमाप्नोति कृत्वा च स्नानं श्राद्धं विधानतः ।' इति । निमित्तज्ञानत्वेन च तस्याधिकारसंपादनेनोपयोगिता अध्ययनाधानवत् । प्रमाणाभावात्तु तयोर्नाङ्गत्वं किं तूपकारकतामात्रं दर्शनस्य तु प्रमाणवशादङ्गताऽप्यनेनोपकारेण । अत्र यद्यप्युपवासदर्शनयोः स्नानश्राद्धयोश्चाक्षयं पुण्यमाप्नोतीत्यन्वयेन सर्वेषां तुल्यत्वं भासते । तथापि बहुषु वचनेषु स्नानश्राद्धयोरेव फलसंबन्धश्रवणादत्राप्युपवासदर्शनपूर्वकस्नानश्राद्धे विधायाक्षयं पुण्यमाप्नोतीति योजनयोपवासदर्शनयोरङ्गत्वं द्रष्टव्यम् । विशेषविधिना चाग्नीषोमीयादिहिंसाविधिनेव न हिंस्यादिति निषेधस्य नोपरक्तमित्यादि निषेधस्य बाधेन रागप्राप्ते क्षणविषयत्वकरणात्सर्वनैमित्तिकार्थं तन्त्रेण सकृद्दर्शनं कृत्वा सर्वं कर्तव्यम् । एवं जन्मादिराशिस्थोपरागेऽपि । तद्विषयस्यापि दर्शननिषेधस्य रागप्राप्तविषयत्वात् । तस्माद्दर्शनस्य विधिविषयत्वेन जन्मादिराशिस्थोपरागवतामितरवत्सकृद्दर्शनेन स्नानादि भवत्येव अन्धादीनामेव तु तदशक्तेरनधिकारात्तन्न भवतीति चेत् । अत्र वदामः । अस्तु दर्शनस्य विधिः । तद्बलादेव च पूर्वोक्तप्रकारेण तस्याङ्गत्वमपि । तथापि सोऽपूर्वविधिस्तावन्न संभवति निमित्तज्ञानतया दर्शनस्य पक्षप्राप्तत्वात् । किं तर्हि निमित्तज्ञानस्याधिकारसंपादकस्यानेकरूपस्य संभवात् । पक्षे प्राप्तस्य दर्शनस्य नियमविधिरयम् । अवपातादिविधिवत् । ततश्च नैमित्तिकेष्वशक्याङ्गहानेनाप्याधिकारस्य न्यायसिद्धत्वादन्धादीनां मेघाद्यावरणे चाशक्यदर्शननियमरूपाङ्गासंभवेऽपि स्नानादि युक्तमेवेति नेष्टसिद्धिः । अधिकारसंपादकत्वेनास्याङ्गस्य अग्निविद्यादिवन्न यथाशक्तिन्यायविषयत्वमिति चेत् । वैषम्यात् । अग्निविद्यादिषु हि कर्मप्रयोगविध्यप्रयोज्यत्वान्न यथाशक्तिन्यायविषयत्वम् । नाधिकारसंपादकत्वात् । उपरागदर्शननियमस्तु प्रयोगविधिप्रयोज्य एवेति भवति यथाशक्त्युपबन्धस्य विषयः । अस्तु तर्हि निमित्तत्वमेवेति चेत् । न । दत्तोत्तरत्वात् । किं च यदि दृष्टं ग्रहणं स्नानादेर्निमित्तं तथा सत्युद्देश्यस्य ग्रहणस्य विशेषणं दर्शनमविवक्षितं स्यात् । यस्योभयं हविरार्तिमार्छेदित्यत्रेव हविष उभयत्वम् । अतः केवलं ग्रहणमेव निमित्तमिति वक्तव्यम् । तच्च ज्ञातमेव निमित्तं सर्वनिमित्तानां ज्ञातानामेव नैमित्तिकप्रयोजकत्वमिति विज्ञानेश्वरादिभिस्तत्र तत्र निरूपितत्वात् । तच्च ज्ञानं शास्त्रीयमेव न लौकिकम् । न च शास्त्रीयज्ञानविवक्षायां देशान्तरग्रहणेऽपि स्नानादिप्रसङ्ग इति वाच्यम् । सूर्यग्रहो यदा रात्राविति पूर्वोक्तनिगम-

वचनेन तत्र निषेधात् । ननु तर्हि बहुषु वाक्येषु प्रयुक्तस्य दर्शनपदस्य का गतिरिति चेत् । अत्र दाक्षिणात्याः । दृशेरुद्देश्यविषयत्वेन ग्रहैकत्ववदविवक्षया आक्षिप्तज्ञानानुवादकत्वमेव । प्रयुक्तश्च दृशिर्ज्ञानसामान्ये 'अष्टमी रोहिणीयुक्ता निश्यर्धे दृश्यते यदि ।' इत्यादिषु, मनसा पश्यति इत्यादौ लौकिकप्रयोगे च "पश्यार्थैश्चानालोचने" इति व्याकरणस्मृत्यापि दृशेर्ज्ञानसामान्यवाचित्वम् इतरत्र लाक्षणिकत्वम् । तथापि अत्र तदाश्रयणेऽपि न दोषः । 'चन्द्रसूर्यग्रहे नाद्यात्तस्मिन्नहनि पूर्वतः । राहोर्विमुक्तं विज्ञाय स्नात्वा कुर्वीत भोजनम् ।' इति वृद्धगौतमवचसस्तात्पर्यग्राहकस्य सत्त्वात् । विधिलाघवार्थमनुवादत्वापेक्षणात्तत्र च तस्या अदोषत्वाच्च श्रुत्वा पुत्रस्य जन्म चेत्यादिवत् । अथ 'आरजोदर्शने नारी त्रिरात्रमशुचिर्भवेत् ।' इत्यादावप्यधः स्त्रीणामशौचाभावप्रसङ्गः । यद्वा यावद्दर्शनगोचरः इत्यादौ गोचरशब्दो योग्यतापर एव । तेन यश्चन्द्रसूर्योपरागो यस्मिन्देशे यावत्कर्मपर्याप्तश्चाक्षुषज्ञानयोग्यः स तत्र देशे तावत्सु कर्मसु निमित्तमित्यर्थः पर्यवस्यति । तादृशस्य च शास्त्रतो ज्ञानं तदनुष्ठानप्रयोजकम् । तच्च तत्काल एव न तु संक्रान्ताविव पूर्वापरकालयोः।अतश्च चाक्षुषज्ञानयोग्येऽप्यल्पकालीने ग्रहणे स्नानपूर्वकं दानादि स्नानमात्रं वा यावदेव तत्र कर्तुं शक्यं तावदेव कर्तव्यम् । वर्तमानमेव ग्रहणं तादृशमाशौचवन्निमित्तं न त्वतीतं भावि वेति पर्यवसितोऽर्थः । देशविशेषणं च सूर्यग्रहो यदा रात्राविति वचनेन द्वीपान्तरस्थस्य निमित्तत्वपर्युदासादवगम्यते । अत एव चक्षुषा ज्ञानयोग्यताया निमित्तान्तर्गतत्वे रात्रिरविग्रहस्य दिवाचन्द्रग्रहस्य चातथात्वेनानिमित्तत्वादप्रसक्तस्नानादेस्तत्र निषेधः पर्युदासोऽनर्थकः इत्यप्यपास्तम् । द्वीपान्तरस्थान्प्रति तयोरपि दर्शनयोग्यत्वात् । एतद्द्वीपावच्छिन्नतया योग्यत्वस्य च निषेधबलादेव लाभात् । अतिसूक्ष्मकालतया अनादेश्यानां तु कस्यापि दर्शनायोग्यानां तत्र योग्यत्वविशेषणादेव निमित्तत्वपर्युदासः। यद्यपि 'मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परम्' इत्यादिषु दृष्टेति पदं तदपि शास्त्रीयज्ञानपरम् । न तु चाक्षुषज्ञानपरम् । अत एव गौडनिबन्धे स्मृतिवचनम्— 'मेघमालादिदोषेण यदि मुक्तिर्न दृश्यते।आकालपाततःकालं स्नात्वा भुञ्जीत वाग्यतः।' इति । न च ग्रस्तास्तमये चन्द्रसूर्योदयात्प्रागपि शास्त्रतो मुक्तिं विज्ञाय स्नानभोजनादिप्रसङ्गः । ग्रस्तावेवास्तमानं तु इति वक्ष्यमाणभृगुवचनेन दिनान्तरे स्नानभोजनविधानात् । अहोरात्रं न भोक्तव्यमिति वक्ष्यमाणविष्णुधर्मोत्तरवचनेन ग्रस्तास्तमये चन्द्रसूर्योदयात्प्राग्भोजननिषेधाच्च । तस्माच्छास्त्रावगतं देशविशेषावच्छेदेन चाक्षुष-

ज्ञानयोग्यमेव च ग्रहणं स्नानादिनैमित्तिकानुष्ठानप्रयोजकमित्याहुः। योग्यता च स्वरूपेणैव तत्काल एव स्नानादि न तु संक्रान्तिवत्पूर्वापरकालयोः । भोजनं तु तत्काले तत्पूर्वकाले च निषिद्धम्। तथा च ब्रह्मपुराणे– 'नाश्नीयादथ तत्कालग्रस्तयोश्चन्द्रसूर्ययोः । मुक्तयोश्च कृतस्नानः पश्चाद्भुञ्ज्यात्स्ववेश्मनि।'इति । अत्र स्ववेश्मनीति वाक्यभेदेन तद्दिने परान्नभोजननिषेधः । विष्णुधर्मोत्तरे– 'चन्द्रस्य यदि वा भानोर्यस्मिन्नहनि भार्गव । ग्रहणं तु भवेत्तत्र न पूर्वं भोजनक्रिया ।' शंखलिखितौ– 'तस्मिन्नहनि नाश्नीयाच्चन्द्रसूर्यग्रहो यदा।मुक्तिं दृष्ट्वा तु भुञ्जीत स्नात्वा चैव यथाविधि।' इति । पूर्वकालभोजननिषेधे विशेषमाह वृद्धवसिष्ठः।'ग्रहणं तु भवेदिन्दोः प्रथमादधियामतः । भुञ्जीतावर्तनात्पूर्वं पश्चिमे प्रथमादधः । रवेस्त्वावर्तनादूर्ध्वमर्वागेव निशीथतः । चतुर्थे प्रहरे चेत्स्याच्चतुर्थप्रहरादधः ।' इति। रात्रौ प्रथमयामोत्तरं चन्द्रग्रहणं चेन्मध्याह्नात्पूर्वं भुञ्जीत । रात्र्यन्त्ययामे चेद्रात्रिप्रथमयामात्पूर्वं भुञ्जीत । दिनतृतीयप्रहरे चेद्रविग्रहस्तदा पूर्वदिनस्यार्धरात्रात्प्राक् भुञ्जीत । अह्नश्चतुर्थप्रहरे चेद्रविग्रहणं तदा रात्रेश्चतुर्थप्रहरादधो भुञ्जीत । इदं च न रात्रिभोजनपरं, किं तु सूर्यग्रहे पूर्वयामचतुष्टयं त्याज्यं चन्द्रग्रहे यामत्रयमित्येवं परमिति माधवः।तदुक्तं वृद्धगौतमेन– 'सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम् । चन्द्रग्रहे तु यामांस्त्रीन्बालवृद्धातुरैर्विना ।' पद्मपुराणेऽपि–'अर्धरात्रादधश्चोर्ध्वं यदा चन्द्रग्रहो भवेत् । पूर्वे पूर्वत्र भोक्तव्यमुत्तरे चोत्तरेऽपि च ।' इति । अधो द्वितीयप्रहरे । ऊर्ध्वं तृतीये प्रहरे । पूर्वत्र पूर्वाह्णे दिनप्रथमद्वितीयप्रहरयोः । उत्तरेऽपि तृतीयप्रहरेऽपि । एवं सति सूर्यग्रहनिमित्तेषु भोजननिषेधविषयस्य यामचतुष्टयस्याप्यवध्यपेक्षस्य ग्रहणयाम एवावधिः । चन्द्रग्रस्तोदये विशेषमाह वृद्धवसिष्ठः–'ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाहरेत् ।' ग्रस्तास्तमये विशेषमाह भृगुः–'ग्रस्तावेवास्तमानं तु रवीन्दू प्राप्नुतो यदि । परेद्युरुदये स्नात्वा शुद्धोऽभ्यवहरेन्नरः ।' इति । वृद्धगार्ग्योऽपि–'संध्याकाले यदा राहुर्ग्रसते शशिभास्करौ । तदहर्नैव भुञ्जीत रात्रावपि कदाचन ।' इति । यदा सूर्यस्य ग्रहणं सायंसंध्यायां चन्द्रस्य ग्रहणं प्रातः संध्यायां तदा सूर्यग्रस्तास्तसमये पूर्वस्मिन्नहनि उत्तरस्यां रात्रौ च न भोक्तव्यम् । चन्द्रस्य ग्रस्तास्तमये पूर्वरात्रौ उत्तरस्मिंश्चाह्नि न भोक्तव्यमित्यर्थः । विष्णुधर्मोत्तरेपि–'अहोरात्रं न भोक्तव्यं चन्द्रसूर्यग्रहो यदा । मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परम् ।' इति । एतदपि ग्रस्तास्तमयविषयम् । पूर्ववचनैकवाक्यत्वात् ।तत्र सूर्यग्रस्तास्तमये सम्यगेव । चन्द्रग्रस्तास्ते तु सा

रात्रिरुत्तरं चाहरित्यहोरात्रं द्रष्टव्यम्। 'अमुक्तयोरस्तगयोर्दृष्ट्वा स्नात्वा परेऽहनि।' इति वचनात्। शातातपः—'अयात्सूर्यग्रहात्पूर्वमह्नि सायं शशिग्रहात्। ग्रहकाले च नाश्नीयात्स्नात्वाऽश्नीयात्तु मुक्तयोः।मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा।स्नात्वा दृष्ट्वा परेऽह्न्यद्याद्ग्रस्तास्तमितयोस्तयोः' इति। महानिशा च मार्कण्डेयेनोक्ता—'महानिशा द्वे घटिके रात्रिमध्यमयामयोः। नैमित्तिकंतदाकार्यं काम्यं तु न मनागपि।'इति। प्रतियामं घटिकाद्वयमेकैका वा घटिका तेन मुहूर्तद्वयमेको वा मुहूर्तः। सार्धप्रहरानन्तरं मुहूर्तचतुष्टयं महानिशेति कल्पतरुः। शिवरहस्येऽपि—'नाचरेत्सग्रहे चैव तथैवास्तमुपागते। यावत्स्यान्नोदयस्तस्य नाश्नीयात्तावदेव तु। मुक्तिं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा यथाविधि।' इति। सग्रहे ग्रहणसहिते तद्वर्तमानकाले तथैव ग्रस्त एव। स्मृत्यन्तरेऽपि—'संध्याकाले यदा राहुर्ग्रसते शशिभास्करौ। तदा दिवा न भोक्तव्यमातुरस्त्रीशिशून्विना।' इति। दिवेत्यहोरात्रोपलक्षणम्। बालादीनामसमर्थानां तु मुहूर्तत्रयात्मकसायाह्नादिग्रहणकालात्प्राचीने एकैकस्मिन्नेव तादृशेऽपराह्णादौ भोजननिषेधः। तथा च मत्स्यमार्कण्डेयौ—'सायाह्नग्रहणं चेत्स्यादपराह्णे न भोजनम्। अपराह्णे न मध्याह्ने मध्याह्ने न तु संगवे। भुञ्जीत संगवे चेत्स्यान्न पूर्वं भोजनक्रिया।' इति सायाह्नादौ ग्रहणे क्रमेणापराह्णादौ बालवृद्धातुरैर्न भोक्तव्यम्। अपराह्णादिपूर्वकाले तु भोजने तेषां न दोष इत्यर्थः। विशेषनिषेधस्य शेषाभ्यनुज्ञाफलकत्वात्। कालतत्त्वविवेचने—सूर्योपरागविषयमेवेदं बालादीनां भोजननिषेधकालप्रतिपादनम्। चन्द्रग्रहणे रात्रितृतीयचतुर्थप्रहरगते बालादिभिर्यामत्रयमपि निषेधपरिपालनसंभवात् तेषामपि उत्सर्गतः सर्वस्यामपि रात्रौ भोजनं विनैवावस्थानात्। यदा तु तेषां रात्रिप्रथमद्वितीययामगते चन्द्रग्रहे यामत्रयद्वयव्यापिनिषेधपरिपालनासंभवस्तदा रात्रेरपि पञ्च भागान्कृत्वा ग्रहणकालभूतभागावधिकत्रिमुहूर्तात्मकैकभागात्मक एव रविग्रहवद्भोजननिषेधकालो द्रष्टव्यः। यत्तु ग्रहणकालावधिकपूर्वभागद्वये भोजननिषेधप्रतिपादकं स्मृत्यन्तरवचनम्—'सायाह्ने संगवेऽश्नीयाच्छारदे संगवादधः। मध्याह्ने परतोऽश्नीयान्नोपवासो रविग्रहे।' इति। शारदे अपराह्णे इत्यर्थः। 'यदापराह्णोऽथ शरत्' इति श्रुतेः। रविग्रहः शशिग्रहस्याप्युपलक्षणम्। एतच्च पुत्रवद्गृहस्थविषयम्। 'आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः। पारणं चोपवासं च न कुर्यात्पुत्रवान्गृही।' इति जैमिनिवचनात्। 'आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः। उपवासो न

कर्तव्यो गृहिणा पुत्रिणा तथा ।' इति स्मृत्यन्तरवचनात् । कालतत्त्वविवेचने तु वचनमिदं बालादिविषयमेवं ग्रस्तसूर्यास्तमयविषयम् । नोपवासो रविग्रहे इति वाक्यशेषात् । तत्रैव चाहोरात्रव्यापिभोजननिवृत्त्यात्मकोपवासप्रसक्तेः अपराह्णप्रातोपरागे ग्रस्तास्तमयः संभवत्येव अत एव मध्याह्ने परतोऽश्नीयादित्युक्तं तत्रोपरागे ग्रस्तास्तमयासंभवात् । यद्यपि चतत्र पूर्ववाक्यादुपरागात्पूर्वं संगवमात्रं वर्जयित्वा प्रातर्भोजनं संभवति तथापि भागद्वयवर्जनस्यात्र वाक्ये प्रतिपादनादन्यत्रापि बालादीनां भागद्वयवर्जनं मुख्यः कल्पः एकभागवर्जनं त्वनुकल्प इति सूच्यत इत्युक्तम् । वेधान्तरौ हेमाद्रौ— 'त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवम् । मङ्गल्येषु च सर्वेषु ग्रहणे चन्द्रसूर्ययोः ।' इति । अन्यत्रापि—'द्वादश्यादितृतीयान्तो वेध इन्दुग्रहे स्मृतः । एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्तितः ।' इदं संपूर्णग्रहे । खण्डग्रहे तु उभयतो दिनत्रयम् । त्र्यहं खण्डग्रहे तयोरिति वचनात् । इदं च ग्रस्तास्ते त्रिदिनं पूर्वमिति नारदेन ग्रस्तास्ते विशेषोक्तेर्ग्रस्तास्तभिन्नग्रहणपरम् । ज्योतिर्निबन्धे च्यवनः— 'ग्रहणोत्पातभं त्याज्यं मङ्गलेषु ऋतुत्रयम् । यावच्च रविणा भुक्त्वा मुक्तं भं दग्धकाष्ठवत् ।' अन्यद्वर्णविकारादि तत्फलं च दैवज्ञेभ्यो ज्ञेयम् । अत्र काम्योपवासमाह दक्षः—'अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः । अहोरात्रोषितः स्नात्वा सर्वपापैः प्रमुच्यते ।' इति । उषित इत्यादि कर्मणिक्तः केचित्तु भूतेक्तमभिप्रेत्य ग्रहणपूर्वदिनेऽप्युपवासमाहुः । अत एव ग्रहणादौ आदित्येऽहनि संक्रान्ताविति वचने पारणानिषेध उपपद्यते । ब्रह्मपुराणे—'नित्यं द्वयोरयनयोस्तथा विषुवतोर्द्वयोः । चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्वसु । अहोरात्रोषितः स्नानं श्राद्धं दानं तथा जपम् । यः करोति प्रसन्नात्मा तस्य स्यादक्षयं च तत् ।' इति । कालतत्त्वविवेचने-अयं चोपवासः सत्यामपि निष्ठायामयनग्रहणादिमत्यहोरात्र एव न तु पूर्वस्मिन्नयनादिसमभिव्याहारात्तद्वदहोरात्रस्यैव प्रतीतेस्तद्ग्रहणस्यैव युक्तत्वात् । तथैव शिष्टसमाचारात् च क्तः पूर्ववत् । 'एकरात्रमुपोष्यैवं स्नात्वा दद्याच्च शक्तितः । कञ्चुकादिव सर्पस्य निवृत्तिः पापकोशतः ।' इति लिङ्गपुराणगतः क्त्वाप्रत्ययोऽपि समानकर्तृकत्वमात्रे मुखं व्यादाय स्वपितीतिवत् । तत्रैव त्रिरात्रोपवासोऽप्युक्तः । 'त्रिरात्रं समुपोष्यैवं ग्रहणे चन्द्रसूर्ययोः । स्नात्वा दद्याच्च विधिवन्मोदते ब्रह्मणा सह ।' इति । अत्रापि तृतीय उपवासस्तद्दिन एव तद्वदितस्यैव त्रिरात्रस्योपरागदिनोपलक्षणात् । पुत्रवद्गृहस्थस्तु पापक्षयकामोऽपि ग्रहणनिमित्तो-

पवासं न कुर्यात् । तदुक्तं नारदेन—'संक्रान्त्यामुपवासं च कृष्णैकादशिवासरे । चन्द्रसूर्यग्रहे चैव न कुर्यात्पुत्रवान्गृही।' इति । यदा तु रवेर्ग्रस्तास्तस्तदा पुत्रिणः प्रहरद्वयं हित्वा बालादिवद्भोजनं न तूपवासः । सायाह्ने ग्रहणं चेत्स्यादिति पूर्वोक्तमार्कण्डेयवचनात्, सायाह्ने संगवेऽश्नीयादिति स्मृतेश्चेति हेमाद्रिः। माधवमते तु पुत्रिणोऽपि तत्रोपवास एव । अहोरात्रं न भोक्तव्यमिति पूर्वोक्तनिषेधस्यानेनापि पालनीयत्वात्।उपवासनिषेधस्तु व्रतरूपोपवासपरः कृष्णैकादशीनिषेधवदिति ।मदनरत्नेऽप्येवम् युक्तं चैतत् । यतः—'तत्प्रयुक्तोपवासस्य निषेधोऽयमुदाहृतः । ' इति वाक्यशेषेण विहितकाम्योपवासस्यैव निषेधो नानुषङ्गप्राप्तस्य, 'नानुषङ्गकृतो ग्राह्यो यतो नित्यमुपोषणम्।' इति वाक्यात्।किं च उपवासशब्दः संकल्पात्मकव्रतरूपोपवास एव शक्तो न तु भोजननिवृत्तौ तस्य लाक्षणिकत्वात् । अन्यथोपवासं व्रतं चरेदित्यादिषु व्रतशब्दसमभिव्याहारात्संकल्पसिद्धावपि केवलोपवासशब्दघटितवाक्येषु संकल्पसिद्ध्प्रसङ्गात् । तथा चोपवासनिषेधविधिषु गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः इति न्यायेन मुख्यस्यैव ग्रहणौचित्यमिति । यदा चैवं कारणान्तरप्रयुक्तभोजनाभावमात्रेण व्रतरूपोपवासाप्रसक्तिस्तदा ग्रहणनिमित्तश्राद्धाधिकारिणां प्रारब्धे चाभोजनमासमापनादिति विहितश्राद्धाङ्गभोजनपरिपालनेऽपि न क्षतिः । ग्रहणनिमित्तेऽपि च श्राद्धे पूर्वेद्युरपरेद्युर्वा प्राथमिकं ब्राह्मणनिवेदनं श्राद्धप्रारम्भत्वेन व्याख्यातं संभवत्येव । न भुञ्जते च प्राच्याः श्राद्धाधिकारिणो ग्रहणदिने ततः पूर्वम् । तस्माद्ग्रस्तसूर्यास्ते पुत्रवद्गृहिणाप्यहोरात्रं भोजननिषेधः परिपालनीय एव । व्रतरूपः काम्य उपवासः परं न कर्तव्यः । चन्द्रग्रस्तास्ते उत्तरदिने संध्याहोमादौ न दोषः । तदाहोशना—'ग्रस्ते चास्तं गते त्विन्दौ ज्ञात्वा मुक्त्यवधारणम्।स्नानहोमादिकं कार्यं भुञ्जीतेन्दूदये पुनः।' एतदाहिताग्निविषयम् । अपराह्णे व्रते पायनीयमश्नीतेति कात्यायनोक्तेर्व्रतस्य श्रौतत्वेन विहितत्वेन प्राबल्यात् । अद्भिर्व्रतं कुर्यादिति निर्णयदीपः । रागप्राप्तभोजने कालनियमोऽयम् । तेन ज्वरादाविव न भोजनमिति कर्कानुसारिणः । ग्रहणान्तरितस्य पूर्वसंकल्पितद्रव्यस्य द्वैगुण्यं भवतीति शिष्टाः पठन्ति च लघुब्रह्मवैवर्तम् । 'दातव्यमिति नो काश्यां वक्तव्यं कुत्रचित्क्वचित् । दशोत्तरं पर्वसु स्याच्छतं चन्द्रग्रहे भवेत् । सूर्यग्रहे सहस्रं तन्मरणेऽनन्तकं स्मृतम् ।' इति । अत्र मूलं चिन्त्यमिति निर्णयसिन्धौ । ग्रहणात्पूर्वनिषिद्धकालयोर्भोजने प्राप्ते प्रायश्चित्तं षट्त्रिंशन्मतेऽभिहितम् । 'चन्द्रसूर्यग्रहे भुक्त्वा प्राजापत्येन शुध्यति। तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेणैव

शुध्यति ।' इति । त्रिरात्रेण त्रिरात्रोपवासेन । तेन प्राजापत्यार्धमुक्तं भवति । प्राजापत्यस्य षडुपवासतुल्यत्वात् । ग्रस्तास्तोत्तरनिषिद्धकालभोजनेऽपि त्रिरात्रमेव । तस्मिन्दिने इत्यविशेषाभिधानात् । स्त्रीबालवृद्धादीनां तत्तदर्धम् । ग्रहणप्रसङ्गात् । कुरुक्षेत्रप्रतिग्रहे प्रायश्चित्तमुच्यते अरुणस्मृतौ—'प्रतिग्राही कुरुक्षेत्रे न भूयः पुरुषो भवेत् । तथापि मनसः शुद्ध्यै प्रायश्चित्तं समाचरेत् । तप्तकृच्छ्रद्वयं कुर्यादैन्दवेन समन्वितम् । सत्रेण वा यजेताथ जपेद्वा लक्षसप्तकम् । वापीकूपतडागादिखननैर्विसृजेद्धनम् ' इति । एतच्च ' यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् । तस्योत्सर्गेण शुध्यन्ति दानेन तपसैव च । ' इति मनूक्तेरुत्सर्गोत्तरं ज्ञेयमिति दिक् । अथ ग्रहणे वर्ज्यानि । 'न स्वपेन्न च भुञ्जीत न कुर्यान्मूत्रमेहने । न मैथुनं न चाभ्यङ्गं भोजनं न च बन्धनम् । पत्रपुष्पतृणैर्नागं छिन्द्यात्केशान्न शोधयेत् । न मिथ्याभाषणं कुर्यान्न केशाम्बरधारणम् । ' एतेषां फलानि स्मृतिसंग्रहे—' निद्रायां जायते व्याधिर्मूत्रे दारिद्र्यमाप्नुयात् । पुरीषे कृमियोनिः स्यान्मैथुने ग्रामशूकरः । अभ्यङ्गे च भवेत्कुष्ठी भोजने स्यादधोगतिः । बन्धने च भवेत्सर्पो वधे च नरकं व्रजेत् ।' इति कालमाधवः । ग्रहणदिने निषिद्धमाह गार्ग्यः—'न मङ्गलं न प्रतिष्ठा न प्रपारामसत्क्रियाः । नाग्निहोत्रं प्रगृह्णीत न यज्ञारम्भमाचरेत् । न जातकादिसंस्कारं न क्रयं न च विक्रयम् । ग्रहणादानरूपं न व्यवहारं हि लौकिकम् । दिवाकरे निशानाथे राहुणा संधिते सति । कुर्यात्तत्र दिने किंचिन्न क्षौराभ्यङ्गमञ्जनम् । ' ग्रहणं च जन्मराश्यादौ निषिद्धम् । तदुक्तं ज्योतिषे—' त्रिषडूसायोपगतं नराणां शुभप्रदं स्याद्ग्रहणं रवीन्द्वोः । द्विसप्तनन्देषु च मध्यमं स्याच्छेषेष्वरिष्टं कथितं मुनीन्द्रैः । ' इति । आय एकादश । नन्दा नव, इषुः पञ्च । मदनरत्ने गर्गः—' जन्मसप्ताष्टरिष्फाङ्कदशमस्थे निशाकरे । दृष्टोऽरिष्टप्रदो राहुर्जन्मर्क्षे निधनेऽपि च ।' रिष्फो द्वादशः अङ्का नव निधनम् सप्तम् तद्गतो राहुः । पृथ्वीचन्द्रोदये विष्णुधर्मोत्तरे—' यन्नक्षत्रगतो राहुर्ग्रसते शशिभास्करौ । तज्जातानां भवेत्पीडा ये नराः शान्तिवर्जिताः । अभिभवति सैंहिकेयश्चन्द्रार्कौ यस्य जन्मनक्षत्रे । तस्यान्तकादिव भयं विना दुःखं मनस्तापम् ।' हेमाद्रौ—' एषां तु भास्करस्थाने राहुश्चन्द्रमुपक्रमेत् । कर्मक्षयपरिक्लेशान्प्राप्नुवन्ति च ते जनाः । पितृपक्षविनाशाय सूर्यस्थाने भवेद्ग्रहः । मातृपक्षविनाशाय चन्द्रस्थाने भवेद्ग्रहः । होरायां गृह्यते यस्य नक्षत्रे वा निशाकरः । प्राणसंदेहमाप्नोति स वा मरणमृच्छति । ' पृथ्वीचन्द्रोदये

पुराणान्तरे—' सूर्यस्य संक्रमो वापि ग्रहणं चन्द्रसूर्ययोः । यस्य त्रिजन्मनक्षत्रे तस्य रोगोऽथ वा मृतिः । तस्य दानं च होमं च देवार्चनजपौ तथा। उपरागेऽभिषेकं च कुर्याच्छान्तिर्भविष्यति। स्वर्णेन वाऽथ पिष्टेन कृत्वा सूर्यस्य चाकृतिम्। ब्राह्मणाय ददेत्तस्य न रोगादिश्च तत्कृतः।' जन्मनक्षत्रं तत्पूर्वोत्तरे च त्रिजन्मनक्षत्रमित्युच्यते। जन्मदमेकोनविंशं तारा इति केचित्। सर्पस्य तदाकारस्य राहोरित्यर्थः। अद्भुतसारे भार्गवः—'यस्य राज्यस्य नक्षत्रे स्वर्भानुरुपरज्यते । राज्यभङ्गं सुहृन्नाशं मरणं वाऽत्र निर्दिशेत् ।' राज्यस्य नक्षत्रमभिषेकनक्षत्रमिति तत्रैव व्याख्यातम् । ' मण्डलाधिपदैवत्यैर्मन्त्रैर्मृत्युंजयादिभिः । होमं कुर्यात्प्रयत्नेन तत्तन्मत्राञ्जपेत्सुधीः ।' इति । तत्तन्नक्षत्रगणात्मकान्याग्नेयवारुणवायव्यैन्द्राख्यानि तदधिपा अग्न्यादयस्तद्दैवत्यैरित्यर्थः । नक्षत्रविशेषेषु ग्रहणे गुणदोषा ज्योतिःशास्त्रतोऽवगन्तव्याः । राजभिस्तु प्रजाहितार्थं तत्तन्मण्डलेषु तत्तच्छान्तयोऽथर्ववेदोक्ताः कारणीयाः ।'आग्नेयीं कारयेच्छान्तिं शान्तिं कुर्याच्च वारुणीम् । वायव्यां च तथा कुर्यान्माहेन्द्रीं तत्र कारयेत् ।' इति कात्यायनवचनात् । ग्रन्थान्तरे प्रकारान्तरमुक्तम् । 'ग्रहणग्रहपरिपीडितनाडीनक्षत्रदोषशमनाय । सह शतपुष्पैः स्नायात्फलिनीफलचन्दनोशीरैः । ताम्रपात्रैस्तिलैः पूर्णं पूर्णं वा गव्यसर्पिषा । भास्करग्रहणे दद्यान्नाडीदोषोपपीडितः । घृतकुम्भोपरि निहितं शंखं नवनीतपूरितं दद्यात् । नाड्यादिदोषशान्त्यै द्विजाय दोषः करग्रहणे ।' इति। नाडीनक्षत्राण्याद्यदशमषोडशाष्टादशत्रयोविंशपंचविंशानि। भार्गवार्चनदीपिकायां ज्योतिःसागरे—' सौवर्णं कारयेन्नागं पलेनार्धं पलार्धतः । तदर्द्धेन तदर्द्धेन फणायां मौक्तिकं न्यसेत् । ताम्रपात्रे विधायाथ घृतपूर्णे विशेषतः । कांस्ये वा कान्तिलोहे वा न्यस्य दद्यात्सदक्षिणम्। चन्द्रग्रहे तु रूप्यस्य बिम्बं दद्यात्सदक्षिणम् । नागं रुक्ममयं सूर्यग्रहे बिम्बं च हेमजम्। तुरङ्गरथगोभूमितिलसर्पिश्च काञ्चनम्।' कालविवेकेऽपि—'सुवर्णनिर्मितं नागं सतिलं कांस्यभाजनम्। सदक्षिणं सवस्त्रं च ब्राह्मणाय निवेदयेत् । सौवर्णं राजतं वापि बिम्बं कृत्वा स्वशक्तितः । उपरागभवक्लेशच्छिदे विप्राय कल्पयेत् ।' मन्त्रस्तु—'तमोमय महाभीम सोमसूर्यविमर्दन । हेमताराप्रदानेन मम शान्तिप्रदो भव । विधुंतुद नमस्तुभ्यं सिंहिकानन्दनाच्युत। दानेनानेन नागस्य रक्ष मां वेधजाद्भयात् ।' इति। अत्र शान्तिरप्युक्ता मात्स्ये—'यस्य राशिं समासाद्य भवेद्ग्रहणसंभवः । स्नानं तस्य प्रवक्ष्यामि सर्वौषधिसमन्वितम्। चन्द्रोपरागं संप्राप्य कृत्वा ब्राह्मणवाचनम् । संपूज्य चतुरो विप्राञ्छुक्ल-

मात्मानुलेपनैः। पूर्वमेवोपरागस्य समानीयौषधादिकम्। स्थापयेच्चतुरः कुम्भानग्रतः सागरानिव। गजाश्वरथ्या वल्मीकं संगमाद्ध्रदगोकुलात्। राजद्वारप्रदेशाच्च मृद-मानीय निक्षिपेत्। पञ्चगव्यं पञ्चरत्नं पञ्चत्वक्पञ्चपल्लवान्। रोचनं पद्मकं शंखं कुङ्कुमं रक्तचन्दनम्। शुक्तिस्फटिकतीर्थाम्बुसितसर्षपगुग्गुलून्। मधुकं देवदारुं च विष्णुक्रान्ता शतावरी। बलां च सहदेवीं च निशाद्वितयमेव च। एतत्सर्वं विनिक्षिप्य कुम्भेष्वावाहयेत्सुरान्। सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः। आयान्तु यज-मानस्य दुरितक्षयकारिकाः। योऽसौ वज्रधरो देव आदित्यानां प्रभुर्मतः। सहस्रनयन-श्चन्द्रो ग्रहपीडां व्यपोहतु। मुखं यः सर्वदेवानां सप्तार्चिरमितद्युतिः। चन्द्रोपरागसं-भूतग्रहपीडां व्यपोहतु। यः कर्मसाक्षी लोकानां धर्मो महिषवाहनः। यमश्चन्द्रोपरा-गोत्थां ग्रहपीडां व्यपोहतु। रक्षोगणाधिपः साक्षी नीलाञ्जनसमप्रभः। खड्गहस्तोऽ-तिभीमश्च ग्रहपीडां व्यपोहतु। नागपाशधरो देवः सदा मकरवाहनः। स जलाधिप-तिर्देवो ग्रहपीडां व्यपोहतु।प्राणरूपो हि लोकानां सदा कृष्णमृगप्रियः।वायुश्चन्द्रोपरा-गोत्थां ग्रहपीडां व्यपोहतु। योऽसौ निधिपतिर्देवः खड्गशूलगदाधरः। चन्द्रोपराग-कलुषं धनदोऽत्र व्यपोहतु। योऽसाविंदुधरो देवः पिनाकी वृषवाहनः। चन्द्रोपराग-पापानि स नाशयतु शंकरः। त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च। ब्रह्म-विष्ण्वर्करुद्राश्च दहन्तु मम पातकम्। एवमावाहयेद्देवान्मन्त्रैरेभिश्च वारुणैः। एतानेव तथा मन्त्रान्स्वर्णपट्टे विलेखयेत्। ताम्रपट्टेऽथ वालिख्य नववस्त्रे तथैव च। मस्तके यजमानस्य निदध्युस्ते द्विजोत्तमाः। कलशान्द्रव्यसंसक्तान्ना-नारूपसमन्वितान्। गृहीत्वा स्नापयेद्रूढं भद्रपीठोपरिस्थितम्। पूर्वैरेव तु मन्त्रैश्च यजमानं द्विजोत्तमाः। अभिषेकं ततः कुर्युर्मन्त्रैर्वारुणसूक्तकैः। आचार्यं वरयेत्पश्चात्स्वर्णपट्टं निवेदयेत्। आचार्ये दक्षिणां दद्याद्गोयानं च स्वशक्तितः। होमं वापि प्रकुर्वीत तिलैर्व्याहृतिभिस्तथा। दानं च शक्तितो दद्याद्यदीच्छेदात्मनो हितम्। सूर्यग्रहे सूर्यनामयुक्तान्मन्त्रांश्च कीर्तयेत्। अनेन विधिना यस्तु ग्रहणे स्नानमाचरेत्। तस्य ग्रहणजो दोषः कदाचिन्नोपजायते। गूढम् ग्रहणदर्शनं यथा न भवति तथा वस्त्रादिना कृतव्यवधानमित्यर्थः। इति मत्स्योक्ता ग्रहणशान्तिः। ग्रन्थान्तरे—'दूर्वाङ्कुरोशीरशमीशिलाजित्सर्वार्थसर्वौषधिपञ्चमृद्भिः। स्नानं विदध्यात द्ग्रहणे रवीन्द्वोः पीडाहरं शान्तिवहं हि यस्य।' भार्गवार्चनदीपिकायां ब्रह्मसि-द्धान्ते—'सर्वैः पीठस्थितं वीक्ष्य स्वच्छतैलाम्बुतर्पणैः। ग्रहणं गुर्विणी जातु न पश्ये-

पटं विना ।' ग्रहणादिसप्तदिनपर्यन्तं रामगोपालाद्यागमदीक्षोक्ता शिवार्चनचन्द्रिकायां ज्ञानार्णवे—'मन्त्राद्यारम्भणं कुर्याद्ग्रहणे चन्द्रसूर्ययोः।ग्रहणाद्धापि देवेशि कालसप्तदिनावधि।'इति।रत्नसागरे—'सतीर्थेऽर्के विधुग्रासे तन्तुदामनपर्वणि । मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन्न शोधयेत्।'अत्र सूर्यग्रहणमेव मुख्यम्।'सूर्यग्रहणकालेतुनान्यदन्वेषितं भवेत्। सूर्यग्रहणकालेन समो नान्यः कदाचन । न मासतिथिवारादिशोधनं सूर्यपर्वणि ।' इति तत्रैव कालोत्तरवचनात् । 'चन्द्रग्रहे तु या दीक्षा या दीक्षा व्रतचारिणाम् । वनस्थस्य च या दीक्षा दारिद्यं सप्तजन्मसु।' इति तत्रैव योगिनीतन्त्रे निषेधाच्च । अथ पुरश्चरणचन्द्रिकाद्युक्तो रहस्यपुरश्चरणविधिः । अथवान्यप्रकारेण पुरश्चरणमिष्यते 'ग्रहणेऽर्कस्य चेन्दोर्वा शुचिः पूर्वमुपोषितः।नद्यां समुद्रगामिन्यां नाभिमात्रोदके स्थितः। यद्वा पुण्योदके स्नात्वा शुचिः पूर्वमुपोषितः।ग्रहणादिविमोक्षान्तं जपेन्मन्त्रं समाहितः। अनन्तरं दशांशेन क्रमाद्धोमादिकं चरेत् । तदन्ते महतीं पूजां कुर्याद्ब्राह्मणतर्पणम् । ततो मन्त्रप्रसिद्ध्यर्थं गुरुं संपूज्य तोषयेत्।एवं च मन्त्रसिद्धिः स्याद्देवता च प्रसीदति। अथवान्यप्रकारोऽयं पौरश्चरणिको विधिः। चन्द्रसूर्योपरागे च स्नात्वा प्रयतमानसः। स्पर्शादिमोक्षपर्यन्तं जपेन्मन्त्रं समाहितः। जपाद्दशांशतो होमस्तथा होमाच्च तर्पणम् । एवं कृत्वा तु मन्त्रस्य जायते सिद्धिरुत्तमा। होमाशक्तौ जपं कुर्युर्होमसंख्याचतुर्गुणम् । षड्गुणं चाष्टगुणितं यथासंख्यं द्विजातयः । तेषां स्त्रीणां तु विज्ञेयस्तेषामेव समो जपः। यं वर्णमाश्रितः शूद्रस्तज्जपस्तस्य कीर्तितः । मूलमन्त्रं समुच्चार्य तदन्ते देवताभिधाम्। द्वितीयान्तामहं पश्चात्तर्पयामि नमोन्तकः । तर्पणस्य दशांशेन मार्जनं कथितं किल । तथैवं देवतारूपं ध्यात्वात्मानं प्रपूज्य च । नमोन्तं मन्त्रमुच्चार्य तदन्ते देवताभिधाम् । द्वितीयान्तामहं पश्चादभिषिञ्चाम्यनेन च । तोयैरञ्जलिना शुद्धैरभिषिञ्चेत मूर्धनि । मार्जनस्य दशांशेन ब्राह्मणानपि भोजयेत्। विप्राराधनमात्रेण व्यङ्गं साङ्गं भवेद्यतः । जपोऽर्चापूर्वको होमस्तर्पणं चाभिषेचनम् । भूदेवपूजनं पञ्चप्रकारैश्च पुरस्क्रिया । ' इत्यादि । तच्च रहस्यपुरश्चरणं ग्रस्तास्ते ग्रस्तोदये च न भवति । स्पर्शादिमुक्तिपर्यन्तमित्यभिधानात् । तयोश्च यावद्दर्शनगोचरः इत्युक्त्या दर्शनयोग्यत्वापेक्षणादित्यलम् । पर्वनिर्णयप्रसङ्गेनान्यान्यपि पर्वाण्यत्रैव प्रदर्श्यन्ते । तथा च विष्णुपुराणे— 'चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा।पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ।' इति । अत्र कृत्यविशेषो हेमाद्रौ—' सावित्रान् शालिहोमांश्च कुर्यात्पर्वसु नित्यशः ।' इति।सावित्रान् सावित्रीदेवताकान् । अस्मिंश्च होमे गायत्रीमन्त्राः ।अन्यदपि पूजा-

विशेषादिकं मन्त्रशास्त्रतोऽवगन्तव्यमिति । अमा गुरुणा सिद्धा शनिवारेण विरुद्धा । अत्रैशान्यां योगिनीसांमुख्याद्यात्रा न कार्या। अस्यां स्त्रीसेवनादि न कार्यम् ।

श्रीमद्दिल्लीशसेनोद्भटविकटभटोद्दण्डमत्तेभसिंह-
श्चण्डोन्मादतुरुष्कक्षयितवसुमतीपालने धर्मराजः ।
पौत्रः श्रीकृष्णसिंहक्षितिपकुलमणेर्विष्णुसिंहस्य पुत्रः
श्रीमान्राजाधिराजो जयहरिरमराधीशवत्कौ सुखी स्तात् ॥ १ ॥
श्रीमत्पण्डितदेवभट्टतनयः श्रीराघवाङ्घ्रिद्वंय—
ध्यानावाप्तसमस्तकामनिवहः सम्राट् स रत्नाकरः ।
तुष्ट्यै श्रीजयसिंहवर्मनृपतेः कल्पद्रुमेऽष्टादशं
सद्गुच्छं बुधसंमतं समकरोद्दर्शस्य निर्णायकम् ॥ २ ॥

इति पौण्डरीकयाजिरत्नाकरविरचिते जयसिंहकल्पद्रुमे दर्शनिर्ण-
योनामाष्टादशः स्तबकः ॥ १८ ॥

---

## अथ वारव्रतनिर्णयः ।

अथ वारव्रतानि । 'ये त्वादित्यदिने ब्रह्मन्पूजयन्ति दिवाकरम् । स्नात्वा दानादिना तेषां किं फलं स्याद्ब्रवीहि मे ।' ब्रह्मोवाच—' ये त्वादित्यदिने प्राप्ते श्राद्धं कुर्वन्ति मानवाः । सप्त जन्मानि ते प्राप्ताः संभवन्ति विरोगिणः । नक्तं कुर्वन्ति ये त्वत्र मानवास्तं समाश्रिताः । जपमानाः परं जप्यमादित्यहृदयं परम् । आरोग्यमिह वै प्राप्य सूर्यलोकं व्रजन्ति ते । उपवासं तु कुर्वन्ति ये त्वादित्यदिने सदा । जपन्ति च महाश्वेतां ते लभन्ते यथेप्सितम् । अहोरात्रेण नक्तेन त्रिरात्रनियमेन च । जपमानो महाश्वेतामीप्सितं लभते फलम् । विशेषणादित्यदिने जपमानो गणाधिप । षडक्षरं महाश्वेतां गच्छेद्वैरोचनं पदम् ।' तम् आदित्यम् । आदित्यहृदयमन्त्रः । घृणिः सूर्य आदित्योम् । महाश्वेता ह्रीं ह्रीं स इति मन्त्रः । खखोल्काय नम इति षडक्षरो मन्त्रः । ह्रीं ह्रीं सः सूर्यायेति केचित् । तथा—'यो वै सूर्यदिने भक्त्या भानुं संपूज्य श्रद्धया । नक्तं करोति पुरुषः स यात्यमरलोकताम् ।' इदं व्रतमेकदिनसमाप्यमेवेति रत्नाकरः । तथा आदित्य उवाच—'योऽब्दमेकं प्रकुर्वीत नक्तं मम दिने नरः । ब्रह्मचारी जितक्रोधो ममार्चनपरः खग । संवत्सरान्ते च मृगान्मद्भक्तांश्चैव वै द्विजान् । भोजयित्वा ततो ब्रूयात्प्री-

---

१—मृगा दिव्यब्राह्मणाः ।

यतां मे दिवाकरः । एवं भक्तिसमायुक्तो मम लोकं स गच्छति । न च मानुष्यकं लोकमध्रुवं प्राप्नुयान्नरः ।' इत्यादित्यवारे नक्तादिव्रतानि ।

अथ कुष्ठहरमाशादित्यव्रतम् । साम्ब उवाच—'कथ कृष्ण मया कार्यं व्रतं सर्वफलप्रदम् । किं विधानं तु के मन्त्राः किं दानं कोऽत्र पूज्यते ।' श्रीकृष्ण उवाच—'मासमाश्वयुजं प्राप्य यदादित्यदिनं भवेत् । तदा व्रतमिदं ग्राह्यं नरैः स्त्रीभिर्विशेषतः । यावत्संवत्सरं तावद्विधिनाऽनेन पुत्रक । गोमयेन क्षितौ कुर्यान्मण्डलं तत्र वर्तुलम् । रक्तपुष्पैरक्षताभिरर्घ्यं तत्र प्रदापयेत् । मन्त्रेणानेन भास्वन्तमर्चयेत्प्रतिवासरम् । यथाशा विमलाः सर्वास्तव भास्कर भानुभिः । तथाशा सफला नित्यं कुरु मह्यं यमार्चित । अर्घ्यमन्त्रः- 'एवं तमर्चयेत्तावद्यावद्वर्षं समाप्यते । समाप्ते तु व्रते वत्स कुर्यादुद्यापने विधिम् । गोमयेनानुलिप्तायां भूमौ मण्डलमालिखेत् । रक्तचन्दनलेखाभिः कुङ्कुमेन विशेषतः । तन्मध्ये द्वादशदलं पद्ममाकारयेद्बुधः । सिन्दूरपूरितदलं जपाकुसुमपूजितम् । तन्मध्ये स्थापयेत्कुम्भं प्रवालाङ्कुरसंनिभम् । शालितण्डुलसंपूर्णं शर्कराचन्दनान्वितम् । तस्योपरि न्यसेत्पात्रं ताम्रं शक्त्या विनिर्मितम् । सौवर्णं भास्करं कृत्वा पद्महस्तं स्वशक्तितः । रक्तवस्त्रयुगोपेतं पात्रोपरि निवेशयेत् । स्नाप्य पञ्चामृतेनादौ जातीकुङ्कुमलेपितम् । रक्तपुष्पैः सनैवेद्यैः फलैः कालोद्भवैस्तथा । पूजयेज्जगतामीशं धूपदीपैस्तथोत्तमैः ।' 'सूर्याय नमः । धात्रे नमः । वरुणाय नमः । माधवाय नमः । हरये नमः । भगाय नमः । सुवर्णरेतसे नमः । अर्यम्णे नमः । दिवाकराय नमः । भानवे नमः । तपनाय नमः । हंसाय नमः । इति द्वादश नामानि । 'नमो नमः पापविनाशनाय विश्वात्मने सप्ततुरङ्गमाय । सामर्ग्यजुर्धामनिधे विधातर्भवाब्धिपोताय नमः सवित्रे ।' प्रार्थनामन्त्रः—'एवं संपूज्य भानुं च नक्तं भुञ्जीत वाग्यतः । आचार्यं पूजयित्वा तु वस्त्रैराभरणैः शुभैः । तस्मै तां प्रतिमां कुम्भं सहिरण्यं प्रदापयेत् । प्रीयतां भगवान्देवो मम संसारतारकः । ब्राह्मणान्भोजयेत्पश्चाद्द्वादशान्नादिविस्तरैः । तेभ्यस्तु कलशान्दद्याद्यथाशक्त्या च दक्षिणाम् ।' इत्यादि । व्रतफलं तु कुष्ठादिरोगहानिः पुत्रपौत्रादिवृद्धिः रविसायुज्यं च भवतीति । इति भविष्यत्पुराणोक्तमाशादित्यव्रतम् । ❀

अथ सौरधर्मोक्तमादित्यव्रतम् । सौरधर्मे मांधातृवसिष्ठसंवादे—मांधातोवाच—'भगवञ्ज्ञानिनां श्रेष्ठ कथयस्व प्रसादतः । त्वद्वक्त्राच्छ्रोतुमिच्छामि व्रतं पापप्रणाशनम् । सर्वकामप्रदं चैव सर्वामयविनाशनम् । पूजार्घदानसहितं नैवेद्यप्राशनान्वितम् । एतत्कथय सर्वस्वं प्रसन्नो यदि मे प्रभो ।' वसिष्ठ उवाच—'शृणु राजन्प्रवक्ष्यामि

यद्भुक्तं व्रतमुत्तमम् । सर्वकामप्रदं पुंसां कुष्ठादिव्याधिनाशनम् । भानोस्तुष्टिकरं राजन्भुक्तिमुक्तिप्रदायकम् । यस्योदये सुरगणा मुनिसंघाः सचारणाः। दैत्यदानवयक्षाश्च कुर्वन्ति सततार्चनम्। यस्योदये तु सर्वेषां प्रबोधो नृपसत्तम । तस्य देवस्य वक्ष्यामि व्रतराजं सुविस्तरम् । पूजार्घं प्राशनं दानं नैवेद्यं शृणु तत्त्वतः। सर्वतीर्थेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम्। सर्वदानेन तपसा यत्पुण्यं समवाप्यते। प्रातःस्नानेन यत्पुण्यं तत्पुण्यं रविवासरे। मार्गशीर्षादिमासेषु द्वादशस्वपि भूपते । सूर्यव्रतं करिष्यामि यावद्वर्षं दिवाकर। व्रतं संपूर्णतां यातु त्वत्प्रसादात्प्रभाकर ।' नियममन्त्रः—'ततः प्रातः समुत्थाय नद्यादौ विमले जले । स्नात्वा संतर्पयेद्देवान्पितॄंश्च वसुधाधिप । उपलिप्य शुचौ देशे सूर्यं तत्र समर्चयेत् । संलिखेत्तत्र पद्मं च द्वादशारं सकर्णिकम् । ताम्रपात्रे तथा पद्मे रक्तचन्दनवारिणा । तत्र संपूजयेद्देवं दीननाथं सुरेश्वरम् । मासे मासे च ये राजन्विशेषास्ताञ्छृणुष्व वै । मार्गशीर्षे यजेन्मित्रं नारिकेलार्घ्यमुत्तमम् । नैवेद्यं तण्डुला देयाः साज्याश्च सगुडाः स्मृताः । पत्त्रत्रयं तुलस्यास्तु प्राश्य तिष्ठेज्जितेन्द्रियः । दद्याद्विप्राय भोज्यं तु दक्षिणासहितं नृप । पौषे विष्णुं समभ्यर्च्य नैवेद्यं कृशरं तथा । बीजपूरेण चैवार्घ्यं प्राश्यं घृतपलत्रयम् । दद्याद्घृतं तु विप्राय भोजनेन समन्वितम् । माघे वरुणनामानं संपूज्य च तिलान्गुडम् । भोजनं दक्षिणां दद्यान्नैवेद्यं तु ततीफलम् । अर्घ्यं तेनैव दत्त्वा तु प्राश्य मुष्टित्रयं तिलाः । फाल्गुने सूर्यमभ्यर्च्य जम्बीरार्घ्यं निवेदयेत् । पलत्रयं दधि प्राश्य नैवेद्यं सघृतं दधि । दधितन्दुलदानं च भोजने समुदाहृतम् । चैत्रे भानुं तु संपूज्य नैवेद्यं घृतपूरिका । फलं तु दाडिमं प्रोक्तं प्राश्य दुग्धं पलत्रयम् । विप्राय भोजनं दद्यान्मिष्टान्नं तु सदक्षिणम् । वैशाखे तपनः प्रोक्तो माषान्नं सघृतं स्मृतम् । अर्घ्यं दद्यात्तु द्राक्षाभिः प्राशने गोमयं स्मृतम् । कुर्यान्माषान्नदानं तु सघृतं च सदक्षिणम् । इन्द्रं ज्येष्ठे यजेद्राजन्नैवेद्यं तु करम्भकम्। अर्घ्यश्च सहकारेण प्राश्यं तोयाञ्जलित्रयम् । दध्योदनसमायुक्तं भोजनं ब्राह्मणाय तु । आषाढे रविमभ्यर्च्य दद्याच्चिर्भटकं तथा । विप्राय भोजनं दद्यात्प्राशने मरिचत्रयम् । गभस्तिमाञ्छ्रावणेऽर्च्यस्त्रपुसीफलमेव च । मुष्टित्रयं च सक्तूनां प्राशने समुदाहृतम् । विप्राय भोजनं दद्याद्दक्षिणासहितं नृप । यमो भाद्रपदे पूज्यः कूष्माण्डं तण्डुलाज्यकम् । गोमूत्रं प्राशने युक्तं तथा ब्राह्मण-

१—चिर्भटकं वालुकामीति भाषायां प्रसिद्धम् ।

भोजनम् । हिरण्यरेता आश्विने नैवेद्यं शर्करा स्मृतम् । दाडिमेनार्घ्यदानं तु प्राश्यं खण्डफलत्रयम् । विप्राय परया भक्त्या भोजने शालिशर्करा । दिवाकरः कार्तिके च रम्भायाः फलमेव च । पायसं चैव नैवेद्यं पायसं पायसे स्मृतम् । एवं व्रतं समाप्यैतत्तत्तदुद्यापनं चरेत् । ततो गुरुगृहे गत्वा गृह्णीयाच्चरणावुभौ । उद्यापनं करिष्येऽहमागच्छ मम वेश्मनि । माषकेण सुवर्णस्य प्रतिमाः कारयेद्रवेः । रथो रूपमयः कार्यः सर्वोपस्करसंयुतः । कृत्वा द्वादशपत्रं तु कमलं रक्ततण्डुलैः । स्थापयेद्व्रणं कुम्भं पञ्चरत्नसमन्वितम् । तस्योपरि न्यसेत्पात्रं ताम्रतण्डुलपूरितम् । रक्तवस्त्रसमाच्छन्नं पुष्पमालाभिर्वेष्टितम् । पञ्चामृतेन स्नपनमग्न्युत्तारणपूर्वकम् । प्रतिष्ठाप्य ततः कृत्वा पूजां देवस्य कारयेत् । चन्दनैः कुसुमैरन्यैर्विविधैः कालसंभवैः । अखण्डपट्टवस्त्रे च कमण्डलुमुपानहौ । वर्धनीत्रितयं तत्र स्थापयेद्रविसंनिधौ । संज्ञाया वस्त्रयुग्मं तु कौसुम्भं तु महीपते । प्रतिपत्रेषु संपूज्यः सूर्यो द्वादशनामभिः । मित्रो विष्णुः सवरुणः सूर्यो भानुस्तथैव च । तपनेन्द्रौ रविः पूज्यो गभस्तिशयनस्तथा । हिरण्यरेता दिनकृत्पूज्या एते प्रयत्नतः । मध्ये सहस्रकिरणः संपूज्यः संज्ञया सह । पूगीफलैर्धूपदीपैर्वस्त्रनैवेद्यसंयुतैः । नारिकेलेन चैवार्घ्यं दद्याद्देवस्य भक्तितः । मन्त्रेणानेन राजेन्द्र व्रतस्य परिपूर्तये ।' 'नमः सहस्रकिरण सर्वव्याधिविनाशन । गृहाणार्घ्यं मया दत्तं संज्ञया सहितो रवे ।' अर्घ्यमन्त्रः— 'आरार्तिकं ततः कृत्वा पूजासंकल्पमेव च । साकल्यं च ततः श्राद्धं कार्यं वै सूर्यदैवतम् । ब्राह्मणान्भोजयेद्भक्त्या मिष्टान्नैर्द्वादश प्रभो । दम्पत्योर्भोजनं देयं परमान्नसमन्वितम् । ततस्तु दक्षिणा देया समभ्यर्च्य स्रगादिभिः । उपहारादि तत्सर्वं गुरवे प्रतिपादयेत् । गुरुं तत्रैव संतोष्य ब्राह्मणांश्च विसर्जयेत् । मन्त्रहीनं क्रियाहीनं विधिहीनं तु यत्कृतम् । तत्सर्वं पूर्णतां यातु भूमिदेवप्रसादतः । अनुव्रज्य गुरुं विप्रान्भोजनं तु समाचरेत् । वृद्धैश्च बन्धुभिः सार्धं नत्वा देवं दिवाकरम् । एवं यः कुरुते मर्त्यो वित्तशाठ्यविवर्जितः । सूर्यव्रतं महाराज तस्य पुण्यफलं शृणु । ब्राह्मणो लभते विद्यां क्षत्रियो राज्यमाप्नुयात् । वैश्यो धनसमृद्धिं च शूद्रः सुखमवाप्नुयात् । अपुत्रो लभते पुत्रं कुमारी लभते पतिम् । रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् । यं यं चिन्तयते कामं स तस्य भवति ध्रुवम् । य इदं शृणुया-

---

१ स्नपनं कृत्वेत्यन्वयः । २ वर्धनी घटी विशेष 'घटी तु वर्धनी' इति मेदिनीकोशात् ।

द्भक्त्याप्येकचित्तो नृपोत्तम । सर्वान्कामानवाप्नोति प्रभावाद्भास्वतो नृप ।' इति सौरधर्मोक्तं सूर्यव्रतम् । ❋

'रविसंक्रमणे यः स्याद्रवेर्वारो गणाधिप । स ज्ञेयो हृदयो नाम आदित्यहृदयप्रियः । तत्र नक्तं समाश्रित्य देवं संपूज्य यत्नतः । गत्वा चायतनं भानोरादित्याभिमुखं स्थितः । जपेदादित्यहृदयं संख्ययाऽष्टशतं बुधः । योऽत्र संपूजयेद्भानुं भक्त्या श्रद्धासमन्वितः । स कामाँल्लभते सर्वान्भास्कराद्धृदयेप्सितान् । 'इति भविष्योत्तरपुराणे आदित्यहृदयविधिः । इत्यादित्यवारव्रतानि ।

अथ सोमवारव्रतानि स्कन्दपुराणे—ईश्वर उवाच— ' अथ व्रतविधानं हि कथयामि समासतः । यथा चरन्ति मनुजाः सिद्धिं सर्वार्थकामदाम् । व्युत्क्रान्ते कार्तिके मासि शुक्लमार्गदिने भवेत् । प्रथमः सोमवारस्तु तं नक्तेन प्रपूजयेत् । यदा श्रद्धा भवेत्कर्तुः सोमवारव्रतं प्रति । तदा सर्वं कारयित्वा ब्राह्मणाद्यैः समारभेत् । मार्गे माघे तथा चैत्रे गृह्णीयात्सोमवारकम् । यस्मिन्मासे प्रारभेत तस्मिन्प्रत्यापयेद्व्रतम् । सुस्नातोऽथ शुचिर्भूत्वा शुक्लाम्बरधरो नरः । कामक्रोधाद्यहंकारद्वेषपैशून्यवर्जितः । आहरेच्छ्वेतपुष्पाणि मल्लिकां मालतीं तथा । श्वेतपद्मानि दिव्यानि चम्पकं बिल्वपाटलाः । कुन्दमन्दारजैः पुष्पैः पुन्नागशतपत्रकैः । अर्चयेन्मलयेनाथ दिव्यधूपेन धूपयेत् । अन्नानि यान्यभीष्टानि तानि सर्वाणि दापयेत् । पूजयेद्भक्तिभावेन सोमनाथं जगत्पतिम् । कामिकेन तु मन्त्रेण प्रापकेन महेश्वरम् । निवेदयेत्सर्वमेव शृणु मन्त्रवरं हितम् ।' ओं नमो दशभुजाय त्रिणेत्राय पञ्चवदनाय शूलिने । श्वेतवृषभारूढाय सर्वाभरणभूषिताय । उमादेहार्धसंस्थाय नमस्ते सर्वमूर्तये । अनेनैव तु मन्त्रेण पूजां होमं तु कारयेत् । सिध्यन्ति सर्वकार्याणि मनसा चिन्तितानि च । पूजयेन्नक्तवेलायामृक्षाणां दर्शनेन तु । प्रदाय भोजनं पूर्वं ब्राह्मणाय सुभक्तितः । एतद्विधिसमायुक्तो रागद्वेषविवर्जितः । एकभक्तस्य यत्पुण्यं कथयामि समासतः । शतजन्मार्जितं पापमभेद्यं देवदानवैः । नश्यते ह्येकभक्तेन नात्र कार्या विचारणा । मासस्यैकस्ययत्पुण्यं शृणुतत्त्वेन सुन्दरि । आरोग्यं जायते भाग्यं दुर्भगं सुभगं भवेत् । पुत्रार्थी लभते पुत्रान्दरिद्रो धनवान्भवेत् । गृहे तस्य वरारोहे सौख्यानि विविधानि च । रुद्रांशो धनभागी स्याद्विघ्नहीनः क्षितिं चरेत् । अश्वमेधसहस्रस्य फलं प्राप्नोति मानवः । स्वर्गं भुक्त्वा वरान्भोगाञ्जायते मानवोत्तमः । नक्तानि सोमवारस्य पौषमासे

महेश्वरि। तेषां पुण्यफलं वक्ष्ये संक्षेपेण तवाग्रतः। अग्निष्टोमस्य यज्ञस्य फलं शतगुणं भवेत्। तत्फलं लभते देवि भक्तिभावसमन्वितः। माघस्यैव तु मासस्य सोमवारेण पूजयेत्। स्नापयेन्मधुदुग्धाभ्यां तथैवेक्षुरसेन तु। द्विजहत्यादिपापानि तानि सर्वाणि नाशयेत्। विशुद्धस्तेजसा युक्तो जायतेऽत्यन्तनिर्मलः। बहुस्वर्णस्य यत्पुण्यं दुर्लभं त्रिदशैरिह। लभते नात्र संदेहो मम भक्तिप्रचोदितः। फाल्गुने कथयिष्यामि सोमवारफलं शुभम्। कृते नक्के तु कल्याणि गुणांस्ते विस्तरेण तु। गवां लक्षस्य दत्तस्य चन्द्रसूर्यग्रहे प्रिये। फलमस्याधिकं तत्र लभते नात्र संशयः। चैत्रेऽपि शृणु कल्याणि ममैवं ब्रुवतो वचः। सोमवारेण नक्केन कृतेन सुरसुन्दरि। यत्फलं लभते नारी लक्षैकेन तु पार्वति। गङ्गोदकस्य नीतस्य सोमनाथस्य संनिधौ। घृतस्य मधुनो वापि शतधा हि कृतंफलम्। गुग्गुलोश्चतथापञ्चसहस्रंपरमेश्वरि। एतत्पुण्यं भवेत्तस्य मानवस्य न संशयः। वैशाखे कारयेन्नक्कं सोमवारे न संशयः। पूजयेच्छतपुष्पैश्च तथा लब्धैः सुरेश्वरि। अपूपा हि प्रदातव्याः कदलीफलसंचयाः। एकचित्तेन भावेन निर्मलेन यशस्विनि। कन्यानां वरयोग्यानां सहस्रेण वरानने। दत्तेन विधिवद्देवि नराणां रूपशालिनाम्। एतद्दानेन यत्पुण्यं लभते मानवो भुवि। तत्फलं लभते तत्र सोमवारव्रतेन तु। ज्येष्ठे मासि महादेवि सोमवारव्रतस्य तु। चीर्णस्य यद्भवेत्पुण्यं तत्सर्वं कथयामि ते। गवां सुवर्णशृङ्गीणां पुष्करे विधिवत्प्रिये। दत्त्वा दशसहस्राणां फलं प्राप्नोति मानवः। पदं च लभते पुण्यं दुर्लभं देवदानवैःईशस्य कल्पमतुलं क्रीडते तत्र सुन्दरि। आषाढेसोमवारस्यभवितात्माचरेद्व्रतम्। विधिपूर्वं तु कल्याणि श्रेयः शृणु वदामि ते। नरमेधशतैकेन विधियुक्तेन यत्फलम्। तद्भवेन्मानवे देवि पुण्ये सर्वशुभान्वितम्। साधितुं नैव शक्यं तु देवि नक्कमिदं यतः। तस्माद्व्रतमिदं सारं यतः कष्टेन सिध्यति। श्रावणे तु महादेवं सोमवारेण पूजयेत्। रात्रौ तु भोजनं कुर्यान्मदकौटिल्यवर्जितः। भवेद्गणवरः प्राणी जीवमानो महेश्वरः। इहत्वे तादृशी चेष्टा परत्र कथयामि ते। अश्वमेधशतस्यार्थं पुण्यं प्राप्नोति मानवः। मम लोके स वसति यावचन्द्रार्कतारकाः। भाद्रे च भावसंयुक्तः पूजयेत्परमेश्वरि। पुण्यं चानुत्तमं तस्य शृणु देवि विशेषतः। गवां कोटिप्रदानस्य सवत्सानां सुशीलिने। यत्तत्फलमवाप्नोति मानवो नात्र संशयः। आश्विने कथयिष्यामि त्वग्निष्टोमफलं शतम्। रसधेनुसहस्रस्य गुडधेनुशतस्य च। सूर्यग्रहे कुरुक्षेत्रे ब्राह्मणे वेदपारगे। दत्तस्य फलमाप्नोति मानवो नात्र संशयः। कार्तिके वरदं देवि कामिके मोक्षदायकम्। स्मरणात्पापसंघानां

भेदकं परमेश्वरि । सोमवारव्रतपरो विधिवत्पूजयेच्छिवम् । नक्ताशी श्रद्धया युक्तो दयासत्यसमन्वितः । दत्तस्य वेदपारज्ञे रथानां च शतस्य च । वाजिभिः शुद्धिचिह्नैश्च प्रयुक्तैश्च महात्मभिः । चतुर्वेदेषु विप्रेषु प्रदत्तस्य च यत्फलम् । तत्फलं लभते देवि मानवो भक्तिसंयुतः । व्रतान्ते प्रतिमां कुर्याद्रौप्यं सोमं चतुर्भुजम् । त्रयोदश घटान् श्वेतवस्त्रयुग्मसमन्वितान् । संपूर्णानि सुभक्ष्यैश्च वंशपात्राणि पार्वति । तेषामुपरि यत्नेन स्थापयेत्परमेश्वरि।सुशृतेन सुगन्धेन सुस्निग्धेनोज्ज्वलेन च। भक्तेन घृतपक्वैश्च मुद्गशाकघृतैस्तथा । ब्राह्मणानथ संभोज्य भक्तियुक्तेन चेतसा । त्रयोदश घटान्दद्याद्गाश्च श्वेता मनोरमाः । यथोक्तेन विधानेन विप्रा वस्त्रविचित्रिताः । उपानहयुताः कार्याश्चित्तवित्तानुसारतः । दद्यादाचारसंपन्नस्त्वाचार्यमुपवेशयेत् । न गुरोः सदृशी माता न गुरोः सदृशः पिता । संसारादुद्धरेद्घोराद्व्रतदानोपदेशतः । गोस्वामी पूजितो यस्मात्पार्वत्या सहितः प्रभुः। तस्मात्संपूजयेद्भक्त्या गुरुं भार्यासमन्वितम् । अर्चयेत्प्रथमं तत्र पूजया पादसेवया । दद्याद्वस्त्राणि दिव्यानि सुवर्णाभरणानि च । अमूल्यानि च रत्नानि ग्रामक्षेत्रपुराणि च । नगराणि गृहं दिव्यं यच्चान्यदपि सुन्दरि । वाहनानि विचित्राणि गजवाजिरथादिकम् । अन्यानि यान्यभीष्टानि तानि सर्वाणि दापयेत् । गौर्गुरोः संप्रदातव्या सुवत्सा सुस्वरूपिणी ॥ स्वर्णशृङ्गी रौप्यखुरा कांस्यदोहा पयस्विनी । ताम्रपृष्ठी सुशीला च वस्त्रप्रावृतदेहिका ॥ अभ्यर्च्यविधिनादद्याद्व्रतं संपूर्णमेति च । सप्तधान्यं यथाशक्त्या दापयेत्प्रयतो व्रती । दीपदानं प्रकर्तव्यं गुरवे ज्ञानदायिने । एवं गुरुं प्रणम्याथ शक्त्या दद्याच्च दक्षिणाम् । शक्त्या दद्याच्च तत्सर्वं पुरा यदुपकल्पितम् । ततस्तपस्विनां देवि मम दर्शनहेतुना । सुगन्धघृतसंमिश्रधूपैः कृसरपायसैः । घारिकाशोकवर्तीभिः पूरिकामण्डकैस्तथा । दधिदुग्धसमोपेतं भोजनं दापयेत्सुधीः । तपस्विनो ब्राह्मणाश्च लिङ्गं मूर्तिश्चतुर्विधम् । मम रूपमिदं यस्मात्तस्मात्पूज्यं चतुष्टयम् । शिवाङ्कितैश्च शास्त्रज्ञैर्देशिकैर्धर्मचिन्तकैः । जटामुद्रादिसंयुक्तैर्भस्मोद्धूलितविग्रहैः । ब्रह्मचर्यरतैः शान्तैर्लोभमत्सरवर्जितैः । ईदृशैः शिवपात्रैश्च मुक्तैः फलमनुत्तमम् । भोजनं तेषु दातव्यं ताम्बूलं मुखवासकम् । श्वेतचन्दनकर्पूरं दत्त्वा तांश्च विसर्जयेत् । शक्त्या तु भोजनं देयं यथा विभवसारतः । कृपणानाथदीनानां सुहृदां यावतामिति । एवं विधिसमायुक्तो गच्छतः परमं परम् । भोगान्भुङ्क्ते सर्वलोके एनः कोटिगुणं तरेत् । कन्याभि-

१-तेषां घटानाम् ।

वेष्टितो देवि रमते स्वेच्छया प्रिये । मम लोके वसेत्तावद्यावदाभूतसंप्लवम् । मम वीर्यबलोपेतस्त्रिणेत्रः शूलपाणिकः । माहात्म्यात्सोमवारस्य अन्ते मुक्तिमवाप्नुयात् । पूर्वं कृष्णेन संचीर्णं तथा वै पद्मयोनिना । देवदानवगन्धर्वपिशाचोरगराक्षसैः । ऋषिभिः क्षितिपैस्तद्वत्स्वायंभुवमुखैः प्रिये । अन्यैश्च मानवैः शुद्धैरास्तिकैर्धर्मतत्परैः । न देयं दुष्टचित्ताय बुद्धिहीनाय कर्हिचित् । शास्त्रधर्मद्विषे चैव विडम्बकजनाय तु । आचार्यदेवविप्राणां यतीनां व्रतशालिनाम् । वह्निवेदश्रुतीर्थानां निन्दकाय न वै क्वचित् । आर्तेनैतत्परित्याज्यं व्रतमेतत्सुदुर्लभम् । व्रतत्यागान्महादोष इति ज्ञात्वा समारभेत् । गुरोः समीपे कुर्वीत व्रतमेतन्न संशयः । अन्यथा गुरुहीनस्य निष्फलं जायते व्रतम् । संदेहः सर्वकार्येषु गुरुहीनस्य वै भवेत् । तस्मात्सर्वप्रयत्नेन गुरुमेव समाश्रयेत् । अथ संक्षेपतो वक्ष्ये व्रतमाहात्म्यमुत्तमम् । ये चरन्ति नरा देवि स्त्रियः स्वामिसुभाविताः । तेषां जन्मसहस्रेऽपि शशको जायते क्वचित् । न दारिद्र्यं न रोगश्च संततिच्छेद एव च । कुलकोटिं समुद्धृत्य स्थापयेदिन्द्रसद्मनि । इत्थं शृणोति माहात्म्यं पठ्यमानं व्रतस्य तु । श्रावयेद्भक्तियुक्तस्तु रुद्रस्यानुचरो भवेत् । क्रियमाणं तथा पश्येद्व्रतमेतत्प्रियं मम । भक्तियुक्तो नरः श्रुत्वा यश्चैवानुप्रमोदते । मतिं ददाति यश्चापि स याति परमं पदम् ।' इति । इति सोमवारव्रतम् । श्रावणे मासि सोमवासरे कार्यं शिवरहस्ये— 'तस्य केदारनाथस्य श्रावणे सोमवासरे । पूजा कार्या विशेषेण साधनैर्विविधैः शुभैः । सोमवारव्रतं कार्यं प्रयत्नेन यथाविधि । शक्तेनोपोषणं कार्यमथवा निशि भोजनम् ।' इति ।

अथ भौमवारव्रतम् । 'अथातः संप्रवक्ष्यामि रहस्यं ह्येतदुत्तमम् । येन लक्ष्मीर्धृतिस्तुष्टिः पुष्टिः कान्तिश्च जायते । स्वात्यामङ्गारकं गृह्य क्षमायां नक्तभोजनः ।' क्षमायां नक्तभोजनमित्यर्थः । क्षपयेन्नक्तभोजनैरिति वीरमित्रोदये । 'सप्तमे त्वथ संप्राप्ते हैमताम्रे निवेश्य तम् । रक्तवस्त्रयुगच्छन्नं कुङ्कुमेनानुलेपितम् । नैवेद्यंशुभ्रकासारं धूपपुष्पाक्षतादिभिः । होमंघृततिलैः कुर्यात्कुजनाम्ना च मन्त्रवित् । समिधोऽष्टोत्तरशतमष्टाविंशतिरेव वा । होतव्यं मधुसर्पिर्भ्यां दध्ना चैव घृतेन च । मन्त्रेणानेन तं दद्याद्ब्राह्मणाय कुटुम्बिने । कुजन्मा प्रभवोऽपि त्वं मङ्गलं परिपठ्यसे । अमङ्गलं निहत्याशु सर्वदा यच्छ मङ्गलम् । एवं कृते व्रते भौमे दोषः शान्तिमवाप्नुयात् । कर्तव्यं भौमपीडासु तस्मात्प्रयतमानसैः' इति । भविष्यत्पुराणोक्तं भौमपीडाशान्तिकरं व्रतम् ।

भविष्यत्पुराणे–'भौमोऽयमीश्वरादत्र पृथिव्यां जनितो महान् । रूपेणैव सदा रम्यो वरदानाद्दिवौकसाम् । अस्यैव दिवसे प्राप्ते ताम्रपात्रं सुशोभनम् । परिपूर्णं गुडेनैव वर्षमेकं प्रदापयेत् । व्रतान्ते दापयेद्धेनुं यथोक्तां विधिसंयुताम् । ब्राह्मणाय सुरूपाय अव्यङ्गाय जितात्मने ।' इति भौमव्रतम् । पद्मपुराणे–श्रीकृष्ण उवाच–'यदुक्तं कथयिष्यामि सर्वकामार्थसिद्धये । ग्रहाणामधिपं भौमं पूजयेद्भौमवासरे । मङ्गलो भूमिपुत्रश्च ऋणहर्ता धनप्रदः । स्थिरासनो महाकायः सर्वकामार्थसाधकः । लोहितो लोहिताक्षश्च सामगानां कृपाकरः।धरात्मजः कुजो भौमो भूमिजो भूमिनन्दनः। अङ्गारको यमश्चैव सर्वरोगापहारकः । वृष्टिकर्ताऽपहर्ता च सर्वकामफलप्रदः । एतानि कुजनामानि नित्यं यः प्रयतः पठेत् । ऋणं न जायते तस्य धनं प्राप्नोत्यसंशयम् । त्रिकोणं तु सदा कुर्यान्मध्ये बिम्बं प्रकल्पयेत् । कुङ्कुमेन सदा लेख्यं रक्तचन्दनकेन वा । कोणे कोणे प्रकल्प्यानि त्रीणि नामानि भूमिज । आरं वक्रं भूमिजं तु रक्तगन्धैः प्रपूजयेत् । स्थापयेदव्रणं कुम्भं जलपूर्णं सचक्रके । रक्तधान्यैस्तु नैवेद्यैः रक्तै रेक्तोत्पलैस्तथा । रक्तपुष्पैश्च गन्धैश्च धूपदीपादिभिस्तथा । मङ्गलं पूजयेद्भक्त्या मङ्गलेऽहनि सर्वदा । ऋणदोषाः प्रकर्तव्या अङ्गारेण तदग्रतः । तांस्तु प्रमार्जयेत्पश्चाद्वामपादेन संस्पृशेत् । एकविंशतिनामानि पठित्वा तु तदन्तिके । रूपवान्धनवांश्चैव जायतेनात्रसंशयः । द्विकालमेककालं वा यः पठेत्सुसमाहितः । एवं कृते न संदेह ऋणं हित्वासुखीभवेत् । पूजितो देवदेवेशो मङ्गलो मङ्गलप्रदः । उज्जयिन्यां समुत्पन्नो भौमो भौमश्चतुर्भुजः । भरद्वाजकुले जातः शूलशक्तिगदाधरः । वरदो मेषमारुढः स्कन्दप्रायस्तडित्प्रभः । स्योनापृथ्वीमन्त्रेण दले याम्ये प्रतिष्ठितः । भूमिपुत्रो महातेजाः कुमारो रक्तवस्त्रकः । ज्वलदङ्गारसदृशो भौमः शान्तिं प्रयच्छतु ।' पूजामन्त्रः–'प्रसीद देवदेवेश विघ्नहर्तर्धनप्रद । गृहाणार्घ्यं मया दत्तं मम शान्तिं प्रयच्छ वै ।' अर्घ्यमन्त्रः–तथा 'गौतमेनपुरापृष्टो लोहिताङ्गो महाग्रहः । कथय त्वं महाभाग गुह्यं पूजार्चनाविधिम्।गौतम उवाच– 'मन्त्रमाराधनं ब्रूहि सर्वप्राणिभयापहम् । सर्वपापप्रशमनं सर्वोपद्रवनाशनम् । सर्वयज्ञफलं येन सर्वदानफलं लभेत् । तपोजयाद्यनेकार्थफलं येनैव लभ्यते । रूपं सुवर्णसंस्कारवाहनायुधसंयुतम् । येन पूजितमात्रेण जायते सुखमुत्तमम् । धर्मार्थकाममोक्षाणां कायेनैव फलप्रदम् । सर्वपापप्रशमनं सर्वव्याधिविनाशनम् । सर्वसौख्यप्रदं नानाफलं येन च लभ्यते । तद्व्रतं ब्रूहि मे देव लोहिताङ्ग महाग्रह ।' भौम उवाच–'शृणु साधो महाभाग धर्मशारद

गौतम। व्रतं पूजां परं दानं यद्वोप्यं भुवनत्रये । आसीत्पूर्वं सुनन्दीको ब्राह्मणो वेदपारगः । तस्य भार्या सुनन्दीका वन्ध्या तु बहुलोभिनी । तस्यापत्यं न संजातं वृद्धत्वे वन्ध्यभावतः। तेनान्यस्य सुता ब्रह्मन्सुशीला रूपसंयुता । ब्राह्मणस्य कुले जाता गृहीत्वा पोषिता स्वयम् । सर्वलक्षणसंपूर्णा मद्व्रतेन तु गौतम । जन्मान्तरे तया चाहं पूजितश्चैव भावितः। तांपुत्रीं च गृहेतस्य ब्राह्मणः पर्यपालयत्। नित्यंनिष्ठीवते स्वर्णमष्टाङ्कैः कनकाकृतिः। तेन स्वर्णेन विप्रोसौ धनाढ्यो वेदपारगः । कोटिकोटीश्वरो विप्रो राजते भूमिमण्डले । वर्षैः कतिपयैर्विप्र सा कन्या यौवनोत्तमा । दृष्टा नन्दिकाविप्रेण दशवर्षा तपस्विनी । विवाहार्थं तु विप्रस्य दत्ता सोमेश्वरस्य च । वेदोक्तविधिना तत्र विवाहमकरोत्तदा। वर्षैः कतिपयैस्तत्र तां कन्यां प्रौढयौवनाम् । आदाय श्वशुरगृहान्निर्गता शुभवासरे । स्वदेशोपरि मार्गेण गच्छमानस्त्वहर्निशम् । वनान्ते गह्वरे घोरेऽरण्ये पर्वतमस्तके । सुन्दरी च वने तस्मिन्महालोभप्रभावतः । सर्वशून्ये वने तस्मिन्महालोभेन भावितः । मार्गे चलति "विप्रोऽसौ घातितुं विट्पतिं[1] स्वकम् । तेनासौ घातितो विप्रश्चोररूपेण चादरात् । पतिं मृतं च तं दृष्ट्वा सा नारी भयपीडिता । यावत्प्रक्षिप्य काष्ठानां मध्ये चैव हुताशनम् । पतिदेहमुपादाय चिक्षेप चितिमध्यतः। पतिना सह विप्रेण मरणे कृतनिश्चया । पतिं ब्रह्ममयं नित्यं ध्यायन्ती च पदे पदे । पतिं प्रदक्षिणीकृत्य चितायाश्च समीपतः । स्थिता यावत्प्रविशति तदाऽहमवदं च ताम् । तस्मिन्काले च तुष्टोहं याचयस्व मनोरथम्। ' ब्राह्मण्युवाच—' यदि तुष्टोऽसि मे देव तदा जीवतु मे पतिः।' भौम उवाच—' अजरोऽप्यमरो वत्से त्वद्भर्ताऽयं भविष्यति । अन्यं याच महासाध्वि वरं त्रिभुवनक्षमम् । ' ब्राह्मण्युवाच—' यदि तुष्टोऽसि देवेश ग्रहाणामधिप प्रभो । ये त्वां घटे समालिख्य रक्तचन्दनचर्चितम्। रक्तपुष्पैश्च संपूज्य प्रत्यूषे भौमवासरे । वैधव्यात्तु भयं तासां व्याधिराजभयं तथा । सर्पाग्निचौरसंबाधं वियोगं स्वजनैः सह । मा कुरुष्व महीपुत्र यदि तुष्टोऽसि मे प्रभो । ' भौम उवाच—'एकविंशतिभौमांश्च नयेद्भक्त्या जितेन्द्रियः । एकाहारेण पीतान्नैश्चतुर्दीपान्विते गृहे । अर्घ्यं तु सफलं मन्त्रैर्वेदपौराणिकाह्वयैः । स्वशक्त्या भोजनं विप्रे दातव्यं सहिरण्यकम्। वायनं रक्तवृषभं सर्वोपस्करसंयुतम्। तेषां पीडा कदाप्यस्य ग्रहस्य न भविष्यति । भूतवेतालशाकिन्यः प्रभवन्ति न हिंसकाः । एकविंशतिभौमाश्च कर्तव्या

---

१—विट्पतिर्जामाता।

एकभावतः । आपदो विलयं यान्ति सुखं चैव प्रवर्धते । यः शृणोति व्रतं विप्र मानवः संयतेन्द्रियः। तस्य मासकृतं पापं विलयं याति तत्क्षणात् । सदा नियमसंयुक्तः प्रत्यूषे भौममास्थितः । यावज्जीवं व्रतं पुण्यं करोति भुवनत्रये । स समृद्धो भवेद्विप्रः पुत्रपौत्रैस्तु वर्धितः । अन्ते चापि परं स्थानं यत्र सूर्यादयो ग्रहाः । एवमुक्त्वा तदा तत्र मङ्गलोऽपि दिवं गतः । इदं व्रतं त्वयाख्यातं सर्वसौख्यप्रदायकम् । इदं व्रतं करिष्यन्ति तेषां पीडा न जायते। स्त्रीभिर्व्रतं प्रकर्तव्यं पुरुषैश्च विशेषतः । तेषां मुक्तिर्न संदेहः स्वर्गवासो न संशयः । ' इति भौमव्रतम् ।

गौतम उवाच—' उद्यापनविधिं सम्यङ्मम ब्रूहि प्रसादतः । येन ज्ञातेन जगत उपकारो महान्भवेत् ।' मङ्गल उवाच—' विज्ञेयो मण्डपस्त्वस्मिन्नष्टहस्तप्रमाणतः । स्थण्डिलं मध्यतः कार्यं हस्तैकस्य प्रमाणतः । मण्डलं तु प्रकर्तव्यं मामकं रक्तशालिना । पूर्वोक्तानि च नामानि मण्डलं पूजयेत्ततः । मण्डलं तु प्रकर्तव्यं पत्रैर्विंशतिभिर्द्विज । द्वारोपद्वारसहितं वीथिकाकरकैर्युतम् । पूजा तत्र प्रकर्तव्या रक्तचन्दनपूर्विका । जपापुष्पं प्रदातव्यं व्रतोद्यापनसिद्धये । कुम्भे मे प्रतिमा स्थाप्या सौवर्णी च स्वशक्तितः । रक्तवस्त्रेण संछाद्य पूजा पूर्वोक्तमन्त्रतः । अष्टोत्तरशतं होमं पूजान्ते कारयेद्बुधः । जपायाः कुसुमानां च घृतस्य तु यथाविधि । तिलाक्षतानामाचार्यमृत्विग्भिर्वेदपारगैः । अग्निर्मूर्धेति मन्त्रेण रक्तशालेयकैस्तथा । शान्तिकं तु प्रकर्तव्यं यथोक्तेन विधानतः । पद्ममध्ये कर्णिकायां मम मूर्तिमतन्द्रितः । पूजयेद्यजमानस्तु शेषनामानि पूर्ववतः । ॐ मङ्गलाय गुह्ये तु महाकालाय चोरसि । सर्वकामप्रदात्रे तु वामबाहुं प्रपूजयेत् । लोहितं दक्षिणे बाहौ लोहिताक्षाय कण्ठतः । आस्ये संपूजयेन्मां च सामगानां कृपाकरम् । धरात्मजं नासिकायां कुजं च नयनद्वये । भौमं ललाटपट्टे च भूमिजाय नमो भ्रुवौ। मूर्ध्नि संपूजयेन्मां च भूमिनन्दननामतः । अङ्गारकं शिखायां तु यमं कवचदेशतः । सर्वरोगापहारं च अस्त्रेशं पूजयेत्सदा । आकाशे वृष्टिकर्तारं तद्धर्तारमधस्तथा । सर्वाङ्गेषु प्रपूज्योऽस्मि सर्वकामफलप्रदः । एवं पञ्चोपचारेण पूजान्ते व्रतपारणात् । अच्छिद्रं याचनीयं तु भक्तियुक्तेन चेतसा । आचार्यऋत्विजो ब्रूयुः संपूर्णं व्रतमस्त्विति । व्रतान्ते पूजयेद्विप्रं गुरुं पत्नीसमन्वितम् । रक्तवस्त्रं परिधाप्य पदं दद्याद्यथोचितम् । शय्यां सोपस्करां चैव भोजनं विविधं तथा । भक्त्या दद्यादनड्वाहं व्रतान्ते मम तुष्टये । ऋत्विजोऽपि तदा पूज्य

१—पद पददानम् ।

मत्प्रात्यर्थं स्वशक्तितः। भोजनाच्छादनाद्यैश्च सत्कारैर्विविधैर्गिरा। इत्थमुद्यापनं येतु कुर्वन्ति व्रतकारकाः। तेषां पीडा कदाऽप्यस्य ग्रहस्य न भविष्यति। भूतवेतालशाकिन्यः प्रभवन्ति न हिंसकाः। न ऋणं च भवेत्तेषां न दुःखं च भवेद्ध्रुवम्। येषां संतानवाञ्छा स्यात्ते लभन्ते बहून्सुताम्। इत्युक्त्वा गौतमस्याग्रे दिवं प्राप्तो महाग्रहः। व्रतं चरन्ति ये लोकाः पीडिता विपदां गणैः। आपदो विलयं यान्ति सर्वास्तेषां तु तत्क्षणात्। सदा नियममारूढः प्रत्यूषे सुसमाहितः। यावज्जीवं व्रतं पुण्यं करोति भुवनत्रये। सुसमृद्धो भवेद्विप्रः पुत्रपौत्रैः स वर्धते। अन्ते याति परं स्थानं यत्र सूर्यादयो ग्रहाः। कृतस्य संततं सम्यक् व्रतस्यास्य प्रभावतः। यावज्जीवं न शक्नोति व्रतं कर्तुं नरोयदि। उद्यापनंविधायैव मोक्तव्यं व्रतिभिर्नरैः। उद्यापनं तु शास्त्रोक्तं कर्तव्यं सुसमाहितैः। अशक्तोब्राह्मणानुज्ञां गृहीत्वा तु विसर्जयेत्। अन्यथा कुरुते यस्तु कुष्ठी वाऽन्धः प्रजायते। तस्मात्सर्वप्रयत्नेन ब्राह्मणानुज्ञया व्रतम्। कर्तव्यं तु सुसंपूर्णमुद्यापनसमन्वितम्। धरामराणां वचनैरवस्थिता दिवौकसस्तीर्थव्रतैः समेताः। न लङ्घयेच्चापि वचांसि तेषां श्रेयोभिगामी पुरुषो विजानन्।' इति मङ्गलव्रतोद्यापनम्। कामाक्षीं प्रकृत्य— 'तत्रापि श्रावणे मासि प्रत्यहं विधिवज्जनैः। पूजा कार्या विशेषेण सर्वार्था भौमवासरे।' इति।

अथ बुधव्रतम्। 'अथातः संप्रवक्ष्यामि रहस्यं ह्येतदुत्तमम्। येन लक्ष्मीर्धृतिस्तुष्टिः पुष्टिः कान्तिश्च जायते। विशाखासु बुधं गृह्य सप्त नक्तान्यथा चरेत्। बुधं हेममयं कृत्वा स्थापितं कांस्यभाजने। शुक्लवस्त्रयुगच्छन्नं शुक्लमाल्यानुलेपनम्। गुडौदनोपहारं तु ब्राह्मणाय निवेदयेत्। बुध त्वं बुद्धिजननो बोधदः सर्वदा नृणाम्। तत्त्वावबोधं कुरुषे सोमपुत्र नमो नमः। होमं घृततिलैः कुर्याद्बुधमान्ना च मन्त्रवत्। समिधोऽष्टोत्तरशतमष्टाविंशतिरेव वा। होतव्या मधुसर्पिर्भ्यां दध्ना चैव घृतेन च। बुधशान्तिरिति प्रोक्ता बुधवैकृतनाशनम्। बुधदोषेषु कर्तव्ये बुधशान्तिकपौष्टिके।' इति भविष्योत्तरोक्तं बुधव्रतम्।

अथ गुरुव्रतम्। अथातः संप्रवक्ष्यामि रहस्यं ह्येतदुत्तमम्। येन लक्ष्मीर्धृतिस्तुष्टिः पुष्टिः कान्तिश्च जायते। गुरुं चैवानुराधासु पूजयेद्भक्तितो नरः। पूर्वोक्तविधियोगेन सप्त नक्तान्यथा चरेत्। हैमं हेममये पात्रे स्थापयित्वा बृहस्पतिम्। पीताम्बरयुगच्छन्नं पीतयज्ञोपवीतिनम्। पादुकोपानहच्छन्नं कमण्डलुविभूषितम्।

---

१—अविशेषेण समिध इत्युक्तेऽपि अपामार्गस्य समिधो ग्राह्या।

भूषितं पीतकुसुमैः कुङ्कुमेनविलेपितम् । धूपदीपादिभिर्दिव्यैः फलैश्चन्दनखण्डकैः । खण्डखाद्योपहारैश्चगुरोरग्रेनिवेदयेत् । धर्मशास्त्रार्थतत्त्वज्ञ ज्ञानविज्ञानपारग । विविधार्तिहराचिन्त्य देवाचार्य नमोऽस्तु ते । होमं घृततिलैः कुर्याद्गुरुनाम्ना च मन्त्रवित् । समिधोऽष्टोत्तरशतमष्टाविंशतिरेव वा । होतव्या मधुसर्पिर्भ्यां दध्ना चैव घृतेन च । पिपल्यः समिधो ज्ञेयाः शास्त्रान्तरसंवादतः । एतद्व्रतं महापुण्यं सर्वपापहरं शिवम् । तुष्टिपुष्टिकरं नृणां गुरुवैकृतनाशनम् । विषमस्थे गुरौ कार्या जीवशान्तिरियं नृभिः।' इति भविष्यत्पुराणोक्तं गुरुव्रतम् ।

अथ गुरुस्तोत्रम् । 'बृहस्पतिः सुराचार्यो दयावाञ्छुभलक्षणः । लोकत्रयगुरुः श्रीमान्सर्वतः सर्वदो विभुः । सर्वेशः सर्वदा तुष्टः सर्वाङ्गः सर्वपूजितः । अक्रोधनो मुनिश्रेष्ठो नीतिकर्ता जगत्प्रियः । विश्वात्मा विश्वकर्ता च विश्वयोनिरयोनिजः । भूर्भुवः स्वः पिता चैव भर्ता जीवो महाबलः । पञ्चविंशतिनामानि पुण्यानि शुभदानि च । प्रातरुत्थाय यो नित्यं कीर्तयेत्सुसमाहितः । विपरीतोऽपि भगवन्प्रीतस्तत्र बृहस्पतिः । नन्दगोपगृहे यच्च विष्णुना परिकीर्तितम् । यः पठेत्तु गुरुस्तोत्रं चिरंजीवी न संशयः । गोसहस्रफलं पुण्यं विष्णुर्वचनमब्रवीत् । बृहस्पतिः सुराचार्यः सुरासुरसुपूजितः । अभीष्टफलदः श्रीमाञ्छुभग्रह नमोऽस्तु ते ।' इति स्कन्दपुराणोक्तं गुरुस्तोत्रम् ।

अथ शुक्रव्रतम् । 'अतःपरंप्रवक्ष्यामि रहस्यं ह्येतदुत्तमम् । येन लक्ष्मीर्धृतिस्तुष्टिः पुष्टिः कान्तिश्च जायते । शुक्रं ज्येष्ठासु संप्राप्य पूजयेन्नक्तभोजनः ।पूर्वोक्तक्रमयोगेन द्विजानां तर्पणेन तु।सप्तमे त्वथ संप्राप्ते सौवर्णं कारयेत्सितम्। रौप्ये वा कांस्यपात्रे वा स्थापयित्वा भृगोः सुतम् । संपूज्य परया भक्त्या श्वेतवस्त्रानुलेपनैः । अग्रे तस्य प्रदातव्यं पायसं घृतसंयुतम् । दद्यादनेन मन्त्रेण ब्राह्मणाय विचक्षणः । भार्गवो भगुशिष्यो वा श्रुतिस्मृतिविशारदः । हत्वा ग्रहकृतान्दोषानायुरारोग्यदो भव।' इति भविष्योत्तरोक्तं शुक्रव्रतम् ।

अथ शनैश्चरव्रतम् । भविष्यपुराणे—श्रीकृष्ण उवाच । 'कदाचिदाश्रमपदं पिप्पलादस्य नारदः । जगाम कामचारेण पर्यटन्नटवीतटम् । तमातिथेयः श्रेयोर्थी पिप्पलादोऽथ नारदम् । विहितायां सपर्यायां यो गत्वा तमथाब्रवीत् । मुने वने चिरं कालं मानव्य स्थितवानहम् । अश्वत्थवृक्षमक्षीणच्छायं स्थानमनुत्तमम् । क्व गतौ मां निधायेह मदीयौ पितरौ मुने । तं प्राह नारदः पूर्वं सर्वलोकानलः शनिः ।

पीडयामास वसुधां सर्वेषामसुधारिणाम् । रोगांश्चकार देहेषु गृहेषु च धनक्षयम् । तदा पुण्यान्यरण्यानि परिभ्रम्य फलादिकम् । आदाय कायपोषाय, सायमायाति ते पिता । क्लीबभावं पुरस्कृत्य शनैश्चरसमीक्षितः । त्वां विहाय स चापत्सु गतश्चेतस्ततः क्वचित् । एवमुक्तः शिशुः क्रोधात्प्रज्वलन्निव पावकः । आलोक्य गगनाद्भूमौ पातयामास वै शनिम् । पतमानो गिरेः शृङ्गे लग्नः खञ्जो बभूव ह । धरण्यां पतितं दृष्ट्वा भास्करात्मजमातुरम् । ननर्त भुजमुत्क्षिप्य नारदो हृष्टमानसः । हृष्टो देवांस्तथाहूयदर्शयामास तं शनिम् । अथदेवास्तदाप्राप्ताब्रह्मरुद्रेन्द्रपावकाः । तत्कृतेःसान्त्वयामासुः क्रोधमुग्धं मुनिं च ते । स्वस्तितेस्तु महाभाग पिप्पलाद महामुने । भगवान्पिप्पलं भुक्त्वा जीवितोऽसि यतो मुने । अतस्त्वं पिप्पलादेति लोके ख्यातिं गमिष्यसि । अतस्त्वां पूजयिष्यन्ति स्नात्वा पुष्पाक्षतादिभिः । गृहाश्रमपदे रम्ये क्षिपेयुर्भक्तिभाविताः । सप्तजन्मान्तरं यावत्पुत्रपौत्रानुगामिनी । तेषां लक्ष्मीर्न दूरस्था भविष्यति कदाचन । स्मरिष्यन्ति च येऽपि त्वां पिप्पलादेति नामतः । तेषां शनैश्चरकृता न पीडापि भविष्यति । क्षमस्वास्य महाभाग निर्दोषोऽयं ग्रहाग्रणीः । वरवृक्षनमस्कारैः शान्तो भवति पूजितः । अतोऽर्थमस्य दिवसे स्नानमभ्यङ्गपूर्वकम् । कार्यं देयं तु विप्राय तैलमभ्यङ्गहेतवे । यस्तु संवत्सरं यावत्प्राप्ते शनिदिने नरः । तैलं ददाति विप्राणां स्वशक्त्यान्यजनस्य तु । ततः संवत्सरस्यान्ते प्राप्ते तस्य दिने पुनः । लोहेन घटितं सौरिं तैलकुम्भे विनिक्षिपेत् । लौहे वा मृन्मये वाऽथ कृष्णवस्त्रयुगच्छदम् । कृष्णगोदक्षिणायुक्तं कृष्णकम्बलशायिनम् । तिलतैलेन च स्नातं कृष्णपुष्पैः सुपूजितम् । कृष्णगन्धैः कृष्णपुष्पैः कृष्णधूपैस्तिलौदनैः । पूजयित्वा सूर्यपुत्रं ब्राह्मणाय निवेदयेत् । कृष्णाय द्विजमुख्यायेतरस्मै तदभावतः । मन्त्रेणानेन ब्रह्मर्षे शंनोदेवीति भक्तितः । इतरेषां तु वर्णानां शृणु मन्त्रं द्विजोत्तम । क्रूरावलोकनवशाद्भुवनं नाशयति यो ग्रहो रुष्टः । तुष्टो धनकनकसुखं ददाति स नः शनैश्चरः पातु । यः पुरा नष्टराज्याय नलाय प्रददौ किल । स्वप्ने तस्मै निजं राज्यं स मे सौरिः प्रसीदतु । केशनीलाञ्जनप्रख्यं मन्दचेष्टाप्रसारिणम् । छायामार्तण्डसंभूतं नमस्यामि शनैश्चरम् । नमोऽर्कपुत्राय शनैश्चराय नीहारवर्णाञ्जनमेचकाय । श्रुत्वा रहस्यं भवकामदश्च फलप्रदो मे भव सूर्यपुत्र । नमोऽस्तु प्रेतराजाय कृष्णदेहाय वै नमः । शनैश्चराय ते तद्वच्छुद्धबुद्धिप्रदायिने । य एभिर्नामभिः स्तौति तस्य तुष्टो ददात्यसौ । तदीयं तु भयं तस्य स्वप्नेऽपि न भविष्यति । एवमुक्त्वा सुराः सर्वे प्रतिजग्मुर्य-

थागतम् । शनैश्वरोऽपि स्वस्थाने ग्रहत्वेन प्रतिष्ठितः । पिप्पलोऽपि ब्रह्मऋषिर्ब्रह्माज्ञां परिपालयन् । शनैश्वरं तु संपूज्य तुष्टाव रचिताञ्जलिः । कोणस्थः पिङ्गलो बभ्रूः कृष्णो रौद्रोऽन्तको यमः । सौरिः शनैश्वरो मन्दः प्रीयतां मे ग्रहोत्तमः । शनैश्वरमिति स्तुत्वा पिप्पलादो महामुनिः । ज्वलन्खे वै विमानस्थो दृश्यतेऽद्यापि मानवैः । इदं शनैश्वराख्यानं ये श्रोष्यन्ति समाहिताः । तेषां कुरुवरश्रेष्ठ शनिपीडा न बाधते । कृष्णायसेन घटितां ग्रहराजमूर्तिं लौहे निधाय कलशे तिलतैलपूर्णे । यो ब्राह्मणाय रविजं प्रददाति भक्त्या पीडा शनैश्वरकृता न हि बाधते तम् ।' इति भविष्योत्तरोक्तं शनिव्रतम् । ❀

तथा तत्रैव श्रीकृष्ण उवाच—'अथातः संप्रवक्ष्यामि रहस्यं ह्येतदुत्तमम् । येन लक्ष्मीर्धृतिस्तुष्टिः पुष्टिः कान्तिश्च जायते । मूलेन सूर्यतनयं गृहीत्वा भरतर्षभ । तस्मिन्दिने पूजनीयं ग्रहत्रितयमादरात् । शनैश्वरश्च राहुश्च केतुश्चेति क्रमान्नृप । होमं घृततिलैः कुर्याद्ग्रहनाम्ना तु मन्त्रवित् । पृथगष्टोत्तरशतमष्टाविंशतिरेव वा । होतव्यामधुसर्पिर्भ्यां दध्ना चैव घृतेन तु । यथाक्रमं शमीदूर्वाकुशानां समिधः स्मृताः । सप्तमे चैव संप्राप्ते नक्ते सूर्यसुतस्य च । ग्रहास्त्रयोऽपि कर्तव्या राजँल्लोहमयाः शुभाः । लोहपात्रे स्थिताः सर्वे सौवर्णे वा कुरूद्वह । कृष्णवस्त्रयुगच्छन्नान्दद्यादेकैकशः क्रमात् ।' शनेः स्वरूपं तु । 'कृष्णवासास्तथा कृष्णः शनिः कार्यः शिराततः । दण्डाक्षमालासंयुक्तः करद्वितयभूषणः । कार्ष्णायसे रथे कार्यस्तथैवाष्टतुरंगमे ।' राहुकेत्वोः स्वरूपं मत्स्यपुराणेऽभिहितम् । 'करालवदनः खड्गचर्मशूली वरप्रदः । नीलसिंहासनयुतो राहुरत्र प्रशस्यते । धूम्राद्विबाहवः सर्वे गदिनो विकटाननाः । गृध्रासनगता नित्यं केतवः स्युर्वरप्रदाः ।' इति । 'मृगनाभ्या समालिप्य धूपं कृष्णागुरुं तथा । दत्त्वा नैवेद्यकासारं ब्राह्मणायोपपादयेत् । शनैश्वर नमस्तुभ्यं नमस्ते राहवे तथा । केतवेऽथ नमस्तुभ्यं सर्वशान्तिप्रदो भव । एवं कृते भवेद्यत्तु तन्निबोध द्विजोत्तम । यदि भौमो रविसुतो भास्करो राहुणा सह । केतुश्च मूर्ध्नि तिष्ठंति सर्वे पीडाकरा ग्रहाः । अनेन कृतमात्रेण सर्वे शाम्यन्त्युपद्रवाः । एवं यः कुरुते राजन्सदा भक्तिसमन्वितः । तस्य सानुग्रहा देवाः शान्तिं यच्छन्ति भूपते । सूर्यं शशी कुजबुधौ गुरुशुक्रसौरी न्हस्तादिकृक्षसहितानुदितक्रमेण । संपूज्य हेमघटितान्द्विजपुङ्गवाय दत्त्वा पुमान्ग्रहगणेन न पीड्यतेऽत्र । शनैश्वरं राहुकेतू लोहपात्रे व्यवस्थितान् । कृष्णागुरुः स्मृतो धूपो दक्षिणा चात्मशक्तितः ।' इति भविष्योत्तरोक्तं शनिव्रतम् ।

अन्यदपि मदनरत्ने स्कान्दे—'श्रावणे मासि संप्राप्ते शोभने शनिवासरे। लोहरूपं शनिं कृत्वा स्नाप्य पञ्चामृतेन वै। पुष्पैरष्टविधैर्धूपैः फलैश्चैव विशेषतः। नामभिः पूजयेदेतैः क्रमेण ग्रहसत्तमम्।' तानि चाव्यवहितपूर्वमेव कोणस्थ इत्यादिनोक्तानि। 'शन्नोदेवीति मन्त्रेण वैदिकेन च पूजयेत्। पूजयित्वा च नैवेद्यं ततः कुर्यात्क्रमेण तु। समापभक्तं प्रथमे द्वितीये पायसं शुभम्। तृतीये त्वंबिली कार्या चतुर्थे पूरिका शुभा।' प्रथमादिशब्दैः शनिवाराः शुक्लादिकृष्णान्तश्रावणगता उच्यंते। तत्र तण्डुलपिष्टकृता यवागूरंबिलीति। अथ दशरथकृतं शनिस्तोत्रम्। पार्वत्युवाच—'द्वादशाष्टमजन्मस्थे शनौ नाम्ना ग्रहेश्वर। किं कर्तव्यं नरैः स्वामिन्विधानं क्लेशशान्तये।' शंकर उवाच—'रघुवंशेऽतिविख्याते राजा दशरथः पुरा। चक्रवर्ती स विज्ञेयः सप्तद्वीपाधिपः स्मृतः। कृत्तिकान्ते शनिं ज्ञात्वा दैवज्ञैर्ज्ञापितो हि सः। रोहिणीं भेदयित्वा तु शनिर्यास्यति सांप्रतम्। शाकटो नाम भेदोऽयं सुरासुरभयंकरः। द्वादशाब्दं तु दुर्भिक्षं भविष्यति सुदारुणम्। एतच्छ्रुत्वा ततो वाक्यं मन्त्रिभिः सह पार्थिवः। चिन्तयामास किमिदं भयंकरमुपस्थितम्। दिशाः सनगरग्रामा भयभीताः समंततः। द्रष्टव्याः सर्वतो लोकाः क्षयस्तेषां समागतः। आकुलं तु जगत्सर्वं पौरजानपदादिकम्। पप्रच्छ प्रयतो राजा वसिष्ठप्रमुखान्द्विजान्।' दशरथ उवाच—'समाधानं किमत्रास्ति ब्रूत मे तद्द्विजोत्तमाः।' वसिष्ठ उवाच—'प्रजा रक्ष्याः प्रयत्नेन तस्मिन्भिन्ने कुतः प्रजाः। असाध्यः खल्वयं योगो ब्रह्मविष्णुशिवैरपि। इति संचिन्त्य मनसा साहसं परमं ययौ। समादाय धनुर्दिव्यं दिव्यायुधसमन्वितः। रथमारुह्य वेगेन गतो नक्षत्रमण्डलम्। सपादं योजनानां तु लक्षसूर्योपरि स्थितम्। रोहिणीपृष्ठमास्थाय राजा दशरथस्तदा। रथे तु काञ्चने दिव्ये मणिरत्नविभूषिते। हंसवर्णमयैर्युक्ते महाकेतुसमन्विते। दीप्यमानमहारत्नकिरीटमुकुटोज्ज्वलः। व्यराजत तदाकाशे द्वितीय इव भास्करः। आकर्णचापमाकृष्य संहारास्त्रंन्ययोजयत्। कृत्तिकान्ते शनिः स्थित्वा प्राविशत्किल रोहिणीम्। दृष्ट्वा दशरथं चाग्रे तस्थौ सभ्रुकुटीमुखः। संहारास्त्रं शनिर्दृष्ट्वा सुरासुरनिषूदनम्। हसित्वा तद्भयात्सौरिरिदं वचनमब्रवीत्।' शनिरुवाच—'पौरुषं तव राजेन्द्र युद्धं चातिभयंकरम्। देवासुरमनुष्याश्च सिद्धविद्याधरोरगाः। मया विलोकिताः

[1]—मतान्ते इति शेषः।

सर्वे भस्मतां च व्रजन्ति ते । तुष्टोऽहंतवराजेन्द्रतपसापौरुषेण च । वरं ब्रूहि प्रदास्यामि मनसा यदभीप्सितम् ।' दशरथ उवाच—' रोहिणीं भेदयित्वा तु न गन्तव्यं त्वया शने । याचितं तु त्वया सौरे नान्यमिच्छामि ते वरम् । एवमस्त्विति चैवोक्त्वा वरं दत्त्वा शनिः स्थितः । प्राप्य चापि वरं राजा कृतकृत्योऽभवत्तदा । द्वादशाब्दं तु दुर्भिक्षं नाभवच्च कदाचन । एवं वरं तु संप्राप्य हृष्टरोमा स पार्थिवः । रथोपरि धनुः स्थाप्य भूत्वा चैव कृताञ्जलिः । ध्यात्वा सरस्वतीं देवीं गणनाथं विनायकम् । राजा दशरथः स्तोत्रं सौरेरिदमथाकरोत् ।' दशरथ उवाच—' नमः कृष्णाय नीलाय शितिकण्ठनिभाय च । नमो नीलमयूखाय नीलोत्पलनिभाय च । नमो निर्मांसदेहाय दीर्घश्मश्रुजटाय च । नमो विशालनेत्राय स्थूलरोम्णे नमो नमः । नमो दीर्घाय शुष्काय कालदंष्ट्र नमोऽस्तु ते । नमस्ते कोटरस्थाय दुर्निरीक्ष्याय ते नमः । नमो घोराय रौद्राय भीषणाय करालिने । नमस्ते सर्वभक्ष्याय वलीमुख नमोऽस्तु ते। सूर्यपुत्र नमस्तेऽस्तु सर्वातक्र्य नमोऽस्तु ते । नमः कालाग्निरुद्राय कृतान्ताय च वै नमः । नमो मन्दगते तुभ्यं निस्त्रिंशाय नमो नमः । तपसा दग्धदेहाय नित्यं योगरताय च । ज्ञानचक्षुर्नमस्तेऽस्तु कश्यपात्मजसूनवे । तुष्टो ददासि वै राज्यं रुष्टो वै हरसि क्षणात् । देवासुरमनुष्याश्च सिद्धविद्याधरोरगाः । त्वया विलोकिताः सर्वे दैन्यमाशु व्रजन्ति ते ।ब्रह्मा शक्रो मनुश्चैव ऋषयः सप्ततारकाः । भ्रष्टराज्याः पतन्त्येते तव दृष्ट्यावलोकिताः । देशाश्च नगरग्रामा दिशश्चैव द्रुमास्तथा । त्वया विलोकिताः सर्वे नाशं यान्ति समूलतः । प्रसादं कुरु मे सौरे वरार्थे तव संस्थितः । एवं स्तुतस्तदा सौरिर्ग्रहराजो महाबलः । अब्रवीच्च शनिर्वाक्यं हृष्टरोमा स पार्थिवम् ।' शनिरुवाच— 'तुष्टोऽहं तव राजेन्द्र स्तवेनानेन मानद । वरं ब्रूहि प्रदास्यामि स्वेच्छया रघुनन्दन ।' दशरथ उवाच—'प्रसन्नस्त्वं यदा सौरे वरं देहि ममेप्सितम् । अद्यप्रभृति सौरे ते पीडा कार्या न कस्यचित् । देवासुरमनुष्याणां पशुपक्षिशरीरिणाम् ।' शनिरुवाच—'ग्रहाणां स ग्रहो ज्ञेयो यस्तु पीडाकरः स्मृतः । अदेयो हि वरो यस्तु तुभ्यं चैव ददामि तम् । त्वया प्रोक्तं च मे स्तोत्रं यः पठिष्यति मानवः । एककालं द्विकालं वा पीडां मुञ्चामि तस्य वै । देवासुरमनुष्याणां सिद्धविद्याधरक्षसाम् । मृत्युस्थानास्थितोवापिजन्मस्थानगतोपि वा । यःपुनश्श्रद्धयायुक्तः शुचिः स्नातः समाहितः । भक्त्योपचारैः संपूज्य प्रतिमां लोहजां मम । मद्दिने तु विशेषेण स्तोत्रेणानेनपूजयेत् । पूजयित्वाजपन्स्तोत्रं भूत्वा चैव कृताञ्जलिः । माषौदनं तिलैर्मिश्र

दद्याल्लोहं च दक्षिणाम् । कृष्णां गां वृषभं वापि दद्याद्विप्राय धीमते । तस्य पीडा न चैवाहं करिष्यामि कदाचन । गोचरे जन्मलग्ने वा दशास्वन्तर्दशासु च । रक्षामि सततं तस्य पीडामन्यग्रहैः कृताम् । अनेनैव विधानेन पीडामुक्तं जगद्भवेत् । वरद्वयं तु संप्राप्य राजा दशरथस्तदा । स्वस्थानं च ततो गत्वा प्राप्तकामोऽभवन्नृपः ।' इति स्कन्दपुराणे दशरथकृतं शनिस्तोत्रम् । अन्यच्च 'कोणान्तगो रुद्रयमोऽथ बभ्रूः कृष्णः शनिः पिङ्गलमन्दसौरिः । नित्यं स्मृतो यो हरते च पीडां तस्मै नमः श्रीरविनन्दनाय । सुरासुराः किंपुरुषा गजेन्द्रा गन्धर्वविद्याधरपन्नगाश्च । पीड्यन्ति सर्वे विषमस्थिते च तस्मै नमः श्रीरविनन्दनाय । नरा नरेन्द्राः पशवो गजेन्द्राः सरीसृपाः कीटपतङ्गभृङ्गाः । पीड्यन्ति सर्वे विषमस्थिते च तस्मै नमः श्रीरविनन्दनाय । देशाश्च दुर्गाणि वनानि येन ग्रामाश्च देशाः पुरपत्तनानि । पीड्यन्ति सर्वे विषमस्थिते च तस्मै नमः श्रीरविनन्दनाय । स्रष्टा स्वयंभूर्भुवनत्रयस्य त्राणे हरिः संहरणे महेशः । एकस्त्रिधा ऋग्यजुसाममूर्तिस्तस्मै नमः श्रीरविनन्दनाय । प्रयागकूले यमुनातटे च सरस्वतीपुण्यजले गुहायाम् । यो योगिभिर्ध्येयशरीरसूक्ष्मस्तस्मै नमः श्रीरविनन्दनाय । अन्यत्र देशात्स्वगृहं प्रविष्टा यदीयवारेसुखिनोनराःस्युः । गृहाद्गता ये न पुनः प्रयान्ति तस्मै नमः श्रीरविनन्दनाय । तिलैर्यवैर्माषगुडान्नदानैर्लोहेन नीलाम्बरदानतो वा । प्रीणाति मन्त्रैर्निजवासरेण तस्मै नमः श्रीरविनन्दनाय । शन्यष्टकं यः पठति प्रभाते नित्यं स सूतैः पशुबान्धवैश्च । करोति राज्यं भुवि भूरि सौख्यं प्राप्नोति निर्वाणपदं तथाऽन्ते । ' इति शनैश्चरस्तोत्रम् । अन्यच्च स्कान्दे—' ततः कृताञ्जलिर्भूत्वा स्तुतिं चक्रे स बालकः । पिप्पलादो द्विजश्रेष्ठ प्रणिपत्य मुहुर्मुहुः । नमस्ते कोणसंस्थाय पिङ्गलाय नमोऽस्तु ते । नमस्ते बभ्रुरूपाय कृष्णाय च नमोऽस्तु ते । नमस्ते रौद्रदेहाय नमस्ते बालकाय च । नमस्ते यमसंज्ञाय नमस्ते सौरये विभो । नमस्ते मन्दसंज्ञाय शनैश्चर नमोऽस्तु ते । प्रसादं कुरु देवेश दीनस्य प्रणतस्य च ।' शनैश्चर उवाच—' परितुष्टोऽस्मि ते वत्स स्तोत्रेणानेन सांप्रतम् । वरं वरय भो वत्स येन यच्छामि वाञ्छितम् ।' पिप्पलाद उवाच—' अद्यप्रभृति वै पीडा बालानां रविनन्दन । त्वया कार्या महाभाग न स्वकीया कथंचन । यावद्वर्षाष्टकं जातं मम वाक्येन सूर्यज । स्तोत्रेणानेन योऽन्यस्त्वां ब्रूयात्प्रातरुपस्थितः । तस्य पीडा न कर्तव्या देयो लाभो महाभुज । अर्धाष्टसामिके योगे तावके संस्थितो नरः । तव वारे संप्राप्ते यस्तिलैर्लोहसंयु-

तान् । भक्त्या ददाति नो तस्य पीडा कार्या त्वया विभो । कृष्णाङ्गाय तु विप्राय तवोद्देशेन यच्छति । अर्धाष्टसामिकी पीडा तस्य कार्या त्वया न च । शमीसमिद्भिर्यो होमं तवोद्देशेन निर्वपेत् । तथा कृष्णतिलैश्चैव कृष्णपुष्पानुलेपनैः । पूजां करोति यस्तुभ्यं धूपं वै गुग्गुलुं दहेत् । कृष्णवस्त्रेण संवेष्टय तस्य त्याज्या त्वया व्यथा ।' सूत उवाच–'एवमुक्तः शनिस्तेन बाढमित्येव जल्प्य च । नारदं समनुज्ञाय जगाम निजसंश्रयम् ।' इति । इति वारव्रतानि ।

अथ तिथिनक्षत्रयोगे वारव्रतानि । कालोत्तरागमे–'नक्षत्रतिथियोगेन तिथीनां ग्रहयोगतः । पुनरेव प्रवक्ष्यामि व्रतानि तु यथास्थितम् । रोहिण्यां चन्द्रवारे चाष्टमीयोगो यदा भवेत् । अथवा सोमसंयोगे विशेषात्पूज्य वै शिवम् । पायसं घृतसंयुक्तं शिवाय विनिवेदयेत् । धूपदीपोपहारैश्च पूर्ववत्पूजयेच्छिवम् । घृतस्य प्राशनं कार्यं सर्वकामप्रदं व्रतम् । आदित्यरेवतीयोगश्चतुर्दश्यां यदा भवेत् । अष्टम्यां तु मघायोगे शिवं संपूज्य पूर्ववत् । तिलास्तु प्राशने शस्ता आदित्यव्रतमीरितम् । आरोग्यं जायते तस्य पुत्रबन्धुजनैः सह । अश्विनीभौमसंयोगश्चतुर्दश्यां यदा भवेत् । अष्टम्यां भरणीयोगस्तदा भौमव्रतं चरेत् । संपूज्य परया भक्त्या शिवं पञ्चोपचारतः । रक्तोत्पलप्राशनात्तु साम्राज्यं प्राप्नुयान्नरः । रोहिणीबुधसंयोगश्चतुर्दश्यां यदा भवेत् । अष्टम्यां वा महासेन बुधव्रतसमागमः । शिवः पूज्यो विधानेन महास्नानपुरःसरम् । महाव्रती समोपेतं प्राशयेत्पायसं घृतम् । पुत्रार्थदारपशवो वर्धन्ते तस्य नान्यथा । रेवतीगुरुसंयोगश्चतुर्दश्यां यदा भवेत् । अष्टम्यां तिष्यसंयोगाद्गुरुव्रतमिदं भवेत् । प्राशनं कापिलाज्यं तु ब्राह्मीक्षीरसमाश्रितम् । वागीशत्वमवाप्नोति व्रतस्यास्य प्रभावतः । श्रवणं भार्गवयुतं चतुर्दश्यां यदा भवेत् । शुक्रव्रतं तदा देवि पुनर्वस्वष्टमी यदा । संपूज्य परमेशानं यथाविभवविस्तरैः । प्राशनं मधु चैवात्र कर्तव्यं संयतात्मना । महाफलमवाप्नोति व्रतस्यास्य प्रभावतः । भरणीशनियोगस्तु चतुर्दश्यां यदा भवेत् । आर्द्रायोगो यदाऽष्टम्यतदामन्दव्रतंचरेत् । शिवं संपूज्य विधिवत्प्राशनं सस्यमेव हि । शनिरेकादशस्थो हि फलं यच्छति शोभनम् । विरुद्धस्थो हि दुष्टं च तदर्थं व्रतमाचरेत् । हेमरूप्यं प्रवालं च सुवर्णं मौक्तिकं तथा । शंखं संतारलोहं च क्रमाद्यत्नेन धारयेत् । यथा संभवतो वस्त्रमाचार्याय प्रयत्नतः ।' इति तिथिनक्षत्रसंयुक्तानि वारव्रतानि ।

अथ नक्षत्रव्रतानि भविष्यपुराणे–अश्विन्यामाश्विनाविष्ट्वा दीर्घायुर्जाय-

ते नरः। व्याधिभिर्मुच्यते क्षिप्रमत्यर्थं व्याधिपीडितः। भरण्यां यममभ्यर्च्य कुसुमैर-सितैः शुभैः। गन्धादिभिस्तथा शुभ्रैरपमृत्योर्विमुच्यते। अनिलः कृत्तिकायां तु वृद्धिं संपूजितः परम्। रक्तमाल्यादिभिर्दद्याद्धुतहोमेन च ध्रुवम्। इष्टः प्रजापतिः प्रीत इष्टा-न्दद्यात्पशूंस्तथा। रोहिण्या देवशार्दूल गोजाविहयकुञ्जरान्। मृगशीर्षे तथा सोमं जयमारोग्यमेव च। आर्द्रायां च शिवं पूज्य पशून्विजयमश्नुते। सितैः पद्मादिभि-र्दिव्यैर्दैवतं पाथसा शुभम्। पुत्रान्पुनर्वसौ दद्याच्चरुणा तर्पितादितिः। तिष्ये बृहस्पतिर्वृद्धिं ददाति विपुलं धनम्। भोगान्गन्धादिभिर्नागा आश्लेषायां प्रपूजिताः। तर्पिताश्च प्रयच्छंति भक्ष्याद्यैर्मधुरैः शुभैः। रक्षां विषादिदोषेभ्यः प्रीताः कुर्युः सदैव हि। मघासु पितरः सर्वे हव्यैः कव्यैश्च पूजिताः। प्रयच्छन्ति धनं धान्यं भृत्यान्पुत्रा-न्पशूंस्तथा। पूर्वायां विजयं दद्याद्भगो देवः सुतोषितः। भक्त्या प्रपूजितो दद्यादुत्त-रायां तथार्यमा। भर्तारमीप्सितं नार्याः पुंसश्च वरयोषितम्। इह जन्मनि चामु-ष्मिन्रूपद्रविणसंपदः। पूजितः सविता हस्ते विश्वतेजोनिधिः सदा। वस्त्रैः पुष्पादिभि-श्चैव ददाति विपुलं धनम्। राज्यं त्वष्टा च चित्रायां निःसपत्नं प्रयच्छति। इष्टः संपूजितः स्वात्यां तथा वायुवरं परम्। इन्द्राग्नी तु विशाखायां पीतरक्तैः प्रपूज्य तु। धनं राज्यं तु लब्ध्वेह तेजस्वी निवसेत्सदा। रक्तैर्मित्रमनूराधास्विह संपूज्य भक्तितः। प्रियो भवति सर्वेषां चिरंजीवित्वमाप्नुयात्। ज्येष्ठायां पूर्ववच्छक्रमिष्ट्वा पुष्टिमवाप्नुयात्। गुणैः सर्वैश्च संपूर्णः कर्मणा च धनेन च। मूलेन निर्ऋतिमिष्ट्वा भक्ष्यैस्तु पललादिभिः। पूर्ववत्फलमाप्नोति स्वस्थाने च ध्रुवो भवेत्। अप इष्ट्वाम्बुजैः श्वेतैर्हुत्वा पूर्वासु पूर्ववत्। संतापान्मुच्यते क्षिप्रं शारीरान्मानसात्तथा।' इष्ट्वा संपूज्य कर्मसमभिव्याहारात्। 'आषाढासु तथा विद्वानुत्तराषाढयोगतः।' पूर्वास्वाषाढास्विति संबन्धः। 'विश्वान्संपूज्य पुष्पाद्यैः स्वर्गमाप्नोति मानवः। श्रवणे त्वसितैर्विष्णुपुष्पैर्धूपैश्च शक्तितः। संपूज्य श्रियमाप्नो-ति परं विजयमेव च। धनिष्ठासुवसूनिष्ट्वा न भयं जायतेक्वचित्। महतोपि तथा श्वेतै-र्गन्धपुष्पादिभिः शुभैः। वरुणं शतभिक्ष्वर्च्य व्याधिभिर्मुच्यते नरः। आतुरः पुष्टि-माप्नोति स्वास्थ्यमैश्वर्यमेव च। अजं भाद्रपदायां तु शुद्धस्फटिकसंनिभम्। संपूज्य मुक्तिमाप्नोति नात्र कार्या विचारणा।' भाद्रपदा पूर्वा। 'उत्तरायामहिर्बुध्न्यं परां शान्तिमवाप्नुयात्।' अहिर्बुध्न्यं संपूज्येत्यनुषङ्गः। 'रेवत्यां पूजितः पूषा ददाति विविधान्पशून्। सितैः पुष्पैः स्थितिं चैव धृतिं विजयमेव च। एतैर्वै ते समाख्याता

यज्ञाः संक्षेपतो मया । नक्षत्रदेवतानां च साधकानां हिताय वै । भक्त्या वित्तानुसारेण भवन्ति फलदाः कृताः । गन्तुमिच्छेद्यदान्यत्र क्रियां प्रारब्धुमेव च । नक्षत्रदेवतायज्ञं कृत्वा तत्सर्वमाचरेत् । एवं कृते हि तत्सर्वं यात्राफलमवाप्नुयात् । क्रियाफलं च संपूर्णमित्युक्तं भानुना स्वयम् । यज्ञाभावे जपं कुर्यात्क्रियां कुर्वन्यथेप्सिताम् ।' जपं तत्तद्देवतामन्त्रजपम् । इति नक्षत्रपूजाविधिः ।

अथ योगव्रतम् । हेमाद्रौ भविष्ये—'विष्कुम्भादिषु योगेषु भवेदेकाशनोत्तमः । यो ददाति क्रमात्पार्थ घृततैलफलेक्षवः । यवगोधूमचणकनिष्पावाञ्छालितण्डुलान् । लवणं दधि दुग्धं च वस्त्रं कनकमेव च । कम्बलं गां वृषं क्षेत्रमुपानद्युगमेव च । कर्पूरं कुंकुमं चैव चन्दनं कुसुमानि च । लोहताम्रं च कांस्यं च रौप्यं चेति युधिष्ठिर । स्नातः स्वशक्त्या विधिवत्सर्वपापैः प्रमुच्यते । न वियोगमवाप्नोति योगव्रतमिदं स्मृतम् ।' इति ।

अथ वाराहपुराणोक्तं व्यतीपातव्रतम् । धरण्युवाच—'यस्त्वयोक्तो व्यतीपातस्तस्य कर्म वदस्व तत् । कस्य पुत्रः कथं पूज्यः पूजिते तत्र किं फलम् ।' वराह उवाच—'यदा बृहस्पतेर्भार्यां तारां जग्राह शीतगुः । मित्रत्वात्प्राह तं सूर्यस्त्यज भार्यां बृहस्पतेः । चक्रे चन्द्रो न तद्वाक्यं हितं शिक्षान्वितं यदा । रुष्टस्तदा किलादित्यो दीप्तदृष्ट्याभ्युदैक्षत । तावत्सोमोऽपिरुष्टोऽस्यततोऽन्योन्यमवैक्षताम् । उभयोर्दृष्टिसंपाते क्रुद्धयोः सोमसूर्ययोः । उग्रदास्योऽभवद्धोरः पुरुषः पिङ्गलेक्षणः । दंष्ट्रोष्ठदीर्घदशनो भ्रुकुटीकुटिलाननः । कपिलःश्मश्रुकेशान्तोलम्बभ्रूःसुकृशोदरः । शिरालो दीर्घजिह्वश्च सूर्याग्नियमसंनिभः । स भोक्तुकामस्त्रैलोक्यं रवीन्दुभ्यां निवारितः । क्रोधक्षुधे मां बाधेते पात्येते कुत्र ते मया ।' सूर्यसोमावूचतुः-'कोपदृष्टेर्नौवि विधादतिपाताद्भवानभूत् । व्यतीपातस्ततो नाम भवान्भुवि भविष्यति ।' यस्मिन्काले त्वदुत्पत्तिस्तदा कल्याणकारिणः । व्यतीपाताय भद्रं ते त्वयि यः पापकारकः । तदन्नं क्षुधितो भुंक्ष्व तत्र कोपो निपात्यताम् ।' व्यतीपात उवाच—'नमो वां पितरौ मेऽस्तु क्रोधपातः स भोजनः । दत्तो भवद्भ्यामधुना प्रसादः क्रियतां मम ।' रवीन्दू ऊचतुः—'स्नानदानजपहोमपूजनं यस्त्वदीयसमये समाचरेत् । तस्य पुण्यमिह ते प्रसादतोऽनन्तमस्तु सुत नस्त्वनुग्रहात् । तत्काले तव विदधाति पूजनं यस्तस्येष्टं भवतु भवेत्सुभद्ररूपः । पुत्रायुर्धनसुखकीर्तिपुष्टिरूपारोग्याद्यं गुणिजनवल्लभेष्टपूर्वम् ।' वराह उवाच—

'एतस्मात्कारणाद्भूमौ व्यतीपातोऽर्च्यते नरैः । अर्चिते च फलं यत्स्यात्तदुक्तं च समासतः । विस्तरेणार्चितफलं गदितुं केन शक्यते । यथार्च्यते व्यतीपातः स विधिः श्रूयतामिह । शुभे व्यतीपातदिने विवाहयेत्सपञ्चगव्येन महानदीजलम् । उपावसेद्वै पवमानजापको जपेत्तुशूद्रोव्यतिपात ते नमः । छादिते ताम्रपात्रेण शर्करापूरिते घटे। काञ्चनाब्जे प्रतिष्ठाप्य हैममष्टभुजं नरम् ।' अष्टभुजः अष्टादशभुजः । उत्पत्ति वाक्ये व्यतीपातमूर्तेरष्टादशभुजत्वश्रवणात् । उत्पत्तिवाक्यानुसारित्वाच्च विनियोगवाक्यस्य । यथा भगवद्गीतासु चत्वारो मनवस्तथेत्यत्र चत्वारश्चतुर्दशेत्यर्थः ।' गन्धपुष्पाक्षतैर्धूपदीपवस्त्रनिवेदनैः । भक्ष्यैर्भोज्यैः फलैश्चित्रैर्मासि मार्गशिरेऽर्चयेत् । नमस्तेऽस्तु व्यतीपात सोमसूर्यसुत प्रभो । यद्दानादिकृतं किंचित्तदनन्तमिहास्तु मे । इत्युक्त्वा पञ्चरत्नाढ्यं सपुष्पाक्षतमञ्जलिम् । प्रक्षिपेत्तु क्षणादेव सर्वपापक्षयो भवेत् । यदि द्वितीये च दिने व्यतीपातो भवेन्नहि । तदा पूर्णोपवासस्तु दद्यात्तत्सकलं गुरोः । पारणं व्यतिपातान्ते कुर्यात्संप्राश्य गोमयम् । अथैकस्मिन्दिने धात्रि व्यतीपातो भवेद्यदि । तत्रैव हि तदा दत्त्वा उपवासं समाचरेत् । कुर्यादेवं मासि मासि व्यतीपातांस्त्रयोदश । चतुर्दशे तु संप्राप्ते कुर्यादुद्यापनं बुधः । व्यतीपाताय स्वाहेति क्षीरवृक्षसमिच्छतम् । आज्यक्षीरतिलानां च होतव्यं वै शतं शतम् । शर्करापूर्णकुम्भं च सहसोपस्करं परम् । शय्यामुपस्करैर्युक्तां प्रदद्याद्व्रतदेशिने । व्यतीपातमहं महान्तं रवीन्दुसूनुं सकलेष्टलब्ध्यै । समस्तपापस्य मम क्षयोऽस्तु पुण्यस्य चानन्तफलं ममास्तु । इति समर्प्य गुरुः परिपूज्यते कटककुण्डलकण्ठविभूषणैः । सकलमेव समर्प्य यथोदितं यदुपलभ्यमिह शृणु तन्महि । धेनुं पयस्विनीं दद्यात्सुवर्णवरदक्षिणाम् । तस्मै शय्यां समासाद्य सारदारुमयीं दृढाम् । दशपत्रचितां रम्यां हेमपत्रैरलंकृताम् । हंसतूलीप्रतिच्छिन्नां शुभ्रां गण्डोपधानिकाम् । प्रच्छादनपटीयुक्तां धूपगन्धादिवासिताम् । ताम्बूलकुङ्कुमक्षोदकर्पूरागुरुचन्दनम् । दीपिकोपानहच्छत्रं प्रदद्याच्चमरासनम् । देहान्ते सूर्यलोकाय विमानै रत्नसप्रभैः । अप्सरोगणसंभोग्यैर्गीतनृत्यविलासिभिः । गत्वा कल्पार्बुदशतं मोदते त्रिदशार्चितः । तदन्ते राजराजः स्याद्ध्रुवसौभाग्यभाग्भवेत् । कीर्त्याढ्यो गुणपुत्रायुरारोग्यधनधान्यवान् । प्रतापाज्ञामहैश्वर्ययुक्तो भोगी बहुश्रुतः । जनसौभाग्यसंपन्नो यावज्जन्माष्टकायुतम् । दर्शे शतगुणं दानं तच्छतघ्नं दिनक्षये । शतघ्नं तच्च संक्रान्तौ शतघ्नं विषुवे ततः । युगादौ तच्छतगुणमयने तच्छताहरम् । सोमग्रहे तच्छतघ्नं तच्छ-

तघ्नं रविग्रहे । असंख्येयं व्यतीपाते दानं वेदविदो विदुः । व्यतीपाते वैधृतौ च दत्त-स्यान्तो न विद्यते । व्यतीपाते विशेषेण स हि शस्तः प्रकीर्तितः । उत्पत्तौ लक्षगुणं कोटिगुणं भ्रमणनाडिकायां तु । अर्बुदगुणितं पतने जपदानाद्यक्षयं पतिते । जन्म-द्वाविंशतिनाड्यो भ्रमणं त्वेकविंशतिः । व्यतीपातस्य पतनं दशसप्तस्थितिं विदुः ।सम-र्पितं यद्व्यतिपातकाले पुनः पुनस्तद्रविशीतरश्मी । प्रयच्छतः कल्पशतार्बुदानि विव-र्धमानं न हि हीयते तत् । तस्मान्महि त्वं व्यतिपातपूजां कुरुष्व चेत्पुण्यमनन्तमि-ष्टम् । यदि स्थिरत्वं सततं तवेष्टं समस्तधारित्वमभीप्सितं च । गणयित्वा व्यतीपात-कालं वै वेत्ति यो नरः । सर्वपापहरौतस्य भवतोभानुभेश्वरौ । पठति लिखति यः शृणोति चैतत्कथयति पश्यति कारयत्यवश्यम् । रविशशिदिनमाप्य सोपि देवैश्चिरसमयं परि-पूज्य मान आस्ते ।' इति वराहपुराणोक्तं व्यतीपातव्रतम् ।

अथ व्यतीपातव्रतान्तरम् । युधिष्ठिर उवाच—' येन व्रतेन चीर्णेन न पश्ये-द्यमशासनम् । परिपृच्छाम्यहं ब्रह्मन्पापघ्नं व्रतमुत्तमम् । तद्व्रतं ब्रूहि विप्रर्षे कृत्वा जगति वै कृपाम् ।' मार्कण्डेय उवाच— ' शृणु राजन्व्रतमिदं हर्यश्वेन पुरा कृतम् । तेनैव राज्ञा तद्दत्तं शूकराय च दुःखिने । एकदा तु मृगित्वा स हर्यश्वो राजसत्तमः । श्रान्तश्चरन्वने राजन्दृष्ट्वा तत्रैव शूकरम् । दग्धपादकटिं चैव दग्धग्रीवमुखोदरम् । दृष्ट्वा तथाविधं तं तु कृपां चक्रे दयापरः । केन कर्मविपाकेन अवस्थां प्राप्तवानयम् । अहो कष्टमहो कष्टं शूकरेणोपभुज्यते । अवश्यमनुसर्तव्यं कृतं कर्म शुभाशुभम् । इत्युक्त्वा तत्स्वरूपेण राजा तं प्राह शूकरम् । इयती किमवस्था ते तन्मम ब्रूहि शूकर। तच्छ्रुत्वा नृपतेर्वाक्यं निःश्वसञ्छूकरो मुहुः । स्मृत्वा पुरा कृतं कर्म प्रत्युवाचाथ तं नृपम् । शृणु राजन्नहं पूर्वं वैश्यो विश्वसखाऽभवम् । आशाकृद्यो न दाताऽहमाश्रिते-भ्यश्च किंचन । श्रुताश्च बहवो धर्माः पुराणश्रुतिचोदिताः । तथापि पापबुद्ध्याहं न करोम्यात्मनो हितम् । आशापाशमनुप्राप्ता भग्नाशास्ते विनिर्गताः । कृतवान्पाप-मेवाहं न किंचित्सुकृतं कृतम् । एकदा तु द्विजः कश्चिद्व्यतीपाते गृहं मम । आगतो याचते मां च न किंचिद्दत्तवानहम् । ततश्च कुपितो विप्रो मम शापमथाददात् । आशाग्निर्दहते यद्वन्ममाङ्गानि पृथक्पृथक् । तथैव च तवाङ्गानि दावाग्निः पुरुषा-धम । अरण्ये निर्जले देशे निर्जने द्रुमवर्जिते । तत्र शूकरयोनौ त्वं प्रसूतिं समवा-प्नुहि । प्रसादितो मया विप्रः पुनरप्युक्तवांस्तदा । ज्ञानित्वं शूकरत्वेऽपि इत्युक्त्वाथ जगाम सः । तेन शापेन राजेन्द्र शूकरत्वमवाप्नुयाम् । अहं दुःखी तु संजातो निर्जले

निर्जने वने ।' राजोवाच—'केन त्वं मुच्यसे पापान्ममाचक्ष्वेह शूकर । येन शक्यो मया कर्तुं तव पापस्य संक्षयः ।' वराह उवाच—'श्रूयतां मम राजेन्द्र मुक्तिःसाध्येन कर्मणा । व्यतीपातव्रतं नाम कृतं राजंस्त्वया पुरा । यथा माता सुतस्येह सर्वस्य हितकारिणी । तथा व्रतमिदं राजन्निह लोके परत्र च । यथैवाभ्युदितः सूर्यः समग्रं च तमो दहेत् । इदं व्रतं तथैवेह सर्वपापं व्यपोहति।सकृत्स्मृतो यथा विष्णुर्नृणां परमनिर्वृतिम् । ददात्येव न संदेहस्तथा व्रतमिदं शुभम् । शतमिन्दुक्षये दानं सहस्रं तु दिनक्षये । विषुवे शतसाहस्रं व्यतीपाते त्वनन्तकम् । व्यतीपातव्रतस्यास्य विधानं शृणु तत्त्वतः । माघे वा फाल्गुने वापि अन्यस्मिन्मासि वा भवेत् । व्यतीपातो दिने यस्मिन्प्रारभेद्व्रतमुत्तमम् । तिलैः पूर्णं शरावं च सगुडं गुरवेऽर्पयेत् । एवं द्वितीये दातव्यं तृतीये तु समापयेत् । सघृतं पायसं चैव दातव्यं चोत्तरत्रये । एवं संवत्सरस्यान्ते देवस्यार्चां तु कारयेत् । शंखचक्रगदापाणिं पद्महस्तं हिरण्मयम् । वस्त्रयुग्मेन संवेष्ट्य पूजयेद्गरुडध्वजम् । गोक्षीरेणैव संपूर्णं कांस्यभाजनमुत्तमम् । स्थापयेद्देवदेवस्य स्थापनं तत्र कल्पयेत् । शय्यां च संनिधौ तस्य स्थाप्य देवमनुस्मरेत् । अनन्तशयने देवमनन्तफलदं प्रभुम् । लक्ष्म्या समन्वितं विष्णुं भक्त्या संपूजयेद्गुरुम् । वैदिकेनैव मन्त्रेण जातीपुष्पैः समर्चयेत् । पायसेनैव नैवेद्यं शर्करासयुतेन तु । दत्त्वा चैव तु नैवेद्यं देवाय प्रार्थयेद्व्रती । व्यतीपातव्रतं देव तवानन्तसमर्पितम् । भवत्वनन्तफलदं ममजन्मनिजन्मनि । देवदेवं हृषीकेशं प्रार्थयित्वा ततो व्रती । तत्सर्वं गुरवे दद्याच्छ्रोत्रियाय कुटुम्बिने । व्रतोपदेष्ट्रे विदुषे ब्राह्मणाय विशेषतः । भूमिर्वाथ सुवर्णं वा दक्षिणा तु विधीयते । ब्राह्मणान्भोजयित्वा तु व्रतमेतत्समापयेत् । इदं व्रतं त्वया देव गृहीतं पूर्वजन्मनि । स्वर्गापवर्गदं नृणामनन्तफलदं शुभम् । मुच्यते किल्बिषात्तस्माच्छूकरत्वान्न संशयः । तेनैवमुक्तो हर्यश्वः शूकरं वाक्यमब्रवीत् । मया कृतमिदं सर्वं तत्फलं ते ददाम्यहम् । एवमुक्त्वा नृपश्रेष्ठः शूकराय फलं ददौ । तत्क्षणात्तेन पुण्येन शूकरो मुक्तकिल्बिषः । मुक्तः शूकरदेहाच्च सर्वाभरणभूषितः।दिव्यं विमानमास्थाय वाक्यं चेदमुवाच ह । हे जनाः किं न जानीध्वं व्यतीपातव्रतोत्तमम् । इत्युक्त्वा स्वर्गतः सोऽथ राज्ञो वै पश्यतस्तदा । तं दृष्ट्वा विस्मितो भूत्वा राजापि श्रद्दधे व्रतम् । ततो राजा पुरं गत्वा व्रतं चाकारयज्जनान् । सर्वंश्च कृतवांस्तत्र व्यतीपातव्रतं शुभम् । ततो राज्यं चिरं कृत्वा देवदेवस्य चक्रिणः । हर्यश्वः प्राप्तवांस्तेन विष्णोस्तत्परमं पदम् । अतस्त्वं कुरु राजेन्द्र

व्यतीपातव्रतोत्तमम् । सर्वपापक्षयकरं नृणामिह सुखप्रदम् । इदं यः कुरुते मर्त्यः श्रद्धाभावसमन्वितः । सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् । यया तु पुत्रकामिन्या कृतं सा लभते सुतान् । स्त्रीकामेनेह तद्वत्स लभेन्नारीमनुत्तमाम् । व्यतीपातव्रतमिदं व्यतीपातदिने पठेत् । ज्ञानवान्धनवाञ्छ्रीमानिहैव च सुखी भवेत् । य इदं शृणुयाद्भक्त्या विष्णुलोके महीयते ।' इति नारदीयपुराणोक्तं व्यतीपातव्रतम् ।

अथ करणव्रतम् । तद्विधानं हेमाद्रौ—माघशुक्लपक्षे बवकरणे सोपवासः कलशे ताम्रपात्रं निधाय तत्र कर्षमितायां सुवर्णप्रतिमायामच्युतं गन्धादिभिः पूजयित्वा अष्टाक्षरमन्त्रं जपेत् । एवं षड्वारं कृत्वा सप्तमे उद्यापनं कुर्यात् । सप्त ब्राह्मणान्भोजयित्वा दक्षिणां दद्यात् । एवं बालवादिविष्टयन्तेष्वपि कुर्यात् । एवं कृते राजसूयाश्वमेधयोः फलं भवतीति ।

अथ भविष्योत्तरोक्तं भाद्रव्रतम् । युधिष्ठिर उवाच—'भद्रा नामेति काप्येषा कथं वा पूज्यते नरैः ।' कृष्ण उवाच—'सुता मार्तण्डदेवस्य क्षये वा जनिता पुरा । शनैश्वरस्य भगिनी सा सोदर्यभयंकरी । सा जातमात्रा भुवनं ग्रस्तुं समुपचक्रमे । निर्याति यदि कार्येऽपि कश्चित्तस्य पुरःस्थिता । विघ्नं करोति स्वपतो भुञ्जानस्य स्थितस्य च । सर्वविघ्नकरी रौद्रा समाजोत्सवनाशिनी । नित्योद्वेगकरी पार्थ विनाशयति या जगत् । तां तु दुर्विनयासक्तां दृष्ट्वा देवो दिवाकरः।चिन्तयामास कस्यापि यच्छाम्येनां सुमध्यमाम् । कन्या दुर्विनया गेहे पितृदोषेण गृह्यते । तस्मात्सर्वप्रयत्नेन कन्या देया विजानता । चिन्त्यैवमशुभां भद्रां यस्य यस्य प्रयच्छति। तं तं नयेत्क्षयं चैव सुरराक्षसकिंनरम् । मण्डपं मण्डपारम्भे विनाशयति तत्क्षणात् । विवस्वांश्चिन्तयामास कस्येयं प्रतिपाद्यते । विरूपा दुष्टहृदया गर्दभास्या त्रिपादिका । ऊर्ध्वरोमा महादंष्ट्रा स्वेच्छाचारविहारिणी । दत्ताप्येषा न सौख्याय भवतीह कथंचन । एवं वितर्कयन्देव आस्ते यावद्दिवस्पतिः । तावत्तया जगत्सर्वं दुष्टया समभिद्रुतम् । अथाजगाम सवितुः पार्श्वे ब्रह्माण्डसंभवः । उपालंभं ददौ चास्य विष्टिदौष्ट्यमशेषतः । भास्करस्तमुवाचेदं स्वयंभूर्भुवनेश्वरः। भवान्कर्ता च हर्ता च कस्मादेवं प्रभाषसे । एवमुक्तस्तदा ब्रह्मा भास्करेणामितद्युतिः । उवाच विष्टिमानाय्य शृणु भद्रे मयोदितम् । करणैः सह वर्तस्व बवबालवकौलवैः । सप्तमेऽर्धदिने प्राप्ते यदभीष्टं कुरुष्व तत् । यात्राप्रवेशमाङ्गल्यकृषिवाणिज्यकारकान् । भक्षयस्वाभिमुखगान्नरानुन्मार्गगामिनः । नोद्वेजनीयो हि जनो भवत्या दिवसत्रयम् ।

पूज्यासुरासुराणांत्वं दिवसार्धं भविष्यसि । उल्लङ्घ्य ये प्रवर्तन्ते भद्रेत्वां निर्भया नराः । तेषां विनाशाय शुभं कार्यमार्ये सुनिश्चितम् । एवमुक्त्वा गतो ब्रह्मा भद्रापि भुवनत्रयम् । बभ्रामोद्भ्रान्तहृदया भीषयन्ती सुरासुरान् । एवमेषा समुत्पन्ना विष्टिरिष्टविनाशिनी । निंदितेयं च कौन्तेय तस्मात्तां परिवर्जयेत् । सिंहग्रीवा सप्तभुजा त्रिपदा पुच्छसंयुता । खरोत्तमाङ्गवदना प्रेतारूढा कृशोदरी । ज्वलच्चक्षुश्च दधती हस्तैः पाशासिशक्तिकाः । नरमुण्डांश्च मालाश्च मुद्राः सप्तविधाः स्मृताः । सजलजलदवर्णा दीर्घनासोग्रदंष्ट्रा विपुलहनुकपोला पिण्डिकोद्बद्धजङ्घा । अनलशतसहस्रं चोद्गिरन्ती समन्तात्पतति भुवनमध्ये कार्यनाशाय विष्टिः । नाम्नौ धिया केतुशताग्रजाता कृष्णाङ्गयष्टिः सततं कुचैला । देवैर्नियुक्ता करणान्तसंस्था विष्टिस्तु सर्वत्र विवर्जनीया । मुखे तु घटिकाः पञ्च द्वे तु कण्ठे सदा स्थिता । हृदि चैकादश प्रोक्ताश्चतस्रो नाभिमण्डले । पञ्च कट्यां तु विज्ञेयास्तिस्रः पुच्छे जयावहाः । मुखे कार्यविनाशाय ग्रीवायां धननाशिनी । हृदि प्राणहरा ज्ञेया नाभ्यां तु कलहावहा । कट्यामर्थपरिभ्रंशो विष्टिपुच्छे ध्रुवं जयः । पृथिव्यां यानि कर्माणि अशुभानि शुभानि च । तानि सर्वाणि सिध्यन्ति विष्टिपुच्छे नृपोत्तम । जलानलेन्दुक्रूरेशयाम्यवातेन्द्रदिक्क्रमात् । संख्यासमानप्रहरैर्विष्टेर्दुष्टं मुखं यतः । कराली नन्दिनी रौद्रा सुमुखी दुर्मुखी तथा । त्रिशिरा भैरवी हंसी ह्यष्ट चैतास्तु विष्टयः । धन्या त्वधोमुखी भद्रा महामारी खरानना । कालरात्रिर्महारात्रिर्विष्टिश्च कुलपुत्रिका । भैरवी च महाकाली असुराणां क्षयंकरी । द्वादशैतानि नामानि प्रातरुत्थाय यः पठेत् । न च व्याधिभयं तस्य रोगी रोगात्प्रमुच्यते । ग्रहाः सर्वेऽनुकूलाः स्युर्न च विघ्नादि जायते । रणे राजकुले द्यूते सर्वत्र विजयो भवेत् । यश्च पूजयते नित्यं शास्त्रोक्तविधिना नरः । तस्य सर्वार्थसिद्धिस्तु जायते नात्र संशयः । एवमेषा समुत्पन्ना विष्टिरिष्टविनाशिनी । तस्मान्नरेण कौन्तेय वर्जनीया फलार्थिना । येनोपवासविधिना व्रतेन च युधिष्ठिर । पूजिता तोषमायाति तदेव कथयामि ते । यस्मिन्दिने भवेद्भद्रा तस्मिन्नहनि भारत । उपवासस्य नियमं कुर्यान्नारी नरोऽथ वा । यदि रात्रौ भवेद्विष्टि एकभक्तं दिनत्रयम् । कार्यं तेनोपवासः स्यादिति पौराणिको विधिः । प्रहरस्योपरि यदा स्याद्विष्टिःप्रहरत्रयम् । उपवासस्तदा कार्य एकभक्तमतोऽन्यथा । सर्वौषधिजलैः स्नानं सुगन्धामलकैरथ । नद्यां तडागेऽथ गृहे स्नानं सर्वत्र शस्यते । देवान्पितॄन्समभ्यर्च्य ततो दर्भमयीं शुभाम् । विष्टिं कृत्वा पुष्पधूपैर्नैवेद्यादिभिरर्चयेत् । होमं तु नामभिर्विष्टेः शतमष्टोत्तरं

नृप । भुञ्जीत दत्त्वा विप्राय तिलान्पायसमेव च । सतैलां कृशरां भुक्त्वा पश्चाद्भुञ्जीत कामतः । छायासूर्यसुते देवि विष्टे इष्टार्थनाशिनि । पूजितासि मया शक्त्या भद्रे भद्रप्रदा भव। उपोष्य विधिनाऽनेन दशसप्त यथाक्रमात् । उद्यापनं ततः कुर्यात्पूर्ववत्पूज्यभानवीम् । स्थापयित्वायसे पीठे कृशरान्नं निवेदयेत् । परिधाप्य कृष्णयुगं स्तुत्वा मन्त्रेण तां पुनः । ब्राह्मणाय पुनर्दद्याल्लोहं तैलं तिलांस्तथा । कृष्णां सवत्सां गामेकां तथैव कृष्णकम्बलम् । दक्षिणां च यथाशक्त्या दत्त्वा भद्रां विसर्जयेत् । य एवं कुरुते पार्थ सम्यग्भद्राव्रतं नरः । विघ्नो न जायते तस्य कार्यारम्भे कदाचन । राक्षसा वा पिशाचा वा पूतना शाकिनी ग्रहाः । न पीडयन्ति तं मर्त्यं यो भद्राव्रतमाचरेत् । न चैवेष्टवियोगः स्यान्न हानिस्तस्य जायते । देहान्ते याति सदनं भास्करस्य न संशयः । सूर्यात्मजातिभयदा भगिनी शनेर्या मर्त्यैं भ्रमत्यतिरपा (?) करणक्रमेण । तां कृष्णभासुरमुखीं समुपोष्य विष्टिमिष्टार्थसिद्धिमबुधोऽपि पुमानुपैति ।'

इति विष्टिव्रतम् ।

अथ तत्रैवोक्तं भाद्रव्रतान्तरम् । श्रीकृष्ण उवाच—'तथान्यदपि ते वच्मि विष्टिव्रतमनुत्तमम् । यत्कृत्वा विष्टितो न स्याद्भयं क्वापि युधिष्ठिर । सुकरं सुगुणं चेष्टं सर्वकामार्थदं नृणाम् । परं प्रीतिकरं भानोः सर्वविघ्नोपशान्तिदम् । मार्गशीर्षेऽमले पक्षे चतुर्थ्यामारभेद्बुधः । संपूज्य ब्राह्मणं श्रेष्ठं विष्ट्यादौ भरतर्षभ । प्रागुक्तां पूज्य तां देवीं मन्त्रमेतदुदीरयेत् । भद्रे भद्राय भद्रं हि करिष्ये व्रतमेव ते । निर्विघ्नं कुरु मे देवि कार्यसिद्धिं च भावय । सुस्नातः पूज्य तामेवं ब्रह्माणं च स्वशक्तितः । ततो भुञ्जीत राजेन्द्र यावद्भद्रा न जायते । अथ वान्तेऽपि भद्रायाः कामतो वाग्यतः शुचिः । न किंचिद्भक्षयेत्प्राज्ञो यावद्भद्रा प्रवर्तते । अनेन विधिना पार्थ प्रतिभद्रं समाचरेत् । नरो वा यदि वा नारी सर्वकामार्थसिद्धये । ततः संवत्सरे पूर्णे प्रतिमां कारयेद्बुधः । लौहीं शिलामयीं वापि दारुजां च स्वशक्तितः । शक्त्या चोद्यापनं कृत्वा स्थापयित्वा यथाविधि । पूजयेद्भक्तिमान्विप्रो मन्त्रैरेभिरुदारधीः । पूजितासि यथापूर्वमिन्द्रेण धनदेन च । विष्णुना शंकरेणाथ तथाज्ञः पूजयाम्यहम् । निर्विघ्नेनार्थसंसिद्धिर्यथा तेषां कृता त्वया । तथा ममापि भक्तस्य भद्रे भद्रप्रदा भव । अज्ञानादथ वा दर्पात्त्वामुल्लङ्घ्य कृतं हि यत् । तत्क्षमस्वाशुभं मातर्दीनस्य शरणार्थिनः । इति कुर्याद्यथाशक्त्या वित्तशाठ्यविवर्जितः । अशक्तः परकीयां वा पूजयित्वा नराधिप । अभावे लेखजां कृत्वा विधिं निष्पादयेद्बुधः । एवं हि कुरुते यस्तु भक्त्या भद्राव्रतं

नरः । भद्रायामपि कार्याणि तस्य सिध्यंत्यसंशयम् । इह लोके सुखं भुक्त्वा पुत्रैश्वर्यसमन्वितः । अविघ्नेन नरव्याघ्र दीर्घायुर्व्याधिवर्जितः । ततोऽन्ते स्वर्गतिं प्राप्य मोदते सुरराडिव । एतत्पुरा महेन्द्रेण चीर्णं वृत्रजिघांसया । विमानार्थं कुबेरेण नीतं यत्त्रिदशारिणा । शम्भुना त्रिपुरान्ताय पाञ्चजन्याय विष्णुना । भद्रं सुभद्रभवतीह सदैव पुंसां ये भक्तिपूर्वकमिदं व्रतमादरेण।भद्राभिधानमभिधाय मनोनुगं ये कुर्वन्ति ते ह्यखिलमेव नृपाप्नुवन्ति ।' इति द्वितीयभद्राव्रतम् ।

अथ संक्रान्तिव्रतानि । नन्दिकेश्वर उवाच–'अथातः संप्रवक्ष्यामि धान्यव्रतमनुत्तमम् । यत्कृत्वा हि नरो राजन्सर्वकामानवाप्नुयात् । अयने विषुवे चैव स्नानं कृत्वा विचक्षणः । व्रतस्य नियमं कुर्याद्ध्यात्वा देवं दिवाकरम् । करिष्यामि व्रतं देव त्वद्भक्तस्त्वत्परायणः । तदविघ्नेन मे यातु तव देव प्रसादतः । इत्युच्चार्य लिखेत्पद्मं कुङ्कुमेनाष्टपत्रकम् । भास्करं पूर्वपत्रे तु आग्नेये तु तथा रविम् । विवस्वन्तं तथा याम्ये नैर्ऋत्ये भूषणं तथा । आदित्यं वारुणे पत्रे वायव्ये तपनं तथा । मार्तण्डमिति कौबेरे ईशान्ये भानुमेव च । एवं च क्रमशोऽभ्यर्च्यो विश्वात्मा सर्वदेशतः । कृताञ्जलिपुटो भूत्वा त्वर्घ्यं दद्यात्समन्त्रकम् । कालात्मा सर्वभूतात्मा वेदात्मा सर्वतोमुखः । व्याधिमृत्युजराशोकसंसारभयनाशनः ।' इत्यर्घ्यमन्त्रः । 'पुष्पधूपैः समभ्यर्च्य शिरसा प्रणिपत्य च । रविं ध्यात्वा ततो दद्याद्धान्यं प्रस्थं द्विजातये । प्रतिमासं पुनस्तद्वत्पूज्यो देवः सहस्रपात् । एवं सदा प्रदातव्यं धान्यं प्रस्थं द्विजन्मने । एवं संवत्सरे पूर्णे कुर्यादुद्यापनक्रियाम् । अर्घ्यपात्रं हि सौवर्णं कारयेन्मण्डलं शुभम् । द्विभुजं पूजयेद्भानुं रक्तवस्त्रयुगान्वितम् । धान्यद्रोणेन सहितं तदर्धेन स्वशक्तितः । स्वर्णशृङ्गीं रौप्यखुरां कांस्यदोहां पयस्विनीम् । रविरूपं द्विजं ध्यात्वा तस्मै वेदविदे तथा । विद्यापात्राय विप्राय तत्सर्वं विनिवेदयेत् । अग्निष्टोमसहस्राणां फलमाप्नोति मानवः । सप्तजन्मसहस्राणि धनधान्यसमान्वितः । निर्व्याधिर्नीरुजो धीमान्रूपवानपि जायते ।' इति स्कन्दपुराणोक्तं धान्यसंक्रान्तिव्रतम् ।

अथ रूपसंक्रान्तिव्रतम् । 'अथान्यदपि ते वच्मि रूपसंक्रान्तिमुत्तमाम् । संक्रान्तिवासरे तैलस्नानं कृत्वा विचक्षणः । हैमपात्रे घृतं कृत्वा हिरण्येन समन्विनम् । स्वरूपं वीक्ष्य तत्पात्रं ब्राह्मणाय निवेदयेत् । एकभक्तं ततः कृत्वा भक्त्या चैव समन्वितम् । व्रतान्ते काञ्चनं दद्याद् घृतधेनुसमन्वितम् ।

अश्वमेधसहस्राणां फलमाप्नोति मानवः । रूपयौवनसंपन्ना आयुरारोग्यसंपदा । लक्ष्मीं च विपुलान्भोगान्भुनक्तीह न संशयः । सर्वपापविनिर्मुक्तः स्वर्गलोकं स गच्छति ।' इति स्कन्दपुराणोक्तं रूपसंक्रान्तिव्रतम् ।

'अथान्यां संप्रवक्ष्ये सौभाग्यसंक्रान्तिमुत्तमाम् । शृणु नारद यत्नेन धनैश्वर्यप्रदायिनी। अयने विषुवे युक्ते व्यतीपातेन भानुना । संक्रान्तिदिवसे कुर्यादेकभक्तं विमत्सरः । पूर्ववद्भानुमभ्यर्च्य तथा चैव सुवासिनीः । सौभाग्याष्टकसंयुक्तं वस्त्रयुग्मं संयोषिते । विप्राय वेदविदुषे भक्त्या तत्प्रतिपादयेत् । एवं संवत्सरे पूर्णे कृत्वा ब्राह्मणभोजनम् । पर्वतं लवणं कृत्वा यथा विभवसारतः ।' पर्वतं पर्वताकारम् । 'काञ्चनं कमलं कृत्वा भास्करं चैव कारयेत् । गन्धपुष्पादिना पूज्य विप्राय प्रतिपादयेत् । पुष्करे च कुरुक्षेत्रे गोसहस्रफलं लभेत् । सा प्रिया मर्त्यलोकेषु या करोति व्रतं त्विदम् । शंकरस्य यथा गौरी विष्णोर्लक्ष्मीर्यथा दिवि । मर्त्यलोके तथा सापि प्रियेण सह मोदते ।' इति स्कन्दपुराणोक्तं सौभाग्यसंक्रान्तिव्रतम्

नन्दिकेश्वर उवाच–'धनसंक्रान्तिमाहात्म्यं शृणु स्कन्द विधानतः । यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः । संक्रान्तिवासरं प्राप्य शुचिर्भूत्वा समाहितः। कलशं निर्व्रणं गृह्य वारिपूर्णं निधापयेत् । सुवर्णयुक्तं तं कृत्वा प्रतिमासं तु दापयेत्। विधिनानेन वर्षान्ते प्रीयतां स दिवाकरः। पूजाविधानं सर्वत्र धान्यसंक्रान्तिवद्भवेत् । उद्यापनं प्रवक्ष्यामि संपूर्णव्रतमुत्तमम् । सौवर्णं कमलं कृत्वा सूर्यं चोपरि विन्यसेत् । हस्ते सुवर्णघटितं पङ्कजं च निवेदयेत् । गोदानं तत्र कर्तव्यमेवं संपूर्णता भवेत् । एवं कृते तु यत्पुण्यं फलं ख्यातुं न चोत्सहे । जन्मनां शतसाहस्रं धनैर्युक्तो भवेन्नरः । आयुरारोग्यसंपन्नः सूर्यलोके महीयते ।' इति स्कन्दपुराणोक्तं धनसंक्रान्तिव्रतम् ।

ब्रह्मोवाच–'आज्ञासंक्रान्तिमाहात्म्यं शृणु स्कन्द विधानतः । यां कृत्वा सर्वलोकेषु आज्ञावाञ्जायते नरः । संक्रान्तिदिवसे पुण्ये प्रारभेन्नियमं व्रती । पद्ममष्टदलं कृत्वा कुङ्कुमेन तु भास्करम् । पूजयेन्मन्त्रमुच्चार्य विधिवद्गुरुसंनिधौ । आज्ञां तेजस्करीं पृष्ठे प्रभां दीप्तिं यशस्करीम् । आज्ञां सर्वत्रगां देव मम देहि नमोऽस्तु ते । पूज्यैवं कुङ्कुमेनाथ दद्याद्विप्राय भोजनम् । उद्यापने च चण्डांशुं सौवर्णं च रथं तथा । एकचक्रं च सप्ताश्वमरुणेन समन्वितम् । यः कुर्याद्विधिनानेन आज्ञासंक्रान्तिमुत्तमाम् । अथाज्ञास्खलिता लोके सूर्यभक्तस्य जायते । गोत्रमित्रसुतेष्वेवमाज्ञा सर्वत्र जायते ।

रिपवः संक्षयं यान्ति सुखं प्राप्नोत्यनुत्तमम् ।' इति स्कन्दपुराणोक्तमाज्ञासंक्रान्तिव्रतम् ।

नन्दिकेश्वर उवाच—'वक्ष्याम्यपापसंक्रान्तिं शृणु स्कन्द विधानतः । संक्रान्त्यां नियतो भूत्वा तिलैः श्वेतैः समन्वितम् । करकं वर्धमानं[1] च प्रतिमासं निवेदयेत् । मन्त्रेणानेन तु स्नायाद्भक्तिभावसमन्वितः[2] । तिलो मां पातु पापेभ्यस्तव देव प्रासदतः । त्वं च मां रक्ष देवेश वाङ्मनःकायकल्मषात् । उद्यापनं च देवस्य[3] सौवर्णी माषकेण तु । द्विभुजा प्रतिमा कार्या रजतेनाथ कारयेत् । तिलधेनुः प्रदातव्या व्रतेऽस्मिन्नात्र संशयः । पूर्वपापप्रणाशाय आयुरारोग्यहेतवे । एतत्सर्वं पुरा प्रोक्तं ब्रह्मणा विष्णवे तथा । विष्णुरिन्द्राय जगदे तथा प्रोवाच शंभवे । शंभुश्चैव ममाचष्टे मया प्रोक्तं तव प्रभो । सर्वसंक्रान्तिदिवसे प्रारभेद्व्रतमुत्तमम् । दक्षिणोत्तरसंक्रान्तौ सर्वास्विति च केशव । अध्रुवत्वाच्छरीरस्य यौगपद्यं प्रशस्यते । न चात्र विधिलोपः स्यात्सर्वत्रैकं तु दैवतम् । नाना देवव्रतानां तु नैककालं प्रशस्यते ।' इति स्कन्दपुराणोक्तमपापसंक्रान्तिव्रतम् ।

'अथान्यत्संप्रवक्ष्यामि ताम्बूलाख्यमनुत्तमम् । विधानं पूर्ववत्कुर्याद्धान्यसंक्रान्तिवच्च तत् । ताम्बूलं चन्दनाद्यं च प्रगृह्याज्ञां द्विजोत्तमात् । यावत्संवत्सरं पूर्णं रात्रौ रात्रौ ततः परम् । ताम्बूलं भक्षयेद्विप्र कार्य्ये चैव नान्तरम् । संवत्सरान्ते तु कमलं कृत्वा चैव तु काञ्चनम् । तं पत्रकोशं कुर्वीत तथा पूगीफलालयम् । पूर्णभाण्डं प्रकुर्वीत पूगप्रस्फोटनं तथा । मुखवासादिचूर्णानां भाण्डानि च द्विजर्षभ । द्विजदाम्पत्यमावाह्य सर्वोपस्करसंयुतैः । द्रव्यैश्च पूजयेद्भक्त्या भोजयेत्षड्रसैर्द्विजान् । उपकल्पितं च यत्किंचिद्ब्राह्मणाय निवेदयेत् । एवं करोति या नारी ताम्बूलाख्यं व्रतं मम । सर्वकामानवाप्नोति मर्त्ये जातिकुलोद्भवे । सौभाग्यतेजस्त्वतुलं प्राप्नोति द्विजसत्तम । भर्त्रा पुत्रैश्च नितरां मोदते स्वगृहे सुखम् । मृता कालान्तरे पश्चात्सूर्यलोके महीयते ।' इति स्कन्दपुराणोक्तं ताम्बूलसंक्रान्तिव्रतम् ।

'अतः परं प्रवक्ष्ये विशोकसंक्रान्तिमुत्तमाम् । अयने विषुवे पुण्ये व्यतीपातो

---

१—वर्धमानं शरावम् । २—भक्तिरन्त करणस्य तदाकारवृत्ति । भावो विश्वासः । ३—देवस्य सूर्यस्य । माषकेणेति । संमितेति शेष । अथवा अथ च शक्ताशक्तविषयत्वेन व्यवस्थितो विकल्प ।

भवेद्यदि । एकभक्तं नरः कुर्यात्तिलैः स्नानं तु कारयेत् । काञ्चनं भास्करं कृत्वा यथाविभवशक्तितः । स्नापयेत्पञ्चगव्येन गन्धपुष्पैस्तु पूजयेत् । वेष्टयेद्रक्तवस्त्राभ्यां ताम्रपात्रे निधापयेत् । भास्कराय नमः पादौ जङ्घे च रवये नमः । आदित्याय नमो जानू ऊरू दिवाकराय च । अर्यम्णे च कटिं पूज्य भानवे चोदरं तथा । नमः ष्णे च बाहू द्वावर्यम्णे च पुनः स्तनौ । विवस्वते नमः कण्ठं सहस्रांशो मुखं स्मृतम् । प्रभाकर नमो नेत्रे तेजोराशे नमः शिरः । वरुणाय नमः केशान्पादादौ पूजयेद्रविम् । अर्घ्यादि पूर्ववत्कार्यं ब्राह्मणाय निवेदयेत् ।' अत्र तत्तन्नाममन्त्रेण तत्तत्स्थाने पूजनं कृत्वा सर्वोपस्करसहितां प्रतिमां भास्करभक्तायेतरसकलगुणसंपन्नाय ब्राह्मणाय दद्यादित्यखण्डार्थः । 'एवं संवत्सरे पूर्णे काञ्चनेन दिवाकरम् । सपद्महस्तं संपूज्य यथाविभवशक्तितः ।' एवमिति । एवं भक्तादिक्रमेण संपूज्येति संबन्धः । सपद्महस्तं दिवाकरं काञ्चनेन कारयेदिति अग्रेतनेन संबन्धः । 'कारयेत्पूजयेद्भक्त्या रक्तवस्त्रेण वेष्टयेत्। ततो होमं प्रकुर्वीत सूर्यमन्त्रैश्च नारद । द्वादश कपिला दद्याद्व-स्त्रालंकारसंयुताः । अशक्तः कपिलामेकां वित्तशाठ्यविवर्जितः । ग्रहणे च कुरुक्षेत्रे सत्पात्रे पूर्णपर्वणि । कोटिकोटिसुवर्णस्य दत्तस्य लभते फलम् । आयुरारोग्यमैश्वर्यं भार्यापुत्रसमन्वितः ।' इति स्कन्दपुराणोक्तं विशोकसंक्रा-न्तिव्रतम् । ❋

नन्दिकेश्वर उवाच—'अथान्यां संप्रवक्ष्यामि तेजःसंक्रान्तिमुत्तमाम् । संक्रान्तिवासरं प्राप्य स्नानं कृत्वा विचक्षणः । शालितण्डुलसंयुक्तं करकं कारये-च्छुभम् । तन्मध्ये दीपकं स्थाप्य प्रज्वलन्तं स्वतेजसा । तन्मुखे मोदकं स्थाप्य ब्राह्मणाय निवेदयेत् । अर्घ्यं च पूर्ववत्कार्यमेकभक्तं तु पूर्ववत् । संवत्सरे तु संपूर्णे कुर्यादुद्यापनं बुधः । शोभना दीपिका कार्या तन्मध्ये दीपकं न्यसेत् । कपिला सह दातव्या करकेन द्विजातये । सुवर्णकोटिदानस्य यत्फलं प्राप्यतेऽनघ । तेजसादि-त्यसंकाशो वायोर्बलमवाप्नुयात् । संक्रान्तिव्रतमाहात्म्याल्लभते नात्र संशयः ।' तेजसादित्यसंकाश इति । भवेदिति शेषः । कुत एतदित्यपेक्षायामाह—संक्रान्तीति । केचित्तु सुवर्णकोटीति श्लोकार्धानन्तरं संक्रान्तीति श्लोकार्धं योजयन्ति, तेजसेत्यादि च तस्यान्ते । इति स्कन्दपुराणोक्तं तेजःसंक्रान्तिव्रतम् ।

'अथान्यां संप्रवक्ष्यामि आयुःसंक्रान्तिमुत्तमाम् । शृणु वत्स विधानेन

यथा पुण्यं प्रवर्धते । संक्रान्तिदिवसे पूज्य पूर्ववच्च दिवाकरम् । कांस्यक्षीरघृतं दद्यात्सहिरण्यं स्वशक्तितः । मन्त्र एव पृथग्दाने पूजा सैवं प्रकीर्तिता । सक्षीरं सुरभीजातं पीयूषसमरूपधृक् । आयुरारोग्यमैश्वर्यं मम देहि द्विजार्पितम् । अनेन विधिना सम्यक्सर्वं दद्यादतन्द्रितः । उद्यापनादिकं सर्वं धान्यसंक्रान्तिवद्भवेत् । एवं कृते तु यत्पुण्यं शक्यं नेदं मयोदितुम् । निर्व्याधिरतिदीर्घायुस्तेजस्वी सर्वजन्मसु । अपमृत्योर्भयं नास्ति जीवेच्च शरदां शतम्' । इति स्कन्दपुराणोक्तमायुःसंक्रान्तिव्रतम् ।

नन्दिकेश्वर उवाच—'कीर्तिसंक्रान्तिमाहात्म्यं शृणु स्कन्द विधानतः । संक्रान्तिवासरं प्राप्य रविबिम्बं लिखेद्भुवि ।तस्य मध्ये स्थितं देवं पूजयेत्सूर्यमन्त्रतः । यथाविभवसारेण ततो विप्राय दक्षिणाम् । प्रतिमासं तु वै श्वेतं वस्त्रयुग्मं प्रदापयेत् । उद्यापनं तु रौप्यं च सूर्यमत्र प्रदापयेत् । श्वेतवस्त्रयुगच्छन्नं ब्राह्मणाय निवेदयेत् ।एवं कृते परा कीर्तिर्जायते चापि वह्निवत् । फलं न शक्यते वक्तुं गीष्पतेरपि जिह्वया । विमलं कीर्तिराज्यं च जायते नात्र संशयः । आयुरारोग्यसंपन्नो जीवेद्वर्षशतं नरः ।' इति स्कन्दपुराणोक्तं कीर्तिसंक्रान्तिव्रतम् ।

नन्दिकेश्वर उवाच—'अतः परं प्रवक्ष्यामि संक्रान्तिं च मनोरथाम् । गुडेन पूर्णकुम्भं च सवस्त्रं च स्वशक्तितः । संक्रान्तिवासरे दद्याद्ब्राह्मणाय कुटुम्बिने । एवं संवत्सरे पूर्णे स्वशक्त्योद्यापनं शुभम् । गुडेन पर्वतं कृत्वा वस्त्ररत्नैश्च शोभितम् । अयने चोत्तरे दद्याद्वित्तशाठ्यं न कारयेत् । यं यं प्रार्थयते लोकं तं तं प्राप्नोति पुष्कलम् । सर्वपापविनिर्मुक्तः सूर्यलोके महीयते ।' इति स्कन्दपुराणोक्तं मनोरथसंक्रान्तिव्रतम् ।

पुलस्त्य उवाच—'अयनादयनं यावद्वर्जयेत्पुष्पसर्पिषी । तदन्ते काञ्चनं पुष्पं घृतधेनुसमन्वितम् । दद्याच्छिवमपूपानि विप्राय घृतपायसम् । एतच्छीतव्रतं नाम शीलारोग्यसुखप्रदम् ।' इति पद्मपुराणोक्तं शीलव्रतम् ।

कृष्ण उवाच—उत्तरे ह्ययने प्राप्ते घृतप्रस्थे मनोहरे । स्नापयित्वा ब्राह्मणाय वडवां संप्रयच्छति । सर्वपापविनिर्मुक्तः सूर्यलोके चिरं वसेत् । ततो भवति भूपालः

---

१–सैव धान्यसंक्रान्तिस्थैव ।

प्रजानन्दविवर्धनः । राजव्रतमिदं प्रोक्तं परं तुष्टिकरं हरेः ।' इति भविष्योत्तरोक्तं राजव्रतम् ।

पुलस्त्य उवाच—'अयने चोत्तरे प्राप्ते यः स्नापयति केशवम् । घृतप्रस्थेन पापं स सकलं च व्यपोहति । कपिलां विप्रमुख्याय ददात्यनुदिनं तु यः । स्नानं विष्णोः प्रयच्छन्ति ये घृतेनोत्तरायणे । ते यान्ति विष्णुसायुज्यं सर्वपापविवर्जिताः ।' इति विष्णुधर्मोत्तरोक्तं घृतस्नानव्रतम् ।

अथ संक्रान्तिव्रतोद्यापनम् । 'अथान्यदपि वक्ष्यामि संक्रान्त्युद्यापनं शृणु । यदक्षयकरं लोके सर्वकामफलप्रदम् । विषुवे अयने चापि संक्रान्तिव्रतमाचरेत् । पूर्वेद्युरेकभक्तेन दन्तधावनपूर्वकम् । संक्रान्तिवासरे प्राप्ते तैलस्नानं विधीयते । रविसंक्रमणे भूमौ चन्दनेनाष्टपत्रकम् । पद्मसंकीर्णिकं कुर्यात्तस्मिन्नावाहयेद्रविम् । कर्णिकायां न्यसेत्सूर्यमादित्यं पूर्वतस्ततः । नमः सप्तार्चिषेऽग्नये याम्ये ऋङ्मण्डलाय च । नमः सवित्रे वायव्ये वारुण्यां वरुणं यजेत् । मार्तण्डमुत्तरे विष्णुमैशाने विन्यसेत्ततः । गन्धमाल्यफलैर्भक्ष्यैः स्थण्डिले पूजयेत्ततः । चन्दनोदकपुष्पैस्तु देवायार्घ्यं न्यसेद्भुवि ।' अर्घ्यमन्त्रः—'नमस्ते विश्वरूपाय विश्वधाम्ने स्वयंभुवे । नमो नमस्ते वरद ऋक्सामयजुषांपते । अनेन विधिना दत्त्वा देवायार्घ्यं नरोत्तमाः।द्विजाय सोदकुम्भं च तिलपात्रं हिरण्मयम् । कमण्डलुं यथा शक्त्या कारयित्वा निवेदयेत् । विधिनानेन कर्तव्यं मासि मासि नरोत्तम । एकभक्ताशनैः पुंभिः सर्वमेतद्यथाविधि । एकस्मिन्नह्नि कर्तव्यं वत्सरान्तेऽथ वा पुनः ।' अत्र त्रयः पक्षाः । मासि मासि कर्तव्यमित्येकः पक्षः । संवत्सरमध्ये एकस्मिन्दिने कर्तव्यमिति द्वितीय । संवत्सरान्ते कर्तव्यमिति तृतीयः।एते च शक्ताशक्तविषयत्वेन संस्थिताः । 'संवत्सरान्ते घृतपायसेन संतर्प्य वह्निं द्विजपुङ्गवांश्च । कुम्भान्पुनर्द्वादशधेनुयुक्तान्सद्रत्नहैरण्मयपद्मगर्भान् । पयस्वतीः शीलवतीश्च रौप्यखुराः सवस्त्राः खलु हेमशृङ्गीः । गावो वृषाः सप्त सकांस्यदोहा माल्याम्बरा वा चतुरोऽप्यशक्ताः । द्वेधान्ययुक्ते कपिलामथैकां निवेदयेद्ब्राह्मणपुङ्गवाय । हैमीं च दद्यात्पृथिवीं सशेषामाकर्षरौप्यामथ वापि ताम्राम् । पैष्टीमशक्तो वसुधां विधाय सुवर्णरौप्येण समं प्रदद्यात् । न वित्तशाठ्यं पुरुषोऽत्र कुर्यात्कुर्वन्नधो याति न संशयोऽत्र । यावन्महेन्द्रप्रमुखा नरेन्द्रा पृथ्वी च वह्न्यादियुतेह तिष्ठेत् । तावत्सगन्धर्वगणैरशेषैः संपूज्यते नारद नाकपृष्ठे । ततश्च

१—सशेषा शेषनागप्रतिमासहिताम् । २—पैष्टीं पिष्टनिर्मिताम् ।

कर्मक्षयमाप्य सप्तद्वीपाधिपः स्यात्कुलशीलयुक्तः । नाकस्य पृष्ठे समुखः सभार्यः प्रभूतपुत्रान्वयवन्दिताङ्घ्रिः । इति पठति शृणोति योऽतिभक्त्या विधिमखिलं रविसंक्रमेण पुण्यम् । मतिमपि च ददाति योऽपि देवैरमरपतिप्रमुखैर्वृतस्तु स स्यात् ॥ इति मत्स्यपुराणोक्तं संक्रान्त्युद्यापनम् ।

अथ वृन्ताकत्यागविधिः । भविष्योत्तरे—'वृन्ताकस्य विधिं वक्ष्ये शृणु पार्थ समाहितः । संवत्सरं वा षण्मासांस्त्रीन्मासान्वा न भक्षयेत् ।' अथ भरण्यां मघायां वा एकरात्रोपवासं कृत्वा स्थण्डिले देवानाहूय गन्धपुष्पनैवेद्यादिना पूजयेत् । भरण्यां मघायां वा पूजयेदिति संबन्धः । आवाहनप्रकारमाह—दर्भपाणिर्गन्धोदकेनावाहयेत् । यमराजमावाहयामि । कालमावाहयामि । नीलमावाहयामि । चित्रगुप्तमावाहयामि । वैवस्वतमावाहयामि । मृत्युमावाहयामि । परमेष्ठिनमावाहयामीति । ततोऽग्निमुपसमाधाय तिलाज्यं जुहुयात् । यमराजाय स्वाहा । कालाय स्वाहा । नीलाय स्वाहा । चित्रगुप्ताय स्वाहा । वैवस्वताय स्वाहा । मृत्यवे स्वाहा । परमेष्ठिने स्वाहा । अग्निर्मूर्धेत्याहुतीरष्टशतं जुहुयात् । ब्राह्मणः स्वयमेवेतरेषामाचार्यः । प्रायश्चित्तं हुत्वा स्वशक्त्या सौवर्णवृन्ताकं ब्राह्मणाय निवेदयेत् । कृष्णां गां तथा वृषभं तथैव कर्णवेष्टांगुलीयके छत्रोपानहौ कृष्णवस्त्रयुगं कृष्णकम्बलं च दद्यात् । ब्राह्मणान्संभोज्याशिषो वाचयेत् । 'अनेन विधिना यस्तु वृन्ताकं संप्रयच्छति । त्रीन्मासान्षण्मासं वा वर्षमेकं न भक्षयेत् ।' अथ चैनं विधिं कृत्वा जन्म जन्मावधि वृन्ताक त्यागं करोति विष्णुलोकं प्रयाति पुण्डरीकाश्वमेधफलमाप्नोति । 'सप्तजन्मसहस्राणि नाकपृष्ठे महीयते । सप्तजन्मान्तरं यावद्यमलोकं न पश्यति ।' इति । जन्मावधित्यागपक्षेऽपि होमादिकं पूर्ववदेव । 'वृन्ताकमप्रतिहतं वरहेमसिद्धं दद्याद्द्विजाय घृतवस्त्रसमन्वितं यः । कृत्वा तु वर्षमपि मासमथैकमेव याम्यं न पश्यति पुरं पुरुषः कदाचित् ।' इति वृन्ताकत्यागविधिः ।

अथ शत्रुनाशव्रतम् विष्णुधर्मोत्तरे रामं प्रति पुष्कर उवाच—'कृतोपवासो याम्यर्क्षे कृत्तिकासु सदैव हि । पूजयेद्वासुदेवं तु कुङ्कुमेन सुगन्धिना । श्वेतैश्च कुसुमैर्दद्याद्धूपं दद्याच्च गुग्गुलुम् । घृतेन दीपं दद्याच्च रक्तवस्त्रं तथैव च । निवेदनीयं देवाय तथा सर्वं निवेदयेत् । होतव्याश्च समिद्धेऽग्नौ तथैवासुरसर्षपाः ।' आसुरसर्षपो राजिका । 'आयुधानि च देयानि ब्राह्मणेभ्यश्च दक्षिणाः । कर्मैतदुक्तं रिपुनाशकारि

कार्यं सदा शत्रुगणप्रमाथि । कृत्वैतदग्र्यं रिपुनाशमाशु प्राप्नोति मर्त्यो न हि संशयोऽत्र ।' इति शत्रुनाशनव्रतम् ।

अथ मौनव्रतम् । शिवधर्मे–नन्दिकेश्वर उवाच–'शृणु वत्स प्रवक्ष्यामि मौनं सर्वार्थसाधकम् । मौनव्रतं महापुण्यं हुंहुं तत्र विवर्जयेत् । पुंसां भोजनकाले तु हुंकारोयदिनिर्गतः । सर्वमेव सुरामांसं तस्मान्मौने विवर्जयेत् । कर्मणा मनसा वाचा तत्र हिंसां विवर्जयेत् । मौनस्यास्य प्रभावेण ऋषयस्त्रिदिवं गताः । अब्दमेकं चरेन्मौनं यः षण्मासमथापि वा । मासत्रयं समायुक्तो मासमेकं तथैव च । मासार्धं तु ततः कुर्याद्दिवसान्द्वादशाथ वा । षट्पञ्चाथ त्रीणिवैकं मौनी भुञ्जीत यत्नतः । समाप्ते तु व्रते तस्मिन्मौनव्रतसमाहितः । लिङ्गं चन्दनजं कृत्वा षडङ्गेन तु प्रोक्षयेत्। षडङ्गम् 'गोमूत्रं गोमयं सर्पिः क्षीरं दधि च रोचना । षडङ्गमेतत्परमं मङ्गलं सर्वदा गवाम्।'इति परिभाषितम् । 'गोरोचनासमालब्धगन्धपुष्पैस्तु पूजयेत् । धूपं चागुरुके दद्यान्नमस्कारांस्ततः पुनः । करपादशिरोभिस्तं प्रणिपत्य निवेदयेत् । आत्मवित्तानुसारेण हेमघण्टाः प्रदापयेत् । शिवाग्रतो निबध्नीयाच्छिवस्यातीव वल्लभाम् । कांस्यलोहमयीं वापि एकां वा शक्तितस्तथा । शिवस्य पुरतो वेद्यां शिवभक्तांश्च पूजयेत् । पायसं घृतसंमिश्रं मधुमासपरिप्लुतम् । अनेकभक्ष्यभोज्यान्नैर्लेह्यपेयसपिच्छलैः । सर्जिकाघृतसंमिश्रैर्मण्डकैः । सुसमाहितैः । भोजयित्वा प्रव्रजितान्निरुद्वेगः मसा पयेत् । शक्त्या च दक्षिणां दद्याद्वित्तशाठ्यं विवर्जयेत् । क्रमेण चीर्यते विप्र यस्य यस्य तु यद्भवेत् । शिवभक्त्याग्रतो नित्यं शान्तिवाक्यं पुनः पुनः । शक्त्या हि दक्षिणां दद्याच्छिवभक्तान्नमेत्ततः । ताम्रपात्रे तु तल्लिङ्गं स्थाप्य पुष्पैरलंकृतम् । शिरसा धार्यं तत्पात्रं स्वयं मौनी समाहितः । स गच्छेन्नृपमार्गेण यावत्तु शिवगोचरम् । प्रदक्षिणीकृत्य शिवं त्रीन्वारांश्च समन्ततः । प्रविशेद्गर्भगृहकं स्थापयेद्देवदक्षिणे । पुनः पुनः समभ्यर्च्य गन्धपुष्पैश्च सर्वतः । नमस्कारैस्ततः पश्चात्प्रणम्य शिरसा भुवि । मौनस्यैष विधिः प्रोक्तो मया तव महामुने । अस्य मौनस्य माहात्म्याद्देवताः शिवतां गताः । एवं मौनव्रतं प्रोक्तं सर्वकामार्थसाधकम् । भुवि सर्वासमर्थानां सुकरं प्रकटीकृतम् ।' इति मौनव्रतम् ।

अथ लक्षपूजाविधिः । ईश्वर उवाच–'लक्षपूजाविधिं देवि कथयामि समासतः । यां कृत्वा प्राणिनः सर्वे मम संनिधिभागिनः । शिवरात्रौ तथाष्टम्यां सोमवारे समारभेत् । शुभेऽन्यस्मिन्दिने वापि शिवभक्तं द्विजोत्तमम् । सपत्नीकं सपुत्रं तमनू-

चानमनिन्दकम् । धर्मज्ञं दोषरहितं संतुष्टं परिपूज्य च । आचार्यं वरयेत्प्राज्ञः सुस्नातो भूषितो व्रती । ह्रस्वं च वृषलं दीनमतिदीर्घजटं तथा । देवतानभिसक्तं च बधिरं दीर्घलिङ्गकम् । वेदहीनं दुराचारं मलिनं बहुभाषिणम् । निन्दकं पिशुनं दुष्टमन्धकं च विवर्जयेत् । नित्यं निर्वर्त्य सकलं संकल्प्य मनसेप्सितम् । चम्पकैर्मल्लिकापुष्पैर्जातीकिंशुकपाटलैः । नन्द्यावर्तैः श्रियावर्तैर्द्रोणपुष्पैः कदम्बकैः । अन्यैः शिवागमप्रोक्तैर्बिल्वशाखादलैस्तथा । नागवल्लीदलैर्वापि रत्नैर्नानाविधैरपि । धान्यैश्च विविधैः शुद्धैरखण्डैर्व्रीहितण्डुलैः । लक्षपूजां प्रकुर्वीत मूलमन्त्रेण शम्भवे । स्वर्णपुष्पं प्रत्ययुतं कर्पूरावर्तिकं भवेत् । इत्येकस्मिन्दिने वापि द्वयोर्वा त्रिदिनेऽपि वा । पुष्पलाभानुसारेण बहुभिर्वा दिनैर्यजेत् । समाप्तौ च शिवायैकं सौवर्णं पुष्पमर्पयेत् । पुष्पाञ्जलित्रयं स्वर्णबिल्वशाखासमन्वितम् । भवः शर्वस्तथा रुद्रस्ततः पशुपतिः स्मृतः । उग्रो महांस्तथा भीम ईशानश्चाष्टनामभिः । पुष्पाञ्जलित्रयं दत्त्वा स्तुत्वा स्तुत्वा पुनः पुनः । क्षमाप्य च महेशानं प्रार्थयेत्तदनन्तरम् । विरूपाक्ष महेशान विश्वरूप महेश्वर। मया कृतां लक्षपूजां गृहीत्वा वरदो भव ।' इति प्रार्थनामन्त्रः ।' मृत्युंजयाय यज्ञाय देवदेवाय शम्भवे । आश्विनेशाय शर्वाय महादेवाय ते नमः ।' इति नमस्कारमन्त्रः । इति लक्षपूजाविधिः । अथोद्यापनम् । 'पञ्चामृतेन स्नपनं पलेन शतकेन वै । नारिकेलार्घ्यदानं च पताकाध्वज एव च । श्वेतवस्त्रद्वयं देयं पूजायां च शिवस्य च । पूजान्ते च तथा होमं तिलद्रव्येण कारयेत् । देवस्यानन्तरं पूजामाचार्येणैव कारयेत् ।' ततः प्रार्थनामन्त्रः— 'नमः शिवाय शान्ताय सगणाय च शूलिने । सर्वेश्वराय देवाय कारणत्रयहेतवे । निवेदयामि त्वात्मानं त्वं गतिः परमेश्वर । भूमौ स्खलितपादानां भूमिरेवावलम्बनम् । त्वयि जातापराधानां त्वमेव शरणं प्रभो । ततो विप्रा भोजनीयाः शक्त्या वापि दशाथ वा । आचार्यं पूजयेत्पश्चाच्छक्त्या दद्याच्च दक्षिणाम् । पूर्णं तद्वचनात्कृत्वा मम संनिधिभाग्भवेत् । यद्द्वारे मत्तमातङ्गा वायुवेगास्तुरंगमाः । पूर्णेन्दुवदना नार्यो लक्षपूजाविधेःफलम् ।' इति ब्रह्माण्डपुराणे लक्षपूजोद्यापनविधिः ॥ ' लक्षपूजाविधिं ब्रूमः शृणु नान्यमनाः क्वचित् । यां कृत्वा मुच्यते पापैर्नारी वाथ नरोऽपि वा । ब्रह्महा गुरुगामी च मद्यपो वा धनापहः । सकृत्पूजनमात्रेण मुच्यते किमुतान्यतः । नातः परतरं किंचित्त्रिषु लोकेषु विद्यते । किं कुलेन किमाचारैः किं शीलेन गुणेन च । यो हरिं पूजयेत्सम्यक्स कुलीनः स बुद्धिमान् ।

जम्बूद्वीपे महापुण्यं जन्म यः प्राप्य मानवः । इमामकृत्वा मूढात्मा यायात्तस्मादधोगतिम् । धर्महीनस्य मर्त्यस्य दिनान्यायान्ति यान्ति च । लोहकारस्य भस्त्रेव तस्य जन्म निरर्थकम् । पूजयेत्पूजयेद्विष्णुं भूयो भूयोपि पूजयेत् । माघे वा कार्तिके चैत्रे आषाढे श्रावणेऽपि वा । अन्येषु पुण्यमासेषु व्रतमेतत्समाचरेत् । प्रातः स्नानं विधायाथ दन्तधावनपूर्वकम् । धौतवस्त्रधरो भूत्वा नित्यं कर्म समाचरेत् । देवपूजागृहं वापि देवालयमथापि वा । गोमयेनानुलिप्याशु धातुना मृन्मयेन वा । चतुर्भिर्ब्राह्मणैः सार्धं कृत्वा च स्वस्तिवाचनम् । नान्दीश्राद्धं प्रकुर्वीत लक्षपूजाविधौ नृप । प्राणायामत्रयं कृत्वा देशकालौ वदेत्सुधीः । संकल्पयेद्यथाशक्त्या प्रत्यहं पूजयाम्यहम् । एवं संकल्प्य विधिवन्मन्त्रमेतमुदीरयेत् । गृहीतेऽस्मिन्व्रते देव पञ्चत्वं यदि मे भवेत् । तदा भवतु संपूर्णं त्वत्प्रसादाज्जगद्गुरो । एवं संप्रार्थ्य देवेशं नियमात्तुलसीदलैः । पञ्चामृतैः स्नापयित्वा शालग्रामशिलां शुभाम् । गन्धपुष्पाक्षतैर्भक्त्या पूजयेत्प्रथमं बुधः । प्रत्यहं यावती पूजा तावतीभिस्तु वर्तिभिः । पद्मान्यपि च तावन्ति विलिखेत्पञ्चधातुभिः । महाव्रतमिदं ब्रह्मन्देवानामपि दुर्लभम् । तुलसीदलैः शुभैः स्वच्छैरव्रणैरतिशोभनैः । कृम्यण्डवर्जितैर्देवं पूजयेत्तस्य नामभिः । विष्णुनामसहस्रेण ह्यथवा शतनामभिः । संख्यापूर्णफला पूजा संख्याहीना तु निष्फला । तच्चित्तो मौनवान्भूत्वा विष्णुलोकपरायणः । एवं संपूज्य विधिवत्पूजान्ते होममाचरेत् । सहस्रनामभिर्होमं स्वाहाकारसमन्वितम् । मधुमिश्रैस्तिलैर्लाजमिश्रितैः कृमिवर्जितैः । होमसंख्याविधानेन लक्षसंख्या यदा भवेत् । पूर्णाहुतिं ततः कृत्वा प्रणिपत्य समापयेत् । लक्ष्मीनारायणं देवं शंखचक्रगदाधरम् । सुवर्णप्रतिमां कृत्वा वित्तपूर्वं विचक्षणः । ब्राह्मणाय सुशान्ताय स्वदारनिरताय च । पत्नीपुत्रवते दानमक्षयं फलमश्नुते । जलशायी ब्रह्मपिता पद्मगर्भः सनातनः । अनन्तभोगशयनः प्रीयतां परमः पिता । ' इति दानमन्त्रः । 'तुलस्यभावे पुष्पैर्वा बिल्वैर्वा व्रणवर्जितैः ।सुगन्धैर्ऋतुसंभूतैः शस्तैरादाय पल्लवैः ।सहस्रं द्विसहस्रं वा त्रिसहस्रं यथाविधि । उपक्रमदिनं यावत्प्रत्यहं तावती भवेत् । उपक्रमदिने वापि स्ववसानेऽपि वा व्रती । उद्यापनं प्रकुर्वीत पूर्वोक्तेनैव मार्गतः । अन्यथा दोषमाप्नोति हीनाङ्गो जायते भुवि । एवं यः कुरुते मर्त्यो नारी वा गतभर्तृका । देहान्ते ज्ञानवान्भूत्वा विष्णुलोकमवाप्नुयात् । ब्राह्मणान्भोजयेच्छक्त्या स्वयं भुञ्जीत वाग्यतः । तुलसीदर्शनं स्पर्शो नमस्कारः प्रदक्षिणा । दानं च हरिपूजा च

धारणं तज्जलस्य यत् । भक्षणं हर्षदं चैव विष्णुलोकप्रदायकम् । महापातकयुक्तोऽपि युक्तो वा सर्वपातकैः । विष्णुपूजाविधानेन जीवन्मुक्तो न संशयः ।' इत्यग्निपुराणोक्तलक्षपूजाविधिः ।

भविष्ये तु—कार्तिके माघे वा प्रत्यहं तुलसीदलान्यर्पयेत् । ततो वैशाखे माघे वा उद्यापनं कर्तव्यम् । तत्रादावाचार्यवरणपूर्वकं पूर्वेद्युः स्वस्तिवाचनं कृत्वा प्रभाते स्थण्डिलं कृत्वाऽग्निमुखाद्याघारान्तं गृह्योक्तविधिना संपाद्य घृतपलाशचरुसहितं पञ्चमुखाद्यं जुहुयात् । अष्टाक्षरद्वादशाक्षरषडक्षरैः प्रणवेन वा यथासंख्यं मन्त्रविनियोगः दलदशांशेन तर्पणं तद्दशांशेन होमः । तदन्ते आचार्याय गां दत्त्वा स्विष्टकृतं हुत्वा होमशेषं समाप्य तद्दशांशेन ब्राह्मणान्भोजयेत् । विप्राय विष्णुसहस्रनामदानं कुर्यात् सहस्रनामभिस्तर्पणमपि । ततः सुवर्णवृन्दावने तुलसीमारोप्य आचार्याय दद्यात्स्वसृभ्रातृबन्धूनां च । इत्युद्यापनविधिः ।

अथ लक्षनमस्कारविधिः । अम्बरीष उवाच—'इक्ष्वाकूणां कुलगुरो भो ब्रह्मन्धर्मविस्तरम् । ब्रूहि पापक्षयकरं व्रतं सर्वोत्तमं परम् । ब्रह्मघ्नस्य सुरापस्य गुरुदाराभिमर्षिणः । सुवर्णस्तेयिनश्चैव पैष्टीं संपिबतोऽपि च । संकीर्णपापिनश्चैव सकलीकारिणामपि । असमं पश्यतो भार्याद्वयं दुष्टेन चेतसा । स्वसुर्जनकपत्नीनां गामिनः कामिनोऽपि वा । गुरौ विश्वासहीनस्य व्रतभ्रष्टस्य पापिनः । संध्याकर्मविहीनस्य जगत्युन्मादवर्तिनः । दासीवेश्यासंगमिनश्चण्डालीगामिनस्तथा । परस्वहारिणश्चैव देवद्रव्यापहारिणः । ब्राह्मणे भीतिदस्यैव वृत्तिच्छेदकरस्य वा । परस्वलोलुपस्याथ रहस्यकृतपापिनः । पञ्चयज्ञविहीनस्य दुःशास्त्रनिरतस्य च । गुरुनिन्दादिसंश्रोतुर्गुरुद्रव्यापहारिणः । नारीणां च विशेषेण प्रायश्चित्तं महाव्रतम् । चतुर्वेदपुराणैश्च स्मृतिभिश्चैव निश्चितम् ।' वसिष्ठ उवाच—'ब्रह्महत्यादिपापानां प्रायश्चित्तं यदीच्छसि । तदा लक्षनमस्कारं व्रतं कुरु महीपते । संकीर्णकानां पापानां प्रायश्चित्तं यदीच्छसि । तदा लक्षनमस्कारं व्रतं कुरु महीपते । सकलीकरणानां च मलिनीकरणस्य च । अपात्रीकरणानां च प्रायश्चित्तं यदीच्छसि । तदा लक्षनमस्कारं व्रतं कुरु महीपते । भ्रातृपत्नीसुतानां च गामिनः कामिनस्तथा । स्वसृभ्रातृवधूनां च स्वेच्छया गमनस्य च । दासीवेश्यासंगजस्य संक्षयं यदि वाञ्छसि । तदा लक्षनमस्कारं व्रतं कुरु महीपते । परस्वहारकस्यापि देहस्य हरणस्य च । रहस्यभेदकस्यापि रहस्यकृतपापिनः । त्यागस्य पञ्चयज्ञानां दुःशास्त्राभिरतेस्तथा । गुरुनिन्दाश्रुतेश्चापि गुरुस्वहरणस्य च । लेह्यानां चैव चोष्याणां संक्षयं यदि वाञ्छसि । तदा लक्षनमस्कारं

व्रतं कुरु महीपते । कृतस्य जन्मसाहस्रैर्मेरुविन्ध्यसमस्य च । अत्युत्कटस्य पापस्य एतज्जन्मकृतस्य च । सर्वपापस्य जातस्य संक्षयं यदि वाञ्छसि । तदा लक्षनमस्कारं व्रतं कुरु महीपते । शृणु भूप विधिं वक्ष्ये संकल्पनियमादिकम् । चातुर्मास्ये तु संप्राप्ते केशवे शयनं गते । आषाढस्य सिते पक्षे एकादश्यां समाहितः । संकल्प्य देवदेवस्य पुरतश्चक्रपाणिनः । मम लक्षनमस्कारव्रतस्य पुरुषोत्तम । निर्विघ्नेन समाप्तिं च कुरु त्वं कृपया हरे । पापपङ्कनिमग्नानां दुःखाब्धौ पततां नृणाम् । व्रतेनानेन सुप्रीतः सद्य एव जगत्पते । इति संकल्प्य मनसा कार्तिक्यां तु समापयेत् । प्रातः स्नात्वा व्रतं कुर्यान्मध्याह्ने तु सदा मुनिः । यद्वा तद्वा न भुञ्जीत भुञ्जीत लघुभोजनम् । अनृतं न वदेत्क्वापि नापध्यायेत्कथंचन । देवतानां जपं होमं न त्यजेत्तु कथंचन । अतिथिं पूजयेन्नित्यं यथाशक्त्यनुसारतः । कार्तिके मासि संप्राप्ते पौर्णमास्यां ततःपरम् । संस्थाप्य कलशं पूर्णं सवस्त्रं सपिधानकम् । विष्णोश्च प्रतिमां तत्र पूजयेद्विष्णुनामिकाम् । अतो देवेति मन्त्रेण पूजयेदुपचारकैः । नामभिः केशवाद्यैश्च अङ्गपूजा विधीयते । नैवेद्यान्तं समभ्यर्च्य कुर्यात्पश्चाच्च तर्पणम् । पौरुषेयेण सूक्तेन तिलगोधूमतण्डुलैः । देवदेव जगन्नाथ सर्वशास्त्रफलप्रद । व्रतेनानेन सुप्रीतो गृहाणार्घ्यं मयार्पितम् । इति चार्घ्यत्रयं दत्त्वा पश्चाद्धोमं समाचरेत् । पौरुषेयेण सूक्तेन शतमष्टोत्तरं शतम् । होमशेषं समाप्याथ पूर्णाहुतिमतः परम् । आचार्यं पूजयेद्भक्त्या दद्याद्गोमिथुनं गुरोः । ब्राह्मणान्भोजयेत्पश्चाच्छतविंशति पञ्च वा । दक्षिणां च यथाशक्त्या वाचयेदाशिषस्ततः । अनुज्ञातश्च तेभ्यो वै स्वयं भुञ्जीत बन्धुभिः । इदं व्रतं महापुण्यं पापारण्यदवानलः । पापपर्वतकुलिशं पापाब्धितरणोडुपम् । सर्वपापहरं नृणां सद्यो विष्णोः प्रसादनम् । नानेन सदृशं किंचित्त्रिषु लोकेषु पठ्यते । सर्वेषामाश्रमाणां च विहितश्रुतिचोदितम् । नारीणां सधवानां च विधवानां विशेषतः । सर्वेषामपि पापानां प्रायश्चित्तमिदं भवेत् ।' इति भविष्योत्तरपुराणे वसिष्ठाम्बरीषसंवादे लक्षनमस्कारविधानम् ।

अथ कार्तिके माघे वैशाखे वा लक्षवर्तिविधिः । मासपक्षाद्युल्लिख्यामुककामो लक्ष्मीसहितं विष्णुमुमया सहितं शिवं यथामिलितोपचारैः पूजयिष्ये इति संकल्प्य षोडशोपचारैः पूजां कुर्यात् । अथ सोद्यापनकथा । सूत उवाच— 'आर्यावर्ते पुरा काचिद्वेश्याभूल्लक्षणाभिधा । तस्या भुजंगः शूद्रोऽभूद्दासो नाम महाबलः । सा लक्षणा तु सुस्नाता स्थिता गोदावरीतटे । बालवैधव्यदोषेण रुदन्ती कुररीमिव । मृतं पतिं पुरः स्थाप्य बन्धुभिः परिवारिताम् । आक्रन्दन्तीं ततो वीक्ष्य शनैस्तां प्रत्यप-

यत।लुठन्तीं भुवि कायेन मुहुर्घ्नन्तीमुरो मुहुः। जडानामपि कारुण्यं जायते तां तु पश्यताम् । तदा सा लक्षणा वाक्यं स्वभुजंगमुवाच ह । कुलजानां तु नारीणां दशेयमतिदारुणा । अवस्थात्रयमेतासां तत्रेयं तु सुदारुणा । कन्यात्वं जीवभर्तृत्वं विधवात्वमिति त्रिधा । पारवश्यं च नारीणां दुःखमामरणान्तिकम् । मृतापत्यत्ववैधव्ये तथैवापुत्रता स्त्रियः । असह्यमेतत्त्रितयं वैधव्यं तत्र चोत्तरम् । शोचन्तीनां च नारीणां कस्येदं कर्मणः फलम् । निवर्ततेऽथ केनैव पृच्छन्तीमिति तामथ । उवाच दासनामासौ भुजङ्गः सूनृतं वचः । शृणु भद्रे प्रवक्ष्यामि स्रष्ट्रा सृष्टाः पुरा द्विजाः । देवानां चैव लोकानां हितार्थं मन्त्रकोविदाः । शास्त्रज्ञानात्स्वभावाच्च जीवानां यत्पुरा कृतम् । जानन्ति कर्मजफलं ते प्रष्टव्या धृतव्रताः । भुजंगवचनं श्रुत्वा तथैवमिति सा पुनः । तत्रागतं महावृद्धं याजकं नाम वै द्विजम् । पप्रच्छ तं तदा दीना प्रश्नं चोत्तरमानसा । मुनेत्वहंदुराचारा वेश्यास्मि लक्षणाह्वया । तथापि ते दयापात्रं पृच्छन्तीं मां सुबोधय । साधूनां समचित्तानां जनाः सर्वे समा भुवि । दुर्गन्धो वा सुगन्धो वा यथा वायोः समो भवेत् । मुने दशेयं नारीणां तृतीयाऽतीव दुःसहा । कर्मणा जायते चैव केनवाऽथ निवर्तते । एतद्विस्तार्य मे ब्रह्मन्कृपया वद सुव्रत । इति तस्या वचः श्रुत्वा याजको वाक्यमब्रवीत् । दैवे कर्मणि पित्र्ये च नार्यः पाके व्यवस्थिताः । अकस्माच्च रजो दृष्ट्वा स्पृष्ट्वा भाण्डाद्युपस्करान् । अज्ञानाद्वा भयाद्वापि कामाल्लोभात्कचित्स्त्रियः । अवेदयित्वा गच्छन्ति तेन दुष्यन्ति सत्क्रियाः । क्रिया लोपगता ह्येताः पापात्तस्मात्सुदुस्त्यजात् । दशामिमां प्राप्नुवन्ति सर्वा अपि न संशयः । बाल्ये वा यौवने वापि वार्धके वा कदाचन । तत्र याति दुराचारा परानेवाभिकांक्षति । श्वश्रो-श्च पतिबन्धूनामतिचारात्सुदुःसहात् । एतत्सहायतो नारी या लोपयति सत्क्रियाः । बाल्ये वैधव्यमाप्नोति सा नारी नात्र संशयः । सा तत्कर्मसहायेन रजसा दूषिता च या । मृतापत्या तथा भूत्वा वैधव्यं यौवने व्रजेत् । या नारी तु रजो दृष्ट्वा सर्वभाण्डादिसंकरम् । कुरुते यदि सा नारी वैधव्यं वार्धके व्रजेत् । या चानुकूल्यरहिता पतिधर्मेषु सर्वदा । बाल्ये वैधव्यमापन्ना गतिहीना भवत्यलम् । सर्वासामपि वैधव्ये निदानं पुष्पिता च न । शान्तिं तस्य प्रवक्ष्यामि कर्मणश्चापि लक्षणम् । कृते तु मुनिपञ्चम्या व्रते पापं च योषिताम् । क्षयं गच्छति नारीणामिति वेदविदो विदुः । शूर्पंसवायनंदत्त्वा कृते लक्ष्मीव्रतादिके । मूलावशेषंव्रजति रजोदोषो न संशयः । निर्मूलं सव्रजत्याशुलक्षवर्तीव्रते कृते । रजसोत्थं महापापं नारीणां नात्र संशयः । इति तद्वच-

नं श्रुत्वा पुनः पप्रच्छ लक्ष्मणा । मनसा शङ्किता भूत्वा सादरं मुनिपुङ्गवम् । साधु साधु महाभाग चित्तं मे भयविह्वलम् । लक्षवर्तीव्रतस्यास्य विधानं कीदृशं वद । कस्मिन्मासे तु कर्तव्यं कस्य वा तत्समर्पणम् । उद्यापनं कथं कार्यं किं फलं तस्य वा मुने । तया पृष्टो याजकोऽपि लोकानां हितकाम्यया । फलं विधानं तत्सर्वमवदद्वदतां वरः ।' मुनिरुवाच–'लोमशस्य मुनीनां च संवादं कथयामि ते । कालो हि कार्तिकोमासो वैशाखो माघएव वा । सहस्रगुणितंधत्ते व्रतंतन्मासि कार्तिके । तस्मात्कोटिगुणं धत्ते माघमासे व्रतोत्तमम् । तस्मादनन्तगुणितं फलं वैशाखमासके । एतस्मिन्मासत्रितये यस्मिन्मासे समाप्यते । तस्मान्मासद्वयात्पूर्वं प्रारब्धव्यमिदं व्रतम् । अन्ते मासि प्रकुर्वीत समाप्तिं च विचक्षणः । सहस्रवर्तिभिः कुर्यादारार्तिं विष्णवेन्वहम् । गोघृतेनाथ तैलेन सम्यगुक्तैर्मनोहरैः । यस्मिन्मासे समाप्तिः स्यात्पौर्णमास्यां तु कारयेत् । उद्यापनं विधानेन व्रतसंपूर्णकारकम् । प्रातः स्नात्वा शुचिर्भूत्वा पञ्चगव्यं तु प्राशयेत्।पुण्याहवाचनं कृत्वा आचार्यं वरयेत्ततः । त्रयोदशर्त्विजो भद्रे साग्निकान्वृणुयात्ततः । सतिलैश्च यवैः कुर्यादग्ने नय ऋचा द्विजः । वर्त्या दशांशतः कुर्यात्तर्पणं तु विचक्षणः । तर्पणस्य दशांशेन होमं कुर्याद्विचक्षणः । तर्पणोक्तेन मन्त्रेण पायसं च घृतान्वितम् । पलाशसमिधश्चैव मन्त्रेणानेन वैष्णवैः । घृतं च विष्णुगायत्र्या होमस्यैष विधिः स्मृतः । कलशेषु तथा स्थाप्य पिधानं च सवस्त्रकम् । सुवर्णप्रतिमां कृत्वा अग्न्युत्तारणपूर्वकम् । प्राणप्रतिष्ठया स्थाप्य प्राणांस्तस्यां समाहितः । आवाहनादिपुष्पान्तं पूजां कुर्याद्यथाविधि । तत्र तिस्रो रुक्ममय्यः प्रतिमाः कारयेत्ततः । श्रिया च सहितं देवं मध्यगं पूजयेद्धरिम् । तद्दक्षिणे चतुर्वक्त्रं सावित्र्या सहितं तथा । उत्तरे चोमया शंभुं पुरतो गरुडं तथा । कालो विष्णुस्तत्र वह्नी रविर्दीनो निशाकरः । रुद्रः शेषो जगद्व्यापी तेजोरूपी महेश्वरः । निरञ्जनः कलाध्यक्षो विश्वरूपी जगत्प्रभुः । स्वप्रकाशः स्वयं ज्योतिश्चतुर्व्यूहो जलाशयः । परब्रह्मेति द्विदशनामभिः पूजयेद्धरिम् । शिरो ललाटके नेत्रे कर्णे नसि मुखे तथा । कण्ठे स्कन्धे तथा बाह्वोस्तनौ वक्षस्तथोदरे । नाभौ कट्यां च जघने ऊरौ जानौ च गुल्फके । पादौ तदग्रे क्रमश अङ्गान्येन तु पूजयेत् । धूपं दीपं ततो दत्त्वा नैवेद्यं च निवेदयेत् । यद्द्रव्यं लक्षपूजायास्तद्द्रव्यं कनकस्य च । कृत्वा निवेदयेत्तस्मै पश्चात्पूजां समाचरेत् । सुवर्णस्य सुवर्णस्य पूजाद्रव्यं प्रयत्नतः । आवश्यकं तु कर्तव्यं व्रतोद्यापनकर्मणि । भक्त्या च जगदात्मानं स्तुत्वा देवं क्षमापयेत् ।

देवदेव जगन्नाथ भक्तानां कार्यकारक। त्वत्प्रसादादहं याचे शीघ्रं कार्यप्रदो भव। अनेनैव विधानेन लक्षपूजां करोति यः। पुत्रैः पौत्रैः प्रपौत्रैश्च सुखं प्राप्नोति निश्चितम्। आचार्यं पूजयेत्पश्चाद्ब्राह्मणानृत्विजस्तथा। गौर्देया च सवत्सा वै सालंकारा गुणान्विता। त्रिंशत्पलं कांस्यपात्रं घृतेन परिपूरितम्। सुवर्णवर्तिसंयुक्तमाचार्याय निवेदयेत्। अथवा तद्दशफलं तथा घृतसमन्वितम्। अथवा तु यथाशक्ति दद्यादावश्यकं त्विदम्। व्रताभावे तु वै दद्यात्कांस्यं वै घृतपूरितम्। यावज्जीवं जीवपतिर्भवत्येव न संशयः। रजोदोषविमुक्तिः स्यात्पौर्णमास्यां ददाति या। ब्राह्मणान्भोजयेत्पश्चाद्वित्तशाठ्यं न कारयेत्। एवं करोति या नारी तस्याः पुण्यफलं शृणु। अथ सर्वाणि पापानि रहस्यानि कृतानि वै। नश्यन्ति तानि सर्वाणि व्रतस्यास्य प्रभावतः। चाण्डालगामिनी वापि तथा शूद्राभिगामिनी। कारुकरजकादीनां गामिनी दुष्टचारिणी। ब्रह्मक्षत्रियविट्छूद्रप्रतिलोमाभिगामिनी। मातुलेयपितृव्यादिभ्रातृपुत्राभिगामिनी। बालघ्नी वा पतिघ्नी वा मातापित्रोर्वधे रता। गोघ्नी वा तस्करा वापि रजःसंकरकारिणी। एवमादिमहापापैरावृतापि कुलाङ्गना। कृत्वा चैतद्व्रतं सम्यङ्मुच्यते नात्र संशयः। व्रतानामुत्तमं चैतत्स्त्रीणां चावश्यकं त्विदम्। एवं वर्तिप्रदानेन विष्णोरमिततेजसः। कोटयो ब्रह्महत्यानामगम्यागमकोटयः। तथैवात्युग्रपापानि कोटयोऽथ सहस्रशः। नश्यन्ति नात्र संदेहो नारीणां वा नरस्य च। सल्लक्षवर्तिभिर्विष्णोः कृते चारार्तिकार्पणे। किमत्र बहुनोक्तेन नानेन सदृशं व्रतम्। पुरुषोऽपि व्रतं कृत्वा पूर्वोक्तैः पापसंचयैः। मुच्यते नात्र संदेहो मधुशासनशासनात्। एतत्सर्वं मयाख्यातं पृच्छन्त्यास्तव मानदे। व्रतं कुरु सुखं तिष्ठ यथा ते रोचते मनः। इति तद्वचनं श्रुत्वा पुनः पप्रच्छ लक्षणा। अज्ञानाद्दुष्टभावाद्वा न विश्वासो ममेह वै। प्रत्ययार्थं मम ब्रह्मन्प्रत्यक्षं कुरु मेऽधुना। इति तस्या वचः श्रुत्वा याजको वाक्यमब्रवीत्। कथं तत्प्रत्ययो भूयात्कथ्यतां करुणानिधे। साप्युवाच पुनर्विप्रं विस्मयोत्फुल्ललोचना। न वैधव्यभयान्नारी रोदित्येषा कुमारिका। अस्याः पतिः कथं जीवेद्वैधव्यं चैव गच्छति। तथा कुरु मुनिश्रेष्ठ दयाशमवतां धनम्। इति तस्या वचः श्रुत्वा विस्मितो वाक्यमब्रवीत्। अथ वै मकरं प्राप्तो भास्करो लोकभास्करः। माघोऽयं च वरो मासः सर्वक्रतुफलाधिकः। अद्य गत्वा कुरु स्नानं गङ्गायां ब्रह्मचारिणि। स्नानं कृष्णार्पणं कृत्वा देहि तस्मै मृताय वै। तेन जीवेदयं नूनं सुरापो ब्रह्महापि च। तस्मादयं राजयक्ष्मरोगेण तु मृतिं गतः। तथापि माघमासस्य पुण्याद्दुज्जीवितो ध्रुवम्। दापयित्वा तथा वर्तिं कांस्यपात्रं विधानतः।

जीवपत्नी भवेदाशु यावदामरणान्तिकम्।लक्षणा तद्वचः श्रुत्वा जलं स्पृष्ट्वाऽथ वाग्यता। स्नानं कृष्णार्पणं कृत्वा ददौ तस्मै फलं तदा।तत्पुण्यस्य प्रभावेण तत्क्षणादेव बोधितः।स्वं देशं प्रेषयित्वा च कृत्वा पात्रं च कांस्यकम्।कुमार्या दापयामास वैधव्यस्यापनुत्तये । एतत्पुण्यप्रभावेण कुमारी सापि शोभना ।तदाभवज्जीवपत्नी बभूव बहुपुत्रिका।कुमारी शोभना नाम तत्पतिः कणभोजकः। तद्बान्धवास्तदा सर्वे तुष्टुवुस्तां सुलक्षणाम् । याजकं चापि संपूज्य जग्मुस्ते स्वं निकेतनम् । लक्षणापि च हर्षेण भुजंगेन च संयुता । प्रातः स्नानं ततः कृत्वा व्रतमेतच्चकार सा। ततस्तु मरणं प्राप्तो दास्यास्तस्याः सहायकृत् ।गयो नाम महाराजा चक्रवर्ती बभूव ह।सा लक्षणा च तत्पत्नी सर्वलक्षण-संयुता । बभूव लोकविख्याता जीवभर्तृा सुपुत्रिका । 'तस्माद्यो माघमासस्य साहाय्यं वा करिष्यति।धर्मस्य तत्फलं प्राप्य मुच्यते नात्र संशयः।नित्यं स्नातुमशक्तश्चेत्कुर्यात्स तु दिनत्रये । द्वादश्यां रथसप्तम्यां पौर्णमास्यां तथैव च।सोऽपि पूर्णफलं प्राप्य विष्णु-लोके महीयते । तदेवं कर्म सफलं महापातकनाशनम् । यो न स्नाति नरो माघे मकर-स्थे दिवाकरे । ब्रह्महा स तु विज्ञेयः सर्वकर्मसु गर्हितः । नारी वापि नरो वापि न स्नायादरुणोदये । रौरवं नरकं प्राप्य यावदाभूतसंप्लवम् । रोगैरुपहतो यस्तु पादौ प्रक्षाल्य वाग्यतः । धौतवस्त्रं परीधाय त्रिराचम्य च वारिणा।गायत्र्या मन्त्रितं चाम्भः प्रोक्षयेन्मूर्ध्नि स द्विजः । सोऽपि स्नानफलं प्राप्य मोदते विष्णुमन्दिरे।ये च शृण्वन्ति सततं ये पठन्ति नरोत्तमाः । ते सर्वे पापनिर्मुक्ता यास्यन्ति पदमव्ययम् । इति वामनपुराणे लक्षवर्तिकथा ।

अत्रैव लक्षदीपदानमुक्तं भविष्ये—'दीपानां लक्षकं यस्तु कुर्यात्परमधा-र्मिकः। यावत्कालं प्रज्वलन्ति दीपास्ते लिङ्गसंनिधौ। ब्रह्मणो युगसाहस्रं दाता स्वर्गे महीयते । कौसुम्भेन समायुक्ता दीपा दत्ताः शिवालये । सुरलोके च कैलासे तिष्ठन्ति शिवमूर्तयः । ' अत्र रुद्रलक्षवर्तिकोद्यापनमुक्तं वायुपुराणे—नारद उवाच— 'श्रुतानि देवदेवेश व्रतानि नियमास्तथा । तीर्थानि च महादेव यज्ञदानान्यनेकशः । नास्ति मे निश्चयो देव भ्रामितोऽहं त्वया पुनः । कथयस्व महादेव यद्गोप्यं व्रतमुत्त-मम्।'शिव उवाच—'शृणु नारद यत्नेन व्रतानामुत्तमं व्रतम्।रुद्रवर्त्या महापुण्यं सर्वोपद्र-वनाशनम्।सुखसंस्पर्शकं चैव पुत्रराज्यसमृद्धिदम्।शंकरप्रीतिजनकं शिवलोकप्रदं शुभम्। स्वभर्त्रा सह संबन्धं महास्नेहकरं परम् । शृणु नारद यत्नेन गिरीशो यत्र तुष्यति । यत्कृत्वाकृतकृत्याःस्युर्देवासुरनरेश्वराः। ये वै ज्ञात्वा न कुर्वन्ति ते ज्ञात्वादुःखभागिनः।

रुद्रवर्तिसमं नास्ति त्रिषु लोकेषु सुव्रता । अत एव सदा कार्यं व्रतमेतत्सुदुर्लभम् । मयाख्यातं व्रतमिदं किमन्यच्छ्रोतुमर्हसि ।' नारद उवाच— पूजाविधिं च मे ब्रूहि विधानं च वदस्व मे ।' ईश्वर उवाच—'शृणु नारद योगीन्द्र यत्त्वं श्रोतुमिहार्हसि । कार्पासतन्तुभिः कार्या रुद्रवर्तिः शिवप्रिया । लक्षसंख्या च कर्तव्या गव्याज्येन परि ता । देया शिवालये नित्यं भक्तियुक्तेन चेतसा ।' इत्यादि । इति रुद्रलक्षवर्तिविधानम् ।

अथ चातुर्मास्यैकादशीमारभ्य धारणपारणाव्रतं भविष्योत्तरे— श्रीकृष्ण उवाच—' शृणु कौन्तेय वक्ष्यामि व्रतधारणपारणम् । बन्धूनां वधदोषघ्नं सर्वेन्द्रियनियामकम् । चातुर्मास्ये तिथौ विष्णोः प्राप्ते कौन्तेय सुव्रत । पुण्याहं कारयेत्पूर्वमेकादश्यां शुभे दिने । पश्चात्संकल्प्य राजेन्द्र तदारभ्य व्रतं चरेत् । इषे मासि तिथावन्ते चातुर्मास्यमथापि वा । एकस्मिन्धारणं कार्यं पारणं च तथा परम् । उपवासो धारणं स्यात्पारणं भोजनं भवेत् । पारणाया दिने प्राप्ते अर्घ्यान्पूर्वं निवेदयेत् । पारणं तु ततः कार्यं मन्त्रमष्टाक्षरं जपेत् । अष्टोत्तरशतं वापि तदर्धं वापि तन्मनाः । समाप्ते मासि राजेन्द्र कुर्यादुद्यापनं बुधः । चातुर्मास्यव्रते चापि मासि मासि तु कारयेत् । उपवासदिने प्राप्ते पुण्याहं कारयेत्पुरा । आचार्यं वरयेत्पश्चाद्ब्राह्मणांस्तु ततः परम् । कुर्यात्तु प्रतिमां पश्चाल्लक्ष्मीनारायणस्य वै । पूर्णकुम्भे तु संस्थाप्य पूजयेन्निशि भूमिप । पञ्चामृतैस्तथा पुष्पैस्तुलसीदलसंचयैः । मालतीकेतकीभिश्च मल्लिकाकुसुमैस्तथा । रात्रौ जागरणं कुर्यात्पुराणकथनादिभिः । प्रातःकाले समायाते ब्राह्मणांस्तु निमन्त्रयेत् । पश्चात्संध्यादिकं कृत्वा देवपूजां समापयेत् । पश्चादग्निं समाधाय होमं कुर्याद्यथाविधि । निषसीदेति मन्त्रेण जुहुयात्तु तिलौदनम् । आरायिकाणे मन्त्रेण जुहुयाच्च घृतौदनम् । अष्टाक्षरेण मन्त्रेण पायसं जुहुयात्ततः । लक्ष्मीनारायणो देवस्त्रिषु स्थानेषु देवता । पूर्णाहुतिं ततो हुत्वा होमशेषं समापयेत् । ब्राह्मणान्भोजयेत्पश्चादाचार्यं पूजयेत्ततः । एवं कृत्वा महाभाग ब्रह्महत्यादिपातकैः । मुच्यते नात्र संदेहस्तस्मात्कुरु महाव्रतम् ।' इत्यादि । इति धारणपारणाव्रतम् ।

अथ मासोपवासव्रतोद्यापनम् । तद्यद्यपि द्वादश्यां विहितम् । तथापि केनापि कारणेन तत्रासंभवे पौर्णमास्यामपि कार्यम् । कार्तिकव्रतसामान्योद्यापनकालत्वेन पूर्णमास्यास्तत्र विधानात् । उद्यापनविधिश्च पाद्मे—' कृत्वा मासोपवासं तु यथोक्तविधिना नरः । या नारी कुरुते साध्वी वासुदेवं समर्चयेत् । अन्यूनाधिकमेवं तु व्रतं

त्रिंशद्दिनैरिदम् । कृत्वा मासोपवासं तु संयतात्मा जितेन्द्रियः । ततोऽर्चयेत वै पुण्यं द्वादश्यां गरुडध्वजम् । पूजयेद्गन्धलिप्ताङ्गान्धूपपुष्पैरलंकृतान् । वस्त्रदानादिभिश्चैव पूजयेत्तु द्विजोत्तमान् । दद्याच्च दक्षिणां तेभ्यः प्रणिपत्य क्षमापयेत् । विप्रान्क्षमापयित्वा तु विसर्ज्याभ्यर्च्य पूज्य च। एवं वित्तानुसारेण भक्तियुक्तेन शक्तितः।' एतदर्धार्धस्य पूज्येत्यत्रान्वयः, पूज्याभ्यर्च्य विसर्ज्य क्षमापयित्वेति प्रातिलोम्येनान्वयश्च बोध्यः । ' एवं मासोपवासं तु कृत्वाऽभ्यर्च्य जनार्दनम् । भोजयित्वा द्विजांश्चैव विष्णुलोके महीयते । एवं मासोपवासं हि सम्यक्कृत्वा त्रयोदश । निर्वापयेत्ततस्तान्वै विधिना येन तच्छृणु । कारयेद्वैष्णवं यज्ञमेकादश्यामुपोषितः । पूजयित्वा च देवेशमाचार्यानुज्ञया हरिम् । अर्चयित्वा यथाशक्त्या अभिवाद्य गुरुं तथा । ततो नु भोजयेद्विप्रान्नमस्कारपुरःसरम् । विशुद्धकुलचारित्रान्विष्णुपूजनतत्परान् । पूजयित्वा द्विजान्सर्वान्भोजयित्वा त्रयोदश । तावन्ति वस्त्रयुग्मानि भोजनाच्छादनानि च । योगपट्टानि सूत्राणि ब्रह्मसूत्राणि चैव हि । दद्याच्चैव द्विजाग्र्येभ्यः पूजयित्वा प्रणम्य च । ततो नु पूजयेच्छक्त्या शय्यास्तरणसंस्कृतान् । साच्छादनांशुभ्रा श्रेष्ठां सोपधानामलंकृताम् । कारयित्वात्मनो मूर्तिं काञ्चनीं तु स्वशक्तितः । अन्यस्य तस्यां शय्यायामर्चयित्वा स्रगादिभिः । आसनं पादुके छत्रं वस्त्रयुग्ममुपानहौ । विचित्राणि च पुष्पाणि शय्यायामुपकल्पयेत् । एवं शय्यां तु संकल्प्य प्रणिपत्य च तान्द्विजान् । प्रार्थयेचानुमोदार्थं विष्णुलोकं व्रजाम्यहम् । नरो धीमान्व्रजेच्छ्रीमान्विष्णुलोकमनामयम् । मण्डपस्थैः स्थितैर्विप्रैरीति वाच्यं मुहुर्मुहुः । ' इति । 'मन्त्रहीनं क्रियाहीनं भक्तिहीनं द्विजोत्तमाः । सर्वं संपूर्णतां यातु भवद्वाक्यप्रसादतः । विधिर्मासोपवासस्य यथावत्परिकीर्तितः । ' इति सोद्यापनं मासोपवासव्रतम् ।

अत्र लक्षप्रदक्षिणाव्रतोद्यापनमुक्तं विष्णुधर्मोत्तरे—'श्रीकृष्ण उवाच—'चातुर्मास्ये तु संप्राप्ते पञ्चगव्याच्छुचिर्भवेत् । स्वकृतं पापमुच्चार्य ज्ञातं च सकलं भवेत् । संकल्प्य कुर्यान्नियतः कार्तिक्यां तु जितेन्द्रियः । लक्षं समाप्य पश्चात्तु कुर्यादुद्यापनं व्रती । आचार्यं वरयेद्विद्वान्ब्राह्मणानृत्विजस्तथा। स्वस्तिवाचनपूर्वेण कालरूपं जनार्दनम् । वस्त्रेण परिधानेन निर्व्रणे कलशेऽर्चयेत् । हुत्वा तु विष्णुगायत्र्या शतमष्टोत्तरं चरुम् । कपिलां गां ततो दद्यादाचार्याय सदक्षिणाम् । ब्राह्मणानृत्विजश्चैव यथान्यायं प्रपूजयेत् । पायसं जुहुयात्तत्र सहस्रं विजितेन्द्रियः । अंहोमुग्वैश्व—

देवेन सूक्तेन प्रत्यृचं बुधः। ब्राह्मणान्भोजयेत्पश्चात्तेभ्यो दद्याच्च दक्षिणाम्। एवं कृत्वा व्रतमिदं पवित्रं पापनाशनम्। पूर्वजन्मार्जितैः पापैरिह जन्मार्जितैरपि। आगामिजन्मजैश्चैव मुच्यते नात्र संशयः।' इति सोद्यापनं लक्षप्रदक्षिणव्रतम्।

**अथ गोपद्मव्रतोद्यापनं भविष्ये**—'आषाढ्यां शुक्लपक्षे तु एकादश्यां विशेषतः। तदारभ्य च कार्तिक्यां द्वादश्यां तद्व्रतं चरेत्। गोष्ठेऽथ वापि गोस्थाने गोमयेनोपलिप्य च। त्रयस्त्रिंशत्तु पद्मानि गन्धपुष्पैः प्रपूजयेत्। तत्संख्याकानि चार्घ्याणि नमस्कारान्प्रदक्षिणम्। तत्संख्याकानपूपानि ब्राह्मणाय निवेदयेत्। प्रथमे वत्सरे चैव द्वितीये चैवमेव हि। वायने च तथा भेदः पापसं त्वेव निर्मितम्। तृतीये मण्डकान्दद्याच्चतुर्थे गुडमिश्रितान्। पञ्चमे घृतपक्कांश्च पूर्णे वत्सरपञ्चके। उद्यापनं प्रकुर्वीत आदौ चान्ते च मध्यमे। एकादश्यामुपोष्याथ दन्तधावनपूर्वकम्। अभ्यङ्गवस्त्राभरणैः स्वर्चितैर्ब्राह्मणैः सह। पुण्याहं वाचयित्वा तु प्रतिमायां जपेद्धरिम्। कर्षमात्रसुवर्णेन तदर्धार्धेन वा पुनः। माषमात्रसुवर्णेन वित्तशाठ्यं न कारयेत्।' कृतायामिति शेषः। 'उपचारैः षोडशभिः स्वर्चितां वस्त्रवेष्टिताम्। प्रतिमां पूजयेत्पश्चाद्रात्रौ जागरणं तथा। प्रभाते विमले सूर्ये कृत्वाह्निकपुरःसरम्। जुहुयात्पुरुषसूक्तेन स्वाहाकारैः पुनः पुनः। पुनर्द्वादशनाम्नापि पिप्पलस्य समिद्वरैः। पायसेन शतं चाष्टौ कृत्वा पूर्णाहुतिं तथा। ततस्तु प्रतिमां दद्यात्स्वर्चितां वस्त्रवेष्टिताम्। सवत्सां विधिना धेनुमाचार्याय निवेदयेत्। ब्राह्मणान्पञ्च योषिद्भिः षड्रसान्नं तु भोजयेत्। भुञ्जीत बन्धुभिः सार्धमेकाग्रेणैव चेतसा। इदं व्रतं महापुण्यं शृण्वन्तु मुनिपुङ्गवाः। इह भुक्त्वा तु विमलान्सर्वान्कामान्मनोरथान्। अन्ते गच्छति सा स्वर्गं कुलकोटिशतैरपि।' इति गोपद्मव्रतम्।

अथाद्भुतसारे अश्वत्थप्रदक्षिणोद्यापनविधिः। मासपक्षाद्युल्लिख्यामुककामोऽहं विष्णुस्वरूपमश्वत्थतरुममुकसंख्याकाभिः प्रदक्षिणाभिः सेवयिष्ये इति संकल्पः। ततोऽश्वत्थतरुं षोडशोपचारैः संपूज्य लक्षादिसंख्यया प्रदक्षिणां कुर्यात्। पिप्पलाद उवाच—'भगवन्सर्वधर्मज्ञ सर्वशास्त्रविशारद। स्त्रीणां पुत्रविहीनानां नराणां सुखसंपदाम्। उपायं चैव मे ब्रूहि सुखसिद्धिः कथं भवेत्।' अथर्वण उवाच—'पुरा ब्रह्मादयो देवाः सर्वे विष्णुं समाश्रिताः। प्रच्छन्नं देवदेवेशं राक्षसैः पीडिताः स्वयम्। कथं पीडोपशमनमस्माकं ब्रूहि मे प्रभो।' श्रीविष्णुरुवाच—'अहमश्व-

त्थरूपेण संभवामि च भूतले । तस्मात्सर्वप्रयत्नेन कुरुध्वं तरुसेवनम् । अनेन सर्वभद्राणि भविष्यन्ति न संशयः । विष्णुर्यदुक्तवांस्तेभ्यस्तद्व्रतं ते वदाम्यहम् । न दानैर्न तपोभिश्च नाध्वरैर्भूरिदक्षिणैः । अश्वत्थसेवनादन्या लोके नास्ति परा क्रिया । तद्विधानं निमित्तानि संख्यां कृत्वा च पूजनम् । हवनं तर्पणं विप्रभोजनं नियमं तथा । व्रताधिकारिणस्तत्र विधानं च विशेषतः । एतत्सर्वं पिप्पलाद वक्ष्यामि तव सुव्रत । दारुणे विविधोत्पाते भौमदिव्यान्तरिक्षजे । परचक्रभये देशविड्वरे देशविग्रहे । दुःस्वप्ने दुर्निमित्तेषु संग्रामेऽद्भुतकर्मणि । मारीभये राजभये तथा चौराग्निजे भये । क्षयापस्मारकुष्ठादिप्रमेहे विविधज्वरे । उदरे मूत्रकृच्छ्रे च ग्रहग्रस्ते तथैव च।अन्येष्वनुक्तरोगेषु कर्णरोगे तथैव च।एतेषां वै प्रणाशाय कुर्यादश्वत्थसेवनम्।प्रातरुत्थाय नद्यादौ स्नात्वा सम्यग्विधानतः। अश्वत्थदेशमाश्रित्य गोमयेनोपलेपयेत्।तमश्वत्थमलं कृत्यमृत्स्नया गैरिकेण च।पूजाद्रव्याणि संपाद्य पुण्याहं वाचयेत्ततः।ऋत्विजां वरणं कृत्वा ततः पूजां समारभेत् । आदावाराधयेद्विष्णुं ध्यानावाहनपूर्वकम् । तथैव हवनं कुर्यात्तर्पणं वा नमस्कृतिम् । श्वेतवस्त्रं सलक्ष्मीकं चिन्तयेत्पुरुषोत्तमम् । इति ध्यात्वा वाहनाद्यैरुपचारैश्च षोडश।ततः प्रदक्षिणां कुर्यात्तत्सर्वं सफलं भवेत्।लक्षमेकं द्विलक्षं वा त्रिचतुःपञ्चलक्षकम् । कार्यस्य गौरवाज्ज्ञेयं द्वादशान्तं समाचरेत् । ब्रह्मचारी हविष्याशी ह्यधःशायी जितेन्द्रियः । मौनी ध्यानपरो भूत्वा पिप्पलस्य स्तुतिं पठेत् । विष्णोर्नामसहस्रं च पौरुषं च स्तवं तथा । वेदत्रयं हि पुण्यानि सूक्तानि च पुनः पठेत् । तस्य लक्षदशांशेन सघृतं पायसं चरुम् । जुहुयात्प्रत्यृचं वह्नौ स्वगृह्योक्तविधानतः । तत्संख्यया तर्पणं च कुर्यादन्ते च वारिणा । उक्तैश्च षोडशर्त्विग्भिः कुर्याद्धोमं यथाविधि । हवनस्य दशांशेन मिष्टान्नं भोजयेद्द्विजान् । ब्राह्मणो वै स्वयं कुर्याद्यथोक्तविधिना तथा । असमर्थः स्वयं कर्तुं सर्वमन्येन कारयेत् । उक्तप्रमाणादधिकं फलं दशगुणं भवेत् । ततश्चतुर्गुणं पीठं राजतं चतुरस्रकम् । द्रोणमर्धं तदर्धं वा तिलोपरि विनिःक्षिपेत् । श्वेतवस्त्रेण संस्थाप्य पूर्ववत्पूजयेत्तरुम् । दरिद्राय सुशीलाय श्रोत्रियाय कुटुम्बिने । उदङ्मुखाय विप्राय स्वयं पूर्वमुखं तथा । अश्वत्थं विष्णुसहितं मन्त्रेण प्रतिपादयेत् । इह जन्मनि चान्यस्मिन्बाल्ययौवनवार्धके । मनो वाक्कायजे दोषे चायमेव विधिः स्मृतः । अन्येषां नाधिकारोऽस्ति सर्वं विप्रेण कारयेत्।इत्थं कृते व्रतस्यान्ते व्रतपूर्तिस्तथैव च। हेमाश्वत्थतरुं दद्याच्छुक्लां गां च पयस्विनीम् । स्वर्णशृङ्गीं रौप्यखुरां वस्त्रादिभिरलं-

कृताम् । पलमेकं तदर्धं वा तदर्धं वाथ वा पुनः । हेमाश्वत्थतरुं कुर्यात्स्कन्धशाखासमन्वितम् । उत्तमः प्रथमः कल्पो द्वितीयो मध्यमः स्मृतः । कनिष्ठस्तु तृतीयः स्यात्संप्रदानाय पैप्पलः । पिप्पलो वृक्षराजेन्द्रो ह्यग्निगर्भः सदैव हि ।' 'प्रभुर्वनस्पतीनां च पूर्वजन्मनि यत्कृतम् । अघौघं नाशय क्षिप्रं तव रूपप्रदानतः ।' दानमन्त्रः । 'अमुं तरुं गृहाण त्वं विष्णुरूपं द्विजोत्तम । विधूय दुष्कृतं घोरं क्षिप्रं शान्तिं प्रयच्छ मे ।' विप्रप्रार्थनामन्त्रः । 'एवं व्रतं यः कुरुते तस्य पुण्यफलं शृणु । पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् । राज्यार्थी लभते राज्यं बद्धो मुच्येत बन्धनात् । क्षयापस्मारकुष्ठादिसर्वपापैः प्रमुच्यते । यं यं कामयते कामं तं तं प्राप्नोत्यसंशयम् । इहैव भोगानाप्नोति विष्णोः सायुज्यमाप्नुयात् ।' इति सोद्यापनमश्वत्थव्रतम् ।

अथाश्वत्थोपनयनमुक्तं शौनकेन—'शौनकोऽहं प्रवक्ष्यामि अश्वत्थस्योपनायनम् स्थापनादष्टमे वर्षे द्वादशेकादशेऽपि वा । उक्तकालास्तथा शस्ताः कुर्युस्तस्योपनायनम् । तत्रोत्तरायणं श्रेष्ठं गुरुशुक्रप्रकाशितम् । माघफाल्गुनयोः कुर्याच्चैत्रवैशाखमासयोः । क्षयमासादिमासे च वर्जयेन्मौञ्जिबन्धनम् । न कुर्याच्छेदितेऽश्वत्थे विद्युता चाग्निना हते । उपनयनं प्रकुर्वीत स्कन्धैः पर्णाङ्कुरान्वितैः । शुक्लपक्षे शुभर्क्षे च सुवारे तिथिलग्नके । चन्द्रानुकूल्ये कर्तुश्च दिवा कुर्यात्प्रयत्नतः । दन्तानां धावनं कुर्यात्कुर्यात्स्नानं सचैलकम् । कृत्वा च नित्यकर्माणि पूज्याश्चैवेष्टदेवताः । । नान्दीश्राद्धं प्रकुर्वीत गृहे पुण्याहवाचनम् । तस्मिन्नेव दिवा कुर्याच्चान्नहेमफलादिभिः । कृत्वाशीर्वचनं पूर्वं ततो गच्छेत्प्रयत्नतः । तूर्यघोषैश्च विविधैः पुण्यस्त्रीभिः समन्वितः । ब्राह्मणैर्वेदघोषैश्च गीतवादित्रनिःस्वनैः । वस्त्रयज्ञोपवीतं च मौञ्जीदण्डाजिनादिकम् । पूजाद्रव्यं च होमं च गृहीत्वाश्वत्थसंनिधौ । ततःप्रक्षालिताङ्घ्रिश्चाचम्य चोपविशेद्भुवि । अश्वत्थेशानदिग्भागे कृत्वा पुण्याहवाचनम् । आचार्यं वरयेत्पश्चात्कुलीनं वेदपारगम् । त्रिपञ्चदशहस्तेन गोमयेनोपलिप्य च । धान्यपिष्टेन संपूर्य गन्धमाल्यादिशोभनैः । वस्त्रोपवीतगन्धाद्यैरङ्गुलीयककुण्डलैः । कर्ता संपूजयेद्भक्त्या वित्तशाठ्यं न कारयेत् । तेनैव कारयेद्विद्वानश्वत्थस्योपनायनम् । कुर्यात्पञ्चामृतैः स्नानं तत्तन्मन्त्रैः पृथक्पृथक् । अश्वत्थपूर्वदिग्भागे होमं कुर्यात्स्वशाखया । उल्लेखनादि यत्तन्त्रं चरुं तत्र प्रकल्पयेत् । वस्त्रयुग्मं ततो दद्युर्युग्मवस्त्राणि मन्त्रतः । यज्ञोपवीतं दद्याच्च यज्ञोपवीतमित्यपि । मेखलां च त्रिरावेष्ट्य प्रावेयामीति मन्त्रतः । तूष्णीं कृष्णाजिनं दण्डं प्रदद्यात्तु यथाक्रमम् । गन्धपुष्पाक्षतैः शुक्लैरभ-

त्थस्य च पश्चिमे । अश्वत्थेवो निषदनमित्यृचा पूजयेत्सुधीः । तिसृभिर्जुहुयादाज्यं मम आयुष्यनुक्रमात् । पुरस्तादुपरिष्टाच्च हुत्वा व्याहृतिभिस्त्रिभिः । ॐ या ओषधीः या फलिनीः अश्वत्थेव इति त्वया।वनस्पते शतवल्शो द्वा सुपर्णेति मन्त्रतः। समिद्भिश्चरुणा चैव पालाशीभिः पृथक् पृथक् । हुत्वा द्वादशभिः सम्यगेकावृत्त्या समाहितः। अश्वत्थपश्चिमे भागे प्राङ्मुखश्चोपविश्य च । दक्षिणेनैव हस्तेन स्पृष्ट्वाऽश्वत्थं द्विजोत्तम । ॐ भूर्भुवः स्वः पूर्वां सावित्रीं त्रिर्जपेदथ । निरीक्षयेत्ततोऽश्वत्थं देवस्य त्वेति मन्त्रतः । आत्वेति ध्रुवसूक्तेन व्याहृतित्रितयेन च । अश्वत्थनाम उच्चार्य विभक्त्या च द्वितीयया । शलाकया सुवर्णस्य स्थापयेति पदं वदेत् । हुत्वा स्विष्टकृतं पश्चाद्धोमशेषं समापयेत् । गन्धाक्षतैः स्वर्णपुष्पैर्धूपदीपोपहारकैः । भक्ष्याद्यैः फलताम्बूलैस्ततोश्वऽत्थं प्रपूजयेत् । धेनुं सवत्सकां दद्यादाचार्याय सदक्षिणाम्। अश्वत्थाच्छादितं वस्त्रमाचार्याय प्रदापयेत् । अन्येषामपि वस्त्राणां स्वशक्त्या पूजयेत्ततः। ब्रह्मणे दक्षिणां दद्याद्धेम वित्तानुसारतः । ब्राह्मणान्भोजयित्वा तु भुञ्जीत बन्धुभिः सह । एवं यः कुरुते तस्य वर्धते श्रीरसंशयम्। कुलकोटिं समुद्धृत्य ब्रह्मसायुज्यमाप्नुयात्।' इति शौनकोक्तमश्वत्थोपनयनम् ।

अथ मन्त्राणामृष्यादिकम् । युवं वस्त्राणीत्यस्य मन्त्रस्य दीर्घतमा ऋषिः, मित्रावरुणौ देवते, त्रिष्टुप्छन्दः, वस्त्रपरिधाने विनियोगः । युवं वस्त्राणि० । यज्ञोपवीतमित्यस्य मन्त्रस्य परब्रह्मऋषिः, परमात्मा देवता, त्रिष्टुप्छन्दः, यज्ञोपवीतधारणे विनियोगः।यज्ञोपवीतप्रावे यामा इत्यस्य मन्त्रस्य अक्षऋषिः, सोमो देवता,त्रिष्टुप्छन्दः, मौञ्जीधारणे विनियोगः।व्याहृतीनां विश्वामित्रजमदग्निभरद्वाजऋषयः,अग्निर्वायुः सूर्यो देवता.देवी गायत्री देव्युष्णिक्देवीबृहत्य श्छन्दांसि हवने विनियोगः । अग्न आयूंषि पवस इति तिसृणां शतवैनसा ऋषयः, अग्निः पवमानो देवता,गायत्रीच्छन्दः। अश्वत्थेवो अनुष्टुप्छन्दः। या ओषधीरिति द्वयोर्भिषगोषधयोऽनुष्टुप्। द्वासुपर्णा दीर्घतमा विश्वेदेवास्त्रिष्टुप्।आत्वाहार्यमिति षण्णां ध्रुव इन्द्रोऽनुष्टुप्।भूरि दक्षिणा।आशीर्वादः। अथाश्वत्थोद्यापनं चतुर्वर्गचिन्तामणौ—'आरोपितस्य वृक्षस्य कुर्यादुद्यापने विधिम्। नान्दीश्राद्धादि कर्तव्यं पिप्पलोद्यापने विधौ । नवग्रहमखं चादौ विदधीत यथावसु । सहस्रपर्णसंपत्तौ सत्यां बोधितरोर्ध्रुवम् । जातकर्मादिकादीनि कुर्याद्गोदानकावधि । कार्यमुद्यापनं नूनं विवाह्य विधिवन्नरैः । वृक्षशाखां समारोप्य समीपे पिप्पलस्य तु । आलवाले जलं क्षिप्त्वा शतकुम्भमितं शुभम् । सशाखः स च वृक्षश्च वस्त्रयुग्मेन

वष्टितः । सिंचयेदथ दुग्धेन माहिषेण घृतेन च । तयोः शाखामयान्हस्तांश्चतुरः परियोजयेत् । त्रिसूत्रेण त्रिविष्टेन सव्यहस्तौ प्रवेशयेत् । ब्रह्मवर्णस्य वृक्षस्य विधिरेष सनातनः । क्षत्रियस्य तु वृक्षस्य शरो ग्राह्यः परस्परम् । वैश्ये प्रतोदमादद्याच्तुरीये पल्लवग्रहः ।' तथा याज्ञवल्कीये धर्मशास्त्रे–'पाणिर्ग्राह्योऽसवर्णासु गृह्णीयात्क्षत्रिया शरम् । वैश्या प्रतोदमादद्याद्वेदने त्वग्रजन्मनः । संयोज्य विधिवत्तौ तु प्लक्षाश्वत्थौ सुवेशितौ । कृत्वाग्निवन्दनं सम्यग्जुहुयात्तिलसर्पिषा । प्रधानदेवता ब्रह्मा वृक्षस्यास्य न संशयः ।' तत्र मन्त्रः–द्वा सुवर्णा इति 'अष्टोत्तरशतं सहस्रं जुहुयात्तिलसर्पिषा।व्याहृतिभिस्तथा होमं विदध्याच्च यथा रुचि।चरुं साज्यं तु जुहुयाद्विधास्विष्टकृतं समम् ।' समग्रमित्यर्थः ।

अथ प्रकारान्तरेणाश्वत्थोद्यापनम् । 'अश्वत्थः सर्ववृक्षाणां राजा ब्राह्मणवर्णकः । अश्वत्थः पूजितो येन सर्वं संपूजितं भवेत् । अकृते मौञ्जिबन्धे तु अकृते च विवाहके । नैव सेवां प्रकुर्वीतन समर्चेत्कदाच न । अश्वत्थरोपणं कृत्वा त्रिवर्षे वाथ पञ्चके । उपवीतं प्रकुर्वीत मुहूर्ते ज्योतिषां निधौ । पुण्याहवाचनं कृत्वा नान्दीश्राद्धं समाचरेत् । प्राणसंस्थाविधिं कुर्यादभिषेकादिपूर्वकम् । प्राणेन्द्रियैर्जीवकलामनोभिः सहितो भव ।' एतस्य जीवकलाप्राणापानव्यानोदानसमानवाक्श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणपाणिपादोदरोपस्थगुह्येन्द्रियाणि सर्वाणि अत्रागत्य सुखं चिरं तिष्ठन्तु स्वाहा सर्वप्राणैः प्रतिष्ठितो भवेत्यश्वत्थं दक्षिणपाणिना स्पृष्ट्वा जपेत् । 'अश्वत्थ सर्ववृक्षोऽसि नारायणसमाश्रयः । नारायणस्वरूपेण पाहि मां सर्वतोऽशुभात् । महासंसारवृक्षोऽसि अश्वत्थ ब्रह्मनामकः । महासंसारमग्नं मामुद्धरस्व शुभं कुरु । विष्णुर्ब्रह्मा शिवः शक्रः सूर्यश्चन्द्रो बृहस्पतिः । ऋषयो वेदमन्त्राश्च सर्वत्र स्युः सदा स्थिराः । इति प्राणान्प्रतिष्ठाप्य जातकर्मादि कारयेत् । चौलान्तं नामतः कृत्वा स्थापयेल्लौकिकानलम् । स्वगृह्योक्तविधानेन हरिद्रातैललेपनम् । वस्त्रयुग्मं चोपवीतं दण्डं कृष्णाजिनं तथा।दत्त्वा समिद्भिश्चरुणा तिलाज्यैश्च पृथक्पृथक् । हुत्वा व्याहृतिभिः शक्त्या ब्रह्मलोके महीयते ।' इत्युद्यापनम् । अथ पार्थिवलिङ्गोद्यापनम् । लिङ्गे रुद्रयामले–'अथोक्तं संप्रवक्ष्यामि प्रतिष्ठां लौकिकस्य च ।' प्रतिष्ठापदमुद्यापनपरम् । 'येन यस्य विधानेन व्रतं संपूर्णतामियात् । सहस्रं वाथ लक्षं वा पूजयित्वा यथाविधि । कोटिलिङ्ग विधानेन कामना वा प्रपूर्यते । समाप्ते सुव्रते राजन्विनिर्माय महेश्वरम् । स्नापयित्वा तु कलशैः संपूज्यार्घादिभिः क्रमात् । गन्धै-

माल्यैस्तथा धूपैर्नैवेद्यैर्विविधैस्तथा । हिरण्यं गां च वासांसि शिवाय विनिवेदयेत् । दण्डवत्पतितो भूत्वा स्तुत्वा चैव विशेषतः । एकाग्रमानसो भूत्वा ततो मन्त्रमुदीरयेत्। अङ्गहीनं क्रियाहीनं विधिहीनं महेश्वर । पूजितोऽसि मया देव तत्क्षमस्व मया कृतम् । यच्चौर्यापहृतैः पुष्पैः प्रशस्तैर्भावदूषितैः । केशकीटापविद्धैश्च पूजितोऽसि मया प्रभो । अन्यथासक्तचित्तेन क्रियाहीनेन वा प्रभो।मनोवाक्कायदुष्टेन पूजितोसि त्रिलोचन।यच्चो- पहतपात्रेण कृतमर्घ्यादिकं मया । तामसेनस्वभावेन तत्क्षमस्व मम प्रभो । मन्त्रेणाशयहीनेन पुष्पेण विकलेन च । पूजितोऽसि महादेव तत्सर्वं क्षम्यतां मम । व्रतं संपूर्णतां यातु फलं चाक्षयमस्तु मे । एवं स्तुत्वा नमस्कृत्य विसृज्य च महेश्वरम् । नैवेद्यादि च तत्सर्वं भस्माङ्गाय निवेदयेत् । ब्राह्मणान्भोजयित्वाऽथ दद्यात्तेभ्यश्च दक्षिणाम् । यथाशक्त्या वस्त्रधेनुं हिरण्यं व्रतदक्षिणाम्' । अथान्यप्रकारो भविष्ये—नारद उवाच । 'कथमुद्यापनं चास्य किंप्रकारं महाफलम् । कथयाशु महादेव लोकानामुपकारकम्' । ईश्वर उवाच । 'यः शिवं समुपास्यैवं लिङ्गैः प्राप्त- मनोरथः । तत्प्रमाणं तु सौवर्णं यथाशक्त्याऽथ वा सुधीः । रौप्यं ताम्रमथापि स्यादष्टम्यां च यथा फलम् । चतुर्दश्यामभद्रायां सोमे वाथ प्रयोजयेत् । मण्डले लिङ्गतोभद्रे कलशे तत्र विन्यसेत् । उपोष्य प्रथमे चाह्नि संपूज्य परमेश्वरम् । गीत वादित्रनिर्घोषैर्जागरं तत्र कारयेत्।स्तोत्रैश्च विविधैः सूक्तैः पूजयेत्परमेश्वरम् । चतु- र्दशी दर्शयुता अष्टमी नवमी युता । पारणं तत्र कर्तव्यं रौद्रयुक्ते पुनर्वसौ । पञ्चकं दश वा द्वाभ्यामधिका विंशतिः परा । चत्वारिंशच्चतुर्भिश्च ब्राह्मणान्भोजयेत्तथा । आचार्यं प्रथमं पूज्य ब्रह्माणं च स्वशक्तितः । गणेशं च दिगीशं च पूजयेच्च विधा- नतः । वस्त्रैश्च दक्षिणाभिश्च पूजयेच्छिवतत्परान् । मृत्युंजयेन मन्त्रेण अग्नौ हुत्वाऽ- थ पायसम्'। 'अग्नौ हुत्वा च शक्तितः' इत्यपि क्वचित्पाठः अस्मिन्पाठे घृतमेव द्रव्यम्। 'रुद्रेणाप्यथ वा हुत्वा नमोमन्त्रेण वा पुनः । नमो मन्त्रेण नमो भवायेति मन्त्रेण । यदा रुद्रेण होमस्तदा प्रतिमन्त्रेण यदामृत्युञ्जयमन्त्रस्तदा कृतलिङ्गदशांशेन होमस्तद्द- शांशेन तर्पणं तद्दशांशेन मार्जनम्।'लिङ्गं तु पूजया युक्तमाचार्याय निवेदयेत् । शिवश क्त्यात्मकं यस्माज्जगदेतच्चराचरम् । तस्मादेतेन तत्सर्वं करोतु भगवाञ्छिवः । कैलास वासी गौरीशो भगवान्भगनेत्रभित् । चराचरात्मको लिङ्गरूपो दिशतु मे शिवः । ततश्च दक्षिणां दत्त्वा नमस्कुर्यात्पुनः पुनः । सोद्यापनं व्रतं कृत्वा प्राप्नुया- त्परमं पदम् । शिवलोकं समासाद्य तत्रैव निवसेद्ध्रुवम्' । इति श्रीपार्थिवलिङ्ग- गोद्यापनम् ।

अथ मासकृत्यानि । तत्रादौ चैत्रकृत्यं भविष्योत्तरे—'चैत्रे त्रिरात्रं नक्ताशी नद्यां स्नातो ददाति यः । अजाः पञ्च पयस्विन्यो दरिद्राय कुटुम्बिने । न जायते पुनरसौ जीवलोके कदाचन।' तत्रैव—'चैत्रमासे तु संप्राप्ते यः कुर्यान्नक्तभोजनम् ।पूजयेत्पार्थिवः शक्त्या कृत्वा वै चन्दनस्य च।गन्धपुष्पोहारैश्च विंशार्धभुजसंमिताम् । देवीं ज्वालामुखीं नाम्ना कुङ्कुमागरुचन्दनैः । धूपं सागरुकर्पूरं भगवत्यै निवेदयेत्।' वामनपुराणे—'चैत्रे मासि विचित्राणि शयनान्यासनानि च । विष्णोः प्रीत्यर्थमेतानि देयानि ब्राह्मणेष्वपि ।' मात्स्ये—'वर्जयित्वा मधौ यस्तु दधिक्षीरघृतैक्षवम् । दद्याद्वस्त्राणि सूक्ष्माणि रसधान्ययुतानि च। संपूज्य विप्रमिथुनं गौरी मे प्रीयतामिति । एतद्गौरीव्रतं नाम भवानीलोकदायकम्।' इति विष्णुधर्मोत्तरे वज्रप्रश्नोत्तरम् । मार्कण्डेय उवाच—'फाल्गुन्यां समतीतायां प्रतिपत्प्रभृति क्रमात् । यावच्चैत्री महाराज तावत्स्नात्वा दिने दिने । बहिःस्थं पूजयेद्देवं केशवं भोगिशायिनम् । एकभक्ताशनो नित्यमधःशायी तथा भवेत् । त्रिरात्रोपोषितः पूजां चैत्री कुर्यात्तथैव च । स्वशक्त्या रजतं दद्याद्वस्त्रयुग्मं तथैव च । रूपार्थिनो मासमिदं तथोक्तं व्रतोत्तमं नित्यमदीनसत्त्वम् । कृत्वा तु नाकं मनुजोऽप्यवाप्य मानुष्यमासाद्य च रूपवान्स्यात् । ' इति विष्णुधर्मोत्तरोक्तं रूपावाप्तिव्रतम् ।

अथ भविष्योत्तरोक्तमान्दोलनव्रतं हरगौरीसंवादे—'आन्दोलनं मम कृते कारयेथाः स्वलंकृतम् । त्वया सह रमेऽहं वै यथा चैत्रे त्रिलोचन।' इत्यादि । श्रीमहेन्द्र उवाच—'अद्यप्रभृति ये दोलाक्रीडां पुष्करणीतटे । वसन्ते कारयिष्यन्ति मण्डिते त्रिदशाङ्गणे । नेत्रपट्टपटीछन्नां पद्मरागविभूषिताम् । छायकैरुपसंपन्नां विन्यस्तकनकान्दुकाम् ।' अन्दुका शृङ्खला । 'विचित्राभरणां भूतिभाभासितदिगन्तराम् । मालाविद्याधराक्रान्तां प्रान्तरोपितदर्पणाम् । छत्रचामरसंच्छन्नां यथाशक्त्याथ वाञ्छताम् । अग्निकार्यं ततः कृत्वा दिक्षु दिक्षु दिशाबलिम् । तस्यामारोपयेद्देवमिष्टशिष्टजनावृतम् । मूलमन्त्रेण देवानां कुर्याद्दोलाधिरोहणम् । पार्श्वस्थो ब्राह्मणो विद्वान्पठेद्वा मन्त्रमुत्तमम् । ' 'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतो बाहुरुत विश्वतस्पात् । सं बाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन्देव एकः । ' ततस्तूर्यादिनिर्घोषैः स्तुतिमङ्गलशब्दैश्च देवमान्दोलयेत् । 'प्राप्ते वसन्तसमये सुरसत्तमानामान्दोलनं सुरवरानन कुर्वते ये । ते प्राप्नुवन्ति भुवि जन्मतरोः—

फलादि दुःखार्तिंतः कुलशतान्यपि तारयन्ति । ' इति श्रीभविष्योत्तरोक्त आन्दोलनविधिः ।

हेमाद्रौ भारते-' चैत्रं तु नियतो मासमेकभक्तेन यः क्षिपेत् । सुवर्णमणिमुक्ताढ्ये कुले महति जायते ।' विष्णुधर्मे-' चैत्रं विष्णुपरो मासमेकभक्तेन यः क्षिपेत्। सुवर्णमणिमुक्ताढ्यं स गार्हस्थ्यमवाप्नुयात् । अहिंस्रः सर्वभूतेषु वासुदेवपरायणः । नमोऽस्तु वासुदेवायेत्येवं स्पष्टं शतं जपेत् ।अतिरात्रस्य यज्ञस्य ततः फलमवाप्नुयात्।'इत्येकभक्तव्रतम् । इति चैत्रकृत्यम् ।

अथ वैशाखकृत्यम्-अत्र दानविशेष उक्तोऽपरार्के वामनपुराणे-' गन्धमाल्यानि च तथा वैशाखे सुरभीणि च । देयानि द्विजमुख्येभ्यो मधुसूदनतुष्टये ।' इति । तत्रैव-' निक्षिप्य जलपात्रे तु प्राप्ते माधवसंज्ञके । माधवं येऽर्चयिष्यन्ति देवतास्ते नरा भुवि । स्वर्णपात्रेऽथ वा रौप्ये ताम्रे वा मृण्मयेऽपि वा । तोयस्थं योऽर्चयेद्देवं शालग्रामशिलोद्भवम् । प्रतिमां वा महाभाग तस्य पुण्यमनन्तकम् । ' इति । हेमाद्रौ वामनपुराणे वैशाखे पुष्पफलकव्रतम् । ' वैशाखे पुष्पलवणं वर्जयित्वा च गोप्रदः । भूत्वा विष्णुपदे कल्पं स्थित्वा राजा भवेदिह।एतत्कान्तिव्रतं नाम कान्तिसौभाग्यदायकम्।' विष्णुर्देवतात्र इति कान्तिव्रतम्।नृसिंहप्रासादे पद्मपुराणे-'तीर्थे चानुदिनं स्नानं तिलैश्च पितृतर्पणम् । दानं धर्मघटादीनां मधुसूदनपूजनम् । माधवे मासि कुर्वीत मधुसूदनतुष्टिदम् । ' हेमाद्रौ विष्णुधर्मे- ' यः क्षिपेदेकभक्तेन वैशाखे पूजयेद्धरिम् । नरो वा यदि वा नारी ज्ञातीनां श्रेष्ठतां व्रजेत् । ' नमोऽस्तु वासुदेवायेत्यष्टशतजपः पूर्ववदेव एवं कृते त्रिरात्रयज्ञफलं भवति । महाभारते-' निस्तरेदेकभक्तेन वैशाखं यो जितेन्द्रियः । ' नरो वेत्यादि पूर्ववदेव । इत्येकभक्तव्रतम् । हेमाद्रौ विष्णुधर्मोत्तरे-मार्कण्डेय उवाच- 'चैत्र्यां तु समतीतायां यावन्मासं दिने दिने । पूर्ववत्पूजयेद्देवं नृसिंहमपराजितम् । ' पूर्ववदिति चैत्रमासोक्तरूपायातिकव्रतवदेकभक्तबहिःस्नानशय्यादिकं कर्तव्यमित्यर्थः । ' होमं च प्रत्यहं कुर्यात्तथा सिद्धार्थकैर्नृप । वैशाख्यां कनकं दद्यात्त्रिरात्रोपोषितो नरः । ज्ञानावाप्तिप्रदं ह्येतद्व्रतं बुद्धिविवर्धनम् ।' इति विष्णुधर्मोत्तरोक्तं ज्ञानावाप्तिव्रतम् । इति वैशाखकृत्यानि ।

अथ ज्येष्ठकृत्यानि । वामनपुराणे-' तस्माज्ज्येष्ठे सदा भूप तोयस्थं योऽर्चयेद्धरिम् । वीततापो नरस्तिष्ठेद्यावदाभूतसंप्लवम् । ' हेमाद्रौ महाभारते-' ज्येष्ठं

मूलात्तु वै मासमेकभक्तेन यः क्षिपेत् । ऐश्वर्यमतुलं श्रेष्ठं प्राप्नुयात्स न संशयः ।' विष्णुधर्मे—'कृष्णार्पितमना ज्येष्ठमेकभक्तेन यः क्षिपेत् ।' इत्यादि । नमोऽस्तु वासुदेवायेति जपित्वा फलं च पूर्ववत् । हेमाद्रौ विष्णुधर्मोत्तरे—'वैशाख्या समतीतायां प्रतिपत्प्रभृति क्रमात् । पूर्ववत्पूजयेद्देवं श्रीसहायं दिनेदिने ।' पूर्ववदिति चैत्रीयरूपावाप्तिव्रतवत् । 'पुष्पैर्मूलैः फलैश्चैव जुहुयादक्षतांस्तथा । बिल्वांश्च वह्नौ सततं गौरवैर्भोजयेद्द्विजान् । त्रिरात्रोपोषितो ज्यैष्ठ्यां कनकं प्रतिपादयेत् । वस्त्रयुग्मं च राजेन्द्र तेन साफल्यमश्नुते।'एतत्फलं तु श्रीप्राप्तिः।इति विष्णुधर्मोत्तरोक्तं श्रीप्राप्तिव्रतम् । भविष्योत्तरे—'पिष्टेन पङ्कजं कृत्वा ज्येष्ठे मासि सवेदकम् । पुष्पैः संपूज्य गन्धाद्यैर्नानावस्त्रविभूषणैः । वर्षकोटियुगं साग्रं सूर्यलोके महीयते ।' पङ्कजो ब्रह्मा । वामनपुराणे—'उदकुम्भाम्बुधेनुश्च तालवृन्तं च चन्दनम् । त्रिविक्रमस्य प्रीत्यर्थं दातव्यं ज्येष्ठमासि च ।' इति ज्येष्ठव्रतानि ।

अथाषाढव्रतानि।हेमाद्रौ--'आषाढमेकभक्तेन स्थित्वा मासमतन्द्रितः। बहुधान्यो बहुधनो बहुपुत्रश्च जायते ।' तत्फलं बहुधान्यबहुधनावाप्तिः। विष्णुधर्मोत्तरे—'ज्यैष्ठ्यां तु समतीतायां प्रतिपत्प्रभृति क्रमात् । पूर्ववत्पूजयेद्देवं विश्वरूपधरं हरिम् ।' अत्रापि पूर्ववदिति रूपावाप्तिव्रतवदित्यर्थः । 'कृत्वा व्रतान्ते च तथा त्रिरात्रं दत्त्वा सुयुक्तं शयनं द्विजाय । स्वर्लोकमासाद्य चिरं नरेन्द्रो मानुष्यमासाद्य च भोगवान्स्यात् ।' इति विष्णुधर्मोत्तरोक्तं भोगावाप्तिव्रतम्। वामनपुराणे—'उपानद्युगलं छत्रं लवणामलकानि च । आषाढे वामनप्रीत्यै दातव्यानीह भक्तितः ।' इत्याषाढव्रतम् ।

अथ श्रावणव्रतानि । तत्रार्धश्रावणीविधिः । जयोवाच—'कदार्धश्रावणीपूजा क्रियते तु कदा व्रतम् । कथमेषा कृतेन्द्राण्या किं फलं तद्ब्रवीहि मे ।' विजयोवाच—'प्राप्ते तु श्रावणे मासि शुक्लपक्षे मनोहरे । संस्थाप्य पार्वतीं देवीं पूजयेद्भक्तिशक्तितः । मासं यावन्नियमतः संस्मरेत्पार्वतीं हृदि । श्वेतार्कैः श्वेतकुसुमैः श्वेतचन्दनकेन च । गन्धैर्धूपैश्च नैवेद्यैर्यथाकालोद्भवैः फलैः । अर्घ्यं दद्यात्फलेनैव कुसुमाक्षतचन्दनैः । 'नमोऽर्धश्रावणी देवि सर्वपापक्षयंकरि । गृहाणार्घ्यं हि देवेशि शंकरेण समं मम।' अर्घ्यमन्त्रः—'नमो नमस्ते देवेशि अर्धश्रावणि पार्वति । नमस्तेऽस्तु जगन्मातर्नमस्ते हरवल्लभे । नमो देवि नमस्तुभ्यं कात्यायनि नमोऽस्तु ते । नमो रुद्राणि शर्वाणि अपर्णे शंकरप्रिये । सर्वभूतहिते देवि त्राहि संसारसागरात् ।' पूजामन्त्रः—

'धूपोऽयं सर्वदेवानामाहारो ह्यमृतोपमः । धूपं गृहाण देवेशि अर्धश्रावणि नमोऽस्तु ते । श्वेतवस्त्रे प्रदातव्ये धौते वा निर्मले शुभे । श्रावणान्ते ततः पश्चात्समाप्य नियमं शुचिः। गौरिणीर्भोजयेद्भक्त्या मिष्टान्नेन यजेच्छुभे । द्विजांश्च भोजयेत्तत्र वस्त्राणि परिधापयेत् । एवंविधविधानेन कृत्वार्धश्रावणीव्रतम् । न स्यात्तस्यास्तु दारिद्र्यं न चैवेष्टवियोजनम् । अष्टपुत्राँल्लभेन्नारी भर्तारं च गुणाधिकम् । सुरूपं गुणिनं कान्तं पण्डितं प्रियवादिनम् ।एकभक्तेन नक्तेन कुर्यादेतद्व्रतं शुभम् ।'एकभक्तेनेत्यादिशक्त्यादिविषयत्वेन कृत्वा व्यवस्थितो विकल्पः । 'इदं कृत्वा पुरेन्द्राणीन्द्रं लेभे पतिमुत्तमम् । रोहिणी पतिमालेभे चन्द्रं व्रतनिषेवणात् । संज्ञादेवी सुभर्तारमादित्यं प्राप सत्पतिम् । इदं ते कथितं भद्रे अर्धश्रावणिकाव्रतम् । कुरुते या च पूर्णानि व्रतान्यस्या भवन्ति हि । यदा ग्रहपतेर्दोषैर्यदि देवो न वर्षति । कथाश्रवणमात्रेण देवो वर्षति वासवः । दुर्भिक्षे डामरे घोरे संग्रामे राजनिग्रहे । कथामेतां निशम्याशु दोषैः सर्वैः प्रमुच्यते ।' इति ब्रह्माण्डपुराणोक्तमर्धश्रावणिकाव्रतम् ।

भारते— 'श्रावणं नियतो मासमेकभक्तेन यः क्षिपेत् । यत्र तत्राभिषेकेण पूज्यते ज्ञातिवर्धनः ।' वामनपुराणे— 'घृतं च क्षीरकुंभांश्च घृतपक्वफलानि च । श्रावणे श्रीधरप्रीत्यै दातव्यानि दिने दिने ।' विष्णुधर्मे— 'क्षपयेच्चैकभक्तेन श्रावणं विष्णुतत्परः ।' अहिंस्र इत्यादि पूर्ववत् । 'वाजपेयस्य यज्ञस्य समग्रं फलमश्नुते ।' इत्येकभक्तव्रतम् । मार्कण्डेय उवाच—'आषाढ्यां समतीतायां प्रतिपत्प्रभृति क्रमात् । पूजयेत्पूर्ववद्देवं धर्मविग्रहधारिणम् ।' पूर्ववदित्यनेन रूपावाप्तिव्रतवदनुक्तविशेषग्रहणम् । 'मासस्य चान्तैर्नृपपौणमास्यां कुर्यात्त्रिरात्रं कनकं च दद्यात्।'इति विष्णुधर्मोक्तं धर्मावाप्तिव्रतम् । इति श्रावणव्रतानि ।

अथ भाद्रव्रतानि। महाभारते— 'प्रौष्ठपदं तु यो मासमेकाहारो भवेन्नरः । धनाढ्यः स्फीतमतुलमैश्वर्यं प्रतिपद्यते ।' वामनपुराणे— 'मासि भाद्रपदे दद्यात्पायसं मधुसर्पिषा । हृषीकेशप्रीणनार्थं लवणं सगुडौदनम् । एकाहारो भाद्रपदं यश्च कृत्स्नं व्रती नयेत् ।' अहिंस्र इत्यादि पूर्ववत् । 'राजसूयस्य यज्ञस्य फलं दशगुणं भवेत् ।' इत्येकभक्तव्रतम् । मार्कण्डेय उवाच—' श्रावण्यां समतीतायां प्रतिपत्प्रभृति क्रमात् । पूर्ववत्पूजयेद्विष्णुं देवं संकर्षणं विभुम् ।' अत्रानुक्तं रूपावाप्तिव्रतवद्विज्ञेयम् । 'नीलोत्पलैस्तथा पत्रैर्भृङ्गराजस्य पार्थिव।घृतेन परमान्नेन तथा बिल्वैश्च पार्थिव । त्रिरात्रोपोषितः सम्यक्प्रौष्ठपद्यां ततो

नरः । गां च दद्याद्द्विजेन्द्राय व्रतान्ते मनुजोत्तमः । कृत्वा व्रतं मासमिदं त्वयोक्तमासाद्य नाकं सुचिरं मनुष्यः । मानुष्यमासाद्य धनान्वितः स्याद्व्रतेन चीर्णेन नरेन्द्रसिंह । ' इति विष्णुधर्मोक्तं धनावाप्तिव्रतम् । ब्रह्मपुराणे—भीष्म उवाच—'भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महर्जनः । तपः सत्यश्च सप्तैते देवलोकाः प्रकीर्तिताः । पर्यायेण तु सर्वेषामाधिपत्यं कथं भवेत् । इह लोके शुभं रूपमायुरारोग्यमेव च । लक्ष्मीश्च विपुला ब्रह्मन्कथं स्यात्सुरपूजिता । ' पुलस्त्य उवाच—' वसिष्ठोऽयं तवेऽन्यास्मिञ्जलकुम्भे च पूर्ववत् । ततश्चैव तु वार्यक्षः साक्षसूत्रकमण्डलुः । अगस्त्य इति शान्तात्मा बभूव ऋषिसत्तमः । मलयस्यैकदेशे च वैखानससद्विजानतः । सभार्यः ससुतो विप्रस्तपश्चक्रे सुदुष्करम् । ततः कालेन महता ह्युदकादिनिपीडितम् । जगद्वीक्ष्य सुकोपेन पीतवान्वरुणालयम् । ततोऽस्य वरदाः सर्वे बभूवुः शंकरादयः । ब्रह्मा विष्णुश्च भगवान्वरदानाय जग्मतुः । वरं वृणीष्व भद्रं ते यश्चाभीष्टोऽत्र वै शुभे ' अगस्त्य उवाच—' यावद्ब्रह्मसहस्राणां पञ्चविंशतिकोटयः । वैमानिको भविष्यामि गगनान्तरवर्त्मनि । मद्विमानोदये कुर्याद्यः कश्चित्पूजनं मम । स वै पुण्यत्वमाप्नोति वर एष वृतो मम । श्राद्धं ये वै करिष्यन्ति पिण्डपूर्वं तु भक्तितः । तेषां पितृगणाः सर्वे मया सार्धं दिवि स्थिताः । सप्तकल्पं प्रतिष्ठन्तु एष एव वरो मम । एवमस्त्विति ते चोक्त्वा जग्मुर्देवा यथागतम् । तदर्घः संप्रदातव्यो ह्यगस्त्यस्य तदा बुधैः । ' अथागस्त्यार्घ्यदानविधि वीरमित्रोदये मत्स्यपुराणे—'कथमर्घ्यप्रदानादि कर्तव्यं तस्य वै प्रभो । विधानं यदगस्त्यस्य पूजने तद्वदस्व मे । ' ईश्वर उवाच—'प्रत्यूषसमये विद्वान्कुर्यात्तस्योदये निशि । स्नानं शुक्लतिलैस्तद्वच्छुक्लमाल्याम्बरो गृही । स्थापयेदव्रणं कुम्भं माल्यवस्त्रविभूषितम् । पञ्चरत्नसमायुक्तं ताम्रपात्रसमन्वितम् । अङ्गुष्ठमात्रं पुरुषं तथैव सौवर्णमाल्यायतबाहुदण्डम् । चतुर्भुजं कुम्भमुखे निधाय धान्यानि सप्ताम्बरसंयुतानि । सकांस्यपात्राक्षतशुक्तियुक्तं मन्त्रेण दद्याद्द्विजपुङ्गवाय । उत्क्षिप्य लम्बोदरदीर्घबाहुमनन्यचेता यमदिङ्मुखस्थः । ' उत्क्षिप्य कुम्भमुखान्निःसार्य लम्बोदरदीर्घबाहुपुरुषं मन्त्रेण दद्यादित्यन्वयः । लम्बोदरेत्यादि पुनर्विशेषणं लम्बोदरमात्रविधानार्थम् । यमदिङ्मुखस्थ इति कुम्भस्थापनादौ सर्वत्र संबध्यते । प्रयोगाङ्गकर्तृकधर्मत्वात् । ' श्वेतां च दद्याद्यदि शक्तिरस्ति रौप्यैः खुरैर्हेममुखीं सवत्साम् । धेनुं नरः क्षीरवतीं प्रणम्य सवस्त्रघण्टाभरणां द्विजाय । ' हेममुखीं स्वर्णशृङ्गीम् । अन्यत्र तथा दर्शनात् । ' आसप्तरात्रादुदयेऽर्घ्यमस्य दातव्यमेतत्सकलं भरेण । ' उदयाद्यमस्येति हेमाद्रौ । यमोऽगस्त्यः । ' यावत्समाः सप्तदशाथ वा स्युरथोर्ध्वमप्येव

वदन्ति केचित् । 'काशपुष्पप्रतीकाश अग्निमारुतसंभव । मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते । प्रत्यब्दं च फलत्यागमेवं कुर्वन्न सीदति । त्यजेदगस्त्यमुद्दिश्य धान्यमेकं फलं रसम् । होमं कुर्यात्ततः पश्चाद्वर्जयेन्मानवः फलम् । अनेन विधिना यस्तु पुमानर्घ्यं निवेदयेत् । इन्द्रलोकमवाप्नोति रूपारोग्यसमन्वितः । सप्तैव लोकानाप्नोति सप्तार्घान्यः प्रयच्छति । यावदायुश्च यः कुर्यात्परं ब्रह्माधिगच्छति ।' आसप्तरात्रादित्यस्यायमर्थः।यस्मिन्नंशकैरगस्त्योदयस्तस्मात्परभूतो यः सप्तमोंऽशकस्ततः प्रागेकस्मिन्दिनेऽर्घो दातव्यः । अगस्त्योदयकालश्च ब्रह्मपुराणे—'अगस्त्यो दक्षिणामाशामाश्रित्य नभसि स्थितः।वरुणस्यात्मजो योगी विन्ध्यपादविमर्दकः।कन्यांशेभ्यः पश्चिमेभ्यः षड्भ्यः प्रारभ्य संख्यया । अंशानाविंशतिंयावद्भुङ्क्ते सूर्यस्तु राशिषु। द्वासप्ततिमिति कल्पतरौ पाठः । 'उदेति तावद्भगवानगस्त्यो व्योम्नि तोयभुक् इति । कन्यांशेभ्य इति पूर्वदिक्छब्दाध्याहारे पञ्चमी।पश्चिमेभ्य इति व्यधिकरणं च । तेनायमर्थः। कन्यांशपूर्वेभ्यः सिंहांशकेषु अन्तिमेभ्यः षड्भ्यः प्रारभ्य अगस्त्योदय इति । बौद्धं वा पूर्वस्यापि पश्चिमत्वमित्येक एवार्थः।अत एवागमः'कन्यामनागते सूर्ये अर्घो वै सप्तमाद्दिनात्।' इति सिंहान्तिमषडंशकेषु अर्घं दर्शयति । यत्तु आगमज्योतिषयोः—'अप्राप्ते भास्करे कन्यां सत्रिभागैस्त्रिभिर्दिनैः । अर्घं दद्युरगस्त्याय ये वसन्ति महोदये।' इति वचनं सप्तविंशांशादिषु अर्घदानबोधकं तत्प्राशस्त्यपरम् । न तु पूर्वांशकनिषेधपरम् । धर्मशास्त्रविरोधेनेदं वचनमनादेयमित्युक्त्वा ब्रह्मपुराणार्थपरत्वेन वा नेतव्यमिति लिखितवतो रत्नाकरस्याप्येतदभिप्रेतम् । समयप्रदीपे तु—ज्योतिःशास्त्रात्तु सप्तविंशे सिंहांशके अगस्त्योदयस्तदनुसारी कन्यांशकेऽप्यर्घदानम् आसप्तरात्रादिति श्रवणात्।आगमे तु—'कन्यायां समनुप्राप्तेसूर्येऽर्घःसंनिवर्तते ।' इति कन्यांशके अर्घो निषिद्ध इत्युक्तम् । अर्घद्रव्याणि तु 'रक्तबिल्वाक्षतैः पुष्पैर्दधिदूर्वाक्षतैस्तिलैः । सामान्यः सर्वदेवानामर्घोयं परिकीर्तितः।' इति सामान्यविधिप्राप्तान्येव । रत्नाकरे तु पुंखेन सितपुष्पाक्षतैर्जलैरर्घो देयः, नृसिंहपुराणे अगस्त्यार्घे तथा दर्शनादित्युक्तम् । एतत्सकलमिति । एभिरङ्गैः संपूर्णमित्यर्थः । सफलमिति पाठे फलमेतदर्घ्यमित्यर्थः । समा वर्षाणि । वदन्त्येवेति संबन्धः । काशपुष्पेत्यादिमन्त्रः अर्घे सौवर्णपुरुषदानेऽप्ययमेव मन्त्रः, मन्त्रान्तरानभिधानात् । ब्राह्मणकर्तृकेऽर्घे 'अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं बलमिच्छमानः । उभौ वर्णावृषिरुग्रः पुपोष सत्या देवेष्वाशिषो जगाम।'इति वैदिकमन्त्रान्वय इति विशेषोऽस्मिन्कल्पे नास्ति । एतन्मन्त्रस्य विशेषानभिधानेन चातुर्वर्ण्यगोचरत्वादिति वीरमित्रोदये प्रत्यब्दमिति । अत्र

फलत्यागे विशेषः स्मृत्यन्तरे—'बीजपूरं नारिकेलं रम्भाजातीफलं तथा । खर्जूरचूतदाडिम्यः फलान्येतानि वर्जयेत् ।' इति । होममिति । होमश्च महाव्याहृतिभिराज्येन स्वयमाचार्यद्वारा वा । अत्रायमनुष्ठानक्रमः । प्रथमं यथोक्तं स्नानं, ततो यथोक्तकुम्भस्थापनम् । यथोक्तसौवर्णपुरुषस्थापनम् । ततोऽगस्त्यपूजा । न च पूजायां मानाभावः । 'विधानं यदगस्त्यस्य पूजने तद्वदस्व मे ।' तथा कीर्तनात् । अत्र शिष्टा यामचतुष्टये पूजां जागरणं लोपामुद्रापूजनं चाचरन्ति । ततोऽर्घदानम् । ततो होमः । ततः फलत्यागः । सौवर्णपुरुषदानं संपत्तौ धेनुदानं च । हेमाद्रौ तु—सकाशपुष्पाक्षतशुक्तियुक्तमित्यादि पठित्वा व्याख्यातम् । सकाशपुष्पाक्षतया शुक्त्या युक्तमर्घमुत्क्षिप्य दद्यादित्यन्वयः । अत्यायतबाहुदण्डमिति उत्क्षेपणक्रियाविशेषणम् । लम्बोदरीं दीर्घबाहुमिति प्रतिमाविशेषणम् । द्विजपुङ्गवोऽगस्त्य इति । इत्यगस्त्यार्घ्यदानविधिः । ब्रह्मपुराणे—'कृतोपवासः संपश्येदगस्त्यमुदितं मुनिम् । सर्वकामप्रदं पुण्यं सर्वभाग्यप्रवर्धनम् । अर्चितव्यश्च भगवान् श्रद्धाभक्तिसमन्वितैः । पूर्णकुम्भैः सकूष्माण्डैर्यवैर्धान्यैर्घृतेन च । जातीपद्मोत्पलैः शुभ्रैश्चन्दनेन सितेन च । गोभिः श्वेतैस्तथा वस्त्रै रत्नैः सागरसंभवैः । उपानच्छत्रदण्डैश्च पादुकाञ्जनवल्कलैः । भूरिणा परमान्नेन फलैः पुष्पैश्च शोभनैः । अन्नप्रकारैर्भक्ष्यैश्च होमैर्ब्राह्मणतर्पणैः । आशास्यं च शुभं काममुद्दिश्य च मनोगतम् । यद्यहं प्राप्नुयां कामं भगवन्मनसेप्सितम् । त्वत्प्रसादादविघ्नेन भूयस्त्वां पूजयाम्यहम् । इत्युक्त्वा पूजयेत्पश्चाद्दैवज्ञांश्च तथा गुरून् । ब्राह्मणान्भोजयित्वा तु ततो भुञ्जीत वाग्यतः । अत्र च संपश्येदित्यभिधानान्मेघादिच्छन्ने शास्त्रासिद्धिः । मत्स्यपुराणीयकल्पे तु दर्शनस्यानङ्गत्वात्कालमात्रस्य मेघादिसत्त्वेऽपि सत्त्वादविकल्प एव शास्त्रार्थः । न चैक एव कल्पो द्वाभ्यां पुराणाभ्यां बोधितव्य इति वाच्यम् । फलभेदात्करणभेदाच्च । मत्स्यपुराणीयकल्पेऽर्घदानमेव प्रधानम् । 'अनेन विधिना यस्तु पुमानर्घं निवेदयेत् ।' इत्यादिना तस्यैव फलसंबोधनात् । ब्राह्मे तु पूजैव प्रधानम् । तत्रैव मनोगतकामलाभरूपफलश्रवणात् । अर्घस्य वा कथनात् । एवं च मत्स्यपुराणीये कल्पे उपवास आचारबलादेव । अत्र च मत्स्यपुराणीये पुमानिति श्रवणात्पुंस एवाधिकारः । ब्राह्मे तु सर्वाधिकारो विशेषाश्रवणात् । इत्यगस्त्यपूजाविधिः । नृसिंहपुराणे—'यदागस्त्योदयप्राप्तिस्तदा सर्वसुराधिप । अगस्त्याय ददात्यर्घं महापुण्यविवृद्धये । शंखे तोयं विनिक्षिप्य सितपुष्पाक्षतैर्युतम् । मन्त्रेणानेन वै दद्यात्सितपुष्पसमन्वितम् । काशपुष्पप्रतीकाश अग्निमारुतसंभव । मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते । वा-

तापी भक्षितो येन इल्वलश्च महासुरः।समुद्रः शोषितो येन स नोऽगस्त्यः प्रसीदतु । एवं तु यो ददात्यर्घमगस्त्याय महर्षये । सर्वपापविनिर्मुक्तः सर्वां तरति दुर्गतिम् । भविष्योत्तरे—'काञ्चनं कारयित्वा तु यथाशक्त्या सुशोभनम् । पुरुषाकृतिं प्रशान्तं च जटामण्डलधारिणम् । कमण्डलुकरं शिष्यैर्मृगैश्च परिवारितम् । मृत्यूग्रविषहन्तारं दर्भाक्षस्रग्धरं मुनिम् । तस्मिन्कुम्भे समालभ्य चन्दनेन ततो न्यसेत् । स्नापितं चानुलिप्तं च चन्दनेन सुगन्धिना । पूजितं जातिकुसुमैर्हृद्यैर्धूपैश्च धूपितम् । ततश्चार्घः प्रदातव्यो यैर्द्रव्यैस्तच्छृणुष्व मे । खर्जूरैर्नारिकेलैश्च कूष्माण्डैस्त्रपुसैरपि । कर्कोटैः कारवेल्लैश्च कमरैर्बीजपूरकैः । वृन्ताकैर्दाडिमैश्चैव नारङ्गैः कदलीफलैः । दूर्वाङ्कुरैः कुशैः काशैः पद्मैर्नीलोत्पलैस्तथा ।नानाप्रकारैर्भक्ष्यैश्च गोभिर्वस्त्रै रसैः शुभैः । विरूढैः सप्तधान्यैश्च वंशपात्रे निधापितैः । सौवर्णरूप्यपात्रेण ताम्रवंशमयेन वा । मूर्ध्नि स्थितेन मन्त्रेण जानुभ्यां धरणीं गतः । दक्षिणाभिमुखो भूत्वा ध्यात्वाऽगस्त्यं क्षणं नृप।दद्यादर्घं प्रयत्नेन पयसागुरुचन्दनैः।' अर्घपात्रं च शुक्त्याकारम्, सकाशपुष्पाक्षतशुक्तीति वचनादिति हेमाद्रिः।'काशपुष्पप्रतीकाश वह्निमारुतसंभव ।मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते । वातापी भक्षितो येन समुद्रः शोषितः पुरा। लोपामुद्रापतिः श्रीमान्योऽसौ तस्मै नमो नमः। यस्योदितेन पापानि विलयं यान्ति व्याधयः।तस्मै नमोऽस्त्वगस्त्याय सशिष्याय च पुत्रिणो । ब्राह्मणे वेदमन्त्रेण दद्यादर्घ्यं नृपोत्तम।' मन्त्रः अगस्त्य० खनमानेत्यादि पूर्वमुक्तः।'दत्त्वैवमर्घ्यं कौंतेय प्रणिपत्य विसर्जयेत् । अर्चितुस्त्वं यथाशक्त्या नमोऽगस्त्यमहर्षये।ऐहिकामुष्मिकीं दत्त्वा कार्यसिद्धिं व्रजस्व मे । विसर्जयित्वागस्त्यं तं विप्राय प्रतिपादयेत् । दैवज्ञव्यासरूपाय वेदवेदाङ्गवादिने ।'दानमन्त्रः।'अगस्त्यो मे मनःस्थोऽस्तु अगस्त्योऽस्मिन्घटे स्थितः।अगस्त्यो द्विजरूपेण प्रतिगृह्णाति सत्कृतः । अगस्त्यः सप्तजन्मोत्थं नाशयत्वावयोरघम् । अतुलं विमलं सौख्यं प्रयच्छ त्वं महामुने ।' प्रतिग्रहमन्त्रः।'एवं यः कुरुते भक्त्या ह्यगस्त्यव्रतमादरात्।फलमेकं तथा धान्यं रसं चैकं परित्यजेत् । संपूर्णे च तथा वर्षे पुनरन्यमुपक्रमेत्।'अन्यं फलादित्यागम् । 'दत्त्वाऽर्घं सप्तवर्षाणि क्रमेणानेन पाण्डव । पुमान्यत्फलमाप्नोति तदेकाग्रमनाः शृणु । ब्राह्मणः स्याच्चतुर्वेदः सर्वशास्त्रविशारदः । क्षत्रियः पृथिवीं सर्वां प्राप्नोत्यर्णवमेखलाम् । वैश्यानां धान्यनिष्पत्तिर्गोधनं विपुलं भवेत् । शूद्राणां धनमारोग्यं संमानं चाधिकं भवेत् । स्त्रीणां पुत्राः प्रजायन्ते सौभाग्यं गृहसमृद्धिमत् । विधवानां महत्पुण्यं वर्धते पाण्डुनन्दन।कन्या भर्तारमाप्नोति व्याधेर्मुच्येत दुःखितः । येषु देशेष्वगस्त्यार्घ्यपूजेयं क्रियते जनैः । तेषु देशेषु पर्जन्यः कामवर्षी प्रजायते । ईतयः

प्रशमं यान्ति नश्यन्ति व्याधयस्तथा'। विष्णुरहस्ये—'काशपुष्पमयीं रम्यां कृत्वा मूर्तिं तु वारुणेः। प्रदोषे विन्यसेत्तां तु पूर्णकुम्भे स्वलंकृते'। पूर्णकुम्भोजलपूर्णकुम्भः। 'कुम्भस्थं पूजयेत्तं तु पुष्पधूपविलेपनैः। दध्यक्षतबलिं दद्याद्रात्रौ कुर्यात्प्रजागरम्। प्रभाते तं समादाय यायात्पुण्यजलाशयम्। निशावसाने तं पश्यञ्जलान्ते प्रतिमां मुनेः। अर्घ्यं दद्यादगस्त्याय भक्त्या सम्यगुपोषितः। पुष्पैर्मूलैः फलैर्गन्धैर्धूपैरथ सुगन्धिभिः। द्राक्षाखर्जूरकर्कन्धुनारिकेलादिभिः शुभैः। पञ्चरत्नसमायुक्तं हेमरूप्यसमन्वितम्। सप्तधान्यभृतं पात्रं चन्दनेन समायुतम्। तं तु ताम्रमयं कृत्वा दद्यादर्घ्यं द्विजातये। अगस्त्यः खनमानेति पठन्मन्त्रमिमं मुने। यथालाभकृतार्थेन सर्वैर्वाथ स्वशक्तितः। अर्घ्यं दद्युरगस्त्याय शूद्रे मन्त्रविधिस्त्वयम्। काशपुष्पप्रतीकाश वह्निमारुतसंभव। मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते'। अथ विष्णुरहस्यानुसारेणागस्त्यार्घदानपद्धतिः। काशपुष्पमयीमगस्त्यप्रतिमां कृत्वा जलपूर्णपञ्चपल्लवाद्यलंकृतप्रतिष्ठापितकुम्भे तन्मन्त्रेण तां विन्यस्य 'पुरुषाकृतिं प्रशान्तं च जटामण्डलधारिणम्। कमण्डलुकरं शिष्यैर्मृगैश्च परिवारितम्। मृत्यूग्रविषहन्तारं दर्भाक्षस्रग्धरं मुनिम्' इति ध्यात्वा अगस्त्यः खनमान इति मन्त्रेण तां गन्धपुष्पधूपदीपनैवेद्यादिभिः समभ्यर्च्य पुष्पमूलगन्धसुगन्धधूपद्राक्षाखर्जूरवरनारिकेलादिफलपञ्चरत्नहेमरूप्यादिभिः सप्तधान्यैश्चन्दनेन च युक्तं ताम्रपात्रं शंखं वा सजलं पाणिभ्यामादायागस्त्यायार्घ्यं दद्यात्। तत्र मन्त्रः—'विन्ध्यवृद्धिक्षयकर मेघतोयविषापह। रत्नवल्लभ देवेश लंकावास नमोऽस्तु ते। वातापिर्भक्षितो येन समुद्रः शोषितः पुरा। लोपामुद्रापतिः श्रीमान्योऽसौ तस्मै नमो नमः। येनोदितेन पापानि प्रलयं यान्ति व्याधयः। तस्मै नमस्त्वगस्त्याय सशिष्याय च पुत्रिणे। लंकावास नमस्तुभ्यमृषीणां प्रवरोत्तम। उदितो द्वारि लङ्काया अर्घ्यं मे प्रतिगृह्यताम्। वंशपात्रस्थितश्चार्घ्यं सप्तधान्यसमन्वितम्।फलपुष्पसमायुक्तं देवेश प्रतिगृह्यताम्। शंखं पुष्पं फलं तोयं रत्नानि विविधानि च। सुरासुरमुनिश्रेष्ठ अर्घ्यं मे प्रतिगृह्यताम्। राजपुत्रि नमस्तुभ्यमृषिपत्नि नमोऽस्तु ते।गृहाणार्घ्यं मया दत्तं लोपामुद्रे शुभानने।' इत्यगस्त्यार्घ्यदानविधिः। इति भाद्रपदकृत्यानि।

अथाश्विनकृत्यानि। यमः—'घृतमाश्वयुजे मासि नित्यं दद्याद्द्विजातये।प्रीणयित्वाश्विनौ देवौ रूपभागधिजायते।' वामनपुराणे—'तिलांस्तुरङ्गं वृषभं दधिताम्ररसादिकम्। प्रीत्यर्थं पद्मनाभस्य देयमाश्वयुजे नरैः।' भारते—'तथैवाश्वयुजं मासमेकभक्तेन यो नयेत्। प्रजावान्बहुपुत्रश्च वाहनाश्वश्च जायते'। ब्रह्मोवाच—

मासि चाश्वयुजे शुक्ले एकादश्यामुपोषितः। गृह्णीयात्तु नरश्रेष्ठ कौमुद्याख्यं महाफलम्। अहिंसकः शुचिर्भूत्वा धौतवासा जितेन्द्रियः। द्वादश्यामर्चयेत्स्नात्वा वासुदेवं जगद्गुरुम्। विलिप्यातिसुगन्धैश्च चन्दनागुरुकुङ्कुमैः। कमलोत्पलकह्लारै रक्तोत्पलसुगन्धिभिः। अर्चयेदच्युतं नित्यं मालत्या च सुगन्धया। घृतेन पूरयेत्पात्रं न तु तैलेन पूरयेत्। निवेद्य वासुदेवाय भक्त्या चैव जितेन्द्रियः। व्रतमेतन्नरः कृत्वा ब्रह्म ध्यात्वा क्षमापयेत्। ॐनमो भगवते वासुदेवाय सततं च जपेद्बुधः। विप्रांश्च भोजयेद्भक्त्या दद्याच्चैव तु दक्षिणाम्। अनेनैव विधानेन मासमेकं व्रतं चरेत्। यावद्विबुध्यते देवि कार्तिके गरुडध्वजः। तावत्कर्तव्यमिति शेषः। इति कौमुद्याख्यं व्रतम्। मार्कण्डेय उवाच—'प्रौष्ठपद्यामतीतायामनिरुद्धं तु पूजयेत्। सारसैरर्चयेदेवं जातीपुष्पैर्दिने दिने'। सारसैः कमलैः। 'घृतेन जुहुयाद्वह्निं घृतं दद्याद्द्विजातये। दद्यान्नृपतिशार्दूल नरस्त्वारोग्यवृद्धये।' इति विष्णुधर्मोत्तरोक्तमारोग्यप्राप्तिकरं व्रतम्। महाभारते—'तथैवाश्वयुजं मासमेकभक्तेन यः क्षिपेत्। भृत्यवान्वाहनाढ्यश्च बहुपुत्रश्च जायते। विष्णुधर्मोत्तरे—'नयंश्चाश्वयुजं विष्णुं पूजयन्नेकभोजनः। अहिंस्रः, इत्यादि पूर्ववत्।' 'अतिरात्रस्य यज्ञस्य तत्तत्फलमवाप्नुयात्।' इत्येकभक्तव्रतम्। इत्याश्विनकृत्यानि।

अथ कार्तिककृत्यानि। मैत्रेय उवाच—'कार्तिकः खलु मासोऽयं सर्वदेवमयो महान्। यानि कृच्छ्राणि चोक्तानि सर्वपापहराणि वै। कृतानि मुनिभिस्तानि भवन्ति मनुजाधिप। देवपितृमनुष्येभ्यो दत्तं घृतमधुप्लुतम्। तत्रान्नमक्षयं प्रोक्तं ब्रह्मणा लोककर्तृणा। समभ्यर्च्य हरिं भक्त्या दीपान्दत्त्वा दिवानिशम्। सर्वपापविशुद्धात्मा नरो याति दिवं नृप।' इति विष्णुधर्मोत्तरोक्तं कार्तिकव्रतम्। 'कार्तिको मासः सर्वदैवत्यः। अग्निश्च सर्वदेवानां मुखम्, तस्मात्कार्तिके मासि बहिः स्नातः गायत्रीजपनिरतः हविष्याशी संवत्सरकृतात्पापात्पूतो भवति।' इति विष्णुस्मृत्युक्तः कार्तिकस्नानविधिः॥ अथादित्यपुराणोक्तः प्रदीपविधिः। सनत्कुमार उवाच—'दामोदरस्य वाक्यं तु श्रुत्वा प्रश्नं चकार सः। केनोपायेन भगवन्न दृश्येत महत्तमः। नाकलोकसमं सौख्यं प्रेतलोके भवेत्कथम्। भगवान्देवकीपुत्रस्तद्वाक्यस्योत्तरं ददौ। रहस्यं परमं गुह्यं मनोरथफलप्रदम्। भो शृणुष्व महाबुद्धे यत्प्रवक्ष्यामि ते वचः। पूर्णे आश्वयुजे मासि पौर्णमास्यां समाहितः। प्रथमे च निशारम्भे मनोवाक्कायसंयतः। नमः पितृभ्यः प्रेतेभ्यो नमो धर्माय विष्णवे। नमो यमाय रुद्राय कान्तारपतये नमः। दद्यादनेन मन्त्रेण दीपं श्रद्धासमन्वितः।' इत्यादि। 'अनेन दीपेन मनोरथानां संप्राप्ति-

इत्यादित्यन्तं तथै ...ऽत्र। एतानि चोक्त्वा कतिचिद्वचांसि दामोदरश्चान्तरितो बभूव।' इति।

अथ वि सर्वक...णोक्तं प्रदीपव्रतम् ।

सर्वत्र जयमा...म् । ...धर्मोत्तरोक्तं विजयावाप्तिव्रतम् । वज्र उवाच—'भगवन्कर्मणा केन सौख्यं लोकेऽपि न ...ात् । व्यवहारे रते द्यूते विवाहे च द्विजोत्तम । जयावाप्तेः परं नास्ति अ...ुसत्तम । जयावाप्तिः परं सौख्यं तदस्ति व्रतमुच्यताम् ।' मार्कण्डेय उवाच—'आश्वयुज्यामतीतायां प्रतिपत्प्रभृति क्रमात् । पूर्ववत्पूजयेद्देवं लोकनाथं त्रिविक्रमम् ।' पूर्ववदिति रूपावाप्तिव्रतवत् । 'त्रिरात्रान्ते तु कार्तिक्यां दद्यादुक्षाणमुत्तमम् । सर्वसस्यधरं कृत्वा शक्त्या रत्नैरलंकृतम् । कृत्वा व्रतं मासमिदं तथोक्तं प्राप्नोति लोकं सुचिरं नृवीर । तत्रोष्य कालं सुचिरं मनुष्यः प्राप्नोति सर्वत्र जयं त्रिलोके ।' इति विष्णुधर्मोत्तरोक्तं । विजयावाप्तिव्रतम् ।

अथ कृच्छ्रव्रतम् । 'सुपुण्ये कार्तिके मासि देवर्षिपितृसेविते । क्रियमाणे व्रते नृणां स्वल्पोऽपि स्यान्महाफलः । कृत्स्नः संवत्सरः पुण्यस्तस्माद्वर्षाः सुपूजिताः । वर्षाभ्यः कार्तिकः पुण्यः कार्तिकाद्भीष्मपञ्चकम् । नैवेद्यं पुष्पधूपं च अर्चितं सुविलेपनम् । निवेद्य कार्तिके विष्णोः फलं सांवत्सरं लभेत् । अतः कार्तिकमासाद्य सदैव शुभकाङ्क्षिभिः । हरिमुद्दिश्य कर्तव्यं स्वशक्त्या सुकरं व्रतम् । कार्तिकस्यासिते पक्षे वायुभक्षश्चतुर्दशीम् । समुपोष्य नरो भक्त्या पूजयेद्गरुडध्वजम् । उपवासस्तु कर्तव्यो वारिमध्ये स्थितेन च । जलकृच्छ्रमिदं कृत्वा विष्णुलोकं व्रजेन्नरः ।' इत्यादि । यथोक्तेन विधानेन कृच्छ्राणि समुपाचरेत् । व्रतोपवासनियमैस्ते मुक्तफलभागिनः ।' इति विष्णुरहस्योक्तानि कृच्छ्रव्रतानि ।

अथ देवीव्रतम् । ब्रह्मोवाच—' क्षीराशी कार्तिके यस्तु देव्या भक्तिरतो नरः । शाकयावकमेकाशी प्रातः स्नायी शिवारतः । पूजयेत्तिलहोमस्तु मधुक्षीरघृता-...भिः । कार्यस्तु देवीमन्त्रेण शृणु पुण्यफलं हरे । महापातकसंयुक्तो युक्तो वा चोप-...तकैः । मुच्यते नात्र संदेहो यस्मात्सर्वगता शिवा। ' इत्यादि । इति देवीपुराणो...ीव्रतम् ।

अथ मासोपवासव्रतानि । ' आश्विनस्यामले पक्षे एकादश्यामुपोषितः ...ं तु गृह्णीयाद्यावत्त्रिंशद्दिनानि तु । वासुदेवं समुद्दिश्य कार्तिकं सकलं नरः ...ं पवसेद्यस्तु स मुक्तिफलभाग्भवेत् । अच्युतस्यालये भक्त्या त्रिकालं कुसुमैः यतेन्...र्थं लतीन्दीवरैः पद्मैः कमलैः सुसुगन्धिभिः । कुङ्कुमोशीरकर्पूरैर्विलिप्य वरचन्दनम ...द्यधूपदीपाद्यैरर्चयेत्तु जनार्दनम् । मनसा कर्मणा वाचा पूजयेद्गरुडध्वजम् । नरा

। भक्त्या
कः । सुप्तो
तितम् ।
सविलेप-
स्थो न वै

न्नरस्त्रिषवणे ब्रूहद्भक्तिर्जितेन्द्रियः। नाम्नामेवं तथालापं विष्णोः कुर्यादह
विष्णोः स्तुतिं वापि मृषावादं विवर्जयेत् । सर्वसत्त्वदयायुक्तः शान्तवृत्ति
वासनसंस्थो वा वासुदेवे प्रकीर्तयेत् । स्मृत्यालोकनगन्धादि स्वादनं
अन्नस्य वर्जयेत्सर्वं ग्रासानां चाभिकाङ्क्षणम्।गात्राभ्यङ्गंशिरोभ्यङ्गं त
नम्। व्रतस्थो वर्जयेत्सर्वं यच्चान्यत्र निराकृतम्। व्रतस्थो न स्पृहेत्किंचि
द्विज।देवतायतने तिष्ठेन्न गृहस्थश्चरेद्व्रतम्।कृत्वा मासोपवासं तु यथोक्तविधिनाचरेन्।
नारी वा विधवा साध्वी वासुदेवं समर्चयेत्।अन्यूनाधिकमेवंतु व्रतं त्रिंशद्दिनेऽन्वहम् ।
कृत्वा मासोपवासं तु संयतात्मा जितेन्द्रियः।ततोऽर्चयेद्व्रती पुण्यं द्वादश्यां गरुडध्वजम्।
पूजयेत्पुष्पमालाभिर्गन्धधूपविलेपनैः।वस्त्रालंकारवाद्यैश्च तोषयेदच्युतं नरः।स्नापयेत हरिं
भक्त्या तीर्थचन्दनवारिणाचन्दनेनानुलिप्ताङ्गं पुष्पधूपैरलंकृतम्।वस्त्रदानादिभिश्चैव भो-
जयेच्च द्विजोत्तमान्।दद्याच्च दक्षिणां तेभ्यः प्रणिपत्य क्षमापयेत् । विप्रान्क्षमापयित्वा तु
विसर्ज्याभ्यर्च्य पूजयेत् । एवं वित्तानुसारेण भक्तियुक्तेन शक्तितः । एवं मासोपवासं
तु कृत्वाऽभ्यर्च्य जनार्दनम् । भोजयित्वा द्विजांश्चैव विष्णुलोके महीयते ।' इत्यादि।
इति विष्णुरहस्योक्तं मासोपवासव्रतम् । वामनपुराणेऽपि—'रजतं काञ्चनं दीपा-
न्मणिमुक्ताफलादिकम्। दामोदरस्य प्रीत्यर्थं प्रदद्यात्कार्तिके नरः।'इति।महाभारते—
'कार्तिकं तु नरो मासं यः कुर्यादेकभोजनम् । शूरश्च बहुभाग्यश्च कीर्तिमांश्चैव जायते।'
विष्णुधर्मे—'कार्तिके एकदा भुङ्क्ते यश्च विष्णुपरो नरः । शूरश्च कृतविद्यश्च बहुपु-
त्रश्च जायते।' अहिंस्र इत्यादि पूर्ववत् । इत्येकभक्तव्रतम् । इति कार्तिककृत्यानि।

अथ मार्गशीर्षकृत्यानि । महाभारते—'मार्गशीर्षं तु यो मासमेकभक्तेन
यः क्षिपेत् । भोजयेत्तु द्विजान्भक्त्या मुच्यते व्याधिकिल्बिषैः । सर्वकल्याणसंपूर्णः
सर्वदुःखविवर्जितः । उपोष्य व्याधिरहितो वीर्यवानभिजायते । कुर्वन्वै विष्णुशुश्रूषां
सुदेशे जायते शुभे ।' अहिंस्र इत्यादि पूर्ववत् । 'वाजपेयस्य यज्ञस्य तत्तत्फलमा
अ...्यात् ।' इत्येकभक्तव्रतम् । वज्र उवाच—'भगवन्कर्मणा केन नरो लावण्यं
प्रश्न...त् । लावण्यरहितं रूपं निष्फलं प्रतिभाति नः ।' मार्कण्डेय उवाच
प्रेतलो...म्यां समतीतायां प्रतिपत्प्रभृति क्रमात् । पटे वा यदि वार्चायां प्रद्युम्नं पूजये
गुह्यं म...हिः स्नानं तथा कुर्यान्नक्तमश्नीत वाग्यतः । एकभक्तो महाराज हविष्
आश्वयुजे । मार्गशीर्षे ततः प्राप्य त्रिरात्रोपोषितः शुचिः । संपूज्य देवं प्रद्युम्
नमः ...ौ घृतमेव च। भोजयेद्ब्राह्मणांश्चात्र भोजनं लवणोत्कटम्।चूर्णितस्य ततः प्रस्
दद्यादेष्य द्विजातये।महारजनरक्तं च वस्त्रयुग्मं तथा गुरोः । दद्याच्च कनकं राजन्क

स्यपात्रं तथैव च। मासेन लावण्यकरं प्रदिष्टं व्रतोत्तमं नाकगतिप्रदं च । न केवलं यादव सर्वकामान्नरस्य दद्यात्पुरुषः प्रधानः।' इति विष्णुधर्मोत्तरोक्तं लावण्यावाप्तिव्रतम्। ऋग्विधाने—'सदसस्पतिमेकर्चं मेधाकामो जपेद्बुधः। अयुतं चैव सिद्धिश्च मार्गशीर्षे न संशयः।' इति मार्गशीर्षव्रतानि।

अथ पौषव्रतानि महाभारते—'पौषमासं तु कौन्तेय एकभक्तेन यः क्षिपेत्। सुभगो दर्शनीयश्च यशोभागी च जायते। प्रासादनगरादीनि स्वगृहभवणानि च। नारायणस्य तुष्ट्यर्थं पौषे देयानि यत्नतः।' इति वामनपुराणे विष्णुधर्मे—'पुष्यमासं तथा दाल्भ्य एकभक्तेन यः क्षिपेत्। शुश्रूषणापरः शूरो न रोगी जायते नरः।' अहिंस्र इत्यादि पूर्ववत्। इत्येकभक्तव्रतम्। वज्र उवाच। 'भगवन्कर्मणा केन शीलवान्पुरुषो भवेत्।' मार्कण्डेय उवाच। 'आग्रहायण्यतीतायां मासमेकं दिने दिने। पूर्ववत्पूजयेद्देवं घृतेन जुहुयाद्धविः। घृतं द्विजेभ्यो दद्याच्च घृतमेव निवेदयेत्। त्रिरात्रोपोषितः पौष्यां घृतपात्रेण वै द्विजः। पूजयेच्च सुवर्णेन यथाशक्त्या नराधिप। कृत्वा व्रतं मासमिदं यथोक्तमासाद्य नाकं सुचिरं मनुष्यः। मानुष्यमासाद्य च शीलवान्स्यात्प्राप्नोति पुष्टिं चिरजीवितं च।' इति विष्णुधर्मोत्तरोक्तं शीलावाप्तिव्रतम्।

'अथ शुक्लचतुर्दश्यां पौषमासे समाहितः। चान्द्रायणं व्रतं मासं ग्राहयेत्सर्वपापजित्। पूर्णेन्दुपौर्णमास्यां तु पूजयेत्प्रत्यहं जलैः।' पौषे इति सामीप्ये सप्तमी। चतुर्दशीपौर्णमास्योः पूर्वमासावयवत्वात्। 'मनोरथाप्यायस्वेति तथा, सन्ते पयांसि च। तर्पयेदद्भिरेताभिस्तिसृभिश्च सदैव हि' इत्यादि। 'एवं संवत्सरं कृत्वा चन्द्रलोकमवाप्नुयात्। इह लोके धनारोग्यं सुखसौभाग्यसंपदम्' इति। इति ब्रह्मपुराणोक्तं चान्द्रायणव्रतम्। इति पौषकृत्यम्।

'अथ माघमासकृत्यानि। 'माघे मास्युषसि स्नानं कृत्वा दाम्पत्यमर्चयेत्। भोजयित्वा यथाशक्त्या वरवस्त्रविभूषणैः। सौभाग्यपदमाप्नोति शरीरारोग्यमुत्तमम्। सूर्यलोकप्रदं पुण्यं सूर्यव्रतमिदं स्मृतम्' इति पद्मपुराणोक्तं सूर्यव्रतम्। निर्ण॰ विष्णुः—'माघमास्यग्निं प्रत्यहं तिलैर्हुत्वा सघृतं कृसरं ब्राह्मणान्भोजयित्वा दी[illegible] वति' इति। वामनपुराणे—'माघे मासि तिलाः शस्तास्तिलधेनुश्च दानतः। इध्मं [illegible] यश्चान्ये माधवप्रीणनाय तु' इति। ब्रह्मोवाच। 'कृत्वैकभक्तं हेमन्ते माघमासि यतेन्[illegible] यः। मासान्ते च रथं कुर्याच्चित्रवस्त्रोपशोभितम्। श्वेतैश्चतुर्भिर्युक्तं तु तुरङ्गैः सम[illegible] कृतम्। श्वेतध्वजपताकाभिश्छत्रचामरदर्पणैः। तण्डुलाढकपिष्टेन कृत्वा भानुं नरा

ए ... अं रथोपरि संज्ञया सह भूपते । तं रात्रौ राजमार्गेण शंखभेर्यादिनि॰ ... भ्रामयित्वा शनैः पश्चात्सूर्यायतनमाचरेत् । तत्र चागुरुपिष्टेन प्रदीपाद्युपशो- ...म् । प्रेक्षणीयप्रदानैश्च क्षपयित्वा शनैः शनैः । प्रभाते स्नपनं कृत्वा पयसा च घृतेन वा । दीनान्धकृपणानां च यथाशक्त्या च दक्षिणाम् । रथं संवाहनोपेतं भास्कराय निवेदयेत् । भुक्त्वा च ब्राह्मणैः सार्धं प्रणम्यार्कं गृहे व्रजेत् । सर्वव्रतानां परम एष धर्मः ...तरः । व्रतं सूर्यव्रतं नाम सर्वकामार्थसाधकम् । सर्वव्रतेषु यत्पुण्यं सर्वतीर्थेषु ...फलम् । सर्वं सूर्यरथेनेह तत्पुण्यं लभते नृप । सूर्यायतप्रतीकाशैर्विमानैः सर्वकामि...कैः । त्रिःसप्तकुलजैः सार्धं सूर्यलोके महीयते । भुक्त्वा तु विपुलान्भोगान्सर्वलोकेष्वनुत्तमान् । कल्पायुतशतं साग्रं ततो राजा भवेत्क्षितौ' इति भविष्योत्तरोक्तं सूर्यव्रतम् । माघमासे समुद्युक्तः त्रिसंध्यं योऽर्चयेद्रविम् । लभेत्षाण्मासिकं पुण्यं मासेनैव न संशयः' । इति भविष्योत्तरोक्तं रविव्रतम् । महाभारते—'माघमासं तु यो नित्यमेकभक्तेन यः क्षिपेत् । श्रीमान्स्वकुलजातीनां सुमहत्त्वं प्रपद्यते' विष्णुधर्मे—'माघमासं द्विजश्रेष्ठ एकभक्तेन य... ...षेत् । विष्णुशुश्रूषणपरः स कुले जायते सताम् । अहिंस्र इत्यादि फलमाप्नुयादित्यन ... इत्येकभक्तव्रतम् । वज्र उवाच । 'भगवन्कर्मणा केन विद्यावान्पुरुषो भवे... स। ... विज्ञेयः पुरुषः पशुरन्यथा' । मार्कण्डेय उवाच । 'पौष्यां तु समतीताय प्रतिपत्प्रभृति क्रमात् । प्राग्वत्तु पूजयेद्देवं तुरङ्गशिरसं हरिम् ।' प्राग्वदिति रूपावा... व्रतोक्तविधिना । तुरङ्गशिरसं हयग्रीवम् । 'तिलांश्च जुहुयाद्वह्नौ तिलैर्देवं समर्चयेत् त्रिरात्रोपोषितो माघं तिलान्कनकमेव च । दद्याद्ब्राह्मणमुख्याय सम्यक्प्रयतमानसः मुख्यान्यज्ञोपवीतांश्च प्रभूतमपि चन्दनम् । कृत्वा व्रतं मासमिदं यथोक्तं विद्यान्वितः स्यात्पुरुषः सदैव । स्वर्लोकमासाद्य सुखानि भुक्त्वा कामानभीष्टान्पुरुषोऽश्नुते च ।' इ... ...मोत्तरोक्तं विद्यावाप्तिव्रतम् । इति माघकृत्यानि ।

अथ फाल्गुनव्रतानि महाभारते-'भगदैवं तु यो मासमेकभक्तेन यः क्षिपेत् सुदेशे ...मतुलं श्रेष्ठं पुमान्स्त्री वा प्रपद्यते ।' विष्णुधर्मे—'क्षपयेदेकभक्तेन शुश्रूषुर्यश्च प्रश्न...यात् । । शुश्रूषुर्विष्णुशुश्रूषापरः । 'सौभाग्यं स्वजनानां च सर्वेषां चेतसोन्नतिम् । ...तले ...त ... इत्यादि पूतमवाप्नुयादित्यन्तं पूर्ववत् इत्येकभक्तव्रतम् । वामनपुराणे- गुह्यं फाल्गुने व्रीहयो गावो वस्त्रं कृष्णाजिनान्वितम् । गोविन्दप्रीणनार्थाय दातव्यं पुरुष आश्वज ।' तथा 'प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ ।' इति । तथा वरा... नमः ...च—'फाल्गुनस्य तु मासस्य पुष्पाणि सुरभीणि च । कर्मण्यानि शुभानीह गृहीत्व... ...कमान्नरः । जानुभ्यां धरणीं गत्वा कराभ्यामञ्जलेः पुटम् ।' गृहीत्वेति शेषः ।